श्रीः ।

# भूमिका ।

श्रीगुरुचरणकमलेभ्यो नमः ।

निश्वसचमिदं विपश्चिदपश्चिमानां यदनेकशाखोपशाखाभेदभिन्नस्य देवतिर्यङ्मनुष्यवर्णाश्रमधर्मादिप्रविभागहेतोः जन्तुजातस्य हिताहितप्राप्तिपरिहारोपायाध्यवसायैकनिदानस्य ऋग्यजुःसामभेदैस्त्रय्यात्मकत्वमवगाहमानस्याङ्गिनः सत्स्वपि शिक्षादिष्वङ्गान्तरेषु व्याकरणमेव प्रथमतः पदपदार्थव्युत्पादनप्रणाल्या प्रयोजनवदर्थावबोधजननोपयोगितया मुखस्थानीयतां भजते । अतएव महामुनिः सहस्रवदनः पतञ्जलिर्वदनसहस्रेण वेदरक्षामेव व्याकरणस्याद्यं प्रयोजनं संवर्णयञ्जनान् व्याकरणस्य मुख्यतां प्रत्याययामासेति ।

तच्चेदं व्याकरणप्रवाहानादितयाऽनाद्येव भवद्वेदाङ्गत्वं निर्वहति तथाच तैत्तिरीयश्रुतिः 'वाग्वै पराच्यव्याकृताऽवदत्ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति । सोऽब्रवीद्वरं वृणै, मह्यं चैवैष वायवे च सह गृह्याता इति । तस्मादैन्द्रवायवः सह प्रगृह्यते, तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत् । तस्मादियं व्याकृतावागुद्यत । इति ।

अद्यत्वेच तीव्रतरतपस्यासंतोषितश्रीमहेश्वरवरप्रसादसमवाप्ताक्षरच्छन्दोमूलत्वेन पाणिनीयमेव व्याकरणं वेदाङ्गमिति गीयते । तच्चेदं श्रीमता कात्यायनेन महर्षिणा वार्तिकसमुपबृंहित मत्रभवता पतञ्जलिना च प्रत्यक्षरं वेदाक्षरनिर्विशेषेण गौरवभरेण भाषितमिति कस्य न श्रद्धातिरेकास्पदतां तनुते ।

अस्य च मुनित्रयस्य वेदसरक्षणबद्धदीक्षस्य ज्ञेयैकदेशभूतसूत्रवार्तिकभाष्यस्य गम्भीराशयं ध्यायंध्यायं सहस्रशो व्यवस्यन्तोऽप्यनध्यवस्यन्तः कति कति न वा निजमतिमहिमग्रहिलाः संवृत्ताः। तथात्वे च कथमधुनातनैर्मतभेदतमस्तिरोहितमतिभिः शक्या वैयाकरणसिद्धान्ता अध्यवसातुमिति करुणापरायणेन श्रीपर्वतीयाभिजनेन पाण्डेयोपाभिधेन श्रीलक्ष्मीधरपण्डितवरतनूजातेन श्रीविश्वेश्वरावतारभूतेन श्रीविश्वेश्वरसूरिणा सर्वज्ञानाकरेण दुरवगाहं व्याकरणमहोदधिं क्वचिदप्यभिदुरेण निजमतिमन्दरेणामन्थरं प्रमथ्य समुद्धृतोऽयं सिद्धान्तसुधानिधिः कथमिव स्वसेवित्रैयाकरणकुलान्यजरामरतां विबुधतां च नावापयेत् ।

सचायं ग्रन्थो ग्रन्थकृताऽष्टाध्यायीसूत्रक्रमेणाध्यायत्रय पर्यन्तं भाष्यवचस्तात्पर्यकुसुमामोदविस्तारगर्भं ग्रथितोऽपि निःशेषतः सिद्धान्तप्रतिपादनेन क्वचिद्भाष्यवार्तिककृन्मतयोर्लाघवगौरवविचारोट्टङ्कनात् तथा क्वचित् 'अत्रेदमवधेय' मित्यादिना भाष्यवार्तिकादितः स्फुटमनवगम्यमानविषयाणा माञ्जस्येन बोधनाच्च

शास्त्रैकदेश संबद्धं शास्त्रकार्यान्तरे स्थितम् ।
आहुः प्रकरणं नाम ग्रन्थभेदं विचक्षणाः ॥

इत्युक्तदिशा व्याकरणप्रकरणग्रन्थतां भजते। अतएव चाग्रिमपञ्चाध्याय्या अव्याख्यानमपि न न्यूनतामापादयतीत्येके।

अग्रिमपञ्चाध्याय्यामप्येतद्व्याख्यानमस्ति । अनुपलम्भस्तु कारणान्तरेणापि संभवति। तथाच कैयटप्रदीपादिवदाकरग्रन्थ एवायमित्यस्मद्गुरुचरणाः।

अयंच ग्रन्थकृत् श्रीभट्टोजीदीक्षितानन्तरकालोत्पन्नो हरिदीक्षिताच्च प्राचीन इति प्रकृतग्रन्थे शब्दकौस्तुभादिग्रन्थस्य बहुशःसमुद्धरणाच्छब्दरत्नादीनां चासमुद्धरणतो निर्णीयते।

अयं च वार्धक्य एवानपत्यत्वक्लेशप्रतप्तमानसाभ्यां दम्पतिभ्यां प्रतप्ततीव्रतपः प्रसन्नेन यदृच्छया निग्रहानुग्रहयोः प्रभवता पार्वतीजानिना विश्वेश्वरेण 'मत्सदृशपुत्रमाप्नुही'ति वितीर्णवरप्रसादात्समासादितः पुत्र इति विश्वेश्वर एव भक्तमनोरथपूरणायावतीर्ण इति वदन्ति। यतः किलायं सप्तम एव मासि गर्भवासान्निर्गत्य पञ्चमे वर्षे एव पदवाक्यमानानिगमाकूपारपारंगमेण श्रीलक्ष्मीधरपण्डितप्रकाण्डेन जनकेनोपनीय निगमागमपारावारपारीणतां गमितोऽसौ ३२ द्वात्रिंशतोऽब्देभ्य प्रागेव परममहनीयान् तर्क कौतूहल—अलङ्कारकौस्तुभ—सिद्धान्तसुधानिधि रुक्मिणीपरिणय—आर्यासप्तशती—अलंकार कुलप्रदीपप्रभृतीन् नैकग्रन्थान् महनीयान् विरच्य कीर्तिमात्रशरीरतां लेभे इति च किंवदन्तीं वदन्ति।

सचेदृशोऽयं महनीयो ग्रन्थ इत्यालोच्याऽमुद्रितसारवत्तर ग्रन्थमुद्रणधृतव्रतेन श्रेष्ठिश्रीजयकृष्णदासमहोदयेन बहुवर्षेभ्यः प्राक् मुद्रापयितुं समारब्धोऽपि मुद्रणालयकार्यशैथिल्यादिभिरनेकैर्विलम्बकारणैरस्मिन्वत्सरे पूर्णतामयासीत्।

अस्मिंश्च स्थले स्थले प्रसङ्गानुप्रसङ्गतो विचारितानां नानाविधविषयाणां द्रष्टॄणां सौकर्याय विषयसूच्यपि प्रकृतग्रन्थकृतो, अत्र विचारितानां मतान्तराणां च सिद्धान्तप्रदर्शनगर्भा साकल्येन निर्माय समुपन्यस्ता। तथा ग्रन्थकृता प्रमाणत्वेनोपन्यस्तानां व्याकरण—वेदान्त—न्याय—मीमांसादिग्रन्थानां च सूच्यपि सह सन्निवेशिता। अस्य ग्रन्थस्य संशोधनकार्यं मयाऽष्टमखण्डादारभ्य कृतम्। ततः प्राक्तनशोधनमपि समुचितमेव श्रीनेपालाभिजनदधिराम शास्त्रिभिः शेण्ड इत्युपाह्व सीताराम शास्त्रिभिश्च कृतम्। शोधनार्थं च पुस्तकद्वयं प्रायशः शुद्धं

क्वचित्खण्डितंच समुपलब्धमासीत् एकं काशीस्थपर्वतीयश्रीकेशवदत्त शास्त्रिमहोदयाल्लब्धम् । अपरं च बरेलीस्थाङ्गल–महाविद्यालयस्थ संस्कृताध्यापक पण्डितवरपन्थोपाह्व श्रीरामदत्तशास्त्रिमहोदयेभ्यो लब्धम् । तदाधारेणच सम्यक् शोधितेऽप्यत्र दृष्टिदोषवशादिना संभाव्यमाना अशुद्धीः मानुषधिषणानिसर्गबुद्ध्योपेक्ष्य प्रथमत एव मुद्रितादस्माद्ग्रन्थात्सारसुधा आदाय फलेग्रहितामवापयिष्यन्तीममुद्यमं महोदया इत्याशासानः ।

सुधीजनविधेयो
भाण्डार्युपाह्वो माधवशास्त्री
व्याकरणोपाध्यायः साहित्य–मीमांसातीर्थश्च
संवत् १९८१ कार्तिक कृष्ण ११

सिद्धान्त सुधानिधौ मानत्वेनोपन्यस्तानां

# ग्रन्थानां सूची ।

| ग्रन्थकाराः | ग्रन्थाः |
|---|---|
| पतञ्जलिः | महाभाष्यम् |
| कात्यायनः | वार्तिकम् |
| वृत्तिकृत् | वृत्तिः |
| कैयटः | प्रदीपः |
| काशिकाकृत् | काशिका |
| भट्टिः | भट्टिः |
| भट्टोजीदीक्षितः | शब्दकौस्तुभः |
| न्यासकारः | न्यासः |
| हेलाराजः | वाक्यपदीयटीका |
| भागवृत्तिः | भागवृत्तिः |
| लघुविवरणकारः | लघुविवरणम् |
| बृहद्विवरणकारः | बृहद्विवरणम् |
| हरदत्तः | पदमञ्जरी |
| नन्दी | धातुपारायणम् |
| क्षीरस्वामी | धातुपारायणम् |
| वैयाघ्रपद्यः | वार्तिकम् |
| अभिनवशाकटायनः | शब्दानुशासनम् |
| हेमसूरिः | हेम व्याकरणम् |
| वर्धमानमिश्रः | कातन्त्रविस्तरः |
| त्रिलोचनदासः | कातन्त्रपञ्जिका |

| ग्रन्थकाराः | ग्रन्थाः |
| --- | --- |
| दुर्ग गुप्तः | दुर्ग टीका |
| क्षेमेन्द्रः | जैनेन्द्रन्यासः |
| प्रसादकृत् | प्रसादः |
| वामनः | वृत्तिः |
| माधवः | धातुवृत्तिः |
| दुर्गसिंहः | व्याख्या |
| जयादित्यः | व्याख्या |
| व्याघ्रभूतिः | कारिका |
| सीरदेवः | व्याख्या |
| अनुन्यासः | न्यासः |
| लक्ष्मीधरः | व्याख्या |
| सुधाकरः | वृत्तिः |
| शब्दकण्टकोद्धारकृत् | शब्दकण्टोद्धारः |

इति व्याकरणग्रन्थाः ।

अथ श्रुत्यादयः ।

| | |
| --- | --- |
| | सामब्राह्मणम् |
| | आथर्वणश्रुतिः |
| | यजुर्वेदः |
| द्राह्यायणिः | द्राह्यायणिसूत्रम् |
| आपस्तम्बः | आपस्तम्बसूत्रं च |

वेदान्तग्रन्थाः ।

| | |
| --- | --- |
| व्यासः | वेदान्तसूत्रम् भारतं |
| वाचस्पतिः | भामती |
| खण्डनकृत् | खण्डनम् |

| ग्रन्थकाराः | ग्रन्थाः |
|---|---|
| अद्वैतचन्द्रिकाकारः | अद्वैतचन्द्रिकाः |
| अमलानन्दसरस्वती | कल्पतरुः |

### मीमांसाग्रन्थाः ।

| | |
|---|---|
| जैमिनिः | जैमिनिसूत्रम् |
| शबरस्वामी | शाबरभाष्यम् |
| पार्थसारथिः | शास्त्रदीपिका |
| माधवाचार्यः | जैमिनीय न्यायमाला |
| प्रभाकरः | प्रकरणपञ्चिका |

### न्यायग्रन्थाः ।

| | |
|---|---|
| शिरोमणिः | दीधितिः |
| गदाधर भट्टाचार्यः | शक्तिवादः |
| उदयनः | कुसुमाञ्जलिः |
| विश्वेश्वरसूरिः | तर्ककौतूहलम् |
| | अन्ये च । |

### साहित्यग्रन्थाः ।

| | |
|---|---|
| श्रीहर्षः | नैषधः |
| मुरारिः | माघः |
| भारविः | किरातार्जुनीयम् |
| कालिदासः | मेघदूतम् |
| कालीदासः | रघुवंशम् |
| भवभूतिः | उत्तरचरितम् |
| विश्वेश्वरसूरिः | अलङ्कार कौस्तुभम् |

इति ग्रन्थ संग्रहः ।



श्रीसिद्धान्तसुधानिधेः ।

# विषयानुक्रमणिका ।

# प्रथमपादे प्रत्याहाराह्निके द्वितीये

इति प्रथमः पादः



इति द्वितीयः पादः ।



## इति तृतीयः पादः ।

---

## अथ कारकप्रकरणम्।

## अथ द्वितीयाध्याये

## इति द्वितीयाध्याये प्रथमः पादः

## चार्थ निरूपणम् ।



## इति द्वितीयः पादः ।



## अथ चतुर्थःपाद ।

इति द्वितीयः पादः ।

श्रीगणेशाय नमः ॥

# व्याकरणसिद्धान्तसुधानिधिः ।

ॐनमः स्वप्रकाशाय समिद्धसुखसिद्धये ॥
विशुद्धाय विवर्तानां निदानाय चिदात्मने ॥ १ ॥
आत्मसत्तापरिस्यूतजगद्वास्तव्यवस्तुने ॥
दुर्विगाहरहस्याय वाङ्मयब्रह्मणे नमः ॥ २ ॥
महसा महतोदयैः सहस्रैः समस्तकैरवपद्मबान्धवानाम् ॥
जयति त्रितयी महामुनीनां नयनानामिव चन्द्रशेखरस्य॥३॥
जयति यथाजातानां वागूजातसुजातपारिजातश्रीः ॥
श्रीलक्ष्मीधरविबुधावतंसचरणाब्जरेणुकणः ॥ ४ ॥
विषये फणिनायकस्य मार्गं क्षमते नैव विधातुमल्पमेधः ॥
विबुधाधिपतिप्रसादधाराः पुनराराादुपकारमारभन्ते ॥ ५ ॥
व्युत्पित्सारसवत्सलस्य बलवद्विभ्रंशयन् संशयं
निष्प्रत्यूहसमूहयन्बुधवरव्यूहस्य कौतूहलम् ॥
साक्षीकृत्य पदं तनोति सवितुर्दाक्षीसुतस्यागमे
सिद्धान्तस्य सुधानिधिं बहुवचोऽदश्वेह विश्वेश्वरः ॥ ६ ॥

तत्र प्रवृत्तिं प्रति स्वविषयविशेष्यकस्येष्टसाधनताज्ञानस्य हेतुत्वात् साधुशब्दज्ञाने वक्ष्यमाणेष्टसाधनत्वज्ञानवतां पुंसां शब्दज्ञानोपायाकाङ्क्षायां व्याकरणस्य शब्दज्ञानोपायत्वप्रदर्शनपरं भाष्यमवतरति ॥

अथ शब्दानुशासनमिति ।

अत्रोपसर्गोपसन्धानवशात्सजातीयापेक्षभेदपूर्वकबोधकत्वार्थ-

कस्यानुशास्तेः कर्मषष्ठ्यन्तशब्दपदसमभिव्याहाररूपतात्पर्यग्राहकवशादपशब्दापेक्षभेदपूर्वकप्रमापरतया ल्युटः करणार्थकतया शब्दानामित्यत्र विशेष्यत्वस्य षष्ठ्यर्थतया अथशब्दस्य चारम्भार्थकतया साधुशब्दविशेष्यकापशब्दत्वावच्छिन्नप्रतियोगिताकभेदप्रकारकप्रमाकरणं शास्त्रमारभ्यत इत्यर्थः। तेन स्वरूपमात्रेण यत्किञ्चित्साधुशब्दस्य प्रकारान्तरेण ज्ञानसम्भवेऽपि न शास्त्रवैयर्थ्यम्। यथोक्तभेदप्रकारकत्वाभावात्। न च तथात्वस्यापि क्वचिदाप्तवाक्यादितः सम्भवोऽस्त्येवेति वाच्यम्। शब्दानामानन्त्येन सर्वत्र तदसम्भवात्। तथा च भगवतोक्तम्, बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदविहितानां शब्दानां शब्दपारायणं प्रोवाच नचान्तं जगामेति। न च व्याकरणेनापि तत्तद्व्यक्तित्वावच्छिन्नविशेष्यताकयथोक्तभेदप्रकारकज्ञानासम्भवः, शब्दानामानन्त्यादिति वाच्यम्। यावतीनां साधुव्यक्तीनां व्याकरणेन ज्ञानं तावतीनामेव प्रकारान्तरेण ज्ञातुमशक्यत्वात्। सति शब्दज्ञाने तत्र यथोक्तभेदप्रकारकत्वस्यापि प्रकारान्तरेणानुपपत्तेः। यत्साधुशब्दव्यक्तीनां च यस्य पुरुषस्योपस्थितिर्न जाता तद्व्यक्तित्वावच्छिन्नविशेष्यताकयथोक्तभेदप्रकारकज्ञानोपायज्ञानस्याक्षतत्वाच्च। न चाप्तवाक्यादितः शब्दत्वसामानाधिकरण्यमात्रेणापि अपशब्दभिन्नत्वग्रहसम्भवः। अभियोगविशेषव्यतिरेके तदाप्तत्वग्रहविरहात्। अप्रामाण्यज्ञानानास्कन्दितस्यैव तादृशज्ञानस्योद्देश्यत्वात्। अत्र शब्दानामिति कर्तृकर्मणोः कृतीति षष्ठी, न तूभयप्राप्तौ कर्मणीति। कर्मणिचेति सूत्रेण कर्मणीतिशब्दवता उभयप्राप्ताविति सूत्रेण या षष्ठी तदन्तस्य समासनिषेधात्। शेषषष्ठीयमिति केचित्। अथशब्दश्चारम्भवाचकः। अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्य-

त इति भगवदुक्तेः । मङ्गलन्त्वस्य प्रयोजनमात्रं न तु वाच्यम् । वाक्यार्थानन्वयात् । स्पष्टं चेदं शारीरकभाष्यादौ । एतेन—

ॐ कारश्चाथशब्दश्च सर्गादौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ ॥

इति स्मृतिर्व्याख्याता ।

यत्तु अथशब्दः प्रारम्भस्य द्योतको न तु वाचको निपातत्वादुपसर्गवदिति । तन्न । व्याप्यत्वासिद्धेः । उपसर्गत्वस्योपाधित्वाच्च । न च शबादौ साध्याव्यापकत्वं, निपातत्वरूपसाधनावच्छिन्नसाध्यव्यापकत्वात् । न च वाचकत्वाभाव एव साध्यः, साधनावच्छिन्नसाध्याधिकरणे पादपूरणमात्रार्थे तुहीत्यादौ साध्याव्यापकत्वादिति वाच्यम् । शक्तिप्रमापकाभावस्योपाधित्वात् । विभक्तिप्रतिरूपकनिपाते व्यभिचाराच्च । मिश्रास्तु निपातमात्रस्य वाचकत्वेऽर्थवदादिसूत्रेणैव सिद्धौ निपातस्यानर्थकस्य प्रातिपदिकसंज्ञेतिवार्त्तिकस्य द्योतकत्वे तु व्यावर्त्याभावादनर्थकस्येतिविशेषणभागस्य वैयर्थ्यमतश्चादयो वाचकाः प्रादयस्तु द्योतका इत्याहुः । यत्तु वैपरीत्येनापि ज्ञापकपर्यवसानसम्भवान्न तदुक्तपर्यवसानमिति । तदसत् । सूत्रापेक्षया वार्तिकस्याल्पविषयकत्वकल्पनाया युक्तत्वात् ।

उक्तानुक्तद्विरुक्तानां चिन्ता यत्र प्रवर्त्तते ।
तद्वार्त्तिकमिति प्राहुर्वार्त्तिकज्ञा विपश्चितः ॥

इत्युक्तेः । न चैवमुपसर्गस्य प्रातिपदिकसंज्ञेत्येव ब्रूयादिति वाच्यम् । तत्रापि चादीनां तुल्यत्वात् । यदपि अधिपरी अनर्थकाविति सूत्रे उक्तवार्त्तिकं भाष्ये प्रत्याख्यातं, कुतोऽध्यागच्छति कुतः पर्यागच्छतीत्यत्र गतिर्गताविति निघातवारणार्था गतिसंज्ञाबाधिका कर्मप्रवचनीयसंज्ञा व्यर्था । अनर्थकयोः

क्रियायोगाभावादेव गतित्वाभावात् । पञ्चम्याश्चापदानत्वादेव सिद्धौ पञ्चम्यपाङ्परिभिरित्यस्यानपेक्षितत्वादित्याशङ्क्योक्तम्, अनर्थकानामप्येषामर्थवत्कृतकार्यज्ञापनार्थं तत्संज्ञारम्भः । उक्तवार्तिकानारम्भश्च प्रयोजनमिति । अतस्तन्मूलकं कल्पनमश्रद्धेयमेवेति । तदप्यसत् । तावताऽप्युक्तार्थस्य वार्त्तिकतात्पर्यविषयत्वासिद्धेः । अत एव भाष्यकृता प्रत्याख्येयमपि जात्याख्यायामिति सरूपाणामिति च सूत्रद्वयं जातिव्यक्तिपक्षयोर्ज्ञापकत्वेन स्वयमेवोपन्यस्तम् । अथ वा नेमावनर्थकावित्युत्तरभाष्येण तत्संज्ञाविधानावश्यकत्वाभिधानाच्च । धातोरधिपर्योश्च सहाभिधायित्वमिति कैयटोक्तेः । एतद्भाष्यप्रामाण्यादर्थवत्सूत्रस्थभाष्यस्यापि तद्वार्त्तिकप्रत्याख्याने तात्पर्याभावोन्नयनाच्च । एवं च निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनः । नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्त्युच्चावचाः पदार्था भवन्तीति गार्ग्यस्तद्य एषु पदार्थः प्राहुरिमे तं नामाख्यातयोरर्थविकरणमित्यादि । ततोद्वितीयपादारम्भे अथ निपाता उच्चावचेष्वर्थेषु निपतन्तीत्यादिनिरुक्तदर्शनाच्च । उपसर्गाणां नामाख्यातार्थविकरणं स्वसबन्धेन तयोरन्यादृशार्थबोधकत्वमित्युक्त्या निपातानां तद्वैपरीत्यस्य स्पष्टत्वात् । यत्तु उपास्यते गुरुरित्यादौ धातोः सकर्मकक्रियार्थत्वाभावे कर्मणि लकारानुपपत्त्योपसर्गाणामिव साक्षात्क्रियतेऽलङ्क्रियते इत्याद्यनुरोधान्निपातानामपि द्योतकत्वमिति । तन्न । स्थलविशेषे तथात्वेऽपि सर्वत्र तत्कल्पने मानाभावात् । सामान्ये प्रमाणानां पक्षपातस्य बाधकाभावनियतत्वात् । यदपि "तुहिचस्मह वै पादपूरणे" इत्यमरात् "कमीमिद्विति पादपूरणार्था" इति निरुक्ताच्च यत्र द्योत्योऽप्यर्थो न विवक्षितस्तदर्थमुक्तवार्त्तिकारम्भ इति । तदप्य-

सत् । निपातान्तराणामर्थवत्त्वसिद्धेः । यत्तु द्योत्यार्थेनैव तदिति । तन्न । मतुबर्थसंबन्धस्य शब्दे प्रकारीभूतस्य रामादिपदानुरोधेन वृत्तिस्वरूपतयोभयपरत्वानुपपत्तेः । आवृत्तौ मानाभावात् । यदपि अर्थवत्त्वमर्थप्रतीतिजनकज्ञानविषयत्वमेव न तु शक्तिलक्षणान्यतरवत्त्वं, तच्च द्योतकसाधारणमिति । तदप्यसत् । वृक्ष इत्यादौ प्रत्येकवर्णादपि विभक्त्यापत्तेः । स्यादेतत् । स्वादिसङ्ख्याशास्त्रयोरेकवाक्यत्वात्प्रत्येकस्य संख्यानभिधायकत्वान्न तथा । तथा च हयवरट्सूत्रे भाष्यम् । सङ्घातस्यैकार्थ्यात्सुबभावो वर्णादिति । यद्वा । एकाज्द्विर्वचनन्यायेन समुदायादेव विभक्तिः । यद्वा । तन्मध्यपतितन्यायेन प्रत्येकोत्तरविभक्तेः प्रातिपदिकावयवत्वात्सुपोधातुप्रातिपदिकयोरिति लुक् । अथ वा समासान्तमेकं रामपदं तत्र राजपुरुषादिवल्लुगिति । तत्र नाद्यः । निपातानामपि संख्यानभिधायकत्वात् सुबुत्पत्तेरसिद्धेः । नचैकवचनमुत्सर्गत इति रीत्या संख्यानभिधायकत्वेऽपि तदिति वाच्यम् । प्रत्येकवर्णसाधारण्यात् । न द्वितीयः । समुदायकार्येणावयवानामप्यनुग्रहस्यैतद्बीजत्वात् । समुदायोत्तरविभक्तेश्च प्रत्येकवर्णपदत्वात् । न तृतीयः । प्रातिपदिकानवयवत्वात् । विशिष्टशब्दरूपोपादाने एव तन्मध्यपतितन्याय इति कैयटेनोक्तत्वात् । समासग्रहणस्य नियमार्थतया वर्णसमुदायस्य प्रातिपदिकत्वानुपपत्तेः । न चतुर्थः । धनं वनमित्यादौ नलोपङमुडागमजश्त्वानां हस्तीत्यत्र ढत्वस्य देह इत्यत्र घत्वस्य परिमृजो याजको राजा छाया इत्यादौ षत्वस्य पन्थानावित्यत्र समासान्तस्य च प्रसङ्गात् । यदि त्वत्र "धनगणं लब्धा" "वनागिर्योः" "अहस्त्यादिभ्यः" "परिमृजापनुदोः" "याजकादिभिश्च" "राजाहःसखिभ्यः" "छा-

या बाहुल्ये " "भृशादिभ्य" इत्यादिनिर्देशात्तत्तत्कार्याभावः। "इतोऽत्सर्वनामस्थाने" इति पथिशब्देकारस्यात्वविधानाच्च न समासान्तः। अन्यथा द्विवचनबहुवचनयोस्तेनैव सिद्धौ स्वमोरेव तद्विधानापत्तेरित्यादि विभाव्यते, तदा गौरवम्। मथ्यादिशब्दानुरोधात्सर्वनामस्थानमात्रेऽत्वविधानावश्यकतया पथिशब्दे स्वमोः पृथक्कृत्य तद्विधाने गौरवाच्च। अथ पदान्तोपादानसामर्थ्यात्समुदायप्रवृत्तपदसंज्ञायामेव तत्तत्कार्याणि प्रवर्तन्ते। अन्यथा अस्मिन् पक्षे ऽवयवप्रवृत्तपदसंज्ञायाः सार्वत्रिकतया तदुपादानवैयर्थ्यादिति विभाव्यते, तर्हि राजपुरुष इत्यादौ नलोपो न स्यात्। समासावयवपूर्वपदप्रवृत्तपदसंज्ञयैव तत्प्रवृत्तेः। वस्तुतस्त्वर्थवद्ग्रहणं प्रत्येकवर्णाद्विभक्तिवारणार्थमिति भाष्यकारैरेवोक्तम्। पर्युदासादर्थवत्त्वप्राप्तावपि धर्मान्तरप्रयुक्तसादृश्यवद्वारणस्य तदर्थत्वात्। त्वदुक्तार्थवत्त्वविवक्षायां तु तद्व्यतिरेकेणापि तत्सिद्धेः अर्थवदादिसूत्रेऽनर्थकस्य प्रातिपदिकसंज्ञायां प्रकाशयितव्यस्यार्थस्याभावात्समुदायादिव प्रतिवर्णं विभक्त्युत्पत्तिप्रसङ्ग इति कैयटाद्युक्तेरिष्टापादनत्वप्रसङ्गात्। अतो वर्णेभ्यो विभक्तिवारणाय कृतेनैवार्थवत्पदेन तेभ्यो विभक्त्यानयनं शान्तिकर्मणि वेतालाभ्युदयन्यायमनुहरति। यत्तु " अव्ययादाप्सुप " इति लोपप्रतियोगितयैव निपातेभ्यो विभक्तिरिति। तन्न। प्रापकाभावे सत्यनुवादतः पदार्थप्राप्तेरङ्गीकारात्। स्वरादिपरत्वेन तत्सम्भवाच्च। यदपि निपातस्यानर्थकस्येत्येव विभक्तिरिति। तदप्यसत्। तद्बलादेव निपातत्वसामानाधिकरण्येन वाचकत्वासिद्धेः। यदपि " अधिपरी अनर्थकौ " इति सूत्रे विशेषणबलादनर्थकयोरप्यधिपरिशब्दयोर्द्विवचनान्तत्वदर्शनादनर्थकनिपातोत्तरं विभक्तिज्ञापनस्य सामान्यापेक्षत्वाश्रयणा-

दनर्थकत्वेऽपि निपातोत्तरं विभक्तिरिति । तदप्यसत् । शब्द-स्वरूपपरयोरधिपर्योरनुकार्येणार्थवत्त्वात् । धात्वर्थातिरिक्ता-र्थाभावस्यानुकार्यनिष्ठस्याभिप्रायेणैवानर्थकत्वोक्तेः । यदपि कृत्तद्धितेत्यत्र चकारेण तत्सिद्धिरिति । तदप्यसत् । कृत्तद्धित-ग्रहणमेतदन्तस्यैव प्रत्ययान्तस्य प्रातिपदिकसंज्ञा नान्यस्येति, समासग्रहणं चार्थवत्समुदायानां मध्ये समासस्यैव प्रातिपदि-कत्वमिति नियमार्थमिति भाष्यादौ तत्सूत्रस्य नियमार्थत्वोक्तेः । चकारस्यापूर्वविधित्वे समभिव्याहारविरोधात् । क चिदगत्या तत्समूहनेऽपि स्वेच्छया तदनौचित्यात् । एतेन—

स वाचको विशेषाणां सम्भवाद् द्योतकोऽपि वा ।

इति वाक्यपदीयं व्यवस्थितविकल्पार्थकत्वेन व्याख्यातम् । न च

क्वचित्सम्भविनो भेदाः केवलैरनिदर्शिताः ।
उपसर्गेण संबन्धे व्यज्यन्ते प्रपरादिना ॥

इति उपसर्गप्रक्रमात्तच्छब्दस्तत्पर एवेति वाच्यम् । त्वदाभिमताया निपातमात्रस्योभयरूपत्वेन तत्संमतेरप्यनुपपत्तेः । तत्पूर्वप्रक्रान्तनिपातमात्रपरत्वे तु यथोक्तेऽप्यविरोधात् । एतेन घटश्चेत्यादौ समुच्चितघटे लक्षणेत्यपास्तम् । चार्थे द्वन्द्वाविरोधा-त् । न च स्वातन्त्र्येण प्रयोगापत्तिः । प्रत्ययादिसाम्यात् । तथा च वाक्यपदीयम् ।

प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यते ।
समुच्चयाभिधानेऽपि व्यतिरेको न विद्यते ॥ इति ।

न चैषां प्रत्ययवत्परत्वानुशासनं नेति वाच्यम् । समुच्चया-देस्तदर्थस्य संबान्धिनमन्तरेणानवभासात् ।

तथा च वाक्यपदीयम्,

समुच्चयाभिधानेऽपि विशिष्टार्थाभिधायिना ।

गुणैः पदानां संबन्धः परतन्त्रास्तु चादयः ॥

इति । चकारमात्राभिधाने केवलसमुच्चयबोधस्येष्टत्वात् । अत एव तत्र प्रतियोगिविशेषाकाङ्क्षा । अत एव नेत्यादितः प्रतियोग्यमिश्रिताभावशाब्दबोधोदयादभावप्रत्यक्षत्वमेव प्रतियोगिज्ञानकार्यतावच्छेदकम् । अत एव ननेत्युक्तेऽभावो नास्तीत्यर्थो भाष्ये दर्शितः । निपातेनापि कारकाभिधानोक्तेश्च । "परिहर्तुं न तवापि सांप्रतम्" इत्यादौ क्रियायोगनिबन्धनस्य तुमुनो दर्शनाच्च । भूवादिसूत्रे नतरामिति भाष्याच्च । अन्वयव्यतिरेकाभ्यां चकारस्य समुच्चयार्थतायाः समुच्चयाधिकरणसिद्धत्वाच्च । नञः पर्युदासे लक्षणेतिसकलतान्त्रिकव्यवहाराच्च । न च शोभनः समुच्चय इतिवच्चार्थेऽपि विशेषणान्वयः, घटपटयोः समुच्चय इतिवत्षष्ठी च स्यादिति वाच्यम् । अभेदसंसर्गावच्छिन्ननामार्थप्रकारतानिरूपितविशेष्यतया बोधे निपातजन्योपस्थितेर्विरोधात् । चार्थे प्रतियोगित्वेन नामार्थान्वयाच्च । अत एव घटो नेत्यत्र प्रतियोगित्वसंसर्गको बोधः । घटस्याभाव इत्यत्र प्रतियोगित्वप्रकारकः । निपातातिरिक्तनामार्थस्य भेदान्वयानुपपत्तेः । यत्तु—

शरैरुस्रैरिवोदीच्यानुद्धरिष्यन्रसानिव ।

इत्यादावुस्रसदृशैः शरैरिति बोधे द्योतकत्वपक्ष एव सम्भवतीति । तदसत् । तत्र सादृश्यस्यैवाश्रयत्वसम्बन्धेन शरेषु प्रकारत्वात् । अन्यथा इवादिपदोपादाने श्रौती उपमा, सदृशादिपदप्रयोगे त्वार्थीतिकाव्यमीमांसकासिद्धान्तविरोधात् । उस्रपदोत्तरविभक्तेः साधुत्वार्थत्वादित्यास्तां विस्तरः । स्यादेतत् । उपसर्गाणामपि वाचकत्वमेव । न च तत्र प्रजयतीत्यादौ निपातार्थस्य प्रकर्षस्याश्रयत्वेन धात्वर्थान्वयो न

स्यात्, नामार्थधात्वर्थयोर्भेदान्वये तण्डुलं पचतीत्यादावतिप्रसङ्गादिति वाच्यम् । निपातातिरिक्तत्वेन नाम्नो विशेष्यत्वात् । न कलञ्जं भक्षयेदित्यत्र कलञ्जभक्षणाभावविषयकं कार्यमिति गुरुमते धात्वर्थस्य प्रतियोगित्वेनाभावे विशेषणत्वात् । न्यायनये कलञ्जभक्षणं पापाजनकत्वाभाववदित्यभावस्य विशेषणतया धात्वर्थे प्रकारत्वाच्च । आकाशं न पश्यतीत्यादावाकाशविषयकलौकिकविषयताशालिचाक्षुषस्याप्रसिद्ध्या आकाशविषयकत्वाभावस्य दर्शने बोधाच्च । प्रतिष्ठतइति स्थितिप्रकर्षस्य लक्षणया त्वन्मतेऽपि बोधापत्तेः । उक्तसमभिव्याहारे गमनत्वप्रकारकबोधत्वं कार्यतावच्छेदकमित्यस्यापि तुल्यत्वात् । प्रशब्दस्याभावार्थकतां स्वीकृत्य धात्वर्थस्य गत्यभावस्य प्रतियोगित्वेन तदन्वये गत्यभावाभावस्य प्रतीतेः घटो नेत्यादिवत्षष्ठ्याद्यभावेऽपि क्षतिविरहात् । उपास्यतइत्यादौ तत्तदनुपपत्तिबलादुपसर्गस्य द्योतकत्वेऽपि क्षतिविरहादिति कन्दलीकारादयः । अत्र वदन्ति । धातुशक्तेर्विशेष्यांशे क्लृप्ताया एव विशेषणविषयकत्वकल्पने लाघवादुपसर्गः शक्त्यवच्छेदको न तु शक्तः शक्त्यन्तरकल्पनापत्तेः । उक्तरीत्या तु न तथा । परस्परव्याभिचारिनानाप्रवृत्तिनिमित्तक वस्यैव शक्तिभेदकल्पकत्वात् । प्रकृष्टजयत्वस्य तु जयत्वव्याप्यत्वात् । यदि प्रवृत्तिनिमित्तभेदमात्रेण शक्तिभेदो लाघवादिति विभाव्यते, तदाऽस्तु प्रकृष्टजये लक्षणैव । ननु विशिष्टजये कथं लक्षणा, विशिष्टस्यानर्थान्तरत्वात् । स्वनिरूपितसम्बन्धस्य स्वस्मिन्नभावात् । अत्र मिश्रादयः । अभेदसम्बन्धोऽत्र लक्ष्यतावच्छेदकः । न च घटपदस्यापि घटे लक्षणापत्तिः । विशेषप्रकारकप्रतीत्यर्थमेव तदङ्गीकारात् । एवं प्रतिष्ठतइत्यत्रा-

भावे प्रत्ययार्थानन्वयः। प्रकृत्यर्थत्वाभावात्। न च गत्यभावोऽत्र प्रशब्दस्य धातोस्त्वभावोऽर्थ इति वाच्यम्। कृतहानाकृताभ्यागमप्रसङ्गात्। न च गतिरभावश्च पृथगेव धात्वर्थः, ततो गतेः प्रशब्दार्थेऽभावे तस्य च धात्वर्थेऽभावेऽन्वय इति वाच्यम्। समानश्रुत्यवरुद्धतया गतेर्धात्वर्थाभावान्वयस्यान्तरङ्गत्वात्। गमनत्वप्रकारकप्रतीत्यसिद्धिश्चेति दिक्।

प्रकृतमनुसरामः। ननु शब्दत्वस्यैव व्युत्पाद्यतावच्छेदकत्वेऽपशब्दसाधारण्यमिति चेन्न। साधुत्वस्य तथात्वात्। तच्च निरूपयिष्यते। न च डोप्रत्ययसुप्रत्ययवादेशादीनां व्युत्पादनेऽर्थान्तरम्। गौरित्यादिशब्दप्रतिपत्त्युपयोगित्वात्। न च—राम इत्यादावपि सुप्रत्ययादेरुपयोगान्नासाधारणोपयोगित्वम्, नापि व्युत्पाद्यतावच्छेदकावच्छेदेन पचतीत्यादावनुपयोगादिति वाच्यम्। निरूपणीयतावच्छेदकावच्छेदेनानुपयोगित्वस्यैवार्थान्तरत्वापादकत्वात्। व्युत्पाद्यतावच्छेदकसामानाधिकरण्यमात्रेणाप्युपयोगे तदनवकाशात्। द्रव्यत्वादिभिर्वाच्यवाचकभावसत्त्वेऽपि तेषामन्यत्र निरूपितत्वाच्छब्दस्वरूपप्रतिपत्त्यनुपयोगित्वात्। शब्दा द्विधा। लौकिका वैदिकाश्च। लौकिकत्वं च जन्यज्ञानवत्पुरुषप्रयोगार्हत्वम्। वैदिकत्वं तु वेदमात्रप्रयुक्तत्वम्। वेदपदं च शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति प्रमाणशब्दमात्रपरम्। तेन वैदिकानां स्मृत्यादौ प्रयोगेऽपि न क्षतिः। ते च "शन्नोदेवीरभिष्टये" "इषेत्वोर्जेत्वा" "अग्निमीडेपुरोहितम्" "अग्नआयाहिवीतये" इति भाष्यम्। सर्ववैदिकशब्दानां व्युत्पाद्यत्वलाभाय प्रथमप्रतीकोपादानम् वैदिकैकदेशमात्रव्युत्पादकप्रातिशाख्यवैलक्षण्यसूचनाय। देवीरित्यस्य प्रथमाबहुवचनान्तस्य

च्छान्दसत्वात्प्रथममुल्लेखः । इषेत्वेत्यत्र श्रेष्ठतमायेति तमपः ईशतेति लुगभावस्य बह्वीरिति पूर्वसवर्णदीर्घस्य चच्छान्दसत्वात् । न च तथापि शन्नोदेवीरित्यस्य अग्निमीडे इत्यस्मादेव प्राथम्यमस्तु न त्विषे इत्यस्मादपि, उभयत्रापि छान्दसशब्दसत्त्वे क्रमोल्लङ्घने बीजाभावादिति वाच्यम् । एकत्र प्रतीकान्तर्गत एवच्छान्दसशब्दोऽन्यत्र तदुत्तरगत इति वैषम्यसत्त्वात् । स्यादेतत् । वैदिकशब्दानामप्यर्था लौकिका एव वेदे रात्र्यादीनां घृताच्यादिपदैर्व्यवहारेऽपि वाच्यभेदविरहात् । शब्दार्थयोश्चात्यन्तपरस्पराभिन्नत्वे मानाभावः । अयं गौरित्यादिव्यवहारेणाभेदस्यैव विषयीक्रियमाणत्वात् । तथा हि । त्वन्मतेऽपि शाब्दबोधे समवायेन जातेरिव शक्तिसम्बन्धेन शब्दस्याऽर्थे प्रकारतया भानम् ।

ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा ।
तथैव सर्वशब्दानामेते पृथगवस्थिते ॥

इत्युक्तेः । किं च ज्ञानमात्रेऽपि शब्दभानम् । तदुक्तम्,

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥

गृहीतशक्तिकस्य शब्दादर्थवदर्थाच्छब्दस्यापि स्मरणोपपत्तेः । तदुक्तम्,

यत्संज्ञास्मरणं तत्र न तदप्यन्यहेतुकम् ।
पिण्ड एव हि दृष्टः सन्संज्ञां स्मारयितुं क्षमः ॥

यद्यपि नान्यहेतुकमित्यस्य व्यक्तितादात्म्यहेतुकं नेत्यर्थस्य वाचस्पत्यादावुक्तत्वान्नोक्तसंवादः, तथाऽपि शब्दोपस्थितिनियमप्रतिपादकत्वांशे संवादः । तदयं प्रयोगः । अर्थः पदादव्यतिरिक्तः, पदाविषयकप्रतीत्यविषयत्वात् । यद् यद-

विषयकप्रतीत्यविषयस्तत् तदव्यतिरिक्तम्, यथा गौरेव स्वाविषयकप्रतीत्याविषयः, स्वाव्यतिरिक्तश्च । न ह्यत्यन्तभेदेऽयं नियमः । अश्वमाहिषयोः परस्पराविषयकप्रतीत्यविषयकत्वनियमापत्तेः। तथा चार्थभेदाद्वैदिकलौकिकशब्दभेदोऽप्यनुपपन्न इति कथं द्वैराश्येन तदुल्लेख इति । एतदभिप्रायेणैव अथगौरित्यत्र कः शब्द इति भाष्यम्। न च द्रव्यसामान्ययोर्गौरित्येतद्बोधविषयत्वेऽपि गुणकर्मणोरतथात्वाच्छब्दस्य तद्भेदशङ्कापरं भाष्यमनुपपन्नमेवेति वाच्यम् । भेदाभेदयोर्विरुद्धत्वात्कथं समावेश इत्याशङ्क्य दृष्टान्तत्वेन तदुपादानात् । भेदाभेदवादिभिस्तत्राप्यभेदोपगमात् । न च गुणकर्मणोः शब्दाभेदशङ्का तथाऽपि कथमिति वाच्यम्। शब्दाभिन्नद्रव्याभिन्नतया शब्दाभिन्नत्वस्यापि तदुपपत्तेः। न च तत्र सामानाधिकरण्येनाभेदः, प्रकृते त्वेकप्रतीतिविषयत्वेन घटपदं घट इति प्रत्ययानभ्युपगमादिति पक्षदृष्टान्तयोर्न साधनैक्यमिति वाच्यम्। यथोक्तसाधने साधनान्तरस्योक्तत्वात् । अत एवायं गौरित्यादौ शब्दार्थयोरभेदव्यवहारदर्शनादेव शङ्काभाष्यमवतारितम्। केचित्तु गोशब्दस्यापि गवि तादात्म्यमेव संसर्गोऽस्तु। एवं गुणादिभिरपि तदभिन्नाभिन्नस्य तदभेदादित्याशयेन द्रव्यगुणसामान्यैः सह शब्दस्याभेदशङ्केति व्याख्याय निराकरणग्रन्थमित्थं व्याचक्षते । घटे व्यावहारिकपटभेदस्य प्रातिभासिकपटाभेदस्य च सत्त्वेऽपि समसत्ताकौ भेदाभेदौ विरुद्धावेव ।अन्यथा सत्तागुणत्वाद्यभेदात्सुखदुःखस्वर्गनरकादेरप्यभेदापत्तौ प्रवृत्तिनिवृत्तिव्यवस्था भेदग्रहाद् भ्रमानिवृत्तिश्च न स्यादिति। तच्चिन्त्यम्। नीलो घट इत्यादौ समानसत्ताकयोरेव भेदाभेदयोस्तद्वादिभिरभ्युपगमात् । तदुक्तं वाचस्पत्ये,

विरुद्धमिति नः । संप्रत्ययो यत्र प्रामाणिकं सामानाधिकरण्यप्रत्यये तु भेदाभेदौ भासेते इति । अतश्च प्रतियोग्यभावयोरन्यत्र सामानाधिकरण्याभावेऽपि अनुभवानुरोधात्संयोगतदभावयोस्तदभ्युपगमः सुखदुःखादेस्तु सत्तादिनाऽभेदेऽपि प्रातिस्विकधर्मेण भेदसत्त्वादेव प्रवृत्त्यादिव्यवस्थोपपत्तेः । विरोधिविषयकत्वस्यैव बाधकत्वे तन्त्रतया भेदग्रहाद् भ्रमनिवृत्तेश्च । शक्तिसंबन्धेन प्रकारतामादाय नियमोत्थाने पश्चात्तादात्म्यस्य संसर्गताशङ्काऽनुत्थानाच्चेति । उच्यते । न पदार्थयोरभेदः, एकज्ञाननियतविषयताकयोरपि द्रव्यसामान्ययोर्भेदस्वीकारेण व्यभिचारात् । न च गोत्ववानित्याद्यनुमित्यादौ गवादेर्न विषयत्वमिति वाच्यम् । गोत्ववत्त्वस्य साध्यतावच्छेदकतया भानेन तद्घटकतया गोरपि विषयत्वात् । तथा च द्रव्यं नाम तत् सामान्यं नाम तदित्यनेन प्रकृतहेतौ व्यभिचार उक्तः । गुणक्रियाभागेन च दृष्टान्तासिद्धिरुक्तेति विभागः । तथा हि । घटो नील इत्यत्र किं शाब्दं सामानाधिकरण्यमभेदसाधकमुतार्थम् । नाद्यः । भेदमात्रसाधकतया विरुद्धत्वात् । नान्त्यः । उभयथाऽप्युपपन्नतया तत्साधकत्वायोगादित्युदयनाचार्याः । तर्ककौतूहले विस्तरः । स्यादेतत् । शाब्दबोधस्य शब्दविषयकत्वकल्पने मानाभावः । स्वारसिकानुभवविरहात् । न च गोत्वस्य प्रकारतायाः सर्वसिद्धत्वाद्गोपदप्रकारताकल्पनं नाधिकम्, सङ्केतविशेषसंबन्धेन गोपदस्यैव गोत्वरूपत्वादिति वाच्यम् । गोत्वस्य स्वरूपत एव प्रकारत्वाभ्युपगमाद्गोपदत्वावच्छिन्नप्रकारताकल्पनस्याधिक्यात् । गोत्वस्य समवायेन प्रकारत्वाङ्गीकाराच्च । शब्दस्य वृत्त्यविषयतया शाब्दत्वानुपपत्तेश्च । घटपदात्समवायित्वेनोपस्थिताकाशादेरपि तदापत्तेश्च । न चाश्रयत्वनिरूपकत्वा-

न्यतरसंबन्धेन वृत्तिमत्त्वमेव वृत्तिविषयत्वमिति वाच्यम् । आश्रयत्वप्रवेशे मानाभावात् । यत्तु गामुच्चारयेत्यादौ पदविषयकत्वं विनाऽन्वयानुपपत्तिः । अर्थस्योच्चारणासम्भवात् । शब्दे लक्षणायां च गौरवात् । अस्माकं तु विशेषणतया पदोपस्थितिसत्त्वात्तस्योच्चारणान्वयोपपत्तेः । न च विशेष्यत्वार्थं लक्षणा, पदप्रकारकव्यक्तिविशेष्यकबोधत्वस्यैव कार्यतावच्छेदकत्वाद्धटो नित्य इत्यादाविवेति वाच्यम् । तत्र घटत्वत्वप्रकारकबोधानुरोधादेव तथात्वात् । घटत्वांशे निर्विकल्पकापत्तेश्च । अत्र तु पदावच्छेदकतयाऽऽनुपूर्वीविशेषस्यापि भाने तदनापत्तेः । विशेष्यव्यक्त्यभाने पदप्राधान्यस्याप्यर्थात्सिद्धेः । यद्वा शक्तिज्ञानस्य कार्यतावच्छेदकं न पदप्रकारकबोधत्वम्, किं तु गोत्वप्रकारकबोधत्वमेव प्रथमोपस्थितत्वेन, सामान्यसामग्रीबलात्तु शब्दस्य विशेषणतया भानं, निर्विकल्पकोत्तरप्रत्यक्षे जातेरिव प्रकारत्वानियमोपपत्तेरिति । तदप्यसत् । व्यक्त्यवच्छेदकतयोपस्थितस्यान्यत्रान्वयायोगात् । स्वतन्त्रोपस्थित्यर्थमेव तत्र घटत्वे लक्षणोपयोगात् । अत एव पङ्कजपदस्य कुमुदे लक्षणेति दर्पणचिन्तामण्यादयः । अयं ह्यत्र निष्कर्षः । येन रूपेण पदादुपस्थितिस्तेनेतरपदार्थान्वयसम्भवे न लक्षणा । यथा गौरनित्य इति । अवच्छेदकत्वेनोपस्थितस्य गोत्वस्यावच्छेदकत्वेनानित्यत्वान्वययोग्यत्वात् । गौर्नित्य इत्यत्र त्ववच्छेदकत्वेनोपस्थितस्य विशेष्यतया नित्यत्वान्वयानर्हत्वात्सेति । पदार्थप्रकारकबोधे विशेष्यतया पदजन्योपस्थितेर्हेतुत्वात् । अन्यथा घटं पश्येत्यादौ घटत्वस्य कर्मत्वबोधापत्तेः । घटत्वनिर्विकल्पकापत्तावपि क्षतिविरहाच्च । गोपदशक्तिज्ञानस्य पदप्रकारकव्यक्तिविशेष्यकबोधे हेतुतायां

'समानविषयकत्वस्य समानप्रकारकत्वस्य वा प्रत्यासत्तित्वे गोपदाविशेष्यकस्मरणानुपपत्तेश्च । न चाभेदससर्गकगोपदप्रकारकगोपदविशेष्यकस्मरणमेवास्त्विवति वाच्यम् । शक्तिज्ञानकार्यतावच्छेदकेऽभेदस्यानिवेशात् । अन्यथा तादृशघटत्वप्रकारकघटत्वविशेष्यकबोधस्याप्यापत्तेः । उपस्थितिमात्रस्य शाब्दविषयकत्वनियामकत्वे चातिप्रसङ्गात् । न ह्युपस्थितत्वादेव शाब्दे भानमिति प्रत्यक्षं दीधितिकारोक्तेः । निर्विकल्पकस्य च धर्मिग्राहकमानेन तथैव सिद्धेः । तस्माच्छाब्दबोधे शब्दभाने मानाभावः । ज्ञानमात्रे तु तद्भाने सुतराम् । तथा हि । व्यक्तिज्ञानस्य शब्दस्मारकत्वं त्वयाऽभ्युपगम्यते । अज्ञातस्योद्बोधकत्वायोगात्पिण्ड एव हि दृष्टः सन्नित्युक्तेः । तथा च प्राथमिकं व्यक्तिज्ञानं शब्दाविषयकमेवेति वाच्यम् । तदा तस्यानुपस्थितत्वात् । तथा च व्यभिचारः स्फुट एव । गोत्वेन गां जानामीतिवद्गोपदेन गां जानामीत्यनुव्यवसायविरहादिति प्राप्ते उच्यते । अनुभवानुरोधेन ज्ञानमात्रस्य पदविषयकत्वकल्पनाऽऽवश्यकतया ज्ञानसामान्यसामग्री पदविशिष्टमेवार्थं बोधयतीति नियमः कल्प्यते । अतो वृत्तिसन्निकर्षाद्यभावेऽपि न क्षतिः । अत एवेच्छादेर्मदंशादिविषयत्व न कारणानियम्यमिति नैयायिकाः । किञ्च । अगृहीतघटपदशक्तिकस्य घटचक्षुःसन्निकर्षसत्त्वेऽपि घटत्वप्रकारकघटविशेष्यकचाक्षुषानुदयोऽनुभवसिद्धः । सोऽयन्निष्कर्षनियमः शक्तिसम्बन्धेन पदप्रकारकबोधसामग्रीव्यतिरेकप्रयुक्त एव कारणान्तरसत्त्वादिति तद्व्यतिरेकप्रयोजकव्यतिरेकप्रतियोगितया शब्दभानमङ्गीकार्यम् । अयं तु विशेषः । कदाचित्किञ्चित्पदत्वं प्रकारतावच्छेदकं कदाचिच्च घटपटत्वादिकमिति । इदं च दर्शनान्तरेऽपि मन्तव्यम् । अनुभव-

स्यापह्नोतुमशक्यत्वात् । अत एवाक्षरमम्बरान्तधृतेरिति शारीरकमीमांसासूत्रसिद्धान्ते भामत्यामपि ज्ञानमात्रे शब्दाविषयकत्वमङ्गीकृतम् । संज्ञा तु गृहीतसम्बन्धैरत्यन्ताभ्यासवशात्पिण्डानिवेशिन्येव संस्कारोद्बोधसम्पातायाता स्मर्यते । यथाह,

"यत्संज्ञास्मरणं तत्र" इत्यादि ।

संज्ञा हि स्मर्यमाणाऽऽपि प्रत्यक्षत्वं न बाधते ।
संज्ञिनः सा तटस्था हि न रूपाच्छादनक्षमा ॥

इति। गृहीतसम्बन्धैर्वाच्यवाचकज्ञानवाद्भिः । पिण्डानिवेशिनी व्यक्तितादात्म्यमनापन्ना। स्मर्यमाणसंज्ञायाः परोक्षत्वात्तद्विशिष्टार्थस्य प्रत्यक्षत्वं न स्यात्, अतः संज्ञाहीति । स्मर्यमाणाऽपि संज्ञा संज्ञिनः प्रत्यक्षत्वं न बाधते । सा हि तटस्थाऽर्थानिविष्टा । अतो नार्थस्वरूपाच्छादनक्षमा । ग्रहणस्मरणात्मकज्ञानद्वयाभ्युपगमेन संज्ञाविशिष्टसंज्ञिप्रत्यक्षानभ्युपगमादित्यर्थः । तथा च लीलावत्याम् "न च शब्दः संसर्गप्रत्यक्षगोचरः, ततो जातिसंसर्गमात्रं तत्रावभासते, शब्दस्तु व्युत्पत्तिसमयावगतोऽत्र स्मर्यते न तु केन चित्संसर्गोऽवभासतइत्यादि"। एवं च शब्दस्यापि व्यक्तिविशेषणत्वेन भानमित्येव शाब्दिकमते विशेष इति दिक् । ननु तथाऽपि शब्दस्य शक्तिसम्बन्धेन कथं व्यक्तौ मकारत्वं स्फोटस्यैवैतन्मते वाचकत्वात् । अन्यथा स्फोट एव प्रमाणानवतारादिति चेत्, सत्यम् । आरोपितामेव वाचकतामादाय तथोक्तेः । अथ वर्णस्फोटे विप्रतिपत्तिः । तिप्प्रभृतयो वाचका न वेति । यदि तिबादिभिः स्मृतानां लादीनां बोधकत्वं तदा निषेधकोटिः, अथ श्रूयमाणानामेव तदा विधिः । अन्ये तु प्रयुज्यमानपदसमभिव्याहारानन्तर्गता वर्णा वाचका न वेति स्थानिपक्षिकां विप्रतिपत्तिमाहुः । आद्यायां विधिकोटिर्वैयाकरणानां

निषेधकोटिर्नैयायिकादीनाम् । द्वितीयायां तु वैपरीत्यम् । नन्वाद्यायां क्विप्रत्ययादिमादाय विधौ सिद्धसाधनं निषेधे च बाधः । द्वितीयायामपि पचसीत्यादिसमभिव्याहारानन्तर्गततयजसीत्यादिसमभिव्याहारान्तर्गतवर्णानादाय सिद्धसाधनबाधौ । न चादेशत्वं पक्षतावच्छेदकं प्रथमायां द्वितीयस्यां च स्थानित्वमिति वाच्यम् । तथाऽप्येकत्वादिवाचकतया तयोरपरिहारात् । द्वितीयायामपि भ्वादेशादिस्थलेऽभूदित्यादिसमभिव्याहारानन्तर्गतस्यास्त्यादेर्वाचकतया तयोः प्रसङ्गात् । सत्यम् । कर्त्रादिवाचकत्वस्य विध्यर्थत्वात् । कर्त्रादिपदेषु तस्य घटादिपदेषु तदभावस्य प्रसिद्धिः । पचतीत्यादिसमभिव्याहारानन्तर्गतत्वं च तिप्रभृतीनां विशेषणम् । द्वितीयायां च तादृशस्थले पक्षसङ्कोच एव शरणम् । अयं च पक्षः स्थानिवत्सूत्रे सर्वे सर्वपदादेशा इति भाष्यग्रन्थे पद्यते ज्ञायतेऽर्थोऽनेनेति व्युत्पत्त्या पदशब्दस्यार्थवत्परत्वमाश्रित्य एरुरित्यस्य तेस्तुरित्यर्थः अर्थवत्येव स्थान्यादेशभावविश्रान्तेरित्यादिग्रन्थैश्च स्वीकृतः । अत्र वदन्ति । लकार एव वाचको न तु प्रयोगान्तर्गतास्तिबादयः । अनेकशक्तिकल्पनापत्तेः । "लः कर्मणि" इत्याद्यनुशासनाच्च । न च स्थान्यादेशभावधीविधुराणां बोधानुपपत्तिः।शक्तिभ्रमात्तदुपपत्तेः। न च शत्रादीनामपि लकारादेशतया बोधवैषम्यं न स्यात्, वाचकस्य लकारस्यैक्यादिति वाच्यम् । "कर्त्तरिकृत्" इत्यनुशासनान्नामार्थयोरभेदान्वयाच्च तत्र कर्त्रादिपरत्वात् । यत्तु—राम इत्यादौ पाणिनीयाः सुप्रत्ययं विदधति, कौमारास्तु सिम्, अन्ये तु रुप्रत्ययम्, तावानित्यत्र सूत्ररीत्या वतुः, "आ सर्वनाम्न" इत्यात्वम्, डावतावर्थवैशेष्यादिति पूर्वाचार्यवार्तिकोक्तरीत्या डावतुः, तत्र किं स्मारणीयम् । न च

स्वाधीतव्याकरणस्थानिनः स्मरणं, सर्वाधीतिनो विनिगमना-विरहादिति । तन्न । उद्बोधकानुसारेण व्यवस्थासम्भवात्, संभेदेऽन्यतरवैयर्थ्याभावाच्च । न च स्थानिनामप्युक्तरीत्या बहुत्वादनेकशक्तिकल्पनसाम्यं वृद्धव्यवहारस्याप्यादेशे एव शक्तिपरिच्छेदकत्वमिति वाच्यम् । "लः कर्मणि च" इत्यस्य शक्तिपरिच्छेदकत्वात् । न च साधुत्वानुशासने एव तस्य तात्पर्यं न तु शक्तिपरिच्छेदेऽपीति वाच्यम् ।

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥

इति प्रथमकक्षायां तदुपादानानुपपत्तेः। वाक्यशेषादिनाऽपि तदनुपपत्तेश्च । न चेष्टापत्तिः । त्रिवृच्चर्वधिकरणादिविरोधात् । व्यवहारस्यापि तदतात्पर्यकत्वाच्च । तदुन्नायकत्वस्यापि साम्यात् । त्वयाऽपि कर्तृशक्तावुक्तानुशासनस्यैव प्रमाणितत्वात् । "अनेकमन्यपदार्थे" इत्यादेर्बहुव्रीह्यादावतिरिक्तशक्तिस्वीकाराच्च । न च भूल् इत्यतो बोधापत्तिः । भूतिप्इत्येतत्तुल्यत्वात्। शबादिविध्यन्तरप्रवृत्तिविषयत्वादपरिनिष्ठितत्वस्यापि साम्यात् । असाधुत्वज्ञानस्य शाब्दधीविरोधित्वाच्च । न च भवतीत्यादिसमभिव्याहारो वा समभिव्याहृता वर्णा वा वाचका इति विनिगमकाभावाद्वर्णानां वाचकत्वमिति वाच्यम् । समभिव्याहारो हि क्वचित्पूर्वोत्तरभावरूपो यथा घटमित्यादौ प्रकृतिप्रत्ययादेः, क्वचित्तात्पर्यरूपः, अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ तत्सत्त्वेऽपि तात्पर्याभावाद्राजपुरुषयोरन्वयाभावात् । तस्य च वाचकतायाः कुत्राप्यनुक्तत्वात् । पदोपस्थितानामर्थानामन्वयाविशेष एव तस्य सहकारित्वात् । अभ्युपेत्यापि ब्रूमः लकारस्य वाचकत्वं त्वयाऽप्यभ्युपगम्यते । लकारस्य वाचकत्वे

तिबादीनां शत्रादीनां च वैषम्यं न स्यात् । न च "कर्त्तरि कृत्" इत्यनेन निर्वाहः । स्थान्यर्थेनैव निराकाङ्क्षत्वाच्छत्रादौ तदप्रवृत्तेः । ण्वुलादीनामनादेशतयाऽर्थाकाङ्क्षायां तत्रैव प्रवृत्तेः । आकाङ्क्षितविधानं ज्याय इतिन्यायादिव्यवस्थापितत्वात् । तद्यदि लकारः कस्य चिदर्थस्य नाभिधायकस्तत्कथं तदर्थेन शत्रादीनामर्थाकाङ्क्षोपशान्तिः। कथं च तेन शय्यमाने आस्यमाने चायं गत इत्यादौ भावे घटः क्रियमाण इत्यादौ कर्मणि शानच् । नन्वस्मन्मते तिबादिवच्छानजादीनामपि लादेशत्वात्तन्निष्ठामेव वाचकतां लकारे आरोप्य तदर्थकथनाभ्युपगमात्तथोक्तमिति चेत्, आस्तां तावदेतत्, लकारस्यैव वाचकत्वमिति तार्किकमतमित्यसिद्धमेव । तिङो व्यापारे लक्षणेति कुसुमाञ्जलावाचार्योक्तेः । एकत्वादिसंख्यामात्रमाख्यातार्थ इत्युपाध्यायाश्च ।आख्यातदीधितावपि आख्यातत्वं लत्वमेव दशलकारसाधारणमिति यद्यपि कैश्चिद्व्याख्यातम्, तथाऽप्याख्यातत्व न जातिर्मत्वादिना सङ्करान्मानाभावाच्च, किं त्वभियुक्तानां सङ्केतविशेषेणाख्यातपदवत्त्वम्, शक्ततावच्छेदकं तु तिप्त्वादिकमेव तद्रूपेणाज्ञानदशाया शाब्दबोधानुदयादिति व्याख्यातमेव । अन्यैरप्येकोच्चारणान्तर्भावेन तिप्त्वादिकमेव वर्त्तमानत्वयत्नयोः शक्ततावच्छेदकम्पुष्पवन्तादिवत् । अत एवातीते यत्ने वर्त्तमानत्वबोधे तात्पर्याभावे पचतीत्यादिप्रयोगाभावः । उष्णपुष्पवन्ताविवितिवदित्याद्युक्तम् । अतो लकारस्यैव न्यायमते वाचकत्वमित्येकान्तकल्पनं प्रामादिकमेव । नन्वेवं सुत्वेनैकत्वे शक्तिरित्यादिकं कथमिति चेत् । मैवम् । स्थानिन एवादेशस्यैवेति वा नियमाभावात् । न हि त्वन्मते ऽप्यादेशस्यैव वाचकत्वनियमः । भ्यामित्यादिभ्यो बोधानापत्तेः । न च रामभ्यामित्यस्य "सुपि च"

इति दीर्घद्वारा रामाभ्यामित्यादेश इति वाच्यम् । वर्णस्फोट-पक्षस्य पदस्फोटपक्षाद्भिन्नत्वात् । प्रमाणानुरोधेनैव वाचकत्व-विश्रामात् । "लः कर्मणि" इत्याद्यनुशासनसत्त्वेऽपि तस्य प्रयोगाविरहानियमात्तदादेशानामेव तत् । लाघवार्थमेव लकार-स्य तत्रोल्लेखात् । त्वयाऽप्येवमेवाभ्युपेतत्वाच्च । न च "तिङ्कर्मणिच" इत्यादिकमेव तदस्तु इति वाच्यम् । तिबाद्यन्य-तमत्वरूपस्य तिङ्त्वस्य विधेयतावच्छेदकत्वे गौरवात् । न-च लस्येति सूत्रस्य लडित्यादिसूत्रस्य चानारम्भाल्लाघवमि-ति वाच्यम् । सुब्विभक्तीनामनुगतार्थतया स्वातन्त्र्येण तद्वि-धानेऽपि तिङा तत्तत्कालविशेषप्रयुक्तावान्तरानेककार्यवैलक्षण्येन तन्निर्वाहान्यथानुपपत्त्या स्थानिभेदेनैव तस्योपपाद्यत्वात् ।

प्रकृतमनुसरामः । सुपां च स्वौजसित्यादिना स्व-रूपं निर्दिश्य तत्रैव द्व्येकयोर्द्विवचनैकवचने इत्याद्यर्थविशेषानि-र्देशात्सुत्वादिकमेव शक्ततावच्छेदकम् । अत एवैकत्वादौ तिबादेरेव शक्तिः । तत्रापि विसर्गत्वस्य राम इत्यादौ शक्त-तावच्छेदकत्वे पचत इत्यादौ व्यभिचारात् । सुस्थानीयविसर्ग-त्वापेक्षया च सुत्वस्य लघुत्वात् । टादौ तु गौर्येत्यादौ तस्या-पि स्वरूपेण प्रयोगयोग्यतया शक्त्यावश्यकत्वे इनाद्यादेशाना-मपि तत्कल्पने गौरवात् । अन्यथा स्त्रीलिङ्गमात्रे हलन्तपुं-नपुंसकयोश्च टाप एव रामेणेत्यादाविनादेशस्य घिसंज्ञास्थ-ले हरिणेत्यादौ च नादेशस्येति शक्तित्रयकल्पनापत्तेः । स्था-निशक्तिबाधकप्रमाणाभावात् । इनादिशक्तिसाधकप्रमाणाभा-वाच्च । बोधस्य च व्युत्पन्नानां स्मरणेनान्येषां च शक्ति-भ्रमेण सम्भवात् । अत एव टात्वेन एकत्वे करणत्वे च शक्ति-रिति नैयायिकानां व्यवहारः । किञ्च तिबादीनामपि सर्व-

लकारसाधारणार्थ एव शक्तिः । तत्तदसाधारणार्थे तु लडादीनां तत्तद्रूपेणैव शक्तिः । अन्यथा बोधवैलक्षण्यानुपपत्तेः । वर्तमानत्वादौ लडादीनां शक्तिरिति वैयाकरणाः । लिङादावाख्यातत्वेन भावना तिङ्त्वादिना तु प्रवर्तना वाच्येति मीमांसकाः । यदाहुः—

अभिधाभावनामाहुरन्यामेव लिङादयः ।
अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः ॥

तत्सिद्धमेतत् आदेशविनिर्मुक्तस्य प्रयोगाभावे आदेशानामेव, उभयथा प्रयोगे तु स्थानिनामेव वाचकत्वम् । यत्र त्वनुगतेष्वप्यादेशेषु अर्थविशेषपुरस्कारो यथा लिङादौ तत्र सर्वानुगतेऽर्थे आदेशानां अर्थविशेषे च स्थानिनामेव तथात्वम् । एवं च द्वितीयविप्रतिपत्तौ अभावकोटौ बाध इत्यादिकं बहुतरमूहनीयम् । नन्वेवं यत्रैवादेशानां वाचकत्वमभ्युपगम्यते तत्रैव स्फोटसिद्धिरिति चेत् । मैवम् । यदि तिबादीनामर्थवाचकत्वमेव स्फोट इत्युच्यते तदा इष्टापत्तिः । अथ तकारेकारादीनां प्रत्येकं वाचकत्वम् । तन्न । तत्राप्यसिद्धान्तात् । एरुरित्यस्य तेस्तुरित्यर्थ इतिव्याख्यातृवचनानुपपत्तेः । इकारस्याप्यर्थवत्त्वे तस्योकारादेशेऽप्यर्थवत्येव स्थान्यादेशभाव इति नियमभङ्गाभावात् । नन्वेवं चैत्रः पचत्वित्यादौ "तिङ्ङतिङः" इति निघातो न स्यात् । इकारमात्रस्य तिङ्त्वाभावात्तदादेशस्य स्थानिवत्त्वेनापि तिङ्त्वाभावे पचतु इत्यस्य तिङन्तत्वाभावादिति चेत्, किं तेन । न हि वयमिकारस्यैव उकारादेशो विधेय इति व्यवस्थापयामः । किं तु इकारमात्रस्य वाचकत्वे नैवापसिद्धान्तापत्तिः । अन्यथा निघातानुरोधात्तेस्तुरित्यर्थ इति ब्रूयान्न तृक्न्यायानुरोधादिति न किं चिदेतत् । एतेन आदेश-

वाचकत्वाभ्युपगमे घटेन दधीदं हरेऽव विष्णोऽवेत्यादिषु पदवाक्यस्फोटावपि सिद्ध्येतामिति परास्तम् । अवेत्यादिस्मरणादपि बोधोपपत्तेः । पूर्वरूपस्थलेऽकारलोपाभ्युपगमेऽपि क्षतिविरहात् । वस्नसादौ प्रकृतिप्रत्ययविभागसंमोहेऽपि तत्रापि युष्माकमित्यादिस्थानिनः स्मरणाद् बोधात् । अन्यथा तेषां षष्ठीचतुर्थीद्वितीयासाधारण्यादर्थविशेषस्य दुर्ग्रहत्वात् । सर्वादेशानां वाचकत्वानभ्युपगमात् । आदेशशक्तिग्राहकप्रमाणसत्त्व एव तथात्वात् । ननु—

सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः ।
एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥

इति रीत्या हरे अव इत्यस्य स्थाने पूर्वरूपमुखेन हरेऽव इत्यादेश एव विधीयत इति चेत्, कामं विधीयतामर्थबोधोपायस्योक्तत्वात् । न चैवमादेशस्यार्थवत्त्वं कथमिति वाच्यम् । तवापि स्थानिनस्तत्कथमिति पर्यनुयोगात् । उक्तन्यायेनादेशवत्स्थानिनोऽप्यर्थवत्ताया लाभात् । आदेशार्थवत्तयैव स्थानिनस्तथात्वमिति चेत्, तर्हि स्थान्यर्थवत्तयैवादेशस्य तथात्वमिति तुल्यम् ।

वाक्यस्फोटे त्विदमपि विचार्यते । विशिष्टवाक्यार्थबोधे विशिष्टवाक्यशक्तिज्ञानस्य हेतुत्वे मानाभावः । तथा हि वाक्यशक्तिवादिना पदानां शक्तिस्तज्ज्ञानस्य शाब्दधीकारणत्वं च स्वीक्रियते न वा । नाद्यः । तत एव वाक्यार्थबोधोपपत्तौ वाक्यशक्तिकल्पनाऽनवतारात् । नान्त्यः । पदशक्तिज्ञानविरहे वाक्यशक्तिज्ञानाद् बोधापत्तेः । पदशक्तिज्ञानसत्त्वे वाक्यशक्तिज्ञानाविरहेण शाब्दधीव्यतिरेकानुपलम्भाच्च । यत्तु पदशक्तिज्ञानस्य पदार्थशाब्दबोधत्वं वाक्यशक्तिज्ञानस्य च वाक्यार्थशाब्दत्वं कार्यतावच्छेदकमिति नान्यतरवैय-

ध्यमिति । तन्न । पदार्थशाब्दबोधः स्वातन्त्र्येणैव वक्तृतात्पर्यविषयः प्रकारान्तरेण वा । नाद्यः । प्रयोजनाभावात् । पदार्थवाक्यार्थज्ञानस्य समूहालम्बनत्वप्रसङ्गात् । वाक्यार्थबोधसमये पदार्थानां खण्डशो बोधस्याप्रामाणिकत्वात् । न द्वितीयः । वाक्यार्थज्ञानोपयोगित्वातिरिक्तस्य प्रकारस्याभावात् । पदशक्तिज्ञानेन वाक्यार्थबोधे जननीये पदार्थस्मरणस्य द्वारतायास्त्वयैवोक्तत्वात् । घटकर्मकानयनबोधस्य वाक्यशक्तिज्ञानादेव सिद्धौ प्रत्येकपदजन्यघटादिज्ञानानां तदुपयोगासम्भवाच्च । ननु घटादिपदशक्तिज्ञानस्य घटत्वप्रकारकघटविशेष्यकशाब्दत्वादिकमेव कार्यतावच्छेदकं तत्कथं तेन वाक्यार्थज्ञाननिर्वाहः । अतस्तत्कारणीभूतज्ञाने विषयतया ऽवच्छेदिका वाक्यशक्तिरवश्यं कल्पनीया । यत्कार्यं यत्कार्यविजातीयं तत् तत्कारणविजातीयकारणजन्यम्, यथा घटविजातीयः पट इति न्यायेन घटमानयेत्येतद्वाक्यार्थज्ञानत्वं प्रत्येकपदार्थज्ञानत्वावच्छिन्नकार्यताप्रतियोगिककारणतानवच्छेदकरूपावच्छिन्नकारणताप्रतियोगिककार्यतावच्छेदकं तद्धर्मावच्छिन्नकार्यताभिन्नकार्यतावच्छेदकधर्मवत्त्वादिति चेत् । न । प्रत्येकशक्तिज्ञानैः स्वस्वकार्यतावच्छेदकावच्छिन्नजनने आकाङ्क्षादिरूपसहकारिवशाद्विशिष्टधर्मावच्छिन्नजननसम्भवात् । यत्त्वाकाङ्क्षादिज्ञानहेतुत्वापेक्षया वाक्यशक्तिज्ञानमेव कारणत्वेनाभ्युपगम्यतामिति । तन्न । तद्धि निरपेक्षमेव वाक्यार्थज्ञानजनकं किञ्चिदपेक्षं वा । नाद्यः । घटः कर्मत्वमानयनं कृतिरित्यादितोऽपि बोधापत्तेः । नान्त्यः । आकाङ्क्षाज्ञानादेरेवापेक्षत्वात् । न च घटः कर्मत्वमित्यादौ शक्तिग्रहसत्त्वे भवत्येव शाब्दमिति वाच्यम् । विमलं जलं नद्याः कच्छे महिषश्चरतीत्यादौ कदाचिन्नद्यर्थो जलान्वितत्वेन कदाचिच्च कच्छान्वितत्वेन

प्रतीयत इति वैषम्यानापत्तेः। उभयवाक्यार्थशक्तिज्ञानसत्त्वात् न च नानार्थवत्तात्पर्याद्विनिगमनेति वाच्यम्। तात्पर्यज्ञानहेतुत्वापत्तेः। न च तथाप्याकाङ्क्षाज्ञानस्थले वाक्यशक्तिज्ञानं स्यादिति वाच्यम्। घटमानय घटः कर्मत्वमित्यनयोस्तुल्यकक्षतया प्रयोगापत्तेः। न च विपरीतव्युत्पन्नस्यैव द्वितीयाद् बोधः। तद्व्युत्पत्तेर्वैपरीत्य एव मानाभावात्। निराकाङ्क्षत्वातिरिक्तस्य तद्बीजस्य दुर्वचत्वात्। घटमानय आनय घटं घटः कर्मत्वमित्यादीनां भिन्नतया घटकर्मकानयनबुद्धौ हेतुत्रयकल्पनापत्तेश्च। तत्तदानुपूर्वीवैशिष्ट्यस्य कार्यतावच्छेदके निवेश्यत्वाच्च। तदतिरिक्तवाक्यत्वस्य त्वया दुर्वचत्वात्। न च साकाङ्क्षपदसमूह एव वाक्यमिति वाच्यम्। आकाङ्क्षाज्ञानहेतुतासिद्धेः। किं च वह्निना सिञ्चतीत्यादौ वह्निकरणकसेकरूपवाक्यार्थाप्रसिद्ध्या तत्र शक्तिग्रहानुपपत्तिः। मन्मते पदार्थानां प्रत्येकं प्रसिद्धिनियमात्। यत्तु—विशिष्टं नातिरिक्तं किं तु तावन्त एव पदार्थास्ते च प्रसिद्धा एवेति। तत्तुच्छम्। पदार्थशक्तेस्त्वयाऽपि स्वीकाराद्वाक्यार्थशक्तिस्वीकारवैयर्थ्यात्। यमेव विशेषमादाय भवता पदार्थाद्वाक्यार्थभेदो मन्तव्यस्तमेवादायाप्रसिद्धेर्वाच्यत्वात्। अन्यथा ग्रावाणः प्लवन्ते इत्यादेरयोग्यत्वम्, काञ्चनमयः पर्वत इत्यादावाश्रयासिद्ध्यादिकं च न स्यात्। पर्याप्तिसम्बन्धेन तद्वृत्तिविषयताया एव विशिष्टपदार्थत्वाच्च। एतेन पीतः शङ्खो नास्तीत्यत्रारोपिता पीतशङ्खसत्तेति बोध इत्युन्नीतमतमपास्तम्। तत्रापि पीतशङ्खसत्ताया अप्रसिद्धेः। यत्त्वाहार्या प्रतियोगिप्रसिद्धिः। प्रतियोगिज्ञानस्याभावधीहेतुत्वेऽनाहार्यत्वस्य गौरवादनिवेशादिति। तदसत्। सा हि शब्दादेव अन्यतो वा। नाद्यः। परोक्षज्ञान-

स्यानाहार्यत्वनियमात् । शक्तिग्रहं विना तदनुपपत्तेश्च । नान्त्यः । ज्ञानान्तरविषयस्य शाब्दान्वयानुपपत्तेः । नञर्थेनारोपितत्वेन सहानन्वयापत्तेः । एतेन विशेषणतावच्छेदकप्रकारकज्ञान-कारणतैव प्रतियोगिज्ञानकारणतेति पक्षेऽप्याहार्यज्ञानादप्या-हार्यविशिष्टवैशिष्ट्यबोध इत्यपि परास्तम् । तावताऽप्यु-क्तरीत्या दोषानुद्धारात् । इदं च सौकर्यादुक्तम् । वस्तुतस्तु वा-क्यार्थस्यापूर्वत्वात्सर्वत्रैव न शक्तिग्रहसम्भवः ।

यत्तु येषां मते वाक्यार्थो लक्ष्यो येषां वाऽन्विते शक्तिस्ते-षामपि प्राक् तदनुपस्थितेर्वृत्तिग्रहासम्भवात्कथं निर्वाह इत्यादि, तत् कथं चिद्भट्टादीन्प्रति सङ्गच्छतां नाम, नैयायिकादीन्प्रति तु सर्वथा नेदमुत्तरं घटते । परैरपि घटपदमितरान्वितघटे शक्त-मित्याकारकस्यैव शक्तिग्रहस्य स्वीकारेण कर्मत्वान्वितघटे शक्तमित्यस्यानभ्युपगमाच्च ।

यदपि पदशक्तिः पदार्थांशे ज्ञाताऽन्वयांशे तु स्वरूप-सत्येवोपयुज्यते इति कुब्जशक्तिवादे इवास्माकमपि पदशक्तिर्ज्ञाता वाक्यशक्तिरज्ञातैवोपयुज्यतामिति । तदप्य-सत् । वाक्यशक्त्युपयोगो हि पदार्थबोधे वाक्यार्थबोधे वा । नाद्यः । पदशक्त्यैव सिद्धेः । नान्त्यः । पदशक्तेरुभयासि-द्धतयाऽन्वयांशे ऽज्ञातोपयोगिन्याः शक्तेरपि पदेष्वेव कल्प्य-त्वात् । वाक्यशक्तेरज्ञातोपयोगित्वे घटः कर्मत्वमित्यादौ वाक्यशक्तिज्ञानसत्त्वे भवत्येव शाब्दमन्यथा तदभावादेव त-दभाव इति पूर्वोक्तविरोधाच्च ।

अयं चात्र नैयायिकमतनिष्कर्षः । यद्यपि पदाना-मन्वयज्ञानजनकत्वात्तत्र शक्तिरस्ति, अशक्तस्याजनकत्वा-त्, पदादन्वयबोध इतीश्वरेच्छासत्त्वाच्च । तथा-

ऽप्यन्वयबोधे स्वरूपसती सा व्याप्रियते, न तु ज्ञाता घट-ज्ञानशक्तत्वेन ज्ञातादेव घटान्वयबोधोपपत्तेः। ज्ञायमानकरणे ज्ञातोपयोगिसम्बन्धस्य विषयप्रतियोगिकसंसर्गबोधकत्वनियमाच्च। वह्निप्रतियोगिकव्याप्तेरिव तत्सम्बन्धव्याप्तेरपि बोधस्य वह्न्यनुमित्यनङ्गत्वात्। न च घटज्ञानत्वमितरान्वित-घटज्ञानेऽप्यस्तीति तेन रूपेणान्वितघटज्ञानेऽपि ज्ञात-शक्त्युपयोगः। अन्वयांशस्य गौरवादन्यलभ्यत्वाच्च घट-ज्ञानत्वमेव शक्यतावच्छेदकम्, न त्वन्वितघटज्ञानत्वमिति स्वीकारात्। अत एव घटाद्यन्वयप्रतियोग्युपस्थापकपदज्ञा-नत्वमुभयमतेऽपि कारणतावच्छेदकम्। कार्यतावच्छेद-कं तु भट्टमतेऽन्वितघटादिशाब्दत्वम्, न्यायमते तु घटादिशाब्द-त्वमेवेति विशेषः। तस्माद् भट्टमते जातिवाचकपदस्य व्यक्ता-विव एकैव शक्तिरन्वयांशे स्वरूपसती पदार्थांशे ज्ञाता व्या-प्रियते। न च जातिव्यक्त्योः समानसंवित्संवेद्यत्वात्तथा, घट ज्ञानस्य तु नान्वयविषयकत्वनियमः, स्मरणे व्यभिचारादिति वाच्यम्। घटानुभवविशेषघटान्वययोरेकवित्तिवेद्यत्वात्। स्मर-णे च सम्बन्धितया ज्ञातत्वेन घटपदस्य जनकत्वात्। तस्मा-त्पदज्ञानं करणम्, पदार्थस्मरणं व्यापारः, आकाङ्क्षादिसह-कारिवशात्स्मारितार्थान्वयानुभवः फलम्, व्यापारत्वाच्च पदार्थ-स्मरणस्य न व्यवधायकत्वमिति। एवं चान्वयबोधविरहप्रयो-जकाभावप्रतियोगिज्ञाने विषयतया ऽवच्छेदकत्वाभावे वाक्य-शक्तौ मानाभावः। पदशक्तेस्त्वेकस्या एवान्वयांशेऽज्ञातोपयो-गित्वकल्पनया वैषम्यात्। हरिद्रायां नद्यां घोष इत्यादौ तु सम्भवत्येकवाक्यत्वे वाक्यभेदायोगात्प्रसिद्धार्थकनदीपदसमा-नविषयकत्वाद्धरिद्रापदस्य नदीविशेषवाचकत्वं कल्पयित्वा

हरिद्रानद्योरभेदान्वयबोधोत्तर नदीशब्दस्य तीरे लक्षणा । यत्तु पदार्थोपस्थित्याकाङ्क्षादिसहकारेण तत एव वाक्यार्थोपस्थितावपि स बोधो न शाब्द इति मध्ये लक्षणाकल्पनम्, तद्वदत्रापि शक्तिकल्पनमिति । तन्न । शाब्दत्वं हि न शब्दशक्तिजन्यत्वं, लक्षणाकल्पनेऽप्यनिर्वाहात्। न शब्दवृत्तिजन्यत्वं, न्यायरीत्यैव सिद्धेः । नापि स्वविषयविषयकवृत्तिज्ञानजन्यत्वम् । अन्वयस्य पदार्थत्वे तेषामिव तस्यापि संसर्गस्य विषयत्वापत्तौ तत्र व्यभिचारात् । अन्यथा चानवस्थानात् । अत एवान्वयस्य शक्यत्वे पदार्थवत्तस्य विशेषणत्वे संसर्गसंसर्गभानापत्तिरिति नान्वयः शक्य इति तात्पर्यं न शक्तिनिर्वाह्यमिति मिश्राः । न च संसर्गसंसर्गस्य वृत्तिं विनैव शाब्दत्वमिति वाच्यम् । पदार्थसंसर्गे एव तथाकल्पनौचित्यात् । पदार्थस्यापि संसर्गस्य संसर्गो न भासते इत्यत्र च बीजाभावात्। भट्टमतेऽपि शक्तिवदन्वयसामान्य एव पदानां लक्षणायाः स्वीकारात् । पूर्वं संसर्गविशेषोपस्थितेरनपेक्षितत्वात् । अन्वयविशेषस्याकाङ्क्षादिवशात्सिद्धिस्वीकारात् । यत्तु प्रथमं मानससंसर्गबोधेऽपि तस्य संशयसाधारणतया निर्णयार्थं शाब्दादरः । वस्तुतस्तात्पर्यज्ञानरूपामेवोपस्थितिमादायान्वयांशशक्तिग्रहस्तात्कालिक एवेति । तदसत् । लौकिकवाक्ये तत्सम्भवेऽपि वैदिके तदयोगात् । वेदार्थस्य मानान्तरानवगम्यत्वात् । तस्य च प्रथममबोधकत्वात् । तात्पर्यज्ञानस्य शाब्दधीत्वावच्छिन्ने हेतुत्वानभ्युपगमाच्च । एतेनाप्तोक्तत्वनिश्चयोऽपि व्याख्यातः ।

नाप्तोक्तता तु वाक्यार्थगर्भा ज्ञातोपयुज्यते ।
वाक्यार्थानामपूर्वत्वात्संशयेऽप्यन्वयोदयात् ॥

इत्युक्तत्वात् । पदार्थवाक्यार्थतात्पर्यस्य च घटपदं

स्वार्थप्रकारककर्मत्वविशेष्यकप्रतीतिपरामित्यादिरीत्या एकत्र पदार्थत्वेन घटितत्वादिति दिक् । अपि च पदार्थबोधवदवान्तरबोधस्तस्य महावाक्यार्थबोधहेतुत्वं च त्वयाऽप्यभ्युपगम्यमनुभवानुरोधात् । अन्यथाऽवान्तरवाक्यार्थायोग्यत्वानिर्णयकाले महावाक्यार्थबोधापत्तेः । ग्राह्याभावावगाहित्वजनकज्ञानविघटकत्वान्यतरव्यतिरेके ज्ञानस्य प्रतिबन्धकत्वायोगात् । अतो घटप्रकारककर्मत्वविशेष्यकबोधे घटपदाम्पदयोराकाङ्क्षाज्ञानस्य हेतुत्वमावश्यकम् । न च घटमित्यादिपदशक्तिज्ञानादेव तत्सिद्धिः । वाक्यस्फोटस्य पदस्फोटभिन्नत्वात्। "पदैः पदार्था बुद्ध्यन्ते वाक्येन वाक्यार्थ" इति भवदभ्युपगमात् । अत्र पदशब्दस्य प्रत्येकप्रकृत्यादिपरत्वात् । अत एव "समासग्रहणं नियमार्थं सद् वाक्यस्य प्रातिपदिकसंज्ञां वारयतीति वैयाकरणसाम्प्रदायिकानां ग्रन्थाः । अन्यथा घटमित्यादिसमुदायस्य तन्नियमाद्व्यावृत्त्यभावादर्थवत्त्वाच्चार्थवदादि सूत्रेण प्रातिपदिकत्वापत्तेः । न च पदस्यापि तदुपलक्षणम् । पदस्फोटपक्षेऽपि तस्याऽर्थवत्समुदायत्वरूपनिर्द्धारणप्रतियोगितावच्छेदकधर्मानवच्छिन्नत्वात् । घटमिति समुदायस्य प्रत्ययभेदसत्त्वात् । प्रत्ययान्तपर्युदासे च मानाभावात् । किञ्च मणिमन्त्रादिन्यायेनैव निराकाङ्क्षत्वज्ञानादीनां प्रतिबन्धकत्वं त्वयाऽपि वाच्यम्, हेतुत्वन्तु त्वन्मते निराकाङ्क्षत्वज्ञानाभावस्य । मम त्वाकाङ्क्षाज्ञानस्येति लाघवम् । निराकाङ्क्षत्वमाकाङ्क्षाविरहः साकाङ्क्षभिन्नत्वं चेति द्वयोर्विरोधितायास्तदभावद्वयस्य च कारणताया आपत्तेः । न चाकाङ्क्षाविरोधिज्ञानत्वेन तदनुगमः । विरोधितावच्छेदकभेदेन विरोधिताभेदात् । अपि च निराकाङ्क्षत्वज्ञानस्य प्रतिबन्धकतायामप्रामाण्यनिश्चयाभावोऽवच्छेदको

वाच्यः । तदपेक्षयाऽऽकाङ्क्षानिश्चयहेतुतैव युक्ता । अप्रामाण्यज्ञानाभावस्यैवावच्छेदकत्वे लाघवात् । संसर्गं शाब्दयामीत्यनुव्यवसायोऽपि वाक्यार्थबोधस्य शब्दप्रयोज्यत्वात् । नचैवं पदार्थस्याप्यशाब्दत्वं, हेत्वन्तराभावेन वैषम्यात् । तदुक्तं भट्टपादैः ।

तन्मात्रावसितेष्वेषु पदार्थेभ्यः स गम्यते ।
अशाब्दोऽपि च वाक्यार्थो न पदार्थेष्वशाब्दता ॥
वाक्यार्थस्यैव नैतेषां निमित्तान्तरसम्भवः ।

न च व्यवहाराद्वाक्यार्थे एव शक्तिग्रहः । आवापोद्वापाभ्यां पदशक्तिकल्पनसमये गौरवान्यलभ्यत्वाभ्यां तद्ग्रहस्य भ्रमत्वात् । चन्द्राद्यल्पत्वग्रहवत् ।

अखण्डस्फोटे विप्रतिपत्तिः । शब्दत्वं शब्दोपादानवृत्ति न वेति लीलावत्यामुपायकृतः । विधिर्वैयाकरणानाम्, निषेधो नैयायिकादीनाम् । शब्दोपादानमाकाशस्तद्वृत्तित्वं तदीये विशेषे परिमाणे वा प्रसिद्धम् । तदभावस्तु घटत्वादौ । न च पक्षेऽप्याकाशवृत्तित्वेनार्थान्तरत्वप्रसङ्गः । शब्देतरावृत्तित्वे सति सकलशब्दसमवेतत्वरूपपक्षतावच्छेदकधियो बाधकत्वात् । स्फोटात्मकशब्दोपादानककारादिवृत्तित्वं विना साध्यानुपसंहारात् । अत्र कैयटादयः । शब्दस्यार्थप्रत्यायकत्वान्यथानुपपत्त्या वर्णातिरिक्तं पदं पदातिरिक्तं च वाक्यमखण्डं कल्प्यते । न ह्येकवर्णमात्रेणार्थधीः । अनुभवविरोधाद्वर्णान्तरवैयर्थ्यात् । नापि समुदायेन, मेलकाभावात् । वर्णानां नित्यत्वेऽभिव्यक्तेरनित्यत्वे च स्वरूपस्यैव क्रमिकत्वात् । न च पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकारेण समूहालम्बनरूपसकलविषयकज्ञानेन निर्वाहः । सरो रसः नदी दीनः जारा राजा इत्यादावर्थविशेषप्रत्ययानुपपत्तेः । वर्णस्व-

रूपस्य तुल्यत्वात् । अतो वर्णादिव्यङ्ग्यं पदं वाक्यं वाऽखण्ड-स्फोटात्मकमर्थप्रत्यायकम् ।

तदुक्तम्—

एकैकवर्णासामर्थ्यान्मेलकानुपपत्तितः ।
एकबुद्धेर्नदीदीनसाम्यात् स्फोटः स तु द्विधा ॥

अत्र वदन्ति । स्फोटोऽपि किमेकैकवर्णज्ञानेनाभिव्यङ्ग्यः, तत्समूहज्ञानेन वा । नाद्यः । शेषवैयर्थ्यात् । नान्त्यः । मेलनानुपपत्तेः । अभिव्यञ्जकाभावेऽभिव्यङ्ग्यग्रहासम्भवात् ।

तदुक्तम्—

यस्यानवयवः स्फोटो व्यज्यते वर्णबुद्धिभिः ।
सोऽपि पर्यनुयोगेन नैवानेन विमुच्यते ॥

इदमेव साङ्ख्यसूत्रेणाप्युक्तम्,

प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्द इति । पदप्रत्यक्षाभ्युपगमे तेनैवार्थप्रतीतेः तदभावे चाभिव्यञ्जकाभावादित्यर्थः । यत्तु पदप्रत्यक्षमनुपपन्नमिति । तदसत् । घज्ञानानन्तरज्ञानविषयत्वं टस्यानन्तर्यं घकारटकारयोरानुपूर्वी । मौनिश्लोकानुरोधात् । सा च घटपटज्ञानयोरिव मनसैव गृह्यते । मानसोपनीता च श्रोत्रे भासते । सुरभिचन्दनमित्यादिवत् । बहिरिन्द्रियेण मानसोपनीतस्य स्वायोग्यस्यापि ग्रहोपगमात् । नन्वेवं घज्ञानानन्तरज्ञानविषयष्टकार इति टकारमुख्यविशेष्यकमानुपूर्वीविशेषणकं लौकिकप्रत्यक्षं न स्यात् । टकारोत्पत्तिस्तज्ज्ञानं तत्र घज्ञानानन्तर्यग्रहश्चेत्येतावत्पर्यन्तं टकारनाशे विशेष्याभावात् ।

उच्यते—

वीचीतरङ्गन्यायेन श्रोत्रावच्छेदेन नानाटकारा उत्पद्यन्ते ।

तत्र तत्तद्व्यक्तिभेदेऽप्यानुपूर्व्या एकत्वात्पूर्वटकारस्य श्रोत्रसमवेततया तत्समवेतटत्वस्य समवेतसमवायेन निर्विकल्पकोपपत्तौ द्वितीयटकारे पूर्वटकारघटितसम्बन्धेन ज्ञातानुपूर्वी विशेषणतया भासते इत्यभ्युपगमः । तथा च टकारोत्पत्तिस्तज्ज्ञानं तज्ज्ञानानन्तरं तत्र घज्ञानानन्तर्यग्रहः । सा चानुपूर्वी पूर्वटकारनाशेऽपि टकारान्तरे विशेषणतया श्रौत्रप्रत्यक्षे भासते इति । अथ चोक्तक्रमेण कालान्तरे गृहीतैवानुपूर्वी टकारोत्पत्तिकाले स्मर्यते, ततष्टकारस्थितिक्षणे तत्रैव प्रकारीभूय भासते इति । अन्यथा तवाप्यनुपपत्तेरुक्तत्वात् ।

यत्तु—पदं वाक्यं चाखण्डमेव । न तु वर्णसमूहः । अनन्तवर्णकल्पने मानाभावात् । तेषां जनकत्वेन व्यञ्जकत्वेन वाऽभिमतवायुसंयोगेषु तदुभयावच्छेदकवैजात्यस्यावश्यकतया मन्मते कत्वादीनामेव वायुसंयोगनिष्ठत्वोपगमात् । नचैवं वायुसंयोगस्यैव वाचकत्वापत्तिः । प्रत्यक्षसिद्धकादीनामेव तदौचित्यात् । तथा च वाचकत्वान्यथानुपपत्त्या तदेवं पदं वाक्यं चेत्यादिप्रतीत्याऽखण्डस्फोटसिद्धिः । कत्वादिकं च तत्रारोप्यते। भट्टमते तारत्वादिरिव ककारादौ, तस्माद्वायुसंयोगा एव स्फोटव्यञ्जकाः । न च तत्र प्रत्येकसमुदायविकल्पः । केचिद्गत्वेन केचिदौत्वेन केचिद्विसर्गत्वेनेति प्रकारभेदेन सर्वेऽपि व्यञ्जका इत्यभ्युपगमात् । न चैकेनाभिव्यक्तावन्यवैयर्थ्यम् । विशदप्रतीतेस्तावदभिव्यक्तिसाध्यत्वात् । न च वर्णानामप्येवमेवार्थप्रतीतावुपयोगोऽस्त्विति वाच्यम् । प्रत्यक्षात्मकप्रतीतावेव विशदाविशदाभासस्वीकारात् । अर्थप्रतीतेश्च प्रत्यक्षानात्मकत्वात् । तदुक्तम्,

सामस्त्येन तु तद्व्यक्तिः सर्वान्ते मणितत्त्ववत् ।

इति। अत एव तदतिरिक्तवर्णानभ्युपगमः। 'कादिप्रत्ययवैलक्षण्यस्य स्फोटविशेष्यककत्वाद्यारोपेणैव निर्वाहात्। एतेन गकारौकारविसर्गादिव्यतिरिक्तस्य स्फोटस्याभावादित्यपास्तम्। तेषामेव स्फोटातिरिक्तानामनङ्गीकारात्। तत्प्रतीतेरेव स्फोटविषयकत्वात्। अत एव तत्त्वबिन्दौ—"वस्तुतः ककारादतिरिच्यमानमूर्तेर्गकारस्याभावादिति स्फोटवादिमतं वाचस्पतिमिश्रैरुक्तम्। हरिणाऽप्युक्तम्—

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्च न॥

इति। यथा ऋकारादिषु रेफादिसमानाकारैकदेशावभासस्तथाऽखण्डपदे वर्णप्रत्यय इति दृष्टान्ततया द्वितीयचरणोपादानम्। अवयवा इवेति पाठे स्पष्टम्।

अत्रेदं वक्तव्यम्। प्रमाणान्तरासिद्धे हि धर्मिणि तन्निष्ठात्यन्ताभावप्रतियोगित्वेन भासमानानां धर्माणां प्रतीतिरारोप इत्युच्यते। न चेह यथोक्तस्फोटो मानान्तरात्सिद्धः। नापि कत्वादीनां प्रतीयमानककारादिगतत्वे बाधकं वायुसंयोगवृत्तित्वे साधकं वाऽस्ति। वायुसंयोगजनकवृत्तित्वस्याप्यापत्तेः। अकार औकाराद्भिन्न इति गत्वप्रकारकप्रतीतिविशेष्यस्यौत्वप्रकारकप्रतीतिविशेष्याद्भेदप्रतीतेश्च। अभिव्यञ्जकानामभिव्यङ्ग्यवृत्तिविशेषग्राहकत्वेनैवोपयोगाच्च। यत्तु—वर्णमालायां पदमिति प्रतीतेर्वर्णातिरिक्त एव स्फोटः। अन्यथा कपालातिरिक्तघटासिद्धिप्रसङ्गादिति। तन्न। आधाराधेयभावोऽस्या विषयः, अभिव्यङ्ग्याभिव्यञ्जकभावो वा। नाद्यः। तवाप्यपसिद्धान्तात्। उत्पत्तये स्थितये वा स्फोटेन तदपेक्षानभ्युपगमात्। नान्त्यः। आलोकेन घटव्यञ्जनेऽपि आलोके

घट इति प्रत्ययानुदयादिति दिक् ।

अत्रोच्यते । एकं पदमेकं वाक्यमिति सर्वसिद्धप्रतीतिबलादेवाखण्डस्फोटासिद्धिः । अत एव लीलावत्युपाये स्फोटवादिमतोपन्यासे उक्तप्रतीतिरेव तत्साधकत्वेनोक्ता न त्वर्थप्रत्ययान्यथानुपपत्तिः । एकम्पदमिति धीः सर्वानुभवसिद्धा न तावद्वर्णविषया । वर्णानामनेकत्वात् । नापि वर्णेष्वेवैकार्थज्ञानजननौपाधिकी । उपाध्यननुसन्धानेऽपि जायमानत्वात्। अतो यस्तस्या विषयः स एव स्फोट इति । न ह्यत्र तद्धेतोरितिन्यायावकाशः । स्फोटानभ्युपगमे स्फोटहेतोरेवार्थप्रत्ययोऽस्त्विति वक्तुमशक्यत्वात् । न च तद्धेतुत्वेन त्वदभिमतादित्यर्थः। सर्वत्र कल्पनोच्छेदापत्तेः । अत एव भेदाग्रहस्य विशिष्टज्ञानहेतुत्वेनावश्यकतया स एव प्रवृत्तिहेतुरिति न्यायोऽसत्यविशिष्टज्ञानकल्पनायां न बाधकः। भ्रमं प्रति भेदाग्रहहेतुत्वस्य भ्रमकल्पनोत्तरकल्पनीयतया प्रवृत्तिकारणताग्रहकाले तदुपस्थितिविरहात् । प्रमाणप्रवृत्तिसमये सिद्ध्यसिद्धिपराहतत्वेन फलमुखगौरवस्यादूषणत्वादिति नैयायिकाः। न चैवं यथोक्तन्यायोच्छेदः। तद्धेतोर्धर्मिणो मानान्तरसिद्धत्वे एव तदवकाशात् । यथा धर्मिज्ञानहेतुत्वेनावश्यकस्य धर्मीन्द्रियसन्निकर्षस्यैव संशयहेतुत्वं, न तु धर्मिज्ञानस्येति मिश्रादिभिरुक्तत्वात् । अथात्राप्युक्तप्रत्ययादेव स्फोटसिद्धावुक्तन्यायः प्रवर्त्ततामिति वाच्यम्। तर्हि स्फोटस्य वाचकत्वे एव विवादो न स्वरूपे, तस्य त्वयाऽप्यभ्युपगमादिति सिद्धमिष्टम् । न च त्वदभिमतं तद्वाचकत्वं न सिद्धमिति वाच्यम्। अस्माद्वाक्यादयमर्थो बुद्ध इति प्रत्ययात्तद्वाचकतायाः सुसाधत्वात् ।

स्यादेतत् । एकं पदमित्यादिप्रतीतेरतिरिक्तविषयकत्वे

मानाभावः। उक्तं हि शारीरकभाष्ये भगवत्पादैः—

या तु गौरित्येकोऽयं शब्द इति प्रतीतिः सा बहुष्वेव वर्णेष्वेकार्थावच्छेदनिबन्धनौपचारिकी, वनसेनादिबुद्धिवदिति।

तत्र वाचस्पतिमिश्रैरप्युक्तम्—

तस्मात्प्रत्येकवर्णानुभवजनितभावनानिचयलब्धजन्मनि निखिलवर्णावगाहिनि स्मृतिज्ञाने भासमानानां वर्णानां तद्रूपैकज्ञानविषयतया वा एकार्थधीहेतुतया वौपचारिकमेकत्वमिति।

अत एवाहुः—

यस्त्वेकप्रत्ययः सोऽपि बाधकेन बलीयसा।
औपाधिकतया नीतस्तस्मात्स्फोटो न मानभाक्॥

इति। तन्न। उक्तोपाधिप्रतिसन्धानव्यतिरेकेऽपि ऐक्यप्रत्ययात्। सेनावनादिबुद्धेश्चोपाधिप्रत्ययं विनाऽनुत्पादेन वैषम्यात्। एकज्ञानविषयत्वमात्रस्य समूहालम्बनसमुल्लिख्यमानघटपटादिष्वैक्यप्रतीत्यनुपधायकत्वात्। एकार्थधीहेतुत्वस्य तावद्वर्णवाचकत्वसिद्ध्युत्तरकल्प्यत्वाच्च। न चैकसुप्तिङन्तत्वावच्छेदेनैवैक्यधीः, अन्यथा कश्चित्पदात्मा स्फोटः, कश्चिच्च वाक्यात्मा स्फोटो न स्यादिति लीलावत्युक्त उपाधिर्युक्त इति वाच्यम्। वस्तुत एव तस्य नियामकतया ज्ञानस्यानुपयोगात्। तदेतदभ्युपगम्य कैयटेनोक्तम्—

वैयाकरणा वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वा वाचकत्वमिच्छन्तीति।

अथ जातिस्फोटपक्षः। तथा हि। प्रत्यक्षसिद्धवर्णानां तावदपलापो न युक्तः। युक्तेरुक्तत्वात्। स्फोटेऽतिरिक्तगत्वादिस्वीकारे गत्वादेरेव गकारादिरूपताया वर्णनित्यत्वपक्षे सम्भवेन तदतिरिक्तस्फोटकल्पनएव-

गौरवात् । अस्वीकारे चानुभवविरोधात् । न च वायुसंयोगे ध्वनौ वा गत्वादिकं स्वीकृत्य तस्य गकारादावारोप इति वाच्यम् । विना बाधकं प्रतीतेर्भ्रमत्वकल्पनाया अनुचितत्वात् । वायुसंयोगस्यैव गकाररूपत्वोपपत्तेश्च । तन्निष्ठस्य गत्वादेरिव तस्यापि श्रोत्रेन्द्रियग्राह्यत्वकल्पनसम्भवात् । तस्मादतिरिक्ता एव वर्णाः । परन्तु गौरवान्न वाचकाः । आकृत्यधिकरणन्यायेन वाच्यताया इव वाचकताया अपि जातावेव स्वीकर्त्तुमुचितत्वात् । हर्युपस्थितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकतया, इदं हरिपदमिति प्रतीत्या च, जातिविशेषसिद्धेः । वर्णानुपूर्व्यैव तत्प्रतीत्यवच्छेदकत्वयोर्निर्वाहे च घटत्वपटत्वादेरपि संयोगविशेषविशिष्टमृदाकारादिभिरन्यथासिद्धिप्रसङ्गात् । तस्माज्जातेरेव वाचकत्वं, तादात्म्येन तदवच्छेदकत्वं च । जातिविशेषाभिव्यञ्जकश्चानुपूर्वीविशेषरूप उपाधिः। तेन सरो रस इत्यादौ वर्णसाम्येऽप्यर्थबोधभेद उपपन्नः । उक्तं च वोपदेवेन —

शक्यत्वइव शक्तत्वे जाते र्लाघवमीक्ष्यताम् ।
औपाधिको वा भेदोऽस्तु वर्णानां तारमन्दवत् ॥

वाशब्दः तुशब्दसमानार्थः । उपाधेर्ज्ञानभेदप्रयोजकत्वे दृष्टान्तो वर्णानामिति । भट्टमते इति शेषः । वाक्यपदीयेऽप्युक्तम्—

अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता ।
कैश्चिद्व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः ॥

इति । अस्यार्थः । यद्यपि स्फोटपक्षे सरो रस इत्यादावर्थविशेषप्रत्ययानुपपत्तिरूपो दोषोऽस्ति तथाऽपि पदस्फोटवाक्यस्फोटपक्षयोर्न । तत्र जातेर्व्यासज्यवृत्तित्वस्य धर्मिग्राहकप्रमाणसिद्धत्वात्। न च तस्या नित्यत्वात्सर्वदा पदार्थबोधापत्तिः। ज्ञा-

ताया एव तस्याः फलोपधायकत्वात् । वर्णाभिव्यक्तेश्च तदभिव्यञ्जकत्वात् । वर्णाभिव्यञ्जकत्वेनाभिमता ध्वनय एव कत्वादिना भासन्त इति प्रागुक्तं मतान्तरमाह । कैश्चिदिति । अतिरिक्तवर्णानङ्गीकर्तृभिरित्यर्थः । तदुक्तं काव्यप्रकाशे—

बुधैर्वैयाकरणैः प्रधानीभूतस्फोटव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृत इति । जातिश्च तत्तद्व्यक्तिविशिष्टाऽविद्या तदीयो धर्मविशेषो वा । अत एव ब्रह्मदर्शने च गोत्वादिजातेरप्यसत्त्वादानित्यत्वम्, आत्मैवेदं सर्वमिति श्रुतिदर्शनादिति कैयटस्तदभिप्रायः* । वस्तुतस्तु तत्तद्व्यक्तिविशिष्टं ब्रह्मैव गोत्वादिजातिरिति वेदान्तिसिद्धान्तः । तदुक्तं वाक्यपदीये—

सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिषु ।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥
तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते ।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ॥

सम्बन्धिना गोत्वादिनाऽभिमतव्यक्तिविशेषाणां, सत्ता सद्रूपमेव, भिद्यमाना गोत्वादिविषयकधीविशेषविषयत्वापन्ना । यावत्यो गवादिव्यक्तयस्तावदन्यतमानिष्ठतादात्म्यसम्बन्धेन सद्रूपमेव गोत्वादिकम् । न च सम्बन्धाननुगमः । स्वरूपसम्बन्धेन कारणत्वादिस्थले तस्यादोषत्वोपगमात् । अन्यतमत्वेनानुगमाच्च । तादात्म्यानामनन्तत्वेऽपि तावदन्यतमव्यक्तेः स्वरूपेणैव निवेशात् । अनुगतरूपान्तरसत्त्वएव तद्रूपेणान्यथासिद्धेः । अत एव स्वरूपसम्बन्धेनाभावादेः कारणत्वादिस्थले तावत्स्वरूपान्यतमत्वं स्वरूपत एवावच्छेदकमन्यथाऽननुगत-

---

* स एव पूर्वोक्त एवाभिप्रायो यस्येत्यर्थात् कैयटविशेषणमिद बोध्यम् ।

सम्बन्धैः कारणत्वादेर्दुर्वचत्वात् । तस्माद्यत्र गोत्वमतिरिक्तमवच्छेदकं परेषां तत्रास्माकमुक्तसम्बन्धेन सद्रूपमेव तथा । न च गोव्यक्तीनामेवान्यतमत्वेन कारणत्वसम्भवात् सत्सामान्यस्यैव कथमवच्छेदकत्वमिति वाच्यम् । अतिरिक्तगोत्वाद्यभ्युपगमेऽपि तादृशविनिगमनाविरहात्तेन रूपेणान्यथासिद्धेरुभाभ्यां स्वीकार्यत्वादित्यादि नवीनवेदान्तिनः ।

प्रकृतमनुसरामः । तस्यां व्यवस्थिता इति । तद्वाचका इति भावः । प्रातिपदिकार्थत्वं जातेर्विप्रतिषेधसूत्रे दर्शयिष्यामः। धात्वर्थत्वं च भूवादिसूत्रे । नित्येति । ब्रह्मस्वरूपत्वात् ध्वंसप्रतियोगित्वं नास्तीत्यर्थः । अन्यथा प्रागभावाप्रतियोगित्वरूपनित्यत्वस्याविद्यारूपत्वेऽपि सम्भवात् । तदेवाह । सा महानात्मेति । अविद्यात्मकत्वे तु तस्या ब्रह्मसाक्षात्कारोच्छेद्यत्वाभ्युपगमात्तन्न स्यात् । तामिति विशेष्यत्वं द्वितीयार्थः । त्वतलादिभिर्विशेष्यतया तद्बोधनात् । प्रकारतया तु घटादिपदैरपि बोधात् । एतेनासत्त्वोपाध्यवच्छिन्नं ब्रह्मैव शब्दवाच्यमित्यर्थ इति ब्रह्मतत्त्वमेव शब्दरूपतया प्रतिभातीत्यर्थ इति च कैयटग्रन्थौ व्याख्यातौ । इदं पुनरिहावधेयम्—

हरिपदत्वादिकं जातिरिति यदुक्तं तद् भूषणानुसारेण । कौस्तुभकारास्तु घोत्तरटत्वादिकमेव वाचकं, तच्च उपाधिरूपमेव । उपाधिश्च परम्परासंबद्धा जातिरेव । वह्निमत्त्वमित्यादौ वह्न्यादेर्नानात्वेऽपि स्वसमवायिसंयोगसम्बन्धेन वह्नित्वादिजातेरेव सामान्यत्वस्य तार्किकैरपि स्वीकृतत्वादित्याहुः । अन्यत्पूर्ववत् । युक्तं चैतत् । पदत्वादिजातिस्वीकारे मानाभावात् । घोत्तरटत्वादिप्रकारकज्ञानाभाव-

दशायां तत्रापि तज्जात्यनभिव्यक्तिस्वीकारस्यावश्यकत्वात् । अन्यथा सरो रस इत्यादावर्थविशेषबोधानुपपत्तितादवस्थ्यात् । एतेन घटत्वादिप्रतिबन्दिरपास्ता । संयोगविशेषादिज्ञानविकलानामपि घटत्वादिप्रकारकबोधस्य जायमानत्वादित्यास्तां विस्तरः ।

अथ व्याकरणाध्ययने किं प्रवर्त्तकमिति चेत् । अत्र भाष्यम् । कानि पुनरस्य प्रयोजनानि रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति । अत्रैकः प्रयोजनशब्दः पुल्लिङ्गः प्रवर्त्तकविधिपरः । करणे बाहुलकात्कर्त्तरि वा ल्युट् । द्वितीयस्तु क्लीबः फलपरः । द्वयोर्नपुंसकमनपुंसकेनेति नपुंसकैकशेषे वैकल्पिक एकवद्भावः । अतः प्रश्ने बहुवचनमुत्तरे चैकवचनम् । तत्रागमः प्रवर्तकः । अन्यच्चतुष्टयं फलम् । आद्यो यथा । ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदो ऽध्येयो ज्ञेयश्चेति । निष्कारणो दृष्टकारणनिरपेक्षः । कारयतेः करणल्युटा प्रवृत्तिजनकेच्छाविषयत्वसंबन्धेन प्रवृत्तिजनकस्य फलस्य कारणपदेन लाभात् । एतेन प्रत्यवायसाधनीभूताभावप्रतियोगित्वरूपनित्यत्वमुक्तम् । तथा च संध्योपासनादिवदत्रापि प्रवृत्तिः । न चैवं फलसन्देशविरोधः । फलस्य नित्यत्वेन समं विरोधाभावात् । इयं च श्रुतिः आगमपदस्य वेदे रूढत्वादिति शाब्दिकाः । स्मृतिरिति मीमांसकाः । अत एव तैरागमस्यापि फलत्वमभिसन्धाय तस्य स्वरूपेण व्याकरणफलत्वायोगाद्वेदवाक्यार्थरूपधर्मज्ञानोपयोगिपदान्वाख्यानद्वारा व्याकरणस्य धर्मप्रयोजनकत्वमिति लक्षणयाऽऽगमस्य फलत्वोक्तिरित्याशङ्क्य चकारेण षडङ्गवेदाध्ययनज्ञानयोर्द्वयोरपि क्रत्वनुष्ठानोपयुक्तत्वेन विधेयत्वावगमान्नात्र धर्मज्ञानस्य षडङ्गवेदाध्ययनफलत्वधीः । नचैवं विधेयानेकत्व-

निबन्धनो वाक्यभेदः । पौरुषेयत्वेन तस्यादोषत्वादित्युक्तम् । अङ्गत्वं च तदुपकारकत्वेन तदारोपात् । तथा च शिक्षायाम्,

मुखं व्याकरणं तस्य ज्योतिषं नेत्रमुच्यते ।
निरुक्तं शिर उद्दिष्टं छन्दसां विचितिः पदे ॥
शिक्षा घ्राणं तु वेदस्य हस्तौ कल्पान्प्रचक्षते ।

व्याकरणस्य स्वरादिभिः पदार्थनिर्णये, ज्योतिषस्याध्ययनानुष्ठानयोरुपयुक्तकालविशेषज्ञाने, निरुक्तस्य लोपागमविकारादिप्रतिपादने, छन्दोविचितेर्गायत्र्यादिलक्षणेन गायत्र्या यजते इत्यादिविध्यर्थनिर्णये, शिक्षायाश्च वर्णोच्चारणप्रकारे, कल्पानां च न्यायलभ्यानामन्यशाखागतानां चाङ्गानामुपसंहारेण प्रयोगेयत्ताज्ञाने उपयोगात् । तत्रापि व्याकरणं प्रधानं, वाक्यार्थज्ञानोपयोगिनोः पदपदार्थयोस्तत एव निर्णयात् ।

ननु रक्षा नैतत्फलम् । सा हि लौकिकानां पदानां वैदिकनां वा । नाद्यः । लोकत एव सिद्धेः । नान्त्यः । वाक्यवत् पदानामप्यध्येतृसंप्रदायपरम्परयैव रक्षोपपत्तेः । मैवम् । पदस्वरूपमात्रस्य परम्परया रक्षायामनुपयोगेऽपि वाक्यार्थज्ञानस्यावश्यापेक्षणीयत्वात्तस्य च पदार्थग्रहमूलकत्वात् त्मनेत्यादीनां च लोकतोऽर्थग्रहानुपपत्तेर्लोपाद्यन्वाख्यानद्वारा तदुपयोगात् । लोपो यथा, त्मनादेवेषुविविदेमितद्रुः । मन्त्रेष्वाङ्यादेरात्मन इत्यालोपः । आगमो यथा । देवासः । ब्राह्मणासः । आज्जसेरित्यसुक् । उभयं यथा । देवा अदुह्र । अदुहत इत्यर्थः । दुहेर्लङो झस्यादादेशः । लोपस्त आत्मनेपदेष्विति तलोपः । बहुलं छन्दसीति रुट् । एतेन नाशिरं दुह्रे इति लडन्तमपि व्याख्यातम् । आशिरं सोमसंस्कारार्थं पयो न दुहते इत्यर्थः । विकारो यथा । गृभ्णामितेमहतेसौभगाय । "हृग्रहोर्भश्छन्दसि" हस्येति वक्तव्यमिति हकारस्य भत्वम् । प्रत्ययो य-

था। उद्ग्राभं च निग्राभश्चेति। "उदिग्रह" इति सूत्रे "उद्ग्राभनिग्राभौ च च्छन्दसि स्रुगुद्यमननिपातनयोः" इति वार्त्तिकान्निपूर्वादपि ग्रहेर्घञ्। भादेशः प्राग्वत्। सन्निवेशविशिष्टपात्रपरस्यापि स्रुक्पदस्यात्र जुहूपभृन्मात्रपरत्वम्। उद्ग्राभश्चेति जुहूमुद्यच्छाति निग्राभं चेत्युपभृतं नियच्छतीति वचनात्। ननु ऊहस्वरूपं तावन्मीमांसोक्तन्यायमूलकमेव, उह्यमानपदस्वरूपं तु लोकत एव सिद्धमिति चेन्न। प्रकृत्यादिमात्रस्योहस्थले व्याकरणं विना तद्विवेकासम्भवात्। तथा हि। यत्राङ्गजातं पूर्णमुपादिष्टं सा प्रकृतिः। यथा दर्शपौर्णमासौ। यत्र नोपदिष्टं सा विकृतिः। यथा सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः, प्राजापत्यं घृते चरुं निर्वपेत् कृष्णलमायुष्काम इत्यादि। अतिदेशश्च त्रेधा। प्रत्यक्षवचनेन यथा। इष्टावेकाहे समानमितरच्छ्येनेनेति। नामधेयेन यथा। कुण्डपायिनामयने मासमग्निहोत्रं जुहोतीति। आनुमानिकवचनेन यथा। सौर्यमित्यादि। नन्वत्र प्रमाणाभावान्न धर्मातिदेश इति चेन्न। यागेन ब्रह्मवर्चसं भावयेदिति वाक्यार्थे भावनायाः किं केन कथमित्यंशत्रयसापेक्षत्वानियमात्। किमित्यंशस्य भाव्यश्रुत्या केनेत्यंशस्य यागश्रुत्या पूरणेऽपि कथमितीतिकर्त्तव्यांशस्य पूर्णत्वाभावात्तदाकाङ्क्षायामतिदेशावश्यकत्वात्। न च वैदिक्या दर्शादीतिकर्त्तव्यतायास्तन्मात्रोपनिबद्धत्वादन्यत्र नेतुमशक्यत्वाल्लौकिक्याः पार्वणस्थालीपाकादीतिकर्त्तव्यताया बहुष्वनुवृत्त्या साधारणत्वात्सैव गृह्यतामिति वाच्यम्। करणस्य वैदिकत्वे वैदिक्या एव तस्या अपेक्षितत्वात्। न च सोऽपि कथम्भावः स्मृतिमूलवेदविहितत्वाद्वैदिक एवेति वाच्यम्। दर्शादिकथम्भावस्य प्रत्यक्षवेदमूलतया ततो विशेषात्। सौर्यस्य प्रधानस्य वैतानिकेऽग्नौ प्रवृत्तिः लौकिकेतिकर्त्तव्यतायास्तु आ-

चारात्स्मार्त्ते इत्यङ्गप्रधानयोर्भिन्नदेशत्वापत्तेश्च । प्रकृतिविकृतिभावश्चैकदेवताकत्वादिना सुज्ञानः । तथा हि । सौर्यस्याग्नेयविकारत्वमेकस्य देवतात्वपर्याप्त्याश्रयत्वात् । ओषधिद्रव्यकत्वाच्च । आग्नावैष्णवमेकादशकपालं निर्वपेदिति यागो द्विदेवताकत्वादैन्द्राग्नविकारः । अपराह्णे सरस्वतीमाज्यस्य यजेतेत्याज्यद्रव्यकत्वादुपांशुयाजविकार इत्यादि ॥

ऊहस्याप्येकदेशबाधरूपतया बाधप्रवृत्तिप्रकारो दर्श्यते। दशमे निरूपितं किं सर्वं प्राकृतं विकृतौ कर्त्तव्यम्, उत लुप्तप्राकृतप्रयोजनं नेति । तत्र पूर्वपक्षः अनपेक्षितप्रयोजनमेव प्राकृतमङ्गजातं स्वरूपमात्रेण विकृतावतिदिश्यते, अतो वैतुष्याद्यसम्भवेऽपि प्रापकप्रमाणानुरोधाददृष्टार्थकत्वं कल्पयित्वा कृष्णलादावप्यवघातादयः कार्या इति । सिद्धान्तस्तु—

अपेक्षासत्तियोग्यत्वैरुपकारातिदेशनम् ।
तदभावात्पदार्थानामतिदेशो न कल्प्यते ॥

यागेन भावयेदिति—यथा यागः फलसाधनं भवति तथा व्याप्रियेतेत्युक्ते केन व्यापारेण यागः फलजनको भवतीति व्यापारविशेष एवापेक्षितो न पदार्थस्वरूपमात्रम् । सन्निधिरप्युपकारस्यैव । निर्वपत्यादिचोदनासाम्येन वैकृतवाक्यस्य प्राकृताङ्गवाक्योपस्थापकत्वात् । तस्य चांशत्रययुक्तभावनोपस्थापकत्वात्साध्यसाधनयोर्विशिष्य वैकृतवाक्योपादानात्तावनादृत्य कथंभावांशस्यैवाङ्गजन्योपकारसंपादनस्वरूपस्य तेन ग्रहणात् ।

आकाङ्क्षापूरणयोग्यताऽपि व्यापारस्यैव नाङ्गानाम् । अतः पदार्थविशिष्टोपकाराणामेवातिदेशो न पदार्थस्वरूपाणाम् । तस्मात्प्राकृतकार्यस्य विकृतावसंभवे तत्पदार्थस्यानतिदेश एव । अतो व्रीहीनवहन्तीत्यत्र प्रकृतौ वैतुष्यमवघातस्योपकारतया

क्लृप्तम् । तस्य च कृष्णलेष्वसंभवाद्बाध एव । श्रपणं तु घृते श्रपयतीतिप्रत्यक्षवचनाद् भवतीति वैषम्यमिति । मन्त्राणां चानुष्ठेयार्थप्रकाशनद्वारकमङ्गत्वम् । तत्र मन्त्राभिधेयस्य सर्वस्य विकृतावभावे सर्वस्य मन्त्रस्य निवृत्तिः । यथा अवरक्षोदिवः सपत्नं वध्यासामित्यवघातमन्त्रस्य कृष्णलेषु । अर्थैकदेशमात्राभावे तु विकृतिवृत्त्यभावप्रतियोग्यर्थाभिधायिभागस्यैव निवृत्तिः । यथा अग्नये त्वा जुष्टं निर्वपामीत्यत्राग्निशब्दस्य । सूर्यपदस्य तत्स्थाने प्रयोगात् । अर्थाच्च एकारस्यापि निवृत्तिः । अकारान्तायां प्रकृतौ यकारस्यैव संप्रदाने साधुत्वात् । अतोऽग्नये इति मध्योदात्तस्थाने सूर्यायेत्याद्युदात्तमूहनीयम् ।

लिङ्गस्य यथा । देवीरापःशुद्धाःस्थेत्यप्सु विनियुक्तस्य देवाज्यशुद्धमसीति ।

प्रत्ययमात्रस्य यथा । माभेर्मासंविक्था इति पुरोडाशेऽवदानमन्त्रस्य धानासु माभैष्टमासंविजिध्वमिति हरदत्तादयः । संविग्ध्वमिति याज्ञिकाः । प्रकृतावनिट्कतया विजिर् पृथग्भाव इत्यस्य प्रयोग इति तेषामभिप्रायः ।

पूर्वेषां त्वयमाशयः । तन्मन्त्रभाष्यकारेण ओविजी भयसञ्चलनयोरित्यस्यार्थद्वयमध्ये भयस्य माभैरित्यनेनैव निषेधान्मासंविक्था इत्यनेन संञ्चलनं निषिध्यतइत्युक्तम् । अवदानोपयोगिनि मन्त्रे पृथग्भावस्य निषेधानर्हत्वात् । तथा च तत्र छान्दसत्वादिडभावेऽपि ऊहस्य वेदत्वाभावादूह्यमाने इडेव युक्त इति ।

ननु लाघवं न फलम् । सूत्रपाठादेरलौकिकसंज्ञापरिभाषोपनिबद्धत्वाद्भाष्यवार्त्तिकादेश्चात्यन्तविषमत्वाद्गौरवस्य वैपरीत्यादिति चेन्न । शब्दानामानन्त्येन प्रतिपदपाठस्यासंभवात् उत्सर्गापवादरूपलक्षणद्वारा तद्व्युत्पादनस्यैव ल-

घुत्वात् । लक्षणप्रणयनं च जातिव्यक्तिपक्षयोरन्यतरपक्षमाश्रित्य । लक्ष्यानुरोधश्च तन्नियामक इति विप्रतिषेधसूत्रे निरूपयिष्यामः ।

असन्देहः सन्देहप्रागभावो न तु ध्वंसः । वैयाकरणस्य संशयानुत्पादादिति कैयटः । न च तस्यानादित्वात्फलत्वानुपपत्तिः । संदेहानुत्पादे उत्तरक्षणे तत्प्रागभावानुवृत्तेरेव क्षेमसाधारणसाध्यत्वस्वीकारात् । अत एवाव्ययीभावाप्रसक्तिः । प्रागभावार्थकनञस्तदभावस्य वक्ष्यमाणत्वात् ।

स्थूलपृषतीमनड्वाहीमालभेतेत्यत्र संशयः । कर्मधारये स्थूलत्वं गव्यन्वेति । पृषतीपदस्य मत्वर्थलक्षणया बिन्दुमत्परत्वात् । बहुव्रीहौ तु पृषत्स्विति विशेषः । तत्र पूर्वपदान्तोदात्तत्वं दृष्ट्वा पूर्वपदप्रकृतिस्वरेण बहुव्रीहित्वनिश्चयः । नन्वेवम् इन्द्रपीतस्योपहूतोभक्षयामीत्यत्रापीन्द्रशब्दस्याद्युदात्तपाठादेव बहुव्रीहिनिर्णयसंभवादिन्द्रपीताधिकरणवैयर्थ्यापत्तिरिति चेत् । अत्राहुः । अवैयाकरणान्प्रति तत् कृत्वाचिन्तान्यायेन वेति ।

स्यादेतत् । कर्मार्थकक्तप्रत्ययान्ते परे तृतीयान्तं पूर्वपदं प्रकृतिस्वरं स्यादित्यर्थकेन "तृतीयाकर्मणि" इति सूत्रेण तृतीयान्तेन्द्रपदस्य कर्मक्तान्तपीतपदेन समासेऽपि पूर्वपदप्रकृतिस्वरस्यैवानुशासनात्तस्य निर्णायकत्वानुपपत्तिः । अतोऽधिकरणं सार्थकमिति । अत्राहुः । पीतपदस्य दानपरत्वमत्रावश्यकम् । देवताया अचेतनत्वेन पानासंभवात् । इन्द्राय दत्तस्येत्यादिग्रन्थदर्शनाच्च । तथा चेन्द्रोद्देश्यकदाने तस्य कर्तृत्वकरणत्वयोरसंभवाच्चतुर्थ्यन्तं वाच्यमिति उक्तसूत्रस्य नायं विषयः । न च हेतुतृतीयान्तत्वम् । उपपदविभक्तितः कारकविभक्तेर्बलवत्त्वात् । न च तदर्थचतुर्थीसमासस्य प्रकृतिविकारभावमात्रविषय-

त्वाच्चतुर्थीसमासानुपपत्तिः। "तृतीयातत्कृतार्थेन" इत्यादेरप्रवृत्त्या तृतीयासमासस्याप्यसंभवात् । योगविभागस्य चतुर्थीत्यत्रापि संभवात् । तस्माच्छान्दसत्वाच्चतुर्थीसमासः षष्ठीसमासो वेति वाच्यत्वात् । अत्र च स्वरभेदस्यावश्यकत्वात्पूर्वपदप्रकृतिस्वरेण निर्णयो युक्त एवेति ।

अत्र नवीनमीमासकाः । नात्र बहुव्रीहिलक्षणानुगमः । समानाधिकरणानामेव तद्विधानात् । सप्तमीविशेषणे बहुव्रीहाविति ज्ञापकबलादेव कण्ठेकाल इत्यादौ तत्सिद्धेः । तत्पुरुषे तु "कर्तृकरणे कृता बहुलम्" इति लक्षणानुगमः । बहुलग्रहणेन चतुर्थीसमासस्याप्युपपत्तेः । न चैवं स्वरेणैव बहुव्रीहिनिर्णयोपपत्तावाधिकरणवैयर्थ्यतादवस्थ्यम् । सत्यपि बहुव्रीहिज्ञापके स्वरे प्रधानभूतस्वार्थानुग्रहाय तत्पुरुषावधारणादङ्गगुणविरोधन्यायेन शब्दधर्मस्वरस्यैव व्यत्ययेनोपपाद्यत्वात् । नचैवं स्थूलपृषतीमित्यत्रापि स्वरेण निर्णयो न स्यात्, इष्टापत्तौ च महाभाष्यविरोध इति वाच्यम् । तत्र समानाधिकरणबहुव्रीहिसंभवेन वैषम्यात् । अतोऽधिकरणारम्भ इत्याहुः ।

इमानि च भूय इत्यादिभाष्येण प्रयोजनान्तराणि दर्शितानि । ते सुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्द इति ब्राह्मणम् । न म्लेच्छितव्यमित्यस्यार्थे नापभाषितवै इति । निन्दार्थान्म्लेच्छतेः कर्मणि घञ् । अत्र "हैहेप्रयोगे हैहयोः" इति प्लुते तन्निमित्ते प्रकृतिभावे च प्राप्ते तदकरणान्म्लेच्छनमिति केचित् । सर्वः प्लुतः साहसमनिच्छता विभाषाकर्त्तव्य इति भाष्यादत्रापरितुष्य वाक्यद्विर्वचनं

तथा । सर्वस्य द्वे इत्यत्र पदस्यैव तद्विधानात् । न चानावृत्तिः शब्दादनावृत्तिः शब्दादितिवदैच्छिक एवायं पुनः प्रयोग इति वाच्यम् । आम्रेडितस्वरानुपपत्तेः । शास्त्रीयद्विर्वचने एव तद्विधानादित्यपरे । तत्स्वररहितस्यैव पाठे तु अरिशब्दे रेफस्य लत्वमपशब्द इत्याहुः । अत एव वेदस्थशब्दत्वं साधुत्वमित्यस्य विवक्षायां वेदस्थेऽलिशब्दे गतत्वादिति मणिकारेणोक्तम् ।

माध्यन्दिने ब्राह्मणे तु हेलवो हेलव इति पठित्वा तस्माद् ब्राह्मणो न म्लेच्छेदिति पठ्यते । तत्र यकारस्थाने वकारोऽपशब्दः । तस्माच्छास्त्रबोधितविपरीतानुष्ठानान्म्लेच्छा निन्द्या मा भूमेत्यध्येयं व्याकरणम् । न च म्लेच्छनेन पराभवोक्त्या तदभावेन पराभवाभाव एव रात्रिसत्रन्यायेन फलं स्यादिति वाच्यम् । द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यादिति न्यायेनापापश्लोकश्रवणवत्प्राशस्त्यमात्रपरत्वात् ।

तथाहि । यस्य पर्णमयीजुहूर्भवति न स पापं शृणोतीति द्रव्ये फलं श्रूयते । यदङ्क्ते चक्षुरेव भ्रातृव्यस्य वृक्ते इति ज्योतिष्टोमे अञ्जनाख्यसंस्कारे, यत्प्रयाजानुयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्यै इति च कर्मणि । अङ्क्ते अञ्जनं करोति । भ्रातृव्यः शत्रुः । किमेते फलविधयः उत क्रत्वर्थपर्णनादिफलार्थवादा इति संदेहे खादिरं वीर्यकामस्य यूपं कुर्य्यादितिवत्फलविधयः क्रतूपकारेण व्यवहितफलोपादानापेक्षया अव्य-

१ वेदस्थशब्दत्वं साधुत्वमिति साधुत्वनिर्वचने हे ऽलयो हे ऽलय इति वेदे प्रयुज्यमाने अलिशब्दे अति प्रसङ्गः स्यात् । तस्मात् तथा निर्वचनमसङ्गतमित्यर्थः ।

वहितस्य श्रूयमाणफलस्य विपरिणामेन साध्यत्वौचित्यादिति प्राप्ते सिद्धान्तः। रात्रिसत्राणामनन्यशेषत्वादगत्या विपरिणाम आश्रितः। पर्णतादीनां त्वव्यभिचरितक्रतुसंबन्धजुह्वादिद्वारा क्रत्वङ्गत्वात् प्रधानफलेनानाकाङ्क्षत्वान्न तथेति। न चासाधुप्रयोगनिषेधस्यापि अनन्यशेषत्वाद्रात्रिसत्रसाम्यम्। प्रकरणादेतन्निषेधस्य क्रत्वङ्गत्वमिति वक्ष्यमाणत्वात्। क्रतुप्रकरणपाठे च भाष्यकारस्यैव साक्षित्वात् ॥

वस्तुतो नात्र रात्रिसत्रन्यायावकाशः। तथा हि। आयुर्ज्योतिरित्यादिवाक्यविहितसोमयागविशेषाणां वाचको रात्रिशब्दः। तत्र स्वर्गः प्रतिष्ठा वा फलमिति संशये पूर्वपक्षः। रात्रिसत्रे फलार्थवादमङ्गवत्कार्ष्णाजिनिः। यथाऽङ्गेषु फलश्रुतिरर्थवादस्तथाऽत्रापि कामपदसमभिव्याहारादेः फलत्वकल्पकस्य विरहः। अतः सर्वाभिलषितत्वेन स्वर्गोपस्थित्या स एव फलमिति। सिद्धान्तस्तु फलमात्रेयो निर्देशादिति। निर्देशादर्थवादवाक्योपात्तत्वात् प्रतिष्ठा फलमेवेति आत्रेय आचार्यो मन्यते। प्रतितिष्ठन्ति ह वै यएता रात्रीरुपयन्तीत्यर्थवादेन प्रतिष्ठाया उपस्थितत्वात् तस्याः फलत्वकल्पने लाघवम्। स्वर्गस्य तूपस्थितिः फलत्वं चेत्युभयकल्पने गौरवमिति। प्रकृते तु म्लेच्छनेन पराभवस्यार्थवादादुपस्थितत्वेऽपि तदभावेन तदभावोपस्थितिरपि कल्प्यैवेति। शिक्षासु पठ्यते।

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥

स्वरतः स्वरेण। "हीयमानपापयोगाच्चेति तसिः। मिथ्याप्रयुक्तः। तात्पर्य्यविषयार्थातिरिक्तार्थप्रतिपादकः। तदाह।

प्रयोगकालीनार्थाभिधायित्वरूपमन्त्रस्योहादिसाधारण्यान्मन्त्रपदैकवाक्यत्वाच्चैषामपि मन्त्रत्वम् । अन्यथा श्लोकैकवाक्यतापन्नमन्त्रवदूहादिभिरमन्त्रैरेकवाक्यीभूतानामपि मन्त्राणाममन्त्रत्वं स्यादिति प्राप्ते सिद्धान्तः । अभियुक्तप्रसिद्धिविषयत्वमेव मन्त्रत्वम् । ऊहादिषु चाभियुक्तानां मन्त्रत्वप्रसिद्ध्यभावान्न तत् । तदेकवाक्यतापन्नमन्त्राक्षराणां तु मन्त्रत्वप्रत्यभिज्ञानात्तथेति । आपस्तम्बोऽपि, अनाम्नाता अमन्त्राः, यथा, प्रवरोहनामधेयग्रहणानीति । अत एव मन्त्रस्य स्वरादिदोषेणानिष्टजनकत्वमित्यर्थे यथेन्द्रशत्रुरिति दृष्टान्तोऽसङ्गतः स्यात् । तस्य मन्त्रत्वाभावात् । अतो मन्त्रशब्दस्य शब्दमात्रपरत्वमिति मनसि कृत्वा मन्त्रो हीन इत्यस्य स्थाने दुष्टः शब्द इति भाष्ये पठितम् । यद्यपि स्वाहेन्द्रशत्रुर्वर्द्धस्वेति वेदे पठ्यत एव, तथाऽपि ऊहितानुकरणमेव तदिति तदनुकार्यस्य लौकिकत्वमक्षतम् । न च स्वरस्य वेदमात्रविषयकत्वात्तत्र तत्प्रयुक्तगुणदोषयोर्न प्रसक्तिरिति वाच्यम् । तद्विधौ छन्दसीति अनधिकारात् । वेदे त्रैस्वर्यैकश्रुत्योश्च यथासंप्रदायं व्यवस्था । लोके त्वैच्छिको विकल्प इति तु विशेषः ।

स्यादेतत् । अजपेति प्रतिषेध एव युक्तः । तथा हि । "उच्चैस्तरां वा वषट्कार" इति सूत्रस्थस्यैव वाशब्दस्य विभाषाच्छन्दसीत्यत्रानुवृत्तिसम्भवाद् विभाषाग्रहणं व्यर्थं स्यात् । तद्विकल्पस्येव यज्ञकर्मणीत्यस्याप्यनुवृत्तिर्माभूदित्येतदर्थमुच्चैस्तरांवेति सूत्रे यज्ञकर्मणीत्यस्यानुवृत्तेः । पर्युदासपक्षे च यज्ञकर्मणीत्येकश्रुतेर्वेदमात्रपरत्वान्नित्यत्वाच्च । विभाषाच्छन्दसीत्येकश्रुतेरपि यज्ञकर्मविषयकत्वे एकत्रैव वैकल्पिक्या नित्यायाश्च प्राप्तिविरोधात्तत्परिहाराय यज्ञकर्मणी-

त्यस्यानुवृत्तेर्वाग्रहणानुवृत्तेश्च संभवात्पुनर्विभाषाग्रहणवैयर्थ्यं स्पष्टम् । प्रतिषेधपक्षे तु "विभाषा च्छन्दसि" इत्यत्र यज्ञकर्मानुवृत्तावपि वेदे वैकल्पिक्यैकश्रुतिः, ऊहादौ तु "यज्ञकर्मणि" इति सूत्रेण नित्येति व्यवस्थोपपत्तेरुक्तरीत्या तत्सार्थक्यमिति चेत् । मैवम् । पर्युदासपक्षेऽपि वैकल्पिकैकश्रुतेः छन्दोविषयत्वान्नित्यैकश्रुतेश्च मन्त्रविषयत्वात् छन्दःशब्दस्य सामान्यपरस्य मन्त्रातिरिक्तपरत्वं कल्पयित्वा विकल्पस्य ब्राह्मणपरत्वसंभवात् । विशेषविधिविरोधे सामान्यविधेस्तदतिरिक्तविषयकत्वस्य व्युत्पन्नत्वात् । अत उभयमतेऽपि यज्ञकर्मणीत्यस्यानुवृत्तितात्पर्यग्राहकत्वेन विभाषापदं समानयोगक्षममेवेति ।

केचित्तु एकश्रुतिप्रसङ्गेऽप्युदात्तोच्चारणादेवेन्द्रशत्रुपदे दुष्टत्वमित्याहुः ।

यदधीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥

निगदः पाठमात्रम् । न ज्वलति न प्रकाशते । निष्फलमिति यावत् । निरुक्ते तु—

स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥

इति मन्त्रं लिखित्वा यद् गृहीतमविज्ञातमिति पाठः । गृहीतं शब्दतः । अविज्ञातम् अर्थतः प्रकृत्यादिविभागेन चेत्यर्थः । एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवतीतिषाष्ठभाष्यवक्ष्यमाणश्रुतिमूलकम्—

भ्राजाख्यश्लोकेषु कात्यायनस्मरणमपि —

यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले ।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः ॥

दुष्यति चेत्यवैयाकरणपरम् ।

अविद्वांसः प्रत्याभिवादे नाम्नो ये न प्लुतिं विदुः ।
कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् ॥

अयमहमिति "अनुकरणं चानितिपरम्" इति संज्ञा । न च समासे विभक्तिलोपापत्तिः । अनुकरणत्वात् । अस्यवामीयमित्यादिवत् ।

याज्ञिकाः पठन्ति, प्रयाजाः सविभक्तिकाः कार्या इति । आधानोत्तरं यजमानस्योदरव्यथाया वर्षमध्ये आपद्विशेषस्य वोपनिपाते नैमित्तिकीं पुनराधायेष्टिं विधायेदमाम्नातम् । विभक्तिमात्रस्यानर्हत्वात्प्रकृतेराक्षेपः । सा चाग्निशब्दरूपा । निरुक्ते अथ किंदेवताः प्रयाजानुयाजा इति प्रश्ने छन्दांसि वै प्रयाजा ऋतवो वै प्रयाजा इत्यादिपक्षानुदाहृत्य आग्नेया इति तु स्थितिर्भक्तिमात्रामितरादिति सिद्धान्तितत्वात् । अत एव प्रयाजान्मे अनुयाजांश्च केवलानूर्जस्वन्तं हाविषो दत्तभागमिति अग्नेर्वरप्रार्थनम् । तव प्रयाजा अनुयाजाश्च केवला ऊर्जस्वन्तो हविषः सन्तु भागा इति देवानां वरप्रदानं च श्रूयते ।

अन्यत्रापि श्रूयते, यो वाइमां पदशः स्वरशोऽक्षरशो वाचं विदधाति स आर्त्विजीन इति । पद पदमिति सङ्ख्यैकवचनाच्चेति शस् । ऋत्विजमर्हति इति ऋत्विक्कर्मार्हति इति च व्युत्पत्त्या आर्त्विजीनपदं याज्ययाजकोभयपरम् । "यज्ञर्त्विग्भ्यां घखञौ" इति सूत्रेण "यज्ञर्त्विग्भ्यां तत्कर्मार्हतीति चोपसंख्यानम्" इति वार्तिकेन च खञ् । अन्येऽपि मन्त्रवर्णाः—

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्याँ आविवेश ॥

शब्द एव सर्वकामदत्वाद् वृषभत्वेन रूप्यते । यज्ञाप्यम्,

वृषभो वर्षणादिति । कामानां ज्ञानपूर्वकानुष्ठानफलत्वादिति कैयटः । नामाख्यातनिपातोपसर्गाणां चतुष्टयम् । कालानां त्रयम् । व्यञ्जकव्यङ्ग्यभेदेन कार्यनित्ययोर्वर्णाखण्डस्फोटात्मकयोर्द्वयम् । विभक्तीनां सप्तकम् । उरसि शिरसि कण्ठे च बद्धः । तेषां व्यञ्जकध्वनिस्थानत्वात् । महान्देवः शब्दः । महता देवेन ब्रह्मणा साम्यमध्ययनप्रयोजनमित्यर्थः ।

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥

मनस ईषिणो मनीषिणः पृषोदरादिः । तएव विदन्तीत्यर्थः । गुहेति लुप्तसप्तमीकमज्ञानार्थकम् । व्याकरणेनैव प्रकाशन्ते नान्यथा । अमनुष्या अवैयाकरणाः चतुर्णां पदजातानामेकैकस्य चतुर्थं भागं वदन्ति । सामस्त्येन न जानन्तीति यावत् ।

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः ॥

त्वशब्दोऽन्यार्थः । उतेत्यपिशब्दार्थे । पूर्वार्द्धमविद्वत्परम् । प्रत्यक्षेण शब्दमुपलभमानोऽप्यर्थानवबोधान्न पश्यतीत्यर्थः । उत्तरार्द्धं विद्वत्परम् । यथा कामयमाना जाया पत्ये स्वात्मानं प्रकाशयति, तथैव विदुषे वागपीत्यर्थः ।

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताऽधिवाचि॥

यथा चालन्या सक्तूनां तुषनिष्कासनेन सारं गृह्णन्ति, तथाऽपशब्देभ्यो वाचं पृथक्कृत्य जानन्तीत्यर्थः । अत्र ज्ञानमात्रप्राप्ये दुर्गममार्गरूपे वाग्विषये सखायः समानख्यातयः अविद्यानाशेन द्वैतनिवृत्त्या सर्वमेकमिति मन्यमानाः सख्यानि सायुज्यानि भजन्ते,

वैयाकरणा इत्यर्थलभ्यम् । वेदाख्ये ब्रह्मणि या लक्ष्मीर्वेदान्तेषु परमार्थसंविल्लक्षणोक्ता सा यस्मादेषां सन्निहिता भवतीत्यर्थः । "चालनी तितउः पुमान्" इत्यमरः । इदं च नान्यव्यवच्छेदपरम् । "स्याद्वास्तु हिङ्गु तितउ" इति त्रिकाण्डशेषे ऽपुंस्त्वस्यापि विधानात् । अतस्तितउ परिपवनं भवतीति भाष्येण संगतिः । याज्ञिकाः पठन्ति—

"आहिताग्निरपशब्दं प्रयुज्य सारस्वतीं प्रायश्चित्तीयामिष्टिं निर्वपेत्"

इति । तथा—

"दशम्युत्तरकाल पुत्रस्य जातस्य नाम विदध्याद् घोषवदाद्यन्तरन्तस्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितं तद्धि प्रतिष्ठिततमं भवति द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितम्"

इति । संस्कार्यस्य पितरमवधीकृत्य ये आद्यास्त्रयः पुरुषास्ताननुकायत्याभिधत्ते इति त्रिपुरुषानूकम् । मूलविभुजादित्वात्कः । अन्येषामपि दृश्यते इति दीर्घः । पात्रादित्वान्न स्त्रीत्वम् । अप्रत्तानां च स्त्रीणां त्रिपुरुषी विज्ञायते इति वसिष्ठप्रयोगस्त्वार्षः ।

"सुदेवो असि वरुण यस्य ते सप्त सिन्धवः ।
अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव" ॥

इति ऋङ्मन्त्रः । सिन्धवो विभक्तयः । काकुर्जिह्वा उद्यते उत्क्षिप्यतेऽस्मिन् काकुदम् । वदिरुत्क्षेपणपरः । घञर्थे कविधानमित्याधिकरणे कः । शकन्ध्वादित्वात्पररूपमित्येके । नुद प्रेरणे अधिकरणे कः । पृषोदरादित्वान्नुलोप इत्यन्ये । तथा च काकुदं ताल्वाचक्षतइत्युपक्रम्य कोकूयमाना एनां नुदतीति वेति निरुक्तम् । अनुक्षरन्ति तालु प्राप्य प्रकाशन्तइत्यर्थः । यथाऽग्निः सच्छिद्रां

लोहमयीं प्रतिमां प्रविश्य प्रकाशते तन्मलं भस्मीकृत्य तां च शुद्धां करोति । तथा विभक्तयोऽपि दुरितं निरस्यन्तीत्यर्थः । "सूर्मी स्थूणाऽयःप्रतिमा" इत्यमरः ।

"गर्त्ते गर्त्तान्विते वाद्यविशेषे सुषिरं त्रिषु"

इति शाश्वतः । विषयप्रयोजनयोरुक्त्या च प्रतिपाद्यप्रतिपादकभावः संबन्धः । उक्तप्रयोजनकामश्चाधिकारीत्युक्तप्रायम् । इति प्रयोजननिरूपणम् ॥

ननु यथाऽऽचार्यप्रेरणयैव वेदाध्ययने प्रवृत्तिस्तद्वदत्रापि, तत्किं प्रयोजनेनेति । मैवम् । इदानींतनैः बाल्यदशायां प्रयोजनप्रश्नमकृत्वा वेदाध्ययनेऽपि तदुत्तरं तद्व्यतिरेकेणात्र प्रवृत्त्यनुपपत्तेः ।

"वेदान्नो वैदिकाः शब्दाः सिद्धा लोकाच्च लौकिकाः ।
अनर्थकं व्याकरणम्" इत्याशङ्कावताराच्च । पूर्वकल्पेष्वङ्गान्येव प्रथममपठ्यन्त इति भाष्यम् । न च—

श्रावण्यां प्रौष्ठपद्यां वाऽप्युपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्द्धपञ्चमान् ॥
अत ऊर्ध्वन्तु च्छन्दांसि शुक्लेषु नियतः पठेत् ।
वेदाङ्गानि रहस्यं च कृष्णपक्षेषु संपठेत् ॥

इत्यादिस्मृतिभिर्वेदतदङ्गाध्ययनयोः समकालत्वलाभ इति वाच्यम् । भाष्यकारोक्तेरपि बलवत्त्वाद्विकल्पसंभवात् । नियमत्वदर्शनाय वार्त्तिकम्—

सिद्धे शब्दार्थसंबन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमो यथा लौकिकवैदिकेषु ।

लोकत इति पूर्वान्वयी । प्रथमव्युत्पत्तेर्लोकाधीनत्वात् । अर्थवदित्यादिव्याकरणस्य लोकसिद्धशक्तिग्रहमुपजीव्य प्रवृत्तेः । अत एव समर्थसूत्रेऽर्थानादेशनादिति वार्त्तिकम् ।

अर्थप्रतिपादनार्थं च शब्दप्रयोगोऽपि प्रसक्तः। शब्दश्च द्वेधा। साधुरपशब्दश्च। तत्र गवादय एव प्रयोक्तव्या न तु गाव्यादय इति नियमनिर्वाहकं व्याकरणम्। तत्फलं तु धर्मः। तत्र प्राङ्मुखोऽन्नानि भुञ्जीतेत्यादिः लौकिकः व्रीहिनवहन्तीत्यादिश्च वैदिको दृष्टान्तः। धर्मनियम इत्यश्वघासादिवत् षष्ठीसमासः। न च प्रयुक्तमात्राणां व्युत्पाद्यत्वे–ऊष, तेर, चक्र, पेच, इत्यादिव्युत्पादनवैयर्थ्यं तेषामप्रयोगादिति वाच्यम्। अस्मदादिभिस्तस्य दुर्गमत्वात्। यद्भाष्यम्—

सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्नाः, एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाऽथर्वणो वेदः, वाकोवाक्यम्, इतिहासः, पुराणम्, वैद्यकम्, इत्येतावान् प्रयोगस्य विषय इति। अस्ति चैषां वेदे प्रयोगः—

सप्तास्ये रेवतीरेवदूष, यन्मेनरः श्रुत्यं ब्रह्म चक्र, यत्रानश्चक्रा जरसं तनूनामिति।

न च व्युत्पादितत्वमात्रेण प्रयुक्तत्वानुमाने वचन्तीत्यादीनामपि साधुत्वापत्तिः। न हि वचिरन्तिपरः प्रयुज्यतइति अविगीतशिष्टव्यवहारेण तत्र व्युत्पत्त्यप्रवृत्तेः। तथा चाप्रयुक्तत्वप्रमित्यविषयत्वे सति व्युत्पाद्यत्वं हेतुः। तदाह-

यथालक्षणमप्रयुक्ते—

इति।

स्यादेतत्। अप्राप्तांशपूरणफलको नियमविधिः। व्रीहीनवहन्तीत्यादौ वैतुष्यसाधनत्वेन नखविदलनादेरपि प्राप्तिपक्षेऽवघातस्य प्राप्त्यभावात्। अवघातेनैव वैतुष्यं साध्यमिति बोधात्।

इतरव्यावृत्तिफलकस्तु परिसङ्ख्याविधिः। "इमामगृ-

भ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इत्यत्र रशनाग्रहणे लिङ्गबलादेव मन्त्रप्राप्त्या गर्दभरशनाव्यावृत्तावेव तात्पर्यात् । यद्यपि लिङ्गात्पूर्वमेवेयं श्रुतिः प्रवृत्ता, तस्यानुपपत्तिप्रतिसंधानापेक्षतया चरमप्रवृत्तिकत्वात्, तथाऽप्युक्तव्यावृत्तिरेव फलम् । तदुक्तम्—

अप्राप्तविधिरेवायमतो मन्त्रस्य निश्चितः ।
प्रयोजनं विधेः किं स्यादस्येति तु निरूपणे ॥
न गर्दभाभिधानीतः फलमन्यन्निवर्त्तनात् ।

एवं च लिङ्गेनोभयसाधारणरशनाग्रहणे मन्त्रविधिकल्पनया यावद्गर्दभरशनाया मन्त्रप्राप्तिः संभवति तावदेव प्रत्यक्षविधिनाऽश्वरशनायामेव मन्त्रविधानाल्लिङ्गस्य निराकाङ्क्षतयोभयसाधारणाविध्यकल्पकत्वाद् गर्दभरशनायां मन्त्रस्य प्रापकप्रमाणाभावादप्राप्तिरेव व्यावृत्तिरित्युच्यते । यत्र तु प्रमाणान्तरप्राप्त एवार्थो व्यावर्त्यते, यथा पञ्च पञ्चनखा भक्ष्या इत्यत्र पञ्चातिरिक्तभक्षणस्यापि रागप्राप्ततया पञ्चातिरिक्तभक्षणव्यावृत्तौ तात्पर्ये सा प्राप्तपरिसंख्या । नन्वयं नियम एवास्त्विति चेत्,

अविज्ञानेश्वरः—

नियमपक्षे शशाद्यभक्षणे दोषप्रसङ्गः, श्वादिभक्षणे चादोषप्रसङ्ग इति प्रायश्चित्तस्मृतिविरोध इति परिसंख्यैवेति । आद्यायां च प्राप्तबाधरूपदोषाभावात्तदपेक्षया द्वितीयाऽभ्यर्हितेति सिद्धान्तः । तथा च पञ्च पञ्चनखा इत्यस्य नियमोदाहरणत्वं भाष्यकृतोऽनुपपन्नमिति । अत्राहुः—

परिसङ्ख्याऽप्यत्र नियमशब्देन व्यवह्रियते इति ।

न चैवमपभ्रंशेभ्यो बोधो न स्यादिति वाच्यम् । नियमफलस्यादृष्टस्याभावेऽपि दृष्टस्य कार्यस्योत्पत्तेः । नख-

विदलनादिना वैतुष्यवत्, दिगन्तराभिमुखभोजने तृप्तिवच्च ।

नन्वपभ्रंशानामर्थावबोधहेतुत्वस्याक्लृप्तत्वात् कारणाभावप्रयुक्त एवार्थबोधाभावः स्यात् । मैवम् । पर्यायवद्विनिगमनाविरहादपभ्रंशानामपि शक्तिसद्भावात् । अस्मात्पदादयमर्थो बोध्य इतीश्वरेच्छायाः शक्तित्वपक्षे भगवदिच्छायाः सन्मात्रविषयकत्वात् । पदार्थान्तरत्वपक्षेऽपि कल्पकस्य तुल्यत्वात् । असाधुस्मरणद्वारा साधोर्बोधकत्वप्रसङ्गाच्च । तिबादिस्मारितानां लादीनां बोधकत्वस्य वार्त्तिकैरभ्युपगमात् । नचाल्पत्वबहुत्वाभ्यां विनिगमः, अल्पीयांसो हि शब्दा भूयांसश्चापशब्दा इति महाभाष्योक्तेरिति वाच्यम् । घटबोधकत्वरूपायाः शक्तेस्तद्भ्रमाद्बोधं वदताऽप्यङ्गीकारात् । शक्तिभ्रमस्य भ्रमत्वकल्पनस्य पुनरुक्तित्वात् । नचैवं सर्वे सर्वार्थवाचका इति पर्यवसानाद् गौणमुख्यविभागोच्छेद इति वाच्यम् । त्वत्पक्षेऽपीश्वरेच्छाया गौणादावतिप्रसङ्गात् । प्रयोगप्राचुर्यतद्विरहाभ्यां विभागाच्च ।

अत्र नैयायिकाः । नेश्वरेच्छामात्रं शक्तिः, किं तूक्तविषयविशेषवैशिष्ट्येन । तथा च सन्मात्रविषयकत्वमकिंचित्करम् । प्रमाणानुरोधेनैव यथोक्तविशेषकल्पनात् ।

मिश्रास्तु उक्तेच्छया ईश्वरेण स्वातन्त्र्येणोच्चरितत्वमेव शक्तिः । न च चैत्रादावव्याप्तिः । द्वादशेऽह्नि पिता नामेत्यादितो नामत्वेन तेषामपीश्वरोच्चरितत्वात् । न च निषेधप्रतियोगित्वेनापभ्रंशानामप्यपभ्रंशत्वरूपेण तथात्वम् । तदिच्छयोच्चरितत्वाभावात् । नामपदार्थपर्यालोचनया नाम्नां तथा तात्पर्यकोच्चारणसत्त्वात् । न च गावीशब्दस्य बोधकतया स्वज्ञाप्यसम्बन्धसत्त्वाल्लक्षणया गवि साधुत्वापत्तिः । गभीरायां न-

धामित्याद्यनुरोधाच्छक्यसंबन्धस्य लक्षणात्वाभावादिति वाच्यम् । शक्यसंबन्धस्यैव तत्त्वात् । तस्य च ज्ञप्तिप्रयोजकसंबन्धाश्रयसंबन्धपर्यवसन्नस्य साक्षात्परम्परासाधारणशक्तिविषयसंबन्धपर्यवसन्नत्वाद् गाव्यादिपदेऽनुपपत्तेरित्याहुः । एतेन पदार्थान्तरत्वपक्षेऽपि वैषम्यं व्याख्यातम् । उक्तलाघवस्योभयत्र विनिगमकत्वात् । न च प्राकृतस्यापि संस्कृतवदनुगतत्वाच्छक्त्यापत्तिः ।

"तद्भवस्तत्समो देशीत्यनेकः प्राकृतक्रमः" इति दण्डयुक्तेः ।

यत्तु काव्यप्रकाशादौ शब्दशक्तिमूलध्वन्यादौ प्राकृतगाथोदाहरणं तत् तद्बोध्यसंस्कृताभिप्रायम् । शक्तिभ्रमाद्बोधोक्तौ तत्र शक्तिस्वीकार इति त्वसंगतम् । व्याप्तिभ्रमविषये व्याप्तेरप्यापत्तेः । तथा च "न च शक्तिसाध्यं शक्त्यारोपाद्भवितुमर्हति, आरोपितदहनादपि दाहापत्तेः" इत्याशङ्क्य मणिकृतोक्तम्—

"ज्ञायमानकरणे प्रयोजकरूपवत्तया ज्ञायमानादेव फलं बाष्पे धूमारोपाद् वन्ह्यनुमितिवत्" इति ।

न च जनकज्ञानभ्रमत्वे शाब्दबुद्धेरयथार्थत्वम् । शक्तिज्ञानयथार्थत्वस्य शाब्दप्रमायामप्रयोजकत्वात् । अनाप्तोक्ते व्यभिचारात् । नापि जनकज्ञानभ्रमत्वे नायथार्थत्वम् । भ्रमानुव्यवसाये व्यभिचारात् । अपभ्रंशस्य शाब्दप्रमाजनकत्वं तु तत्प्रयोजकाद् योग्यतादेः यथार्थतद्बोधाद्वा । अबाधितसंसर्गज्ञानजनकपदार्थोपस्थापकत्वाद्वा । संसर्गबाधकप्रमाविरहाद्वेति । प्रयोगप्रत्यययोरविशेषेऽपि व्याकरणस्य साधुत्वनियमार्थत्ववत् कोशादीनां शक्तिनियामकत्वाच्च । उक्तं च वाक्यपदीये—

ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः ।
तादात्म्यमुपगम्यैव शब्दस्यार्थप्रकाशकाः ॥

न शिष्टैरनुगम्यन्ते पर्याया इव साधवः ।
न यतः स्मृतिशास्त्रेण तस्मात्साक्षादवाचकाः ॥
अम्बाम्बेति यदा बालः शिक्षमाणः प्रभाषते ।
अव्यक्तं तद्विदां तेन व्यक्ते भवति निर्णयः ॥
एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते ।
तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते ॥ इति ।

न च संस्कृतज्ञानविरहिणां म्लेच्छादीनां कथं शक्त्यारोप इति वाच्यम् । प्रथमं केनचिद् गावीशब्दे प्रयुक्ते तत्र व्युत्पन्नो गोशब्दादर्थं प्रतीत्य व्यवहृतवान् अम्बाम्बेतिन्यायात्, पार्श्वस्थैश्च गावीशब्दादेव स्वार्थः प्रबोध्यतइति भ्रमेण गावीपदं गवि शक्तमिति अन्येषां व्युत्पादनादिति भ्रमपरम्परया निर्वाहात् । नन्वेवं संस्कृतत्वाभावे शक्त्यभावव्याप्यत्वज्ञानवतां तद्वाचकसंस्कृतविशेषज्ञानवतां च—

स्मारयन्तश्च ते साधूनर्थावगतिहेतवः ।

इति रीत्या तत्स्मरणाद्बोधोपपत्तौ अपि संस्कृतविशेषज्ञानविरहिणामपभ्रंशाच्छाब्दबोधो न स्यात्, विशेषदर्शनसत्त्वे भ्रमानवकाशाच्च इति चेत्,

अत्र कण्टकोद्धारकृतः,

अयमर्थः किञ्चित्पदवाच्य इति सामान्यज्ञानादेव आहार्यं शक्तिज्ञानं तत्रेत्यपि कल्पनीयम् । यद्वा तद्बोध्यार्थसंबद्धपदार्थान्तरवाचकस्य स्मृत्या ततो लक्षणया बोध इति ।

न च यत्र सर्वेऽप्यपभ्रंशास्तत्समार्थकसंस्कृतमात्रस्य चानुपस्थितिस्तत्रोक्तरीत्या शाब्दबोधानुपपत्तिः लाक्षणिकस्याननुभावकत्वादिति वाच्यम् । सविभक्तिकस्यैवोक्तपदस्य स्मरणात् । विभक्तेरेव तत्रानुभावकत्वात् ।

गङ्गायां द्विरेफ इत्यादिवत् ।

एवं सर्वेषां सर्वार्थवाचकत्वे अश्वशब्दोऽस्वशब्दश्च क्रमेण वाजिनि दरिद्रे च साधुः, व्युत्क्रमेण त्वसाधुः, परत्र परशब्दप्रयोगः तद्धर्मप्रतिपत्त्यर्थ इति सिद्धान्तविरोधः । गतिबुद्धिप्रत्यवसानार्थेत्याद्यर्थविशेषघटितानुशासनानुपपत्त्यतिप्रसक्त्यादिः । प्रयोगबाहुल्याल्पत्वयोरसर्वज्ञापरिच्छेद्यत्वात् । कोषादेश्च शक्तिमात्रबोधकत्वेन तदतात्पर्यकत्वात् । अत एव दुश्च्यवनादिपदानामल्पप्रयोगतेत्यालंकारिकाः । नियतविषया अपि शब्दा दृश्यन्ते शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते विकारएवैनमार्या भाषन्ते इत्यादिभाष्यनिरुक्तादिदर्शनान्नियतप्रयोगाणां तस्मिन्नर्थे गौणत्वं स्यात् ।

यत्तु सर्वत्र शक्तिस्वीकारे लक्षणानङ्गीकाराल्लाघवम् । अन्यथा कार्यकारणभावद्वयस्य शाब्दधीद्वये परस्परव्यभिचारवारणाय कार्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशस्य चापत्तेरिति । तत्तुच्छम् । शक्तिज्ञानीयकार्यकारणभावेषु तवापि तत्साम्यात् । न च तादृशस्थले शक्तिभ्रमाद् यत्र बोधस्तत्र शक्तिज्ञानत्वेन कारणतायास्त्वयाऽपि कल्पनान्नैतदाधिक्यमिति वाच्यम् । तथाऽपि लाक्षणिकपदानामननुभावकत्वपक्षे तीरत्वप्रकारकतीरविशेष्यकशाब्दत्वं तीरपदशक्तिज्ञानस्य कार्यतावच्छेदकम् । गङ्गापदलक्षणाज्ञानस्य तु तादृशस्मृतित्वमिति कार्यतावच्छेदकभेदेन व्यभिचारानवकाशात् । नव्यमतेऽपि लक्ष्यतावच्छेदके लक्षणानभ्युपगमात् ।

किं च शतं शब्दानर्थांश्चोदाहृत्य विचार्यते । एकैकस्य शतशतार्थवाचकत्वेऽयुतशक्तिकल्पनं तावत्कार्यकारणभावकल्पनं तावदव्यवहितोत्तरत्वनिवेशनं च स्यात् ।

मम तु शतमेव शक्तयः कल्प्यन्ते । न हि ममापि तावतीनां लक्षणानां स्वीकार आवश्यकः । तावच्छब्देभ्यो-लक्षणया तावदर्थबोधः कस्य चिज्जात एवेत्यत्र मानाभावात् । एतेन शक्तिभ्रमोऽपि व्याख्यातः । त्वया त्वजनितान्यार्थबोधस्य तच्छक्तत्वकल्पने मानाभावात् तावद्भ्यस्तावदर्थबोधो जात एवेति कल्प्यम् । एवं तज्जन्यव्यवहारादयोऽपीति महागौरवमित्यास्तां विस्तरः ।

केचित्तु शक्तिलक्षणाज्ञानयोरेक एव कार्यकारणभावः । शक्तित्वावच्छिन्नसांसर्गिकविषयतानिरूपितपदनिष्ठप्रकारतानिरूपितार्थनिष्ठविशेष्यताशालिज्ञानत्वं कारणतावच्छेदकं, शाब्दबोधत्वं च कार्यतावच्छेदकं, घटो घटपदवानित्यत्रार्थो विशेष्यः, पदं प्रकारः, शक्तिः संसर्गः । नचैवं शक्यसम्बन्धस्य लक्षणास्थले संसर्गत्वात्तदसंग्रहः । तस्यापि शक्तिघटितत्वात् । शक्तित्वनिष्ठावच्छेदकतायां पर्याप्तेरनिवेशात् । नचैवं तीरं गङ्गापदवदिति शक्तिरूपसम्बन्धावच्छिन्नप्रतियोगिताकपदाभावप्रकारकानिर्णयसत्त्वे लक्षणाज्ञानादपि लक्ष्यार्थबोधो न स्याद्, बाधकसत्त्वादिति वाच्यम् । पदनिष्ठप्रकारतानिरूपितशक्तिनिष्ठसांसर्गिकविषयतायामर्थनिष्ठविशेष्यतानिरूपितत्वानभ्युपगमात्तद्धर्मावच्छिन्नविशेष्यतानिरूपिता यस्य सांसर्गिकविषयता तद्धर्मावच्छिन्नविशेष्यताकतत्संसर्गावच्छिन्नप्रतियोगिताकाभावप्रकारकज्ञानस्यैव प्रतिबन्धकत्वादिति । तदसत् । उक्तबाधदशायां शक्यार्थबोधस्यापि प्रसङ्गात् । शक्यसम्बन्धप्रतियोगितावच्छेदककोक्तज्ञानदशायामपि लक्ष्यार्थबोधप्रसङ्गाच्च । उक्तरीत्या बाधकाभावात् । शक्तिनिष्ठसांसर्गिकविषयतायाः पदनिष्ठविशेष्यता-

निरूपितत्वानभ्युपगमे पदनिष्ठविशेष्यतायाः शक्तिनिष्ठसांसर्गिकविषयतानिरूपितत्वस्यापि दुर्वचत्वाच्च । यन्निष्ठा या विषयता यन्निष्ठयद्विषयतानिरूपिता तन्निष्ठा तद्विषयता तन्निष्ठतद्विषयतानिरूपितेति क्लृप्तत्वात् । अन्यथा शक्तिनिष्ठसांसर्गिकविषयतायां पदनिष्ठप्रकारतानिरूपितत्वस्य पदनिष्ठप्रकारतायां वा शक्तिनिष्ठसांसर्गिकविषयतानिरूपितत्वस्याभावमभ्युपगम्योक्तबाधदशायां लक्ष्यार्थबोध इत्यस्य दुर्वारत्वात् । तन्निष्ठविषयतानिरूपकस्य कथं तन्निष्ठविषयतानिरूपितत्वं नास्तीति युक्तेस्त्वदुक्तेऽपि जागरूकत्वात् । एवं पदनिष्ठप्रकारतायामर्थविशेष्यतानिरूपितत्वाभावः स्वीक्रियतामुत शक्तिनिष्ठसांसर्गिकविषयतायामित्यप्यापादनीयम् । यद्धर्मावच्छिन्नविशेष्यतानिरूपिता या प्रकारता तद्धर्मावच्छिन्नविशेष्यताकतद्धर्मावच्छिन्नप्रतियोगिताकाभावज्ञानमेव प्रतिबन्धकमित्यस्यापि सुवचत्वात् ।

अत्रेदं बोध्यम् । भाष्यमते क्रतावेवापशब्दप्रयोगनिषेधः । न म्लेच्छितवाइत्यस्य तत्प्रकरणस्थत्वात् । श्रुत्यन्तरमपि यर्वाणस्तर्वाणो नाम ऋषयो बभूवुः प्रत्यक्षधर्माणः परावरज्ञा इत्यादि । योगजधर्मेण धर्मसाक्षात्कारवन्तः ।

अयमर्थः । विषयोदासीनतया यद्वानस्तद्वान इति वक्तव्ये यर्वाणस्तर्वाण इति प्रयोगात्तन्नामकतेति । एवं च क्रतोर्बहिरपशब्दप्रयोगस्तैः कृतः इति तस्याविगीतत्वोन्नयनमिति । भट्टैरप्युक्तम्—

स्त्र्युपायमांसभक्तादिपुरुषार्थमपि श्रितः ।
प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात् ॥

वार्तिकमते तु उभयत्र निषेधः । नानृतं वदेदित्यनारभ्याधीतपुरुषार्थनिषेधेन सर्वसिद्धेनार्थानृतवच्छब्दानृतस्यापि निषेधोपपत्तेः । एवं च क्रतावपभाषणे तद्वैगुण्यं प्रत्यवायश्च ।

तद्बहिस्तु प्रत्यवायमात्रमिति विशेषः ।

अत्र मीमांसाकौस्तुभकृतः । अनृतपदस्योभयपरत्वे वदेदित्यस्योच्चारणप्रतिपादनोभयपरत्वे वैरूप्यम् । एवं सकृच्छ्रुतानृतपदस्यापि । न च शब्दानृतस्यैव तर्हि निषेधोऽयं विनिगमकाभावादिति वाच्यम् । "प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्" इत्यादिश्रौतप्रयोगवशादर्थानृतएवानृतपदशक्त्यवधारणात् । भाष्यस्मृतेरनवकाशतया तदनुरोधेनात्रत्यानृतपदस्यार्थासत्यत्वपरत्वस्य कल्पयितुमुचितत्वाच्च । अत एव नानृतं वदेदिति श्रुतेरेव विवाहार्थानृतवदनाभ्यनुज्ञापकस्मृत्या सङ्कोचः । न च न म्लेच्छितवाइति म्लेच्छभाषाया एव निषेधः । हेलय इत्युपक्रमविरोधात् । म्लेच्छो हवा एष यदपशब्द इत्युपसंहारविरोधाच्च ।

ननु "वाग्योगविद् दुष्यति चापशब्दैः" इत्यत्र वाचा चैव हि मनसा च यज्ञः प्रवर्ततइतिदर्शनेन वाग्योगविच्छब्दस्य यजमानपरत्वात् साधुभाषणनियमस्य याज्ञे कर्मणि नियमोऽन्यत्रानियम इति महाभाष्योक्त्या यज्ञमात्रपरत्वात् तद्बलादेव ज्योतिष्टोमेऽपि निषेधसिद्धौ तत्र पृथङ्निषेधवैयर्थ्यम् इति चेन्न । अवघातासम्भवे दलनवत्प्रतिनिधित्वेन प्रसक्तानामसाधूना प्रयोगनिषेधार्थत्वात् । अयज्ञिया वै माषा इत्यादिवत् । एवं ज्योतिष्टोमे साधुप्रयोगासम्भवे प्रतिनिधित्वेनाप्यसाधवो न वाच्याः । किं त्वक्षिसंकेतादिभिरेव व्यवहर्तव्यम् । यज्ञान्तरे त्वपभ्रंशा अपि प्रतिनिधेया इति फलितम् । अत एवाहिताग्निरपशब्दं प्रयुज्येत्यत्राहिताग्निपदं संगच्छते । अन्यथा निषेधस्य ज्योतिष्टोममात्रपरत्वे नैमित्तिकप्रायश्चित्तस्यापि तन्मात्रविषयकत्वस्य स्वत एव सिद्धेः । न चेयमिष्टिरनारभ्याधातित्वने

हिरण्यनाशेष्ट्यादिवत् पुरुषार्थैव स्यादिति वाच्यम् । प्रायश्चित्तीया मा भूमेत्यादिभाष्यदर्शनेन दोषनिर्घातार्थत्वाद्दोषस्य च भाष्यानुसारेण यज्ञेऽपशब्दभाषणादेव प्रसक्तेर्दोषनिर्घातद्वारा क्रत्वङ्गत्वप्रतीतेः । न चैवमप्याहिताग्निग्रहणवैयर्थ्यम्, यज्ञमात्रएव तदधिकारादिति वाच्यम् । याज्ञे कर्मणीति भाष्यस्मृतावसाधुभाषणनिषेधस्य स्मार्त्तयज्ञादिभ्यो व्यावृत्त्यर्थत्वात् ।

वस्तुतः प्रायश्चित्तेऽपशब्दभाषणस्य निमित्ततया तद्विशेषणमाहिताग्निपदमविवक्षितमेवेत्यनुवाद एव । न च नैमित्तिकोक्तेष्टिकर्तृत्वेन तद्विवक्षा । इष्टेरपि स्वत एवाहिताग्निसाध्यत्वात् । अतो न तद्वैयर्थ्यभयेन स्वतन्त्रपुरुषार्थनिषेधकल्पनं युक्तम् । न च वाग्योगविदिति कात्यायनवचनात्पुरुषार्थोऽपि निषेध इति वाच्यम् । यथोत्तरं मुनीनां प्रामाण्यमिति न्यायेन पतञ्जलिप्रोक्तस्यैव ग्राह्यत्वादित्याहुः ।

अथ किमिदं साधुत्वम् । न तावद् बोधकत्वम् । अपशब्दसाधारण्यात् । न च शक्तिमत्त्वम् । शबादिविकरणानामसाधुत्वापत्तेः । तेषां कर्त्रादिवाचकतायास्तृतीये परास्तत्वात् । अपशब्दे व्यभिचाराच्च । साधुत्वस्यैव शक्त्यवच्छेदकत्वेनान्योन्याश्रयत्वाच्च । गौणलाक्षणिकयोरव्याप्तेश्च । तयोरपि क्वचिच्छक्तिरस्त्येवेति चेद्गावीशब्दस्य गं गणपतिमवितुं प्रीणयितुं शीलमस्येति मिश्रोक्तरीत्या गुङ् शब्दइत्यतो णिनि वा क्वचिदर्थे शक्तिसत्त्वाद्गव्यपि तदापत्तेः । एतेन वृत्तिमत्त्वं तदित्यपि परास्तम् । एतेन यस्य शब्दस्य यत्रार्थेऽनादिप्रयोगः स तत्र साधुरित्यपि निरस्तम् । हेलय इति वेदप्रयुक्ते अलिशब्देऽतिव्याप्तेश्च । तस्यापशब्दत्वात् । न च वेदस्य तदंशेऽनुवादरूपत्वान्न तत्रानादिप्रयोगः । संज्ञा-

शब्देद्ष्वव्याप्तेः । न च नामधेयत्वेन तदपि वेदस्थमेवेति वाच्यम् । नापभाषितवै इत्यादावपभ्रंशत्वेनापशब्दानामपि तथात्वात् । न च निषेधाप्रतियोगित्वेन तदिति वाच्यम् । म्लेच्छो ह वा एष यदपशब्द इत्यादौ तस्यापि सत्त्वात् । एतेन वेदस्थशब्दत्वं तदित्यपि निरस्तम् । "भाषायां सदवसश्रुवः" "प्रथमायाश्च द्विवचने भाषायाम्" इति भाषापुरस्कारेण व्युत्पादितानां निषेदिवान् युवामित्यादीनां साधुत्वानापत्तेश्च । भाषापदोपादानसामर्थ्येन तेषां वेदे प्रयोगो नास्तीति निर्णयात् । नापि यज्ञप्रयोगार्हत्वम् । साधूनामेव तथात्वात् । तदवच्छेदकरूपान्तरापरिचयात् । एतेनाभ्युदयजनकत्वमपि परास्तम् । नाप्यनपभ्रष्टत्वम् । तद्ध्यपभ्रंशाभिन्नत्वमेव । तच्च न सादित्वम् । संज्ञाशब्दातिव्याप्तेः । नापि साधुभिन्नत्वम् । अन्योन्याश्रयात् । साधुत्वस्य तद्भेदघटितत्वात् । नापि प्रत्यवाययोग्यत्वम् । तदवच्छेदकरूपानिरुक्तेः । नानृतं वदेदित्यादिना विसंवादिसंस्कृतस्यापि प्रत्यवायजनकत्वात् । न च जातिविशेष एव साधुत्वम् । कत्वादिना सङ्करात् । साधुगकारे असाधुककारे च परस्परात्यन्ताभावसमानाधिकरणयोः साधुत्वकत्वयोः साधुककारे समावेशात् । कशब्दादाचारक्विबन्तात्कर्तरि क्विपि पर्याप्त्या सामानाधिकरण्यसम्भवात् ।

आत्राहुः ।

अनपभ्रष्टता ऽनादिः यद्वाऽभ्युदययोग्यता ।
प्रक्रियाव्यञ्जनीया वा जातिः काऽपपीह साधुता ॥

इत्यभियुक्तोक्त्या जातिविशेष एव साधुत्वम् । न च सङ्करस्तद्बाधकः । गुणगतजातौ तस्यादोषत्वात् । तथा हि । सन्ति तावच्छब्देषु तत्तज्जन्यतावच्छेदिका जातयः । यतः स्त्रीपुंसाद्युच्चरितमनु-

मीयते । सन्ति च देवदत्तादिजन्यतावच्छेदिका अपि जातयः । यतोऽयं देवदत्तीय इत्याद्यनुमीयते इति निर्विवादम् । तत्र देवदत्तीयत्वाभिव्यञ्जिका जातिः तदीयककाराद्विवृत्तिरेका स्वीकर्तव्या । यत्र देवदत्तीया अनोष्ठ्या एव वर्णाः पूर्वं श्रुताः, तत्र चाक्षुषाद्यविषयदेवदत्तोच्चारितौष्ठ्यश्रवणे देवदत्तीयत्वानुमानस्यानुभविकत्वात् । कत्वादिव्याप्यतादृशनानाजातिस्वीकारे ओष्ठ्यवर्णवृत्तिजातेः पूर्वमग्रहादनुमानानुपपत्तेः । तथा च देवदत्तोच्चरितगकारे चैत्रीयककारे च परस्परात्यन्ताभावसमानाधिकरणयोर्देवदत्तीयत्वाभिव्यञ्जकजातिकत्वजात्योर्देवदत्तोच्चारितककारे समावेशात् संकर आवश्यक इति । तच्चिन्त्यम् । द्रव्यगतजातितो वैषम्याभावात् । "गुणगतजातौ सांकर्यं न दोष इति मतं निर्बीजमेव" इत्युपायकृता "बीजसाम्येन गुणेऽपि तस्य दोषत्वम्" इति मणिकृता चाभिहितत्वात् । न चोक्तानुपपत्तिः । तत्र स्मर्यमाणायाः ककारादिवृत्तिजातेरारोपेणैवानुमानोपपत्तेः । विषयसत्त्वेनानुमितेर्भ्रमत्वानापत्तेः ।

अत एवोक्तं शब्दमणौ । शुकककारादिषु कत्वादिव्याप्यजातिर्भिन्ना । तया प्रत्येकं शुकककारादिषु शुकादिप्रभवत्वमनुमाय तद्व्यवहारः । न तु शुकककारादिष्वेका जातिरस्ति शुकप्रभवत्वानुमापिका तद्व्यवहारिका वा । गत्वादिना संकरप्रसङ्गादिति ।

मिश्रास्तु साधुत्वजातेर्वर्णवृत्तित्वे वर्णेषु साधुत्वप्रत्ययापत्तिः । वाक्ये तथात्वप्रत्ययानुपपत्तिः । देवदत्तीयत्वाद्यनुमापकजातिसंकरापत्तिश्चेत्याहुः ।

किं च घटादिपदेषु जात्यनुपपत्तिः । पदस्य वर्णसमु-

दायात्मकस्य अव्यवहितोत्तरत्वसंबन्धेन घविशिष्टकारादिरूप-तया साधुत्वपर्याप्त्यधिकरणस्य युगपदनवस्थानात् ।

"अनारब्धे तु गोशब्दे गोशब्दत्वं कथं भवेत्" इतिन्यायेन पदत्ववत् साधुत्वस्यापि जातित्वासंभवात् । जातेर्व्यासज्यवृत्ति-त्वानुपपत्तिश्चेति । अत्रोच्यते—

अयं वृद्धानामाशयः । नित्यत्वे सत्यनेकसमवेतत्वं जातिस्वरूपम् । तच्च व्यासज्यवृत्तित्वेऽप्यविरुद्धम् । समवाया-वच्छिन्नवृत्तेरेकमात्राश्रयनिरूप्यत्वनियमाभावात् । घटादावेव व्यभिचारात् । संयोगादीनां च जन्यत्वादेव जातित्वा-भावो न तु व्यासज्यवृत्तित्वात् । दर्शनमात्रस्य चाप्रयो-जकत्वात् । पदवृत्तित्वाभ्युपगमादेव संकरोऽप्यनवकाशः । एकजातिपर्याप्त्यधिकरणे यथोक्तान्यजातिपर्याप्तावेव तदुल्ला-सात् । न च "अकारो वासुदेवः स्यात्" इत्याद्यनुशासनात् तत्सम्बुद्धौ अ इत्यादौ सङ्करो दुर्वारः । तथाऽपि वाक्य-निष्ठसाधुत्वाभ्युपगमे दोषाभावात् ।

नचैवं व्याकरणस्य साध्वनुशासनत्वभङ्गापत्तिः । पदद्वारा वाक्यस्यैव संस्कारात् । वाक्यादपोद्धृत्य पदानि संस्क्रियन्ते इति पक्षस्यापि "न पदान्त"इति सूत्रे आकरारूढत्वात् । पदमा-त्रस्य कयाचिद् व्युत्पत्त्या साधुत्वाद्वा । वाक्यविशेषान्तर्भावेणैव साधुत्वासाधुत्वयोर्व्यवस्थितत्वात् । न च पर्याप्त्यधिकरणसमु-दायघटकवर्णानामेककालानवस्थानात् कथं तत्र साधुत्वम् । पदवाक्यप्रत्यक्षस्य सर्वसंमततया तत्र यादृशी विषयता यस्य वर्णस्य तद्विषयत्वापन्नवर्णसमुदाये तद्वृत्तिसंभवात् । प्रत्यक्षविषयवर्णमात्रवृत्तित्वानभ्युपगमात् । व्यवहारेण तथैव सिद्धत्वाच्च । विरुद्धधर्मसमसंख्याका नित्या एव अका-

रादयो वर्णा इतिपक्षस्य पाणिन्याद्यभिमतत्वेन अइउण्सूत्रे वक्ष्यमाणत्वात् ।

मणिकृतस्तु व्याकरणव्युत्पाद्यत्वं साधुत्वम् । व्याकरणपरिगृहीतत्वतदभावाभ्यामेव प्रामाणिकानां साध्वसाधुव्यवहारात् । अत एव यः शब्दो व्याकरणेन यस्मिन्नर्थे व्युत्पादितः तत्र साधुरसाधुरन्यत्र । नाम्नामपि "उणादयो बहुलम्" इति व्युत्पादितत्वात् । केवलप्रकृतिप्रत्यययोर्बाधयति ग्रामगादेश्च न तद्व्युत्पाद्यत्वम् । अनभिधानेन तेषां प्रयोगानर्हत्वात् । गौणलाक्षणिकयोश्च यथा प्रतिपादकत्वं तद्व्युत्पादनमपि तत्र तथेति तयोरपि साधुत्वम् ।

न च साधुशब्दव्युत्पादकत्वमेव व्याकरणत्वमित्यात्माश्रयः। शब्दगुणदोषविद्भिरभियुक्तैः प्रकृतिप्रत्ययादिपरिकल्पनया शब्दान्वाख्यायकवाक्यस्य व्याकरणत्वात् । न च गुणदोषयोरपि साधुत्वात्मकत्वाद् दोषतादवस्थ्यम् । धर्मजनकत्वाधर्मजनकत्वयोरेव तत्त्वात् । न च साधुत्वे सिद्धे व्याकरणव्युत्पाद्यत्वं तद्व्युत्पाद्यत्वे च साधुत्वमित्यन्योन्याश्रयः । पूर्वपूर्वव्याकरणतः साधुत्वमवगम्योत्तरोत्तरव्याकरणेन तद्व्युत्पादनात् । साधुत्वस्य जातित्वे निष्प्रतियोगिकत्वापत्तौ सर्वत्र सर्वसाधुत्वापात्तिः । न च गोशब्दः अश्वे प्रयुक्तः साधुरेव, ज्ञापकश्च न भवति, तच्छक्तत्वेनाज्ञानादिति वाच्यम् । गावीशब्दस्यापि कयाचिद् व्युत्पत्त्या क्वचित् साधुत्वमिति तज्जातियोगेन गव्यपि साधुत्वापत्तेः । प्रतिशब्दं भिन्नतद्विषयजातिस्वीकारे चाननुगमात् । न च जातेः प्रतियोगिनिरूपणनिरूप्यत्वाभावनियमे तारत्वादिजातिरपि मन्दादिनिरूपणनिरूप्या न स्यादिति वाच्यम् । तत्रापि जातिर्नेतरनिरूप-

णनिरूप्या, किन्तु तदुत्कर्षत्वमेवेत्यभ्युपगमादित्याहुः ।

मीमांसकास्तु वृत्तिप्रमयाऽर्थप्रतिपादकत्वं साधुत्वम् । वृत्तित्वं च शक्तिलक्षणागौण्यन्यतमत्वरूपम् । गाव्यादिषु च प्रयोगादेरन्यथैवोपपत्तेर्वृत्तित्रयाभावान्नातिव्याप्तिः । संज्ञानां तु द्वादशेऽहनीत्यादिसामान्यविधिना पुत्रत्वाद्युपाधिना संकेतकरणेन शक्तेः प्रमितत्वान्नाव्याप्तिः ।

पुत्रादिनामकरणे गृह्येषु नियमश्रुतेः ।
अनादिशक्तिता संज्ञास्वपि नैव विरुध्यते ॥

इति वाक्यपदीयात् । टिघुभादीनां चालक्ष्यत्वादेव । "नैव ताः साधवो मताः" इतिन्यायात् ।

वस्तुतो वृत्तिग्रहाभावे तेषामर्थबोधकत्वानुपपत्तेः स्वयं संपादितसंकेतत्वेन गाव्यादिवच्छब्दान्तरोपस्थापकतयाऽपि तद्योगान्मुख्यार्थाभावे तन्मूलकलक्षणागौण्योरप्यनुपपत्तेः सांप्रतिकशक्तिस्वीकारेणैव टिघुभादिशब्दानामर्थबोधकत्वं वाच्यम् । अत एव पूर्वोक्तसाधुत्वेऽपि न क्षतिः । अत एव पाणिन्यादेः "टेः" इत्यादौ षष्ठ्यादिप्रयोगोऽप्युपपद्यतइत्याहुः ।

केचित्तु "टेः"इत्यादीना टिशब्दानुकरणत्वमेव। अनुकरणोत्तरमितिशब्दप्रयोगानियमे मानाभावात् । "अनुकरणं चानितिपरम्" इतिसूत्रविरोधात् । नचैवं टीतिशब्दस्यैव लोपादिकार्यं स्यान्न त्वन्त्यस्वरादिवर्णस्येति वाच्यम् । लक्षणया तत्परत्वाङ्गीकारादित्याहुः ।

असाधुत्वं तु तद्भिन्नत्वमेव, न तु जातिविशेषः । प्रमाणाभावात् । तदनुभवस्य साधुत्वाभावविषयत्वस्यानुभविकत्वाच्च । योग्यानुपलब्धिबाधितत्वाच्च । साधुत्वं तु व्याकरणसंस्कारसहकृतश्रोत्रेन्द्रियग्राह्यम् । तदुक्तम् । प्रक्रियाव्यञ्जनीयेति। तदुक्तम्—

तत्र तत्त्वमभियोगात् स्यादिति । तथा—

अभियुक्ताश्च ये तत्र यन्निबद्धप्रयोजनाः ।
तत्रत्यगुणदोषाणां ज्ञाने चाधिकृता मताः ॥

साध्वनुशासनाभ्यासस्यासाधुविषयकसंस्कारजनकत्वोक्तौ चातिप्रसङ्गादिति । संज्ञाशब्दे त्वयं विशेषः—

यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते टिघुभादयः ।
कथं नु तासां साधुत्वं नैव ताः साधवो मताः ॥
अनपभ्रंशरूपत्वान्नाप्यासामपशब्दता ।
हस्तचेष्टा यथा लोके तथा सङ्केतिता इमाः ॥
तासां प्रयोगेऽभ्युदयः प्रत्यवायोऽपि वा भवेत् ।
लाघवेनार्थबोधार्थं प्रयुज्यन्ते तु केवलम् ॥
इति उभयबहिर्भावः ।
व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचित् ।
नित्य एव तु सम्बन्धो डित्थादिषु गवादिवत् ॥
वृद्ध्यादीनां च शास्त्रेऽस्मिन् शक्त्यवच्छेदलक्षणः ।
अकृत्रिमोऽभिसम्बन्धो विशेषणविशेष्यवत् ॥

इतिरीत्या तेषामप्यनादिता इतिपक्षे तु साधुत्वमेव। नामकरणे तु "कृतं कुर्यान्न तद्धितम्" इति गृह्यसूत्रानुगतानामेव साधुत्वम् । द्वादशेऽहनि पिता नाम कुर्यादिति श्रुतेर्विशेषविषयकस्मृत्या बाधात् । देशभाषानुसारिणीनां तु संज्ञानां न तत् । तथा च शब्दकण्टकोद्धारे—

अनादिता चेत् साधुत्वं संज्ञाशब्देषु का गतिः ।
उच्यते नामकरणे गृह्येषु नियमश्रुतेः ॥
यथाकामं न संज्ञानां विनियोगः समस्ति नः ।
तस्मादनादिता संज्ञास्वपि नैव विधीयते ॥

यास्तु तद्देशभाषाभिः संज्ञास्तासां न साधुता ।

अत एव न्याय्यभावात् कल्पनं संज्ञादिष्विति तृतीयवार्त्तिके अनादिशब्दानां साधुत्वमित्युक्तम् । तृतीयत्वाभिधानं तु विपरीतगणनयेत्यवधेयम् । वार्त्तिकं तु ऋऌक्सूत्रे स्पष्टम् । तस्मात् प्रकृतिप्रत्ययविभागकल्पनया साधुशब्दा अत्र व्युत्पाद्यन्तइति सिद्धम् ॥ इति साधुत्वविचारः ॥

अथैवं वर्णोपदेशवैयर्थ्यम् । अइउण् इत्यादिना कस्यचित् साधुत्वानवगमात् । न च दोषरहितवर्णस्वरूपप्रतीतिः तदर्थः । लोकत एव तत्सिद्धेः । अन्यथोदात्तादिपाठस्याप्यापत्तेः । तदुक्तम्—

इष्टबुद्ध्यर्थश्चेति चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेश इति ।

कर्त्तव्यः स्यादिति शेषः । त्रैस्वर्येण सूत्रपाठे एकस्योच्चारणादेव सिद्धौ द्वयोरेव कर्त्तव्यताया आपाद्यत्वेऽपि एकश्रुत्या पाठाभिप्रायेणोदात्तादित्रयपाठ आपादितः । न च निर्देशस्य जातिपरत्वाद् उदात्तादिसंग्रहः । संवृतकलादीनामपि तत्तज्जात्यवच्छिन्नतया संग्रहापत्तेः । तदुक्तम्—

आकृत्युपदेशात्सिद्धम् इतिचेत् संवृतादीनां प्रतिषेध इति ।

विधेयः स्यादिति शेषः । ह्रस्वाकारस्य सवृतत्वेऽपि तदन्येषामचां संवृतत्वं दोषः । आदिपदसंग्राह्यानाह भाष्यम्—

संवृतः, कलः, ध्मातः, एणीकृतः, अर्द्धकः, ग्रस्तः, निरस्तः, प्रगीतः, उपगीतः, क्ष्विण्णः, रोमशः, अवलम्बितः, निर्हतः, संदष्टः, विकीर्णः, इति ।

अपर आह—

ग्रस्तं निरस्तमवलम्बितं निर्हतमम्बूकृतं ध्मातमथो विकम्पितम् ।
संदष्टमेणीकृतमर्द्धकं द्रुतं विकीर्णमेताः स्वरदोषभावनाः ॥

व्याख्यातं च कैयटेन । कलः स्थानान्तरनिष्पन्नः काकलीत्वेन प्रसिद्धः । ध्मातः श्वासभूयिष्ठतया ह्रस्वोऽपि दीर्घ इव लक्ष्यते । एणीकृतोऽविशिष्टः किमयमोकार उत औकार इति यत्र संदेहः । अम्बूकृतो यो व्यक्तोऽप्यन्तर्मुख इव श्रूयते । अर्द्धको दीर्घोऽपि ह्रस्व इव । ग्रस्तो जिह्वामूले निगृहीतः, अव्यक्त इत्यपरे । निरस्तो निष्ठुरः । प्रगीतः सामवदुच्चारितः । उपगीतः समीपवर्णान्तरगीत्याऽनुरक्तः । क्ष्विण्ण कम्पमान इव । रोमशो गम्भीरः । अवलम्बितो वर्णान्तरसंभिन्नः । निर्हतो रूक्षः । संदष्टो वर्द्धित इव । विकीर्णो वर्णान्तरे प्रसृतः, एकोऽप्यनेकानिर्भासीत्यपरे । स्वरदोषभावनाः स्वरदोषगोत्राणि । अनन्ता हि दोषाः शक्तिप्रमादकृता इति ।

न च दोषविशिष्टानामपि निर्देशे तादृशानामेव प्रयोगापत्तिः । शास्त्रान्ते सर्वासामेव वर्णव्यक्तीनां शुद्धानां पाठ्यत्वात् । सिद्धान्ते अकारस्य प्राक्रियायां विवृतत्वप्रतिज्ञायामपि "अअ" इतिसूत्रेण संवृतत्ववत् । शास्त्रान्तपाठेन च सर्वत्रासिद्धत्वलाभः । एवं चानुबन्धानामित्संज्ञालोपयोश्च त्यागाल्लाघवम् । तथा हि । शी धातौ ईकारः एव कलः पाठ्यः । कलादात्मनेपदम् । ध्मातात्कर्त्रभिप्राये । आद्यन्तौ कलध्मातौ इत्यादिकं तत्र तत्र पठनीयम् । इडागादयः कलध्माताश्च क्रमेण पाठ्याः । डुकृञ् इत्यत्र कृ इति द्विदोषं पाठ्यम् । अनुबन्धास्तु सर्वत्र हेयाः । आदिरन्त्येन सहेता इत्यत्र आदिकलौ सहेति वाच्यम् । कलेनेतिपाठे तु सिद्धान्ते चरमस्य णकारादेरिवात्राप्यन्त्यवर्णस्य संज्ञा न स्यात् । ह्रलोप इत्यादौ अण इत्यस्य स्थाने अओरिति । असंदेहार्थोऽसन्धिः । सिद्ध्यत्येवम्, अपाणिनीयं तु

भवति । अत्र सिद्धान्तवार्त्तिकम्—

आगमाश्च विकाराश्च प्रत्ययाः सह धातुभिः ।
उच्चार्यन्ते ततस्तेषु नेमे प्राप्ताः कलादयः ॥

जातिपरानिर्देशेऽपि शास्त्रे आगमादीनां विशिष्य पाठेन दोषनिवृत्तिरित्यर्थः। न चापठितेषु प्रातिपदिकेषु दोषः । त्वयाऽपि प्रतिपदपाठस्यावश्याश्रयणीयत्वात् । अन्यथा शशो, मञ्चकः, पलाशः, इत्यादौ षषो, मञ्चकः, पलाषः, इत्यादेः प्रसङ्गात् । ननु स्वरादिनिर्णयाय प्रतिपदपाठे दोषनिवृत्तिरपि ततोऽस्तु, उणादित्वात् पृषोदरादित्वाद्वा साधुत्वाभ्यनुज्ञानम्—विशेषावधारणं तु कोषादिना इत्युक्तौ तु दोषनिवृत्तिरपि शिक्षादेरस्तु इति चेत् ।सत्यम् । दोषनिवृत्तेरानुषङ्गिकत्वात् । प्रत्याहारनिष्पत्तेरेव प्रयोजनत्वात् ।

ते च अणादयः । प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा अत्रेतिव्युत्पत्तेः । न च ग्रहणकवाक्यादकारादिभिरप्यनेकेषामुपस्थापनादतिप्रसङ्गः । रूढेरेव नियामकत्वात् । भाष्यवार्त्तिकव्यवहारस्य च तत्र मानत्वात् । न च रूढ्यवच्छेदकाभावः । पङ्कजपदे पद्मत्वस्येवात्रापि आदिरन्त्येनेत्येतत्सूत्र विहितसंज्ञात्वस्य तथात्वात् । तेन सुप्तिङादिसाधारण्यम् ।

यदि तु तत्पदजन्यबोधप्रकारस्यैव रूढ्यवच्छेदकत्वमिति नियमः, शक्त्युपायैः शाब्दविषयत्वनियमादिति ग्रन्थदर्शनात्। तदाऽस्तु प्रयोगोपाधिरेवोक्तधर्मः । तत्प्रयोगजन्ययोगार्थज्ञानविरोधिविरहप्रतियोगित्वस्य तथात्वात् । यद्वा—उक्तसंज्ञात्वमेव प्रत्याहारत्वम् । आदिरन्त्येनेतिसूत्रेण कृताः संज्ञाः प्रत्याहारशब्देन व्यवह्रियन्तइति दर्शनादिति सर्वं शिवम् ॥

इति श्रीकूर्माचलचक्रवर्त्तिगुरुणा विश्वेश्वरेण विरचिते

सिद्धान्तसुधानिधौ प्रथमाध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥

# अइउण् ।

आदिरन्त्येनेतिवक्ष्यमाणसूत्रसङ्केतवशादणादिसंज्ञासंग्राह्यवर्णानुपूर्वीपराणि चतुर्दश सूत्राणि । स्पष्टप्रतिपत्त्यर्थं गुणादीनामभावः ।

यत्तु अ इत्यत्र विभक्तेरुत्वयत्वयलोपेषु लोपस्यासिद्धत्वात् इकारे इकोऽसवर्णइति ऋकारे ऋत्यक इति प्रकृतिभावाच्च समाधानाद् एदैतोरयायौ दुर्वाराविति । तन्न । प्रकृतिभावे पदान्ताधिकारात् । छान्दसत्वाद्विभक्तिलोपकल्पनमपेक्ष्यासन्धिकल्पनस्यैव युक्तत्वात् ।

कैयटस्तु वर्णोपदेशकालेऽजादिसंज्ञानामनिष्पादान्न सन्धिरिति । तस्यायमाशयः । अनिष्पादात् स्वनिमित्तकविधेरत्र प्रवृत्त्यौपयिकरूपवैकल्यात्, वर्णोपदेशव्यावृत्तं यदुद्देश्यतावच्छेदकं तदवच्छिन्नत्वादिति यावत् । साधुशब्दानामेव व्युत्पाद्यत्वात् । एषां च लौकिकवैदिकशब्दानन्तर्भावात् । संज्ञाशब्दत्वे "अइउण्" इत्यादीनां मानाभावात् । एतेन पाठपौर्वापर्यं न शास्त्रप्रवृत्तौ तन्त्रम् । उत्तरसूत्रप्रयुक्तकार्यनिर्देशस्य पूर्वसूत्रेषु बहुलमुपलभ्यमानस्यानुपपत्तेः । "तुल्यास्यप्रयत्नम्" इत्यादौ तद्विधेयसवर्णादिसंज्ञोपजीवकसवर्णदीर्घाद्यप्रवृत्त्यापत्तेः । विधिसूत्रे उद्देश्यतावच्छेदकतया गृह्यमाणो यो धर्मस्तदवच्छिन्ने कार्यप्रवृत्तेरावश्यकत्वात् । अत एव नेह नानाऽस्ति किंचनेत्यादीनां निषेध्यतावच्छेदकीभूतदृश्यत्वादिधर्मावच्छिन्नतया स्वस्यापि मिथ्यात्वबोधकत्वं सङ्गच्छते । न चैवं ग्रहणकशास्त्रस्यापि स्वस्मिन् प्रवृत्त्यापत्तौ दीर्घाणामनण्त्वेन सवर्णग्राहक-

त्वं नास्तीतिसिद्धान्तभङ्गापत्तिः इति वाच्यम् । तत्र तच्छास्त्रात् पूर्वमकारादीनां दीर्घानुपस्थापकत्वात् दीर्घाणामुद्देश्यत्वग्रहाभावात् इति दूषणमलग्नकं वेदितव्यम् । तुल्यास्यादिपदानां साधुत्वेन तत्र शास्त्रप्रवृत्तेः । तद्वाक्यार्थबोधे तुल्यास्यादिपदार्थोपस्थितेरेव तन्त्रतया सवर्णदीर्घत्वप्रकारकबोधस्यानपेक्षितत्वाच्च ।

यत्तु संहिताविरहान्न तत्कार्यम्—

संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥

इति वाक्ये संहिताया अनित्यत्वादिति । तच्चिन्त्यम् । अकारेकारादीनां परस्परार्थान्वयप्रतियोग्यर्थानुपस्थापकत्वेन वाक्यत्वाभावात् । न चैतत्सूत्रोक्तानामकारादीनाम् "अणुदित्सवर्णस्य च" इत्यादावन्वयप्रतियोगित्वात्तदिति वाच्यम् । तस्य वाक्यत्वेऽप्यस्य तदनुपपत्तेः । अन्यथाऽतिप्रसङ्गात् ।

केचित्तु चादिषु पाठान्निपातत्वे "निपात एकाज्" इति प्रगृह्यसंज्ञया प्रकृतिभावः । नचैवं दाक्षिरित्यादौ "अत इञ्" इत्यादीनां प्रवृत्तिर्न स्यात्, तपरत्वसामर्थ्यादाक्षरसमाम्नायिकस्यैवाकारस्य तत्र ग्रहणाद् अन्यस्य सवर्णग्राहकत्वाप्रसक्त्या तन्निवृत्त्यर्थं तपरत्वानुपयोगादिति वाच्यम् । सर्वव्यक्तीनां निर्देशानर्हतया यत्किंचिद्व्यक्तिनिर्देशध्रौव्ये संहिताकार्यविरहेण स्फुटप्रतिपत्त्यर्थं निपातव्यक्तीनामेव निर्देशेऽपि सादृश्येन सर्वाकारव्यक्तीनामुपस्थित्या तत्सिद्धेरित्याहुः । तदप्यसत् । स्ववृत्तिवर्णत्वव्याप्यधर्मेण सादृश्यविवक्षायां दीर्घाणामपि ग्रहापत्तेः । न च निपातान्यव्यक्तिनिर्देशेऽप्ययं दोषः । अविवक्षितावान्तरधर्मकव्यक्तिमात्रस्य निर्देशोपगमात् । न च निपातत्वतद्भिन्नत्वोभयाभाववदवर्ण-

व्यक्तिमात्रमलीकमिति वाच्यम् । तद्धर्मयोरविवक्षामात्रस्योक्तत्वात् । निपातत्वस्य च प्रगृह्यसंज्ञार्थमवश्यं विवक्षणीयत्वात् ।

कारप्रत्ययस्तु न भवति । "रोगाख्यायां ण्वुल्बहुलम्" इत्यत्र तदुपसंख्यानात् तद्विधौ बहुलग्रहणान्वयात् ।

स्यादेतत् । अकारः संवृत इति शिक्षावाक्यात् संवृतप्रयत्नस्य ह्रस्वाकारस्य विवृतप्रयत्नैर्दीर्घप्लुताकारैः सह सावर्ण्याभावात् कथम् " अस्य च्वौ " इत्यादौ दीर्घग्रहः । " अणुदित्सवर्णस्य चाप्रत्ययः " इति सवर्णानामेव ग्रहणोक्तेः । भिन्नप्रयत्नानां च सावर्ण्याभावात् । एवमिहाग्निदत्तेत्यत्र "गुरोरनृत" इति प्लुताकारेण सह सवर्णदीर्घो न स्यात् इतिचेत् सत्यम् । अत एवात्राकारो विवृत एवोपदिष्टः । यद्वार्त्तिकम्—

अकारस्य विवृतोपदेश आकारग्रहणार्थ इति ।

अत्र च शास्त्रान्ते "अ अ" इति प्रत्यापत्तिसूत्रं ज्ञापकम् । तत्र हि अ इति विवृतत्वविशिष्टम् अ इति च संवृतत्वविशिष्टम् अकारमुच्चार्य विवृतोद्देशेन संवृताकारो विधीयते । सविशेषणे हीति न्यायेन संवृतत्वस्यैव विधेयत्वपर्यवसानम् । अकारस्य च संवृतत्वे शास्त्रीयप्रक्रियादशायामाश्रीयमाणे संवृतत्वविधिवैयर्थ्यापत्तेः । ततः पूर्वमकारो विवृतः प्रतिज्ञायतइति प्रक्रियादशायां प्रयोगदशायां वा न दोषः । शास्त्रान्ते विहितस्य संवृतत्वस्य संपूर्णशास्त्रं प्रत्यासिद्धत्वात् । आकारस्य विवृतत्वं च पाणिनीयशिक्षायामुक्तम्—

स्वराणामूष्मणां चैव विवृतं करणं स्मृतम् ।
तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥ इति ।

स्वरपदमोज्झितपरम् ह्रस्वाकारान्यपरं च । संवृतोऽकार इति शिक्षान्तरोक्तेः । एवं च ह्रस्वान्याकारस्य इउऋऌव-र्णानां च विवृतत्वम् । ततोऽप्येकारे ओकारे च तदुत्कर्षः । ततोऽप्यैकारे औकारे चेत्यर्थः ।

केचित्तु उक्तवार्त्तिकस्थं विवृतपदं विवृततरपरम् । दीर्घा-द्यकारस्य विवृततरत्वेन तत्सावर्ण्यस्य विवृतत्वमात्रेणासिद्धेः । तथा च शिक्षान्तरे—

विवृतकरणाः स्वरास्तेभ्य एओ विवृततरौ ताभ्यामैऔ ताभ्यामप्याकार इति ।

न च व्याप्यधर्मावच्छिन्नस्य व्यापकधर्मावच्छिन्नत्वानि-यमात् विवृततरस्यापि विवृतत्वानपायात् तत एव सावर्ण्य-निर्वाहे वार्त्तिकस्थं विवृतपदं यथाश्रुतमेवास्त्विति वाच्यम् । व्याप्यधर्मपुरस्कारेणैव सावर्ण्यस्य वाच्यत्वात् । अत एवो-ष्मणामीषद्विवृतत्वमाश्रित्य विवृतप्रयत्नैरिकारादिभिः सावर्ण्यं नास्तीति "नाज्झलौ" इति सूत्रं भाष्यकृद्भिः प्रत्यादेक्ष्यते । अथ वा सामर्थ्याद्विवृततरस्यापि विवृतत्वमात्रेण सावर्ण्यम् । अन्यथा विवृतत्वप्रतिज्ञानवैयर्थ्यादित्याहुः ।

अन्ये तु विवृततरेणापि विवृतत्वमात्रेण सावर्ण्यं, सूत्रकृता "नाज्झलौ" इत्यस्यारम्भात् । अतएव—

"चत्वार आभ्यन्तराः प्रयत्नाः सवर्णसंज्ञायामाश्री-यन्ते" इति वृत्तिः ।

नन्वेवमेकारौकाराभ्यां सह ऐदौतोः सावर्ण्यं स्यात् । तयोर्विवृततरत्वेऽपि विवृतत्वानपायात् । न चेष्टापत्तिः । नावं नाव इत्यादौ "औतोऽम्शसोः" इत्यात्वस्य करवावहै अत्रेत्यत्रेदूदेदिति प्रगृह्यत्वस्य कस्मै अदात् विष्णौ

अस्तीत्यादौ पूर्वरूपस्य चापत्तेः । मैवम् । अत्र पृथङ्निर्देशसामर्थ्यादनुबन्धद्वयसामर्थ्याद्वा तत्र सावर्ण्याप्रवृत्तेः । अन्यथा ह्येकानुबन्धेनैव व्यवहरेत्, ऐदौतौ वा न निर्दिशेत् । ग्रहणकशास्त्रेणैव सिद्धेरित्याहुः । अत्रेदं चिन्त्यम् । "एचोऽयवायावः" इत्यत्रादेशानियमार्थमैकारौकारयोः पृथगुपदेशः । अन्यथाऽऽदेशसङ्करापत्तेः ।

अथान्तरतमपरिभाषयैव तत्र निर्वाहः । एचां सन्ध्यक्षरतया संवृताकारतालव्यस्य एकारस्य तादृशोऽय्, संवृताकारौष्ठ्यस्य ओकारस्य तादृशोऽव्, ऐचोश्चोत्तरभूयस्त्वस्य वक्ष्यमाणतया अकारस्यार्द्धमात्रत्वादिकारोकारयोश्चाध्यर्द्धमात्रत्वाद्विवृताकारतालव्यस्य ऐकारस्य तादृश आय्, विवृताकारौष्ठ्यस्य औकारस्य तादृश आव्, इति व्यवस्थासम्भवात् । मैवम् । प्रक्रियादशायामकारस्य विवृतत्वप्रतिज्ञानात् ।

यत्तु पृथगनुबन्धादिति । तन्न । गुणवृद्धिसंज्ञयोरुद्देश्यसंज्ञिनियमार्थमनुबन्धद्वयस्याप्यावश्यकत्वात् । न च तत्र स्वरूपेणैव संज्ञिनिर्देशान्निर्वाहः । तथा सति तत्राष्टमात्रागौरवात् । यथान्यासे तु सार्द्धमात्राद्वयं प्रत्येकं गुणवृद्धिसंज्ञयोः, अर्द्धमात्रा च वर्णसमाम्नाये इति सार्द्धाः पञ्चैव मात्रा इति लाघवात् । न च गुणसंज्ञायामेव स्वरूपेण संज्ञिनिर्देशः, वृद्धिसंज्ञायां त्वनुबन्धेनैवेति वाच्यम् । तथाऽपि गुणसंज्ञाया मात्राचतुष्टयम्, वृद्धिसंज्ञायां सार्धमात्राद्वयमिति मिलित्वा सार्द्धषण्मात्रासंपत्त्या एकमात्राधिक्यात् । ननु "एङः पदान्ताद्" इत्यादौ एच इत्यपहाय एङ्ग्रहणसामर्थ्यादेव ऐचोर्नातिप्रसङ्गः । सावर्ण्याप्रवृत्तिरित्यस्य तत्प्रयुक्तकार्याप्रवृत्तिरित्यर्थ इति चेन्न । तथा ऽपि "औतोऽम्शसोः" इत्यादौ अतिप्रसङ्गात् । न हि तपरत्वादिस्थलेऽणः स-

वर्णग्राहकत्वं नास्तीति स्थलान्तरेऽपि तथैव स्यादिति दिक् ।

अत्र चैकशेषेण षण्णां ह्रस्वव्यक्तीनामुपादानम्।सौत्रत्वाद्विभक्तिलोपः । एवमुत्तरसूत्रेऽपि । अत एव दीर्घाणामनण्त्वमित्यपि संगच्छते। एवम् "अस्यन्वौ" इत्यादावनुवादे "त्यदादीनामः" इत्यादिविधौ च ह्रस्वनिर्देशे सर्वत्र ह्रस्वानामण्त्वमस्त्येव । ततश्चानुवादे दीर्घादिग्रहो विधौ तु नेति इष्टसिद्ध्यर्थं ग्रहणकशास्त्रारम्भः । तेन विना सव्यवस्थानुपपत्तेः । एवं च विरुद्धधर्मसमसंख्याका नित्या एवाकारादिव्यक्तयः इति मते नैवात्र सूत्रप्रवृत्तिः । षण्णामेव ह्रस्वाकारव्यक्तीनां जगति सत्त्वेन तासां विवृतत्वप्रतिज्ञाने धातुप्रातिपदिकप्रत्ययनिपातस्थानामकाराणां प्रत्याहारनिर्दिष्टषडकारव्यक्तिभेदकूटानाश्रयतया सर्वेषामनायासेन तत्तदच्कार्यसिद्धेः । नचैवं सर्वे वर्णाः सकृदुपदिष्टा इति हयवरट्सूत्रस्थभाष्यविरोधापत्तिः, अकारषट्कनिर्देशस्य त्वयाऽभ्युपगमादिति वाच्यम् ।.एकप्रयत्नोच्चार्यत्वस्यैव तदर्थत्वात् । उच्चार्यवर्णानाह उपदिष्टा इमे वर्णा इति भाष्यदर्शनात् ।

नन्वष्टादशैव भिन्ना नित्याश्चाकारा इति न कस्यचित् तान्त्रिकस्य मतम् इति चेत् सत्यम् । युक्तिसहत्वेनास्याप्यभ्युपगम्यत्वात् । तथा हि—

भट्टमते तावदेकैका एव अकारादिव्यक्तयो नित्याः । स एवायमकार इति प्रत्यभिज्ञानात् । नचेदं तज्जातीयत्वावगाहि वक्तुं शक्यम् । बाधकबलादेव ज्वालादिप्रत्यभिज्ञानस्य तज्जातीयविषयकत्वोक्तेः । प्रकृते च तदभावात् । न च गकार उत्पन्नो विनष्ट इत्यादिरुत्पत्तिविनाशप्रत्ययः तथा । व्यञ्जकध्वनिगतस्योत्पत्त्यादेस्तत्रारोपात् । न च स्वाधिकरणक्षणध्वंसानधिकरणसमयसम्बन्धरूपाया उत्पत्तेः स्वत्वघटि-

तत्त्वेन धर्मिभेदभिन्नत्वात् कथम् अन्योत्पत्तेरन्यत्रारोप इति वाच्यम् । उत्पत्तिघटकपदार्थानां प्रत्येकमुपनये अकारादेरधिकरणे तस्य क्षणे तस्य ध्वंसे तस्याधिकरणे इत्यादिरीत्या सखण्डोत्पत्तिभ्रमसंभवात् । अत एव इन्धनसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावाच्छिन्नवह्निसमानाधिकरणरूपाया अखण्डव्याप्तेर्वन्हित्वे इन्धनसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वाभावादप्रसिद्धावपि तद्घटकपदार्थानां परस्परोपश्लेषविषयत्वेनैव व्याप्तिभ्रमः । न च प्रत्यभिज्ञाया एव भ्रमत्वम् प्रत्ययानुरोधादिति वाच्यम् । तथाऽपि विनिगमकाभावात् । अनन्तशब्दतद्ध्वंसप्रागभावादिकल्पनागौरवस्य नित्यत्वपक्षपातित्वाच्च । न चैकस्मिन् धर्मिणि एककालावच्छेदेन विरुद्धधर्मानुपपत्त्या तारत्वमन्दत्वादिभेदात् तद्भेद इति वाच्यम् । तारत्वादीनां वायुधर्मत्वात् । मुखमालिन्यादेर्दर्पणधर्मत्ववत् । अन्यथा वर्णगतत्वाभिमतगत्वादिजातिभिर्व्याप्यव्यापकभावानुपपत्तेः । न हि तारत्वव्याप्यं गत्वम् । मन्दगकारेऽपि तत्सत्त्वात् । नापि गत्वव्याप्यं तारत्वम् । ककारादावपि तत्सत्त्वात् । तारगकारे च तयोः सांकर्यात् ।

नचैवं तारत्वादेः श्रोत्रग्राह्यत्वं न स्यात् । तस्य वायुग्राहकत्वाभावेनैव वायुधर्मग्राहकत्वाभावादिति वाच्यम् । केषांचिद् वायुधर्माणां तेन ग्रहेऽपि बाधकाभावात् । पृथिवीजलाकाशानां घ्राणरसनश्रोत्राग्राह्यत्वेऽपि गन्धरसशब्दानां तद्ग्राह्यत्वोपगमात् । तारमन्दवर्णजनकवायूनामुत्कर्षापकर्षोद्भूतस्पर्शानां नैयायिकाभ्युपगतत्वेन स्पर्शपुरस्कारेण कर्णशष्कुल्यवच्छिन्नत्वगिन्द्रियगृहीतानां तारत्वादीनां श्रोत्रेण ग्रहसंभवाद्वा । अत एव घज्ञानानन्तरग्रहवि-

षयत्वादिरूपानुपूर्व्याः मानसोपनीतायाः टकारादौ श्रोत्रेणैव ग्रह इति सिद्धान्तः । अत एव दशकृत्वो गकारमुच्चारयतीत्यावृत्तिविषयक एव प्रत्यय; न तु व्यक्तिभेदावगाही दश गकारानुत्पादयतीति । तदुक्तम्—

तेन यत् प्रार्थ्यते जातेस्तद्वर्णादेव लप्स्यते ।
व्यक्तिलभ्यं तु नादेभ्य इति गत्वादिधीर्वृथा ॥

इति । प्रत्यभिज्ञानस्य वर्णैक्याद्विरुद्धधर्मवत्तायाश्च ध्वनिगतत्वादुपपत्तिरित्यर्थः । अत्र चैवं सूत्रोपपत्तिः । धात्वादिस्थानामकाराणामैक्येन सर्वेषामप्यण्त्वात् "अस्यच्वौ"इत्यादिस्थे अकारे ग्रहणकशास्त्रप्रवृत्तिः । शाम्यतीत्यादौ"शमामष्टानाम्" इति दीर्घः । वृषादित्यत्र फिट्सूत्रेण प्रातिपदिकान्त्यस्याकारस्य उदात्तत्वम् । अणादिस्थस्य प्रत्ययस्वरेणाद्युदात्तत्वम् । अवनमतीत्यादौ "उपसर्गाश्चाभिवर्जम्"इत्याद्युदात्तत्वम् । अन्यथा अकाराणां भिन्नत्वे वर्णोपदेशस्थाकारस्य विवृतत्वप्रतिज्ञानेऽप्यन्यत्र गतानां विवृतत्वाभावादुक्तानामच्कार्याणामप्रवृत्तिप्रसङ्गात् । ह्रस्वत्वादीनाम् उदात्तत्वादीनां चाजेकधर्मत्वात् । वर्णसमाम्नायान्तर्गतस्यैवाच्त्वात् । ततश्च वर्णसमाम्नायोपदिष्टावर्णमात्रोद्देशेन कस्यचित् कार्यस्याविधानादुक्तवचनसामर्थ्यमात्रेण तत्कार्यप्रवृत्तिरित्यादि कल्प्यं स्यात् ।

न चैवं कप्रत्ययेऽप्यण्प्रत्ययकार्याणाम् अण्प्रत्यये च कप्रत्ययकार्याणां प्रवृत्तिः स्यात्, अनुबन्धसङ्करापत्तेरिति वाच्यम् । नियतानुबन्धकरणसामर्थ्येन तत्तद्देशपुरस्कारेणैव तत्तदनुबन्धकार्यनियमोपपत्तेः।लोकेऽपि इह मुण्डो भव, इह जटिलो भव, इह नग्नो भव, इत्यादिरीत्याऽस्यानेकधर्मोपदेशेऽपि यद्धर्मावच्छिन्नो यत्रोपदिश्यते तत्रैव तद्धर्मव्यवस्थादर्शनात्।एवं "कर्मण्यण्" इत्या-

दावेव णित्त्वम् ।"चरेष्टः"इत्यादावेव टित्त्वम् ।"गापोष्टक्"इत्यत्र कित्त्वटित्त्वे । अत एव "प्राग्दीव्यतोऽण्" "शिवादिभ्योऽण्" इत्यादौ पुनर्णित्करणसार्थक्यम् ।

ननु तथाऽपि घटेन तरतीति घटिक इत्यत्र "नौद्व्यचष्ठन्" इति ठन्प्रत्ययः, धनस्य निमित्तं संयोग उत्पातो वा धन्य इत्यत्र "तस्य निमित्तं संयोगोत्पातौ" इत्याधिकृत्य विहितो "गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्" इति यत्प्रत्ययश्च न स्यात्, अकारस्यैकत्वेन द्व्यच्त्वाभावात्, सूत्र तु बाहुभ्यां तरति बाहुक इत्यादौ यत्र विजातीयमज्द्वयं तत्र सावकाशम् इति चेन्न । आवृत्त्या घटादिपदस्यापि द्व्यच्त्वात् । न च गौणमुख्ययोरितिन्यायावतारः । "गोद्व्यच"इत्यत्र असंख्यापरिमाणाश्वादेर्यदित्यश्वादिपर्युदासेन तदभावस्यापि ज्ञापितत्वात् । अन्यथा अश्वशब्दे मुख्यद्व्यच्त्वाभावेन यत्प्रत्ययाप्राप्तौ पर्युदासवैयर्थ्यात् । अत एव किरिणा गिरिणेत्यादौ "सावेकाच" इति विभक्तेरुदात्तत्वं नास्ति । गौणेनापि द्व्यज्व्यपदेशेन एकाज्व्यपदेशस्य बाधितत्वात् । एतद्रीत्यैव सृष्टिसमयोत्पन्ना तत्प्रलयपर्यन्तस्थायिनी एकैवाकारादिव्यक्तिरिति वेदान्तमतेऽपि प्रकृतेरुपपत्तिरवधेयेति । एतच्चायुक्तम् । तारत्वादीनां वायुधर्मत्वे कत्वादीनामपि तथात्वापत्तेः । उक्तं हि तात्पर्यशुद्धावुदयनाचार्यैः—

वर्णात्मकोऽपि नित्यः कल्प्यमान एकः कल्पनीयः । प्रत्यभिज्ञानात् । भेदे प्रमाणाभावाच्च । तारत्वादयस्त्वौपाधिकास्तत्रावभासन्ते । तथा च तीव्रत्वादिवत् कत्वादयोऽपि तस्यौपाधिकाः सन्तु, कृतम् अप्रामाणिकबहुतरकल्पनाजालेन । उपाधयश्च बहव इति तद्गतमेकत्वसामान्यं कल्पनीय-

मिति घट्टकुट्यां प्रभातम् । अथोक्तदोषभिया स्वाभाविका एव तीव्रत्वादय इत्यभ्युपगमः तथा सति तावन्त एव ध्वनिवत् कादयोऽपीति कत्वसामान्यमावर्ततइति ।

न चोत्पत्तिविनाशप्रतीत्योर्भ्रमत्वं कल्प्यम्। विनिगमकाभावात् । ध्वंसप्रागभावादिकल्पनस्य च फलमुखत्वात् । तन्मते कण्ठताल्वाद्यभिघातस्य कसाक्षात्कारत्वं जन्यतावच्छेदकम् मन्मते तु कत्वमेवेति लाघवाच्च । न च तन्मतेऽपि लौकिकविषयितासम्बन्धेन कत्वमेव कार्यतावच्छेदकमिति वाच्यम् । लौकिकत्वस्याननुगतत्वात् । कोलाहलप्रत्यक्षानुपपत्तेश्च । तत्र कत्वादीनामनवबोधात् । तेष्वेतत्प्रत्यक्षे कत्वादिलौकिकविषयकत्वाभावात् । अगृह्यमाणकशब्दत्वादिव्याप्यजातिकनानाशब्दानां कोलाहलपदार्थत्वात् । न च तत्र कत्वादिकमेव नास्तीति वाच्यम् । बुभुत्सायां कत्वादिश्रावणस्य सर्वानुभवसिद्धत्वात् । न च प्रत्यभिज्ञानमात्रेणैक्यसिद्धिः । सैवेयं गुर्जरीत्यादिप्रत्यभिज्ञानेन ध्वनीनामपि नित्यत्वापत्तेः। स एवायं गकार इति प्रत्यभिज्ञायाश्च व्यक्त्यभेदविषयकत्वएव भ्रमत्वम् । गत्वाद्यवच्छिन्नप्रतियोगिताकभेदाभावपरत्वे तु प्रमात्वमेव ।

न च जातिप्रत्यभिज्ञायास्तज्जातीयोऽयमित्येवाकार इति वाच्यम् । तदेवेदम् औषध बहुभिर्भुक्तं मयाऽपि भुज्यते इत्यादौ तज्जातीयाभेदप्रत्यभिज्ञाया अपि तदाकारत्वादर्शनात् ।

अयं तु विशेषः। यदा गत्वे जातित्वमपि भासते तदा तज्जातीयोऽयमिति । तदभावे तु सोऽयमितिप्रत्यभिज्ञास्वरूपमिति। तस्मात्तत्तत्स्वरूपजन्या अनन्ता एव वर्णाः । नन्वेवं शब्दस्यार्थबोधकत्वं न स्यात्, यस्मिन्पदे शक्तिग्रहस्तस्य नष्टत्वादिति चेत् । मैवम् । यथा शक्तिग्रहविषयस्य घटादेर्नाशेऽपि

घटपदाद् घटान्तरस्य बोधः तथा शक्तिमत्त्वेन ज्ञातपदनाशेऽपि तज्जातीयपदान्तराद् बोधोपपत्तेः ।

यत्तु व्यक्त्यैक्ये सामान्यमेव नास्ति तत् कथं पदान्तराद् बोध इति । तन्न । व्यक्तिभेदस्यापि साधितत्वात् । इति नैयायिकाः ।

अत्रापि व्यक्त्यभेदप्रत्यभिज्ञाया भ्रमत्वमस्त्येव । एवम् एतन्मतस्यात्रानुसारे प्रत्युच्चारणं वर्णानां भेदाद् "अस्य च्वौ" इत्यादावकारस्य अणुत्वाभावात् सवर्णग्राहकत्वं न स्यात् । अतस्तत्र कण्ठादिजन्यतावच्छेदकजातिव्याप्या ह्रस्वमात्रवृत्तिरपि जातिरस्ति । सैव वर्णसमाम्नाये विवृतत्वेनोपदिष्टा । अत एव सर्वेषामपि ह्रस्वानामणुत्वमस्त्येवेति न कुत्राप्यनुपपत्तिः ।

अत्रापीदं चिन्त्यम् । ह्रस्वाकारमात्रवृत्तिजातौ मानाभावः । न च ह्रस्वेषु दीर्घादिव्यावृत्तानुगतप्रत्ययादेव तत्सिद्धिः । तस्य ह्रस्वत्वेनैवोपपत्तेः । न च ह्रस्वत्वमेव सा जातिः न त्वतिरिक्तेति वाच्यम् । तस्या अत्वादिव्याप्यत्वानुपपत्तेः । अत्वह्रस्वत्वयोर्दीर्घाकारे ह्रस्वोकारे च परस्परात्यन्ताभावसमानाधिकरणयोर्ह्रस्वाकारे सङ्करापत्तेः । न चात्वादिव्याप्यत्वं ह्रस्वत्वं नानैवेति वाच्यम् । ह्रस्वाकारेकारादिष्वनुगतप्रत्ययानुपपत्तेः । "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" इति ह्रस्वत्वस्य जातित्वाभावाच्च । उच्चारणगर्भस्य ह्रस्वत्वस्योपाधेरनुगतत्वाच्च । तस्माद्दृष्टादशैव अकारव्यक्तयो नित्याः । एवं हि प्रत्यभिज्ञानस्य प्रमात्वम् विरुद्धधर्माणां च नारोपस्वीकार इति मतद्वयाद्विशेषः । तदनुगतस्य अत्वादिसामान्यस्य स्वीकाराच्च कोलाहलप्रत्यक्षोपपत्तिः ।

न च लौकिकविषयतासम्बन्धेन कत्वादीनां कार्यतावच्छेदकत्वे कथं कोलाहलप्रत्यक्षम्, तत्र कत्वादीना-

मग्रहादिति वाच्यम् । तथाऽपि स्वाश्रयविषयताया एव कार्यतावच्छेदकसम्बन्धत्वात् । कत्वाद्याश्रयककारादीनां कोलाहलप्रत्यक्षे विषयताया निर्विवादत्वात् । विजातीयपवनसंयोगस्य यथा तन्मते अवच्छेदकतासम्बन्धेन अकारादौ हेतुत्वं, समवायश्च कारणतावच्छेदकः, तथैवात्र तत्साक्षात्कारे समवायेन पवनसंयोगवति श्रवणे अवच्छेदकतया शब्दश्रावणोत्पत्तेः अत्वादिप्रत्यक्षे च श्रावणसमवायो नियामकः । श्रावणे अकारे अत्वस्य समवायात् । अकारानिष्ठकत्वाभावश्रावणे च श्रावणविशेषणता नियामिका । श्रोत्रसमवायादेरेतत्पक्षेऽनभ्युपगमात् ।

ननु श्रावणसमवायसन्निकर्षे श्रावणं विशेषणमुपलक्षणं वा । नाद्यः । अनभिव्यक्तदशायामप्यकारस्य श्रावणोपलक्षितत्वेन तदाऽप्यत्वप्रत्यक्षापत्तेः । नान्त्यः । अकारस्य तत्काले श्रावणोत्पत्तिं विना श्रावणविशिष्टत्वासम्भवात् । अत्वप्रत्यक्षोत्पत्तिपूर्वं केवलावर्णप्रत्यक्षस्वीकारापत्तेः । न चेष्टापत्तिः । स्वाश्रयलौकिकविषयितासम्बन्धस्य कार्यतावच्छेदकतया केवलशब्दप्रत्यक्षासम्भवात्, निर्विकल्पके लौकिकविषयताऽनभ्युपगमात् इतिचेत् । मैवम् । शब्दत्वादिप्रकारकप्रत्यक्षस्यैव पूर्वं स्वीकारात् ।

नन्वत्राप्युदात्ताकारादनुदात्ताकाराभेदावगाहिप्रत्यभिज्ञाया भ्रमत्वमेवेति चेत्, सत्यम् । तथाऽपि बह्वीनां तासां प्रमात्वरक्षणादित्यादिकमूहनीयम् ।

अयं च पक्षः तारमन्दादिधर्मभेदभिन्ना गकारादिव्यक्तयो नित्या एव सन्त्विति वर्णानित्यतावादे भट्टमतैकदेशतया न्यायग्रन्थेषु शङ्कितप्राय एव अष्टादशावर्णव्यक्तय इति शब्दकौ-

एवं भट्टमते किरिणेत्यादौ सप्तमीबहुवचने सौ य एकाच् ततः परा तृतीयादिर्विभक्तिरुदात्ता स्यादित्यर्थकेन "सावेकाचस्तृतीयादिर्विभक्तिः" इति सूत्रेणोदात्तत्वं स्यात् । किरिषु इत्यत्रैकाच्कसत्त्वात् ।

यत्त्वावृत्तिकृतेन व्यज्व्यपदेशेन स्वाश्रयस्यैकाच्कत्वस्य निवृत्तिरिति । तन्न । गौणेनाग्नित्वेन माणवकत्वस्य निवृत्त्यभावात् । त्रिपुत्रे द्विपुत्रव्यपदेशाभावस्तु त्रिपुत्रत्वस्याप्यनारोपितत्वात् । द्वित्वान्यव्यासज्यवृत्तिसंख्यापर्याप्त्यनाश्रयपुरुषनिष्ठजन्यत्वनिरूप्यजनकत्वाभाववत्पुरुषतात्पर्यकस्यैव द्विपुत्र इति प्रयोगस्य तस्मिन्नप्रमाणत्वात् । संभवाभिप्राये तु प्रमाणत्वात् । द्विपुत्रत्वव्यतिरेकेण त्रिपुत्रत्वस्याप्यनुपपत्तेः । अत एव "न वान्यसंख्याव्यवच्छेदो नवैव द्रव्याणीत्यस्य नार्थः तत्पूर्वसंख्योत्पत्तिं विना नवत्वायोगाद्" इति द्रव्योपायादावुक्तम् । अत एवाद्यानां त्रयाणां पदार्थानां सामान्यवत्त्वमित्यादयः प्रयोगाः । अश्वादिपर्युदासस्य सामान्यापेक्षज्ञापकत्वोक्तावपि गौणे कार्यप्रवृत्तेरेव निर्वाहो न तु मुख्यव्यावृत्तेः । तन्मात्रेण सामर्थ्यस्योपक्षीणत्वात् ।

ननु राज्ञेत्यादौ विभक्तेरुदात्तत्ववारणार्थं सावित्युक्तम् । स्वाश्रयैकाच्त्वाभ्युपगमे तु राजस्वित्यत्राप्येकाच्त्वसत्त्वात् तद्वारणं न स्यात्, अतोऽत्र स्वाश्रयैकाच्त्वनिवृत्तौ सावित्येव ज्ञापकम् इति चेत् । न । बाहुनेत्यादिवारणेन तस्य सार्थक्यसंभवात् । न चैकाच इत्यनेन तद्व्यावृत्तिः । सप्तम्येकवचने तस्याप्येकाच्त्वात् । "औकारादेशो ङित्कर्तव्य" इति सप्तमे भाष्यकृतोक्तत्वात् । न च विभक्तिमात्रे एकाच्त्वं विवक्षणीयम् । सावित्यस्य वैयर्थ्यात् ।

किं च "ऊडिदम्पदाद्यप्पुंरैद्युभ्यः" इति सूत्रे एकाज्-ग्रहणानुवृत्त्या "पद्दन्नोमास्" इति सूत्रे निर्दिष्टाः पदादयो निश्शब्दपर्यन्ता गृह्यन्ते, ततः परेषामसन्ना-दीनामनेकाच्त्वात् इति स्थितम् पदादिषु निशन्तानि प्रयोजयन्तीति वार्त्तिके भाष्ये च । गौणेन ह्यच्त्वेन स्वाश्रयै-काच्त्वानिवृत्तौ च असन् यकन् शकन् आसन् इत्येतेषामप्यने-काच्त्वेन ग्रहणं स्यादिति तद्विरोधो दुर्वारः । अतो वार्त्तिकादि-कमेव तन्निवृत्तिज्ञापकम् इति चेत्, सत्यम् । एवंविधकष्टसृष्टिमपे-क्ष्योक्तरीतेरेव युक्तत्वात् । उक्तसर्वग्रन्थानामकारव्यक्तिभेदपक्षा-भिप्रायेणैवोपपन्नत्वाच्चेति दिक् ।

वार्त्तिकमते तु अत्वादिजातिपरो निर्देशः । न चैवं दीर्घा-णामपि सवर्णग्राहकत्वापत्तिः । दीर्घोच्चारणसामर्थ्यात् । सर्वेषां सञ्जिघृक्षितत्वे लाघवार्थं ह्रस्वस्यैव निर्देशप्रसङ्गात् । न चैवमपि दीर्घस्य प्लुतग्राहकत्वं स्यादेव, प्लुतानिर्देशे गौरवापत्त्या तन्निवृत्तौ दीर्घोच्चारणस्य सामर्थ्याभावादिति वाच्यम् । ह्रस्वव्यावृत्ततत्साधारणधर्माभावात् । ग्रहणकशास्त्रे-ऽण्ग्रहणं च न कार्यम् । तदुक्तम्—

सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात् ।

तपरसूत्रं तु स्थलविशेषे जातिपरत्वव्यावर्त्तनायैव । नचैवं विधेयस्थलेऽपि सवर्णग्राहकत्वापत्तौ "त्यदादीना-मः" "सनाशंसभिक्ष उः" इत्यादौ दीर्घादीनामपि विधानं स्यादिति वाच्यम् । तत्र विधेयविशेषणतया एकत्व-स्यापि पश्वेकत्ववत् विवक्षितत्वात् । न च तथाऽप्यत्वावच्छिन्न-विधानस्य दीर्घेणापि चरितार्थतया दीर्घ एवैकोऽस्त्विति वा-च्यम् । अनुपस्थितदीर्घकल्पनापेक्षया उपस्थितह्रस्वस्यैव विधे-

यत्वात् । न च ह्रस्वत्वं न पदार्थतयोपस्थितमिति वाच्यम् । स्वरूपेणैव ह्रस्वस्योच्चारणात् । "अस्य च्वौ" इत्यादौ त्वनुवाद्यविशेषणत्वाद्ध्रस्वैकत्वबन्न तद्विवक्षेति सर्वपरत्वम् ।

यत्तु वैयाकरणमते विधेयानुवाद्यविशेषणानां विवक्षिताविवक्षितत्वनियमाभावः । "उपेयिवाननाश्वाननूचानश्च" इत्यादौ उपेत्यादेः नञादेश्च विधेयविशेषणत्वाविशेषेऽपि विवक्षावैषम्यदर्शनात् । "आर्द्धधातुकस्येड् वलादेः" इत्यत्र वलादित्वस्यानुवाद्यविशेषणस्यापि विवक्षितत्वाच्च । अत एव "एकः पूर्वपरयोः" इतिसूत्रे एकग्रहणम् । अन्यथा आद्गुण इत्येकत्वविवक्षयैवोपपत्तेरिति । तत् तुच्छम् । मीमांसकादीनामप्यविवक्षादेः कुलधर्मत्वाभावात् । शब्दोपात्तार्थे विवक्षाया ध्रौव्येऽपि विध्यन्वयानुपपत्त्या न्यायबलात् तत्परित्यागात् । न्यायस्य वचनाविरोधे सत्यकिञ्चित्करतयाऽनुवाद्यविशेषणस्यापि क्वचित् विवक्षितत्वात् । अत एव—

पर्वण्यौदयिके कुर्युः श्रावणीं तैत्तिरीयकाः ।

इत्यत्र औदयिकत्वविशिष्टपर्वविशिष्टोपाकर्मोद्देशेन तैत्तिरीयका एवेति कर्तृनियमविधाने उद्देश्यविशेषणविवक्षाधीनवाक्यभेदापत्त्या तैत्तिरीयपदं याजुषमात्रोपलक्षणीकृत्य पर्वविशिष्टोपाकर्मोद्देशेन औदयिकत्वमात्रविधिः । पर्वणोऽप्यविवक्षायाम् "बह्वृचाः श्रवणे कुर्युः" इति वाक्यवैयर्थ्यापत्तेरिति स्वीकारात् । अत एव च "यस्योभयं हविरार्त्तिमार्छेद्" इत्यत्र आर्तिमात्रस्य प्रतियोगिविशेषानवच्छिन्नस्य सार्वदिकत्वान्निमित्तत्वापर्यवसानात् तद्विशेषणमपि हविर्विवक्षितमेव । तदुक्तम्—

मृष्यामहे हविषा विशेषणं पर्यवसितस्य हि विशेषणं वाक्यभेदमावक्ष्यतीति ।

तद्विशेषणमुभयत्वं त्वविवक्षितमिति सिद्धान्तः ।

वस्तुतः षष्ठ्याः शैषिकत्वात् क्रियान्वयानावश्यकत्वात् पूर्वमेवार्द्धधातुके विशेषणसंभवान्न वाक्यभेदः, अश्वाभिधानीमित्यादिवत्। "ईयिवांसमतिस्त्रिधः" इत्यादेः केवलस्योपसर्गान्तरपूर्वकस्य च प्रयोगदर्शनाद् उपेत्यस्याविवक्षितत्वात्। उरित्येकत्वविवक्षया उद्वयस्थाने एकस्योकारादेशस्य मनोरमाकौस्तुभयोरुक्तत्वाच्च एकग्रहणस्य भाष्यकृता प्रत्याख्याततत्वात्। तथा च तत्र कैयटेनोक्तम्—

"तदेवमेकग्रहणं प्रत्याख्यातम्। "आद् गुणः" इत्यादौ संख्यायाः शब्दोपात्ताया विवक्षणात् । यत्र तु संख्या न विवक्ष्यते तत्र लक्ष्यसिद्धिरविवक्षितत्वे हेतुः" इति ।

संख्येति प्रकृताभिप्रायम्, विधेयविशेषणान्तराणामप्युपलक्षणम् । अभ्युपेत्यापि ब्रूमः । तपरप्रत्ययौ तत्कालस्य इति सूत्रयित्वाऽपि " त्यदादीनामः " इत्यादौ अतिप्रसङ्गवारणस्य स्पष्टप्रकारेणैव संभवाद् ग्रहणकसूत्रेऽण्ग्रहणमनावश्यकमेव । अवश्यं चाण्भिन्नस्थले वर्णनिर्देशस्य जातिपरत्वं वक्तव्यम्। अन्यथा अवात् स् तामित्यत्र सिचः पूर्वोत्तरयोस्तकारयोर्मध्ये एकस्यैव झल्त्वं स्यान्न तु द्वयोः । अक्षरसमाम्नाये द्वयोरनिर्देशात्। ततश्च "झलो झलि" इति सिचो लोपो न स्यात् । न च वचनसामर्थ्यं गतिः । अभित्था इत्यादौ विजातीयवर्णपरत्वे सावकाशत्वात् । एवं "नाज्झलौ" इतिसूत्रं प्रयत्नसाम्यपक्षेऽप्यनारभ्यमिति लाघवम् । उभयसाधारणैकजात्यभावेनैवाकारादिभिर्हकारादीनामग्रहणासिद्धेः । न च दण्डहस्त इत्यादौ सवर्णदीर्घवारणं सावर्ण्यनिषेधं विना दुरुपपादमिति वाच्यम् । तद्विधावचीत्यनुवृ-

स्यैव तत्सम्भवात् । सूत्रारम्भपक्षेऽपि तदनुवृत्तेः कुमारी शेते इत्यादौ दोषवारणायावश्यकत्वात् । अगृहीतसवर्णानामेव "नाज्झलौ" इतिनिषेध इति सिद्धान्तादिति दिक् ।

यत्तु प्रत्याहारसूत्रोपदिष्टोऽकारादिः सादृश्यसम्बन्धेन स्वसदृशीः षट् व्यक्तीरुपस्थापयति । न च वृत्त्याऽनुपस्थितानां शाब्दान्वयानुपपत्तिः । गुरुमतेन तत्संभवादिति । तच्चिन्त्यम् । ह्रस्वत्वेन सादृश्यविवक्षायामिकारादेरप्युपस्थापनापत्तेः । अत्वह्रस्वत्वाभ्यां तथात्वे तु अत्वमात्रेण सादृश्यं विवक्षित्वाऽष्टादशव्यक्तीनामेवोपस्थितिसम्भवात् । अकारोपरि प्रकारीभूय भासमानायामत्वजातौ तात्पर्यमुपेक्ष्य तद्घटितगुरुतरधर्मेणाकारान्तरोपस्थितिकल्पनस्यानुक्तिसम्भवग्रस्तत्वाच्च ।

# ऋऌक् २ ।

ननु विधिप्रदेशेषु ऋकारेणाष्टादशस्वभेदानामिव द्वादशऌवर्णभेदानामपि ग्रहसम्भवाद् इह ऌकारोपदेशो व्यर्थः । न च मूर्द्धदन्तरूपस्थानभेदेन सावर्ण्याभावात् कथं ग्रहणकशास्त्रप्रवृत्तिरिति वाच्यम् । "ऋऌवर्णयोर्मिथः सावर्ण्यं वाच्यम्" इति वाचनिकसावर्ण्येन तत्सिद्धेः । न च तदेव नारभ्यमिति वाच्यम् । "उपसर्गादृति धातौ" इतिसूत्रात् "वा सुप्यापिशलेः" इत्यत्र ऋतीत्यनुवृत्त्या प्राल्कारीयतीत्यत्र वृद्धिविकल्पप्रवृत्त्यर्थं तदावश्यकत्वात् ।

यद्वा वाच्यं व्याख्येयम् । "ऋकारऌकारावथ षष्ठ ऊष्मा जिह्वामूलीया" इति बह्वृचप्रातिशाख्योक्तरीत्या तुल्यस्थानत्वात् सूत्रेणैव सावर्ण्यं सिद्धमित्यर्थः । अत एव "ऋदुपधाच्चाक्लृपिचृतेः" इत्यत्र क्लृपिपर्युदासः सङ्गच्छते । किं च क्लृपिस्थऌकारस्यैव

ऌकारमात्रमनुकरणम् । स्वातन्त्र्येण तद्भिन्नऌकारस्य लोकवेदयोरभावात् । क्लृपेर्ऌकारश्च लत्वस्यासिद्धत्वात् स्वरकार्येषु ऋकाररूप एवेति वृद्ध्यादीनां सिद्धिरिति ऌकारोपदेशः सावर्ण्यवार्त्तिकं च व्यर्थमेव ।

न च "कृपो रो लः" इति विहितस्य ऌकारस्यैवासिद्धत्वम्, न तु ऌकारीयतीत्यादिस्थतदनुकरणस्येति वाच्यम्। प्रकृतिवदनुकरणम् इत्यतिदेशेन तस्याप्यसिद्धत्वात् । अन्यथा द्विःपचन्त्वित्याहेत्यत्र पचन्तुशब्दस्य "तिङ्ङतिङः" इति निघातो न स्यात् । तिङन्तशब्दानुकरणत्वेन स्वरूपतास्तिङन्तत्वाभावात् । न च तैत्तिरीयवाक्ये आद्युदात्तपाठात् तत्र निघातो नेष्यतएवेति वाच्यम् । भाष्योदाहरणसामर्थ्येन शाखान्तरे निघातपाठस्याप्यनुमानात् । एवम् अग्नीइत्याहेत्यादौ "ईदूदेद् द्विवचनं" इति प्रगृह्यसंज्ञा न स्यात् । न चैवम् ऋकारबुद्ध्या कार्यप्रवृत्तौ तत्स्थानीयगुणादे रपरत्वमेव स्यात्, न तु लपरत्वमिति वाच्यम् । "उरण् रपरः" इत्यत्र प्रत्याहारग्रहणवैयर्थ्यापत्तेः, प्रकृतौ कुत्राप्यनुपयोगात् ।

न च चल्कृपे इत्यादौ अभ्यासस्य अत्वे प्रकृतावेव लपरत्वसार्थक्यम् । तत्र हलादिशेषस्यावश्यकतया रपरत्वेऽपि दोषाभावात् । न च क्लृप्तस्यायं काल्प्त इत्यादौ तस्योपयोगः । "तद्धितेष्वचामादेः" इति वृद्धौ लत्वस्यासिद्धतया ऋकारएव वृद्धिप्रवृत्तौ रपरत्वे च "कृपो रो लः" इत्यनेनैव सिद्धेः । न च तद्रेफस्य स्वतन्त्रतया ऋकारानन्तर्गतत्वात् कथं लत्वमिति वाच्यम् । कृपेर्यो रेफस्तस्यापि लत्वमित्युत्तरसूत्रयोर्व्यवस्थापनीयत्वात् । न च तथाऽपि गम्ऌ गतावित्यादिस्थस्य ऌकारस्यानुकरणे कथं निर्वा-

इः, तत्रासिद्धत्वातिदेशयोरप्रवृत्तेरिति वाच्यम् । पुषादिद्युताद्य्ऌदितः" इति सूत्रे ऌकारे परतो यणादेशप्रयोगेण इत्संज्ञानुवादेन च ज्ञापकेन तस्याप्यच्कार्यसिद्धेः ।

वस्तुत इत्संज्ञानुवादस्य हल्कार्यसिद्धिं ज्ञापयित्वाऽपि पर्यवसानसम्भवाद्यण्निर्देश एव ज्ञापकः ।

यत्त्वेवम् "इदितो नुम्" इत्याद्यनुवादानाम् "ऋत्यकः" इत्यादिज्ञापकानां च सत्त्वात् इकारादयोऽपि न निर्दिश्येरन्निति । तन्न । तन्निर्देशं विना अच्कार्यत्वादेरेव दुर्ग्रहत्वात् । ऌकारस्यात्यल्पविषयकत्वेनोक्तस्थलानुपपत्तिपरिहारमात्रार्थमनुवादानुसारात् । तत् किमर्थं ऌकारोपदेश इति प्राप्ते अभिधीयते—

ऌकारोपदेशो यदृच्छाऽशक्तिजानुकरणप्लुत्याद्यर्थ इति ।

दध्य्ऌतकाय देहीति यदृच्छाशब्दः । ऋकारोच्चारणप्रवृत्तौ करणापाटवात् ऌजुइत्युक्तस्य कुमारीऌजुइत्याहेत्यशक्तिजानुकरणम् । प्लुतद्विर्वचनस्वरिताश्च प्लुत्यादयः । क्लृप्तशिखेत्यत्र "गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्" इति प्लुतः । अन्यथा अनृत इति निषेधः स्यात् । क्लृप्तेत्यत्र "अनचि च" इति द्वित्वम् । अन्तर्भावितण्यर्थात् कर्मणि क्तप्रत्ययान्ते प्रक्लृप्त इत्यत्र कर्मार्थकक्तप्रत्ययान्ते परेऽव्यवहितगतिः प्रकृत्या स्यादित्यर्थकेन "गतिरनन्तरः" इति सूत्रेण पूर्वपदे प्रकृतिस्वरविधानात् प्रशब्द उदात्तः । शेषनिघातेन ऌकारप्रत्ययाकारयोरनुदात्तत्वम् । तत "उदात्तादनुदात्तस्य" इति ऌकारस्य स्वरितत्वम् । न ह्येतद् असिद्धत्वेन साधयितुं शक्यम् । "कृपो रो लः" इत्यस्यैतदपेक्षया पूर्वत्वात् । पूर्वस्य च परं प्रत्यसिद्धत्वाभावात् । न च स्वरितपूर्वभाविनोऽनुदात्तत्वस्यापि अ-

ज्मात्रधर्मत्वात् तदपि प्रयोजनं शक्यम् । शेषनिघातस्य षाष्ठत्वेन तं प्रत्यसिद्धतया ऋकारत्वेनैव तत्प्रवृत्तेः । तत्राद्य-प्रयोजननिरासपरं वार्त्तिकम्—

न्याय्यभावात् कल्पनं संज्ञादिषु इति ।

अयमर्थः । ऋतेरीयाङिति निर्दिष्टात्सौत्रादृतिधातोः "क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि" इत्यनेन शिल्पिन्यभिधेये संज्ञायां च सोपपदान्निरुपपदाच्च धातोः क्वुन् स्यादित्यर्थकेन उणादि-सूत्रेण क्वुन्प्रत्यये संज्ञायां व्युत्पन्नतया शास्त्रानुगतत्वात् "कृतं कुर्यान्न तद्धितम्" इति गृह्यस्मृत्यानुगुण्याच्च ऋतकशब्द एव संज्ञा न तु ऌतकः । यदृच्छाशब्दाना साधुत्वानभ्युपगमात् । एतेन देशभाषानुसारेण क्रियमाणानां शास्त्राननुगतानां कूची मञ्चीत्यादिनाम्नामप्यसाधुत्वं व्याख्यातम् । आ-दिशब्दादनुकरणेष्वपि शिष्टानुरोधदर्शनात् । ऌवर्णस्य दीर्घा न सन्तीति मर्यादामतिक्रम्य क्रियमाणस्य दीर्घऌवर्णानुकरणस्या-प्यसाधुत्वमेव । मातृकान्यासादौ दीर्घऌवर्णस्य मन्त्रशास्त्रादौ प्रसिद्धत्वेऽप्यन्यत्र तदभावात् । अत एव दधि ऌतकाय देही-त्याहेत्यनुकरणमप्यसाध्वेवेति ।

न च ऋतकशब्दस्य शास्त्रानुगतत्वेन ऌतकशब्दस्यासंज्ञा-त्वेऽपि ऌफिडऌफिड्डेति यदृच्छाशब्दौ दुर्वाराविति वाच्यम् । तत्रापि ऋधातोरौणादिकफिडफिड्डप्रत्ययान्तयोः ऋफिड ऋ-फिड्ड इत्येतयोर्निवर्तकत्वात् ।

भाष्ये तु "पक्षान्तरैरपि परिहारा भवन्ति" इत्युक्तम् । तेन यदृच्छाशब्दानामपि साधुत्वमेव । न च गृह्यस्मृतिविरोधः । औपगवादिवदस्यापि साधुत्वोपपत्तेः । तत्र नामकर्तुः प्रत्यवा-यस्तु उक्तशास्त्रोल्लङ्घनादेव । न त्वसाधुप्रयोगात् । अत एव

कात्यायनादिशब्दानां संज्ञात्वं निर्बाधम् ।

यत्तु द्वितीयप्रयोजननिरासाय वार्तिकम्-

अनुकरणं शिष्टाशिष्टाप्रतिषिद्धेषु इति ।

तस्यार्थः । शिष्टस्य विहितस्य अशिष्टाप्रतिषिद्धस्य विहितनिषिद्धान्यस्य वाऽनुकरणं साधु । ततश्चापशब्दप्रयोगस्य निषिद्धत्वात्तदनुकरणमप्यसाध्वेवेति ।

भाष्यकृतस्तु तत्प्रयोजनं समर्थयन्ते । न ह्यपशब्दवाचकत्वमात्रेणासाधुत्वम् । अपशब्दपदस्यापि गाव्याद्यपभ्रंशवाचकत्वेनासाधुत्वापत्तेः । अत एव "ते ऽसुरा हेलयो हेलय इति कुर्वन्तः" इत्यादीनामनुकरणानां साधुत्वं सर्वसिद्धम् ।

न च प्रकृतिवदनुकरणम् इत्यसाधुत्वातिदेशः । अपशब्दस्यानुपदिष्टत्वेन शास्त्रीयप्रकृतित्वाभावात् । असाधुत्वस्य शास्त्रीयकार्यत्वाभावाच्च ।

यदपि तृतीयप्रयोजननिरासाय वार्त्तिकम्—

एकदेशविकृतस्यानन्यत्वात्प्लुत्यादय इति ।

तस्याप्ययमर्थः । वक्ष्यमाणरीत्या ऋकारैकदेशस्य रेफस्य लत्वे एकदेशविकृतस्यानन्यत्वात्प्लुत्यादयः । न च अनृत इति प्लुतनिषेधापत्तिः । अनृत इत्यपहाय अरवत इति पठनीयत्वात् । छिन्नपुच्छस्य श्वत्वाद्यनपायेऽपि पुच्छवत्त्वप्रयुक्तकार्याणामप्रवृत्तिवत् ऋकारेऽपि रेफापगमदशायां रेफवत्त्वप्रयुक्तनिषेधाप्रवृत्तेः । न चैवं होतृ३कारेत्यादेर्दीर्घस्यापि प्लुतनिषेधापत्तिः, रेफवत्त्वादिति वाच्यम् । ह्रस्वस्य रवतो नेति वक्तव्यत्वात् । अत्र भाष्यम्—

स एष सूत्रभेदेन ऌकारोपदेशः प्लुत्याद्यर्थः सन्प्रत्याख्यायते सैषा महतो वंशस्तम्बाल्लट्वा अनुकृष्यतइति ।

अस्यार्थः । एकस्य ऌवर्णस्य प्रत्याख्यानाय अनृत इत्यस्य लघोः स्थाने ह्रस्वस्य रवतो नेतिगुरुतरन्यासाश्रयेण विपरीतमेव गौरवमिति ।

लट्वा करञ्जभेदे स्यात्फले ऽवद्ये खगान्तरे ।

इति विश्वः ।

स्यादेतत्। "कृपो रो लः" इतिसूत्रम् "अअ" इत्यस्मात्पूर्वमस्तु। ततश्चासिद्धत्वादेव प्लुत्यादयः सेत्स्यन्तीति "अनृत" इति यथान्यासमेवास्त्विति । अत्राहुः । तथा सति रोल इत्यस्यानुवृत्त्यर्थं "ग्रो यङि" इत्यस्यापि तत्रैव पाठापत्तौ निजेगिल्यतइत्यत्र लत्वस्यासिद्धतया धातोरेफान्तत्वात् "हलिच" इति दीर्घः स्यादिति ।

इदं पुनरिहावधेयम् । " गुरोरनृत " इति दीर्घपाठ एवास्तु अनृऌत इतिच्छेदः । तकारस्य द्वन्द्वोत्तरवर्तित्वेन सामर्थ्येन च ऋकारेऽप्यन्वयः । दीर्घऌकारस्याप्रसिद्ध्या व्यावृत्त्यनर्हत्वात् । प्लुतविधौ च प्लुतस्यानुवादानुपपत्तेस्तपरत्वस्य ऋकारएवोपयुक्तत्वात् । अतो न दीर्घऋकारस्य प्लुतनिषेधापत्तिः । ऋकारऌकारयोः सवर्णदीर्घे दीर्घऋकारः। अनृत इत्येतच्च गुरोरित्यस्य विशेषणम्। ह्रस्वऋकारभिन्नस्य ऌकारस्य च गुरोः प्लुतो भवतीति सूत्रार्थः । न च ऌकारस्यैव प्लुतः स्यान्न तु वर्णान्तरस्य, ऌकारसामानाधिकरण्यादिति वाच्यम् । ह्रस्वऋकारभिन्नस्येति विशेषणवैयर्थ्यापत्तेः । नचात्राप्यनृत इति ऌकारस्यापि पर्युदासापत्तिः । विशिष्य ऌकारग्रहणसामर्थ्यात् । नच दीर्घकारमात्रस्य पर्युदासापत्तिः । ऋकारऌकारयोर्व्याख्यानवशेन सवर्णदीर्घनिर्णयात् । न च तथाऽप्येकमात्रावृद्ध्या वर्णोपदेशे ऌकारपाठापेक्षया लाघवाभाव इति वाच्यम्। प्लुतमात्रसिद्ध्यर्थस्य

यत्नस्य तद्विधावेव युक्तत्वात् ।

किं च "र्वोरुपधाया दीर्घ" इत्यत्र रेफद्वयप्रश्लेषाद्रेफ एव यो रेफस्तस्मिन्नेत्रोपधाभूते दीर्घो न त्वसिद्धत्वप्रयुक्तरेफेऽपीति व्याख्याय निजेगिल्यते इत्यत्र "हलि च" इति दीर्घस्य वारण-सम्भवात्"कृपो रो ल" इत्यस्य शास्त्रोपान्तपाठेनापि प्लुत्यादि-सिद्धिः। न चैवं पिपठीरित्यादावपि दीर्घो न स्यात्, षत्वस्या-सिद्धतया सस्य रुत्वप्रवृत्तेरिति वाच्यम् । तत्रासिद्धत्वस्य सत्वमात्रोपजीव्यत्वात्तदुत्तरं रुत्वप्रवृत्तेरिति दिक् ।

# एओङ् ३ ऐऔच् ४।

नन्वत्र तपरत्वं वक्तव्यम् एत् ओत् ङ् इत्यादि । अन्यथा एचो ह्रस्वविधौ स्थानत आन्तरतम्येन ह्रस्वयोरेव एदोतोः प्रसङ्गात् । तपरत्वे तु "अचश्च" इत्यत्र द्विमात्राणामेवोपस्थित्या एकमात्रयोर्ह्रस्वसंज्ञाविरहेण तदप्रसङ्गात् । न च ह्रस्वो ना-स्तीति सिद्धान्तादापाद्याप्रसिद्धिः । छान्दोग्ये सात्यमुग्रि-राणायनीयानाम्—

"सुजातेएश्वसूनृतेअध्वर्योओद्रिभिः सुतम् ।

शुक्रं तेएन्यद्"इति एकमात्रयोरेदोतोः प्रसिद्धेः । अन्तः पादस्थस्य अव्यपरस्य तत्प्रातिशाख्ये ह्रस्वयोरेदोतोर्विधानाच्च । न चैतदर्थम् "एच इग्घ्रस्वादेशे" इति सूत्रारम्भात् तत एव तन्निवृत्तिः । तत्सूत्रारम्भप्रयुक्तस्यैव गौरवस्यापत्तेः ।

अथ गीतिवशात्तत्र तथात्वेऽपि तदन्यत्र वेदे लोके च ह्रस्वयोरेदोतोर्न प्रसिद्धिः । प्रयोजनाभावेन तदुक्तयोरप्यत्रान-भिमतत्वात्। अन्यथा अकारादिवत् लाघवात् तयोरेवात्रोपदेशः स्यात् । ग्रहणकशास्त्रेणैव दीर्घप्लुतसंग्रहसिद्धेः । न च गुण-

संज्ञायां द्विमात्रसंज्ञिलाभार्थमत्र द्विमात्रोपदेशः । तत्र स्वरूपेणैव दीर्घनिर्देशसम्भवात् "अदेओ गुणः" इति । यथान्यासे हि वर्णोपदेशे मात्राचतुष्टयम् गुणसंज्ञायामेङिति सार्द्धमात्राद्वयमित्युभयत्र सार्द्धषण्मात्राः । उक्तरीत्या तु वर्णोपदेशे द्वे मात्रे गुणसंज्ञायां चतस्र इति षडेव । वर्णोपदेशे ङकारानुबन्धस्तु पक्षद्वयेऽपि समानः । "एच इग्घ्रस्वादेशे" इति सूत्रं तु न ह्रस्वयोरेदोतोर्व्यावृत्त्यर्थम्, किं त्वैदैतोः कण्ठ्यतालव्ययोरोदौतोश्च कण्ठ्यौष्ठ्ययोरुभयान्तरतमस्य ह्रस्वस्याभावात् कण्ठस्थानतया पूर्वभागसादृश्येन चतुर्णां स्थानेऽकारस्य, तालुस्थानतया उत्तरभागसादृश्येन च एदैतोः स्थाने इकारस्य, ओष्ठस्थानतया च ओदौतोः स्थाने उकारस्यच, प्राप्त्या अकारस्यापि पाक्षिकप्राप्तिप्रसङ्गात् तन्निवृत्त्यर्थमेव । अत एव सन्धीयमानवर्णद्वयसदृशावयवत्वेन सन्ध्यक्षरेति एचाम् पूर्वाचार्यसंज्ञा । तदभिप्रायेणैव—

अकारेकारयोर्योगादेकारो वर्ण उच्यते ।

इति मन्त्रशास्त्रे व्यवहारः । एचां शुद्धतालव्यशुद्धौष्ठ्यत्वमाश्रित्य तत्सूत्रं प्रत्याख्यास्यत इति त्वन्यदेतत् । अतस्तपरत्वं किमर्थम् इतिचेत् । मैवम् । तथाऽपि गङ्गोदकम्, रमेशः, खट्वैलका, खट्वौदनः, इत्यादौ पूर्वोत्तरवर्णयोर्मिलित्वा त्रिमात्रचतुर्मात्रत्वात् प्रमाणत आन्तरतम्येन तादृशानामेवादेशानां प्रसङ्गात् । न च चतुर्मात्रमप्रसिद्धम् । छान्दोग्ये प्रसिद्धेः । "इष्यते एव चतुर्मात्रः प्लुतः" इतिभाष्याच्च । तपरत्वे तु "तपरस्तत्कालस्य" इति एज्भिस्त्रिमात्रादीनामग्रहणे तेषां गुणादिसंज्ञाविरहेण दोषाभावात् । "प्लुतश्च विषये स्मृतः" इति तु प्लुताप्लुतप्रसङ्गे एव प्रवर्ततइति सिद्धान्तः ।

न च "अकः सवर्णे दीर्घः" इत्यत्र दीर्घ इतियोगं विभज्य "एकः पूर्वपरयोः" इत्यधिकारे यो विहितः स दीर्घो भवतीति व्याख्यानान्न दोष इति वाच्यम् । "अमि पूर्वः" "सम्प्रसारणाच्च" इति पूर्वरूपस्य "अतो गुणे" इति पररूपस्य च दीर्घत्वप्रसङ्गात् ।

अथ "प्रथमयोः" इतिसूत्रात् पूर्वसवर्णदीर्घस्याधिकाराच्च पूर्वपरयोरित्यस्योपस्थितया अमीत्येव निर्वाहे पूर्वग्रहणं यादृशः पूर्वः तथैव न तु तद्विलक्षण इति व्याख्यानात् गौरीमित्यादौ दीर्घः, पशुमित्यादौ च ह्रस्वः । "सम्प्रसारणाच्च" इत्यत्रापि तस्यैव पूर्वशब्दस्यानुवृत्तेः "हल" इति हलुत्तरसम्प्रसारणस्य दीर्घत्वविधानात् ज्ञापकाच्च विद्धमित्यत्र न दीर्घः । "अतो गुणे" इत्यत्रापि परग्रहणादेव सिद्धेः रूपग्रहणसामर्थ्यात् परसजातीय एवादेशः ।

वस्तुतस्तु अकारपरत्वे सवर्णदीर्घेण एङ्परत्वे च वृद्ध्यैव दीर्घसिद्धौ "अतो गुणे" इतिसूत्रमेव व्यर्थं स्यात् । न च वृद्धिं विनाऽप्यकारस्य एङ्रूपविधानेन दीर्घविधिनिर्वाहाद् वृद्धिप्रतिषेधार्थमेव तदिति वाच्यम् । तथाऽप्यकारपरत्वे फलाभावेन "अत एङि" इत्येव सूत्रापत्तेः । एवं सत्येकमात्रालाघवाच्च । अतश्च ह्रस्वाकारपरे पररूपविधानसामर्थ्यादेव पचन्तीत्यत्र न दोषः । अतो योगविभागो निर्दोष एवेति कल्प्यते । तथाऽपि कृष्णर्द्धिः तवल्कारः इत्यादौ गुणो न स्यात् । अकारस्य दीर्घविधानात् एङश्चान्तरतम्याभावादेव निवृत्तेः । गुणविधानस्य इकारोकारयोः परतः सावकाशत्वात् । "उरण् रपरः" इत्यस्य च वृद्धिविषये चारितार्थ्यात् । एवं च विगृहीतस्यैव श्रवणं स्यात् ।

ननु "ऋत्यकः" इति प्रकृतिभावविधानसामर्थ्यान्न तथा। न च यणादिनिवृत्त्यर्थतया तत्सार्थक्यम् । इक इत्येव निर्वाहे अक इत्यकारसङ्ग्रहस्य वैयर्थ्यापत्तेः। सत्यम् । तथाऽप्यकारस्यांशतः स्थानसाम्यमादाय एदोतोरेव प्रसङ्गात्। "कर्त्तरि चर्षिदेवतयोः" इत्यादिनिर्देशानुसरणे च गौरवात् । तस्माद्योगविभागो दुष्ट एवेति त्रिमात्रादिवारणार्थं तपरत्वमावश्यकमिति प्राप्ते—

उच्यते गुणवृद्धिसंज्ञयोरेचां तात्परत्वेन दीर्घाणामेव तत्र संज्ञित्वान्न दोषः । प्लुतस्य गुणवृद्धिसञ्ज्ञाविरहात् । "सहिवहोरोदवर्णस्य" इति वर्णग्रहणेन तात्परस्यापि तत्कालग्राहकत्वज्ञापनात् ।

न चैङैच्छब्दयोस्तात्परतया दीर्घमात्रोपस्थापकत्वेऽपि तदुपस्थितानां दीर्घाणामनुच्चारितत्वेन तपरत्वाभावात् सवर्णोपस्थापकत्वं स्यादेवेति वाच्यम् । तात्परत्वस्य संज्ञायामनुपयुज्यमानत्वेन सामर्थ्यात्तदुपस्थाप्यसञ्ज्ञिषु तत्कालावधारणार्थत्वात् । न च आकारस्य सवर्णग्राहकत्वाभावेन तत्रत्यतकारस्य ऐचा तत्कालग्राहकत्वसामर्थ्येऽपि गुणसञ्ज्ञायां न तथा, अकारस्य ग्राहकतानिषेधार्थमेव तत्र तदुपयोगेन वैयर्थ्याभावादिति वाच्यम् । "अणुदित् सवर्णस्य" इति सूत्रे "स्वं रूपम्" इतिसूत्राद् अशब्दसञ्ज्ञेत्यनुवृत्त्या सञ्ज्ञाविधौ अण् सवर्णान्न गृह्णातीति व्याख्यानादेव उभयत्र निर्वाहात्। तपरत्वस्य सञ्ज्ञिस्वरूपस्फुटतरप्रतिपत्तिमात्रार्थत्वात् । ऐङ् गुण इत्युक्ते ऐकारोत्तरङकाराभावादवर्णप्रश्लेषनिर्णयेऽपि ह्रस्वदीर्घसन्देहः, ऐजित्यत्र त्वाकारप्रश्लेषाभावसन्देहश्च स्यात्। मालाप्रस्थ इत्यत्र "मालादीनां च" इति पुनराद्युदात्तविधानगम्यायाः "प्रस्थेऽवृद्धमकर्क्यादीनाम्" इत्यत्र भेदप्रतियोगितावच्छे-

दकवृद्धत्वघटकवृद्धिसञ्ज्ञाया आकारेऽनुपपत्तिबलादाकार-प्रश्लेषनिर्णयकल्पने च गौरवात्।

वस्तुतस्तु "एङ्द् गुणः" इति पाठेनाप्यकारमात्रस्य तत्कालग्राहकत्वसम्भवाद् "अदेङ् गुण" इति मध्ये तकारनिर्देशस्य सामर्थ्यमक्षतमेव। न चैकमात्राधिक्यम्। गुण एङ्द् इति पाठसम्भवात्। "वृद्धिरादैच्" इत्यादाविव सञ्ज्ञासञ्ज्ञिनिर्णयस्य व्याख्यानत उपपत्तेः। ऊकालसूत्रे अच्पदोपस्थितस्य ह्रस्वस्य वर्णग्राहकत्वेऽकारस्य सञ्ज्ञात्रयं स्यात्। अतः शब्दसञ्ज्ञायामण् सवर्णग्राहको नेतिपक्षस्य भाष्ये उक्तत्वेऽपि तस्याभ्युच्चयमात्रत्वात्।

ननु तात्परस्यापि तत्कालग्राहकत्वे "ऋदोः" इत्यप्प्रत्ययो यवः, स्तवः, इत्यादावेव स्यान्न तु लवः, पवः, इत्यादावपि इतिचेत्। अत्र भाष्यम्—

नायं तकारः किं त्वसन्देहार्थः मुखसुखार्थो वा दकार इति।

अथ "दिव उद्" इत्युकारादेशस्य द्युभ्यां द्युभिरित्यादौ "तित्स्वरितम्" इति स्वरितत्ववारणाय चर्त्वेन दकार एवायं न तु तकार इति व्यवस्थाप्य "अदसोऽसेर्दादु दो मः" इत्यत्रेव भाव्यमानस्याप्युकारस्य सवर्णग्राहकत्वं स्यादित्याशङ्क्य संहितया पाठे तपरसूत्रे चर्त्वेन दकारस्यापि निर्देशाद्दकारोऽपि तत्कालग्राहक इति समाहितं षाष्ठभाष्ये, तत्कथमत्र "ऋदोरप्" इत्यत्र दकारनिर्देशात् तत्कालग्राहकत्वं नास्तीत्युच्यतइति चेत्। अत्राहुः। थकारस्य धकारस्य वा स्थाने जश्त्वेन निष्पन्नो दकारोऽत्र विवक्षितः। स्वाभाविकदकारस्तु तत्कालग्राहकत्वेन तत्रोपन्यस्त इति न विरोधः।

केचित्तु "तिति प्रत्ययग्रहणं कर्त्तव्यम्" इति वदता भा-

र्तिककारेण दकारस्य तत्कालग्राहकत्वानङ्गीकारात् तन्मते-नात्रत्यं भाष्यमित्याहुः ।

अन्ये तु "प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्" इति परिभाषयैव द्युभिरित्यादाविष्टसिद्ध्या न कोऽपि क्लेशो ऽनुसरणीयः ।

यत्तु तस्यास्तु परिभाषाया भाष्यवार्त्तिकयोरिहादर्शनाद् अयं यत्नो महानस्माभिराद्दत इति हरदत्तेनोक्तम् । तच्चिन्त्यम् । "अङ्गस्य" इतिसूत्रं प्रत्याख्यातुं भाष्ये कण्ठत एवैतत्परिभाषोपन्यासात् ।

न च तत्र श्रचर्थं भ्वर्थम् इत्यादौ इयङुवङादीनां प्रत्ययग्रहणार्थवद्ग्रहणपरिभाषाभ्यां वारणेऽपि निरुतं दुरुतमित्यादौ हल उत्तरस्य संप्रसारणस्य दीर्घप्रसक्तेस्ताभ्यां दुर्वारत्वात् तद्वारणायाङ्गाधिकारस्यावश्यकत्वात् प्रत्ययग्रहणपरिभाषावैयर्थ्यमेव भाष्यसम्मतम्, अत एव "तित्स्वरितम्" इति सूत्रे प्रत्ययग्रहणपरिभाषा भाष्यवार्तिककाराभ्यां न क्व चिदाश्रितेति कैयटेनाप्युक्तमिति हरदत्ताभिप्रायमिति वाच्यम् । तथाऽपि "दिव उत्" इत्यादौ स्वरितत्वप्रसक्तेरेवाभावात्। यथोक्तकुसृष्टिमात्रस्यानुपादेयत्वात् । उदित्यस्य विधेयोकारानुकरणतयाऽस्य तित्त्वेऽपि विधेयस्योकारस्य तदभावात् । संज्ञायास्तान्तत्वेऽपि तित्त्वाभावाच्च । "तपरस्तत्कालस्य" इति सूत्रापेक्षिततपरत्वस्येत्सञ्ज्ञां विनाऽपि निष्पत्तेस्तकारस्येत्संज्ञायामेव मानाभावात् ।

न च यथा "अचो यत्" इत्यत्र संज्ञाधर्मेण तित्त्वेन विधेयस्य यप्रत्ययस्य तित्कार्यम्, तथा संज्ञाद्वारा अत्रापि संज्ञिनस्तित्कार्यं स्यादिति कैयटोक्तं युक्तमिति वाच्यम् । तत्र तकारस्यानन्यार्थ-

त्वात् । अत्र च विधीयमानस्याप्युकारस्य ग्राहकत्वदर्शनेन तन्निवृत्त्यर्थत्वेन सामर्थ्याभावात् । न चानुबन्धानामनेकार्थत्वदर्शनात् तदपि स्यादिति वाच्यम् । इष्टस्थले तथात्वेऽप्यत्रोभयार्थत्वं स्वीकृत्य तन्निवृत्त्यर्थकष्टकल्पनाऽयोगात् । तस्मात्तत्रत्यं भाष्यादिकमभ्युपेत्यवाद एव । अत्रत्यभाष्यं तु यथाश्रुतमेव साधु । दकारस्य तत्कालग्राहकत्वकल्पने प्रयोजनाभावादिति वदन्ति ।

अत्रेदं चिन्त्यम् । यद्युच्चार्यमाणात्तकारान्तादन्य एव तपरत्वाभाववान् संज्ञी विधेयः, तर्हि कथं "त्यदादीनामः" इत्यादौ अप्रत्यय इति पर्युदासप्रवृत्तिः । अस्य विधेयत्वाभावेन विधेयभेदसत्त्वात्सवर्णग्राहकत्वापत्तेः ।

अथ सामर्थ्याद्विधेयसमर्पकस्यैव तत्र भेदप्रतियोगिकत्वेनान्वय इति कल्प्यते, तर्हि यस्य सवर्णग्राहकत्वं प्रसक्तं तस्यैव तपरत्वे सति ग्राहकत्वाभावस्य तपरसूत्रार्थत्वात् किमायातम् । विधेयस्य तपरत्वाभावेन विधेयसमर्पकनिष्ठतित्त्वेनैव स्वरितस्यापत्तेः ।

न च अनुबन्धस्यानन्यार्थतायामेव तत्प्रयुक्तकार्यस्य विधेये प्रवृत्तिरिति वाच्यम् । "दिव उद्" इत्यत्रापि तुल्यत्वात् । वर्णसंज्ञापक्षे द्युभ्यामित्यादौ "हलः" इत्यनेन द्युलोक इत्यादौ "सम्प्रसारणस्य च" इत्यनेन प्राप्तस्य दीर्घस्य व्यावृत्त्या तपरत्वस्य चरितार्थतया भाष्यादौ स्पष्टत्वाच्च । "अदसोऽसेः" इत्यत्र ह्रस्वदीर्घयोरुकारयोः समाहारद्वन्द्वं कृत्वा उ इत्युभयोर्निर्देशसंभवेन भाव्यमानस्याप्युकारस्य सवर्णग्राहकत्वमिति ज्ञापनस्याप्यनावश्यकत्वात् । एतेन सामर्थ्याभावात् संज्ञागततित्त्वस्य न संज्ञिनि कार्यप्रवर्तकत्वमित्यपास्तम् । अनुपपत्तिमूलकत्वाभावेन

सामर्थ्योपक्षयेऽपि क्षतिविरहात् । सामर्थ्यस्याप्युक्तरीत्या रक्षणाच्च ।

न च तस्य स्वरार्थकत्वे किमर्थं प्रकारान्तरेण तन्निषेधः क्रियतइति वाच्यम्। असत्युक्तप्रकारेण तन्निषेधे तित्त्वस्य स्वरार्थत्वं विज्ञायेतेति तत्तात्पर्यस्यैवोक्तरीत्या विघटितत्वात्। अन्यथा स्वरितस्य दुर्वारत्वात् । एवं च दपरत्वमाश्रित्य स्वरितापत्तौ समाहितायां दित्त्वस्य तत्कालग्राहकत्वे च प्रयोजनाभावे सिद्धे प्रकृतभाष्यं यथाश्रुतमेव रम्यम् ।

किं तु अन्यार्थत्वेऽपि तत्प्रयुक्तस्वरस्य दुर्वारतया तदर्थस्य प्रकारान्तरेण समाधानाय प्रवृत्ते षाष्ठभाष्ये अत्रत्यभाष्ये च विरोधपरिहारोऽन्यस्थानीयदकारनिर्देशाभिप्रायेणैव परिहार्य इति चोक्तक्लेशवैयर्थ्यम् ।

अथैवम् "औत्" "इटोऽत्" इत्यादावपि स्वरितापत्तिः। न चेष्टापत्तिः। "स्तीर्णे बर्हिषि समिधाने अग्नौ" इत्यादावदर्शनात् । लविषीयेत्यत्रान्तोदात्तत्वस्य "आद्युदात्तश्च" इति सूत्रे भाष्यएवोक्तत्वाच्च इतिचेत् । मैवम् । "न विभक्तौ तुस्माः" इति तत्र इत्संज्ञानिषेधाद् इति दिक् ।

स्यादेतत् । वर्णग्रहणेषु तद्वर्णान्तर्गता वर्णान्तरसदृशभागाः कार्यं प्रवर्तयन्ति न वा । नाद्यः । अग्ने इन्द्र, वायो उदकमित्यत्र सवर्णदीर्घस्य, अग्ने एहीत्यत्र "एङः पदान्ताद्" इति पूर्वरूपस्य, आलूयेत्यत्र "ह्रस्वस्य पिति कृति" इति तुगागमस्य, मालाभिरित्यत्र "अतो भिस ऐस्" इत्यस्य च प्रवृत्त्यापत्तेः । एचामुत्तरभागस्य इउवर्णसादृश्यात् । आकारादीनां चोत्तरभागस्य ह्रस्वतद्वर्णसाम्यात् । नान्त्यः । ऋधेर्ऋकारान्तर्गतरेफसदृशभागस्य स्वातन्त्र्येणानुपादाने "तस्मान्नुड् द्विहलः" इति नुडा-

गमानुपपत्तेः। "कृपो रो लः" इत्यस्यानुपपत्तेश्च। ऋकारान्तर्गतरेफातिरिक्तरेफस्य तत्राभावात्। गृणातीत्यादौ रेफनिमित्तकणत्वानुपपत्तेश्च इतिचेत्। मैवम्। पक्षद्वयस्यादोषत्वात्।

तत्र नेत्येकः पक्षः।नृसिंहवद् वर्णान्तरत्वेन तत्र तद्वर्णप्रयुक्तकार्यप्रवृत्तौ मानाभावात्। "गोञ्च" इत्यत्र "नौञ्च" इत्यत्र च गोनौशब्दयोः पृथगुपादानसामर्थ्याच्च। अन्यथा पूर्वोत्तरभागावादाय द्वयोरपि ञ्चत्त्वेन तद्वैयर्थ्यापत्तेः। नुड्विधिलादेशविनामेषु तु प्रतिविधेयम्। "नतिर्दन्त्यमूर्द्धन्यभाव" इति प्रातिशाख्योक्त्या दन्त्यस्थाने मूर्द्धन्यादेशस्य नतिसंज्ञत्वाद् विनामपदं प्रकृते नस्य णत्वपरम्। नुड्विधौ तावत् द्विहल इति विहाय "तस्मान्नुड्" इत्येव सूत्रं कार्यम्। दीर्घादभ्यासात्परस्य नुट् स्यादिति तदर्थः। न च आट आटतुः इत्यादावतिप्रसङ्गः। "अश्नोतेश्च" इत्यस्य यथान्यासे विध्यर्थस्यात्र नियमार्थत्वात्। अकारोपधानां मध्ये अश्नोतेरेव नुडागम इति नियमार्थः। तन्मात्रानिषेधस्य नाश्न इत्यतोऽपि सिद्धेः। "कृपो रो लः" इत्यत्रापि कृप उः रः लः इतिच्छेदः। कृप इत्यविभक्तिको निर्देशः। उच्चारणार्थश्चाकारः। कृपेर्यो रेफस्तस्य लः कृपेर्ऋकारस्यावयवो यो रेफो रेफसदृश इति यावत् तस्य च लादेश इति तेन चलीक्लृप्यतइत्यादौ "रीगृत्वतः" इति रीगागमस्य रेफस्यापि लत्वसिद्धिः। अत एव "कृपे रो लः" इति पाठो भाष्यविरोधादुपेक्ष्यः।

वस्तुतः संबन्धसामान्ये षष्ठीमाश्रित्य कृपेः साक्षादवयवस्य परम्परावयवस्य च रेफस्योपादानात्तत्रापि न दोषः। भाष्यस्य समाधानोपलक्षणमात्रत्वात्। स्वतन्त्रास्वतन्त्रवृत्तिजातिर्नेति स्वयं वक्ष्यमाणत्वाद्रेफस्य विधीयमानं लत्वं लृका-

रैकदेशस्य कथं स्यादिति वस्तुत इति चिन्त्यम् ।

यत्तु "रो लः" इत्यत्र अनुवाद्ये विधेये च स्वतन्त्रास्वतन्त्रवर्णसाधारणजातिर्ग्राह्या, तेन ऋकारस्य ऌकारादेश एवात्र विधेयः, एकदेशस्य पृथक्कर्तुमशक्यत्वात् । तन्न । तादृशैकजातौ प्रमाणाभावात् । "ऌटि च क्लृपः" इत्यादिनिर्देशश्च इह लिङ्गम् । गृणातीत्यादौ णत्वसिद्ध्यर्थं च "छन्दस्यृदवग्रहाद्" इत्यत्र ऋदितियोगं विभज्य ऋतः परस्य नस्य णत्वं विधीयते । ततः "छन्दस्यवग्रहाद्" इति सूत्रान्तरम् । ऋत इत्यनुवृत्त्या "पितृयाणं द्युमद्" इत्यत्र पदपाठे णत्वम् । न चैवं तपरत्वान्मातॄणामित्यादौ णत्वं न स्यादिति वाच्यम् । "रषाभ्याम्" इत्यत्रापि रेफतत्सदृशभागयोः साधारण्येन ग्रहात्तत एव सिद्धेः । न च तत्र रेफसदृशभागोपादाने प्रमाणाभावः । "क्षुभ्नादिषु" तृप्नोतिशब्दस्य नृनमनशब्दस्य च पाठस्यैव तथात्वात् । न च नृनमनस्यापत्यं नार्नमनिरित्यत्र स्वतन्त्ररेफप्रयुक्तणत्ववारकतया सार्थक्यात्कथं नृनमनशब्दपाठस्य ज्ञापकत्वमिति वाच्यम् । "असिद्धं बहिरङ्गमन्तरङ्गे" इत्यत एव सिद्धेः । एवं च योगविभागपक्षस्य पश्चादुपन्यासेऽपि न तत्र भाष्यतात्पर्यम् । किं त्वत्रैव लाघवादित्यवधेयम् ।

न च ऋकारे रेफोत्तरवर्त्तिनाऽज्भागेन व्यवधानात् कथं "रषाभ्याम्" इत्यस्य प्रवृत्तिरिति वाच्यम् । "व्यवायेऽपि" इति योगविभागात् । न च कृतेनेत्यादावतिप्रसङ्गः । "अट्कुप्वाङ्नुंभिः" इति नियमात् । आक्षरसमाम्नायिकैः तत्संगृहीतैर्वा व्यवधाने यदि भवति तदा एतैरेवेति तस्यार्थः ।

वस्तुतस्त्वस्मिन्पक्षे उक्तज्ञापकात् प्रशास्तॄणामित्यादिनिर्देशाच्च ऋकारात्परस्य णत्वमेव लाघवात् ज्ञाप्यम् । योगविभा-

गस्य वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते इतिपक्षं प्रक्रम्यैव भाष्ये लिखितत्वात् ।

ननु तत्पक्षे पूर्वोक्तदोषाः कथं परिहार्या इति चेत्, उच्यते—एचां भागद्वयस्य विवृततरत्वेन अग्ने इन्द्र इत्यादौ सवर्णदीर्घाभावः । स्वतन्त्रयोरिदुतोर्विवृतत्वेन प्रयत्नभेदात् सावर्ण्याभावात् । अत एवाग्ने एहीत्यत्र न पूर्वरूपापत्तिः । "एङः पदान्तादति" इत्यकारेण सावर्ण्याभावादेचः पूर्ववर्त्यकारभागानुपस्थापनात् । "दीर्घात् पदान्ताद्वा" इति एकयोगेनैव सिद्धौ दीर्घात् पृथक् तुगागमं विधाय "पदान्ताद्वा" इति विकल्पविधानेन दीर्घे ह्रस्वाश्रयो विधिर्न भवतीति ज्ञाप्यते । दीर्घस्यापदान्ते नित्यं पदान्ते च विकल्पेन तुक् इतिव्यवस्थार्थं हि तत्र पृथक् सूत्रम् । यदि तु "छे च" इति ह्रस्वस्य विधीयमानस्तुग्दीर्घेऽपि प्रवर्तेत, तदाऽपदान्ते दीर्घेऽपि तेनैव सिद्धत्वात् पदान्ते दीर्घस्य विकल्पमात्रं विदध्यात् । अत एवाप्लूय प्रमायेत्यत्र "ह्रस्वस्य पिति कृति" इति तुगभावः । खट्वाभिः मालाभिरित्यादौ ऐसादेशोऽपि न भवति । तपरत्वसामर्थ्यात् । अन्यथा अस्येत्येव ब्रूयात् । याता वातेत्यादौ अतो लोपोऽपि न भवति । "गापोष्टक्" इत्यत्र किच्चेन दीर्घाकारे अतो लोपो न प्रवर्त्ततइति ज्ञापनात् । अन्यथा ह्याकारोत्तरभागवर्त्तिनोऽकारस्य लोपे पूर्वभागवर्त्तिनश्च प्रत्ययाकारेण सह पररूपे सामगः सुराप इति सिद्धौ "आतो लोप इटि च" इत्यालोपप्रवृत्त्यर्थं किच्चं व्यर्थं स्यादिति दिक् ।

ननु सय्यँन्ता सव्ँवत्सरः सल्ँलोक इत्यादौ एकवर्णात्मकस्यापि यकारद्वयादेरणुपदिष्टैरनेकवर्णात्मकैः सावर्ण्येन ग्रहणादस्तु हल्संज्ञा, कुक्कुटः पिप्पली पित्तमित्यादिस्थानां तु क-

र्थम्, क्क् प्प् त्त् इत्यस्याखण्डतया एकवर्णत्वात् । अन्यथा व्यञ्जनस्यार्द्धमात्रतया क्क् इत्यादेः मात्राकालत्वानुपपत्तेः । ततश्च तस्य तदवयवयोश्च प्रत्याहारमध्ये पाठाभावात् पठितैश्चागृहीतत्वात् हल्संज्ञाविरहात्संयोगसंज्ञकत्वाभावे "संयोगे गुरु" इत्यस्याप्रवृत्त्या तत्पूर्वस्योकारादेर्गुरुत्वाभावे "गुरोरनृतः" इति प्लुतो न स्याद् इतिचेत् । अत्राहुः—द्वावेवात्र ककारौ पकारौ तकारौ च मात्राकालौ, तुल्यव्यापारोच्चार्यतया द्रागेवोच्चारणात्तु द्वयोरैक्यभ्रम इति शिष्टसंप्रदाय इति परमार्थतो वर्णानां निरवयवतया प्रक्रियादशायामेवायं विचार इति ॥

# हयवरट् ५ ।

अत्र हकारोपदेशोऽटि अशि हशि इणि च ग्रहणार्थः । तेन महान् हि इत्यत्र "दीर्घादटि समानपादे" इति हकाररूपमटमाश्रित्य नस्य रुत्वम्, "आतोऽटि नित्यम्" इत्यनुनासिकश्च, "भोभगो" इत्यादिना रुस्थानीययकारस्य "हलि सर्वेषाम्" इति लोपश्च । तत्राप्यशीत्यनुवृत्तेः । ब्राह्मणो हसतीत्यत्र "हशि च" इत्युत्वम् । लिलिहिढ्वे लिलिहिध्वे इत्यत्र "विभाषेटः" इति ढत्वविकल्पः । "इणः षीध्वम्" इतिसूत्रादिण इत्यस्यानुवृत्त्या इणः परो य इट् ततः परस्य विभाषा मूर्द्धन्यादेशस्य तेन विधानात् ।

अन्त्यसूत्रे तदुपदेशस्तु वल्रल्झल्शल्प्रत्याहारेषु ग्रहणार्थः । तेन रुदिहि स्वपिहीत्यत्र "रुदादिभ्यः सार्वधातुके" इति वलादिसार्वधातुकलक्षण इट् । स्निहित्वा स्नेहित्वा सिस्निहिषति सिस्नेहिषतीत्यत्र "रलो व्युपधाद्धलादेः संश्च" इति इकारोकारान्यतरोपधात् रलन्तात्

परौ क्त्वासन्प्रत्ययौ वा कितौ स्तः इति कित्त्वविकल्पः । अदाग्धाम् अदाग्धम् इत्यत्र "दादेर्धातोर्घः" इति घत्वस्यासिद्धतया हकाररूपात् झलः परस्य सिचः सकारस्य "झलो झलि" इति लोपः। अरुक्षत् अलिक्षदित्यत्र "शल इगुपधादनिटः क्सः" इति शलन्तत्वप्रयुक्तः सिचः क्सादेशः । तस्मादुभयत्र निर्देशः प्रत्येकं प्रत्याहारचतुष्टये ग्रहणार्थ इति दीक्षिताः ।

नव्यास्तु प्रथमोपदेशस्य अम्प्रत्याहारे ग्रहणमपि प्रयोजनमस्ति । प्रयोजनचतुष्टयनियमस्य भाष्येऽनुक्तत्वात् । ककारहकाररूपव्यञ्जनानुकरणे पुंसः कूहौ इति समासे " पुमः खय्यम्परे" इति रुत्वं प्रयोजनम् ।

यत्तु कारप्रत्ययस्यावश्यकतया नैतयोरानन्तर्यं सम्भवतीति । तन्न । "बहुलमेव तद्विधानम्" इति कौस्तुभादावुक्तत्वात् । एतेन " स्कोः संयोगाद्योः " इत्यादौ छान्दस एव तदभावः । "उच्चैस्तरां वा वषट्कारः" इत्यादौ पदादपि कारप्रत्ययोत्पत्तिवदिति निरस्तम् । छान्दसत्वापेक्षया वैकल्पिकप्रवृत्तिरूपबाहुलकस्यैव युक्तत्वात् । सवर्णसंज्ञासूत्रे चशयोः कङ्योः शषसविसर्जनीयेत्यादिकौस्तुभप्रयोगाणां तत्तत्सूत्रव्याख्याने प्राचीनार्वाचीनानेकप्रयोगाणा कः खो गो घश्च लक्ष्मीं वितरतीत्यादिभामत्यादिप्रयोगाणां च छान्दसत्वेन साधयितुमशक्यत्वाच्च । केवलव्यञ्जनोत्तरमभियुक्तानां कारप्रयोगस्य कुत्राप्यदर्शनाच्च ।

यदपि "झलां जशोऽन्ते" इति जश्भावस्य दुर्वारत्वात् हकारस्य खय्परत्वं नास्ति । न च मुख्यपदान्तएव तत्प्रवृत्त्या व्यपदेशिवद्भावेन पदान्तेऽत्र न तत्प्रवृत्तिः, अन्यथा " स्कोः संयोगाद्योरन्ते च " इत्यत एवान्तपदानुवृत्तौ

पुनरन्तग्रहणवैयर्थ्यादिति वाच्यम् । झलीत्यादिनिवृत्त्या पदस्येत्यनुवृत्त्या चान्तग्रहणस्य चरितार्थत्वादिति । तदप्यसत् । स्थानिसमर्पकझल्शब्दस्य पृथगुपादानसामर्थ्यादेव झलि इत्यस्य निवृत्तिसिद्धेः। अन्यथा "झलो झलि" इत्यनन्तरं "जशन्ते" इत्येव सूत्रं स्यात् "स्कोः" इति सूत्रे पृथगन्तग्रहणसामर्थ्यादेव मध्यस्थसूत्रद्वये तदनुवृत्त्यभावोपपत्तेः ।

न चैवमपि तत्सूत्रद्वये लोपपदानुवृत्तिर्न स्यादिति वाच्यम् । जशः स्वरितत्वाभावादननुवृत्तौ विधेयतया लोपस्य लाभोपपत्तेः । न च झलः परस्य सस्य लोपविधायके "झलो झलि" इति सूत्रे झल इत्यस्य पञ्चम्यन्ततया "जशन्ते" इति सूत्रे षष्ठ्यन्तत्वं न स्यादिति वाच्यम् । शब्दाधिकाराश्रयणात् । न च सस्येत्यस्याप्यनुवृत्त्यापत्तिः । स हि झल इत्यस्यानुवृत्तस्य पञ्चम्यन्तत्वे षष्ठ्यन्तत्वे वा । नाद्यः । झलः परस्य सस्य जश् स्यादित्यर्थे झलीत्यस्यान्तइत्यस्य च नैरपेक्ष्येण निमित्तत्वे झलीत्यंशे "झलां जश् झशि" इत्यंशतः सिद्धेः । "खरि च" इत्यंशतो बाधाच्च। "झलो झलि" इति लोपविधानाविरोधाच्च। न च समुच्चयः । चकारादेरभावात् । भावाभावयोस्तद्विरोधाच्च । एतेन विकल्पोऽप्यपास्तः । क्लृप्तकल्प्ययोस्तदयोगान्निरनुयोगत्वाच्च । नान्त्यः । स्थान्याकाङ्क्षाविरहात् । न च झलीत्यभेदेन सकारे विशेषणम् । अव्यभिचारात् । नापि वैपरीत्येन विशेषणविशेष्यभावः । विशेष्यभागवैयर्थ्यात् ।

वस्तुतस्तु "इट ईटि" इत्यनन्तरं "झलो झलि" इति सूत्रं कृत्वा "जशन्ते" इति सूत्रं कर्त्तव्यम् । इत्थं च "ह्रस्वादङ्गात्" "इट ईटि" इति सूत्रद्वये सकारस्य लोपप्रतियोगिकत्वलाभो निर्बाधः।

सकारानुवृत्त्यादिकं पूर्ववत् । "स्कोः संयोगाद्योश्च" इति सूत्रं पाठ्यम् । " जशन्ते " इतिसूत्रादन्तग्रहणस्य चकाराच्च झली-त्यस्य लाभोपपत्तेः ।

यदि त्वेवमपि चकारेण जश्त्वसमुच्चयः स्यादिति दुराग्रहः, तर्हि "स्कोः" इति सूत्रं यथाश्रुतमेवास्तु । पुनरन्तग्रहणसामर्थ्याच्च जशन्त इति सूत्रनिर्दिष्टस्य कस्यापि नानुवृत्तिरिति । एवं सिद्धे सति "झलां जशोऽन्ते" इति सूत्रं व्यवधानेन कृत्वा झलाम् इत्यस्य पुनर्ग्रहणसामर्थ्यादेव झलीत्यस्य निवृत्तिसिद्धौ अन्तग्रहणस्य मुख्यान्तग्रहणार्थत्वस्यावश्यकत्वात् नात्र जश्त्वेन समाधानं साधीयः । अत एव चित्पित्किच्चिदित्यादिप्रयोगाः । आदैजित्यत्र तपरस्योत्तरार्थत्वे पदान्तत्वाभावाज्जश्भावानापत्तिशङ्का असन्देहार्थतया पूर्वशेषत्वात् समाधानं चेतिद्वयं कौस्तुभोक्तं च सङ्गच्छते ।

यदप्युक्तम् "ञमङणनम्" सूत्रे मकारानुबन्धप्रत्याख्यानाय झकारभकारौ पदान्तौ न स्त इति भाष्ये वक्ष्यते । उक्तरीत्या च पुमुक्झ् इत्याह पुमुक्भ् इत्याहेत्यादौ अञ्ङञ्प्रत्याहारयोःक्झ्भ् इति क्भ्झ् इति चानुकरणे यञ्प्रत्याहारस्याप्यतिप्रसङ्गः स्यादिति तद्भाष्यविरोधः ।

मन्मते तु जश्त्वेन नातिप्रसङ्गः । न च तस्यासिद्धत्वम् । त्रितयापेक्षयाऽपि पूर्वत्वात् ।

तस्मात्पदान्तगतझकारभकाराभावप्रतिपादकभाष्यबलादीदृशस्थले जश्त्वादिकमनभिधानं वाऽवश्यमाश्रयणीयम् । अन्यथा कुग्ह् इत्याहेत्यादौ संयोगादिलोपस्य प्रसक्त्या "सङि" इति वचनावश्यकत्वे "परेश्च घाङ्कयोः" इति सूत्रगततत्खण्डनपरभाष्यविरोधाच्चेति । तदप्यसत् । अतिप्रसङ्गस्थले तद्बलादनभिधा-

ऽपि प्रकृते बाधकाभावात् । न ह्यत्र संयोगादिलोपप्रसक्तिः । संयोगस्य झल्परत्वाभावात् । पदान्तत्वाभावाच्च । न चान्तर्वर्त्तिविभक्त्या प्रकृते ह् इत्यस्य पदान्तत्वम् । उत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणनिषेधात् । पुम् तुह् इत्याद्यनुकरणेऽमि प्रयोजनसम्भवाच्च ।

तत् शुह्नौ इत्यत्र "छत्वममि" इति प्रयोजनमस्तीति केचित् । तच्चिन्त्यम् । यथाश्रुते अट्प्रयोजनोक्त्यैव क्रोडीकृतत्वात् । तस्मादमि प्रयोजनं दुर्वारमिति दिक् ।

स्यादेतत् । रेफस्य यरन्तर्भावात् तत्कार्याणि प्रसज्यन्ते । तथा हि । मद्रह्रदः भद्रह्रद इत्यत्र "अचो रहाभ्याम्" इति अचः पराभ्यां रेफहकाराभ्यां परस्य यरो विधीयमानं द्वित्वं स्यात् । न च "रो रि" इति लोपान्निर्वाहः । तं प्रति द्वित्वस्यासिद्धत्वात् । "हलो यमां यमि" इतिलोपस्य तु वैकल्पिकतया पक्षे रेफद्वयश्रवणापत्तेः । कुण्डं रथेन वनं रथेनेत्यत्र "अनुस्वारस्य ययि परसवर्णः" स्यात् । न च रेफोष्मणां सवर्णाभावान्न दोषः । विजातीयतदभावेऽपि रेफस्यैवापत्तेः । प्रातर्नयतीत्यादौ "यरोऽनुनासिकेऽनुनासिको वा" इति स्थानसाम्येन पक्षे णकारः स्यात् ।

न च "हरयवट्" इति यकारवकाराभ्यां पूर्वं रेफो निर्देश्य इति वाच्यम् । देवित्वा दिदेविषतीत्यत्र "रलो व्युपधाद्" इति पक्षे कित्त्वप्रसङ्गात् । वकारस्याप्युक्तरीत्या रलन्तर्भावात् । न च तत्र अव्युपधाद् इतिच्छित्वा वकारद्वयं च प्रश्लिष्य अवकारान्ताद् इउवर्णोपधाद् इतिव्याख्यानाद्वकारान्ते न दोष इति वाच्यम् । तथाऽपि गौधेर इत्यादौ "गोधाया ढ्रक्" इति ढ्रक्प्रत्यये ढस्य एयित्यादेशे आदिवृद्धौ "यस्येति च" इत्याकारलोपे च "लोपो व्योर्वलि" इति यका-

रलोपानुपपत्तेः । पचेरन्नित्यत्र सीयुटि सलोपे पच ईय् रन् इत्यत्र तदसिद्धेश्च । रेफस्य वल्यनन्तर्भावात् ।

न च "रलि" इत्येव तत्र वक्तव्यमिति वाच्यम् । हय गतौ हय्यादित्यत्र यकारस्यापि लोपापत्तेः । न च यथान्यासएव र्वलि इति सरेफं पदं छित्त्वा रेफे वलि च परतो लोपविधानान्न दोष इति वाच्यम्। तथाऽपि यणूस्थले सर्वत्र रणिति न्यासापत्तेः। यथासंख्यपरिभाषया इकारोकारऋकाराणां स्थाने रेफयकार-वकारादेशापत्तेश्च। न च "स्थानेऽन्तरतम"परिभाषया निर्वाहः। परत्वाद्यथासंख्यस्यैवापत्तेरिति वदन्ति ।

वस्तुतस्तु "व्युपधात्" इत्यत्र इकारोकारयोः स्थाने यकारवकारयोः "अर्वणस्त्रसौ" इत्यत्र ऋकारस्थाने रेफादेशस्य च दर्शनादन्तरतमपरिभाषैवात्र प्रवर्त्तते ।

यद्वा "अऋइण्" "उलृक्" इति पूर्वत्रापि न्यासः कर्त्तव्यः । इक्स्थाने ऋक् इति इण्स्थाने च ऋण् इति प्रदेशेषु व्यवहर्तव्यम् । इण्ग्रहणानां सर्वेषां सिद्धान्तेऽपि द्वितीय-णकारेणैव वाच्यत्वात् । इच्प्रत्याहारस्थलेऽपि ऋच्पदमेव वक्तव्यम् । "इसुसुक्तान्तात्" इत्यत्रापि उक्स्थाने ऋक्पदमेव देयम् । न च इकारस्याधिकस्य संग्रहापत्तिः । इष्टापत्तेः । "यस्येति च" इकारलोपमिकादेशं च कृत्वा सिद्धान्ते यथारूपं तथैव कादेशेऽपि । "यस्येति च" इत्यस्याप्रवृत्तिमात्रं तु न दोषाय । "श्र्युक" इत्यत्रापि ऋक्पदोपादाने इकारस्याधिकस्य संग्रहेऽपि श्रिग्रहणस्य नियमार्थत्वात् ।

वस्तुत ऋक्प्रत्याहारे इकारस्य कुत्रापि ग्रहणं नेति ज्ञापनार्थ-त्वात् । तेन "उगिदचां सर्वनामस्थाने" "उगितश्च" इत्यादौ न दोषः। एवं च हस्तिनीनां समूहो हास्तिकमिति ठक्प्रत्यये इका-

देशाभावे भसंज्ञाविरहे "भस्याढे तद्धिते" इति पुंवद्भावो न स्याद् इतिदोषविरहोऽपि निर्बाधः। "अणुदित् सवर्णस्य" इत्यत्र तु न कोऽपि विशेषः । परेणैव तत्र प्रत्याहारात् । तदन्यत्र तु अणूप्रत्याहारस्य पूर्वेणैव ग्राह्यत्वात् उकारस्य तद्बहिर्भाव ऋकारस्य तदन्तर्भावश्च स्यादिति दोषः । परं तु व्य इति तत्स्थले सर्वत्र निर्देश्यम् । उ इ अ इत्येषां तेन संग्रहात् । व्याख्यानवशाच्च वकारादीनां न ग्रहणम् । सिद्धान्तेऽपि पूर्वेण परेण वा णकारेण प्रत्याहार इति निर्णयार्थं व्याख्यानस्यैवादरणीयत्वात् । पूर्वत्र णकारानुबन्धश्च परित्याज्यः । न चैवं व्याख्यानतो विशेषप्रतिपत्तिरिति परिभाषायां लिङ्गाभावः । लिङ्गान्तरस्य संभवात् ।

वस्तुतस्तु "अऋइउण्" "ऌक्" इति न्यासः कार्यः । अत उकारस्य न बहिर्भावः । परिशिष्यते तु ऋकारस्याधिकस्यान्तर्भावापत्तिः । साऽप्येवं परिहार्या । तृतीयेतिनिर्देशेन अणूग्रहणेषु ऋकारो न गृह्यते इति ज्ञाप्यते। तथा हि । "हलः" इतिसूत्रे अण इत्यस्य नानुवृत्तिरिति लण्=सूत्रे स्थापयिष्यते । तथाऽपि तत् सिद्धान्तदृष्ट्यैव । एतत्पक्षे तु तत्राप्यण इत्यनुवर्त्यमेव । "इकः काशे" इत्यत्रापि तदनुवृत्तौ इग्रूपस्याण इत्यभेदान्वयेन समाधानस्य भाष्यएव स्पष्टत्वात् । यदि च "ढ्रलोपे" इतिसूत्रे अणूग्रहणेन ऋकारोऽपि गृह्येत, तदा "हलः" इत्यत्रापि तथात्वप्रसक्त्या तृतीयेत्यत्र त्रेस्तीयप्रत्यये रेफस्य संप्रसारणे ऋकारे च कृते ऋकारस्यापि दीर्घापत्त्या तृतीयेति निर्देशोऽसंगत एव स्यात् । अत इष्टानुरोधात्पूर्वेणाणूग्रहणस्थले ऋकारस्तन्मध्ये न गृह्यते इतिज्ञापनेन सकलेष्टसिद्धेः ।

स्यादेतत् । ऋकारस्य यथान्यासपक्षे पूर्वेण अण्प्रत्याहारे गृह्यमाणे तद्बहिर्भूततया तद्व्यावृत्त्यर्थं तत्र पूर्वेणाण्ग्रहणं स्वीक्रियते । उक्तन्यासे तु पूर्वेणाण्ग्रहणेऽपि तद्बहिर्भावानुपपत्त्या उक्तातिप्रसङ्गस्य च तृतीयेति निर्देशेनैव वारणसम्भवात् तत्र अण्ग्रहणं पूर्वेणैवेत्यत्र मानाभावः । परेणाण्ग्रहणेऽपि ऋकारस्याणूबहिर्भाव इति स्वीकारे तु "अणुदित् सवर्णस्य" इत्यत्रापि तद्ग्रहणानुपपत्तिः इतिचेत् । सत्यम् । ऋऌवर्णयोर्मिथः सावर्ण्यारम्भसामर्थ्यात् तस्य ग्राहकत्वसिद्धेः । न च सवर्णदीर्घादिविधाने चारितार्थ्यमिति वाच्यम् । तथाऽपि "ऋदुपधाच्चाल्कृपिचृतेः" इत्यत्र भेदप्रतियोगित्वेन ल्कृपिनिवेशेन पर्युदासव्यतिरेके ऋदुपधत्वप्रयुक्तकार्यापत्तेरपेक्षितत्वात् । ऋकारस्य ऌकारग्राहकत्वाभावे च सामान्यशास्त्रस्य तद्विषयकत्वप्रसक्त्यभावे तद्व्यावृत्तितात्पर्यकस्य ल्कृपिपर्युदासस्य वैयर्थ्यापातात् ।

वस्तुतो हलां दीर्घत्वबाधाद् एचां च विशेषाभावात्तत्र परेणाण्ग्रहणवैयर्थ्यात् । तथा च यथासङ्ख्यपरिभाषयैव निर्वाह इति भगवतो भाष्यकारस्य भावः । वेलीति व्याख्यानेन च पचेरन् गौधेरादिसिद्ध्यनन्तरं दोषान्तरानुपन्यासेन तद्दोषपरिहारे तत्सम्मतिनिर्णयात् । अत एव "अथ वा पुनरस्तु परोपदेश" इति रेफापकर्षसमकक्षतयैव यथान्यासे दोषोद्धाराभिधानात् । तद्यथा ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविष्टामित्यत्र सामान्यतः प्राप्तं भोजनं विशेषशिष्टेन परिवेषणेनेव कार्यप्रतियोगियन्निष्ठपरत्वानिरूप्यपूर्वत्वरूपेण द्वित्वनिमित्तत्वश्रुत्या कार्यप्रतियोगित्वं बाध्यतइति मद्रह्रद इत्यादौ न द्वित्वम् । सामान्यस्य विशेषपर्यवसानपर्यन्तं साक्षाच्छ्रुतकार्या-

न्तरस्यैव प्रथमोपस्थित्या तद्विशेषेऽन्वयात् । तदेतदुक्तम्—

नेमौ रहौ कार्यिणौ द्विर्वचनस्य, किं तर्हि निमित्तमिति ।

हकारस्य यर्बहिर्भूतस्य यथा न द्वित्वं, तथा तदन्तर्भूतस्यापि रेफस्य । कार्योपधायकसामग्रीवैकल्यसाम्ये तदन्तर्भावमात्रस्याकिंचित्करत्वात् । तच्च दृष्टान्ते यत्वाभावात् दार्ष्टान्तिके चोद्देश्यतावच्छेदकघटकभेदप्रतियोगित्वात् । रेफभिन्नयत्वस्यैव न्यायवशाद्द्वित्वविधावुद्देश्यतावच्छेदकत्वात् । एवम् "अनाचि च" इत्यनेन हर्यनुभव इत्यादावपि रेफस्य न द्वित्वम् । अर्थाधिकारेण तत्रापि यर इत्यस्य रेफभिन्नपरत्वात् ।

अथैवम् "इको यणचि" इत्यादिकं दध्युदकमित्यादौ न प्रवर्त्तेत । विशेषतः श्रुतेन स्थानित्वेन इको निमित्तत्वबाधापत्तेः इतिचेत्, अत्र कैयटः—

तस्मादित्युत्तरस्य इत्यादिनिर्देशान्न तत्रोक्तन्यायप्रवृत्तिरिति ।

यत्तु कौस्तुभे व्यक्तिपक्षे प्रतिलक्ष्यमसकृल्लक्षणप्रवृत्तेः स एव तत्राश्रयणीयः । यद्वा प्रतिलक्ष्यं भिन्नानां सर्वेषां लक्षणानां तन्त्रेणोच्चारणम् "इको यणचि" इति । तथा च सर्वासामिकारव्यक्तीनां यण्विधानेऽर्थादिक्परत्वेऽपि यण्सिद्धिः । अन्यथा सर्वेषामिकाराणामिग्भिन्नाच्परत्वान्नियमाभावेन विध्यर्थानिष्पत्तेः । न चातिप्रसङ्गः, अपवादविधिपर्यालोचनया तद्व्यक्तावेतत्तात्पर्याकल्पनादिति । तच्चिन्त्यम् । व्यक्तिपक्षेऽपि निमित्तसमर्पकस्याच्पदस्य न्यायवशादिग्भिन्नपरत्वे सिद्धे इग्रूपाच्पूर्ववर्त्तिन्या इग्व्यक्तेरुद्देश्यत्वएव मानाभावाद् दध्युदकादौ तत्प्रवृत्तेर्दुर्घटत्वात् । श्रूयमाणवाक्ये उद्देश्यताविधेयतावच्छेदकत्वाभ्यां निश्चिता ये धर्माः तदवच्छिन्नव्यक्तिष्वेव न्यायसाम्येन तत्समानाकारकवाक्यान्तराणां प्रवृत्तेः । अन्यथा हल्प-

रत्वेऽपि यणादिप्रवृत्त्यापत्तेः । न च अच्पदोपादानसामर्थ्यम् इग्भिन्नमात्रसंग्राहकप्रकारान्तराभावात् । एचीत्युक्ते एकमात्राधिक्यादकारानुपग्रहाच्च इति दिक् ।

अत्र वार्त्तिकम्—

अयोगवाहानामट्सु णत्वम्, शर्षु जश्भावषत्वे, अविशेषेण संयोगोपधासंज्ञाऽलोऽन्त्यद्विर्वचनस्थानिवत्त्वप्रतिषेधा इति ।

प्रयोजनविशेषपुरस्कारेणैव येषां प्रत्याहारविशेषान्तर्भाव इष्टः तेषां प्रत्याहारान्तरेषु प्रवेशापत्त्या वर्णसमाम्नायेऽनुपदेशादनेन सप्रयोजनः प्रत्याहारविशेषान्तर्भावः प्रतिपाद्यते ।

अयोगाः स्वरूपतो द्वारतो वा प्रत्याहारानन्तर्भूताः वाहाः प्रयोगे श्रूयमाणाः ते च विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारयमा इति भाष्यम् ।

यद्यप्यत्र "ऋति ऋ वा" "ऌति ऌ वा" इति षष्ठे वक्ष्यमाणौ ईषत्स्पृष्टौ नोक्तौ । तथाऽपि तयोरच्त्वं वक्ष्यामीति तुल्यास्यसूत्रभाष्ये दर्शनात्तावप्यत्रोपलक्षणीयौ । एषामट्सु पाठः कार्यः । उरः कायति उरः पातीति कप्रत्ययः । उरःकेण उरःपेण इत्यत्र णत्वं यथा स्यात् । अन्यथा अट्त्वाभावेऽड्व्यवायेऽपीति न प्रवर्त्तेत ।

शर्षु चोपदेशः कार्यः । उब्ज आर्जवे इत्युपध्मानीयोपधस्य धातोरुपध्मानीयस्थाने "झलां जश् झशि" इति जश्त्वेनान्तरतम्याद् बकारादेशे उब्जितेत्यादि यथा स्यात् । शर्त्वसिद्धौ तन्नान्तरीयकतया झल्त्वस्यापि सिद्धेः । सर्पिःषु धनुःषु इत्यादौ "नुम्विसर्जनीयशर्व्यवायेऽपि" इति षत्वं च यथा स्यात् । न च तत्र विसर्जनीयस्य पृथगुपादानादेवेष्टसिद्धिः । तस्यैवोक्तरीत्या प्रत्याख्येयत्वात् ।

अविशेषेण प्रयोजनपञ्चकोपयुक्तप्रत्याहारपुरस्कारेण इत्यर्थः । तेन उ३ब्जकेत्यत्र उकारस्य प्लुतोपयुक्तगुरुसंज्ञाप्रयोजकसंयोगसंज्ञाप्रयोजकं हल्त्वम्, निष्कृतं दुष्कृतमित्यत्र "इदुदुपधस्य" इति षत्वोपयुक्तोपधासञ्ज्ञाया विशेष्यभूतवर्णनिष्ठाव्यवहितपूर्वत्वनिरूपकान्त्यत्वप्रतियोगितावच्छेदकत्वं, वृक्षस्तरतीत्यत्र विसर्जनीयान्तस्य पदस्य स इति पक्षे सर्वादेशत्ववारणाय अलोऽन्त्यसूत्रविहितान्तादेशस्थानितावच्छेदकम्, व्यूढोरस्केनेत्यत्र सकारस्य स्थानिवद्भावेनाड्व्यवाय इति णत्वप्राप्तौ "अनल्विधौ" इति पर्युदासघटकभेदप्रतियोगितावच्छेदकं चाल्त्वम्, उरःक उरःप इत्यादौ "अनचि च" इति द्वित्वप्रतियोगितावच्छेदकं यत्वं च विसर्गादीनां सिध्यतीति वार्त्तिकार्थः ।

अत्रायं विवेकः । जश्भावो न प्रयोजनम् । उब्जधातोरुपध्मानीयोपधत्वे प्रमाणाभावात् । उब्जिजिषतीत्यसिद्ध्यापत्तेश्च । तथा हि । बकारसहितस्यैव द्वित्वे "हलादिः शेषः" इति जकारनिवृत्तावभ्यासे बकारमात्रं श्रूयते । न च जश्त्वासिद्धतया बकारसहितस्य न द्वित्वमिति वाच्यम् । पूर्वत्रासिद्धीयमद्वित्वे इत्युक्तेः ।

अथ प्राणिणिषतीत्यत्र "उभौ साभ्यासस्य" इति नकारद्वयस्य णत्वविधानादुक्तपरिभाषाऽनित्या । अन्यथा णकारविशिष्टस्यैव द्वित्वे अभ्यासे स्वत एव णकारसिद्धौ तद्वैयर्थ्यात् । अत एव औजढदित्यत्राभ्यासे जकारसिद्धिरित्याश्रीयते । तथाऽपि नेष्टसिद्धिः । अभ्यासस्योपध्मानीयमात्रशेषतापत्तौ "अभ्यासे चर्च" इति जश्त्वेन बकारस्यैव श्रवणापत्तेः । उबिब्जिषतीति रूपसाम्येन दोषाविशेषादिति कैयटादयः ।

यत्तु "प्रकृतिचरां प्रकृतिचरः" इति सिद्धान्ताद् उपध्मानीयमा-

त्रस्याभ्यासे श्रवणापत्तिरिति स्थापितम् । तच्चिन्त्यम् । प्रतिनियतविषयपुरस्कारेण प्रत्याहारविशेषान्तर्भाववचनसामर्थ्येन चर्त्वासिद्धेः । न चैवं झल्संज्ञाऽपि न स्यादिति वाच्यम् । जश्त्वस्य प्रयोजनत्वोक्त्या तदेकवाक्यतापन्नसंज्ञाया अप्याक्षेपेण वैषम्यात् । न हि "झलाञ्जशः" इति जश्त्वमेव तत्रोपात्तमिति वक्तुं शक्यम् । बीजाभावादिति वृद्धाभिप्रायात् । तस्मादुब्जिजिषतीति रूपासिद्धिस्तदवस्थेति । एवमस्मादेव घञि "चजोः कु घिण्ण्यतोः" इति कुत्वेन जकारस्य गकारादेशे उपध्मानीयस्य जश्त्वेन बत्वे कृते अभ्युब्ग समुब्गः इति रूपापत्तौ "सोऽपदादौ" इत्यधिकारे "उपध्मानीयस्य च" इति वार्त्तिकान्तरेण कवर्गे परत उपध्मानीयस्य सकारादेशं तत्स्थाने जश्त्वेन दन्तस्थानसाम्याद्दकारादेशं कृत्वा अभ्युद्गः समुद्गः इति रूपं साधनीयमिति सत्वविधायकवचनान्तरारम्भेऽपि गौरवम् ।

यदि तु बकारोपधोऽयमिति वृत्तिमतमाश्रीयते तथाऽपि सनि बकारस्य द्वित्वनिषेधोऽभ्युद्ग इत्यत्र बस्य दत्वं च साधयितुं वचनद्वयानुमाने गौरवमेव स्यात् । तस्माद्दकारोपध एवायम् । अभ्युद्ग इत्यादेः स्वरसतः सिद्धेः । न चैवमुब्जितेत्यादि कथमिति वाच्यम् । "भुजन्युब्जौ" इति कुत्वाभावनिपातनार्थे सूत्रे बकारोच्चारणेन "भ उद्जेः" इति "ब उद्जेः" इति वा वचनस्यानुपानात् । अकुत्वविषये उद्जेर्दकारस्य भकारो बकारो वा स्यात् । "स्तोश्चुना श्चुः" इत्येतदुत्तरं तत्कल्पनाच्च तवर्गोपस्थितदकारस्य स्थानित्वलाभः । एवं च "न न्द्राः संयोगादयः" इति दकारस्य द्वित्वनिषेधाज्जिशब्दस्यैव द्वित्वे दकारस्य चोक्तवचनेन बत्वे कृते उब्जिजिषतीत्यपि सिद्धम् । न च द्वित्वात्पूर्वं परत्वाद्बत्वापत्तिः । "पूर्वत्रा-

"सिद्धे नास्ति विप्रतिषेधः" इति सिद्धान्तात् । नाप्यन्तरङ्गत्वात् । असिद्धत्वादेव । नापि "पूर्वत्रासिद्धीयमद्विर्वचने" इति तन्निषेधः । द्वित्वविधावेव तत्प्रवृत्तेः । अत्र च द्वित्वनिषेधेन वैषम्यात् ।

अत्रेदमवधेयम् । " न न्द्राः संयोगादयः " इत्यत्र "लोपो व्योर्वलि " इति लोपेन दकाराद्रेफाद्वा पूर्वं बकारोऽपि प्रश्लिष्यते । तेन वार्त्तिकमते वृत्तिमते च उब्जेर्बकारस्य द्वित्वनिषेधार्थं न वचनान्तरानुसारः । वार्त्तिकमतेऽपि पूर्वत्रासिद्धीयमद्विर्वचन इत्याश्रित्य बकारस्य द्वित्वनिषेधसिद्धेः । अतो भाष्यमते न लाघवावकाशः । अतिरिक्तैकवचनकल्पनं तु त्रयाणामपि समानम् । एतावान्परं विशेषः । वार्त्तिकमते उपध्मानीयस्य सकारादेशविधायकं वचनं कल्प्यम् । भाष्यमते दकारस्य बत्वविधायकम् । वृत्तिमते तु बकारस्य दकारविधायकमिति । यदि तु "भुजन्युब्जौ"इति निपातनादेव दस्य बादेशो न तूक्तवचनमनुमेयमिति भाष्यमते लाघवमिति कल्प्यते, तदा बकारस्यैव द्वित्वापत्तिः । असिद्धत्वाभावात् । दकारोपधनिर्देशसामर्थ्याज्जिशब्दस्य द्वित्वानन्तरमेव दकारस्य द्वित्वमिति कल्पनेऽपि अभ्युद्ग इत्यादावपि तदापत्तेः । अकुत्वविषये एव बत्वं निपात्यत इतिकल्पनेऽपि कुत्वविषये श्रवणार्थतया दकारोपदेशस्य चरितार्थत्वात् द्वित्वानन्तरमेव बत्वमिति न स्यात् ।

अथाविशेषेण बत्वनिपातमभ्युपेत्य उपसर्गान्तरपूर्वकात्केवलाद्वा उब्जेर्न घञादिः अनभिधानात् । अभ्युद्गः समुद्ग इति तूपसर्गद्वयपूर्वकाद्गमेर्डप्रत्यये रूपमिति कल्प्यते । ततो वार्त्तिकवृत्त्योर्मतेऽपि अभ्युद्ग इत्यादेरुक्तगत्यैव साधयितुं शक्यतया उपध्मानीयस्य सत्वविधायकं बकारस्य दत्वविधायकं च

वचनं न कल्प्यमिति कुतस्तत्रापि गौरवम् ।

परं तूपध्मानीयस्य शर्षूपदेश एवातिरिक्तः कल्प्य इति गौरवम् । वृत्तिमते तूक्तरीत्या बकारप्रश्लेषकृतं गौरवम् वार्त्तिकसाधारणं बोध्यम् । किं च भाष्यवृत्त्योर्मते संयोगसंज्ञार्थं यत्नान्तरं नास्थेयम् । वार्त्तिकमते तु पूर्वोक्तरीत्या तदावश्यकमिति गौरवम् ।

ननु षत्वसिद्ध्यर्थं शर्षूपदेशस्यावश्यकतया तद्गौरवमपि नेति चेत् । मैवम् । तदर्थं विसर्गस्यैव तदन्तर्भावानपेक्षणात् । वस्तुतस्तस्याप्यप्रयोजनत्वात् । "नुम्विसर्जनीय" इति सूत्रे विसर्जनीयपदस्य सत्त्वेन तद्व्यवाये षत्वसिद्धेरप्रत्यूहत्वात् । न च तत्र तन्न कर्त्तव्यमेवेति वाच्यम् । सिद्धं प्रत्याख्याय यत्नान्तरकल्पनस्यैव वैयर्थ्यात् ।

यत्तु शर्षूपदेशेन झल्त्वमिव हल्त्वयर्त्वखर्त्वान्यपि सिध्यन्ति । खर्त्वस्य फलं तु " कुप्वोः ≍क≍पौ च " इति विसर्गः । अतः शर्षूपदेशावश्यकत्वे तत एव निर्वाहे सूत्रे विसर्जनीयग्रहणं न कार्यमेवेति । तच्चिन्त्यम् । जश्त्वस्य प्रयोजनत्वोक्त्या तद्बलाज्झल्त्वसिद्धावपि हल्त्वादीनां तेनानाक्षेपात् । हल्त्वयर्त्वाल्त्वानां प्रातिस्विकरूपेणैव विधानात् । विसर्गस्य च सौत्रत्वादेव सिद्धेः । लोकेऽपि तस्येष्टत्वे तु अविशेषेणेत्यत्र तस्यापि प्रक्षेप्तुमुचितत्वात् । अस्तु वा तत एव ज्ञापकादतिरिक्तखर्त्वस्यापि स्वातन्त्र्येण सिद्धिः । न तु तावता हल्त्वयर्त्वादेः शर्त्वाक्षेप्यत्वं मानाभावात् ।

अस्तु वा शर्त्वाक्षिप्तानामप्येषां कार्यविशेषपुरस्कारेण नियमार्थम् । अविशेषेणेत्यादिवार्त्तिकं सर्वथाऽप्युक्तकार्यातिरिक्ते नैषां कुत्रापि प्रत्याहारउपादानम् । अत एव "कुप्वोः ≍कु≍पौ"

इत्यत्र "खर्परे शरि" इति विसर्ग एव । यद्वा "वा शरि" इति विकल्प इति निरस्तम् । अत एवाट्स्वरोरुपदेशेन संज्ञान्तराणां सिद्धिसम्भवेऽपि उपायस्योपायान्तरादूषकत्वादित्याशयेन प्रत्याहारविशेषान् पृथक् पुरस्कृत्य वार्त्तिकाक्षरविन्यास इत्यप्यपास्तम् । नियमार्थमुक्तप्रकारेणैव वार्त्तिकरचनाया उचितत्वात् । एतेन हरिः करोति हरिं पश्य इत्यत्र यण्वारणाय विसर्गानुस्वारयोरासिद्धत्वानुसरणक्लेशोऽप्यपास्तः । एतेनैव अट्सु क्रियमाण उपदेशोऽकाराव्यवहितोत्तरमेव कर्त्तव्यः, अन्यथा इण्प्रत्याहारान्तर्भावे संस्कर्त्तेत्यत्रानुस्वारात्परस्य सस्य षत्वापत्तेरित्यप्यपास्तम् । ध्वनितं चेदं संस्कर्त्तेत्यत्रानुस्वारादचः परस्य सस्य द्वित्वं वदता, उक्तरीत्या उबिब्जिषतीत्यभ्यासे बकारं चापादयता कैयटेनैवेति दिक् । तस्माज्जश्त्वषत्वे नात्र प्रयोजने इति सिद्धम् ।

आवश्यकं चेदं भाष्यकृतोऽपि । अन्यथा षत्वार्थं शर्षूपदेशस्यावश्यकत्वे तत एव जश्त्वस्यापि तत एव झल्त्वेन सिद्धौ वार्त्तिकमतेऽपि शर्षूपदेशरूपगौरवानापत्तेः । "भुजन्युब्जौ" इति निपातनस्य बत्वांशेऽपि तात्पर्यस्य भाष्यकृतोऽप्यधिकस्य कल्प्यत्वात् । गौरवान्तरस्य च परिहृतत्वात् ।

न च वार्त्तिकमते संयोगसंज्ञासिद्ध्यर्थयत्ननिबन्धनं गौरवम् । "भुजन्युब्जौ" इत्यत्र गुरूच्चारणसामर्थ्येन जश्त्वस्यासिद्धत्वाभावं कल्पयित्वा बकारमादायैव तत्सिद्धेः । संयोगसंज्ञायाः प्रयोजनत्वाभिधानस्य च यथाश्रुतपरत्वात् । तस्माज्जश्त्वरूपप्रयोजनप्रत्याख्यानपरभाष्यप्रामाण्यात् षत्वस्यापि प्रकृतप्रयोजनत्वप्रत्याख्याने तत्सम्मतिरुन्नीयते । जिह्वामूली-

यपरत्वे विसर्गसिद्धिस्तु "कुप्वोः ≍क≍पौ च" इति निपातसामर्थ्यादेव। तेन "खयां यमाः खयः ≍क≍पौ" इत्यादौ नानुपपत्तिरिति सूक्ष्ममवधेयम्।

उपधासंज्ञाऽपि न प्रयोजनम्। इदुदुपधस्थानिको यो विसर्ग इतिव्याख्यानात्। इदुद्भ्यां परस्य विसर्गस्येत्यत एव सिद्धावुपधाग्रहणप्रत्याख्यानाद्वा।

अलोऽन्त्यविधिरपि न प्रयोजनम्। पदस्य यो विसर्जनीयस्तस्य सकार इतिव्याख्यानादेव सिद्धेः।

स्थानिवत्त्वप्रतिषेधोऽपि न प्रयोजनम्। पूर्वत्रासिद्धीये न स्थानिवदिति सिद्धेः। न च तस्य " अचः परस्मिन् " इत्येतन्मात्रविषयकत्वम्। स्थानिवद्भावं प्रति त्रिपादीस्थस्यासिद्धतया न्यायमूलकत्वात् स्थानिवद्भावमात्रविषयकत्वात्। तस्मादट्सु णत्वम् " अनचि च " इति द्वित्वं चेति प्रयोजनद्वयमेव सिद्धम्।

# लण् ६।

हकारादावकारस्य सुखोच्चारणमात्रार्थत्वेऽप्यत्रानुनासिकत्वादित्संज्ञा। प्रतिज्ञाऽऽनुनासिक्याः पाणिनीया इतिसिद्धान्तात्। तेन रेफेण सहाकारोच्चारणे "उरण् रपरः" इत्यत्र रप्रत्याहारेण रेफलकारयोरुपादानम्। ऋकारऌकारयोः सावर्ण्यमिति वार्त्तिकनिर्देशश्चात्र मानम्।

ननु "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इत्यादावण्ग्रहणं पूर्वेण परेण वा णकारेणेतिसंदेहः प्राप्नोति इतिचेन्न। ग्रहणकशास्त्रे परेणैव तदन्यत्र पूर्वेणैवेतिव्याख्यानवशात्तन्निवृत्तेः। तथा हि। अच इत्येव सिद्धत्वाद् एचां दीर्घत्वे विशेषाभावाद्

निष्ठातकारस्य ढत्वं च निपात्यते । न त्वासिद्धकाण्डस्थढत्वादेः प्रवृत्तिः । परिद्रढय्येत्यत्र "ल्यपि लघुपूर्वाद्" इत्ययादेशस्य पारिद्दढीकन्येत्यादौ गुरूपोत्तमत्वाभावप्रयुक्तष्यङभावस्य चासिद्ध्यापत्तेः इति भाष्यादावुक्तत्वादिति बहवः ।

प्रासादकारस्तु नकारलोपनिपातनोक्त्या दृंहेरेवेदं निपातनमिति वृह वृद्धावित्यस्य प्रत्युदाहरणत्वं युक्तमेवेत्याह । युक्तं चैतत् । आदृढः आवृढः इत्यत्र भाष्यस्वारस्यात् । अत एव "दादेर्धातोर्घः" इत्यस्य प्रवृत्त्यभाव इडभावश्चेत्यादिकल्पनमपि न दोषावहम् । बलवत्प्रमाणानुगृहीतत्वात् । एतेन दृहेरपीदं निपातनमिति काशिकोक्तं परास्तम् । उक्तलिङ्गविरोधेन कल्पनोच्छेदाच्च । एतेनास्मात्परिवृढय्य पारिदृढीत्यत्रायादेशाभावष्यङ्प्रत्यययोरापादनमपीष्टापादनमेव । रूपभेदस्वीकारे बाधकाभावात् । प्रमाणस्य च दर्शितत्वात् । एतेन प्रक्रियायां वृढ इति पाठकल्पनमप्यपास्तम् । "केऽणः" इत्यपि पूर्वेणैव । गोका नौका इत्यादौ उपानत्का चतुष्कामित्यादौ च धत्वविसर्जनीययोरासिद्धत्वात्परेषामचां हलां च संभवेऽपि ह्रस्वविध्युपस्थितस्य "अच." इत्यस्यानुरोधादिति कौस्तुभे ।

कैयटे तु "न मु ने" इत्यत्र नेतियोगविभागाद्धत्वादीनामसिद्धत्वं नास्तीति हकारादीनां कप्रत्यये परेऽसम्भव एवेति व्याख्यातम् । न च गोका इत्यादावतिप्रसङ्गः । अच इत्येव वक्तव्यत्वापत्तेः । "अणोऽप्रगृह्यस्यानुनासिकः" इत्यत्र परेण प्रत्याहारे यद्यपि ऋकारादीनां स्वरूपतः संभवोऽस्त्येव, कर्त्तृ, अग्ने, वायो, पचै, मालामाचक्षाणो माल्, वृक्षवयतेरप्रत्यये वृक्षव्, इत्यादौ सानुनासिकाननुनासिकभेदेन यव-

क्तानां द्वैविध्यात्, तथाऽप्यप्रगृह्यस्येति पर्युदासेन भेदप्रतियोगिवृत्तिभेदप्रतियोगितावच्छेदकसाक्षाद्व्यापकधर्मावच्छिन्नस्यैवानुयोगिनो व्युत्पत्तिबलात्प्रतीत्या प्रगृह्यभिन्नत्वेनाच एवोपस्थितिसिद्धौ अणूग्रहणसामर्थ्यात्पूर्वेणैव प्रत्याहारः ।

वृक्षवृशब्दस्तु कैयटेन व्याख्यातः । वृक्षं वृश्चतीति क्विबन्ताद् वृक्षवृश्चमाचष्टइति णिचि णाविष्टवत्प्रातिपदिकस्येति टिलोपेन ऋकारशकारचकाराणां निवृत्तौ वृक्षवयतीति सिद्धे ततो विच् । न तु क्विप् । क्वित्त्वेन सम्प्रसारणापत्तेः । वकारलोपापवादस्य "च्छ्वोः शूड्" इत्यूठः प्रसङ्गाच्च । न च णिलोपस्य स्थानिवद्भावः । क्वौ लुप्तं न स्थानिवदिति क्वौ विधिं प्रति न स्थानिवद् इति च निषेधात् । विचि तु स्थानिवत्त्वेन वलोपाभावादिनिर्वाहः। न च तथाऽपि "हलि सर्वेषाम्"इति लोपापत्तिः, पूर्वत्रासिद्धीये स्थानिवत्त्वाभावादिति वाच्यम् । तत्र " भोभगो " इत्यतोऽशीत्यनुवर्त्तनात् । न च णिच्प्राग्भाविनं क्विपमेवाश्रित्य ऊठ्प्रसङ्गः । अन्तर्भूतक्विबाश्रयतयाऽन्तरङ्गे तत्र कर्त्तव्ये बहिर्भूतणिजपेक्षया बहिरङ्गस्य टिलोपस्यासिद्धत्वादिति ।

यत्तु कौस्तुभे एकदेशविकृतस्यानन्यतया "व्रश्च" इति षत्वं दुर्वारम् । न च णिलोपस्य स्थानिवद्भावः । पदान्तविधौ नेति निषेधात् । पूर्वत्रासिद्धे तदभावाच्च । तस्माद् वृक्षं वेतीति वृक्षवीः वातीति वृक्षवाः । वृक्षव्यं वृक्षवां वाऽऽचष्टे इति ण्यन्ताद्विच् । न च "लोपो व्योः" इति वलोपापत्तिः । णिलोपस्य स्थानिवत्त्वात् । लोपस्यानवयवत्वेन पदान्तश्चेद्विधीयत इत्यर्थकस्य "न पदान्त" इति निषेधस्याप्रवृत्तेरिति । तच्चिन्त्यम् । व्रश्चादिसूत्रेच्छशामित्यत्र छकारात्पूर्वं चकारद्वयप्रश्लेषेण एकेन स्वाभाविकस्यापरेण जकारस्थाने षत्वेन प्रयुक्तस्य चकारस्य निर्देशाद्व्रश्चादीनां

चकारजकारयोरेव षत्वविधानात् । उपायस्य चोपायान्तरा-दूषकत्वात् ।

स्यादेतत् । "च्छ्वोः" इतिसूत्रे किद्ग्रहणमनुवर्त्तते न वेति विचार्य भाष्ये उक्तम्—

अनुवर्त्तमाने किद्ग्रहणे छः षत्वं वक्तव्यमिति ।

अस्यार्थः । तदनुवृत्त्यभावे "च्छ्वोः" इति छस्य शत्वे शकारस्य च षत्वविधानादेव सिद्धौ व्रश्चादिसूत्रे छग्रहणं न कार्य-मिति । एवं च लाघवादत्रैव भाष्यतात्पर्ये छकारपरित्यागे कथ-मुक्तः प्रश्लेष इति । सत्यम् । तथाऽपि अलोऽन्त्यपरिभाषया च-कारजकारयोरेव षत्वविधानाद्धकारस्य तदनापत्तेः । व्रश्चाद्यंशे षत्वस्य कुत्वापवादत्वात् ।

हरदत्तस्तु वृक्षव् करोति इत्येवंरूपः प्रयोगो नास्त्येव । "न पदान्ता हलोऽणः सन्ति" इति भाष्योक्त्याऽनभिधाननिश्चयादिति "हलि सर्वेषाम्" इतिसूत्रे व्यवस्थापितवान् ।

अत्र कौस्तुभकृतः । लण्सूत्रभाष्ये "न पदान्ताः परेऽणः सन्ति" इत्येव पाठः । अन्यथा अप्रगृह्यस्येतिपर्युदासेनाचामेव कार्यभाक्त्वादितरे कार्यिणो न सन्तीति कैयटविरोधादिति । त-च्चिन्त्यम् । कर्त्तृ इत्यादीनां सत्त्वप्रदर्शनपरेण भाष्येणाचाम्प्र-दर्शनेऽपि हलां सत्त्वे मानाभावात् । यथाश्रुतकैयटोक्तेश्च यु-क्तिविरुद्धत्वात् । स्वरूपेण ऋकारादीनामणां सत्त्वेन तन्निषेधे बाधाभावात् । विशिष्टाभाव ऋकारादिषु विशेषणाभावेनैव ह-ल्साधारण्येन वर्त्तिष्यतइत्यभिप्रायेण त्वदुक्तरीत्या कार्यिणो न सन्तीति व्याख्यानावतारात् । न चैतद् युक्तम् । अण्ग्रहणस्य पूर्वेण सह व्यवस्थापनात्प्राक् ऋकारादीनां विशेषणाभावप्रयु-क्तविशिष्टाभावाश्रयत्वासिद्धेः । अन्यथा पूर्वपक्षस्यैवानुपस्था-

भात् । " ननु चायमस्ति कर्तृ " इत्यादिभाष्यानुपपत्तेश्च । ऋकारादेः कार्यभाक्त्वाभावशङ्कायां स्वरूपमात्रसत्तोक्तेरप्रयोजकत्वात् । अतः स्वरूपेण पदान्तानामृकारादीनामसत्त्वशङ्कायामृकारस्य तदुत्तराज्मात्रोपलक्षणतया तत्सत्त्वे उक्ते पदान्तऋकाराद्यभावावबोधकस्य "न पदान्ताः परेऽणः सन्ति" इतिवाक्यस्य अजंशे अप्रामाण्यव्यवस्थित्या हकाराद्यभावबोधकत्वांशे बाधकाभावात्प्रामाण्यं पर्यवस्यतीति फलितार्थमादाय न हलोऽणः सन्तीतिवाक्यस्य मिश्रैः समुल्लिखितत्वात् ।

न च ऋकारप्रदर्शनस्योपलक्षणत्वे हलोऽप्युपलक्ष्यन्तामिति वाच्यम् । प्रमाणाभावात् । " ह्रस्वस्य गुणः " " एत ऐ " " आत औ णलः " इत्यादीनामजंशे उपलक्षणतायां तात्पर्यग्राहकत्वात् । न च हलंशे "हलि सर्वेषाम्" इतिसूत्रे-

हलि अशि यथा स्यात्, इह मा भूत्, वृक्षवयतेरप्रत्ययः वृक्षव् करोति इति भाष्यं तात्पर्यग्राहकमस्त्येवेति वाच्यम् । तस्यैतद्भाष्यविरोधेन प्रौढिवादत्वात् । न च वैपरीत्यम् । प्राथम्यस्यैव तावद्विनिगमकत्वात् । विकल्पस्य च वस्तुन्यसम्भवात् । तदाहुः प्रामाणिकाः—

अनुष्ठानं हि विकल्प्यते न वास्त्विति ।

न च वृक्षव् करोतीति स्पष्टार्थकभाष्यविरोधेन पूर्वभाष्यस्य तथातात्पर्यं न कल्प्यमिति वाच्यम् । तस्याप्यन्यथाऽनुपपन्नत्वात् ।

न च तस्य पूर्वपक्षगतत्वेन सर्वांशाप्रामाण्येऽपि न क्षतिः, अजभावबोधकत्वांशवदुक्तबाधकस्य हलभावबोधकत्वांशेऽप्यप्रामाण्यकल्पकस्य सत्त्वादिति वाच्यम् । ननु चायमस्तीति निषेधात्यन्तायोगव्यवच्छेदपरोत्तरभाष्यादप्येतदर्थस्य प्रतीतेः ।

हकारादेः कस्यचिद् उभयाभ्युपगतपदान्तत्वाभावकत्वात् । वि-प्रतिपन्ननिषेधस्यांशतो भाष्यसंमतत्वात् । अन्यथा पूर्वेणाण्ग्र-हणासिद्धेश्च । तथा हि । अप्रगृह्यस्येत्युक्तव्युत्पत्तिवशादचां ला-भेन हयादीनां कार्यित्वासम्भवादेवाज्विषयकत्वसिद्धौ अण्-पदसामर्थ्यात्पूर्वेणेति न शक्यते वक्तुम् । अण्पदसामर्थ्येन वादीनां कार्यित्वे सिद्धे न्यायस्याकिञ्चित्करत्वात् । "अर्थवद-धातुरप्रत्ययः" इत्यर्थवद्ग्रहणेन "ओषधेश्च विभक्तावप्रथमाया-म्" इत्यादौ विभक्त्याद्युपादानेन च तन्न्यायस्याप्यसार्वत्रिक-त्वात् । "अवर्णस्त्रसावनञः" इतिसूत्रे भेदप्रतियोगिवृत्तितत्त्वा-वच्छेदकधर्मसाक्षाद्व्यापकधर्मावच्छिन्नानुयोगिताकभेदभाने विभ-क्तित्वस्यैव तथात्वात् तदनवच्छिन्ने अणादौ तदप्रवृत्तौ आर्वत-मित्याद्यसिद्ध्यापत्तेश्च ।

निषेधस्वीकारे च "वाहैरलुप्यत सहस्रदृगर्वगर्वः" इत्यादिविरोधात् । भेदप्रतियोगितावच्छेदकान्यप्रतियोगि-वृत्तिधर्ममात्रेण सादृश्यविवक्षायां च तत्र प्रत्ययत्वस्येवात्रा-प्यल्त्वस्य तादृशत्वात्तदवच्छिन्नानां वादीनां वारणानुपपत्तेः । एतेनाण्ग्रहणस्य पूर्वेणाप्युपपन्नत्वात् नाजिवयुक्तन्यायबाध इ-त्यप्यपास्तम् । उभयोरप्यन्यथोपपत्तौ न्यायसङ्कोचस्यैव न्याय्यत्वात् । "केऽणः" इत्यादौ तु ह्रस्वश्रुत्यैवाच उपस्थापनात्तदनुरोध इति वैषम्यम् । उक्तरीत्या तु बा-धाभावस्य प्रमाणमात्रोपजीव्यतया हलामणां पदान्तेऽनुपप-त्तेः तत्संग्रहार्थत्वायोगात् । अच्पदं परित्यज्याण्ग्रहणसाम-र्थ्यादेव पूर्वेणाण्ग्रहणासिद्धिः । तस्मादत्रत्यभाष्यस्य हरद-त्तोक्त एवार्थो युक्तः । कैयटस्याप्यत्रैव तात्पर्यात् । तथा हि । वृक्षव् करोतीत्यण्पदानुवृत्तेः प्रयोजनं वक्ष्यतीति यथाश्रुताष्टमि-

ऋभाष्यविरोधमाशङ्क्य उक्तपर्युदासादितरे कार्यभाजो न सन्तीति समाधानस्य न पदान्ता हलोऽणः सन्तीत्यत्रैव तात्पर्यम् । ऋकारादीनां स्वरूपतः सत्त्वेन कार्यभाक्त्वं विशेषणम् । स च विशिष्टाभाव ऋकारादिषु विशेषणाभावेन हकारादिषु च विशेष्याभावेनाविशिष्टः । उभयत्रापि विशेषणाभावपरत्वे विशेष्यभागवैयर्थ्यात् ।

यद्यपि चेदं प्रथममसिद्धम् ऋकारादिष्वनुनासिकविध्यप्रवृत्तेस्तद्वेलायामसिद्धेः, तथाऽप्यप्रगृह्यस्येति पर्युदासेनाच एवानुनासिकेन भाव्यम्, न तु हल इति फक्किकायां हलामणामसम्भवे सतीति शेषः । अन्यथा उक्तरीत्या न्यायस्याप्रवृत्तौ वादीनामप्यनुनासिकापत्तेः इत्युक्ते पदान्ता हलोऽणो न सन्तीत्युक्तप्रायम् । तथा चाष्टमिकभाष्यं प्रौढिमात्रमिति भावः ।

न हि पदान्ता इत्यस्यार्थमाह । "कार्यभाज इत्यर्थः" इति । तथा च गूढाभिप्राय उक्तविशिष्टाभावं दर्शयतीति सिद्धान्त एवायं न तु पूर्वपक्ष इति भावः ।

इतरस्तु यथाश्रुते दूषणमाह । ननु चायमिति भाष्ये आचार्यः पूर्वाक्षिप्तं स्वाभिप्रायं प्रकाशयति—एवं तर्हीति । पदान्ते हलामणामसम्भवात् पर्युदासेनाचामेव ग्रहणे सिद्धे अण्ग्रहणसामर्थ्यात्पूर्वेणैवेति भावः । अत एवाच एव प्रगृह्या भवन्तीति पर्युदासमात्रं साधकत्वेनोक्तम् । तच्चोक्तरीत्या पदान्ते हलामणां सत्त्वेऽसाधकमेवेति सर्वथाऽप्यत्रत्यभाष्यस्य न पदान्ताः परेऽणः सन्तीति भाष्यस्य च सिद्धान्तत्वे कैयटस्य तात्पर्यम् । पूर्वपक्षत्वे ग्रन्थद्वयस्याप्यलग्नकत्वापत्तेः । वृक्षवृँ हसतीत्यत्रातिप्रसङ्गस्य अशीत्यनुवृत्त्याऽपि दुर्वारतया त्वयाऽपि तत्रानभिधानस्यावश्यमाश्रयणीयत्वात् । अनभिधानस्य च

पदविशेषगर्भतया वृक्षव् इतिप्रयोगाभावमात्रपर्यवासितत्वाद् इ-त्यास्तां विस्तरः ।

"उरण् रपरः" इत्यपि पूर्वेण । परेण प्रयोजनाभावात् । न च होतॄकारः मातॄणामित्यादौ ऋकारस्य सवर्णदीर्घे "नामि"इति दीर्घे च रपरत्वार्थं परेण स्यादिति वाच्यम् । "ऋत इद्धातोः" इति धातुग्रहणात् ज्ञापकात् । तद्धि ऋकारान्तमात्रस्य इत्व-विधाने मातॄणामित्यादावपि इत्वं स्यादित्यतिप्रसङ्गनिषेधार्थम् । तत्रापि रपरत्वे तु रेफान्तत्वापत्त्या ऋकारान्तत्वाभावादेव तद्-प्रसक्त्या किं तेन । न च चिकीर्षतीत्यादौ "अज्झनगमां सनि" इति ऋकारस्य दीर्घे रपरत्वे च "उपधायां च" इतिसूत्रेण यथा ऋकारस्य इकारादेशो भवति, तथा मातॄणामित्यादावपि रपरत्वे कृते स्यात्, अतः "उपधायां च" इत्यत्रानुवृत्त्यर्थमेव धातुग्रहणमिति वाच्यम् । तथाऽपि तत्रैव तदुपादानापत्त्या पूर्वत्र निर्देशस्य ज्ञापनार्थत्वात् । अण्ग्रहणस्यैव ज्ञापकत्वसंभवाच्च । अन्यथा "उरन्रपरः" इत्येव ब्रूयात् । तत्र तत्र ऋकारस्था-नीयानाम् उदात्तानुदात्तस्वरितानुनासिकदीर्घरूपाणामादेशा-नां रपरत्वापत्तेस्तेनैव निर्वाहसम्भवात् ।

अथ कर्त्रर्थमित्यादौ यणादेशेन ऋकारस्य रेफे तस्य र-परत्वसिद्ध्यर्थमण्ग्रहणम् । न च "हलो यमां यमि" इत्याद्यरे-फस्य लोपावश्यकत्वात्तत्र रपरत्वं व्यर्थमिति वाच्यम् । "झयो होऽ-न्यतरस्याम्"इत्यतस्तत्र विकल्पानुवृत्तेरुक्तत्वात् इति चेन्न । "रो-रि"इति लोपस्य दुर्वारत्वात् । न च तस्य पदान्तमात्रविषयक-त्वम् । अजर्घा इत्यादेरसिद्ध्यापत्तेः । गृधु अभिकाङ्क्षायाम् इत्यस्य हि यङ्लुकि द्वित्वे उरदत्वे जश्त्वे "रुग्रिकौ च लुकि" इत्यभ्या-सस्य रुगागमे च कृते लङि अडागमे सिपि शब्लुकि गुणे रपरत्वे

सिलोपे भष्भावेन गस्य घत्वे जश्त्वेन धस्य दत्वे दस्य रुत्वे घकारोत्तररेफस्य लोपे " ढ्लोप " इति घकाराकारस्य दीर्घत्वे " खरवसानयोः " इति रोर्विसर्गे चास्य सिद्धेः । एतच्च सर्वमभ्युपगम्यवादः ।

वस्तुतस्तु ऋकारस्थानीयानामणां रपरत्वे विधेये ऋकारऌकारयोः स्थानित्वेन रेफलकारयोश्च विधेयत्वेनोपस्थितौ परिशेषादादेशसमर्पकमण्पदं स्थानिभिन्नेषु रेफलकारभिन्नेषु चाण्सु पर्यवस्यति । तथा च मातॄणामित्यादौ कुत्रापि नातिप्रसङ्गः । नापि कर्त्रर्थमित्यादौ रेफद्वयापत्तिः । एवं च परेण ग्रहणे वैयर्थ्यापत्तिरेवाण्ग्रहणसामर्थ्यादिति भाष्यस्यार्थः । यथाश्रुते लाकृतिरित्यत्र लपरत्वस्यैव तत्फलत्वसम्भवादिति कौस्तुभोक्तदोषापत्तेः । नापि धातुग्रहणेन निस्तारः । तस्योत्तरार्थत्वस्यापि सम्भवात् ।

यत्तु नुड्वाच्य उत्तरार्थं तु इह किञ्चित्रपो इतिन्यायेनात्र करणं ज्ञापकमेवेति, तन्न । "नामि"इति सूत्रे नुड्विशिष्टग्रहणस्य केवलोत्तरार्थत्वस्यापि स्थापितत्वेन तथानियमाभावात् । न च वचनेन तक्रकौण्डिन्यन्यायबाधः । पूर्वेणाप्युपपत्तेः । अन्यथा कर्त्रर्थमित्यादौ "रो रि" इति लोपस्यापि बाधापत्तेः । न च वचनसामर्थ्यान्न्यायबाधः श्रेयान् । तत्र रेफलोपस्वीकारे रेफस्य रपरत्ववैयर्थ्यात् । तद्बाधकवचनबाधस्य तत्राप्यविशेषात् । कुत्रापि तच्छ्रवणाभावे प्रवृत्तिमात्रेण चरितार्थत्वानुपपत्तेः । अन्यथा "शरोऽचि" इत्यस्य विकल्पानुवृत्तिज्ञापकत्वतद्विघटनोभयपरस्य भाष्यादेरनुपपत्तेरिति दिक् ।

"अणुदित् सवर्णस्य च"इत्यत्र तु परेणैव । "उर्ऋत्" इति ज्ञापकात् । तद्धि कृत संशब्दने इत्यस्माच्चुरादिण्यन्ताल्लुङि

"णिश्रि" इति च्लेश्चङादेशे च अचीकृतदित्यत्र ऋकारस्थाने ऋकारविधानार्थम्। तत्र दीर्घस्थानेऽपि ह्रस्व एव ऋकारोऽस्तु इत्येतदर्थं तपरत्वम्। ग्रहणकशास्त्रे पूर्वेणाण्ग्रहणे तु दीर्घऋकारस्य स्थानित्वादेशत्वयोः प्रसक्त्यभावाद्व्यर्थं स्यात्। परेण तद्ग्रहणे तु "उरृत्" इत्यृकारेण सवर्णस्य ऋकारस्यापि ग्रहणाद्भवति तस्य स्थानित्वप्रसक्तिः।

न च विधीयमानत्वादेवात्र ग्राहकत्वानुपपत्त्या परेण ग्रहणेऽपि तपरत्ववैयर्थ्यम्। विकाराभावमात्रपर्यवसितत्वात्। तथा च वृत्तिकारः। "न चायं भाव्यमानोऽण् किं त्वादेशान्तरनिवृत्त्यर्थं स्वरूपेणाभ्यनुज्ञायते" इति। तपरत्वसामर्थ्यात्तु दीर्घस्थाने भाव्यमानताऽपि लभ्यतइत्यन्यत्।

इण्प्रत्याहारस्तु सर्वत्र परेणैव। "अचि श्नु"इति सूत्रे य्वोरिति इकारोकारयोः स्वरूपेण निर्देशात्। अन्यथा इण इत्येवावक्ष्यत्। संहितायां यथान्यासे हलोरर्द्धमात्राद्वयम् मात्राद्वयं चौकारस्येति मात्रात्रयम्। इण इत्युक्ते तु सार्धमात्राद्वयम्। पदच्छेदेऽपि अर्द्धमात्रात्रयं द्वे च मात्रे इति सार्द्धमात्रात्रयं मात्रात्रयं चेति क्रमेण लाघवात्। "रलो व्युपधाद्" इत्यत्र उकारेकारयोः स्वरूपेण निर्देशस्तज्ज्ञापक इति न्यासकृत्।

तस्माद् "व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्" इतिपरिभाषाज्ञापनाय पुनर्णकारानुबन्ध इति सिद्धम्। सन्देहश्च सर्वत्र स्वरूपांशविषयक एवेति न नियमः। "भस्याढे तद्धिते" इत्यत्र "अग्नेर्ढक्" इत्यस्यैव भेदप्रतियोगित्वेनान्वयो व्याख्यानान्न तु स्त्रीभ्यो ढक इति प्रामाणिकग्रन्थदर्शनात्। किं तु प्रकृतिविशेषविहितत्वादिप्रकारकोऽप्यनया निवर्त्यतइति सर्वमवदातम्।

# ञमङणनम् ७। झभञ् ८।

अत्र भाष्यं मकारोऽत्र नानुबन्धनीयः । यम् ङम् अम् इति प्रत्याहारत्रयस्य ञकारेणैव निर्वाहात् । तथा हि–" हलो यञां यञि लोपः " इति सूत्रणीयम् । न च झकारभकारयोस्तन्मध्यवर्त्तिनोर्लोपापत्तिः । झकारभकारोत्तरवर्त्तिनोर्झकारभकारयोः कुत्राप्यभावात् । " पुमः खय्यञ्परे " इति पाठ्यम् । न चातिप्रसङ्गः । खय्परयोस्तयोरसम्भवात् । एवं "ङञो ह्रस्वादचि ङञुणिनत्यम्" इति वाच्यम् । न चातिप्रसङ्गः । पदान्ते झभयोरप्रसिद्धेः । उज्झेस्तु संयोगान्तलोपे उदित्येव रूपम् । लभादीनां तु जश्त्वस्यावश्यकत्वात् । अन्यत् प्रागेवोक्तम् ।

नन्वेवमपि"ञमन्ताड्डः"इत्युणादौ तदावश्यकम्। अन्यथा झान्तभान्तधातोरपि डप्रत्ययापत्तेः, सत्यम् । तत्रापि ञन्तादित्येव पाठ्यम् । ञमन्तेभ्योऽपि सर्वेभ्यो डप्रत्ययानुत्पत्त्या बाहुलकस्यावश्याश्रयणीयतया तत एव झान्तभान्तेभ्योऽपि प्रत्ययवारणसम्भवादिति केचित् ।

वस्तुतस्तु ञकारङकारान्तधातूनामप्रसिद्ध्या मणनाड्ड इत्येव सूत्रं कार्यमिति भाष्याशयः ।

# घढधष् ९। जबगडदश् १०। खफछठथचटतव् ११। कपय् १२। शषसर् १३। हल् १४।

इति माहेश्वराणि प्रत्याहारसूत्राणि । अत्र प्राञ्चः—

एकस्मान्ङञणवटा द्वाभ्यां षस्त्रिभ्य एव कणमाः स्युः ।
ज्ञेयौ चयौ चतुर्भ्यो रः पञ्चभ्यः शलौ षड्भ्यः ॥

अत्र वदन्ति । चतुर्दशसूत्रीस्थैर्हलिभरिद्भिः कृतानामष्टाध्याय्यां व्यवहृतानां प्रत्याहाराणामयं संग्रहः । तेन सुप्तिङादेः रप्रत्याहारस्य "ञमन्ताड्डः" "यमिञमन्तेषु" इति उणादिव्याघ्रभूतिकारिकयोर्व्यवहृतस्य ञमूप्रत्याहारस्य "चयो द्वितीया" इति वार्त्तिककृद्व्यवहृतस्य चय्प्रत्याहारस्य चाधिक्येऽप्यदोष इति ।

अस्यार्थः । ङकार एकस्मादेव परो ग्राह्यः । "एङि पररूपम्" इति । "षिद्भिदादिभ्योऽङ्" इत्यादौ अङिति तु न प्रत्याहारः । "आदिरन्त्येन" इत्यत्र ग्रहणकसूत्रादप्रत्यय इत्यनुवृत्तेः । नचैवम् "इको यणचि" इत्यादावनुपपत्तिः । तत्र प्रत्याहारसाहचर्यात् ।

यद्वा भिदादौ रेखालेखादीनां गुणनिपातनान्ङित्त्वाभावे तद्वैयर्थ्यापत्तेः । "शास इदङ्हलोः" इत्यत्रापि अङादौ हलादौ चेत्यर्थे विशेषणवैयर्थ्यात् । अङादौ हलादौ चेति व्याख्याने हि अङ्हलोरिति व्यर्थं स्यात् । अङादिहलादिव्यतिरिक्तानां क्ङित्प्रत्ययानामसिद्धेः क्ङितीत्येव ब्रूयात् । परस्मैपदे अजादिक्ङित्प्रत्ययानामभावाच्च । कर्मव्यतिहारे तु व्यतिशासै इत्यत्र आटा सहैकादेशस्य क्ङित्त्वाभावात् । स्थानिवद्भावेनाङादित्वाच्च । "ऋदृशोऽङि" इत्यत्रापि "ऋच्छत्यृताम्" इत्यत्र ऋकारान्तेषु गुणविधानान्न प्रत्याहारः । "सनि च" "इङश्च" इत्यपि न प्रत्याहारः । "सनि च" इति इणः पृथग्गम्यादेशविधानसामर्थ्यात् । न च बोधने इणो गम्यादेशपर्युदासार्थं पृथगुपादानमिति वाच्यम् । तावन्मात्रस्य "इङो

गाङ् लिटि ” “ विभाषा लुङ्लृङोः ” “ णौ च संश्चङोः ” “सनि गमिः” “ इणोऽबोधने ” “ णौ च गा लुङि ” इत्ये-तादृशन्यासेनाप्युपपत्तेः । “ इणो गा लुङि ” “ णौ गमिरबो-धने ” “ सनि च ” “ इङश्च ” इत्यादिन्यासापेक्षया गौर-वाभावात् । णिचं सनं चोद्दिश्य गम्यादेशविधानापेक्षया णिच-मुद्दिश्य विधानस्य सनं णिचं चानूद्य पर्युदासस्यैव लघुत्वात् । सूत्रत्रये इणनुसन्धानापेक्षया सूत्रद्वये तस्य लघुत्वाच्च । “इको झल्”इति कित्त्वविधानात् “अज्झनगमां सनि”इति दीर्घविधाना-च्च इङन्तानां गम्यादेशे उक्तसूत्रयोर्निर्विषयकत्वापत्तेरिति केचित्।

एवं “ किरश्च पञ्चभ्यः ” इत्याद्यानां चतुर्णां ऋका-रान्तानां सनि परे इड्विधानमपि ज्ञापकं बोध्यम् । इङन्तानां गम्यादेशे तत एव इट्सिद्धेः । “ परिमाणाख्यायां सर्वेभ्यः ” “ इङश्च ” इत्यपि न तथा । इकारोकारऋदन्तानां प्रत्यया-न्तएव रूढतया एजन्तानां च प्रागेवात्त्वोत्पत्त्या ऋदन्तमात्रार्थ-त्वे च स्वरूपेण तन्मात्रनिर्देशापत्त्या सामान्यसूत्रेणैव घञ्सिद्ध्या च विधिवैयर्थ्यापत्तेः । अजप्प्रत्ययाभ्यां सह घञ्विकल्पार्थत्वे तु “ ऋदोरप् ” “ एरच् ” इत्यत्रैव वा ग्रहणापत्तेः । “क्री-ङ्जीनां णौ ” इत्यपि न प्रत्याहारः । एजन्तानामात्वस्य सूत्रान्तरसिद्धतया इक इत्येव सिद्धेः । क्रीङ्ज्योः पृथगुपादा-नानुपपत्तेश्च । एतेन इकारान्तानां मध्येऽनयोरेवेति नियमार्थ-त्वशङ्काऽप्यपास्ता ।

न च इङंशे आत्वविधानस्य णौ एजन्तयोः सामान्यतः प्राप्तात्वनिवृत्त्यर्थत्वं स्यादिति वाच्यम् । तथाऽपि “ ओः पुय-ण्ज्यपरे ” इत्यभ्यासोकारस्येत्वविधानसामर्थ्यात् । “ इङ्धा-र्योः शत्रकृच्छ्रिणि ” इत्यपि न तथा । स्वरूपतो धातुना धारि-

णा साहचर्यात् ।

वस्तुतो धारेः पृथगुपादानसामर्थ्यात् । तस्मादेङित्येक एव ङकारेण प्रत्याहारः । एवं ञकारोऽप्येकस्मादेव । "अतो दीर्घो यञि" इति । अञ् इञ् यञ् इति तद्धितेषु कुतो नैवम् इति चेत् "आदिरन्त्येन" इत्यत्राप्रत्यय इत्यनुवर्तितत्वात् । आद्यो णकारोऽप्येकस्मादेव । यथा ग्रहणकशास्त्रातिरिक्ते अण्-ग्रहणेषु । वकारो "नश्छव्यप्रशान्"इति । टकारो यथा "अट्-कुप्वाङ्" इति । "इट ईटि" इति न प्रत्याहारः। ईटि परे स-कारपूर्ववर्त्तिन इकारान्यस्वरस्य क्वचिदप्यसम्भवात् ।

न च अयासीदित्यादौ तत्प्रासिद्धिः । प्रत्याहारपक्षेऽपि तद्बहिर्भावात् । एजन्तानामप्युपदेशएवाऽऽत्वविधानात् । नाम-धातूनां चानिट्त्वानुपपत्तेः । हकारान्तानां चानिटां क्सादे-शविधानेन ईट एवाप्रसिद्धेः। सेटां तु इकारस्यैवावश्यकत्वात् । षङ्णन्तानां चानिटामप्रसिद्धत्वात् । हलन्तानां तु प्रत्याहार-पक्षेऽप्यनुपस्थानात् । इगन्तानां चानिटां वृद्धेरावश्यकत्वात् । विधावपि इट् न प्रत्याहारः । षष्ठीटित्त्वाभ्यामवयवावयविभा-वबोधात् । द्वाभ्यां षः । यथा "एकाचो बशो भष् झषन्तस्य" इति। कश्त्रिभ्यः। "अकः सवर्णे" "इको यण्" "इसुसुक्तान्तात्" इति । द्वितीयणकारोऽपि त्रिभ्यः। "अणुदित् सवर्णस्य" इत्येक एवाण् "इणः षीध्वम्" "इको यण्" । मकारो-ऽपि । यथा अम्, यम्, ङम्, । चकारश्चतुर्भ्यः । "इको यणचि" "इच एकाचोऽम्" "एचोऽयवायावः" "वृद्धिरादैच्" । यकारोऽपि तथा "अनुस्वारस्य ययि" "मय उञः," "झयो हः" "पुमः खयि" इति । रः पञ्चभ्यः । "यरोऽनुनासिके" "झरो झरि" "खरिच" "अभ्यासे

चर्चे " " वा शरि " । शः षड्भ्यः । " योऽशि " "हशि च" "नेड् वशि" "झलाञ्जश् झशि" "एकाचो बशो" इति । एवं लः । " अलोऽन्त्यस्य " " हलि सर्वेषाम् " " लोपो व्योर्वलि " " रलो व्युपधात् " " झलाञ्झ्" " शल इगुपधाद् " इति । एकादिषडन्तसंख्यानां क्रमेण निवेशः उक्तिवैचित्र्यार्थः ।

स्यादेतत् । अनुबन्धानां प्रत्याहारान्तर्भावादजादीनां साङ्कर्यापत्तिः । णादयो हि उभयत्रोपदेशादुभयसंज्ञाः स्युः । एवम् अकारोऽपि । लकारस्थस्य इत्संज्ञासम्बन्धोक्तेः । तथा च दधि णकारीयतीत्यादौ यणादि रुचीनामित्यादौ "अड्व्यवायेऽपि" इति णत्वादिकं च स्यादिति प्राप्ते हयवरट्सूत्रे वार्त्तिकम् ।

प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न ।
आचारादप्रधानत्वाल्लोपश्च बलवत्तरः ॥

अनुबन्धानां णकारादीनां कथं नेत्यत्राक्षेप्याभावप्रतियोगित्वेन ग्रहणस्यैवान्वयः । अच्पदं प्रत्याहारमात्रपरम् । "आदिरन्त्येन" इतिसूत्रेणाव्यवहितोत्तरत्वसम्बन्धेन किञ्चिद्वर्णवतोऽनुबन्धस्य तन्मध्यवर्त्तिसमुदायघटकतत्तद्वर्णव्यक्तिविशेषमात्रे सङ्केतितत्वे अकारादीनामपि ग्रहणानापत्त्या उपस्थापकवर्णविशेषेऽपि सङ्केतस्यावश्यकत्वात् मध्यगतानामनुबन्धानां स्वरूपघटकानुबन्धस्य च ग्रहणस्य दुर्वारत्वादितिशङ्का पूर्वार्द्धस्यार्थः । समाधानं त्वाह—आचारादिति । आचार्यप्रयोगात् । "उणादयः" " तृषिमृषिकृषेः " " ङसिङसोश्च " इत्यादौ अनुबन्धानां तत्तत्प्रत्याहारान्तर्भावप्रयुक्तकार्यप्रयोजकत्वविरहात् । कार्याभावप्रयोजकाभावप्रतियोगित्वेन तेषामजादिशब्दावाच्यत्वं शास्त्रकृतः संमतम् । अतश्च " आदिरन्त्येन" इतिसङ्केतस्य तत्साधारण्ये प्रमाणाभावात् । अजादिशब्दा-

नामनुबन्धान्यत्वे सति तत्समुदायघटकवर्णत्वं विषयतावच्छेदकम्। सत्यन्तेन मध्यगतानुबन्धवत्संज्ञाघटकस्यापि निरासः।

केचित्तु अनुनासिक इतिनिर्देशोऽपि ज्ञापकः। "प्रत्ययस्थाद्" इतिसूत्रं हि प्रतिषेधारम्भसामर्थ्यात् कृति तद्धिते च प्रवर्त्ततइति निर्बाधम्। तत्रानन्तरस्येतिन्यायेन "यस्येति" लोप एव बाध्यतइतिपक्षे "इको यणचि" इति दुर्वारम्। नासधातोः क्वुनि नासिकाशब्दस्य व्युत्पन्नत्वात्।

येननाप्राप्तिन्यायेन यणादेश एव बाध्यतइतिस्वीकारे तु नासाशब्दात्के प्रत्यये यस्येति लोपो दुर्वारः। अनुबन्धानां प्रत्याहारान्तर्भावे कप्रत्ययस्य अजादितद्धितप्रत्ययसत्त्वेन पूर्वस्य भसंज्ञत्वात्। न च वचनसामर्थ्यादुभयं बाध्यम्। तदपेक्षया प्रत्याहारेष्वितां न ग्रहणमित्यस्यैव ज्ञापयितुमुचितत्वादित्याहुः। तच्चिन्त्यम्। "केऽणः" इति ह्रस्वविधानसामर्थ्यात्कप्रत्यये परे भसंज्ञा न भवतीति कल्पयितुं शक्यत्वात्। अकारेकारयोः यस्येतिलोपावश्यकत्वे उकारस्यैव तद्विधानप्रसङ्गात्।

वस्तुतस्तत्राप्योर्गुणप्रङ्गेन विशेषाभावात्।

समाधानान्तरमाह—अप्रधानत्वादिति। संज्ञास्वरूपत्वप्रतिपत्तिमात्रार्थमनुबन्धोपादानात्संज्ञिनामेव प्राधान्याद्ग्रहणम्। प्रधानाप्रधानयोरितिन्यायात्। न चैवमकारादेरपि तदनापत्तिः। स्वं रूपमित्यनुवृत्त्या आदेरपि संज्ञित्वात्। न च स्वशब्देनानुबन्धोऽपि गृह्यतामिति वाच्यम्। इतेति तृतीयया इतोऽप्राधान्यलाभात्। सर्वनाम्ना च प्रधानपरामर्शित्वस्यौत्सर्गिकत्वात्।

इदं त्वभ्युच्चयमात्रम्। प्राधान्यं यदि संज्ञित्वमेव, तदा पर-

स्पराश्रयः । अथ संकेतग्रहणकशास्त्रजन्यबोधे विशेष्यत्वम् । तन्न । तस्याकिञ्चित्करत्वात् । घटत्वविशिष्टो घटो घटशब्दवाच्य इत्यादौ विशेषणेऽपि शक्तिग्रहाच्च । मीमांसकानां नागृहीतविशेषणेतिन्यायेन विशेषणे एव शक्तिग्रहाच्च । मध्यगतानुबन्धानां ग्रहणस्योक्तरीत्याऽपि दुर्वारत्वाच्च ।

समाधानान्तरमाह—लोपश्चेति । बलवत्तर इति स्वार्थे तरप् । इत्संज्ञायां कृतायां णकारादीनामच्संज्ञालोपयोः प्राप्तौ लोपविधेर्बलवत्त्वात् लोपे कृते संज्ञाप्रवृत्तिकाले तेषामभावान्न संज्ञा । भूतपूर्वन्यायेनान्त्यसहितस्यादेः सञ्ज्ञासम्भवात् । अन्यथा वचनवैयर्थ्यात् ।

इदमपि न वास्तवम् । संज्ञाप्रवृत्तिकालसत्त्वस्य शक्तिग्रहेऽनुपयुक्तत्वात् । अत एव वृद्धिसूत्रे कैयटः—

सत्यसति वा संज्ञिनि बुद्ध्या विषयीकृते शब्देन पूर्वं निर्दिष्टे संज्ञा प्रवर्त्ततइति ।

अत एव "हलन्त्यम्" इतिसूत्रे "लस्येत्संज्ञा" इतिभाष्यादयः । तस्मात् पूर्वोक्त एव तात्पर्यमिति दिक् ॥

इति श्रीसिद्धान्तसुधानिधौ प्रथमस्याध्यायस्य
प्रथमे पादे द्वितीयमाह्निकम् ।



# वृद्धिरादैच् ।

---

आकार ऐकार औकारश्च आदेशानादेशसाधारण्येन वृद्धिसंज्ञः स्यात् । प्रदेशा विधौ "वृद्धिरेचि" इत्यादयः । अनुवादे तु "वृद्धिर्यस्याचाम्" इत्यादयः । अत्र छन्दोवत्सूत्राणि भवन्तीत्यतिदेशाद् "अयस्मयादीनिच्छन्दसि" इति भसंज्ञत्वात्पदान्तनिमित्तककुत्वाभावः । जश्त्वोपयोगिनी तु पदसंज्ञाऽस्त्येवेति "वृद्धिरादैजदेङ्गुणः" इति संहितया पाठे जश्त्वं भवत्येव । यथा ससुष्टुभा स ऋक्वता गणेनेत्यत्रेति भाष्यम् । दृष्टान्ते कुत्वोपयोगिनी पदसंज्ञाऽस्ति, न तु जश्त्वोपयोगिनीति तु विशेषः । इह तपरत्वमैजर्थम् । तेन त्रिमात्रादीनां न संज्ञेति पूर्वमुक्तम् ।

नचैवं पदान्तत्वाभावाद्दत्वं न स्यादिति वाच्यम् । असन्देहार्थतया पूर्वशेषत्वस्यापि सम्भवात् । दकारस्य तत्कालग्राहकत्वमपि पूर्वं निर्णीतम् ।

स्यादेतत् । कृतमनयोः साधुत्वमितिभाष्यस्वरसाद् आदैच् इति समस्तमेव । अनयोः पदयोरिति तदर्थात् । यद्यपि वृद्धिः आत् ऐजिति पस्पशायां पृथक्पदत्वमप्युक्तम्, तथाऽपि तदभ्युच्चयमात्रम् । अनयोः सूत्रखण्डयोरिति व्याख्यानापत्तेः । तस्य च "वृधिरस्मै अविशेषेणोपदिष्टः प्रकृतिपाठे तस्मात्स्त्रियां क्तिन्प्रत्ययः, आदैचोऽप्यक्षरसमाम्नाये उपदिष्टाः" इतिभाष्यविरुद्धत्वात् । चकाराध्याहारप्रसङ्गाच्च । तथा च समाहारे "द्वन्द्वाच्चुदषहान्ताद्" इति समासान्तस्य, इतरेतरयोगद्वन्द्वे

नु द्विवचनस्यापत्तिरिति, सत्यम् । समासान्तविधेरनित्यत्वात् समाहारद्वन्द्वस्यैव निर्दोषत्वात् । तत्र ज्ञापकं तु "प्रतेरंश्वाद-यस्तत्पुरुषे" इतिसूत्रे अंश्वादिगणे राजन्शब्दपाठः । प्रतेः परे अंश्वादयोऽन्तोदात्ता इति तदर्थः । "राजाहःसखिभ्यः" इति टचो नित्यत्वे तु चित्त्वादेवान्तोदात्तत्वं स्यात् ।

एवमपाचेत्यनुवर्तमाने "स्फिगपूतवीणाञ्जोध्वकुक्षिसीरनाम-नाम च" इत्यन्तोदात्तविधौ अध्वशब्दोपादानमपि लिङ्गम् । "उ-पसर्गादध्वनः" इति समासान्तस्य नित्यत्वे अचैव सिद्धेः ।

केचित्तु "द्वित्रिभ्यां पाद्दन्मूर्द्धसु बहुव्रीहौ" इतिसूत्रे समा सान्तरहितमूर्द्धग्रहणमिह लिङ्गम् । द्विमूर्द्धा त्रिमूर्द्धा इत्यत्रान्तो-दात्तत्वविकल्पार्थं हि तत् । "द्वित्रिभ्यां ष मूर्ध्नः" इतिसमासा-न्तस्य नित्यत्वे तु नान्त उक्तबहुव्रीहिरप्रसिद्ध एव स्यात् । द्वि-मूर्द्ध इत्यादेरकारान्तत्वात् । समासान्तानां समुदायावयवत्वा-त् । न च समासान्तानामुत्तरपदान्तावयवत्वद्वारा समासान्तत्वमि-त्यस्यापि भाष्यरूढत्वात् षप्रत्ययविशिष्टस्यापि मूर्द्धन्शब्देन ग्रहणं सम्भवत्येवेति द्विमूर्द्धस्त्रिमूर्द्ध इति अकारान्तएव बहुव्रीहौ विकल्पार्थं तदिति वाच्यम् । तत्पक्षस्याभ्युच्चयमात्रत्वात् । मूर्द्धस्वित्यपहाय बहुव्रीहिगर्भगुरुन्यासारम्भात्सूत्रकृत्संमतत्वाभावाच्च । न च द्वौ पादयति द्विपात् द्वयोर्दन्तान् द्विदतः पश्येति तत्पुरुषवारणाय बहुव्रीहिग्रहणावश्यकत्वे मूर्द्धसु इतिन्यास एव गौरवमिति क-थं ज्ञापकत्वमिति वाच्यम् । समासान्तविशिष्टमूर्द्धशब्दसाहच-र्येण पाद्दच्छब्दयोरपि बहुव्रीह्यवयवयोरेव ग्रहणसम्भवे बहुव्री-हिग्रहणस्यानावश्यकत्वात् ।

एतेन "द्वित्रिभ्यां पाद्दन्" इतिसूत्रे बहुव्रीहिग्रहणमेवो-क्तपरिभाषाज्ञापकम् । अन्यथा पाद्दन्मूर्द्धस्वित्येव निर्दिशेत् ।

कृतसमासान्तशब्दप्रक्रमाच्च। बहुव्रीहिभिन्नं च समासान्तविरहादेव वारयिष्यते, इति कौस्तुभोक्तिर्निरस्ता।

यथान्यासेऽपि षप्रत्ययान्ते उक्तसूत्रस्याप्रवृत्तेरुक्ततया तस्य लक्ष्यत्वमङ्गीकृत्य बहुव्रीहिग्रहणस्य ज्ञापकत्वोक्तेरसङ्गतत्वात्। लक्ष्यभेदाभ्युपगमेन ज्ञापकत्वोक्तेरसाम्प्रदायिकत्वात्।

यदपि द्विदतः पश्येत्यत्र कथं दद्भावः, "पद्दन्नोमास्" इति सूत्रे तदन्तविध्यभावादित्याशङ्क्य ष्यङः सम्प्रसारणसूत्रस्थपूर्वपक्षन्यायेन "सिद्धं त्ववयवानन्यत्वाद्" इत्याष्टमिकभाष्यवार्त्तिकन्यायेन चावयवस्य कार्यलाभादिति तत्रोक्तम्। तदपि चिन्त्यम्। शसादिषु परतः पूर्वेषां पादादीनां पदाद्यादेशविधानाच्छङ्कोत्तरयोरसङ्गतत्वात्।

एतेन "द्वित्रिभ्यां ष मूर्ध्नः" इति षचं विहाय षप्रत्ययविधानमपि ज्ञापकम्। तद्धि षचश्चित्त्वसामर्थ्यलभ्यमन्तोदात्तत्वम् "बहुव्रीहौ प्रकृत्या" इति पूर्वपदप्रकृतिस्वरवत् "द्वित्रिभ्यां पाद्दन्मूर्द्धसु" इति अन्तोदात्तविकल्पमपि मा बाधिष्टेत्येतदर्थं विकल्पस्य क्वचित् सावकाशत्वे सत्येव सङ्गच्छते। अवकाशश्च समासान्तानामनित्यत्वएव लभ्यते। त्रिमूर्द्धानं सप्तरश्मिं गृणीषे इतियथा इत्यपि परास्तम्।

द्विमूर्द्ध इत्यादौ कृतसमासान्ते तत्सूत्रस्य न प्रवृत्तिरित्युक्तत्वात्। चित्त्वसामर्थ्यलभ्यान्तोदात्तत्वस्य तद्विकल्पबाधकत्वशङ्कानुपपत्तेः। अस्तु वा तत्र विकल्पप्रवृत्तिः, तथाऽपि नोक्तज्ञापकत्वम्। चित्स्वरस्य "बहुव्रीहौ सक्थ्यक्ष्णोः" इतिपूर्वसूत्रविषये फलकसक्थो विशालाक्ष इत्यादौ चरितार्थत्वाद्विकल्पबाधकत्वानुपपत्तेः। न च "द्वित्रिभ्याम्" इति षचो यच्चित्त्वं तदचरितार्थमेवेति वाच्यम्। पूर्वसूत्रीयस्यैवात्रा-

प्रवृत्तेः । अन्यथा प्रत्याहाराह्निके "आत" इति कप्रत्ययकित्त्वमाकारैकदेशस्यातो लोपो न भवतीत्यत्र न ज्ञापकम्, "तुन्दशोकयोः परिमृजापनुदोः" इत्युत्तरसूत्रे चरितार्थत्वाद् इतिभाष्योक्त्यनुपपत्तेः । न चैवं षप्रत्ययविधानवैयर्थ्यमेव स्यादिति वाच्यम् । उक्तान्तोदात्तविकल्पस्य समासान्ताभावपक्षएव प्रवृत्तेर्व्यवस्थापितत्वात् । "द्वित्रिभ्याम्" इत्यत्रापि षच्प्रत्ययविधाने चित्त्वबललभ्यान्तोदात्तत्वस्य निरपवादत्वात् द्विमूर्द्ध इत्यादौ तदेव स्यात् । षप्रत्यये तु पूर्वपदप्रकृतिस्वर एवेति वैषम्येन तत्सार्थक्यादित्याहुः ।

तत्रेदं चिन्त्यम् । समासान्ताभावपक्षएवोक्तान्तोदात्तविकल्प इति तावदाकरविरुद्धम् । यद्यत्र षच् स्यात्तदा नित्यमन्तोदात्तत्वं स्यात् । "द्वित्रिभ्याम्" इति विभाषाऽन्तोदात्तत्वं तु यदा समासान्तविधेरनित्यत्वात् द्विमूर्द्धेति समासान्ताभावः, तदा सावकाशम् । षे तु सति समासान्तपक्षेऽपि पक्षेऽन्तोदात्तत्वम् पक्षे पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमिति स्वरद्वयसिद्धिरिति तत्रत्यभाष्यकैयटयोरुक्तत्वात् । तथा चोक्तकल्पनं निर्मूलत्वादेव हेयम् । मूर्द्धस्विति निर्देशस्योक्तज्ञापकत्वं तु भाष्यादावेव स्पष्टम् । अत एव मूर्द्धेष्विति न्यासानारम्भादुत्तरपदावयवाः समासान्ता इतिपक्षस्य सूत्रानभिमतत्वमिति निरस्तम् । समासान्ताभावपक्षेऽपि विकल्पप्रवृत्त्यर्थतया तादृशन्यासपरित्यागोपपत्तेः । अत एव षप्रत्ययविधानादपि तत्पक्षस्य सूत्रानभिमतत्वमित्यपास्तम् । समासान्तपक्षेऽप्यन्तोदात्तविकल्पार्थत्वात् ।

यदप्युक्तम्—"समासान्ताः" इतिसूत्रे समासान्तानां साक्षादेव समासान्तत्वमितिपक्षस्य भाष्ये व्यवस्थापितत्वात्

द्विधुरी त्रिधुरीत्यत्र " अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते " इतिवार्त्तिकानुरोधेन समासार्थादुत्तरपदात्समासान्तः क्रियतइतिपक्षस्य लिखितत्वेऽपि " समासान्ताः " इतिसूत्रे अकारान्ताद् द्विगोरित्युत्तरपदशब्दरहितवार्त्तिकपाठेन द्विधुरीत्यादेः साक्षात्समासान्तत्वपक्षेऽपि साधितत्वात् । वार्त्तिकगतोत्तरपदशब्दमात्रमूलकस्य समासान्तानामुत्तरपदावयवत्वपक्षस्याश्रयेण द्विमूर्द्ध इत्यादावन्तोदात्तविकल्पप्रवृत्तिकल्पनमपेक्ष्य साक्षात्समासान्तत्वपक्षमाश्रित्य द्विमूर्द्ध इत्यादौ कृतसमासान्ते तद्विकल्पप्रवृत्तिर्नेत्येव कल्पयितुमुचितत्वादुक्तरीत्यैव गुरुसूत्रन्यासषविधानयोः सार्थक्यमिति ।

तदप्यसत् । तत्पक्षावलम्बनेन कृतसमासान्तेऽपि विकल्पप्रवृत्त्यैव भाष्याद्युक्तया गुरुन्याससार्थक्यात् । " सरूपाणाम् " इतिसूत्रे उत्तरपदान्ताः समासान्ता इतिपक्षस्यापि भाष्यसंमतत्वेन कैयटोक्तत्वाच्च । " गोस्त्रियोः " इतिसूत्रे " कपि प्रतिषेधः " इतिवार्त्तिकप्रत्याख्यानाय भाष्यकृता उक्तपक्षस्य साक्षादेव लिखितत्वाच्च ।

यदप्युक्तं " द्वित्रिभ्यां पादन् " इतिसूत्रभाष्यपर्यालोचनया तत्पक्षस्य द्विमूर्द्ध इत्युदाहरणस्य च भाष्यानभिमतत्वं स्पष्टमेव । तथा हि । अकारान्तस्य ग्रहणे नकारान्तस्योपसंख्यानम्, नकारान्तग्रहणे त्वकारान्तस्य । उत्तरपदस्य कार्यित्वे समासान्ते कृते उत्तरपदे विधीयमानस्यान्तोदात्तत्वस्य प्रत्यये प्राप्त्यभावादित्युक्त्वा द्वितीयपक्षे उत्तरपदान्तोदात्तत्वे शेषनिघातेन प्रत्ययस्यानुदात्तत्वे टिलोपे उदात्तनिवृत्तिस्वरेण प्रत्ययोदात्तत्वम् । न चोत्तरपदान्तोदात्तत्वात्पूर्वमेव परत्वाट्टिलोप इति वाच्यम् । समासान्तात्पूर्वमेव परत्वादन्तोदा-

त्तप्रवृत्तेः । तदा च टिलोपप्राप्त्यभावात् । न च कृताकृतप्रसङ्गितया नित्यत्वात्पूर्वं समासान्तः । अन्तोदात्तस्यापि तथात्वात् । न च कृते समासान्ते उत्तरपदान्तोदात्तत्वं न प्राप्नोति, परत्वात् टिलोपेन बाधादिति वाच्यम् । लोपेन तन्निमित्तविघातेऽपि समासान्तेन तदविघातात् । यस्य न लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यत्वमिति स्वीकारादिति ।

तदपि चिन्त्यम् । किमत्र उत्तरपदान्ताः समासान्ता इतिपक्षो नास्तीत्यभिमतम्, किं वा द्विमूर्द्ध इत्यादौ नोदाहरणविकल्प इति । नाद्यः । यदा कृते समासे समासान्त इतिपक्षः, तदेयं सम्प्रधारणा, यदा तु समासार्थादुत्तरपदात्समासान्तः क्रियते इतिपक्षः तदा सम्प्रधारणैव नास्तीति कैयटेनैवोक्तत्वात् । नान्त्यः । तदुत्तरमेव हि कैयटेन व्याख्यातम्—

यदि नित्यः समासान्तः स्यात्तदा कार्यिविशेषसन्देहव्यावृत्तये प्रक्रमाभेदाय वा समासान्त एवोच्चार्येत । तदनुच्चारणात्तु समासान्तस्यानित्यत्वं ज्ञाप्यते । तत्र यदा समासान्तो नास्ति तदा समासस्योत्तरपदस्य वा कार्यित्वे विशेषाभावः । यदा तु समासान्तः क्रियते तदा समासस्य कार्यित्वे समासान्तस्योदात्तत्वम् । यदाऽप्युत्तरपदस्य कार्यित्वम्, तदा परत्वादन्तोदात्तत्वे कृते समासान्तः । तत्र टिलोपे उदात्तनिवृत्तिस्वरेणापि सिद्धम् । ननु प्रत्ययस्वरेण समासान्तस्य भाव्यम्, नैतदस्ति । बहुव्रीहिस्वरेण तस्य बाधात् । बहुव्रीहिस्वरस्याप्यनेनेति ।

अनेन च द्विमूर्द्ध इत्यादौ पाक्षिकोदाहरणत्वस्यापि लाभात् । अत एव षप्रत्यये पूर्वपदप्रकृतिस्वर एवेत्यपि कल्पनं निरस्तम् ।

यदप्युक्तम् । मूर्द्धसु बहुव्रीहौ" इति गुरुनिर्देशस्योक्तपक्षावलम्बनेन कथंचित् सार्थक्येऽपि षप्रत्ययविधानस्य तदसम्भवः ।

षचश्चित्त्वसामर्थ्यलभ्यान्तोदात्तस्य पूर्वसूत्रविषये चरितार्थस्य द्विमूर्द्ध इत्यादौ परेणान्तोदात्तविकल्पेन बाधसम्भवात्। न च चित्त्वप्रयुक्तमन्तोदात्तत्वं पूर्वपदप्रकृतिस्वरमेव बाधते न तूक्तविकल्पमित्यत्र विनिगमकाभावः। कक्षया कक्षा निमातव्येति भाष्योक्तन्यायेन तत्सिद्धेः। पूर्वकक्षाप्राप्तानामुत्तरकक्षाप्राप्ता बाधका इति तदर्थात्। अत एव प्रथमकक्षाप्राप्तयोर्यण्गुणयोः सवर्णदीर्घः, तस्य च "अतो गुणे" इति तृतीयकक्षाप्राप्तं पररूपं बाधकम्। प्रकृतेऽपि प्रथमकक्षायां "समासस्य" इत्यन्तोदात्तत्वम्, द्वितीयायां पूर्वपदप्रकृतिस्वरत्वम्, तस्य च षचश्चित्त्वसामर्थ्यलभ्यमन्तोदात्तत्वम् उक्तविकल्पश्चेति तृतीयकक्षागतं बाधकद्वयम्। तत्रापवादविप्रतिषेधे परत्वादन्तोदात्तविकल्प एव भविष्यतीति प्रकृतेन षचैव सिद्धेरिति।

तदपि चिन्त्यम्। षचो विधाने तस्य च नित्यत्वे विकल्पस्य चित्स्वरनिर्मुक्तविषयाभावेन विप्रतिषेधायोगात्। समासान्ताभावपक्षे विकल्पस्य सावकाशत्वमित्युक्तौ तु तस्य समासान्तपक्षविषयकत्वे प्रमाणाभावात्समानविषयकत्वाभावेन तदयोगात्। नित्यविधेर्वैकल्पिकविधिविषये प्रवृत्त्यसम्भवात्। तथा च निरवकाशत्वादेव विकल्पसिद्धौ षप्रत्ययविधानं विकल्पस्य सावकाशत्वमाक्षिपत् तत्प्रयोजकतया समासान्तविधेरनित्यत्वं ज्ञापयतीति दिक्।

नन्वत्र कुत्वप्राप्तिरेव नास्ति। लौकिकवैदिकशब्दानामेव व्युत्पाद्यत्वाद् इति चेत् अत्राहुः—

अनेकशक्तेः शब्दस्य शक्त्यवच्छेदेन संज्ञिनि विनियोगान्नित्यत्वाच्च सर्वसंज्ञानां लौकिकत्वादादेच्छब्दस्यानुकरणशब्दत्वाज्जातिशब्दत्वाद्वा शास्त्रप्राप्तिरस्तीति।

लौकिकत्वादादैच्छब्दस्य शास्त्रप्राप्तिरस्तीति सम्बन्धः । तत्र नित्यत्वादिति हेतुः । आदैच्छब्दस्य आकारादौ तद्भिन्ने च साङ्केतिकशक्तेः सत्त्वात् । नन्वेवं संज्ञाविधानवैयर्थ्यम् । अतः शक्त्यवच्छेदेनेति । स च शक्तिसङ्कोचः । इदं पदमेतदर्थं बोधयत्वितीच्छा विशेषबोधकत्वप्रकारकेच्छाविशेष्यत्वमिति यावत् । संज्ञिनि उक्तेच्छायां विशेष्यतासम्बन्धेन विशेषणीभूते बोधे विशेष्यतासम्बन्धेन विशेषणीभूतायां व्यक्तौ विनियोगात् । उक्तसङ्केतज्ञानसहकारेण तद्विषयकशाब्दधीजनकत्वव्यवस्थापनात् । उक्तं च—

व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचित् ।
नित्य एव तु सम्बन्धो डित्थादिषु गवादिवत् ॥
वृद्ध्यादीनां च शास्त्रेऽस्मिन् शक्त्यवच्छेदलक्षणः ।
अकृत्रिमोऽभिसम्बन्धो विशेषणविशेष्यवत् ॥

तथा चात्र शास्त्रे वृद्धिशब्देनादैच एव बोध्या इतिनियमार्थं संज्ञाविधानमित्यर्थः । नित्यत्वादित्युपपादयति— अनेकशक्तेरिति । अनेकास्मिन्ननेका वा शक्तिर्यस्य अर्थगतप्रवृत्तिनिमित्तविशेषानपेक्षतया वक्तृतात्पर्यविषययत्किञ्चिद्व्यक्तिबोधनसमर्थस्य । न च "न कोपधायाः" इति पुंवद्भावनिषेधः । तद्धितवुग्रहणस्य तत्र वक्ष्यमाणत्वात् । अनेकविषया शक्तिर्यस्येति विवरणवाक्यं तु सप्तम्यर्थो विषयत्वमित्यभिप्रायकम् । अवच्छेदकभेदेऽपि लाघवादेकैव शक्तिः । औपाधिकभेदस्योपाधिभेदमात्रे पर्यवसानादित्याद्यः पक्षः । शक्तिभेदपक्षे द्वितीयः । ननु न सन्ति यदृच्छाशब्दा इति ऋलृक्सूत्रे वार्त्तिके व्यवस्थितत्वात्कथमेतत्—

अतः अनुकरणेति । नन्वनुकार्यानुकरणयोरभेदविवक्षायां

सुबनुत्पत्तौ पदत्वाभावात्कुत्वाप्राप्तिः । भेदविवक्षायां तु प्रदेशान्तरप्रयुक्तस्यैवादैच्छब्दस्यात्र प्रत्ययादाकारादीनामग्रहणात्संज्ञित्वानुपपत्तिः—अतः जातिशब्दत्वादिति । ऐकारादिव्यक्तिद्वये ऐजित्यनुगतप्रत्ययादैच्त्वम् ऐकारादिनिष्ठप्रातिस्विकजातिद्वयव्यापकः सामान्यविशेषः । द्रव्यत्वादिवदेतत्स्वीकारेऽपि बाधकाभावादिति । तन्न । देवदत्तीयत्वाद्यनुमापकजातिविशेषैः सह साङ्कर्यात् । गुणगतजातौ तन्न दोष इत्यस्य निर्मूलत्वात् । अनुगतप्रत्ययस्य "आदिरन्त्येन" इत्येतत्सूत्रविहितसंज्ञौपाधिकत्वेनातिरिक्तविषयकत्वाभावाच्च ।

यदपि सिद्धान्ते व्यक्तिविशेषोपहितसत्ताया एव जातित्वस्वीकारादिहापि साऽस्तु । व्यक्तिविशेषाश्च स्वरूपसत्ताऽतद्भेदेनानुगतीकृताः ।

सत्तोपधायकास्तस्यां सर्वे शब्दा व्यवस्थिताः ।

इति हरिवचनादिति, तदपि तथैव । तन्मतेऽपि जातिबाधकानामनुसरणीयत्वात् । कल्पकस्यापेक्षणीयत्वाच्च । न हि तार्किकाणामेव स कुलधर्मः । सौगतैरप्युपगमात् । तदुक्तं कुसुमाञ्जलौ—

जात्योरतद्व्याप्त्योर्वा समाविष्टयोः परापरभाव एवेति । न चानुमापकजातीनां नानात्वस्वीकारपक्षे सङ्करोऽनवकाश इति वाच्यम् । तथाऽप्यतिरिक्तजातिकल्पने मानाभावात् । तस्मादनुकार्यनिष्ठानैत्वादिजातिमेवादाय जातिशब्दत्वम् । ऐत्वादिसामान्यमस्तीति विवरणस्याप्यत्रैव तात्पर्यम् । कुत्वशब्देऽपि कुशब्दस्य तद्वर्गीयवर्णमात्रे संकेतितत्वेन तदुत्तरत्वप्रत्ययस्य कत्वादिजातिपञ्चकं वाच्यम् । प्रकृत्यर्थप्रकारस्य त्वशब्दार्थत्वात् । तथा च प्रकृते केतरासमवेतत्वे सति सकलककारसमवेतत्वरू-

र्थकत्वत्वेन कत्वोपस्थितौ बाधबलाच्चकारे कत्वजातेरापादयितुमशक्यत्वात् स्वाश्रयव्यक्तिद्वारैवाऽऽपत्तिपर्यवसानात् चकारस्य ककार आदेशः कुतो न भवतीति भाष्यार्थः । एवं सर्वत्रावसेयम् ।

स्यादेतत् । शाब्दबोधे प्रथमनिर्दिष्टमुद्देश्यम् परनिर्दिष्टं विधेयमिति सर्वसिद्धम् ।

यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ।
तच्छब्दयोगः पश्चात्त्वं साध्यत्वं च विधेयता ॥

इत्यभियुक्तोक्तेः । तत्कथमत्र आदैजुद्देशेन वृद्धिसंज्ञा विधीयतइति चेत्, उच्यते । आदैच्शब्देन प्रदेशेषु व्यवहाराभावात् तस्य निर्ज्ञातार्थत्वात् वृद्धिशब्दस्य च वैपरीत्यात् उद्देश्यत्वासम्भवात् वृद्धेरेव संज्ञात्वे निर्णीते विपरीतानुपूर्वीकल्पनेन वृद्धिसंज्ञाविधानम् । न चैवं पौरुषेयत्वेन तस्याप्रामाण्यापत्तिः । शास्त्रतात्पर्यविषयत्वस्यैव तत्प्रयोजकत्वात् । अन्यथाऽश्वाभिधानीमादत्तइत्यादेर्गर्दभाभिधान्यादिव्यावृत्तौ प्रामाण्यानापत्तेः । "ङः सि धुट्" इत्यादावुभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति पञ्चम्या कल्पितस्य सप्तम्यन्ते सीतिशब्दे षष्ठ्यन्तत्वस्य तथात्वापत्तेश्च । मङ्गलार्थं चात्र वृद्धिशब्दस्य प्राक्प्रयोगात् । न चाचार्यस्य मिथ्याज्ञानवासनाराहित्येन दुरितसामान्यशून्यत्वात्तद्विशेषविघ्नाभावस्य सुतरां तत्र सत्त्वादलौकिकज्ञानवत्त्वेनास्मदादिवद्विघ्नसन्देहस्याप्यभावाच्च किमर्थं तदिति वाच्यम् । तथाऽपि परमकारुणिकतया सर्वसिद्धशिष्टत्वकस्वाचारविषयत्वेन हेतुना शिष्याणामभिमतकर्मारम्भसमये मङ्गलस्यावश्यकर्त्तव्यत्वानुमितिसिद्ध्यर्थं तेषामेवाऽऽनुषङ्गिकमङ्गलसम्पत्तिनिबन्धनस्वग्रन्थाध्ययनसिद्धिमूलकवैदुष्यवशात्

पूर्वोक्तरीत्याऽनेककर्माधिकारे यजमानस्य ऋत्विक्प्रयुक्तदृष्टादृष्टानेकफलसम्पत्त्यर्थं निष्कामकृतैश्च तैरेव कर्मभिरन्तःकरणशुद्धिद्वारा परमपुरुषार्थापवर्गसिद्ध्यर्थं च तदुपपत्तेः ।

यत्तु "व्यवहाराय नियमः" इतिपक्षे अत्र शास्त्रे वृद्धिशब्देनादैच एव बोध्या इति यथाश्रुतमेव सम्यगिति । तन्न । विधिसमानानुपूर्वीकत्वस्य नियमेऽप्यपेक्षितत्वात् । प्राप्तार्थत्वेन तदितरव्यावृत्तौ तात्पर्यमित्येतावतैव तत्र भेदात् । अन्यथा "अदेङ्गुणः" इत्यादौ विपरीतानुपूर्वीकल्पनापत्तेः । व्रीहीनवहन्तीत्यादावपि व्रीह्युद्देशेनैवावघातस्य विधेयत्वात् ।

यदपि "यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते" इतिपक्षेऽपि कार्यकालपक्षमाश्रित्य "मृजेर्वृद्धिः" आदैचो भवन्तीत्यर्थाद् यथाश्रुतमेव साधु । तत्र च तपरत्वमनुपयुक्तमेव । भाव्यमानत्वेन सवर्णग्राहकत्वाप्रसक्तेः । यथा ज्योतिष्टोमराजसूयादिशब्दानां यागविधावेव सामानाधिकरण्यान्नामधेयत्वावगतिः न तु वाक्यान्तरेण, तथा अस्मिन् पक्षे वृद्ध्यादिशब्दानामपि । "वृद्धिरादैच्" इति तु "इको गुणवृद्धी" इतिवत् पदोपस्थापकम् । उपस्थाप्यस्य संज्ञितया तु संज्ञासूत्रत्वव्यवहारः । न च "वृद्धिर्यस्याचाम्" इत्यादावनुवादे आदैचां सवर्णग्राहकत्वं स्यादिति वाच्यम् । तादृशलक्ष्याभावात् । अनेकशक्तिकल्पनापत्तेश्च । विधिवाक्यस्य प्राधान्यात्तत्र निर्णीतस्यैवार्थस्यान्यत्र ग्रहणाच्चेत्यादि ।

तदपि चिन्त्यम् । ऋकारस्थाने त्रयाणामादेशानां प्रसङ्गात् । अन्यथा विध्यर्थानिष्पत्तेः । अत एव "भाव्यमानत्वादैचो ग्राहका न भविष्यन्ति, नैतदस्ति, नह्यत्र संज्ञाविधावैचो भाव्यन्ते" इति कैयटः । "कार्यकालपक्षाश्रयेण शङ्का, यथोद्देशपक्षेण परिहारः" इति विवरणकृतः । तस्मादत्र यथोद्देशपक्ष एव ग्राह्यः ।

अत्रेदमवधेयम् । वृद्धिशब्दो वृद्धिशब्दवाच्ये लाक्षणिकः । न च तस्य प्रथममनुपस्थितिः । वृद्धिपदं किञ्चिदर्थवाचकमितिज्ञाने कश्चिदर्थो वृद्धिशब्दवाच्योऽस्तीति सामान्यतस्तदुपस्थितिसत्त्वात् । तस्याभेदः संसर्गः । तथा च आदैचो वृद्धिशब्दवाच्याभिन्ना इतिधीः । ततश्चास्यां बुद्धौ वाच्यत्वं यत्र विशेषणं स संज्ञी । वाच्यत्वे यद्विशेषणं सा संज्ञा । "इन्द्रो मरुत्वान्मघवा" इत्यादावप्ययमेव प्रकारः । एकपदशक्तिग्रहस्य प्रकारान्तरेणावश्यमपेक्षितत्वात् । तत्पर्यायमात्रशक्तिज्ञानशून्यस्य कोशादितोऽपि शक्तिग्रहाभावात् ।

यत्तु आकारादयो वृद्धिं प्रत्यभेदसंसर्गेण विशेष्या इति । तन्न । वृद्धिं प्रतीत्यस्य हि कोऽर्थः । वृद्धिशब्दं प्रति वृद्धिशब्दार्थं प्रति इति वा । नाद्यः । लक्षणां विना तदलाभात् । लक्षणां विनैवोपपत्तेरित्युत्तरग्रन्थासङ्गतेश्च । न च वृद्धिशब्दवाच्यं किञ्चिदस्तीतिज्ञाने शब्दस्य विशेषणत्वेनोपास्थित्या तस्य लक्षणां विनाऽपि लाभ इति वाच्यम् । स्वतन्त्रोपस्थितये तदावश्यकत्वात् । अभ्युपेत्यापि ब्रूमः । वृद्धिशब्दस्य विशेषणतायामभेदस्य च संसर्गत्वे आदैचो वृद्धिशब्दाभिन्ना इतिबोधः स्यात् । न चेष्टापत्तिः । अयोग्यत्वात् । न च वाच्यत्वं संसर्गः । समविभक्तिकपदोपस्थाप्ययोर्भेदान्वयासम्भवात् । अत एव न द्वितीयः । न च वृद्धिशब्दवाच्यत्वस्याप्युक्तरीत्योपास्थितिसत्त्वात्तस्यैवाभेदेन विशेषणमस्त्विति वाच्यम् । तस्याप्यर्थविशेषं प्रति विशेषणीभूतत्वात् ।

वस्तुतस्तु शाब्दिकमतेऽपि पदस्यैव प्रकारताऽभ्युपगमाद् वाच्यत्वस्य च संसर्गत्वात् वृद्धिपदजन्यः सामान्यशक्तिग्रहमूलको बोधो वाच्यत्वसंसर्गक एव । तथा च वृद्धिपदजन्यायामुपस्थितौ संसर्गतापन्ने वाच्यत्वे पदार्थानामाकारादीनां कथमन्वयः ।

वाच्यत्वस्य पदजन्योपास्थित्यविषयत्वात् । अन्यथा पर्वतो वह्नि-मान्गुण इत्यपि स्यात् । संसर्गतापन्ने संयोगे गुणस्याभेदान्वयसम्भवात् ।

ननु वृद्धिशब्दस्य आदैज्वाचकताया अनेकशक्तेरितिन्यायेन सत्त्वाद् घटो नील इत्यादिवत्तदर्थस्यैवाभेदसम्बन्धेनादैचोरन्वय इत्युक्तग्रन्थाभिप्राय इतिचेन्, मैवम् । तथा सत्युद्देश्यतावच्छेदकविधेययोरभेदापत्त्या निराकाङ्क्षत्वाद् घटो घट इतिवाक्यवत् । अत एव शब्दाश्रय आकाशमित्यादिवाक्ये आकाशपदं तद्वाच्यपरम् । व्युत्पन्नं प्रति तद्वाक्यानुपयोगादित्युपाध्यायादावुक्तम् ।

यदप्युक्तम् । लक्षणाऽङ्गीकारे विशिष्टविधिपक्षे मत्वर्थलक्षणादोषम् उक्त्वा नामधेयत्वमुद्भिदादिपदानां व्यवस्थापितम् । तन्न स्यात् । नामधेयत्वेऽपि लक्षणायास्तुल्यत्वादिति । तदपि मन्दम् । गुणविधिपक्षे मत्वर्थलक्षणायां गुणांशस्य तद्गतलिङ्गसंख्याकारकादेश्च प्रमाणान्तरानवगतत्वात् तत्सिद्ध्यर्थं विशेषणविधिकल्पनप्रसङ्गात् । नामधेयस्य तु श्रोत्रोपस्थितस्यैव नामार्थत्वाभावाद्वाच्यत्वसम्बन्धेन धात्वर्थयागान्वय इति न तदंशे विधिकल्पनमितिपक्षे शङ्काया एवानवकाशात् ।

नामलक्षणापक्षेऽपि उद्भिच्छब्दस्य तृतीयार्थे वाच्यत्वे तस्य धात्वर्थे यागेऽन्वयकल्पनेऽपि विशेषणविधिकल्पकत्वाभावेन लाघवात् । अन्यथा त्वत्पक्षे सोमेन यजेतेत्यादावपि मत्वर्थलक्षणाऽपेक्षया लक्षणां विनैव नामत्वसिद्धिरिति सोमादिपदमपि नामधेयमेव स्यादिति गुणविधिमात्रोच्छेद इत्यलम् पल्लवितेन ।

वृद्धिपदशक्तिज्ञानस्य चैतन्त्रितयवृत्तितत्तद्धर्मान्यतरप्रका-

कज्ञानत्वं कार्यतावच्छेदकम् । न तु तदन्यतरप्रकारकत्वाभाववद्वृत्तितदन्यतमप्रकारकत्ववज्ज्ञानत्वम् पुष्पवन्तपदस्येव सूर्यत्वप्रकारकत्वाभाववद्वृत्तिचन्द्रत्वप्रकारकत्ववज्ज्ञानत्वम् । तत्र—

एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ ।

इति प्रमाणसत्त्वादत्र च तदभावात् । प्रत्युत "वृद्धिरेचि" इत्यादौ "एकः पूर्वपरयोः" इत्येकस्यैव विधेयत्वावगमात् । "वृद्धिर्यस्याचामादिः" इत्यादेश्च । नह्युक्तवर्णत्रयमव्यवधानेन कस्यचित् पदस्यादौ वर्त्तते । "मालादीनां च" इति विरोधाच्च । अन्यथाऽवृद्धत्वात् पूर्वसूत्रेणैव पूर्वपदप्रकृतिस्वरासिद्धेः । एवमुत्तरत्रापि । इदमेव "प्रत्येकं वाक्यपरिसमाप्तिः" इत्युच्यते । यत्र तु समुदायपर्याप्तशक्तिप्रमाणम्, यथा "उभे अभ्यस्तम्" इति, तत्र नावयवमात्रस्य वाच्यत्वम् । किं त्वेकवर्णविषयकत्वाभाववद्वृत्त्यन्यवर्णविषयकत्ववज्ज्ञानत्वमेव कार्यतावच्छेदकम् । अत एव तत्र उभेग्रहणम् । अन्यथौत्सर्गिकत्वेन मिथोऽनपेक्षयोर्द्वयोरेव तत्संज्ञाप्रसङ्गात् । अतस्तात्पर्यग्राहकप्रमाणान्तरसत्त्वएव समुदाये वाक्यपरिसमाप्तिरिति सिद्धम् ।

प्रकृतमनुसरामः । ननु आदैचां स्वरूपेण वृद्धिसंज्ञा, उत तन्त्रावृत्त्येकशेषाणामन्यतमेन वृद्धिशब्देन ये विहितास्तेषामेव । नाद्यः । सर्वभास इत्यादौ "उत्तरपदवृद्धौ सर्वं च" इति पूर्वपदान्तोदात्तत्वापत्त्या समासान्तोदात्तत्वस्यासिद्धेः । तावती भार्याऽस्य तावद्भार्य इत्यादौ "वृद्धिनिमित्तस्य च तद्धितस्य" इति पुंवद्भावनिषेधापत्तेश्च । "आ सर्वनाम्नः" इत्यात्वं प्रति वतुपो निमित्तत्वात् । नान्त्यः । शालीयो मालीय इत्यादौ "वृद्धाद्" इतिच्छप्रत्ययासिद्धेः । आम्रमयं शालमयमित्यादौ

"नित्यं वृद्धशरादिभ्य" इति मयट्प्रत्ययानुपपत्तेश्च ।

किं च आम्रगुप्तायनिः शालगुप्तायनिः इत्यत्र "उदीचां वृद्धादगोत्राद्" इति वृद्धलक्षणः फिञ् न स्यात् ।

यद्यपि "प्राचामवृद्धात् फिन् बहुलम्" इति फिनाऽपीष्टसिद्धिः । "ञ्नित्यादिर्नित्यम्"इति स्वरेऽपि भेदाभावात् । आम्रगुप्तायनीभार्य इत्यत्र प्रागुक्तसूत्रेण पुंवद्भावनिषेधस्तु नावश्यकः । "जातेश्च" इत्यतोऽपि सिद्धेः । "गोत्रं च चरणैः सह" इति पारिभाषितजातेस्तत्र सत्त्वात् । आम्रगुप्तायनेश्छात्रा इति वृद्धाच्छप्रत्ययविवक्षाया "फक्फिञोरन्यतरस्याम्" इति लुग्विकल्पेन आम्रगुप्तीयाः आम्रगुप्तायनीयाः इति द्वैरूप्यं तु सिद्धान्तेऽपि नेष्टम् । "फक्फिञोः" इत्यत्र यूनीत्यनुवृत्तेः । "शिवादिभ्यः" इत्यणणन्ताद्यास्कशब्दाद् "अणो द्व्यचः" इति फिञ्, यास्कस्यापत्यं युवा यास्कायनिः, तस्यच्छात्रा यास्कीया यास्कायनीयाः इत्येव तत्रोदाहृतत्वादिति फिञो न कश्चिद्विशेषः । तथाऽपि प्राचामुदीचामिति आचार्यविशेषमतगर्भसूत्रस्वारस्यभङ्गात् । "ऋतो भारद्वाजस्य" इतिसूत्रे प्रकारान्तरेण समाधाने अयं तु भारद्वाजः स्वस्मान्मतात्प्रच्यावितो भवतीतिभाष्योक्तेर्मतप्रच्यवस्यापि दूषणत्वात् ।

किं च फिन्पक्षे आम्रगुप्तायनेरपत्यं कुत्सितमित्यर्थे फिञन्तात्सौवीरगोत्रादपत्येऽर्थे छठकौ कुत्सने गम्ये इत्यर्थकेन "फेश्छ च" इतिसूत्रेण छठकोरप्रवृत्तौ आम्रगुप्तायनीयः आम्रगुप्तायनिकः इतिरूपद्वयं न स्यात् । वृद्धादित्यधिकारेण फिञ एव तत्रोपादानात् ।

यमुन्दश्च सुयामा च वार्ष्यायणि फिञः स्मृताः ।

इतिपरिगणनस्य पौरुषेयत्वात् । अन्यथा सौवीरगोत्र-

पदमत्युदाहरणत्वेन तैकायनिः इतिग्रन्थलेखनविरोधात् । उक्तत्रयमध्ये तैकायनिशब्दस्य तत्रापरिगणितत्वात् ।

अपि च आम्रगुप्तायनेरपत्यं युवा "प्राग् दीव्यतोऽण्" तस्य "ण्यक्षत्रियार्षञितो यूनि लुगणिञोः" इति लुकि आम्रगुप्तायनिः पिता आम्रगुप्तायनिः पुत्र इतिरूपद्वयं फिना न स्यात् । ञित्त्वाभावेनोक्तलुगप्रवृत्तेः । अब्राह्मणगोत्रमात्राद्युवप्रत्ययोपसंख्यानस्य च ब्राह्मणगोत्रे प्रवृत्त्यभावात् । एवमेतत्पक्षे "मालादीनां च" इति व्यर्थं स्यात् । अवृद्धमित्येव सिद्धेः । एवं वृद्धिशब्दे तन्त्राद्याश्रयणेऽपि गौरवम् । संज्ञाया विधानं विहितानां च संज्ञेतिपरस्पराश्रयवारणाय सूत्रशाटकवद्भाविसंज्ञाविज्ञानेऽपि गौरवमिति प्राप्ते उच्यते—

आदैचामविशेषेण वृद्धिसंज्ञा । उक्तदोषाप्रवृत्तेः । "उत्तरपदवृद्धौ सर्वं च" इत्यत्रोत्तरपदाधिकारविहिताया एव वृद्धेर्ग्राह्यत्वात् सर्वभासादौ दोषाभावात् । अन्यथा सर्वः कारकः सर्वकारक इत्यादौ वृद्धिशब्देन विहिता या वृद्धिस्तद्वत उत्तरपदस्य सत्त्वादुक्तस्वरापत्तेः । उत्तरपदग्रहणमेव च तदाधिकारविहितवृद्धिग्रहे लिङ्गम् । अन्यथा आदैज्मात्रस्योत्तरपदत्वाभावात्सामर्थ्यादेव वृद्धिमदुत्तरपदलाभे तद्वैयर्थ्यापत्तेः । तस्मात्सर्वपाञ्चाल इत्यादावेव तत्प्रवृत्तिः । "सुसर्वार्द्धाज्जनपदस्य" इति वृद्धेः । तावद्भार्येऽपि नातिप्रसङ्गः । वृद्ध्यात्मकतद्धितस्याभावेनाभेदान्वयानापत्त्या वृद्धितद्धितस्येत्येतावन्मात्रेणापि वृद्धेस्तद्धित इति षष्ठीसमासेन वृद्धिनिमित्तत्वलाभेऽपि निमित्तशब्दोपादानसामर्थ्याद्वृद्धेर्निमित्तं यस्मिन्निति व्यधिकरणबहुव्रीहिमाश्रित्य ञकारणकारककाररूपेत्संज्ञाप्रतियोगित्वसम्बन्धेन वृद्धेर्निमित्तं यत्रास्ति अण् अञ् फक् इत्यादौ तस्यैव तद्धितस्य तत्र पुंवद्भावनिषे-

घ इतिव्याख्यानात् । आकारस्य च स्वरूपतो विधानेऽपि वतुप्रत्ययस्योक्तवृद्धिनिमित्तत्वाभावात् ।

न च अर्शसा भार्याऽस्येत्यत्र मत्वर्थाच्प्रत्ययोत्तरटाबन्ते अर्शसाशब्दे तद्धितस्त्रीप्रत्यययोरेकादेशस्य परं प्रत्यादिवद्भावात्तद्धितग्रहणेनापि ग्रहणात् तत्र वृद्ध्यात्मकस्तद्धितः सम्भवत्येवेति कथं निमित्तशब्दोपादानसामर्थ्यमिति वाच्यम् । तथाऽप्यरक्तेतिपर्युदाससामर्थ्यात्कर्मधारयशङ्काऽनुपपत्तेः । रक्तविकारार्थकप्रत्ययस्य वृद्ध्यात्मकत्वाभावेन तत्र प्रसक्त्यभावात् ।

अन्ये तु वृद्धिशब्देन विहिताया वृद्धेर्यन्निमित्तमिति तस्यार्थः। वृद्धिशब्दे तन्त्राद्याश्रयणात् । तादृशी च ञ्णित्किन्निमित्ता सर्वैव वृद्धिः । न च वैयाकरणभार्यः सौवश्वभार्य इत्यादावतिप्रसङ्गः, अणो यथोक्तवृद्धिनिमित्तत्वादिति वाच्यम् । फलोपहितत्वस्य निमित्तशब्दार्थत्वात् । तत्र च "न य्वाभ्याम्" इति वृद्धिनिषेधात् । न च ऐचौ आदायात्रापि फलोपधानम् । स्वरूपेणैव तयोर्विहितत्वादित्याहुः ।

अपरे तु यावद्वृद्धिजननयोग्यत्वे सति किञ्चित्फलोपहितस्तद्धितो निमित्तशब्देन विवक्षणीयः । वैयाकरणभार्य इत्यादौ तु ऐज्भ्यामणो न फलोपधानम् । वृद्धिनिषेधसन्नियोगशिष्टयोस्तयोरण्निमित्तकत्वे मानाभावात् । निषेधप्रतियोगिवृद्धिनिमित्तकत्वेऽपि ऐजागमं प्रत्यणो निमित्तत्वायोगादित्याहुः ।

तदुभयमपि चिन्त्यम् । योग्यत्वं हि योग्यतावच्छेदकरूपवत्त्वमेव । तच्चात्र शास्त्रमात्रगम्यतया ञित्त्वणित्त्वकित्त्वरूपमेव । फलोपधानमपि तद्रूपेणैव वाच्यम् । फलोपहितनिष्ठान्यथासि-

र्थ्यनिरूपकधर्मावच्छेदेन योग्यताग्रहनियमात् । तथा च वैयाकरणभार्य इत्यत्र कथं नातिप्रसङ्गः । अणो णित्त्वेन प्रकृत्यन्तरे वृद्धिरूपफलोपहितत्वात् । न च यत्प्रकृत्युत्तर या अणादिव्यक्तिः प्रयुज्यते, तत्र फलोपधानं विवक्षितमिति वाच्यम् । यावद्वृद्धिजननयोग्यत्वस्य दुर्ग्रहत्वापत्तेः । न हि दाक्षिरित्यादौ इञादिव्यक्तेः स्वप्रकृतिपुरस्कारेण तद्व्यक्तित्वेन फलोपधानविवक्षायामौपगवादिशब्दगतवृद्धौ तत्स्वरूपयोग्यत्वं ग्रहीतुं शक्यम् । अदन्तभिन्नानां तत्प्रकृतित्वाभावात् । धर्मान्तरेण योग्यत्वं धर्मान्तरेण च फलोपधानमित्यस्य वक्तुमशक्यत्वात् । अत एव विशेष्यभागवैयर्थ्यम् । क्वचित्फलानुपधाने योग्यताया एवाभावात् । एवं च क्वापि पुंवद्भावनिषेधो न स्यात् । ञिदादिप्रत्ययत्रयमध्ये सर्वेषामन्यतमप्रकृतिकत्वनियमाभावात् । अत एव वृद्धिशब्दविहिताया वृद्धेर्निमित्तमित्यपि प्रागुक्तमतं परास्तम् । फलोपधानस्य योग्यतावच्छेदकधर्मावच्छेद्यत्वानियमेन तत्राप्युक्तदोषावतारादिति ।

तस्मादिदमत्र तत्त्वम् । अनिषिद्धवृद्धिप्रकृतिकत्वे सति वृद्धियोग्यत्वं वृद्धिनिमित्तत्वम् । तेन विशेष्यभागेन तावद्भार्ये विशेषणभागेन च वैयाकरणभार्येऽतिप्रसङ्गाभावः । इदं च विशेषणांशानुरोधेन प्रकृतिविशेषोत्तरतादृशतद्धितमात्रसाधारणमिति दिक् ।

इदमप्यत्रावधेयम् । "व्यक्तिः पदार्थो भेदकाश्च गुणाः" इतिदर्शने यद्गुणविशिष्टस्योच्चारणं तदन्यगुणभाजां संज्ञा । नन्वयं प्रसङ्गाद्गुणान्तरयुतानामपि संज्ञार्थं तपरत्वमिति वार्तिकमूलम् । तपरसूत्रस्यात्र पक्षेऽनणामपि ग्राहकत्वमिति विध्यर्थत्वात् । वेदे ह्युदात्ते कर्त्तव्येऽनुदात्तोच्चारणे दृष्टादृष्टदोषदर्शनात्

नियमतो गुणानां भेदकत्वात् ।

भाष्ये तु "एकोऽयमात्मा उदकं नाम तस्य गुणभेदादन्यत्वं भवति, अन्यदिदं शीतमन्यदिदमुष्णम्" इत्युक्तम् । तत्र जलत्वजात्यभिप्रायेणैक्यं न विवक्षितम् । व्यक्तिभेदादेवान्यत्वसंभवे गुणभेदप्रयुक्तभेदोदाहरणत्वानुपपत्तेः । अन्यो घट इत्युक्ते घटान्तरप्रतियोगिकस्यैव भेदस्य बोधात् ।

किं त्वेकभाजनस्थत्वेन तत्तदुपाध्यवच्छिन्नएव तत्र गुणान्तरयोगाद्भेदव्यवहार इत्यर्थ इति कैयटः ।

क्वचिदभेदकत्वपि । मुण्डेन चौर्ये कृते कुन्तालित्वावस्थायामपि चौरोऽयमिति व्यवहारात् । एतच्छास्त्रे तु किं न्याय्यमित्याकाङ्क्षायां सिद्धान्तमाह भाष्यकारः—

अभेदका एव गुणा इति ।

अत एवानङुदात्त इत्यादि सङ्गच्छते । गुणरहितस्योच्चारयितुमशक्यत्वान्नान्तरीयकतयोच्चार्यमाणोऽपि गुणः प्रयत्नविशेषं विना न विवक्ष्यते। अन्यथा ह्युदात्तमेवोच्चारयेत् इति वाक्ये च न तूदात्तग्रहणं कुर्यादिति शेष एवकारस्यार्थ इति केचित् ।

अन्ये तु एकश्रुत्या सूत्रपाठः । अवच्छेदकत्वेनानुपात्तश्च स्वरूपमात्रेण सन्नपि गुणो न भेदकः। अरुणया क्रीणातीत्यादावेव तस्य अवच्छेदकत्वम्, न तु गां दद्यादित्येतावन्मात्रोक्ताविति निर्विवादत्वात् ।

भाष्ये च एवकारस्य "न त्वेकश्रुतिमुच्चार्योदात्तग्रहणं कुर्यात्" इति शेषे तात्पर्यम् । अन्यथा स्पष्टार्थमुदात्तग्रहणं न कुर्यादित्येव ब्रूयात् । हन्त्यादेशस्य वधेः स्थानिवद्भावादनुदात्तत्वादिट्प्रतिषेधे प्राप्ते वध्यादेशे उदात्तनिपातनं करिष्यते । "एकाच उपदेशे" इति सूत्रे एकाज्ग्रहणं च न कर्त्त-

र्थ्यमिति भाष्यासङ्गतेश्च। चतसर्याद्युदात्तनिपातनं करिष्यतइति भाष्यविरोधाच्च ।

एतेन "स्थानेऽन्तरतमः" इतिवचनादादेशस्य यः स्वरः प्राप्तस्तस्मिन्नेवोच्चारणीये उदात्तोच्चारणं यत्नाधिक्याद्विवक्षार्थमिति कैयटकल्पनमपास्तम् । चतुर्शब्दस्य अव्युत्पत्तिपक्षे "त्रः संख्यायाः" इति व्युत्पत्तिपक्षे तु उरन्प्रत्ययान्ततया "ञ्नित्यादिर्नित्यम्" इत्युभयथाऽप्याद्युदात्तत्वात् । अस्थ्यादीनामप्याद्युदात्तत्वाच्छेषनिघातेन इकारस्यानुदात्ततया तदादेशस्यानङोऽप्यनुदात्तत्वस्यैव प्राप्त्या उदात्तोच्चारणं विवक्षार्थं स्यादित्युदात्तग्रहणवैयर्थ्यञ्च । प्रत्युत यत्नाधिक्येऽप्यविवक्षाज्ञापकत्वापत्तिः । एकश्रुत्या सूत्रपाठे तु स्वरविशेषोपादानं विवक्षार्थमेवेत्यदोषः ।

यत्तु कौस्तुभे उदात्तग्रहणस्य स्वशब्दानुपात्तो गुणो न भेदक इति ज्ञाप्यम् उत यत्नविशेषविरहेण तथेति । नाद्यः । निपातनस्वरस्य विवक्षापत्तेः । नान्त्यः । उदात्तोच्चारणस्यैव विवक्षाहेतौ यत्नविशेषे स्थिते मूलशैथिल्येन ज्ञापकानुत्थानात् । स्वोपादानवैयर्थ्यप्रयोजकस्यार्थस्य ज्ञाप्यत्वानुपपत्तेरिति । तदसत् । एकश्रुत्या पाठ इत्यस्यैव ज्ञाप्यत्वात् । उपात्तगुणानां भेदकत्वस्य लोकसिद्धत्वात् । भाष्ये तथैवोक्तत्वाच्च । उपादानं चात्र द्वेधा । स्वरूपेण शब्दविशेषावच्छेदकतया उदात्त इत्यादिशब्दैश्च ।

एतेन वैकल्पिकमेकश्रुत्यमङ्गीकृत्य "पक्षान्तरैरपि परिहारा भवन्ति" इतिन्यायेन तत्राद्युदात्तनिपातनं करिष्यते इत्युक्तम् । इह तु त्रैस्वर्येण सूत्राणां पाठमाश्रित्य स्वरूपेणोपात्तस्य गुणस्य नान्तरीयकत्वाद्विवक्षाप्रसङ्गादुदात्तग्रहणं

ज्ञापकमित्युक्तम् । अतो न पूर्वोत्तरभाष्ययोर्विरोध इत्यपास्तम् । गुणानां भेदकत्वस्याप्यवश्याश्रयणीयत्वात् । एकश्रुत्या सूत्रपाठेनैव प्रकृतभाष्यस्य योज्यत्वात् । अत एव गुणभिन्नानां यवलानां संग्रहाय ग्रहणकशास्त्रेऽणुग्रहणं सङ्गच्छते । अत एवाष्टन आत्वे इदमस्त्यदाद्यत्वे च नानुनासिकः । इदं च सर्वमेकश्रुत्या पाठपक्षं पश्चादुपन्यस्यता कैयटेनैव ध्वनितमित्यास्तां विस्तरः ।

## अदेङ् गुणः २ ।

अकार एकार ओकारश्चाविशेषेण गुणसंज्ञः स्यात् । प्रदेशा विधौ "आद्गुणः" इत्यादयः । अनुवादे "अतो गुणे" इत्यादयः । अन्यत्पूर्ववदूह्यम् ।

## इको गुणवृद्धी ३ ।

गुणवृद्धिशब्दयोर्यत्र विधेयसमर्पकत्वं तत्र स्थानिविशेषानभिधाने इक इति षष्ठ्यन्तं पदं स्थानिसमर्पकमुपस्थितं बोध्यम् ।

इदं च गुणवृद्धिशब्दयोः प्रकृतत्वेऽपि पुनर्गुणवृद्धिग्रहणात् शब्दव्यापाराश्रयेण लभ्यते । अन्यथा इक इत्येव ब्रूयात् ।

यत्तु तथाऽपि "इकस्तौ" इत्येव वक्तव्यम् । वस्तुत इक इत्येव । संपूर्ण पूर्वसूत्रद्वयमनुवर्त्य वृद्धिरित्यादैचौ यत्र विधीयेते गुण इति च अदेङौ तत्र इक इति षष्ठ्यन्तं पदमुपतिष्ठते इति व्याख्यानात् । तत्र च लिङ्गम् "इतोऽत्सर्वनामस्थाने" इत्यत्र इद्ग्रहणम् । अकारस्य स्वरूपेण विधानेऽपि इक्पदोपस्थितौ तद्वैयर्थ्यादिति, तच्चिन्त्यम् । सर्वनाम्नामुत्सर्गतः प्रधानप-

प्रकृत्यपेक्षया परत्वमिति। तस्मात्परिभाषैवेयम्।

एतदुपस्थितौ लिङ्गं च गुणवृद्धिशब्दाभ्यां तद्विधानं स्थान्यन्तरानिर्देशाभावविशिष्टम् न तु गुणवृद्धिपदमात्रम्। "अचो ञ्णिति" इत्यादावतिप्रसङ्गादित्यग्रे निरूपयिष्यामः।

उदाहरणं चेता स्तोता कर्त्ता अचैषीत् अस्तौषीत् अहार्षीत् इति। प्रत्युदाहरणं तु याता ग्लायति उम्भिता इति। अत्र आकारस्य अकारः ऐकारस्य एकारः मकारस्य स्थानसाम्यादोकारश्च गुणो मा भूत्। यद्वार्त्तिकम्—

इग्ग्रहणमात्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थम् इति।

स्यादेतत्। पचतीत्यादौ धात्वकारस्य शपमाश्रित्य "पुगन्तलघूपधस्य" इति, प्रत्ययाकारस्य च "सार्वधातुकार्द्धधातुकयोः" इति तिपमाश्रित्य गुणे कृतेऽपि विशेषाभावः। न च चिकीर्ष अक इतिस्थिते अकारस्य वृद्ध्यापत्तिः। "ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन" इति वार्त्तिकोक्त्या अतो लोपस्य बलवत्त्वात्। सिद्धान्तेऽपि "अचो ञ्णिति" इति वृद्धेर्निर्दिष्टस्थानिकत्वेन उक्तपरिभाषाया अप्रवृत्त्या उक्तरीत्यैव समाधेयत्वात्। अयासीदित्यादौ तु आकारस्य "सिचि वृद्धिः" इति वृद्धावपि न दोषः। "यमरमनमातां सक् च" इति सगिड्भ्यां परत्वेन तद्बाधाच्चेति केचित्।

येननाप्राप्तिन्यायेनापवादत्वात्तद्बाध इत्यन्ये।

याता वातेत्यादौ गुणस्तु गापोष्टकः कित्त्वेन ज्ञापकेनैव वर्णैकदेशानां वर्णग्रहणेन ग्रहणमितिपक्षप्रस्तावोक्तरीत्या निरस्त एव। अन्यथा द्वयोरकारयोः पररूपेणैव सिद्धौ आतोलोपप्रवृत्त्यर्थकित्त्वस्य वैयर्थ्यापत्तेः। अतो लोपेन तु न तत्र निर्वाहः। "अ-

नुदात्तोपदेश" इत्यत उपदेशपदानुवृत्त्या आर्द्धधातुकोपदेशकाले यददन्तं तस्यैव लोपविधानात् । गाधातोस्तु टप्रत्ययोत्पत्तिवेलायामादन्तत्वात् । अन्यथा गत इत्यादौ मकारलोपे कृतेऽदन्तत्वेन लोपापत्तेः ।

अथात्र आभीयत्वेन मलोपादेरसिद्धत्वमाश्रीयेत, तथाऽपि अय पय गतावित्याभ्यां क्विपि अत् पत् इतिरूपं माधवादिसंमतं न सिद्ध्येत् । "लोपो व्योः" इत्यस्य आभीयत्वाभावात् । नचैवं धिवि प्रीणने कृवि हिंसाकरणयोश्चेत्येतयोरिदित्त्वान्नुमागमे "धिन्विकृण्व्योर च" इति वकारस्याकारादेशे उप्रत्यये च कृते अतो लोपो न स्यात्, उप्रत्ययोत्पत्तिवेलायामदन्तत्वाभावादिति वाच्यम् । उप्रत्ययवेलायामेव तत्संनियोगशिष्टतया अस्यापि बुद्ध्यारोहात् इति केचित् ।

यौगपद्येऽपि उप्रत्ययोपदेशवेलायामदन्तत्वं नास्त्येवेत्येतदस्वरसेन निर्देशक्रमात्प्रथममत्वं ततश्चशब्दाकृष्ट उप्रत्यय इत्यन्ये।

तस्मादाकारनिवृत्त्यर्थं नैतत्सूत्रमारभ्यम् ।

नापि ऐज्निवृत्त्यर्थम् । ऐकारोपदेशसामर्थ्यादेव तद्वारणात् । अन्यथा एकारमेवोच्चारयेत् । न चैवमायादेशोऽपि न स्यादिति वाच्यम् । गुणं प्रति ह्यैकारोपदेशः स्ववैयर्थ्यापत्त्या बाधकः आयादेशे तु ऐकार एव निमित्तमिति वैषम्यात् । तदाहुः—

यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यते इति ।

न च ग्लाय् इत्येव पठितुं शक्यम् । त्वया ग्लायते इत्यादौ यकारद्वयापत्तेः । आदन्तत्वाभावे जग्लावित्यादेरसिद्धेश्च । नन्वेवम् "आदेच उपदेशेऽशिति" इत्यात्वमपि बाध्येत ।

एङन्तत्वोपदेशेऽपि आत्वसम्भवेन ऐजुपदेशस्य तन्निमित्तत्वाभा-वात्। शिति प्रत्यये गुणस्य शिद्भिन्ने त्वात्वस्य ऐज्विरोधित्वे तुल्ये ऐजुपदेशेन गुण एव बाध्यते न त्वात्वमिति विनिगन्तुमशक्य-त्वात्। धेट् पानइत्याद्येङन्तेषु आत्वविधेरपि सावकाशत्वा-त्। आत्वविधावेज्ग्रहणस्य तु "मीनातिमिनोतिदीङां ल्यपि च" इत्युत्तरार्थत्वात्। वार्त्तिकमते एजन्तानां दीङादीनामात्वविधा-नस्य घुसंज्ञासूत्रे वक्ष्यमाणत्वात्।

अत्र कैयटादयः। "न ध्याख्या" इतिसूत्रे कृतात्वस्य ध्यायतेर्निर्देश एव आत्वं न बाध्यतइत्यत्र विनिगमक इति।

यत्तु एज्ग्रहणसामर्थ्यादप्यात्वं भवति। न हि तस्योत्तरा-र्थत्वं सङ्गच्छम्। भाष्यमते "मीनाति" इतिसूत्रेण गुणवृद्धिनि-मित्ते प्रत्यये विवक्षिते सत्युपदेशावस्थायामेवात्वं विधीयते न तु गुणवृद्ध्योः कृतयोरितिसिद्धान्तात्। अन्यथा दाय इत्यत्र इका-रान्तत्वाद्धञं बाधित्वा अच् स्याद्, ईषदवदान इत्यादौ "आतो युच्" न स्यात्, अवदाय इति "श्याद्व्यध" इति आदन्तत्वल-क्षणो णश्च न स्यात्। इदं च एङ्निमित्तप्रत्ययविवक्षायां दीङा-दीनामात्वविधानेनापि सिध्यति। न च ञितां णितां च प्रत्य-यानां वृद्धिनिमित्ततया एङ्निमित्तत्वं नास्तीति घञ्णिजादि विवक्षायामात्वं न स्यादिति वाच्यम्। वृद्ध्या गुणबाधे-ऽपि तेषां गुणं प्रति स्वरूपयोग्यत्वानपायात्। एज्विष-ये प्रागेवात्वाभ्युपगमे फलोपधानविवक्षायामसंभवादिति। तन्न। अपवादविषयपरिहारेणैवोत्सर्गप्रवृत्त्या णिजादेरेचं प्रति स्वरूपयोग्यत्वे मानाभावात्। तस्मादैचो न गुण इति सिद्धम्।

नापि व्यञ्जननिवृत्त्यर्थम्। "सप्तम्यां जनेर्डः" इति ड-प्रत्ययस्य डित्करणेन व्यञ्जनस्य गुणो न भवतीतिज्ञापितत्वा-

म् । अन्यथाऽर्द्धमात्रिकव्यञ्जनस्थाने अकारे गुणे मातृके कृते पररूपेण सिद्धौ तद्वैयर्थ्यात् । न च नकारस्य सानुनासिक एवाकारो गुणः स्यादिति वाच्यम् । पर इत्येव सिद्धे रूपग्रहणस्य यद्गुणविशिष्टं परस्य रूपं तादृगेव यथा स्यादित्येतदर्थत्वात् । अत्र भाष्यम्—

डित्करणं न ज्ञापकम् ।

"अन्येभ्योऽपि दृश्यते" इत्यनेन "गमश्च" "अन्तात्यन्ताध्वदूरपार" इतिप्रकरणाधीतेन वार्त्तिकेन गमेरपि डप्रत्ययस्य वाच्यत्वात् । तत्र च गुणस्वीकारे मकारस्य स्थाने ओष्ठस्थानतया ओकारस्य गुणस्यापत्तौ नगोऽग इत्यादीनामसिद्धेः ।

यद्यपि "सप्तम्यां जनेर्डः" इतिप्रकरणादन्यत्रैवायं डप्रत्ययः, तथाऽपि "जनेर्डः" इतिप्रकरणे "अन्येष्वपि दृश्यते इतिसूत्रस्थापिशब्दगर्भित एवार्थो वार्त्तिकेनोक्तो न त्वपूर्वः ।

अस्तु वा तद्वार्त्तिकमेव व्यर्थमिति भाष्याभिप्रायः इति केचित् ।

ननु "गमेर्डोः" इति डोप्रत्ययविधानं मकारस्य ओकारो गुणो न भवतीति ज्ञापकम्, अन्यथा विचैव गुणे कृते गोरूपसिद्धेः, यद्वा इदमेव व्यञ्जनस्य गुणाभावज्ञापकं स्यादितिचेन्, मैवम् । मकारस्थाने सानुनासिकस्य अकारस्य व्यावृत्तये डोप्रत्ययविधेः सार्थक्यात् ।

अथ तथाऽपि "तनोतेर्डउः सन्वच्च" इति डित्करणं ज्ञापकं व्यञ्जनस्य गुणो न भवतीति । अन्यथा नकारस्य गुणेन प्रत्ययाकारेण सह पररूपेण च सिद्धौ तस्य वैयर्थ्यात् ।

किं च स्थानप्रयत्नाभ्यामन्तरतमे चेता अचैषीदित्यादौ

चरितार्था गुणवृद्धिविधयः केवलस्थानकृतान्तर्येण व्यञ्जनादिषु न प्रवर्त्तिष्यन्ते। न चैवं नेता अनैषीदित्यादौ स्थानगुणप्रमाणैस्त्रिभिरान्तरतम्यात्तत्र चारितार्थ्ये, ह्रस्वे तत्प्रवृत्तिर्न स्यादिति वाच्यम्। "सृघस्यदः क्मरच्" इति कित्करणेन प्रमाणत आन्तर्यस्याविवक्षितत्वज्ञापनात्। न च ईहिता ईशितेत्यत्र कण्ठ्यतालव्ययोर्विवृतयोश्च हकारशकारयोः स्थानगुणाभ्यामान्तरतम्याददेतौ स्यातामिति वाच्यम्। ऊष्मणामीषद्विवृततत्वस्य वक्ष्यमाणत्वात्। इकारादीनां विवृतत्वमेव। एकारादीनां विवृततरत्वस्य शिक्षान्तरोक्तत्वेऽपि सूत्रभाष्याद्यसंमतत्वात्। उक्तकित्त्वेन इकारादिषु गुणप्रवृत्त्यनुमानाद्वा। तस्मादात्संध्यक्षरव्यञ्जनानां गुणवृद्ध्योरभावस्योक्तरीत्यैव सिद्धौ सूत्रमेतद्व्यर्थमिति पूर्वपक्षः।

सिद्धान्तस्तु " क्ङिति च " इतिसूत्रे निषेध्याया वृद्धेरिग्लक्षणत्वसंपादनायेदम्। न ह्येतत्परिभाषां विना इग्लक्षणगुणवृद्धिनिषेधः शक्यः। प्रतियोगितावच्छेदकाप्रसिद्धेः। सति त्वस्मिन् इक इतिशब्दमुच्चार्य विहितत्वलक्षणमिग्लक्षणत्वं प्रसिद्ध्यति। तत्रत्यचकारस्य इतिशब्दार्थकतया तदर्थलाभात्। न च तदविशेषितयोरेव तयोः स निषेधोऽस्त्विति वाच्यम्। "नडादिभ्यः "फकि लैगवायन इत्यत्र ओर्गुणस्यापि निषेधापत्तेः। न च विधानसामर्थ्यम्। औपगव इत्यादौ तस्य चरितार्थत्वात्। पौरोहित्यमित्यादौ तु यकि परे "किति च" इति आदिवृद्धिर्भविष्यत्येव। विधानसामर्थ्यात्। निषेधस्य तद्धितभिन्ने किति चरितार्थत्वात्। अत एव इक्स्थानिकगुणनिषेधेनापि न निर्वाहः। उक्तगुणस्य उकारस्थानीयतासत्त्वात्। तस्मान्निषेधे प्रातियोगितावच्छेदकीभूतामिग्लक्षणत्वं तत्प्रसिद्ध्यर्थमिदम्।

गुणवृद्धी पुनः सर्वत्रैव तद्व्यतिरेकेणापि इक्स्थानिके एव पर्यवस्यतः ।

तथा हि । "सार्वधातुकार्द्धधातुकयोः" "जुसि च" इति गुणश्च अलोऽन्त्यपरिभाषया अन्त्यवर्णे प्राप्तौ पूर्वोक्तज्ञापकवशादिक्ष्वेव विश्राम्यतः । " मिदेर्गुणः " " पुगन्तलघूपधस्य च" इत्यादिषु तु स्थान्यपि निर्दिष्ट एव । मिद इर्मिदिस्तस्य गुणः । पुकि अन्तः पुगन्तः । पुकीति विषयसप्तमी । पुकि विवक्षिते सति योऽन्त इत्यर्थः । तेन पुगव्यवाहितपूर्ववर्त्तिन इति पर्यवसितम् । लघ्वी चासावुपधा चेति कर्मधारयः । ततः पुगन्तश्च लघूपधा चेति समाहारद्वन्द्वे क्लीबत्वम् । वापयतीत्यादौ त्वादन्तसन्निपातकृतस्य पुकस्तद्विघातकगुणाप्रवर्त्तकत्वात् । "ऋच्छत्यॄताम् "इत्यत्रापि ऋशब्दऋच्छब्दयोर्द्वन्द्वः, ऋच्छतिशब्दस्य ॠकारेण षष्ठीसमासं कृत्वा पूर्वपदे तत्पुरुषगर्भ उत्तरपदे द्वन्द्वगर्भो द्वन्द्वः ।

यद्वा उक्तरीत्या पूर्वपदे तत्पुरुषगर्भे ॠकारेण ऋच्छशब्देन च त्रिपदो द्वन्द्वः । तेन ऋच्छतेर्ॠकारस्य स्थानित्वलाभः । आरिवानित्यादौ गुणसिद्ध्यर्थमृधातोः संग्रहाय मध्ये चतुर्थोऽपि ऋकारः प्रश्लेष्यः । अन्यथा क्वसोः कित्त्वसामर्थ्याद् गुणो न स्यात् । प्रश्लेषे तु विशिष्य विधानसामर्थ्याद् गुणसिद्धिः । "ऋदृशोऽङि" इत्यत्र "उरङि गुणः"ततो "दृशः" इति पृथग्योगः । उरित्यनुवृत्त्या व्यधिकरणषष्ठ्या च दृशिसंबन्धिन ऋकारस्य गुण इत्यर्थः । "स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः " इत्यत्र योगविभागः । "स्थूलदूरयुवह्रस्वानां यणादिपरम्"इत्येको योगः । "क्षिप्रक्षुद्रयोः पूर्वस्य च गुणः" इति द्वितीयः । युवपर्यन्तानां लकाररेफवकाराणां

स्वोत्तरवर्त्यकारेण सह लोपे "ओर्गुणः" इत्युकारस्य गुणे अ-वादेशे च स्थवीयान् दवीयान् इत्यादि सिद्धम् । यण आदि-र्यणादिः ततः परमिति समासः । तेन क्षिप्रक्षुद्रयोर्यण आदी रेफपूर्वौ पकारदकारौ, ततः परस्य रशब्दस्य लोपस्ताभ्यां पूर्वस्य इकारस्य उकारस्य च गुण इत्यर्थः ।

एवं गुणमात्रमिक्षु विश्रान्तम् । "मृजेर्वृद्धिः" इत्यत्र तु अचः इत्यपकृष्य मृजेः संबन्धिनः अचो वृद्धिः स्यात् । ततो "ञ्णिति" इति । अच इत्यनुवृत्त्या यथान्यासवदेवास्य योग-स्यार्थः । अमार्ट् इत्यादौ अटो वृद्धिस्तु न भवति । लादेशोत्तर-मडितिपक्षे परत्वाद्वृद्धेः प्रवृत्तेः । सकृदेव शास्त्रस्य चरितार्थ-त्वात् । यदा तु लावस्थायामेवाट्, न चैवमध्यैयातामित्यत्र अधि आ इ आतामितिस्थिते "अचि श्नुधातुभ्रुवाम्" इति इयङं बाधित्वा "एरनेकाचः" इति यण् स्यात्, आटो धात्वा-द्यवयवत्वेनानेकाच्त्वादिति वाच्यम्, "एरनेकाचः" इति विभज्य "इणो यण्" इत्यनुवर्त्य अनेकाचश्चेद्यण् तर्हि इण एवेतिनिय-मेन तद्वारणादितिपक्ष आश्रीयते, तदा "क्ङिति च" इति नि-षेधाद् वृद्धेर्लावस्थायां दुर्लभत्वेनान्तरङ्गत्वाद्डागमस्यैवोत्पत्त्या तस्य वृद्धिप्रसङ्गेऽपि "अन्त्यबाधेऽन्त्यसदेशस्य" इति परिभा-षया समाधानसंभवात् ।

तत्प्रत्याख्यानपक्षे तु अङ्गाक्षिप्तेन प्रत्ययेनाज्विशेषणा-त्प्रत्यये परे तद्विधानात् । अव्यवहितप्रत्ययाभावेनैकवर्णव्य-वधानेऽपि ऋकारस्यैव वृद्धिर्न स्वटः । अनेकव्यवधाने प्रवृत्तौ मानाभावात् । "येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रा-माण्यात्" इतिन्यायात् । "सिचि वृद्धिः परस्मैपदेषु" इत्यत्रापि अचिकीर्षीदित्यकारवृद्धिनिषेधार्थं नैतत्सूत्रम् । अल्लोपस्य वि-

प्रतिषेधेन बलवत्त्वस्य उक्तत्वात् । आकारेऽप्युक्तः समाधिः । एजन्तं तु नास्त्येव । अनैमित्तिकस्य आत्वस्य प्रागेव प्रवृत्तेः । रैनौग्लौशब्दानामाचारक्विबन्तानां वृद्धिसत्त्वासत्त्वयोर्न विशेषः ।

न च उदवोढामित्यत्र पूर्वं ढलोपे तत्र ओदन्तत्वाद् वृद्धिप्रसङ्गः । तस्यासिद्धत्वात्पूर्वं हलन्तलक्षणा वृद्धिः, ततो ढलोपः, "असिद्धं बहिरङ्गमन्तरङ्गे" इत्यसिद्धत्वान्न ओदन्तत्वमितिसमाधानात् । न च गोशब्दात्क्विपि अगवीदित्यत्र वृद्धिनिषेधार्थः । "ऋत इद्धातोः" इत्यतोऽनुवृत्तेन धातुना सिजाक्षिप्तस्य धातोरभेदेन विशेषणाद्धातुरेव यो धातुर्न तु कथंचित्प्रातिपदिकमितिव्याख्यानादिति कौस्तुभे ।

माधवस्तु कविविधुपितृशब्दानां क्विपि लुङि अकवायीत् अविधावीत् अपितारीदित्याह ।

तस्यायमाशयः—धातुरेवेत्यस्य कोऽर्थः, प्रत्ययान्तरेऽपि धातुसंज्ञक एव, धातुत्वानिबन्धनप्रत्ययप्रकृतित्वाभाववान्वा । नाद्यः। तत्र हि भेदप्रतियोगितावच्छेदकतया प्रत्ययत्वसाक्षाद्व्याप्यो धर्मो निवेश्यते उत कथञ्चित्प्रत्ययत्वव्याप्यः । न प्रथमः । तिङ्त्वाद्यवच्छिन्नभेदवति कृत्प्रत्ययादौ क्विबन्तस्यापि धातुत्वात् । नान्त्यः । तिप्त्वावच्छिन्नभिन्ने तसादावपि तस्य धातुत्वात्तद्व्यावृत्तेरभावात् । न द्वितीयः । क्विबन्तानां हरतिकरोत्यादीनां स्वादिप्रकृतित्वेन व्यावृत्त्यापत्तेः । न च तुग्विशिष्टानामेव स्वादिप्रकृतित्वमिति वाच्यम् । तावताऽपि धर्मिभेदानुपपादनात् । लू इत्यादिक्विबन्तसमानाकाराणां शुक्लवादीनामप्यलावीदित्यादौ वृद्ध्यनापत्तेश्च । न च प्रातिपदिकत्वानुत्तरधातुसंज्ञाकइति वाच्यम् । "उपदेशे एवानुब-

न्धलोपे कृते ततो धातुसंज्ञा" इतिग्रन्थदर्शनाद्धातुप्रत्ययभिन्नत्वे सत्यर्थवत्त्वोत्तरमेव हुप्रभृतीनामपि धातुसंज्ञत्वात्। अनुबन्धसत्त्वासत्त्वयोस्तत्रकिञ्चित्करत्वात्।

अथौपदेशिकधातुग्रहणार्थं द्वितीयधातुग्रहणमिति नामधातुव्यावृत्तिरितिकैयटोक्त्यनुसारेणोच्यते, तथाऽपि इगन्ते क्विबन्तधातौ सिचि वृद्धिर्वारयितुं न युक्ता। इक्परिभाषारम्भे तस्या इष्टतया तदनारम्भेऽपि तथात्वात्। तादृशस्यैवार्थस्य प्रकारान्तरेण साधनीयत्वात्। तस्मादोकारान्तव्यावृत्त्यर्थमेव यतनीयमितिस्थिते केचित्तावदाहुः—

धातोरितिवद् "ओतः" इत्यप्यनुवर्त्य ओदन्तस्य धातोश्चेद् वृद्धिर्भवति तर्हि धातोरेव धातोर्न तु नामधातोरिति व्याख्येयमिति। तच्चिन्त्यम्। नामधात्वन्यस्य ओदन्तस्य धातोरप्रसिद्धेः। तेपानात्वस्य प्रागेव प्रवृत्तेः। ओदन्तत्वोपलक्षितस्य आकारान्तत्वदशायां वृद्धौ सत्यामसत्यां वा विशेषाभावस्योक्तत्वात्। तस्माद् "नेटि" इत्यत्र नेतियोगं विभज्य "ओतः" इत्यनुवर्त्य ओकारान्तस्य वृद्धिनिषेधः।

यद्वा बहुलग्रहणमनुवर्त्य ओदन्तस्य वृद्ध्यभावो बाहुलकेन साधनीय इत्येव तावद्रमणीयम्। एव हलामपि न सिचि वृद्धिप्रसङ्गः। येननाप्राप्तिन्यायेन हलन्तलक्षणवृद्धेस्तावद्बाधकत्वसम्भवात्। न चैवमकोषीदमोषीदित्यादौ "वदव्रजहलन्तस्याचः" इति वृद्धेः "नेटि" इति निषेधेन निरपवादत्वात् "सिचिवृद्धिः" इतिसूत्रेण हलो वृद्धिप्रसङ्ग इति वाच्यम्। वृद्धिमात्रस्य "नेटि" इति निषेध इत्यभ्युपगमात्। तस्मात् "क्ङिति च" इति निषेधे इग्लक्षणत्वस्य वृद्धिविशेषणत्वलाभार्थमियं परिभाषेति सिद्धम्।

अथ तथाऽपि कृतं छिन्नमित्यादौ "सार्वधातुकार्द्धधातुकयोः" इति पुगन्तोतिगुणस्य च निषेधाय गुणग्रहणमेवास्तु, न तु वृद्धिग्रहणम् । न च मृष्ट इत्यादौ वृद्धिनिषेधाय तस्या इग्लक्षणतां सम्पादयितुं तदिति वाच्यम् । "मृजेरजादौ संक्रमे विभाषा वृद्धिमारभन्ते" इति भाष्योक्त्या "अजादौ क्ङिति वा" इतिवचनस्य "मृजेर्वृद्धिः" इत्येतदुत्तरमावश्यकतया तत्र "अजादौ क्ङिति" इतियोगं विभज्य क्ङिति चेद्भवत्यजादावेवेतिनियमेन तद्व्यावृत्तेः साध्यत्वादितिचेत्, अत्राहुः—

णू स्तुतौ धू विधूनने इति कुटादिपठितयोर्लुङि अनुवीत् अधुवीदितिरूपमिष्टम् । तत्र "गाङ्कुटादिभ्यः" इति ङित्त्वातिदेशेन "क्ङिति च" इति सिचिवृद्धेर्निषेधार्थं तस्या इग्लक्षणत्वसंपादनाय वृद्धिग्रहणमिति ।

स्यादेतत् । अन्तर्भूतसिज्मात्रापेक्षत्वात्सिच्परस्मैपदेत्युभयसापेक्षबहिरङ्गवृद्ध्यपेक्षयाऽन्तरङ्गस्योवङो वृद्धेः प्रागेव प्रवृत्तौ हलन्तत्वाद् "नेटि" इति वृद्धिनिषेधस्सिद्ध एव । न च "सिच्यन्तरङ्गं नास्ति" इतिसिद्धान्तान्नैवमिति वाच्यम् । तस्य निर्युक्तिकत्वात् । न चैवमचैषीदित्यादौ अन्तरङ्गत्वात्सिचि वृद्धिं बाधित्वा गुण एव स्यादिति वाच्यम् । तस्यैव वृद्धिसंभवेनेष्टापत्तेः । पूर्वपक्षे वृद्धेरिक्स्थानिकत्वे नियमाभावात् । उक्तपरिभाषायां वृद्धिग्रहणानुपादानस्यैव प्रक्रान्तत्वात् ।

नन्वस्तौषीदित्यादौ गुणस्य न वृद्धिसंभवः । ओकारान्ते वृद्धिनिषेधस्य स्थापितत्वात् । बाहुलकेनानिगन्तस्य वृद्धिर्नेतिपक्षे तु पूर्वोक्तेऽपि तथैवेतिचेद्, मैवम् । ओतो धातोरेव धातोर्न तु नामधातोरितिपक्षे दोषाभावादिति केचित् ।

तच्चिन्त्यम् । तस्य दूषितत्वात् । न च वृद्ध्यवस्थाया-

मोदन्तो नामधात्वन्यधातुरत्रैव प्रसिद्ध इति वाच्यम् । प्रत्ययोत्पत्तिवेलायां ह्योदन्तत्वमपेक्षितं न तु यदाकदाचित्, अविधावीदित्यादावपि निषेधापत्तेः । तस्यापि विधवतीत्यादौ ओदन्तत्वात् । सिच्यन्तरङ्गस्वीकारे तत्रैव ओदन्तत्वाच्च । न चेष्टापत्तिः । पूर्वोक्तदोषग्रस्तत्वात् । अन्यथा तत्कृतस्य कैयटमाधवयोरविरोधस्याप्यनुपपन्नत्वात् ।

तस्मादेवं व्याख्येयम् । "सिचि" इतियोगं विभज्य "ओत" इति "बहुलम्" इति चानुवर्त्य व्यवस्थितबाहुलकं चाश्रित्य सिचि ओदन्तस्य वृद्धिः स्यात् व्यवस्थितत्वाच्च बाहुलकस्य नामधातौ न भवतीति । एवं चाकवयीत् अकवायीत् इति मतद्वयपुरस्कारेण रूपद्वयदर्शनं सिद्धान्तकौमुद्यां निर्युक्तिकमेव । तदंशे उभयोरप्यैकमत्यस्यैव व्यवस्थापितत्वात् । न चैवम् अविधावीदित्यनुपपत्तितादवस्थ्यम् एतत्पक्षे तत्रापि प्रागेव गुणस्य वाच्यत्वादिति वाच्यम् । स्वाभाविकौदन्तस्यैव निषेधोपगमादिति । अकार्षीदित्यादौ गुणे कृते "वदव्रजहलन्तस्य" इति वृद्धिः ।

न चैवमतारीदित्यादौ गुणे कृते "नेटि" इति हलन्तलक्षणवृद्धिनिषेधात् "अतो हलादेर्लघोः" इति वृद्धिविकल्पापत्तिरिति वाच्यम् । तदपवादभूताया "अतो ल्रान्तस्य" इतिनित्यवृद्धेः सम्भवात् । न च तथाऽपि अलावीदित्यत्र विकल्पापत्तिरेवेति वाच्यम् । "ल्रान्तस्य" इत्यत्र "लोपो व्योः" इति वकारं प्रश्लिष्य तदन्तस्यापि नित्यवृद्धिविधानस्य वाच्यत्वात् । न चैवं मा भवानवीदमवीदित्यादावपि नित्यवृद्ध्यापत्तिरिति वाच्यम् । "ह्म्यन्तक्षण" इतिसूत्रे णिश्विग्रहणमपहाय तत्स्थाने अविमव्योः प्रक्षेपेण निषेधसिद्धेः ।

एतत्पक्षे औनयीदश्वयीदित्यादावन्तरङ्गत्वाद् गुणायादेशयोः कृतयोः यान्तत्वादेव निषेधापत्त्या तत्रेष्टविकल्पासिद्धिरिति वाच्यम् । वकारप्रश्लेषनिबन्धननित्यवृद्धेरेव अविमव्योः प्रक्षेपेण निषेधात् । "अतो हलादेः" इति विकल्पस्य भवेः संभवात् । "मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान्" इतिन्यायात् ।

न चैवमजागरीदित्यत्रापि विकल्पापत्तिः, एकसूत्रोपात्ततया तदंशेऽपि "अतो हलादेः" इत्यस्य बाधायोगादिति वाच्यम् । तत्र बाध्यसामान्यचिन्तया स्वविषयप्राप्तस्य वृद्धिमात्रस्य बाधात् । अगत्या वैषम्यस्य सत्त्वात् । यद्वा "अतो ल्रान्तस्य" इति वृद्धेरेवास्तु निषेधः । न चैवमजागरीदभवीदित्युभयत्रापि "अतो हलादेः" इत्यस्यापत्तिः । तदपवादनित्यवृद्धिनिषेधेऽपि भवतौ उत्सर्गभूतविकल्पप्रवृत्तिः जागर्तौ तु नेति स्वीकारात् । अपवादनिषेधे पुनरुत्सर्गप्रवृत्तेर्लक्ष्यानुरोधेन वैकल्पिकत्वात् । तस्मात्सिच्यप्यन्तरङ्गपरिभाषाप्रवृत्तिस्वीकारादुवङेव । अनुवीदित्यादौ "क्ङिति च" इतिनिषेधप्रवृत्त्यर्थं सिचिवृद्धेरिग्लक्षणत्वसंपादकत्वेनापि नात्र वृद्धिग्रहणसार्थक्यमितिचेत् अत्राहुः—

अतो ल्रान्तस्य इत्यत्र वकारस्य प्रश्लेषे शवधातोरपि नित्यं वृद्धिप्रसंगः । न च तत्र मानाभावः । शवतिर्गतिकर्मा कम्बोजेषु भाष्यते, विकारएनमार्या भाषन्ते इति भाष्यनिरुक्तकृद्भ्यामुक्तत्वात् । न च अविमविवत्तस्यापि तत्र पाठः कार्य इति वाच्यम् । णिश्वीतिद्वयं त्यक्त्वा त्रयप्रक्षेपे गौरवापत्तेरिति दिक् ।

अत्रेदं बोध्यम् । नैतदनुरोधेन "सिच्यन्तरङ्गं नास्ति" इति

स्वीकारो न्याय्यः । वकारप्रश्लेषानभ्युपगमात् । न चालावीदित्यत्र विकल्पापत्तिः । "वदव्रज" इत्यत्र वदअव्रजेति प्रश्लिष्य अवादेशस्यापि वृद्धिविधानस्य व्याख्यातुं शक्यत्वात् । न च धातुसाहचर्याद्धातोरेव अचो ग्रहणं स्यादिति वाच्यम् । "द्विस्त्रिचतुर्" इतिसूत्रे कृत्वोऽर्थग्रहणेन साहचर्यस्य सर्वत्रानियामकत्वस्य ज्ञापितत्वात् । "नेटि" इतिनिषेधस्य च हलन्तलक्षणवृद्धिमात्रप्रतियोगिकत्वस्य सर्वसिद्धत्वात् । एतेन अविधावीदित्यादावपि नित्यवृद्ध्या प्रागुक्तग्रन्थमतविरोधोऽपि निरसितुं शक्यः । एवं च "ह्म्यन्तक्षण" इति सूत्रे णिश्विग्रहणं न कर्त्तव्यमेव । सुतरां तत्स्थाने अविमव्योः प्रक्षेपः । प्रागेव तु शवतेः, प्रयोजनाभावात् । गुणे कृते यान्तत्वेनैव णिश्व्योर्निषेधसिद्धेः । अव्यादिप्रक्षेपस्य च वकारप्रश्लेषकृतातिप्रसङ्गवारणमात्रमूलकत्वेन तत्परित्यागे मूलोच्छेदेनैव छिन्नत्वात् । एवं च तत्रत्यम् अंशभेदेन बाध्यसामान्यविशेषचिन्ताश्रयणवैषम्यमपि नापद्यते ।

यदपि कैयटादयः । चिरि जिरि इति हिंसायां स्वादौ पठ्येते । ताभ्यां सिचि अचिरायीदजिरायीदितीष्टम् । एवं चिनोतेर्नयतेश्च यङ्लुगन्तात्सिचि अचेचायीदनेनायीदिति । सिच्यन्तरङ्गस्वीकारे तु गुणायादेशाभ्यां यान्तत्वापत्त्या "ह्म्यन्तक्षण "इति वृद्धिनिषेधे अचिरयीदित्यादिकमेव स्यादतः सिज्विषयेऽन्तरङ्गपरिभाषा न प्रवर्त्ततइत्यावश्यकमिति ।

तदपि चिन्त्यम् । हकारमकारसाहचर्येण यकारस्याप्यौपदशिकस्यैव ग्रहणेन अयादेशे तन्निषेधो न प्रवर्त्ततइति कल्पयितुं शक्यत्वात् । णिश्विग्रहणं च तत्सूत्रे स्थाप्यतएव । तदेव च औपदेशिकयकारान्तस्यैव निषेध इत्यत्र ज्ञापकम् ।

अन्यथा गुणायादेशयोः कृतयोः यान्तत्वादेव निषेधसिद्धौ तद्वैयर्थ्यापत्तेः । एवं च साहचर्यस्य नियामकत्वं न सार्वत्रिकमित्यादि कुचोद्यमप्यनवकाशम् । एवं च णिश्विग्रहणस्य "सिच्यन्तरङ्गं नास्ति" इत्यत्र ज्ञापकत्वेनोपन्यासोऽप्यनुपपन्नः । अस्मद्रीत्याऽपि तद्वैयर्थ्याभावात् ।

एतेनोक्तलिङ्गोपष्टम्भेनैव "सत्यपि संभवे बाधनं भवति" इतिन्यायमाश्रित्य अन्तरङ्गं वृद्ध्या बाध्यते । अन्यथा तक्रेण दधि न बाध्येत । श्नमकजादिभिश्च शप्कप्रत्ययादयो न बाध्येरन् । "मिदचोऽन्त्यात्परः" इति श्नमो धातोरन्त्यादचः शपश्च प्रकृत्यवयवमात्रात्परत्र संभवात् । अकचश्च टिमध्यगतत्वेन कप्रत्ययस्य च तद्बहिर्भावेन देशभेदसत्त्वात् । न च मध्येऽपवादन्यायेन उवङेव वृद्ध्या बाध्येत न तु गुणः तस्य पश्चात्पठितत्वादिति वाच्यम् । बाध्यसामान्यचिन्तायां स्वविषयप्राप्तस्यापवादाभिन्नस्य सर्वस्य बाधाभ्युपगमात् । अन्यथा "अचि र ऋतः" इति तिसृचतसृ इत्यनयोर्ऋकारस्य रेफादेशः प्रथमयोः पूर्वसवर्णदीर्घमुत्वं च बाधेत, न तु "ऋतो ङिसर्वनामस्थानयोः" इतिगुणम् । परपाठितत्वात् । बाध्यसामान्यविशेषचिन्ते च लक्ष्यानुरोधाद्व्यवतिष्ठेते इत्यादिकमप्यपास्तम् ।

प्रकृते कल्पकस्यान्यथैवोपपादितत्वात्कल्पनाया मूलोच्छेदलक्षणबाधग्रस्तत्वात् । यदपि भगवद्भिर्भाष्यकारचरणैरुक्तम् ।

यच्च करोत्यकारग्रहणं लघोरिति कृतेऽपि इति ।

तस्यायमाशयः । "अतो हलादेर्लघोः" इत्यत्र अद्ग्रहणं तावन्न संध्यक्षरव्यावृत्त्यर्थम्, लघोरित्यत एव सिद्धेः । इकारोकारऋकारास्त्ववशिष्यन्ते अचेतीत् अमोषीत् अनर्त्ती-

दित्यादौ ।

यदि तु सिच्यन्तरङ्गं स्यात्तर्हि अन्तरङ्गत्वेनैव गुणसिद्धौ तत्र वृद्ध्यप्रवृत्त्यर्थम् "अत "इति व्यर्थं स्यात् । पारिशेष्यादेव तस्याकारमात्रविषयकत्वसिद्धेः । तत्रापीदं चिन्त्यम् । अकुटीदपुटीदित्यादौ "गाङ्कुटादिभ्यः "इति ङित्त्वेन गुणस्याप्रवृत्त्या तत्र वृद्धिर्मा भूदिति अद्ग्रहणं सार्थकमेव । न च तत्र वृद्धिरपि ङित्त्वेनैव न भविष्यतीति वाच्यम् । "लघोः" इति निर्दिष्टस्थानिकतया इग्लक्षणत्वाभावेन तदप्रवृत्तेः ।

यत्तु वृद्धावन्तरङ्गेण गुणेन बाधितायां ङित्त्वेन गुणबाधेऽपि न वृद्धेः प्रवृत्तिः । न हि देवदत्तस्य हन्तरि हते देवदत्तस्य पुनरुन्मज्जनं भवतीति न्यायादिति । तन्न । यदि अकारसार्थक्ये आग्रहस्तर्हि अपवादनिषेधे पुनरुत्सर्गस्य प्रवृत्तिरित्याश्रीयताम् । अन्यथा तु तत्परित्यागेऽपि क्षतिविरहात् । अत एव "वदव्रज" इत्यत्रास्मत्पक्षे वकारप्रश्लेषाधिक्यमपि न दोषावहम् । वृद्धिग्रहणस्य त्यागेन लाघवात् । "नान्तःपादम्" इत्यत्र तु सुजातएश्वमूनृते इत्येतत्सिद्ध्यर्थं पूर्वरूपे निषिद्धे अयादीनामप्रवृत्तिरित्युक्तम् । अत्र त्वचिरायीदित्यादीनां फलानामन्यथैव साधितत्वेन वैषम्यात् । फलव्यतिरेकेणापि शब्दसार्थक्यमात्राय यत्किञ्चिदर्थज्ञापनोक्तेश्चानुचितत्वादित्यलमतिप्रसङ्गेन ।

तस्मादिह वृद्धिग्रहणं नोपयुज्यतएवेतिस्थितम् । इदं तु गुणग्रहणसाधारण्येन ।

वस्तुतस्तु सिद्धान्ते यथा तथाऽस्तु । इक्परिभाषायां वृद्धिग्रहणानुपादानपक्षे तु इग्लक्षणवृद्धेरप्रसिद्ध्या अकुटीदित्यादौ वृद्धिवारणायैवात इत्यस्य सार्थक्यम् । पूर्वपक्षे वृद्धिमात्रस्यैव

निषेध्यत्वात् । हलादेरित्यस्य च कुटादिभिन्नस्थले सावकाशत्वादित्यलमातिप्रसङ्गेन ।

इदं तु गुणग्रहणसाधारण्येन वाच्यम् । उक्तरीत्याऽनेककुसृष्टिकल्पनया गुणवृद्ध्योरिक्स्थानिकत्वसिद्धावपि तदपेक्षया "इको गुणवृद्धी" इत्येवाश्रयितुमर्हम् । "सेयं महतो वंशस्तम्बाल्लट्वाऽनुकृष्यते" इतिन्यायसाम्यादिति सूत्राद्यभिप्रायः ।

परमप्रकृतमनुसरामः । शब्दव्यापाराश्रयणं किम् । द्यौः पन्थाः इममित्यादौ "दिव औत्" "पथिमथ्यृभुक्षामात्" "त्यदादीनामः" इत्यौत्वमात्वमत्वं च अलोऽन्त्यपरिभाषया अन्त्यस्यैव यथा स्यादिति ।

यत्तु भाष्ये स इममित्युदाहृतम्, तत्र स इमं मन्त्रमपश्यदितिब्राह्मणवाक्यावयवत्वेन स इत्यंशः संपातायातः । न तूदाहरणप्रविष्टः । तच्छब्दे इकोऽसंभवान्नियमप्रवृत्तिशङ्काऽनुत्थानादिति केचित् ।

अन्ये तु "त्यदादीनामः" इत्यत्र इक इत्यस्योपस्थितौ द्विशब्दे इदंशब्दे च अत्वं स्यान्न त्वन्येषाम् । गणनिर्देशस्य "तदोः सः सौ" इत्यत्रानुवृत्त्यर्थत्वसंभवात्स इत्यप्युदाहरणमेवेत्याहुः ।

वस्तुतस्तु तथा सति "इदमो मः" इतिसूत्रं व्यर्थं स्यात् । तस्य मकारस्थाने त्यदाद्यत्वबाधमात्रार्थत्वात् । उक्तरीत्या च मकारेऽत्वप्रसक्तिविरहात् । एवम् "इदोऽय् पुंसि" इत्यपि व्यर्थम् । इकारस्य त्यदादित्वादत्वे दो य् पुंसि इति विधानादेव सिद्धेः । द्विशब्दमात्रार्थत्वे तु अलोऽन्त्यपरिभाषयैव गतार्थत्वम् ।

अस्यां च परिभाषायां तच्छेषतदपवादपक्षौ पूर्वपक्षतया

संभाव्येते पदोपस्थितिपक्षस्तु सिद्धान्त इति । तत्राद्यो यथा "सार्वधातुकार्द्धधातुकयोः" इत्यत्र अङ्गगुणशब्दयोरनुवृत्त्या अङ्गस्येति षष्ठीनिर्देशाल्लिङ्गादलोऽन्त्यपरिभाषा गुणपदाच्च इक्-परिभाषोपतिष्ठते। तत्र इक्पदमङ्गस्य विशेषणम् इगन्तस्याङ्गस्य गुणो भवतीति। स च भवन् "अलोऽन्त्यस्य" इत्यनयाऽन्त्यस्य भवतीति। तदाऽलोऽन्त्यपरिभाषा अस्याः शेषः।

अथ त्वङ्गस्येतिषष्ठी अलोऽन्त्यपरिभाषया अन्त्ये अलि स्थापिता, अङ्गान्त्यस्य गुण इति, पश्चादिका अन्त्यो विशेष्यते अङ्गान्त्यस्य इको गुणः स्यादिति, तदा इयमेव तस्याः शेषः। सोऽयं तच्छेषपक्षः।

तत्पदम् अलोऽन्त्यपरिभाषापरमिति पक्षद्वयसंग्रहः। बहुव्रीहितत्पुरुषाभ्यामुभयपरत्वात्। तत्प्रवृत्त्युत्तरप्रवृत्तिकत्वं तच्छेषत्वमुभयसाधारणं बोध्यम्। एतेनोक्तपरिभाषाद्वयैकवाक्यत्वस्य तच्छेषशब्दार्थत्वे राजकीयमित्यादौ अलोऽन्त्यपरिभाषाप्रवृत्त्यनापत्तिः, भिन्नदेशयोः परस्परनिराकाङ्क्षयोर्विध्युपकारकयोरेकवाक्यताऽनुपपत्तिश्चेत्यपास्तम्। द्वयोरेकविधौ प्रवृत्तिसंभवे तदितरपरिष्कृतविधिपरिष्कारकत्वस्य विवक्षितत्वात्।

अथ गुणवृद्धिविधौ अङ्गस्येति न स्थानषष्ठी, किं त्विक इत्यपेक्षयाऽवयवषष्ठी, अङ्गावयवस्य इक इति, तदा स्थानषष्ठीरूपलिङ्गाभावादलोऽन्त्यपरिभाषा नोपतिष्ठते। ततश्चाङ्गावयवस्य यत्र तत्र स्थितस्य इको गुणवृद्धी स्त इति तदपवादपक्षः। न हि वस्तुतः शास्त्रेण प्राप्तस्य बाधसंभवः, किं तु बाधकत्वाभिमतशास्त्रेण बाध्यत्वाभिमतशास्त्रस्य स्वविषये प्राप्त्यभाव एव ग्राह्यते असत्यस्मिन्नत्रापि तत्प्रवर्त्तेतेति। उत्सर्गस्य स्वविषयाविषयकत्वकल्पनमेव बाध इति सर्वसिद्धान्तः।

समुच्चयस्तु न संभवति, अन्त्यस्य इकश्च द्वयोरपि गुणः परिभाषाद्वयप्रामाण्यात्, तथा च "मिदेर्गुणः" इत्यत्र अन्त्यस्य इकश्च द्वयोरपि गुण इति । अङ्गस्येति सकृदुच्चरितषष्ठ्याः स्थानेयोगावयवयोगरूपार्थद्वयबोधनासंभवात् । स्थानेयोगव्यतिरेकेण च लिङ्गाभावादलोऽन्त्यपरिभाषाऽनुपस्थानात् । आवृत्त्यादौ च प्रमाणाभावात् ।

अत एव मिदेरन्त्यस्य इको वा गुण इति विकल्पोऽप्यनुपपन्न इत्याशयेन भाष्ये नैतावाशङ्कितौ । तत्राद्ये "मिदेर्गुणः" इत्यादौ दोषः । अन्त्यस्य इक्त्वाभावात् इकश्चान्त्यत्वाभावात् । ततश्च भवतीत्यादौ परिभाषाद्वयस्य सावकाशत्वादत्र विनिगमकाभावादुभयपरित्यागे गुणस्य सर्वादेशत्वापत्तिः । यद्वार्त्तिकम्—

वृद्धिगुणावलोऽन्त्यस्येतिचेन्मिदिमृजिपुगन्तलघूपधच्छिर्दिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणं कर्त्तव्यम् । सर्वादेशप्रसङ्गश्चानिगन्तस्येति ।

उक्तस्थलेषु सर्वादेशप्रसङ्गात्तत्तत्स्थलेषु इग्ग्रहणं कर्त्तव्यम् । चकारस्य हेत्वर्थकत्वात् ।

यदि त्वत्रपूर्वोक्तकुकल्पनाऽनुसारेण सर्वत्र इकां स्थानित्वं परिशेष्येत, तदा प्रतिपत्तावत्यन्तं गौरवम् । भिन्नमित्यादौ इग्लक्षणत्वाभावाद्गुणनिषेधानापत्तिश्च ।

यदि तु क्ङोः कित्त्वाज्ज्ञापकादिग्लक्षणत्वाभावेऽपि लघूपधलक्षणस्य निषेधः, न तु गुणमात्रस्य, अतो लैगवायन इत्यादौ गुणस्य न निषेध इति कल्प्यते, तर्हि तदपेक्षया लाघवात्पदोपस्थितिपक्ष एव स्वीक्रियताम् । तदपवादपक्षेऽपि अजुहवुरित्यादिवत् अनेनिजुः पर्यवेविषुरित्यादावपि "जुसि च" इति गुणः स्यात् । भवतीत्यादिवदौहितेत्यादावपि "सार्वधा-

तुकार्द्धधातुकयोः" इति गुणः स्यात् । अग्ने इतिवदग्निचिदित्या-दावपि "ह्रस्वस्य गुणः" इति संबुद्धिगुणः स्यात् । अग्नय इति-वदग्निचित इत्यादावपि "जसि च" इति गुणः स्यात् । कर्त्तरीति-वत्सुकृतीत्यादावपि "ऋतो ङिसर्वनामस्थानयोः" इति गुणः स्यात् । अग्नये इतिवदग्निचिते इत्यादावपि "घेर्ङिति" इति गुणः स्यात् । बाभ्रव्य इतिवत्सौश्रुत इत्यादावपि "ओर्गुणः" इति गुणश्च स्यात् । तथा च वार्त्तिकम्–

इङ्मात्रस्येतिचेज्जुसिसार्वधातुकार्द्धधातुकह्रस्वाद्योर्गुणेषु अ-नन्त्यप्रतिषेध इति ।

ह्रस्वादीति तद्गुणसंविज्ञानो बहुव्रीहिः । आदिपदं "जसि च" इत्यादिगुणत्रयपरम् । तथा च तदपवादपक्षे उक्तातिप्रसङ्गवारणायानन्त्यस्येको गुणो न भवतीति वचनान्तरं कल्प्यं स्यादिति गौरवमित्यर्थः ।

ननु सम्बुद्धिजसिगुणयोः "ऋतो ङि" इति गुणस्य च ह्रस्वस्येति ऋत इति च निर्दिष्टस्थानिकत्वात्कथमिक्परिभाषोपस्थितिः । अग्निचिते इत्यत्र च चिच्छब्दस्य घिसंज्ञाविरहादेव नातिप्रसङ्ग इतिचेत् अत्राहुः–

आद्ययोर्ह्रस्वेनेग्विशेषणात् । न चात्र परिभाषोपस्थानमेव दुर्लभम्, तस्या अनियमप्रसङ्गे नियमार्थत्वात्, अकारस्य गुणप्रवृत्तावपि वर्णान्तरापत्त्यभावेन क्षतिविरहादिति वाच्यम् । ह्रस्वस्याङ्गे विशेषणतया तस्य चावयवावयविभावसम्बन्धेन इग्विशेषणतया ह्रस्वान्तं यदङ्गं तदवयवस्य इको गुणः स्यादिति तदा सूत्रार्थः स्यात् । ततश्चाग्निचिदित्यादौ ह्रस्वान्तत्वाभावात् । अतिप्रसङ्गाभावेऽपि उपगोरित्यादौ उकारादेरपि गुणः स्यात् ।

यद्वा ह्रस्वाङ्गयोर्विशेषणविशेष्यभावनिरासार्थमङ्गपदोत्तरषष्ठ्याः स्थानेयोगत्वबाधनायानन्त्यस्यापि गुणसिद्ध्यर्थमिक्परिभाषोपस्थितिः स्यात् । तथा च अङ्गं ह्रस्वं च इक एव विशेषणम् । आद्यस्यावयवत्वमन्त्यस्याभेदः संसर्ग इतिविशेषः । ततश्चाङ्गावयवस्य ह्रस्वाभिन्नस्य इको गुणः स्यादित्यर्थः । तथा च "ह्रस्वस्य" "जसि च" इत्युभयोरातिप्रसङ्गः सुघटः । एवम् "ऋतो ङि" इत्यत्र अङ्गावयवस्य ऋदभिन्नस्येति । "ओर्गुणः" इत्यत्र अङ्गावयवस्य उकाराभिन्नस्य इक इत्यर्थः । अग्निचिते इत्यादौ तु वर्णनिष्ठैव घिसंज्ञा न तु पदनिष्ठेतिपक्षे "घेर्ङिति" इत्यस्यातिप्रसङ्ग इति ।

नन्वङ्गावयवस्य इको गुण इतिपक्षे भेत्तेत्यादावपि गुणे सिद्धे "पुगन्तलघूपधस्य"इति नियमार्थम्, तथा च ईहितेत्यादौ न दोष इति चेत्, अत्राहुः—

यदि सार्वधातुकार्द्धधातुकयोर्लघूपधस्यैवेतिनियमः, तर्हि "ह्रस्वस्य गुणः "ओर्गुणः" इत्यत्र अतिप्रसङ्गदोष एव । न हि तत्र गुणः सार्वधातुकादिनिमित्तः ।

अथ लघूपधस्य सार्वधातुकार्द्धधातुकयोरेवेति, तर्हि ईहितेत्यादौ दोष एव । न ह्यत्र गुणो लघूपधस्य । न च नियमद्वयेन निस्तारः । एकस्मिन्वाक्ये तदलाभात् ।

अथावृत्त्यादिकमाश्रीयते, तथाऽप्यनेनिजुरित्यत्रातिप्रसङ्गः । लघूपधाङ्गस्य सार्वधातुकस्य च तत्र सत्त्वात् । हे बुद्धे बुद्धयः पिचव्य बुद्धये इत्यादीनां लघूपधत्वाभावात् तत्रातिप्रसङ्गस्य सर्वथैव दुर्वारत्वाच्चेति कैयटः । तस्मात्तदपवादपक्षो दुष्ट एवेति स्थितम् ।

अत्र वदन्ति—अङ्गाक्षिप्तेन प्रत्ययेन अङ्गमेव विशेष्यतइति

उक्तदोषप्रसङ्गः ।

यदि तु प्रत्ययेन श्रूयमाणेन जुसादिना च इग्विशेष्यते यथाश्रुति प्रत्ययपरस्य जुसादिपरस्य च इको गुणः स्यादिति, एवं ङिसर्वनामस्थानपरस्य ऋदन्ताङ्गावयवस्येक इत्यादि, तदा न कोऽपि दोष इति, तच्चिन्त्यम् । अङ्गप्रत्यययोः परस्परमुत्थिताकाङ्क्षत्वात् । न च अङ्गस्य इग्विशेषणतापन्नत्वेन तदन्वयापेक्षया प्रत्ययस्य विशेष्ये इक्येवान्वय उचित इति वाच्यम् । विशिष्टस्य वैशिष्ट्यमित्यन्वयात्, सर्वनामस्थानपरं यदृदन्तमङ्गं तदवयवस्य इक इति । अन्यथा रक्तत्वादेरपि दण्डाद्यन्वयानापत्तेः । स्वसमवायिसंयोगेन पुरुषएवान्वयापत्तेः ।

अथ लक्ष्यानुरोधेन आकाङ्क्षां कल्पयित्वा इगन्वयः कल्प्येत, तथाऽपि पदोपस्थितिपक्षेण सह तारतम्यविचारदशायां गौरवस्य दुर्वारत्वात् । कथंचिदुपपत्तिमात्रस्याकिञ्चित्करत्वात् । प्रतिपक्षापेक्षलाघवस्यैव पक्षव्यवस्थापकत्वाच्च । एतेन मिद इः मिदिरित्यादिकल्पनाभिप्रायेण तच्छेषपक्षोपपत्तिकथनमप्यपास्तम् ।

अथास्तु पूर्वविप्रतिषेधेनालोऽन्त्यपरिभाषाबाधिकेयमिक्परिभाषेति क्रोष्ट्रीयाचार्यसंमतः पक्षः । न च विषयान्तरे लब्धावकाशयोरेव द्वयोर्विप्रतिषेधः, इक्परिभाषा त्वनवकाशा, अलोऽन्त्यपरिभाषानिर्मुक्तविषयाभावादिति न तत्सम्भव इति वाच्यम् । रामेभ्य इत्यत्र एकस्य स्थानिन आदेशद्वयस्येव मेद्यत इत्यत्र द्वयोः स्थानिनोरेकस्यादेशस्याप्यसम्भवादसम्भवमात्रस्यापि विप्रतिषेधपदार्थत्वादिति, तन्न । परिभाषाद्वयेन इकारदकारयोर्भिन्नविषयावच्छेदेन प्राप्त्या अस्ति च सम्भवो यदुभयं स्यादितिपक्षे तच्छेषादिपक्षाविशेषात् । सत्यपि सम्भवे

साधनं भवतीतिपक्षे तु एतत्परिभाषाऽनारम्भे "अलोऽन्त्यस्य" इति दकारस्यैव गुणः स्याद् । अतो येननाप्राप्तिन्यायेन तदपवादत्वमेवेति उत्सर्गापवादयोः विप्रतिषेधासम्भवात् । अप्रसिद्धविप्रतिषेधपदार्थकल्पनाया अनुचितत्वाच्चेति ।

तस्मात्पदोपस्थितिपक्ष एव श्रेयान् ।

इक इतिपदस्य "जुसि च" इत्यादावुपस्थाने पदैक्यवाक्यतया तदन्वयोऽन्तरङ्गः । अलोऽन्त्यपरिभाषा तु विधाववान्तरवाक्यार्थबोधोत्तरं वाक्यैकवाक्यतया तत्र सम्बध्यतइति तदन्वयो बहिरङ्गः । अवान्तरवाक्यार्थबोधं विना स्थानषष्ठीत्वानिर्णयाभावादित्याहुः ।

तच्चिन्त्यम् । विधिवाक्येष्ववान्तरवाक्यार्थबोधाभावे इक्परिभाषोपस्थितेरपि दुर्घटत्वात् । गुणादिपदमात्रस्य तदुपस्थापकत्वे स्थानिविशेषानिर्देशस्थलेऽपि प्रवृत्त्यापत्तेः । अङ्गस्य गुणः स्यादित्यवान्तरवाक्यार्थबोधेऽङ्गगुणयोरुद्देश्यविधेयभावावगतौ सत्यामेव तत्प्रवृत्तेः । न च तथाऽपि तद्दोषतादवस्थ्यम् । स्थानिविशेषस्योपलक्षितत्वात् । न चैवं "सार्वधातुकार्द्धधातुकयो" इत्यादावङ्गस्येतिस्थानिनिर्देशादिक्परिभाषोपस्थित्यनुपपत्तिः । स्थान्यन्तरजिज्ञासानुत्थापकस्थानिनिर्देशाभावस्य विवक्षितत्वात् । नचैवं गुणपदादिक्परिभाषोपस्थितिरितिग्रन्थविरोधः । विशिष्टस्यैव तेनाभिमतत्वात् । अत एव गुणवृद्धिपदाभ्यां यत्र गुणवृद्धी विधीयेते इति व्याचख्युः ।

एतेनानुवादे परिभाषाऽनुपस्थानादेव " वृद्धिर्यस्य " इत्यादावनुवादे इक्पदानुपस्थितिसम्भवात् फलितार्थकथनमात्र तादित्यपास्तम् । विधेयत्वाक्षिप्तस्य उक्ताभावस्य लिङ्गताऽवच्छेदकतया लिङ्गकोटौ प्रवेश इति

तदभिप्रायात् । तस्मात्प्रथममवान्तरवाक्यार्थबोधः । तत इक्परिभाषोपस्थितिः । तत इक्पदैकवाक्यतया महावाक्यार्थबोधः । तत्र तु प्रथमं विधिवाक्यार्थबोधः । ततः स्थानषष्ठ्या अलोऽन्त्यपरिभाषोपस्थितिः । ततो विधिवाक्ये श्रुतायाः स्थानषष्ठ्या अन्त्ये अलि उपसंहारः । न तु शाब्दमेकवाक्यत्वम् । तथा चावान्तरवाक्यार्थबोध उभयोरप्युपजीव्यः ।

नन्वेवम् " मिदेर्गुणः " इत्यादौ इक्परिभाषाया एव बहिरङ्गत्वापत्त्या अलोऽन्त्यपरिभाषाया एवोपस्थितिः स्यात्, सत्यम् । स्थानत्वस्यादेशनिरूपिततया तत्रापि विधेयविशेषस्य लिङ्गान्तर्भावावश्यकत्वात् । आदेशविशेषानवगाहिनः स्थानत्वप्रत्ययस्यानुपपत्तेः तत्परिभाषाप्रवृत्त्यनुपयोगित्वाच्च । न चैवमपि इक्परिभाषामात्रस्य तत्र प्रवृत्तौ नियामकाभाव इति वाच्यम् । उक्तरीत्या अन्तरङ्गबहिरङ्गभावाभावेऽपि अलोऽन्त्यपरिभाषाऽपवादस्य वाच्यत्वात् तावदपवादपरिहारपूर्वकप्रवृत्तिकतया तावदपवादप्रवृत्तिनिश्चयं विना तद्विषयपरिहारज्ञानस्यानुपपत्त्या तदधीनत्वादलोऽन्त्यपरिभाषाप्रवृत्तिनिश्चयस्य तस्या बहिरङ्गत्वानपायात् । एतेन "अलोऽन्त्यस्य" इत्यत्रापि पदोपस्थितिपक्षस्वीकारे उभयोः साम्यमिति निरस्तम् । तत्पक्षस्य भाष्याद्यनारूढत्वाच्च।

केचित्तु तत्पक्षे "आदेः परस्य" इत्यत्रालपदस्यार्थपरत्वं न स्यात् । तथा चासमासनिर्देशवैयर्थ्यम्, द्वीपमित्यत्र समस्ताप्शब्दस्य ईत्वापत्तिश्च, "आदेः परस्य" इत्यत्रापि पदोपस्थितिपक्षस्यैव तेन वाच्यत्वात् अल्पदस्यार्थपरत्वानुपयोगात् न कोऽपि दोष इति वाच्यम् । तथाऽपि पदद्वयान्वयस्य वाच्यतया बहिरङ्गत्वानपायादित्याहुः ।

तत्र इकोऽङ्गस्येतिसामानाधिकरण्यान्वयस्य न्याय्यत्वादिक्पदार्थस्याङ्गविशेषणत्वे इगन्तस्याङ्गस्येतिवाक्यार्थे स्थानेयोगार्थकषष्ठीरूपलिङ्गस्य तादवस्थ्यादलोऽन्त्यपरिभाषोपतिष्ठतएव । " मिदेर्गुणः " इत्यादौ तु हलन्तत्वात् इको मिद इतिसामानाधिकरण्यायोगात् मिदेरवयवस्य इक इति वैयधिकरण्येनान्वये स्थानेयोगषष्ठीरूपलिङ्गाभावादलोऽन्त्यपरिभाषोपस्थित्यभावात् अनन्त्यस्यैव गुणसिद्धिः । न चात्रापि इक इति स्थानषष्ठ्यैवालोऽन्त्यपरिभाषोपस्थितिः स्यादिति वाच्यम् । तत्र इक इत्यस्योपस्थित्यनन्तरमलोऽन्त्यपरिभाषोपस्थाने अन्त्यस्य इक इत्यस्य इगवयवस्यान्त्यस्येत्यस्य चार्थस्य बाधितत्वात् । मिदेरन्त्यस्य इक्त्वाभावात् । अन्त्यस्य दकारस्य इगवयवत्वासम्भवाच्च । इकः स्थानित्वबोधे स्वातन्त्र्येणान्त्यस्य गुणविधाने चोपजीव्यविरोधात् । अङ्गस्येत्यादौ त्ववयवद्वारा अङ्गस्य स्थानित्वनिर्वाहान्नोपजीव्यविरोध इति वैषम्यम् । तस्मात्प्रकृत्यर्थनिष्ठस्थानित्वाविरोधिन्येव षष्ठी अलोऽन्त्यपरिभाषायां लिङ्गमिति सिद्धम् ॥

इति श्रीसिद्धान्तसुधानिधौ प्रथमाध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥



# न धातुलोपआर्द्धधातुके ४ ।

धात्ववयवलोपप्रयोजकमार्द्धधातुकं निमित्तीकृत्य प्राप्ते इको गुणवृद्धी न स्तः । लोलुवः पोपुवः मरीमृजः । लोलूयादिभ्यो यङन्तेभ्यः पचाद्यच् । "यङोऽचि च" इति यङो लुक् । तत्र "सनाद्यन्ता धातवः" इति यङन्तस्य धातुसंज्ञतया तदवयवयकारलोपनिमित्तमच्प्रत्ययं निमित्तीकृत्य "सार्वधातुकार्द्धधातुकयोः" इति गुणः प्राप्तः स एतद्वचनेन निषिध्यते । ऐक्यंचात्र निमित्तीभूतव्यक्तेरेव, न तु निमित्ततावच्छेदकस्यापि । अन्यथा धात्ववयवलोपेऽच्त्वं गुणे त्वार्द्धधातुकत्वमच्प्रत्ययस्य निमित्ततावच्छेदकमिति निषेधाप्रवृत्तिप्रसङ्गात् ।

इह धातुपदं तदवयवे लाक्षणिकम् । यद्यपि दुःखेन ईयते गम्यते इति "दुरीणो लोपश्च" इति दुःशब्दे उपपदे इण् गतावित्यस्माद्रक्प्रत्ययः, धातोश्च लोपः, ततः "रो रि" इति उपसर्गान्त्यरेफलोपे "ढ्रलोपे" इति दीर्घे च दूरमित्यत्र समस्तस्यापि धातोर्लोपोऽस्ति, तथाऽपि तत्र गुणादिप्राप्तिविरहेण तन्निषेधवैयर्थ्यात् । धातुलोप इत्यत्र षष्ठीतत्पुरुषपक्षे त्रयः कल्पाः सम्भवन्ति । आर्द्धधातुकग्रहणस्य लोपविशेषणत्वं निषेध्यविशेषणत्वमुभयविशेषणत्वं वेति । तत्राद्ये आर्द्धधातुकनिमित्ते धात्ववयवस्य लोपे गुणवृद्धी न स्त इत्यर्थः । तत्रान्यनिमित्तयोरपि गुणवृद्ध्योर्निषेधापत्त्या प्रपूर्वादिन्धेः क्तप्रत्यये "अनिदिताम्" इति नलोपस्य क्तप्रत्ययरूपार्द्धधातुकनिमित्तकत्वेन प्र इद्ध इति आद्गुणो न स्यात् । त

स्योभयस्थानिकत्वेऽपि इक्स्थानिकत्वानपायात् । न चेकइति-शब्दमुच्चार्य विहितत्वाभावान्न निषेधः । उत्तरत्र चशब्दबला-त्तथात्वेऽपि इह शब्दस्वरूपपरत्वे मानाभावात् । इक इत्यस्या-र्थमात्रपरत्वात् । अन्यथा तु तृतीयपक्षीयमेव दूषणं योज्यम् ।

नन्वत्र "पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण" इति-पक्षे प्रथमोपनतक्तप्रत्ययापेक्षो नलोप एवान्तरङ्गः, पूर्वमुपसर्गेण पश्चात्साधनेनेतिपक्षे तु गुण एव तथा, सर्वथाऽपि गुणो निरप-वादः, "असिद्धं बहिरङ्गमन्तरङ्गे" इतिन्यायेन गुणस्या-सिद्धतया निषेधानर्हत्वात्, बहिरङ्गतया निषेधस्यासिद्धत्वे गुणस्य निरपवादत्वात्, सत्यम् । नास्त्येवायं प्रकृते दोषः, किं तु भेद्यते इत्यादि तृतीयपक्षे वक्ष्यमाणमेव दूषणमत्रापि बोध्यम् इति कैयटानुसारिणः ।

हरदत्तानुयायिनस्तु " नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः " इति निषेधाद् "असिद्धं बहिरङ्गम्" इत्यस्य नेह प्रवृत्तिः । द्वयोर्मध्ये एकत्र अजानन्तर्यापेक्षायाम् "असिद्धम्" इति न प्रवर्त्ततइति तदर्थात् । अत्र च आद्गुणे पौर्वापर्यस्य अज्घटितत्वेन अजा-नन्तर्यापेक्षणात् । अतः प्रेद्धामित्यस्यासिद्धिरप्यत्र दूषणमित्या-हुः । इदं च " अचः परस्मिन् " इतिसूत्रे विवेचयिष्यामः ।

आर्द्धधातुकस्य निषेध्यविशेषणत्वे तु यत्किञ्चिन्निमित्तके धातुलोपे सति आर्द्धधातुकनिमित्तके गुणवृद्धी न स्त इति स्यात् । ततश्च क्नूयी शब्दे इत्यस्माण्णिचि पुकि "लोपो व्योः" इति यलोपे च पुगन्तलक्षणो गुणोऽपि न स्यात् । "चेले क्नोपेः"इत्या-दिज्ञापकेन निषेधवारणे तु गौरवम्, वक्ष्यमाणदोषश्च । तन्त्रादि-नोभयविशेषणत्वे तु तदेव गौरवम् ।

आर्द्धधातुकनिमित्ते धातुलोपे आर्द्धधातुकनिमित्ते गुण-

वृद्धी न स्त इत्यर्थे कृतेऽपि यत्रार्द्धधातुकसंज्ञं व्यक्तिद्वयं लोपस्य गुणादेश्च निमित्तं तत्रापि निषेधः स्यात् । ततश्च भिदेर्ण्यन्तात्कर्मणि यकि भिद् इ य इति स्थिते नित्यत्वाद् "णेरनिटि" इति यकं निमित्तीकृत्य णिलोपे कृते प्रत्ययलक्षणेन लुप्तं णिचमाश्रित्य क्रियमाणो लघूपधगुणोऽपि न प्रवर्त्तेतेति भेद्यतइति न स्यात् । णेर्यकश्चोभयोरार्द्धधातुकत्वात् ।

न च प्रत्ययमात्रसापेक्षस्य गुणस्य तद्विशेषार्द्धधातुकसापेक्षणिलोपापेक्षयाऽन्तरङ्गत्वात्प्रागेव गुणः स्यादिति वाच्यम् । अकृतव्यूहपारिभाषया तदप्रवृत्तेः । णिलोपस्य जनिष्यमाणतया गुणनिमित्तस्यार्द्धधातुकस्य विनाशोन्मुखत्वात् । "उपसंजातनिमित्तोऽप्युत्सर्ग उपसंजनिष्यमाणनिमित्तेनाप्यपवादेन बाध्यते" इतिन्यायाच्च । णिलोपे सति धात्ववयवलोपसम्पत्त्या एतन्निषेधस्य प्रवर्त्तिष्यमाणत्वात् ।

केचित्तु उक्तन्यायोऽप्यकृतव्यूहन्यायएवान्तर्भूतः । अपवादविषयाभावस्यापि निमित्तकोटिप्रवेशादित्याहुः ।

तस्माद्धातोर्लोपो यस्मिन्नार्द्धधातुके तन्निमित्ते गुणवृद्धी न स्त इत्येवार्थः । लोपगुणाद्योरेकार्द्धधातुकव्यक्तिनिमित्तकत्वलाभादिति सिद्धमिष्टम् ।

अत्र यद्यपि पदोपस्थितेः पूर्ववाक्यार्थत्वेनात्र निषेधप्रतियोग्याकाङ्क्षायां तस्या एवान्वयापत्त्या उक्तस्थले इक्पदं नोपतिष्ठतइति सूत्रार्थः स्यात्, तथा च लोलुवादौ गुणनिषेधो न स्यात्, प्रत्युत भेद्यत इत्यादौ व्यञ्जनस्य गुण एव प्रसज्येत, तथाऽपि "दीधीवेवीटाम्"इतिसूत्रस्य तत्र इक्पदोपस्थितिनिषेधकत्वे इक्परिभाषाऽलोऽन्त्यपरिभाषयोः फले विशेषाभावेन पदो-

---

१ इको गुणवृद्धी इत्येतत्सूत्रवाक्यार्थत्वेनेत्यर्थः ।

पास्थितिनिषेधस्य वैयर्थ्यापत्त्याऽत्रापि पदोपस्थितेर्न निषेध्यत्वम् । किं त्वौत्सर्गिकतया भवत इत्यस्योपस्थितौ गुणवृद्धी न भवत इति वाक्यार्थः । धातुलोपइति किम् । आर्द्धधातुकएव विहितप्रतिषिद्धत्वादगत्या विकल्पो मा भूत् । आर्द्धधातुकइति किम् । तोतोर्त्ति मोमोर्त्तीत्यादौ सार्वधातुकसंज्ञे तिपि परे "राल्लोपः" इति छ्वोर्लोपात्तत्र तिबाश्रयस्य लघूपधगुणस्य निषेधो मा भूत् । रेफात्परयोश्छकारवकारयोर्लोपः स्यात्क्वौ झलादावनुनासिकादौ च प्रत्यये परे इत्यर्थे इदमुदाहरणम् । यदा तु तत्र झलादावित्यस्य क्ङितीति विशेषणमितिपक्षः, तदा तोतोर्मीत्यादि । तत्रानुनासिकादिप्रत्ययपरत्वेन तत्प्रवृत्तेः । इक इति स्थानिविशेषानिर्देशः किम् । अभाजि रागः इत्यत्र भञ्जिरञ्जिभ्यां चिण्घञोः कृतयोः "भञ्जेश्च चिणि" "घञि च भावकरणयोः" इति च नकारलोपे कृते "अत उपधायाः" इति वृद्धिनिषेधो मा भूत् ।

इदन्त्ववधेयम् । यङन्तात्पचतेः पापच्य इत्यस्माद् ण्वुलि "यस्य हलः" इत्यनेन हलः परस्य यस्य लोपविधाने "आदेः परस्य" इतिपरिभाषया परस्य यद्विहितं तत्तस्यादेर्बोध्यमित्यर्थिकया व्यञ्जनमात्रस्य लोपे "अतो लोपः" इत्यकारस्य पृथग्लोपे "अचः परस्मिन्" इति अकारलोपस्य स्थानिवद्भावे धात्वकारस्योपधात्वव्याघाताद् वृद्ध्यभावे पापचक इतिरूपम् । यङ्लुकि तु समुदायलोपस्वीकारेण अज्झलादेशस्य स्थानिवत्त्वाभावाद्भवत्येव वृद्धिः पापाचक इति । इग्लक्षणत्वाभावात्प्रकृतनिषेधस्यापि तत्राप्रवृत्तेः । यथा नोनावेत्यत्रेति ।

अत्र भाष्यकृतः— इदं सूत्रं नारभ्यमेव । यङ्लुक्यपि पृथगल्लोपं स्वीकृत्य स्थानिवद्भावे अङ्गस्य इगन्तत्वाभावादेव

गुणवृद्धिविरहसिद्धेः। न च "यङोऽचि च" इति लुक् येननाप्राप्तिन्यायेन अतोलोपस्य बाधकः स्यादिति वाच्यम्। "यस्य हलः" इत्यत्र यस्येतियोगं विभज्य अतोलोप इति चानुवर्त्य यशब्दाकारस्य लोपविधानेन व्यञ्जनमात्रलोपस्य "यङोऽचि च" इत्येतद्विधेयत्वात्। ततश्च अकारस्य लोपः यकारस्य लुगिति विषयभेदेन येननाप्राप्तिन्यायाभावात्। एवं चाल्लोपस्य स्थानिवत्त्वेनैव निर्वाह इति सूत्रं व्यर्थमेव। न चैवं कृष्णो नोनाव वृषभमित्यत्र नोनावेत्यस्य वृद्धिर्न स्यात्, एवं पापाचक इत्यपि न स्यात्, अल्लोपस्य स्थानिवद्भावादिति वाच्यम्। अज्निमित्तकस्यैव लुको व्यञ्जनमात्रप्रतियोगिकत्वस्वीकारात्।

यस्तु चकाराद्बहुलग्रहणेन अच्प्रत्ययव्यतिरेकेणापि यङो लुक् स त्वनैमिकत्वात्प्रत्ययोत्पत्तेः प्रागेव प्रवर्त्तते। प्रत्ययापेक्षप्रवृत्तिकेभ्यो बहिरङ्गेभ्योऽतोलोपादिभ्योऽन्तरङ्गत्वात्। स तु समुदायप्रतियोगिक एव। तस्य च न स्थानिवद्भावः। अज्झलादेशत्वात्। अज्मात्रस्थानिकस्यैवादेशस्य स्थानिवद्भावविधानात्।

अथैवं गुणवदुवङादयोऽपि न स्युः। अकारस्य स्थानिवत्त्वे अच्प्रत्ययस्याव्यवहितपरत्वाभावादिति चेत्, अत्र कैयटादयः—

स्थानिवद्भूतमकारमेवाश्रित्य तत्र उवङादयः, न तु पचाद्यचं निमित्तीकृत्य। उक्तयुक्तेः। न च यङवयवस्य केवलाकारस्य प्रत्ययत्वं नास्तीति वाच्यम्। यकारलोपोत्तरं तस्यापि प्रत्ययत्वात्। न च यकारस्थितिकाले अकारस्य प्रत्ययत्वाभावाद्यकारापेक्षया प्रागेव लुप्ततया यकारलोपोत्तरमपि प्रत्ययत्वानन्वयात् कथं तस्य प्रत्ययत्वम्, स्थानिनिष्ठात्यन्ताभावप्रतियोगिनो धर्मस्यातिदेशेनाप्यलाभादिति

वाच्यम् । सम्भवमात्रेणाप्यतिदेशस्वीकारात् । यकारलोपोत्तरं यद्यकारस्य लोपो न स्यात्तदा तस्य स्यादेव प्रत्ययत्वमिति योग्यतया लुप्तेऽपि तत्र सम्भावितस्य प्रत्ययत्वस्यातिदेशे बाधकाभावात् ।

वरे निषेधश्चेह लिङ्गम् । यङन्ताद्धातेर्वरचि "अतो लोपः" इति "लोपो व्योर्वलि" इति अल्लोपयलोपयोः कृतयोरल्लोपस्य स्थानिवद्भावेनाकारं निमित्तीकृत्य प्राप्तः "आतो लोप इटि च" इत्याकारलोपो मा भूदित्यतस्तत्र स्थानिवद्भावनिषेधारम्भात् । स्थानिनि दृष्टस्यैवातिदेशे तु अकारस्य स्थानिवद्भावेऽपि प्रत्ययत्वाभावे सुतरामार्द्धधातुकत्वाभावात् वरप्रत्ययस्य चानजादित्वादकारेण व्यवधानाच्च आतोलोपस्यैवाप्रसक्त्या तद्वैयर्थ्यापत्तेः ।

अत्र हरदत्तादयः । ह्रस्वदीर्घान्तेषु इयङुवङोः कृतयोर्लघूपधगुणो दुर्वारः । न चाल्लोपस्य स्थानिवद्भावेन उकारस्योपधात्वव्याघात इति वाच्यम् । उकारस्यानादिष्टादचः पूर्वत्वाभावात् । अल्लोपानन्तरमेवोवङः प्रवृत्तेः । तथा जङ्गम इत्यत्र "गमहन" इत्युपधालोपः स्यात् । यदि त्वनङीति निषेधः, तर्हि दरीदृश इत्यत्र "ऋदृशोऽङि" इति गुणः स्यात् । देय इत्यत्र "दीङो युडचि" इति युट् स्यात् । सनीस्रंसो दनीध्वंसः । "अनिदिताम्" इति लोपः स्यात् । याया वावा इत्यादौ "आतो लोप" इत्याकारलोपः स्यात् । तस्मात्समुदायलोपस्वीकारस्यावश्यकतया लोलुवादिसिद्धये सूत्रमारभ्यमिति ।

यत्तु स्थानिद्वारकस्यानादिष्टादचः पूर्वत्वस्य सत्त्वात्स्थानिवद्भावान्न गुणप्रसङ्ग इति, तन्न । स्थानिद्वारा उवङोऽनादिष्टादचः पूर्वत्वेऽप्युकारस्यातथात्वात् । लोलूय इत्यस्यामवस्था-

यामुकारे दृष्टस्य अकारात्पूर्वत्वस्योवङि सम्भवेऽपि तस्यात्र कस्यचिद्विधेरप्रवर्त्तनीयत्वात् । उकारमात्रस्य त्वादेशत्वपर्याप्त्यनधिकरणतया ऊकारनिष्ठस्यानादिष्टादचः पूर्वत्वस्य तस्मिन्नतिदेशायोगात् ।

यदप्युक्तम्—" सर्वे सर्वपदादेशाः " इतिन्यायेनार्थवत्येव स्थान्यादेशभावाविश्रामादुवङ्द्वारा लोलू इत्यस्य स्थाने लोलुव् इत्यादेशः, स च स्थानिवद्भावादनादिष्टादचः पूर्वः, तस्य गुणद्वारा लोलोव् इत्यादेशे कर्त्तव्ये अल्लोपः स्थानिवदिति युक्तमेवेति, तदप्यसत् । तथा सति लोलूय इत्यस्य स्थाने यलोपाल्लोपद्वारा लोलू इत्यादेशपर्यवसाने विशिष्टस्यैव स्थानिकोटिप्रवेशाद् अकारापेक्षया स्थानिद्वारकस्यापि पूर्वत्वस्य दुर्लभत्वात् ।

वस्तुतस्तु स्थानिद्वारकमनादिष्टादचः पूर्वत्वमाश्रित्य स्थानिवद्भावो निर्बीज इति तत्रैव वक्ष्यामः ।

यदप्याहुः—"अङ्गवृत्ते पुनर्वृत्तावविधिः"इतिपरिभाषया उवङि कृते न गुणप्रवृत्तिरिति,तदप्यसत् । चेक्षियः तोष्टुवः इत्यादेस्तथाऽप्यसिद्धेः । तथा हि "अन्तरङ्गानपि" इतिन्यायेन "अकृत्सार्वधातुकयोः" इति दीर्घं बाधित्वा यङो लुक् । ततोऽल्लोपस्य स्थानिवत्त्वेऽपि चेक्षि अ अ तोष्टु अ अ इति स्थान्यकारमन्त्यं कृत्वा लघूपधमङ्गमच्प्रत्ययपरं जातमिति लघूपधगुणः स्यादित्याशङ्क्य अन्तरङ्गत्वेन इयङुवङोः प्रवृत्तिरिति स्वयमप्युक्तम् । यस्मिन्नङ्गकार्ये सत्येवाङ्गकार्यमन्यत् प्राप्नोति तत्र कृते तन्न भवतीति चोक्तपरिभाषाऽर्थः । न चात्र लघूपधगुण उवङि सत्येव प्राप्नोति । पूर्वमपि तत्प्राप्तेः ।

यदपि जङ्गम इत्यत्रोपधालोपो नापादनीयः । अनङीतिपर्युदासेनाङ्सदृशे श्रूयमाणाजादौ तद्विधानादिति, तन्न । तत्र

प्रसज्यप्रतिषेधस्यैवावश्यकत्वात् । न त्वङीति स्वयमेव व्याख्यातत्वाच्च । अन्यथा श्रूयमाणत्वस्यैवानर्थकत्वस्यापि तत्त्वावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वस्वीकारापत्त्या जग्मेत्यादौ मध्यमपुरुषबहुवचनादावप्युपधालोपानापत्तेः । स्वाभाविकाजादित्वस्यापि तथात्वापत्त्या जग्मुष इत्यादावपि तदनापत्तेश्च । भेदप्रतियोगिवृत्तीनान्तत्प्रतियोगितावच्छेदकातिरिक्तानां धर्माणां मध्ये श्रूयमाणत्वस्यैव भेदानुयोगितावच्छेदकत्वमित्यत्र नियामकाभावात् ।

यदप्युक्तम्—देद्य इत्यत्र "दीङः" इत्यनुबन्धनिर्देशान्न युडागमापत्तिः, तदुक्तम्—

शितपा शपाऽनुबन्धेन निर्दिष्टं यद् गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥

इति । तदप्यसत् । अत्र यङो लोपप्रतियोगित्वेन निर्देशात् तद्भिन्नस्य कार्यं न भवतीत्यर्थप्रतीतेः । निमित्तकोटिप्राविष्टस्य कार्यानन्वयात् । प्रवेशश्च साक्षादन्यथा वेत्यन्यदेतत् ।

अत एव "सुप्तिङन्तम्" इतिसूत्रे कृत्तद्धितेत्यत्र तदन्तग्रहणाभावे "केवलानामेव कृत्तद्धितानां संज्ञापत्त्या भिदित्यादीनां संज्ञा न स्यात्, अधातुरिति निषेधाद् अर्थवत्सूत्राप्रवृत्तेः । नापि क्विबादीनाम्, अश्रूयमाणत्वात्" इत्यनन्तरं कैयटनोक्तम्—"नापि प्रत्ययलक्षणेन प्राप्नोति,प्रत्ययनिमित्तमन्यस्य यत् कार्यं विधीयते तत् प्रत्ययलोपे भवति, न तु प्रत्ययस्यैव यत् कार्यं तदपि, न ह्यसत् कार्यित्वेन वचनशतेनापि शक्यमाश्रयितुमिति ।

तत्र विधिरत्र निषेध इति परं विशेषः । शितपेत्यादिज्ञापकस्यापि यङ्भिन्नकार्यविषयकत्वात् । तच्च "एकाचः" इत्येकाग्रहणं तत्तदंशे तत्तन्निर्देशो वेत्यन्यदेतत् ।

एतेन " दीङः " इत्यनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थ इति तत्रत्यहरदत्तोक्तेरत्रत्यतदुक्तिविरोधोद्भावनमप्यपास्तम् । प्रत्ययान्तरसम्बन्धियुडागमवारणार्थतायास्तत्रोक्तत्वात् । यङवयवमकारमाश्रित्यात्र तदापादनस्याविरुद्धत्वात् ।

नन्वेवमपि यङकारमाश्रित्य युडापत्तिरसङ्गतैव,दीङः परस्याजादेः क्ङित आर्द्धधातुकस्य युटो विधानादस्यापि यङ्कार्यत्वानपायात्, स्वविधौ स्थानिवत्त्वाभावाच्च इति चेत्, सत्यम् । भवदीयस्य " शितपाशपा " इत्यादिवचनोपन्यासस्याप्यसङ्गतितादवस्थ्यात् ।

मिश्राणां त्वयमाशयः—अल्लोपानन्तरं यलोप इत्यत्र मानाभावः । लुकः सर्वापेक्षया बलवत्त्वमितिस्वीकारात् । अत एव गोमत्प्रिय इत्यादौ "सुपो धातुप्रातिपदिकयोः" इति सोर्लुगेव, न तु हल्ङ्यादिलोपः । प्रत्ययलक्षणेन नुमादिप्रसङ्गादिति सिद्धान्तः ।

न च अच्प्रत्ययस्य यङकारेण व्यवधानात्कथं पूर्वं यस्य लुगिति वाच्यम् । निर्देश्यतावच्छेदकयङ्त्वावच्छिन्नापेक्षस्या व्यवधानस्य सत्त्वात् । योगविभागसामर्थ्याच्चु यलोपो व्यञ्जनमात्रे पर्यवस्यतीत्यन्यदेतत् । वस्तुगत्या यत्र कार्यविश्रामस्तदपेक्षस्यैवाव्यवधानस्योपादाने तु "क्ङिति च" इतिसूत्रस्थकैयटग्रन्थविरोधात् । स्थानिवद्भूतेनाकारेण व्यवधानात्पश्चादपि कथमिति तुल्यत्वाच्च । श्रुतिकृतमेवाव्यवधानं वचनप्रामाण्यादाश्रीयतइति चेत्, तर्हि यलोपस्य परनिमित्तकत्वं कुतो निर्णीतम् । अचीतिसप्तम्याः सतिसप्तमीत्वेनैवोपपत्तेः । अल्लोपस्य तु स्थानिवद्भावाय परनिमित्तकत्वस्वीकार इति वैषम्यम् । प्रयोजनं विनाऽपि परसप्तमीत्वस्वीकारे प्रमाणाभा-

वात् । लोलूयतइत्यादावपि यकारलोपापत्तिवारणार्थमचः स-त्तामात्रस्वीकारात् ।

न च तथाऽपि निर्दिष्टपरिभाषोपस्थानं दुर्वारमिति वाच्य-म् । "श्नान्नलोपः" इतिसूत्रे क्ङितीत्यनुवृत्तिपक्षे हिनस्तीत्यत्र नलोपो न स्यादित्यापत्तेः सतिसप्तम्या भाष्ये समाधानात् । ननु तत् पूर्वपक्षाभिप्रायवर्णनमात्रम्, परत्वाभिमतसप्तमीस्थलेऽपि सप्तम्या भावलक्षणत्वात्, परत्वार्थकसप्तम्या विशिष्य विध्यभा-वात् "इको यणचि"इत्यादावपि निर्दिष्टपरिभाषाऽनुपस्था-नप्रसङ्गात् । सत्यम् । तथाऽपि विषयसप्तमीत्वस्वीकारात् तत्र तदनुपस्थानस्य सिद्धान्तासिद्धत्वात् । तथा च श्रूयमाण-तादशायामेव युडापत्तिः ।

न च तदपेक्षया लोपस्यैव पूर्वं प्रवृत्तिरिति वाच्य-म् । ङिदुद्देशेन विहितस्य युडागमस्यानवकाशतया बलव-त्त्वात् । दीङः परस्याजादेर्ङित आर्द्धधातुकस्यान्यस्य दु-र्लभत्वात् । न च ङिदित्यंश उत्तरार्थ एवेति वाच्यम् । सति सम्भवे केवलोत्तरार्थत्वस्य दुर्वचत्वात् । अत एवाकृतव्यूहप-रिभाषाया अपि नावतारः । कार्यिणो निमित्तत्वाभावाच्च ।

नन्वेवं चेक्षिय इत्यादौ गुणोऽपि श्रूयमाणतादशायामेवा-पाद्यताम्, किं स्थानिवद्भूतमकारमाश्रित्य तदापादनेनेतिचेत्, सत्यम् । सार्वधातुकेत्यादिगुणस्य "क्ङिति च"इति निषेधात्, लघूपधगुणस्य च तमाश्रित्यापादयितुमशक्यत्वात् । तमादायैव लघूपधत्वसम्पत्तेः । अनयोरन्यत्र चरितार्थतया तत्र लोपस्यैव प्राथम्याच्चेति वैषम्यात् ।

प्रकृतमनुसरामः । यत्तु वदन्ति—"यस्य हलः" इति लो-पस्य त्वयाऽप्यवयवमात्रप्रतियोगिकत्वं स्वीकृतम् । तत्र यद्यपि

देद्यक इत्यत्र युट् स्यादिति नापादनार्हम्, हलः परत्वाभावेन यलोपानुपपत्त्या देदीयक इति रूपाभ्युपगमात्, सनीस्रसक इत्यादौ नलोपोऽपि सर्वतंमतत्वादेव नापाद्यः, याय्यायकः, वावायकः, इत्यादावातो लोपोऽपि नापाद्यः। यलोपविरहेणाजादिक्ङिदार्द्धधातुकपरत्वाभावात्, तथाऽपि गमेर्यङन्तात् ण्वुलि जङ्गमक इत्यत्राल्लोपस्य स्थानिवद्भावाद् वृद्ध्यभावो यथा तथा उपधालोपोऽपि स्यात्।

अथात्र "अनङि" इति प्रतिषेधः, तर्हि दरीदृशक इत्यत्र "ऋदृशोऽङि" इति गुणः स्यात्।

अथात्राङ्गवृत्तपरिभाषया "संज्ञापूर्वको विधिरनित्यः" इति वा समाधानम्, तर्हि यङ्लुक्यपि सनीस्रस इत्यत्र नलोपो यायाः वावा इत्यादावातो लोपश्च न शक्यः। समाधानस्य तुल्यत्वादिति।

तदपि चिन्त्यम्। "यस्य हलः" इति लोपेऽपि सङ्घातप्रतियोगिकत्वस्यैव स्वीकर्तव्यत्वात्। न च हलः परस्य यस्य लोपः स्यादार्द्धधातुके इत्यस्य "आदेः परस्य" इतिपरिभाषया व्यञ्जनमात्रे व्यवस्थापितत्वात् कथं समुदायलोप इति वाच्यम्। येननाप्राप्तिन्यायेन "यङोऽचि च" इति लोपस्यातोलोपापवादत्वात्तत्रापि तत्र कथमवयवलोप इत्यस्य तुल्यत्वात्। न चोक्तयोगविभागेन निर्वाहः। अत्रापि "अतो लोपः" इत्यस्मादत इत्यनुवर्त्य अकारान्तस्य यस्येतिव्याख्याने विशेषणसामर्थ्याद् "आदेः परस्य" इति न प्रवर्त्ततइति समाधेरुक्तत्वात्। व्यञ्जनाकारयोः समाहारद्वन्द्वं कृत्वा द्वयोर्लोपविधानसामर्थ्यात्तदप्रवृत्तेरपि च सुवचत्वात्। यस्येतिसङ्घातग्रहणमितिवामनग्रन्थदर्शनाच्च। बेभिदिता मरीमृजिता इत्येतत्सूत्रोदाहरणतया प्राचीनलेखनस्वारस्याच्च।

प्रकृतानिषेधे इक इत्यनुवृत्त्या पापाचक इत्यत्र "अत उपधायाः" इति वृद्धेर्नायं निषेध इत्युक्तत्वाच्च । यङ्लोपस्य सङ्घातप्रतियोगिकत्वं विना तत्रोक्तवृद्धिप्रसङ्गस्य दुरुपपादत्वात् ।

यत्तु यकाराकारसमुदायान्तर्गतस्यैव यकारस्य लोपो न तु अहर्यीद् अमव्यीदित्यादौ केवलस्यापीति वामनवाक्यव्याख्यानम्, तच्चिन्त्यम् । निर्देशे तादृशत्वस्य वारणीयत्वाभिमतेऽपि सत्त्वात् । लोपप्रवृत्तिवेलायां तथात्वस्य संग्राह्येऽप्यभावात् । तन्मतेऽप्यतोलोपस्य प्रागेवोपगमात् ।

हरदत्तीयतथाव्याख्यानस्य च परकीयव्याख्यानानुवादमात्रतया तत्सम्मतत्वाभावात् । अत एव प्रकाशकारैः "यस्य" इति लोपस्यावयवलोपत्वे यङ्लुकोऽवयवलोपपक्षे हरदत्तोक्तदोषानतिदिश्योपसंहृतम् । तस्मात्सूत्रं स्थापयितुं प्रवृत्तैर्लुकीव लोपेऽपि समुदायनिवृत्तिरेवेष्टव्या । उक्तयुक्तीर्वामनवाक्यं चोपष्टभ्य हरदत्तादिग्रन्थोपमर्दार्थमेव प्रवृत्तत्वादिति ।

तेषां ह्ययमभिप्रायः—हरदत्तांशे ग्रन्थोपमर्दो "यस्य" इति लोपस्यावयवलोपत्वे तात्पर्याभाव इति व्याख्यानम्, उभयत्राप्यवयवलोपवादिनां तु दूषणमेवोपमर्द इति ।

एतेन पापाचक इति यङन्ताण्वुलि वृद्धिर्भाष्यविरुद्धेत्यपास्तम् । एतत्सूत्रप्रत्याख्याने भाष्यतात्पर्यविरहे "यस्य" इति संघातलोपे अज्झलादेशस्य स्थानिवत्त्वाविरहाद् "अत उपधाया" इति वृद्धेः सुस्थत्वात् । एतन्निषेधस्तु इग्लक्षणत्वाभावान्न प्रवर्त्तत इत्युक्तम् ।

किं च "अचः परस्मिन्" इतिसूत्रेऽनाश्रीयमाणायां प्रकृतौ स्थानिवद्भाव इति पक्षे नपदान्तसूत्रे द्विर्वचनवरेयलोपानां ग्रहणं कर्तव्यमिति भाष्ये वक्ष्यते । आश्रीयमाणायां प्रकृताविति

पक्षे हि द्विर्वचनेऽनचीतिपर्युदासेन तत्सदृशस्य हल एवाश्रयणम्, न त्वचः । वरे त्वाकारलोपे विधीयमाने प्रकृतिराश्रितैवाचि क्ङितीति, तत् कथं वरेशब्दग्रहणमापाद्यते इत्याशङ्क्य कैयटेनोक्तम्—

यङ एव समुदायस्य प्रत्ययत्वं न तदवयवस्याकारस्येति । अजादौ प्रत्यये परे आकारलोपस्य विधानादत्राप्रसङ्ग एवेति । तथा चात्र कथं तदाश्रय उवङ्, कथं वा सम्भावितस्याप्यतिदेश इत्यत्र भाष्यकारादीनां तात्पर्यम् ।

अपि च जङ्गम इत्यादावुपधालोपादीनां ङित्त्वोपजीविनामापादनमुभयेषामप्यनुपपन्नम् । ङकारस्य याङि समुदायानुबन्धत्वात् । अकारमात्रस्य स्थानिवद्भावेऽपि तस्य यङ्रूपताया दुर्लभत्वात् । अत एव रमायै इत्यादौ "वृद्धिरेचि" इत्येव वृद्धिर्न तु " आटश्च " इति दीक्षितैरेवोक्तमित्यवहितैर्विभावनीयमिति दिक् ।

# क्ङिति च ५ ।

इग्लक्षणे गुणवृद्धी यं प्रत्ययमाश्रित्य ते तस्य गित्त्वे कित्त्वे ङित्त्वे च सति न स्तः । ककारात्पूर्वं चर्त्वेन गकारस्यापि प्रश्लेषात् ।

यत्तु किदादिकं निमित्ततयाऽऽश्रित्य ये प्राप्नुत इति व्याख्यानम्, तच्चिन्त्यम् । निमित्तादिपदान्वयिपदजन्यबोधे प्रकारतया भासमानस्य धर्मस्य निमित्ततावच्छेदकत्वेन प्रतीतिनियमात् । दण्डः कारणमित्यादौ दण्डत्वादेः कारणतावच्छेदकत्वस्य, घटः कार्यमित्यादौ घटत्वादेः कार्यतावच्छेदकत्वस्य च प्रत्ययात् । अन्यथा तादृशशब्दात्कारणत्वाद्यग्रहापत्तेः । ततश्च कित्त्वाद्यवच्छिन्नकारणतानिरूप्यकार्यत्वस्य गुणवृद्ध्योः

रलो व्युपधाद् इत्यादिना कित्त्वातिदेशश्चात्र मानम्। अन्यथा व्यवधानेन गुणनिषेधाप्रवृत्तौ तदर्थकित्त्वस्य वैयर्थ्यापत्तेः।

वस्तुतः क्ङितीत्यत्र विशेष्याकाङ्क्षायां पूर्वसूत्रस्थार्द्धधातुकपदेन तिङ्शिद्भिन्नत्वे सति धात्वधिकारोक्तप्रत्ययत्वेन रूपेण तत्समर्पणेऽपि विशिष्टस्यात्र विशेष्यत्वस्वीकारे "सार्वधातुकमपित्" इत्यादीनां व्यर्थत्वापत्त्या सत्यन्तम्परित्यज्य धात्वधिकारोक्तप्रत्ययत्वमेव विशेष्यतावच्छेदकम् विशिष्टवाचकपदानां सति बाधके विशेष्यमात्रपरत्वस्य लक्षणां विनैव स्वीकारात्। "श्रोतव्यः श्रुतिवाक्येभ्यः" इत्यत्र श्रुतिशब्दस्य प्रमाणशब्दमात्रपरत्वस्वीकारात्। ततश्च प्रत्ययेनाङ्गस्योपस्थित्या लघूपधस्याङ्गस्याव्यवधानादुभयत्रापि निषेधसिद्धिः। अङ्गापेक्षस्यैवाव्यवधानस्य स्वीकारात्। इदञ्चात्रैव कैयटे स्पष्टम्।

इहान्ये वैयाकरणा मृजेरजादौ संक्रमे विभाषा वृद्धिमारभन्ते क्ङित्याचि वा इति पूर्वसूत्रे भाष्यम्। संक्रमो गुणवृद्धिप्रतिषेधहेतुभूतः क्ङित्प्रत्ययः। पूर्वाचार्यसङ्केतात्। अजादौ क्ङिति प्रत्यये परे मृजेर्विकल्पेन वृद्धिर्भवतीति तस्यार्थः। मृजन्ति मार्जन्ति।

अत्र हरदत्तः—"यस्मिन्विधिस्तदादावल्ग्रहणे" इतिपरिभाषयैव सिद्धौ अजादाविति वचनं मुख्याजादिग्रहार्थम्। तेन व्यपदेशिवद्भावेनाजादौ न भवति। यथा यूयं ममृज त्वया ममृजे इति।

अत्र केचित्। तथाऽपि ममृजेत्यत्र विकल्पो दुर्वारः। "लिटि मध्यमपुरुषबहुवचनस्य थस्य स्थाने विधीयमानोऽकारादेशोऽन्त्यस्य प्राप्नोति। न चैवं विधिवैयर्थ्यम्, थकारोत्तराकारस्य तत्र स्वत एव सत्त्वादिति वाच्यम्। णलादीनां य-

थासङ्ख्यसम्पादनेन सार्थक्यादित्याशङ्क्य अकारद्वयात्मकोऽय-मादेशोऽनेकाल्त्वात्सर्वस्य, यद्वा—धातोरित्यधिकाराद्धातोः पर-स्य थस्याकारविधाने "आदेः परस्य" इति परिभाषया थकारस्यैवाकारः, उभयथाऽपि "अतो गुणे" इति पररूपमिति भाष्ये स्पष्टम् । तस्य स्थानिवद्भावेन मुख्याजादित्वमस्त्येवेति ।

अन्ये त्वाहुः—व्यपदेशिवद्भावनिबन्धनाजादित्वस्येव स्था-निवत्त्वनिबन्धनस्यापि तस्य गौणताया वक्तुं शक्यत्वान्नेदं साधीयः । किं तु अजादाविति न विधिवाक्यशरीरम्, येनोक्त-मर्थं ज्ञापयेत् । किं तु "क्ङित्यचि वा" इति तदुत्तरभाष्यपठितमेव। पूर्वभाष्यस्थमजादिपदं तु अचीत्यस्य "यस्मिन्" इतिपरिभाषा-सिद्धार्थानुवादमात्रम् । अतो न हरदत्तोक्तं युक्तम् । अत एव ममृजेत्यत्र गणपाठादेव वृद्ध्यभाव इति आत्रेयः । धातुवृत्तिष्व-पि यूयं ममृज ममार्ज इत्युदाहृतमिति ।

इदं चान्यदवधेयम् । क्ङित्येव विकल्पारम्भात् धात्वंश-लोपनिमित्तत्वेन वृद्धिनिषेधहेतावच्प्रत्यये नायं विकल्प इत्यत्रो-क्तम् । तत्सूत्रप्रत्याख्यानप्रस्तावे तु अतोलोपस्य स्थानिवद्भावमा-श्रित्य यथोत्तरं मुनीनां प्रामाण्येन वृद्धिविकल्पो भवत्येवेत्युक्तम्, तच्चिन्त्यम् । सूत्रारम्भपक्षे यथारूपं तथैव तत्प्रत्याख्यानेऽपीति तत्र भाष्याभिप्रायस्यावश्यकत्वात् । तस्य चात्र हरदत्तोक्ताभि-प्रायेणैव सिद्धेरिति दिक् ।

नन्वचिनोत् अमार्ट् इत्यादौ स्थानिवद्भावेन तिबादेर्ङि-त्त्वाद् गुणवृद्धिनिषेधापत्तिः । न चानल्विधाविति तन्निषेधः शङ्क्यः । अनुबन्धकार्येषु तदप्रवृत्तेः । युक्तं चैतत् । अनुबन्धा-नामित्संज्ञकत्वेन आदेशात्पूर्वमेव लोपेन स्थानिन्यसंनिधानात् । आदेशप्रयोज्यनिवृत्तिप्रतियोगिन एव स्थानित्वात । लकारा-

नुबन्धनिवृत्त्योश्च भावाभावरूपादेशप्रयोज्यत्वात्। "अनेकान्ता अनुबन्धा" इति पक्षे तु तेषां स्थानिकोटिप्रवेशस्य दूरापास्तत्वात्। ज्ञापकं चात्र "न ल्यपि" इति ईत्वनिषेधः। क्त्वानिष्ठकित्त्वस्य स्थानिवद्भावेन ल्यप्यप्रवृत्तौ कित्त्वाभावादेव ईत्वाप्रसक्त्या तद्वैयर्थ्यापत्तेरिति चेत् अत्र वार्त्तिकं तावत्—

लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावप्रसङ्ग इति चेत्, यासुटो ङिद्वचनात्सिद्धमिति ।

अन्यथा लिङ्वद्भावप्रयुक्तङित्त्वेन तदादेशानां ङित्त्वे तदवयवस्य यासुटोऽपि तत्त्वात् "यासुट् परस्मैपदेषूदात्तो ङिच्च" इति ङिद्वचनं व्यर्थं स्यात्। न च स्तुयादित्यादौ "उतो वृद्धिर्लुकि हलि" इत्यस्या उत इति निर्दिष्टस्थानिकत्वेनानिग्लक्षणाया वृद्धेः, चिनुयुरित्यादौ "क्ङिति च" इतिनिषेधापवादस्य "जुसि च" इति गुणस्य च प्रतिषेधार्थं ङिद्वचनमस्तु, पुनर्ङित्त्वसामर्थ्यं विना स्थानिवत्त्वप्रयुक्तङित्त्वमात्रेण तन्निषेधस्यानुपपत्तेरिति कथं तस्य ज्ञापकत्वमिति वाच्यम्। उत औदित्येव सिद्धे वृद्धिग्रहणेन "संज्ञापूर्वको विधिरनित्यः" इति वृद्धिनिषेधसिद्धेः। "क्सस्याचि" इत्यस्मादचीत्यनुवर्त्त्य अजादौ जुसि गुणविधानात् यासुटि कृते च जुसो हलादित्वसंपत्तेः। यद्वा "मिदेर्गुणो जुसि च" इति संहितापाठे अजुसीति छित्वा अजादावुसि गुणविधानात्।

यत्त्वेवं चक्रुः जहुः इत्यादावतिप्रसङ्ग इति, तन्न। तस्य अजादित्वव्यभिचाराभावेन विशेषणवैयर्थ्यापत्त्या तत्सामर्थ्येन जुस्येव पर्यवसानात्।

वस्तुतस्तु अच्चासावुस् चेति न कर्मधारयः। उकारसकारात्मकसमुदाये अजभेदस्य बाधितत्वात्। न च अच्पदमजादौ

लाक्षणिकम् । गौरवात् । न चात्र "यस्मिन्विधिस्तदादावल्ग्रहणे" इति निर्वाहः । यस्मिन्निति सप्तम्यन्तानुकरणेन अलः सप्तम्यन्तत्वएव तत्प्रवृत्तेः । अत्र च विशेष्येणान्वये तद्विभक्त्याऽस्य सप्तम्यन्तत्वे परिभाषाप्रवृत्तिः । तस्यां चाजादिपरत्वेन योग्यतासंपत्त्या विशेष्यान्वय इत्यन्योन्याश्रयात् । एतेन उजुसीतिच्छेदोऽपि निरस्तः । अत एवाचीति सप्तम्यन्तानुवृत्तिपक्ष एव सप्तमे भाष्यकृता सिद्धान्तित इति दिक् ।

न चैवं जुसि गुणे यासुट्प्रतिषेध इति तत्रत्यवार्त्तिकवैयर्थ्यम् । उक्तरीतावेव तस्य तात्पर्यस्य तत्रोक्तत्वादिति । न चैवमपि ब्रूतादित्यत्र "ब्रुव ईट्" इतीडागमापत्तिः, तातङः स्थानिवत्त्वेन पित्त्वादिति वाच्यम् । "अनित्यमागमशासनम्" इति परिहारात् ।

भाष्यमते तु "सार्वधातुकमपित्" इत्यत्र अपिदिति योगो विभज्यते, ङिदिति चानुवर्त्तते । पर्युदासवृत्तिं नञं च पृथक्कृत्य ङित् पिन्न भवतीति आवृत्त्या वाक्यद्वयं कल्प्यते । तथा च ङित्त्वपित्त्वयोः परस्परात्यन्ताभावव्याप्यत्वलाभे अर्थादौपदेशिकेनातिदेशिकस्य बाधः फलति । तेन ब्रूतादित्यत्र इण्न । तातङ औपदेशिकेन ङित्त्वेनातिदेशिकस्य पित्त्वस्य बाधात् । अचिनोदित्यादौ तु पित्त्वस्यौपदेशिकत्वाद्वैपरीत्यमिति गुणादिसिद्धिः । अत्र यासुटो ङिद्वचनं लिङाश्रयातिदेशिकङित्त्वस्य तिबाद्याश्रयपित्त्वेन बाधिततया पुनर्ङित्त्वस्य विधायकमेव । ततश्चोभयोरप्यौपदेशिकत्वे सावकाशनिरवकाशन्यायेन चिनोतीत्यादौ सावकाशस्य पित्त्वस्यानवकाशेन ङित्त्वेन बाधः । प्रायणीयादिभिन्नाग्नीषोमीयप्राचीनपदार्थविषये सावकाशस्य यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्तीत्यस्यैव निरव-

कार्शैर्यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूया-न्मन्द्रम् प्रायणीयायां मन्द्रतरमातिथ्यायामुपांशूपसत्सूच्चैरग्नीषोमीये इत्येतैः। अतः स्तुयादित्यत्र पिति हलि विहिता वृद्धिर्न। चिनुयुरित्यत्र तूक्त एव समाधिः।

नन्वेवं भविषीष्टेत्यत्र ङित्त्वं स्यात्। आतिदेशिकङित्त्व-बाधकाभावात्। एवं करिष्यमाणेत्यत्र लृडादेशस्य शानचो-ऽतिदेशेन उगित्त्वाट्टित्त्वाच्च ङीबापत्तिः, इति चेत् अत्राहुः— "हलः श्नः" इत्यत्र शानचः शित्त्वेन क्वचिदनुबन्धकार्येऽप्य-नल्विधाविति निषेधप्रवृत्तिर्ज्ञाप्यते। अतो नोक्तदोषः। एवं च ब्रूतादित्यत्र वार्त्तिकमतेऽपि न ईडागमापत्तिरिति।

# दीधीवेवीटाम् ६।

दीधीवेव्योरिटश्च गुणवृद्धी न स्तः। आदीध्य-नम् आदीध्यकः आवेव्यनम् आवेव्यकः अकणिषम् अरणिषम् कणिता श्वः रणिता श्वः अङ्गसंज्ञायां तदादि-ग्रहणेन मिबादेशममं प्रति सिजन्तमङ्गं तिबादेशं डाशब्दं प्रति च कणित् इत्यङ्गम्। तत्रोक्तादेशद्वयसार्वधातुकं निमित्तीकृत्य प्रस-क्तस्य लघूपधगुणस्यायं निषेधः। तृजन्तादौ इटः प्रत्ययाव-यवत्वेन तदुत्तरप्रत्ययान्तराभावादङ्गानन्तर्गतत्वेन च गुणाप्र-सक्त्या लुडन्तत्वद्योतनाय श्व इत्युक्तम्। डादेशं प्रति तास्यन्त-स्याङ्गतया तास्यवयवस्य इटो गुणप्रसक्तिसंभवात्।

न च दीङ् क्षये धीङ् अनादरे वेञ् तन्तुसन्ताने वी गत्यादिषु एषामेव ग्रहणं स्यादिति वाच्यम्। "अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी" इतिन्यायात्। तन्मात्रतात्पर्यग्राहका-नुपूर्व्यन्तरपरित्यागसामर्थ्याच्च। इट् चागम एव। न तु इट गता-

वेविति धातुः । क्त्वोऽर्थग्रहणेन साहचर्यस्य नियामकत्वानियमभङ्गस्य ज्ञापितत्वात् ।

अत्र वदन्ति । दीध्यको वेव्यक इति शुद्धयोरेव दीधीवेव्यो रूपम्, न तु ण्यन्तयोः । आदीधकः आवेवकः इत्येव रूपयोस्तत्र स्वीकारात् ।

यत्तु हरदत्तेनोक्तम्—वर्णग्रहणसामर्थ्यात् श्रूयमाणएव इवर्णे लोपो न लुप्ते, तेन ण्यन्ताभ्यां ण्वुलि णिलोपस्य पूर्वविधौ स्थानिवत्त्वेऽपि श्रूयमाणत्वाभावाल्लोपाभावे याणि कृते दीध्यको वेव्यक इति शुद्धसमानाकारकमेव रूपमिति, तच्चिन्त्यम् । "नाग्लोपि"इतिसूत्रगतभाष्यविरोधात् । तत्र वर्णग्रहणं लुप्तेऽपीवर्णे यथा स्यादित्येवमर्थमित्याशङ्क्य स्थानिवद्भावेन सिद्धेरन्तरङ्गत्वाण्णिलोपात्प्राग् "यीवर्णयोः"इति लोपसिद्धेश्च वर्णग्रहणस्य प्रत्याख्यातत्वात् । भाष्यकारानुरोधेन च साधुत्वस्वीकारादिति ।

भाष्यवार्त्तिकयोस्त्वेतत्सूत्रं प्रत्याख्यातम् । दीधीवेव्योश्छान्दसत्वेन लोके प्रयोगानर्हत्वात् । छन्दसि च गुणदर्शनात् । तथा च—प्रजापतिर्वै मनसा यत्किञ्चिन्नादीधेत्, हौत्राय वृतः कृपयन्नदीधेत्, अदीधयुर्दाशराज्ञे वृतास इत्यादि । छान्दसत्त्वेनैतत्समाधानापेक्षया च क्वचिच्छ्रूयमाणगुणाभावस्यैव तेन साधयितुं युक्तत्वात् ।

इटोऽपि ग्रहणं व्यर्थम् । इड्विधौ " नेडाशि कृति " इतिसूत्रादिड्ग्रहणमनुवर्त्त्य एकस्य इट्पदस्य विकाराभाववत्परत्वेन इट् विकाराभाववानेवेति व्याख्यानेन गुणाभावस्य सिद्धत्वात् ।

न चैवं पिपठीरित्यादौ "र्वोरुपधाया दीर्घ इकः" इति दीर्घोऽपि न स्यादिति वाच्यम् । तस्य नियमं प्रत्यसिद्धत्वात् । यद्वा नियमस्याङ्गाधिकारीयत्वात्तत्रत्यस्यैव विकारस्य निय-

मेन व्यावृत्तिरित्युक्तदीर्घद्वयं निर्बाधमिति भाष्यकृतः ।

अपाठीदित्यत्रापि " सिज्लोप एकादेशे सिद्धो वक्तव्यः " इति ज्ञापकात्सवर्णदीर्घः । न च "ग्रहो लिटि" इत्यस्याप्याङ्गत्वान्निषेधापत्तिः । आरम्भसामर्थ्यादिति कैयटादयः ।

वस्तुतस्तु विकारपदस्य इकारवृत्तिभेदप्रतियोगितावच्छेदकजातिमत्परतया तादृशविकारस्य एकारादिरूपस्यैव निषेधो न तु दीर्घस्य । इत्वावच्छिन्नत्वात्तस्यापीति रहस्यम् ।

स्यादेतत् । पिपठीषि ब्राह्मणकुलानीत्यत्र " सान्त महतः संयोगस्य " इति दीर्घो न स्यात् । सिद्धत्वात्, आङ्गत्वात्, अन्यत्र चरितार्थत्वाद्, वैजात्यानवच्छिन्नत्वाच्चेति ।

अत्राहुः— असाधुरेवोक्तप्रयोगः । अतोलोपस्य स्थानिवद्भावेन झलन्तत्वाभावात्तल्लक्षणस्य नुमो दुर्लभत्वात् । न च तर्ह्यजन्तत्वादेव नुम् स्यादिति वाच्यम् । अजन्तत्वप्रयुक्तस्य नुमः सकारोत्तरमेव प्रसक्तेः । सान्तसंयोगाभावेन तथाऽपि दीर्घाप्रसक्तेः । अनादिष्टादचः पूर्वत्वाभावेन तस्य स्थानिवत्त्वासम्भवात् । पिपठिष इत्यजन्तस्य लोपपूर्वदशायामकारापेक्षया पूर्वत्वाभावात् । न ह्यकारविशिष्टस्याकारात्पूर्वत्वम् । बाधात् ।

न च "क्वौ लुप्तं न स्थानिवद्"इतिअतोलोपस्य स्थानिवत्त्वाभावाज्झलन्तलक्षणो नुम् स्यादेवेति वाच्यम् । क्वौ विधिं प्रति न स्थानिवदित्यस्यैवार्थस्य व्यवस्थितत्वात् । लवमाचक्षाण इत्यर्थे तत्करोतीति ण्यन्तात् लवशब्दात् क्विपि "णेरनिटि"इति णिलोपे कृते वकारस्य ऊठि कर्त्तव्ये णिनिमित्तकस्यातोलोपस्य स्थानिवद्भावो मा भूदित्यर्थकत्वात् । सुखीयतिसुतीयतिभ्यां

१ अकारकाले सर्वनामस्थानपरकत्वाभावेन नुमोऽप्राप्तेः । अल्लोपस्यान्तरङ्गत्वात्पूर्वमेव प्रवृत्तेरिति भावः ।

क्विपि अल्लोपयलोपयोः कृतयोः अल्लोपस्य स्थानिवत्त्वेन यणादेशो मा भूदित्येतदर्थं क्वौ लुप्तमित्यस्याश्रयणेऽपि तस्यासार्वत्रिकत्वात् इति नपदान्तसूत्रे वक्ष्यमाणत्वात् । प्रकृते च नुमः क्विन्निमित्तकत्वाभावेन क्वौ विधिमित्यस्याप्रवृत्तेः ।

# हलोऽनन्तराः संयोगः ७ ।

अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः । प्रदेशाः "संयोगान्तस्य लोपः" इत्यादयः । हलः किम् । तितउपदे संयोगान्तलोपो मा भूत् । न च " तनोतेर्डउः सन्वच्च " इत्यत्र उकारोच्चारणसामर्थ्यादेव तदभावसिद्धिरिति वाच्यम् । भसंज्ञास्थले संयोगान्तलोपप्रसक्त्यभावेन तत्र तत्सार्थक्यात् ।

ननु अन्तरशब्देन सहायं बहुव्रीहिरन्तराशब्देन वा । आद्ये अन्तरशब्दस्याधेयवाचितया हलपेक्षया विजातीयवर्णशून्यस्य संज्ञायामवग्रहेऽपि संयोगसंज्ञासिद्धिः । तत्र हि मतद्वयम् । मात्राकालव्यवधानेन वर्णान्तरमुच्चार्यते इत्येकम्, अर्द्धमात्राकालव्यवधानेनेत्यपरम्, उभयथाऽपि कालव्यवधानेऽपि वर्णान्तरव्यवधानाभावात् । द्वितीये तु आधारस्य कालस्यापि व्यवधाननिषेधात् अवग्रहे संयोगसंज्ञा न स्यात्, हलुच्चारणसमयध्वंसाधिकरणसमयध्वंसानाधिकरणसमयवृत्त्युच्चारणप्रतियोगित्वस्य अज्व्यवधाने इव कालव्यवधानेऽपि विरहात् इति विशेषसत्त्वादिति चेत्—

अत्र भाष्यकाराः-नैव दोषो नैव प्रयोजनमिति । पक्षद्वयमप्यदोषमिति तस्यार्थः । न चाप्सु इत्यादौ संयोगसत्त्वे गुरुत्वाद् "गुरोरनृत." इति प्लुतो न त्वन्यथेति कथमुभयाभाव इति वाच्यम् । अधिकरणवृत्तेः तस्य दूराद्धूतसंबन्धाभावात् । विचार्यमाणाना-

मित्यादौ तु वाक्यस्य टेरेव प्लुतविधानेन गुरुसंज्ञाया अनपेक्षितत्वात्। न चाप्सु भवोऽप्सव्यः दिगादित्वाद्यत् "अपो योनियन्मतुषु" इति सप्तम्या अलुक्, तत्संबुद्धौ दूराध्दूतसंबन्धात्फलभेदापत्तिरिति वाच्यम्। एवंविधे विषये अवग्रहस्य पदकारैरकरणात्तथैव संप्रदायात्। न चाप्सु योनिर्वाऽत्र इत्यत्र विशेषः स्यादिति वाच्यम्। समासपदानामन्तोऽवगृह्यतइति पदकारसंप्रदायात्तत्रापि सुशब्दात्पूर्वमवग्रहाभावादिति कैयटादयः।

इयं च संज्ञा समुदायस्य, नावयवमात्रस्य, संयुज्यन्तेऽस्मिन्समुदाये वर्णा इत्यन्वर्थसंज्ञाविज्ञानात्।अन्यथा निर्यायादित्यादौ रेफयकारयोः प्रत्येकं संयोगसंज्ञायां यकारस्यापि संयोगादित्वाद् "वाऽन्यस्य संयोगादेः" इत्येत्वं स्यात्, ग्लेयादित्यादिवत्। न च सिद्धान्तेऽपि "अचो रहाभ्याम्" इति द्वित्वेन यकारद्वयसम्पत्त्या स्यादेवोक्तदोष इति वाच्यम्। तस्यासिद्धत्वेन संयोगसंज्ञाया अनिष्पत्तेः।

किं च प्रत्येकसंज्ञापक्षे संहृषीष्टेत्यत्र "ऋतश्च संयोगादेः" इति इट्, संह्रियतइत्यत्र "गुणोऽर्त्तिसंयोगाद्योः" इति गुणश्च स्यात्। चरमवर्णस्य संयोगतया ऋकारेकारयोः संयोगादित्वसंम्पत्तेः। दृषत्करोतीत्यत्र ककारस्य संयोगान्तस्य लोपः स्यात्। दकारस्य संयोगत्वे तदन्तत्वस्य सत्त्वात्। शक्तावस्ता इत्यत्र "स्कोः" इति संयोगाद्योः सकारककारयोर्लोपः स्यात्। तकारस्य झलः परतः सत्त्वात्। निर्यातः इत्यादौ "संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वं च स्यात्।

यदि तु "वाऽन्यस्य संयोगादेः" इत्यत्र संयोगादित्येतावतैव संयोगात्परो य आकारस्तदन्तस्याङ्गस्य एत्वमित्यर्थलाभादादिग्रहणसामर्थ्यादभेदैकत्वसंख्यैव वृत्तौ भासतइति नियमं ति-

रस्कृत्य संयोगावादी यस्येत्युपसर्जनार्थस्यापि द्वित्वावगतिरिति संयोगद्वयादेरेव एत्वमिति सूत्रार्थान्निर्यायादित्यत्र नातिव्याप्तिः । एवम् "ऋतश्च संयोगादेः" "गुणोऽर्तिसंयोगाद्योः" इत्यत्रापि व्याख्येयम्। "संयोगान्तस्य" इत्यत्रापि पूर्वन्यायेन संयोगद्वयान्तस्य लोपविधानान्न दृषत्करोतीत्यत्र दोषापत्तिः । "स्कोः संयोगाद्योः" इत्यत्रापि सकारककारगतद्वित्वापेक्षया संयोगयोरित्येव सिद्धे आदिग्रहणबलाद् झलि परतो यः संयोगः पदान्ते च यः संयोगः तस्यादिः समीपो यः ककारः सकारश्च तयोर्लोपविधानम्। तेन शक्ता वस्ता इत्यत्र नातिप्रसङ्गः। "संयोगादेरातः" इत्यत्रापि संयोगादात इत्येव संयोगात्परो य आकारस्तदन्ताद्धातोः परस्य निष्ठातकारस्य नत्वमित्यर्थेन सिद्धे आदिग्रहणवशात्संयोगद्वयादिलाभान्निर्यात इत्यत्र नोक्तदोष इति कल्प्यते । तथाऽपि प्रतिपत्तिगौरवम्, प्रत्येकं संयोगसंज्ञायाः क्वचिदप्यनुपयोगे तत्स्वीकारवैयर्थ्यं चेत्यवधेयम् ।

हल इति बहुत्वं चाविवक्षितम्। अन्यथा शिक्षेत्यादौ "गुरोश्च हलः" इत्यप्रत्ययानुपपत्तेः । न चैवमजव्यवहितस्यैकस्यापि संयोगसंज्ञापत्तिः । अवयवार्थानुरोधेन द्वयोरवश्यमपेक्षितत्वात् । यत्र तु बहूनां हलामव्यवधानं तत्राविशेषेण द्वयोर्बहूनां च संज्ञा ।

न चैकाज्द्विर्वचनन्यायः । समुदायकार्येणावयवानां कार्यसंपत्तेरेव तद्बीजत्वात् । निज् इत्यस्य द्विरुक्तौ तदन्तर्गतानां सर्वेषामेकाचां द्विर्वचननिर्वाहात् । इह च बहूनां संज्ञया द्वयोस्तत्कार्यासिद्धिरिति वैषम्यात् । तथा हि । संस्वर्यतइत्यत्र "गुणोऽर्ति" इति न स्यात् । गोमान्करोतीत्यत्र गोमान् त् स् क-

रोति इति स्थिते तकारस्य संयोगान्तलोपो न स्यात् । मङ्क्तेत्यत्र "मस्जिनशोर्झलि" इति नुमागमे मन् स् ज् इति स्थिते सकारस्य संयोगादित्वाभावात् "स्कोः" इति लोपो न स्यात्। निर्ग्लेयादित्यादौ रेफघटितसंयोगस्याङ्गादित्वाभावात् अङ्गादेश्च गकारलकारसमुदायस्य संयोगसंज्ञत्वाभावादेत्वं न स्यात् । एवं निर्ग्लान इत्यत्र नत्वं न स्यात् ।

अथैवम् इन्दिद्रीयिषतीति न सिध्यति । तथा हि— तत्र नकारदकारघटित एकः दकाररेफघटितश्चान्य इति द्वौ संयोगौ उक्तरीत्या च नकारस्येव दकारस्यापि संयोगादित्वाद् "नन्द्राः संयोगादयः" इति द्वित्वनिषेधे रीशब्दस्यैव द्वित्वे इन्द्रिरीयिषतीति रूपं स्यादिति चेत्, सत्यम् । तत्र हि कर्मधारयोत्तरपञ्चम्यन्तमजादेरितिपदम् "अजादेर्द्वितीयस्य" इति सूत्रादनुवर्त्तते । आदिभूतादचः परे संयोगादयो नदरा द्विर्नोच्यन्तइति सूत्रार्थः। ततश्च दकारस्य संयोगादित्वेऽप्यादिभूतादचः परत्वाभावान्निषेधाप्रवृत्तौ द्रीशब्दस्य द्वित्वे हलादिःशेषेऽभ्यासस्य ह्रस्वे च सिद्धमिष्टम् । एवं च आदेरचः परस्यैकाचो द्वितीयत्वव्याप्यत्वात्तत्सूत्रे द्वितीयपदं नोपादेयमेवेति निष्कर्षः ।

# मुखनासिकावचनोऽनुनासिकः ८ ।

मुखयुतनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् । अभ्र आँ अपः । "आङोऽनुनासिकश्छन्दसि" इति आ इत्यस्यानुनासिकः । प्राण्यङ्गत्वेन समाहारद्वन्द्वे क्लीबत्वेन नासिकवचनं इत्यापत्तिवारणाय मध्यमपदलोपिसमासाश्रयणम् ।

निपातनाद्यथाश्रुतस्य साधुत्वे तु मुखनासिकवचन इत्यसाधु । "अबाधकान्यपि निपातनानि" इति पक्षे तु तदपि साधु ।

यद्वा- मुखनासिकपदं कृत्वा ईषदर्थकनञ्समासव्युत्पन्नेन तादृशाङ्पूर्वेण वा वचनपदेन समासः । भागस्य मुखेन भागस्य नासिकया चोच्चारणादीषत्त्वम् । इदं च पूर्वपरयोर्भागयोर्मध्ये एको भागो मुखेनोच्चार्यते द्वितीयस्तु नासिकया । तत्र नासिकावचनभागोपरागवशान्मुखवचनभागस्यापि नासिकावचनवद्भानम् । यथा सँय्यन्तेत्यादौ अनुनासिकयकाराद्युपरागादकारस्याप्यनुनासिकत्वेन प्रतीतिरिति मतमाश्रित्योक्तम् ।

यदा तु मुखस्य नासिकायाश्चान्तरालवर्त्तिस्थानान्तरमेवैतदुच्चारणे निमित्तम्, तदा मुखोपसंहिता नासिकेति समासः । पदद्वयस्य स्वार्थान्तरालदेशे लक्षणात् । अर्द्धमन्तर्वेदि मिनोत्यर्द्धं बहिर्वेदीत्यस्येव तदन्तराले । तत्राद्यपक्षे प्रासादवासिन्यायः । यथा प्रासादवासिनस्तद्ग्रहणेन भूमिवासिनस्तद्ग्रहणेन केवलं गृह्यन्ते । उभयवासिनस्तु प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च गृह्यन्ते । ग्राहकतावच्छेदकधर्मद्वयावच्छिन्नत्वात् । उत्तरमतद्वये तु न तदवतार इति स्पष्टमेव ।

अत्र पदसंस्कारपक्षे वचनपदं करणल्युडन्तम् । उच्यतेऽनेनेति व्युत्पाद्य पश्चान्मुखनासिकापदेन सम्बध्यते । अन्तरङ्गत्वात्प्रवृत्तश्च पदसंस्कारो बहिरङ्गेण पदान्तरान्वयदशायां प्रतीयमानेन स्त्रीत्वेन न बाध्यतइति ङीप्प्रत्ययो न भवति । प्रथममेव स्त्रीत्वविवक्षायां तु मुखनासिकावचनीक इत्यपि निर्बाधम् । एवं च मुखनासिका वचनं यस्य मुखनासिकमवचनं यस्येति वा बहुव्रीहिरिति भाष्यमतम् ।

केचित्तु राजभोजनाः शालय इतिवत् कर्मणि ल्युप्रत्ययं

बाहुलकात् स्वीकृत्य कर्मषष्ठ्या समास इत्याहुः ।

अत्र मुखग्रहणं किम् यमानुस्वाराणामेव मा भूदिति भाष्यम् । अस्यार्थः— मध्यमदर्शने नासिकावचनपदेन उभयस्थानको वर्णो न गृह्येत, किं तु यमानुस्वारा एव । तेषां मतविशेषे एव केवलनासिकास्थानत्वात् । तथा च तैत्तिरीयप्रातिशाख्यम्—"नासिक्या नासिकास्थाना मुखनासिक्या वा" इति । तथा च "आङोऽनुनासिकः" इत्यादौ विधिस्थले तएव विधीयेरन् । "विड्वनोरनुनासिकस्याद्" इत्याद्यनुवादस्थले तु अनुवादस्य यथाप्राप्तविषयकत्वानियमात् यमानुस्वारपरस्य च विडादिप्रत्ययस्यासिद्धेरप्रतिपत्तिरेव स्यात् । अतस्तद्दर्शने मुखपदं सार्थकम् ।

आद्यमते तु नासिकावचनपदेनैव प्रासादवासिन्यायेन मुखवचनानामपि ग्रहणसंभवात्तद्व्यर्थमेव । न च यमानुस्वारानादायातिप्रसङ्गः । अनुवादे यमानुस्वाराणामसंभवात्, विधौ च स्थानिनो मुखनासिकावचनत्वात् तदन्तरतमत्वेन मुखनासिकावचनस्यैवादेशत्वात्केवलनासिकावचनानां यमादीनामान्तरतम्याभावादेवातिप्रसङ्गभङ्गात् । तदुक्तं भाष्यकृता—

नैव दोषो नैव प्रयोजनम् इति ।

तथा च तेषामपि संज्ञाविधाने दोषाभावात् मुखपदं न देयमेवेति स्थितम् । नासिकापदत्यागे तु कचटतपानामपि स्यात् । ततश्च शक्त इत्यत्र ककारस्य पक्व इत्यत्र चकारस्य तप्तमित्यत्र पकारस्य च लोपः स्यात् । ओदनपागित्यादौ "अनुनासिकस्य क्विझलोः" इति दीर्घश्च स्यात् ।

अत्र वदन्ति । वर्गेष्वादितश्चतुर्णां पञ्चमे परे मध्ये पूर्ववर्णसमानाकारं वर्णान्तरं प्रातिशाख्ये स्वागमत्वेन विहितं यम-

संज्ञम् । यमलजातयोः प्रायेण सारूप्यदर्शनाद्यम इव यम इति गौण्येयं संज्ञा । यथा पलिक्क्नी चख्ख्नतुः अग्ग्निः अघ्घ्नन् इत्यत्र कखगघेभ्यः परभागे तत्तत्सदृशोऽयमागमः ।

इयन्तु यमोत्पत्तिरखण्डपदे एवेति तु प्रमाणाभावादुपेक्ष्यम् । परभागे इति मूलग्रन्थेन पूर्वावयवत्वस्यैव लाभात् । अत एव छान्दोग्यलक्षणप्रणेतुरौदव्रजिसंज्ञस्याचार्यस्य सूत्रम् "अनन्त्यान्त्यसयोगे मध्ये यमः पूर्वस्य गुणः" इति । अनन्त्या आद्याश्चत्वारः । अन्त्या ङकारादयः । गुणः पूर्वस्य भक्तः, तदवयव इति यावत् ।

यत्तु विवरणकारैरुक्तम्—वर्गपञ्चमयुक्ताः प्रथमादयो यमा इति, तच्चिन्त्यम् । अयोगवाहत्वप्रतिपादकहयवरट्सूत्रीयभाष्यविरोधात् । केवलनासिकास्थानत्वपरोक्तभाष्यविरोधाच्चेति ।

अत्रेदं विचारणीयम् । चतुर्णामाद्यवर्त्तिनामेवानुनासिकगुणत्वेन भेदात्तज्जातीयत्वेऽपि सानुनासिकयकारादिवदणूसूपदिष्टैः स्वसवर्णैरगृहीतत्वाद्युक्तमेवायोगवाहत्वम् । न हि निरनुनासिकाः कादयोऽण्मध्ये पठ्यन्ते, येनैषामपि ग्रहणकशास्त्रेणैव संग्रहासिद्धौ अयोगवाहत्वप्रतिपादनविरोधः स्यात् । तस्मात्सानुनासिकानिरनुनासिकभेदेन कादीनां द्वैविध्यमित्येव भाष्यादितात्पर्यम्, न तु कादिवृत्तिवर्णत्वसाक्षाद्व्याप्यजात्यभाववत्तायाम् । मानाभावात् ।

अत एव कुँ खुँ गुँ घुँ इति न्यासादिग्रन्थाः सङ्गच्छन्ते । कुँ इत्यस्य तत्तद्वर्गाद्यक्षरपरत्वात् । खुँ इत्यादेश्च वर्गद्वितीयाद्यक्षरपरत्वात् । अनुनासिकत्वमात्रस्य चाधिकस्योपादानात् । नापि द्वितीयो विरोधः । अँ इत्यादीनां भागमात्र नासिक्यम् । यमानुस्वाराणां तु मुखनासिक्यत्वेऽपि प्रासादवासिन्यायेनानुना-

सिकत्वमप्यस्ति, न तु तदीयं भागमात्रं तथा, इत्येवं परत्वस्य भवद्भिरेवोक्तत्वात्। एतेनादितश्चतुर्णां तदसम्भव एवेत्यपास्तम्। प्रमाणसत्त्वे बाधकाभावात्।

ननु गुणानामभेदकत्वादेव तेषां प्रत्याहारान्तर्भावसम्भवादयोगवाहानामट्सूपदेशपरभाष्यवार्त्तिकविरोध एवेति चेत्, मैवम्। अयोगवाहपदेन तेषां संग्रहेऽपि विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वाराणामेव तत्रोपदेशप्रयोजनस्योक्तत्वेन यमानां प्रयोजनस्य तत्र कुत्राप्यनुक्तत्वात् तथाऽपि प्रत्याहारविशेषपुरस्कारेणैव तान्नियमसम्पादनार्थकत्वेन तदविरोधाच्च यमानां तत्रोपदेशे तात्पर्याभावनिर्णयात्।

यत्तूक्तम्—नैव दोषो नैव प्रयोजनमिति भाष्यविरोधः, त्वन्मते यद्‍ ग्रन्तीत्यादौ "यरोऽनुनासिके" इत्यस्य प्रवृत्त्या दोषस्योद्भटत्वादिति, तदप्यसत्। द्विर्वचनविध्येकवाक्यतापन्नयत्वस्यैव तेषु नियतत्वेन सत्यपि यमानां यरन्तर्भावे अनुनासिकत्वादिविध्येकवाक्यतापन्नयत्वस्य बाधाभ्युपगमात्। एवं च यमानां व्यञ्जनपरत्वानियमेन " अनचि च " इत्यस्य तत्र कदाचिदप्यप्रवृत्त्या फलतो यमांशे यत्वादिबाध एव पर्यवस्यतीति सिद्धम्। गुणानामभेदकत्वेऽपि यमानां न तत्तत्कार्यप्रवृत्तिरिति। तस्माद्यमानामयोगवाहत्वप्रतिपादकभाष्यस्य तेषां तत्तत्प्रत्याहारविशेषान्तर्भावप्रयुक्तकार्यानुदाहरणव्याजेन तत्तत्प्रत्याहारानन्तर्भावविधानएव तात्पर्यम्। अन्यथा अन्तर्भावप्रयुक्तकार्याभावे तद्विधानवैयर्थ्यात्। अप्रसक्तस्य च निषेधानर्हत्वात्। प्रसक्तेश्च वर्णान्तरत्वपक्षे वर्णसमाम्नायमध्यानुपदेशेनानुपपन्नत्वात्। ककारादिमध्यएवान्तर्भावः संमतः। तथा सति हि गुणानामभेदकत्वेन खफछठेत्यादिभिस्तत्संग्रहे प्रसक्ते-

भवति निषेधोपपत्तिः । तस्मादन्यथाऽनुपपन्नमुक्तभाष्यग्रन्थमेव पुरस्कृत्य वक्ष्यमाणवाक्यानां वर्णान्तरत्वतात्पर्येण व्याख्यानं प्रत्यादेश्यम् ।

एकं ब्रह्मास्त्रमादाय नान्यं गणयतः क्वचित् ।
आस्ते न धीरवीरस्य भङ्गः सङ्गरकेलिषु ॥

इति न्यायात् । तथा हि—स्पर्शा यमा अनुनासिकाः स्वात्परेषु स्पर्शेष्वनुनासिकेषु इति प्रातिशाख्ये स्वपदस्य वर्गाद्यक्षरचतुष्टयपरत्वात् तत्परेष्वनुनासिकस्पर्शे वर्गान्त्यवर्णेषु अनुनासिकत्वविशिष्टाः स्पर्शाः प्रथमाद्याः यमसंज्ञा भवन्तीत्यर्थस्य स्पष्टतया स्पर्शसंज्ञया च कुत्र वर्णान्तरत्वे तात्पर्यम् । एतेन "प्रदोध्रुवच्छ्वशुषु" इत्यत्रोष्मसंज्ञकशकारादिषूपस्थानीयस्य छकारादेर्यमवारणाय प्रवृत्तेन "स्पर्शस्योष्मप्रकृतेः परस्ताद्यमापत्तिः" इतिसूत्रे परस्ताच्छब्ददर्शनाद्वर्णान्तरत्वमित्यपास्तम् । परस्ताच्छब्देनागमत्वमात्रलाभेऽपि वर्णान्तरत्वस्य लाभे उक्तिसम्भवाभावात् ।

यदपि नारदीयाशिक्षायाम्—

अनन्त्यश्च भवेत्पूर्वो ह्यन्त्यश्च परतो यदि ।
तत्र मध्ये यमस्तिष्ठेत्सवर्णः पूर्ववर्णयोः ॥

सवर्णः सदृशः । द्वित्वमपि विवक्षितम् । यज्ञ इत्यादौ जकारद्वयसत्त्वेऽपि "ज्मया अत्र वसवो रन्तिदेवा" इत्यादौ जकारद्वयाभावादिति तद्व्याख्यातार इति, तदप्यकिञ्चित्करम् । आगमे आगमिवृत्तिवर्णत्वव्याप्यजात्यभाववत्त्वरूपस्य वर्णान्तरत्वस्य ततोऽनवगमात् सावर्ण्यस्य गुणभेदेनैव निर्वाहात् । औदव्रजिसूत्रेऽपि गुणत्वस्यैव लाभात् । " अशरीरं यमं प्राहुः " इति गौतमशिक्षायाश्चार्थस्तैरेवोक्तः । अशरीरं स्वरभक्त्यादिवद्-

व्यञ्जकलिपिविशेषशून्यम् । लक्षणवशेनैव तदीयस्थलविशेषनिश्चयसम्भवाल्लिपिसम्प्रदायप्रवर्त्तकाचार्यैः स्वरभक्तेरिव यमस्यापि व्यञ्जकीभूता लिपिर्न कल्पितेति यावत् । "रलयोरूष्मणि परे मध्ये स्वरभक्तिः" इति शिक्षादिप्रसिद्धेः ।

यत्र तु नैवंविधलक्षणेन स्थलावधारणं कर्त्तुं शक्यते, तत्रागत्या लिप्यन्तरं प्रवर्त्तितम्, यथा विसर्गादाविति । न त्वेतावता वर्णान्तरत्वसिद्धिः । अन्वयदृष्टान्ते वर्णान्तरत्वेऽपि व्यतिरेकदृष्टान्ते तदभावात् । अन्यथा तदनुक्त्या शिक्षादौ विभागस्य न्यूनत्वापत्तेः ।

यदपि पाणिनीयाशिक्षायाम्—

त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः सम्भवतो मताः ।
प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा ॥
स्वरा विंशतिरेकश्च स्पर्शाः स्युः पञ्चविंशतिः ।
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ॥
अनुस्वारविसर्गौ च ᳲकᳲपौ चापि पराश्रयौ ।
दुस्पृष्टश्चेति विज्ञेया ऌकारः प्लुत एव च ॥

तत्र अइउऋवर्णानां ह्रस्वदीर्घप्लुतभेदात् द्वादश,ऌकारस्य ह्रस्व एव, एचां दीर्घप्लुतभेदादष्टाविति अचामेकविंशतिः । स्पर्शाः कादयो मावसानाः । यरलवशषसहेत्यष्टौ । यमाश्चत्वारः । प्रथमत्वद्वितीयत्वतृतीयत्वचतुर्थत्वोपाधिभेदात् । अनुस्वारादयश्चत्वारः स्पष्टाः । दुस्पृष्टस्तु बाह्वृच्ये प्रसिद्धः । एवं त्रिषष्टिः, ऌकारस्य प्लुतत्वसम्भवात्तेन सह चतुःषष्टिरिति ।

अत्र यमानां पृथग्गणनात् स्पष्टमेव वर्णान्तरत्वमिति, तदप्यसत् । न ह्यत्र एकसंख्येयवृत्तिवर्णत्वव्याप्यजात्यभाववत्त्वं संख्येयान्तरस्य नियतम् । ह्रस्वाद्यकारादौ तादृश्या अत्वादिजातेः-

त्वात् । तथा च कुत्रचिज्जातिभेदेन कुत्रचिद् गुणभेदेन गणनस्यात्र दर्शनात् यमांशेऽपि कादिवृत्तिजात्यभावे प्रामाण्यमस्त्येवेति वक्तुमशक्यत्वात् ।

न चैवं यादीनामष्टत्वानुपपत्तिः, यवलानां गुणभेदेन द्वैविध्यादिति वाच्यम् । तत्रोभयसाधारणजातेरेव विभाजकत्वेनाभिमतत्वात् । स्वतन्त्रेच्छस्य महर्षेर्नियोगप्रत्यनुयोगानर्हत्वात् । तात्पर्यस्य चोक्तरीत्या विघटितत्वात् । तस्माद्विवरणमतमेव रमणीयमिति सूक्ष्ममीक्षणीयम् ।

# तुल्यास्यप्रयत्नं सवर्णम् ९।

ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्युभयं ययोर्वर्णयोस्तुल्यं तयोः परस्परं सवर्णसंज्ञा स्यात् । प्रदेशाः "अकः सवर्णे दीर्घः" इत्यादयः । उत्तरपदे द्वन्द्वगर्भः, तत्पुरुषगर्भः, पूर्वपदे तत्पुरुषगर्भः, त्रिपदो वा बहुव्रीहिरिति चत्वारोऽत्र पक्षाः । तत्राद्यो व्याख्यातः । आस्यं च प्रयत्नश्च आस्यप्रयत्नौ तौ तुल्यावस्येत्यर्थस्योक्तेः । आस्ये प्रयत्न आस्यप्रयत्नः । न च "अमूर्द्धमस्तकात्स्वाङ्गादकामे" इति सप्तम्या अलुगापत्तिः । तद्धितान्तस्यास्यशब्दस्य स्वाङ्गमात्रवाचित्वाभावात् । स तुल्योऽस्येति द्वितीयः । तुल्य आस्ये तुल्यास्यः, मयूरव्यंसकादित्वात्साधुः । तादृशः प्रयत्नो यस्येति तृतीयः । तुल्य आस्ये प्रयत्नो यस्येति चतुर्थः । अनेकपदोपादानसामर्थ्येन त्रिपदस्यापि बहुव्रीहेरङ्गीकारात् । तुल्यशब्दस्य तुलया संमित इति व्युत्पत्तावपि सदृशमात्रे रूढिः, प्रवीणादिवत् ।

आस्यशब्दे च नानाविधा व्युत्पत्तिः। अस्यन्ते उच्चार्यन्ते, वर्णा अनेनेत्यास्यम्। बाहुलकात्करणे ण्यत्। यद्वा—आस्यन्दतेऽन्नं प्राप्य द्रवीभवतीत्यास्यम्। "अन्येष्वपि" इति डः। अथ वा अन्नेन द्रवीक्रियते इत्यास्यम्। अन्तर्भावितण्यर्थात्कर्मणि डः।

स्यादेतत्। एवमनियतावयवार्थप्रदर्शनपरेण भाष्येणास्यशब्दस्य मुखे रूढिर्विवक्षिता। तथा च रूढेर्बलवत्त्वाद् अवयवार्थमात्रेण ताल्वादीनां ग्रहणं न सम्भवति। "लौकिकमास्यम् ओष्ठात्प्रभृति प्राक्काकलकात्" इति भाष्योक्तेः। एवं च तदुपादानं व्यर्थम्। सर्ववर्णानामास्यएव निष्पत्तेः। न च नासिक्येषु व्यभिचारः। नासिका हि न बाह्या वर्णोत्पत्तौ निमित्तम्, तत्र जिह्वाग्रादिसंयोगाभावात्, किं तर्हि आस्यान्तश्चर्म विततमस्ति, तत्सम्बद्धा रेखा नासिका, तस्यां वाय्वभिघाताद्वर्णोत्पत्तिरिति सिद्धान्तात्। विसर्गस्य कैश्चिदुरःस्थानस्वीकारेऽपि तस्य सावर्ण्याभावेऽपि दोषाभावात्। प्रयत्नमात्रसाम्यविवक्षायां च जबगडदानां स्पृष्टप्रयत्नसाम्यात्सावर्ण्यापत्तिः। भाष्ये शकारस्याप्युपादानं तु संपातायातम्। विवृतत्वेन प्रयत्नभेदात्। ततश्च ऊर्ग्ज इत्यादौ "झरो झरि सवर्णे" इति लोपः स्यात्। ऊर्गन्नम्। "पञ्चम्यामजातौ" इति डः। एवं प्राप्ते न्यासभेदेन सिद्धान्तमाह वार्त्तिककारः—

सिद्धन्त्वास्ये तुल्यदेशप्रयत्नं सवर्णम् इति।

अस्यार्थः—आस्ये येषां तुल्यो देशः प्रयत्नश्च ते सवर्णसंज्ञाः। उक्तस्थले तु देशभेदान्नातिव्याप्तिः। आस्येति प्रयत्नविशेषणार्थम्। तेन बाह्यप्रयत्नव्यावृत्तिः। तथा च देशांशे तस्य वैयर्थ्येऽपि न क्षतिः। बाह्यप्रयत्नाश्च विवारादयो महाप्राणान्ता अष्टौ भाष्ये कण्ठोक्ताः।

नन्वेवमप्यकारस्य सवर्णसंज्ञा न स्यात्, काकलकस्याधस्तादुपजत्रुस्थानमवर्णस्येति कैश्चिदङ्गीकारात्, तस्य चोक्तास्यबहिर्भावात् । मैवम् । सर्वमेव मुखमवर्णनिष्पत्तौ व्याप्रियत इत्यभ्युपगमात् । न च तथाऽपि तस्यास्यमेव देशो न त्वास्ये देश इत्युक्तानुपपत्तिसाम्यम् । व्यपदेशिवद्भावेन सिद्धेः । आस्यशब्दस्य सर्वावस्थाविशिष्टास्यपरत्वात् । देशशब्दस्य तु अवर्णोत्पत्तिहेत्ववस्थाविशिष्टतत्परत्वाद्दिति ।

भाष्यकारास्त्वाहुः— आस्ये भवमास्यम्, शरीरावयवाद्यत् । "हलो यमाम्" इति यलोपः । न चाल्लोपस्य स्थानिवत्त्वम्। यलोपे तन्निषेधात् । तथा चास्यपदादेव स्थानलाभे सूत्रभङ्गो न युक्तः । न च बाह्यप्रयत्नभेदे सावर्ण्यानापत्तिः । प्रारम्भो यत्नस्य प्रयत्न इति व्युत्पत्त्यैव तद्व्यावृत्तेः । बाह्यानां वर्णोत्पत्तिपश्चाद्भावित्वस्य वक्ष्यमाणत्वात् ।

अस्तु वा प्रयत्नपदं यथाश्रुतमेव । बाह्यभेदेऽप्याभ्यन्तरसाम्येन सावर्ण्यसिद्धेः । यावत्प्रयत्नसाम्यविवक्षायां प्रयोजनाभावात् । स्थानैक्ये सति यत्किञ्चित्प्रयत्नसाम्यस्यैवानतिप्रसक्तत्वात् । न चैवमपि अवर्णस्य एङोश्च सावर्ण्यापत्तिः । पांसूदकवद्भागज्ञानाभावात् । न चैचोस्तेन सावर्ण्यापत्तिः, तत्र भागविवेकस्य सुस्थत्वादिति वाच्यम् । तयोरवर्णस्य विवृततरत्वात् एङमैचां च स्थानभेदादेव तदनापत्तेः । "एओङ्" इत्यादिसूत्रे पृथगनुबन्धसामर्थ्यादैचोः पृथङ्निर्देशाच्चेति तत्रैवोक्तम् । एतेन ऐचावपि व्याख्यातौ । स्थानभेदाच्च ।

न च तथाऽप्युदात्तानुदात्तानां सावर्ण्यं न स्यात्, प्रयत्नभेदादिति वाच्यम् । स्वरूपमात्रसतां गुणानामभेदकत्वमिति स्वीकारात् ।

यत्तु भाष्यकारस्य प्रौढिमात्रमेतत् । तथा हि— एजवयवा-वर्णेन सह सावर्ण्यमापाद्यतउत एज्भिरेव । नाद्यः। गव्यं नाव्य-मित्यत्र "यस्येति च" इति लोपापत्तिरितिकैयटविवरणादिग्रन्थ-विरोधात् । उत्तरभागेन व्यवधानात् । कर्तॄणामित्यादौ णत्वार्थं "व्यवायेऽपि" इति योगविभागस्य भाष्यकारैरेवोक्तत्वात् । न चोत्तरभाग एवावर्णसदृश इति वाच्यम् । अग्ने एहीत्यादौ पूर्वरूपस्य भाष्यएवापादितत्वात् तद्विरोधात् । जात्यन्तरत्वस्यैव तत्र सिद्धान्तितत्वाच्च । नान्त्यः । प्रश्लिष्टावर्णावित्यादिहे-त्वनुपपत्तेः । हेत्वन्तरस्यैव वाच्यत्वात् । अत एव इवर्णोवर्ण-योरेचश्च न सावर्ण्यमिति ।

तत्रेदं वाच्यम्— किमवयवस्य सावर्ण्यमिति शङ्कैवा-त्रानवकाशा । अवर्णस्य एङश्च सवर्णसंज्ञा प्राप्नोतीति स्पष्टमेव भाष्ये उक्तत्वात् । ननु सन्ध्यक्षरेषु प्रथमभाग-स्याकारेण सादृश्यात्सवर्णसंज्ञाप्राप्तिरिति कैयटोक्तायामापात-निकायां तथा प्रतीयतइति चेन्न । तद्द्वाराऽप्यवर्णस्य सादृश्य-मस्तीति तद्भावमुक्त्वा नाव्यमित्यत्र यस्येतिलोपापत्तेः तदुक्ताद्यविवरणएव सङ्गमितत्वात् । तथा च कैयटाद्युक्तयस्ये-तिलोपप्रसङ्गविरोधेन भाष्यस्य प्रौढिवादत्वमुपपादयता कैयटो-क्तापातनिकाया अवर्णपरत्वस्य शङ्कितुमप्यशक्यत्वात् । प्रश्लि ष्टावर्णाविति हेत्वनुपपत्तिस्तु एङंशे ऐजंशे वा । नान्त्यः। एङो-श्चेति प्रक्रम्यैव तदुक्तेः । ऐजंशे विवृततरावर्णावेताविति हेत्व-न्तरस्यैवोक्तत्वात् । नाद्यः । तत्रावयवस्य पृथक्त्वेन ग्रहो ना-स्तीति हेतोः सुस्थत्वात् । ऐचोस्तु स्फुटोऽकारस्य प्रतिभासो-ऽस्तीति प्रत्याहाराह्निके भाष्यकैयटयोरेव स्थितत्वात् । एतेन तदवयवाकारस्यापि सावर्ण्यापत्तिर्निरस्ता । एवमिकारोकारयो-

रपीति बोध्यम् । तथा च तत्र भाष्यम्—

यदत्रावर्णं विवृततरं तदन्यस्मादवर्णात् ये अपीवर्णोवर्णे विवृततरे ते अन्याभ्यामिवर्णोवर्णाभ्यामिति ।

कैयटेनाप्युक्तम्— तदेवमाकारादिस्थस्यावयवस्य भेदेनाग्रहणादग्रहणम्, सन्ध्यक्षरस्थस्य त्वसावर्ण्यात्, ऋकारस्थस्तु भेदेन प्रतिभासाद् गृह्यतइति नुडादिसिद्धिरिति ।

आकारादीत्यादिपदमेङ्परम् । सन्ध्यक्षरपदमैच्परम् । गृह्यते रेफग्रहणेनेत्यर्थः ।

नन्वेवमवयवीभूताकारस्य सावर्ण्यापत्तिपरिहारेऽपि एचां तदापत्तौ समाधानानुक्तितादवस्थ्यमेवेति चेद्,मैवम्।तर्हि एचाम् अकारेण सावर्ण्यापत्तिरेव नास्तीत्युच्यताम्, कृतं समाधानानुक्त्युद्भावनेन । अवयवसावर्ण्यद्वारा तेषां सावर्ण्यापत्तिरस्तीति चेत्, तर्हि तत्परिहारद्वारा तेषां तत्परिहार इति सुस्थम् । तदेवं द्वन्द्वगर्भबहुव्रीहिपक्षो व्याख्यातः ।

ननूत्तरास्मिन्पक्षत्रये तुल्यपदस्य आस्यपदेन समन्वयाभावाद्भिन्नस्थानानामपि प्रयत्नसाम्यात्सावर्ण्यं स्यात्, मैवम् । तद्धितान्तास्यपदोपादानसामर्थ्यादास्यइत्येकत्वविवक्षायामेकस्मिन्नेव स्थाने ययोस्तुल्यः प्रयत्न इत्यर्थलाभात् । अन्यथा स्थानानामास्यवृत्तित्वनियमादास्यपदेनैव सर्वस्थानलाभे स्थानभेदेऽपि प्रयत्नैक्यमित्यर्थस्य सिद्धेः ।

नन्वेवमपि अन्येन सह तुल्यस्थानप्रयत्नस्यान्येन सावर्ण्यं स्यात्, प्रतियोगिविशेषस्यानुपात्तत्वात्, तद्वारणाय “ तस्य ” इति वक्तव्यम्, यो यस्य तुल्यस्थानप्रयत्नः स तस्य सवर्ण इत्यर्थलाभादुक्तातिप्रसङ्गसमाधानात्, मैवम् । तथा सति सवर्णसंज्ञाविधानवैयर्थ्यात् । सर्वेण सह सर्वस्य सावर्ण्यप्रसङ्गे च

व्यावर्त्यालाभात् । न च रेफोष्मणां किञ्चिन्निरूपितसावर्ण्याभावात्तन्निवृत्त्यर्थतया सार्थक्यम् । स्वनिरूपितसावर्ण्यस्य तत्रापि स्वीकारात् । रेफोष्मणां सवर्णा न सन्तीति प्रवादस्य विजातीयसवर्णाभावपरत्वात् ।

वस्तुतस्तु तुल्यशब्दस्य ससम्बन्धिकत्वादेवोक्तार्थसिद्धिः । "पिता शुश्रूषितव्यः" इत्यादौ यन्निरूपितं पितृत्वं तस्यैव शुश्रूषकत्वलाभात् । अत एव "तुल्याय कन्या देया" इत्यादौ यज्जात्यवच्छिन्ननिरूपितकन्यात्वं तज्जात्या तुल्यत्वं सम्प्रदानस्य लभ्यते ।

स्थानग्रहणं किम्, कचटतपानां मा भूत् । स्पृष्टप्रयत्नस्य तुल्यत्वात् । अन्यथा तर्प्तेत्यत्र "झरो झरि सवर्णे" इति पलोपः स्यात् । प्रयत्नग्रहणं किम्, चकारशकारयोर्मा भूत् । तालुस्थानस्य तुल्यत्वात् । स्पृष्टविवृतप्रयत्नभेदात्तु नातिव्याप्तिः । अन्यथा वाक्श्च्योततीत्यत्र पूर्वसूत्रेण शकारलोपः स्यात् । अत एवाभ्यन्तरत्वविशेषणस्यापि सार्थक्यम् । अन्यथा श्वासाघोषविवाराख्यबाह्यप्रयत्नत्रयसादृश्यसत्त्वादतिव्याप्तितादवस्थ्यात् । सर्वप्रयत्नसाम्यविवक्षायां कङ्योरपि बाह्यप्रयत्नभेदादङ्कित इत्यादौ परसवर्णाद्यभावापत्त्या तस्याश्रयितुमशक्यत्वात् । चकारशकारयोरल्पप्राणमहाप्राणरूपबाह्यप्रयत्नभेदस्याकिञ्चित्करत्वात् ।

किं च "झरो झरि" इत्येवोक्ते "हलो यमां यमि" इतिवत् यथासंख्यापत्तौ शिण्ढीत्यादौ डलोपो न स्यादिति तत्र सवर्णपदग्रहणं कृतम् । यावत्प्रयत्नसाम्यविवक्षायां च डढयोरप्यल्पप्राणमहाप्राणरूपप्रयत्नभेदेन सावर्ण्यानुपपत्त्या डलोपाभावतादवस्थ्ये सवर्णपदमपि व्यर्थं स्यात् ।

वस्तुतस्तु अभित्था इत्यादौ सकारलोपार्थतया तत्र सवर्ण-

पदं सार्थकमेव। सकारथकारयोर्महाप्राणत्वेनापि साम्यात् । किन्तु निश्छन्नम् निष्ठुरम् निस्स्थानम् मधुलिट् स्थानम् इत्यादावपि लोपः स्यादिति बोध्यम् ।

अथ तथाऽपि ताद्धितान्तास्यशब्दबलादेव स्थानप्रयत्नोभयलाभसम्भवात् प्रयत्नपदं व्यर्थम्, ताल्वादिस्थानवत् प्रयत्नस्याप्यास्यभवत्वादिति चेन्न । प्रत्येकव्यापारानिरासार्थमुभयोरुपादानात् । तेनोभयसाम्ये सत्येव सावर्ण्यम् । न त्वन्यतरमात्रसाम्येऽपीति न दोषः ।

अथ स्थानप्रयत्नविवेकः— अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु। ऋटुरषाणां मूर्द्धा। लृतुलसानां दन्ताः । उपूपध्मानीयानामोष्ठौ । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकाऽनुस्वारस्य ।

केचित्तु वर्गपञ्चमानां स्वस्ववर्गापेक्षया नासिकास्थानमाधिकमित्याहुः । अन्ये तु—

अनुस्वारयमानां च नासिकास्थानमिष्यते ।

इति पाणिनीयशिक्षायां पञ्चमानां नासिकास्थानानुक्तेर्न तथेत्याहुः । तदग्रे विचार्यम् ।

यत्नो द्विधा— आभ्यन्तरो बाह्यश्च । आद्यश्चतुर्द्धा । स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात् । स्पृष्टं प्रयतनं स्पर्शानाम् । ईषत्स्पृष्टमन्तस्थानाम् । विवृतमूष्मणां स्वराणां च। ह्रस्वस्यावर्णस्य प्रयोगदशायां संवृतत्वम्, प्राक्रियादशायां तु विवृतत्वं प्रतिज्ञायतइति प्रागुक्तम् । आभ्यन्तरत्वं चैषां वर्णोत्पत्तिपूर्वभावित्वात् । तथा हि— नाभिप्रदेशात् प्रयत्नप्रेरितः प्राणवायुरूर्द्धमाक्रामन्नुरःप्रभृतीनामन्यतमे स्थाने प्रयत्नेन विधार्यमाणः स्थान-

माहन्ति, ततो वर्णस्य तद्व्यञ्जकध्वनेर्वोत्पत्तिः । तत्र वर्णोत्पत्तेः पूर्वं जिह्वाग्रोपाग्रमध्यमूलानां तत्तत्स्थानैस्तात्वादिभिः सह यदा सम्यक् स्पर्शः तदा स्पृष्टत्वम्, ईषत्स्पर्शे ईषत्स्पृष्टत्वम्, सामीप्यमात्रे संवृतत्वम्, दूरत्वे तु विवृतत्वमिति। इदं चात्र तत्त्वम्—

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥
सोदीर्णो मूर्द्ध्न्यभिहतो वक्रमापद्य मारुतः ।
वर्णाञ्जनयते, इत्यादिशास्त्रपर्यालोचनया अवच्छेदकतासम्बन्धेन वर्णं प्रति तादात्म्यसम्बन्धेन हेतुत्वं स्थानत्वमिति लभ्यते । अवच्छेदकता च कण्ठे अकार इत्याद्यभियुक्तप्रतीतिनियामकः स्वरूपसम्बन्धविशेषः, भेर्यां शब्द इत्यादिवत् । न हि तिष्ठन्त्यस्मिन्स्थानमिति व्युत्पत्त्या तदतिरिक्तः सम्बन्धो वक्तुं शक्यः । उत्पत्तिपक्षे वर्णानामाकाशसमवेतत्वात्, अभिव्यक्तिपक्षे च विभुत्वादवृत्तित्वात् । एतेन "आस्ये तुल्यदेशप्रयत्नम्" इत्यधिकरणत्वबोधकदेशपदगर्भं वार्त्तिकमपि व्याख्यातम् ।

करणपदं च किं पुनरास्ये भवं स्थानं करणं चेति भाष्यमुपादाय स्पृष्टतादिजिह्वाग्रमध्यमूलानि वेति कैयटेन व्याख्यातम् । तत्राद्यं स्पृष्टप्रयत्नेत्यादि व्यवहाराभिप्रायम् । न तुतात्त्विकम् । तथाहि— जिह्वाग्रादिप्रतियोगिकतात्वादिसंयोगस्य स्पृष्टादिपदात्प्रतीयमानस्य करणत्वमनुपपन्नम्।व्यापाररहितत्वात्। न ह्युक्तसंयोगेन किञ्चित् जनयित्वा वर्णा जन्यन्ते । मानाभावात् । एतेन तदभिव्यञ्जको ध्वनिरपि व्याख्यातः । जिह्वाग्रादीनां तु यथोक्तसंयोगं व्यापारमाश्रित्य युक्तमेव करणत्वम् । आत्ममनःसयोगेनात्मनो ज्ञानकरणत्वस्य, चक्षुर्घटादिसंयोगेन च-

क्षुरादीनां चाक्षुषादिकरणत्वस्य च प्रसिद्धत्वात् । अत एव कण्ठाद्यभिघातस्य कत्वं कसाक्षात्कारत्वं वा कार्यतावच्छेदकमिति तान्त्रिकाणामुद्घोषः । अत्रावच्छेदकता कार्यतावच्छेदकः सम्बन्धः, समवायस्तु कारणतावच्छेदकः । भवति चावच्छेदकतया वर्णवति ताल्वादौ समवायेन जिह्वाग्रादिसंयोगः ।

एवं संयोगसम्बन्धेन जिह्वाग्रादीनां हेतुत्वम् । न चैवं करणैक्यापत्तिः । यद्वर्णोत्पत्तौ यत् स्थानमवच्छेदकं तदनुयोगिकजिह्वाग्रादिसंयोगस्य तत्र व्यापारतया तद्भेदेन करणतानां भेदात् । एवं च यद्येवं प्रयत्नग्रहणं न कर्त्तव्यम्, तस्याप्यास्यभवत्वात्, सत्यमेतत्, प्रत्येकं तु व्यापारनिरासार्थमुभयोरुपादानम्, तेन द्वयोस्तुल्यत्वे सवर्णसंज्ञा भवतीतिग्रन्थोत्थानमपि सङ्गच्छते । न ह्युक्तसंयोगस्यास्यभवत्वम् । आस्यसमवायनिरूपकत्वरूपस्य तस्य तदवयवे ताल्वादावेव सम्भवात् । उक्तसंयोगस्य त्वास्यावयवे एव समवेतत्वात् ।

यद्यपि जिह्वाग्रादीनामपि न साक्षादास्यसमवायनिरूपकत्वम्, जिह्वयैव सह तेषामवयवावयविभावात्, तथाऽप्यास्यनिरूपितसमवायनिरूपकत्वमुभयसाधारणं वाच्यम् । आस्यप्रतियोगिको यः समवायस्तदनुयोगित्वं ताल्वादौ, तदनुयोगिजिह्वाप्रतियोगिकसमवायानुयोगित्वं च जिह्वाग्रादाविति । न चैतत्पूर्वोक्तसंयोगे । जिह्वाग्रप्रतियोगिकसंयोगस्य अधिकस्य दानं विना तत्सङ्ग्रहाभावात् । यदि तु दन्तानां शरीरानवयवत्वात्तदसङ्ग्रह इति विभाव्यते, तदाऽऽस्यप्रतियोगिकेत्यत्र समवायस्थाने साक्षात्सम्बन्धेति वाच्यम् । संयोगसमवाययोरेव तथात्वात् । पक्षान्तरेऽप्येवमेव वाच्यत्वाच्च । तस्माद्यथोक्तमास्यभवत्वं तद्धितान्तस्य आस्यपदस्य लक्ष्यतावच्छेदकमिति शङ्काऽर्थः ।

प्रत्येकसाम्ये सवर्णत्ववारणाय पृथक्प्रयत्नग्रहणावश्यकत्वे च आस्यपदस्य न यथोक्तं लक्ष्यतावच्छेकम्, मानाभावात्, किंतु स्थानमात्रसाधारणम्। संग्राह्यानुरोधेनैव वृत्तिस्वीकारात्।

वस्तुतस्तु आस्यसमवायनिरूपकत्वं लक्ष्यतावच्छेदकसम्बन्धः। लक्ष्यतावच्छेदकं तु अवच्छेदकतासंबन्धावच्छिन्नवर्णनिष्ठकार्यत्वप्रतियोगिककारणताशालित्वमेव। अन्यथा आस्यरूपादौ तदवयवान्तरे च तस्यातिप्रसक्तत्वात्।

प्रकृतमनुसरामः। बाह्यप्रयत्नास्त्वेकादश—विवारः संवारः श्वासो नादो घोषः अघोषः अल्पप्राणो महाप्राण उदात्तः अनुदात्तः स्वरितश्चेति। एते च वर्णोत्पत्त्यनन्तरं मूर्द्ध्नि प्रतिघातान्निवृत्ते प्राणे जायन्त इति बाह्या उच्यन्ते। वायुना कण्ठे अभिहन्यमाने गलबिलस्य विकासाद्विवारः। तत्संकोचात् संवारः। अत एव दूरसमीपावस्थानात्मकाभ्यामाभ्यन्तरविवृत संवृताभ्यामनयोर्भेदः। अन्येषां स्वरूपमाह न्यासकारः—

संवृते गलबिलेऽव्यक्तः शब्दो नादः, विवृते श्वासः। उपरिवर्त्तिनौ श्वासनादावनुप्रदानमिति केचिदाचक्षते। वर्णनिष्पत्तेरनु पश्चात्प्रदीयते इत्यनुप्रदानम्।

अन्ये तु ब्रुवते—अनुप्रदानमनुस्वानम्। घण्टानिर्ह्रादवत्स्थानाभिघातजे ध्वनौ नादोऽनुप्रतीयते, तदा नादध्वनिसङ्गाद् घोषो जायते। यदा श्वासोऽनुप्रदीयते, तदा श्वासध्वनिसङ्गादघोषः। महति वायौ महाप्राणः। अल्पे वायावल्पप्राणः। यदा सर्वाङ्गानुसारी प्रयत्नस्तीव्रो भवति, तदा गात्रस्य निग्रहः, कण्ठविवरस्य चाणुत्वम्, स्वरस्य च वायोस्तीव्रगतित्वाद्रौक्ष्यं भवति, तमुदात्तमाचक्षते। यदा तु मन्दः प्रयत्नो भवति तदा गात्रस्य स्रंसनम्, कण्ठबिलस्य महत्त्वम्, स्वरस्य

वायोर्मन्दगतित्वात् स्निग्धता भवति, तमनुदात्तमाचक्षते । उदात्तानुदात्तसंनिकर्षात्स्वरितगुण इति ।

एषाञ्च सवर्णसंज्ञायामनुपयोगेऽपि आभ्यन्तरत्वविशेषणव्यावर्त्यतयोपस्थितत्वादान्तरतम्यपरीक्षायामुपयोगाच्चात्र व्युत्पादनमिति न दोषः । तदयं संग्रहः—

खरः ᳲकᳲपौ विसर्गश्च श्वासाघोषविवारकाः ।
हानुस्वारझशन्तस्था घोषवन्नादसंवृताः ॥
जश्चयोऽल्पासवोऽन्तस्था महाप्राणाः परेऽखिलाः ।
पञ्चमा जश्वदेव स्युरनुनासिकताऽधिकाः ॥

अयमर्थः—वर्गाणां प्रथमा द्वितीयाः शषसाश्च खरः, जिह्वामूलीयोपध्मानीया विसर्गाश्च श्वासाघोषविवारप्रयत्नाः । हकारानुस्वारौ वर्गाणां तृतीयचतुर्थो यरलवाश्च घोषनादसंवारप्रयत्नाः । वर्गाणां तृतीयप्रथमा यरलवाश्चाल्पप्राणाः । अन्ये सर्वे महाप्राणाः । वर्गपञ्चमास्तु तत्तद्वर्गतृतीयतुल्यप्रयत्नाः । अनुनासिकत्वं पुनरेषामधिको गुण इति ।

स्यादेतत् । उदात्तादीनां त्रयाणां कथं बाह्यत्वम् । तत्र विवारादीनामष्टानामेव भाष्ये पठितत्वात् । उदात्तादीनां सावर्ण्यप्राप्त्यभावमाशङ्क्य गुणानामभेदकत्वेन परिहृतत्वाच्च । उदात्तादीनां बाह्यत्वे च तत्साम्याभावेन सावर्ण्याभावस्यापादयितुमशक्यत्वात् । अभेदकत्वपक्षानुसारवैयर्थ्याच्चेति चेन्न । यद्यप्युदात्तादीनां बाह्यत्वमुक्तम्, तथाऽप्यभ्युपेत्याभ्यन्तरत्वशङ्केति विवरणकारैरेवोक्तत्वात् । "विवारादय एकादश प्रयत्नाः" इति कैयटोक्तेश्चेति दिक् ।

अत्र केचित्—आभ्यन्तरत्वमभ्युपगम्यापि सावर्ण्याभावशङ्कापरभाष्यमनुपपन्नमेव । उदात्तादिरूपप्रयत्नभेदेऽपि विवृतरूप-

तदैक्यात्सावर्ण्योपपत्तेः । यावत्प्रयत्नैक्यविवक्षायां च बाह्यप्रयत्नसाम्येऽप्याभ्यन्तरप्रयत्नभेदे सावर्ण्यं मा भूदित्येतदर्थमाभ्यन्तरग्रहणमित्याकरविरोधात् ।आपत्तिस्थले यावत्प्रयत्नैक्यविरहात्तदनुपपत्तेः । तदर्थकप्रशब्दवैयर्थ्याच्च । स्थानेऽन्तरतमसूत्रस्थभाष्यादिबलात् शकारादिवद्वर्गद्वितीयचतुर्थानामप्यूष्मत्वप्रतीत्या विवृतमूष्मणामिति वाक्येऽपि तद्ग्रहणस्य दुर्वारतया स्पर्शविवृतोभयप्रयत्नानां वर्गद्वितीयचतुर्थानां केवलस्पृष्टप्रयत्नान् वर्गप्रथमतृतीयान् अपेक्ष्य प्रयत्नाधिक्येन सावर्ण्याभावे "चोः कुः" इत्यादौ तद्ग्रहणानुपपत्तेश्च । ककाराद्यपेक्षया ङकारादीनां नासिकास्थानाधिक्यात्सावर्ण्यानापत्तेश्च । प्रयत्नवत् स्थानेऽपि यावत्त्वस्य विवक्षणीयत्वापत्तेः । वैषम्ये बीजाभावात् ।

अस्मन्मते तु यावत्त्वाविवक्षायां प्रमाणाभावान्नासिकास्थानसाम्येन ञमङणनानां परस्परं सावर्ण्ये त्वन्नयसीत्यादौ पर्यायेण पक्षे " वा पदान्तस्य " इति ञादयः प्रवर्त्तन्ते इति ।

अत्रेदं वक्तव्यम्– अयं ह्याकराभिप्रायः । आभ्यन्तरत्वमनन्तर्भाव्य प्रयत्नसाम्याविवक्षायां यो वर्णो यद्वर्णसमानस्थानकत्वे सति यद्वर्णसमानप्रयत्नकः स तस्य सवर्ण इति फलितम्।

तत्र प्रयत्ने यावत्त्वं विवक्षितं न वा । नाद्यः । प्रथमतृतीयानां द्वितीयचतुर्थानां च सावर्ण्यानुपपत्तेः । अल्पप्राणमहाप्राणत्वाभ्यां भेदात् । नान्त्यः । खकारहकारादेः सावर्ण्यप्रसङ्गात् । कण्ठ्यत्वान्महाप्राणत्वाच्च । एवमन्यत्राप्यापाद्यम् । यदि त्वाभ्यन्तरप्रयत्नसाम्यमपि निवेश्यम्, ततस्तेनैवानतिप्रसङ्गे बाह्यप्रयत्नसाम्यनिवेश एव व्यर्थोऽप्रसङ्गसम्पादकश्चेति । एवं चास्यप्रयत्नमात्रेण बाह्यव्यावृत्तिविरहादाभ्यन्तरमात्रलाभाय प्रशब्दविशिष्टयत्नपदोपादानमावश्यकमिति ।

आस्यपदं स्थानमात्रपरम् । प्रयत्नपरत्वे प्रयोजनाभावात् । तथा च बाह्यप्रयत्नसाम्यस्य सावर्ण्यप्रयोजकत्वं विकल्प्य दूषयत आकारस्य प्रयत्ने यावत्त्वाविवक्षायां तद्विरहे वा तात्पर्याभावात् । उदात्तादीनामाभ्यन्तरत्वे तद्भेदेन सावर्ण्याभावशङ्कायास्तद्विरुद्धत्वात् ।

ननु तथाऽपि सिद्धान्ते आभ्यन्तरप्रयत्नस्यैव सवर्णसंज्ञोपयोगेऽपि तत्र यावत्त्वविवक्षणं किमर्थम्, येनोदात्तानुदात्तादीनां सावर्ण्याभावशङ्का स्यात्, तद्वर्णसमानस्थानत्वे तद्वर्णवृत्त्याभ्यन्तरप्रयत्नवत्त्वे च सति तद्वर्णवृत्त्याभ्यन्तरप्रयत्नान्तरवतो व्यावर्त्यवर्णस्याभावात्, उदात्तानुदात्तादीनां तु सावर्ण्यस्येष्टतया व्यावर्त्यत्वायोगात्, इति चेन्न । देवदत्तयज्ञदत्तौ तुल्यधनावित्यादावसति बाधकेऽन्यूनानतिरिक्तत्वस्यैव धनादौ प्रतीत्या तस्यौत्सर्गिकतया विवक्षानधीनत्वात् । राजमन्त्रिणौ तुल्यावित्यादौ तु प्रत्यक्षादेर्बाधकत्वात् । अत एवोक्तं भाष्ये—

किं सति भेदे, सतीत्याह । सत्येव हि भेदे सवर्णसंज्ञया भवितव्यम् । कुत एतत्, भेदाधिष्ठाना हि सवर्णसंज्ञा । यदि हि यत्र सर्वं समानं तत्र स्यात् सवर्णसंज्ञाविधानमनर्थकं स्यात् इति ।

अस्य ह्ययमर्थः— आस्यपदेन बाह्यप्रयत्नस्यापि संग्रहे यावद्बाह्याभ्यन्तरप्रयत्नसाम्यं सवर्णसंज्ञानिमित्तम् इति लभ्येत, ततश्च स्वस्यैव स्वसावर्ण्यं स्यान्न तु वर्णान्तरस्येति संज्ञावैयर्थ्यम् । तत्परिहाराय विधानसामर्थ्यादौत्सर्गिकार्थत्याग इति ।

अत एव सति सङ्कोचे किञ्चिन्मात्रसाम्येऽपि स्यादित्याशङ्कापरः "यदि तर्हि सति भेदे किञ्चित् समानमिति कृत्वा सवर्णसंज्ञा भविष्यति शकारच्छकारयोः षकारठकारयोः सकारथकारयोः सवर्णसंज्ञा प्राप्नोति, एतेषां हि सर्वमन्यत्

समानं करणवर्जम्" इति ग्रन्थः सङ्गच्छते । श्वासाघोषविवारमहाप्राणरूपबाह्यप्रयत्नचतुष्टयस्य ताल्वादिस्थानस्य च तुल्यत्वात् । आभ्यन्तरप्रयत्नस्तु शरां विवृतत्वम्, छादीनां तु स्पृष्टत्वमिति भेदः ।

एवं च प्रयत्नपदेनाभ्यन्तरस्य तस्यास्यपदेन च स्थानमात्रस्योपादाने तु नोक्तदोषः । औत्सर्गिकरीत्या प्रयत्नपदस्य यावदाभ्यन्तरपरत्वं तु दुर्वारम् । बाधकस्य दुर्वचत्वादिति । उदात्तादीनां तर्हि सवर्णसंज्ञा न प्राप्नोतीति शङ्काऽभिप्रायः । अत एव गुणानामभेदकत्वेनैव निर्वाहे यत्किञ्चित्प्रयत्नपरत्वकल्पनयौत्सर्गिकार्थबाधो न युक्त इतिपरिहारोपपत्तिः । एतेन "अनुदात्तादेरञ्"इत्यादाविव भेदकत्वपक्षस्यैव युक्तत्वादित्यपास्तम् । वृद्ध्यादिसूत्रस्थसर्वग्रन्थविरोधात् । "आमुदात्तः" इत्यादिसूत्रविरोधाच्च । "अनुदात्तादेः" इत्यादौ त्वनन्तानुदात्तादिव्यक्तिपरिचायकत्वेन तद्विवक्षा । तावद्व्यक्तीनां विशिष्य निर्देशासंभवादनुदात्तग्रहणवैयर्थ्यापत्तेश्च ।

यत्तु "स्थानेऽन्तरतमे" इत्यादि, तन्न । विवृतमूष्मणामित्यत्र हि किं पदे जुहोतीत्यनेन आहवनीये जुहोतीत्यस्येव सामान्यविशेषन्यायेन वर्गद्वितीयचतुर्थानां स्पृष्टत्व बाधित्वा विवृतत्वं विधीयते उत सावकाशनिरवकाशन्यायेन स्पृष्टं प्रयत्नं स्पर्शानामित्यस्य प्रथमादिषु सावकाशत्वात् द्वितीयचतुर्थयोर्विवृतत्वं विधीयते स यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयादित्यादिनेव यत्किञ्चित् प्राचीनमग्नीषोमीयात्तेनोपांशु चरतीत्यादेः । नाद्यः । सामान्यविशेषभावो हि न विधेयांशे । स्पृष्टत्वविवृतत्वयोर्विरोधात् । नाप्यनुवाद्यांशे । शकारा-

दिषु वर्गप्रथमतृतीयेषु च स्पर्शत्वोष्मत्वयोः परस्परात्यन्ताभाव-समानाधिकरणत्वात् । न द्वितीयः । स्पृष्टत्वविधेर्वर्गविषमवर्णेष्विव विवृतत्वविधेरपि ऊष्मसु सावकाशत्वात् । न च द्वितीयचतुर्थानां स्पर्शत्वमेव नास्तीति वाच्यम् । "स्पर्शेषु यत्षोडशमेकविंशम्" इतिभागवतादिविरोधात् । "स्पर्शाः स्युः पञ्चविंशतिः" इतिशिक्षाविरोधाच्च । प्रथमतृतीयपञ्चमानां तत्सावर्ण्यानापत्तेश्च । न च स्पृष्टत्वमबाधित्वैव विवृतत्वं विधीयत इति वाच्यम् । तयोर्विरुद्धत्वेन समुच्चयानर्हत्वात् । "न हि बाधितमर्थमागमोऽपि बोधयति" इति न्यायात् इति न किञ्चिदेतत् ।

यदप्युक्तम्—कङादीनां सावर्ण्यं न स्यादिति । तत्र केचित् तावदाहुः—वर्गपञ्चमानां नासिका स्थानं न भवति, शिक्षायां यमानुस्वाराणामेव तदुक्तेः, किं तु करणम् । तद्व्यापारेण तदुच्चारणात् । तावन्मात्रेण स्थानत्वे अकारादीनामपि नासिकास्थानत्वापत्तेः । तदकथनेन न्यूनतापत्तेश्च ।

यत्तु करणरूपाया अपि नासिकायास्तद्धितान्तास्यपदेन ग्रहणात्तद्भेदे सावर्ण्यमनुपपन्नमेव । आस्यपदस्य स्थानमात्रपरतया संकोचे बीजाभावादिति, तन्न । आस्यपदस्य करणपरत्वे मानाभावात् । संकोचस्य दूरापास्तत्वात् । वृत्तिविषयतावच्छेदकधर्मावच्छिन्नकिञ्चिद्व्यक्तिविषयकतात्पर्याभावकल्पनस्यैव संकोचत्वात् । एतेन किं पुनरास्ये भवं स्थानं करणं चेति भाष्यविरोध इत्यपि निरस्तम् । न हि करणमास्यभवं नेति ब्रूमः । किं तु आस्यपदार्थतावच्छेदकं प्रकृते स्थानत्वमेवेति ।

यदप्युक्तम्—एतेन तुल्यशब्दसंकोचापेक्षया पश्चादुपस्थितास्यशब्दसंकोच एव न्याय्य इत्यपास्तम् । कखगघङादीनां

स्वरूपतो भेदार्थं स्थानादाववान्तरभेदस्यावश्यकत्वेन सर्वस्थान-साम्ये सवर्णसंज्ञेति पक्षेऽपि तुल्यशब्दसंकोचावश्यकत्वाच्चेति । तदप्यसत् । आस्यशब्दस्य संकोचः करणव्यावृत्तलक्ष्यतावच्छेदकव्यवस्थापनमेव । तस्य च न्याय्यत्वम् । तत्साधारण्ये प्रमाणाभावात् । तुल्यशब्दसंकोचस्तु यत्किञ्चित्परत्वम् । तत्र चान्याय्यत्वम् । भाष्यादिभिरनुक्तत्वात् । कखेत्यादिकं तु व्यर्थमेव । स्थानतावच्छेदकरूपेण स्थानसाम्यविवक्षायां वस्तुसतोऽप्यवान्तरभेदस्य स्थानतानवच्छेदकतया दोषाभावात् । त्वन्मते उभयत्र संकोच इति वैषम्यसत्त्वाच्च ।

यदप्युक्तम्—तुल्यशब्दस्यान्यूनानधिकपरत्वेऽन्यतरैक्ये यावदास्यभवैक्याभावादप्राप्तौ प्रयत्नग्रहणवैयर्थ्यापत्तिः । एतेन प्रयत्नस्य पृथगुपादानात्ताद्धितान्तास्यशब्देन नासिकारूपं करणं न गृह्यते इत्यपास्तम् । उभयत्रापि तुल्यत्वस्य वक्तुं शक्यत्वेनाऽऽनुमानिकवचनकल्पनापत्त्या संकोचस्यान्याय्यत्वेन च विनिगमनाविरहात्सर्वत्र प्रवृत्तौ तात्पर्यग्राहकतया प्रयत्नपदस्य व्याख्यातुं युक्तत्वाच्चेति, तदप्यसत् । आस्यपदस्य स्थानमात्रपरत्वेऽयं दोषः उतास्यभवपरत्वे । नाद्यः । प्रयत्नपदवैयर्थ्यानापत्तेः । नान्त्यः । तत्परत्वस्यानङ्गीकारात् । न च पदान्तरोपादानापेक्षयाऽऽस्यशब्दस्य तदुभयपरत्वमेव सम्यगिति वाच्यम् । प्रत्येकसाम्ये संज्ञाया अप्रवृत्त्यर्थं प्रयत्नपदसार्थक्याव-श्यकत्वे आस्यपदस्योभयपरत्वकल्पनाया एव गुरुत्वात् । स्थानकरणोभयसाधारणस्य लक्ष्यतावच्छेदकस्य दुर्वचत्वाच्च ।

यत्तु त्वन्नयसीत्यादौ ञादयोऽपि भवन्तीति, तत् साहसमात्रम् । शाब्दिकमात्रानाभिमतत्वात् । अत एव कौस्तुभेऽपि यावत्स्थानसाम्यविवक्षायां ञमङणनानां स्ववर्ग्यैः सावर्ण्यानापत्ति-

रित्येवोक्तम् । अन्यथा तेषां परस्परं सावर्ण्याभावोऽप्यापादितः स्यात् । किं बहुना नासिकायाः स्थानत्ववादिभिरपि यावत्स्थानसाम्यमेव विवक्षित्वा नासिकास्थानं सवर्णसंज्ञायामनुपयुक्तमित्येव स्वीक्रियते । तथा च तद्ग्रन्थार्थः—

ननु "शात्" इति सूत्रे शकारात्परस्य तवर्गस्य श्चुत्वनिषेधो व्यर्थः "स्तोः" इत्यत्र तुशब्देन नकारस्यानुपादानात्, नासिकास्थानाधिक्येन तस्य सवर्णत्वाभावाद्ग्रहणकशास्त्रप्रवृत्त्यविषयत्वात् । मैवम् । नासिकास्थानसाम्यं सवर्णसंज्ञायां नाद्रियते इत्यत्रेदं ज्ञापकम् । न च यत्किञ्चित्स्थानसाम्यं सावर्ण्यप्रयोजकमिति न तद्वैयर्थ्यमिति वाच्यम् । तथा सति त्वन्नयसीत्यादौ ङादीनां पर्यायेण प्रवृत्त्यापत्तेः ।

अन्ये तु अन्यूनस्थानत्वमेव तुल्यस्थानत्वम्, पञ्चमानां परस्परं नासिकास्थानसाम्येऽपि ताल्वादिसाम्याभावात् । स्ववर्ग्यैः समं त्वधिकस्थानत्वेऽपि न्यूनस्थानकत्वाभावात्सावर्ण्यम् । तेन त्वङ्करोषीत्यादौ ङकारादिसिद्धिः । न चाद्यानां पञ्चमसावर्ण्यं तथाऽप्यसिद्धमिति वाच्यम् । प्रयोजनाभावादिष्टापत्तेः । न च गौरि एहीत्यादौ सवर्णदीर्घः स्यात्, प्रकृतिभावश्च न स्यादिति वाच्यम् । एकारस्य विवृततरत्वमाश्रित्य प्रयत्नभेदोपगमात् । न च "तोर्लि" इत्यत्र लकारेणाण्त्वाद्वकारोपस्थापने तद्वस्तु इत्यादौ दकारस्य वत्वापत्तिरिति वाच्यम् । द्वितीयलकारप्रश्लेषेण लकारस्वरूपस्यैवोपादानात् । नापि " रलो व्युपधात् " इत्यत्र रलन्तर्गतलकारेण वकारस्यापि ग्रहणे देवित्वा दिदेविषतीत्यादौ पाक्षिककित्त्वापत्तिः । हयवरट्सूत्रे रेफस्य ण्यात्पूर्वमपकर्षप्रस्तावे भाष्योक्तरीत्या अवकारादिति पदच्छेदेन समाधानसम्भवात् ।

यद्वा— स्थानतावच्छेदकपर्याप्त्याश्रयत्वं स्थानत्वम् । वकारस्य दन्तोष्ठमित्यत्र च द्वन्द्वनिर्देशादुभयत्वं स्थानतावच्छेदकम्, तच्च न प्रत्येकविश्रान्तमिति न वकारस्य लकारसावर्ण्यम् । "लुग्वा दुह" इति सूत्रे "उदोष्ठ्यपूर्वस्य" इति सूत्रे च दन्त्यत्वमोष्ठ्यत्वं च दन्तादिभवत्वमात्रं निवेश्यते, न तु तत्स्थानत्वम् । तत्र योगार्थेनैवोभयपरतया ग्रहणकशास्त्रानुपयोगेन सावर्ण्यस्यानपेक्ष्यत्वात् । तेन अदुग्धामित्यादाविव अदुह्वहीत्यादावपि क्सलोपः, पुपूर्षतीत्यादाविव सुस्वूर्षतीत्यादावप्युत्वं च सिद्धम् । तेन यल्लोकमित्यादौ अनुस्वारस्य परसवर्णे सानुनासिकवकारापत्तिरप्यनाशङ्क्या इत्याहुः ।

प्रकृतमनुसरामः । सर्वथाऽपि वर्गपञ्चमानां परस्परं सावर्ण्यं नेति सिद्धम् ।

यदप्युक्तम्—"वर्णोत्पत्तौ नासिकायाः पाके काष्ठादिवत्स्थाल्यादिवद्वा करणत्वम् । नाद्यः । "आस्ये तुल्यदेशप्रयत्नं सवर्णम्" इत्यधिकरणत्वबोधकदेशशब्दसहितवार्त्तिकेन तद्भाष्येण च विरोधात् । अधिकरणरूपप्रासादवासिन्यायप्रतिपादकभाष्येण मुखनासिकयोराधिकरणत्वबोधनाच्च । नान्त्यः । करणत्वेऽपि स्थानत्वस्य दुर्वारत्वात्" इति, तदप्यसत् । कण्ठादेरेव ङकारादिदेशत्वेन तद्विरोधाभावात् । न हि तेन नासिकाया ङकारादिदेशत्वमपि बोध्यते । प्रमाणप्रयोजनयोरभावात् । नासिकायाः सवर्णसंज्ञायामनुपयोगात् । प्रासादवासिन्यायस्य समस्त एव च वर्णो द्वाभ्यामुच्चार्यतइत्याद्यपक्षेऽवतारेऽपि एको भागो मुखेनोच्चार्यते द्वितीयस्तु नासिकया, यद्वा—तदुभयान्तरालवर्त्तिस्थानान्तरमेव तदुच्चारणे निमित्तमित्युत्तरपक्षद्वये तदनव-

काशात् । इदं च कौस्तुभेऽपि स्पष्टम् । यदप्युक्तम्—"यथा—

अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः ।

इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वादजादिग्रहणम् । "सुपां सुलुग्" इतिसूत्रस्थभाष्यादिप्रामाण्यादचामल्पप्राणत्वप्रतीतेः । यथा वा—"क्विन्प्रत्ययस्य" इतिसूत्रस्थकैयटादिप्रामाण्याद्वर्गचतुर्थानामल्पप्राणताऽपि दन्त्योष्ठ्यवकारस्य महाप्राणताऽपि । तथोक्तशिक्षायां चकारेण ञादीनामकारादीनां च ग्रहणं व्याख्येयम् । अत एव कौस्तुभे ञकारादीनां नासिकास्थानत्वं साक्षादुक्तम्" इति । तदप्यसत् । प्रकृते कल्पकाभावेन वैषम्यात् । ञादीनां परस्परं सावर्ण्यस्यापि कौस्तुभानभिमतत्वाच्चेति दिक् ।

वस्तुतस्तु तेषां सावर्ण्ये लण्सूत्रात्पूर्वं ञमङणनेष्वन्यतममेव मकारानुबद्धं पठेत् । अन्येषां तेनैव ग्रहणसिद्धेः । न च स्ववर्ग्याणामपि ग्रहणापत्तिः । तेषां पृथक्पाठसामर्थ्यात् । न चैवं तच्छ्लोकेनेत्यत्र छत्वं न स्यात्, लस्य अम्बहिर्भावापत्तेरिति वाच्यम् । छत्वममीति वाच्यत्वात् अमीत्यस्मादधिकस्यान्तर्भावानापत्तेः । ग्रहणकशास्त्रादन्यत्र पूर्वेणैवाण्ग्रहणमित्यस्य यथाश्रुतपरत्वात् । न च यणि दोषः । आन्तरतम्येन व्यवस्थोपपत्तेः[1] । भवदभिमतत्वाच्च । एतेन रप्रत्याहारोऽपि व्याख्यातः ।

न च नस्य इणन्तर्भावे सुहिन्सु इत्यादौ षत्वापत्तिः । सिद्धान्तेऽपि तत्र "नुम्विसर्जनीय" इति षत्वप्रसक्त्या नुम्ग्रहणं तत्स्थानीयानुस्वारोपलक्षणार्थमित्यत्र व्याख्यानातिरिक्तस्य बीजस्य दुर्वचतया तस्य च साक्षान्नुमः परस्य सस्य

---

१ आन्तरतम्येन व्यवस्थाया उपपन्नत्वेनेत्यर्थः ।

षत्वं नास्तीत्येतन्निश्चयं विनाऽनुपपन्नतयाऽत्रापि तेनैव संकोचोपपत्तेः । नुमः साक्षादुपादाने तदादेशलक्षणया संकोचः । प्रत्याहारान्तर्भावे तु तदतिरिक्तपरत्वेनेत्यन्यदेतत् ।

यद्वा—वर्णोपदेशे "लण्" इत्यस्मादनन्तरमेव ञादिष्वन्यतमो मानुबद्धः पठनीयः । ग्रहणकसूत्रे तु अण्पदस्थाने अमित्येवास्तु, लाघवस्य भूयस्त्वात् । न चात्र "अचो ञ्णिति" "ञ्नित्यादिर्नित्यम्" इत्यादेर्मिदादावतिप्रसङ्गः । उभयोपादानसामर्थ्यात् । एवम् "ङ्णोः कुक्टुक् शरि" इत्यत्र योऽर्थम् । नापि " क्ङिति च " इत्यस्य । णलादौ वृद्ध्यर्थणित्त्वस्य वैयर्थ्यापत्तेः । न च " मिदचोऽन्त्यात्परः " इत्यस्य णलादौ । "अत उपधायाः " इत्यस्य वैयर्थ्यात् । ननु " मिदचोऽन्त्यात्परः " इत्यस्य नित्यातिप्रसङ्गः, एवं मोऽनुस्वारस्य णान्तादौ, " णो नः " इत्यस्य नकाराद्यादौ, " नोदात्तोपदेशस्य मान्तस्य " इत्यस्य नान्तादौ, "रषाभ्याम् " इति मादीनामपि णत्वं स्यात्, इति यथायोगमापाद्यमिति चेत्, सत्यम् । ङकारस्यैव पाठ्यत्वात् ञणनमानां सवर्णग्राहकत्वापत्त्यभावात् ।

अथैवमपि ग्रहिज्यादिसूत्रेण जग्राह ग्राह्यमित्यादौ संप्रसारणं स्यात्, ङितीति ङकारेण णकारस्यापि ग्रहणात् । मैवम् । भृज्जतीनां ङिति चेति संहितया ङकारप्रश्लेषेण स्वरूपतो ङकारस्यैव ग्रहणात् । न च तथाऽपि "हलो यमां यमि लोपः" इत्यत्र ञकाराद्यंशे यथासंख्यं न स्यात् इति वाच्यम् । तत्रातिप्रसङ्गस्थलाभावेन क्षतिविरहात् । न च "ङमो ह्रस्वादचि ङमुण्नित्यम्" इत्यत्र ङमुटोऽप्यापत्तिरिति वाच्यम् । ङणनानामिति स्वरूपेणैव पठितव्यत्वात् । ङमुडित्यत्र द्वे इत्येव पाठ्यम् ।

यद्वा—वर्णोपदेशे न ङम् इति पाठ्यम् । तेन ङकारमकारौ

इत्यादिकमपि व्याकुलं स्यात् ।

ननु तथाऽपि उक्तवचनान्नासिकायाः स्थानत्वं सिध्यत्येवेति चेत्, सत्यम् । अत्रत्यस्थानपदस्य तदुच्चार्यत्वमात्रपरत्वात् । मुखनासिक्या इति वाक्ये तु मुखावयवकण्ठादीनां प्रमाणान्तरेण स्थानत्वनिर्वाहात् । "मुखनासिकावचन" इत्यत्र वचनपदस्वारस्यान्मुखनासिकोच्चार्यत्वस्यैव प्रतीतेः । अत एव बाह्यप्रयत्नाभिधानोत्तरं "यथा तृतीयाः तथा पञ्चमा आनुनासिक्यवर्जम् आनुनासिक्यं तेषामधिको गुणः" इति भाष्यं संगच्छते । अन्यथा बाह्यप्रयत्नसाम्यकथनप्रस्तावे स्थानवैषम्याभिधानस्यानर्हत्वात् । उक्तरीत्या तु आन्तरतम्यमात्रपरीक्षोपयोगित्वेन तदौचित्यात् । न चानुनासिकत्वनिर्मुक्तङकारादीनामनुपलम्भात्कथं गुणत्वमिति वाच्यम् । जलपरमाणुरूपादीनां तद्गुणत्वानुपपत्तिप्रसङ्गात् । तन्निष्ठात्यन्ताभावप्रतियोगित्वस्य गुणलक्षणानुपयोगात् । " सत्त्वे निविशतेऽपैति " इत्यादेरन्यथैव व्याख्यास्यमानत्वात् ।

अपि च अनुनासिकसंज्ञासूत्रे मुखस्य नासिकायाश्च तदुच्चारणे करणत्वं सर्वग्रन्थसिद्धम् । स्थानत्वं च करणप्रतियोगिकसंयोगानुयोगित्वम् । तत्र करणप्रतियोगिकत्वमुपलक्षणं विशेषणं वा । नाद्यः । जिह्वाग्रादीनामपि स्थानत्वापत्तेः । न चेष्टापत्तिः । तत्साम्यमादाय समानप्रयत्नानां सावर्ण्यापत्तेः । यत्किञ्चित्स्थानसाम्यस्यैव भवन्मते ऽपेक्ष्यत्वात् । नान्त्यः । स्वप्रतियोगिकत्वविशिष्टसंयोगानुयोगित्वस्य स्वस्मिन्ननङ्गीकारात् नासिकायाः स्थानत्वानुपपत्तेः स्थिरत्वात् । इत्यास्तामतिविस्तरः ।

प्रकृतमनुसरामः । ऋऌवर्णयोः स्थानभेदादप्राप्तां सवर्णसंज्ञां विधातुं वार्त्तिकमारभ्यते—

ऋऌवर्णयोर्मिथः सावर्ण्यं वाच्यमिति ।

अत्र व्याचक्षते—आ च आ च रलौ, तौ च तौ वर्णौ चेति विग्रहः, उश्च उऌ च ऋऌोस्तयोरिति वा । प्रथमान्तेन परिनिष्ठितविभक्त्या वा विग्रह इति सिद्धान्तादिति ।

तत्राद्ये ऋ ऌ औ इति स्थिते "ऋत्यकः" इति प्रकृतिभावः । "ऋतो ङि" इति ऌकारस्य गुणः, तत ऋकारस्य यणादेशः । न चाकृतव्यूहन्यायात्प्रकृतिभावानुपपत्तिः । गुणे सत्यपि स्थानिवद्भावसंभवान्निमित्तविघाताभावात् । न चैवं यणोऽपि दौर्लभ्यम् । "ऋत्यकः" इत्यत्र "प्लुतप्रगृह्याः" इत्यतोऽचीत्यनुवर्त्य ऋकाररूपमचमाश्रित्य यत्कार्यं तस्यैव वारणात् । यणादेशस्तु अच्सामान्यमुपजीवतीति तद्व्याप्त्तिविरहात् ।

न च "अचः परस्मिन्" इत्यनेनाभावोऽप्यातिदिश्यतइति सिद्धान्तात् ऋकारकालीनस्य यणभावस्य गुणेऽप्यतिदेश इति वाच्यम् । "न पदान्त" इति तन्निषेधात् । अन्तर्वर्तिविभक्त्या पूर्वपदस्य सुबन्ततया पदसंज्ञत्वात् । द्वितीये तु ओसि गुणस्य दौर्लभ्यादकारोत्तरमुच्चारणार्थमकारं तन्निमित्तकयणं च स्वीकृत्य योज्यम् ।

ऋऌोरिति वा पाठ इति । अत्रेदं बोध्यम्— ऋकाररूपाज्निमित्तकत्वं न तावदत्वावच्छिन्ननिमित्तताकत्वम् । सवर्णदीर्घयणोरयादीनां च वारणानुपपत्तेः । तत्र ऋत्वेन निमित्तत्वविरहात् । "उपसर्गादृति धातौ" इत्यत्रैव प्रकृतिभावस्य कथंचित्प्रवृत्त्यापत्त्या धातुग्रहणं पाक्षिकप्रकृतिभावनिवृत्त्यर्थमित्यादिसकलव्याकोपप्रसङ्गात् । नापि ऋकारविश्रान्तनिमित्तताकत्वं यणादेशसाधारण्यात् ।

अथ यस्यां लक्ष्यव्यक्तौ ऋकारपरत्वाभावप्रयुक्तो यत्का-

र्याभावस्तदेव कार्यं प्रकृतिभावेन व्यावर्त्यते, इति चेन्न । गुणात्पूर्वं प्रकृते यणादेशस्याप्येतादृशत्वात्प्रवृत्त्यापत्तेः । तद्व्यक्तौ ऋकारपरत्वाभावस्याप्रसिद्ध्या यद्यत्र ऋकारपरत्वं न स्यात्तदा यणादेशो न स्यादित्येवंरूपस्यैव प्रयुक्तत्वस्य वाच्यत्वात् । तस्य चान्यत्र ऋकारपरत्वाभावेऽपि दध्यत्रेत्यादौ यणादेशाभावस्यादर्शनादापादकत्वानुपपत्तेः । एवं ब्रह्मऋषिरित्यादौ गुणस्यापि दुर्वारत्वं योज्यम् । एवं च प्रकृते गुणोत्तरम् ऋकारपरत्वव्यतिरेकप्रयुक्तो न यणादेशाभावः, आकारपरत्वेनापि तदुपपत्तेरिति कथञ्चित् आशङ्काऽपि निरवकाशा । आदेशाभावस्थले सवर्णदीर्घव्यावृत्तावपि यथायोगमादेशान्तरस्य दुर्वारत्वप्रसङ्गात् । तस्मादचीत्यनुवृत्तावपि यणादेशव्यावृत्तस्य निवर्त्यतावच्छेदकस्य दुर्वचत्वादुपरञ्जकत्वमात्रं तस्य, न तूपयुक्तत्वमपीति न किञ्चिदेतत् ।

यदप्युक्तम्—प्रकृतिभावाभावपक्षे "वार्णादाङ्गं बलीयः" इति गुणे कृते यणादेशसौलभ्यमिति, तदपि न। तयोर्युगपत्प्रवृत्तौ समाननिमित्ततायां च तन्न्यायप्रवृत्तेः कौस्तुभादौ स्पष्टत्वात् । एतेन तथात्वे न किञ्चिन्मानमिति निरस्तम् । व्याश्रयत्वे लक्ष्यानुरोधात्तत्प्रवृत्तिस्वीकारेऽपि प्रकृते लक्ष्यनिश्चयाभावेन औत्सर्गिकीं समानाश्रयप्रवृत्तिमाश्रित्य तदप्रवृत्तेरेव स्वीकर्त्तुमुचितत्वात्, क्वौ लुप्तं क्वौ विधिं प्रति वा न स्थानिवदित्यादिवत् । तस्मात्प्रकृतिभावपक्षे ऋअलाविति ऋलोरिति च, तदभावे तु राविति रोरिति च रूपं यथायोगं बोध्यमित्यलं बहुना ।

सावर्ण्यप्रयोजनं तु होतृ लृकार इति स्थिते सवर्णदीर्घो यथा स्यात्, होतॄकारः । उभयान्तरतमस्य लृकारान्तरतमस्य च दीर्घस्यासम्भवादृकारान्तरतमो दीर्घऋकारः ।

अथ "अकः सवर्णे" इति सूत्रे "ऋति ऋ वा" "लृति लृ वा" इति पठ्यते। अकः सवर्णे ऋति परे पूर्वपरयोः स्थाने ऋ इत्ययमादेशो वा स्यात् । ईषत्स्पृष्टो द्विमात्रश्चायम् । मध्ये द्वौ रेफौ तयोरेका मात्रा, उभयतोऽज्भक्तेर्द्वितीया। एवं द्वितीयवचनाविधेये लृकारेऽपि बोध्यम् । तत्र मध्ये द्वौ लकाराविति विशेषः । उभयोरपि प्रयत्नभेदादृल्लृवर्णाभ्यामगृहीतत्वेनाच्त्वाभावादप्राप्तयोरेव विधानम् ।

तत्र वाशब्दस्य समुच्चयार्थत्वमङ्गीकृत्याप्राप्त एव दीर्घो विधीयताम्, किं सावर्ण्येन । न च द्वितीये सवर्णपदस्यानुवृत्तौ तत्संज्ञाया अप्यावश्यकत्वम्, अननुवृत्तौ तु दध्य्लृकार इत्यादावतिप्रसङ्ग इति वाच्यम् । प्रथमवार्त्तिके ऋतीत्यपनीय "ऋतः" इति पञ्चम्यन्तस्य पाठ्यत्वात् । न च धात्रंश इत्यादावतिप्रसङ्गः । सवर्णे इत्यस्यानुवृत्तेः । द्वितीये तु ऋत इत्यस्यानुवृत्तिः, सवर्णइति निवृत्तम् । अतः सवर्णसंज्ञाविधानं व्यर्थम् इति चेत्, मैवम् । षाष्ठवचनद्वयस्यैव प्रत्याख्यातुमुचितत्वात् । तदारम्भपक्षेऽपि हि तद्विधेययोरीषत्स्पृष्टयोरच्त्वमवश्यमपेक्षणीयम् । अन्यथा विधानमात्रं तयोः स्यान्न तु प्लुतः। तस्याज्मात्रकार्यत्वात् । सति त्वच्त्वे ताभ्यां त्रिमात्रयोरपि सावर्ण्याद्ग्रहणे सति प्लुतसंज्ञायां सत्यां प्लुतसिद्धिः ।

न च विवृतस्थाने आन्तरतम्याद्विवृतावेव दीर्घौ स्याताम्, न त्वीषत्स्पृष्टाविति वाच्यम् । रेफद्वययुक्तस्य स्थानिनस्तादृगेवादेशः सुसदृश इत्यस्यापि सम्भवात् विनिगमकाभावेन उभयोः पाक्षिक्यां प्रवृत्तौ विवृतेषत्स्पृष्टयोरिष्टयोः सिद्धेः । न चैवं सावर्ण्यविधानपक्षे लृकारस्थानिकादेशस्यापि रपरत्व-

प्रसङ्गः । रप्रत्याहारग्रहणस्य व्याख्येयतया लपरत्वसिद्धेः । न च तथाऽपि " नाग्लोपिशास्वृदिताम् " " पुषादिद्युताद्यॢदितः " इत्यादीनामनुबन्धकार्याणां सङ्करापत्तिः । भिन्नानुबन्धनिर्देशसामर्थ्यात् ।

## नाज्झलौ १० ।

तुल्यस्थानप्रयत्नावप्यज्झलौ मिथः सवर्णसंज्ञौ न स्तः। अप्यन्तं प्रसक्तिप्रदर्शनमात्रार्थम् । सवर्णपदं संज्ञापरम् । पूर्वं विधेयतयोपस्थितत्वात् । तुल्यास्यप्रयत्नत्वस्य वस्तुधर्मतया निषेधानर्हत्वाच्च । तेन आनडुहं चर्म वैपाशो मत्स्य इत्यत्र हकारशकारयोर्लोपो न । अन्यथा "यस्येति च" इत्यत्र अकारेकाराभ्यां ग्रहणकसूत्रेण दीर्घादीनामिव हकारशकारयोरपि ग्रहणापत्तेः । ऋकारषकारयोर्ऌकारसकारयोरपि सावर्ण्यं प्राप्तमत्र निषिध्यतइति कौस्तुभकृतः ।

कैयटादयस्तु अकारहकारयोरिकारशकारयोश्चेति स्थलद्वयमेव दर्शयन्ति । तेषां चायमाशयः—बह्वृचप्रातिशाख्योक्तरीत्या ऋकारऌकारयोर्जिह्वामूलस्थानत्वात् मूर्द्धदन्तस्थानाभ्यां षकारसकाराभ्यां सावर्ण्यप्रसक्तिरेव नास्ति । न च तत्प्रातिशाख्यमात्रोक्तत्वादनादृत्यम् । पूर्वोक्तरीत्या सूत्रवार्त्तिकसंमतत्वात् । अत एव नाण्शलावित्येव सूत्रयितुं युक्तमिति प्रामाणिकाः ।

एवं च "ग्रहणकशास्त्रादन्यत्र पूर्वेणैवाण्ग्रहणनियमात् कर्त्तृषट्कमित्यादौ सवर्णदीर्घः स्यात् । परेणाण्ग्रहणेऽपि अजपेक्षया व्यक्तिगौरवमेव । तस्मान्नाक्शलाविति सूत्रं युक्तम्" इत्यलग्नकं वेदितव्यम् । अत एवाग्रे पूर्वपक्षवार्त्तिके ऋकारसावर्ण्यप्रतिषेध

एवोक्तो न तु षकारादेः । एतेन "शकारग्रहणं शरामुपलक्षणम्" इत्युक्त्वा रामष्षष्ठः यशस्सारमित्युदाहरणान्तरकल्पनं च तेषामपास्तम् । आद्यन्तभाष्ये शकारमात्रस्यैव श्रवणादुपलक्षणत्वे मानाभावात् ।

स्यादेतत् । शकारस्यापि परस्परं सावर्ण्यनिषेधः स्यात् । स हि इकारादिभिर्गृहीतत्वादच्, स्वरूपतस्तु हल् । न चास्मादेव निषेधादिकारेण शकारग्रहणं नेति वाच्यम् । एतद्वाक्यार्थबोधौपयिक्यां पदार्थबुद्धौ पूर्वसूत्रप्राप्तसंज्ञामुपजीव्य ग्रहणकशास्त्रप्रवृत्तौ बाधकाभावात् । न हि तदानीं सावर्ण्यनिषेधधीरस्ति । तदुत्तरभावित्वात् । न चैतद्वाक्यार्थबोधात्पूर्वं तुल्यास्यसूत्रार्थबोध एव न भवतीति वाच्यम् । प्रतियोगिप्रसक्तिविरहे निषेधानुपपत्तेः । "यस्येति च" इत्यादौ तु एतद्वाक्यार्थबोधात्सावर्ण्याभावज्ञानान्न तद्ग्रहणमिति वैषम्यम् । अत एव ग्रहणकसूत्रस्थमण्पदं न सवर्णग्राहकम्, सूत्रान्तरस्थं तु सवर्णग्राहकमेवेति सिद्धान्तः । एवं "नाज्झलौ" इत्यस्यापि निषेधस्य न स्वास्मिन्प्रवृत्तिः । स्वात्मनि व्यापारविरोधस्य तुल्यत्वात् ।

परिहृत्यापवादविषयमित्यस्यापि नायं विषयः । अपवादस्यैवानवगतत्वात् । न चेष्टापत्तिः । परश्शतानि कार्याणीत्यत्र दोषापत्तेः ।

परश्शताद्यास्ते येषां परा संख्या शतादिकात् ।

इत्यमरः । " कर्तृकरणे कृता बहुलम् " इति बहुलोक्तेः शतात्पराणीति समासः । पारस्करादित्वात्सुट् । श्चुत्वेन शकारः । " अनाचि च " इति तस्य द्विर्वचनं च । तत्र " झरो झरि सवर्णे " इति लोपाप्रवृत्त्या शकारत्रयश्रवणं स्यात् । न च " अनचि " इति " झरोऽचि " इति वा

द्वित्वनिषेधो भविष्यतीति वाच्यम्। तत्र "नाज्झलौ" इति सावर्ण्यनिषेधेन ग्रहणकशास्त्राप्रवृत्त्या अच्पदेन शरामुपस्थानासम्भवात्। उक्तनिषेधयोर्नित्यत्वात्। तथा च वार्त्तिकम्—

अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वादिति।

प्रतिषेधे प्रकरणवशात्सावर्ण्यस्य प्रतियोगित्वेनान्वयः। सावर्ण्यप्रतिषेधो वक्तव्यः स्यादित्यर्थः।

किं च अवर्णस्य स्वभेदैः सह सावर्ण्यं न स्यात्। हकारेण तद्ग्रहणे सति हल्त्वात्स्वरूपेण त्वच्त्वात् इति प्राप्ते सिद्धान्तवार्त्तिकम्—

सिद्धमनच्त्वात्, वाक्यापरिसमाप्तेर्वा इति।

सूत्रप्रत्याख्यानाभिप्रायं प्रथममुत्तरम्। तथा हि—विवृतमूष्मणामिति योगे ईषदित्यनुवर्त्तते। स्वराणां चेत्यत्र विवृतमित्यस्यैवानुवृत्तिः, ईषदिति तु निवृत्तम्। तथा च प्रयत्नभेदात्सावर्ण्यप्रसक्तिरेव नास्तीति भावः। एवं चाकारस्य हल्त्वमपि नास्तीति दण्डाग्रमित्यादावपि न दोषः।

यथाश्रुतमभ्युपेत्याप्याह–वाक्यापरिसमाप्तेर्वेति। प्रथमं हि वर्णानामुपदेशः, तत इत्संज्ञा, ततः प्रत्याहारः, ततोऽपवादपरिहारेण सवर्णसंज्ञानिष्पत्तिः। ततो ग्रहणकशास्त्रप्रवृत्तिः। यद्यपि निषेधप्रतियोगिप्रवृत्त्यर्थम् "नाज्झलौ" इति वाक्यार्थबोधात्प्राक् सवर्णसूत्रार्थबोध आवश्यकः, तथाऽपि अपवादविषयांशे तद्वाक्यतात्पर्यज्ञानस्य अपवादवाक्यार्थबोधोत्तरमप्रामाण्यज्ञानसम्पादनद्वारा तदंशे उत्सर्गवाक्यस्य तात्पर्याभावव्यवस्थापनात्स बोधो न शास्त्रप्रवृत्तावुपयोगी। यदंशे शास्त्रतात्पर्यं तद्विषयकबोधस्यैव प्रमाणत्वात्। अन्यथा सर्वत्र बोधस्यानियतत्वेन व्यवस्थाभङ्गप्रसङ्गात्। तथा च भ्रमरूपप्र-

प्रतियोगिप्रसिद्धिमादाय निषेधप्रवृत्तावपि न ग्रहणकशास्त्रस्य प्रवृत्तिसम्भवः । अतो निषेधोपयोगितुल्यास्यसूत्रार्थबोधदशाया-मिकारेण शकारस्यानुपस्थानाच्छकारस्याचत्वं नास्तीति न तस्य तेनैव समं सावर्ण्यनिषेधापत्तिः । निषेधप्रवृत्त्युत्तरकाले च सावर्ण्याभावादेवानुपस्थानमिति समाधानतात्पर्यम् । अत एव भाष्ये प्रत्याहारोत्तरकाला सवर्णसंज्ञा, सवर्णसंज्ञोत्तरकालं सवर्णग्रहणमिति उक्तम् । " नाज्झलौ " इत्यस्य सवर्णसंज्ञाया-मेवोपयोगात् । हरिणाऽप्युक्तम्—

अनेकाख्यातयोगेऽपि वाक्यं न्यायापवादयोः ।
एकमेवेष्यते कैश्चिद्भिन्नरूपमिव स्थितम् ॥

इति । न्याय उत्सर्गः । भिन्नरूपमिव परस्परानपेक्षबोधजनक-मिव । अपवादज्ञानाभावे उत्सर्गस्य तात्पर्यभ्रमेण स्वतात्पर्यावि-षयकस्यापि बोधजनकत्वादप्रामाण्यापत्तौ स्वतात्पर्यविषयमा-त्रबोधजननार्थमपवादज्ञानस्य तेनापेक्षणीयत्वात् प्रमाणताव-च्छेदकरूपसम्पत्तिः पश्चादेव भवतीति तदर्थात् । न चैवं " नाज्झलौ " इति सूत्रे सवर्णदीर्घोऽपि न स्यादिति शङ्क्य-म् । तत्प्रकारकज्ञानस्य शास्त्रप्रवृत्तावनपेक्षितत्वात् । तदेवं द्वेधा समाधानम् ।

भाष्ये तु एकवाक्यतयाऽपि हेतुद्वयम् अपर आहेत्यादिना व्याख्यातम् । तथा हि—अनच्त्वादिति पूर्वोक्तदोषनिवृत्ति-सिद्धौ हेतुः, अनच्त्वे तु वाक्यापरिसमाप्तेरिति । सा च यथो-क्तरीत्यैव ।

नन्वेवं वाशब्दोऽसंगतः स्यात्, एकस्मिन्साध्ये हेतुद्व-यस्य साधकत्वएव तत्संगतेः, इह तु साध्यभेदोक्त्या एकत्र द्वयोरसमावेशात् । न हि भवति पर्वतो वह्निमान् धूमात् आर्द्रेन्ध-

नाद्वेति। भवति तु धूमादालोकाद्वा इति चेत्, सत्यम्। अस्तु वा ग्रहणमिकारेण शकारस्येति वाक्यशेषमध्याहृत्य प्रतिज्ञाविकल्पार्थत्वेन वाशब्दोपपत्तेः। शकारस्य शकारेण समं सावर्ण्यनिषेधे इष्टापत्तिरिति तदर्थः। न चात्र पक्षे शकारयोः सावर्ण्यनिषेधात्परश्शतादावुक्तदोष इति वाच्यम्। रूपद्वयं हि तत्र इष्टमेव। तच्च "अनचि च" इति द्वित्वस्य वैकल्पिकत्वादेव सिध्यति। तत्र "यरोऽनुनासिके" इत्यतो विकल्पानुवृत्तेः।

न च "झरो झरि" इति लोपस्य नित्यत्वात् द्विशकारकमेव रूपमिष्यतइति वाच्यम्। तत्रापि "झयो होऽन्यतरस्याम्" इत्यतो विकल्पानुवृत्तेः। एतत्पक्षे त्वपरितोषो दण्डाग्रमित्यत्र सवर्णदीर्घासिद्धिरित्याहुः।

नन्वगृहीतसवर्णानामेवायं निषेध इति स्थिते दीर्घस्य ईकारस्य शकारेण सह सावर्ण्यनिषेधाभावात् कुमारी शेतइत्यत्र सवर्णदीर्घः स्यात् इति चेन्न। तत्राचीत्यनुवृत्त्या समाधानात्।

अथ तथाऽप्याकारस्य दीर्घस्य प्लुतस्य च हकारेण सह सावर्ण्यं स्यात्। तथा च विश्वपाभिरित्यत्र "होढः" इति ढत्वं स्यादिति केचित्।

अन्ये तु संयोगान्तलोप एवापाद्यः। ढत्वस्यासिद्धत्वात् पूर्वत्रासिद्धे विप्रतिषेधाभावादित्याहुः। एवं मालास्वित्यत्र षत्वम्, वागाशीरित्यत्र "झयो होऽन्यतरस्याम्" इत्याकारस्य घत्वम्, गासीध्वमित्यत्र "इणः षीध्वम्" इति धस्य ढत्वम्, दासीष्टेत्यत्र "दादेर्धातोः" इति घत्वम्, राम आयाहीत्यादौ "हशि च" इत्युत्वम्, देवा आयान्तीत्यादौ "हलि सर्वेषाम्" इति यलोपः, चाखायितेत्यादौ "यस्य हल" इति यलोपः। श्येनायितेत्यादौ "क्यस्य विभाषा" इति यलोपः, निचाय्ये

ऽस्यादौ "हलो यमाम्" इति यलोपश्च स्याद् इति चेद्—

अत्राहुः—आकारस्य अइउण्सूत्रोदाहृतशिक्षोक्तरीत्या विवृततरत्वाद्विवृतेन हकारेण न सावर्ण्यम् । मतान्तरे तु दीर्घप्लुताकारयोः सवर्णदीर्घं कृत्वा तत्सहितोऽच् आच् इति व्याख्याय दीर्घप्लुताकारयोरपि सावर्ण्यनिषेधो व्याख्येयः। अत्र लिङ्गं च "कालसमयवेलासु" इत्यादिनिर्देशः । प्लुतस्यापि प्रश्लेषात् यियासो इत्यादौ "गुरोरनृत" इति प्लुतादाकारात्परस्य सनः सस्य षत्वं नेति ।

वार्त्तिकमते तु हलामचां चोभयसाधारणैकवर्णत्वव्याप्यजात्यभावात् कुत्रापि नातिप्रसङ्गशङ्केति ॥

इति श्रीसिद्धान्तसुधानिधौ प्रथमस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ॥

---

# ईदूदेद् द्विवचनं प्रगृह्यम् ११।

ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात् । प्रदेशाः "प्लुतप्रगृह्या" इत्यादयः। हरी एतौ । विष्णू इमौ । गङ्गे अमू । नन्विह तपरत्वं किमर्थम् । व्यक्तिपक्षे ईदूतोर्दीर्घत्वादनण्त्वेन सवर्णग्राहकत्वाभावेन तत्कालग्रहणार्थत्वायोगात् । न च उदात्तानुदात्तस्वरितगुणयुक्तानां दीर्घाणामीदूतां ग्रहणार्थमिति वाच्यम् । गुणानामभेदकत्वादेव तदुपपत्तेः । जातेः पदार्थत्वपक्षेऽपि दीर्घोच्चारणसामर्थ्यादेव ह्रस्वव्यावृत्तेः । प्लुतव्यावृत्तेश्च सिद्धान्तेऽप्यनिष्टत्वाद् इति चेत् । अत्र भाष्यम्—

व्यक्तिः पदार्थो भेदकाश्च गुणा इति पक्षे उदात्तादिगुणयुक्तानां दीर्घाणां संग्रहाय तपरत्वमिति ।

न च व्यक्तावेव पदार्थे एकारस्याण्त्वाद् ग्रहणकशास्त्रेण प्लुतग्रहो मा भूदित्येतदर्थं तपरत्वमिति वाच्यम् । तपरसूत्रेऽण्पदमनुवर्त्य तथाऽर्थस्यापि वक्ष्यमाणत्वात् ।

अत्र वदन्ति—तथाऽपि तात्परत्वेनैव ऊकारस्य गुणान्तरयुक्तदीर्घसंग्राहकत्वासिद्धेरेकारस्य तु अणुत्वादेव तत्सिद्धेरुभयत्र तपरत्वमसन्देहार्थमेव । तद्वरं गुणानामभेदकत्वपक्षमाश्रित्य इकारांशे तपरत्वमसन्देहार्थमेवास्तु इत्याशयेन सर्वत्र तपरत्वमसन्देहार्थमिति वृत्तिकृतः।

वस्तुतस्तु पञ्चमीसमासेन तात्परस्य तत्कालग्राहकत्वे मानाभावादूकारे तपरत्वम्, एकारस्त्वतपर एव निर्दिष्ट इति सुवचमिति ।

तत्र एकारः केवल एवेत्येतत् " किमर्थम् ईदादीनां तपराणां प्रगृह्यसंज्ञा " इतिभाष्यविरुद्धम् । तेन त्रयाणामपि तपरत्वनिर्देशप्रतीतेः ।

ननु प्रगृह्यसंज्ञां प्रति प्लुतस्यासिद्धत्वात् द्विमात्र एव प्रगृह्यसंज्ञेति प्लुतानुपसंग्रहेऽपि न क्षतिः । न च "प्लुतप्रगृह्या अचि" इति प्रकृतिभावेन स्वरसन्धिप्रकरणे प्लुतस्य सिद्धत्वज्ञापनाद्दोषो दुर्वार इति वाच्यम् । प्लुतशब्दस्य लक्षणया तत्स्थानिपरत्वसम्भवे ज्ञापकत्वायोगात् । श्रुतार्थापत्तिमूलकवाक्यान्तरकल्पनापेक्षया लक्षणाया एव युक्तत्वात् । प्लुतत्वप्रयुक्तप्रकृतिभावे प्लुतस्य सिद्धत्वज्ञापनेऽपि प्रगृह्यत्वप्रयुक्तप्रकृतिभावेऽसिद्धत्वात् । मैवम् । प्लुतस्यासिद्धत्वे "अप्रगृह्यस्य" इतिपर्युदासाप्रवृत्तौ " अणोऽप्रगृह्यस्यानुनासिकः" इत्यनुनासिकस्य दुर्वारत्वात् ।

अथात्रैकारस्याणुत्वेन प्लुतग्राहकत्वेऽपि ईदूतोः कथं तत्, दीर्घाणामनणुत्वेन सवर्णग्राहकत्वाभावात् । न च जातिपरो निर्देशः । ह्रस्वेष्वतिप्रसङ्गापत्तेः । दीर्घव्यक्तिसमवेतैव जातिर्विवक्षितेति चेद्, न । प्लुतानुपग्रहतादवस्थ्यात् । न चेष्टापत्तिः । अग्नी ३ इति इत्यादौ "अप्लुतवदुपस्थिते" इत्यनेन लौकिकइतिशब्दे परे प्लुतस्याप्लुतवद्भावविधानेन प्लुतनिमित्तकप्रकृतिभावनिषेधेऽपि प्रगृह्यत्वनिबन्धनस्य प्रकृतिभावस्येष्टत्वात् । तथा च षष्ठे वार्त्तिकम्—

वद्वचनं प्लुतकार्यप्रतिषेधार्थं प्लुतप्रतिषेधे हि प्रगृह्यप्लुतनिषेधप्रसङ्गोऽन्येन विहितत्वात् इति ।

प्लुतकार्यप्रकृतिभावनिषेधे स्वरसन्धेरावश्यकतया प्लुतस्य श्रवणाभावध्रौव्यात् प्लुत एव निषिध्यताम् , किमतिदेशा-

र्थवद्वचनेनेति तत्र शङ्काऽर्थः । उभयनिमित्तकप्रकृतिभावप्राप्त्या प्लुतप्रयुक्ततन्निषेधेऽपि प्रगृह्यत्वप्रयुक्तप्रकृतिभावसत्त्वात्प्लुतश्रवणासिद्धिः, प्लुतनिषेधे तु श्रवणं न स्यादिति समाधानार्थः । न चैवम् "अप्लुतवद्" इत्यस्य वैयर्थ्यापत्तिः, प्लुतनिमित्तकप्रकृतिभावमात्रनिषेधस्य विशेषानुपपादकत्वादिति वाच्यम् । यत्र प्रगृह्यसंज्ञा नास्ति तत्र चरितार्थत्वात् । यथा सुश्लोका३इति सुश्लोकेति । अत्र भाष्यम्—

यथोद्देशं संज्ञापरिभाषमिति पक्षे प्रगृह्यसंज्ञां प्रति प्लुतस्यासिद्धतया द्विमात्रत्वबुद्धेरविघातात्सिद्धा प्रगृह्यसंज्ञा, कार्यकालपक्षे तु प्रगृह्यसंज्ञायाः " अणोऽप्रगृह्यस्य" इत्येतत्समानदेशतया तां प्रति प्लुतस्यासिद्धत्वाभावादनुनासिकप्रवृत्तिः स्यात्।

ननु संज्ञापरिभाषस्य कार्यार्थत्वात् कार्यकालपक्ष एव न्याय्य इति चेत्, अत्राहुः—"प्रयोजनविशेषानवगमेऽपि सामान्यतः किञ्चित्प्रयोजनवत्ताज्ञानमात्रेण यथोद्देशपक्षोपपत्तिः । यथा— विशिष्याश्रूयमाणभाव्यकेषु विधिषु इष्टसामान्यस्य भाव्यत्वमादायांशत्रयवैशिष्ट्यं भावनायाः सम्पाद्य तदुत्तरमार्थवादिकः कल्पितो वा इष्टविशेषो व्यवस्थाप्यते तद्वत्, महावाक्यार्थपर्यालोचनया तु कार्यकालपक्ष" इति ।

अत्र हरदत्तः— संज्ञां प्रति प्लुतस्यासिद्धत्वेऽपि अनुनासिकपर्युदासं प्रति न तथा । ततश्च यस्यानेन संज्ञा कृता द्विमात्रस्य न सोऽनुनासिकविधौ स्थानी, किं तु त्रिमात्रः । न च स्थानिवद्भावेन त्रिमात्रस्यापि प्रगृह्यत्वम् । अल्विधौ तदयोगात् । ईकारान्तद्विवचनस्य प्रगृह्यसंज्ञतया विशेषणतया ईकारादिरूपाल्सापेक्षत्वात् ।

किं चावश्यं "सिद्धः प्लुतः स्वरसंधिषु" इत्याश्रयणीयम्,

ऽण्ड आढकमिति प्लुतस्य दीर्घेण निवृत्तिर्यथा स्यात् । अत एव सुश्लोका ३ इति सुश्लोकेति इत्यत्र गुणो भवन् प्लुतमेव निवर्त्तयति, न स्थानिनम् । आदेशे प्लुतश्रवणप्रसङ्गात् । तत्कथं यथोद्देशपक्षेऽपीष्टसिद्धिरिति । अत्र कैयटः—

"शास्त्रासिद्धत्वाश्रयणाच्च प्लुतबुद्धावसत्यां प्रगृह्यत्वे विधीयमाने द्विमात्रविषया बुद्धिः प्रवर्त्तते" इति ।

अयमर्थः—द्विमात्रस्य त्रिमात्रेणापहारेऽपि "पूर्वत्रासिद्धम्" इत्यनेन शास्त्रासिद्धत्वबोधनात् त्रिमात्रएव द्विमात्रत्वबुद्ध्या प्रगृह्यसंज्ञा क्रियते, न तु द्विमात्रे कृतां प्रगृह्यसंज्ञां त्रिमात्रे अतिदिशामः, येनाल्विधित्वात्तदभावशङ्का स्यात् । एवं च त्रिमात्रएव प्रगृह्यसंज्ञाप्रवृत्तिः । द्विमात्रत्वबुद्ध्या संज्ञाप्रवृत्तावपि वस्तुतो धर्मिणस्त्रिमात्रतया तत्रैव विश्रामात्, रजतभ्रमजन्यप्रवृत्तेः शुक्तिविषयकत्ववत् । न चाहार्यारोपेण कथं शास्त्रप्रवृत्तिः । शास्त्रेणैव तस्य शास्त्रप्रवृत्तिप्रयोजकत्वोक्तेः । शास्त्रस्य वस्तुतोऽसिद्धत्वासम्भवात् । एतेन सुश्लोकेतीत्यादावादेशे प्लुतः श्रूयेतेत्यप्यपास्तम् । द्विमात्रबुद्ध्यैव क्रियमाणेन गुणेन तद्बुद्धिविशेष्यप्लुतस्यैव निवृत्तेरर्थासिद्धत्वादिति दिक् ।

चत्वारोऽत्र पक्षाः सम्भवन्ति । ईदादीनां विशेष्यत्वं द्विवचनस्य च विशेषणत्वम्, द्विवचनसंज्ञं यदीदादि तत् प्रगृह्यमित्यर्थ इत्याद्यः । प्रत्ययग्रहणपरिभाषया द्विवचनपदं द्विवचनान्तपरम्, ईदादीनां विशेषणत्वात्तदन्तविधिः, ईदाद्यन्तं द्विवचनान्तमिति द्वितीयः । ईदाद्यन्तं यद् द्विवचनं तदन्तमिति तृतीयः । द्विवचनमेव संज्ञि वक्ष्यमाणयुक्तेः, ईदाद्यन्तं द्विवचनं प्रगृह्यसंज्ञमिति वाक्यार्थ इति चतुर्थः ।

तत्राद्ये पचेते इत्यादौ संज्ञा न स्यात्, एकारस्य द्विवच-

नावयवत्वेऽपि द्विवचनत्वाभावात् । न च मुख्यानुपपत्त्या शास्त्र-प्रामाण्याद्गौणे प्रवृत्तिः । गङ्गे इत्यादौ "अन्तादिवच्च" इत्यादिवद्भावेन एकारस्य मुख्यद्विवचनत्वेन तत्र चारितार्थ्यात् । द्वितीयेऽपि कुमार्योरगारं कुमार्यगारम् वध्वोरगारम् वध्वगारमित्यादावतिप्रसङ्गः । प्रत्ययलक्षणेन द्विवचनान्तत्वात् । स्वरूपत ईदूदन्तत्वाच्च । तृतीयेऽपि अशुक्ले शुक्ले समपद्येतां शुक्ल्यास्तां वस्त्रे इत्यत्र प्रथमाद्विवचनस्य "नपुंसकाच्च"इति शीभावे च्विप्रत्यये "सुपो धातुप्रातिपदिकयोः" इति शीलोपे "अस्य च्वौ" इति शुक्लशब्दान्त्याकारस्य ईत्वे तद्धितान्तत्वादुत्पन्नस्य सुप्रत्ययस्याव्ययत्वाल्लुकि कृते शीशब्द ईकारान्तं द्विवचनं प्रत्ययलक्षणेन च पदं तदन्तमित्यतिप्रसङ्गः ।

ननु पक्षद्वयेऽपि न दोषः । "ईदूतौ च सप्तम्यर्थे" इत्यत्र सप्तमीत्येवोक्तेऽपि प्रत्ययलक्षणेन "सोमोगौरी अधिश्रित" इत्यत्र प्रगृह्यसंज्ञासिद्धौ अर्थग्रहणेन प्रगृह्यसंज्ञाप्रकरणे प्रत्ययलक्षणं नास्तीति ज्ञापयितुं शक्यत्वात् । शुक्ल्यास्तामित्यत्र "अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते"इति न्यायादौकारस्यैव लोपेन शीभावाप्रवृत्तेः प्रत्ययलक्षणे सत्यपि दोषाभावाच्च । ईदाद्यन्तत्वस्य तावताऽप्यलाभाद् इति चेत्, नैवम् । तथाऽपि तदन्तग्रहणदौर्लभ्यादेव पक्षद्वयस्य दुष्टत्वात् । "संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति" इति "सुप्तिङन्तं पदम्" इत्यन्तग्रहणेन ज्ञापितत्वात् । तस्मादीदूदेदन्तं यद्द्विवचनमित्येव युक्तम् । सन्निधानेन द्विवचनस्यैव संज्ञित्वप्रतीतेः ।

न चैवं यथोक्तोदाहरणेषु ईदादिस्वरूपेषु तदन्तत्वं नास्तीति वाच्यम् । व्यपदेशिवद्भावेन तदन्तत्वसम्भवात् ।

अत्र "मणीवादीनां प्रतिषेधो वक्तव्यः" इति पठित्वा प्र-

णीव रोदसीव दम्पतीवेति वृत्तिकृतः ।

कैयटादयस्तु भाष्यवार्त्तिककाराभ्यामपठितत्वादप्रमाणमेतत् । मणीवोष्ट्रस्येति तु प्रयोगो वाशब्दस्योपमानार्थस्य । रोदसीवेत्यादिस्तु छान्दसः प्रयोग इत्याहुः ।

एवं च न्यायसाम्यान्मुनित्रयानुक्तानां "तुरीयस्येष्टिः" "शंसिदुहिगुहिभ्यो वा" "क्रमेके छन्दासि भाषायां च" इत्यादीनां वृत्तिकृन्मात्रोक्तानामियमेव गतिः । नन्वेवम्—

स्फुटोत्पलाभ्यामलिदम्पतीव तद्विलोचनाभ्यां कुचकुड्मलाशया ।
निपत्य बिन्दू हृदि कज्जलाविलौ मणीव नीलौ तरलौ विरेजतुः ॥

इति नैषधस्य का गतिः, वाशब्दस्यात्रासङ्गतेः पौरुषेयत्वाच्चेति चेत्, अत्राहुः— इवार्थस्य वाशब्दस्यायं प्रयोगः । न च तत्र मानाभावः ।

वं प्रचेतसि जानीयादिवार्थे च तदव्ययम् ।

इतिविश्वदर्शनात् । "कादम्बखण्डितदलानि व पङ्कजानि" इत्यादिप्रयोगात् । "व वा यथा तथैवैवम्" इत्यमरव्याख्यायाम् "शात्रवं व पपुर्यशः" इति कालिदासप्रयोगस्य तद्व्याख्यातृभिरुदाहृतत्वाच्च ।

यत्तु अमरे अयमेव पाठो युक्तः, न तु वद्वेति क्षीरस्वाम्युक्तः । प्रातिपदिकप्रक्रमे तद्धितस्य वतेरननुगुणत्वात् । अपत्यसमूहादिपर्यायमध्ये अण्फिञ्वुञादीनामनुक्तेश्चेति । तच्चिन्त्यम् । तद्धितत्वमात्रेण प्रक्रमविरोधे यथेत्यादीनामप्यनुपादानप्रसङ्गात् । प्रकृतिनिर्मुक्तस्य तथात्वे तु प्रकृतिविशेषस्य नियतत्वस्योपाधित्वात् । थादीनां प्रकृतिविशेषोत्तरमेव विहितत्वात् । वतेस्तु तदभावात् । अत एव अणादीनामित्यादिकमपास्तम् । तेषामपत्यसमूहाद्यर्थविशेषासाधारणरूपाभावात्

प्रकृतिविशेषगर्भतया तु "गार्भिणं गणे" इत्यादिना तत्तत्प्रकरणे बहुशो दर्शितत्वात् । वतेश्च सादृश्यएव विधानात् ।

# अदसो मात् १२ ।

अस्मात्परावीदूतौ प्रगृह्यौ स्तः । अमी ईशाः । रामकृष्णावमू आसाते । मात्किम् । अमुकेऽत्र । न चात्र एकारस्याननुवृत्तेरेव नातिप्रसङ्ग इति वाच्यम् । माद्ग्रहणसामर्थ्यादेवैकाराननुवृत्तिलाभात् । अदश्शब्दसम्बन्धिमकाराव्यवहितोत्तरस्य तस्यासम्भवात् । न च अमू आसाते इत्यत्र पूर्वेणैव सिद्धिरिति वाच्यम् । तत् प्रति मुत्वस्यासिद्धतया औकारान्तत्वात् । न चैवमनेनाप्यनिर्वाहः । आरम्भसामर्थ्यादत्र मुत्वस्यासिद्धत्वाभावात् । यद्वार्त्तिकम्—

आश्रयात्सिद्धत्वं यथा रोरुत्वे इति ।

किं च स्त्रीनपुंसकयोर्द्विवचने मुत्वस्यासिद्धत्वेऽप्येकारान्तत्वमेवाश्रित्य पूर्वेण प्रगृह्यत्वासिद्धिः । तत एव प्रकृतिभावानुनासिकपर्युदासावपि सिद्धौ । कार्यकालपक्षे तु "अणोऽप्रगृह्यस्य" इत्यत्रोपस्थितेन सूत्रेण संज्ञायां क्रियमाणायां मुत्वस्य सिद्धत्वाल्लिङ्गत्रयेऽपि द्विवचनेऽनुनासिकपर्युदासः पूर्वेणैव सिद्धः । एतत्सूत्रं तु बहुवचनार्थं पुंसि द्विवचने प्रकृतिभावार्थं चेति विवेकः ।

# शे १३ ।

अयं प्रगृह्यः । अस्मे इन्द्राबृहस्पती । न युष्मे वाजबन्धवः । आद्ये चतुर्थीबहुवचनस्य द्वितीये द्वितीयाबहुवचनस्य च

स्थाने " सुपां सुलुग् " इत्यादिसूत्रेण शे आदेशः । शित्त्वात्सर्वादेशत्वम् । "शेषे लोपः" इति टिलोपः । न चान्त्ये संज्ञावैयर्थ्यम् । पदपाठकाले इतिशब्दप्रयोगे सार्थक्यात् । एवम् " अस्मे धत्त वसवो वसूनि " इत्यादिकमपि बोध्यम् । काशे कुशे वंशे इत्यादौ लोमादित्वात् शप्रत्ययान्ते हारिशे बभ्रुशे इत्यादौ च लक्षणप्रतिपदोक्तपरिभाषया न दोषः ।

# निपात एकाजनाङ् १४ ।

आङ्भिन्न एकाच् स्वरूपो निपातः प्रगृह्यसंज्ञः । अ अवद्य । इ इन्द्रः । उ उमेशः । अ निषेधाधिक्षेपयोः । इ विस्मये । उ जुगुप्सादिषु । अत्रैकाच्शब्दे कर्मधारयः, लाघवात् । "व्याहरति मृगः" इत्यादिनिर्देशाच्च । तेन प्रेदं ब्रह्मेत्यादौ नातिप्रसङ्गः ।

नन्वेवं एकग्रहो व्यर्थः । निपातस्याचः संज्ञयैव सिद्धेः । न चाजन्तस्य निपातस्येत्यर्थवारणाय तादिति वाच्यम् । विशेषणवैयर्थ्यापत्तेः । हलन्तस्य प्रगृह्यत्वे सत्यपि क्षत्यभावात् । न च पुरोऽस्तीत्यादौ सकारान्तस्य प्रकृतिभावे रोरुत्वं न स्यादिति वाच्यम् । संज्ञां प्रति रुत्वस्यासिद्धत्वात् । न चैकदेशविकृतन्यायेन रेफान्तस्य संज्ञाप्रसङ्गः । प्रकृतिभावं प्रत्यपि रुत्वस्यासिद्धत्वात् । सिद्धकाण्डस्थकार्यात्परस्य च सकारान्ते प्रसक्त्यभावात् । न चाजन्तस्यैव संज्ञा, न त्वज्मात्रस्येत्यर्थलाभाय विशेषणं स्यादिति वाच्यम् । " आद्यन्तवदेकस्मिन् " इति अज्मात्रस्याप्यजन्तत्वात् ।

न च विशेषणसामर्थ्याद्व्यपदेशिवद्भावपरित्यागः । तदन्तविधिपरित्यागेनापि तस्य चारितार्थ्यसम्भवात् । न च विनिगमकाभावः । "अनाङ्"इत्यस्यैव तत्त्वात् । व्यपदेशिवद्भाव-

मात्रबाधे हि तद्व्यर्थं स्यात् । आङः केवलाच्स्वरूपत्वेन प्रा-प्तेरेवाभावात् । अचो विशेष्यत्वे तु तदन्तविधिशङ्काऽपि नेति किमेकपदेनेति प्राप्ते । भाष्यकृतः–

अच्समुदायग्रहणशङ्कानिरासायैकग्रहणं कुर्वन्नाचार्यो ज्ञा-पयति–वर्णग्रहणेषु व्यक्तिसंख्या न विवक्ष्यते, किं तु जातिरेव निर्दिश्यतइति ।

तेन " हलन्ताच्च " इति सूत्रे यद्वक्ष्यति वार्त्तिककारः—

दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धमिति,

तत् सूत्रेणैव संगृहीतं भवति । तस्यार्थो हि दम्भेः सिद्ध-मित्यन्वयः । कित्त्वमिति शेषः । तत्र हेतुः हल्ग्रहणस्य जा-तिवाचकत्वादिति । दम्भेः सन् । "सनीवन्त" इत्यादिविकल्पा-दिडभावः । "दम्भ इच्च" इति इत्वम् । पक्षे ईत्वञ्च । "अत्र लोप" इत्यभ्यासलोपः । दिन्भ्सति दीन्भ्सति इति स्थिते–" हल-न्ताच्च " इति सनः कित्त्वमिष्यते । इकः समीपो यो हल् ततः परः सन् कित्स्यादिति तस्यार्थः । प्रकृते च इकः परत्वं नकारे, न तु ततः परः सन् । भकारेण व्यवधानात् । भशब्दात्तु परः सन्, न तु भशब्द इकः परः । नकारेण व्यवधानादिति कित्त्वं न स्यात् । जातिवाचकत्वे तु नकारभकारयोर्हल्त्वरू-पैकधर्मावच्छिन्नतया इष्टसिद्धिः । ततः कित्वान्नलोपः । भष्भावेन दस्य धत्वम् । भकारस्य चर्त्वेन पकार इति धिप्सति धीप्सतीति सिद्धम् ।

ननु अच्समुदायनिवृत्त्यर्थमेवैकपदं स्यात् । अइउ अपेही-त्यत्र हि समुदायस्यैव संज्ञा स्यात्, न तु पूर्वयोरिति तत्र गुणादिकं स्यादिति चेत्, अत्राहुः—

संज्ञाया विधेयत्वात् प्राधान्यम्, संज्ञिनस्तु गुणत्वमिति प-

शुना यजेतेतिवदेकत्वस्य विवक्षयैव समुदायनिरास इति ।

यद्यपि समुदायकार्येणावयवानां कार्यनिर्वाह एकाज्द्विर्वचनन्याये बीजम्, न चात्र तथा, समुदायसंज्ञयाऽवयवानां प्रकृतिभावानिर्वाहादिति न तस्यात्र विषयः, तथाऽपि समुदायग्रहणशङ्कानिरासायैव कृतमेकग्रहणं ज्ञापकमिति बोध्यम् । निपात इति किम् । चकारात्र । णलोऽकारस्य प्रकृतिभावो मा भूत् । न चार्थवद्ग्रहणन्यायेन निर्वाहः । अन्वयव्यतिरेकाभ्यां प्रत्ययस्याप्यर्थवत्त्वात् । केवलयोः निपातप्रत्यययोरप्रयोगस्यापि तुल्यत्वात् । एवम् अत सातत्यगमने "अन्येभ्योऽपि" इति डप्रत्ययः, टिलोपः, अ आगच्छेत्येतदपि प्रत्युदाहरणम् । यद्यपि नञिवयुक्तन्यायेनापि आङ्भिन्नो निपात एव गृह्यते, तथाऽपि तन्न्यायस्य व्यभिचारित्वान्न दोषः । भेदप्रतियोगितावच्छेदकतया ङकारनिवेशस्तु ङितः प्रगृह्यसंज्ञा यथा स्यादित्येतदर्थः । तद्विवेकस्तु भाष्ये—

ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥

आ उष्णम्, ओष्णम् । आङीषदर्थइति ङिन्निर्दिष्टः । आ इतः, एतः । प्रादौ ङित्पठितः । आ उदकान्तात्, ओदकान्तात् । आ अहिच्छत्रात्, आहिच्छत्रात् । "आङ् मर्यादाऽभिविध्योः" विना तेनेति मर्यादा । सह तेनेत्यभिविधिः । परिच्छेद्यमध्ये अवधेरनन्तर्भावे अन्तर्भावे चोभयम् । तथा चावधित्वार्थकपदसमभिव्याहृतपदस्य स्वार्थतदुत्तरोभयव्यवच्छेदपरत्वे मर्यादा, स्वार्थोत्तरमात्रव्यवच्छेदपरत्वेऽभिविधिरिति बोध्यम् । अत्र ङित्त्वात् न प्रकृतिभावः ।

अङित्तु यथा—आ एवं नु मन्यसे । पूर्वप्रक्रान्तवाक्यार्थस्या-

न्यथात्वद्योतनार्थ आकारः। पूर्वमेवं नामंस्थाः, सम्प्रति त्वेवं मन्यसे इत्यर्थः। वाक्यारम्भसूचनायाकारः इत्यपरे। आ एवं किल तत्। स्मृतेः सूचक आकारः। ततः स्मृतोऽर्थो निर्दिश्यते। अत्र च वाक्यस्मरणयोरङित्त्वे एव तात्पर्यम्। तेन ईषदर्थादिचतुष्टयानन्तर्भावेऽपि उभयभिन्ने ङित्त्वमेव। तेन अभ्र आँ अप इत्यत्र सप्तम्यर्थवृत्तेरप्याकारस्य "आङोऽनुनासिकः" इति सिध्यतीति ग्रन्थकृतः। अत एवैतच्छब्देन पूर्वार्द्धोक्तार्थचतुष्टयपराकारपरामर्शात् ङिद्विधावुद्देश्यपरामर्शकत्वाभावान्नान्वादेशत्वमित्येनादेशविरहः सङ्गच्छते। उभयाभिन्नार्थे ङित्त्वस्यैव चतुर्थचरणानुसारेणार्थसिद्धत्वात्।

केचित्तु पूर्वमेतच्छब्देनानुपादानान्नान्वादेशत्वमित्याहुः। तन्न। शब्दान्तरेणाप्यन्वादेशत्वस्य भाष्यकृता वक्ष्यमाणत्वात्। तस्मादीषदर्थादिषु वर्ततइति वृत्तिर्न विधेया, किन्तु परिचायकतामात्रेणोपात्तेति न तथेति दीक्षिताः इत्यन्यत्र विस्तरः।

अत्र वदन्ति—"अनाङ्"इत्यस्य पर्युदासत्वं न युक्तम्। तथा हि। अशब्दो वासुदेवार्थकः। "आङ् मर्यादाऽभिविध्योः" इत्यव्ययीभावः। आ आत् अं "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति ह्रस्वः। अशब्दस्य स्वाभाविकमाङ्भिन्नत्वं स्थानिवद्भावकृतं निपातत्वं चाश्रित्य अ इतः एत इत्यत्र प्रगृह्यसंज्ञाप्रसङ्गात्। "आसमुद्रक्षितीशानाम्" इतिवत्समासः। न च आङ्भावातिदेशे आङ्भिन्नत्वव्यपदेशनिवृत्तिः। गुरुवद् गुरुपुत्रे वर्तितव्यमित्यत्र गुरुत्वस्येव आङ्वद्भावेन आङ्त्वस्यानतिदेशात्। अतिदेशे वा "आङयमकारः" इत्याहार्यबुद्धेराङ्भिन्नोऽयमिति बुद्धावविरोधात्। अतिदेशानां च स्वाश्रयानिवर्त्तकत्वात्। ब्राह्मणवदस्मिन्क्षत्रिये वर्तितव्यमित्यत्र क्षत्रियत्वव्यपदेशनिवृत्त्यभावात्

अस्तु वा एकादेशेऽपि स्थानिवद्भावेनैव परावर्णगतस्याङ्गभिन्नत्वस्याश्रयणम् । कैयटादावपि परादिवद्भावेनैकादेशस्याङ्गभिन्नत्वाश्रयणात् । तस्मात्प्रसज्यप्रतिषेध एव युक्तः । वाक्यभेदासमर्थसमासाश्रयणस्य कार्यानुरोधेनादोषत्वात्, "अनचि" "अशिति" इत्यादिवत् । अत एवोत्तरसूत्रे प्रतिषिद्धार्थोऽयमारम्भ इति भाष्यं सङ्गच्छते इति ।

इदं त्ववधेयम् । पर्युदासपक्षे नञिवयुक्तन्यायबलादेव निपातलाभसम्भवेऽपि निपातपदोपादानं स्वयमेव यो निपातस्तस्यैव प्रगृह्यत्वम्, न तु स्थानिवद्भावप्रयुक्तनिपातत्वकस्येत्येतदर्थकम् । तेन नोक्तदोषः । अतिदेशेनैव तत्र निपातत्वस्यानीयमानत्वात् । निपातग्रहणस्य चोत्तरार्थत्वेऽपि "इहाकिञ्चित्रपो इति" इति न्यायेनात्रोपादानस्यापि प्रयोजनसम्भवे सति त्यागायोगात् । एवम् एकग्रहणस्याप्यत्र पूर्वोक्तरीत्या प्रयोजनाभावान्मुख्यार्थकमेवैकपदं व्याख्यायताम् । "एके मुख्यान्यकेवलाः" इत्यमरोक्तेः । तच्चौपदेशिकत्वरूपमत्र ग्राह्यम् । तेन मुख्यत्वस्य सामानाधिकरण्येन निपातत्वलाभादातिदेशिकानिपातत्वमाश्रित्य नोक्तदोषः । न चैवं "वर्णग्रहणे जातिग्रहणम्" इत्यत्र ज्ञापकानुपपत्तिः । अपृक्तसंज्ञासूत्रे एकग्रहणस्यापि भाष्यएव तज्ज्ञापकत्वोक्तेः । एतेन तत एव सिद्धावत्रत्यमेकग्रहणं व्यर्थमित्यपि शङ्काऽन्तरं परास्तम् । विनिगमकाभावाच्च । वक्ष्यति तत्र तथैव कैयटः ।

नन्वेवमपि "प्रतिषिद्धार्थम्" इति भाष्यविरोधो दुर्वार इति वाच्यम् । अदोऽभवदित्यत्रातिप्रसङ्गशङ्काया लक्षणप्रतिपदोक्तपरिभाषया समाधानस्य च तदुक्तस्यानुपपत्त्या तद्ग्रन्थस्य प्रौढिवादत्वात् । न चोत्तरग्रन्थ एव प्रौढिवादो लक्षणप्रतिपदोक्तप-

रिभाषाया वर्णग्रहणेष्वप्रवृत्तेरिति वाच्यम् । तथाऽपि गोऽभव-
दित्यत्रातिप्रसङ्गशङ्कादेरनुपपत्तेः। "अनाङ्" इत्यत्र प्रसज्यप्रतिषे-
धपक्षे वाक्यभेदासमर्थसमासाश्रयणापत्तेश्च । आङ्भावातिदेशेन
तद्भिन्नत्वव्यपदेशानिवृत्तावपि तत्कार्याणां निवृत्तेश्च । गुरौ गुरु-
भिन्नत्वव्यपदेशसत्त्वेऽपि गुरुत्वप्रयुक्तकार्यप्रवृत्तेः । आहार्यबु-
द्धेरपि शास्त्रप्रामाण्येन कार्यनियामकत्वात् । असिद्धस्थले तथै-
व क्लृप्तत्वात् ।

# ओत् १५ ।

ओकारान्तो निपातः प्रगृह्यः । आहो इति । उताहो इति ।
निपात इति किम् । " नियुत्वान्वायवायाहि " " विष्णउरु-
गायेव ते सोमः " इत्यादौ मा भूत् ।

वृत्तिकृतस्तु गवित्ययमाहेत्यपि प्रत्युदाहरन्ति ।

अत्र वदन्ति—"तत्र प्रगृह्यसंज्ञासत्त्वेऽपि न क्षतिः । प्रकृति-
भावविधौ पदान्ताधिकारादेव तदप्रसक्तेः । गवित्ययमाहेत्यत्र
च विभक्तिश्रवणाभावादनुकार्यानुकरणयोरभेदविवक्षयाऽर्थ-
वत्त्वाभावेन प्रातिपदिकत्वाभावाद्विभक्तेरनुत्पत्त्या पदान्तत्वा-
भावात्। "अपदं न प्रयुञ्जीत" इत्यस्य चापरिनिष्ठितप्रयोगनि-
षेधार्थत्वात् । प्रकृते च गो इति स्वरूपस्यैव परिनिष्ठितत्वात् ।
अत एवेह " लोपः शाकल्यस्य " इति न प्रवर्तत इति । न चैवं
"हेऽलयो हेऽलय इति कुर्वन्त" इत्यत्र कथं रुत्वयत्वयलोपा इति
वाच्यम् । तत्र भेदाविवक्षया सुप्रत्ययं कृत्वा " हल्ङ्याब्भ्यः "
इति विभक्तिलोपेन "प्रकृतिवदनुकरणम्" इत्यतिदेशेन वा पदा-
न्तत्वात् । तस्मात्प्रकृतिभावविधौ पदान्तग्रहणानुवृत्तिर्नास्तीत्य-
भिप्रायेण वृत्तिग्रन्थो योज्यः" इति । नन्वाहो इत्यादयो निपा-

तसमुदायाः, आह उ आहो, उत आह उ उताहो इत्यादि, ततः पूर्वेणैव संज्ञा सिद्धा आदिवद्भावेन । न च आहो इतीत्यादौ " उञ ऊँ " इत्यस्यापत्तिः । ञकारानुबन्धस्यैव तत्र ग्रहणात् । न च निरनुबन्धउकारे मानाभावः । तत्रैव भाष्ये वक्ष्यमाणत्वात् । न च आ उ इत्यनयोरेकादेशे ओ इत्यत्रान्तवद्भावेन आङ्ग्रहणेन तद्ग्रहणेन "अनाङ्"इति प्रतिषेधः स्यादतस्तन्निरासायेदम् । अन्यथा "ओषु यातं मरुतः" "ओषु यातं बृहती शक्करी च" "ओचित्सखायं सख्यावव्रत्याम्" इत्यादौ प्रगृह्यसंज्ञाऽनापत्तेः । न चाच्परत्वाभावात्तत्सत्त्वेऽपि न विशेष इति वाच्यम् । कस्याश्चिच्छाखायाम् ओ अयातमिति पाठे विशेषसम्भवात् । प्रतिषेधार्थोऽयमारम्भ इति भाष्यस्यैव च तत्र प्रमाणत्वात् । न च नैतद्भाष्यकृतो विवक्षितम्, अदोऽभवदित्यादावतिप्रसङ्गस्याग्रे शङ्कितत्वात्, प्रतिषिद्धार्थत्वे तत्र प्रसक्तेरेवाभावादिति वाच्यम् । उभयार्थत्वेऽप्यविरोधात् । विध्यर्थत्वात्परत्वाद् "अनाङ्" इति प्रतिषेधबाधकत्वस्य च सम्भवादिति समाहितत्वात् ।

अस्तु वा "अनाङ्" इति पर्युदास एव, तथाऽपि आङ्नाङोरेकादेशस्यादिवद्भावेन अनाङ्ग्रहणेन ग्रहणात् । तत्किमर्थमिदं सूत्रमिति चेत्, अत्र भाष्यम्—

एकनिपाता इमे इति ।

अखण्डा एव, न तु निपातसमुदायाः । अतोऽपूर्वविधिरेवायम् । अत एव "ओषु यातं मरुतः" इत्यादौ पदपाठकाले ऐकपद्येनैव पाठः । एवम् आम् आहो देवदत्तेतीत्यत्र " आम एकान्तरमामन्त्रितम् " इति निघातप्रतिषेधोऽपि ।

अथ तथाऽपि अदश्शब्दात् च्विप्रत्यये " ऊर्यादिच्विडाचश्च " इति गतिसंज्ञायां " कुगतिप्रादयः " इति समासे

अनदः अदः अभवत् अदोऽभवत् इत्यत्रातिप्रसङ्गः । गतिसं-ज्ञाविधेः " प्राग्रीश्वरान्निपाताः " इत्यधिकारान्तर्भावेन च्वि-प्रत्ययान्तानां निपातत्वात् । न च लक्षणप्रतिपदोक्तपरिभाषया निर्वाहः । वर्णग्रहणेषु तदप्रवृत्तेः । अन्यथा हरये इत्यादौ "एचो-ऽयवायावः " इत्यस्याप्रवृत्त्यापत्तेः । चक्रे इदम् इत्यादौ चा-रितार्थ्यात् ।

किञ्च तथाऽपि अगौर्गौरभवत् गोऽभवद् इत्यादौ दोषो दु-र्वारः । "गमेर्डोः" इति ओकारस्य स्वरूपत उच्चारणेन प्रतिपदो-क्तत्वात् इति चेत्, अत्र भाष्यम्—

गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्यय इति ।

तद्यथा—"गौरनुबन्ध्योऽजोऽग्नीषोमीयः" इति न वाहीको-ऽनुबध्यतइति । अयमर्थः । "स्वं रूपम्" इत्यत्र रूपग्रहणेनार्थग्रह-णस्यापि ज्ञापितत्वात् अर्थवतः कार्येण भवितव्यम् । अर्थश्च द्वेधा, मुख्यो गौणश्च । तत्पदशक्तिविषय आद्यः । गौणस्तु सादृश्यनि-मित्तकवृत्तिविषयः । गुणनिमित्तकवृत्तिसम्बन्धित्वेन शब्दवद-र्थेऽपि स्वारसिकगौणपदप्रयोगात् । तत्र प्राथम्यान्मुख्यार्थस्यैव ग्रहणम् । वृत्त्यन्तरस्य तद्बाधएव समुल्लासात् । शक्यार्थभान-स्यापि तत्राभ्युपगमेन तत्पूर्वकत्वाच्च । शक्यसमवेतगुणप्रका-रकबोधत्वस्यैव स्वशक्यगुणवत्तारूपवृत्तिज्ञानकार्यतावच्छेदक-त्वोपगमात् । ततश्च गोऽभवादित्यत्र प्रकृतेरेव कर्तृत्वम् । "सङ्घी-भवन्ति ब्राह्मणाः" "पटीभवन्ति तन्तवः" इत्यादौ वचनव्यव-स्थायाः "त्वद्भवति देवदत्तः" "मद्भवसि त्वम्" "त्वद्भवाम्य-हम्" इत्यादौ पुरुषव्यवस्थायाश्च तत एवोपपत्तेः ।

प्रकृतित्वमत्रारोपविषयत्वं बोध्यम् । तत्र च गो-त्वादिकमारोपितमेव, न मुख्यमिति । न च गौणे

ऽपि गुणानामेव प्रवृत्तिनिमित्तत्वाभ्युपगमात्कथं वाहीकादौ गोत्वारोप इति वाच्यम् । स्वोत्प्रेक्षाप्रभवारोपविषयीभूतार्थवृत्तित्वं गौणत्वमिति मतेन तदुक्तेः । अत्र हि शब्दस्य स्वाभिधेयं विनाऽन्यत्र गुणयोगमात्रेण प्रवृत्त्यभावात् । आरोपविषये विषयितावच्छेदकधर्मस्यैवारोपः । न च विविक्तत्वेन तदनुपपत्तिः । शुक्तिकादौ चाकचक्यादिसादृश्येन रजतत्वाद्यारोपवत् "योषा वाव गौतमाग्निः" इति पञ्चाग्निविद्यायां रेतोमयहविःप्रक्षेपरूपहोमाधिकरणत्वसादृश्येन योषायामग्नित्वारोपवत् जाड्यक्रूरत्वादिसादृश्येन वाहीकमाणवकादौ गोत्वसिंहत्वाद्यारोप इत्यास्तां प्रासङ्गिकम् । तस्मान्न गौणे प्रगृह्यसंज्ञेति । नन्वेवं गौस्तिष्ठति गामानयेत्यादौ गौणे वृद्ध्यात्वादिकमपि न स्यादिति चेत्, अत्र कैयटहरदत्तादयः—

पदकार्येष्वयं न्यायो न प्रातिपदिककार्येषु इति ।

तथा हि । स्वार्थे वृत्तात्प्रातिपदिकाद्विभक्तावुत्पन्नायां कार्येषु कृतेषु शब्दान्तरसन्निधानाद्गौणत्वं प्रतीयते । गोऽभवदित्यत्र तु गौणत्वं विना च्विप्रत्यय एव दुर्लभ इति वैषम्यम् ।

किञ्च गुणक्रिययोः श्रौतः क्रियासम्बन्धः "श्वेतं छागमालभेत" इत्यादौ वाक्यीयात्तु न्यायात्परस्परेण श्वेतस्य आश्रयापेक्षायां व्यक्तिवचनन्यायेन छागपरत्वम्, छागस्य च गुणाकाङ्क्षायां श्वेतपरत्वमिति पार्ष्ठिकः परस्परावच्छेदः । शाब्दान्वयस्तु क्रियायामेवेति भाट्टसिद्धान्तः । एवं गां वाहीकमानयेति पूर्वं क्रियासम्बन्धापेक्षया विभक्तावुत्पन्नायां पश्चात्सामानाधिकरण्याद् गौणार्थप्रादुर्भावो भवतीति । तदेतदुक्तं भाष्यकृद्भिः—

यत्तु शब्दाश्रयं तच्छब्दमात्रे भवति, शब्दाश्रये च वृद्ध्यात्वे इति।

यत्तु वाक्यसंस्कारपक्षे वृद्ध्यात्वप्रवृत्तितः प्रागेव गौणार्थावगतेः आद्यमयुक्तमिति, तदसत्। गौणार्थावगतिमात्रस्याकिञ्चित्करत्वात्। तस्य कार्यप्रवृत्तावनुपयुक्तत्वात्। अन्यथा गामानयेति मुख्यार्थे वृद्ध्यादेरप्रवृत्तिप्रसङ्गात्।

यदपि "किञ्चेत्यादिकं न युक्तम्, ब्रूते पाठयेत्यादिक्रियान्वयायैव गौणताया आश्रयणीयत्वात्" इति, तदप्यसत्। "अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति" इत्यादावपि अरुणया क्रीणातीति वाक्ये गुणमात्रस्य क्रयसाधनत्वानुपपत्त्या तदर्थं प्रागेव क्रयसाधनद्रव्यसम्बन्धेन क्रयान्वयापत्तौ तत्सिद्धान्तभङ्गप्रसङ्गात्। अयोग्यताज्ञानस्य शाब्दधीप्रतिबन्धकतया तदभावेन स्वरूपसतैवारुण्यस्य क्रयभावनायामन्वये ज्ञाते पश्चादेव योग्यताकाङ्क्षायाममूर्तत्वेन साक्षादयोग्यत्वेऽपि द्रव्यपरिच्छेदरूपव्यापारद्वारा करणत्वयोग्यतानिर्णयः। प्रथमं तु कारकान्तरवदेव भावनायामारुण्यस्य सम्बन्ध इत्यादेस्तत्र निरूपितत्वात्। प्रकृतेऽपि तद्रीत्या पूर्वं गौणत्वप्रत्यये बीजाभावात्।

यदप्युक्तम्, "कटोऽपि कर्म भीष्मादयोऽपि" इति पक्षे उक्तिसम्भवेऽपि सामानाधिकरण्याद्भीष्मादेर्द्वितीयेति भाष्योक्तपक्षान्तरे त्वदुक्तन्यायावतारो नास्तीति, तदप्यसत्। पार्ष्ठिकपरस्परावच्छेदावस्थाभिप्रायेणैव तदुपपत्त्या पूर्वं गौणत्वप्रत्ययस्यानावश्यकत्वात्। एतत्पक्षे पूर्वं सामानाधिकरण्यस्यैवानङ्गीकारात्।

यदप्याहुः— महद्भूतश्चन्द्रमा इत्यादौ "आन्महतः" इत्यात्वं विशिष्टरूपग्रहणेन क्रियमाणं गौणे न भवतीति युक्तम्,

इह तु "ओत्" इति वर्णपुरस्कारेण विधीयमाना प्रगृह्यसंज्ञा कथं गौणार्थवृत्तेर्न भवेत्। निपातसंज्ञा तु तस्यापि मुख्यैव । अत एव श्वशुरसंज्ञस्य कस्यचिदपत्ये श्वाशुरिरित्यत्र "अत इञ्" प्रवर्त्तते । वर्णाश्रयत्वात् । न तु "राजश्वशुराद्" इति यत्। विशिष्टरूपोपादानात् । अन्यथा इञ्यतोस्तुल्ययोगक्षेमतैव स्यात्। गोशब्दे वृद्ध्यात्वे अपि वर्णाश्रयत्वादेव, न तु प्रातिपदिककार्यत्वात् । "गोतः" इति तपरत्वस्य ओकारान्तोपलक्षणार्थत्वात् इति, तदपि चिन्त्यम् । अकारादीनामैक्यपक्षे बाहुक इत्यादौ चरितार्थानां "नौव्यचः" इत्यादीनां घटिक इत्यादौ प्रवृत्तिर्न स्यादित्याशङ्कापराणाम् अइउण्सूत्रस्थभाष्यादिग्रन्थाना विरोधात् । प्रकृतसूत्रस्थोक्तभाष्यविरोधाच्च ।

यत्तु "राजश्वशुरात्" इत्यादि, तदसत् । श्वशुरपदस्य हि भार्याभर्त्रन्यतरजनकत्वे सति पुंस्त्वं शक्यतावच्छेदकम् , संज्ञाश्वशुरस्य तु व्यक्तिस्वरूपं शक्यम्, शब्दस्वरूपं च शक्यतावच्छेदकम्। आद्यं प्रसिद्धिवशाच्छीघ्रोपस्थितिकम्, न त्वन्त्यमिति विशेषः । श्वशुरशब्दस्य स्वरूपेणोपादानस्थले शीघ्रोपस्थित्यर्थवाचके चरितार्थं शास्त्रं द्वितीये न प्रवर्तते । "अत इञ्" इत्यत्र त्वकारान्तस्य संज्ञाश्वशुरेऽपि सत्त्वात्कथं न इञ् प्रत्ययः प्रवर्त्तेत । तदुपस्थितौ प्रथमश्वशुरपदार्थबोधस्यानपेक्षितत्वेन तच्छब्दस्य प्रथमोपस्थितत्वाभावात् ।

प्रकृते तु ओकारान्तनिपातस्य प्रगृह्यसंज्ञाविधाने ओदन्तत्वविशिष्टनिपातत्वावच्छिन्नतया च्विप्रत्ययान्तगोशब्दोपस्थितौ गौणार्थज्ञानस्य शक्यार्थज्ञानपूर्वकत्वनियमेन च्व्यन्तगोशब्दस्य गौणत्वं प्रागेव प्रतीयतइति वैषम्यम् । ननु तथाऽप्युद्देश्यतावच्छेदकरूपानपायाद् दुर्वारैव संज्ञेति चेन्न । निपातत्वं ह्यत्रोदे-

श्यतावच्छेदकम्, ओदन्तत्वं तूद्देश्यतावच्छेदकतावच्छेदकम्। त-द्घटकसम्बन्धो यदि सामानाधिकरण्यमात्रं तर्हि "अथोपयन्त्रा सदृशेन युक्ताम्" इत्यत्रैकादेशस्य पूर्वान्तत्वेन ग्रहणादोकारा-न्तत्वं निपातत्वं चास्तीति "अथातो ब्रह्मजिज्ञासा" इत्या-दावप्यथशब्दस्य प्रगृह्यसंज्ञा स्यात्। तथा च यस्यां व्यक्तौ ओदन्तत्वनिपातत्वयोः समनियतत्वं तत्रोक्तविधिप्रवृत्तिरिति वक्तव्यम्। गोशब्दे च निपातत्वाभावदशायामप्योदन्तत्वमस्त्ये-वेति न प्रवृत्तिः। अहो इत्यादौ उभयमप्यस्तीति नाव्याप्तिः। एतेन निपातसंज्ञा तस्यापि मुख्यैवेत्यपास्तम्। उक्तरीत्या उद्दे-श्यतावच्छेदकरूपवैकल्यात्। संज्ञामात्रस्याकिञ्चित्करत्वात्। एतेन "गौणमुख्ययोः" इति भाष्यं व्याख्यातम्। यस्य ओद-न्तस्य निपातत्वाभावः कदाऽपि नास्ति सोऽत्र गृह्यतइत्यर्थात्।

# सम्बुद्धौ शाकल्यस्येता-वनार्षे १६।

ऋषिर्वेदः। "तदुक्तमृषिणा" इत्यादिदर्शनात्। "ऋषिर्वेदे वसिष्ठादौ" इत्यभिधानाच्च। अवैदिके इतिशब्दे परे सम्बुद्धिनि-मित्तक ओकारो वा प्रगृह्यः। विष्णो इति। विष्णविति। अनार्षे किम्। ब्रह्मबन्धवित्यब्रवीत्। इतौ किम्। विष्णोऽत्र।

# उञ ऊँ १७।

इह त्रैरूप्यमिष्टम्। आदेशविकल्पे प्रगृह्यत्वविकल्पे च ऊँ इति। उ इति। विति। उभयाभावपक्षे यणादेशः। तच्चैकस्मि-

न्सूत्रे न सिध्यति । उञ इत्यस्य श्रुतेनादेशेन सम्बन्धे शाकल्यपदानुवृत्त्या आदेशविकल्पे तदभावपक्षे "निपात एकाजनाङ्" इति प्रगृह्यसंज्ञाया नित्यतया रूपद्वयस्यैवापत्तेः । अतो योगविभागं कृत्वा व्याख्येयम् । "उञः" शाकल्यस्येति इतौ प्रगृह्यमिति चानुवर्तते । अस्य इतिशब्दे परे प्रगृह्यसंज्ञा वा स्यात् । उ इति । विति । ततः "ऊँ" इति द्वितीयो योगः । अत्र यदि प्रगृह्यस्य शाकल्यस्येत्युभयमपि नानुवर्त्तेत, तदा प्रगृह्यस्य उञ ऊँ आदेशे उञ इति समुदायाश्रयेणाल्विधित्वाभावेन स्थानिवत्त्वेन तस्य प्रगृह्यत्वे ऊँ इतीत्येकमिष्टम् । अप्रगृह्यस्य ऊँ आदेशे यणि कृते आन्तरतम्येन सानुनासिकवकारयुक्तं द्वितीयं त्वनिष्टमपि रूपं स्यात् ।

यदि तु प्रगृह्यस्य उञ इत्येवानुवर्त्तेत, तदा प्रगृह्यस्य उञो नित्यमादेशविधाने ऊँ इति विति इति च द्वे एव रूपे स्याताम् ।

यदि तु शाकल्यग्रहणमात्रमनुवर्त्तेत, तदा प्रगृह्याप्रगृह्ययोरादेशविकल्पे ऊँ इति उ इति द्वे प्रगृह्यस्य । अप्रगृह्यत्वपक्षे च आदेशस्य यणादेशे सानुनासिकवकारयुक्तं शुद्धस्य यणादेशे च निरनुनासिकवकारयुक्तं चेति द्वे रूपे इति मिलित्वा रूपचतुष्टये सानुनासिकवकारयुक्तं रूपमनिष्टं स्यात् । अत उभयानुवृत्त्या प्रगृह्यस्यादेशविकल्पे सति इष्टरूपत्रयसिद्धिः । तेन प्रगृह्यस्य उञ ऊँ आदेशो वा स्यादित्यर्थः । ननु शाकल्यस्यैव मते प्रकृतिभावः, तत्रैव ऊँ इत्यादेशः । ततश्च उ इति इत्येतद्रूपं न स्यात् । आदेशनिर्मुक्ते प्रगृह्यसंज्ञायां मानाभावादिति चेत्, मैवम् । शाकल्यपदस्य विकल्पमात्रतात्पर्यकत्वात् । एतदर्थमेव योगविभागाश्रयणात् । अत एव "ऊँ वा शाकल्यस्य" "शाकल्यस्याचार्यस्य मते वा ऊँ अयमादेशः" इति भाष्यं शाकल्य-

श्रुतेरेव फलं वाग्रहणेन प्रतिपादयतीति व्याख्यातम् ।

केचित्तु शाकल्यग्रहणस्य यथाश्रुतत्वेऽपि "निपात एकाज्" इत्येव सिद्धे "उञः" इति सूत्रं नियमार्थम्, शाकल्यभिन्नमते उञः प्रगृह्यत्वं नेति तदर्थः । "ऊँ" इति सूत्रे च प्रगृह्यस्य उञ इत्येतावतैव शाकल्यलाभे पुनः शाकल्यानुवृत्त्या इतरेषामपि मते पाक्षिकप्रगृह्योऽस्तीत्यनुमीयते । अत उ इतीति सिद्धमित्याहुः, तच्चिन्त्यम् । श्रौतानियमाविरुद्धानुमानस्य मूलोच्छेदपराहतत्वात् । तद्विरोधेनानुवृत्तावपि मानाभावप्रसङ्गात् ।

यदप्याहुः । "ऊँ" इति सूत्रे पुनः शाकल्यानुवृत्तिसामर्थ्यात् शब्दाधिकाराश्रयणात् पूर्वसूत्रानुवृत्तशाकल्यादन्य एव शाकल्यो गृह्यते । शकलस्य ऋषेरपत्यद्वयसत्त्वे बाधकाभावात् । न च द्वितीयशाकल्यमते प्रगृह्यसंज्ञाया अनुक्तत्वात् आदेशस्य प्रगृह्यत्वं न स्यादिति वाच्यम् । प्रगृह्यस्य उञ आदेशविधानेऽनुवादसामर्थ्यादेव तल्लाभात् । "ढकि लोपः" इत्यादौ अगत्याऽनुवादसामर्थ्यादपि पदार्थप्राप्तेः स्वीकारादिति, तदपि चिन्त्यम् । श्रुत्यैव लाभे तत्पर्यन्तानुसरणानौचित्यात् । "यदेतनूँ इति पदकारैरुच्यते" इत्यनुकरणे "यरोऽनुनासिके" इत्यनुनासिकादेश इति हरदत्तः ।

# ईदूतौ च सप्तम्यर्थे १८ ।

विकल्पस्य इतिशब्दस्य च निवृत्तिः । सप्तम्यर्थे वर्त्तमानम् ईदूदन्तं शब्दरूपं प्रगृह्यसंज्ञं स्यात् । अध्यस्यां मामकीतनू । उभयत्र "सुपां सुलुक्" इति सप्तम्या लुक् । पदपाठकाले इतिशब्दस्य तदुत्तरं प्रयोगादुदाहरणत्वम् । "सोमोगौरी अधिश्रितः"

इति। संहितायामप्युदाहरणत्वम्। ईदूताविति किम्। प्रियः सूर्ये प्रियो अग्ना भवाति। अग्निशब्दात्सप्तम्या डादेशः। सप्तम्यर्थे किम्। धीती। मती। सुष्टुती। तृतीयाया ईकाररूपः पूर्वसवर्णः। अत्र वार्त्तिकम्—

ईदूतौ सप्तमीत्येव लुप्तेऽर्थग्रहणाद्भवेत्।
पूर्वस्य चेत्सवर्णोऽसावाडाम्भावः प्रसज्यते॥
वचनाद्यत्र दीर्घत्वं तत्रापि सरसी यदि।
ज्ञापकं स्यात्तदन्तत्वे मा वा पूर्वपदस्य भूत्॥

अयमर्थः। ईदूतौ सप्तम्यामित्येवास्तु किमर्थमर्थग्रहणम्, सप्तमीसहचरितं यदीदूदन्तम्, यद्वा—सप्तम्यां परतस्तत् प्रगृह्यसंज्ञमित्यर्थे "सोमोगौरी अधिश्रितः" इत्यादौ लुप्तायामपि सप्तम्यां प्रत्ययलक्षणेन प्रगृह्यत्वसिद्धेरिति प्रश्नः। संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणाभावादर्थग्रहणं विना सप्तम्या एव संज्ञिनीत्वाल्लुप्तायाश्च कार्याभावात् प्रत्ययं निमित्तीकृत्यान्यस्य कार्यविधानएवप्रत्ययलक्षणानुशासनात्स्वकार्ये तदभावाच्च गौरी इत्यत्र प्रगृह्यसंज्ञा न स्यादतोऽर्थग्रहणम्। तेन च संज्ञाया अर्थनिबन्धनत्वेन प्रत्ययश्रवणानपेक्षत्वाल्लुप्तायामपि सप्तम्यां प्रकृतिभावस्य संज्ञेत्यभिप्रायेणोत्तरं लुप्तइति।

ननु गौरी इत्यत्र न सप्तम्या लोपः, किन्तु धीती मती सुष्टुतीत्यादाविव "अकः सवर्णे" इति एकादेशः। तस्य चादिवद्भावाद्भवत्येव ईकारः सप्तमीति नेदं प्रयोजनमित्याह— पूर्वस्यचेदित्यादि। दूषयति— आडाम्भाव इति। एकादेशं बाधित्वा परत्वादाङ्गत्वाच्च "आण्नद्याः" इत्याट्। "ङेराम्नद्याम्नीभ्यः" इति सप्तम्या आमित्यादेशश्च स्यादित्यर्थः। ननु सप्तमीलोपं विना ईदूदन्तत्वाभावादन्यत्र च संज्ञा-

याः प्रयोजनाभावादेतादृशस्थले तल्लोपस्य सार्वत्रिकत्वात्तत्र प्रवृत्तिं विना संज्ञाया वैयर्थ्यप्रसङ्गात्तत्सामर्थ्यादेव लुप्तायामपि सप्तम्यां संज्ञा भविष्यत्येवेत्याह—वचनादिति । यत्र सप्तम्याश्छान्दस ईकारादेशः, तत्रैव संज्ञाविधानस्य चरितार्थत्वापत्त्या सामर्थ्यस्योपक्षीणत्वात्सप्तमीलोपस्थले संज्ञा न स्यादेवेत्याह—यत्र दीर्घत्वमिति । यथा—"दृतिं न शुष्कं सरसी शयानम्" इत्यत्र सरःशब्दात्परस्य सप्तम्येकवचनस्य "इयाडियाजीकाराणामुपसंख्यानम्" इति ई इत्यादेशः । तत्र सप्तम्याः श्रूयमाणत्वेन संज्ञाविधानस्य चारितार्थ्यादिति ।

ननु तत्रापि न सप्तम्या ईकारादेशः । प्रयोजनाभावात् । किन्तु सरसीशब्दोत्तरसप्तम्या लोप एवेति संज्ञाविधेः सामर्थ्यमस्त्येवेत्याह—तत्रापीति। यदि इत्यसंदेहे सन्देहः, "शास्त्राणि चेत्प्रमाणं स्युः" इत्यादिवत् । "सरसी तु महासरः" इति शब्दार्णवात् । "दक्षिणापथे महान्ति सरांसि सरस्य इत्युच्यन्ते" इति भगवदुक्तेः । "साधर्म्यं दधाति गिरां महासरस्यः" इत्यादिदर्शनाच्च। ननु तथाऽपि सरसीशब्दस्यैव लुप्तसप्तमीकस्यायं प्रयोगो, न तु सरःशब्दस्येत्यत्र किं मानम्, तन्मात्रार्थमर्थपदोपादानस्य सन्दर्भविरुद्धत्वादिति चेत्, अत्राहुः—

सरसीशयानमित्यत्रान्तोदात्तपाठ एव मानम् । गौरादिमध्ये "पिप्पल्यादयश्च" इति पाठात्तदन्तःपातिनो ङीषन्तसरसीशब्दस्यैव अन्तोदात्तत्वात् । असुन्प्रत्ययान्तस्य सरःशब्दस्य नित्स्वरेणाद्युदात्तत्वापत्तेरिति । तस्मादर्थग्रहणं माऽस्त्विति सिद्धम् । ननु प्रगृह्यसंज्ञाप्रकरणे प्रत्ययलक्षणं नास्तीति ज्ञापनार्थमेतत्स्यादित्याह—ज्ञापकं स्यादिति । उक्तार्थस्येति शेषः । तस्य प्रयोजनमाह—तदन्तत्वे इति। "ईदूदेद् द्विवचनं प्रगृह्यम्" इति सूत्रे ईदूदेदः

न्तं द्विवचनान्तमिति, ईदूदेदन्तं यत् द्विवचनं तदन्तमिति पक्षश्च सिद्धो भवतीत्यर्थः । ननु तत्र तदन्तविध्यभावादेव तत् पक्षद्वयं-निरस्तम् । अत एतदर्थज्ञापनमनुपयुक्तमेवेत्यत आह—मावेति । पूर्वपदस्येति । वाप्यामश्वो वाप्यश्वः नद्यामातिर्नद्यातिरिति-समासे लुप्तसप्तमीकयोः वापीनदीशब्दयोः प्रत्ययलक्षणेन सप्त-म्यन्तत्वात्प्रगृह्यत्वं मा भूदित्यर्थं सार्थकमेवार्थग्रहणमित्यर्थः । न-न्वर्थग्रहणेऽपि तत्रातिव्याप्तिर्दुर्वारा । सप्तम्यर्थस्य प्रतीयमान-त्वात् इति चेत्, मैवम् । जहत्स्वार्थवृत्तिपक्षे समासे विशिष्टशक्ति-स्वीकारेण पूर्वपदस्यानर्थकत्वात् ।

अजहत्स्वार्था वृत्तिरितिपक्षेऽपि पूर्वपदे सप्तम्यर्थे लक्षणै-व । अर्थपदोपादाने तु विशेष्यतासम्बन्धेन सप्तमीपदजन्यो-पस्थितिमत्त्वस्य लाभात् । समासे प्रतीयमानस्याधिकरणत्वादे-स्तथात्वाभावादेव तद्वारणं बोध्यम् ।

अत्रेदमवधेयम् । अयं योगश्छान्दस एव । तेन ययीपपीवा-तप्रमीशब्दानां सप्तम्येकवचने ईकारान्तानामपि न प्रगृह्यसंज्ञा । अन्यथा एषामेव श्रूयमाणसप्तमीकानामीदन्तत्वसम्भवेन "तत्रा-पि सरसी यदि " इत्येतत्पर्यन्तानुधावनवैयर्थ्यापत्तेः । एतेन उकारान्तस्य भाषायामसम्भवात्तदनुसार इत्यपि निरस्तम् ।

हरदत्तोऽप्येवम् । अत एव प्रसादकारेण वैदिकप्रक्रियाया-मेवेदं सूत्रमुपन्यस्तम् ।

# दाधा घ्वदाप् १९ ।

दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युः दाब्दैपौ विना । प्रदेशाः " नेर्गदनद " इत्यादयः । दारूपाश्चत्वारः । डुदाञ्

दाने। दाण्। दो अवखण्डने। देङ् पालने। धारूपौ द्वौ। डुधाञ् धारणपोषणयोः। धेट् पाने। एजन्तानाम् "आदेच उपदेशे" इत्यात्वेन दारूपत्वम्। अनैमित्तिकमात्वं शिति तु प्रतिषेध इति सिद्धान्तात्। न चानुकरणस्य धातुत्वं नास्तीति वाच्यम्। "प्रकृतिवदनुकरणम्" इत्यतिदेशेन तत्सम्भवात्। न च प्रकृतावेव कृतात्त्वानामनुकरणमस्तु किमतिदेशेनेति वाच्यम्। तेषामात्वाभावस्थले प्रणिद्याति प्रणिदयतइत्यादौ घुसंज्ञाऽनापत्तेः। ततश्चतुर्णां दारूपाणां द्वयोश्च धारूपयोरेकशेषोत्तरं द्वन्द्वः। प्रातिपदिकसंज्ञां प्रति अतिदेशाप्रवृत्त्याश्रयेण विभक्त्यन्तत्वात्। "निरनुबन्धकग्रहणे न सानुबन्धकस्य" इत्यस्या लक्षणप्रतिपदोक्तपरिभाषायाश्च नेह प्रवृत्तिः। विशिष्यैव सर्वेषामुपादानात्। अदाबिति किम्। दाप् लवने। दातं बर्हिः। छिन्नमित्यर्थः। "दो दद् घोः" इति ददादेशाभावः। दैप् शोधने। अवदातं मुखम्। घुत्वाभावाद् "अच उपसर्गात्तः" इत्यस्य न प्रवृत्तिः। उद्देश्यसमर्पके दा इत्यत्र अनयोरप्यनुकरणशङ्कानिरासार्थश्चेदम्। तेनानयोरनुकृतत्वाभावेऽपि न क्षतिः। न च दीङोऽपि कथमत्र नोपादानम्, "मीनातिमिनोतिदीङां ल्यपि च" इति तस्याप्यादन्तत्वादिति वाच्यम्। तत्स्वरूपानुकरणे आत्वानुपपत्तेः। तेन हि गुणोत्तरमात्वं विधीयतइति वार्तिकमतम्।

गुणादिनिमित्ते प्रत्यये परे इति तु भाष्यमतम्।

उभयथाऽपि नैमित्तिकतया अनुकरणे प्रवृत्त्यभावात्। "आदेचः" इत्यात्वं तु अनैमित्तिकत्वादनुकरणेऽपि प्रवर्तत-इति वैषम्यम्।

वार्तिककृतस्तु एजन्तानुकरणत्वे प्रमाणाभावाद्गौरवाच्च

प्रयोगएव ये आकारान्ताः प्रयुज्यन्ते तदनुकरणानामेवायमेकशेषेण निर्देशः, "दाधा" इति पृथक्पदं वा सामान्यानुकरणम् । नन्वेवं प्रणिद्यति प्रणिदयते इत्यादौ घुसंज्ञाऽभावे णत्वं न स्यात् । शिति आत्वनिषेधात् कृतात्वानामेव च त्वया घुसंज्ञास्वीकारात् इति चेत्, सत्यम् । वचनेनैव समाधेयत्वात् । तथा च कात्यायनवार्त्तिकम्—

घुसंज्ञायां प्रकृतिग्रहणं शिदर्थमिति ।

भारद्वाजीयास्तु शिद्विकृतार्थमिति पठन्ति । अयमर्थः—"दाधाप्रकृतयो घुसंज्ञाः" इति सूत्रं कार्यम् । दाधा इत्यंशेन प्रयोगे आदन्तानां घुसंज्ञा । प्रकृतिपदं च सन्निधानात् दाधाप्रकृतिपरम् । तथा च तत्स्थले आत्वाभावेऽपि येषामात्वं यत्र कचिद्विहितं तेषामपि घुसंज्ञा । आत्वानुपधानेऽपि तत्प्रकृतित्वस्य आत्वादेशस्थानितावच्छेदकरूपवत्त्वस्य सत्त्वात् । तेन प्रणिद्यति इत्यादि सिद्धम् ।

भाष्यकृतस्त्वाहुः—"नेर्गद" इति सूत्रे घुमास्यतीत्यत्र घुशब्दाव्यवहितोत्तरप्रकृतिपदमवश्यं पठनीयम्, घुप्रकृतिमेति । अन्यथा प्रणिमयतइत्यत्र णत्वानुपपत्तेः । लाक्षणिकत्वेन मेङो माशब्देन ग्रहीतुमशक्यत्वात् । प्रकृतिग्रहणे तु प्रकृतिपदस्य सन्निधानान्माप्रकृत्यर्थकत्वेन मेङ्ग्रहणसिद्धेः । न चैवं मीनातिमिनोत्योरपि " मीनातिमिनोति " इत्यादिना कुत्रचिदात्वविधानेन तयोरपि माप्रकृतित्वाण्णत्वापत्तिः । माङिति ङकारानुबन्धस्यापि पाठ्यत्वात् । अन्यथा मा माने इत्यस्यापि ग्रहणापत्तेः । एवं घुमाङ्प्रकृतीति पाठमपहाय "घुप्रकृतिमाङ्" इत्यादि पठनीयम् । घुश्च प्रकृतिश्च माङ् चेति द्वन्द्वे प्रकृतिपदं सन्निहितत्वात्पूर्वोत्तरोभयप्रकृतिपरम् । एवं च घुप्रकृतीत्युक्ते घुप्र-

ब्देन दाधारूपाणामुपस्थितौ तत्प्रकृतित्वेन धातुस्वरूपलाभात् प्रणिद्यति प्रणिदयतइत्यादौ घुसंज्ञां विनाऽपि णत्वं सिद्धमिति घुसंज्ञायां प्रकृतिग्रहणं व्यर्थम् ।

यत्तु भारद्वाजीयैरुक्तम्, "विकृतार्थम्"इति, तदपि न । " गामादाग्रहणेष्वविशेषः " इति परिभाषया लाक्षणिकस्यापि दारूपस्य घुसंज्ञासिद्धेः । अस्यां च दैपः पित्त्वमेव लिङ्गम् । तद्धि अदाबित्यत्र पर्युदासप्रतियोगिकुक्षौ दैपोऽपि निवेशोऽस्तु इत्यर्थम् । लक्षणप्रतिपदोक्तपरिभाषया दाग्रहणेऽप्रवृत्तौ तु दैप आत्वस्य लाक्षणिकतया तस्य प्रतियोगिबहिर्भावस्तदवस्थ एव स्यादिति तद्वैयर्थ्यमेव स्यात् । ननु तथाऽपि धेटो घुसंज्ञा न स्यात् । न चेष्टापत्तिः । प्रकृतिशब्देन णत्वसिद्धावपि घुसंज्ञाप्रयुक्तकार्यान्तराणामसिद्धिप्रसङ्गात्, सत्यम् । " दो दद् घोः " इत्यत्र धेटो निवृत्त्यर्थं कृतेन द इत्यनेन तस्यापि घुसंज्ञाज्ञापनात् । घुत्वाभावे स्थानितावच्छेदकानाक्रान्तत्वादेव तस्य दद्भावाप्रसक्तौ तन्निवृत्त्यर्थयत्नानौचित्यात् । न च दधाति निवृत्त्यर्थत्वेन सार्थक्यम् । "दधातेर्हिः" इति तस्य ह्यादेशविधानात्सामान्यविशेषन्यायेनैव घुशब्दस्य दधात्यन्यपरत्वोपपत्तेः । न च दृङ्धृङोर्णिचि दारयति धारयतीत्यत्र दाधारूपत्वात् तत्रातिप्रसङ्गः, वृद्ध्या आकारे कृते दाधा इत्येतयोरर्थवत्त्वात्,रपरत्वस्य पश्चादेव प्रवृत्त्या तदङ्गभूतत्वेन तदन्यत्वाप्रवर्तकत्वात् इति वाच्यम् । "सिद्धं तु प्रसङ्गे रपरत्वाद्"इति वार्त्तिकरीत्या आर् इत्यादेशस्यैव वृद्ध्या विधानात् दार् धार् इत्यनयोरेवार्थवत्त्वात् तदवयवयोर्दाधा इत्यनयोरत्राग्रहणात् । " अर्थवद्ग्रहणे नानर्थकस्य" इति न्यायात् । दापयति धापयतीत्यादौ तु पुगागमात्पूर्वमेव घुसंज्ञाप्रवृत्तौ पुग्विशिष्टस्यापि

घुसंज्ञाविरहात् । दाभावनिरूपितस्थानित्वस्य तत्प्रयोज्यनिवृत्तिप्रतियोगित्वरूपस्य एजन्तएव विश्रान्तेः ।

न चैवम् आदन्तत्वनिमित्तकयुच्प्रत्ययाद्यसिद्धिः। "आकारान्तलक्षणः प्रत्ययविधिः" इति विशिष्यैव वार्त्तिककृता तस्य विहितत्वात् । नन्वेवमपि वार्त्तिकभाष्यकारयोर्मते उपादास्तेत्यत्र "स्थाघ्वोरिच" इति इत्वं स्यात्, प्रयोगे आदन्तत्वस्यात्र सत्त्वेन भाष्यमतेऽपि घुसंज्ञत्वात्, इति चेत्, अत्र वार्त्तिकं तावत्-

दीङः प्रतिषेधः स्थाघ्वोरित्त्वे इति ।

तथा च वाचनिक एव तदभावः ।

भाष्यकृता तु संनिपातलक्षणन्यायेन समाहितम् । तथा हि–पूर्वोक्तरीत्या एजन्तानामात्वविधानाभ्युपगमे युच्प्रत्ययादिसिद्ध्यर्थं वार्तिकान्तरकरणे गौरवात् एज्विषये आत्वं विधीयते । गुणवृद्धिनिमित्तकप्रत्यये विवक्षिते इति यावत् । तथा च प्रत्ययोत्पत्तिपूर्वमेव दीङादीनामादन्तत्वात्सिद्धस्तल्लक्षणप्रत्यय इति लाघवम् । एवं सति आत्वे अकित्त्वसन्निपातो निमित्तम् । कित्त्वे सति गुणवृद्धिनिषेधेन एज्विषयानुपपत्तेः । ततश्चाकित्त्वसंनिपातकृतमात्वं सिचः कित्त्वप्रवर्तिकां घुसंज्ञां न प्रवर्तयति । कित्त्वेन एज्विषयापहारे घुसंज्ञानिमित्तस्य आत्वस्य निमित्तविघातापत्तेः ।

स्यादेतत् । सूत्रमते प्रणिदातेत्यादौ दीङ आत्वे कृते णत्वं न भवति, घुसंज्ञाविरहात् । भाष्यवार्त्तिकमते तु णत्वापत्तिः, प्रयोगे आदन्तत्वात् दाप्रकृतित्वाच्च घुसंज्ञासत्त्वादिति द्वयोः सूत्रकृता सह विरोधः । एवं प्रणिदीयते प्रणिदीन इत्यादौ भाष्यमते "नेर्गद" इति नित्यं णत्वम्, तत्र प्रकृतिग्रहणेन घुसंज्ञाया अनपेक्षितत्वात् ।

वार्त्तिकमते तु "शेषे विभाषा" इति वैकल्पिकम्। एजन्तानामेव दाप्रकृतित्वोपगमेन ईदन्तस्याप्रकृतित्वादिति द्वयोः परस्परविरोधो दुर्वार इति चेत्, अत्राहुः—

भाष्यरीत्या सर्वत्र दीङो नित्यं णत्वमिति स्थिते सूत्रवार्त्तिकमतेऽपि "शेषे विभाषा"इत्यस्य दीङंशे व्यवस्थितविकल्पत्वमाश्रित्य नित्यणत्वमेव स्वीकार्यम् । "यथोत्तरं मुनीनां प्रामाण्यम्" इति सिद्धान्तात् इति । नन्वदाबिति पर्युदासप्रतियोगित्वं दाप् लवनइत्यस्यैव स्यान्न तु दैपः, पकारविशिष्टस्यात्वायोगादिति चेत्, मैवम्। अनुबन्धानामनेकान्तत्वपक्षे पकारस्यानवयवत्वेन धातोरेजन्तत्वानपायात् । एकान्तत्वपक्षेऽपि "उदीचां माङो व्यतीहारे" इति कृतात्वस्य मेङो निर्देशेन "नानुबन्धकृतमनेजन्तत्वम्"इत्यस्य ज्ञापितत्वात्। उभयथाऽप्यात्वप्रवृत्तौ बाधकाभावात् । न चायं माङ् माने इत्यस्यैव निर्देशः स्यादिति वाच्यम् । तस्य कर्मव्यतीहारविवक्षायामेव व्यतीहारे वृत्तेः। मेङस्तु स्वभावादेव तद्वृत्तित्वात् । तस्मादेव व्यतीहारे क्त्वाप्रत्ययस्यानेन विधानात् । प्रणिदानव्यतीहारशब्दयोरेकार्थत्वात् । भाष्यबलात्पूर्वकालान्यार्थक्त्वाप्रत्ययस्य मेङोऽनभिधाननिर्णयाच्च । एवं च मेङ इति पठनीये माङ इति पाठस्य ज्ञापकत्वमव्याहतम् ।

वस्तुतस्तु दैपः पित्त्वमेवात्र ज्ञापकम् । तद्धि पर्युदासे दैपो ग्रहणार्थमेव । आत्वाप्रवृत्त्या तत्पर्युदासाभावे तु तद्वैयर्थ्यापत्तेः। लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिज्ञापनेनैव तच्चरितार्थमिति चेन्न । उद्देश्यासिद्धितादवस्थ्ये तावन्मात्रस्य व्यर्थत्वात् ।

भाष्यकृतस्तु दाबेवायं न दैबस्तीत्याहुः । न चैवं दायतीति रूपं न स्यादिति वाच्यम्। दिवादिषु पाठात् श्यन्प्रत्ययेन

तत्संभवात् । न ह्यत्र स्वरे भेदः । दायतीत्यादौ उभयथाऽप्याद्युदात्तत्वात् । "तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः" इति सूत्रेण अदुपदेशाभ्यां शप्श्यन्भ्यां परस्य तिबादेरनुदात्तत्वविधानात् । न च ताच्छीलिके चानशि दायमान इत्यत्र स्वरभेदः स्यात्, चानशो लादेशसार्वधातुकत्वाभावेन अनुदात्तत्वाभावात्, श्यनि नित्स्वरेण धातोराद्युदात्तत्वम्, शपि तु पित्त्वात्तस्यानुदात्तत्वम्, चानशस्तु चित्स्वरेणान्तोदात्तत्वमिति वाच्यम् । श्यन्स्वरस्य सतिशिष्टत्वेऽपि "अन्यत्र विकरणेभ्यः" इति पर्युदासेन तत्राप्यन्तोदात्तत्वात् । "सतिशिष्टोऽपि विकरणस्वरः सार्वधातुकस्वरं न बाधते, यदयं तासेः परस्य लसार्वधातुकस्यानुदात्तत्वं शास्ति, लसार्वधातुक एव तज्ज्ञापकं स्यान्नेत्याह, अविशेषेण ज्ञापकम्" इति "आत्ममाने खश्च" इति सूत्रे भाष्यदर्शनात् । ततश्च यथा तत्र खश्स्वरेण श्यन्स्वरस्य बाधः, एवमिह चानश्स्वरेणापि इत्यर्थप्रतीतेरित्याहुः ।

न चैवमपि दापयतीत्यस्यापि पर्युदासापत्तिः । यथोद्देशपक्षे अन्तरङ्गत्वात्पुगागमात्पूर्वमेव घुसंज्ञाप्रवृत्तेः । ननु कार्यकालपक्षे णत्वघुसंज्ञयोः समानदेशत्वात्पुकं प्रति तयोरसिद्धत्वेन "अन्तरङ्गबहिरङ्गयोः" इतिन्यायानवताराात् प्रागेव पुक्, ततो घुसंज्ञा न स्यादिति चेत्, अत्र भाष्यम्—

दाधा घ्वपिदिति वक्ष्यामीति ।

तथा च भेदप्रतियोगितावच्छेदकपित्त्वस्य दापयतीत्यत्राभावान्न दोषः ।

यद्वा— उक्तधातू बकारान्तावेव । सूत्रमपि बकारान्तम् । चर्त्वेन तु पकारश्रवणम् । अतो न दोष इति ।

# आद्यन्तवदेकस्मिन् २० ।

असहायेऽपि आदाविवान्तइव च कार्यं स्यात् । एकस्मिन्नित्युपमेये सप्तमीदर्शनादाद्यन्तवदिति सप्तमीसमर्थाद्वतिः । मथुरावत् पाटलिपुत्रे प्राकार इत्यादौ तथादर्शनात् । एकशब्दश्चासहायवाची, न तु सङ्ख्यावाची । एकत्वस्य वस्तुमात्रे सत्त्वेनाव्यावर्त्तकत्वात् । असहायत्वं चात्र तत्कार्योद्देश्यतावच्छेदकधर्मपर्याप्त्याश्रयत्वे सत्येकत्वरूपं ग्राह्यम् । न संख्यावाचीत्यस्य चोक्तविशेषणांशविनिर्मुक्तसंख्याया वाच्यत्वव्यवच्छेदे तात्पर्यम् । भवति हि आद्युदात्तविधावुद्देश्यतावच्छेदकस्य प्रत्ययत्वस्य पर्याप्त्याश्रयः औपगव इत्यादौ अकारादिः । तव्यदादौ तु तावद्वर्णा इति विशेष्यदलेन तद्वारणम् ।

तत्रादिवत्त्वे प्रयोजनानि । प्रत्ययाद्युदात्तत्वम्, तैत्तिरीय इत्यादौ इव औपगव इत्यादावपि यथा स्यात् । "ञ्नित्यादिर्नित्यम्" आहिचुम्बकायनिः आग्निवेश्य इत्यादाविव गार्ग्यः कृतिरित्यादावपि स्यात् । "आर्द्धधातुकस्येड् वलादेः" इतीट् करिष्यतीत्यादाविव जोषिषदित्यादावपि स्यात् । "यस्मिन्विधिस्तदादावल्ग्रहणे" इति अजादौ विधीयमानौ इयङुवङौ श्रियो भ्रुव इत्यादाविव श्रियौ भ्रुवौ इत्यादावपि स्याताम् । "आडजादीनाम्" ऐक्षिष्टेत्यादाविव अध्यैष्टेत्यादावपि यथा स्यात् ।

अथान्तवत्त्वे प्रयोजनानि । "ईदूदेद् द्विवचनम्" इति प्रगृह्यत्वं पचेते इत्यादाविव खट्वे इत्यादावपि यथा स्यात् । "नपुंसकस्य झलचः" इति नुम् "मिदचोऽन्त्यात्परः" इत्यनेन कुण्डानीत्यादाविव यानीत्यादावपि अन्ते यथा स्यात् । "अचोऽन्त्यादि टि" इति संज्ञया "टित आत्मनेपदानां टेरे"

इत्येत्वं कुर्वाते इत्यादाविव कुर्वे इत्यादावपि स्यात्। "सुपि च" इत्यकारान्तस्याङ्गस्य दीर्घत्वं घटाभ्यामित्यादाविव आभ्यामित्यादावपि यथा स्यात्। "येन विधिः" इत्यजन्तस्य विधीयमानो यत् जेयमित्यादाविव अध्येयमित्यादावपि यथा स्यात्।

तथा हि—"परस्मिन् सति यस्मात्पूर्वं नास्ति स आदिः" "पूर्वस्मिन्सति यस्मात्परं नास्ति सोऽन्यः" इति निरूढो व्यवहारः। एतदनुसारेण वर्णानामाद्यन्तत्वयोर्निरूप्यमाणयोः स्ववृत्तिधर्माश्रयप्रागभावाधिकरणकालवृत्तित्वे सति तद्धर्माश्रयध्वंसानाधिकरणकालवृत्तित्वम् आदित्वम्। स्ववृत्तिधर्माश्रयध्वंसाधिकरणकालवृत्तित्वे सति तद्धर्माश्रयप्रागभावानाधिकरणकालवृत्तित्वं चान्तत्वं फलति। स्वपदं लक्ष्यत्वाभिमततत्तद्व्यक्तिपरम्। तद्वृत्तिधर्मश्च तद्विधावुद्देश्यतावच्छेदकीभूतो ग्राह्यः। तद्धर्माश्रयश्च तत्तत्प्रत्ययव्यक्त्यन्तर्गत एव ग्राह्यः। अन्यथा तदप्रसिद्ध्यापत्तेः। मध्यस्थेऽतिव्याप्तिवारणाय उभयत्र विशेष्यम्। तच्च इयादावस्ति न त्वकारमात्रे। अतो मुख्ये चरितार्थं शास्त्रम् अनुत्तरत्वापूर्वत्वरूपं गौणमादित्वमन्तत्वं चादाय केवले न प्रवर्त्तेत। अत इदं सूत्रम्। यत्तु वार्त्तिकम्—

अपूर्वानुत्तरलक्षणत्वादाद्यन्तयोः सिद्धमेकस्मिन्निति।

अपूर्वत्वमेवादित्वम्, अनुत्तरत्वमेवान्तत्वम्, तेन सर्वत्रापि मुख्यत्वादेव सिद्धेः सूत्रमेतद्व्यर्थमिति, तत्र भाष्यम्—

गोनर्दीयस्त्वाह—

सत्यमेतत्, सति त्वन्यस्मिन्निति।

तथा च स्वारसिकप्रतीत्यनुरोधादुक्तविशिष्टधर्म एव आद्यन्तपदशक्यतावच्छेदक इत्युक्तवार्त्तिकमयुक्तमित्यर्थः। एकस्मिन्निति किम्। सभासंनयने भवः साभासंनयनः। अत्र

भशब्दोत्तरमाकारमाश्रित्य " वृद्धिर्यस्याचामादिः " इति वृद्धसंज्ञा मा भूत् ।

अथ " वृद्धिर्यस्याचामादिः " इतिवृद्धसंज्ञासूत्रस्थेनैव आदिपदेनात्र दोषो नास्तीति चेन्न । तत्रत्यादिशब्दस्य मुख्यादिपरत्वाभावात् । अन्यथा जानातीति ज्ञा ब्राह्मणी इत्यादौ ज्ञापदस्यापि वृद्धत्वानापत्त्या ज्ञीय इत्यत्र छप्रत्ययानापत्तेः । इहैकग्रहणे तु मध्यावसानस्थानां आदित्वातिदेशविरहात् तद्व्यावर्त्तकतया तत्रत्यस्य आदिशब्दस्य सार्थक्यात् ।

अत्र न्यासकारः– अतिदेशसूत्रे एकग्रहणाभावे वृद्धसंज्ञासूत्रगतमादिग्रहणमनातिदेशिकमतिपत्त्यर्थं सत् असहायानां ज्ञादीनामेव वृद्धसंज्ञां वारयेत् । सभासन्नयने तु स्यादेव, स्वोत्तरगतानामचां चतुष्टयमपेक्ष्य अनातिदेशिकस्य आदित्वस्य तत्र सत्त्वादिति ।

तत्र वदन्ति– अत्रैकग्रहणाभावे यत्र मुख्यमादित्वं नास्ति स सर्वोऽप्यतिदेशविषयः स्यात् । ततश्च यथा ज्ञादीना न वृद्धत्वं तथा सभासन्नयनस्यापि न स्यात् । असहायवन्मध्यगतेऽपि मुख्यादित्वव्यवहाराभावात्, तत् कथमुक्तवैषम्यमिति ।

न्यासकृतस्त्वयमभिप्रायः— व्यवहारानुरोधेन लक्षणकरणम् । तदुक्तमाचार्यैः—

सिद्धानुगममात्रं हि कर्तव्यं तु परीक्षकैः ।
न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम् ॥

इति । ततश्चायमादिरित्युक्ते तदुत्तरस्य अन्त इत्युक्ते च पूर्वस्य नियमत आकाङ्क्षा, न तु पूर्वाभावस्योत्तराभावस्य चेति सर्वसिद्धम् । पूर्वत्वान्तत्वयोरुत्तरपूर्वत्वमात्रनिरूप्यत्वात्, कादाचित्कापेक्षायाश्च शब्दशक्त्यव्यवस्थापकत्वात् ।

एतच्च न्यासेऽपि स्पष्टमेवोक्तम्—"द्वितीयादिकं सहायमपेक्ष्याद्यन्तशब्दौ प्रवर्तेते । तथा हि— लौकिकः सति परस्मिन्सहाये पूर्वमादिरिति व्यवहरति" इत्यादिना । अत एव "दैशिकयोः परत्वापरत्वयोः तृतीयापेक्षत्वम्, कालिकयोस्तु परस्पराश्रयापेक्षत्वम्" इति दीधितिकारादयः । न हि भरतो लक्ष्मणात्पूर्वः लक्ष्मणो भरतात्कनिष्ठ इत्यनयोर्गौणत्वम् । न चैवमाद्युदात्तत्वं मध्यमस्यापि स्यादिति वाच्यम् । प्रत्ययादिपदसमभिव्याहारादेव प्रत्ययत्वाद्युपाध्यवच्छिन्नादिप्रतीतेः, दशरथस्याद्यपुत्र इत्यादौ तदन्यतत्पुत्रत्वावच्छिन्नापेक्षया तत्प्रत्ययवत् । इत्यास्तां प्रासङ्गिकम् ।

ननु "व्यपदेशिवदेकस्मिन्" इत्येव युक्तम् । इयाय आरेत्यादौ इणृधातोश्च धात्ववयवत्वं प्राथम्यं एकाच्त्वं चाश्रित्य इकारऋकारयोर्द्वित्वं यथा स्यात् । "एकाचः" इति हि बहुव्रीहिः । एवं "स देवान्यक्षद्" इत्यादौ यजेः पञ्चमलकारे "सिब्बहुलं लेटि" इति सिप्, तस्य षत्वं च यथा स्यात् । प्रत्ययस्यावयवो यः सकारस्तस्य षत्वविधानात्, "आद्यन्तवद्" इत्युक्त्या च आदित्वान्तत्वप्रयुक्तकार्यसिद्धावप्युक्तकार्याणामसिद्धेः । व्यपदेशस्तु मुख्यो व्यवहारः, स यस्य निमित्तवशादस्ति स व्यपदेशी, यस्तु व्यपदेशहेत्वभावेऽपि कार्यं प्रति तद्वद्वर्तते स व्यपदेशिवत् । तथा च एकस्मिन्नपि मुख्यइव कार्यं स्यादिति वचनार्थः इति चेत्, अत्र भाष्यकाराः—

अवचनाल्लोकविज्ञानात्सिद्धमिति ।

वचननिरपेक्षाल्लोकव्यवहारात्सिद्ध्या "आद्यन्तवद्" इति "व्यपदेशिवद्" इति चोभयमपि नारम्भणीयम् । इण्धातुर्हि प्रयोगभेदाद्बहुरूपः, एति इतः यन्तीत्यादिः । इयायेत्यत्रैव

इकारस्तदवयव इव भासते ।

यद्वा-अर्थवतो धातोर्वर्णरूपोऽयमेकोऽच् इति क्रियावाचकतावच्छेदकतदन्यधर्माभ्यां भेदव्यपदेशः । एवं सिप्रत्ययो जोषिषदित्यादाविट्सहितः, वक्षदित्यादौ केवलोऽपीति प्रत्ययस्यायं सकार इति । लोकेऽपि बहुपुत्रवदेकपुत्रेऽपि अयं मे ज्येष्ठः पुत्रोऽयं मध्यमोऽयं कनिष्ठ इति । असूतायामसोष्यमाणायां च प्रथमगर्भेण हतेति व्यवहरन्ति ।

नन्विमे गौणा व्यवहाराः। आद्यस्य पुत्रान्तरव्यावृत्तितात्पर्यकत्वात्, द्वितीयस्य च तद्गर्भध्वंसासमानकालीनगर्भेणेत्यर्थात् । शास्त्रं च मुख्ये चरितार्थं कथं गौणे प्रवर्त्तेतेति चेन्न । निरूढतया मुख्यतुल्यकक्षत्वात् । "ऋदोरप्" इति अनुदात्तार्थपित्त्वाच्च । आद्युदात्तत्वाप्रसक्तौ तद्बाधनार्थस्य तस्य वैयर्थ्यात् । "इट ईटि" इति ज्ञापकाच्च । अन्यथा सिचः सकारमात्रस्य वल्रूपत्वेन वलादित्वाभावादिटोऽनुपपत्तेः ।

# तरप्तमपौ घः २१ ।

एतौ घसंज्ञौ स्तः । रचयति रुचिः शोणीमेतां कुमारितरा रवेः । घरूपेत्यनेन "तसिलादिषु" इति प्राप्तं पुंवद्भावं बाधित्वा ह्रस्वः । नद्यास्तरो नदीतर इत्यत्र तु न । तमप्प्रत्ययसाहचर्यात् । तमशब्दस्यापि प्रातिपदिकस्य सम्भवे तु पकारानुबन्धसामर्थ्यात् ।

वस्तुतस्तु घसंज्ञायां सत्यामपि न क्षतिः । समानाधिकरणे स्त्रीलिङ्गे परे ह्रस्वविधानात् । सामानाधिकरण्यं च स्वार्थिकस्यैव, न तु तरतीति व्युत्पन्नस्य तरादेः ।

भाष्ये तु "यदा सैव नदी स एव तरस्तदा प्राप्नोति"इत्यु-

क्तम्। तत्र भावे स्त्रियां क्तिन्प्रत्यये तीर्णिरिति भाव्यमित्याशङ्क्य कैयटः–"तीर्यते तर इति सामान्येन पदं व्युत्पाद्य पश्चान्नद्या विशेष्यते"इति। तत्र परिहारः–"स्त्रीलिङ्गेषु घादिष्वित्येवं तद्" इति। तरशब्दस्य च स्त्रीत्वाभावात्। अन्यथा महिषीव रूपं महिषीरूपमित्यत्रापि ह्रस्वापत्तेः। "सुप्सुपा" इति समासः। महिषीवेयमाकृतिरित्यर्थः।

अत्र वदन्ति–आतिशायनिकप्रत्ययप्रकरणएव "तादी घः" "पितौ घः" इति वा सूत्रमपहाय प्रकरणपरित्यागेनोक्तसूत्रारम्भः स्वार्थिकोऽपि तरप्रत्ययोऽस्तीति ज्ञापनार्थः। तेन "अल्पाच्चतरम्" इत्यादि सिध्यतीति।

केचित्तु सामान्यापेक्षज्ञापकमाश्रित्य ईयसुनोऽपि स्वार्थिकत्वम्। तेन "अहो महीयस्तव साहसिक्यम्" इत्यादि सिद्धमित्याहुः।

वामनस्तु काव्यालङ्कारे शब्दशुद्धिप्रकरणे महत्त्वप्रतियोग्यपेक्षायामप्यातिशायनिका इत्याह।

यदपेक्षयाऽतिशयः प्रत्याय्यते तदप्रयोगेऽपि तस्य गम्यमानत्वमात्रेण भवन्तीत्यर्थः। "देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे" इत्यत्र "छान्दसस्तमप्" इति भाष्यं तस्यानुकूलम्। अन्यथा स्वार्थिकत्वेनैवोपपत्तेः।

# बहुगणवतुडति संख्या २२।

एते संख्यासंज्ञाः स्युः। बहुकृत्वः। संख्यायाः क्रियाऽभ्यावृत्तिगणने कृत्वसुच्। बहुधा। संख्याया विधार्थे धा। बहुभिः क्रीतो बहुकः। संख्याया अतिशदन्तायाः कन्। बहुशः। "संख्यैकवचनाच्च वीप्सायाम्" इति शस्। एवमुत्तरेषु

"यत्तदेतेभ्यः परिमाणे वतुप्" "आ सर्वनाम्नः" इत्यात्वम् । यावत्कृत्व इत्यादि । किमः संख्यापरिमाणे डति च । कतिकृत्व इत्यादि ।

ननु एकादिशब्दानामपि संज्ञेयं विधेया । अन्यथा प्रदेशेषु "कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः" इति न्यायेन पारिभाषिकसंख्यैव गृह्येत, न तु लोकसिद्धा । सर्वार्थप्रत्यायनशक्तिमतः शब्दस्यार्थविशेषे व्यवहाराय नियमे तन्मात्रपरत्वात् । अन्यथा संज्ञाविधानवैयर्थ्यापत्तेः । न चैवं "नदीपौर्णमास्याग्रहायणीभ्यः" इत्यत्रापि तथापत्तिः । पौर्णमास्यादिशब्दोपादानसामर्थ्येन तत्र कृत्रिमनद्या अनुपादानात् । मैवम् । संख्याकार्यातिदेशार्थत्वादस्य सूत्रस्य संज्ञाविधायकत्वाभावात् । वतिमन्तरेणापि बहुशस्तदर्थप्रत्ययात् ।

यद्वा—अत्रापि तथानियमाभावात् । "कर्तरि कर्मव्यतिहारे" "शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे" इत्यादौ व्यभिचारात् । न च तत्र सामर्थ्यात्तथात्वम् । अत्रापि यत्नविशेषसद्भावात् । "संख्याया अतिशदन्तायाः कन्" इत्यत्र तिशब्दान्तायाः शच्छब्दान्तायाश्च संख्यायाः पर्युदासेन लौकिकसंख्याग्रहणस्य ज्ञाप्यत्वात् । विंशतीत्यादेः त्रिंशदित्यादेश्चापारिभाषिकत्वात् । पारिभाषिक्यास्तस्यास्तदन्तत्वविरहात् । न च कतीति पारिभाषिक्येव संख्या तिशब्दान्ताऽस्तीति वाच्यम् । अर्थवद्ग्रहणपरिभाषया डतिप्रत्ययैकदेशतिशब्दस्य भेदप्रतियोगित्वेनानुपादानात् । तदुक्तम्—

उभयगतिरिह शास्त्रे भवतीति ।

अत एव बहुगणशब्दयोर्वैपुल्यसङ्घार्थयोर्नेह ग्रहणम्, किन्तु संख्यार्थयोरेव । स च नियमार्थः—अनियतबहुत्ववाचकानां

मध्येऽनयोरेव संख्यासंज्ञा, न तु भूर्यादीनाम्। तेन बहुत्ववाचकत्वाभाववतोरेकद्विशब्दयोर्नियतबहुत्ववाचिनां त्र्यादीनां च न व्याप्तिः। विशेष्यविशेषणभावाभ्यां तेषां निर्धारणप्रतियोगितावच्छेदकानाक्रान्तत्वात्।

भाष्यकृतस्त्वाहुः—"बहुपूगगणसङ्घस्य तिथुक्" "वतोरिथुक्" "षट्कतिकतिपयचतुरां थुक्" इति सूत्रैः डटि परे आगमानां विधानसामर्थ्यात्तेषां संख्यात्वं ज्ञाप्यते। अन्यथा संख्यात्वं विना डट एवानुपपत्तेः। तथा चेदं सूत्रं न कर्तव्यमेवेति।

न चैवं पूगादीनामपि कृत्वसुजादिकमपि संख्याकार्यं स्यात्, बहुगणशब्दयोः कार्यसामान्ये संख्यात्वं ज्ञाप्यते, पूगादीनां तु विशेषापेक्षमेवेति वैषम्ये मानाभावादिति वाच्यम्। लक्ष्यानुरोधेन तदङ्गीकारात्।

एतदनुरोधात्सूत्रमेतदावश्यकमिति कौस्तुभकृतः।

अत्र शब्दान्तराणामपि संख्याकार्यविशेषसिद्ध्यर्थानि वार्तिकानि।

अध्यर्द्धग्रहणं च समासकन्विध्यर्थम्।

अर्द्धेनाधिकमध्यर्द्धम्। एकदेशार्थकार्द्धशब्दस्याधिशब्देन समासे यौगिकार्थप्रत्ययेन संख्याप्रत्ययाभावात्रिभागादिशब्दवत्संख्यावाचित्वाभावादिदं विध्यर्थम्। अध्यर्द्धेन शूर्पेण क्रीतम् अध्यर्द्धशूर्पम्। "दिक्संख्ये" इत्यनुवर्तमाने "तद्धितार्थोत्तरपदसमाहारे च" इति क्रीतार्थकतद्धितविवक्षायां शूर्पशब्देन सह समासः। ततः "शूर्पादञन्यतरस्याम्" इति अञ् ठञ् वा। "अध्यर्द्धपूर्व" इति तस्य लुक्। अध्यर्द्धेन क्रीतमध्यर्द्धकम्। "संख्याया अतिशदन्तायाः" इति कन्। समासविध्यर्थमिति,

सम्बन्धसामान्ये षष्ठी । तेन समासस्य समासनिमित्तककार्यस्य वा विधेयत्वे इत्यर्थः । तेन द्विगुनिमित्तो लुगपि सिद्धः । एवं च "अध्यर्द्धपूर्वाच्च द्विगोः" इत्यत्राध्यर्द्धग्रहणं प्रत्याख्येयम् । द्विगुत्वादेव सिद्धेः । तदुक्तम्—

लुकि चाग्रहणमिति ।

अन्ये तु एकः अध्यर्द्धः द्वौ इत्यादिरीत्या लोके गणनदर्शनादध्यर्द्धशब्दोऽपि संख्यार्थ इत्याहुः ।

तद्रीत्या सार्द्धादीनां शब्दानां संख्यात्वव्यावृत्त्यर्थतया "अध्यर्द्ध" इति वार्तिकं नियमार्थम् । वाक्यभेदेन च द्वितीयो नियमः—उक्तकार्यद्वयएव संख्यात्वं न तु कार्यान्तरेषु । तेन कृत्वसुजादयो नेति कैयटः ।

अर्द्धपूर्वपदश्च पूरणप्रत्ययान्तः ।

संख्यापदं समासकन्विध्यर्थमिति चानुवर्तते । पूरणप्रत्ययान्ते उत्तरपदे अर्द्धशब्दे च पूर्वपदे यत्र तादृशसमासरूपपूर्वपदस्य शब्दान्तरेण समासे कनि च कार्ये संख्या संज्ञा इत्यर्थः । अर्द्धपञ्चमैः शूर्पैः क्रीतम् अर्द्धपञ्चमशूर्पम् । अर्द्धपञ्चमेन क्रीतम् अर्द्धपञ्चमकम्, पूर्ववत्समासादि ।

अधिकग्रहणश्चालुकि समासोत्तरपदवृद्ध्यर्थम् ।

अधिकपदस्य संख्याविशेषणत्वेऽपि संख्यात्वाभावादयमप्यपूर्वाविधिः। अधिकया षष्ट्या क्रीतोऽधिकषाष्टिकः। अधिकसाप्ततिकः । "तद्धितार्थ" इति समासः । प्राग्वतेष्ठञ् । अलुकीति वचनात् लुकि कर्त्तव्ये संख्यासंज्ञा नास्तीति "संख्यापूर्वो द्विगुः" इति न द्विगुसंज्ञा । तेनाध्यर्द्धपूर्वेति ठञो न लुक् । "संख्यायाः संवत्सरसंख्यस्य च" इत्युत्तरपदवृद्धिः । अन्यथा षष्टिशब्दस्य संख्यापरत्वाभावात्तदप्रवृत्तेः । ननु उत्तरपदवृद्ध्यर्थमित्यत एव

लुगभावस्याक्षेपसम्भवात्पृथक् तद्ग्रहणं व्यर्थमिति चेत्, अत्राहुः—

अर्हत्यर्थात्परेष्वर्थेषु ये प्रत्ययास्तेषां लुगप्रसङ्गेन तत्रैवोत्तरपदवृद्धेः सावकाशतया तन्मात्रेणालुक आक्षेप्तुमशक्यत्वादिति।

# ष्णान्ता षट् २३।

षान्ता नान्ता च सङ्ख्या षट्संज्ञा स्यात्। षट् तिष्ठन्ति। षट् पश्य। पञ्च सप्तेत्यादि। "षड्भ्यो लुक्" इति जश्शसोर्लुक्। सङ्ख्येति किम्। विप्रुषः। पामानः।

नन्वत्र संख्यापदं नास्ति। न च पूर्वसूत्रात्तदनुवृत्तिः। तस्य संज्ञात्वेन लौकिकसंङ्ख्यावाचकत्वाभावात्। उच्यते—

अतिदेशपक्षे संख्यापदानुवृत्तेः सुस्थत्वात्। संज्ञापक्षेऽपि "ष्णान्ता" इत्यत्र स्त्रीलिङ्गविशेष्यस्याकाङ्क्षितत्वादस्वरितस्यापि सङ्ख्यापदस्यानुवृत्त्या शब्दाधिकारेणात्र तस्याभिमतार्थपरत्वसिद्धेः। एतच्च पूर्वसूत्रे भाष्ये स्पष्टम्।

नन्वत्र "उपदेश" इति वक्तव्यम्। प्रत्ययोत्पत्तिकाले इति तदर्थः। अन्यथा शतानि सहस्राणीत्यादौ नुमः पूर्वावयवत्वेन संख्याया नान्तत्वसम्पत्त्या षट्संज्ञायां जसादेर्लुक्प्रसङ्गादिति चेन्न। सर्वनामस्थानसंनिपातकृतस्य नुमस्तल्लोपप्रवर्तकषट्संज्ञां प्रति निमित्तत्वानुपपत्तेः।

अथ तथाऽपि अष्टन् आम् इति स्थिते परत्वान्नित्यत्वाच्च "अष्टन आ विभक्तौ" इत्यात्वे कृते नान्तत्वाभावात् षट्संज्ञाऽनुपपत्त्या "षट्चतुर्भ्यश्च" इति नुडागमो न स्यादिति तदर्थमेवोपदेशग्रहणमावश्यकमिति चेन्न। यथोद्देशपक्षे अन्तरङ्गतया विभक्त्युत्पत्तेः प्रागेव षट्संज्ञाप्रवृत्तौ तस्या एव स्थानिवद्भावेनाकारान्ते सुलभत्वात्।

अथ कार्यकालपक्षे नुड्विध्येकवाक्यतापन्नायाः षट्संज्ञाया अपि विभक्तिसापेक्षतयाऽन्तरङ्गत्वाभावादात्वस्यैव प्रथमं प्रवृत्तेर्दोषतादवस्थ्यम्, यथोद्देशपक्षेऽपि षट्संज्ञायां नकारस्योपजीव्यत्वादल्विधित्वादतिदेशदौर्लभ्यमिति चेत्, सत्यम्। "अष्टनो दीर्घात्" इति स्वरसूत्रे दीर्घग्रहणेन कृतात्वस्यापि षट्संज्ञाज्ञापनात्।

तथा हि—अष्टन्शब्दस्य "त्रः संख्यायाः" इत्याद्युदात्तप्रसङ्गेऽपि घृतादिपाठादन्तोदात्तत्वम्। तस्य अष्टभिरिति मध्योदात्तम्, अष्टाभिरित्यन्तोदात्तं चेति रूपद्वयमिष्टम्। तत्र च "षट्त्रिचतुर्भ्यो हलादिः" इति विभक्तेरुदात्तत्वं प्राप्तम्, तद्बाधित्वा च "झल्युपोत्तमम्" इति मध्योदात्तत्वं प्राप्तम्, षट्त्रिचतुर्भ्यः परा या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं भवतीति तस्यार्थः। तद्बाधनार्थम् "अष्टनो दीर्घाद्" इति सूत्रम्। दीर्घान्तादष्टनः परा सर्वनामस्थानभिन्ना विभक्तिरुदात्ता स्यादिति तदर्थः। आत्वाभावपक्षे तत्प्रवृत्तिर्मा भूदिति दीर्घपदोपादानम्। यदि त्वात्वपक्षे षट्संज्ञा न स्यात्तदा "अष्टनः" इति विभक्त्युदात्तस्य तत्रैव सावकाशतया आत्वाभावपक्षे "झल्युपोत्तमम्" इत्यनेन परत्वादेव विभक्त्युदात्तबाधोपपत्तौ दीर्घादित्यस्य वैयर्थ्यं स्यात्। आत्वपक्षेऽपि षट्संज्ञायां तु विभक्त्युदात्तस्य "झल्युपोत्तमम्" इत्येतान्निर्मुक्तविषयाभावाद् येननाप्राप्तिन्यायेन तदपवादत्वादात्वाभावपक्षेऽपि मध्योदात्तबाधः स्यात्, अतो "दीर्घाद्" इत्युक्तम्। तथा चाष्टभिरित्यत्र विभक्त्युदात्तस्य प्राप्त्यभावात् "झल्युपोत्तमम्" इति मध्योदात्तसिद्धिः।

न चाष्टावित्यत्रान्तोदात्तत्वं सावकाशम्, तत्र विभक्तेर्झलादित्वाभावेन मध्योदात्तप्रसक्त्यभावादिति वाच्यम्। "एका

देश उदात्तेनोदात्तः" इत्यनेनैव गतार्थत्वात् । अष्टन्शब्दोऽन्तोदात्त इत्युक्तत्वात् । "अष्टनः" इति सूत्रे अन्तोदात्तादुत्तरपदादित्यतोऽन्तोदात्तपदानुवृत्तेराकरसंमतत्वात् । एतेन "कदष्टन्नित्यस्याव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वात्कदष्टात्रिति शसि विभक्त्युदात्तत्वं सावकाशम्" इति शङ्काऽप्यपास्ता। तत्रान्तोदात्तत्वाभावेन "अष्टनः" इति विभक्त्युदात्तस्य प्रवृत्त्यनुपपत्तेः ।

यद्यपि मनोरमादौ "अष्टनो दीर्घाद्" इति सूत्रे अन्तोदात्तपदं नानुवर्तते, उत्तरत्र मण्डूकप्लुत्या तदनुवृत्त्युपपत्तेः" इत्यप्युक्तम्, तथाऽपि तदभ्युपेत्यवादमात्रं बोध्यम् ।

एतेन षट्संज्ञापेक्षया लाघवात्कृतात्वस्याष्टनः षट्स्वरस्यैव ज्ञाप्यताम्, ज्ञापकस्य स्वरप्रकरणस्थत्वात् , तत्र षट्संज्ञाया अनुपास्थितत्वात्, बाधकषट्स्वरनिमित्ततया तदुपस्थितौ तु षट्स्वरस्यैव प्रथमोपास्थितत्वाच्च । अर्थापत्तेः साक्षादुपपादकाविषयताया औत्सर्गिकत्वात् , इत्यपि निरस्तम् । यद्व्यतिरेकेणानुपपत्तिप्रतिसन्धानं तस्यैवार्थापत्त्या कल्प्यत्वात् । तदुक्तम्—

अनियम्यस्य नायुक्तिर्नानियन्तोपपादकः ।

इति । आत्वपक्षे यदि षट्संज्ञा न स्यात्तदा दीर्घादिति व्यर्थं स्यात् इत्येवोपपत्तेः । न च यदि षट्स्वरो न स्यादित्येवापादकमस्त्विति वाच्यम् । षट्संज्ञानिमित्तकस्वराभावस्य षट्संज्ञाव्यतिरेकप्रयुक्ततया तस्या एव प्रथमोपस्थितत्वात् । षट्स्वराभावस्यापादकत्वे तु तदभावस्यैव साध्यत्वं स्यात् । अन्यथा विपर्ययपर्यवसानात् । आपादकव्यतिरेकसाध्यकप्रमाणएव तर्कस्य सहकारित्वात् । तच्च प्रमाणमनुमानमर्थापत्तिर्वेत्यन्यदेतत् ।

तथा च यदि षट्स्वर एव अर्थापत्तिविषयस्तदा " दीर्घाद् " इत्यस्य वैयर्थ्यमेव स्यात् । आत्वपक्षे मध्योदात्तरूपस्य षट्स्वरस्यानिष्टत्वात् । इष्टत्वे " अष्टनः " इति सकलस्यैव सूत्रस्य वैयर्थ्यापत्तेश्च । तस्मात्षट्संज्ञैव ज्ञाप्यते । तन्निबन्धनस्वरप्रसक्तेः "अष्टनः" इतिसूत्रोपयुक्तायास्तत एव निर्वाहात् । नुट्प्रवर्तकतया तद्वैयर्थ्याभावाच्चेति सर्वनिर्वाहात् । अत एव "भवत्यात्वे कृते षट्संज्ञा" इत्येव भाष्यकारैरुक्तम् । अत एव च पूर्वसूत्रे "डटि परे विधीयमाना आगमा डटो निर्वाहकं संख्यात्वं ज्ञापयन्ति" इत्येवोक्तम् । अन्यथा तत्र डट एव ज्ञापनापत्तेः । आकारान्ते षट्स्वरसत्ताज्ञापने प्रयोजनाभावाच्च । अष्टाभिरित्यादौ " अष्टनः " इति विभक्त्युदात्तस्यैव प्रवृत्तेः । प्रियाष्टाभिरित्यादौ च गौणत्वात्षट्स्वरानुपपत्तेः । " षट्त्रिचतुर्भ्यः " इति बहुवचननिर्देशात् । अन्यथा समाहारे द्वन्द्वं कृत्वैकवचनमेव ब्रूयात् । " झल्युपोत्तमम् " इत्यत्राप्यर्थाधिकारेण षडर्थप्राधान्यएव प्रवृत्तेरुचितत्वात् । अत एव " चतुरः शसि" इति सूत्रे "षड्भ्यः परयोर्जश्शसोर्लोपविधानाद् बहुवचनान्तराणां च हलादित्वनियमात् तदर्थं " षट्त्रिचतुर्भ्यः " इतिसूत्रस्थस्य हलादिरित्यस्य नोपयोगः" इत्युक्तं भाष्यकृद्भिः । गौणेऽपि तत्प्रवृत्तौ त्वजादिवचनान्तरव्यावृत्त्यर्थत्वसम्भवात्तदसङ्गत्यापत्तेः । परमाष्टाभिरित्यादावपि षडादिभ्यो विहितत्वाभावादप्रवृत्तेः । "षट्त्रिचतुर्भ्यः" इत्यत्र विहितविशेषणस्य हरदत्तेनोक्तत्वात् इत्यादेः स्वयमेवोक्तत्वात् ।

वस्तुतस्तु दीर्घग्रहणेन कृतात्वस्थले षट्स्वरसत्ताज्ञापनपक्षे प्रियाष्टाभिरित्यादि प्रयोजनं स्यादेव । एतज्ज्ञाप्यस्वरप्रवृत्तौ षडर्थप्राधान्यादेरनपेक्षितत्वात् । "झल्युपोत्तमम्" इत्यनेन स्व-

रविधानएव तस्यापेक्षितत्वात् ।

अथ षट्संज्ञैवानेन ज्ञाप्यते, ततो " झल्युपोत्तमम् " इत्यनेनैव स्वरप्रवृत्तिराशङ्क्यते इति चेत्तर्हि सिद्धमस्मदिष्टम् । तस्मादुक्तयुक्त्यैव षट्स्वरप्रवृत्तिर्न ज्ञाप्यतइति बोध्यम् ।

यत्तु आत्वपक्षे षट्स्वरस्यैव तदभावे तदभावज्ञापनेनापि "दीर्घाद्" इत्यस्य सार्थक्याद्विनिगमनाविरहादुभयज्ञापनापत्तिरिति, तच्चिन्त्यम् । "स्वरतिसूतिसूयति" इत्यत्र लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्" इत्यस्यैव "लुग्विकरणस्यैव ग्रहणम्" इत्यस्यापि ज्ञापनापत्तेः । तेनाप्युभयनिर्देशवैयर्थ्योद्धारात् । इष्ट एवार्थो ज्ञाप्यते इत्यस्याप्युभयसाधारणत्वात् । यत्किञ्चिदर्थज्ञापनेन सर्वज्ञापकानामपि सार्थक्यसम्भवात् । सर्वत्रापि ज्ञापकानां तत्तदर्थविशेषविषयकत्वोच्छेदापत्तेश्च ।

यदप्युक्तम् । "दीर्घाद्"इत्यस्य योगविभागार्थतया सार्थक्यम्। तत्र हि दीर्घेति लुप्तपञ्चम्यन्तम् । आदिति प्रथमान्तम् । दीर्घादित्यनुवृत्तस्याष्टनो विशेषणम् । अत एव "दीर्घादष्टनः" इति न सूत्रितम् । आदिति प्रथमान्तेन विशेषणविशेष्ययोर्दीर्घाष्टनोर्व्यवधानापत्तेः । " दीर्घाद् " इति सूत्रेऽष्टनो ऽनुवृत्तेरसम्भवाच्च । दीर्घान्तादष्टन्शब्दात्परस्य असर्वनामस्थानविभक्तेराकार उदात्त इत्यर्थः । इदञ्चाष्टानामित्यत्रान्तोदात्तार्थमिति । तदत्यन्तमसत् ।

इदं हि " अष्टन आ विभक्तौ " इत्यत्र हलीत्यपकर्षपक्षे तदभावे वा । नाद्यः । नान्तत्वसान्निपातकृतस्य नुटस्तद्विघातकमात्वं प्रति निमित्तत्वानुपपत्तेः । न च तस्या अनित्यत्वान्न दोषः । अकृतव्यूहपरिभाषया नुटो दुर्लभत्वात् । भा-

विना आत्वेन निमित्तस्य विनाशोन्मुखत्वात् । " नोप धायाः " इति दीर्घेण नकारलोपेन च पञ्चानामित्यादिवदष्टानामित्यस्यापि सिद्ध्या संनिपातन्यायाप्रवृत्तिस्वीकारवैयर्थ्याच्चेति तस्य दूष्यत्वात् । एतेनोक्तयोगविभागोऽपि निरस्तः । " षट्त्रिचतुर्भ्यो हलादिः " इत्यनेनैव विभक्त्याकारस्योदात्तत्वसिद्धेः ।

यत्तु उक्तयोगविभागआदित्यनेन "अष्टन आ विभक्तौ" इत्यात्वस्य ग्रहणम्, प्रतिपदोक्तत्वात्, न तु " नोपधायाः " इत्यस्य, विलम्बितप्रतीतिकत्वात् । तच्च संनिपातपरिभाषायाः प्रवृत्तौ दुर्लभमिति नात्र सन्निपातपरिभाषायाः प्रवृत्तिरिति, तदसत् । " अष्टनः " इत्यात्वपरत्वानुरोधेन सन्निपातन्यायो बाध्यताम् उत " नोपधायाः " इति दीर्घेऽप्येतत्प्रवृत्त्याऽसिद्धत्वं बाध्यतामित्यत्र विनिगमकाभावात् । न चैवं लक्षणप्रतिपदोक्तपरिभाषाया असिद्धत्वस्य चेत्युभयोर्बाधापत्तिः । त्वन्मतेऽप्यकृतव्यूहसन्निपातपरिभाषयोर्बाधात् ।

यदप्युक्तम् । नलोपस्यासिद्धत्वेनाष्टनो दीर्घान्तत्वाभावात् "नोपधायाः" इति दीर्घपक्षे नोक्तयोगप्रवृत्तिरिति, तदप्यसत् । "नलोपः सुप्स्वर" इत्यादिनियमात् । न चायं स्वरविधिर्भवत्येवेति वाच्यम् । नकारान्तस्य स्वरे विधेयएव तदङ्गीकारात् । पञ्चार्ममित्यादौ तथैव दृष्टत्वात् । कार्यान्तराणामपि तत्राङ्गसम्बन्धित्वात् । अत्र च विभक्त्याकारस्य स्वरविधानेन वैषम्यात् । नापि द्वितीयः । तत्र "नोपधायाः" इति दीर्घस्यैव वाच्यतया प्रतिपदोक्तस्य आत्वस्य दुर्लभत्वात् । स्वेच्छया योगविभागे छान्दसत्वकल्पने बीजाभावात् । असर्वनामस्थानविभक्तिपदयोः प्रथमान्तयोः षष्ठीकल्पनेऽपि प्रमाणाभावात्

इदं चाभ्युपेत्योक्तम् । अष्टानामित्यत्र विभक्त्याकारोदात्तस्योक्तरीत्यैव सिद्धत्वादुक्तयोगविभागएव बीजाभावात् । तत्प्रवृत्तिविचारस्य निरवकाशत्वात् ।

यत्तु आम्पराष्टन्शब्दे षट्स्वराप्रवृत्तिज्ञापनमस्य फलम् । तस्याप्यात्वाभावपक्षेऽन्तोदात्तत्वाभाव इति । तदसत् । अप्रामाणिकफलानुरोधेन कल्पनाऽनुल्लासात् । अन्यथा स्वेच्छया योगविभागं कृत्वाऽनेकेषां फलानां ज्ञापयितुं शक्यत्वात् । तस्मात्कृतात्वस्य षट्संज्ञैव ज्ञाप्यते इति सिद्धम् ।

नन्वेवं दीर्घग्रहणेन आत्वाविकल्पज्ञापनानुपपत्तिः । उक्तरीत्या चरितार्थत्वात् । मैवम् । स्ववैयर्थ्यप्रयोजकव्यतिरेकप्रतियोगिन एकस्यानेकस्य वा ज्ञाप्यत्वात् । उभयज्ञापनं विना दीर्घग्रहणवैयर्थ्यानुद्धारादात्वाभावपक्षे मध्योदात्तबाधो मा भूदित्येतदर्थस्य दीर्घग्रहणस्य आत्वाभावपक्षं विना वैयर्थ्यतादवस्थ्यादिति दिक् ।

यद्वा आकारप्रश्लेषोऽप्यत्र बोध्यः । षकारो नकार आकारश्चान्ते यस्य इत्यर्थः । नन्वेवं द्वाभ्यामित्यादौ "झल्युपोत्तमम्" इत्यस्य ज्झचि पदे प्रवृत्त्यभावात् "षट्त्रिचतुर्भ्यः" इति विभक्त्युदात्तेनान्तोदात्तत्वं स्यात् । न चेष्टापत्तिः । "आ द्वाभ्यां हरिभ्यामिन्द्र याहि" इत्यादावाद्युदात्तस्यैव पठ्यमानत्वात् । मैवम् । नकारस्थानिकस्यैवाकारस्य संज्ञायामुपादानात् । न चात्र प्रमाणाभावः । संनिधानस्यैव तथात्वात् । अत एव घुसंज्ञासूत्रे "नेर्गद" इत्यत्र "घुप्रकृतिमाङ्" इति पाठे प्रकृतिपदेन पूर्वोत्तरप्रकृतिपरामर्श इति सिद्धान्तः ।

वस्तुतस्तु "हलो यमां यमि लोपः" इति द्वितीयनकार-

-मश्लेषेण नकारस्थानिक आकारोऽत्र व्याख्येयः । उक्तस्वरदोषोपन्यासपरभाष्य त्वभ्युपेत्यवादमात्रम् । एतेनैकादेशेऽतिप्रसङ्गशङ्कापरग्रन्थोऽपि व्याख्यातः ।

अथवा सप्तमे योगविभागः कर्त्तव्यः । "षड्भ्यो लुक्" इत्यत्र "षड्भ्यः" इति, "अष्टाभ्य औश्" इत्यत्राष्टाभ्य इति । षड्भ्यो यदुक्तं तत्कृताकारादष्टनोऽपि भवतीति तदर्थः । तेन नुट् सिद्धः । न च यदुक्तमित्यध्याहारे मानाभावः। भाष्यस्यैव मानत्वात् । न चैवं जश्शसोर्लुगप्यतिदिश्येतेति वाच्यम् । औश्त्वविधानवैयर्थ्यापत्तेः । एतेनानुमानिकवचनकल्पनापेक्षया आकारान्ते षट्संज्ञाविरहकल्पनमेव युक्तमिति निरस्तम् । अतिदेशस्य लुग्विषयकत्वं नास्तीत्यस्यैव कल्प्यत्वात् । नान्तत्वावस्थायामेव लुग्वारणार्थं त्वन्मतेऽपि विधिसामर्थ्यस्यावश्याश्रणीयत्वात् । न चाष्टनो यदुक्तं तत्षड्भ्योऽपि स्यादिति विपरीतार्थापत्तिः । योगविभागस्येष्टसिद्ध्यर्थत्वानियमात् । अन्यथा योगविभागमात्रोच्छेदापत्तेः ।

यद्वा "अष्टन आ विभक्तौ" इत्यनन्तरं "रायः" इति योगं विभज्य "हलि" इत्युभयशेषतया व्याख्येयम् । तेन हलादावेव विभक्तौ परत आत्वविधानात् नुट एव प्राथम्यम् । न चैवं जश्शसोरात्वं न स्यादिति वाच्यम् । "अष्टाभ्यः" इत्यात्वविशिष्टनिर्देशेन तत्र तदनुमानात् । अन्यथा अष्टा इति अष्ट इति वा ब्रूयात् ।

न चैवं प्रियाष्टौ प्रियाष्टा इत्यत्रानुपपत्तिः । प्रियाष्टानौ प्रियाष्टान इत्यादेरेव साधुत्वादिष्टापत्तेः । यद्भाष्यम्—

यथालक्षणमप्रयुक्ते इति ।

तदत्र मा भूदात्वमित्यर्थ इति कैयटः ।

केचित्तु भवत्येवात्रात्वमिति भाष्यार्थ इत्याहुः, तच्चिन्त्यम्। शङ्काया अपकर्षपक्षविषयकत्वेन तत्रैव समाधानस्य युक्तत्वात्। तत्र च हलादित्वाभावेन आत्वप्राप्तिविरहेण कैयटव्याख्याया एव युक्तत्वात्। तदयं फलितार्थः। प्रथमं तु यथोद्देशादीर्घादाकारतो विभागाभ्याम् अष्टानामितिशब्दे समाधयः पञ्च पर्यवस्यन्ति। अयं चात्र विशेषः।

औङष्टान्तेष्वामुङिद्दोष्षु नात्वं गौणे मतेऽन्तिमे।
भवत्येव तु तत्रात्वमाद्ये पक्षचतुष्टये॥

तथा हि—हलादिविभक्तावात्वविधानमिति पक्षे प्रियाष्टा इति बहुव्रीहौ औङमारभ्य टापर्यन्तम् आमि ङेङसिङस्ङिषु ओस्द्वये च आत्वं न प्राप्नोति। एषामजादित्वात्। न च "ग्रहणवता प्रातिपदिकेन" तदन्तविधिनिषेधादत्रात्वप्रसक्तिरेव नेति वाच्यम्। "पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च" इत्यनेन तत्सत्त्वात्। न च लुङ्लुटोरिवात्वस्यापि गौणे न प्रवृत्तिरिति वाच्यम्। तद्विधौ बहुवचननिर्देशादर्थप्राधान्यलाभः, आत्वविधौ तु एकवचननिर्देशान्नेति वैषम्यात्। तदिह कुत्र भाष्यतात्पर्यमिति चेत्, मैवम्। आत्वविधावेकवचननिर्देशात्स्वरूपस्य ग्रहणं नार्थस्य, तेनोपसर्जनेऽप्यष्टानि भवति। "तत्रापि विकल्पितत्वात्प्रियाष्टा प्रियाष्टानौ प्रियाष्टान इत्यपि भवति" इति वदता हरदत्तेन हलीत्यपकर्षे भाष्यस्य तात्पर्यं नास्तीति स्पष्टमेवोक्तत्वात्।

यत्तु "अष्टाभ्यः" इति सूत्रे "तदन्तग्रहणात्परमाष्टौ इत्युक्त्वा प्रियाष्टान इत्यत्रात्वस्याभावादौश् न भवतीतिवृत्तिग्रन्थविरोधाद्यथा पुनर्गौणतायामात्वं न भवति। तथा तद्विधावेव वक्ष्यत इति तत्रत्यहरदत्तग्रन्थविरोधाच्चोक्तहरदत्तग्रन्थो न युक्त इति। तच्चिन्त्यम्। वक्ष्यते इत्यत्र वृत्तिकारेणेत्यस्य विवक्षित-

त्वात् । आत्वाभावप्रयोजकश्च हलीत्यपकर्षस्तत्र स्पष्ट एव । यथाश्रुतवृत्तिग्रन्थस्य चानुपपन्नत्वात् । "अष्टाभ्यः" इत्यर्थप्राधान्यनिर्देशेन बहुव्रीहौ गौणत्वमेवौश्त्वाभावप्रयोजकम्, न त्वात्वाभाव इत्यस्य स्पष्टत्वात् । आत्वाभावस्यौशभावं प्रत्यप्रयोजकत्वात् । ननु तथाऽपि हलीत्यपकर्षे भाष्यतात्पर्यं नास्तीत्यस्य कथं सिद्धिरिति चेत्, उच्यते—

पक्षचतुष्टयविरोधस्यैव तत्र हेतुत्वात् । बहुभिर्गम्यमानस्य तात्पर्यस्यैकेन बाधानुपपत्तेः । जघन्यानामपि भूयसामनुग्राह्यतया समानकक्षाणां सुतरामेव तथात्वात् । न हि चरमोक्तं बलवदित्ययं नियमः । " कर्तुः क्यङ् " इति सूत्रे "सलोपोऽप्सरस एव पयस्यतइत्येव भवितव्यम्" इत्यस्य पश्चादुपन्यासेऽपि "न त्वयं स्थितः पक्षः"इति कैयटेनोक्तत्वात् । लाघवानुगृहीते प्रमाणतात्पर्यस्य कापिञ्जलाधिकरणादौ व्यवस्थितत्वाच्च । हलीत्यपकर्षपक्षे च सन्निपातपरिभाषादिबाधस्योक्तरीत्या स्पष्टत्वात् । दीर्घग्रहणेन कृतात्वस्य षट्संज्ञा ज्ञाप्यते इति पक्षे च तदभावात् ।

यत्त्वाकारान्ते षट्संज्ञायां फलाभावः । न च नुडेव फलम् । हलीत्यपकर्षेण नुटः पूर्वमात्वाप्रवृत्तेः । प्रियाष्ट्न इत्यर्थं तस्यावश्यकत्वादिति । तदसत् । हलीत्यपकर्षे विप्रतिपद्यमानं प्रति उक्तयुक्तेरुद्भावयितुमशक्यत्वात् । अन्यथा आकारान्तस्य षट्संज्ञयैव सिद्धौ "हालि" इत्यपकर्षे फलाभाव इत्यस्याप्यनिवार्यत्वात् । प्रियाष्ट्न इत्यस्य आत्वाभावपक्षउपपत्तेः ।

वस्तुतो " हालि " इत्युभयशेषत्वविवक्षायाम् "रायष्टनोरा हालि विभक्तौ" इत्येकमेव सूत्रं कुर्यात् । भाष्यस्याप्येतत्पक्षे निर्भरतायां तथैव न्यासः कार्यत इत्येवावक्ष्यत् ।

यत्तु "रैशब्दश्छान्दसः" इति पक्षे अष्टनोऽपि छन्दस्येवात्वं स्यादिति, तन्न। छान्दसशब्दसहचरितशब्दान्तरस्यापि छन्दस्येव कार्यमित्यत्र मानाभावात्। सम्बुद्धौ नलोपनिषेधस्यापि छन्दस्येवापत्तेः। "क्यजन्त एव रैशब्दः छान्दसः" इति कैयटोक्तेश्च।

यदपि रैशब्देऽप्यात्वविकल्पापत्तिरिति। तदप्यसत्। विकल्पबोधकपदाभावात्। दीर्घादिग्रहणेन ज्ञाप्यमानस्य त्वात्वविकल्पस्य लिङ्गलिङ्गिनोः सामानाधिकरण्यनियमात् अष्टन्शब्दमात्रविषयकत्वात्। गौरादिषु मातामहशब्दपाठेन "षितां ङीषनित्यः" इति ज्ञापितेऽपि गौरादिङीषस्तथात्वानङ्गीकारात्। एतेन "अष्टन आ विभक्तौ" इति सूत्रे "हलि" इत्युपादाने "रायः" इत्यत्र तदनुवृत्तिर्न स्यात्। "योऽचि" इत्यज्ग्रहणेनोत्तरत्र हल्पदाननुवृत्तेर्ज्ञापितत्वात्। "युष्मदस्मदोरनादेशे" इत्यात्वस्य हलादिविभक्तिविषयकत्वार्थं तदुपादानादित्यपि निरस्तम्। एकयोगत्वे उक्तदोषानवतारात्।

वस्तुतो यत्वमुत्सर्गस्तस्य हलादावात्वमपवाद इति तत्रत्यमज्ग्रहणं प्रत्याचक्षाणेन भाष्यकारेण "युष्मदस्मदोः" इत्यत्र हल्पदानुवृत्तिरेव ज्ञाप्यतइति बोध्यम्।

यदप्याहुः। आत्वाभावपक्षे अल्लोपे ष्टुत्वे च प्रियाष्ट्ण इति रूपमिति हरदत्तोक्तिरपि चिन्त्या। पूर्वस्माद्विधावल्लोपस्य स्थानिवद्भावादकारेण व्यवधानात् ष्टुत्वस्य दुर्लभत्वात्। न च "पूर्वत्रासिद्धीये न स्थानिवत्" इति वाच्यम्। "तस्य दोषः संयोगादिलोपलत्वणत्वेषु" इति निषेधाण्णत्वविधौ तदप्रवृत्तेः। न च तत्र "रषाभ्याम्" इति प्रतिपदोक्तमेव णत्वं गृह्यते, ष्टुत्वविधिलभ्यस्य विलम्बितप्रतीतिकत्वादिति वाच्यम्। मूर्द्धन्य-

ग्रहणानुवृत्त्या तत्रत्यणग्रहणस्य भाष्ये प्रत्याख्यातत्वात् । न चैवं पूष्ण इत्यादावपि णत्वानुपपत्तिः । "अट्कुप्वाङ्" इत्यनेनैव तत्र णत्वसिद्धेरिति । तच्चिन्त्यम् । णत्वमात्रविश्रान्तविधेयतावच्छेदकताकत्वेन तथाऽपि प्रतिपदोक्तत्वस्य सुलभत्वात् । यस्य विधौ णशब्दोपादानं तस्यैव णत्वस्य प्रतिपदोक्तत्वम् इति णकारप्रत्याख्यानेऽपि सत्त्वाच्च । प्रत्याख्यानाभावविशिष्टोपादानस्याप्रयोजकत्वात् । वचनविशेषपरिचायकत्वमात्रेण तस्योपयोगात् । प्रत्याख्यातानामपि वचनानां ज्ञापकतया भाष्यकारैरुपन्यासात्सत्त्वनियमानपेक्षस्योपलक्षणत्वस्य सुतरामुपपत्तेः । "निष्ठायां सेटि" इति सूत्रस्य भाष्यकृता प्रत्याख्यातस्यापि तत्रत्यसेटीतिपदस्य पूर्वस्माद्विधौ स्थानिवत्त्वमनित्यमित्येतज्ज्ञापकतायाः सर्वसंमतत्वात् । अपदान्तस्थानिकादेशसाहचर्याच्च । संयोगस्य पदान्तत्वापेक्षायामपि लोपस्य तत्प्रतियोगिनोः सकारककारयोश्चापदान्तत्वात् ।

न च निलयतइति लत्वं पदान्तस्थानिकमपीति वाच्यम् । तत्र स्थानिवद्भावतत्प्रतिषेधयोरप्रवृत्तेः । साहचर्यस्य नियामकत्वमनित्यमित्युक्तौ तु पञ्चमीसमासस्यापि तथात्वमिति तुल्यत्वात् । प्रवृत्तेरौत्सर्गिकत्वमित्यस्याप्युभयसाधारण्यात् । "पूर्वविधौ" इति पञ्चमीसमासस्य "तस्य दोषः" इत्यत्र णत्वग्रहणस्य च भवद्भिरेव निरस्तत्वाच्च । न च "असिद्धं बहिरङ्गमन्तरङ्गे" इत्यल्लोपस्यासिद्धत्वात्तथाऽपि न ष्टुत्वमिति वाच्यम् । यथोद्देशपक्षे तस्याः ष्टुत्वविधावप्रवृत्तेः । ष्टुत्वस्य तां प्रत्यसिद्धत्वात् ।

यत्तु फलैक्याय कार्यकालपक्ष एवेह न्याय्य इति । तन्न । फलैक्यं हि "रषाभ्याम्" इत्यत्र णग्रहणतत्प्रत्याख्यानयो-

र्वा । " तस्य दोषः " इत्यत्र णत्वग्रहणतत्प्रत्याख्यानयोर्वा । " अचः परस्मिन् " इत्यत्र पञ्चमीसमासतत्प्रत्याख्यानयोर्वा । नाद्यः। णग्रहणेन लक्षणप्रतिपदोक्तपरिभाषया तदभावे च "तस्य दोषः" इति णत्वप्रत्याख्यानेन ष्टुत्वस्य सुलभत्वात् । न द्वितीयः । णत्वग्रहणे प्रतिपदोक्तपरिभाषया तदभावे च बाधकाभावादेव ष्टुत्वस्य निश्चितत्वात् । न तृतीयः । पञ्चमीसमासपक्षे प्रतिपदोक्तन्यायेन तदभावे च तत एव ष्टुत्वस्य प्रमितत्वात् । तदैक्यसंपादकतया यथोद्देशपक्षस्यैवात्र युक्तत्वात् ।

वस्तुतस्तु " न पदान्त " इति सूत्रे " द्विर्वचनादीनि वरेयलोपस्वरवर्जम् " इति वार्त्तिकभाष्याभ्यां वक्ष्यते । तथा च णकारादिसाधारणधर्मो यत्र विधेयतावच्छेदकस्तस्यापि "तस्य दोषः " इत्यत्र णत्वपदेनोपादाने शिण्ढीत्यादावपि तत्प्रवृत्त्यापत्त्या " पूर्वत्रासिद्धे न स्थानिवत् " इत्यस्य प्रवृत्त्यनुपपत्तौ तदाश्रित्य सवर्णग्रहणप्रत्याख्यानं न स्यात् । " अनुस्वारस्य ययि परसवर्णः " इत्यत्र णकारस्यापि विधेयत्वेन भवद्रीत्या णत्वविधिः स्यात् । तथा च यत्र णत्वावच्छिन्नव्यक्तिमात्रपर्यवसन्नमादेशत्वम्, तदेव णत्वपदेन गृह्यते । तच्च " रषाभ्याम्" इत्यत्र णकारग्रहणे मूर्द्धन्यानुवृत्तौ वा तुल्यमेवेति दिक् ।

# डति च २४ ।

डत्यन्ता संख्या षट्संज्ञा स्यात् । कति सन्ति । कत्यद्राक्षीः । " षड्भ्यः " इति जश्शसोर्लुक् । अत्र भाष्यम्—

"बहुगणवतु संख्या" "डति च" " ष्णान्ता षट् " इति न्यासः कर्तव्यः । यथान्यासे उभयत्र डतिग्रहणेन गौरवात् ।

"डति च" इत्यत्र संख्येत्यनुवर्त्तते । "ष्णान्ता षट्" इत्यत्र तु संख्या डतीत्युभयम् । न चैवं "पातेर्डतिः" इत्यौणादिकस्यापि संख्याप्रसङ्गे पतय इत्यादौ विभक्तेर्लुक् स्यादिति वाच्यम् । संख्यासाहचर्येण तद्धितस्यैव डतेर्ग्रहणात् । यथान्यासेऽप्येवमेव वाच्यत्वात् ।

# क्तक्तवतू निष्ठा २५ ।

एतौ निष्ठासंज्ञौ स्तः । कृतः । कृतवान् । "निष्ठा" इत्युभयोर्विधानम् । विहितयोः संज्ञा, संज्ञया च विधानमित्यन्योन्याश्रयं तत्रैव परिहरिष्यामः । सानुबन्धयोर्ग्रहणं किम् । छोतः गर्त इत्यादेर्मा भूत् ।

स्यादेतत् । अनुबन्धानां कार्यार्थमुपादानम्, न तु प्रयोगसमवायः । तथा चानुबन्धलोपे कृते यत्रावशिष्टभागस्यात्यन्तसारूप्यम्, तत्र तत्प्रयुक्तकार्यव्यवस्था न स्यात् । न च यथा उत्पतितेऽपि काके देवदत्तगृहस्येतरव्यावृत्तिबुद्धिः, तथाऽत्रापि स्यादिति वाच्यम् । तत्र संस्थानविशेषादेरिवात्रोपलक्ष्यतावच्छेदकस्य रूपान्तरस्याभावात् । व्यावर्त्यवृत्तिधर्मान्तरोपस्थानद्वारा व्यावृत्तधीहेतोरेवोपलक्षणत्वात् । तदुक्तम्—

निष्ठासंज्ञायां समानशब्दप्रतिषेधः इति ।

मैवम् । कालकारकविशेषादयोऽर्था एवात्र संस्थानविशेषादिस्थानीयाः । तद्दर्शनादनुबन्धस्मृतौ सत्यां तत्तदनुबन्धनिबन्धनानां कार्याणां साधुत्वं विज्ञायते । तथा हि—"देवदत्तेन लूनः शालिः" इति प्रयुक्ते लक्षणज्ञस्य कर्मभूतकालावगमात् क्तप्रत्ययोऽयमिति धीरुदेति, "छोतमालभेत" इत्युक्ते तु मेषवाची छोतशब्द इति ।

"हसिमृग्रिणवाऽमिदमिलूपूधूर्विभ्यस्तन्" इत्युणादिसूत्रात्। अथ "अञ्जिघृसिभ्यः क्तः" इत्युणादौ अक्तं घृतं सितमित्यत्र विहितस्य क्तस्यापि संज्ञा स्यात्। न चेष्टापत्तिः। "निष्ठा च द्व्यजनात्" इत्युदात्तापत्तेः। निष्ठान्तं द्व्यच्कं संज्ञायामाद्युदात्तम् न चेदाकार आदिरिति तदर्थः। न चेष्टापत्तिः। घृतं मिमिक्षइत्यादावन्तोदात्तपाठविरोधात्। अत्राहुः—

उणादयः क्वचिद् व्युत्पत्तिकार्यं न लभन्ते।

"अतः कृकमि" इति सूत्रे कमेः स इति व्युत्पन्नस्य कंसशब्दस्य कमेः पृथगुपादानात्। यद्वा "घृतादीनां च" इत्यन्तोदात्तमिति॥

इति श्रीसिद्धान्तसुधानिधौ प्रथमाध्यायस्य
प्रथमे पादे पञ्चममाह्निकम्॥ ५॥



# सर्वादीनि सर्वनामानि२६ ।

सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः । प्रदेशाः " सर्वनाम्नः स्मै " इत्यादयः । ननु सर्वशब्दस्य संज्ञा न स्यात् । तदादौ सर्वशब्दपाठाभावात् । सत्यम् । सर्व आदौ येषां तानि सर्वादीनीति बहुव्रीहिः । सर्वश्चासावादिश्च सर्वादिरिति कर्मधारयः । अत्रादिशब्दस्य प्रयोजनाभावेऽपि सारूप्यसम्पादनमात्रार्थमुपादानम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्, कर्मधारये त्वन्तोदात्तत्वम् । "स्वरभिन्नानां यत्परं तच्छिष्यते " इति बहुव्रीहितत्पुरुषयोरेकशेषे तत्पुरुषलोपः ।

वस्तुतस्तु तद्गुणत्वाद् बहुव्रीहिः सिद्धम् । अत एव "जन्माद्यस्य यत " इति सूत्रे " जन्मनोऽपि ब्रह्मलक्षणत्वम् " इति भगवत्पादादयः । अधिकं बहुव्रीहिसंज्ञासूत्रे वक्ष्यामः ।

अत्र हि उद्भूतावयवभेदः समुदायः समासार्थः । तस्य च युगपत्प्रयोगाभावात्कार्यार्थत्वव्याप्यायाः संज्ञायास्तदवयवेषु निवेशादविशेषात्सर्वशब्देऽपि निवेशः । अत एव " सर्वादीनि " इति बहुत्वं सङ्गच्छते । समुदायस्य संज्ञित्वे एकवचनप्रसङ्गात् । महासंज्ञाकरणमन्वर्थत्वविज्ञानार्थम् । तेन संज्ञोपसर्जनानां व्यावृत्तिः । तेषां धर्मिविशेषमात्रबोधकत्वात् ।

ननु किमिदं सर्वनामत्वम् । न यावदर्थबोधकत्वम् । पूर्वादिपदानां घटाद्यवाचकत्वात् । न च पूर्वत्वादिरूपेण तद्बोधजनकत्वात्तदर्थकत्वम्, केनाचिद्रूपेण यावदर्थबोधजनकत्वस्य विवक्षितत्वादिति वाच्यम् । विशुद्रव्याणां गुणादीनां च पूर्व-

त्वादिरूपेणाप्यबोधनात् । आत्मपरेषु स्वयुष्मदस्मत्पदेष्वव्याप्तेश्च । अत एव कैयटेन "सर्वेषां नामानि" इति भाष्यव्याख्यायां "स्वविषयापेक्षया सर्वनामत्वम्, यथा जात्यादेः स्वविषयापेक्षया सर्वगतत्वम्" इत्युक्तम् । नाप्यनेकार्थबोधकत्वम् । सर्वपदस्यापि संज्ञाभूतस्य तथात्वात् । तद्वाच्यव्यक्तीनामवस्थाभेदेन भिन्नत्वात् । नापि विजातीयानेकबोधकत्वम् । स्वादिपदेष्वव्याप्तेः । आत्मत्वेन तेषां साजात्यात् । प्रियसर्वौ चैत्रमैत्रावित्युपसर्जनसर्वपदस्यापि तथात्वादतिव्याप्तेश्च । तस्मात्संज्ञोपसर्जनव्यावृत्तमवयवार्थतावच्छेदकं दुर्वचमिति चेत्, सत्यम् । अन्वर्थसंज्ञयैवोभयव्यावृत्तिरिति न भाष्याभिप्रायः, किन्तु तत्र तात्पर्यग्राहकत्वमात्रम्, व्यावृत्तिस्तु "संज्ञोपसर्जनप्रतिषेधः" इति वार्त्तिकवचनादेव । न च तत्राप्युक्तानुयोगः । आधुनिकसङ्केतः संज्ञा, वृत्तिप्रवेश उपसर्जनत्वमित्युभयसंमतत्वात् । अत एवाग्रे कैयटो वक्ष्यति—

उपसर्जनप्रतिषेधो वार्त्तिककारस्य, न सूत्रकारस्य । "न बहुव्रीहौ" इत्यस्यारम्भादिति ।

संज्ञायास्त्वन्वर्थत्वाश्रयणादपि व्यावृत्तिरिति तदभिप्रायः । ननु सर्वनामपदे "पूर्वपदात्संज्ञायाम्" इति णत्वं स्यात् । निपातनस्वीकारे सणत्वस्यासाधुत्वापत्तेः । न चोभयप्रामाण्यादुभयोः साधुत्वम् । निषेधस्थलेऽपि विकल्पापत्तेः । विशेषशास्त्रेण सामान्यशास्त्रसङ्कोचस्य तुल्यत्वात् । सत्यम् । सणत्वस्यासाधुत्वमेव । उक्तन्यायात् । न च "क्रियासातत्ये" इत्यनेन सन्ततशब्दबाधापत्तिः । एकदेशानुमतिद्वारा "लुम्पेदवश्यमः कृत्ये" इति पूर्वाचार्यश्लोकस्यैव ज्ञाप्यत्वात् । न च "पुराणप्रोक्तेषु" इति नुडागमाभावनिपातनात्पुरातनशब्दस्यासाधु-

स्वापत्तिः । इष्टत्वादिति केचित् ।

पृषोदरादिषु तस्य पाठ्यत्वादिति कैयटः ।

कौस्तुभकारास्तु पुराणेति निर्देशेन आगमशासनस्य अव्ययानां भमात्रे टिलोपः" इत्यस्य चानित्यत्वमात्रं ज्ञाप्यत इत्याहुः । तेन "पुरातनं त्वां पुरुषं पुराविदः" इत्यादि सिद्धम् ।

संज्ञोपसर्जनयोः संज्ञाप्रतिषेधप्रकारमाह वार्त्तिककारः ।

पाठात्पर्युदासः पठितानां संज्ञाकरणमिति ।

अयमर्थः—सञ्ज्ञोपसर्जनानां सर्वादिमध्ये पाठो नास्तीति वचनमारभ्यते । तेषां पाठबहिर्भावं कृत्वा पठितानां संज्ञा विधेयेति । यद्वा—नेदं संज्ञासूत्रम्, किन्तु गणशुद्धिमात्रफलकम् । यथा "तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः" इति सूत्रे यानि कुत्सनाभीक्ष्ण्यवृत्तीनि गोत्रादिशब्दस्वरूपाणि तान्येव गोत्रादिगणे पठ्यन्ते, न त्वन्यादृशानीति । तेन "चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः" "कुत्सने च सुप्यगोत्रादौ" इत्यत्र तादृशानामेव ग्रहणम्, न त्वर्थान्तरवृत्तीनाम् । एवमिहापि यानि सर्वादिवाचकानि तान्येव सर्वादिगणे पठितानि, न तु संज्ञोपसर्जनीभूतानि । तेषां विशेषवृत्तित्वात् । तथा च तेषां गणपाठाभावादेव न संज्ञाप्रसक्तिरित्यर्थः । न चैवं संज्ञाप्रयुक्तकार्यासिद्धिः । सर्वनाम्न इत्यादौ यौगिकार्थस्यैव ग्रहणात् ।

वस्तुत एवं सकलकृत्स्नादिशब्देष्वतिव्याप्तिः । तस्मात् "सर्वादीनि" इत्यत्रोभयत्राप्येकशेषः । यानि सर्वेषा नामानि तान्येव सर्वादीनीति गणशुद्ध्यर्थमेकवाक्यम् ।

वार्त्तिककृता वचनान्तरेण पूर्वं गणशुद्धिः कृता ।

भाष्यकृता त्वनेनैव प्रकारेणेति विशेषः । यानि सर्वादीनि तानि सर्वनामसंज्ञानीति संज्ञार्थं द्वितीयमिति न कोऽपि दोषः ।

न चैवं सहविवक्षाविरहादेकशेषानुपपत्तिः, अर्थद्वयस्योद्देश्याविधेयभाववैपरीत्येनान्वयादिति वाच्यम् । जातिपक्षे प्रत्याख्यातस्य सरूपसूत्रस्य प्रक्रियादशायां सहभावविवक्षाविरहेऽप्येकशेषविधायकत्वस्वीकारात् । येषां सर्वनामत्वं नेष्यते तेषां "न बहुव्रीहौ" इत्यत्र नेतियोगविभागेन संज्ञानिषेधो व्याख्येय इति चतुर्थे वक्ष्यमाणं भाष्यारूढं समाधानमप्यत्र संचारणीयम् ।

वार्त्तिकमते " एकद्रव्योपवेशिनी संज्ञा " इति संज्ञासंज्ञया सर्वनामसंज्ञा बाध्यते इति एकसंज्ञाधिकारे वक्ष्यमाणरीत्याऽपि संज्ञांशे समाधेयमिति दिक् ।

तेन तेषां संज्ञाकार्यमन्तर्गणकार्यं च न । संज्ञाकार्यं यथा-सर्वो नाम कश्चित् तस्मै सर्वाय । अतिक्रान्तः सर्वमतिसर्वः तस्मै अतिसर्वाय । अन्तर्गणकार्यं यथा-तद् नाम कश्चित् "त्यदादीनामः" इत्यत्वं न । तमतिक्रान्तोऽतितत् "अद्ड्डतरादिभ्यः" इत्यद्डादेशो न । न च संज्ञायां गौणमुख्यन्यायादेव वारणात्पर्युदासवैयर्थ्यम् । इष्टापत्तेरिति हरदत्तादयः ।

तस्य पदकार्यमात्रविषयकत्वादिति कैयटः ।

" युष्मदस्मद्भ्यां ङसोऽश् " इत्यादिकं त्वतियुष्मदित्यादौ भवत्येव । शब्दस्वरूपमात्राश्रयतया गणपाठानपेक्षत्वात् । न च " युष्मद्युपपदे " इत्यादावप्यापत्तिः । " अभिव्यक्तपदार्था ये " इति न्यायात्प्रसिद्धार्थपरतायामेव तत्प्रवृत्तेः । तत्र च शब्दपरत्वात् । अत्र भाष्यम्—

संज्ञाप्रतिषेधो व्यर्थः, पूर्वपरावरेत्यत्रासंज्ञायामिति योगं विभज्य तस्य पूर्वोत्तरशेषतया व्याख्यानात् ।

एवमुपसर्जनस्यापि "अनुपसर्जनात्" इति सूत्रस्य प्रत्याख्यानात्, तदधिकारे प्रयोजनाभावात् । तच्च तत्रैव वक्ष्यामः ।

किन्तु तदन्यथा व्याख्येयम् । "अनुपसर्जन" इति षष्ठ्यन्तम्, छान्दसत्वात्तल्लोपः । अश्व अच्च आत् उक्तादेशौ अनुपसर्जनस्य भवत इत्यर्थः । न चैवम् अतियुष्मदित्यस्यासिद्धिः । अकारान्तरं प्रश्लिष्य तेन पूर्वोक्तादेशयोर्विशेषणात् अकारात्परौ यौ अकारात्कारौ इति व्याख्यानात् त्यदाद्यत्वमड्डादेशश्चाकारात्परतो विधीयेते इति तत्र परिभाषोपस्थानम्, न त्वतियुष्मादित्यत्र "पञ्चम्या अत्" इत्यद्भावस्य । युष्मदस्मद्भ्यां परस्य ङस्यादेर्विधानात् । तयोश्चाकारान्तत्वाभावात् ।

नन्वेवं प्रियौ द्वावस्येति बहुव्रीहौ प्रियद्विरित्यत्र त्यदाद्यत्वं स्यात् । इकारस्थानिकस्याकारादेशस्य वकारात्परत्वादकारात्परतो विधानाभावादुक्तपरिभाषाया अप्रवृत्तेः । एवम् "तदोः सः सावनन्त्ययोः" इति सत्वमप्युपसर्जने स्यात् । उक्तपरिभाषायां सकारस्यानुपादानात् । मैवम् । "त्यदादीनामः" इत्यत्रोक्तपरिभाषयाऽनुपसर्जनग्रहणे सिद्धे साहचर्यात्तथाभूतस्यैव द्विशब्दस्योपादानात् । सत्वविधावप्यर्थाधिकारेण तथाविधानामेव त्यदादीनां ग्राह्यत्वात् ।

यद्वा—अङ्गाधिकारेष्वर्थद्वारकविशेषणमाश्रयणीयम् । तदुक्तम्—

अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद्भवनीति ।

गृह्यमाणानां त्यदादीनाम् उत्तरादीनां चार्थद्वारेण सम्बन्धिनी या विभक्तिस्तदर्थगतसंख्याकर्मत्वादिवाचिनी तस्या इत्यर्थः ।

गृह्यमाणाद्विहिता विभक्तिरित्यर्थे तु परमपञ्चेत्यादौ लुक् न स्यात् । तथा च सर्वनामार्थवृत्तिसंख्याकारकाभिधायिनो ङेः स्मै स्यादित्यादिरर्थः । प्रियविश्वायेत्यादौ त्वन्यपदार्थवृत्तय एव संख्यादयो विभक्त्योच्यन्ते, न तु सर्वशब्दार्थवृत्तय इत्यदोषः । परमसर्व इत्यादौ तु सर्वशब्दार्थवृत्तय एवेति नाव्याप्तिः ।

ननु "द्वन्द्वे च" इति ज्ञापकात्सर्वनामसंज्ञायां तदन्तविधिरस्ति । तथा च तदन्तस्यापि प्रियविश्वादेः सर्वनामत्वात्सर्वनामार्थवृत्तिसंख्याद्यभिधायित्वं विभक्तेरक्षतमिति चेत्, सत्यम् । सर्वादिगणपठितत्वे सति सर्वनामत्वस्यात्र निवेशात् । तदन्तस्य च सत्यामपि संज्ञायां तदभावात् । न चैवं विहितविशेषणेनैव तत्सिद्धिरिति वाच्यम् । उपायस्योपायान्तरानपवादकत्वात् ।

अन्ये त्वेतदपरितोषादेवान्वर्थसंज्ञाश्रयणमित्याहुः ।

वस्तुतस्तु अन्वर्थसंज्ञापक्षे उपसर्जनव्यावृत्तस्यावयवार्थस्य दुर्वचत्वात् तत्र भाष्यस्य न तात्पर्यम् । "द्वन्द्वे च" इत्यनेन ज्ञाप्यमानस्तदन्तविधिस्तु यत्र सर्वनाम्नः प्राधान्यं तत्रैव । लक्ष्यानुरोधात् । धर्मिग्राहकप्रमाणानुरोधाच्च । तेनातिसर्व इत्यादौ नातिव्याप्तिः । "न बहुव्रीहौ" इति सूत्रं तु अलौकिकवाक्ये संज्ञानिषेधार्थं प्रत्याख्येयं वेत्यन्यदेतत् ।

यस्त्वङ्गाधिकारलभ्यतदन्तविधिप्रयुक्तोऽतिप्रसङ्गः स तत्रैव विहितविशेषणेन परिहरिष्यते । अन्यथा तेनापि तत्परिहारानुपपत्तेः । तत्र विहितविशेषणेन तद्दोषपरिहारस्य च सर्वाभिमतत्वात् । अन्यथाऽवयवसंज्ञानिषेधार्थतयैव वचनोपपत्त्या तदन्तविधिज्ञापकत्वानुपपत्तेः । कैयटस्याप्ययमेवाभिप्रायः ।

अतिसर्वायेत्यादौ त्वविशेषकार्यमपरिहृतमेवेति दोषस्य "अनुपसर्जनाद्" इति पूर्वोक्तपक्षमेव प्रक्रम्य तेन लिखितत्वात् । अर्थद्वारकविभक्तिविशेषणपक्षे तद्दोषाभावस्य तदभिमतत्वात् । अविशेषकार्यं सर्वनामसंज्ञाप्रयुक्तमित्यर्थः । तस्मादर्थद्वारकविभक्तिविशेषणएव भाष्यस्य तात्पर्यम् ।

ननु पञ्चकाः शकुनय इत्यत्र प्रत्ययस्य स्वार्थिकत्वात् षडर्थप्राधान्यात् षड्भ्यो लुक् स्यादिति चेन्न । प्रत्ययविशिष्टस्य शब्दान्त-

रत्वान्नान्तत्वाभावाच्च षट्संज्ञाविरहात् । ननु "युष्मदस्मद्भ्यां ङसोऽश्" इत्यादिकमप्युपसर्जने न स्यात्, युष्मदाद्यर्थनिष्ठसंख्याद्यनभिधायकत्वात्तत्रत्यविभक्तेरिति चेन्न । तत्प्रकरणे अङ्गस्यार्थद्वारा युष्मदस्मद्भ्यां च परत्वमात्रेण विभक्तेर्विशेषणीयत्वात् । अङ्गनिष्ठसंख्याभिधायिन्या युष्मदस्मद्भ्यां परस्या ङसादिविभक्तेरशादयो भवन्तीत्यर्थः । "अद्ड् डतरादिभ्यः" इत्यत्र त्वङ्गाधिकाराभावाद् डतरादिभ्यो यो विहित इत्यर्थद्वारकं विधानमाश्रयणीयम् । तेन परमकतरदित्यादौ अतिकतरमित्यादौ च नाव्याप्त्यतिव्याप्ती । "अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" "त्यदादीनामः" इत्यादौ तु "अङ्गस्य" इति षष्ठ्या अपि सत्त्वादस्थ्यादिभिरङ्गेन वा विभक्तिर्विशेष्यत इत्युभयमम्भवात् अस्थीत्यादौ अङ्गस्य विभक्तावस्थ्यादीनामनङ् स्यादिति वाक्यार्थः । तेन प्रियसक्थ्नेत्यादौ नाव्याप्तिः । अत्र शकटावयववाची सक्थिशब्दः । अन्यथा "बहुव्रीहौ सक्थ्यक्ष्णोः" इति षच्प्रसङ्गात् । "त्यदादीनामः" इत्यादौ तु त्यदादिकं विभक्तेर्विशेषणम्, अङ्गस्येत्यकारस्य । त्यदाद्यर्थनिष्ठसंख्याद्याभिधायिन्यां विभक्तावङ्गस्याकारोऽन्तादेशः स्यादित्यर्थः । तेन अतिस अतितद् इत्यादौ नाव्याप्त्यतिव्याप्ती । लक्ष्यानुरोधेनैव व्याख्यानप्रवृत्तेरित्यास्तां विस्तरः ।

उभशब्दः पर्याप्त्या द्वित्वविशिष्टस्य वाचकः । अत एव नित्यं द्विवचनान्तः ।

नन्वेवं सर्वादिपाठोऽस्य व्यर्थः । एकबहुवचनयोरेव सर्वनामसंज्ञाप्रयुक्तकार्यविशेषदर्शनात् । उभाभ्यां हेतुभ्यामिति तृतीयायोश्च " निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम् " इति हेताविति सूत्रस्थसर्वनामसंज्ञानपेक्षवार्त्तिकादेव सिद्धेः । काकत्रोश्च

विशेषाभावादिति चेत्, सत्यम्। उभकावित्यकजर्थोऽत्र पाठः न ह्येतत्कप्रत्ययेनेष्टं सिद्ध्यति।

अयचा उभयकावित्यापत्तेः। द्विवचनातिरिक्तस्थले उभशब्दादयजुत्पत्तिनियमात्। तथा हि—"उभादुदात्तो नित्यम्" इत्यत्र उभादिति योगो विभज्यते। अवयववृत्तेः सङ्ख्यावाचिनः उभशब्दादवयविन्यर्थेऽयच्स्यात्। उभयो मणिः। श्यामलोहिताभ्यां भागाभ्यामारब्ध इत्यर्थः। ततो नित्यम्। उभशब्दान्नित्यमयच्स्यात्, अर्थविशेषानिर्देशात्स्वार्थे। उभौ पुत्रौ यस्यासावुभयपुत्रः।

न चैवं द्विदण्ड्यादिषूभाहस्तीत्यस्यानुपपत्तिः। तत्र पाक्षिकायजभावनिपातनेन तत्सिद्धेः। तदुक्तं वार्त्तिककृता—

अन्याभावो द्विवचनटाब्विषयत्वाद्, उभयोऽन्यत्रेति।

अन्यत्र द्विवचनपरत्वाभावे इत्यर्थः। तथा च कप्रत्ययेन व्यवधानाद्द्विवचनपरत्वाभावात् अयच् स्यात्। अकचि तु तस्य मध्यपातित्वादुभशब्दस्य द्विवचनपरत्वमस्त्येवेति न तत्प्रसङ्गः।

भाष्यकृतस्त्वाहुः—स्वार्थिकत्वादुभशब्दतुल्यार्थकत्वात्तद्रूपद्विवचनपरत्वमस्त्येवेति अवश्यं वक्तव्यम्। एवं च कप्रत्ययस्यापि द्वित्वार्थकप्रकृतिकस्य द्वित्वाभिधायकप्रत्ययत्वरूपद्विवचनत्वसद्भावात् तस्मिन्परे अयचो न प्रसङ्गः। पारिभाषिकद्विवचनमात्रस्योक्तवार्त्तिकेऽनुपादानात्। अत एव "णेरणौ" इत्यत्र कर्मशब्देन क्रियाग्रहणम्। अत उभयशब्दोऽत्र न पठनीय एवेति। एवं च "नित्यम्" इतियोगविभागस्य व्याख्याने वृत्तिमात्रे इत्यस्य प्रक्षेपो निर्मूल इति बोध्यम्।

यस्त्वेवम्—उभयत उभयत्रेत्यादावप्ययचोऽनुपपत्तिः। न च तत्र तसो विभक्त्यन्ताद्विधानाद्विभक्त्यर्थस्याप्यधिकस्याभिधा-

नात् द्वित्वमात्रवाचकत्वं नास्तीति वाच्यम् । कप्रत्ययस्याप्यज्ञाताद्यर्थबोधकत्वात् । पञ्चकं प्रातिपदिकार्थ इति पक्षेऽधिकवाचकत्वाच्च इति । तच्चिन्त्यम् । द्वित्वमात्रवाचकत्वं हि न द्विवचनत्वम् । कर्मत्वादेरपि ततो बोधात् ।

अथ द्वित्ववाचकतावच्छेदकरूपेण द्वित्वान्यावाचकत्वं द्वित्वमात्रवाचकत्वम् । तत्र तु द्वितीयात्वादिना कर्मत्वादिवाचकत्वम्, औत्वादिना तु द्वित्ववाचकत्वमिति चेत् कप्रत्ययस्यापि द्वित्वार्थकप्रकृतिकत्वेन द्वित्ववाचकत्वं तदर्थविहितत्वेनाज्ञाताद्यर्थवाचकत्वमिति साम्यात् ।

वस्तुतस्तु त्रतसोरव्ययत्वाद्वित्वाभिधानसामर्थ्यं नास्तीति कैयटोक्तेर्न तयोर्द्विवचनत्वम् । स्वार्थिकत्वेऽपि स्वस्वभावविरोधिनोऽर्थस्याभिधानानर्हत्वात् । तत्प्रकृत्यर्थबोधस्य स्वार्थिकताया मनुपयोगात्प्रमाणाभावात् । प्रकृतभाष्यस्य बाधकत्वाच्च ।

उभयशब्दस्तु व्याख्यातः । स चावयवद्वयारब्धेऽवयविनि वर्त्तते ।

तस्य मित्राण्यमित्रास्ते ये च ये चोभये नृपाः ।

मित्रत्वामित्रत्वरूपधर्मावच्छिन्ना इत्यर्थः । धर्मद्वयं च विशेष्यतावच्छेदकावच्छिन्नव्यक्तिभेदसामानाधिकरण्येन भासते, न तु परस्परसामानाधिकरण्येनेति विशेषः । "उभयमेव वदन्ति मनीषिणः" इत्यादौ तु इन्द्रदशरथरूपमवयवद्वयमादाय तदुभयसमुदाय उभयशब्देन विवक्षितः । यदा तु उभयो मणिरिति व्युत्पाद्य तादृशं मणिद्वयं सह विवक्ष्यते, तदा एकशेषेण द्विवचनं प्राप्तमनभिधानान्निवारणीयम् । "तद्धितश्चासर्वविभक्तिः" इति सूत्रे उभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तित्वमिति कैयटोक्तेः । तथा च तस्याव्ययत्ववार-

णाय परिगणनं कर्त्तव्यमिति तदर्थः।

हरदत्तस्तु पचतिकल्पमित्यादिवारकत्वेन परिगणनसामर्थ्यस्योपक्षीणत्वात् उभयशब्दाद्द्विवचनं भवत्येवेत्यूचे। ननु अयचस्तयप्प्रत्ययादेशत्वेन प्रथमचरमेत्यादिसूत्रेण जसि सर्वनामसंज्ञापत्तिरिति चेत्, मैवम्। व्यवस्थितविकल्पात् पूर्वविप्रतिषेधाद्वा तत्र नित्यैव संज्ञेति केचित्। विभक्तिनिरपेक्षत्वादन्तरङ्गया नित्यसंज्ञया विभक्तिसापेक्षत्वाद्बहिरङ्गा विभाषा बाध्यतइत्यन्ये।

भाष्यकृतस्त्वाहुः—अयच् स्वतन्त्र एव प्रत्ययः। तद्विधौ तयपोऽनुवृत्तौ मानाभावात्। न चैवमुभयीत्यत्र "टिड्ढाणञ्" इति सूत्रेण तयबन्तत्वप्रयुक्तो ङीब् न स्यादिति वाच्यम्। तत्रत्ये मात्रच्पदे मात्रशब्दमारभ्य अयचश्चकारपर्य्यन्तं प्रत्याहारग्रहणे तदन्तर्भावादयचोऽपि स्वातन्त्र्येण ङीप्सिद्धेः। एवं च तयग्रहणमपि तत्र न कर्त्तव्यम्। उक्तप्रत्याहारान्तर्भावादेव सिद्धेः।

यद्वा—द्वयसजिति प्रत्याहारस्तेन दघ्नञ्मात्रचोर्ग्रहणमपि न कार्यम्। "प्रमाणे मात्रज्द्वयसज्दघ्नचः" इति सूत्रपाठे तु मात्रजित्येव प्रत्याहारः। न चैवं कति स्त्रिय इत्यादौ ङीबापत्तिः, डतेरपि तदन्तःपातादिति वाच्यम्। "न षट्स्वस्रादिभ्यः" इति निषेधात्। "टिड्ढाणञ्" इत्यत्र अत इत्यनुवृत्तेश्च। न चैवमपि तैलमात्रेत्यादौ अतिप्रसङ्गः, प्रत्याहारपक्षे चकारस्य मात्रशब्दप्रत्यविशेषणत्वात् चकारान्तमात्रपदग्रहणे प्रमाणाभावेन "हुयामाश्रुवसिभसिभ्यस्त्रन्" इत्यस्य त्रन्प्रत्ययान्तमात्रपदस्यापि ग्रहापत्तेरिति वाच्यम्। सदृशस्यापि प्रत्याहारेऽनन्तर्भावात्। प्रमाणे वर्त्तमानाद्विहितस्य प्रमेयवृत्तेरेव मात्रशब्दस्य ग्रहणात्। प्रत्ययानुकरणतया मात्रशब्दस्य यथोक्तप्रातिपदिकपरत्वाभावात्।

इति उपाधिवादे नैयायिका इति चेत्,सत्यम्। पक्षमितरयतीति, कृदन्तमितरपदमिति तत्र प्राञ्चः।

पक्ष इतरो यस्मादिति बहुव्रीहौ न सर्वनामत्वमित्यन्ये। पक्षेतरपदं पक्षेतरत्वे पारिभाषिकम्। ततश्च आधुनिक्या इतर-संज्ञाया इवास्यापि न सर्वनामत्वमिति मिश्राः।

एतेन "वन्येतरा जानपदोपदाभिः" इत्यादि व्याख्यातम्।

त्व त्व इति द्वावप्यकारान्तौ अन्यपर्यायौ। "एतं त्वमन्ये ददृशयन्त्रमुत्सम्" इत्युदात्तस्य "उत त्वः पश्यन्" इत्यादिरनुदात्तस्येति केचित्।

प्रथमस्तकारान्तः। "तरीरुत त्वद्भवति सूत उत त्वद्" इति मन्त्रे त्वादिति सर्वनामसु पठितोऽनुदात्तोऽन्यपर्यायः" इति वेदभाष्योक्तेः। "त्वदधरमधुरमधूनि पिबन्तम्" इति जयदेवप्रयोगाच्च। त्वत्तोऽन्यस्या अधर इत्येव तदर्थात्। "पश्यति दिशि दिशि रहसि भवन्तम्" इति पूर्ववाक्यालोचनया तवाधरस्त्वदधर इतिविग्रहायोगादित्यन्ये।

एवमेषां प्रामाण्येऽपि "उतो त्वस्मै तन्वं विसस्रे" इत्यनुदात्तस्य स्मायादिदर्शनात्तस्य सर्वादित्वनिर्णयः।

उदात्ताकारान्तस्य तकारान्तस्य वाऽत्र पाठे तु सन्देहः। आद्यस्य स्मायादिकं उत्तरस्य त्वकजादिकं क्वचिच्छाखायां दृष्ट्वा तु निर्णयम्।

वस्तुतो भिन्नस्वरयोरप्यकारान्तयोरेकश्रुत्या तन्त्रेणैव पाठ-सम्भवादुभयपाठसामर्थ्येन प्रथमस्य तकारान्तत्वमेव युक्त-मिति केचित्।

नेम इत्यर्द्धार्थः। "प्रनेमस्मिन् ददृशे सोम" इति दर्शनात्। समसिमशब्दौ सर्वपर्यायौ। "मा नः समस्य दूढ्यः" "उरु-

ण्याणो अघायतः समस्माद् " इत्यादिदर्शनात् । " आद्रात्रीवासस्तनुते सिमस्मै" इति दर्शनाच्च । " त्वत्त्वसमसिमेत्यनुच्चानि " इति फिट्सूत्रादनुदात्तत्वे प्राप्ते "सिमस्याथर्वण उदात्तः" इति वचनादुदात्तत्वम् । आथर्वणपदस्योपलक्षणार्थतया व्याख्यातत्वात् । तुल्यपर्यायसमशब्दस्य तु नेयं संज्ञा । "यथासंख्यमनुदेशः समानाम्" इति ज्ञापकात् ।

पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः ।

पूर्वादयः पञ्च दिक्कालयोः तदवच्छिन्ने च । पूर्वस्यां दिशि पूर्वस्यां वाप्यां पूर्वस्मिन्काले पूर्वस्मिन्गुरावित्यादि । दक्षिणाधरशब्दौ दिशि तदवच्छिन्ने च । " दिशः सपत्नी भव दक्षिणस्याः" । न चार्थनियमे मानाभावः । व्यवस्थायामित्यस्यैव मानत्वात् । स्वाभिधेयापेक्षोऽवधिनियमो हि व्यवस्था । पूर्वादीनां चोक्तार्थस्य नियमेनावधिसाकाङ्क्षत्वात् । पूर्व इत्यादावुक्ते कस्मादित्याकाङ्क्षाया उत्पत्तेः । दक्षिणस्या इत्यत्रापि वस्तुतोऽवधिरस्त्येव, प्रसिद्धेस्तु तदप्रयोगः । न च संज्ञायामिति निषेधः । आधुनिकसङ्केत एव हि संज्ञा, न च दिक्षु साऽस्तीति पञ्चमे व्याख्यातारः । व्यवस्थायां किम् । दक्षिणाः गाथकाः । प्रवीणाः । अधरे ताम्बूलरागः । ओष्ठे । उत्तरे शक्तः । प्रतिवाक्ये इत्यादिरर्थः ।

अथ कथम् "तथा परेषां युधि च" इति कालिदासादेः इति चेत्, सत्यम् । व्यवस्थाविषयस्यैव परादिशब्दस्य लक्षणया वैर्यादौ प्रयोगः । न चैवमुपसर्जनता । स्वार्थविशिष्टार्थान्तरपरत्वस्यैवोपसर्जनत्वात् । अत्र च लक्षणया वैरित्वादिप्रकारकबोधेऽपि शक्यार्थस्य तत्रानन्वयात् । अत एव

पक्षेतरे इत्यत्रेतरपदस्य भावप्रधानत्वेऽपि सर्वनामकार्यापातात् "बहुव्रीहिं कृत्वैव भावप्राधान्यमाश्रयणीयम्" इति दीधितिव्याख्यातारः।

यत्तु तस्माद्वह्निमानित्यादौ ज्ञानलक्षणापक्षेऽपि सर्वनामकार्यमिति, तच्चिन्त्यम्। धूमादितिहेतुघटकधूमपदेषु लक्षणास्वीकारेऽपि तस्मादिति सर्वनाम्ना शक्त्यैव धूमज्ञानस्य बोधयितुं शक्यतया तत्र लक्षणायां मानाभावात्। "तत् त्वमसि" इत्यत्र तत्पदेन पूर्वोपक्रान्तस्यात्मन एव परामर्शात्तत्सदृशे लक्षणा नैयायिकैरुच्यत इत्यविरोधः।

यत्तु शत्रुत्वादिप्रकारकबोधो मानस एव, शाब्दस्तु देशान्तरनिष्ठत्वादिप्रकारक एवेति। तच्चिन्त्यम्। तदुत्तरं मानससामग्रीनियमाभावात्। असंज्ञायां किम्। उत्तराः कुरवः। सुमेरुमवधीकृत्योत्तरशब्दस्य कुरुषु वृत्तावपि संज्ञात्वान्न सर्वनामत्वम्। न च दिक्षु संज्ञा नास्ति कुरुष्वस्तीत्यत्र मानाभावः। अविच्छिन्नसम्प्रदायमूलकव्याख्यातृवचनस्यैव मानत्वात्।

स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने।

इत्यमरः। आत्मनीत्यस्य पुंल्लिङ्गशब्देनान्वयः। ज्ञातिधनयोः संज्ञानिषेधादात्मन्यात्मीये च वाच्ये सर्वनामत्वम्। आख्याग्रहणसामर्थ्यादात्मीयत्वेन ज्ञातिधनयोर्बोधतात्पर्ये सर्वनामत्वमेव। यथा स्वे पुत्राः। स्वे गावः। विशेष्यतासम्बन्धेन ज्ञातिधनयोः स्वपदजन्यबोधवत्त्वं यत्र तत्रैव तन्निषेधात्।

यत्तु "निराकृतः स्वस्यां सततमितरस्यां प्रणयवान्" इति कैश्चित्प्रयुक्तम्, तदपि तनावित्यादिस्त्रीलिङ्गविशेष्यपदाध्याहारेण आत्मीयार्थकतयैव कथञ्चिद्व्याख्येयम्।

केचित्तु "स्वमात्मात्मीययोः" इत्येव पठनीयम्। न च "स्वा-

मिन्नैश्वर्ये" इति सूत्रे ऐश्वर्य्यस्यापि तदर्थत्वात्तदसंग्रहापत्तिः । तस्य तन्मात्रविषयकत्वात्तदर्थे मत्वर्थीयमामिन्प्रत्ययं विना प्रयोगानर्हत्वादित्याहुः ।

अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये ।
छिद्रात्मीयबिनाबहिरवसरमध्येऽन्तरात्मनि च ॥

तस्यार्थद्वये संज्ञा । तत्र बहिरित्यनावृतो देश उच्यते । तेन सह योगो बाह्यस्य भवति । अन्तरे अन्तरा वा गृहाः । नगरबाह्याश्चण्डालादिगृहा इत्यर्थः । बहिःशब्दस्य तद्देशवृत्तिपरत्वे तु बहिर्वर्त्तिना सहाभ्यन्तरस्य योगात् नगराभ्यन्तरा गृहा इत्यर्थः । उभयस्याप्यत्र ग्रहणम् । उपसंव्यानशब्दोऽपि करणव्युत्पत्त्या उत्तरीयं कर्मव्युत्पत्त्या त्वन्तरीयमभिधत्ते ।

अपुरीति वक्तव्यम् । अन्तरायां पुरि । अत्र सर्वनामत्वाभावान्न तत्कार्यम् । लिङ्गविशिष्टपरिभाषया एकादेशस्य पूर्वान्तत्वेन ग्रहणाद्वाऽत्र प्रसक्तिः । न चैतद्वार्त्तिकं जसि विभाषाविधेरेव शेषः, तत्रैव पठितत्वादिति वाच्यम् । अदन्तत्वाभावादेव टाबन्ताज्जसः शीभावाप्रसङ्गात् । प्राकारादभ्यन्तरे बहिश्च देशभेदात् पुनः क्रियमाणत्वादुभयोपपत्तिः । उपसंव्यानग्रहणमनर्थकं बहिर्योगेण कृतत्वात् । उत्तरीयपरत्वे बहिर्योगशब्दस्याद्यमर्थम् । अन्तरीयपरत्वे तु द्वितीयमर्थमादाय सिद्धमित्यर्थः ।

न वा शाटकयुगाद्यर्थम् ।

समानप्रमाणे शाटकयुगे अपरिहिते किमुत्तरीयं किमन्तरीयमित्यनवबोधादपरिधानदशायां बहिर्योगेण अनिर्वाहादुपसंव्यानग्रहणमिति वार्तिकाभिप्रायः ।

भाष्यकारास्तु उपसंव्यानत्वमप्यपरिधानदशायां नास्ति,

बुद्ध्या व्यवस्थापनं तु बहिर्योगस्यापि तुल्यमित्युपसंख्यानग्रहणं व्यर्थमित्याहुः ।

केचित्तु शाटकानां त्रये शरीरे साक्षात्संयुक्तस्य स्वसंयुक्तसंयुक्तेन बाह्येन तृतीयेन सह योगो नास्ति । न च मध्यवर्त्तिनोऽपि तदपेक्षया बाह्यत्वात् तद्योगेनोपपत्तिः । यावान्समुदायो यत्र बुद्धिस्थः तदपेक्षया बाह्यत्वस्य ग्राह्यत्वात् । एवं बाह्यस्य शरीरसंयुक्तेनाभ्यन्तरेणापि योगो नास्ति । मध्यवर्त्तिन उक्तन्यायेनाभ्यन्तरत्वाभावात् । एवं चतुष्टयेऽपि योज्यम् । शाटकयुगाद्यर्थमिति आदिशब्दोपादानेन वार्त्तिकस्यैतादृशाभिप्रायलाभादित्याहुः ।

भाष्यस्य त्वयमाशयः—बहिर्योगेत्यस्य स्वरितत्वात् तेन च गौणार्थस्यापि ग्रहणात्परम्परासम्बन्धमादाय तत्रापि बाह्याभ्यन्तरयोगोपपत्तिरिति अन्तरशब्दस्यार्थद्वये सर्वनामत्वम् ।

त्यद् तद् एतौ पूर्वोक्तपरामर्शकौ । आद्यश्छान्दसः "एषस्य वाजि" इत्यादिप्रयोगाल्लोके चादर्शनादिति केचित् । "स्यश्छन्दसि" इति सूत्रे छन्दोग्रहणसामर्थ्याल्लोकेऽपीत्यन्ये ।

यत्पदम् उद्देश्यार्थकम् । एतादिदमौ प्रत्यक्षोपस्थिते । अदस् व्यवहिते ।

एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा ।
साधारणे समाने च संख्यायां च प्रयुज्यते ॥

"प्रजामेका रक्षत्यूर्जमेका" इत्यत्रान्यार्थः । "एकवीरः" इत्यादौ प्रधानार्थः। "एकेऽल्पप्राणाः" इत्यादौ प्रथमार्थः । "अत एकहल्मध्ये" इत्यादौ असहायरूपकेवलार्थः । "एतावेकधनौ द्वौ" इत्यादौ साधारणार्थः । "तेनैकादिक्" इत्यादौ समानार्थः । "एको द्वौ" इत्यादौ संख्यार्थ इति । "ष्णान्ता

षट्" इति सूत्रे संख्यायामसहायत्वे अन्यत्वे चेत्यर्थत्रयमस्य भाष्ये उक्तम् । "एके मुख्यान्यकेवलाः" इत्यमरे मुख्यत्वमप्युक्तम् । तदन्यत्र लक्षणया प्रयोगः । शक्तौ मानाभावात् । अत एवाद्वैतचन्द्रिकायाम् "एकमेवाद्वितीयं ब्रह्म" इत्यस्य व्याख्यायां समानाद्यर्थवाचकत्वं निरस्तम् । "तेनैकादिक्" इति सूत्रे एकजातीयत्वेन समाने गौणपदप्रयोगः । सुदाम्ना एकादिक् सौदामनी, सुदामाख्यपर्वतयुक्तादिक् । सदृशदिग्युक्तेति यावत् । चैत्रमैत्रावेकधनौ इत्यत्रापि यथेष्टविनियोगार्हत्वरूपसादृश्येन चैत्रो मैत्रीययथेष्टविनियोगार्हधने यथेष्टं विनियोक्तेति यावत् । इत्युक्तत्वात् ।

सम्बोधनविषयो युष्मदर्थः । उच्चारयित्रर्थस्तु अस्मच्छदः । अलिङ्गत्वन्तूभयत्र समानम् । उच्चारकत्वं च यत्र वाक्यमनन्यवक्तृतात्पर्यकम् तत्रैव । तेन "वाच्यस्त्वया मद्वचनात्स राजा" इत्यादौ मच्छब्देन कालिदासपरामर्शाभावेऽपि न क्षतिः । सीताभिप्रायेण तद्वाक्यसमुल्लेखात् । अत एव कुसुमाञ्जलौ—

स्यामभूवं भविष्यामीत्यादिसंख्या च वक्तृगा इत्याचार्यैः—

तदैक्षत बहु स्याम् इत्यादौ उत्तमपुरुषस्यास्मदर्थसामानाधिकरण्यानियमात्तदाक्षेपेऽहं बहु स्यामित्यनन्यतात्पर्यकास्मच्छब्दत्वेन हेतुना तस्य वक्तृपरत्वं साधयित्वा ईश्वरः साधितः । "गृभ्णामि ते सौभगत्वाय हस्तम्" इत्यादौ व्यभिचारवारणायानन्यतात्पर्यकत्वप्रवेश इति वर्द्धमानादौ स्पष्टम् ।

भवच्छब्दस्तु युष्मच्छब्दसमानार्थः । परन्तु लिङ्गयोगी । अत्रभवच्छब्दादौ सम्बोधनव्यभिचारी चेति विशेषः । "भातेर्डवतुः" इति व्युत्पादितः । नन्वस्य हलन्तत्वेन स्मायादीनामभावः, तृतीया तु "निमित्तकारण" इत्यादिनैव गतार्थेति चेत् । अत्राहुः—

फिञद्रिमयटः पूर्वनिपातः ठकूछसौ तथा आत्वशेषष्यञ्-विरहाः अकच्च भवतः फलम् ।

अत्राकजात्वैकशेषा भाष्ये कण्ठोक्ताः । अन्ये उपलक्षणतया संगृहीता इति । भवतोऽपत्यं भावतायनिः । त्यदादित्वेन वृद्धसंज्ञायाम् "उदीचां वृद्धाद्" इति फिञ् । भवन्तमञ्चतीति भवद्र्यङ् । "विष्वग्देवयोश्च टेरद्र्यञ्चताव-प्रत्यये" इति चकारेण सर्वनामग्रहणाट्टेरद्र्यादेशः । भवन्मय इत्यत्र "नित्यं वृद्धशरादिभ्यः" इति मयट् । भवन्मित्रः । "सर्वनामसंख्ययोः" इति पूर्वनिपातः । "भवतष्ठक्छसौ" इत्यत्र शतृप्रत्ययान्तभवच्छब्दनिवृत्त्यर्थं वृद्धाद् इत्यनुवर्त्तनात् । भवतोरिति पाठेनापि निर्वाहान्नेदं नियतमिति तु बोध्यम् । भवानिव दृश्यते भवादृक् । "आ सर्वनाम्नः" इत्यात्वम् । देवदत्तश्च भवांश्च भवन्तौ । "त्यदादीनि सर्वैः" इत्येकशेषः । भवतो भावो भवत्तेत्यत्र सर्वनामसंज्ञया गुणवचनसंज्ञाबाधात् "गुणवचनब्राह्मणादिभ्यः" इति ष्यञभावः । "गुणवचनसंज्ञा ऽसर्वनामसंज्ञा" इत्येकसंज्ञाधिकारे वार्त्तिककृता पठितत्वात् । भवकानित्यत्र "अव्ययसर्वनाम्नाम्" इत्यकच् । कप्रत्यये भवत्क इत्येव स्यात् । "सर्वनाम्नो वृत्तिमात्रे" इति भाष्यवचनात्पुंवद्भावोऽपि फलम् । "भवन्मयो ध्यायति नावनीपतिः" इति श्रीहर्षः ।

किंशब्दः प्रश्नाक्षेपयोः । प्रश्नो द्विविधः, जिज्ञासामूलको विप्रतिपत्तिमूलकश्च । आद्यो यथा—

किमेकं दैवतं लोके किं वाऽप्येकं परायणम् ।

इति । द्वितीयो यथा—ईश्वरसद्भावे किं प्रमाणमिति । अयमेव कथाप्रवृत्तिहेतुः । आद्यस्योपदेशमात्रेण जिज्ञासानिवृत्तौ

विश्रामात् । आक्षेपो यथा—"को नामायं सवितुरुदयः" इति । द्विदैवाक्षेपः । "खट्वा ऽऽक्षेपे" इत्यादौ दर्शनात् । खण्डने तु किं प्रमाणमित्युपन्यस्य किंशब्दोऽयमाक्षेपार्थो वा कुत्सितार्थो वा वितर्कार्थो वा प्रश्नार्थो वा स्यादिति विकल्पचतुष्टयमुक्तम् । अभावप्रतिपादनार्थत्वं दुष्टत्वप्रतिपादनार्थत्वं सन्देहार्थत्वं जिज्ञासाविषयत्वप्रतिपादनार्थत्वमिति च क्रमेण तद्व्याख्यातम् । ईश्वरसद्भावे प्रमाणं नास्तीत्याद्ये, कुत्सितं प्रमाणमिति द्वितीये, प्रमाणमन्यद्वेति तृतीये, प्रमाणं जिज्ञासाविषय इति चतुर्थे अर्थपर्यवसानं तत्फलितार्थमादायेति बोध्यम् । वृत् सर्वादिगणो वृत्तः, समाप्त इत्यर्थः । गणपाठे वृच्छब्दस्य समाप्तौ परिभाषितत्वात् ।

यत्तु "यदिन्द्राग्नी अवमस्यां पृथिव्यां, मध्यमस्यां, परमस्यामुतस्थ" इत्यादाववमादिपदानामपि सर्वनामकार्यं दृश्यते तच्छान्दसत्वादेवेति कैयटादयः । इतरेतरस्मात् अन्योऽन्येषामित्यादौ तु द्विःप्रयोगो द्विर्वचनमिति पक्षे तदन्तविधिना सिद्धम् । "द्वन्द्वे च" इति ज्ञापकेन सर्वनामसंज्ञायां तदन्तविधेरङ्गीकारात् । स्थानेद्विर्वचनपक्षे तु स्थानिवद्भावेन सर्वनामत्वम् । सन्नियोगशिष्टत्वेनान्तरङ्गमपि द्वित्वं बाधित्वा "अन्तरङ्गानपि" इति न्यायेन "समासवच्च बहुलम्" इति समासवत्त्वप्रयुक्तस्य लुकः पूर्वं प्रवृत्तेः । अन्यथा सुबन्तस्य द्वित्वे स्थानिनः सर्वनामत्वाभावेन तदादेशेऽपि तदनुपपत्तेः । न चैवं पदत्वाभावात्तदधिकारीयद्वित्वानुपपत्तिः । प्रत्ययलक्षणेन तथात्वात् । अङ्गाधिकारीयत्वाभावाद् "न लुमता" इति निषेधाप्रवृत्तेः । अन्योऽन्येषामित्यत्र तु समासवत्त्वाभावेऽपि पूर्वपदस्य "प्रथमैकवचनान्तत्वम् द्वितीयादयस्तु परपदस्य" इति वचनबलात्प्रकृति

प्रत्ययविभागसिद्धेः ।

अत्रेदमधिकमनुसंधेयम् । तदादिसर्वनाम्नां बुद्धिस्थत्वरूपेण शक्तिः । न चैवं बुद्धिस्थत्वप्रकारक एव बोधः स्यात्, न तु घटत्वप्रकारकः, शाब्दबोधस्य शक्यतावच्छेदकप्रकारकत्वनियमादिति वाच्यम् । अत्र तत्परित्यागात् । कल्पनायाः फलानुरोधित्वात् । अत एव सर्वनाम्नि न लक्षणेति प्रवादः । शक्त्यैव तत्प्रकारकबोधादिति प्राञ्चः ।

अन्ये तु घटत्वादयो धर्मा एव शक्यतावच्छेदकाः, नानार्थत्वस्येष्टत्वात् । न च लघुसमनियतगुरुधर्मप्रकारकशाब्दस्थले लक्षणापत्तावुक्तप्रवादविरोधः, कम्बुग्रीवादिमत्त्वस्य घटत्वाद्यपेक्षया गुरुत्वेन स्वशक्यतानवच्छेदकत्वात्, तत्र निष्प्रकारकव्यक्तिबोधोपगमे च पदान्निर्विकल्पकानङ्गीकारनियमविरोधादिति वाच्यम् । पदान्निर्विकल्पकस्वीकारपक्षएव तदवतारात् । तद्भङ्गेऽपि क्षतिविरहाच्चेत्याहुः ।

मिश्रास्तु हरिपदवन्नानार्थत्वे प्रमाणाभावाद् बुद्धिस्थत्वमुपलक्षणीभूय शक्यतावच्छेदकानामनुगमकम् । बुद्धिविषयतावच्छेदकावच्छिन्नमेषां शक्यमित्येव शक्तिग्रहात् । एवं च यद्धर्मे यदा यत्पुरुषीयबुद्धिविषयतावच्छेदकत्वं गृह्यते, तदा यथोक्तशक्तिग्रहजन्यसंस्कारस्य तद्धर्मांशउद्बोधात्तद्धर्मप्रकारकावेव पदार्थस्मृतिशाब्दबोधौ । एवं च घटत्वादिनिष्ठप्रकारतानां बुद्धिविषयत्वरूपप्रकारतावच्छेदकैक्यादनुगमः । विशिष्य घटत्वादीनां शक्यतावच्छेदकत्वे तु तन्निष्ठप्रकारतानामानन्त्येन गौरवं स्यात् । शक्यतावच्छेदकैक्यवत् शक्यतावच्छेदकतावच्छेदकस्यापि शक्त्यैक्यसम्पादकत्वादित्याहुः ।

अन्ये तु एवमपि कदाचिद् घटत्वप्रकारको बोधः कदाचिद्

घटत्वप्रकारक इत्येतदुपपत्त्यर्थं घटत्वप्रकारकबोधं प्रति बुद्धिस्थत्वावच्छिन्नघटत्वप्रकारकशक्तिज्ञानस्य हेतुता वाच्या । एवमन्यत्रापीत्युक्तहेतुताकोटौ बुद्धिस्थत्वावच्छिन्नत्वनिवेशे गौरवम् । तदपेक्षया नानार्थत्वमेव स्वीकृत्य बुद्धिस्थत्वस्य प्रयोगोपाधित्वकल्पनमेव युक्तमित्याहुः ।

नन्वेवमपि सर्वेषां सर्वनाम्नां पर्यायत्वं स्यादिति चेन्न । बुद्धिविशेषेण तदभावात् । सर्वपदस्य उद्देश्यतावच्छेदकत्वे सति यावतां प्रकाराणां बुद्धिविषयत्वम् तेषु शक्तिः । न चोद्देश्येत्यस्य वैयर्थ्यम् । विधेयानां तदर्थत्वाभावात् । न चैवमपि यत्पदपर्यायत्वापत्तिः । तत्र तत्पदघटितवाक्यसाकाङ्क्षाया अवान्तरवाक्योद्देश्यबुद्धेर्विवक्षितत्वात् । अत्र प्रकारस्यानेकत्वेन विशेषणाद्वा । य आकाशः स शब्दाश्रय इत्यादौ यत्पदजन्यबुद्धिप्रकारस्यानेकत्वव्यभिचारात् । एतेन तत्पदसाधारण्यमपि निरस्तम् । अत्र पदान्तरसमभिव्याहारस्यापि नापेक्षा । सर्वे ब्राह्मणा इत्यत्र ब्राह्मणत्वावच्छिन्नपरत्वस्य सर्वे इत्यादौ प्रमेयत्वावच्छिन्नपरत्वस्य च दर्शनात् ।

प्रश्नप्रत्येकबुद्धिविषयावच्छिन्ने किंपदस्य शक्तिः । नन्वज्ञाते इच्छानुदयात् ज्ञाते च जिज्ञासानुत्पत्तेः कथं प्रश्न इति चेन्न । "किमेकं दैवतं लोके" इत्यादौ प्रश्नजनकज्ञाने उत्तरवाक्यजन्यज्ञाने च विषयतावच्छेदकधर्म एक एव तथाऽप्येकदैवतत्वव्याप्यधर्मप्रकारकं ज्ञानं ममेच्छाविषय इति प्रश्नवाक्यार्थः । अत्र विष्णुत्वनिष्ठा प्रकारता एकदैवतत्वावच्छिन्ना, विष्णुर्दैवतमित्यत्र त्वनवच्छिन्ना । तथा च तद्धर्मांशे निरवच्छिन्नप्रकारताकज्ञानेच्छया प्रश्नवाक्यं तदंशे किञ्चिदवच्छिन्नप्रकारताकज्ञानजन्यमिति न दोषः । किमयं

स्थाणुः पुरुषो वेति संशयाभिलापे कोऽयमित्याक्षेपे च यद्यपि यथोक्तमव्याप्तम्, तथाऽपि तत्र शक्त्यन्तरं कल्प्यम्।

तत्पदघटितवाक्यसाकाङ्क्षावान्तरवाक्योद्देश्यबुद्धिविषयप्रकारावच्छिन्ने यत्पदस्य, यत्पदघटितवाक्यसाकाङ्क्षावान्तरवाक्योद्देश्यबुद्धिविषये तत्पदस्य शक्तिः । न च यो गतः स आगत इत्यादावव्याप्तिः । तच्छब्दसमानार्थकपदस्य विवक्षितत्वात् ।

अयं तु विशेषः । प्रक्रान्तप्रसिद्धानुभूतार्थकस्तच्छब्दो न यच्छब्दसाकाङ्क्षः । क्रमेण यथा—

कातर्यं केवला नीतिः शौर्य्यं श्वापदचेष्टितम् ।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ॥

अत्रातिथिसंज्ञो राजा प्रक्रान्तः ।

द्वयं गतं संप्रति शोचनीयतां
समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतः
त्वमस्य लोकस्य च नेत्रकौमुदी ॥

अत्र चन्द्रकला प्रसिद्धा ।

उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं तरले क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा
धूमाकुलेन दहनेन न वीक्षिताऽसि ॥

सागरिकानेत्रे वत्सराजेन पूर्वमनुभूते ।

इति काव्यप्रकाशे । किं च उत्तरवाक्यान्तर्गतो यच्छब्दो नियमेन पूर्ववाक्ये तच्छब्दोपादानं नापेक्षते ।

उदयति स्म तदद्भुतमालिभिर्धरणिभृद्भुवि तत्र विमृश्य यद्।

इत्यादौ तत्सत्त्वेऽपि—

साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताऽधिके ।

इत्यादौ तदभावात् । अत्र केचिदुक्तस्थलेऽपि तच्छब्दाक्षेप इत्याहुः ।

अन्ये तु अत्र पृथगेव शक्तिः । अवान्तरवाक्योद्देश्यविषये तत्पदमित्येव मिश्रैरुक्तम् । " साधु चन्द्रमसि " इत्यादौ यत्पदेनोद्देश्यबोधे तदुत्तरमेव प्रथमपादजन्यबोधान्महावाक्यार्थबोधः। तत्पदाक्षेपेण पुनः प्रथमपादजन्यबोधकल्पने गौरवात् । एवम्—

उत्पत्तिरिन्दोरपि निष्फलैव दृष्टा विनिद्रा नलिनी न येन ।

इत्यादावपि तत्पदाध्याहारे इन्दुत्वविशिष्टोपस्थितौ पौनरुक्त्यापत्तेः । न च विनिद्रनलिनीदर्शनाभावविशिष्टत्वेन तत्पदाद् बोधः । यत्पदार्थस्यैव दर्शनविशेषणत्वात् । यन्मीलितमित्यत्र यत्पदेनापि मीलितस्यैवोक्तेः । सम्भेदे चान्यतरवैयर्थ्याभावात् । न च यत्पदवैयर्थ्यम् । " यच्छब्दयोगः प्राथम्यम् " इति रीत्योद्देश्यत्वलाभार्थत्वादित्याहुः ।

समीपवर्त्तिनि प्रत्यक्षविषयतावच्छेदकावच्छिन्ने इदमेतत्पदयोः शक्तिः। अत एव "प्रत्यञ्जलि वाक्यावृत्तिः। उपादास्यमानपयस इदमा निर्देशानुपपत्तेः " इति वर्द्धमानोपाध्यायः ।

तादृशप्रत्यक्षयोग्यधर्मावच्छिन्ने शक्तिः । उपादास्यमानाञ्जलीनामप्येतदिति निर्देश इति निबन्धकारोक्तेरेकमेव वाक्यमित्यन्ये ।

मानसप्रत्यक्षविषयेऽपीदानीं घट इत्यादौ काले इदम्पदप्रयोगादुपादास्यमानपयस इदमा निर्देशः सम्भवत्येव । परं तु तदातनत्यागेन तत्र स्वत्वध्वंसो न भवति । उपादानपूर्वकाले तत्र स्वत्वानुत्पत्त्याऽनुत्पन्नस्य ध्वंसायोगात् इत्यपरे ।

व्यवहितवर्त्तिनि प्रत्यक्षविषयतावच्छेदकावच्छिन्ने अदस्-

पदस्य शक्तिः। व्यवधानं तु देशकालाभ्याम्। इदमादिना यो बोध्यते ततो विप्रकृष्टे तत्प्रयोगात्। प्राथमिकप्रत्यक्षविषये अयमिति प्रयोगात्। द्वितीयप्रत्यक्षविषयेऽसाविति प्रयोगाच्च। उभयत्र यथायोगं प्राथमिकत्वं द्वितीयत्वं च प्रत्यक्षे विशेषणमिति केचित्।

यद्धर्मावच्छिन्ने सम्बोध्यत्वबुद्धिः तद्धर्मावच्छिन्ने युष्मत्पदस्य यद्धर्मावच्छिन्ने यद्वाक्योच्चारयितृत्वबुद्धिः तद्धर्मावच्छिन्ने अस्मत्पदस्य शक्तिः। अभिमुखीकरणानुकूलज्ञानविशेषविषयत्वं सम्बोध्यत्वम्। तत्तत्पदोत्तरत्वेन तत्तत्पदानुसन्धानमुच्चारणम्। तदनुकूलव्यापारवत्त्वमुच्चारयितृत्वम्। मौनिसाधारण्यात्। उच्चारणं च अनन्यतात्पर्यकत्वगर्भमिति प्रागेवोक्तम्।

अथैवं काव्यादावचेतने त्वत्पदप्रयोगो न स्यात्। एवं वयं गच्छाम इत्यादावपीति चेत्, सत्यम्। उच्चारयितृत्वविषयकं यदुच्चारयितृतात्पर्यं तद्विषयतावच्छेदकधर्मवत्त्वस्य विवक्षितत्वात्। उच्चारयितृत्वारोपस्य तत्रापि सम्भवात्।

अन्ये तु सम्बोध्यतावच्छेदकावच्छिन्ने उच्चारयितृतावच्छेदकावच्छिन्ने च युष्मदस्मदोः शक्तिः। तदवच्छेदकत्वं च चैत्रादिशरीरावच्छिन्नात्मत्वम्। असम्बोध्यादेस्तद्भ्रमाच्छाब्दबोधस्तु शक्तिभ्रमेण समर्थनीयः। अत एव तस्याप्रामाण्यम्।

कस्त्वमभोः कथयामि दैवहतकं मां विद्धि शाखोटकम्।

इत्यादौ भ्रमासम्भवे लक्षणा, मुख्यार्थान्वयानुपपत्तेः। "सर्वोऽप्यहं गुणीति वेत्ति" इत्यादावपि तथा। सम्बोध्यत्वोच्चारयितृत्वप्रतिपत्तेर्यथायोगं प्रयोजनत्वात्। वयं गच्छाम इत्यादौ महार्णवोक्तो विरूपैकशेष इत्याहुः।

ननु चैत्रत्वादिना बोधे "अनयोरात्ममात्रशक्तत्वम्"

इतिग्रन्थविरोधः । "तत् त्वमसि" "अहमात्मा गुडाकेश" इति श्रुतिस्मृत्योरात्मन्येव प्रयोगाच्च । चैत्रत्वादेः शरीरवृत्तिजातित्वात् । जातस्य नाम कर्म करोतीति शरीरस्यैव नामकरणविधानात् । चैत्रः पण्डित इत्यादेश्च भाक्तत्वात् । अत एव मृतस्यापि चैत्रादिपदेन निर्देशः । गोत्रान्वयार्थमुक्तप्रकारस्यावश्यकत्वात् । सत्यम् । शरीरघटितपरम्परासम्बन्धेन चैत्रत्वादेरात्मवृत्तित्वोपपत्तेरिति दिक् । सर्वादिगणव्याख्यानं सम्पूर्णम् ।

# विभाषा दिक्समासे बहुव्रीहौ २७ ।

अत्र सर्वनामसंज्ञा वा स्यात् । उत्तरस्याः पूर्वस्याश्च दिशोऽन्तरालम् उत्तरपूर्वा । "दिङ्नामान्यन्तराले" इति बहुव्रीहिः । तस्यै उत्तरपूर्वस्यै उत्तरपूर्वायै । प्रतिपदोक्तदिक्समासग्रहणान्नेह । या पूर्वा सोत्तरा यस्योन्मुग्धस्य स उत्तरपूर्वः । तस्मै उत्तरपूर्वाय देहि ।

यत्तु योत्तरा सा पूर्वा यस्येत्येव विग्रहो युक्तोऽन्यथा पूर्वनिपातवैपरीत्यापत्तिरिति । तन्न । वस्तुतो या पूर्वा सा यस्योत्तरत्वप्रकारकज्ञानविषय इत्यत्र उत्तरेत्यस्यैव विशेषणत्वात् । उत्तरविशेष्यकपूर्वत्वप्रकारकभ्रमाविवक्षायां तु पूर्वोत्तरेत्यस्यापि इष्टत्वात् । एवं च बहुव्रीहाविति न कार्यम् । दक्षिणोत्तरपूर्वाणामिति द्वन्द्वस्य प्रतिपदोक्तपरिभाषयैव वारितत्वात् ।

ननूत्तरसूत्रे बहुव्रीहिरेव यो बहुव्रीहिस्तत्रैव निषेधो यथा स्यान्न त्वतिदिष्टबहुव्रीहावित्येतदर्थं तत् । अन्यथा एकैकस्मै देहीत्यादौ "एकं बहुव्रीहिवत्" "आबाधे च" इति द्विर्वचने-

ऽपि निषेधप्रसङ्गात् । नैवम् । समासपदानुवृत्त्यैव समास एव यो बहुव्रीहिरित्यर्थलाभात् ।

# न बहुव्रीहौ २८।

बहुव्रीहिसंज्ञाप्रवृत्तिविषयीभूते पदे सर्वादेरुक्तसंज्ञा न स्यात् । न च तस्य बहुव्रीहिपदार्थत्वाभावः । तादर्थ्यात्तच्छब्दोपपत्तेः । न चैवं लौकिकविग्रहेऽपि निषेधापत्तिः । तस्य बहुव्रीह्यर्थप्रदर्शनपरत्वेऽपि तादर्थ्याभावात् । एकार्थीभावे वृत्तिरेव, व्यपेक्षायां तु वाक्यमेवेति सिद्धान्तात् । अलौकिकवाक्य एव समासप्रवृत्तिस्वीकारात् । तथा च कैयटेनोक्तम्—

अप्रयोगसमवायि यत्प्रक्रियावाक्यं तत्रायं प्रतिषेधो न लौकिकवाक्ये प्रयोगार्हे तस्य पृथगेव प्रयोगादिति ।

नन्वेवम् अलौकिकविग्रहेऽपि प्रतिषेधवैयर्थ्यम् । उपसर्जनत्वादेव प्राप्त्यभावात् । न च तस्यान्वयबोधाजनकत्वात्तदर्थकस्य कथमुपसर्जनत्वमिति वाच्यम् । समासे उपसर्जनत्वदर्शनेन तत्रापि तदनुमानात् । अन्यथा सामर्थ्यस्याभावात्तत्र समासप्रवृत्त्यनुपपत्तेरिति वक्ष्यमाणत्वात् । न च सामर्थ्यमेव तत्रानुमीयते "अनेकमन्यपदार्थे" इत्यादिशास्त्रीयानुवादसामर्थ्यात्, न तूपसर्जनत्वमपि, तस्य समासप्रवृत्त्यनुपयोगितयाऽर्थापत्त्याविषयत्वादिति वाच्यम् । एकार्थीभावातिरिक्तस्य सामर्थ्यस्य दुर्वचत्वात् । तदाक्षेपादेवोपसर्जनत्वस्याप्याक्षेपसिद्धेः । समासोत्तरं सामर्थ्यस्वीकारे प्रयोजनाभावात् । सत्यम् । समासान्यथाऽनुपपत्त्याऽलौकिकवाक्येऽपि समुदायएव सामर्थ्यमनुमीयते न तु पदेषु प्रत्येकप्रयोज-

ऽकल्पकयोः । अन्यतरस्याप्यनवतारात् । तथा चावयव-मात्रस्यानुपसर्जनत्वात्संज्ञाप्रसक्तौ प्रतिषेधोपपत्तेः ।

मुख्यएव बहुव्रीहावयं निषेध इति पक्षोऽपि भाष्ये प्रथममुपन्यस्तः । त्वकं पिता यस्य त्वत्कपितृकः । अहकं पिता यस्य मत्कपितृकः । अत्र सर्वनामसंज्ञायाम् "अव्ययसर्वनाम्नामकच् प्राक् टेः" इत्यकच् स्यात् । तस्य कप्रत्ययापवादत्वात् । एवं द्वकौ पुत्रौ यस्य स द्विकपुत्र इत्यप्युदाहार्यम् । व्यञ्जनान्तेषु काकचोर्विशेष इति भाष्ये अकारान्तभिन्नत्वस्योपलक्षितत्वादिति कैयटः । तथा च त्वकत्पितृको मकत्पितृको द्वकिपुत्र इत्यादिकं प्रसज्येतेति प्रतिषेधोऽयमारभ्यते ।

नन्वेवमपि अकच्प्रसङ्गः । संज्ञानिमित्तकत्वेन तस्यान्तरङ्गत्वात् । पदान्तरसंनिधाने वर्त्तिपदार्थविशेषणान्यपदार्थविवक्षायां प्रवर्त्तमानस्य बहुव्रीहेर्बहिरङ्गत्वात् । तथा च समासात्प्रागेव प्रवृत्तस्याकचः समासानन्तरप्रवृत्तिकेनोक्तनिषेधेन बाधितुमशक्यत्वात् । न च यथा "प्रत्ययोत्तरपदयोश्च" इति लिङ्गाद् बहिरङ्गोऽपि समासाश्रयो लुक् अन्तरङ्गानामपि बाधकः, एवमुक्तनिषेधसामर्थ्यात्समासोऽप्यकचं बाधित्वा प्रवर्त्ततइति वाच्यम् । प्रियविश्वायेत्येतदर्थमप्येतदुपपत्तेः । "वा प्रियस्य" इति प्रियस्य पूर्वनिपातः । एवं द्व्यन्याय त्र्यन्याय । "सर्वनामसंख्ययोः सन्निपाते परत्वात्संख्यायाः पूर्वनिपातः" इति वक्ष्यमाणत्वात् । अत्र हि कार्यकालपक्षे सर्वनामसंज्ञायाः स्मायाद्यादेशविधिभिरेकवाक्यत्वात् विश्वशब्दस्य सर्वनामसंज्ञामुपजीव्य तदन्तविधिना प्रियविश्वशब्दस्य संज्ञा स्यात्, सा मा भूदिति विश्वशब्दस्यैव संज्ञा निषिध्यते । अत्र बहुव्रीहिसंज्ञोत्तरकालं प्रसक्तसंज्ञानिषेधेनोक्तवचनस्य चरितार्थत्वात् उक्तार्थज्ञापनानुपपत्तेः ।

मैवम् । उपसर्जनप्रतिषेधेनाप्येतावन्मात्रसिद्धेः यथोक्तज्ञापनस्य सुस्थत्वात् । इममेव पक्षमाश्रित्य प्राञ्चो व्याचख्युः—

बहुव्रीहौ सर्वादेः सर्वनामता न स्यात् । प्रियसर्वाय । सूत्रकारमते बहुव्रीहौ न सर्वनामता, भाष्यकारमते गौणत्वमात्रे । त्वत्कपितृको मत्कपितृक इत्यत्र समासावयवयोर्युष्मदस्मदोः सर्वनामत्वादनङ्कार्यत्वेनाकच् स्यात् स मा भूत् कप्रत्यय एव स्यादित्येतदर्थमिदं सूत्रमिति न्यासकृन्मतमिति । अवयवस्य संज्ञानिषेधोऽत्र विवक्षितः । तेन किं समुदायस्यायं निषेध इति विकल्पकोटिर्निरस्ता । सर्वादेः सर्वनामता न स्यादिति ग्रन्थं प्रकृत्य तत्तच्छङ्काऽनवतारात्।

नन्ववयवस्यापि कथं संज्ञाप्रसक्तिः, उपसर्जनानां पाठात्पर्युदासस्य वार्त्तिककृतोक्तत्वात् । सत्यम् । सूत्रकारेण तदनङ्गीकारात् । तदाह—सूत्रकारमतइति । अत्र चैतत्सूत्रारम्भस्यैव ज्ञापकत्वात् । जहत्स्वार्थवृत्तिपक्षेऽपि स्वार्थवाचकत्वस्य संज्ञोपयोगिनो वृत्तावपि सत्त्वात् । एतेन त्वत्कपितृक इत्यस्य व्याख्यायाम् "समासान्तःपातिनोर्युष्मदस्मदोः सर्वार्थवाकचकत्वेन" इति प्रसादग्रन्थः, "समुदायो हि विशेषे वर्त्तते, पूर्वपदं तु सर्वार्थताया अनपेतमेव" इति न्यासग्रन्थश्च व्याख्यातः । एतेन "अन्वर्थसंज्ञाबलादेव सूत्राक्षरैरेवोपसर्जनपर्युदासलाभ" इत्यपि निरस्तम् । "ननु चात्रान्वर्थसंज्ञाकरणादेव संज्ञानिरासे कृतेऽकच् न भविष्यति, विशेषविषयत्वाद्" इत्याशङ्क्य नैतदस्ति समुदायो हीत्यादिग्रन्थावतारात् । उक्तरीत्या तु नावयवव्यावृत्तिरिति तदभिप्रायात् । तथा हि—किमिदं विशेषविषयत्वम् । न तावच्छक्यतावच्छेदकयावद्धर्मप्रकारकबोधानुपधायकत्वम्, त्वकं पिता यस्येत्यादावपि तथात्वात् ।

युगपत्तावत्प्रकारकबोधाभावात् । बुद्धिविषयतावच्छेदकीभूत-किञ्चिद्धर्मप्रकारकबोधस्याप्युभयत्रैव जायमानत्वात् । अत एव शक्यतावच्छेदकयत्किञ्चिद्धर्मावच्छिन्नयावद्व्यक्तिबोधाजनकत्वमप्यनाशङ्क्यम् । सर्वे घटा आनीता इत्यादावभावात् । सर्वत्वमाधिकारिकमिति न्यायात् । नापि विशेषधर्मावच्छिन्नशक्यताकत्वम् । सर्वनाम्नां सर्वेषामेव तथात्वात् । नाप्यन्यधर्मानवच्छिन्नशक्यताकत्वे सति तत् । अवयवसाधारण्यात् । नापि संज्ञोपसर्जनोभयभिन्नत्वम् । पारिभाषिकत्वापत्त्याऽन्वर्थसंज्ञालभ्यत्वानिर्वाहात् ।

नन्वेकार्थीभावरूपायां वृत्तौ अवान्तरपदविभागानभ्युपगमात्कथमेवमिति चेत्, मैवम् । प्रक्रियादशायामेव व्युत्पत्तिकार्याणां प्रवृत्तिस्वीकारात् परिनिष्ठितपदे तदप्रवृत्तेः । अन्यथा परिनिष्ठितत्वव्याघातात् । "तद्धि अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकधर्मानाक्रान्तत्वम् । निहते तिङन्तादावव्याप्तिवारणाय अप्रवृत्तेति । वैकल्पिकेडागमोद्देश्यतावच्छेदकाक्रान्ते सेद्धेत्यादावव्याप्तिवारणाय नित्येति" इति स्वयमेव निरूपितत्वात् । अत एव "द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्" इति वार्तिकं सङ्गच्छते । अन्यथा अवान्तरतत्पुरुषस्य महाविभाषया वैकल्पिकत्वापत्तेः । तदंशे वार्त्तिकं न्यायसिद्धार्थानुवादमात्रमिति तु तत्रैव निराकरिष्यामः ।

"एतेन जहत्स्वार्थायां वृत्तौ समासावयवयोरर्थ एव नास्ति । अजहत्स्वार्थायामपि स्वार्थविशिष्टार्थान्तरवृत्तित्वेनोपसर्जनत्वं स्पष्टमेव" इति निरस्तम् । प्रक्रियोपयोगिनोऽर्थस्य जहत्स्वार्थायामपि सत्त्वात् । कृत्तद्धितेत्यादौ तथैव भाष्यादिभिः सिद्धान्तितत्वात् । अन्यथा "द्वन्द्वे च" इत्यस्यानु-

पपत्तेः। वृत्त्यन्तर्गतस्यानर्थकत्वादेव सर्वनामत्वाभावे तदन्तविधिना समासे तत्प्रसङ्गस्य दुर्घटत्वात्। तस्याप्यलौकिकविग्रहपरताया दुर्वचत्वात्। समुदायस्यायं प्रतिषेध इति सिद्धान्तात्। कथं वा परमसर्व इत्यादौ सर्वनामत्वम्। द्वन्द्वकर्मधारययोरवयवस्याप्यर्थवत्त्वम्, न तु बहुव्रीह्यादाविति वैषम्ये बीजाभावात्। वृत्तेरुभयत्र साधारण्यात्। पूर्वोत्तरपदत्वभेदस्य त्वकिञ्चित्करतायाः स्वयमेवोक्तत्वात्। एवं "त्यदादिप्रधानोऽयं समासः" इति भाष्यमप्यवधेयम्। "उपसर्जनप्रतिषेधेनाप्येतत् सिद्धम्" इति प्रतिभाष्यस्याप्ययमेवाभिप्रायः। अन्यथाऽनर्थकत्वादेव नात्र संज्ञाया अकच्प्रसक्तिरित्येव ब्रूयात्। अपिशब्दस्य त्वयमर्थः—प्रियविश्वायेत्यत्रैतत्प्रतिषेधस्य चरितार्थत्वात्त्वत्कपितृक इत्यादौ कथमकचो निवृत्तिः। समासात्प्रागेवान्तरङ्गत्वात्तदापत्तेः उक्तत्वात्।

यदि तु प्रतिषेधसामर्थ्यात्पूर्वमप्यकचो न प्रवृत्तिरित्यस्य रक्षार्थं प्रियविश्वायेत्यत्र उपसर्जनप्रतिषेध आश्रीयते, तदा त्वत्कपितृक इत्यत्राकजपि तेनैव न भविष्यतीत्युक्तनिषेधवैयर्थ्यम्। अलौकिकवाक्यएव अकचो निषेधार्थमारम्भ इति स्वीकारे तु द्वितीयपक्षएव पर्यवसानम्।

अजहत्स्वार्थायामपीत्यादावपि प्रष्टव्यम्—किं स्वार्थस्यान्यविशेषणतापन्नत्वादुपसर्जनत्वमिति विवक्षितम्, उत स्वस्यार्थान्तरे लाक्षणिकत्वादिति। नाद्यः। सर्वस्मै इत्यादावपि तदापत्तेः। विभक्त्यर्थविशेषणतापन्नत्वात्। नान्त्यः। न हि लाक्षणिकत्वमुपसर्जनत्वमिति स्वपरग्रन्थविरोधात्। बहुव्रीहौ पूर्वपदस्यैवान्यपदार्थे लक्षणेति पक्षे प्रकृतोपयोगस्याप्यभावाच्च।

प्रकृतमनुसरामः। ननूपसर्जनपर्युदासानभ्युपगमेऽतिस-

र्वायेत्यादावतिप्रसङ्ग इत्यत आह—भाष्यकारेति । वृत्तिप्रवेशसाम्येऽपि यत्र सर्वनामार्थस्य विशेषणत्वं न तत्र संज्ञा, यत्र तु विशेष्यत्वं तत्रास्त्येव । यथा परमसर्वे इत्यादाविति भावः । ततश्च त्वत्कपितृक इत्युदाहरणानुपपत्त्याऽलौकिकविग्रहे प्रतिषेधपरमेतत्सूत्रमिति भाष्याभिप्राय इति प्राचामाशयः ।

न्यासकारस्त्वाह—प्रियविश्वायेति नोदाहरणम् । समुदायस्यासर्वनामत्वात् । संज्ञायां ज्ञापकलभ्यस्य तदन्तविधेश्च सर्वनामार्थप्राधान्यविषयकत्वात् । तदवयवानां च विश्वादीनां सर्वनामकार्यप्रसक्त्यभावात् । स्मैप्रभृतीनामङ्गाधिकारीयत्वात् । न च "अङ्गाधिकारे तस्य च तदुत्तरपदस्य च" इति सिद्धान्तात्सर्वनामान्तादङ्गात्परत्वमाश्रित्य तदापत्तिः । विहितविशेषणाश्रयणात् । सर्वनाम्नोऽङ्गाद्विहितस्य ङेप्रभृतेरित्यर्थात् । "द्वन्द्वे च" इत्यत्र दक्षिणोत्तरपूर्वाणामिति भाष्यप्रयोगस्य तत्र प्रमाणत्वात् । एकवाक्यस्यैकरूपेणैव सर्वत्र प्रवृत्तेः । न च सर्वनामान्तादङ्गाद्विहितस्येत्यर्थप्रसङ्गादतिप्रसङ्गतादवस्थ्यम् । विहितविशेषणवैयर्थ्यापत्तेः । अङ्गात्सर्वनाम्न इत्येव सर्वनाम्नो विशेष्यत्वस्वीकारात् । तेन च तदन्तविधेरप्रवृत्तेः । अत एवोक्तं प्रकाशकारैः—

अवयवमात्रस्य सत्यपि सर्वनामत्वे दोषाभावादिति ।

एवं च "न बहुव्रीहौ" इति निषेधस्य प्रियविश्वायेत्यत्रानपेक्षितत्वात्तत्सामर्थ्यादन्तरङ्गोऽप्यकच् समासात्पूर्वं न प्रवर्त्तते इति त्वत्कपितृक इत्याद्युदाहणं सुस्थमेव । तात्सिद्धं कृते बहुव्रीहाववयवसंज्ञानिषेधार्थमेवैतत्सूत्रमिति । तदेतदुपन्यस्यति, त्वत्कपितृक इत्यादिना । तथा च सूत्रकारमतइत्यनेनोपसर्जनप्रतिषेधानङ्गीकारादेतत्सूत्रारम्भ इत्युक्तम् । वार्त्तिकमते तूपसर्जनप्रातिषेधादेव

सिद्धमित्यर्थः । विषयजिज्ञासायां तु भाष्यमतेऽलौकिकविग्रहेऽयं निषेधः ।

न्यासकृन्मते तु बहुव्रीहाववयवानामिति विवेक उक्तः । न चास्य भाष्येऽपि प्रथमं लिखितत्वात्कथं न्यासकारीयत्वेनोपन्यास इति वाच्यम् । आद्ये उपसर्जनप्रतिषेधेन प्रियविश्वायेत्यादीनामन्यथासिद्धिरुक्ता । द्वितीये तु संज्ञामभ्युपगम्य प्रकारान्तरेणेति विशेषात् ।

एवं सूत्रे व्याख्याते प्रत्याख्यानाभिप्रायेणाह भाष्यकारः । गोनर्दीयस्त्वाह—

अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयौ ।

त्वकत्पितृको मकत्पितृक इत्येव भवितव्यमिति । स्वरः "स्वाङ्गशिटामदन्ताम्" इत्याद्युदात्तत्वम् । यथोत्तरं मुनीनां प्रामाण्याद्भाष्यानुसारादेव साधुत्वव्यवस्था ।

# तृतीयासमासे २९ ।

सर्वनामसंज्ञा न स्यात् । मासपूर्वाय देहि । पुनः समासग्रहणं वाक्यभेदेन समासार्थकवाक्येऽपि निषेधलाभार्थम् । मासेन पूर्वाय । न च त्वयका कृतम् त्वकत्कृतमित्यादावप्यापत्तिः । प्रतिपदोक्तस्य "पूर्वसदृश" इतिसमासस्यैवोपादानात् ।

यद्वा असमासे इत्यन्यो योगः । पर्युदासेन समाससदृशस्य लौकिकवाक्यस्य ग्रहणम् । न च पूर्वसूत्रवदस्याप्यलौकिकवाक्यपरत्वमेवास्त्विवति वाच्यम् । अदन्तेषु काकचोरविशेषात् । तकारान्तानां च प्रातिपदोक्ततृतीयासमासाभावाद्वैयर्थ्यप्रसङ्गात् ।

# द्वन्द्वे च ३० ।

सर्वनामसंज्ञा न स्यात् । पूर्वापराधराणाम् । समुदायस्यायं निषेधो न त्ववयवानाम् । न च समुदाये संज्ञाप्रसक्त्यभावः । उक्तनिषेधेनैव तदनुमानात् । प्रयोजनं सर्वनामाव्ययसंज्ञायामिति वार्त्तिकाच्च ।

नन्वयमवयवस्यैव संज्ञानिषेधः कुतो न स्यादिति चेद्, मैवम् । फलाभावात् । त्यदादिभ्यः पूर्वेषामकारान्तत्वेन काकचोर्विशेषाभावात् । त्यदादीनां चैकशेषविधानेन द्वन्द्वस्यैवाप्रसिद्धेः । द्वन्द्वापवाद एकशेष इति वक्ष्यमाणत्वात् । दक्षिणोत्तरपूर्वाणामित्यत्र पुंवद्भावस्य चेष्टत्वात् । "सर्वनाम्नो वृत्तिमात्रे" इत्यत्र यस्य कुत्रचित्सर्वनामसंज्ञा तस्योपादानात्संज्ञानिषेधेनापि तस्य दुर्वारत्वाच्च । न च त्वच्छब्दस्तान्त इति पक्षे तत्राकचो निवृत्त्यर्थ एव निषेधोऽस्त्विति वाच्यम् । शास्त्रस्याल्पविषयकत्वापत्तेः । नन्वेवमपि अवयवस्य संज्ञानिषेधानङ्गीकारे उक्तस्थलेऽङ्गाधिकरीयतदन्तविधिना सुट् स्यात् । न च निषेधवैयर्थ्यम् । अङ्गाधिकारबहिर्भूतस्य त्रतासिलादेर्व्यावृत्त्या सार्थक्यात् । अत्राहुः—

अङ्गकार्येषु विहितविशेषणान्न दोष इति ।

# विभाषा जसि ३२।

जसादेशे शीभावे कार्ये द्वन्द्वे उक्ता संज्ञा वा स्यात् । वर्णाश्रमेतरे । वर्णाश्रमेतराः । जसीति कार्यापेक्षयाऽऽधारत्वम् । यद्यप्यादेशेन जसोऽपहाराद्भिन्नकालीनयोर्नाधाराधेयभावः । तथाऽपि आदेशप्रवृत्तिप्रयोजकप्रसङ्गप्रतियोगित्वरूपं गौणं तद्बोध्यम् ।

केचित्तु जस इरिति षष्ठीसमासः । जसीति सौत्रः सप्तमीलोपः । ग्रहणकशास्त्रेण च दीर्घ ईकारो लभ्यत इत्याहुः ।

अन्ये तु कार्यकालपक्षे "जसः शी" इत्यत्रैव एतत्संज्ञोपस्थानमित्याहुः इति सर्वं कैयटे स्पष्टम् । सर्वथाऽपि शीभावं प्रत्येव विकल्पः । अन्यत्र पूर्वेण निषेध एव । तेन वर्णाश्रमेतरका इत्यादावकच् न, किं तु कप्रत्यय एव। अकाचि तु तन्मध्यपतितन्यायेन पक्षे जसः शी स्यात् । तथा च भाष्यम्—

जसः कार्यं प्रति विभाषा, अकज् हि न भवतीति ।

## प्रथमचरमतयाल्पार्द्धकतिपयनेमाश्च ३२।

शीभावे कार्ये वा सर्वनामसंज्ञा । नेमस्य प्राप्तेऽन्येषां त्वप्राप्ते विभाषेयम् ।

"ये भूताः प्रथमे पुराणचरितास्तेषामयं धूर्वहः" इति भवभूतिः।
"बभूवुर्न प्राञ्चस्त्वमिव भवितारो न चरमे"
"पश्यामः श्रवसी कृते च शृणुमस्तद्वक्तुमल्पे वयम्"
"वैदेहीकुचपत्रभाङ्गिरचनावैदग्ध्यमर्द्धे कराः"
"संवर्तव्रतवृत्तयः कतिपये पीयूषभानोः कराः"
इति च मुरारिः । सुगममन्यत् ।

## पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ३३।

## स्वमज्ञातिधनाख्यायाम् ३४।

# अन्तरं बहिर्योगोपसंव्याननयोः ३५।

इयन्त्रिसूत्री गणव्याख्यायामेव व्याख्याता। समानाकारत्वात्। यादृशेऽर्थे तत्र नित्या संज्ञा विहिता तस्मिन्नेव जसि विभाषाविधानार्थमारम्भः। पूर्वे पूर्वाः इत्यादि। अत्र वार्तिकम्—

अवरादीनां च पुनः सूत्रपाठे ग्रहणानर्थक्यं गणे पठितत्वात्।

अस्यार्थः—अवरादीनामित्यादिशब्दस्य प्रकारार्थत्वात्पूर्वपरयोरपि लाभः। तथा च पूर्वादीनां यथोक्तार्थविशेषपुरस्कारेणैव नित्यसंज्ञाऽर्थं गणे पठितत्वात् "पूर्वादीनि नव" इत्येव सूत्रणीयम्। तेषामेवात्र प्रत्यभिज्ञानात्। तत्रैवार्थनिर्देशः पाठविशेषणं, यथा—"तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः" इत्यत्र कुत्सनाभीक्ष्ण्यग्रहणं गोत्रादिपाठस्य। एतेनार्थविशेषनिर्देशार्थमिह प्रत्येकं पाठ इत्यपि निरस्तम्।

"पूर्वादीनि नव"इति अत्रत्यसूत्रं च प्राप्तविभाषा भविष्यतीति। ननु नियतसंनिवेशव्यवस्थितगणपाठोत्तरं सूत्रपाठ इत्यत्र प्रमाणाभावः। सर्वादीनीत्यादिशब्दस्य प्रकारार्थत्वमपि सम्भवति। तत्प्रदर्शनायाभियुक्तैर्गणाः पठ्यन्ते। श्रेण्यादयः पठ्यन्ते। कृतादिराकृतिगणः इति दर्शनात्। कृतादीनां च वृत्तिकारैर्निदर्शनार्थं पठितत्वात्। "मध्यमस्याम् अवमस्याम्" इत्यादिप्रयोगाणामपि वेदे दर्शनाच्च। मैवम्। "पूर्वादिभ्यो नवभ्यो वा"इति नवग्रहणेन गणपाठस्य पूर्वत्वज्ञापनात्। अन्यथा त्यदादिव्यवच्छेदार्थस्य नवग्रहणस्यानुपयोगात्। तेन सर्वादीनीत्यादिश-

ब्दो व्यवस्थाऽर्थः। अन्यथा सकलादिपदेष्वतिव्याप्तेः। मध्य-मस्यामित्यादेश्च छान्दसत्वात्।

अथ त्यदादिपाठानन्तरं कैश्चित् पूर्वादीनि पठ्यन्ते। तत्र पूर्वादिभ्यस्त्रतसिलादीनां प्रतिषेधः प्राप्नोति। "किंसर्वनामबहुभ्यः" इत्यधिकारेऽद्व्यादिभ्य इति पर्युदासात् द्व्यादिभिन्नेभ्य एव सर्वनामभ्यस्तद्विधानात्। अतः पुनः सर्वनामसंज्ञाविधानार्थमयं प्रतिपदपाठः। तेन सामर्थ्यात्पर्युदासो बाध्यते। यथा—"अनुर्लक्षणे" इति पुनर्विधानेन हेतुतृतीया। न चैवं जसि विभाषा न लभ्येतेति वाच्यम्। वाक्यभेदेन तस्या अपि विधानात्। यथा—"अमि पूर्वः" "संप्रसारणाच्च" इत्यत्र "वा छन्दसि" इति वाक्यभेदेन सम्बन्धाच्छन्दसि पूर्वरूपविकल्प इति चेत्। मैवम्। "पूर्वत्रासिद्धं जश्भावादिति चेदुत्तरत्राभावादपवादप्रसङ्गः" इतिसूत्रवार्तिकप्रयोगादेव पूर्वादिष्वद्व्यादिभ्य इति पर्युदासो न प्रवर्ततइति ज्ञापयितुं शक्यत्वात्। तस्मादर्थविशेषविशिष्टानां पूर्वादीनां प्रतिपदपाठवैयर्थ्यमिति प्राप्ते सिद्धान्तमाह भाष्यकारः—

जसि विभाषां वक्ष्यामीति।

अस्यार्थः—यद्यत्र "पूर्वादीनि नव" इत्येव सूत्र्येत तदा गणपाठेऽर्थनिर्देशस्य नित्यसंज्ञाविधानएवोपयोगात्पाठविशेषणे प्रमाणाभावादर्थान्तरे पूर्वादीनामप्राप्तविभाषेयं स्यात्। न च तथाऽपि प्राप्तविभाषैवेयमास्त्विति वाच्यम्। उक्तानुवाददोषादप्राप्तविभाषायामपूर्वविधानात्। तथा हि—अर्थनिर्देशस्य पाठविशेषणत्वाभावे अर्थविशेषानवच्छिन्नानामेव पूर्वादीनां सर्वादौ पाठः। अर्थनिर्देशस्तु नित्यविभाषायामेवोपयुक्तः। तथा च व्यवस्थादौ नित्या संज्ञा। जसि विभाषा तु व्यवस्थादिवृत्तीनां

पूर्वादीनाम् उत अर्थान्तरवृत्तीनामिति वीक्षायां आद्येऽनुवाददोषः, प्राप्तत्वाज्जस्यपि संज्ञायाः । द्वितीये त्वप्राप्तैव संज्ञा विधीयतइति नानुवादः । न चात्राप्यभावकोटावनुवादः भावकोटौ विधिः, प्राप्तविभाषायां तु भावकोटावनुवादो निषेधकोटौ विधिरिति वाच्यम् । भावपरत्वानुपपत्तावेवानायत्या विधेर्निषेधे तात्पर्यकल्पनात् । अर्थान्तरवृत्तीनाम् अप्राप्तसंज्ञाविधानसम्भवे तदनौचित्यात् । अतो विभाषायामप्यर्थविशेषपुरस्कारेण पूर्वादीनां प्रतिपदपाठः । तद्बलाच्च प्राप्तविभाषात्वमर्थविशेषपुरस्कारेण विहितत्वादर्थान्तरे विकल्पप्रवृत्तेरनुपपत्तेः ।

अत्र वदन्ति–गणे एवोक्तात्रिमूत्र्यनन्तरं "विभाषा जासि" इति पठनीयम् । अर्थविशिष्टानां पूर्वादीनामनुवृत्त्या विकल्पलाभात् । न च सर्वादीनामप्यनुवृत्त्यापत्तिः । नेमस्य जासि विभाषारम्भात् । न च नेमपर्यन्तानामननुवृत्तेस्तेन ज्ञापितत्वेऽपि समासिमयोरनुवृत्तिर्दुर्वारेति वाच्यम् । समसिमनेमेति पाठेनापि निर्वाहात् ।

यद्वा–" जसुङसिङीनां शीस्मात्स्मिनः " " पूर्वादिभ्यो नवभ्यो वा " " औङ आपः शी " " नपुंसकाच्च" इति सप्तमे न्यासः कर्त्तव्यः । संज्ञाविकल्पविधानापेक्षया शीशब्दस्य द्विरूपादानेऽपि यथान्यासापेक्षया लाघवस्य भूयस्त्वात् ।

यद्वा–यथान्यासएव " पूर्वादिभ्यो नवभ्यो वा " इत्येतद् " जसः शी " इत्यत्रानुवर्त्य वाक्यभेदेन व्याख्येयम् । एभ्यः परस्य जसो वा शीभावः स्यादिति । तस्मादुक्तात्रिसूत्री अष्टाध्याय्यां न पाठ्येति ।

अत्रेदं चिन्त्यम् । जासि संज्ञाविकल्पानारम्भे पूर्वा इत्यादौ शीभावाभावपक्षेऽपि सर्वनामसंज्ञासद्भावादाद्युदात्तत्वप्रसङ्गः ।

यथान्यासे तु तत्रान्तोदात्तत्वमिति फलवैषम्यमिति ।

* विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानम् ।

*द्वितीयस्मै द्वितीयायेत्यादि। एवं च "विभाषा द्वितीयातृतीयाभ्याम्" इति सूत्रं नारभ्यम्। लिङ्गविशिष्टपरिभाषया एकादेशस्य पूर्वान्तत्वेन ग्रहणाद्वा स्त्रीलिङ्गेऽपि सिद्धेः । न च विनिगमकाभावः । स्त्रीलिङ्गोपादानेन पुंनपुंसकयोः कार्यासिद्धेः । जात्यन्तात् छ बन्धुनि । ब्राह्मणजातीयाय। प्रकारवचने जातीयर्। पटुजातीयाय। तसन्ताभ्यां मुखपार्श्वशब्दाभ्यां गहादित्वाच्छः। मुखतीयाय। पार्श्वतीयाय। अत्र न सर्वनामत्वम्। लाक्षणिकत्वात् । अनर्थकत्वाच्च। " पूरणाद्भागे तीयादन् " इति अन्प्रत्यये "यस्येति च " इत्यकारलोपे च कृते तृतीयाय भागायेत्यत्रापि न भवति । लाक्षणिकत्वात्। न चैकदेशविकृतन्यायः। अन्नन्तस्यान्यत्वात् । अनो विकारत्वाभावात्।

इति सर्वनामसंज्ञाप्रकरणम् ।

# स्वरादिनिपातमव्ययम् ३६ ।

स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः। समाहारे द्वन्द्वः । निपाताश्च " प्राग्रीश्वराद् " इत्याधिकृत्य " अधिरीश्वरे " इत्येतत्पर्यन्तं वक्ष्यन्ते । ननु स्वरादीनपि चादिष्वेव पठित्वा अव्ययप्रदेशेषु च निपातशब्दमेवोपादाय अव्ययसंज्ञा नारभ्येति चेन्न। चादीनां हि असत्त्ववाचिनामेव निपातसंज्ञा। "लोधं नयन्ति पशु मन्यमानाः"इत्यत्र सम्यगर्थपशुशब्दस्यैव स्यात्, न तु "पशूंस्तांश्चक्रे" इत्यादौ सत्त्ववाचिनोऽपि, स्वरादीनां तु सत्त्ववाचिनामप्यव्ययसंज्ञा, स्वः पश्येत्यादिदर्शनात् इति वैषम्यात्।

अथैवमपि " प्राग्रीश्वरान्निपाताः " " स्वरादीनि " चादयोऽसत्त्वे " इति न्यासः क्रियतामिति चेन्न । "निपात एकाजनाङ्" इति प्रगृह्यसंज्ञायाः स्वरादीनामप्येकाचां प्रसङ्गात् । " किमोऽत् " इत्यत्प्रत्ययस्य " दक्षिणादाच् " इत्याच्प्रत्ययस्य च ताद्धितस्य केन्प्रभृतीनाञ्च कृतामेकाचां स्वरादिषु सत्त्वात् । न च " चादिरेकाजनाङ् " इत्येव पठनीयमिति वाच्यम् । चादीनामसत्त्ववाचित्वविशेषणाभावे कामवाचकस्य इशब्दस्य सम्बुद्धौ एऽवेत्यत्रापि प्रगृह्यत्वापत्तेः । निपात इत्युक्ते तु असत्त्ववाचिनामेव चादीनां तत्संज्ञत्वमिति अतिप्रसङ्गाभावात् । अव्ययेत्यन्वर्थसंज्ञाविज्ञानादुपसर्जनानां संज्ञा न । विविधं विकारं न गच्छति, सत्त्वधर्मान् लिङ्गसंख्याकारकादीन् न गृह्णातीति यावत् । तेन अत्युच्चैसौ अत्युच्चैस इत्यत्र अव्ययसंज्ञाविरहान्न सुपो लुक् । अतिक्रान्तप्राधान्येन सत्त्वधर्मग्राहित्वात् । न चात्र संज्ञायाः प्रसक्तिरेव नास्तीति वाच्यम् । तदन्तविधेरप्यन्वर्थसंज्ञयैव ज्ञापनात् । अन्यथोपसर्जने प्रसक्त्यभावे तद्व्यावृत्त्यर्थायास्तस्या अनुपपत्तेः । परमस्वरित्यादौ उत्तरपदार्थप्राधान्ये तु भवत्येव । आथर्वणे प्रणवविद्यायां भाष्योदाहृता श्रुतिरप्यत्र मानम् ।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

सादृश्यं च लिङ्गविशेषप्रतिपादने सामर्थ्याभावात् ।

केचित्तु लिङ्गविशेषानन्वयेऽपि लिङ्गसामान्ययोगोऽव्ययानामस्त्येवेत्याहुः । तन्न । लिङ्गसामान्ये प्रमाणाभावादिति कैयटः । विभक्तिषु कारकेषु । साधनप्रधानानामव्ययानां शक्त्यन्तरानावेशात्, क्रियाप्रधानानां च शक्तिसम्बन्धाभावात् ।

वचनेष्वेकबहुत्वादिषु । अव्ययीभावस्य तु लिङ्गसंख्यायोगेऽपि वचनादव्ययत्वम्, सुप्रभृतीनां कर्मप्रवचनीयसंज्ञावत् ।

अथ स्वरादयः। स्वरिति स्वर्गपरलोकयोः। स्वर्गे–"स्वारसातलभवाहवशङ्की"। परलोके–"समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः"। अन्तरिति मध्ये । "अन्तःपांसुलहेमकेतकदलाद्रोणीदुरापाश्रियः" । प्रातरिति प्रभाते । "प्रातः पश्य सखे दरिद्रवदभून्निर्मुद्रमम्भोरुहम्" । स्वःशब्द स्वरितः । "न्यङ्स्वरौ स्वरितौ" इति फिट्सूत्रात् । अन्तरिक्षमथो स्वरिति प्रयोगाच्च । द्वावन्तोदात्तौ । "प्रातरग्निं प्रातरिन्द्र हवामहे" इत्यादौ तथादर्शनात् । पुनरित्यप्रथमे विशेषे च । अप्रथमे- "अनुभवपुनरुक्तां मुञ्च नस्तोत्रचर्याम्" । विशेषे–"किं पुनर्नवमीयुक्ता"। आद्युदात्तोऽयम्। सनुतरित्यन्तर्द्धाने। "सनुतश्चोरो गच्छति"। उच्चैरिति महति। "उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथाऽयं तथा"। नीचैरित्यल्पे। "नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति"। शनैरिति क्रियामान्द्ये । "शनैश्चिद्यन्तो अद्रिवः" । ऋधगिति सत्ये । वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये । ऋधगित्थासमर्त्यः। ह्यस् इति अव्यवहितपूर्वेऽह्नि । श्वस् इत्यव्यवहितोत्तरेऽह्नि । "श्वस्तस्याः प्रियमाप्तुमुद्धुरधियो धाराः सृजन्त्या रयात्" दिवेति दिवसे । "न शोभनं यद्दिवा स्वपिषि" । रात्राविति निशि । "रात्रौ वारिभरालसाम्बुदरवोद्विग्नेन जाताश्रुणा" । सायमिति निशामुखे। "सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितम्" । चिरमिति बहुकाले। "चिरं स्वेच्छस्पर्शैरमृतशिशिरैर्यः परिचितः"। मनागिति ईषदर्थे। "गन्धेन स्फुरता मनागपहृतो भक्तस्य सर्पिष्मतः" । ईषादित्यल्पे । "तदीषद्विस्तारि स्तनयुगलमासीन्मृग-

द्दशः" । जोषमिति सुखे मौने च । सुखे-" जोषमास्ते जितेन्द्रियः " । मौने-" जोषं जोषं जोषमेवावतस्थे " । तूष्णीमिति मौने । "बभूव तूष्णीमहितापकारकः " । बहिस् अवस् इति बाह्ये । "बहिः पुरोऽभूत्पुरुहूतपौरुष." । समयेति समीपे मध्ये च । निकषेत्यन्तिके । "विलङ्घ्य लङ्कां निकषा हनिष्यति" । स्वयमित्यात्मनेत्यर्थे । " स्वयं त्यक्तास्त्वेते शमसुखमनन्तं विदधति " । वृथेति व्यर्थे । "वृथा परीहास इति प्रगल्भता" । नक्तमिति रात्रौ ।

नक्तं रत्नमयूखपाटवमिलत्काकोलकोलाहलः ।
त्रस्यत्कौशिकभुक्तकन्दरतया सोऽयं गिरिः स्मर्यते ॥

नञ् इति निषेधे । "तथाऽऽद्रियन्ते न बुधाः सुधामपि" । हेताविति निमित्तार्थे । इद्धेति प्राकाश्ये । अद्धेति स्फुटावधारणयोः । तत्त्वातिशययोरित्येके । "तत्त्वे त्वद्धाऽञ्जसा द्वयोः" इत्यमरः । "अद्धा श्रद्धाकरमिह करच्छेदमप्यस्य पश्य " । सामीत्यर्द्धजुगुप्सितयोः । "पूर्वं गाधिसुतेन सामिघटिता मुक्ताऽनुमन्दाकिनी" । ह्वस्प्रभृतयः साम्यन्ता द्वाविंशतिरन्तोदात्ताः इति काशिका । "वृथा सृजत्पार्थिभिः" "नक्तं ददृश्रे कुहाचिद्दिवेयुः" इत्यादयस्त्वाद्युदात्ताः प्रयुज्यन्ते " इति कौस्तुभे ।

वत् । वत्प्रत्ययान्तमव्ययसंज्ञम् । तुल्यार्थे इवार्थे च विहितस्य वतेरुपादानमविशेषात् । न तु "उपसर्गाच्छन्दसि धात्वर्थे" इति विहितस्य । सत्त्वार्थकत्वात् । यदुद्वतो निवतः । उद्गतान् निगतानित्यर्थः । सना सनत् सनात् एते नित्ये । सनातनः । सनत्कुमारः । अत एव सनत्सुजातपदव्याख्यायां श्रीनारायणसर्वज्ञाः-"सनत्पदं नित्यार्थम्, सनत् वाजसनमिति छन्दसि तथा दर्शनात्।सुष्ठु जातः स्वधर्माविर्भूतदेहत्वादिति""अधीहि भगव इत्युपससार सनत्कुमा-

रं नारदः"इति छान्दोग्योपनिषत्। "इमा गिर आदित्येभ्यो घृ-तस्नूः सनाद्राजभ्यो जुह्वा जुहोमि"इति मन्त्रे "चिरञ्जुह्वा जुहोमि चिरं राजभ्य इति चेति निरुक्तिकृता चिरार्थोऽप्युक्तः। तिरसिति अन्तर्द्धौ तिर्यगर्थे च। अन्तर्द्धौ—"लावण्यप्रसरतिरस्कृताङ्गलेखा-म्"। "तिरस्कृतस्तस्य जनाभिभाविना" इत्यादौ परिभूते तूप-चारात्। एते आद्युदात्ता इति काशिका। अन्तोदात्तौ स-नातिरःशब्दौ वेदे दृश्येते इति कौस्तुभे। अन्तराऽन्तरेणेति मध्ये विनार्थे च। अऽन्तोदात्तः। मध्ये—"द्यामन्तरा वसुमतीमपि गाधिजन्मा"। "मृणालसूत्रामलमन्तरेण स्थितश्चलच्चामरयोर्द्वयं सः"। विनाऽर्थे—"त्वामन्तरा तामरसायताक्षि" "कर्णारुन्तु-दमन्तरेण रणितं गाहस्व काक स्वयम्।

ज्योगिति कालभूयस्त्वे प्रथमे शीघ्रार्थे संप्रत्यर्थे च। "सर्व-मायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या" इति छान्दोग्योपनिषत्। कमिति वारिमूर्द्धनिन्दासुखेषु। क्रमेण यथा—कञ्जं पद्मम्। कञाः कचाः। कन्दर्प्पः। कंयुः। "कंशंभ्यां युः" इति मत्वर्थीयो युः। शमिति सुखे। शंयुः। सहसेत्याकस्मिकाविमर्शयोः। "एष प्लोषार्त्तयोषिज्जन इव सहसैवोत्थितोऽन्तःपुरोऽग्निः" "क्रूरेण दारुणतया सहसैव दग्धा"। स्वधेति पितृदाने। "स्वधा कृतं यत्तनयैः पि-तृभ्यः। अलमिति भूषणपर्याप्तिशक्तिवारणनिषेधेषु। "चलन्नलं-कृत्य महारयं हयम्"। "पठत्सु तेषु प्रातिभूपतीनलम् विनिद्ररोमाऽजनि शृण्वती नलम्" "ग्रन्थानधीत्य व्याकर्तु-मिति दुर्मेधसोऽप्यलम्"। "एतावताऽलमघनिर्हरणाय पुंसाम्"। "अलं विलम्ब्य त्वरितं हि वेला"। वषट् वौषट् श्रौषट् एते हविर्दाने। "वैतानेषु कपीटयोनिषु पुरोडाशं वषट् कुर्वते"।

"तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं वषट्कारं च" इति ब्राह्मणम् । विनेति वर्जने । "तव रूपमिदं तया विना" । नानेत्यनेकविनाऽर्थयोः । श्रियो नानास्थानभ्रमणरमणीयां चपलताम्" । "नाना नारीं निष्फला लोकयात्रा"। "नेह नानाऽस्ति किञ्चन" इत्यत्र नानाशब्दो नञ्समानार्थकतया अन्योऽन्याभावार्थः । "विनञ्भ्यां नानाञौ नसह" इति स्वार्थिकनाञ्प्रत्ययान्तनञ्पदव्युत्पन्नत्वात् । तस्य च धर्मिपरतया भिन्नं नास्तीत्यर्थ इत्यौपनिषदाः । स्वस्ति इति मङ्गले । "स्वस्ति न इन्द्रो वृद्धश्रवाः" । अन्यादित्यन्यार्थे । देवदत्त आयातोऽन्यच्च यज्ञदत्तः । अस्तीति सत्तायाम् । "अस्ति वाम्यभरमस्ति कौतुकम्" । उपांशु इत्यप्रकाशोच्चारणरहस्ययोः । "उच्चैर्ऋचा क्रियते नीचैर्यजुषा उपांशु साम्ना" इति श्रुतिः। क्षमेति क्षान्तौ । "क्षमाकरोतु भवान्" । विहायसेति वियदर्थे । "विहायसा रम्यमितो विभाति" । दोषेति रात्रौ । "दोषाऽपि नूनमहिमांशुरसौ किलेति" । मृषा मिथ्येति द्वौ वितथे । "मृषा निशानाथमहः सुधा वा" । "मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे" । मुधेति व्यर्थे । "भजन्ति हि मुधा बुधा अहह कुक्षितः कुक्षितः" । "क्त्वातोसुन्कसुनः" "कृन्मकारसंध्यक्षरान्तः" "अव्ययीभावश्च" इमानि गणसूत्राणि अष्टाध्यायीस्थात्रिसूत्रीसमानार्थानि। अर्थस्तत्रैव वक्ष्यते।

स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा ।

इत्यमरः । "उपाध्यायेन पुराऽधीयते"। अविरतमपाठीत्यर्थः । "स्मरेण मुक्तेषु पुरा पुरारौ" इत्यादौ अतीतकालार्थः । "पुरा विकुरुते मायाम्" । समनन्तरं विकरिष्यतीत्यर्थः । मिथो मिथस् इति रहःसहार्थयोः । "कथाप्रबन्धेषु मिथः

सखीमुखात्"। सहार्थोऽन्योऽन्यार्थः।"मिथोऽन्योऽन्यं रहस्यपि" इत्यमरः । प्रायस् इति बाहुल्ये । काचित्कव्यभिचारविशिष्ट-सहचारबाहुल्ये इत्यर्थः ।

मृगेन्द्राश्च नरेन्द्राश्च प्रायः सीदन्ति दुःखिताः ।

मुहुस् इति पुनरर्थे । "मुहुर्व्यजनवीजनैर्बहलचन्दनासेवनैः"। प्राहुकमिति समकाले ऊर्द्धार्थे च । प्रवाहिकेति केचित् । आर्यहलमिति बलात्कारे । "आर्येति प्रतिबन्धे हलमिति प्रतिषेधविवादयोः" इति शाकटायनः । अभीक्ष्णमिति पौनःपुन्ये । "अभीक्ष्णमुष्णैरपि तस्य सोष्मणः"। साकं सार्द्धमित्येतौ सहार्थे ।

"उत्क्षिप्तं सह कौशिकस्य पुलकैः सार्द्धं मुखैर्नामितम्"।

"भूपानां जनकस्य संशयधिया साकं समास्फालितम्"।

नमस् इति नतौ। "नमस्ते रुद्र मन्यवे"। हिरुगिति वर्जने। "य इन्दुदर्श हिरुगिन्नु तस्मात्"। धिगिति निन्दाभर्त्सनयोः। "धिग्दैवदुर्विलसितं यदयं हिमांशुरभ्युद्यतश्च तमसा कवलीकृतश्च"।

"प्रियमपि ततो धिग्ब्राह्मण्यं धिगङ्गिरसः कुलम्"। तसिलादिस्तद्धित एधाच्पर्यन्तः, शस्तसी, कृत्वसुच्, सुच्, आस्थालौ, च्व्यर्थाश्चेति गणसूत्राणि ।

अयमर्थः । "पञ्चम्यास्तसिल्" इत्यारभ्य "एधाच्च" इत्येतदन्तैः सूत्रैर्विहितो यस्ताद्धितस्तदन्ताः शब्दाः स्वरादिषु बोद्धव्याः । "बह्वल्पार्थात्" इति विहितः शस् । प्रतियोगे पञ्चम्यास्तासिः । "संख्यायाः क्रियाऽभ्यावृत्तिगणने कृत्वसुच्"। "द्वित्रिचतुर्भ्यः सुच्"। "इण आसिः" इत्युणादिसूत्रेण विहितः आसिः। अया इति यस्य रूपम् । "प्रत्नपूर्वविश्वेमात्थाल्छन्दसि" इति सूत्रेण विहितः थाल् । "तं प्रत्नथा

पूर्वथा विश्वथेमथा" । "सम्पद्यकर्तरि च्विः" "विभाषा साति कार्त्स्न्ये" "देये त्रा च" "अनितौ डाच्" एतदन्ता अपि ग्राह्याः। अम् "अमु चच्छन्दसि" इति विहितः । आम् इत्यङ्गीकारे ।

आं जानीमो गमनसमये हन्त कान्तारसीम—
न्येकाकिन्याः कुवलयदृशो लुण्ठिता लोचनश्रीः ।

"किमेत्तिङव्ययादाम्" "कास्प्रत्ययादाममन्त्रे लिटि" इति विहितोऽपीत्यन्ये । प्रताम् इति ग्लानौ । प्रशान् इति सादृश्ये । प्रशान्देवदत्तो यज्ञदत्तेन । प्रतानिति विस्तारे । मा इति निषेधे ।

"मा जानीत विदर्भजामविदुषीं कीर्त्तिर्मुदः श्रेयसी" ।

माङिति निषेधाशङ्कयोः । "मा ते मलीमसविकारघना मतिर्भूत्" । आकृतिगणत्वात्स्वरादेरन्येषामपि संग्रहः । कामं स्वाच्छन्द्ये अनास्थायां च ।

कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वसहे ।

प्रकामाः । निकाममित्यातिशये ।

"निकामं क्षामाङ्गी सरसकदली गर्भसुभगा" । भूय इति पुनरर्थे । "भूयोऽपि नामाधरसाम्यगर्वम्" । सांप्रतमिति न्याय्ये ।

" रामाल्लब्धसमस्तहेतिगुरुणो वीर्य्यस्य यत्सांप्रतम् " ।

परमिति किन्त्वर्थे । "वक्तुं विशेषः परमस्ति विशेषः" । साक्षादिति प्रत्यक्षे । "तदेव साक्षादमृतांशुमाननम्" । व्यवधानरहितत्वेऽपि । यथा साक्षात्कारणम् । साचीति तिर्यगर्थे ।

"काकुव्याकुलवाचि साचिहसितस्फूर्जत्कपोलश्रिया" ।

सत्यमित्यर्द्धाङ्गीकारे । "सत्यं मनोरमाः रामाः सत्यं रम्या विभूतयः" ।

मङ्क्षु आशु इति द्वौ शैघ्र्ये। संवत् इति वर्षे। अवश्यमिति निश्चये। "अवश्यं यातारश्चिरतरमुषित्वाऽपि विषयाः"। सपदीति शैघ्र्ये। "तव सपदि समीपमानयेताम्"।

बलवदिति अतिशये। "बलवत्तु द्रवमाणं प्रत्याययन्तीव मे हृदयम्"। प्रादुराविरिति प्राकाश्ये।

"वपुष्प्रादुर्भावादनुमितमिदं जन्मनि पुरा"।

"आविर्भूतप्रणयसुमुखाश्चातका वा भजन्ते"।

अनिशं नित्यदा सदा अजस्रं सततम् एते सातत्ये। "लवणमम्बु सदैव महोदधेः"। "अजस्रमभ्याशमुपेयुषा समम्"। उषेति रात्रौ। रोदसी द्यावापृथिव्यर्थे। ॐमिति ब्रह्मण्यङ्गीकारे च। "ॐ नमः सर्वभूतानि"। "ॐमित्युक्तवतोऽथ शार्ङ्गिण इति व्याहृत्य वाचं नभः"। भूर्भुवःस्वरिति पृथिव्यन्तरिक्षलोकयोः। "द्रष्टुं वीर चिरस्य धाम भवतस्तद् भूर्भुवःस्वस्त्रयी"। हृन्मर्मव्रणरोपणौषधमिमौ बाहू बहूत्ताम्यतः। झटिति झगिति तरसा इति शैघ्र्ये। "झटिति कुरुते दृष्टः कोऽयं दृशाममृताञ्जनम्"। "कालामच्छाक्षमालां झगिति भगवतो भैरवस्यार्पयामि"।

स्राक् झटित्यञ्जसाऽह्नाय द्राङ् मङ्क्षु सपदि द्रुते।

इत्यमरः। "मूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाऽह्नाय वः। सुष्ठु प्रशंसायाम्। "ये वर्तन्ते तव च हृदये सुष्ठु सम्बन्धयोग्याः"। कु इति कुत्सितेषदर्थयोः। "धिक् तस्य मन्दमनसः कुकवेः कवित्वम्" "द्रागेतच्छुरिकारयेण ठाणिति च्छिन्नापसर्पच्छिराः"। अञ्जसेति तत्त्वे शैघ्र्ये च। अ इति बहिरर्थे। मिथुनम् इति द्वावित्यर्थे। मिथुनं त्रपेते। विष्वगिति समन्तादित्यर्थे। "वात्यासंवेगविष्वग्विततवलयितस्फीतधूम्याप्रकाशः"। भाजगिति शैघ्र्ये भाजक् पचति। अन्वगित्यानुकूल्ये।

चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः ।
आदिपदं चिरं चिरेण चिरादितिपरम् ।

"चिराय रात्रिञ्चर वीरचक्रमाराङ्क्वैज्ञानिकपश्यतस्त्वाम्" ।
"दीक्षितं चिररात्राय श्रुत्वा तं तु युधिष्ठिरः" ।

" सुचरितपरिपाकात्प्राप्तश्चिरस्य समागमः " । " चिरेण लब्धा बहुभिर्मनोरथैः " । " उदश्चदुच्चारणचारुणश्चिरात् " । अस्तमिति विनाशे । "राज्यमस्तमितेश्वरम्" । आनुषगित्यानुपूर्व्ये । "आनुषक् प्रविशतीत्याह वन्द्युत" । दान्तोऽयमिति केचित् । ह्रस्वादिरयमनुमाने इति शाकटायनः । अम्नस् इति शीघ्रसाम्प्रतिकयोः । अम्नरेव । स्थाने इति युक्ते । " तस्यार्थे गरुडामरेन्द्रममरः स्थाने समानेऽजनि " । वरमिति ईषदुत्कर्षे । "स्वाधीना वचनीयताऽपि हि वरं बद्धो न सेवाञ्जलिः" । दुष्ट इति निष्कृष्टार्थे । बलादिति हठार्थे । "भित्त्वा प्रसरति बलात्" । शु इति पूजायाम् । "शुनासीरः" "शुतुद्रि स्तोमं सचता परुष्ण्या" । अर्वागिति प्राचीने सुदि शुक्लपक्षे वदि कृष्णपक्षे इत्यादि प्रयोगानुसारेण ज्ञेयम् ।

# तद्धितश्चासर्वविभक्तिः ३७।

यस्माद्वचनत्रयं नोत्पद्यते, किन्त्वेकवचनमेव स तद्धितान्तः शब्दोऽव्ययसंज्ञः स्यात् । तत्र । ततः । तद्धित इति किम् । एकः द्वौ बहवः । तेषां नियतवचनत्वेन वचनत्रयानुत्पत्तेः । विशेषणं किम् । औपगवः । इह यदि यस्य तद्धितस्योत्पत्तौ सर्वविभक्तिर्न निमित्तम्, किंतु विभक्तिविशेषपुरस्कारेणैव तदुत्पत्तिः, तस्याव्ययसंज्ञा । यथा- "सर्वैकान्यार्कियत्तदः काले दा " इति दाप्रत्ययस्य सप्तम्येवो-

त्पत्तिनिमित्तमिति व्याख्याने विना नाना इत्यादीनामव्ययसंज्ञा न स्यात्, तदुत्पत्तौ कस्याश्चिदपि विभक्तेरनपेक्षितत्वादित्यव्याप्तिः। दाक्षिरित्यादौ "तस्यापत्यम्" इति षष्ठ्या एव निमित्तत्वेनाश्रयणादतिव्याप्तिश्च। एवं त्रलादीनामप्यव्ययत्वं न स्यात्। न च "पञ्चम्यास्तसिल्" "सप्तम्यास्त्रल्" इति तेषाम् एकैव विभक्तिर्निमित्तमिति वाच्यम्। "इतराभ्योऽपि दृश्यन्ते" इति विभक्त्यन्तरेऽपि तद्विधानात्।

अथाश्रूयमाणसर्वविभक्तिकः शब्दोऽव्ययम्। न च दधि मधु इत्यादावतिप्रसङ्गः। विभक्त्यन्तरस्य श्रूयमाणत्वादिति। तदाऽन्योऽन्याश्रयः। अव्ययत्वाद्विभक्तिलोपः, तस्मिंश्च सति अव्ययत्वमिति।

यदि तु लिङ्गसङ्ख्याराहितत्वमव्ययत्वम्। न चात्रान्योऽन्याश्रयः। लिङ्गसंख्याऽनन्वयस्य शब्दस्वाभाव्याधीनत्वेन वाचनिकत्वाभावात् इत्युच्यते, तदा सम्यगेवेति भाष्यमतम्।

वार्तिककारस्तु–सिद्धं तु पाठात्, तसिलादयः प्राक् पाशपः, शस्प्रभृतयः प्राक्समासान्तेभ्यः, मान्तः कृत्वोऽर्थः तसिवती नानाञाविति।

न च "प्रत्नपूर्व"इत्यादिना विहितस्य थाल्प्रत्ययस्यासंग्रहः। प्रकारवचने यः थाल् तस्यैव तत्र विधानात्। स्वरादौ पाठेन सङ्ग्रहाच्चेत्यपरे। मान्त इति। अम् आम् चेत्यर्थः। तसिपदेन "प्रतियोगे पञ्चम्यास्तसिः" "तेनैकदिक्" "तसिश्च" इति विहितौ द्वावपि गृह्येते। कृत्वोऽर्थः कृत्वसुच् सुच् च।

स्यादेतत्। कारकविधीनां वचनविधीनां च स्वादिविधिनैकवाक्यत्वात् अव्ययेषु स्वादीनां प्राप्तिरेव दुर्घटा। कर्मत्वे-

दिष्वेकवचनं सिद्धमेवेति सूत्रसामर्थ्यादव्ययेभ्य एव तत्सिद्धिः। तिङन्तेभ्योऽपि तदुत्पत्तिवारणार्थं च ङ्याप्सूत्रैकवाक्यत्वम्। प्रदेशान्तरे पाठश्च, तदा द्वितीयः पक्षः।

अथ द्वितीया कर्मण्येवेत्यादिः सामान्यापेक्षःप्रत्ययनियमः। प्रथमा प्रातिपदिकार्थएवेति नियमेन च कर्माद्याधिक्यस्थलएव तन्निषेधादव्ययेभ्यः प्रथमैव। "द्व्येकयोः"इत्यादिकं तु यथान्यासमेव। एकत्वे एवैकवचन न तु द्वित्वादौ इति सजातीयापेक्षः प्रत्ययनिमपक्षः, तदा तृतीयः। अव्ययानां निःसंख्यत्वात्। तेभ्यः प्रथमाया वचनत्रयोत्पत्तावपि स्वस्वार्थसङ्ख्याभिन्नसङ्ख्यायां तदनुत्पत्तिसत्त्वेन नियमविरोधाभावात्।

यदि तु द्वितीयपक्षरीत्या सकलविभक्त्येकवचनप्राप्तौ एकवचनमित्येकत्वविवक्षया प्रथमोपस्थितत्वेन प्रथमैकवचनमेवेति, तदा चतुर्थः।

परं तु आद्यपक्षत्रये पचतिरूपमित्यादावतिव्याप्तिः। प्रथमैकवचनस्यैव तत्रेष्टत्वात्। प्रथमान्तदेवदत्तादिपदसामानाधिकरण्यानुरोधात्। तद्रीत्या च विभक्त्यन्तरस्यापि प्रसङ्गात्। पचति रूपम् पचन्तिरूपमित्यादावपि द्विवचनाद्युत्पत्तौ प्रयोजनाभावात्। आख्यातादेव द्वित्वाद्युपस्थितिसत्त्वात्। अतोऽन्तपक्ष एव सिद्धान्त इति।

# कृन्मेजन्तः ३८।

मान्त एजन्तश्च यः कृत्तदन्तमव्ययसंज्ञं स्यात्। स्वादुंकारं भुङ्क्ते। वक्षे रायः। "स्वादुमि णमुल्"। "तुमर्थे से" इति वचेः सेप्रत्ययः।

इह यदि मेजन्तेन कृतं विशेष्य तदन्तविधिः, तदा उक्तप-

र्थः । यदि तु कृता तदन्तविधिं कृत्वा कृदन्तमित्येतत् मेजन्तेन विशेष्यते, तदा कृदन्तं यन्मेजन्तं तदव्ययसंज्ञं स्यादित्ययं पक्षः । संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणाभावेऽपि "प्रयोजनं सर्वनामाव्ययसंज्ञायाम्" इति वचनात्तदन्तविधिः, अन्वर्थसंज्ञाबलाद्वा । केवलप्रत्ययस्य प्रयोगानर्हस्य च नानावचनादिरूपविविधगमनानुपपत्तेस्तन्निषेधायोगात् ।

नन्वाद्यपक्षे कारयाञ्चकारेत्यामन्तस्य संज्ञा न स्यात् । लिटस्तिङादेशाभावेन "कृदतिङ्" इति कृत्संज्ञत्वेऽपि मान्तत्वाभावात् । आमश्च कृत्संज्ञत्वाभावात् । सत्यम् । स्वरादिषु "आम्" इति पाठेन रूपसिद्धेः ।

अथ तत्र तद्धितस्यैव आमो ग्रहणम्, तदा कृस्वात्स्वाद्युत्पत्तावपि "आम" इति सूत्रेण लुक्सिद्धिः । न च तत्र लेरित्यस्यानुवृत्तिः । प्रयोजनाभावात् । न च तरबादेरपि लुगापत्तिः । संख्याकारकादिविषयकोत्थिताकाङ्क्षत्वरूपादपरिसमाप्तार्थत्वात् तरबादीनामनुत्पत्तेः तदर्थम् अनुप्रयोगस्यावश्यकतया ऽनुप्रयुज्यमानधातूत्तरोत्पन्नतरबादिनैवामन्तार्थगतोत्कर्षप्रतीतेः । अत एव " कृञ्चानुप्रयुज्यते " इत्यत्र व्यवहितनिवृत्त्यर्थं चेति वक्ष्यते ।

यद्वा—पूर्वसूत्रोक्तसिद्धान्तरीत्या सोरेवोत्पत्तौ तस्य हल्ङ्याब्भ्यादिलोप इति दीक्षिताः ।

अथ द्वितीये प्रतामौ प्रताम इत्यत्रातिव्याप्तिः । प्रत्ययलक्षणेन कृदन्तत्वात् स्वरूपेण च मान्तत्वादिति चेन्न । स्वरादिषु प्रशाञ्छब्दस्य पाठेन प्रत्ययलक्षणेन कृदन्तत्वमाश्रित्याव्ययसंज्ञा न भवतीति ज्ञापितत्वात् । न च " मो नो धातोः " इति नत्वे कथमेतन्मान्तमिति वाच्यम् । नत्वस्यासिद्धत्वात् ।

न चैवं कारयाञ्चकारेत्यस्यापि आमन्तस्य संज्ञा न स्यात्, प्रत्ययलक्षणेनैव तस्य कृदन्तत्वादिति वाच्यम्। नियमस्य सजातीयापेक्षतया धातोरेव व्यावर्त्तितत्वात्। आमः प्रत्ययलक्षणेन कृदन्तत्वे बाधकाभावात्। न च प्रशानिति शान तेजने इत्यस्य चुरादित्वस्वीकारात्सन्नन्तत्वनियमाभावेन तस्यैव क्विबन्तस्य स्वरादौ पाठ इति कथं ज्ञापकतेति वाच्यम्। ज्ञापकत्वोपन्यासकभाष्यप्रामाण्येन तस्मात् क्विन्प्रत्ययोऽनभिधानान्न भवतीति निर्णयात्। न च गौग्लौर्नौरित्येतेषामप्यव्ययसंज्ञा स्यादिति वाच्यम्। उणादीनामव्युत्पन्नत्वात्। व्युत्पत्तिपक्षेऽपि "च्विरव्ययम्" इत्युणादिसूत्रेण डोडौप्रत्ययान्ताश्च्व्यन्ता एवाव्ययसंज्ञा इति नियमितत्वात्। नन्वाधये चिकीर्षवे चिकीर्षोः इत्यादीनामप्यव्ययत्वापत्तिरिति चेत्। अत्र वार्तिकम्—

अनिकारोकारप्रकृतिरिति वक्तव्यम्।

अत्र त्विकारोकारप्रकृतिकत्वान्न दोष इति। यदि त्वेवमपि कुम्भकारेभ्यो नगरकारेभ्य इत्यादावतिव्याप्तिः, तर्हि अनन्यप्रकृतिरिति वक्तव्यम्। तेन आदेशमात्रस्य व्यावृत्तिः।

भाष्यकृतस्त्वाहुः—"सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति परिभाषाया आवश्यकत्वात् तत एव नातिप्रसङ्गः। सुप्सान्निपातकृतस्य एजन्तत्वस्य तद्विघातकाव्ययसंज्ञायामनिमित्तत्वात्। सत्यां हि तस्यां सुलोपापत्त्या एजन्तत्वनिमित्तस्य विघातः स्यादिति।

अयमर्थः—सन्निपातः संबन्धः लक्षणं निमित्तं यस्य तादृशो विधिः तद्विघातकस्य स्वनिमित्तसंबन्धविघातकस्य कार्यस्य निमित्तं न भवतीति।

न्यायसिद्धं चैतत्। उपजीव्याविरोधेनैव उपजीवक-

स्य प्रवृत्तेः । न चैवं वद्ध्यादेस्तृणादिविघातकत्वं न स्यादिति वाच्यम् । कल्पनाविषयत्वादुक्तन्यायस्य अन्यत्र यथाप्रमाणमेव व्यवस्थापनात् । अत एवानुभवस्य स्मृतिकारणत्वे संस्कारस्य कारणत्वं न सिद्ध्यति । कार्याव्यवहितपूर्ववर्त्तित्वाभावेनानुभवस्य स्मृतिं प्रति कारणत्वानिर्वाहात् तन्निर्वाहार्थमेव संस्कारकल्पनयाऽनुभवकारणतायास्तदुपजीव्यत्वात् । अत एव "कष्टाय क्रमणे" इत्यादिना ह्रस्वांशे सन्निपातपरिभाषाबाध इति सिद्धान्तः । "कृन्मेजन्तः" इत्यादेस्तु स्वाभाविकएजन्तस्थले सावकाशत्वात् नोक्तस्थले एतत्परिभाषाबाधकत्वमिति ।

इदं पुनरवधेयम् । यत्रोपजीव्यतावच्छेदकधर्मो रूपान्तरापत्तावपि नान्यथा भवति, न तत्रोक्तन्यायप्रवृत्तिः । यथा करिष्यसीत्यत्र वलादित्वविशिष्टमार्द्धधातुकमिडागमस्योपजीव्यमिति तद्रूपादिणः परस्य सस्य षत्वं भवत्येव । षत्वे कृतेऽपि तस्य वलादित्वाविघातात् । एवं सर्वेषामित्यादावपि । सकारस्य एत्वनिमित्तत्वेऽपि एकारात्परत्वेन षत्वे कृतेऽपि झलादित्वाविघाताद् । "हलि सर्वेषाम्" इति निर्देशान्नात्र सन्निपातन्यायप्रवृत्तिरिति प्रवादस्तु अभ्युपेत्यैव बोध्यः । यद्रूपावच्छिन्नायां यस्यां व्यक्तौ निमित्तत्वं पर्यवस्यति तद्व्यक्तेरपि विघातो न भवतीत्यर्थं कल्पयित्वाऽनित्यत्वमाश्रित्य समाधेः संदर्भविरुद्धत्वात् ।

प्रसङ्गादस्याः प्रयोजनान्तराण्यप्युपन्यस्यन्ते । अमुनेत्यत्रासिद्धत्वेन मुत्वस्याकारान्तत्वेऽपि घिसंज्ञानिमित्तं नाभावमाश्रित्य "सुपि च" इति दीर्घो न । घिसंज्ञाव्याघातापत्तेः । "न मु ने" इत्यत्र नाभावे कर्त्तव्ये कृते च सति मुभावो नासिद्धः इति व्याख्यानं तु संभवमात्रेण । उक्तरीत्यैव सुस्थत्वात् ।

शकटिपद्धत्यादिभ्यः सप्तम्येकवचनस्य ङेरौकारादेशे तत्सन्नियोगेनेकारस्याकारादेशे च कृते अदन्तलक्षणष्टाप् न भवति । तयोरानन्तर्यस्य विघातापत्तेः । नन्वौकारादेशस्यानन्तर्यप्रयुक्तत्वेऽपि तत्सन्नियोगशिष्टे अत्वेऽपि तथात्वे मानाभाव इति चेत्सत्यम् । अत एवापरितोषात्सप्तमे भाष्यकारेण " औकारादेशो ङित्कर्त्तव्य " इत्युक्तत्वान्न दोषः । ङित्त्वेन टिलोपे हलन्तत्वेन टापः प्राप्तेरेवाभावात् ।

एवम् "इजादेश्च गुरुमत" इति सूत्रे इयेषेत्यादावपि आम्प्राप्तिमाशङ्क्य "उपदेशवचनात् सिद्धम्" इति वार्तिकं प्रत्याख्यातुं भाष्ये लिट्सन्निपातकृतस्य गुणस्य लिट्सन्निपातविघातकमामं प्रति न निमित्तत्वमित्युक्तम् । " आम " इति लेर्लुक्प्रसङ्गात् ।

एवम् " अचः परस्मिन् " इति सूत्रे पञ्चमीसमासानाश्रयणपक्षे मथितं पण्यमस्येत्यर्थे " तदस्य पण्यम् " इति ठकि तस्य इकादेशे " यस्येति च " इति अकारलोपे च कृते तान्तत्वात्कादेशो न । तस्य हि तान्तत्वं निमित्तम् । तत्र च इकप्रत्ययः । तस्मिन्परे अकारलोपोत्पत्तेः । तस्य कादेशे च तद्विघातापत्तेः । एवमन्यदप्यूह्यम् ।

दाक्षिरित्यादौ इञ्प्रत्ययस्योपजीव्याकारलोपनिमित्तत्वं तु उक्तपरिभाषाया अनित्यत्वादेव । तत्र च प्रमाणं प्रागेवोक्तम् ।

एवं "न यासयोः" इति सूत्रमपि तत्र प्रमाणम् । अन्यथा अकारसन्निपातकृतस्य टापस्तद्विघातकामित्वं प्रति निमित्तत्वानुपपत्त्यैव सिद्धौ इत्वनिषेधवैयर्थ्यात् ।

स्यादेतत् । अग्निशब्दोऽव्युत्पत्तिपक्षे फिट्स्वरेण व्युत्पत्तिपक्षे तु प्रत्ययस्वरेणान्तोदात्तः । ततो मतुप् । तस्यान्तोदात्तत्वात् ह्रस्वान्नुटश्च परस्य मतुप उदात्तत्वं स्यादित्यर्थकेन " ह्रस्व-

नुड्भ्यां मतुप् " इति सूत्रेण उदात्तत्वे कृते " अनुदात्तं पदमेकवर्ज्जम् " इति शेषनिघातेन प्रकृतिभागस्यानुदात्तत्वं न स्यात् । तदीयान्तोदात्तत्वस्य मतुबुदात्तोपजीव्यत्वात् । "ह्रस्वनुड्भ्यां मतुप्" इति सूत्रे "अन्तोदात्तादुत्तरपदात्" इत्यतोऽन्तोदात्तादित्यस्यानुवृत्तेरिति । उच्यते—अनित्यत्वादेवात्र न दोषः । अत एव परमवाचा इत्यत्र " अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे" इति सूत्रेण अन्तोदात्तात्परस्या विभक्तेर्विधीयमानमुदात्तत्वं प्रकृतिभागस्य शेषनिघाते निमित्तं भवत्येव ।

यत्तु स्वरविधौ सन्निपातपरिभाषा न प्रवर्त्तते इति । तच्चिन्त्यम् । प्रमाणाभावात् । तथा हि । गोपायतमित्यत्र गुप् इति धातुस्वरेणान्तोदात्तः । आयप्रत्यय आद्युदात्तः । " सनाद्यन्ता धातवः " इति पुनर्धातुसंज्ञायामन्तोदात्ततया यकाराकार उदात्तः, न तु उकार आकारो वा । "सतिशिष्टस्वरबलीयस्त्वम्" इति न्यायात् । ततः शप्प्रत्ययः । "अनुदात्तौ सुप्पितौ" इत्यनुदात्तः । " अतो गुणे " इति पररूपम् । " एकादेश उदात्तेनोदात्तः " इति अकार उदात्तः । तमादेशो लसार्वधातुकस्वरेणानुदात्तः । " उदात्तादनुदात्तस्य " इति स्वरितः । तमाश्रित्य पूर्वस्य शेषनिघातः प्राप्नोति । सन्निपातपरिभाषया तु न भवति । उदात्तोपजीवकस्य स्वरितस्य तद्विघातकनिघाताप्रवर्त्तकत्वात् ।

यत्तु वदन्ति—यथोद्देशपक्षे शेषनिघातपरिभाषा त्रिपाद्यां न प्रवर्त्तते । अतः शेषनिघाते क्रियमाणे स्वरितस्यासिद्धत्वादेव न शेषनिघात इति तत्र सन्निपातपरिभाषायाः प्रयोजनाभावः । न च तस्या यथोद्देशमेव प्रवृत्तौ मानाभावः । "तव्यत्तव्यानीयरः" इति तव्यतास्तित्करणस्य प्रमाणत्वात् । तथा हि—तव्यमात्रस्यापि प्रत्ययस्वरेणाद्युदात्तत्वे शेषनिघाते च कृते

" उदात्तादनुदात्तस्य " इति स्वरितत्वाविशेषात्, शेषनिघातपरिभाषायाश्च कार्यकालमपि प्रवृत्तौ तस्या " उदात्तादनुदात्तस्य " इत्येतत्समानदेशतया स्वरितस्य शेषनिघातं प्रत्यसिद्धत्वाभावात् निघाते च कृते उभयत्रापि स्वरसाम्यात्तव्यतस्तित्त्वं व्यर्थं स्यात्। तस्या यथोद्देशमेव प्रवृत्तौ तु " उदात्ताद् " इति स्वरितस्य शेषनिघातं प्रत्यसिद्धत्वात् तव्यप्रत्यये शेषनिघातो न भवति । तव्यत्प्रत्यये तु " तित्स्वरितम् " इत्यस्य षाष्ठत्वात्तस्य निघातं प्रत्यसिद्धत्वं नास्तीति भवत्येव शेषनिघात इति तित्त्वस्य सार्थक्यमेवेति ।

तदपि चिन्त्यम् । उदात्तोपजीवकस्य स्वरितस्य संनिपातन्यायेन तद्विघातकशेषनिघाताप्रवर्त्तकत्वादेव तव्यप्रत्यये तदप्रवृत्तेः । " तित्स्वरितम् " इत्यस्य तु उदात्तोपजीवकत्वाभावेन शेषनिघातनिमित्तत्वमव्याहतमिति फलभेदस्य स्पष्टतया तित्करणस्य वैयर्थ्याभावेन यथोक्तज्ञापकत्वानुपपत्तेः । सन्निपातपरिभाषायाः स्वरविधावप्रवृत्तिसिद्धिरित्यन्योऽन्याश्रयात् ।

एतेन " यतोऽनावः " इति सूत्रस्य शेषनिघातपरिभाषाया यथोद्देशमेव प्रवृत्तिरित्यत्र ज्ञापकत्वम् । तस्य हि यत्प्रत्ययान्तस्य नौशब्दभिन्नस्य द्व्यच आदिरुदात्त इत्यर्थः । अन्यथा यतस्तित्त्वेन स्वरितत्वात् तमाश्रित्य शेषनिघाते पूर्वस्यानुदात्तत्वमुक्तसूत्रं विनैव स्यात् । आद्युदात्ते कृतेऽपि शेषनिघातेनानुदात्तत्वे "उदात्तादनुदात्तस्य" इति स्वरितत्वे च कृते शेषनिघातेन पूर्वस्यानुदात्तत्वमेव भवतीति विशेषाभावात् " यतोऽनाव " इति सूत्रं व्यर्थमेव स्यात् । शेषनिघातपरिभाषाया यथोद्देशमेव प्रवृत्तौ तु " उदात्तादनुदात्तस्य" इत्यस्य शेषनिघातं प्रत्यसिद्धत्वाच्छेषनिघातो न भवतीति

सूत्रसार्थक्यमित्यपि परास्तम् ।

त्रैपादिकस्य स्वरितस्य उदात्तोपजीवकत्वेन तद्विघातकशेषनिघातं प्रत्यप्रवर्तकतया सूत्रारम्भे फलभेदस्य सत्त्वात् । "अनावः" इति पर्युदासस्य विधेयं विनाऽनुपपत्त्या तदर्थतयैव सूत्रसार्थक्याच्च । तस्मात्सन्निपातपरिभाषाया अनित्यत्वेनैव सर्वेष्टसिद्धौ शेषनिघातपरिभाषाया यथोद्देशमेव प्रवृत्तिरिति नियमकल्पनमप्रामाणिकमेव । अत एव शब्दकौस्तुभेऽप्यत्रैव सूत्रे अग्निमानित्यत्र सन्निपातपरिभाषाया अनित्यत्वादेव शेषनिघात इत्युक्तम् । तस्मादुक्तमनोरमादिग्रन्था निर्युक्तिका एवेति दिक् ।

# क्त्वातोसुन्कसुनः ३९।

एतदन्तमव्ययसंज्ञम् । कृत्वा । पुरा सूर्यस्योदेतोः । पुरा वत्सानामपाकर्त्तोः । उदयादपाकरणाच्चेत्यर्थः । "भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्" । "पुरा क्रूरस्य विसृपो विरप्शिन्" "पुरा जत्रुभ्य आतृदः" । "सृपितृदोः कसुन्" इति कसुन् । द्वावेतौ छान्दसौ ।

# अव्ययीभावश्च ४०।

अव्ययसंज्ञः स्यात् । परिगणनं कर्तव्यम् ।

लुकि मुखस्वरोपचारयोर्निवृत्तौ चेति ।

लुकि यथा—उपाग्नि । प्रत्यग्नि । "अव्ययादाप्सुपः" इति सुपो लुक् । मुखस्वरनिवृत्तौ यथा—उपाग्निमुखः । प्रत्यग्निमुखः । "मुखं स्वाङ्गम्" इति उत्तरपदस्याद्युदात्तत्वे प्राप्ते "नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः" इति निषेधः । ततश्च

उपाग्नि अग्निसमीपे मुखं यस्येति उपाग्निमुख इत्यत्र " बहुव्रीहौ प्रकृत्या " इति पूर्वपदे प्रकृतिस्वर एव । स च समासत्वादन्तोदात्तः । विसर्गादेशस्य सकारस्य उपचारेति पूर्वाचार्यसंज्ञा । तन्निवृत्तौ यथा–उपपयःकारः । उपपयःकामः । " अतः कृकमि " इति सत्वे प्राप्ते " अनव्ययस्य " इति पर्युदासः । परिगणनं किम् । उपाग्न्यधीयान । पराङ्गवद्भावेन षाष्ठम् " आमन्त्रितस्य च " इत्याद्युदात्तत्वम् । अन्यथाऽव्ययानां पराङ्गवद्भावप्रतिषेधात्तन्न स्यात् । उपाग्निकमित्यादौ "अव्ययसर्वनाम्नाम्" इत्यकज् न । उपकुम्भम्मन्य इत्यत्र "अरुर्द्विषद्" इति मुम् । अन्यथा " अनव्ययस्य " इति प्रतिषेधः स्यात् । उपकुम्भीभूतः " अस्य च्वौ " इत्यत्राव्ययानामुपसंख्यानप्रतिषेधो न ।

इदमवधेयम् । नाव्ययीभावादिति विशेषनिषेधादेव लुक् सिद्धः ।"अतः कृकमि"इत्यत्र "अनुत्तरपदस्थस्य"इत्यनुवृत्त्यैव न सत्वम् । अतो मुखस्वरनिवृत्तिरेव प्रयोजनम् ।

तत्र केचित् । मुखस्वर इष्ट एव । यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयाद् " नाव्ययाद्व्ययीभावाच्च " इति भाष्यस्वारस्यात् ।

अन्ये तु अनव्ययमव्ययं भवतीत्यन्वर्थसंज्ञाविज्ञानादेव मुखस्वरनिवृत्तिर्भविष्यतीति सर्वथाऽपि सूत्रमिदमनारभ्यम् । एवं " तद्धितश्च " इत्यादिसूत्रचतुष्टयमपि । स्वरादौ हि तासिलादिस्तद्धित एधाच्पर्यन्त इत्यादिच्व्यर्थाश्चेत्यन्तेन औणादिकमासिं विहाय " तद्धितश्च " इति सूत्रस्यार्थः संगृहीतः, कृन्मकारसन्ध्यक्षरा इत्यनेन " कृन्मेजन्तः " इत्यस्य ।

## शि सर्वनामस्थानम् ४१।

जश्शसोरादेशः शीत्येतदुक्तसंज्ञम् । वारीणि । " सर्वना-

मस्थाने चासम्बुद्धौ" इति दीर्घः । प्रदेशेष्वेव शिसुटोरित्युक्तौ तु नपुंसकेऽपि स्यात् । न च शिग्रहणसामर्थ्यम् । शसर्थत्वेनोपक्षयात् । तस्मात्संज्ञाऽऽरम्भ आवश्यकः । तस्या महत्त्वं तु पूर्वाचार्यसंप्रदायात् ।

# सुडनपुंसकस्य ४२ ।

नपुंसकभिन्नप्रकृतिकानि स्वादिपञ्चवचनान्युक्तसंज्ञानि । राजा । राजानौ । राजानः । राजानम् । राजानौ । प्राग्वद्दीर्घः । अनपुंसकस्य किम् । सामनी । "विभाषा ङिश्योः" इत्यल्लोपाभावे संज्ञाविरहान्न दीर्घः । पर्युदासः किम् । नपुंसके विधिप्रतिषेधाभावाभ्यां पूर्वसूत्रेण प्राप्ता संज्ञा यथा स्यात् । तेन वनानीत्यादि सिद्धम् । न च तदारम्भसामर्थ्यम् । शसादेशे चरितार्थत्वात् ।

यद्वा प्रतिषेध एवायम् । न चोक्तदोषः । "अनन्तरस्य विधिर्वा निषेधो वा" इति तदभावात् । अन्यथा "सुट् स्त्रीपुंसयोः" इति प्रतिपत्तिलाघवार्थं ब्रूयात् । "अनपुंसकस्य" इति वचनेषु केषाञ्चिन्नञ्समासानामसामर्थ्येऽपि साधुत्वं ज्ञाप्यते । तेनाश्राद्धभोजीत्यादि सिद्धम् । असमर्थसमासो वाक्यभेदश्चेति गौरवं तु न दोषः । फलमुखत्वात् ।

# नवेति विभाषा ४३ ।

निषेधविकल्पयोर्विभाषा संज्ञा स्यात् । इतिशब्दस्योभयान्वितत्वात् । स च पदार्थविपर्यासकृत् । लोके हि गवादिशब्दा अर्थपरा इतिकरणेन गौरित्याहेत्यादौ शब्दपराः सम्पद्यन्ते ।

व्याकरणे तु "स्वं रूपं शब्दस्य" इति परिभाषणात् स्वरूपपरत्वमुत्सर्गः, इतिकरणेन तु अर्थपरत्वमिति विशेषः। तस्मादर्थ एवात्र संज्ञा संज्ञी च। न च नवेत्यखण्डनिपातार्थस्य निषेधमात्रस्य संज्ञित्वापत्तिः। "विभाषा दिक्समासे" इति ज्ञापकात्। अन्यथा "न बहुव्रीहौ" इत्येव सिद्धेः। इतिशब्दाभावे तु "विभाषा श्वेः" इत्यादौ नवेतिशब्द एवादेशः स्यात्। अर्थस्य संज्ञात्वाद् अन्यतरस्याम् इत्यादिस्थलेऽपि वक्ष्यमाणरीत्या वैरूप्योद्धारः। तथा हि—उभयत्र विभाषायामेवास्योपयोगो नान्यत्र। "विभाषोपपदेन प्रतीयमाने" इति प्राप्तविभाषायाम् "स्वरितञित" इत्यादिना नित्यमात्मनेपदे प्राप्ते पक्षे तन्निवृत्तिमात्रस्य विधेयत्वात्पक्षे भवतीत्यस्यानुवादत्वात्। "विभाषोर्णोः" इत्यप्राप्तविभाषायां च प्रौर्णुवीत्यत्र परत्वात् "सार्वधातुकमपित्" इति नित्यङित्त्वाभ्युपगमात् प्रौर्णवितेत्यादौ तदभावांशस्य स्थितत्वाद्भावांशमात्रस्य विधेयत्वात्। "विभाषा श्वेः" इत्युभयत्र विभाषायां तु विधिमुखेन प्रवृत्तौ पित्स्वेव विकल्पः स्यात्। कित्सु तु यजादित्वान्नित्यमेव सम्प्रसारणं स्यात्। निषेधमुखेन प्रवृत्तौ तु कित्स्वेव विकल्पः स्यात्, न तु पित्सु। तत्र प्रसक्तिविरहात्। उभयथा प्रवृत्तौ तु वैरूप्यलक्षणो वाक्यभेदः स्यात्। संज्ञारम्भे तु श्रुतक्रमवशान्नेति निषेधस्य प्रथमं कित्सु प्रवृत्तिः। ततः किदाकिति सर्वस्मिन् लिटि ऐकरूप्यापन्ने सति पक्षे भवतीति विधिमुखेनैव विकल्पः प्रवर्त्ततइति न वैरूप्यम्। आकृतौ पदार्थे समुदाये सकृल्लक्षणप्रवृत्त्या सूत्रमेतत्। व्यक्तिपक्षे तु "विभाषा श्वेः" इत्यादेः प्रतिलक्ष्यं भिन्नत्वात् क्वचिद्विधिमुखेन क्वचिच्च निषेधमुखेन प्रवृत्तिः। लक्षणभेदेन वैरूप्याभावादि-

स्यनारभ्यम् । तथा च वार्त्तिकम्–

अशिष्यो वा विदितत्वादिति ।

अत्र वदन्ति । आकृतिपक्षेऽपि प्रदेशेष्वेव "न वा श्वेः" इत्यादि पठनीयम् । अन्यथा अन्यार्थमप्यारब्धा संज्ञा "विभाषोर्णोः" इत्यत्र प्रवर्त्तेत । प्रतिषेधानां च बलीयस्त्वात् । प्रोर्णुवीत्यत्रापि प्रथमं ङित्त्वनिषेधः, ततश्च विकल्पः स्यात् इति ।

वस्तुतस्तु । "विभाषा" इत्येव प्रदेशेषु पठनीयम् । संज्ञापक्षेऽपि प्रथमं निषेधस्ततो विकल्पः प्रवर्त्ततइत्यावृत्तिलक्षणवाक्यभेदसत्त्वात् ।

अत्र भाष्यकृता "ग्रो यङि" "अचि विभाषा" इति वचनमप्राप्तविभाषासु पठितम् । तत्र प्रत्यवतिष्ठन्ते–त्रिसंशया इत्युपक्रमात् प्राप्तेऽप्राप्ते उभयत्र वेति संशयविषयीभूतविभाषाणामेव व्युत्पाद्यत्वाद् अत्र कोटित्रयस्योक्तिसम्भवाभावः । तथा हि–निजेगिल्यतइत्यत्र नित्यं लत्वम्, न तु विभाषाप्रसक्तिरिति न प्राप्तविभाषाऽवसरः । न च यङीत्यनुवर्तनाद्यङ्निमित्तस्य रेफस्याचि परे लत्वमिति व्याख्यानात्तत्सम्भव इति वाच्यम् । निजेगिर् य अच् इति स्थिते "ग्रो यङि" इत्यस्य प्राप्तिसमये अच्परत्वाभावेन विभाषाप्राप्त्यभावात् । न च विभाषारम्भसामर्थ्यात् यङ्लुकः पूर्वम् "ग्रो यङि" इति न प्रवर्त्ततइति कल्प्यम् । तथाऽपि उभयत्र विभाषात्वस्य दुर्लभत्वात् । विभाषाया गिरति गिलतीत्यादौ चरितार्थतया "ग्रो यङि" इत्यस्य यङ्लुकः प्रागेव प्रवृत्तेरुभयोरसमानकालीनत्वात् । न च लत्वस्यासिद्धतया दुर्बलत्वात्तत्पूर्वमेव लुगिति वाच्यम् । अन्तर्भूतयङपेक्षत्वेनान्तरङ्गलत्वं प्रति बहिर्भूतप्रत्ययापेक्षस्य लुकोऽसिद्धत्वात् । पूर्वाभावेन "पूर्वत्रा-

सिद्धम्'' इत्वस्याप्रवृत्तेः।

अत्राहुः—प्राप्तविभाषात्वमुक्तरीत्यैव। अप्राप्तविभाषात्वं त्वितथम्—"अन्तरङ्गानपि" इति न्यायेन लत्वात्पूर्वं लुक्। न च लुग्निमित्तादच्प्रत्ययात्पूर्वमेव लत्वं स्यात्, तस्य कर्तृरूपार्थापेक्षत्वेन बहिरङ्गतयाऽसिद्धत्वात् पूर्वाभावे पूर्वत्रासिद्धत्वस्याप्रवृत्तेरिति वाच्यम्। कृतितुग्विधिग्रहणेन बहिरङ्गपरिभाषाया अनित्यत्वज्ञापनात्। धर्मिग्राहकमानेन लुक इव तदुपजीव्यानां समासप्रत्ययादीनामपि प्राबल्यसिद्धेश्च।

ननु तथाऽपि निजेगिर् अच् इत्यत्र लत्वं दुर्लभम्। यङ्परत्वाभावात्। प्रत्ययलक्षणस्य च "न लुमता" इति निषेधात्। न च लत्वस्याङ्गाधिकारबहिर्भावान्न तत्प्रवृत्तिरिति वाच्यम्। अङ्गाधिकारबहिर्भूतं तदन्तर्भूतं वा वस्तुगत्या अङ्गस्य यत्कार्यं प्राप्नोति तन्न भवतीति तदर्थात्। तत् कथमुभयत्र विभाषासम्भव इति चेन्न। पृथगल्लोपाश्रयेण "अचः परस्मिन्" इति स्थानिवद्भावसम्भवात्। पूर्वत्रासिद्धे न स्थानिवदित्यस्य "तस्य दोषः संयोगादिलोपलत्वणत्वेषु" इति निषेधात्। न च तथाऽपि उभयत्र विभाषाऽनुपपत्तिः, "ग्रो याङि" इत्येतत् प्रति "अचि विभाषा" इत्यस्यासिद्धत्वात् न विप्रतिषेध इति वाच्यम्। "न मु ने" इत्यत्र नेतियोगविभागात्।

यद्वा—योगे योगो नासिद्धः, किं तु "प्रकरणे प्रकरणम्" इत्याश्रयणात्। समुदायलोपपक्षे तु अजपेक्षयाऽन्तरङ्गत्वान्नित्यं लत्वमिति बोध्यम्। उक्तिसम्भवसमर्थनमात्रं चैतत्। सिद्धान्ते तु विभाषाया असिद्धत्वादेव नित्यं लत्वम्।

इति श्रीसिद्धान्तसुधानिधौ प्रथमाध्यायस्य प्रथमे पादे षष्ठमाह्निकम्।

# इग् यणः संप्रसारणम् ४४ ।

यणः स्थाने इग्भवतीत्येवंरूपो वाक्यार्थो, यण्स्थानिक इग्रूपो वर्णश्चेत्युभयं सम्प्रसारणसंज्ञम् । " ष्यङः सम्प्रसारणम् " इत्यादिविधिस्थले वाक्यार्थस्य ग्रहणम्, " सम्प्रसारणाच्च " इत्याद्यनुवादस्थले तु वर्णस्येति भेदः। इतिशब्दानुवृत्तेर्वाक्यार्थस्य संज्ञित्वम् । तदनारम्भे तु वाक्यस्यैव संज्ञा । न च तस्यैव विधेयत्वापत्तिः । "वाह ऊठ्" संप्रसारणमिति सामानाधिकरण्येन तदर्थस्यैव विधेयत्वात् । "ष्यङः सम्प्रसारणम्" इत्यादौ च उक्तज्ञापकस्य सामान्यापेक्षत्वकल्पनात् । न चैकवाक्ये वाक्यस्य तदर्थस्य वा संज्ञाऽस्तु, वर्णस्य तु कथमिति वाच्यम् । तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणात् । न च तत्र मानाभावः । विधेयानुवाद्यसमर्पकविभक्त्या सूत्रनिर्देशस्य तथात्वात्। तदुक्तम्—

विभक्तिविशेषनिर्देशस्तु ज्ञापक उभयसंज्ञात्वस्येति ।

हरिणाऽप्युक्तम्—

संप्रसारणसंज्ञायां लिङ्गाभ्यां वर्णवाक्ययोः ।
प्रविभागस्तथा सूत्रएकस्मिन्नेव जायते ॥

तथा " द्विर्वचनेऽचि " इति तन्त्रावृत्त्यादिलक्षणः एकशेषेण निर्देशो भाष्य एव समर्थितः । तन्त्रं द्विधा—शब्दतन्त्रमर्थतन्त्रं च । अर्थभेदाच्छब्दभेदे आद्यम् । शब्दैक्ये द्वितीयम् ।

यद्वा—वाक्यार्थ एव संज्ञी, अनुवादे तु तन्निर्वर्त्ये वर्णे लक्षणा।

अथ वा "वर्ण एव संज्ञी । विधिप्रदेशे सूत्रशाटकवद् भाविसंज्ञाऽऽश्रयणीया " इति भाष्यम् ।

अथ अदुहितरामित्यत्र लकारस्थाने उत्तमपुरुषस्यैकवच-

नमिट्, तस्य यण्स्थानिकत्वेन संप्रसारणसंज्ञायां "हलः" इति दीर्घाप्तिः। तरपं प्रति तिङन्तस्याङ्गत्वात्। अत्राहुः—

यथासंख्याश्रयणाद्यकारस्थानिकस्यैव इकारस्य संप्रसारणसंज्ञेति।

तथा हि—वाक्यार्थः संज्ञीति पक्षे तस्योद्देश्यविधेययोः संसर्गरूपतया यथासंख्यपरिभाषोपस्थितौ यणः स्थाने इक् स्याद्यथासंख्यमित्यवान्तरवाक्यार्थः। स संप्रसारणसंज्ञ स्यादिति महावाक्यार्थः। न चावान्तरवाक्यार्थं गृहीत्वा याति वातीत्यादावतिप्रसङ्गः। तस्य संज्ञासंबन्धमात्रे तात्पर्यात्। अन्यथा "ष्यङः संप्रसारणम्" इत्यादिवैयर्थ्यात्। अदुहीत्यादेस्त ज्जत्वाभावाच्च। उभयसंज्ञापक्षेऽपि उपास्थितत्वाद्यथासंख्यप्रवृत्तवर्णस्यैव संज्ञित्वात्। इदं च कर्मकर्त्तरि शुद्धे कर्त्तरि वा रूपम्।

वर्णसंज्ञापक्षे तु न यथासंख्यम्। अनुवादे परिभाषाऽनुपस्थानात्। न चैवं स्थानेयोगोऽपि न स्यादिति वाच्यम्। "षष्ठी स्थानेयोगा" इत्यत्रानुवर्त्यास्य व्याख्येयत्वात्। तदुक्तम्—

सिद्धं तु षष्ठ्यधिकारे वचनादिति।

यद्वा—सिंहावलोकितन्यायेनात्रैव स्थानग्रहणमपकृष्यताम्, संप्रसारणस्येत्यत्र तन्त्रादिना तद्भावितग्रहणात्।

अथ वा कार्यकालपक्षे यणः संप्रसारणमिग्भवतीति वाक्यार्थान्नानुवादत्वमिति। यथासंख्यपरिभाषोपस्थितौ तत्प्रवृत्त एव वर्णः संज्ञी, स एव "संप्रसारणस्य" इत्यादावुपतिष्ठते।

अथ वा लौकिकन्यायसिद्ध एव स्थानक्रमेण संबन्धोऽनुवादेऽपि सुलभ इति द्युभ्यामित्यत्र "हलः" इति दीर्घो न। "दिव उत्" इति तपरकरणात्। एवं द्युलोक इत्यत्र "संप्रसार-

१ अदुहीति।

णस्य" इति दीर्घो न। न च दीर्घप्रवृत्त्या चरितार्थस्य तपरत्वस्य "भाव्यमानोऽप्युकारः सवर्णग्राहकः" इत्यत्र कथं ज्ञापकत्वमिति वाच्यम्। वाक्यार्थः संज्ञीति पक्षेण तदुक्तेः। "संप्रसारणस्य" इत्यत्र तद्भावितग्रहणाद्वा।

पक्षान्तरे तु "ऋत उद्" इति ज्ञापकम्। न चाक्षद्युवौ अक्षद्युव इत्यादौ ऊठः संप्रसारणसंज्ञायां "संप्रसारणाच्च" इति औकारादेः पूर्वरूपापत्तिः। "संप्रसारणपूर्वत्वे समानाङ्गग्रहणम्" इति वार्त्तिकोक्तेः किंनिरूपिताया अङ्गसंज्ञाया धातुमात्रे विभक्तिनिरूपितायास्तु समासरूपे समुदाये विश्रान्तत्वात्। वार्णादाङ्गस्य बलवत्त्वाच्च। वाक्यार्थः संज्ञीति पक्षे तु पूर्वरूपप्रसक्तेरेव विरहात्। हूतो जीन इत्यादौ तु "हलः" इतिसूत्रसामर्थ्यात्संप्रसारणनिर्वृत्तस्यादेशेऽपि दीर्घः।

वर्णः संज्ञीति पक्षेऽपि अल्विधौ स्थानिवद्भावासंभवादारम्भसामर्थ्यात्संप्रसारणादेशे कार्यप्रवृत्तेर्वाच्यत्वात्।

# आद्यन्तौ टकितौ ४५।

टित्कितौ यस्य विहितौ तस्य क्रमादाद्यन्तावयवौ स्तः। भविता। पाययति। न च "चरेष्टः" "गापोष्टक्" "व्रीहिशाल्योर्ढक्" इत्यादावतिप्रसङ्ग इति वाच्यम्। पुरस्तादपवादन्यायेन स्थानेयोगापवादस्यास्य "प्रत्ययः" "परश्च" इत्यनेन परेण बाधात्। परिभाषेयम्। परेण परिभाषाप्रकरणेन साहचर्यात्। यद्वा—

संज्ञैवेति भाष्यम्।

तथा हि—टकितमविति कर्मधारयः। इत्संज्ञकौ टकारककारावाद्यन्तयोः संज्ञे स्तः। तेन "आर्द्धधातुकस्येड् वलादेः"

इत्यत्र इकारादिशब्दस्योपस्थितिः । इकारादिरिति बहुव्रीहिः, इकार आदिर्यस्येति विग्रहः । स्थानेऽन्तरतमपरिभाषया तव्यस्य इतव्यादेशे सिद्धम् । तदाहुः—

अनागमकानां सागमका आदेशा भवन्तीति । एवं यापयतीत्यत्र या इत्यस्य याप् इत्यादेशः । न च "आद्यन्तौ टकौ" इत्येवास्तु संज्ञायाः संज्ञिप्रत्यायकत्वमात्रेण स्वयं कार्यानन्वयादिति वाच्यम् । "आलजाटचौ" "ठस्येकः" इत्यादावतिप्रसङ्गात् । इत्संज्ञया तु देशविशेषस्योपलक्षणम् । तेन इत्संज्ञकस्य यो देशस्तत्रावस्थितौ टकारककारौ संज्ञे । आटश्चष्टकारः इकादेशस्य ककारश्च न तथेति न दोषः । न च अडागमस्थले भू इत्यस्य अभू इत्यादेशः स चोदात्त इत्यर्थे अलोऽन्त्यपरिभाषया अङ्गस्य अन्तोदात्तत्वं स्यादिति वाच्यम् । अ ट् उदात्तश्च यस्येति त्रिपदबहुव्रीहिणा उदात्ताकारादिरभू इत्यादेश इति व्याख्यानात् । उदात्तपदस्य विशेषणत्वेऽपि सौत्रः परनिपातः । न च तथाऽपि "आडजादीनाम्" इत्यत्र दोषः । उदात्तपदानुवृत्तावपि तेन सह श्रूयमाणस्याटो बहुव्रीह्ययोगादिति वाच्यम् । तत्सूत्रस्य प्रत्याख्यानात् । वक्ष्यति च वार्तिककृत्—

अनादीनामटा सिद्धमित्यादि ।

## मिदचोऽन्त्यात्परः ४६ ।

अचां मध्ये योऽन्त्यादचः परो मित् स्यात् । स्थानेयोगस्य "परश्च" इत्यस्य चापवादः । वनानि । यशांसि । "रुधादिभ्यः श्नम्" । रुणद्धि । न च पूर्ववदस्य "परश्च" इत्येतद्बाधकत्वानापत्तिः । बाध्यसामान्यचिन्तायां स्वविषये प्राप्तं सर्वं बाध्यत-

इत्यभ्युपगमात् । अन्यथा श्नमो मित्त्ववैयर्थ्यात् । " तृणहः " इति निर्देशेन मकारस्य श्रवणार्थत्वानुपपत्तेः । अच इति निर्द्धारणे षष्ठी । जातावेकवचनम् । न चाच इति पञ्चम्येव, अन्त्यादिति पञ्चम्यन्तसामानाधिकरण्यादिति वाच्यम् । " शे मुचादीनाम् " इत्यादावन्त्यस्याचोऽसम्भवेन एतदप्रवृत्तौ अलोऽन्त्यपरिभाषायाः प्रवृत्त्यापत्त्या मित्त्ववैयर्थ्यात् । एवं चान्त्यादचः परो मित्स्यादिति प्राचां वृत्तिरप्येवमेव व्याख्येया ।

अन्ये तु तत्राच इति अस्तु पञ्चम्येव । किं तथा सति सर्वथैव नुम् न स्यादिति विवक्षितम् उतेष्टदेशे न स्यादिति । नाद्यः । वचनवैयर्थ्यात् । नान्त्यः । अन्त्यबाधेऽप्यचः परत्वसंभवात् । प्रधानबाधापेक्षया गुणबाधस्यैव कल्पयितुमुचितत्वादिष्टसिद्धेरिति । एतेन अजंशवैकल्येऽपि प्रवृत्तिः स्यादित्यपि निरस्तम् । अचो विशेष्यत्वात्तद्वैकल्ये प्रवृत्त्यनापत्तेरित्याहुः ।

पूर्वसूत्रे द्वन्द्वनिर्दिष्टस्यापि अन्तग्रहणस्यात्रानुवृत्तेर्मित् पूर्वान्तः । अभक्तत्वे तु "ता ता पिण्डानाम्" इत्यादौ "शेश्छन्दसि बहुलम्" इति शिलोपे नलोपो न स्यात् । प्रातिपदिकान्तत्वाभावात् । वहंलिह इत्यत्र मुमो मकारस्यानुस्वारो न स्यात् । अपदान्तत्वात् । आदिग्रहणानुवृत्त्या परादिरिति व्याख्याने तु वारिणे इत्यादौ "घेर्ङिति" इति गुणः स्यात्, वहंलिह इत्यनुस्वारो न स्यात् । अतिशयितः सखा येषां तानि अतिसखीनि ब्राह्मणकुलानि । अत्र "सख्युरसंबुद्धौ" इति णित्त्वाद्वृद्धिः स्यात् । न च गौणत्वात्तदभावः । गौणत्वेऽपि तत्प्रवृत्तेः । " अस्थिदधि " इत्यादिवत् । एवं त्रपूणीत्यादौ अङ्गस्य नान्तत्वाभावात् " सर्वनामस्थाने च " इति दीर्घो न स्यात् । तस्मात्पूर्वान्तपक्षः साधुः । अत्र वार्तिकम्—

अन्त्यात्पूर्वो मस्जेरनुषङ्गसंयोगादिलोपार्थम् ।

मग्नः । मग्नवान् । "ओदितश्च" इति निष्ठानत्वं तस्यासिद्धत्वात्कुत्वम् । "मस्जिनशोर्झलि" इति नुम्, तस्य त्वन्त्यादचः परत्वे "अनिदिताम्"इति अनुषङ्गलोपो न स्यात् । अनुषङ्ग इति नकारस्योपधायाः प्राचां संज्ञा । न च "स्कोः" इति सलोपे नकारस्योपधात्वाल्लोप इति वाच्यम् । तं प्रति सलोपस्यासिद्धत्वात् । बहूनां समवाये समुदायस्यैव संयोगसंज्ञेति पक्षे सकारस्य संयोगादित्वाभावाच्च । एवं मङ्क्ता मङ्क्तव्यमित्यादि बोध्यम् । "भर्जिमर्च्योश्च" अन्त्यात्पूर्वो मिदित्यनुवर्त्तते । भृजी भर्जने । औणादिके अचि कृते उमागमः । भरुजा । मर्च शब्दे चुरादिः । औणादिक इप्रत्ययः । ईमागमः । मरीचिः । निपातनात् सिद्धम् । उक्तवार्त्तिकप्रत्याख्यानमिदम् । अङ्गुल्यादिषु भरुजाशब्दस्य बाह्वादिषु च मरीचिशब्दस्य पाठात् । "मृकणिभ्यामीचिः" मरीचिः इति तूपायान्तरम् ।

# एच इग् ह्रस्वादेशे ४७ ।

आदिश्यतइत्यादेशः । ह्रस्वेन कर्मधारयः । निर्द्धारणे सप्तमी । जातावेकवचनम् । आदिश्यमानेषु ह्रस्वेषु मध्ये एच इगेव स्यात् । हेशब्दमतिक्रान्तं अतिहि कुलम् । चित्रगुः । अतिरि । अतिनु । संध्यक्षरान्तरतमस्य ह्रस्वस्याभावे एकदेशसादृश्येन प्रसक्तयोरिवर्णोवर्णयोर्निरासार्थमेतत् । वार्त्तिककारस्त्वाह—

सिद्धमेङः सस्थानत्वाद्, ऐचोश्चोत्तरभूयस्त्वादिति ।

अयमर्थः—शब्दपरविप्रतिषेधादेङ उत्तरभागान्तरतमौ इउवर्णावेव । तथा च षष्ठे कैयटः—

विप्रतिषेधे परं कार्यमिति नायं नियमो लक्षणयोर्विप्रतिषेधे परं भवतीति किं तर्हि एकलक्षणविहितयोरपि कार्ययोर्विप्रतिषेधे परशब्दविषयत्वात्परं कार्यं भवतीत्येषोऽप्यर्थ आश्रीयते इति ।

यद्वा--एकारः शुद्धतालव्य ओकारस्तु शुद्धौष्ठ्यः इति मते सिद्धम् । तथा च बह्वृचप्रातिशाख्यम्–

तालव्यावेकारचवर्गाविकारैकारौ यकारः शकार इति, शेष ओष्ठोपपाद्य इति च ।

पूर्वोक्ताभिन्नो वर्णराशिरोष्ठाभ्यामुपपाद्यः । उकारः पवर्ग ओदौतौ उपध्मानीयश्च ओष्ठ्या इति वृत्तिकृत् । "शेष ओष्ठ्योऽपवाद्य" इति तद्भाष्ये पाठः । उत्तरसूत्रे वक्ष्यमाणान्विहायेत्यर्थः । स्पष्टार्थश्चेदम् । ऐक्षु समाधानान्तरमप्याह वार्तिककारः– ऐचोश्चेति । उत्तरभूयस्त्वाच्चेत्यन्वयः । अर्द्धमात्रा अवर्णस्य सार्द्धमात्रा त्विवर्णोवर्णयोरिति पक्षे मल्लग्रामादिवद् भूयसा व्यपदेशादपीकारोकारावादेशौ इति प्रकृतसूत्रमनारभ्यमिति । समप्रविभागपक्षोऽप्यष्टमे स्थितः, तत्र पूर्वोक्तसमाधानद्वयमेव ।

# षष्ठी स्थाने योगा ४८ ।

योगोऽस्त्यस्या इत्यर्श आदित्वादच् भूमार्थे । अनेकसम्बन्धपरतया सम्भाव्यमानेति यावत् । अयोगेति छेदे त्वनिर्द्धारितसम्बन्धविशेषा षष्ठी स्थानप्रयुक्तसम्बन्धपरा बोध्या । स्थानं प्रसङ्गः । दर्भाणां स्थाने शरैः प्रस्तरितव्यमितिवत् । अस्तेर्भूः समीपोऽनन्तरो वेति संशये तत्स्थाने उच्चारणीय इत्यर्थात्सामीप्यादिनिवृत्तिः । योगेति किम् । " ऊदुपधाया

गोहः" "शास इदङ्हलोः" इत्यादौ मा भूत्। अन्यथा गोहिशासोः स्थाने धातुमात्रस्योपधाया ऊदितौ स्याताम्।

यद्वा—स्थानेयोगेत्येकं पदम्। पूर्वपदे सप्तम्या तृतीयया वा बहुव्रीहिः। निपातनादलुगेत्वं वा। न च गोहः शास इत्यादावतिप्रसङ्गः। अनियमप्रसक्तौ नियमार्थमेव परिभाषाप्रवृत्तेः। उपधासन्निधानेन अवयवषष्ठीत्वनिर्णयादाकाङ्क्षाविरहात्। मार्गप्रश्ने वामदक्षिणपुरस्कारेण मार्गोपदेशेऽपि मार्गद्वैधस्थल एव तदुपस्थितेः।

भाष्यकृतस्त्वाहुः—लक्ष्यानुरोधादन्तरङ्गत्वात् स्थानिवद्वादेश इति ज्ञापकाच्च इष्टस्थले स्थानेयोगत्वव्याख्यानसम्भवान्नायमेतद्वाक्यार्थः, किं तु षष्ठ्यन्तमुच्चार्य्यमाणमेव स्थानेन युज्यते, न तु प्रतीयमानमित्येव। तदुच्यते—

निर्दिश्यमानस्यादेशा भवन्ति इति।

तेन "जराया जरस्" इत्यादौ जराशब्दान्तं यदङ्गं तदवयवस्य जराशब्दस्य जरसादेशो न तु निरित्यस्यापीति।

यत्तु जराशब्दोत्तरषष्ठ्या स्वप्रकृत्यर्थभूतजराशब्दनिष्ठमेव स्थानित्वं बोध्यते, न तु निर्जरादिशब्दनिष्ठम्। तस्य प्रकृत्यर्थत्वाभावात्। न च तदन्तपरिभाषया सोऽपि प्रकृत्यर्थ इति वाच्यम्। जराशब्दरूपस्याङ्गस्य स्थाने इत्यर्थमुपजीव्य तत्प्रवृत्त्या तदविरोधेन अवयवद्वारैव निर्जरादिशब्दानां स्थानित्वस्य बोध्यत्वात्। अत एव "उदोष्ठ्यपूर्वस्य" इत्यादावोष्ठ्येत्यादिकं पदार्थैकदेशे ऋकारादौ विशेषणम्। अत एव सागमकस्य नादेशः। प्रक्रियादशायाम् "अनागमकानां सागमका आदेशा भवन्ति" इत्यस्यानुचितत्वात्। स्थानिवद्भावे तु स्थानिबुद्ध्यैव कार्यप्रवृत्त्या न निर्दिश्यमानस्येतिन्यायबाधः।

अस्तु वा भाष्योक्तरीत्योक्तसूत्रनिष्पन्ना वाचनिकी "निर्दिश्यमानस्य" इति परिभाषा । सा च बहिरङ्गपदाङ्गाधिकारेत्यादीनां बाधिकेति ।

तच्चिन्त्यम् । तदन्तस्य स्थानित्वबोधनेऽपि जरारूपस्याङ्गस्य स्थानित्वबाधावश्यकत्वाद् उपजीव्यविरोधस्य दुर्वारत्वात् । वार्त्तिकमते जराशब्दान्तस्यैवाङ्गस्य स्थानित्वं व्यपदेशिवद्भावेन केवलजराशब्दस्याप्यादेशसिद्धेरिति सिद्धान्ताच्च । एवं निर्जरादिशब्दान्तर्गतजराशब्दस्याङ्गत्वाभावेऽपि तस्य स्थानित्वांशमादायोपजीव्यविरोधाभावस्य सुवचत्वात् । "उदोष्ठ्य" इत्यादौ तु विशेषणान्वयानन्तरमेव तदन्तविधिरिति सिद्धान्तात् । "अलोऽन्त्यस्य" "आदेः परस्य" इति तु द्वयमारम्भसामर्थ्यादस्य बाधकम् । "अनेकाल् शित् सर्वस्य" इत्यनेन सह त्वविरोधात्समुच्चयः । एवं च तन्त्रादिना स्फुटप्रतिपत्त्यर्थं प्रागुक्तार्थोऽपि बोध्यः ।

अत्र वदन्ति । "इको गुणवृद्धी" इतिवदयं योगः पदोपस्थापक एवास्तु । इह शास्त्रे अनिर्द्धारितसम्बन्धविशेषा षष्ठी स्थानेशब्देन युज्यते । स्थाने इति सप्तम्यन्तं पदं तत्रोपतिष्ठते इति । स्थानेयोगोऽस्या इति विग्रहः । एवम् "अलोऽन्त्यस्य" "ङिच्च" इत्यादावपि ।

# स्थानेऽन्तरतमः ४९ ।

प्रसक्तानां मध्ये सदृशतम आदेशः स्यात् ।

यदि त्वयं स्वतन्त्रो विधिः स्यात्तदा विधेयस्यादेशविशेषस्यानिर्देशात् दधिशब्दस्य दधिशब्द एवादेशः स्यात् ।तस्याप्यन्यः

स एवेत्यनवस्था स्यात् । प्रयोजनव्यतिरेकेण प्रवर्त्तमानस्य सकृत् प्रवृत्तौ नियामकाभावात् । तथा च पदमात्रस्य निवृत्त्युन्मुखत्वादर्थप्रत्यायनाय प्रयोगो न स्यात् । एवं विसं मुसलम् इत्यादौ समुदायस्थाने समुदाये आदेशे तन्मात्रस्यानादेशत्वेऽपि सकारस्य सकारादेशे षत्वापत्तिः । तस्मात् प्रकरणात्परिभाषेयमिति भाष्यम् । तच्च चतुर्द्धा—

तत्र स्थानतो यथा—सुद्ध्युपास्यः । मध्वरिः । धात्रंशः । लाकृतिः । इकारादीनां तुल्यस्थाना यादयः । यथासङ्ख्यपक्षेऽप्यविरोधादेतत्प्रवृत्तेः। दैत्यारिः श्रीशः इत्यादिकमप्युदाहार्यम्।

अर्थतो यथा—वातण्ड्ययुवतिः । "वतण्डाच्च" इत्यपत्ये यञ् । "लुक् स्त्रियाम्" इति लुक् । शार्ङ्गरवादित्वान्ङीन् । वतण्डी चासौ युवतिश्चेति विग्रहे "पोटायुवति" इत्यादिना समासः । "पुंवत्कर्मधारय" इति पुंशब्दातिदेशे वतण्डीशब्दस्यापत्यवाचिनोऽपत्यवाचक एव वातण्ड्यशब्द आदेशः ।

गुणतो यथा—पाकः । त्यागः । "चजोः" इति कुत्वेऽल्पप्राणस्याऽघोषस्य चकारस्य घोषवतो नादवतो महाप्राणस्य जकारस्य च यथाक्रमं तादृशावेव ककारगकारौ ।

प्रमाणतो यथा—अमुम् अमू अमून् । "अदसोऽसेः" इति विहित उकारो ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ उकारः । पुनः स्थानग्रहणादन्योऽपि वाक्यार्थः । ताल्वादिस्थाने योऽन्तरतमः तत्प्रयुक्तान्तर्यवानिति यावत् । प्रसक्तानां मध्ये स स्यादिति । तदुक्तम्—

यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीय इति ।

तेन चेता स्तोता इत्यादौ प्रमाणतोऽन्तरोऽप्यकारो न । वाक्यभेदे तमग्रहणस्य मानत्वात् । स्थानमात्रप्रयुक्तसादृ-

श्यविवक्षायां सादृश्यान्तरस्याप्रसक्त्या तद्व्यवच्छेदार्थस्य तमग्रहणस्यानुपयोगात् । तेन वाग्घरिरित्यादौ सोष्मणः सोष्माण इति द्वितीयानाम्, नादवतो नादवन्त इति च तृतीयानाम् प्रसक्तौ तमग्रहणादुभयवन्तश्चतुर्था भवन्ति । वर्गे वर्गे च प्रथमावघोषौ युग्मौ सोष्माणावनुनासिकोऽन्त्य इति बह्वृचप्रातिशाख्योक्त्या तेषां सोष्मत्वात् । शादय ऊष्माणः सस्थानेन द्वितीया हकारेण चतुर्था इति शिक्षान्तरम् । इत्थम्भूतलक्षणे तृतीया । हशषसाः खच्छादीनां द्वितीयानां सस्थानाः । यथा ते ऊष्माण एवं द्वितीया अपीत्यर्थः । फकारस्य सस्थान ऊष्मा नास्ति । तस्मात्तस्य विशेषत ऊष्मत्वं वक्तव्यम् । हकारेण चतुर्था इति । यथा हकार ऊष्मा एवं तेऽपीत्यर्थ इति हरदत्तः ।

न चैवम् इष्ट उप्त इत्यादौ आन्तर्यादर्धमात्रस्य यणः स्थाने तादृगेव इक् स्यादिति वाच्यम् । अर्द्धमात्रस्येकोऽप्रसिद्धेः । एतेन दध्यत्र सुध्युपास्य इत्यादौ मातृकद्विमातृकयोस्तादृगेव यण् स्यादित्याशङ्काऽप्यपास्ता । आपाद्यस्य लोकवेदयोरप्रसिद्धत्वात् ।

स्यादेतत् । संहितया पाठेऽन्तरतमे इति सप्तम्यन्तमेव छिद्यताम् । षष्ठीत्यनुवर्त्तते । अन्तरतमे स्थानिनि षष्ठी उपसंहर्तव्येति सूत्रार्थः । तेन "अकः सवर्णे" इत्यत्र विधेयस्य अन्तरतमे स्थानिनि षष्ठ्या उपसंहारादिष्टं सिद्धम् । स्थानशब्दस्य ससम्बन्धिकतया विधेयप्रतियोगिकस्यैवान्तरतम्यलाभात् । प्रथमान्तच्छेदपक्षे तु " वान्तो यि " इत्यत्र ओदौतोरिति स्थानिनिर्देशः कर्त्तव्यः स्यात् । एच इत्यनुवृत्तौ तु एज्मात्रस्य वान्तादेशः स्यात् । स्थानितोऽन्तरतमनिर्वृत्तौ तु एच इति षष्ठ्या वान्तादेशस्यान्तरतमे स्थानिनि ओकारौकाररूपे उपसंहारात्सिद्धम् । अत्र भाष्यम्—

एवं सति आदेशान्तरतमः स्थानी ग्राह्य इत्यर्थे ह्रस्वानामेव यण् स्यान्न तु दीर्घाणाम् । अर्द्धमात्रिकस्य मातृक एवान्तरतम इति तत्रेक इति षष्ठ्या उपसंहारात् । " ल्वादिभ्यः " " प्वादीनां ह्रस्वः " इत्यादिज्ञापकानुसरणे तु प्रतिपत्तिगौरवम् । " इको गुणवृद्धी " " अचो ञ्णिति " इति षष्ठ्योरपि विधेयगुणवृद्ध्यन्तरतमेषु इक्ष्वक्षु चोपसंहारे नेता लविता नायको लावक इत्यादिदीर्घान्तस्थले एव " सार्वधातुकार्द्धधातुकयोः " " अचोऽञ्णिति " इति गुणवृद्ध्योः प्रवृत्तिः स्यात् । चेता स्तोता चायकः स्तावक इत्यादौ न स्यात् । विधेययोर्द्विमातृकतया ह्रस्वस्य तदान्तरतम्याभावात् । आदेशतोऽन्तरतमनिर्वृत्तिरिति पक्षे तु न दोषः । स्थानिषष्ठ्या असंकुचितत्वात् । न च एज्मात्रस्य वान्तादेशापत्तिः । " एचोऽयवायावः " इति सूत्रे यथासंख्यान्तरतमपरिभाषयोः प्रवृत्तेरर्थाधिकाराश्रयणाद्यादृशो वान्तादेशः पूर्वं दृष्टस्तादृशो यकारादौ प्रत्यये भवतीति सूत्रार्थात् । तादृशश्च ओकारस्थानिकोऽव् औकारस्थानिक आव् चेति ।

यद्वा—वान्त इति त्याज्यम् । " क्षय्यजय्यौ " इति योगं विभज्य कण्ठतालव्यस्य चेद्भवति क्षिज्योरेवेति नियमं व्याख्याय चेयं नेयमित्यादावयादेशवारणात् । क्षिज्योः शक्यार्थ एवेति द्वितीयो योगः । तेनार्हाद्यर्थे तयोरपि नायादेशः । रायमिच्छति रैयतीत्यत्र तु रायिश्छान्दसः दृष्टानुविधिश्छन्दसि भवतीति भाष्यम् । क्यजन्तरैशब्द एवच्छान्दसः । अन्यादृशस्तु भाषायामपीति केचित् ।

क्यच् तु नास्ति गोसमानाक्षरनाम्तादिति वचनात् । अन्ये तु भाषायां रैशब्दप्रयोग एव नेत्याहुः इति कैयटः ।

नन्वेवमपि "नृनरयोश्च" इति नरशब्दे ङीन्संनियोगेन विधीयमाना वृद्धिः "अलोऽन्त्यस्य" इत्यन्त्यस्य स्यात् । यस्येति लोपे च कृते वृद्धिविधानवैयर्थ्यम् । नृशब्दमात्रार्थत्वे "नुर्वृद्धिश्च"इति न्यासापत्तिः । न च परत्वाद् यस्येति लोपे कृते प्रथमाकारस्य वृद्धिः । प्रत्ययसन्नियोगशिष्टत्वेन वृद्धेरन्तरङ्गत्वात् । न चाङ्गगुणविरोधन्यायेनान्तरङ्गपरिभाषां बाधित्वा परत्वाद् यस्येति लोपे कृते वृद्धिः, वचनसामर्थ्याद् वृद्ध्या लोपबाधे धर्मिबाधापत्तेरिति न दोष इति वाच्यम् । तथा ऽपि सप्तम्यन्तच्छेदस्यावश्यकत्वात् । तत्र हि स्थानितोऽन्तरतमनिर्वृत्तिरिति वृद्ध्यन्तरतमे स्थानिनि षष्ठ्या उपसंहारादकारस्य वृद्धिः । प्रथमान्तच्छेदपक्षे तु प्रकृतितोऽन्तरतमनिर्वृत्तिरिति अनन्तरतमादेव व्यावृत्तावपि स्थानिनियामकत्वाभावात् अलोऽन्त्यपरिभाषया रेफस्य स्यात् ।

अत्राहुः—सप्तम्यन्तच्छेदनिरासपरभाष्यप्रामाण्यान्नरशब्दपाठप्रत्याख्यानमेव तत्संमतम् । न च नरशब्दाज्जातिलक्षणे ङीषि नरीत्यापत्तिः । इष्टत्वात् । किन्नरीणां नरीणामिति दर्शनात् ।

यद्वा—नरशब्दो नियतपुल्लिङ्गः । नरीति प्रयोगस्तु पुंयोगलक्षणे ङीषि । तस्य यथान्यासेऽपि दुर्वारत्वात् ।

यद्वा—" नृनरयोः " इत्यत्र " अजाद्यतष्टाप् " इति सूत्राद्त इत्यनुवर्त्तते । " शार्ङ्गरवाद्यञ " इत्यादिशब्देन गणसूत्रस्याप्यस्य हृदयमानीतत्वात् । तच्च षष्ठ्या विपरिणतं नरशब्दे वैयधिकरण्येन सम्बध्यते, नरशब्दस्य योऽत् तस्य वृद्धिरिति । अतो न अलोऽन्त्यपरिभाषाप्रवृत्तिः ।

यद्वा—नर् इति रान्तं लुप्ताकारानुकरणम्, तस्य अः नरः

तस्य वृद्धिरिति चादु गणपाठाच्च ङीन् ।

यत्तु स्थानितोऽन्तरतमनिर्वृत्तिरित्याश्रित्य हरदत्तेन नारीति रूपं साधितम्, तद् "उपेयप्रतिपत्त्यर्था उपायाः" इति न्यायमाश्रित्येत्यविरोधः ।

भाष्ये त्वेतत् सूत्रमेव प्रत्याख्यातम् । सभायामास्यताम् इत्युक्ते हि पण्डिताः कवयः शूराश्च स्वसजातीयैः पण्डितादिभिरेव सह समासते, न तु सङ्करेण । एवं गवां सङ्घं गौर्धावति, अश्वोऽश्वानामिति तिर्यक्ष्वपि दृश्यते । तस्मात् प्रथमवाक्यार्थलाभो नास्य प्रयोजनम् । स्थानत आन्तर्यस्य बलवत्त्वमपि लोकात्सिद्धम् । भूयःसहचरितयोर्गवोरश्वयोर्वा सजातीयान्तरसंवलने सत्यपि कृशत्वपाण्डुत्वादिगुणसदृशानपि हित्वा स्थानसाम्यपुरस्कारेणैव परस्परापेक्षा दृश्यते । तथा च लोकतः सिद्धमिति ।

# उरण् रपरः ५० ।

ऋवर्णस्थानीयोऽण् प्रसङ्गावस्थायामेव रपरः स्यात् । र इति प्रत्याहारः । ऋ इति त्रिंशतः संज्ञा । आन्तरतम्यात् ऋकारस्थानीयो रपरः, ऌकारस्थानीयस्तु लपर इति व्यवस्था । कृष्णर्द्धिः । तवल्कारः ।

प्राञ्चस्तु ऋऌस्थानीयोऽणिति व्याचख्युः ।

यत्तु आ च आ च रलाविति विग्रहे उश्च उऌ च ऋलोरिति विग्रहे वा द्वन्द्वो दुर्लभः । विरूपाणामपि समानार्थानामेकशेषविधानादिति । तन्न । सूत्रस्थऋशब्दस्योभयपरत्वप्रदर्शनपरे वाक्ये ऋऌवर्णयोः परस्परग्राहकत्वस्यानभिमततया समानार्थकत्वाभावात् । शब्दस्वरूपमात्रपरत्वात् । "समाहा-

रसमूहयोरविशेषाद्" इति वार्त्तिके सर्वैस्तथैव व्याख्यानात् । अन्यथा " मिहिरारुणपूषण " इत्यादावप्येकशेषापत्तेः ।

इह वाक्यार्थचतुष्टयं सम्भवति। उः स्थाने रपरत्वविशिष्टोऽण् विधीयते इत्येकः । अणामनणां च प्रसङ्गेऽणेवेति नियमः, स च रपर इति वाक्यभेदेन रपरत्वविधिरिति द्वितीयः । ऋस्थानीयमणमनूद्य तस्य रपरत्वविधिरिति तृतीयः । प्रसङ्गावस्थायामेव रपरत्वं विधीयते इति चतुर्थः ।

तत्राद्ये इत्थं वचनव्यक्तिः। षष्ठीनिर्दिष्टमात्रस्य भवन्नादेशोऽन्तरतमः स्यात्, ऋवर्णस्य त्वण् रपर इति । ततश्च नाप्राप्तेषूदात्तादिषु विहितोऽण् तेषां बाधकः स्यात्। तथा च कृतिरित्यत्र "ञ्नित्यादिर्नित्यम्" इत्युदात्तो न स्यात् । प्रकृतं प्रहृतमित्यत्र " गतिरनन्तरः " इति प्रशब्दस्योदात्तत्वे शेषनिघातः " उदात्तादनुदात्तस्य " इति स्वरितश्च न स्यात् । नॄँः पाहीत्यत्रानुनासिको न स्यात् । सर्वत्र तत्तद्गुणावच्छिन्नस्य रपरस्याणः प्रसङ्गात् । ऋकारस्य चाण्त्वाभावात् । न च नॄनित्यत्र दीर्घोऽपि न स्यादिति कुतो नोक्तमिति वाच्यम् । " नॄन् पे " इति निर्देशात्तत्सिद्धेः ।

किं च कर्त्ता कारक इत्यत्र गुणवृद्धिबाधेन विहितोऽण् कदाचिदिकार उकारश्च स्यात् । अकार एवेतिनियमाभावात् । " ऋत इद्धातोः " "उदोष्ठ्यपूर्वस्य" इति प्रतिपदोक्तेषु इत्वोत्वादिषु च रपरत्वं न स्यात् । तेषामेतद्बाधकत्वात् ।

अथ द्वितीयः पक्षोऽस्तु। अणनणोः प्रसङ्गेऽणेवेति नियमात् कर्त्ता कारक इत्यादौ गुणवृद्ध्योर्दोषाभावात् । ननु ह्रस्व ऋकारस्य सर्वा वृद्धिरनन्तरतमा, वृद्धिमात्रस्य द्विमात्रत्वात्, दीर्घस्य तु सर्वाऽपि प्रमाणतोऽन्तरतमेति अविशेषादुभयस्थले

सकलवृद्धिप्रसंङ्गे ऽणेवेति नियमोऽस्तु । गुणस्थले तु ह्रस्वस्य ऋकारस्य कर्तेत्यादौ मात्रिकत्वादकार एवान्तरतमः, तरितेत्यादौ दीर्घस्य तु द्विमात्रत्वादेङेवान्तरतमः इति उभयत्राप्यणनणोर्व्यवस्थयैव प्राप्त्या उभयत्रोभयोरप्रसक्त्या नियमप्रवृत्त्यभावे दीर्घस्य ऋकारस्य विधीयमानो गुण एङेव स्यात् । ह्रस्वस्य त्वकारो भवन्नपि रपरो न स्यात् । अणनणोः प्रसक्तावणेवेति यो नियम्यते, तस्यैव द्वितीयेन रपरत्वाविधानात् । अतो गुणे दोषो दुर्वार इति चेत्, सत्यम् । स्थानेऽन्तरतमपरिभाषाया अवकाशः "चजोः कु घिण्ण्यतोः" इत्यादिः, एतस्यास्तु वृद्धिविधिः, गुणे तूभयप्रसङ्गे परत्वादियमेवेति दोषाभावात् । सत्यम् । उदात्तादिषु प्रतिपदोक्तेषु च दोषतादवस्थ्यात् ।

अथास्तु तृतीयः पक्षः । अन्तरतमपरिभाषासंस्कृतैरुदात्तादिविधिभिस्तत्तद्गुणावच्छिन्नस्य ऋकारस्यैव विधानात् तस्य चाण्त्वाभावेन रपरत्वप्रसक्त्यभावात् । प्रतिपदोक्तेषु इत्वादिष्वपि न दोषः । ऋकारस्थानीयाण्त्वस्य तत्रापि सत्त्वात् किरतीत्यादिषु रपरत्वसिद्धेः । मैवम् । गुणवृद्ध्योर्दोषस्य सत्त्वात् । कर्तेत्यत्र मात्रिकस्य ऋकारस्य मात्रिकत्वादकारे गुणे रपरत्वे च दोषाभावेऽपि तरितेत्यादौ द्विमात्रस्य दीर्घस्य स्थाने तादृशस्यैङ एव प्रसङ्गात् । वृद्धिस्थले तु पूर्वोक्तरीत्या वृद्धिमात्रस्य ह्रस्वान्तरतम्याभावात् दीर्घान्तरतम्याच्चोभयत्रापि त्रिविधवृद्धिप्रसङ्गे कारः तार इत्यादिसिद्धावपि पक्षे ऐचोऽपि प्रसक्त्या कायः कावः तायः ताव इत्यादेरनिष्टस्यापि प्रसङ्गात् ।

स्यादेतत् । पूर्वसूत्रे "अनान्तर्यमेवैतयोरान्तर्यम्" "सम्प्रयोगो वा नष्टाश्वदग्धरथवत्" इति भाष्यवार्तिककृद्भ्यामुक्त-

त्वाददुष्ट एवायं पक्षः । तथा हि—एकस्यान्तरतमा प्रकृतिर्नास्ति अपरस्याप्यन्तरतम आदेशो नास्ति अतोऽनुरूपप्रतिसम्बन्धिराहित्यरूपधर्मेणैवान्तरतम्यनिर्वाहः । न हि चतुर्विधमेवान्तर्यमिति नियमः । मुनित्रयानुक्तेः । प्रत्युत सोष्मणः सोष्माण इति भाष्यादौ स्वीकारात् । सम्प्रयोग इत्यादेस्त्वयमर्थः—"स्थानेऽन्तरतमः" इत्यस्य प्रत्याख्यानपक्षेऽपि उभयोरनुरूपप्रतियोगिराहितत्वात् परस्परापेक्षामूलकः स्थान्यादेशभाव इति। उच्यते । ऋत्वजात्यवच्छिन्नस्य स्थानिनोऽत्वजात्यवच्छिन्नस्य चादेशस्योक्तान्तरतम्यराहित्येऽपि व्यक्तिपुरस्कारेणान्तरतम्यपरीक्षायां दोषस्योद्भटत्वात् । ऋवर्णस्य मात्रिकस्य तादृशोऽकारोऽन्तरतमः, द्विमात्रस्य त्वेकारौकारौ इति अनुरूपप्रतियोगिकत्वस्य सुलभत्वात् । "स्वतन्त्रः कर्ता" इति निर्देशान्न विनिमयः । "ग्रो यङि" "अचि विभाषा" इत्यारम्भाच्च न विकल्प इति कल्पनेऽपि गौरवात् । तस्माच्चतुर्थो निर्दोषः । तदुक्तम्—

सिद्धन्तु प्रसङ्गे रपरत्वादिति ।

विधिवाक्यस्यैकवाक्यताविधानकाले एव अणो रपरत्वमित्यर्थः ।

ननु स्थानेशब्दस्यात्रानुवर्त्तमानस्य प्रसङ्गावस्थायामित्यर्थे ऋकारस्येति षष्ठ्याः स्थानमर्थो न स्यात् । अण् हि लक्षणान्तरेण विधीयते, न त्वनेन । तथा च "षष्ठी स्थानेयोगा" इति परिभाषा नोपतिष्ठतएव । विधौ परिभाषोपतिष्ठते नानुवादे इति न्यायात् । अत एव "उदीचामातः स्थाने यकपूर्वायाः" इत्यत्र स्थानेग्रहणम् । तथा च ऋकारस्य योऽण् स प्रसङ्गावस्थायामेव रपरः स्यादित्यर्थे ऋकारसमीपस्याप्यणो रपरत्वं स्या-

दिति चेन्न । द्वितीयस्यापि स्थानेशब्दस्यानुवृत्तेः । तथा चैके-नानुवादेऽपि स्थानसम्बन्धस्य सिद्धिः, द्वितीयेन तु प्रसङ्गावस्थायामेवेति कालविशेषस्य । "स्थानेऽन्तरतमः" इत्यत्र ताल्वादिपरत्वेन व्याख्यातस्यापि स्थानशब्दस्यात्र शब्दाधिकारेण प्रसङ्गपरतया व्याख्यानात् । तथा च स्थानेऽन्तरतमपरिभाषया कृतिरित्यादावृकारस्य ऋकार एव प्रवर्त्तते इत्यणः प्रसङ्ग एव नास्ति । गुणवृद्ध्योः प्राप्त्यवस्थायामेवार्णां रपरत्वप्रसक्त्या व्याख्यानतोऽन्तरतमौ अर् आर्इत्येतौ ऋकारस्यादेशौ भवतः, न तु प्रमाणतोऽन्तरतमावेङैचाविति न दोषः। नन्वेवमादेशस्यानेकाल्त्वात्सर्वादेशः स्यादिति चेन्न । ऋस्थानीयत्वोपजीवकेन रपरत्वेनोपजीव्यविरोधिनः सर्वादेशत्वस्य प्रवृत्त्यभावात् । तथा च पूर्वसूत्रे वार्त्तिकम्—

सर्वादेशप्रसङ्गस्त्वनेकाल्त्वात्, न वाऽनेकाल्त्वस्य तदाश्रयत्वादवर्णादेशस्याविघात इति ।

अणुग्रहणं किम् । अकङ् लोप आनङ् अनङ् रीङ् रिङ् एषां रपरत्वं मा भूत् । सौधातकिरित्यत्र "सुधातुरकङ् च" इति ङित्त्वादृकारस्य अकङ् । पैतृष्वसेय इत्यत्र "ढकि लोपः" इति ऋकारलोपः । होतापोतरावित्यत्र " आनङ् ऋतो द्वन्द्वे" इत्यानङ् । कर्त्तेत्यत्र "ऋदुशनः" इत्यनङ् । मात्रीयतीत्यत्र "रीङ् ऋतः" इति रीङ् । क्रियतइत्यत्र "रिङ् शयग्" इति रिङ् । न च ढकि लोपे रपरत्वप्रवृत्तौ ऋकारलोपविधिवैयर्थ्यम्, यणाऽपि तादृशरूपासिद्धेरिति वाच्यम् । सामर्थ्यादलोऽन्त्यविधिं बाधित्वा सर्वादेशत्वप्रसङ्गात् । न च होतापोतारा वित्यत्र रपरत्वेऽपि न क्षतिः, संयोगान्तलोपसंभवादिति वाच्यम् । तस्यासिद्धतया नलोपानुपपत्तेरिति कैयटः ।

यत्तु "संयोगान्तलोपे यणः प्रतिषेधः" "न वा झलो लोपाद्" इति पक्षद्वये तावद्रेफस्य लोपप्रसङ्ग एव नास्ति "नापि बहिरङ्गलक्षणत्वाद्" इति पक्षे उत्तरपदनिमित्तकस्यानङोऽन्तरङ्गसंयोगान्तलोपे कर्त्तव्येऽसिद्धत्वात् नकाररेफयोः श्रवणं स्यादिति दोषएव भाष्यस्य तात्पर्यमित्याहुः । तन्न । संयोगान्तलोपस्य संयोगपदोभयसंज्ञापेक्षत्वात् ।

न चोत्तरपदापेक्षायां पदसंज्ञापेक्षत्वमानङोऽपीति वाच्यम् । तस्य समासावयवमात्रस्यापेक्षितत्वात् । समासचरमभागस्याजादौ सुपि कुत्रापि पदसंज्ञानङ्गीकारात् । कौस्तुभेऽपि तथैव निर्णीतत्वात् । एवम् उदात्तादीनामपि ऋकाराणां रपरत्वं स्यादिति दिक् ।

स्यादेतत् । खट्वर्श्य इत्यादौ रपरत्वं न स्यात् । ऋमात्रस्थानिकत्वाभावात् । समुदायस्यैव तत्र स्थानित्वेनाश्रयणात् । न च "एकः पूर्वपरयोः" इत्यनेनोद्भूतावयवभेदस्य समुदायस्य निर्देशात् परस्परापेक्षयोरवयवयोरेव समुदायत्वादृकारस्थानीयत्वमक्षतमिति वाच्यम् । आनङोऽपि रपरत्वप्रसङ्गात् । अवयवस्य तत्राप्यण्त्वात् । ऋकारतदन्योभयस्थानिकस्यैव अणनण्स्वरूपस्यापि रपरत्वस्य दुर्वारत्वात् । तदुक्तम्—

अवयवग्रहणात्तदिति चेदादेशे रान्तप्रतिषेध इति ।

न च उरित्यृवर्णग्रहणात् वर्णग्रहणे तदन्तग्रहणाद् ऋवर्णान्तस्य स्थाने योऽण् तस्य रपरत्वं न त्वत्रेति वाच्यम् । कर्त्ता इत्यादौ तदसिद्धेः । अङ्गस्येति षष्ठ्या अन्त्येऽलि उपसंहारात् । ऋवर्णस्यैव गुणविधानात् । तस्य च ऋदन्तत्वाभावात् । न च व्यपदेशिवद्भावः । अर्थवत्त्वाभावात् ।

तस्मादेकादेशस्योपसंख्यानं कर्तव्यम् । मातुरित्यादौ "ऋत

उद्" इत्यस्य च प्रतिषेध इति चेन्न । एकादेशेऽवयवयोरेव स्थानित्वात् ऋस्थानित्वस्य सत्त्वात् । अत एव स्थानिभेदादादेशभेदो मा भूदिति तत्रैकग्रहणम् । अत एव लोके देवदत्तस्य पुत्रो देवदत्तायाः पुत्र इत्युभाभ्यां व्यपदेशः । मातुरित्यत्र रपरत्वेऽपि दोषाभावात् । "रात्सस्य" इति सलोपे रेफस्य विसर्जनीये च रूपसिद्धेः । न चैवं मातुः करोतीत्यत्र "इदुदुपधस्य चाप्रत्ययस्य" इति षत्वापत्तिः । कस्कादिषु भ्रातुष्पुत्रशब्दपाठेन एकादेशशास्त्रं निमित्तं यस्य ततः परस्य विसर्गस्य षत्वं न भवतीति ज्ञापितत्वात् ।

इदमप्यत्रावधेयम् । पूर्वसूत्रादन्त इत्यनुवृत्तौ अयं पूर्वान्तः । आदिरित्यनुवृत्तौ परादिः । उभयानुवृत्तौ त्वभक्त इति सम्भवति । यद्यपि रपर इत्यत्रान्यपदार्थप्राधान्यम्, तथाऽपि विधेयतया रेफस्य प्राधान्यात्तस्यैवान्तत्वं विशेषणमिति बोध्यम् । न च प्रसज्यमानस्यैवाणो रपरत्वविधानात् रेफमात्रस्य कथं पक्षत्रयशङ्केति वाच्यम् । तृतीयपक्षमाश्रित्यैतदुपपत्तेः । तत्रान्त्यं प्रकृत्य वार्त्तिकम्—

अभक्ते दीर्घलत्वयगभ्यस्तस्वरहलादिशेषविसर्जनीयप्रतिषेधः प्रत्ययाव्यवस्था चेति ।

गीः पूरित्यत्र दीर्घो न स्यात् । धातोः रेफान्तत्वाभावात् । रेफवकारान्तस्य पदस्येति व्याख्याने अग्निः वायुरित्यादावतिप्रसङ्गात् । न च रेफवकारान्तस्य पदस्येको धातोरित्यर्थः । प्रियग्रामणिः प्रियसेनानिरित्यादावतिप्रसङ्गात् । निजागिल्यतइत्यत्र "ग्रो यङि" इति लत्वं न स्यात् । ग्र इत्यस्यावयवषष्ठ्यन्तत्वात् । न चेयमानन्तर्ये षष्ठी । स्वर्जेगिल्यतइत्यत्राप्यापत्तेः । यदि यङाऽऽनन्तर्यं विशेष्यते,

यद्वा— ग्र इति पञ्चमीत्युच्यते, तदा न दोषः । गीर्यते पूर्यते स्वयमेवेत्यत्र " अचः कर्त्तृयकि " इति स्वरो न स्यात् । रेफेण व्यवधानात् । स्वरविधौ व्यञ्जनमविद्यमानवद्भवतीत्ययमपि न दोषः । एतेन " मा हि स्म ते पिपरुः " इत्यत्र " अभ्यस्तानामादिः " उदात्तः स्यादजादौ लसार्वधातुके इति स्वरोऽपि व्याख्यातः । ववृते इत्यादौ हलादिःशेषेण रेफनिवृत्तिर्न स्यात् । अभ्यासावयवस्यानादेर्हलस्तद्विधानात् । नार्कुटो नार्पत्य इत्यादौ यस्मात् सुप्तिङ्विधिस्तदादिसुबन्ते च रेफान्तस्य पदत्वाद्विसर्गः स्यात् । किरतो गिरत इति च न स्यात् । किरतीत्येकवचने हि नित्यत्वात्पूर्वं विकरणः । आङ्गन्त्वनित्यम्, अकृते विकरणे गुणस्य प्राप्तिः, कृते त्वित्वस्येति । द्विवचने तु द्वयोरपि नित्यत्वात्परत्वादित्वे रेफस्याभक्ततया धात्ववयवत्वाभावाद्विकरणो न स्यात् । धातोः परे तावतैव तद्विधानात् । न च विकरणात्परो रेफः । तथाऽपि ऋकारस्थानिकादणः परत्वानुपपत्तेः । न च परत्वं व्यवहितसाधारणम् । इष्टासिद्धितादवस्थ्यात् । पूर्वादित्वे तु "रोः सुपि" इत्यवधारणं कार्यम् । रोरेव सुपि नान्यस्य । सर्पिःषु धनुःषु इत्यादौ यथा स्यात्, गीर्षु पूर्षु इत्यादौ मा भूत् ।

अभक्तत्वेऽप्ययं दोषः । तदादिवचनात् प्रत्ययावधिकपूर्वभागस्यापि पदान्तत्वात् । परादित्वपक्षे तु सुभक्तत्वान्न पदान्तत्वम्, किं तु नार्कलिपारित्यत्र विसर्गापत्तिः । तदुक्तं भाष्ये—

कल्पिपदसंघातभक्तोऽसौ नोत्सहतेऽवयवस्य पदान्ततां बाधितुमिति ।

नृकल्पशब्दादिञि वृद्धिः । रेफस्तु प्रत्ययसमुदायस्य कल्पिशब्दस्यावयवो न तु कल्पमात्रस्य । तथा च कल्प-

शब्दे परे विधीयमाना पदसंज्ञा तदादिवचनाद्रेफान्तस्य भवतीति विसर्गः स्यात् । पद्यतेऽर्थोऽनेनेति व्युत्पत्त्या भाष्ये पदेति प्रत्ययस्योक्तेः । कल्पशब्दे परे व्यवस्थितस्यापि रेफस्य तदवयवत्वाभावात्तयोः पौर्वापर्यसद्भावादात्मन एवावयवभूतस्य पदान्तत्वविघातकत्वानुपपत्तेः । कल्पपदसंघातेति पाठे तु कल्पपदसंबन्धि यत्पदं नार्कलिपरिति तस्य पदस्य योऽवयवः प्रत्ययसंघातः कल्पिशब्दस्तद्भक्त इति व्याख्येयम् । तस्मादेतदर्थमप्युक्तनियम आरभ्यः ।

गीर्यतइत्यत्र " अचः कर्त्तृयकि " इति स्वरस्तु उपदेशेऽजन्तत्वव्याख्यानान्निर्बाधः । परादित्वपक्षे तु दोषानाह वार्त्तिककारः—

परादावकारलोप औत्वं पुक्प्रतिषेधः चङ्युपधाह्रस्वत्वमिटोऽव्यवस्थाऽभ्यासलोपोऽभ्यस्ततादिस्वरो दीर्घत्वं चेति ।

तथा हि—कर्ता हर्ता इत्यत्रातो लोपः स्यात् । न चोपदेशग्रहणानुवृत्तिः । धिनोतीत्येकवचने अकारलोपाभावेऽपि आद्गुणेन यद्वा उकारस्य गुणे पररूपेण सिद्धावपि धिनुतः कृणुत इत्यनुपपत्तेः । आर्द्धधातुकोपदेशे यदकारान्तमित्यर्थे तु न दोषः । चकार जहारेत्यत्र णल औत्वं स्यात् । " निर्दिश्यमानस्यादेशा भवन्ति " इत्ययं न दोषः । न च " आदेः परस्य " इति वचनाद्रेफस्य औत्वापत्तिः । णल इत्यनेन प्रयोगसमवाय्यकारव्यक्तिविशेषस्य आकारान्तादङ्गात्परस्यादेशप्रवृत्तेः । सरेफस्य त्वनुमीयमानस्य नादेशः ।

भाष्ये तु प्रत्याय्यप्रत्यायकयोरभेदविवक्षया षष्ठीनिर्दिष्टस्येत्युक्तत्वात् अकारमात्रस्य च रेफेण व्यवधानात् ।

यदि तु प्रत्ययस्येति लिटीति वोच्येत तदा स्यादापत्तिः ।

कारयतीत्यत्र आदन्तत्वात्पुक् स्यात् । अचीकरदित्यत्र "णौ चङ्युपधायाः" इति ह्रस्वो न स्यात् । रेफस्य परादित्वादाकारस्योपधासंज्ञाऽनुपपत्तेः । आस्तरितेत्यादौ नित्यत्वाद् गुणे रपरत्वे च कृते "नेड्वशि कृति" इतीटो निषेधः स्यात्, इट्प्रवृत्तौ वा रेफात्पूर्वमिट् स्यात् इति इष्टव्यवस्थादौर्लभ्यम् । उभयोरपि परादित्वात् । ववृते इत्यादौ हलादिःशेषो न स्यात् । अभ्यासानवयवत्वात् । " मा हि स्म ते पिपरुः " इत्यत्र लसार्वधातुकस्य उसो रेफादित्वेऽजादित्वाभावादभ्यस्तानामुदात्तत्वं न स्यात् । प्रकर्ता प्रकर्त्तुमित्यादौ " तादौ च निति " इति स्वरो न स्यात् । उपदेशे तकारादौ कृतीति व्याख्यानादयं न दोषः । गीः पूरित्यादौ अन्तरङ्गत्वाद्वलोपइत्वे रपरत्वे सुबाद्यवयवो रेफ इति स्वीकारे " रात्सस्य " इति सलोपे कृते तस्यासिद्धत्वाद्दीर्घो न स्यात् । तस्मात्पूर्वान्तपक्ष एव स्थितः । " रोः सुपि " इति नियमस्यारब्धतयाऽनापाद्यत्वात् ।

# अलोऽन्त्यस्य ५१ ।

स्थानषष्ठीनिर्दिष्टं यदुच्यते तत् तदन्त्यस्यालो बोध्यम् । त्यदादीनामः । सः । यः । " षष्ठी स्थानेयोगा " इति सूत्रस्यानुवृत्त्या स्थानषष्ठीलाभः । नन्वल इति प्रथमाबहुवचनान्तं व्याख्याय आदेशविशेषणमल्ग्रहणमस्तु, तथा च अलात्मक आदेशोऽन्त्यस्य भवतीत्यर्थाद् " अनेकाल्शित् सर्वस्य " इति सूत्रेऽनेकाल्ग्रहणं न कर्त्तव्यमिति लाघवम् । मैवम् । अन्त्यविशेषणमल्ग्रहणमिति पक्षेऽपि ङिच्च ङिदेवानेकालन्त्यस्य भवति, न त्वङिदिति नियममाश्रित्य तत्प्रत्याख्यानसंभवात् ।

विरजीकरोतीत्यादौ " अरुर्मनश्चक्षुश्चेतोरहोरजसाम् " इति विहितस्य लोपादेशस्यानल्त्वात्सर्वादेशत्वापत्तेः । एवं " पादशतस्य "ढे लोप" इत्यनयोर्बोध्यम् । अन्तस्यापि पदस्यादेशप्रसङ्गाच्च । तथा च "पदस्य" इत्यधिकृत्य विधीयमानं "वसुस्रंसु"इति दत्वं परमानडुद्भ्यामित्यत्र सर्वस्याप्यनुडुच्छब्दस्य स्यात् । अनेकाल्ग्रहणं च पक्षद्वयेऽप्यावश्यकम् । अन्यथा "अतो भिसः" इति पञ्चमीनिर्देशेऽनेकालप्यादेशः " आदेः परस्य " इति वचनादादेरेव स्यात् । न च " आदेः परस्य " इत्यत्राल इति प्रथमान्तमनुवर्त्य परस्य विहितोऽल् आदेः स्यादिति व्याख्याय ऐसि दोषो निवार्यः, तस्यानल्त्वादिति वाच्यम् । बहोर्भावो भूमेत्यत्र इमनिच इकारस्य लोपानुपपत्तेः । तत्सत्त्वे च अपवादप्रतिषेधेन परत्वात्सर्वादेशसिद्धेः ।

अयं चात्रार्थः—स्थानेयोगत्वेन निर्णीता या षष्ठी साऽनेन अन्त्येऽलि अनुसंह्रियते ।

यद्वा—निश्चितो य आदेशः सोऽन्त्यस्यालः स्थाने इति । षष्ठीमात्रस्यानुसंहारे टित्किन्मितामप्यन्त्यावयवत्वप्रसङ्गात् । ततश्च " आर्द्धधातुकस्य " इति विहित इट् तृच ऋकारात्पूर्वम्, दापयतीति पुक् च आकारान्त्यावयवः स्यात् । ततश्च "अर्थवतो ह्यागम"इत्ययुक्तं स्यात् । अत एव"षष्ठी स्थानेयोगा" इत्यनेन सह अस्यैकवाक्यत्वम् । इह पाठस्तु "ङिच्च" इत्यादेः संबन्धार्थः । तथा च "शास्त्रे या षष्ठी साऽन्त्येऽलि सा च स्थानेयोगैवेत्यर्थः, स्थानेयोगत्वेन ज्ञानानन्तरम् अन्त्येऽलीत्यनुसंहारस्वीकारे प्रतिपत्तिगौरवात्" इत्यपि नाशङ्क्यम् । टित्किन्मित्सु दोषतादवस्थ्यात् ।

तथा हि—" आद्यन्तौ टकितौ " " मिदचोऽन्त्यात्परः "

वात् "तस्मादित्युत्तरस्यादेः" इत्येव न्यासोऽस्तु । तत्र च आदेरिति पृथग् वाक्यम्। "उत्तरस्य" इत्यनुवर्तते । सा च षष्ठी स्थानेयोगा । अनुवादे परिभाषाऽनुपस्थानेऽपि स्थाने इत्यस्यानुवृत्त्याऽन्यत्र फलाभावाद्वा तल्लाभात् । तथा च पञ्चमीनिर्देशेन यत्कार्यं तदुत्तरस्य सम्बन्धि उत्तरस्य स्थाने विधीयमानमादेर्बोध्यमित्युभयैकवाक्यतयाऽर्थः । वाक्यभेदसामर्थ्याच्च "गाङ्कुटादिभ्यः" इत्यादौ द्वितीयांशवैकल्येऽपि प्रथमवाक्यार्थमात्रस्य प्रवृत्तिः । न च वाक्यभेदे मानाभावः । "उत्तरस्यादेः" इत्यसमासनिर्देशस्य मानत्वात् । अन्यथा उत्तरादेरित्येवावक्ष्यत् । न चैवम् प्रथमांशविकलस्य द्वितीयांशस्यापि स्वातन्त्र्येण प्रवृत्त्यापत्तौ "नित्यं ङितः" इत्यत्र सकारान्तस्य ङिदुत्तमस्य लोपः स्यादिति विधाने भवेव भवेम भूयास्व भूयास्मेत्यादौ उत्तमपुरुषेकारवकारादेर्लोपः स्यात्, न तु अलोऽन्त्यपरिभाषयाऽन्त्यस्य सकारस्येति वाच्यम् । द्वितीयवाक्यार्थबोधकाले प्रथमवाक्यार्थबोधस्योत्पत्त्या तत्त्यागे मानाभावेन प्रथमांशविकलस्य प्रवृत्त्यनुपपत्तेः । प्रत्यासत्त्या पूर्ववाक्यप्रापितस्यैवादेशस्य ग्रहणाच्च । तथा च "तस्मादित्युत्तरस्य" इति सूत्रएव आदेरिति पदमधिकं पाठ्यम् । "आदेः परस्य" इति च त्याज्यमित्यर्थः । न च "अनेकाल्शित् सर्वस्य" इति सूत्रात्पूर्वमेवोक्तन्यासोऽस्त्विति वाच्यम् । निर्दिष्टग्रहणानुवृत्त्यनापत्तेः । उक्तरीत्या तु "तस्मिन्निति निर्दिष्टे पूर्वस्य" इति सूत्रात्तदनुवृत्तिरिति वैषम्यम् । न च तस्याप्यत्रैवापकर्षोऽस्त्विति वाच्यम् । तथाऽपि "ङिच्च" इत्यादिसाहचर्येण सप्तमीपञ्चमीनिर्देशे षष्ठीनिर्दिष्टयोः पूर्वपरयोः स्थाने कार्यं बोध्यमित्यर्थप्रसङ्गात् । "सार्वधातुकार्द्धधातुकयोः" "गाङ्कु-

टादिभ्यः" इत्यादौ च दोषस्योद्भटत्वात् ।

अन्ये तु तथा सति "अनेकाल्शित् सर्वस्य" इत्यनेन "तस्मादित्युत्तरस्य" इत्यस्य बाधः स्यात्, परत्वात । ततश्च ब्राह्मणा अष्टावित्यत्र अष्टन्शब्दात् पूर्वयोर्जश्शसोरौशादेशापत्तिरिति वदन्ति ।

अपरे तु नेदं युक्तम् । जश्शसभ्यामाक्षिप्तप्रकृतेरङ्गस्य च संनिधानादष्टन्नित्यस्यैव ग्रहणात् । "सर्वस्य" इत्यस्य प्रवृत्तावपि पूर्वस्य परस्य वेति सन्देहावश्यकत्वात् "तस्मादित्युत्तरस्य" इति परिभाषाप्रवृत्तौ बाधकाभावात् । "सर्वस्य" इत्यनेन एकादेशमात्रप्रतियोगिकत्वम्, "तस्मादित्युत्तरस्य" इत्यनेन च पूर्वप्रतियोगिकत्वं व्यावर्त्यमिति विषयभेदेन विरोधाभावाच्च । "तस्मिन्" इति "तस्माद्" इति च सूत्रयोरविषये "सर्वस्य" इत्यस्य चरितार्थत्वाविरहाच्च । "जराया जरस्" "अस्तेर्भूः" इत्यादौ "तस्मिन्" इत्यस्य "परस्मैपदानां णलतुसुस्" इत्यादौ च "तस्माद् इत्यस्य प्रवृत्तेरित्याहुः ।

तत्रेदं चिन्त्यम् । "अष्टाभ्य औश्" इत्यत्र "तस्मादित्युत्तरस्य" इत्यस्यानुपस्थानेऽष्टाभ्यः पूर्वस्य परस्य च जसादेरौशिति वाक्यार्थे द्वयोरपि तदादेशः स्यात् । द्वयोरपि स्थानित्वानिर्णये सन्देहाभावात् "तस्माद्" इत्यस्य प्रवृत्तेर्दुर्घटत्वात् । विषयभेदोऽप्ययुक्तः । अत्र ह्यादेरित्यंशस्य विषयसद्भावात्तत्प्रवृत्तौ तेन सह "सर्वस्य" इत्यस्य विरोधोऽस्त्येव । प्रथमांशात्विकलस्यादेरित्यस्य प्रवृत्त्यनभ्युपगमात्प्रथमांशेन सह "सर्वस्य" इत्यस्य पृथग्विरोधस्यानपेक्षितत्वात् । न च तदेकवाक्यतापन्नस्य प्रथमांशस्य विशिष्टबाधात् "सर्वस्य" इत्यनेन बाधेऽपि पुनः स्वतन्त्रस्यैव प्रवृत्तिरिति वाच्यम् । "गाङ्कुटादिभ्यः" इत्या-

दौ द्वितीयांशविषयाभावात्तत्र प्रवृत्त्यैव चरितार्थस्य तस्य स्वैकवाक्यतापन्नद्वितीयांशबाधोत्तरं स्वातन्त्र्येण प्रवृत्तौ मानाभावात्। एतेन सूत्रद्वयाविषये "सर्वस्य" इत्यस्य चारितार्थ्याभावोद्भावनमप्यपास्तम् । तदेकवाक्यतापन्नाद्वितीयांशनिर्मुक्तस्थले "अस्तेर्भूः" इत्यादौ चरितार्थतायाः स्पष्टत्वात् । केवलस्य "तस्मादित्युत्तरस्य" इत्यस्य "सर्वस्य" इत्यनेन समावेशेऽपि क्षत्यभावात् । तद्विशिष्टद्वितीयांशनिर्मुक्तविषये प्रवृत्त्यैव प्रकृतदोषनिर्वाहात् । तस्मात् " तस्मादित्युत्तरस्यादेः " इति न्यासेऽपि दोषाभाव इति प्राप्ते उच्यते–

एवं सत्यादेरित्यंशः "सर्वस्य" इत्येतद्बाधकः स्यात्, परत्वात्। ततश्च औशित्यादेशः अकारमात्रस्य स्यात् । "सर्वस्य" इत्यस्य " जराया जरस् " इत्यादौ अस्य च " बहोर्लोप" इत्यादौ-चरितार्थत्वात् ।

# अनेकाल्शित् सर्वस्य ५४।

अनेकालादेशः शिच्चेत्यन्यतरः सर्वस्य स्यात् । अस्तेर्भूः । भविता । इदम इश् । इतः । अत्र "हलन्त्यम् " इतीत्संज्ञायां प्रत्ययत्वस्यानपेक्षणात्सर्वादेशत्वं विनाऽपि शित्त्वसिद्धेः । अनेकाल्ग्रहणमपवादप्रतिषेधार्थमिति प्रागुक्तम् ।

यत्तु "जश्शसोः शिः" इति शित उदाहरणम् । तच्चिन्त्यम् । सर्वादेशत्वव्यतिरेकेण शित्त्वस्यैवासिद्धेः । सर्वादेशत्वे हि स्थानिवद्भावेन प्रत्ययसंज्ञा प्रत्ययैकदेशस्य प्रत्ययत्वाभावेन तदादेशस्य प्रत्ययत्वानुपपत्तेः । ततो "लशक्वतद्धिते " इतीत्संज्ञा । ततो लोपः । अनेकाल्त्वसम्पादनेन शकारस्य चरितार्थत्वात् । अत एकाल्त्वेऽपि न सर्वादेशत्वक्षतिः । उपजीव्यवि-

रोधात् । तस्मादनेकाल्त्वादेवात्र सर्वादेशः । न चैवमिशादौ अपि अनेकाल्त्वादेव सिद्धौ शिद्ग्रहणवैयर्थ्यम् । "नानुबन्धकृतमनेकाल्त्वम्" इति ज्ञापनार्थत्वात् । तेन "दिव उत्" "अर्वणस्तृ" इत्यादौ न सर्वादेशत्वम् ।

अनेकान्ता अनुबन्धा इति पक्षे तु नोक्तज्ञापनं सफलम् । शिद्ग्रहणं तु " घ्वसोरेद्धावभ्यासलोपश्च" इत्यत्र "लोपः श्" इति छेदे लोपस्य सर्वादेशत्वसम्पत्त्यर्थं संज्ञायां कृतस्य शित्त्वस्य तत्रानुपयोगेन संज्ञिन्युपयोगकल्पनात्, ङ्मुटष्टित्त्ववत् ।

वार्तिकमते तु " नानर्थकेऽलोऽन्त्यविधिः" इत्येव सिद्धम् । न चानभ्यासविकारइति पर्युदासः । " भृञामित्" इत्यादि भावरूपस्यैव विकारस्योपादानात् । लोपस्य त्वतथात्वात् । अत एव " लोपागमवर्णविकारः" इति पस्पशायां भाष्यं सङ्गच्छते । " द्वौ चापरौ वर्णविकारनाशौ" इति च पृषोदरादिसूत्रे कैयटः ।

यत्तु एकान्तपक्षेऽपि उपदेशावस्थायामेवान्तरङ्गत्वात्संज्ञा, उच्चरितप्रध्वंसिनां स्मर्यमाणानामेवानुबन्धाना कार्यनिर्वाहकत्वमिति सिद्धान्तात् । तथा च तृ औत् इत्यादेरादेशस्य प्रवृत्तिवेलायामेकाल्त्वान्न सर्वादेशत्वप्रसङ्ग इत्युक्तज्ञापनस्य वैयर्थ्यं, सुतरां शिद्ग्रहणस्य । न च इश् ईश् इत्यादीनामपि सर्वादेशत्वानापत्तिः । तत्र पूर्वं लोपाप्रवृत्तेः शकारोच्चारणसामर्थ्यात् । न च सर्वादेशे कृतेऽपि प्रयोजनाभावाच्छकारस्य इत्संज्ञाऽनापत्तिरिति हरदत्तोक्तदोषप्रसङ्गः । लोपस्यैव प्रयोजनत्वात् । न चोच्चारणवैयर्थ्यम् । सर्वादेशत्वसंपादनेन सार्थक्यात् । तस्मादिह सूत्रभाष्यकृतोरभिप्रायश्चिन्त्य इति । तच्चिन्त्यम् । स्मर्यमाणैरेवानुबन्धैः कार्यान्तरस्येवानेकाल्त्वस्यापि प्रसक्तेर्दुर्वारत्वात् ।

यदपि "नानेकाल्शिद्" इति पठित्वा अन्त्यस्यादेः इति चानुवर्त्यानुसंहारद्वयानिषेधे "सर्वस्य" इति शक्यमकर्त्तुमिति, तदपि चिन्त्यम्। प्रतिपत्तौ गौरवस्य दुर्वारत्वात्। तथा हि—स्थानषष्ठीनिर्देशेन विधीयमानं कार्यं विनिगमकाभावादेव सर्वस्य सिद्धम्। तद्बाधित्वा "अलोऽन्त्यस्य" इत्यनेनान्त्यस्य विधीयते। तस्य च "आदेः परस्य" "अनेकाल्" इति द्वावपवादौ। "अनेकाल्" इत्यस्य "ङिच्च" इत्यपवाद इति वस्तुस्थितिः। उक्तरीत्या न्यासे च अनेकाल् शिच्चादेशोऽन्त्यस्यादेश्च न स्यादिति वाक्यार्थेऽवयवमात्रप्रतियोगिकत्वनिषेधेऽपि पुनर्न्यायसिद्धस्य सर्वप्रतियोगिकत्वस्यानुसन्धानमावश्यकम्। अतो लाघवात् "सर्वस्य" इत्येव युक्तम्॥

इति श्रीसिद्धान्तसुधानिधौ प्रथमस्याध्यायस्य
प्रथमे पादे सप्तममाह्निकम्॥

# स्थानिवदादेशोऽनल्विधौ ५५।

आदेशः स्थानिना तुल्यं वर्तते । स्वयं तत्कार्यं लभते परकीयं च तत् प्रवर्तयतीति यावत् । कार्यभाक्त्वेन सादृश्याश्रयणात् । कार्यभाक्त्वं च तत्प्रतियोगित्वनिमित्तत्वोभयरूपम् । केन काभ्यामित्यादौ किमः कादेशोऽङ्गकार्यं लभते । वृक्षायेत्यादौ तु ङेर्यादेशोऽङ्गस्य दीर्घं प्रवर्तयतीति विवेकः । उपदेशप्रवृत्तिव्यतिरेकप्रयोजकव्यतिरेकप्रतियोगी धर्मश्चेत्स्थान्यलोऽसाधारणो न भवतीत्यर्थः ।

ननु वृक्षायेत्यत्र स्थानिन एकारस्य अल्रूपत्वात्स्थानिवत्त्वं न स्यादिति चेन्न । अत्र हि यादेशस्य सुप्त्वाभावप्रयुक्तः "सुपि च" इत्येतत्प्रवृत्त्यभावः । तदर्थश्चातिदेशानुसारः । सुप्त्वं च यद्यपि एकाररूपेऽलि वर्त्तते, तथाऽपि अलोऽसाधारणं न भवति । भ्यामित्यादौ समुदायएव सुप्त्वस्य पर्याप्त्याऽल्मात्रवृत्तित्वाभावात् । नन्वलतिरिक्तवर्णावृत्तित्वं तथाऽप्यक्षतम् । तादृशवर्णाप्रसिद्धिश्चेति चेन्न । अल्त्वपर्याप्त्यधिकरणताव्याप्यस्वपर्याप्त्यधिकरणताकत्वस्य तदर्थत्वात् । न हि यत्र सुप्त्वपर्याप्त्यधिकरणता भ्यामादिसमुदाये तत्राल्त्वपर्याप्त्यधिकरणता । अल्त्वस्य प्रत्येकव्याप्तत्वात् ।

ननु दीर्घत्वे यञादावित्यलाश्रयणात् तथाऽपि स्थानिवत्त्वं न स्यात्, मैवम् । अत एव स्थानिसम्बन्धित्वेन अलो विशेषितत्वात् । न ह्यत्र यादेशस्य यञादित्वव्यतिरेकप्रयुक्त उपदेशप्रवृत्तिव्यतिरेकः । तस्य स्वत एव यञादित्वात् । एतेन "अरु-

दितामरुदितमित्यादौ "रुदादिभ्यः सार्वधातुके" इतीडागमोऽपि व्याख्यातः । उपदेशप्रवृत्तिव्यतिरेकप्रयोजकव्यतिरेकप्रतियोगिनः सार्वधातुकत्वस्य उक्तालमात्रवृत्तित्वाभावात्, वलादित्वस्य च तामाद्यादेशेषु स्वाभाविकत्वात् । न चाविशेषादादेशसंबन्धिनोऽप्यल आश्रयणे उक्तनिषेधः स्यादिति वाच्यम् । अतिदेशेन सहैकवाक्यतामापन्नस्य प्रतिषेधस्यातिदेशिकीं प्राप्तिं प्रत्येव प्रवृत्तेः । अत एव "गुरुवद् गुरुपुत्रे वर्त्तितव्यमन्यत्रोच्छिष्टभोजनात्पादोपसङ्ग्रहणाच्च" इत्यतिदेशे उच्छिष्टभोजनादिनिषेधोऽतिदेशप्राप्तएवोच्छिष्टभोजनादौ प्रवर्त्तते, न तूपदेशप्राप्ते। गुरुपुत्रे गुरुत्वस्यापि सद्भावे तन्निमित्तकस्य तद्भोजनादेः प्रवृत्तेः । न च तत्रातिदेशस्यांशतोऽपि नाकाङ्क्षा, अत्र तु सार्वधातुकत्वाभावादिडागमप्रवृत्त्यर्थं तदपेक्षावश्यकत्वमिति वाच्यम् । अंशांशे उपजीव्योपजीवकभावस्याप्रयोजकत्वात् । प्रदीव्येत्यादौ तु ल्यबादेशस्य स्वतो वलादित्वाभावात् तत्प्रयुक्तोऽप्युपदेशप्रवृत्त्यभावः इति वलादित्वार्थमप्यातिदेशानुसारात्प्रतिषेधः । विशेषणतयाऽप्यलाश्रयणे तत्प्रवृत्तेर्वक्ष्यमाणत्वात् । न चैवं कित्त्वमपि न लभ्येतेति वाच्यम् । अनेकान्तपक्षेऽनुबन्धानां स्थान्यवयवाल्त्वाभावात् । एकान्तपक्षेऽप्यन्तरङ्गत्वात्पूर्वमेव लोपात् आदेशकाले तदसम्बन्धात् । अत एव "न ल्यपि" इति निषेधः सङ्गच्छते । अन्यथा कित्त्वाभावादेवेत्वाप्रसक्तौ तद्वैयर्थ्यात् । इदमेव विशेषातिदेशेऽपि ज्ञापकम् । अन्यथा सामान्यातिदेशे विशेषस्यानतिदेशात् प्रदीव्येत्यादौ कित्त्वातिदेशो न स्यात्। कित्त्वं हि न क्त्वासामान्यधर्मः। "न क्त्वा सेट्" इति क्वचित्तत्प्रतिषेधात् । अत एव "आशंसायां भूतवच्च" इत्ययं लुङ एवातिदेशो, भूतसामान्ये तस्य विहितत्वात्,

न तु भूतविशेषविहितयोर्लुङ्लिटोरिति सिद्धान्तः ।

प्राञ्चस्तु अनल्विधाविति निषेध एव विशेषातिदेशे ज्ञापक इत्याहुः ।

यत्तु व्यूढोरस्केन क इष्ट इत्यादौ विसर्गत्वयत्वयोर्व्यापकं यद् अट्त्वं हश्त्व च तयोर्निषेधेन चरितार्थोऽनल्विधाविति निषेध इति । तच्चिन्त्यम् । विसर्गत्वयत्वापेक्षया अट्त्वं हशूत्वं च विशेषधर्माविति तत्प्रसक्तेरेव विशेषातिदेशं विनाऽनुपपत्तेः । नन्वट्त्वहश्त्वे सामान्यधर्मौ, विसर्गत्वयकारत्वावच्छिन्नसकलवर्णव्यक्तिवृत्तित्वे सति तदतिरिक्तवृत्तित्वात् । विसर्गत्वयत्वे तु विशेषधर्मौ, अट्त्वहश्त्वावच्छिन्नो यो विसर्गयकारातिरिक्तवर्णस्तन्निष्ठात्यन्ताभावप्रतियोगित्वादिति चेन्नैवम् । न ह्यत्र तद्रूपावच्छिन्नकिञ्चिद्व्यक्तिनिष्ठात्यन्ताभावाप्रतियोगित्वरूपसामान्यत्वम्, तद्रूपावच्छिन्नकिञ्चिद्व्यक्तिनिष्ठात्यन्ताभावप्रतियोगित्वरूपं च विशेषत्वं विवक्षितम् । मानाभावात् ।

किं त्वतिदेशवाक्ये वतिप्रकृत्यर्थतावच्छेदकत्वं सामान्यत्वम् । ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमित्यादौ तथैव बोधात् । तथा च विसर्गवत्सकार इति पर्यवसितातिदेशवाक्ये विसर्गत्वादेरेव तथात्वात् अट्त्वादेर्नातिदेशः । स्थानित्वादेशत्वाभ्यां सूत्रे तत्तद्व्यक्तीनामनुगमेऽपि अतिदेशवाक्यानां स्थान्यादेशभेदेन भिन्नत्वात् ।

यत्तु कित्त्वं क्त्वासामान्यधर्मो न भवतीति, तन्न । "न क्त्वा सेट्" इत्यनेन कित्कार्यनिषेधेऽपि ककारस्य इत्संज्ञाया अनिषेधात् । अन्यथा तत्र ककारश्रवणापत्तेः । न च ककारस्यैवातिदेश्यत्वात् कित्कार्यप्रवर्तकत्वं न क्त्वासामान्यधर्म इति दोषतादवस्थ्यम् । ब्राह्मणत्वपुरस्कारेण प्रवृत्तानामपि धर्माणां

ब्राह्मणत्वावच्छेदेन प्रवृत्तिनियमाभावात् पतितब्राह्मणादावभावात्। बाधवशात्फलानुपधानेऽपि तत्तत्कार्यप्रयोजकरूपावच्छिन्नत्वं तत्रास्त्येवेत्यपि तुल्यत्वात् । तस्माद्वृक्षायेत्यादौ स्थानिवद्भावो भवत्येवेति सिद्धम् ।

यद्यपि कार्यकालपक्षे यादेशे सुप्संज्ञाया एवातिदेशः । तस्या अपि शास्त्रीयत्वात् । तत्र चाल्विधित्वशङ्कैव नास्ति । ततः "सुपि च" इत्युपदेशेनैव दीर्घसिद्धिः । तथाऽपि यथोद्देशपक्षमाश्रित्यैतदुक्तम् ।

अथ वत्करणं व्यर्थम् । परत्र परशब्दप्रयोगे विनाऽपि वतिं तदर्थप्रत्ययात् । "असंयोगाल्लिट् कित्" इत्यादौ, मुखं चन्द्र इत्यादौ लोके, मासमग्निहोत्रं जुहोतीत्यादौ दर्शनान्तरे च तथा स्वीकारात् । न चादेशस्थानिपदयोः सामानाधिकरण्ये आदेशस्य स्थान्यादेशो भवतीति वाक्यार्थपर्यवसानसंभवादादेशस्य स्थानिरूपत्वापत्तिः । आदेशविधिवैयर्थ्यात् । न च वचनद्वयप्रामाण्याद्विकल्पः । "वा लिटि" इत्यस्य वैयर्थ्यात् । न च चक्षिङो लिट्येव ख्याञादेशविकल्प इति नियमार्थं तत् । "विभाषा लुङ्लृङोः" इत्यादौ विभाषाग्रहणवैयर्थ्यात् । अप्राप्तविभाषात्वेन ख्याञादेशविधानमात्रादेव सिद्धेः । अस्तिभूभ्यां रूपद्वयसिद्धौ "अस्तेर्भूः" इत्यादिवैयर्थ्याच्च ।

अत्राहुः—तथात्वे स्थानी आदेशस्य संज्ञा स्यात् । संज्ञासूत्राणां प्रस्तावात् । ततश्च "आङो यमहनः" इत्यात्मनेपदं वधेरेव स्यान्न तु हन्तेः । न च स्वरूपस्यापि ग्रहणम् । "अशब्दसंज्ञा" इति निषेधात् । न च तथा सत्यादेशस्य प्रथमनिर्देशापत्तिरुद्देश्यत्वादिति वाच्यम् । "व्यवहाराय नियमः" इति पक्षे संज्ञाया एवोद्देश्यत्वात् । न चैवं वत्ग्रहणमेव कुर्यादिति वा-

ख्यम् । वध हिंसायामिति भौवादिकस्यापि ग्रहणापत्तेः । स्थानिन आदेशसंज्ञेत्यर्थेऽपि "अस्यतिवक्तिख्यातिभ्योऽङ्" इत्यत्र ख्यातिपदेन चक्षिङ एव ग्रहणापत्त्या समचाक्षिष्टेत्यत्राङ् स्यात्, अख्यतेत्यत्र तु न स्यादित्यनिष्टं दुर्वारम् ।

अथैवं चक्षिङ् इत्येव ब्रूयादनुबन्धनिर्देशात् यङ्लुग्व्यावृत्तेरिति चेत्, सत्यम् । तथाऽपि गाङ्कुटादिसूत्रे "गाङः" इतीङो ग्रहणाय स्थानिमात्रग्रहणे इङित्येव वाच्यत्वात् । "गमेरिट् परस्मैपदेषु" इत्यत्र तु इण् गतौ इङ् अध्ययने इक् स्मरणे इत्येतेषामेव ग्रहणं स्यात् । स्थानिनां बहुतया विपरीतगौरवापत्त्याऽऽदेशग्रहणस्य स्वरूपतो गमेर्ग्रहणे लिङ्गत्वायोगात् । न चैवं प्रकरणान्तरएवेदं सूत्रमारभ्यताम्, वत्करणपरित्यागाधीनलाघवानुरोधादिति वाच्यम् । तथा सत्यादेशपदग्रहणावश्यकत्वे तस्यानुमानिकादेशसङ्ग्रहार्थत्वानुपपत्तेः। काममतिदिश्यतां वा सच्चासच्चेति वक्ष्यमाणस्यापि वत्करणं विनाऽनुपपत्तेश्च ।

स्यादेतत् । एवं सत्यन्यत्र संज्ञाप्रकरणे वतिं विना कथमतिदेशलाभः, कित्ङित् इत्यादाविति चेन्मैवम् । "न क्त्वा सेट्" इति निषेधेन कित्त्वस्य संज्ञात्वाभावसिद्धेः । तस्य कित्संज्ञाया अप्राप्ततया निषेधानर्हत्वात् । न च "मृडमृद" इत्यादिना प्रसक्ताया निषेधः, वचनद्वयप्रामाण्याच्च विकल्पोऽस्त्विति वाच्यम् । "मृड" इत्यादौ वावचनेनैव तत्सम्भवात् । "निष्ठा शीङ्" इत्यादिवैयर्थ्याच्च । तत्र केनापि कित्संज्ञाया अप्राप्तेः । अत एव ङित् इत्यप्यतिदेशः, कित्साहचर्यात् । तस्य संज्ञात्वे ग्रहिज्यादिसूत्रेऽस्यैव ग्रहणापत्त्या वावश्यतइत्यत्र सम्प्रसारणप्राप्त्यभावात् "न वशः" इति निषेधवैयर्थ्यापत्तेः ।

"क्ङिति च" इत्यत्र किति ङितीत्यर्थावश्यकतया संज्ञास्वरूपानुच्चारणात् उक्तसंज्ञाया अग्रहणात्। "गाङ्कुटादिभ्यः" इत्यत्र कुटादिग्रहणवैयर्थ्याच्च। "बहुगण" इत्यत्र तु महासंज्ञाकरणानुपयोगादतिदेशः, "किकिनौ लिट् च" इत्यादौ तु संज्ञाप्रकरणाभावादिति दिक्।

नन्वादेशग्रहणं व्यर्थम्। स्थानिशब्दस्य ससम्बन्धिकतया स्थानिवदित्येतावतैव लाभात्, पितृवदधीतइत्युक्ते पुत्रवत्। सत्यम्। तथा सति "अस्तेर्भूः" इत्यादेः प्रत्यक्षस्यैव आदेशस्य स्थानिवत्त्वं स्यात्, न त्वानुमानिकस्य तेस्तुरित्यादेः। आदेशग्रहणसामर्थ्यात्तूभयत्र स्थानिवद्भावः। तथा चैकदेशविकृतस्योपसंख्यानमनारभ्यमिति लाघवम्। तथा हि—"एरुः" इत्यत्रेकारोकाराभ्यां स्थान्यादेशाभ्यां तदन्तौ तावनुमीयेते। तथा च तेस्तुरिति फलितोऽर्थः। न च इकारमात्रस्योत्वेऽप्येकदेशविकृतस्यानन्यत्वात्पदसंज्ञा भविष्यतीति वाच्यम्। अर्थवत्येव स्थान्यादेशभावविश्रामात्। स्थानं प्रसङ्गरूपस्तस्य चानर्थकेऽनुपपत्तेः। प्रत्यायनार्थस्य प्रयोगस्यार्थवत्येव सम्भवात्। "च्लेः सिच्" इत्यादौ तदभावेऽपि सम्भवतस्त्यागायोगात्। तदुक्तं वार्त्तिककृता—

सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।
एकदेशविकारे हि नित्यत्वं नोपपद्यते॥

पदेत्यर्थवत्परम्। तथा च वस्तुतो विकारो नास्त्येव। किन्तु तादृशप्रयोगेऽन्यादृशः प्रयोक्तव्य इति शास्त्रार्थे स्थान्यपगमः आदेशोपजनश्चेति बुद्धिमात्रमिति भावः। यद्वार्तिकम्—

कार्यविपरिणामाद्वेति।

कार्यपदं ज्ञानपरम्। तथा च तद्विधिप्रयुक्तव्यतिरेकप्रति-

योगित्वं स्थानित्वम्, तद्व्यतिरेकप्रयोजकविधिविधेयत्वं चादेशत्वमिति फलितोऽर्थः ।

अथैवमपवादेऽप्युत्सर्गकृतं स्यात् । अन्यप्रसङ्गेऽन्यविधानस्य तत्रापि सत्त्वेन स्थान्यादेशभावसत्त्वात् । तथा च कप्रत्ययान्तादप्यणन्तत्वप्रयुक्तो ङीप्स्याद्, एवमन्यत्रापीति चेद् अत्र वार्त्तिकम्—

सिद्धं तु षष्ठीनिर्दिष्टस्य स्थानिवद्वचनादिति ।

"षष्ठी स्थानेयोगा" इत्यतः षष्ठ्यनुवृत्तेरित्यर्थः। अपवादस्य च षष्ठीनिर्दिष्टस्थाने विध्यभावात् । "नाभि नभं च" इत्यादौ षष्ठ्यर्थे प्रथमा । विश्रवणरवणेत्यादयस्तु प्रत्ययविषया भिन्ना एव शब्दाः । विश्रवःशब्दात्तु न प्रत्ययोऽनभिधानात् । एतेन वृद्धिसंज्ञासूत्रे षष्ठीनिर्दिष्टस्य स्थाने आदेशा भवन्तीति भाष्यं यथाश्रुतमेव व्याख्यातम् । कैयटेन तु स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वमित्येवंपरतया व्याख्यातम् । तस्यायमाशयः—

"सनाद्यन्ता" इति सूत्रे भाष्यकृतोक्तं स्थानिवदित्यत्र षष्ठीग्रहणं निवृत्तम् । न चापवादेऽप्युत्सर्गप्रसङ्गः । शबाद्यपवादानां श्यनादीनां शित्करणेन तदभावज्ञापनादिति । अन्यथा सनाद्यन्तसूत्रप्रत्याख्यानानुपपत्तेरिति । एतत्सूत्रेऽप्येवम् ।

अथ पित्त्वनिवृत्त्यर्थं शित्त्वमस्तु । ननु नित्त्वादेव तत्सिद्धिः । तद्ध्याद्युदात्तार्थम् । स्थानिवद्भावात्पित्त्वे तु विकरणस्यापि तथात्वादनुदात्तत्वे "तास्यनुदात्तेन्ङिददुपदेशाद्" इति लादेशसार्वधातुकस्यानुदात्तत्वे धातुस्वरेणैव परिशेषादाद्युदात्तत्वं स्यात् । दिवादिगणेऽनेकाचो धातोरभावात्तत्र धातुस्वरेणान्तोदात्तत्वप्राप्तावाद्युदात्तार्थं नित्त्वमिति वक्तुमशक्यत्वात् । न च वावृतु वर्त्तने इति धातुरनेकाच् । तत्र वाशब्दस्य श्यन्वि-

कल्पार्थकतया धात्वनन्तर्भावात् ।

ततो वा नृत्यमाना सा रामशालां निरैक्षत ।

इति भट्टिप्रयोगे इवार्थे वाशब्दमाश्रित्य कामयमानेवेत्यर्थात् । न च भूवादिपाठादेव तत्सिद्धिः । "वृद्भ्यः स्यसनोः" इत्याद्यन्तर्गणकार्यार्थतयाऽप्युपपत्तेः । मैवम् । ताच्छील्यादौ चानशि प्रकृतेराद्युदात्तार्थतया नित्त्वस्य सार्थक्यात् । तत्र लादेशत्वाभावादनुदात्तस्याभावे चित्स्वरादन्तोदात्तप्राप्तेः । न चैवं श्यनो नित्त्वेऽपि चित्स्वरस्य दुर्वारत्वम् । नित्स्वरस्य सतिशिष्टत्वात् । न च "अन्यत्र विकरणेभ्यः" इति पर्युदासः । "सार्वधातुकाः सप्तम्यस्तदन्तसप्तम्यः" इति विकरणान्तस्यायं स्वरो, न तु विकरणस्येति तदप्रवृत्तेः । नन्वेवं "दाबेवायं न दैबस्ति" इतिघुसंज्ञासूत्रस्थभाष्यविरुद्धम् । दायमान इति शप्यन्तोदात्तम्, श्यनि त्वाद्युदात्तमिति फलभेदापत्त्या दिवादिपाठस्य दुर्वचत्वात् । मैवम् । अनभिधानात् इह चानशेव नास्तीति ।

यद्वा—आद्युदात्तत्वमेवेष्टम् । "यथोत्तरं मुनीनां प्रामाण्यम्" इति स्वीकारात् । उक्तभट्टिप्रयोगाद्वाशब्दो धात्वन्तर्भूत इति मते तु तस्याद्युदात्तविषयकतया स्पष्टमेव चरितार्थत्वम् । न हि चानशि आद्युदात्तत्वं लभ्यते । पर्युदासस्य विकरणप्रयुक्तस्वरमात्रविषयकत्वमिति "आत्ममाने खश्च" इतिसूत्रस्थभाष्यकैयटसिद्धत्वात् । खशन्तइव चानशन्तेऽप्यन्तोदात्तत्वस्य दुर्लभत्वात् ।

यत्त्वत्र सूत्रे कैयटेनोक्तम्—दायमान इति चानशि प्रकृतेराद्युदात्तार्थं नित्त्वमिति, तद् अभ्युच्चयमात्रम् । तस्मान्नियमार्थं शित्त्वं पित्त्वनिवृत्त्यर्थमिति, कथं तस्यापवादे उत्सर्गकृतं नेति ज्ञापकत्वमिति पूर्वपक्षः ।

अत्र कैयटः—लक्ष्यानुरोधात्सामान्यापेक्षज्ञापकमेव शित्त्व-

माश्रीयते, न तु नियमार्थमिति ।

यद्वा—कापवादस्य टकः किंत्वमुक्तेऽर्थे प्रमाणम् ।

अनल्विधाविति किम्। तेन तस्मात्तस्यत स्मिंश्च विधौ मा भूत् । अला विधौ यथा-महोरस्केन।सकारस्य स्थानिवद्भावेन विसर्जनीयस्यादसुपदेशाण्णत्वं स्यात् । अलः परस्य विधौ यथा—द्यौः प्रन्थाः सः । औत् आत् अकारश्चेत्येतेषां हल्स्थानीयत्वेन "हल्ङ्याब्" इति सुलोपः स्यात् । अलो विधौ यथा—द्युकामः । "दिव उद्" इत्युकारादेशस्य स्थानिवत्त्वेन वकाररूपत्वाद् "लोपो व्योः" इति लोपः स्यात् । न चोत्वविधानसामर्थ्यम् । अहर्विमलद्यु इत्यादौ वल्परत्वाभावे चरितार्थत्वात् । अलि परतो विधौ यथा—क इष्टः। इकारस्य स्थानिवद्भावेन सोर्हशूपरत्वात् " हशि च " इत्युत्वं स्यात् । स इत्यत्र त्वकारस्य स्थानिवत्त्वे हल्परत्वात्सोर्लोपः स्यात् । उक्तानेकसमासलाभार्थं च विधिग्रहणम् । न चानल् इत्येवोच्यतां साधुत्वार्थं प्रथमाप्रयोगेऽपि तदर्थस्याविवक्षितत्वात् । यद्वा—अल इत्युच्यताम् । अनुवादतया स्थानेयोगाभावात्षष्ठ्याः सम्बन्धसामान्यार्थकतया उक्तविभक्त्यर्थोपसंग्रहसिद्धेरिति वाच्यम् । अप्राधान्येन अलाश्रयणे स्थानिवत्त्वनिषेधार्थं विधिपदोपादानात् । तेन प्रदीव्येत्यादौ वलादेरित्यार्द्धधातुकान्यपदार्थविशेषणतयाऽलाश्रयणेऽपि न स्थानिवत्त्वम् । अन्यथा " हशि च" इत्यादौ प्राधान्येन यत्रालुपात्तस्तत्रैव तन्निषेधात् । विधिग्रहणे त्वलाश्रयो विधिरल्विधिरिति- उत्तरपदलोपाश्रयणात् विशेष्यतया विशेषणतया वाऽलाश्रये निषेधप्रवृत्तिः । आश्रीयतइत्याश्रयः, एरच् । "अलमाश्रयते" इति भाष्यं त्वर्थप्रदर्शनार्थं, कर्मण्यणः प्रसङ्गात् । अलाश्रयपरत्वादाश्रयशब्दस्य

गतार्थत्वादप्रयोग एव लोप इति कैयटः ।

नन्वेवं स्थान्यनुबन्धकार्याणामपि निषेधापत्त्या प्रदीव्ये-त्यादौ कित्त्वं न लभ्येतेति चेन्मैवम् । अनेकान्तत्वपक्षे तेषां स्थान्यल्त्वाभावात् । एकान्तत्वपक्षेऽपि पूर्वमेव लोपात् । “न ल्यपि” इति लिङ्गाच्च । अन्यत् प्रागुक्तम् ।

स्यादेतत् । तत्स्थानापन्नस्तद्धर्मं लभतइति न्याये नैव गतार्थत्वादिदं सूत्रमनारभ्यम् । अत एव नीवारेषु व्रीहिधर्मा अवघातादयः प्रवर्तन्ते । मैवम् । व्रीहीनवहन्तीत्यादौ व्रीह्यादिप-दानामपूर्वसाधने लाक्षणिकतया तदपूर्वसाधनत्वान्नीवारादौ तत्प्रवृत्तावपि “आङो यमहनः” इत्यात्मनेपदस्य हन्तिस्व-रूपमात्रविषयकतया वधादेशे प्रवृत्त्ययोगात् । “स्वं रूपं श-ब्दस्य” इति परिभाषितत्वात् । अन्यथा आतृणेढीत्यादावपि प्रसङ्गात् ।

स्यादेतत् । अस्तु ज्ञापकादेव गतार्थं सूत्रम् । “युष्मद-स्मदोरनादेशे” इत्यत्रानादेशग्रहणेनादेशः स्थानिवदित्यस्य “अदो जग्धिः” इति सूत्रे कितीत्यनेनैव सिद्धे ल्यब्ग्रहणेन चानल्विधावित्यंशस्य ज्ञापयितुं शक्यत्वात् । अत एव विशेषण-तयाऽप्यलाश्रयणे न स्थानिवदित्यस्यापि सिद्धिरिति । स-त्यम् । उत्तरसूत्रे स्थानिवदादेश इत्यस्यावश्यकतया योगविभा-गेन तदारम्भः, अर्थापत्त्यनुसारे गौरवात् । अनल्विधावित्यपि स्पष्टार्थम्, उत्तरसूत्रे द्वितीयविधिग्रहणानुवृत्त्यर्थं च । फलस्य तत्रैव वक्ष्यमाणत्वात् ।

स्यादेतत् । निमित्तशास्त्रव्यपदेशरूपतादात्म्यकार्याण्यति-देशभेदाः स्युः। पूर्ववत्कर्मवदादिवत्तृज्वत्पराङ्गवद्गुणिवद्दिति क-

मात्वट् । " पूर्ववत्सनः " इति निमित्तातिदेशः । यद्यपि ब्राह्मणादेरग्रभोजननिमित्तस्य ब्राह्मणत्वादेः क्षत्रियादावतिदेशोऽशक्यः, तथाऽपि " पूर्ववत् " इति प्रकृतिगतं ङित्त्वं हि न सन्नन्तेऽतिदिश्यते, किं तु प्रकृतिगतमेव सन्व्यवधानेऽप्यात्मनेपदं प्रवर्त्तयतीत्येतावता निमित्तातिदेशव्यवहारः । न चायं कार्यातिदेश एवेति वाच्यम् । चिक्रंसते प्रचिक्रंसते इत्यादाविट्प्रसङ्गात् । निमित्तातिदेशे तु क्रमिरेव सना व्यवहितोऽप्यात्मनेपदप्रयोजक इति " स्नुक्रमोरनात्मनेपदनिमित्ते " इति नियमाभेद् । फलोपहितनिमित्तस्यैव तत्र ग्राह्यत्वात् । शास्त्रातिदेशः "कर्मवत्कर्मणा" इत्यत्र पाक्षिकः । व्यपदेश "आद्यन्तवद्" इति । एकस्मिन्नादित्वान्तत्वप्रकारकव्यवहारेऽतिदिष्टे तत्तत्सूत्रैरेव कार्यसिद्धेः ।

तथा च प्राञ्चः—आद्यन्तवद्व्यपदेशो, निमित्तम् "पूर्ववत्सन" इति। रूपातिदेशस्तृज्वत् इति। क्रोष्टुशब्दस्थाने क्रोष्टृशब्दस्य विधानात् । तादात्म्यातिदेशः "सुबामन्त्रिते पराङ्गवत्स्वरे" इति । "यत्ते दिवो दुहितर्मर्तभोजनम्" इत्यत्र दिवोदुहितरिति समुदाये आमन्त्रितनिघातप्रवृत्तेः । कार्यातिदेशो " गोतो णित् " इत्यादि । तदेवं षोढाऽतिदेशे कार्यातिदेशोऽयमित्यत्र किं नियामकमिति। मैवम् । "सिद्धन्त्वात्मनेपदेन समानपदस्थस्येट्प्रतिषेधाद्" इतिवार्त्तिकरीत्या पूर्ववदित्ययमपि कार्यातिदेशः । क्रमेरात्मनेपदस्य च समानपदस्थलउक्तनियमप्रवृत्तिः । आत्मनेपदं तु प्रक्रंस्यतइत्यादौ "प्रोपाभ्यां समर्थाभ्याम् " इत्यनेन प्रचिक्रंसतइत्यादौ "पूर्ववत्सनः" इत्यनेन इति विशेषेऽप्येकपदस्थत्वस्य तुल्यत्वादुक्तनियमप्रवृत्तेः । आद्यन्तवदित्ययमपि तथा। हरदत्तादिस्वारस्यात् । कुरुते कुर्वे इत्यादौ "आ-

घन्तव्यपदेशेऽपि अन्त्योऽच् आदिर्यस्येति बहुव्रीह्यर्थस्याभावात् टिसंज्ञाविरहे एत्वानुपपत्तेः कुर्वीतइत्यादिस्थलीयस्य टेरेत्वाख्यकार्यस्यातिदेशादेव तत्रेष्टसिद्धेः ।

शास्त्रातिदेशोऽपि पाक्षिक एव । तादात्म्यातिदेशस्तु आदेशेन स्थानिनोऽपहाराद् बाधितः । तादात्म्यप्रतियोगिनोः समानकाल एव तत्प्रवृत्तेः । रूपातिदेशे त्वादेशविधिवैयर्थ्यम् । विकल्पस्य पूर्वोक्तरीत्याऽसम्भवात् । तस्मात्प्राधान्यात्कार्यातिदेश एवायमिति स्थितम् ।

न्यासकारस्तु व्यपदेशातिदेशः संज्ञापक्षे पर्यवसन्नः । स च तत्करणसामर्थ्यादेव नेत्याह । अत्र हरदत्तः—

"संज्ञापक्षे वधेरेवात्मनेपदं स्यान्न तु हन्तेः । शब्दसंज्ञात्वात् "स्वं रूपम्" इत्यस्याप्रवृत्तेः । एवं केन कस्मादित्यादावङ्गकार्यादीनि न स्युरिति दोषद्वयम् । व्यपदेशातिदेशे तु "स्वं रूपम्" इति हन्तिग्रहणम्, तद्व्यपदेशातिदेशाच्च वधेरपि । एवं स्थानिनिष्ठानां धात्वङ्गादिव्यपदेशानां काद्यादेशेऽनिदेशात्तत्कार्यसिद्धिरिति वैषम्यात् न तथा" इति । अत्र वार्तिकानि—

तस्य दोषः-तयादेशउभयप्रतिषेधः । जात्याख्यायां वचनादेशस्थानिवद्भावप्रतिषेधः । ङ्याब्ग्रहणेऽदीर्घः । आहिभुवोरीट्प्रतिषेधः, वध्यादेशे वृद्धितत्वप्रतिषेधः इड्विधिश्च । आकारान्तान्नुक्‌षुक्प्रतिषेधः । लोडादेशशाभावजभावधित्वहिलोपैत्वप्रतिषेधः । त्र्यादेशे स्रन्तस्य प्रतिषेधः । आम्विधौ च स्वरे वस्वादेशे प्रतिषेधः । गोः पूर्वत्वणित्त्वात्वस्वरेषु । करोतिपिबत्योःप्रतिषेधः ।

तस्य स्थानिवदादेश इति लक्षणस्य । तत्र प्रथमवार्तिके यद्वक्तव्यं तत्सर्वादिसूत्रएवोक्तम् । द्वितीयमपि व्यर्थम् । न च व्रीहिभ्य इत्यत्रैकवचनस्थाने बहुवचनादेशविधानात्स्थानिवद्भा-

वात् "घेर्ङिति" इति गुणापत्तिः । अर्थातिदेशस्यैव तत्रोक्तत्वात् ।

तृतीयस्य त्वयमर्थः—निष्कौशांविः अतिखट्व इत्यत्र ङ्याब्ग्रहणात्सुलोपः प्राप्तो निषेध्यः स्यात् । तस्मान्ङी ई आ आप् इति प्रश्लिष्य दीर्घेति प्रत्याख्येयम् । अतिखट्वेनेत्यादावपि नातिप्रसङ्गः । आपो ग्रहणे सर्वत्राकारप्रश्लेषात् । न चैवमप्यतिखट्वायेत्यत्र याटः प्रसङ्गः । स्वाश्रयस्यात्वस्य स्थानिवद्भावेन चाप्त्वस्य सत्त्वादिति वाच्यम् । आबन्तं यदङ्गं ततः परस्य याडिति व्याख्यानात् । प्रत्ययग्रहणे यस्मात् स विहितस्तदादेरेव ग्रहणात् । उपसर्जनस्त्रीप्रत्यये तदादिनियमसत्त्वात् । अतिखट्वेत्येतत्समुदायस्य आबन्तत्वाभावात् । खट्वाइत्यस्याङ्गत्वाभावात् । अतिखट्वशब्दादेव तत्र सुबुत्पत्तेः । तथा चाङ्गत्वाबन्तत्वयोः सामानाधिकरण्याभावान्न दोष इति सिद्धम् । अत एवातिकारीषगन्ध्यापुत्र इत्यादौ सम्प्रसारणं न । हल्ङ्यादिसूत्रे तु विहितविशेषणाश्रयणे सेत्यादावव्याप्तिः । यः स इत्यादावतिव्याप्तिश्चेति न प्रश्लेषवैयर्थ्यम् । वार्तिकमतेऽपि "याडापः" इत्यादावाकारप्रश्लेषावश्यकत्वात् । अन्यथाऽतिखट्वायेत्यादावङ्गाधिकारात्समाधानेऽपि जरसा नसे पृते इत्यादौ दोषस्य दुर्वारत्वात् । सुतामिच्छन्सुतीरित्यादौ सुलोपापत्तेश्च ।

यद्वा—आकारमपि प्रश्लिष्य तत्सामर्थ्यान्मध्ये ह्रस्वतामापन्नस्य वारणमिति बोध्यम् ।

चतुर्थवार्तिकमपि व्यर्थम् । न चात्थेत्यत्राऽऽहादेशस्य स्थानिवद्भावेन "ब्रुव ईट्" अभूदित्यत्र अस्त्यादेशभुवः "अस्तिसिचोऽपृक्ते" इतीट् च स्यादिति वाच्यम् । "आहस्थः" इति झलि परे थत्वविधानाज्ज्ञापकात् । न च ईटि कृतेऽपि भूतपूर्व-

गत्या झलादित्वात् थादेश इति वाच्यम् । आथादेशस्यैव विधानापत्तेर्लाघवात् । तिबाद्यादेशानां णलादीनामपि भूतपूर्वगत्या झलादित्वात् तत्रापि थादेशस्य दुर्वारत्वात् । द्वितीयदोषस्यापि "अस्तिसिचोऽपृक्ते" इत्यत्र द्विसकारकनिर्देशेन सकारान्तादेवास्तेः परस्यापृक्तसार्वधातुकस्य ईडागमविधानमिति वारणात् ।

स्यादेतत् । अस् इत्यनन्तरं सकारप्रश्लेषे धातुत्वाभावात्तिब् न स्यादिति माधवोक्तदोषापत्तिः । धात्वन्तःपातिना सकारेण सिचोऽन्वयानर्हतया सिज्निमित्तकस्य ईटः प्रसङ्गश्च । न चैवमस्तेः सकारान्तत्वेन विशेषणवैयर्थ्यम् । तथाऽपि स्वतन्त्रे भवतौ दोषस्य तादवस्थ्यात्। एतेन सिच् अस् च सिचस् समाहारद्वन्द्वे सौत्रः पञ्चमीलोपः । भत्वान्न कुत्वजत्वे । अस्ति विद्यमानं च तत्सिचस् चेति कर्मधारयः। तेन लुप्तात्सिचो भूभावेनापहृतादस्तेश्च परस्य नेति कल्पनं प्रत्युक्तम् । रूपसिद्धावपि भाष्योक्तेरनिर्वाहात् । अत एव सिचोऽल्पाच्कत्वाद्बहुविषयतयाऽभ्यर्हितत्वाच्च पूर्वनिपातप्राप्तावपि तदकरणं तन्त्रादिना विद्यमानसिच इत्यर्थलाभार्थम् । तिप्रयोगस्वारस्याच्च । अन्यथा सिचस्भ्यामित्येव ब्रूयात् । न चासत्यस्यत्योरतिप्रसङ्गः । विकरणव्यवधानेन ताभ्यां परस्यापृक्तसार्वधातुकस्यासंभवादिति माधवोक्तमप्यपास्तम् ।

अत्र वदन्ति । अस्तिसिचमूस् इतिच्छेदः । सान्तादस्तेः न तु कृतभूभावात् सान्तात्सिचः श्रूयमाणादिति यावत् । न चैवं "सिचोऽपृक्ते" इति संहितानुपपत्तिः । द्वितीयस्य संयोगान्तलोपात् संयोगान्तं यत्पदन्तस्येति पक्षे तदभावेऽपि संयोगान्तस्य पदान्तस्येति पक्षे सौलभ्यात् । तस्याप्याकराख्ढत्वात् । न च

तस्यासिद्धत्वाद्रोरुत्वानापत्तिः । "संयोगान्तलोपो रोरुत्वे" इति सिद्धकाण्डे पाठात् । एतन्निर्देशस्यैव च तद्वार्त्तिकार्थे मूलत्वात् । यद्वा—माऽस्तु संयोगान्तलोपः द्वयोरेव सकारयो रुत्वे कृते "अतो रोः" इत्यनेन द्वयोरप्येक एव उकारः, पशुवेकत्ववद्विधेयविशेषणस्यैकत्वस्य विवक्षितत्वात् । न चोकारद्वयेऽपि सवर्णदीर्घानन्तरमाद्गुणो व्याख्येय इति वाच्यम् । एकपदाश्रयत्वेनान्तरङ्गत्वात् सिच उ इत्यत्र गुणस्यैव सवर्णदीर्घं बाधित्वा प्रसङ्गात् । न च सकारद्वयस्याप्येक एव रुर्भवत्विति वाच्यम् । तद्विधौ पदस्येत्यनुवृत्तेरेकपदान्तत्वाभावात् । द्वितीयसकारस्य पृथक्पदत्वात् । न च पूर्वरुकारात्परो नाकारो द्वितीयात्तु न पूर्व इति कस्याप्युत्वं न स्यादिति वाच्यम् । रोरिति जातिनिर्देशोपगमात् । तत्र चोक्तनिर्देशस्यैव मानत्वात् । न च परत्वाद् "हशि च" इति पूर्वस्यैव उत्वापत्तिः । रुत्वस्यासिद्धतया परत्वाभावात् । न चाश्रयात्सिद्धत्वम् । स्थान्यंशे तथात्वेऽपि निमित्तांशे तदभावात् । तकारभिन्नस्यापि हशः सम्भवेनान्यथाऽनुपपत्त्यभावादिति ।

अत्रेदं वक्तव्यम्—द्वितीयः सकारः प्रथमान्तः पञ्चम्यन्तो वा निर्विभक्तिको वा । नाद्यः । सिच इति पञ्चम्यन्तविशेषणत्वानुपपत्तेः । न द्वितीयः । छान्दसत्वापत्तेः । नान्त्यः । पदत्वाभावे रुत्वानुपपत्तेः । एतेन संयोगान्तलोपोऽपि निरस्तः । एवं सिचः सकारान्तत्वेन विशेषणमपि व्यर्थम् । "अस्तिसिचोऽपृक्ते" इति द्विसकारको निर्देशः । अस्तेः सकारान्तादिति भाष्यकारैरस्तेरेव तद्विशेषणस्योक्तत्वात् । वार्तिकेऽपि भ्वादेशस्यैव ईट्प्रसक्तिप्रतिषेधयोरुक्तत्वात् । श्तिपः पूर्वं सकारप्रश्लेषएव भाष्यतात्पर्यात् । श्तिपः सौत्रत्वादुपपत्तेः । न चैवं सिचः प-

रत्वमाश्रित्य ईडागमापत्तिः । "गातिस्था" इति सूत्रे बहुलग्रहण-मनुवर्त्य तस्य एवकारसमानार्थत्वं चाश्रित्य सिचो लुगेव भवति इति व्याख्यानात् स्थानिवद्भावनिषेधोपपत्तेः । एतेन पूर्वोक्तरीत्या सिचस् इति समाहारे तदुपरि स् इति छेदमाश्रित्य अस्तिग्रहणप्रत्याख्यानपरतयाऽपीदं भाष्यं योजयितुं शक्यमित्यपि परास्तम् । भत्वपञ्चमीलोपयोरुभयत्र छान्दसत्वकल्पने गौरवाच्च । एतेन जातिनिर्देशे इदमेव प्रमाणमिति निरस्तम् । तादृशनिर्देशएव मानाभावात् । वर्णग्रहणे जातिग्रहणमित्यस्य तु नायं विषयः । रोः इति समुदायाश्रयणाद् । द्वयोरुत्वमप्यनुपपन्नम् । रुत्वस्यासिद्धत्वात् । न चाश्रयात्सिद्धत्वम् । एक एव यत्र रुस्तत्र चरितार्थत्वात् । उत्वस्य सिद्धत्वं विना तदनुवादेनोत्वविधिवैयर्थ्यापत्तेरेव सिद्धत्वकल्पनात् । द्वितीयांशेऽसिद्धत्वबाधे प्रमाणविरहात् ।

यद्वा—श्तिपं विनैव सूत्रं पाठ्यमिति भाष्याभिप्रायः । "अस्सिचोऽपृक्ते" इति तत्रैव सकारान्तरं व्याख्येयम् । अस्तेः सकारान्तादिति भाष्यं तु अस् इत्यंशव्याख्यापरम् । असत्यादावतिप्रसङ्गस्य माधवोक्तरीत्या निरस्तत्वात् । भाष्यस्य समाधानोपलक्षणतामात्रत्वे तु अस् इति लुप्तपञ्चमीकं स्ति इति अपृक्तविशेषणम् । असः सिचश्च परस्य सकारतकारादेरपृक्तसार्वधातुकस्य ईट् स्यात् । आभ्यां परस्यापृक्तसार्वधातुकस्य सकारतकारत्वरूपानियमात् विशेषणानुपयोगे येन रूपेणात्र निर्देशस्तद्रूपावच्छिन्नापेक्षया परत्वलाभाय तत् । तेन स्थानिवद्भावव्यावृत्तिरिति दिक् ।

पञ्चमस्य त्वयमर्थः । "हनो ण्वुल्बहुलं तणि" इति वार्त्तिकेन संज्ञाछन्दसोर्वधादेशः । तस्य हल-

न्तत्वाद् " अत उपधायाः " इति वृद्धिः । " हनस्तोऽचिण्णलोः" इति तकारादेशश्च स्यात्, तयोः स्थानिवद्भावो निषेध्यः । आवधिषीष्टेत्यत्र स्थानिवद्भावेनाङ्गतया "एकाच उपदेशेऽनुदात्ताद्" इतीण्निषेधश्च स्यात् । अत्र स्थानिवद्भावेनाङ्गसंज्ञा न भवतीति वक्तव्यम् ।

इदमपि भाष्ये प्रत्याख्यातम्—अवधीदित्यत्र "अतो हलादेः" इति वृद्धिप्रसङ्गाद्वधादेशस्यादन्तत्वस्वीकारात् । वधक इति तु "हनो वधश्च"इत्यौणादिकः क्वुन् । तथा च वृद्धितत्वयोर्न प्रसङ्गो णित्त्वाभावात् । इटो निषेधोऽपि नास्ति । वधादेशआद्युदात्तनिपातनसामर्थ्यात्प्रकृतिस्वराप्रवृत्तेः । न च यदा वधिषीष्टेत्यत्र " निपातैर्यद्यदि " इति निघातप्रतिषेधात् इष्टः प्रत्ययस्वरो न स्यात्, सतिशिष्टेनाद्युदात्तेन बाधापत्तेरिति वाच्यम् । आर्द्धधातुकीयाः सामान्येन भवन्तीति प्रत्ययोत्पत्तेः पूर्वमेव वधादेशात् तदुत्तरं प्रत्ययोत्पत्त्या तत्स्वरस्यैव सतिशिष्टत्वात् ।

अत्रेदमवधेयम् । वार्त्तिकरीत्या "आर्द्धधातुके" इत्यस्य विषयसप्तमीत्वेऽपि लिङीत्यादीनां परसप्तमीत्वाभ्युपगमात् स्यसिच्सूत्रे " वधभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेन " इत्युक्तम् । उभयोरपि परनिमित्तकत्वात् ।

भाष्यमते तु वधादेशस्य प्रत्ययोत्पत्तेः पूर्वमेव प्रवृत्त्या परनिमित्तकत्वाभावात् अन्तरङ्गत्वात् चिण्वद्भावस्य तु परनिमित्तकतया बहिरङ्गत्वादन्तरङ्गबहिरङ्गयोश्च विप्रतिषेधायोगात्कथञ्चिण्वद्भाव इति शङ्कायां प्रतिपदविधित्वाच्चिण्वद्भाव इति कैयटः ।

स्यादेतत् । प्रतिपदविधित्वं किमनवकाशत्वम् उत सा-

क्षादुपात्तत्वम् । नाद्यः । स्यसिच्सूत्रे हनग्रहणस्य घानिष्यत इत्यादौ सीयुटो ग्रहणस्य तु कारिषीष्टेत्यादौ सावकाशत्वात् । न च स्यादीनां चतुर्णाम् अजन्तादिभिश्चतुर्भिरन्वयात्स्वरितत्वाभावेन च यथासंख्यविरहात् प्रत्येकं स्यादिभिरन्वयाद्धनः सीयुटि चिण्वद्भावविधानम् । तन्निरवकाशमेव । अन्तरङ्गत्वाद्वधभावे तस्य स्थानिवद्भावेन हन्तिना ग्रहणात्सीयुटि चिण्वदिटि कृते " ण्यल्लोपौ " इति पूर्वविप्रतिषेधेन अतो लोपे वाधिषीष्टेत्येव रूपापत्तेरिति वाच्यम् । अन्तरङ्गत्वात्पूर्वं वधभावप्रवृत्तौ हनः सीयुडन्वयएव मानाभावात् । नान्त्यः । " हनो वध लिङि " इति साक्षादुपादानस्य वधादेशेऽप्यविशिष्टत्वात् । अन्तरङ्गत्वस्याधिक्याच्च ।

अत्राहुः—"चिण्वदिट् च" इति चकारेण हन्तेः सीयुटि चिण्वद्भावविधानात्तस्यानर्थक्यमेव प्रतिपदविधित्वम् । न च तस्यानुक्तसमुच्चयार्थत्वे मानाभावः। भाष्यकृतैव च भगवान् कृतवांस्तु तदर्थमित्युक्तत्वात् । यद्वा—लिङीति सामान्यं सीयुटीति विशेषः । हन्तेरित्युभयत्राप्यविशिष्टम् । तथा चापवादत्वादेव चिण्वदिट असंभवे चकारेणापि तद्विधानस्याशक्यत्वात् ।

यद्वा—असिद्धं बहिरङ्गमित्यनेन " अन्तरङ्गं बलवत् " इत्येतत्प्रत्याख्यानस्य वक्ष्यमाणत्वात्तस्य च कृतितुग्ग्रहणेनानित्यत्वज्ञापनात् लक्ष्यानुरोधेनेह त्यागाद् युक्तो विप्रतिषेधः । अथ वा लिङीति परसप्तम्येवास्तु । परत्वाच्चिण्वदिट् । आद्युदात्तनिपातनं तु माऽस्तु । न च कर्त्तेत्यादिवद्वधिषीष्टेत्यत्र इडनापत्तिः । हन्त्युपदेशे एकाच्त्वेऽपि वध्युपदेशेऽनेकाच्त्वात् । वधेर्द्वावुपदेशाविति भाष्यएवोक्तत्वात् । एकेति विशेषणस्यानेकाच्कोपदेशव्यावृत्त्यर्थत्वात् । न चाच इत्युक्ते तदन्त-

स्यैव स्यादिति वाच्यम् । पचादीनामनुदात्तेत्त्ववैयर्थ्यापत्तेः । एकत्वविवक्षामत्वर्थलक्षणाभ्यामच इत्येतावतैव एकाज्वतो लाभे एकग्रहणस्योक्तार्थपरत्वात् । उक्तार्थपरतयाऽपि "यत्रैकाज्ग्रहणं चैव" इति परिभाषाप्रवृत्तिसिद्धेः। न चैकपदस्योक्तरीत्या सार्थक्ये "श्तिपा शपा" इत्यादिपरिभाषाज्ञापकत्वानुपपत्तिः । शीङ्दीङादीनां गुणयुडादिविधावनुबन्धनिर्देशस्यैव तज्ज्ञापकत्वात् । तस्माद्वधेः परस्य इट् सिद्धः । अत एव व्याघ्रभूतिनाऽनिट्कारिकासु अदन्तपर्युदासः कृत इति ।

यत्तु प्रसादकृता घानिषीष्टेत्येव रूपं न तु वधिधिषीष्टेत्यपि । तदुक्तं भाष्ये—

अथेदानीं चिण्वद्भावे कृते पुनः प्रसङ्गविज्ञानाद्वधभावः कस्मान्न भवति सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति, हनिणिङादेशप्रतिषेधश्चेति ।

तन्न । चिण्वद्भावपक्षे वधादेशविरहेऽपि तदभावपक्षे वधादेशप्रवृत्तौ बाधकाभावात् । हनिणिङादेशनिषेधस्य तु स्यादिषु चिण्वदित्यतिदेशेन यत्प्राप्तं तत्परत्वात् । लिङि प्राप्तस्य तदविषयत्वात् । अत एवाङ्गकार्याणामेवातिदेशमाश्रित्य तद् भाष्ये प्रत्याख्यातम् । प्रसादकारेणापि प्रथमं तथैवानूदितमिति । अत एव "एकाच" इति सूत्रे वधिषीष्टेति रूपं भाष्यएवोदाहृतम् । आकारान्तादित्यादिपञ्च वार्तिकान्यपि अनारभ्याणि । तथा हि–विलापयति भापयति इत्यत्र नुक्पुकौ ली ई भी ई इतीकारप्रश्लेषादेव न भवतः । शिष्टात् हतात् भिन्तात् कुरुतात् स्तात् इत्यत्र परत्वात्तातङि कृते "शा हौ" "हन्तेर्जः" "हुझल्भ्यो हेर्धिः" "उतश्च प्रत्ययादसंयोगपूर्वात्" "घ्वसोरेद्धौ" इति शाभावो जभावो धित्वं हिलोप एत्वं चेति स्थानिवद्भावेन प्रसक्ताः, सकृद्गता-

विति न्यायान्न । एतेन पुष्णीतादित्यत्र "हलः श्नः शानज्" इत्यस्याप्यप्रवृत्तिर्व्याख्याता । तिसृभावे कृते "त्रेस्त्रयः" इत्यपिनादेशः । उक्तन्यायात् । एतेन चतस्रस्तिष्ठन्तीत्यत्र चतसृभावे कृते " चतुरनडुहोः " इत्याम्नेति व्याख्यातम् । विदुषः पश्येत्यत्र वस्वादेशस्य शतृग्रहणेन ग्रहणात् "शतुरनुमो नद्यजादी" इति सूत्रेणान्तोदात्तात्परत्वमुपजीव्य विभक्तेर्नोदात्तत्वम् । "अनुम" इत्यत्र "तनादिकृञ्भ्य उः" इत्युकारादारभ्य नुमो मकारपर्यन्तमुम्प्रत्याहारमाश्रित्य तद्रहितस्येति व्याख्यानात् । वसोश्च तत्रान्तर्भावात् । न चैवं लुनता पुनतेत्यादावपि न स्यात्, श्नाप्रत्ययस्यापि तदन्तर्गतत्वादिति वाच्यम् । अनुम्ग्रहणं शतुर्विशेषणं न तु तदन्तस्येत्याश्रयणात् । शतरि परे श्नाप्रवृत्तावपि तस्य शतृप्रकृतिकत्वाभावात् । नुमित्यागमग्रहणेऽपि तद्रहितस्य शतर्येव विशेषणत्वात् । तदन्तविशेषणत्वे मुञ्चतीत्यादावपि निषेधापत्तेः । तदन्तस्य "शे मुचादीनाम् " इति सनुम्कत्वात् । अपत्यवार्त्तिकस्य त्वयमर्थः— चित्रग्वग्रमित्यत्र "सर्वत्र विभाषा गोः" इति पूर्वरूपं स्यात् । " नान्तः पादम् " इति पाठस्य भाष्यारूढतया सर्वत्रेति सूत्रस्यापि पूर्वरूपविधायकत्वौचित्यात् ।

कैयटस्तु प्रकृतिभावोऽनेन विधीयते, न पूर्वरूपम् । तस्माद् "एङः पदान्तादति"इति पूर्वरूपं प्राप्नोतीति भाष्यार्थ इत्याह । शाकलसूत्रे ह्रस्वश्चेति चकारेण प्रकृत्येत्यनुकृष्यतइति भाष्यदर्शनात् " प्रकृत्याऽन्तःपादम् " इति पाठ इति तस्याशयः । एङ इति तत्र वर्त्तते इति भाष्यस्याप्यत्रानुगुण्यम् । पूर्वमतं तु सर्वत्रेत्यत्र तदनुवृत्तिपरतया नेयम् । न चैङ इत्यलाश्रयणान्न स्थानिवत्त्वमिति वाच्यम् । हे चित्रगो अग्रमित्यत्र तथाऽपि

दुर्वारत्वात् । स्वत एङन्ततया स्थान्यलोऽनाश्रयणात् । एवं चित्रगुरित्यत्र "गोतो णित्" इति णित्त्वाद्वृद्धिः स्यात् । चित्रगूनित्यत्र "आ गोतोऽम्शसोः" इति षाष्ठवार्त्तिकपाठादात्वं स्यात् ।

अत्र णित्त्वग्रहणं व्यर्थम् । तपरत्वेनैव तयोरप्रवृत्तेः । "औतोऽम्शसोः" इति पाठस्यैव स्थितत्वात् । न च अचिनवमित्यादावातिप्रसङ्गः । शसा साहचर्यात्सुप एवामो ग्रहणात् । बहुगुमानित्यत्र "ह्रस्वनुड्भ्यां मतुप्" इत्युदात्तस्य "न गोश्वन्त्साववर्ण" इति निषेधः स्यात् । ततः गोः पूर्वस्वरयोरिति वार्तिकं स्थितम् । बहुगुना इत्यादौ "अन्तोदात्तादुत्तरपदादन्यतरस्याम्" इति प्राप्तस्य "न गोश्वन्" इति निषेधः इति वृत्तिग्रन्थस्तु भाष्यादिविरोधाच्चिन्त्यः । द्वादशवार्तिकमप्यनारभ्यम् । न च कुरुपिबेत्यादौ स्थानिवत्त्वाल्लघूपधगुणापत्तिः । करोतौ तपरनिर्देशादकारस्य मात्रिकत्त्वादुकार एव न्याय्य इति तपरत्वस्य शास्त्रान्तरप्राप्तवृद्धिमात्रानिवृत्त्यर्थत्वात् पिबेश्चादन्तत्वात् ।

# अचः परस्मिन् पूर्वविधौ ५६ ।

परनिमित्तकोऽच आदेशः स्थानिवत्स्यात् तस्मात्पूर्वत्वेन दृष्टस्य दृष्टाद् वा निमित्तात् विधौ कर्त्तव्ये । आल्विध्यर्थमिदम् । वव्रश्च । उरदत्वस्य स्थानिवद्भावाद् "न संप्रसारणे" इति वकारस्य संप्रसारणनिषेधः । उरदत्वस्याङ्गाधिकारीयतयाऽङ्गाक्षिप्ते प्रत्यये परे तद्विधानात् । न च प्रागभ्यासविकारेभ्योऽङ्गाधिकार इति वाच्यम् । आसप्तमसमाप्तेरित्यस्य सिद्धान्तितत्वात् । "गुणो यङ्लुकोः" इत्यत्र लुग्ग्रहणस्य कृतत्वात् । अत्र स्थानिभूतादच ऋकारात्पूर्वत्वेन दृष्टस्य व-

कारस्य संप्रसारणे कर्त्तव्ये स्थानिवद्भावः । एवमचितीकः सुचितीकः बहुचितीक इत्यत्र "चितेः कपि" इति दीर्घः । "ह्रस्वान्तेऽन्त्यात्पूर्वम्" इति स्थान्यलाश्रयः स्वरः सिद्धः । स्वरविधौ स्थानिवद्भावनिषेधस्य लोपाजादेशमात्रविषयकत्वात् । अखट्वको बहुखट्वक इत्यादौ " आपोऽन्यतरस्याम् " इति ह्रस्वस्य स्थानिवद्भावान्नोक्तः स्वरः किं तु " कपि पूर्वम् " इत्युत्तरपदान्तोदात्तत्वमेवेत्यवधेयम् । तस्माद्विधौ यथा—तन्वन्ति तन्वते । यणादेशस्य स्थानिवद्भावान्नेट् । अन्यथा उकारस्यार्द्धधातुकतया यणि कृते वलादित्वात् स स्यात् । तन्नित्यं तत्र निमित्तं तच्चोकारात्पूर्वम् । अच इति किम् । विश्नः द्यूत्वा स्यूत्वा अभिगत्य आद्ययोश्छकारस्य शकारः । तस्य परनिमित्तकत्वात्स्थानिवद्भावे " छे च" इति तुक् मा भूत् । नन्वन्तरङ्गत्वात्पूर्वमेव तुका भाव्यम् । "वार्णादाङ्गं बलीय" इत्यस्य युगपत्प्राप्तिके समानाश्रयएव प्रवृत्तेः । करोतेर्णलि कृ अ इति स्थिते "अचो ञ्णिति"इति वृद्धेः गौरित्यादौ सावकाशत्वात्तद्बाधित्वाऽन्तरङ्गत्वात्प्राप्तस्य यणो बाधेन वृद्धेरेव प्रवृत्तिः । प्रश्न इत्यत्र तु शत्वस्य प्रत्ययोत्पत्त्यनन्तरं तुकस्तु प्रागेवेति प्राप्तिकाले वैषम्यात् । शस्य नङ् निमित्तम्, तुकस्तु छ इति समानाश्रयत्वाभावाच्च ।

अत्रायं प्राचामभिप्रायः । " अभ्यासस्यासवर्णे " इत्यत्रासवर्णग्रहणं तावदस्या ज्ञापकमिति षष्ठे प्रथमाह्निकान्ते भाष्ये स्पष्टम् ।

तथा हि—ईयतुः ऊषतुरित्यत्रातिप्रसङ्गवारणं न तदर्थः । अन्तरङ्गबलवत्तयैव गतत्वात् । सवर्णदीर्घस्यावयवमात्रापेक्षत्वात् । इयङुवङोरभ्याससंज्ञाऽङ्गसंज्ञा चेत्युभयापेक्षत्वात् । न

चेयङुवङोस्तदपवादत्वम् । येननाप्राप्तिन्यायेन यणं प्रत्यव तयोरपवादत्वात् । ननु इच्छत्येतिभ्यां णलि इष् अ इ अ इत्यत्र गुणवृद्ध्योः सत्योः "द्विर्वचनेऽचि" इति रूपातिदेशाद् इकारे द्वित्वप्रवृत्तिः । तत्र सवर्णदीर्घप्राप्तावप्येतदारम्भात्तन्निरूपितापवादत्वं दुर्वारम् । निन्यतुरित्याद्यनुरोधेन पूर्वप्रवृत्तकार्यस्य द्वित्वानन्तरमवस्थाननियमस्य वक्तुमशक्यत्वात् । अन्यथा पूर्वमियङ्प्रवृत्त्या द्वित्वानन्तरम् "एरनेकाचः" इति यण् न स्यात् । मैवम् । कृतेऽप्यसवर्णग्रहणे तस्य निर्विषयकत्वापत्तेः । न च तत्सामर्थ्यात्सवर्णदीर्घं बाधित्वा पुनर्गुणवृद्धिप्रवृत्तिः । इयर्तीत्यादौ चारितार्थ्यात् । न च असवर्णग्रहणाभावेऽपि येननाप्राप्तिन्यायेन इयर्तीत्यत्र यण्बाधे सिद्धे तदनुपादानापत्तिः । सामर्थ्यात् इयेषेत्यादौ गुणादिप्रवृत्तिस्वीकारेऽसवर्णग्रहणवैयर्थ्यतादवस्थ्यात् । "अर्त्तेश्च"इत्येव सूत्रयित्वा य्वोरित्यनुवर्त्य अर्त्तेरिकारस्य इयङि विधेये "अभ्यासस्य" इत्युक्तिसामर्थ्येनापि इयेषेत्यादिसिद्धेः । न चार्त्तेरिति पाठे अरियर्त्ति इति यङ्लुकि तदासिद्धिः । उरित्येव वाच्यत्वात् । इण्साहचर्याद्धातुग्रहणासिद्धेः । ऋकारस्याङ्गेन विशेषणाद्वा । तेन अत्रग्निरित्यादौ न दोषः । न चैवमियेषेत्यादिवदीषतुरित्यादावपि इयङापत्तिः । सवर्णदीर्घस्यान्तरङ्गत्वात् । इयेषेत्यत्र तु गुणसंभावनया अकृतव्यूहपरिभाषया दीर्घाप्रवृत्तेः । एतेन निन्यतुरित्यादौ इयङादेरप्रवृत्तिरपि व्याख्याता ।

तत्र च ज्ञापकं "समर्थानां प्रथमाद्वा" इति सूत्रे समर्थग्रहणम् । तद्धि सौत्थितिर्वैक्षमाणिरित्यादौ भाविन्या आदिवृद्ध्या अन्तरङ्गस्यापि सवर्णदीर्घस्य निमित्तविघातादप्रवृत्तिः स्यादिति सावुत्थितिर्वायीक्षमाणिरित्यनिष्टरूपवारणार्थम् । कृत-

सन्धिकार्यत्वरूपं परिनिष्ठितत्वं च तत्र समर्थशब्दार्थः । नि-मित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वन्तीति तत्परि-भाषाऽर्थः । कृतमपि निवर्त्तयन्तीत्यस्य ज्ञाप्यत्वे तु फलसाम्ये-ऽपि गौरवाधिक्यं बोध्यम् । तस्मादियेषेत्यादौ गुणे कृते सव-र्णदीर्घानवकाशाद्यणि प्राप्ते तस्यैव इयङपवादः इत्यसवर्णग्रह-णवैयर्थ्ये प्रसक्ते तत्र गुणाप्रवृत्त्युपपादकत्वेन वार्णादाङ्गस्य बलवत्त्वस्य ज्ञापकतया तत्सार्थक्यम् । न च गुणस्य स्थानि-वद्भावाद् "असवर्णे" इति निमित्तस्याविघातात्कथम् अकृतव्यूहन्यायप्रवृत्तिः स्यादिति वाच्यम् । "न पदान्त" इति सवर्णविधौ तन्निषेधात् । तत्रत्यसवर्णादिग्रहणप्रत्याख्यानपक्षे तु पूर्वस्यैव विधौ स्थानिवद्भावो न तु स्वपूर्वैकादेशविधाविति वक्ष्यमाणत्वात्सवर्णदीर्घनिमित्तविघातो बोध्यः । तस्मात्समा-नाश्रये युगपत्प्राप्तौ चोक्तपरिभाषाज्ञापनात्तादृशविशेषविषय-कत्वमप्यास्थीयते । लक्ष्यानुरोधात् ।

स्यादेतत् । समानाश्रयेत्यत्र कार्यिणोरैक्यं विवक्षितम्, नि-मित्तयोर्वा । नाद्यः । स्योन इत्यत्र सि ऊ न इति स्थिते इका-रस्यैव गुणयणोः प्राप्त्या समानाश्रयत्वसत्त्वात् तदभावान्नो-क्तपरिभाषाप्रवृत्तिरिति कैयटादिग्रन्थविरोधात् । आह्व इत्यत्र आहु आ अ इति स्थिते आलोपपूर्वत्वयोरप्याकारोद्देश्यकत्वेन व्याश्रयत्वात्तदप्रवृत्तिकथनविरोधाच्च । न द्वितीयः । इ इ अतुस् इत्यत्र सवर्णदीर्घस्य इकारो निमित्तम्, यणस्तु प्रत्ययाकार इति समानाश्रयत्वानुपपत्तेः । श्वन्शब्दस्य भत्वे संप्रसारणे च शु अन् अस् इत्यत्र अल्लोपस्य भनिमित्तत्वात्पूर्वत्वस्य च तदभा-वाच्च । तथा हि—सिवेर्बाहुलकादौणादिके नप्रत्यये गुणो वलोप ऊठ् च प्राप्नोति । तत्रापवादत्वाद्वलोपं बाधित्वा ऊठ् ।

न चैवमपि गुणबाधे विनिगमकाभावः । गुणस्याङ्गसम्बन्धिनीं लघ्वीमिग्लक्षणामुपधामार्द्धधातुकं चापेक्षमाणस्य बहिरङ्गत्वात् । ऊठस्तु वकारान्तमङ्गमनुनासिकादिं च प्रत्ययमपेक्षमाणस्यान्तरङ्गत्वात् । सि ऊ न इति स्थिते लघूपधगुणयणोः प्राप्तौ वर्णमात्रापेक्षत्वेनान्तरङ्गत्वाद्यण् । ततः "सार्वधातुकार्द्धधातुकयोः" इति ऊकारस्य गुण इति स्योनेत्यस्य सिद्धिः । एवं "कविधौ सर्वत्र संप्रसारणिभ्यो ड" इत्युक्त्वाऽऽह्वः प्रह्व इत्युदाहृत्य कप्रत्ययेन सिद्धिमाशङ्क्य कप्रत्ययसंप्रसारणयोरुवङि कृते आहुव- इति स्यात् । न च आलोपस्य स्थानिवद्भावान्नोवङ् । पूर्वत्वे कृते तत्प्राप्तेः । परत्वादाकारलोप एव स्यादित्युक्त्वा अन्तरङ्गत्वात्पूर्वत्वमित्याशङ्क्य "वार्णादाङ्गं बलीय" इत्याकारलोप इत्युक्त्वा एवं तर्हीदमिह सम्प्रधार्यम् आकारलोपः क्रियतां संप्रसारणमित्युक्त्वा परत्वादातो लोपः । ततः संप्रसारणे यणादेशे आह्वः प्रह्व इत्यादि सिद्धम्, इति भाष्यम् । एवं तर्हीत्यादिभाष्यस्यावतरणिकायाम् "वार्णादाङ्गं बलीय इत्यस्य" समानाश्रयएवाङ्गीकारादालोपपूर्वत्वयोश्च भिन्नाश्रयत्वात्तदप्रवृत्तिरिति कैयटः । तदनन्तरं च पूर्वत्वस्यान्तरङ्गत्वमिति भाष्यव्याख्यायां "वार्णादाङ्गं बलीय" इत्येतत्तु समानाश्रयविषयमेवेत्युक्तमिति तेनोक्तम् ।

एवम् अशब्दादाचारक्विबन्ताल्लिटि अ अ अतुस् इत्यत्राऽतोलोपस्य व्याश्रयत्वाद् "अतो गुणे" इति पररूपमेवेति मनोरमादिविरोधः । तथा हि—"उपेयिवान्" इति सूत्रे इणो द्विर्वचनेऽभ्यासदीर्घत्वे च कृते इयादेशो निपात्यतइत्युक्त्वा "दीर्घ इण" इति दीर्घेण बाधादेकादेशो न स्यादित्याशङ्क्य दीर्घत्वं नैकादेशबाधकम्, किं तु "इणो यण्" इति विधीयमानो यण् । स च स्वप्राप्तावेव बाधकोऽत्र तु यणः प्राप्त्यभावादेकादेश एवेत्युक्तं भा-

ष्ये। तत्र कैयटेन ईयतुरित्यत्राभ्यासदीर्घत्वे एकादेशात्पूर्वम् "वार्णादाङ्गम्" इति यणि कृते स्थानिवत्त्वादेकादेशः प्राप्नोतीत्युक्तत्वेनाभ्यासदीर्घत्वमेकादेशबाधकं स्यादित्याशङ्क्य स्थानिवद्भावेन रूपानतिदेशात् रूपाश्रयस्यैकादेशस्य यकारेऽभावः। "वार्णादाङ्गम्" इति यणादेशेन बाधितस्यैकादेशस्य स्थानिवद्भावे कृते प्राप्त्यभाव इति व्याख्यातम्। इ इ अतुस् इत्यस्यामवस्थायां यथा इणो यणादेश एकादेशस्य बाधकः तथा स्थानिवद्भावानन्तरमप्येकादेशप्राप्ताविति तदर्थः। तथा "संप्रसारणाच्च" इति सूत्रे "आटो वृद्धेरियङ्" इति वार्त्तिकेऽध्यैयातामित्यत्र "वृद्धिरन्तरङ्गा" इति भाष्यव्याख्यायां "वार्णादाङ्गं बलवद्" इत्यनाश्रित्येदमुच्यतइति कैयटाविरोधः। एवम् "आदेच" इति सूत्रे आयादेशे अलोऽन्त्यस्यात्वे ग्लानीयमित्यादिसिद्धिरिति पक्षे विवरणप्रस्तावे ग्लै अतुसित्यत्रायादेशे यकारस्य आत्वे ग्ला आ अतुसित्यत्र एकादेश आतोलोपश्च प्राप्तः। तत्रैकादेशस्य वर्णाश्रयत्वादन्तरङ्गत्वेऽपि "वार्णादाङ्गम्" इत्यातो लोपः। तस्याभीयत्वेनासिद्धत्वात्स्थानिवद्भावाच्च पूर्वस्यातोलोपो न स्यादिति दोषमुपन्यस्य "वार्णादाङ्गम्" इत्यनाश्रित्येदमुक्तमिति कैयटोऽप्यसङ्गतः स्यात्।

स्यादेतत्। एकनिष्ठकारणतानिरूपितैकवर्णनिष्ठोद्देश्यतानिरूपितोभयविधेयताकत्वं तत्। यथा कृ अइत्यादौ। उक्तं च कौस्तुभे—यत्र ह्येकमेव निमित्तीकृत्य युगपदाङ्गवार्णयोः प्राप्तिस्तत्रैव "वार्णादाङ्गं बलीय" इति विच्छ्न इत्यत्र तुक्शत्वयोः छकारनकाररूपनिमित्तभेदस्य स्पष्टत्वात्। अतः स्योन इत्यादौ न दोषः। तत्र गुणस्यार्द्धधातुकं निमित्तं यणस्त्वजिति कारणभेदात्। आह इत्यादावपि आलोपपूर्वत्वयोरेकोद्देश्यकत्वेऽपि लोपस्य अजादिङ्किदार्द्धधातुकं निमित्तं पूर्वत्वस्य तु नेति निमित्तैक्याभावात्।

शुन इत्यत्रापि न दोषः । संप्रसारणस्य भसंज्ञानिमित्तकत्वात् । संप्रसारणनिबन्धनपूर्वत्वस्यापि भसंज्ञानिमित्तकत्वे बाधकाभावात् । प्रयोजकसाधारणस्यैव निमित्ततया विवक्षितत्वात् ।

वस्तुतस्तु शुन इत्यत्र पूर्वत्वमेवेष्टं विप्रतिषेधसूत्रीयाकरग्रन्थप्रामाण्यात् । अल्लोपे उदात्तनिवृत्तिस्वराद्यापत्तिरिति तत्र निरूपयिष्यमाणत्वात् । अल्लोपपरासिद्धवत्सूत्रस्थकैयटादिग्रन्थस्य प्रौढिमात्रत्वात् । तेन द्यवतीत्यत्रापि नातिव्याप्तिः । यण्गुणयोरेकोद्देश्यकत्वेऽपि ऊकारसार्वधातुकरूपनिमित्तभेदात् । मैवम् । ईयतुरित्यत्र तदभावात् । सवर्णदीर्घे प्रथम इकार उद्देश्यो यणि तु द्वितीय इति कार्यिभेदात् । न च "एकः पूर्वपरयोः" इति द्वितीय इकारोऽपि सवर्णदीर्घे कार्यीति वाच्यम् । तथाऽपि यणि अतुसोऽकारो निमित्तम्, सवर्णदीर्घे तु अभ्यासोत्तर इकार इति भेदात् । ननु स्थानेद्विर्वचनपक्षेऽतुसोऽकारस्यापि द्वित्वनिमित्तत्वम् । चक्रतुरित्यत्र यणः स्थानिवद्भावार्थं साक्षाद्वा समुदायघटकतया वा द्वित्वप्रयोजकस्यैव द्वित्वनिमित्तत्वस्वीकारात् । लक्ष्यानुरोधादिहापि तथाश्रयणे बाधकाभावात् ।

तथा च अकारस्य द्वितीयेकारप्रयोजकतया सवर्णदीर्घनिमित्तत्वमप्यास्ति । यण्निमित्तत्वं तु तस्य स्पष्टमेवेति चेत् । मैवम् । स्योन इत्यत्र यण्निमित्ते ऊकारे तस्य निमित्ततया गुणेऽप्यार्द्धधातुकतया तस्य निमित्तत्वात् । आह्व इत्यत्र संप्रसारणं पूर्वत्वे निमित्तम्, तत्र च कित्त्वमिति किदार्धधातुकनिमित्तकमातोल्लोपं प्रत्यपि तस्य निमित्ततया समानाश्रयत्वापत्तेश्च । न चैकनिमित्तेत्यस्यैकधर्मावच्छिन्ननिष्ठनिमित्तत्वमर्थः । ईयतुरित्यत्र सवर्णदीर्घयण्निमित्तयोरिकाराकारयोरच्त्वरूपैकधर्मावच्छिन्नत्वादिति वाच्यम् । विश्न इत्यत्र शत्वतुगागमनिमित्तयोर्नकारच्छ-

कारयोरपि हल्त्वरूपैकधर्मावच्छिन्नत्वात् ।

किं च पूर्वोक्तरीत्या यण्सवर्णदीर्घयोः स्थानैक्यसंपादने "इजादेश्च" इति सूत्रे ऋ ऋ अतुस् इत्यत्र सवर्णदीर्घयणोः प्राप्तौ परत्वात्सवर्णदीर्घे ॠ अतुसिति स्थिते एकादेशस्यान्तादिवद्भावे ऋकारस्य धातुग्रहणेनोपादाने "ऋच्छत्यॄताम्" इति गुणे रपरत्वे च अरतुरिति, अभ्यासत्वेन ग्रहे तु "उरत्" इति अत्वे रपरत्वे हलादिः शेषे "अत आदेः" इति दीर्घे आतो लोपेऽतुरिति रूपं स्यादिति भाष्यकाराशङ्कायाम् ऋ ऋ अतुसित्यवस्थायामाङ्गत्वादुरदत्वमेव स्यादित्याशङ्क्य "वार्णादाङ्गम्" इत्येतत्समानाश्रयविषयकं वर्णद्वयाश्रयं तु सवर्णदीर्घत्वमिति भिन्नाश्रयत्वमिति कैयटविरोधः ।

अपि च "एकाचो द्वे" इत्यनेन प्रथमस्य "अजादेः" इति च द्वितीयस्य द्विर्वचनं विरोधाभावात्समुच्चीयतइति पक्षे द्वितीयद्विर्वचनस्यानर्थक्यम् । तथा हि—अटेः सनि इटि च अटिस इति स्थिते—प्रथमद्विर्वचनम् । अट् अट् हलादिशेषेण टकारनिवृत्तौ द्वितीयद्विर्वचनम्, हलादिशेषः । अ अ अट् इति त्रयाणामकाराणां द्वयोरकारयोर्वा पररूपे विशेषाभावः । तत्र हलादिशेषात्पूर्वमेव द्वितीयं द्विर्वचनं स्यादित्याशङ्क्य कैयटेनोक्तम्—

नित्यत्वात्पूर्वं हलादिःशेषः । कृताकृतप्रसङ्गित्वात् । द्वितीयद्विर्वचनं तु शब्दान्तरप्राप्त्याऽनित्यम् । तद्धि कृते हलादिशेषे ऽटः प्राप्नोति अकृते तु टशब्दस्य । अन्तरङ्गत्वाच्च "अतो गुणे" इति पररूपं "सन्यतः" इतीत्वस्य बाधकम् । "सन्यत" इतीत्वं हि सनमभ्यासं चापेक्षमाणं बहिरङ्गम् । "प्रागभ्यासविकारेभ्योऽङ्गाधिकार" इति पक्षे इत्वमाङ्गं न भवति इति ।

वार्णादाङ्गं बलवत् इत्यपि नास्ति सत्यपि वा इत्वस्याङ्गत्वेनानाश्रयत्वादाङ्गवार्णयोरत्र परिभाषाऽनुपस्थानमितिउक्तरीत्या च सनो द्वित्वनिमित्ततया द्वितीयाकारसम्पादनद्वारा पूर्वाकारपररूपे निमित्तत्वमस्तीति इत्वपररूपयोरेकनिमित्तकत्वं स्यादिति दिक् ।

अत्रोच्यते । समाननिमित्तप्रयुक्तत्वमेव समानाश्रयत्वमिह विवक्षितम् । सनभ्यासाश्रयत्वादित्वस्य पररूपस्य वर्णमात्रापेक्षत्वाच्च भिन्नाश्रयत्वमिति कैयटोक्तेः । न चैवम् ईयतुरित्यत्र अभ्यासोत्तरस्य ईकारस्य दीर्घयणौ प्रति स्थानित्वेन समानाश्रयत्वमित्यादिग्रन्थविशेषलेखनमसङ्गतं स्यादिति वाच्यम् । तथा सत्यकारस्यैव पररूपमित्वं च प्रति स्थानित्वात्समानाश्रयत्वापत्तेः । न चोक्तस्थलेऽतिव्याप्तिपरिहारः कथमिति वाच्यम् । विवक्षितस्य तत्र सत्त्वात् । तथा हि—अङ्गकार्यप्रतियोगिकोद्देश्यत्वाधिकरणं सत् यद्वार्णकार्यनिमित्तत्वाधिकरणं तदपर्याप्तवार्णकार्योद्देश्यताकत्वम् । उद्देश्यत्वपर्याप्त्यधिकरणैक्ये सति एकधर्मिपर्याप्तत्वं चेत्यन्यतरवन्निमित्तताकत्वं तद् । व्याश्रयत्वेनोदाहृतेषु आङ्गकार्योद्देश्यत्वाधिकरणस्य वार्णकार्यनिमित्तत्वाधिकरणत्वाभावान्नातिव्याप्तिः । विच्छ्न इत्यत्राङ्गकार्यशत्वोद्देश्यस्य छकारस्य वार्णकार्ये तुकि निमित्तत्वात् अतिव्याप्तिरिति तदपर्याप्तवार्णकार्योद्देश्यत्वनिवेशः । इ इ अतुस् इत्यत्र आङ्गकार्यानुद्देश्यस्य द्वितीयस्य इकारस्य वार्णकार्ये सवर्णदीर्घे निमित्तत्वात्तदुद्देश्यत्वाच्चाव्याप्तिवारणायावृत्तित्वमपहाय अपर्याप्तत्वनिवेशः । पूर्वपरोभयपर्याप्तत्वाच्च दोषः । आङ्गकार्यनिमित्तत्ववार्णकार्योद्देश्यत्वयोः सामानाधिकरण्यस्य समानाश्रयत्वेनोदाहृतेष्वभावादसम्भववार-

णाय आङ्गकार्योद्देश्यत्ववार्णकार्यनिमित्तत्वयोः सामानाधिकरण्यं निवेशितम्। आङ्गकार्यप्रतियोगिकोद्देश्यत्वाधिकरणं यत्तदपर्याप्तवार्णकार्योद्देश्यताकत्वमित्युक्ते यद्यपि सि ऊ नः पृच्छतीत्यादौ चातिव्याप्तिः। गुणोद्देश्ये इकारे ऊकारे च यण्तुकोरुद्देश्यतायाः पर्याप्तेः, तथाऽपि ऋ ऋ अतुम् अटिटिषतीत्यत्र उरदत्वं "सन्यत" इतीत्वं चेत्युभयरूपाङ्गकार्यप्रतियोगिकोद्देश्यत्वाधिकरणयोरभ्यासऋकाराकारयोः सवर्णदीर्घरूपवार्णकार्यप्रतियोगिकोद्देश्यत्वपर्याप्त्यधिकरणत्वाभावादतिव्याप्तिः स्यादतः वार्णकार्यनिमित्तत्वाधिकरणेत्युक्तम्। तयोस्तु न वार्णकार्यनिमित्तत्वम्। द्वितीययोरेव तथात्वात्। तथा चाङ्गकार्योद्देश्यत्वसमानाधिकरणं यद्वार्णकार्यनिमित्तत्वाधिकरणं तस्याप्रसिद्धत्वात्तत्र न दोषः। द्वितीययोराङ्गकार्यानुद्देश्यत्वादाद्ययोश्च वार्णकार्य प्रत्यनिमित्तत्वात्। वार्णकार्यानिमित्तत्वाधिकरण यद् तदपर्याप्तवार्णकार्योद्देश्यताकत्वमित्युक्तेः तत्रैवातिव्याप्तिः। द्वितीययोः सवर्णदीर्घोद्देश्यत्वपर्याप्त्यधिरणत्वात्। तन्निमित्तत्वाच्च। एवं पृच्छतीत्यादौ तथा तुको निमित्तस्य छकारस्य तुगुद्देश्यत्वाभावात् ह्रस्वस्यैव तथात्वात्। अत आङ्गकार्यप्रतियोगिकोद्देश्यत्वाधिकरणं सदित्युक्तम्। उक्तस्थले त्वाङ्गकार्यं प्रति तेषामनुद्देश्यत्वान्न दोषः। कृ अ इत्यत्राव्याप्तिवारणाय उद्देश्यत्वपर्याप्तीत्यादि। तत्र ऋकारमात्रे यण्वृद्ध्युभयोद्देश्यत्वस्याकारमात्रे च तदुभयनिमित्तत्वस्य पर्याप्त्या नातिव्याप्तिः इत्येषा दिक्।

अत्र वदन्ति। उक्तपरिभाषायास्समानाश्रयमात्रविषयकत्वमाकरानुरोधाद्वा कल्प्यते धर्मिग्राहकप्रमाणबलाद्वा। नाद्यः। "अजादेः" इति सूत्रे पूर्वपक्षे इयटिषतीतिरूपार्थं कैयटेन सामान्येन "वार्णादाङ्गं बलवत्" इत्या-

श्रीयते, न तु समानाश्रयाङ्गवार्णविषयमेवेतीत्वमेव प्रवर्तते न पररूपमिति इत्यभिहितत्वात् । नान्त्यः । असवर्णग्रहणसार्थक्यान्यथाऽनुपपत्तेः वार्णादाङ्गस्य बलवत्त्वज्ञापनमात्रेणोपक्षीणतया समानाश्रयमात्रविषयकत्वपर्यन्तं तदसामर्थ्यात् । विधेयद्वयस्यैकोद्देश्यकत्वरूपसमानाश्रयत्वस्यैव तद्विषयतया यथोक्तसमानाश्रयत्वासिद्धेश्च ।

किं चैवं सौत्थितिरित्यादौ समानाश्रये ज्ञापितत्वादकृतव्यूहपरिभाषाया अपि तद्विषयएव प्रवृत्तिः स्यात् । न चेष्टापत्तिः । सेदुषीमित्यादौ तदप्रवृत्तिप्रसङ्गात् । न च तत्र समानाश्रयत्वं नास्तीति वाच्यम् । समानाश्रयत्वेन "वार्णादाङ्गं बलीय" इति वृद्धिप्रसङ्गादिति कैयटेनोक्तत्वात् ।

एतेन युगपत्प्राप्तिस्थलमात्रविषयकत्वमस्या इत्यपि निरस्तम् । वृद्धेः प्रत्ययनिमित्तकतया पूर्वं प्राप्त्यभावात् ।

किञ्च विश्ववाह् अम् इन्यत्र सम्प्रसारणं बहिरङ्गं गुणे कार्येऽसिद्धमिति यस्यान्तरङ्गं कार्यं प्रसज्यते तस्यैव बहिरङ्गस्यासिद्धत्वं स्यात् । ततश्चाक्षद्यूरित्यादौ बहिरङ्गस्याप्यूठो यण्प्राप्त्यभावादासिद्धत्वं न प्राप्नोतीति "नाजानन्तर्ये" इति तन्निषेधो भाष्यकारैरुपन्यस्तोऽनर्थकः स्यात् । अधीत्य प्रेत्येत्यत्र बहिरङ्गस्यैकादेशस्यासिद्धत्वप्रतियोगिनः तुक्प्रसक्त्यभावादेवासिद्धपरिभाषाप्रवृत्तिविरहे "षत्वतुकोरसिद्धः" इत्यत्र तुग्ग्रहणेन "नाजानन्तर्ये" इति परिभाषाज्ञापनस्याप्यनुपपत्तेश्च । न चैवं यथोद्देशपक्षविलयापत्तिः, ज्ञापकसमानदेशत्वस्यानुपपत्त्यविषयतया तदसिद्धेरिति वाच्यम् । लक्ष्यानुरोधेन तत्कल्पनात् । अन्यथा ज्ञापकसमानदेशत्वानियमे तवापि कार्यकालपक्षविलयापत्तेः । व्याश्रयेऽप्येत-

त्प्रवृत्तौ "यजयाच" इत्यत्र नङो ङित्करणं ज्ञापकमिति सीरदेवादिभिरुक्तत्वाच्च । अन्यथा तुकोऽन्तरङ्गत्वात्प्रवृत्तौ लघूपधत्वाभावादेव गुणप्रसक्त्यभावात्तन्निषेधार्थङित्त्वस्य वैयर्थ्यापत्तेः । च्यवन्ते प्लवन्तइत्यादौ गुणे कृते एकादेश इति न्यासकारोक्तेश्च । शुन इत्यत्राल्लोपस्य कैयटेनोक्तत्वाच्च । न च तत्र समानाश्रयत्वमेव, आङ्गकार्येऽल्लोपे उद्देश्यस्य अकारस्यैव वार्णकार्ये "संप्रसारणाच्च" इति पूर्वरूपे निमित्तत्वात् संप्रसारणादचि परे पूर्वरूपमेकादेशः स्यादिति व्याख्यानात् तदपर्याप्तोद्देश्यताकत्वस्य च सत्त्वादिति वाच्यम् । तत्र निमित्ततावच्छेदकधर्मानवच्छिन्नत्वेनाप्युद्देश्यताया विशेषणीयत्वात् । उक्तपूर्वरूपे चाच्त्वस्यैव निमित्तत्वोद्देश्यत्वोभयावच्छेदकत्वात् । अन्यथा आह्व इत्यादौ आलोपपूर्वत्वयोर्व्याश्रयत्वाभिधानस्यासङ्गत्यापत्तेः ।

नन्वेवं विश्न इत्यत्र व्याश्रयस्यापि शादेशस्य सिद्धौ पूर्वोक्तव्याश्रयेषु दोषापत्तिरिति चेत्, सत्यम् । "वार्णादाङ्गम्" इत्यस्य अनित्यत्वात् न तत्र प्रवृत्तिः । तत्र च मानम् "च्छ्वोः" इति सतुक्निर्देशः । न चाच इत्यस्यानुपादाने स्थानिवत्त्वेन तुको निषेधार्थं तदिति वाच्यम् । अच इत्यस्यान्यार्थमावश्यकत्वात् । न च तत्र मानाभावः । षाष्ठभाष्यस्यैव तथात्वात् ।अन्यथा आङ्गत्वात् शत्वे कृते तुक्प्रसक्त्यभावात्तदसङ्गत्यापत्तेः । तेन पूर्वोक्तव्याश्रयेषु न दोषः । न च सतुक्निर्देशस्य प्रकृतपरिभाषायाः समानाश्रयमात्रविषयकत्वज्ञापकत्वमेवास्तु इति वाच्यम् । विषयविशेषावच्छेदेन सङ्कोचे गौरवात् । निरुक्तसमानाश्रयत्वस्य गुरुत्वाच्च । नन्वत्र तुक्प्रसक्तिरेव नास्ति, "अकृतव्यूह" इति न्या

नुबन्धानामनेकान्तत्वाद् । एकान्तत्वेऽपि पूर्वप्रध्वंसित्वादूकारस्यै-वादेशत्वपर्याप्त्याश्रयत्वात् । एवमाभिगत्येत्यत्रापि मकारलोपस्य परनिमित्तकत्वात् तस्य स्थानिवद्भावे "ह्रस्वस्य पिति कृति" इति तुक् न स्यात् । ननु अक्राष्टामित्यत्र सिचो लोपस्य परनिमित्तक-त्वात्तस्य स्थानिवद्भावे "षढोः कः सि" इति कत्वं स्यादिति कुतो न प्रत्युदाहृतमिति चेन्न । "पूर्वत्रासिद्धे न स्थानिवत्" इत्यनेनैव निषेधात् । परस्मिन्निति किम् । युवजानिः । जायाया निङ् आकारादेशत्वात्पूर्वस्य यकारस्य "लोपो व्योः" इति लोपे कर्त्तव्ये स्थानिवद्भावो मा भूत् । व्याघ्रस्येव पादावस्य व्याघ्र-पात् । "पादस्य लोपोऽहस्त्यादिभ्य" इत्यपरनिमित्तको लोपः । ततो गर्गादित्वाद्यञ् । वैयाघ्रपद्यः । "पादः पद्" इति पदादेशे कार्येऽकारलोपस्य न स्थानिवत्त्वम् । न च वचनसामर्थ्यम् । एका-देशस्यादिवद्भावेन पादेनेत्यादावप्यापत्तेः । द्विपदिका इत्यत्र पद्भावस्य चारितार्थ्याच्च । तत्र "पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च" इति वुन् अकारलोपश्च । न च तत्रापि स्था-निवद्भावः । "यस्येति च" इति लोपे सिद्धेऽपि पुनर्लोपव-चनसामर्थ्यात्तस्य परनिमित्तकत्वाभावात् । "पादस्य लोपः" इत्यस्य तु न सामर्थ्यम् । व्याघ्रपादित्यादौ भसंज्ञाविरहे सावकाशत्वात् । "परस्मिन्" इत्युक्ते तु पादेनेत्यादौ न पद्भावः । वैयाघ्रपद्य इत्यादौ पद्भावस्य सावकाशत्वात् । तत्रैकादेशस्य स्थानिवद्भावात् । वर्णग्रहणे जातिग्रहणादचोरा-देशेऽपि तत्प्रवृत्तेः । अत एव आयसौ गौमतौ चातुरौ आनडुहौ इत्यादावेकादेशस्यादिवद्भावेन प्रसक्तौ नुमामौ न । एवं "पर-स्मिन्" इत्यनुक्तौ औदवाहौ इत्यत्र एकादेशस्यादिवत्त्वात् भसंज्ञायां वाह् इत्यस्य ऊठ् स्यात् । उदकं वहतीति उदवाहः ।

कर्मण्यण् । उदकस्योदः संज्ञायाम् । बाह्वादित्वादिञ् । आदी-ध्ये आवेध्ये इत्यत्र इकारस्य टेरेत्वम् अपरनिमित्तकम्, तस्य स्थानिवत्त्वाद् "यीवर्णयोर्दीधीवेव्योः" इति लोपः स्यात् । पूर्वविधाविति किम् । नैधेयः । निपूर्वाद्धाञः किः । आतो लोपः । "द्व्यचः" "इतश्चानिञः" इति ढक् । आल्लोपस्य स्थानिवत्त्वात् त्र्यच्कत्वात् उक्तविध्यप्रवृत्तिर्मा भूत् । त्र्यच्के द्व्यच्कार्याणामप्रवृत्तेः । न च पूर्वस्येति पाठेऽपि कार्ये कर्त्तव्ये इत्यर्थस्याक्षेपसम्भवाद्विधिग्रहणवैयर्थ्यम् । पूर्वस्य पूर्वस्मादि-ति समासद्वयलाभार्थत्वात् । पञ्चमीसमासोदाहरणं तु तन्वन्ती-ति प्रागेवोक्तम् ।

ननु "असिद्धं बहिरङ्गमन्तरङ्गे" इत्यत एवैतद् गतार्थम् । न च "नाजानन्तर्ये" इति निषेधः । यत्रान्तरङ्गे अच आनन्तर्यम्, तत्रैव तादिति कैयटासिद्धान्तात् । अत्र तु बहिर-ङ्गे यणि अजानन्तर्यस्यापेक्षितत्वात् । मैवम् । यत्रान्तरङ्ग-बहिरङ्गयोर्मध्येऽन्यतरत्राजानन्तर्यं तत्र तन्निषेधप्रवृत्तेर्हरदत्तेन स्वीकारात् ।

अत्रेत्थं प्रत्यवतिष्ठन्ते । यत्रोत्तरकालप्रवृत्तिकेऽजानन्त-र्यापेक्षा तत्र "असिद्धं बहिरङ्गम्" इति परिभाषा न प्रवर्त्तत-इति कैयटमतमेव युक्तम्, न तु द्वयोर्मध्येऽन्यतरत्रेति हरदत्त-मतम् । पचावेदमित्यत्र "एत ऐ" इत्यप्रवृत्तिमाशङ्क्य बहिरङ्गत्वे-न गुणस्यासिद्धत्वादिति भाष्यहरदत्ताद्युक्तस्यासङ्गातिप्रसङ्गात् । पूर्वप्रवृत्तिके गुणेऽजानन्तर्यसत्त्वे निषेधापत्तेः । कैयटरीत्या तु गुणोत्तरप्रवृत्तिकऐत्वे अजानन्तर्यानपेक्षणेन निषेधाप्रवृत्त्या बहि-रङ्गत्वेनासिद्धत्वोपपत्तेः । "न धातुलोप" इति सूत्रे भेद्य इत्यत्र बहिरङ्गत्वेनासिद्धत्वमाश्रित्य समादधता भाष्येण विरोधाच्च ।

किं च "न पदान्त" इति सूत्रे दद्ध्यत्रेति वृत्तिग्रन्थमुपादाय स्थानिवत्त्वनिषेधसामर्थ्यान्न बहिरङ्गपरिभाषाप्रवृत्तिरिति हरदत्तोक्तिविरोधः । तद्रीत्या बहिरङ्गे यणि अजानन्तर्यसत्त्वेन "नाजानन्तर्ये" इति निषेधादेव तदप्रवृत्तिसिद्धौ सामर्थ्यानुधावनवैयर्थ्यात् ।

किं च "संयोगान्तलोपे यणः प्रतिषेधः" इत्यस्य बहिरङ्गपरिभाषया प्रत्याख्यानपरभाष्यवार्त्तिकविरोधः । बहिरङ्गे यण्यजानन्तर्यसत्त्वेन बहिरङ्गपरिभाषाया अप्रवृत्त्यापत्तेः । तस्माद्धरदत्तमतं पूर्वापरस्वग्रन्थविरोधात् भाष्यविरोधाच्चोपेक्ष्यमिति ।

अत्रेदं विचारणीयम् । यत्र कार्यविधावानन्तर्येणाचोराश्रयणं तत्र निषेधादनुपस्थानं परिभाषायाः, यथाऽक्षद्यूरिति। तत्र हि "इको यणचि" इति वचनादचोराश्रयणमिति । अस्मिंस्तु प्रतिषेधसूत्रे नास्त्यचोराश्रयणमिति तावद् नधातुलोपसूत्रे कैयटग्रन्थः। तत्र "अचोः" इति द्वित्वं विवक्षितं न वा । नाद्यः । धर्मिग्राहकमानविरोधात् । "षत्वतुकोरसिद्धः" इत्यत्रान्तरङ्गेऽज्द्वयानन्तर्यस्यानपेक्षितत्वात् । इणः परस्य सस्य षत्वविधानात् । ह्रस्वस्य तुग्विधानाच्च । न द्वितीयः । दद्ध्यत्रेत्यत्राप्यचः परस्य यरो द्वित्वविधानादजानन्तर्यसत्त्वादुक्तानिषेधापत्त्या स्थानिवत्त्वानिषेधसामर्थ्यानुसारस्यावश्यकत्वात् । न च यत्र परवर्त्तिनोऽचो निमित्तत्वं तत्रैव "नाजानन्तर्ये" इति निषेधप्रवृत्तिः, यथाऽक्षद्यूरित्यादौ, दद्ध्यत्रेत्यत्र तु पूर्ववर्त्तिन एव तथेति न तत्प्रवृत्तिरिति वाच्यम् । धर्मिग्राहकविरोधात् । बहिरङ्गे अचोरानन्तर्यस्थले ज्ञापितायाः परिभाषाया यत्रान्तरङ्गेऽचोरानन्तर्यं तत्रैव प्रवृत्तिरित्यस्य दुर्घटत्वात् । तस्मादयमत्र

हरदत्ताभिप्रायः—

अचोरिति द्वित्वं विवक्षितमेव । तदाश्रयणं चान्तरङ्गे बहिरङ्गे वेत्यत्र नाग्रहः । ज्ञापके बहिरङ्गएवाचोरानन्तर्यापेक्षायामपि लक्ष्यानुरोधेन तन्नियमस्य परिभाषायामनन्तर्भावात् । अत एव धिन्वन्ति कृण्वन्ति यणादेशे कृते वलादिलक्षण इट् प्राप्नोति, स्थानिवद्भावान्न भवतीति भाष्यकृद्भिरुक्तम् । " नाजानन्तर्ये " इति निषेधाप्रवृत्तौ बहिरङ्गपरिभाषयैव गतार्थत्वापत्तेः ।

किं च कर्त्रर्थमित्यत्र रेफद्वयश्रवणार्थम् उरण्रपरसूत्रे परेणाण्ग्रहणमस्तु इत्याशङ्क्य रेफादेशस्य कृतेऽपि रपरत्वे " रो रि " इति लोपस्यावश्यकतया रेफद्वयश्रवणं नास्तीति भाष्यएवोक्तम् । तत्रासिद्धपरिभाषाप्रवृत्तौ तु लोपानुपपत्त्या रेफद्वयश्रवणार्थत्वस्य निर्बाधत्वापत्तेः । पूर्वप्रवृत्ततया यणादेशे अजानन्तर्यसत्त्वेन "नाजानन्तर्ये" इति निषेधप्रवृत्तावेव तद्भाष्यस्य सामञ्जस्याद् । उत्तरकालप्रवृत्ते लोपे एकस्याप्यचोऽनपेक्षितत्वेन उक्तनिषेधस्य योजयितुमशक्यत्वात् ।

एतेन तत्रत्योक्तपूर्वपक्षविरोधोद्भावनेन हरदत्तमतदूषणमप्यपास्तम् । सिद्धान्तविरोधस्य कैयटमतएवोद्भाव्यत्वात् । " न पदान्त " इतिसूत्रस्थग्रन्थस्य च नाजानन्तर्यपरिभाषा व्यतिरेकेणापि तत्र नानुपपत्तिरित्याशयेन प्रवृत्तत्वात् । कैयटमतेऽपि आजिति द्वित्वस्याविवक्षिततया वृत्रहभ्यामित्यादौ एतत्प्रतिषेधप्रवृत्त्यापत्त्या " ह्रस्वस्य पिति कृति " इति तुगागमापत्त्या असिद्धो नलोप इति भाष्योक्त्या " नलोपः सुप्स्वर " इति "असिद्धं बहिरङ्गम्" इति वेति कैयटोक्त्या च विरोधात् । अनित्यत्वोक्तेश्च "एत ऐ" इत्यत्र हरदत्तमतेऽपि साम्यात् ।

यत्तु " एत ऐ " इत्यस्याचः स्थाने जायमानत्वेऽपि अच

आनन्तर्याभावान्न दोष इति । तदसत् । आनन्तर्यं ह्यव्यवहित-पूर्वापरीभावो वा निमित्तकार्यिणोरन्यतरस्याच्त्वं वा । नाद्यः । अजिति द्वित्वविवक्षायामेव पर्यवसानात् । नान्त्यः । पचावेदमित्यत्रापि सत्त्वात् । "यणः प्रतिषेधः" इतिवार्त्तिकप्रत्याख्यानस्य च "झलो लोपाद्" इत्येतदभिप्रायकत्वाद्, एतत्प्रतिषेधानित्यत्वाभिप्रायकत्वाद्वा, असिद्धपरिभाषायाः कार्यकालत्वेऽप्येतत्परिभाषाया यथोद्देशपरत्वाद्वेति दिक् ।

अत्रायं सिद्धान्तः—अन्तरङ्गं बलवद्" इति परिभाषा निरपवादा । "असिद्धं बहिरङ्गम्" इति तूक्तापवादा ।

यत्तु विप्रतिषेधसूत्रे पूर्वपरिभाषा गतार्थेति भाष्यम् । तदभ्युच्चयमात्रमिति भागवृत्तिकैयटलघुविवरणकारादयः ।

बृहद्विवरणकारास्तु—"नाजानन्तर्ये" इति परिभाषा माऽस्तु । तज्ज्ञापकेनासिद्धपरिभाषाऽनित्यत्वस्यैव ज्ञाप्यत्वादित्याहुः । "नाजानन्तर्ये" इति भाष्यमप्यसिद्धपरिभाषाया अनित्यत्वपरतयैव नेयमिति दीक्षिताः ।

वस्तुतस्तु विषयविशेषावच्छिन्नमनित्यत्वं समर्पयितुं नाजानन्तर्यपरिभाषाश्रौव्यमिति भाष्याशयः । अत एव वृत्तिकारसीरदेवाभ्यामुक्तम्—"नलोपः सुप्स्वर" इति सूत्रे कृतितुग्ग्रहणेनासिद्धपरिभाषाया अनित्यत्वं ज्ञाप्यते । तेनामू इत्यत्र बहिरङ्गस्यैकादेशस्यासिद्धत्वेनान्तरङ्गमुत्वं सिध्यति । पपुषः पश्येत्यत्र बहिरङ्गस्य संप्रसारणस्यासिद्धत्वात् "वस्वेकाजाद्घसाम्" इतीट् च न भवतीति । अत एव बहिरङ्गपरिभाषाया अनित्यत्वाद् या सेत्यत्र बहिरङ्गमपि त्यदाद्यत्वमन्तरङ्गेटापि नासिद्धमिति हरदत्तः ।

केचित्तु यथोद्देशपक्षेऽसिद्धपरिभाषायास्तत्राप्रवृत्त्या कार्य-

कालपक्षे च "नाजानन्तर्ये" इति निषेधात् तुग्ग्रहणं सार्थकमेवेत्याहुः । "न यासयोः" इति ज्ञापकादेव तत्र बहिरङ्गपरिभाषाया अप्रवृत्तेः इत्यास्तां तावत् ।

प्रकृतमनुसरामः । ननु पूर्वस्येति षष्ठ्या कार्यित्वनिमित्तत्वरूपसंबन्धद्वयस्योपसंग्रहसिद्धे विधिग्रहणं माऽस्तु । तत्रापि पूर्वस्मान्निमित्तत्वेनाश्रितादिति व्याख्येयत्वात् । अन्यथा हेगौरित्यत्र गकारात्परस्य विधौ वृद्धेः स्थानिवत्त्वाद् "एङ्ह्रस्वाद्" इति संबुद्धिलोपापत्तेः । सत्यम् । योगविभागार्थं तत्, तेन पूर्वस्य विधौ स्थानिवदेव न तु स्वाश्रयम् ।

यद्वा—विधिग्रहणसामर्थ्याच्छास्त्रीयेऽशास्त्रीये च विधिमात्रे स्थानिवत्त्वम् । तेन पटयतीत्यादौ टिलोपाभाववेलायाम् "अत उपधाया"इति वृद्धेर्निमित्ताभावादेवाभावात् टिलोपे कृतेऽपि न प्रवृत्तिः । अशास्त्रीयस्यापि वृद्ध्यभावस्यातिदेशात् ।

ननु पूर्वसूत्राद्विधिग्रहणानुवृत्त्यैव सिद्धिः । यद्वा—स्थानिवदिति वतिबलेनाभावोऽप्यतिदिश्यते, उशीनरवन्मद्रेषु यवाः सन्तीतिवत् । तदुक्तम्—

काममतिदिश्यतां वा सच्चासच्चापि नेह भारोऽस्ति इति ।

इति चेत्, सत्यम् । तथाऽपि पूर्वस्यैव विधौ स्थानिवत्त्वम्, न तु पूर्वपरयोर्विधाविति नियमार्थत्वात् । तेन इयतुरिति सिद्धम् । अन्यथा इणोऽतुसि यणादेशे "द्विर्वचनेऽचि" इति स्थानिरूपातिदेशादिकारस्य द्वित्वे तत्काले यणोऽपहारात् अन्तरङ्गत्वात्सवर्णदीर्घः स्यात् । व्याश्रयत्वेन "वार्णादाङ्गम्"इत्यप्रवृत्तेः । न च सवर्णदीर्घानन्तरं यणि बाधकाभावान्निमित्तस्य विनाशोन्मुखत्वान्न सवर्णदीर्घः । कृतेऽपि यणि स्थानिवद्भावेन निमित्तविघाताभावात् । इ अतुस् इति स्थिते "अन्तादिवच्च" इ-

त्यभ्यासग्रहणेन ग्रहणादभ्यासह्रस्वे "दीर्घ इणः किति" इति दीर्घे तत्सामर्थ्याद्यणभावे इ अतुरिति स्यात् । उक्तरीत्या तु सवर्णदीर्घस्य पूर्वपरोभयविधित्वाद्यणादेशस्य स्थानिवद्भावानुपपत्त्या सवर्णदीर्घस्य निमित्तविघातापत्त्या अकृतव्यूपरिभाषया तदप्रवृत्तौ द्वितीयस्य इकारस्य यणादेशे पूर्वस्य दीर्घे च सिद्धमिष्टम् । इह सन्निधिसाम्येऽपि स्थान्यपेक्षमेव पूर्वत्वं गृह्यते, न त्वादेशाद् निमित्ताद्वा। तेन वैयाकरणः सौवश्व इत्यत्र यणादेशस्य स्थानिवद्भावमाश्रित्य प्राप्तौ "एचोऽयवायाव" इति आयावादेशौ न स्तः । एचो यणादेशोत्तरकाले प्रवृत्त्या अनादिष्टादचः पूर्वत्वस्य विरहात् । तदुक्तम्—

अचः पूर्वत्वविज्ञानादैचोः सिद्धमिति ।

न च स्थानिन आदेशेनापहृतत्वात्कथं तदपेक्षपूर्वत्वोपादानम्। पूर्वत्वे तस्योपलक्षणत्वात् ।

अथैवं निराद्येत्यत्र जग्ध्यादेशः घात्यादित्यत्र वधादेशश्च स्यात् । तत्र हि—"ण्यल्लोपौ" इति पूर्वविप्रतिषेधेन पूर्वं णिलोपस्ततः प्रत्ययलक्षणेन वृद्धिः । तथा चानादिष्टादचो णिच इकाराद् आद् घात् इत्यनयोः पूर्वत्वं नास्ति । एकदेशविकृतन्यायेन च अदिहन्ग्रहणाभ्यां तद्ग्रहणामिति चेन्न । स्थानिद्वारा तयोरप्यनादिष्टादचः पूर्वत्वात्। न च स्थानिनि तस्यार्थसिद्धत्वेऽपि शास्त्रीयत्वाभावादतिदेशानर्हत्वात् कथमादेशस्यानादिष्टादचः पूर्वत्वलाभ इति वाच्यम् । "अचः परस्मिन्"इत्यतिदेशस्यैव शास्त्रीयकार्यत्वात्स्थानिवत्सूत्रेण तस्यैवातिदेशसंभवात् । "न पदान्त" इति सूत्रे सवर्णग्रहणञ्चेह लिङ्गम् । अन्यथाऽल्लोपानन्तरप्रवृत्तस्यानुस्वारस्य स्वरूपतोऽनादिष्टादचः पूर्वत्वाभावादेव स्थानिवद्भावाप्रसक्त्या

तन्निषेधवैयर्थ्यात् । नन्वेवम् ब्राह्मणकण्डूतिरिति न सिद्ध्येत्, कण्डूयतेः क्तिचि अल्लोपयलोपौ, अल्लोपस्य स्थानिवत्त्वादुवङ् तस्य स्थानिद्वाराऽनादिष्टादचः पूर्वत्वाद् "अचः परस्मिन्" इति स्थानिवद्भावादकारेण व्यवधानान्नोट्, नापि "लोपो व्योः" इति वलोपः । "हलि च" इति दीर्घे कण्डूवूतिरित्यस्यापत्तेः । न चोवङः स्थानिद्वाराऽनादिष्टादचः पूर्वत्वेऽपि न तस्यात्र कार्यम्, किं तु वकारमात्रस्य, स च नादेशत्वपर्याप्त्याश्रय इति तस्यापि स्थानिद्वारकमनादिष्टादचः पूर्वत्वं नास्तीति वाच्यम् । "सर्वे सर्वपदादेशा" इति न्यायेन कण्डू इत्यस्य कण्डुव् इत्यादेशः । तस्य कण्डू इत्यादेशे कार्येऽल्लोपस्य स्थानिवत्त्वसौलभ्यात् ।

अत्राहुः—स्थानिद्वारकमनादिष्टादचः पूर्वत्वमनित्यम् । कण्डूतिरिति भाष्योदाहरणसामर्थ्यात् । तितउमाचष्टे तितापयतीति हरदत्तग्रन्थाच्च । अन्यथा णौ टिलोपे च तस्य स्थानिवत्त्वाद् "अचो ञ्णिति" इति वृद्ध्यभावेऽपि "अत उपधाया" इति वृद्ध्याऽऽकारे तस्य स्थानिद्वारा उकारात्पूर्वत्वेन उकारलोपस्य स्थानिवद्भावात्पुको दुर्लभत्वात् । न च पुक आकारान्तसमुदायावयवत्वादाकारमात्रस्य च पूर्वत्वान्न पुग्विधावुकारलोपस्य स्थानिवद्भाव इति वाच्यम् । उक्तन्यायेन आकारान्तस्यापि पूर्वत्वादिति ।

यत्तु तितउ णिच् इति स्थिते वृद्धिटिलोपयोर्नित्यत्वे परत्वाद् "अत उपधाया" इति वृद्धिः, ततष्टिलोपे आदन्तस्य स्वत एवानादिष्टादचः पूर्वतया स्थानिवद्भावस्य दुर्वारतया पुको दुर्लभत्वम् । तस्मात् शपि णिचो गुणे तस्य वृद्धौ आयादेशे तितायतीत्येव रूपम् । न च तिता णिच् इति स्थितेऽन्तरङ्गत्वाद् आद्गुणे शप्ययादेशे तितयतीत्यस्यापत्तिः । अकृतव्यूह-

परिभाषया पूर्वमाद्गुणस्याप्रवृत्तेः। वृद्ध्या तन्निमित्तविघातस्योत्पत्स्यमानत्वात्। अकृतव्यूहपरिभाषाया अन्तरङ्गपरिभाषाऽपवादत्वात्। न च शपि गुणस्य "अचः परस्मिन्" इति स्थानिवत्त्वादाद्गुणस्य निमित्तस्य विघातो न भवतीति वाच्यम्। पूर्वपरयोर्विधौ स्थानिवत्त्वाभावात्। लुङि तु तिता णिच् चङ् तिप् इति स्थिते "तनोतेर्डउः सन्वच्च" इति व्युत्पत्तिपक्षे "अनभ्यासस्य" इति द्वित्वनिषेधे "चङ्परनिर्ह्रासे" इति टिलोपस्य स्थानिवत्त्वनिषेधेन ह्रस्वाभावे णिलोपस्य स्थानिवत्त्वादसिद्धत्वाद्वाऽतोलोपाभावे दीर्घविधौ स्थानिवद्भावनिषेधात्सवर्णदीर्घेऽतितादित्येव न त्वातितापदिति।

तच्चिन्त्यम्। टिलोपस्य नित्यत्वात्। "अचः परस्मिन्" इति कार्यातिदेशेन वृद्धिप्राप्तावपि "लक्षणान्तरेण प्राप्नुवन्नानित्यः" इत्यनित्यत्वात्। किं त्वनित्यमपि अनादिष्टादचः पूर्वत्वमिह नेष्यतइत्यत्र प्रमाणं चिन्त्यमिति।

वस्तुतस्तु स्थानिद्वारकमनादिष्टादचः पूर्वत्वमित्यत्र मानाभावः। अशास्त्रीयतयाऽतिदेशानर्हत्वात्। अत एव आह्व अ इत्यत्र संप्रसारणे आतोलोपस्य स्थानिवद्भावात्तन्निमित्ते यणादेशे च आह्व इति सिद्धमित्याशङ्क्य आतोलोपस्य स्थानिवद्भावो न भवति उकारस्यानादिष्टादचः पूर्वत्वाभावादिति भाष्यम्। व्याख्यातं च कैयटेन—

नन्वनादिष्टादचः पूर्वो वकार इति तदादेशस्यापि स्थानिवद्भावादनादिष्टादचः पूर्वत्वं भविष्यति, नैतदस्ति, शास्त्रीयकार्यसिद्धये स्थानिवद्भावो विधीयते, न त्वनादिष्टादचः पूर्वत्वे लौकिके इति।

यत्तु "अचः परस्मिन्" इत्यतिदेश एव शास्त्रीयं कार्यमि-

त्यादि, तदसत् । अतिदेशस्य शास्त्रीयत्वविरहानुद्धारात् । अतिदेशनिष्ठशास्त्रीयताया अकिञ्चित्करत्वात् । यद्रूपवैकल्यादुपदेशाप्रवृत्तौ सत्यामतिदेशो मृग्यते तद्रूपनिष्ठशास्त्रीयत्वस्यैवापेक्षितत्वात् । अन्यथाऽपशब्दानुकरणस्याप्यसाधुत्वं स्यात् । असाधुत्वमाश्रित्यासाधुप्रयोगनिषेधे प्रवर्त्तयितव्येऽसाधुत्वस्यापेक्षिततया तस्यापि शास्त्रीयत्वापत्तेः । "प्रकृतिवदनुकरणम्" इति हि तत्रातिदेशशास्त्रम् । ब्राह्मणेन नापभाषितवै इति निषेधोऽतिदेश्यः । तद्घटकं चासाधुत्वम् । प्रकृतेऽपि "स्थानिवदादेशः" इति अतिदेशशास्त्रम् । "अचः परस्मिन्" इति स्थानिवद्भावोऽतिदेश्यः । तद्घटकं चानादिष्टादचः पूर्वत्वमिति साम्यात् । न चेष्टापत्तिः । ऋलृक्सूत्रस्थभाष्यादिस्वपरग्रन्थविरोधात् । अत एव घूत्वेत्यत्र यणादेशानुपपत्तिरेव भाष्ये उपन्यस्ता, न तु ऊठः स्थानिवत्त्वात् "लोपो व्योः" इति यकारलोपापत्तिरपि, अनादिष्टादचः पूर्वत्वाभावादिति कैयटेनोक्तम् । "स्यत्यात्" इति सूत्रेऽपि आदिष्टादचः पूर्वत्वात्सखीयतेः क्वौ अल्लोपस्य न स्थानिवत्त्वमिति शङ्कायां तत्रोक्तम् । क्वौ लुप्तं न स्थानिवदिति च समाहितम् । "लोपो व्योः" इति सूत्रेऽपि कण्डूरित्यत्रातोलोपस्य स्थानिवत्त्वादुवङ् स्यादित्याशङ्क्योक्तम्—

तत्रैव क्विबाश्रय ऊठ् करिष्यते ऊठि च कर्त्तव्ये नास्ति स्थानिवद्भावः । आदिष्टादचः पूर्वत्वात् । अत एव कण्डुवौ कण्डुव इत्यादावूठ् । उवङि कर्त्तव्ये नास्त्यल्लोपस्य स्थानिवद्भाव इति ।

स्थानिद्वारके त्वनादिष्टादचः पूर्वत्वे गृह्यमाणे तदनित्यत्वपरतया बहूनां ग्रन्थानां कदर्थनं स्यात् ।

यत्तु स्थवीयानित्यत्र गुणलोपयोस्तुल्यकालत्वात् गुण-

स्य कथमनादिष्टादचः पूर्वत्वमित्याशङ्क्य स्थानिनोऽनादिष्टादचः पूर्वत्वात्तद्द्वारेण गुणस्यापि भविष्यति, तत्र स्थानिवद्भावे सति त्वकारेण व्यवधानादवादेशाप्रसङ्ग इति कैयटेनोक्तम्। तदभ्युपेत्यवादमात्रम्। उक्तयुक्तेः। अज्झलादेशेऽपि स्थानिवदिति पक्षमुपक्रम्य लिखितत्वाच्च। इयेषेत्यादौ "अभ्यासस्यासवर्णे" इति इयङुवङोर्निमित्तविघातकत्वं गुणस्योपपादयितुं सवर्णग्रहणसार्थक्यस्य स्वयमेवोक्तत्वात्। तस्य प्रत्याख्येयत्वाच्च। निराद्येत्यादौ चासिद्धपरिभाषया समाधानात्। आश्रीयमाणायामेव प्रकृतौ स्थानिवद्भाव इति पक्षे जग्ध्यादेशे णेर्निमित्तत्वेनानाश्रयणात्स्थानिवत्त्वानुपपत्त्योक्तरीत्यैव समाधेयत्वाद्। अत्र च पक्षे विधीयते इति विधिः। कर्मणि किप्रत्ययः। पूर्वस्येति शेषे षष्ठी। सा च न स्थानेयोगा। अनुवादे परिभाषाऽनुपस्थानात्। एतेनाऽऽयन्नासञ्जिति व्याख्यातम्। "इणो यण्" "श्नसोरल्लोपः" इत्यनयोः स्थानिवद्भावेन अजादित्वादाट्प्रवृत्तेः। पूर्वस्य तदवयवस्य तद्विकारस्य वा विधावित्यर्थादागमादिविधावपि स्थानिवत्त्वप्रवृत्तेः। "अचः" इत्यत्र त्वादेशपदसमाभिव्याहारात्स्थानषष्ठी। इहापि स्थानेग्रहणानुवृत्तेर्वा।

भाष्ये तु निमित्तापेक्षं आदेशापेक्षं वा पूर्वत्वमित्यपि पक्षद्वयमुक्तम्। वैयाकरणादौ तु ऐचोरसिद्धत्वान्न दोषः। नाजानन्तर्यपरिभाषा त्वनित्या। न च निमित्तापेक्षमिति पक्षे वैयाकरणादौ कथमतिप्रसङ्गो य्वोरेव निमित्तात्पूर्वत्वादैचोश्च विधेयत्वादिति वाच्यम्। तयोरपि तदवयवत्वादिति न्यासकारः।

अत्र विधिरिति भावे किः। पूर्वस्येति कर्मणि षष्ठीत्यपि बोध्यम्। ननु निमित्तापेक्षया पूर्वत्वे द्वाभ्यामित्यादौ त्यदाद्यत्वस्य स्थानिवद्भावात् "सुपि च" इति दीर्घः "इद्य-

ति" इतीत्वस्य स्थानिवत्त्वादिगन्तलक्षणो गुणो लवनं लावक इत्यादौ गुणवृद्ध्योः स्थानिवत्त्वादवावादेशौ च न स्यातामिति चेत्, अत्र भाष्यम्—

स्वाश्रया एते विधयो भविष्यन्तीति ।

यद्यपि विधिग्रहणसामर्थ्यादत्रातिदेशे स्वाश्रयनिवृत्तिरिति सिद्धान्तः, तथाऽपि "द्वयोरेकस्य डतरच्" "देयमृणे" "किरतौ लवने" इत्यादिनिर्देशात्सिद्धिरिति कैयटः ।

पूर्वत्वं च व्यवहितसाधारणम् । पूर्वं मथुरायाः पाटलिपुत्रमित्यादिदर्शनात् । पूर्वस्येति साक्षादुपादानात् "तस्मिन्निति निर्दिष्टे" इत्यस्यानुपस्थितेः । एवं च स्वरविधौ स्थानिवद्भावनिषेधोऽपि सङ्गच्छते । चिकीर्षक इत्यत्र सनकारापेक्षया ईकारस्य रेफषकाराभ्यां व्यवहितत्वात् । स्वरविधौ व्यञ्जनमविद्यमानवदित्यस्य सत्त्वेऽपि स्थानिवद्भावे तदभावात् । अत एव चङ्परनिर्ह्रासे निषेधोपसंख्यानं वक्ष्यते। तेन पटयति अवधीदित्यादौ स्थानिवत्त्वम् । भाष्यमते वधादेशस्यादन्तत्वात् । "आर्द्धधातुके" इत्यस्य विषयसप्तमीत्वादित्यादि प्रागुक्तम् । न च पटयतीत्यत्र सुबन्ताण्णिजुत्पत्त्याऽन्तवर्त्तिविभक्त्या पदत्वाज्जश्त्वापत्तिः, तद्विधौ स्थानिवद्भावनिषेधादिति वाच्यम् । कर्मसमर्पकात्प्रातिपदिकादेव णिजुत्पत्तेः । सुबन्तादिति पक्षेऽपि "णाविष्ठवद्" इत्यतिदिष्टभसंज्ञया पदसंज्ञाया बाधात् । एतेन पट्व्या मृद्व्या इति सर्वत्रप्युक्तत्वान्मूर्द्धाभिषिक्तसूत्रोदाहरणमिति भाष्यं व्याख्यातम् । तथा हि—पटु ई आ इति स्थिते परयणादेशे कृते निमित्तात्पूर्वत्वे गृह्यमाणे परयणादेशनिमित्ताद्दाकाराद्व्यवहितपूर्व उकारो न भवति इति तस्य यणादेशे कर्त्तव्ये यणः स्थानिवत्त्वं न स्यात् । अतो व्यवहितस्यापि पू-

र्वत्वाश्रयणात्सिद्धम्। न च पूर्वयणादेश एव प्रथमं स्यादिति वाच्यम्। परयणादेशस्य नित्यत्वात्। न च सति स्थानिवद्भावे पूर्वयणादेशस्यापि कृताकृतप्रसङ्गित्वान्नित्यत्वमेवेति वाच्यम्। तथाऽपि शब्दपरविप्रतिषेधेन परयणादेशस्याधिकबलत्वात्। पूर्वापरविषयभेदादेकस्यापि लक्षणस्य भेदात्। एकस्य च कार्यित्वनिमित्तत्वयोर्विरोधात्परत्वेन व्यवस्थाश्रयणात्।

नन्वेवं कर्त्र्या हर्त्र्या इत्यत्र स्वरो न स्यात्। कर्तृ ई आ इति स्थिते हि यदि नित्यत्वात्परयणादेशः स्यात्तस्य स्थानिवद्भावात्पूर्वस्य यण उदात्तयणोऽनन्तर आकारो नेति उदात्तत्वं न स्यात्। ईकारस्यानुदात्तत्वात्। यदा त्वन्तरङ्गत्वात्पूर्वं पूर्वयणादेशः, तदा ङीप उदात्तत्वं तस्यापि यणि आकारस्य तदिति सिद्धम्। मैवम्। पूर्वयणादेशमेवोदात्तस्थानिकमाश्रित्य विभक्त्युदात्तसिद्धेः। न च परयणादेशेन व्यवधानं स्वरविधौ व्यञ्जनस्याविद्यमानवद्भावात्।

भाष्यकारास्त्वाहुः—स्वार्थद्रव्यलिङ्गसंख्याकारकाणां प्रतीतिक्रमः प्राक्रियादशायामावश्यकः। तथा हि—नागृहीतविशेषणन्यायेन प्रथमं सामान्यमभिधीयते। ततस्तदाश्रयो द्रव्यम्। तस्य लिङ्गसङ्ख्याश्रयत्वेनान्तरङ्गत्वात्। ततो लिङ्गम्। द्वित्वादिसंख्याया वस्त्वन्तरापेक्षतया बहिरङ्गत्वात्। द्वित्वादिव्यवच्छेदकतया एकत्वस्यापि तथात्वात्। ततः संख्या। कर्मादिकारकशक्तीनां द्रव्यविजातीयक्रियापेक्षतया बहिरङ्गत्वात्। ततः परिशेषात् कारकमिति। एवं चार्थप्रतीतिक्रमेणैव शब्दे कार्याणि प्रवर्त्तन्ते। अतो विभक्तिनिमित्तकयणादेशादीकारनिमित्तकयणादेश एव बलवान्। एतेन शब्दपरविप्रतिषेधोऽप्यपास्तः। बहिरङ्गस्यासिद्धतया दुर्बलत्वात्। अतो नेदमुदाहरणम्। अकृतव्यूह-

परिभाषा त्वनित्येति ।

स्यादेतत् । स्थानिनो यत्र कार्ये निमित्तत्वेनाश्रयणं तत्र स्थानिवत्, उतानाश्रयणेऽपि । नान्त्यः । श्लेष्म३घ्न पित्त३घ्न द३ध्यश्च म३ध्वश्च इत्यादौ अल्लोपयणादेशयोः स्थानिवद्भावेन संयोगसंज्ञाविरहात् गुरुत्वनिबन्धनप्लुतानुपपत्तेः । द्विर्वचनवरेयलोपानामुत्तरसूत्रे उपादानापत्तिश्च । "अनचि" इति पर्युदासात्तत्सदृशस्य हल एव तत्राश्रयणम्, न त्वच इति प्रथमपक्षे स्थानिवत्त्वाप्रसक्त्या तत्परित्यागाल्लाघवम् ।

ननु वरेयलोपेऽचोऽनाश्रयणेऽपि आकारलोपविधौ "अचि क्ङिति" इति प्रकृतिराश्रितैव, तत्कथम्भाष्ये वरेशब्दपाठ इति, मैवम् । यङवयवाकारस्य प्रत्ययत्वाभावात् । अजादौ प्रत्यये परे च आकारलोपविधानात् । अदुग्धेत्यत्र क्सस्य "अलोऽन्त्यस्य" इति अल्लोपे तस्य स्थानिवत्त्वाद् "झलो झलि" इति सिचो लोपो न स्यादिति लुग्विधेयः स्यात्, घ्नन्तीत्यत्राल्लोपस्य स्थानिवत्त्वादानन्तर्यविरहात्कुत्वं च न स्यात् । नाद्यः । निराध्येत्यत्र जग्ध्यादेशप्रसङ्गात् । तत्र णेरनाश्रयणेन स्थानिवत्त्वानुपपत्तेः । अकुर्व्याशामित्यत्र "ये च" इत्युकारलोपस्य अलुन्याशामित्यत्र "ई हल्यघोः"इति ईत्वस्य अजय्याशामित्यत्र जन जनने इत्यस्माद्यत्ययेन तङि जनी प्रदुर्भावे इत्यस्माद्वा छान्दसत्वात् श्लौ "ये विभाषा" इत्यात्वविकल्पस्य राय्याशामित्यत्र "रायो हलि" इत्यात्वस्य च प्रसङ्गात् । सर्वत्र स्थान्यनाश्रयणात् । द्वितीयपक्षे तु नायं दोषः । व्यवहितपूर्वविधावपि स्थानिवत्त्वप्रवृत्तेः ।

अत्र भाष्यम् । अविशेषेणेत्येव पक्षो युक्तः । स्वाश्रयकार्यनिवृत्तेरुक्ततया उकारलोपादीनामप्रसक्तेः । संयोगसंज्ञायाः

पूर्वपरोभयविधित्वेन स्थानिवत्त्वाप्रसक्तेः । प्रतिषेधन्तराणां च सूत्रएव कृतत्वात् । तदेव चाविशेषेणेत्यत्र ज्ञापकम् । "लुग्वा दुह"इत्यत्र लुग्ग्रहणं त्वावश्यकम् । अदुहीत्यत्र वकारस्याझल्त्वात् । घ्नन्तीत्यत्र तु श्रुतिकृतमानन्तर्यमाश्रीयते, स्थानिवत्त्वकृतं तु व्यवधानमविघातकम् । वचनसामर्थ्यात्तत्र प्रवृत्तेः । अत एव हननमित्यादौ नातिप्रसङ्गः इति सप्तमे वक्ष्यते ।

स्यादेतत् । पूर्वविधाविति पञ्चमीसमासो माऽस्तु । बेभिदिता माथितिकः अपीपचन्निति भाष्योदाहरणत्रयस्यान्यथासिद्धेः । तथा हि–बेभिद्यशब्दात्तृच् । नित्यत्वादल्लोपयलोपौ । तत"एकाच"इतीट्प्रतिषेधः स्यात् । उपदेशेत्यस्य एकाचि अनुदात्ते चेत्युभयविशेषणत्वात् । द्विःप्रयोगश्च द्विर्वचनम् । अल्लोपस्य स्थानिवत्त्वे तु व्यवधानान्नोक्तनिषेध इति । तन्न । विहितविशेषणाश्रयणात् । तृचश्च यङन्तादेवोत्पत्त्या उपदेशे य एकाच् भिदिति ततोऽनुत्पत्तेः । माथितं पण्यमस्य माथितिकः । "तदस्य पण्यम्" इति ठक् । तत इकादेशः । "यस्येति च" इत्यल्लोपः । तान्तत्वात्कादेशोऽपि न प्रसज्यते । "ठस्येक"इत्यत्र स्थान्यादेशयोरकारस्योच्चारणार्थतया वर्णमात्रस्य स्थानित्वादल्विधित्वादनल्विधादिति इकारादेशस्य स्थानिवत्त्वनिषेधात् । समुदायस्य तथात्वेऽपि सन्निपातपरिभाषया समाधानात् । अल्लोपस्याजादित्वनिबन्धनभसंज्ञानिमित्तकतया तत्कृततकारान्तत्वमादाय अजादित्वविघातककादेशस्याप्रवृत्तेः । अपीपचन्नित्यपि न प्रयोजनम् ।

ननु झेः "इतश्च" इति इकारलोपएकदेशविकृतन्यायेन झ् इत्यस्य झिभावानपायात् "झोऽन्तः" इत्यन्तादेशे चङकारस्य तदकारेण सह पररूपे तस्य परं प्रत्यादिवद्भावात् झिग्रहणेन ग्रहणात् "सिजभ्यस्त"इति जुसादेशः स्यात्, स्था-

निवद्भावे तु णिलोपस्य पररूपस्य वा व्यवधानान्नेति चेद्, न । वेत्तेरनन्तरं लङ एव झिः संभवतीति तत्साहचर्या-दभ्यस्तादपि लङादेशस्यैव झेर्जुसादेशविधानात् ।

न च सिचा साहचर्याल्लुङादेशस्यैव झेरस्त्विति वाच्यम्। परसाहचर्यस्य बलवत्त्वात् । "विप्रतिषेधे परम्" इति न्यायात् । अत एव भवतेर्यङ्लुङन्ताल्लुङि अबोभूवन्निति माधवः । न चैवम् "अदभ्यस्ताद्" इत्यस्यैव वारणार्थं पञ्चमीसमासाव-श्यकत्वम् । पररूपे झस्याभावात् । अल्विधौ अन्तादिवद्भावानु-पपत्तेः । झकारस्यादादेशे कर्त्तव्येऽल्विधित्वेन स्थानिवद्भावासं-भवाच्च ।

अत्राहुः–नेह साहचर्यं नियामकतया भगवतोऽभिमतम् । अपीपचन्नित्युदाहरणात् । "द्वित्रिचतुर्" इति सूत्रे कृत्वोऽर्थ-ग्रहणात्तस्यानित्यत्वात् । तस्मादबोभूवुरित्येव युक्तम्। "आतः" इति नियमस्य सिचः परत्वमाश्रित्य यो जुस्प्राप्तस्तन्मात्रं विषय इति माधवादिभिरुक्तत्वात् ।अभ्यस्ताश्रयस्य जुसो दुर्वारत्वा-त् । तन्नियमस्य लाघवात्सामान्यविषयकत्वेऽपि "अदभ्यस्ताद्" इत्यदादेशेऽबोभूवदिति रूपान्तरमस्तु । नित्यत्वेन वुको गुण-बाधकत्वात् । अबोभूवान्निति तु चिन्त्यमेव । अन्तादेशस्य दुर्लभत्वात् ।

अत्राहुः—मथितयतेः क्विपि टिलोपणिलोपयोः "वेरपृ-क्तस्य" इति लोपे च मथित्। तेन चरतीति ठक्। तस्यैकादेशार्थं पञ्चमीसमास आवश्यकः । एतादृशकल्पनायां च माथितिक इति भाष्योदाहरणस्यैव मानत्वात् । नन्वेवं विगणय्येति न स्यात् । अयादेशे कर्त्तव्येऽल्लोपस्य स्थानिवत्त्वात्। अनुगमय्य इत्यादिमित्संज्ञेषु चरितार्थतया ऽऽरम्भसामर्थ्यविरहात्। मैवम् ।

पूर्वस्माद्विधौ स्थानिवद्भावस्यानित्यत्वात् । तथा चाष्टमे हरदत्तेनोक्तम् । अनित्यः पूर्वस्माद्विधौ स्थानिवद्भावः । "निष्ठायां सेटि" इति सेड्ग्रहणादिति । तथा हि । न तावदनिड्व्यावृत्त्यर्थं तत् । ण्यन्तात्तदसम्भवात् ।

न च संज्ञपितः पशुरित्यत्र "यस्य विभाषा" इति प्रतिषेधः, "सनीवन्त" इति विकल्पितेट्कत्वादिति वाच्यम् । तत्रैकाच इत्यनुवृत्तेः । अन्यथा दरिद्रातेरिट्प्रतिषेधापत्तेः । यदि च पूर्वस्माद्विधौ स्थानिवत्त्वं नित्यं स्यात्, तदा निषेधाप्रसक्तिरेव । णिचा व्यवधानात् । तस्मादनित्यत्वं ज्ञाप्यम् इति । "वस्वेकाज्" इति सूत्रे कैयटेनाप्युक्तम्, पूर्वस्मादपि विधावित्येतदनित्यमिति । परिदृढय्य गत इति णिलोपस्यासिद्धत्वं व्याश्रयत्वात् परिहृत्य पूर्वस्मादिति स्थानिवत्त्वमाशङ्क्य प्रबेभिदय्य प्रस्तनय्येति भाष्योदाहरणसामर्थ्यान्नेति माधवः ।

यद्वा—"लघुपूर्वाद्" इत्यत्र वर्णरूपान्यपदार्थग्रहणाद्वर्णग्रहणे च जातिग्रहणाद्व्यवधानेऽपि न दोष इति दीक्षिताः ।

# न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ५७ ।

पदस्य चरमावयवे द्विर्वचनादौ च विधेये परनिमित्तोऽजादेशो न स्थानिवत् । कानि सन्ति, कौ स्तः । यणावादेशयोः कार्ययोः "श्नसोरल्लोपः" इत्यल्लोपो न स्थानिवत् । न च अनादिष्टादचः पूर्वत्वाभावादेव न तथेति वाच्यम् । वाक्याद-

पोद्धृत्य पदानि संस्क्रियन्तइति पक्षे तत्सत्त्वात् । " युष्मद्युपपदे " इत्यादौ पदान्तरसापेक्षतयाऽपि पदसंस्कारदर्शनात् । अत एवाङ्गसंज्ञासूत्रे स्त्री इयतीत्यत्र पदान्तरनिरपेक्षपदसंस्कारपक्षे स्त्रीशब्देकारस्यानादिष्टादचः पूर्वत्वाभावादिदमादेशलोपस्य न स्थानिवत्त्वमिति कैयटेनोक्तम् । पक्षेपदोक्त्या प्रकृतोक्तपक्षस्यापि तदभिमतत्वात् । हरदत्तस्तु यद्यपि व्याकरणेन पदान्येव व्युत्पाद्यन्ते, न वाक्यम्, तथाऽपि वाक्यगते स्त इत्यादिपदे व्युत्पाद्यमाने कावित्यादेः पदस्यासत्यपि निमित्तत्वे सन्निधानमविरुद्धमित्यनादिष्टादचः पूर्वत्वमित्याह ।

केचित्तु गोचो गोचेत्यादौ "अचः" इत्यल्लोपस्य "अवङ् स्फोटायनस्य" इत्यवङ्विधौ स्थानिवत्त्वानिषेधः । तत्रौकारस्यानादिष्टादचः पूर्वत्वादित्याहुः ।

अत्रेदं तत्त्वम् । विधिशब्दो भावसाधनः । पदान्तस्येति कर्मषष्ठ्या समासः । अन्तशब्दश्चरमावयवपरः । तथा च पदचरमावयवनिष्ठं यत्र विधेयत्वं तत्र स्थानिवद्भावनिषेधः । कानि सन्ति कौ स्त इत्यत्र यदि यकारवकारौ स्यातां वस्तुतः पदान्तौ स्याताम् इति पदान्तविधित्वसम्भवः । तदुक्तम्—

योऽसौ पदान्तो यकारो वकारो वाऽन्ते श्रूयेतेति ।

कैयटेन च व्याख्यातम्–"यकारवकारौ विधीयमानावेव पदान्तौ भवत इत्यस्ति पदान्तताया विधानम्" इति ।

क्वचित्तु पदसंज्ञाविधानेन, यथा वेतस्वानित्यादिवक्ष्यमाणापत्तौ । तदुक्तं विवरणकारैः—

स्वरूपेण सकारः स्थितोऽपि पदान्तत्वेन विशिष्टो विधेय एवेति । षडिक इत्यत्र तु धर्मधर्मिणोरुभयोरपि पूर्वासिद्धत्वान्न कथमपि पदान्तत्वविशिष्टविधानमिति नोक्तनिषेध इति वक्ष्यामः।

नत्वत्र विधिवाक्येषु विधेयतावच्छेदकत्वेन पदान्तत्वातिदेशापेक्षा । "इको यणचि" इत्यादौ स्थानितावच्छेदकतया आदेशतावच्छेकतया वा तदनुल्लेखादसङ्गतिप्रसङ्गात् ।

यदि तु विधीयते इति कर्मव्युत्पत्त्या विधिशब्दो विधेयपरः । पदान्तस्येति शेषे षष्ठी स्थानित्वार्था । तथा च पदचरमावयवनिष्ठं यत्स्थानित्वं तन्निरूपितं यत्र विधेयत्वं तत्र न स्थानिवत्त्वमिति व्याख्यायेत, तर्हि षडिक इति न सिध्येत् । तथा हि—अनुकम्पितः षडङ्गुलिदत्तः षडिकः । "बह्वचो मनुष्यनाम्न" इति ठच् । "ठाजादावूर्ध्वम्" इति ङ्गुलिशब्दस्य लोपः । "यस्येति च" इत्यकारलोपः । तत्र षट् इत्यस्य प्रत्ययलक्षणेनान्तर्वर्तिविभक्तिमाश्रित्य क्रियमाणा पदसंज्ञा तुल्यावधिकतया भसंज्ञया बाध्येत । तथा च जश्त्वेन डत्वं न स्यात् । न च "यस्य" इत्यल्लोपस्य स्थानिवद्भावादकारान्तस्य भसंज्ञा षान्तस्य च पदसंज्ञेति भिन्नावधिकत्वान्न बाध्यबाधकभाव इति वाच्यम् । "न पदान्त" इति निषेधप्रवृत्त्यापत्त्या भसंज्ञाया अपि षान्तएव विश्रामात् । न च जश्विधित्वादेवात्र स्थानिवत्त्वनिषेधः । जश्विधावेव तत्प्रवृत्तेः । इह तु पूर्वमेव जश्त्वस्य निष्पत्तेः, षकाररूपापत्तेरेवात्र विधेयत्वात् । नापि पूर्वत्रासिद्धे न स्थानिवदित्यस्य प्रवृत्तिः । हेतोरुक्तत्वादित्याकरानुसारी ग्रन्थः ।

अत्र केचित्—कर्मसाधनविधिशब्दपक्षेऽपि पदान्तस्य स्थाने विधौ कर्तव्यएव स्थानिवत्त्वनिषेधो भसंज्ञा तु न पदान्तस्थानिकेति कथं निषेधप्रवृत्तिः । न च पदान्तस्थानिको यो विधिस्तद्विरोधिविधिं प्रत्यपि स्थानिवद्भावनिषेधः, अस्ति च पदान्तस्थानिकं जश्त्वं तद्विरोधी भसंज्ञाविधिः, जश्त्वस्य पदसंज्ञापेक्ष-

त्वादिति वाच्यम् । तादृशार्थपरत्वे मानाभावात् । पदान्तस्थानिके विधौ स्थानिवत्त्वनिषेधमात्रेणोपपत्तेः । कानि सन्तीत्यादौ चरितार्थत्वादधिकपरत्वे प्रयोजनाभावात् । एतेन जश्भावसाधिकाया अकारान्तनिष्ठभसंज्ञायाः साधकोऽयं स्थानिवद्भावः । तद्व्यतिरेके भसंज्ञाया अपि षकरान्तनिष्ठत्वापत्तौ तया पदसंज्ञाबाधे जश्भावानुपपत्तेरित्यपास्तम् । जश्भावनिमित्तत्वेनानाश्रयणात् । अकारात्पूर्वभागस्यान्तर्वर्त्तिविभक्त्या पदत्वेन तत्सिद्धेश्च । अत एव जशि नेति पूर्वत्रासिद्धे न स्थानिवदिति च निषेधयोरप्रवृत्तिः । जशि कर्त्तव्ये स्थानिवद्भावो नेत्यर्थे जश्संबन्धिन एव ग्रहणेन जश्भावेन सह बाध्यबाधकभावो निष्पाद्यनिष्पादकभावो वा यस्य संबन्धस्तस्यैव स्थानिवत्त्वनिषेधात् । भावसाधनपक्षेऽपि षडिक इत्यस्य सिद्धेश्च । जश्भावस्य विधेयस्य पदान्तत्वसत्त्वात् । न च जश्भावस्य पूर्वमेव निर्वृत्त्या पदान्तस्य विधेयत्वं नास्तीति वाच्यम् । भसंज्ञाया अपि संभावितत्वादकृतव्यूहपरिभाषया "अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते" इति न्यायाच्च तदप्रवृत्तेः । कर्मसाधनपक्षेऽपि पदान्तस्थानिकविधेयाभावाच्च । न च पदान्तत्वेन सिद्धस्य भत्वात्षकाररूपापत्तिर्विधेयेति वाच्यम् । द्विर्वचनादिसाहचर्येण शास्त्रीयस्यैव विधेयस्योपादानादिति ।

तदत्यन्तमसत् । अनादिष्टादचः पूर्वत्वेन दृष्टस्य पदचरमावयवस्य स्थाने विधौ कार्ये परनिमित्तोऽजादेशो न स्थानिवदिति वाक्यार्थः । तथा च "दध्यत्रेत्यत्र संयोगान्तलोपप्रसङ्गे पदान्तविधिं प्रति नेत्ययमपि प्रतिषेधो नास्ति, पदान्ते विधेये स प्रतिषेधो न च लोपोऽभावात्मकत्वात्पदान्त" इति कैयटग्रन्थविरोधः । एवं वृक्षव् इत्यत्र विधेयस्य वलोपस्यावयवत्वाभावात्

"न पदान्त" इति णिलोपस्य स्थानिवत्त्वनिषेधो नेति कौस्तुभ-मनोरमाग्रन्थविरोधः। त्वद्रीत्या लोपप्रतियोगिनो वकारादेः पदान्तत्वसत्त्वान्निषेधस्य दुर्वारत्वात्। एवं वेतस्वानित्यत्र कर्मसाधनपक्षे न दोष इत्येतत्परभाष्यविरोधः। तदस्मिन्नस्तीत्यर्थे कुमुदनडवेतसेभ्यो ड्मतुप्। डित्त्वादकारलोपः। "तसौ मत्वर्थे" इति भसंज्ञायां रुत्वाभावः। न च तस्य चातुरर्थिकत्वान्निर्वृत्ताद्यर्थकत्वे तथाऽपि दोष इति वाच्यम्। तत्रानभिधानमित्यभिप्रायेणोक्तत्वात्। तत्र सान्तस्य भसंज्ञायां क्रियमाणायामल्लोपस्य स्थानिवद्भावात्सान्तत्वं नास्तीति भसंज्ञा न स्यात्। न च "न पदान्त" इति निषेधः। भसंज्ञायाः पदान्तस्थानिकत्वाभावात्। तथा च पदान्तस्थानिके विधौ यद्विरोधी तद्विधिं प्रत्यपि न स्थानिवद्भाव इत्यर्थोऽवश्यं वाच्यः। अस्ति च पदान्तस्थानिको रुत्वविधिः। तद्विरोधी भसंज्ञाविधिः। तं प्रति अल्लोपस्य स्थानिवद्भावनिषेधे सति तस्य भसंज्ञा सिद्धा। तथा चाधिकार्थपरत्वे मानाभाव इत्यसंबद्धमेवाभिधानम्। अत एव स्थानिवद्भावनिषेधव्यतिरेकेणैव यस्य पदान्तत्वं सिद्धम्, तस्य विधौ "न पदान्त" इति निषेधः कर्मसाधनाविधिशब्दपक्षे प्रवर्त्तत इति भाष्यकैयटयोरेव स्पष्टम्। वेतस्वानित्यत्र हि स्थानिवद्भावनिषेधं विना सकारो न पदान्तत्वेन सिद्धः। स्थानिवद्भावसत्त्वेऽकारान्त एव पदसंज्ञाविश्रामात्। कानि सन्तीत्यत्र च "न पदान्त" इति निषेधं विनाऽपि इकारस्य पदान्तत्वसत्त्वाद्यणादेशे कर्तव्येऽल्लोपस्य स्थानिवद्भावनिषेधसौलभ्यम्। भावसाधनपक्षेऽपि तत्सिध्यतीति त्वन्यदेतत्। एवं षडिक इत्यत्र "न पदान्त" इति निषेधप्रवृत्तिं विना षकारो न पदान्तत्वेन सिद्धः अतो दुर्लभैव तत्रैतन्निषेधप्रवृत्तिः।

न चान्तर्वर्तिविभक्त्या तस्य पदान्तत्वं सिद्धमेवेति वाच्यम् । स्थानिवद्भावनिषेधाभावे तुल्यावाधिकया भसंज्ञया तद्बाधापत्तेरुक्तत्वात् । एतन्निषेधस्यैव तत्पदसंज्ञायामुपजीव्यत्वात् वेतस्वानित्यतो विशेषाभावात् ।

यत्तु कानि सन्तीत्यत्रैव निषेधोपपत्तिरिति तन्न । पदान्तस्थानिके विधौ यस्य बाध्यबाधकभावो निष्पाद्यनिष्पादकभावो वा सम्बन्धस्तस्य स्थानिवत्त्वानिषेध इत्यवश्यं वाच्यम् । जश्त्वविधितो वैषम्याभावात् । निष्पाद्यनिष्पादकभाव आदेशस्य विवक्षितः स्थानिनो वा ? । नाद्यः । अल्लोपस्य यणादेशेन तदभावात् । नान्त्यः । षडिक इत्यत्राकारस्यापि स्वान्तनिष्ठभसंज्ञाद्वारा जश्त्वरूपे पदान्तस्थानिकविधावनुगुणत्वात् निषेधस्य दुर्वारत्वात् । ननु साक्षादनुगुणत्वं निवेश्यमितिचेन्न । साक्षात्त्वप्रवेशे गौरवात् । किं च, साक्षात्त्वम् हि किं संज्ञामात्रानपेक्षत्वम्, उत स्वभिन्नवृत्तिसंज्ञाऽनपेक्षत्वम्, उत स्वमात्रवृत्तिसंज्ञाऽनपेक्षत्वम् ? । नाद्यः । अकारस्याप्यच्त्वेन रूपेण यण्यनुगुणत्वात् । न द्वितीयः । अच्त्वस्यापि अकारभिन्नवृत्तित्वात् । नान्त्यः । अप्रसिद्धेः । अथ यस्यां व्यक्तौ यत्र निमित्तत्वपर्यवसानं तत्पर्याप्तसञ्ज्ञातिरिक्तसञ्ज्ञानपेक्षत्व तदर्थ इति चेद् । अणादिसञ्ज्ञाया अप्यकारपर्याप्ततया तदतिरिक्ताया अच्सञ्ज्ञाया एवापेक्षितत्वात् । अथ भेदप्रतियोगिन्यां सञ्ज्ञायां प्रकृतकार्यनिमित्तत्वमपि वाच्यम् अणादिसञ्ज्ञास्तु न तथा इति चेन्न । तथापि यथोद्देशे अचि परतो यत्कार्यं दृष्टं तद् आदेशेऽपि भवतीति कार्यातिदेशेन लोपे सत्यपि "अचः परस्मिन्" इत्यनेनैव यणादीनां प्रसक्त्या अकारे निमित्तत्वपर्यवसानाभावात् । नच कार्यकालपक्षे शास्त्रीयत्वाविशेषात् अकारनिष्ठाया एवाच्संज्ञाया

लोपोत्तरमतिदेशः, यणादेशस्तु "इकोयणचि" इत्यनेनैवेति चेद् । तथापि अकारे निमित्तत्वस्यानन्वयात् । अच्सञ्ज्ञाया लोपेऽतिदेशेऽपि निमित्तत्वस्य फले एव विश्रामात् ।

एवं पर्यवसानं फलोपधायकत्वं सम्भावनामात्रं वा ? । नाद्यः । निषेधात्प्रकृते फलानुपधानात् । नान्त्यः । अच्त्वेन इकारादीनामपि तथात्वात् । अत्र स्थानिवद्भावेन फलानुपधानं तत्राकः सवर्णे दीर्घ इत्यपवादेनेति तु विशेषः । नच कानि सन्तीत्यत्र इकारे न निमित्तत्वसम्भावना, अकारलोपेऽपि तदभावात् इति वाच्यम् । लोपे सति अकारेऽपि तदभावात् । स्थानिवद्भावप्रयुक्ता सम्भावना विवक्षितेति चेत् । तर्हि सा पक्षद्वयेऽपि लोपस्यैव नत्वकारस्येत्युक्तमेव ।

ननु अतिदेश्यतावच्छेदकधर्मो यादृशः प्रकृते निमित्ततावच्छेदकत्वेन निर्णीतस्तदवच्छिन्नायां यस्यां व्यक्तौ पदान्तस्थानिकविधिनिरूपितनिमित्तत्वं सम्भावितं तद्वृत्तितदतिरिक्तधर्मानपेक्षत्वं विवक्षितम्,प्रकृतेऽतिदेश्यतावच्छेदको निमित्ततावच्छेदकत्वेन निर्णीतो धर्मोऽच्त्वं तदवच्छिन्नायां लोपव्यक्तौ कानि सन्तीत्यत्र यणादेशनिमित्तत्वं सम्भावितं तादृशलोपवृत्तिर्योऽच्त्वातिरिक्तो धर्मस्तदनपेक्षत्वं यणादेशे प्रसञ्जनीये लोपस्यास्त्येवेति चेद् । सत्यम् । अच्त्वस्य केवलस्य यणादेशानापादकत्वात् । कार्यान्तराविशिष्टस्यैव तस्य तदापादकत्वात् । नहि यद्यत्र परतोऽच् स्यात् तदा यणादेशः स्यादित्यापादयितुं शक्यम् । पूर्वस्य इक्त्वाभावे प्रगृह्यत्वे वा सत्यपि तस्मिंस्तदनुत्पत्तेः । तस्मात्तदभावप्रयोजकाभावप्रतियोगित्वमेवानुगुणत्वम् वाच्यम् । यथा चाच्त्वस्य कानि सन्तीत्यत्र तथात्वम् तथा षढिक इत्यत्र अकारस्यापि । तदभावे षकारान्त एव भसञ्ज्ञाप्रसङ्गात् जश्त्वाभाव

प्रयोजकत्वात् इति स्थानिवत्त्वनिषेधो दुर्वारः स्यात् इति दिक् । सिद्धान्ते तु पदान्तस्य यत्र विधीयमानत्वं तत्र स्थानिवत्त्वनिषेधः । षडिक इत्यत्र तु जश्त्वस्य पूर्वासिद्धत्वान्न निषेध इति सति स्थानिवद्भावे भपदसञ्ज्ञयोर्भिन्नावाधिकतया षान्तस्य पदसञ्ज्ञासिद्धिः । तेन न पदसञ्ज्ञाविरहप्रयुक्तषकाररूपतापत्तिः । नच षकाररूपताविधानमादायैव निषेधापत्तिः । तस्यापदान्तत्वात् । अन्यथा जश्त्वापत्तेः । अनुकम्पितो वागाशीर्दत्तो वाचिकइत्यत्र तु "एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्य" इति समस्तस्यैवोत्तरपदस्य लोपस्वीकारः ।

यत्तु अकृतव्यूहपरिभाषया अन्तरङ्गानपीतिपरिभाषया वा षडिक इत्यत्रापि न पूर्वं जश्त्वमिति । तत्र नाद्यः । उक्तरीत्या निमित्तस्य विनाशोन्मुखत्वाभावात् । शङ्कामात्रस्याप्रयोजकत्वात् । न द्वितीयः । स्वादिष्वितिपदसञ्ज्ञाया अङ्गमात्रविश्रान्ततया लुकि दुर्लभत्वेऽपि सुबन्तत्वप्रयुक्तायास्तस्या अतथात्वेन लुक्यपि प्रत्ययलक्षणेन सुलभत्वात् । अन्यथा पञ्च सप्तेत्यादौ नलोपो न स्यात् । राजपुरुष इत्यादावपि तथा । तत्रापि लुक एव स्वीकारात् । अन्यथा ऽत्राल्लोपापत्तेः । गोमत्प्रिय इत्यादौ नुमाद्यापत्तेश्च । पदसञ्ज्ञा त्वन्तर्वर्तिविभक्त्याश्रयेण षकारान्तस्येति कैयटोक्तेश्च विभक्तेरश्रूयमाणतया सुबन्तस्य पदसञ्ज्ञायामपि षकारान्त एव पर्यवसानमित्येवंपरत्वात् ।

अथ भावसाधनपक्षे ब्रह्मबन्धूरित्यत्र धकारस्य जश्त्वं स्यात् ऊङा सहैकादेशस्य परादिवद्भावेनोङ्ग्रहणेन ग्रहणात् । तस्मिन्परे स्वादिष्वितिपदसञ्ज्ञाया धकारान्ते प्रसङ्गात् । नच भसञ्ज्ञया बाधः । तत्र स्थानिवद्भावप्रवृत्त्या तस्या उकारान्त एव विश्रामात् । एवं वेतस्वानित्यत्र सकारस्य रुत्वापत्तिः, पदान्तत्वे वि-

धीयमाने स्थानिवत्त्वनिषेधात् पदसञ्ज्ञायाः सकारान्ते सुस्थत्वात्।

अत्र भाष्यम् "पदे अन्तः पदान्तः" पदे परतोऽन्त इति यावत्। तस्य विधौ न स्थानिवत्। इमतुप्तु न' पदमिति सस्य रुत्वे कर्तव्ये भवत्येव स्थानिवद्भावनिषेध इति भत्वस्यापि सकारान्त एव विधानात् अवधिभेदाभावाद्भसञ्ज्ञया पदसञ्ज्ञाबाधः।

"यद्वा यथाऽन्यानि पदकार्याणि उपप्लवन्ते रुत्वं जश्त्वं, एवमिदमपि पदकार्यमुपप्लोष्यते। किम्? भसञ्ज्ञा नामेति"।

अस्यार्थः। भसञ्ज्ञायां पदमित्यनुवर्तते पदं सद्भसञ्ज्ञं भवतीति पदत्वसद्भावे तन्निमित्तकं रुत्वं माभूदिति भसञ्ज्ञायामपि पदविषयकत्वात्पदान्तविधित्वमस्तीति स्थानिवत्त्वनिषेधात्सान्तस्यैव भसञ्ज्ञेति तया पदत्वबाधान्न रुत्वम्। पूर्वं पदसञ्ज्ञैव भसञ्ज्ञोपजीव्या, पश्चात्तु भसञ्ज्ञया तद्बाध इत्यन्यदेतद्।

प्रकृतमनुसरामः। द्विर्वचने सुद्ध्युपास्यः। "अनचि च" इति द्वित्वे कर्तव्ये यणादेशो न स्थानिवत्। नच असिद्धं बहिरङ्गमिति द्वित्वानुपपत्तितादवस्थ्यम्। हरदत्तमते नाजानन्तर्ये इति तन्निषेधात्। स्थानिवद्भावनिषेधसामर्थ्याच्च।

वरे इति निपातनान्न विभक्तेर्लुक्। तन्निमित्तोऽजादेशो न स्थानिवत्। यायावरः। यातेर्यङन्तात् "यश्च यङः"इति वरच्। अतो लोपः। तस्य "आतोलोप इटि च" इत्याकारलोपे कर्तव्ये न स्थानिवत्त्वम्। स्यादेतद्। अतो लोपस्य परनिमित्तकत्वमेव नास्ति आर्द्धधातुके इति विषयसप्तम्या आर्द्धधातुकोत्पत्तेः पूर्वमेवातो लोपप्रवृत्तेः। अत एव "अचो यत्" इत्यत्र वृत्तौ वक्ष्यते 'अच् ग्रहणं किम्? यावता हलन्ताण्ण्यतं वक्ष्यति।

अजन्तभूतपूर्वस्यापि यथा स्यात् दित्स्यं धित्स्यम्' इति ।

अत्र हरदत्तादयः—'वरेग्रहणसामर्थ्यात्परसप्तमीपक्षोऽप्यस्ति । अत एव "अनुदात्तेतश्च हलादेः" इत्यत्र आदिग्रहणम् । असति हि तस्मिन्हलन्तादिति विज्ञायेत । ततश्च जुगुप्सनो मीमांसन इत्यत्र युज्न स्याद् इति । यदि च विषयसप्तमी स्यात् प्रागेव प्रत्ययोत्पत्तेरतो लोपे सति हलन्तत्वादेव तत्रापि युच् सिद्ध्येदिति आदिग्रहणं व्यर्थं स्याद्' इति ।

एवं यातेर्यङन्तात् क्तिचि अतो लोपे यलोपविधौ स्थानिवत्त्वनिषेधाद्यलोपे तस्य स्थानिवद्भावादाकारलोपे पुनर्यकारलोपे यातिरिति रूपम् ।

न च पुनराकारयकारयोर्लोपे प्रत्ययमात्रश्रवणापत्तिरिति वाच्यम् । आलोपस्य स्थानिवत्त्वात् आभीयत्वेनासिद्धत्वाद्वा । न च स्वस्य स्वं प्रत्येव कथमासिद्धत्वमिति वाच्यम् । चिणोलुङ्न्यायेन तत्सम्भवात् । वक्ष्यति च वार्त्तिकम्—

" चिणो लुकि तग्रहणानर्थक्यं संघातस्याप्रत्ययत्वात्तलोपस्य चासिद्धत्वाद्" इति ।

अस्यार्थः—चिणो लुग्विधौ अकारितरामित्यादौ तरबादेर्लोपो मा भूदित्येतदर्थकं तग्रहणं व्यर्थं तङ्तरसमुदायस्य प्रत्ययत्वाभावात् । न च तकारलोपोत्तरं तरपो लोपापत्तिः । तलोपस्यासिद्धत्वात् । न चाभेदे तदनुपपत्तिः । विषयभेदेन लक्षणभेदाश्रयणादिति ।

भाष्ये तु कण्डूयतेः क्तिचि कण्डूतिरिति यलोपोदाहरणम् ।

वृत्तौ तु क्तिन्नित्युक्तम् । तत्र यद्यपि अप्रत्ययेन बाधितत्वात्कण्डूयेत्येव भवितव्यमिति भाष्योक्त्या च क्तिनो दौर्लभ्यम् । तथाऽपि 'क्तिन्नाबादिभ्य' इति क्तिन् । 'क्तिचीत्येव युक्तः पाठः'

इति हरदत्तः । अल्लोपयलोपौ । न च अल्लोपस्य स्थानिवत्त्वा-दुवङ्प्रसङ्गः यलोपं प्रत्येव स्थानिवत्त्वनिषेधादिति वाच्यम् । इष्टापत्तेः । "छ्वोः" इति तस्य ऊठः सम्भवात् । न च तं प्रत्युवङादेशस्य स्थानिवत्त्वापत्तिः । आदिष्टादचः पूर्वत्वात् । अत एव ऊठः पुनरुवङ् नेति हरदत्तादयः । एवं तेष्ठीयतेः क्विपि अल्लोपयलोपयोरल्लोपस्य स्थानिवत्त्वादियङि "लोपो व्योः" इति यलोपे तेष्ठितिरिति रूपम्, पेपीयतेस्तु एरनेकाच इति यणि यलोपे च पेप्तिः, शो तनूकरणे इत्यस्माद् यङन्तात् क्विजादिषु कृतेषु "पूर्वत्रासिद्धे न–" इति स्थानिवत्त्वनिषेधाच्छस्य षत्वे ष्टुत्वे च शाष्टिरिति विशेषः ।

आकर्षिकः । चरतीत्यर्थे "आकर्षाद्" इति ष्ठल् । "लिति" इति ककाराकारस्योदात्तत्वे कार्ये "यस्येति च" इति अकारलोपो न स्थानिवत् । न च वचनसामर्थ्यं गतिः । कारक इत्यादौ चरितार्थत्वात् । "स्वरविधौ व्यञ्जनमविद्यमानवद्" इति रेफादेर्व्यवधायकत्वानुपपत्तेः । आनन्तर्यसम्भवे व्यवहितानाश्रयणात् । न च ष्ठलो लित्करणसामर्थ्यादकारेण व्यवधाने स्वरसिद्धिः । आकारस्यापि पक्षे उदात्तत्वापत्तेरिति कैयटः ।

अन्ये तु श्रुतिकृतमेवानन्तर्यं लित्करणसामर्थ्यादाश्रीयते । घ्नन्तीत्यादौ कुत्ववदिति, तन्न युक्तमित्याहुः ।

तत्र चिकीर्षक इत्यादौ ईकारस्योदात्तत्वे कर्त्तव्येऽतो लोपो न स्थानिवदिति उदाहरणम् बोध्यम् । शिण्ढि इत्यत्र सवर्णानुस्वारयोः कर्त्तव्ययोः श्नसोरल्लोपो न स्थानिवत् ।

ननु श्नसोरल्लोपे कृते अनुस्वारप्रवृत्तेः अनुस्वारस्यानादिष्टादचः पूर्वत्वाभावात् स्थानिवत्त्वमसक्तिरेव नास्ति । नच

स्थानिद्वारकमनादिष्टादचः पूर्वत्वमिति वाच्यम् । अशास्त्रीयत्वेन तस्यातिदेशानर्हत्वात् ।

यत्तु हरदत्तादिभिरुक्तम् । अनादिष्टादचः पूर्वत्वापेक्षे "अचः परस्मिन्" इत्यतिदेशे कर्त्तव्ये "स्थानिवदादेश" इत्यतिदेशः प्रवर्त्तत इति । तन्न । पूर्वसूत्रे निराकृतत्वात् । तथा हि । अनादिष्टादचः पूर्वत्वमतिदिश्यते " अचः परस्मिन् " इत्यतिदेशो वा । नाद्यः । अशास्त्रीयत्वात् । नान्त्यः । " अचः परस्मिन् " इत्यतिदेशस्य प्रकृतेऽपि स्थानिन्यप्रवृत्ततया तदादेशेऽतिदेष्टुमशक्यत्वात् । स्थानिन्यदृष्टस्यातिदेशानर्हत्वात् । आवश्यकं च हरदत्तस्य तत् । अन्यथा लोलुव इत्यादौ इयङुवङोः कृतयोर्लघूपधगुणप्राप्त्या तद्वारणार्थं " न धातुलोप–" इति सूत्रारम्भ इति तत्सिद्धान्तानुपपत्तेः । स्थानिद्वारकमनादिष्टादचः पूर्वत्वमाश्रित्याल्लोपस्य स्थानिवद्भावादेव गुणप्रसक्तेस्तत्र वारयितुं शक्यत्वात् ।

न च तत्सूत्रप्रत्याख्यानाद् भाष्यकारस्य स्थानिद्वारकमप्यनादिष्टादचः पूर्वत्वमिति अभिप्राय आवश्यक इति वाच्यम् । तत्सूत्रप्रत्याख्याने भाष्यकृतस्तात्पर्यविरहात् । " आतोऽनुपसर्गे " इति सूत्रस्थभाष्यविरोधस्य पूर्वमेव दर्शितत्वाच्च । न च तद्भाष्यादिकं स्थानिद्वारकस्यानादिष्टादचः पूर्वत्वस्यानित्यत्वाभिप्रायकमेवेति वाच्यम् । स्थानिद्वारकस्यानादिष्टादचः पूर्वत्वस्य युक्तिशास्त्रोभयविरुद्धत्वेन 'स ह्यादिष्टादचः पूर्वः' इत्यादिभाष्यस्यैव बलवत्त्वात् । अत एव " अक्षय्यं हि वै चातुर्मास्ययाजिनः सुकृतं भवति " इत्येतदपेक्षया कृतकत्वलिङ्गकविनाशित्वानुमानसहकृतायाः "तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति श्रुतेः प्राब-

स्यमिति भामत्यादावुक्तम् । अत एव कण्डूतिरित्यत्रादिष्टादचः पूर्वत्वात् पुनरुवङ् नेत्युक्तम् । सत्यम् । आदेशापेक्षं निमित्तापेक्षं वा पूर्वत्वमिति पक्षद्वये स्थानिवत्त्वप्रसक्त्या निषेधोपपत्तिः । एतेनोक्तनिषेधादेव स्थानिद्वारकस्यानादिष्टादचः पूर्वत्वस्य ग्रहणमित्यपास्तम् ।

केचित्तु हरितशब्दादाख्यानण्यन्ताद्विचि हरिल्लुनातीत्यत्र "तोर्लि" इति लत्वे कर्त्तव्येऽतो लोपस्य णिलोपस्य वा स्थानिवत्त्वनिषेधार्थं सवर्णग्रहणम् । न च पूर्वत्रासिद्धे न स्थानिवदित्यत एव सिद्धिः । "तस्य दोषः संयोगादिलोपलत्वणत्वेषु" इति तन्निषेधादित्याहुः ।

अन्ये तु प्रतिपदोक्तमेव लत्वं तत्र गृह्यते न तु परसवर्णविधिप्रयोज्यं व्यवहितप्रतीतिकत्वादित्याहुः ।

अपरे तु रेफोत्तरं विधेयलकारप्रश्लेषात् "तोर्लि" इति लत्वमपि प्रतिपदोक्तमेव, परसवर्णस्यानुवृत्तौ गौरवप्रसङ्गात् ।

वस्तुतस्तु "पूर्वत्रासिद्धीये न स्थानिवद्" इत्याश्रित्य सवर्णग्रहणस्य सिद्धान्तेऽपि प्रत्याख्येयत्वान्नायं दोषः इत्याद्यवधेयम् ।

यद्यपि परसवर्णविधौ स्थानिवत्त्वनिषेधस्य तत्स्थानिनोऽनुस्वारस्यापि विधौ स्थानिवत्त्वप्रतिषेधमन्तरेणानुपपन्नतयाऽनुस्वारविधावपि तन्निषेध इति पृथगनुस्वारग्रहणवैयर्थ्यम्, तथापि यत्र परसवर्णप्रसक्तिर्नास्ति शिंषन्तीत्यादौ तत्रानुस्वारो न स्यादिति शङ्कावारणार्थं तत् ।

प्रतिदीव्नेत्यत्र "हलि च" इति दीर्घे कार्ये भसंज्ञानिमित्तकोऽल्लोपो न स्थानिवत् । प्रतिपूर्वाद् दिवः "कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः" इति कनिन् ।

वृत्तौ तु "उपधायां च" इति दीर्घ इति पठ्यते, तद् के-

लेखकैः प्रमादाल्लिखितम्, दिवेर्वकारस्यानुपधात्वात् ।

" उपधायां च " इति सूत्रे प्रतिदीव्नेत्यत्र " हलि च " इति दीर्घ इति वृत्तावेव लिखितत्वादिति हरदत्तादयः ।

दीक्षितास्तु 'आचारक्विबन्तात्क्विपि समाधेयम् । तत्र प्रतिदिवन् इति नान्तम्, तस्यैव धातुसंज्ञा तया वकारस्योपधात्वसम्भवात् । नच, अल्लोपात्पूर्वमकारस्यैव " अनुनासिकस्य क्विझलोः " इति दीर्घापत्तिः । अकृतव्यूहपरिभाषया भाविनमल्लोपमालोच्यान्तरङ्गस्यापि दीर्घस्याप्रवृत्तेः । न च स्थानिवत्त्वाभावेऽपि " असिद्धं बहिरङ्गम् " इति परिभाषयाऽल्लोपस्यासिद्धत्वाद्दीर्घानुपपत्तिः । क्ङिति तुग्ग्रहणेन तस्या अनित्यत्वज्ञापनात् । यथोद्देशपक्षे तत्परिभाषायास्तत्राप्रवृत्तेश्च । एतस्योभयपक्षेऽपि वाच्यत्वाद्' इति आहुः ।

" सग्धिश्च मे " "बब्धां ते हरी " । अदेः क्तिन् " बहुलं छन्दसि " इति घस्लादेशः । "घसिभसोर्हलि च" इत्युपधालोपः । " झलो झलि " इति सलोपः । धि परे सिचो लोप इत्यस्य भाष्यकृताऽनङ्गीकारात् ।

वार्तिकमते तु छान्दसत्वात्सलोप इति कैयटहरदत्तादयः । " झषस्तथोः " इति प्रत्ययतकारस्य धत्वम् । तत् प्रति पूर्वस्माद्विधाविति उपधालोपस्य न स्थानिवत्त्वम् । तस्यानित्यत्वात् । घकारस्य "झलां जश् झशि" इति जश्त्वेन गकारे कर्तव्ये उपधालोपो न स्थानिवत् । समाना ग्धिः सग्धिः "समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु" इति समानस्य सादेशः । द्वितीये भसेर्लोट्, तसस्ताम्, शपः श्लुः । अन्तरङ्गत्वाद् द्वित्वम् । अभ्यासकार्यम् । तत उपधालोपादि प्राग्वत् ।

जक्षतुः । घसेर्लिट् अतुस् । "गमहन" इत्युपधालोपः

"खरिच" इति चर्त्वेन घस्य कत्वे कर्त्तव्ये न स्थानिवत् ।

अत्र वार्तिकम्—

" स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत् " ।

भावरूपस्त्वादेशः स्थानिवदेवेत्यर्थः । तेन पञ्चारत्न्यः, दशारत्न्यः । जसादिषु " छन्दसि वा वचनं प्राङ् णौ चङ्युपधायाः" इति गुणाभावे यण् । तस्य स्थानिवद्भावाद् "इगन्तकालकपाल—" इत्यादिना पूर्वपदप्रकृतिस्वर इति भाष्यम् ।

न चेदमसिद्धपरिभाषया गतार्थमिति वाच्यम् । अकृतव्यूहपरिभाषया पूर्वं यणोऽप्रवृत्तेः । बहुखट्वक इत्यत्र स्थानिवद्भावात् "ह्रस्वान्तेऽन्त्यात्पूर्वम्" इति खकाराकारस्य उदात्तत्वं न भवति, किं तु "कपि पूर्वम्" इत्येव । प्राचितीक इत्यत्र तु 'ह्रस्वान्त' इत्यस्य प्रवृत्तिरिति कैयटहरदत्तादयः ।

किर्योः गिर्योः, व्युत्पत्तिपक्षे "हलि च" इति दीर्घः प्राप्तो यणः स्थानिवद्भावान्नास्ति ।

अच इत्यधिकारे "भुजेः किच्च" "कॄगॄशॄदॄकुटिभिदिच्छिदिभ्यश्च" इति इः । स च कित् । "कॄग्रो रिच्च" इति हरदत्तन्यासकाराभ्यामुपन्यस्तं तु क्वचिदुणादिवृत्तावन्वेषणीयमिति दीक्षिताः ।

(अन्ये) इह "उपधायां च" इति सूत्रे वृत्तिकारोक्तरीत्या किर्योरित्यादिकमव्युत्पत्तिपक्षाश्रयेणापि सिद्धम् । वाय्वोरित्यत्र "लोपो व्योः" इति वकारलोपस्तु असिद्धपरिभाषया निषेद्धुं शक्यः । अत उक्तवार्त्तिके स्वरेत्येवावश्यकमित्याहुः ।

"क्लिलुगुपधात्वचङ्परनिर्ह्रासेषूपसंख्यानम्" । पूर्वत्रासिद्धे च "तस्य दोषः संयोगादिलोपलत्वणत्वेषु" ।

अयमर्थः—क्वौ विधिं प्रति न स्थानिवत् । लवमाचक्षाणो लौः । णिचि टिलोपः, क्वौ णिलोपश्चेत्युभयं वकारस्य क्विन्निमित्ते ऊठि कार्ये न स्थानिवत् । "एत्येधत्यूठ्सु" इति वृद्धिः । ये तु "क्वौ लुप्तं न स्थानिवत्" इति पठन्ति तेषामेतन्न स्यात् । तथा पिपठिषतेः क्वौ अतो लोपे नपुंसके बहुवचने झलच्लक्षणे नुमि कर्त्तव्ये अतो लोपस्य स्थानिवत्त्वनिषेधः स्यात् क्वौ परे कृतत्वात् इति नुम्प्रसङ्गात् । 'क्वौ विधिम्' इति पक्षे तु नुमः क्विनिमित्तत्वाभावाद्भवत्येव स्थानिवत्त्वम् । पूर्वत्रापि क्विनिमित्तकस्य णिलोपस्य स्थानिवत्त्वनिषेधेऽपि णिनिमित्तकस्य टिलोपस्य स्थानिवत्त्वप्रसङ्गादूठोऽनुपपत्तेः । इदं च हरदत्तग्रन्थे स्पष्टम् । कैयटेनापि " क्वौ विधिं प्रति " इत्यर्थो व्यवस्थितो न तु "क्वौ लुप्तम्" इतीत्युक्तम् । क्वचित् "क्वौ लुप्तम्" इत्यप्याश्रीयते एवेति तदर्थः । अत एव " ल्यत्यात्परस्य " इति सूत्रे 'सखीयतेः सखीः लूनीयतेर्लूनीः' इति भाष्यम् । सखीयादिभ्यः क्विपि कृते ऽल्लोपयलोपयोश्चाल्लोपस्य स्थानिवत्त्वादिकारस्य यणा भाव्यम् । ततो यलोपे स्थानिवत्त्वनिषेधाद्, आदिष्टादचः पूर्वत्वात्स्थानिवत्त्वाप्रसङ्गाद्वा यलोपः स्यादित्याशङ्क्य क्वौ लुप्तं न स्थानिवदिति समाधत्त कैयटः ।

अत्र " लोपाजादेश एव न स्थानिवद् " इति पक्षमाश्रित्य आदिष्टादच इत्याद्युक्तम् । देवयतेर्द्यूरिति तूभयथाऽपि सिध्यतीति हरदत्तः ।

ननु " क्वौ विधिं प्रति " इति पक्षे ऊठ् सिद्ध्यति तथाऽपि तस्य स्थानिद्वाराऽनादिष्टादचः पूर्वत्वाद् णिलोपस्य स्थानिवत्त्वाद् " अचो ञ्णिति " इति वृद्धिः स्यात्, तस्मात् "क्वौ लुप्तम्" इत्यवश्याश्रयणीयम् । अत एव इदं तु क्वौ-

लुप्तस्योदाहरणं देवयतेर्द्यूरिति कैयटेनोक्तम् । तत्कथमुभयथाऽपीति चेन्न । स्थानिद्वारकपूर्वत्वे मानाभावस्योक्तत्वात् । न च पक्षद्वयेऽपि प्रत्ययलक्षणेन द्यूरित्यत्र वृद्धिर्दुर्वारेति वाच्यम् । बहिरङ्गस्य ऊठो वृद्धिं प्रत्यासिद्धत्वात् । तथा च स्थानिवद्भावे सत्यपि न क्षतिः । न चैकदेशविकृतन्यायेन "दिव औद्" इत्यस्यापत्तिः । निरनुबन्धपरिभाषया अधातुग्रहणानुवृत्तेर्वा तत्समाधानस्य भाष्ये वक्ष्यमाणत्वात् ।

इदं च सर्वमार्द्धधातुके इति परसप्तमीपक्षे । विषयसप्तमीत्वे त्वतो लोपस्य परानिमित्तकत्वाभावात् न स्थानिवत्त्वप्रसक्तिरिति बोध्यम् । ध्वनितं चेदं "लोपो व्योः" इति सूत्रे यलोपाकिलोपयोर्विप्रतिषेधं वदता भाष्यकृता तदुपपादयता कैयटेन चेति स्पष्टमाकरविदाम् ।

लुका लुप्ते न स्थानिवत् । आमलक्याः फलमामलकम् । "नित्यं वृद्धशरादिभ्यः" इति मयट् । "फले लुक्", "लुक्तद्धितलुकि" इति ङीषो लुक् । परनिमित्तको "यस्येति च" इत्यल्लोपो न स्थानिवत् । अन्यथा स्थानिवद्भावादीकारस्य परत्वमस्तीत्यकारलोपः स्यात् । फलेलुक्प्रत्याख्यानपक्षे तु पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुः पञ्च इन्द्राण्यो अग्नाय्यश्च देवता अस्य पञ्चेन्द्रः, पञ्चाग्निः । आद्ये "आर्हाद्" इति ठक् । तस्य "अध्यर्द्धपूर्व" इति लुक् । "अन्तरङ्गानपि" इति न्यायेन यणः पूर्वं तत्प्रवृत्तावपि स्थानिवत्त्वाद्यणप्रसङ्गः । अविरविकन्यायेन पटुशब्दादेव तत्र ठक् न तु पट्वीशब्दादिति कल्पने च प्रतिपत्तिगौरवम् । न च "भस्याढे तद्धिते" इति पुंवद्भावः । भत्वे भाविन्येव तद्विधानाद् अत्र तु लुकि तदभावात् । "ठक्छसोश्च" इत्यस्यापि लुम-

ङा लुप्ते प्रत्ययलक्षणाभावेन दुर्लभत्वात् । द्वितीये पुंवद्भावविरहात्स्पष्टमुदाहरणम् । "सास्य देवता" इत्यण् । "द्विगोर्लुगनपत्ये" इति लुक् । ततो ङीब्ङीषोः लुक् । तत्सन्नियुक्त ऐकारः आनुक्च श्रूयेत । न च सन्नियोगशिष्टन्यायेन तन्निवृत्तिः । तद्धितलुकि परे स्त्रीप्रत्ययलुको विहिततया तन्निमित्ताया ङीपो ङीषश्च निवृत्तेः स्वपूर्वयोरैकारानुगागमयोर्निवृत्तौ कार्यायाम् "अचः परस्मिन्" इति स्थानिवत्त्वप्रवृत्तेः ।

केचित्तु वरे इत्यत्र वर ई इति प्रश्लेषात् ईकारे परतो विधौ न स्थानिवदिति व्याख्याय प्रकृतवार्तिके लुग्ग्रहणं नारभ्यमिति वदन्ति । स्पष्टं चेदं पदमञ्जर्य्याम् । केचित्तु एवं सति पञ्च गार्ग्यायण्यो देवता अस्य पञ्चगार्ग्यः इत्यत्र ङीषो लुकि ष्फप्रत्ययस्य लुक् न सिद्ध्येत् ङीष्लुकः स्थानिवद्भावेन तद्धितलुकः परत्वाभावात् । ईकारे परतो यो विधिस्तत्रैव त्वया स्थानिवद्भावनिषेधोपगमात् । अस्य च तथात्वाभावात् । एवं पञ्चभिः श्वश्रूभिः क्रीतः पञ्चश्वशुर इत्यत्राकारोकारलोपः स्यात् । ऐनेयः श्यैनेय इत्यादौ "यस्येति च" इति ङीपो लोपे नकारस्यापि निवृत्तिः स्यात् । नकारस्य पूर्वमेव निष्पन्नतया कार्यत्वाभावात् स्थानिवदादेश इत्यस्याप्रवृत्तेः । निवृत्त्यभावरूपकार्यस्याशास्त्रीयत्वात् । न च ङीब्नकारयोः सह विधानेन ईकारपरविध्यभावान्नोक्तनिषेध इति वाच्यम् । आनुगैकारयोर्ङीषा ङीपा च सह विधानेन पञ्चेन्द्र इत्यादेरसिद्धेः इत्याहुः । तन्न । ष्फप्रत्ययेन सहैव ङीषो लुक्प्रवृत्तेः । तत्र हि "प्राचां ष्फ तद्धितः" इति स्त्रीत्वं ष्फप्रत्ययस्यैवार्थो ङीष् तु षित्त्वसामर्थ्याद्भवतीति सिद्धान्तः ।

उपधात्वे कर्त्तव्ये न स्थानिवत् । पारिखीयः । अ-

न्यथा परिखाशब्दाच्चातुरर्थिकेऽणि कृते तन्निमित्तकस्य आ-लोपस्य स्थानिवद्भावात् खकारोपधत्वाभावाद् "वृद्धादके-कान्तखोपधाद्" इति छो न स्यात् । उपधासंज्ञायाः पूर्व-विधित्वात् । न च पटयतीत्यादौ टिलोपस्य स्थानिवद्भाव-निषेधात् पकाराकारस्य उपधासंज्ञायां सत्याम् "अत उपधा-याः" इति वृद्ध्यापत्तिरिति वाच्यम् । उपधासंज्ञानिबन्धनप्र-त्ययविधावेवोक्तनिषेधप्रवृत्तेरिति सिद्धान्तात् । न चैवं सौरी बलाका इति यलोपोदाहरणे उपधाविधौ स्थानिवत्त्वनिषेधादेव तदन्यथासिद्ध्यभिधानं भाष्ये कथमिति वाच्यम् । अनास्थावा-दमात्रत्वात् । तत्र हि "तेनैकादिक्" इत्यणन्तात् ङीप् । एक-स्याणुनिमित्तको द्वितीयस्य चाकारस्य ङीब्निमित्तको लोपः । तद्द्वयस्यापि यकारलोपे स्थानिवत्त्वनिषेधः । द्वितीयलोपस्य त्वाभीयत्वात्समानाश्रयत्वाच्चासिद्धतया यकारस्योपधासंज्ञा-यां तल्लोपसिद्धेः । तथा चोपधात्वं यलोप एवोक्तम्, न तु प्र-त्ययविधाविति । यलोपस्यैव सौरीत्युदाहरणमिति स्पष्टम् ।

चङ्परनिर्ह्रासश्चङ्निमित्तको ह्रस्वः । वादितवन्तं प्रयोजि-तवान् अवीवदद्वीणां परिवादकेन । प्रथमणिचो लोपस्य स्थानि-वत्त्वे सत्याकारस्यानुपधात्वात् "णौ चङ्युपधायाः" इति ह्रस्वो न स्यात् । यस्तु चङ्परो द्वितीयो णिच् तदङ्गसंबन्धित्वस्याका-ररूपायामुपधायामभावात् । प्रथमणिजङ्गसंबन्धित्वस्य सत्त्वेऽपि प्रथमणिचश्चङ्परत्वाभावात् । एवं वारिशब्दाद् "तत्करोति" ण्य-न्ताच्चङ् अवीवरत् । इकारलोपो न स्थानिवत् । न च "ना-ग्लोपि" इति निषेधः । परत्वात् वृद्धौ सत्यां टिलोप इ-त्यभ्युपगमात् । अत एव हलकलयोरदन्तत्वं निपा-तयिष्यते । कुत्वेऽपि न स्थानिवत् । अर्चयतेरौणादिकः

क्प्रत्ययः अर्कः, पाचयतेः क्तिच् पाक्तिः । "चोः कुः" इति कुत्वं प्रति णिलोपो न स्थानिवत् । कुत्वमुपलक्षणम् । अतएव लेहयतेर्लेढिः, दोहयतेर्दोग्धिः, याजयतेर्याष्टिः, वेशयतेर्वेष्टिरिति सिध्यतीति बोध्यम् । कुत्वोपादानस्य पूर्वत्रासिद्धीये न स्थानिवदित्येतन्मूलकत्वात् । तदपि न्यायसिद्धम् । "अचः परस्मिन्" इत्यतिदेशं प्रति त्रैपादिकस्यासिद्धतया तद्विधौ तदप्रवृत्तेः । न च राम इत्यादौ विसर्गो न स्यात् । न्यायसाम्येन स्थानिवत्सूत्रस्याप्यप्रवृत्तौ सुबन्तत्वाभावात्पदत्वानुपपत्तेरिति वाच्यम् । "प्रत्यय" इत्यादिज्ञापकेन तत्प्रवृत्तेः । न चैवं द्विर्वचनसवर्णानुस्वारदीर्घजश्चरोऽपि सूत्रे नोपादेया इति वाच्यम् । इष्टापत्तेः । तथा च वार्त्तिकम्—

"द्विर्वचनादीनि च वरेयलोपस्वरवर्जम्" इति ।

स्यादेतत् । दीर्घग्रहणपरित्यागे स्थलान्तरीये दीर्घविधौ स्थानिवत्त्वापत्त्या "चिण्णमुलोः" इति सूत्रे यङन्ताण्णिजन्ताद्वा णिचि चिणि अशंशामि अशामि इति सर्वैरुदाहृतम् न सिद्ध्येत् । न च दीर्घग्रहणसामर्थ्यम् । अहीडीत्येतदर्थत्वात् । अहेडीत्येतन्निवृत्त्यर्थत्वाच्च । तथा हि—"हेडृ अनादरे" घटादिः, ह्रस्वः । हिडयति । अत्र चिण्णमुलोः कृतयोः ह्रस्वविकल्पस्यैव विधाने अहिडि अहेडीति स्यात् । दीर्घे तु अहिडि अहीडीति रूपमिति कैयटादौ स्पष्टम् ।

अत्राहुः—णित्वजात्यैक्यं गृहीत्वा अशामीति, यङ्लुगन्तात् त्वशंशामीति सिद्धम् । याङि तल्लुकि वा अर्थस्वरयोरविशेषात् । ग्राहितमित्याद्यपि पूर्वस्माद्विधौ स्थानिवद्भावेन णिचा व्यवधाने "ग्रहो ऽलिटि" इति दीर्घस्याप्रवृत्तेः । न च सूत्रमते दीर्घविधौ

स्थानिवद्भावनिषेधात् दीर्घो दुर्वारः। विहितविशेषणाश्रयणात्। एतेन जरीगृहितेत्यपि व्याख्यातम् ।

माधवाचार्यास्तु यङ्लुगन्ताद्ग्रहेस्तृजादाविटो दीर्घः जाग्रहीतेत्यादि इत्याहुः ।

तत्राहुः–द्विःप्रयोगो द्विवर्चनं षाष्ठमिति सिद्धान्ताद् ग्रहेर्विहितत्वम् । यङ्लुकोऽनैमित्तिकतयाऽज्झलादेशतया लुको लुप्तत्वाच्च स्थानिवद्भावोऽपि नेति तस्याशयः ।

एतच्च भाष्यकैयटविरुद्धम् । "एकाचो द्वे" इति सूत्रे हि "ग्रहेरङ्गाद्" इतिभाष्यव्याख्यायां कैयटेनोक्तम्–'जरीगृहितेत्यत्र ग्रहेर्विहितं यद् आर्द्धधातुकमिति विहितविशेषणान्न दीर्घः । तृचो 'जरीगृह्' इत्यङ्गं न तु ग्रहिः, विशेषणसामर्थ्याद्धि यथाश्रुतरूपाश्रयणम्' इति ।

इदं च यद्यपि यङ्प्रक्रमेणोक्तम् तथाऽपि यङ्लुक्यपि न दीर्घ इति तदभिप्रायोऽन्यसाम्यादिति ।

अत्रेदं वक्तव्यम्–यङ्लुकः किंचिन्निमित्तकत्वाभावेन तदुत्तरं प्रत्ययोत्पत्तौ बाधकाभावात् यथाश्रुतरूपाश्रयणे ग्रहेर्विहितत्वानपायात् । न च द्वित्वादिप्रवृत्त्यनन्तरमेवार्द्धधातुकोत्पत्तिः । अन्तरङ्गतया आर्द्धधातुकस्यैवोत्पत्तेः । यङन्ते तु ग्रह्यशब्दोत्तरमेवार्द्धधातुकोत्पत्त्या यथाश्रुतरूपप्रच्यव इति वैषम्यम् । न च जरीगृहित्यङ्गमिति कैयटविरोधः । शुद्धस्य ग्रहेरङ्गव्यावृत्तावेव तत्तात्पर्यात् । यङ्लोपस्य परनिमित्तकत्वाद्यथाश्रुते बाधात्। तत्पूर्वं जरीग्रह्यशब्दात् तृजिति तेनैवोक्तत्वाच्च । अस्तु वा तत्र यङः श्रूयमाणतया तन्निमित्तं द्वित्वादि पूर्वमेव, लुकि तु प्रत्ययलक्षणाद्यपेक्षस्य द्वित्वादेः पश्चादेव प्रवृत्तिरिति माधवाशयः । "ग्रहोऽलिटि" इति सूत्रे एकाज्ग्रहणस्य हरदत्ते-

रक्षिभ्यां ण्यन्ताभ्यां क्विपि तक् रक् इत्याद्यसिद्धेश्च । संयोगस्य तत्र झलन्तत्वात् । संयोगादिलोपे कर्त्तव्ये णिलोपस्य स्थानिवद्भावे तु तदप्रवृत्त्या संयोगान्तलोपे च स्थानिवत्त्वनिषेधेन तत्प्रवृत्त्या उक्तासिद्धेः । न च " काष्ठशगेव नास्ति " इति भाष्यादयं प्रयोगो नास्तीति वाच्यम् । काष्ठशक्स्थातेत्यत्र झलपरसंयोगादेः ककारस्य लोपमाशङ्क्य तथोक्तत्वात् यत्र ककारस्य संयोगादिलोपप्रसक्तिस्तत्रैवानभिधानस्योक्तत्वात् । अत्र च णिलोपस्य स्थानिवत्त्वेन तदप्रसङ्गात् । अत एव कान्तेभ्यः क्विब् नास्तीति व्याख्यातारः ।

लत्वे यथा—निगार्यते, निगाल्यते । णिलोपस्य स्थानिवद्भावाद् " अचि विभाषा " इति लत्वविकल्पः ।

अथ प्रत्ययलक्षणेनैव लत्वम् । न च वर्णाश्रयत्वम्, धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् । एतच्च भ्रूणहत्येति तकारनिपातनेन ज्ञापयिष्यते । यद्वा, अन्तरङ्गतया णिलोपात् पूर्वमेव लत्वमिति चेत्, मैवम् । 'प्रत्ययलक्षणसूत्रमितरव्यावृत्तिमात्रफलकम्, स्थानिवद्भावस्तु स्थानिवत्सूत्रेणैव' इति भाष्ये वक्ष्यमाणत्वात् अजादिप्रत्ययनिमित्तके लत्वे च विशेषणतया अलाश्रयणाद् "अनल्विधौ" इति निषेधात् । नाप्यन्तरङ्गत्वेन सिद्धिः । अकृतव्यूहपरिभाषाविरोधात् ।

किं च " उपसर्गस्यायतौ " इति सूत्रे अयतिपरत्वम् उपसर्गस्य विशेषणं रेफस्य वेति पक्षद्वयम् । आद्ये प्लायत इति लत्वार्थं स्थानिवद्भावोपयोग आवश्यकः, अन्यथा एकादेशे कृते पौर्वापर्यरूपव्यपवर्गाभावः । अयातिनिष्ठपरत्वनिरूपितपूर्वत्वशालिन उपसर्गस्येति तदर्थात् । उभयत आश्रये च अन्तादिवद्भावनिषेधात् । द्वितीये एकादेशस्य परादित्वेन ग्रहणाद्रेफा-

पेक्षयाऽयतेः परत्वेन प्लायते इत्यस्य सिद्धावपि पल्ययते इत्यत्र लत्वं न स्यात्, यकारेण व्यवधानात् । न च वचनसामर्थ्यम् । प्लायते इत्यत्र सावकाशत्वात् । न च तत्रापि स्थानिवद्भावात् अकारेण व्यवधानम् । पूर्वत्रासिद्धे तन्निषेधात् । लत्वविधौ स्थानिवद्भावप्रतिप्रसवे तु येननाव्यवधानन्यायेनोभयत्र लत्वसिद्धिरिति दिक् ।

"णत्वे माषवपनी"इति भाष्यम् । "प्रातिपदिकान्त–"इति सूत्रेण समासान्तस्य नकारस्य णत्वं विधीयमानम् अल्लोपस्य स्थानिवत्त्वनिषेधात् ङीबुत्पत्तेः प्राक् समासविधानात्प्राप्नोतीति कैयटः ।

अत्र प्रत्यवतिष्ठन्ते–बहिरङ्गतयाऽल्लोपस्यासिद्धतया नकारस्य प्रातिपदिकान्तत्वाभावः । प्रहिणोति प्रमीणातीत्यादौचैकदेशविकृतन्यायेनैव " हिनुमीना " इत्यस्य प्रवृत्तेः । न च प्रियाष्ट्न इत्यत्र णत्वनिवृत्तिसिद्ध्यर्थमिदम् । कार्यकालपक्षे बहिरङ्गतयैव सिद्धेः । एतेन प्रियाष्ट्णः इति णत्वस्वीकारपरः पदमञ्जरीग्रन्थोऽपास्त इति ।

तदसत् । तत्र णत्वस्य पूर्वमुपपादितत्वात् ।

यत्तु " अनितेरन्तः " इति सूत्रे हे प्राण् इति णत्वार्थम् " पदान्तस्य " इति निषेधबाधाय " अन्तः " इति योगं विभज्य पदान्तस्यानितेर्णत्वं विधीयते । यद्वा, समीपार्थमन्तशब्दमादाय निमित्तसमीपवर्त्तिनोऽनितिनकारस्य तादृशस्य वा अनितेर्नकारस्य णत्वं योगविभागं विनाऽपि सिद्धम् । आद्ये प्राणिति इत्यादावेकेनाऽऽकारेण व्यवधानेऽप्यारम्भसामर्थ्यात् णत्वम् । द्वितीये तु एकादेशस्य आदिवद्भावात् रेफाद्व्यवहितस्यानितेः संभवात्सिद्धम् । पर्यनितीत्यत्र तु द्वयेनै-

केन वा व्यवधानान्न णत्वमित्यष्टमे व्याख्यातम्। इह णत्वग्रह णे तु पर्यनितीत्यत्रेव प्राणिति इत्यत्रापि द्वाभ्यामेकेन वा वर्णेन व्यवधानात् णत्वं न स्यात्। न च वचनसामर्थ्यम्। निरणिति दुरणितीत्यत्र चारितार्थ्यात्। न चैवं "निर्दुरोरनितेः" इत्येव ब्रूयात् इति वाच्यम्। अनितिं प्रत्युपसर्गत्वाभावेऽपि णत्वापत्तेः। निरानयतीत्यत्र निरो ण्यर्थविशेषकत्वेन णत्वस्यानिष्टत्वात्। किं च, अनितेर्विजन्तान्निष्पन्नान् शब्दस्य निश्शब्देन "निरादयः क्रान्ताद्यर्थे" इति समासे भसंज्ञायामल्लोपे निर्न इत्यत्र णत्वं स्यात्। हे प्राणित्यत्र णत्वप्रतिप्रसवायावृत्त्यर्थम् अक्षरलाघवाच्च "अन्तः" इत्यस्यैव युक्तत्वात्। तस्मादाष्टमिकभाष्याद्यालोच नया अत्र णत्वग्रहणं न कार्यमिति। तदप्यसत्। तन्मात्रपरत्वे "रादनितेः" इत्यस्यैवापत्तेः। रान्तादुपसर्गात्परस्यानितेर्ण इति व्याख्यानसंभवात्। " अनितेः " इत्यस्य प्रयोजनान्तराभावा- त् "पदान्तस्य" इति निषेधस्यापवादसंभवाच्चेति दिक्।

यद्यपि "न मु ने" इत्यत्र योगविभागादसिद्धताया अ- नित्यत्वमाश्रित्य स्थलत्रये स्थानिवत्त्वं सुसाधम्, तथाऽपि ता- दृशाविशेषस्य दुर्ग्रहतया वार्तिकारम्भ एव श्रेयान्।

# द्विर्वचनेऽचि ५८।

द्वित्वनिमित्तमचमाश्रित्य कृतोऽजादेशः स्थानिवत् स्यात् द्वित्वे कर्त्तव्ये। "अचः परस्मिन्" इत्यस्यानादिष्टादचः पूर्वस्य विधावेव प्रवृत्तेः साचूकस्य द्वित्वे कर्त्तव्ये अप्राप्तः स्थानिवद्भावो विधीयते। निमित्तापेक्षया पूर्वस्य विधाविति पक्षेऽपि द्विर्वचनस्य विधौ स्थानिवत्त्वनिषेधादिति कैयटः। रूपातिदेशश्चायम्। चक्र- तुः, चक्रुः। कृ अतुस कृ उस्, इति स्थिते यणः पश्चात् उक्ता-

तिदेशेन कृ इत्यस्य "लिटि धातोः" इति द्वित्वम् । कार्यातिदेशस्वीकारे तु यणादेशे सति प्रकृतेरनच्कत्वात् एकाचो विहितं द्विर्वचनं न प्राप्नोतीति स्थानिवद्भावादनेन सूत्रेण यण्सहितस्यैव द्विर्वचनं स्यात् । रूपातिदेशत्वे च प्रमाणं वक्ष्यते ।

अत्र पञ्च पक्षाः संभवन्ति । तथा हि—अचीत्यादेशोपलक्षणम् । द्विर्वचने इति विषयनिर्देशः । अचि योऽजादेशः स द्वित्वे स्थानिवदिति प्रथमः ।, द्विर्वचन इति विषयनिर्देशः तस्मिन्कर्तव्ये स्थानिवद्भवत्यचि परे इति द्वितीयः ।, द्विर्वचनपदमर्श-आद्यजन्तम् अधिकरणल्युडन्तं वा । द्वित्वनिमित्तत्वविशेषितं च अज्ग्रहणम् आदेशोपलक्षणम् । द्विर्वचननिमित्तेऽचि योऽजादेशः स स्थानिवदिति तृतीयः ।, उक्तविधमेवाऽज्ग्रहणं स्थानिवद्भावविशेषणम् । अजादेशः स्थानिवत् द्विर्वचननिमित्तेऽचि परे इति चतुर्थः ।, द्विर्वचनग्रहणमावर्त्तते । एकेनाज्विशेष्यते तेन च स्थानिवद्भावो विशेष्यते । अपरेण विषयो निर्दिश्यते । द्वित्वे कर्त्तव्ये अजादेशः स्थानिवत् द्वित्वनिमित्ते अचि परे इति पञ्चमः ।

अत्र नाद्यः । द्वित्वनिमित्तत्वरहितमचमाश्रित्य कृतस्याप्यजादेशस्य स्थानिवत्त्वप्रसङ्गात्, अचो द्वित्वनिमित्तत्वेनाविशेषितत्वात् । ततश्चाचिकीर्त्तदित्यत्र णिचि परे कृतस्य "उपधायां च" इति ऋकारस्थानिकस्य इकारादेशस्यापि स्थानिवत्त्वे "चङि" इति कॄ इत्यस्य द्वित्वे "उरद्" इत्यत्त्वे च अचकीर्त्तदिति स्यात् । दुद्यूषति ऊठमाश्रित्य कृतयणादेशस्य स्थानिवत्त्वे दिव्शब्दस्य द्वित्वे दिद्यूषतीति स्यात् । भवनमिच्छतीति क्यजन्तात्सनि ल्युटि कृतयोर्गुणावादेशयोः स्थानिवत्त्वे बुभवनीयिषतीति स्यात् ।

न द्वितीयः । दुद्यूपति इत्यादिदोषद्वयतादवस्थ्यात् अचिकीर्तदित्यत्र तु इत्वस्य तकारव्यवधानान्न दोषः । स्थानिवद्भावभाजो ह्यादेशस्य स्थानिवत्त्वविधानवेलायाम् अचि अनन्तरे स्थानिवत्त्वेन भाव्यम्, तथैवाचि परतः तद्विधिनिर्वाहात्। एवं पपावित्यत्र "आत औ णलः" इत्यौकारेण सह पाशब्दस्य वृद्धौ सम्प्रति आदेशात्परोऽज् नास्तीति स्थानिवत्त्वं न स्यात् । जग्मतुरित्यादौ "गमहन" इत्युपधालोपो व्यवहितत्वान्न स्यात् ।

न तृतीयः । कालावधारणविरहे द्वित्वोत्तरमपि स्थानिरूपावस्थानप्रसङ्गात् ।

न चतुर्थः । पपावित्यादिदोषसाम्यात् । कालावधारणाभावाच्च ।

न पञ्चमः । जग्मतुरित्याद्यनुपपत्तेः । लोपप्रतियोग्यपेक्षयाऽतुसादेः अव्यवहितपरत्वाभावात् । तस्मादुक्तरीत्या पूर्वव्याख्यानमेव युक्तम् ।

तथा हि—द्विर्वचननिमित्तत्वेन अज्विशेषणात् अचिकीर्तदित्यादौ नातिव्याप्तिः। इत्त्वे णिचो द्वित्वे च चङो निमित्तत्वात्। आदेशोपलक्षणाच्च पपावित्यादौ नाव्याप्तिः। पुनर्द्विर्वचनोपादानाच्च कालावधारणलाभात् द्वित्वोत्तरमादेशावस्थानम् ।

अथ द्विर्वचननिमित्तेऽचि परे विधीयमानं स्थानिवत्त्वं चक्रतुरित्यादौ न स्यात् । अतुसो द्वित्वनिमित्तत्वेऽपि तदवयवस्याकारमात्रस्य तन्निमित्तत्वविरहात् । न चारम्भसामर्थ्यम् । चकार चक्रे इत्यादौ द्वित्वयण्निमित्तयोरेकमात्रपर्याप्ततया तत्र चरितार्थत्वात् ।

यदि तु,परस्मिन्नित्यनुवर्त्य तत्राचीति विशेषणम्। व्याख्येयम् "यस्मिन्विधिस्तदादावल्ग्रहणे" इति अजादौ परस्मिन्निति,

चक्रे इत्यादौ तु व्यपदेशिवद्भावादजादित्वमिति कल्प्यते । एवमपि न निर्वाहः । अजादेर्द्विर्वचननिमित्तत्वेऽपि यणं प्रत्यच एव निमित्तत्वात् ।

वस्तुतो " विधौ परिभाषोपतिष्ठते नानुवादे " इति न्यायेन " यस्मिन्विधिः " इति परिभाषाप्रवृत्तिरेव दुर्लभा । अचि योऽजादेश इत्यस्यानुवादत्वात् । तत्राऽऽदेशस्यानुवाद्यतया तद्विशेषणत्वात् अचीत्यस्य तदादिग्रहणपरिभाषाया अप्रवृत्तेः ।

अत्रोच्यते । आचि परतो द्विर्वचनं दृष्टमित्येतावतैवाचो द्विर्वचननिमित्तत्वम् अत्र । तदाहुः—

'तद्भावभाविताभात्रेणेह निमित्तत्वम्'इति । तथा च साक्षाद्वा समुदायघटकतया (वा) द्वित्वोपयोगित्वमात्रं विवक्षितमिति ।

यत्तु द्विर्वचनेनाक्षिप्तः प्रत्ययोऽत्राचीत्यनेन विशेष्यते, परस्मिन्नित्यनुवर्त्तते । अमीषां मध्ये देवदत्तात्परमानयेत्युक्ते यथा सजातीयेन मनुष्यान्तरेणाव्यवहितपर आनीयते तथेहापि प्रत्ययान्तरेणाव्यवहितपरो गृह्यते । तेन द्वित्वनिमित्ते अजादौ प्रत्यये प्रत्ययान्तरेणाव्यवहिते सति योऽजादेशः स स्थानिवदिति सूत्रार्थः । वक्ष्यमाणज्ञापकबलेन णिचा व्यवहिते प्रवृत्तावपि दिद्वनीयिषतीत्यादावनेकप्रत्ययव्यवधानन्नातिप्रसङ्गः । अपीप्यदित्यत्र वर्णव्यवधानेऽपि प्रत्ययान्तराभावात्प्रवृत्तिः । अनुवादे परिभाषाऽनुपस्थानेऽपि निर्दिष्टपरिभाषालभ्यार्थसिद्धिश्च । अत एवेह परस्मिन्नित्यनुवर्त्तते इति न्यासकारः । द्विर्वचनेन प्रत्ययाक्षेपं णिज्भिन्नप्रत्ययव्यवहिते ज्ञापकस्याप्रवृत्तिं च वदतः कैयटस्याप्ययमेवाशय इति ।

तन्न । " यस्मिन्विधिः " इति परिभाषाप्रवृत्तेर्दुर्लभत्वात् । निर्दिष्टपरिभाषाप्रवृत्तिं विना तदर्थस्यानुपपत्ते-

श्च । तथा हि—अमीषामिति निर्धारणे मनुष्यत्वस्य प्रतियोगितावच्छेदकतया तद्विषयस्यापि मनुष्यत्वलाभात्, परशब्दस्य चाव्यवहितपरार्थकत्वात् तथा (अर्थ–) लाभात् । प्रकृते च यदपेक्षमव्यवधानं तस्य प्रत्ययत्वग्राहकाभावात् । ऊर्णुनविषतीत्यर्थं तद्भावभावितामात्रेणेत्यस्यावश्यमाश्रयणीयत्वाच्च । तथा हि—ऊर्णोतेः सनि "सनीवन्त–" इति इटि च ऊर्णु इस् इति स्थिते "विभाषोर्णोः" इति ङित्त्वविरहेण गुणावादेशौ । "सन्यङोः" इति सन्नन्तस्य द्वित्वविधानेऽपि सनो द्वित्वप्रयोजकतया तस्मिन्कृतयोः स्थानिवत्त्वात् नुशब्दस्य द्वित्वे अभ्यासे उकारश्रवणम् । अत्र हि इडभावे "इको झल्" इति सनः कित्त्वापत्त्या गुणविरहात् इटः सन्निष्ठझलादित्वविघटकत्वेन गुणनिमित्तत्वम्, अवादेशे तु स्पष्टमेव । द्वित्वनिमित्तं तु सनेव, तत्र विशेषणान्तरानुपादानात् । तथा च निमित्तकोटावप्रविष्टस्याप्यचस्तत्र विद्यमानत्वमात्रेण निमित्तत्वमाश्रित्यैव तत्र गुणादेः स्थानिवत्त्वमिति ।

नन्वेवम् अरिरिषतीति न स्यात् । ऋधातोः सनि "स्मिपूङ्रञ्ज्वशां सनि" इति इटि गुणे च तस्य इस्शब्दनिमित्तकस्य स्थानिवत्त्वे "अजादेर्द्वितीयस्य" इति इसो द्वित्वप्रसक्त्या अरीषतीतिरूपप्रसङ्गात् । रिस् इत्यस्य द्वित्वं तु तत्रेष्टमिति चेत् । नैवम् । इस्शब्दस्य कार्यित्वेन द्वित्वनिमित्तत्वाभावात् । न हि कार्यी निमित्ततयाऽऽश्रीयते । शायितरीति ज्ञापकात् । अन्यथा शीङोङित्त्वेन गुणनिषेधापत्तेः । न चैवम् ऊर्णुनविषतीत्यपि न स्यात् । सन्नन्तस्य द्वित्वविध्यविशेषेण तत्रापि इस् इत्यस्य द्वित्वनिमित्तत्वासंभवादिति वाच्यम् । मत्वर्थीयेन इनिना कार्योपहितस्यैव निमित्तत्वनिषेधात् । ऊर्णोतौ नुशब्द एव प्रवृत्त्या

सनो द्वित्वानुपधानात् । अरिरिषतीत्यत्र तु रिशब्दस्य द्वित्वभागितया सनो द्वित्वोपहितत्वमिति वैषम्यात् । नन्वेवं जेघ्रीयते देध्मीयते इत्यादावपि घ्रीय् ध्मीय् इत्यादेर्द्वित्वभागितया यङो द्वित्वनिमित्तत्वाभावादेवानतिप्रसङ्गे तद्वारणार्थमचीत्युक्तमिति भाष्यवृत्त्यादिग्रन्थाः कथं संगच्छन्तामिति चेन्न । "अनुस्वारो व्यञ्जनं च अक्षराङ्गम्" इत्यस्मादनन्तरं "स्वरान्तरे व्यञ्जनान्युत्तरस्य" इति प्रातिशाख्ये सूत्रितत्वात् घ्रीय इति समुदाये यकारस्योत्तरावयवतया घ्री इत्यादेरेव द्विरुक्तिरिति तदभिप्रायात् । यदि तु षाष्ठवार्त्तिकभाष्यरीत्या "नटभार्यावद्व्यञ्जनानि" इत्याश्रित्य द्वितीयैकाजवधिकस्य द्विर्वचनमाश्रीयते तदा तु आधिजगे इति अज्ग्रहणस्य व्यावर्त्त्यं बोध्यम् । "गाङ् लिटि" इति द्विलकारकानिर्देशमाश्रित्य "लावस्थायामेव गाङादेशविधानम्" इति भाष्ये उक्तत्वात् ।

ननु वार्तिकमते लिटीत्यादीनां परसप्तमीत्वाभ्युपगमात् गाङादेशस्य परनिमित्तकत्वेऽपि भाष्यकृता विषयसप्तमीत्वाभ्युपगमान्नेदमपि प्रयोजनमिति चेत्,

तर्हि जग्ले इत्याद्युदाहरणम् । आशिति प्रत्यये परे आत्वविधानात् ।

अथानैमित्तिकमात्वं शिति तु प्रतिषेध इति वक्ष्यमाणरीतिराश्रीयते तदा अचीति नोपादेयमेव ।

अथ भसेः क्सौ "घसिभसोर्हलि च" इत्युपधालोपे कृते तस्य स्थानिवत्त्वनिषेधार्थमस्तु इति चेत् ।

अत्र कैयटहरदत्तादयः—

"तत्र सत्यसति वा स्थानिवद्भावे न कश्चिद्विशेषः प्स्वानितिरूपसाम्यात् । न च सति द्वित्वे पकारद्वयमिति वाच्यम् ।

"दृष्टानुविधिश्छन्दसि भवति" इति सिद्धान्तात् । भाषायां क्सुर्दुर्लभ एव उपधालोपश्च छान्दस एव"इति ।

अचीत्येतदेव रूपातिदेशे प्रमाणम् । कार्यातिदेशे तु घ्री, गा, ग्ला इत्येषामेव द्वित्वेन भाव्यमिति तत्र स्थानिवद्भावनिषेधार्थस्य अचीत्यस्य वैयर्थ्यं स्यात् । रूपातिदेशस्वीकारे तु घ्रा, इङ्, ग्लै इत्येषां द्वित्वापत्तौ इष्टरूपं न सिध्यतीति तत्र स्थानिवद्भावो मा प्रवर्त्तिष्टेत्येतदर्थकतया तत्सार्थक्यम् । तदुक्तम्— "अज्ग्रहणं तु ज्ञापकं रूपस्थानिवद्भावस्य" इति ।

अज्ग्रहणप्रत्याख्यानपक्षे तु स्थानिवदिति शब्दाधिकारमाश्रित्य स्थानिवत्सूत्रे कार्यातिदेशपरत्वेन निश्चितस्थानिवच्छब्दस्य अत्र लक्ष्यानुरोधात् रूपातिदेशपरत्वं कल्प्यम् । पूर्वसूत्राद्च इति षष्ठ्यन्तमनुवर्त्य तेनादेशो विशेषणीयः ।

ननु अच इत्यादेशाविशेषणं किमर्थमिति चेत् न । शुशावेत्यत्र वृद्ध्यावादेशयोरिव सम्प्रसारणस्यापि स्थानिवत्त्वे श्विशब्दद्वित्वे शिशावेति रूपं मा भूत् । न च "सम्प्रसारणं तदाश्रयं च कार्यं बलीयः"इति लावस्थायामेव तत्प्रवृत्त्या द्वित्वेन सह समाननिमित्तकत्वमेव नेति वाच्यम् । व्यतिशुशुवाते इत्यादौ दोषस्य दुर्वारत्वात् । "विभाषा श्वेः" इत्यस्य लावस्थायां प्रवृत्तावपि ईजाते ईजाथे इत्यादावतिप्रसङ्गात् कित्त्वस्यादेशविध्यनन्तरप्रवृत्तिकत्वात् । न च तस्यापि लावस्थायामेव विधिरस्त्विति वाच्यम् । अन्तरङ्गैरादेशैर्बाधितत्वात् । "स्वापेश्चङि"इति सम्प्रसारणस्य स्थानिवद्भावे "न सम्प्रसारणे सम्प्रसारणम्" इति निषेधात् असूषुपत् इत्यत्राभ्यासे उवर्णानुपपत्तेश्च । अच इत्युक्ते तु सुप् इत्यस्यैव द्वित्वे तत्सिद्धिः ।

द्वित्वे कर्त्तव्ये इत्युक्त्या तदुत्तरमादेशरूपस्यैवावस्थानम् ।

अन्यथा प्रकृतिभाव एव स्यात् । निन्युरित्यादौ तु पूर्वमियङ्प्रवृत्तावपि द्वित्वोत्तरम् "एरनेकाचः" इति तदपवादो यण् । यद्वा । "प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते" इति न्यायात् पूर्वमेव इयङ् न प्रवर्त्तते । आभीयत्वेन इयङोऽसिद्धत्वात् वा यणिति बोध्यम् ।

स्यादेतत् । स्थानिवद्ग्रहणं निवर्त्य "न पदान्त–" इति सूत्राद् नञ्ग्रहणं चानुवर्त्य उक्तस्थले अजादेशनिषेध एव व्याख्यायताम् भाष्यारूढत्वसाम्यात् । स्थानिवदित्यत्र शब्दाधिकारत्वानाश्रयणेन लाघवात् नपदान्तसूत्रानन्तरपाठानुग्रहाच्चेति । मैवम् । नकारस्य स्वरिततायाः अत्रापि कल्प्यत्वात् । स्थानिवच्छब्दे च तस्याः क्लृप्तत्वात् । अचूपदादेशपदयोरनुवृत्त्यर्थं पूर्वतरसूत्रानुसन्धानकल्पनस्यावश्यकतया "न पदान्त–" इति सूत्रानुसन्धानकल्पने गौरवाच्च ।

स्यादेतत् । द्वित्वनिमित्तमचमाश्रित्य कृतस्यैव अजादेशस्य स्थानिवद्भावविधाने चुक्षावयिषतीत्यादौ णिनिमित्तकस्य वृद्ध्यावादेशादेस्तदनुपपत्त्या अभ्यासे उकारश्रवणं न स्यात् अकारस्यैव तत्प्रसङ्गात् । एवम् उडुडावयिषति । उडुरिवाचरति उडवति ण्यन्तात्सन् । चङि औड्डवत्, नुनावयिषति, अनूनवत्, ऊर्णुनावयिषति, और्णूनवत्, पुस्फारयिषति अपुस्फुरदित्यादौ "चिस्फुरोर्णौ" इत्यात्वम् इत्यादौ इति चेत्, अत्र वार्तिकम्–

"ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य" इति ।

अस्यार्थः—"ओः पुयण्ज्यपरे" इति सूत्रेण अभ्यासोकारस्य इत्त्वं विधीयते पवर्गयण्जकारेष्ववर्णपरेषु परतः । तत्र यद्यपि पिपाविषते यियविषति इत्यत्र पूङो यौतेश्च सनि "स्मिपूङ्रञ्ज्वशाम्–" इति, "सनीवन्त" इति च इट् गुणा-

वादेशौ द्वित्वे कर्त्तव्ये "द्विर्वचनेऽचि" इत्यस्य प्रवृत्त्या अभ्यासे उकारसम्भवात् तस्य इत्त्वविधानेन पकारयकारांशः सार्थक एव, तथाऽपि वर्गप्रत्याहारजकाराणां ग्रहणं णौ कृतस्यादेशस्य स्थानिवत्त्वं ज्ञापयति । आदेशविशिष्टानामेव द्वित्वेऽभ्यासे उवर्णस्याप्रसिद्धेः । अभ्यासाकारस्य "सन्यतः" इति इत्त्वस्य सिद्धेश्च । तद्व्यतिरेकेण पवर्गयण्जकाराणामवर्णपराणां दुर्लभत्वात् । सनि चैषामिटो दुर्लभत्वात् । अबीभवत्, अमीमवत्, अलीलवत्, अरीरवत्, बिभावयिषतीत्यादि । तथा च द्वित्वनिमित्तस्याचो णिचा व्यवधानेऽपि णिज्निमित्तकस्याप्यजादेशस्य स्थानिवद्भावे सिद्धे चुक्षावयिषतीत्यादिकं निराबाधम् । येननाव्यवधानन्यायेन द्वित्वनिमित्तस्याचो णिज्मात्रेण व्यवधानमाश्रीयते न तु निनवनीयिषतीत्यादौ ल्युट्क्यजादिभिरिति नातिप्रसङ्गः । अत एव 'णौ कृतं स्थानिवद्' इति पठन्ति ।

नन्वेवमप्यचिकीर्त्तदित्यत्र णिचि कृतस्य इत्त्वस्यापि स्थानिवत्त्वं स्यात् ।

मैवम् । अवर्णपर एव हलि स्थानिवत्त्वानुमानात् । तथा च भाष्यम्—"तुल्यजातीयस्य ज्ञापकम् । कश्च तुल्यजातीयः ? यथाजातीयकाः पुयण्जयः । कथञ्जातीयकाश्चैते ? अवर्णपराः" इति । वार्त्तिककारस्तु सूत्रमेतत्प्रत्याचख्यौ । तथाहि—षष्ठे द्वित्वप्रकरणान्ते पठ्यते- –

"द्विर्वचनं यणयवायावादेशाल्लोपणिलोपोपधालोपकिकिनोरुत्त्वेभ्यः पूर्वविप्रतिषेधेन" इति ।

अस्यार्थः—दध्यत्रेत्यादौ सावकाशो यण्, चयनं चायको लवनं लावक इत्यादौ आयादेशादयश्चत्वारः, गोदः कम्बलद

इत्यादावाल्लोपः, श्लेष्मघ्न इत्यादावुपधालोपः, कारणा हारणा इत्यादौ णिलोपः, निपूर्त्ता इत्यादावुत्त्वं च । किरतीत्यादौ "ऋत इद्धातोः" इतीत्वस्याप्येतदुपलक्षणम् । तेन ततुरिरित्यादिकमपि सेत्स्यति । द्वित्वं तु बिभिदतुरित्यादौ सावकाशम् । तथा चोभयप्रसङ्गे पूर्वविप्रतिषेधात् द्वित्वं तेषां बाधकम् । तेन चक्रतुः, विवाय, लुलाव, विवयिथ, लुलविथ, पपतुः, जघ्नुः, जग्मतुः, आटिटत्, ततुरिरित्यादि सिद्धम् । न चैवम् इयङोऽत्रानुपादानान्निन्यतुरिति न स्यादिति वाच्यम् । "प्रकल्प्य च" इति न्यायेन भाविनं यणमालोच्य पूर्वमियङ् न प्रवर्त्तत इत्युक्तत्वात्। तस्मान्नारम्भणीयमेतद्वचनमिति ।

भाष्यकारास्त्वाहुः—

विप्रतिषेधोऽयमयुक्तः, आल्लोपादीनां नित्यत्वात् द्वित्वस्यानित्यत्वेन तुल्यबलत्वाभावात् । अथापूर्वोऽयं वाचनिको विप्रतिषेधस्तदा तदेव गौरवम् । अपि च नित्यानामिवान्तरङ्गाणामपि वचनेन बाधापत्तौ निनवनीयिषतीत्यादावभ्यासे उकारश्रवणं स्यात् । अथ नित्यानामेवोक्तवचनं वारकं न त्वन्तरङ्गाणामपि, तथाऽपि चुक्षावयिषतीत्यादौ वृद्ध्यादेरन्तरङ्गत्वात्पूर्वं प्रवृत्तौ ततो द्वित्वे अभ्यासह्रस्वे "सन्यत" इति इत्त्वे च इकारस्य श्रवणं स्यात् । तथा च तद्बाधनाय "उत्परस्यातः" "ति च" इत्युत्तरं "ओदौदादेशस्य चुट्टुतुशरादेः" इति वचनं कल्प्यम् । अभ्यासस्येत्यनुवर्त्तते ।

अस्यार्थः–आदौतोरादेशो यस्मिन्नङ्गे तत्सम्बन्धी चुट्टुतुशरादिश्च योऽभ्यासस्तस्य योऽकारस्तस्य उत्स्यादिति । चुक्षावयिषति, उडुडावयिषति, तुनावयिषति, ऊर्णुनावयिषति, शुशावयिषति, पुस्फारयिषति। यद्यप्यन्त्ये "शर्पूर्वाः खयः" इति पका-

रशेषे शरादित्वं नास्ति तथाऽपि अभ्याससञ्ज्ञाप्रवृत्तिकाले तद्बोध्यम् । ओदौदादेशस्य किम् ? "चायृ पूजायाम्" चिचाययिषति । "खद स्थैर्ये" चिखादयिषति । चुट्टुतुशरादेः किम् ? बिभावयिषति । अतः किम् ? ऋजुम्, ऋणम्, ऋतुम्, अंशुं, वा, आख्यत् आर्जिजत्, आर्णिणत्, आर्तितत्, आंशिशत् । अत्र परत्वाद् वृद्धौ टिलोपे सणिचूकस्य द्वित्वं मा भूत् । "अभ्यासस्य" इत्यनुक्तौ तु चुट्टुतुशरादेरिति अङ्गस्य अतो वा विशेषणं स्यात् । तथा च शीतं लुनाति शीतलूः सूर्यः तमाख्यातुमिच्छति शिशीतलयिषतीत्यत्र तकारोत्तरस्याकारस्य उत्त्वं स्यात् । तस्माद्वचनद्वयमपि वार्त्तिककृता पठनीयम् । "ओः पुयण्ज्यपरे" इत्यपि तथैव । पिपविषते यियविषति जिजावयिषतीत्यादौ इत्त्वं यथा स्यात् । पू यु इत्यनयोः सनि इटि परत्वाद् गुणे पूर्वविप्रतिषेधेनावादेशात्पूर्वं द्वित्वस्य तन्मते प्रवृत्तेः। "जुचङ्क्रम्य" इत्यत्र निर्दिष्टः सौत्रो जु-धातुः। तस्माण्ण्यन्तात्सन् । तत्र चुट्टुतुशरादेरित्युत्त्वे प्राप्ते तद्बाधनाय इत्त्वस्य वक्तव्यत्वात् । न च चुट्टुतुशरादेरित्यत्र चुशब्दस्थाने चकारमात्रं पठनीयम् । तथाच नात्रातिप्रसङ्ग इति वाच्यम् । गुङ् घुङ् ध्वनौ । णिचि चङि ताभ्यां, सनि च अजूगवत्, अजूघवत्, जुगावयिषति, जुघावयिषतीत्यादेरसिद्धेः । एवं दिद्वनीयिषतीत्यत्रापि तवर्गादित्वादुत्त्ववारणाय वचनान्तरमारम्भणीयम् ।

अथवा "सन्यत" इत्यस्मान्मण्डूकप्लुत्या सन्ग्रहणमनुवर्त्य येननाव्यवधानन्यायेन णिज्भिन्नव्यवधाने उत्त्वं नेति व्याख्येयम् ।

नन्वेवमपि तनुशब्दादाचाराक्विबन्ताद्धेतुमण्णौ सत्यसति

था सन् तितनावयिषति तितनविषतीत्यत्राप्युत्त्वं स्यात् ।

मैवम् । अभ्यासस्यावयवः ओदौदादेशस्य तु यथासम्भवमवयव आदेशो वा योऽकारस्तस्य उत्वमिति वार्त्तिकार्थः । चुक्षावयिषतीत्यवयवः । पुस्फारयिषतीत्यादेशः । तितनावयिषतीत्यत्र तु तदुभयाभावान्न दोषः । एवं च अत इत्यपि सार्थकम् । अन्यथा आटिटदित्यादौ चङ्परे णौ यदङ्गं तदवयवे लघौ सन्वदतिदेशात् आर्जिजदित्यादावपि प्रसङ्गाभावेन तद्वैयर्थ्यं स्यादिति सूत्रापेक्षया वार्त्तिकमते महागौरवमिति ।

स्यादेतत् । प्रकृतसूत्रं वार्तिकं चेत्युभयमपि मास्तु । "ओः पुयण्" इत्येव ज्ञापकम् । अन्तरङ्गं नित्यं च बाधित्वा द्विर्वचनं भवतीति द्वित्वानन्तरं च यथासम्भवं यणादिप्रवृत्तिरिति ।

अत्र कैयटः—ज्ञापकं सामान्यापेक्षं विशेषापेक्षं वा । नाद्यः । अचिकीर्तदित्यादौ इत्त्वं बाधित्वा पूर्वं द्वित्वप्रवृत्तावभ्यासे अकारश्रवणापत्तेः । नान्त्यः । चक्रतुरित्यादेरसिद्धेः । तस्मात्सूत्रमावश्यकम् । तद्विषये च इष्टसिद्ध्यर्थं भाष्योक्तरीत्या ज्ञापकमाश्रयणीयमिति दिक् ।

अत्र वोपदेवेन काव्यकामधेनावित्थं व्यवस्थापितम्—अङ्कयतेश्चङि णिचमाश्रित्य कृतस्य अतो लोपस्य स्थानिवद्भावात् कशब्दस्य द्वित्वे आञ्चकदिति रूपमेके स्वीकुर्वन्ति तच्च मुनित्रयविरुद्धम् । तथाहि—किं "द्विर्वचनेऽचि" इति स्थानिवत्त्वं, ज्ञापकेन वा । नाद्यः । णिचो द्वित्वनिमित्तत्वाभावात् । द्विर्वचनावृत्त्या द्वित्वनिमित्तमचमाश्रित्य कृतस्यैवाजादेशस्य स्थानिवत्त्वमिति भाष्यवार्त्तिकयोरुक्तत्वात् । नान्त्यः—ज्ञापकस्य सजातीयविषयकत्वमाश्रित्य अवर्णपर एव हलि स्थानिवत्त्वमिति भाष्य एव स्थापितत्वात् । पूर्वविप्रतिषेधवार्तिकदू-

षणपरभाष्यप्रामाण्यादेव तथा लाभात्। आश्वकदित्यादावभ्यासे अकारस्य भाष्यसंमतत्वे हि तदर्थमपि वार्तिककृता यत्नान्तरं कल्पनीयमिति गौरवमप्यापादयेत्। तदभावात्तु ज्ञायतेऽभ्यासे इकार एव भाष्याभिमत इत्यल्लोपस्य स्थानिवत्त्वमनभिमतम् इति। तस्मादुकारादेश एव स्थानिवत्। अभ्यासात्परस्य अवर्णपरहलस्तत्रैव सम्भवादिति सिद्धम्।

यत्तु काशिकायाम् "पूर्वत्रासिद्धम्" इति सूत्रे ऊढशब्दात् णिचि चङि औजढदित्युदाहृत्य क्यन्तस्य तु औजिढदित्युक्तम्। न्यासकृता च णौ कृतस्य टिलोपस्य स्थानिवद्भाव इति व्याख्यातम्। सरस्वतीकण्ठाभरणकारेण च "णिच्यनित्" इति सूत्रितम्। तत्सर्वं महाभाष्यविसंवादान्निर्मूलम्। इत्थमेव दुर्गगुप्तेन दुर्गटीकायाम्, त्रिलोचनदासेन कातन्त्रपञ्जिकायाम्, वर्द्धमानमिश्रेण कातन्त्रविस्तरे, हेमसूरिणा हैमव्याकरणे, प्रदर्शितम्। एतच्च ज्ञापकमजन्तस्यापवर्गपरस्यावर्ण एवेति वेदितव्यमिति प्रदर्शितम्। अभिनवशाकटायनेन च शब्दानुशासने णिनिमित्तादपि प्राग्द्विः तच्चावर्णपरे इति प्रदर्शितम्। तस्मादाश्विकत् औजिढत् इत्येव साधीयः। तथैव नन्दिक्षीरस्वाम्यादिभिर्धातुपारायणेषूदाहृतम्—

शुष्किका शुष्कजङ्घा च क्षामिमानौजिढत्तथा। इति

वैयाघ्रपद्यवार्तिकेऽपि इकारपाठ एव सांप्रदायिकः। श्रोत्रियास्तु प्रमादाज्जिस्थाने जं पठन्ति। क्षेमेन्द्रेणापि जैनेन्द्रन्यासे स्पष्टमेवोक्तमिति। वैयाघ्रपद्यवार्त्तिकं च पूर्वत्रासिद्धमित्यस्य प्रयोजनाभिधानपरम्। तथा हि—शुष्किकेत्यत्र "उदीचामातः स्थाने यकपूर्वायाः" इति इत्त्वविकल्पो न भवति "शुषः कः" इति निष्ठाकत्वस्यासिद्धतया ककारस्याकारात् पूर्वत्वाभावात्।

एवं शुष्कजङ्घेत्यत्र "न कोपधायाः" इति पुंवद्भावनिषेधस्य न प्रवृत्तिः । क्षामिमानित्यत्र "मादुपधायाश्च" इति वत्वं न भवति, "क्षायो मः" इति मत्वस्यासिद्धतया मकारस्यानुपधात्वात् । औजिढदित्यत्र ढत्वस्यासिद्धत्वात् ह्ति इत्यस्य द्वित्वम् ।

अत्र वदन्ति ।

वोपदेवमहाग्राहग्रस्तो वामनदिग्गजः ।
कीर्तेरेव प्रसङ्गेन माधवेन विमोचितः ॥

तथा हि—किं वामनोक्तौ वार्त्तिकदूषणपरभाष्यविरोधः, किं वा ज्ञापकस्य सजातीयविषयकत्ववर्णनपरभाष्यविरोधः ? । नाद्यः । "नित्यानित्ययोर्विप्रतिषेधानुपपत्तिः, दिदवनीयिषति इत्याद्यसिद्धिश्च" इति दूषणयोर्भाष्ये ऽनुक्तत्वात् दूषणान्तरोपलक्षणं भाष्यमिति स्थिते औजढत् इत्यभ्यासे अकारश्रवणार्थं सोऽपि विधेयः स्यात् इति दूषणान्तरस्यापि वार्त्तिकोपरि देयत्वात् । तदेवं वार्त्तिकं रचनीयम्—"ओदौदादेशस्य चुट्टुतुशरादेरभ्यासस्योत्सनि" ततः "अल्लोपवतो णिचोऽत्" । अल्लोपवतोऽङ्गस्याभ्यासस्य णिचोऽत् स्यात् औजढत् आञ्चकत् इति ।

न द्वितीयः । यत्र द्विरुक्तौ अभ्यासोत्तरखण्डस्य आद्योऽजवर्णस्तत्र स्थानिवदिति भाष्यस्य फलितार्थः । अस्ति च ह्तशब्दस्य द्विरुक्तौ प्रक्रियादशायामुत्तरत्रावर्णः । न च पुनः प्रवृत्तेन टिलोपेनापहारात् न तस्य प्रयोगसमवाय इति वाच्यम् । प्रयोगसमवायित्वस्य भाष्येऽनुक्तत्वात् । एवं च नुनावयिषतीत्यादौ द्वित्वप्रवृत्तिवेलायामवर्णाभावेऽपि पश्चाद्भाविनं तमाश्रित्य यथा स्थानिवद्भावस्तथा ह्तशब्दस्य पश्चात्तद्विरहेऽपि । तथा हि—अवर्णपरत्वं द्वित्वप्रवृत्तिवेलायां विवक्षितम् उत परिनिष्ठिते रूपे ? । नाद्यः । चुक्षावयिष-

ति इत्यादावभावात् । नान्त्यः । आश्वकत् इत्यादौ तदभावात् । तस्मात्प्रक्रियादशायामेव तदित्यवश्यमङ्गीकार्यम् । एतेन वोपदेवन्यस्ता अपि ग्रन्था व्याख्याताः प्रक्रियादशायामवर्णपरत्वस्य विवक्षितत्वात्, वामनोक्तौ तद्विरोधाभावात् ।

अध्यजीगपत् इत्यत्र तु स्थानिवत्त्वप्रवृत्तावजादित्वात् णिच एव द्वित्वापत्त्या उभयत्राप्यवर्णपरत्वाभावात् न स्थानिवत्त्वम् अचिकीर्त्तत् इत्यादिवत् । एवं सत्युवर्णस्थानिकस्यैवादेशस्य स्थानिवत्त्वमिति दुराग्रहो निर्मूल एव । अत एव "लोपः पिबतेरीच्चाभ्यासस्य" इति सूत्रे अपीप्यत् इत्यत्र पिबतेर्णौ युकि चङि उपधालोपे च तस्य स्थानिवत्त्वात् पाय्शब्दस्य द्वित्वमिति वृत्तिः सङ्गच्छते ।

अत्रेदं वक्तव्यम्—स्थानिवद्भावप्रवृत्तिवेलायाम् अवर्णपरत्वं यत्र हलोऽस्ति तत्रत्य आदेशः स्थानिवत् इति भाष्याभिप्रायो न तु त्वदुक्तान्यतरत्र गौरवात् प्रमाणाभावाच्च ।

एतेन भाष्यस्य दूषणोपलक्षणत्वात् "अल्लोपवतो णिचोऽत्" इति वचनारम्भोऽप्यापाद्यत्वेनाभिमत इत्यपास्तम् । वाचनिकविप्रतिषेधपरत्वेन प्रवृत्ते वार्त्तिके भाष्यस्य दूषणोपलक्षणत्वे प्रमाणाभावात् । नित्यानित्ययोर्विप्रतिषेधानुपपत्तिरिति दूषणस्य प्रसिद्धविप्रतिषेधपरत्वमात्रविषयकत्वात् ।

यत्तु उकारादेशस्यैव स्थानिवत्त्वे अचिकीर्त्तत् इत्यत्रातिप्रसङ्गशङ्काभाष्यमसङ्गतं स्यात् इति ।

तत् तुच्छम् । णिचि कृतं स्थानिवद्भवतीति यथाश्रुतार्थबोधदशायामेव तत्प्रवृत्तेः । सिद्धान्तविरोधेन शङ्काया असङ्गत्युक्तौ शङ्कामात्रोच्छेदापत्तेः । अन्यथान्यतरत्रावर्णपरत्ववादिनस्तवापि तदसङ्गतेर्दुरुद्धरत्वात् । तत्र प्रक्रियादशायामप्यवर्णपरत्वाभावात् ।

एतेन प्रयोगसमवायित्वं विशेषणं भाष्यानुक्तमिति निरस्तम् । ऊर्णुनावयिषति इत्यादावपि स्थानिवत्त्वप्रवृत्तिदशायाम् अवर्णस्य हलपेक्षया परत्वात् । "कथं जातीयकाश्चैते अवर्णपराः" इति भाष्योक्तेश्च ।

युक्तं चैतत् । अवर्णपरपवर्गयण्जकारेषु परतो विधीयमानमभ्यासोकारस्य इकारादेशविधानं हि स्थानिवद्भावं ज्ञापयति इत्युभयसिद्धम् । अस्ति चात्र स्थानिवत्त्वप्रवृत्तिवेलायां पवर्गादीनामवर्णपरत्वमिति यथोक्तार्थलाभात् । अत एव "तुल्यजातीयस्य ज्ञापकम्" इति भाष्यम् । तेन तुल्यजातीयस्य स्थानिवत्त्वमित्यर्थात् तत्प्रवृत्तिवेलायामवर्णपरत्वस्य स्पष्टमेवोक्तत्वात् । प्रथमोपस्थितं स्थानिवद्भावमुपेक्ष्य द्विरुक्तावभ्यासोत्तरखण्डस्याद्योऽजवर्ण इत्यर्थपरत्वे मानाभावात् । एवं च "अल्लोपवतो णिचोऽत्" इति वचनापादनमपि दूरापास्तम् । अभ्यासेऽकारस्य प्रमाणसिद्धत्वाभावेन तदर्थं वचनारम्भस्य निष्फलत्वात् । प्रक्रियादशायाम् अवर्णपरत्वमित्यस्य न्यासाद्यनभिमतत्वाच्च ।

अत एव "स्तौतिण्योः" इति सूत्रे सिषेचयिषति इत्यत्र सिचेर्हेतुमण्णौ गुणे सनि इटि गुणायादेशयोः कृतयोः गुणस्य स्थानिवद्भावात् सिच्शब्दस्य द्वित्वमिति न्यासकारेणोक्तम् । तत्रोत्तरखण्डे अकाराभावेन त्वदुक्तरीत्या औजढत् इत्यत्रत्यतद्ग्रन्थस्य व्याख्यातुमशक्यत्वात् ।

एतेन सिचो द्वित्वमिति न्यासस्य भाष्यविरोधादुपेक्ष्यत्वमिति परास्तम् । औजढत् इत्यत्राप्यल्लोपस्थानिवत्त्वस्य भाष्यविरुद्धतया स्वयमेव प्रक्रियादशायामवर्णपरत्वाभिप्रायं कल्पयित्वा वचनानर्हत्वात् । अत एव औजढत् इत्यादिसिद्धये सामान्यापेक्षं

ज्ञापकमुक्त्वा अचिकीर्त्तत् इत्याद्यनुरोधेन तदनित्यत्वं सीरदेवेन स्वीकृतम् । तस्मात्सामान्यापेक्षं ज्ञापकमित्येव वामनन्यासकारादीनामभिप्रायः न तु त्वदुक्तः ।

परं तु "विशेषापेक्षं ज्ञापकम्" इति भाष्यविरोधादेव तेषामनुपादेयत्वमित्यन्यदेतदिति रहस्यम् ।

अत एव अदन्तेषु ऊन धातोर्माधवीयधातुवृत्तौ, "नोनयतिध्वनयति" इति सूत्रे काशिकापदमञ्जर्योश्च औनिनत् इत्यभ्यासे इकारपाठः संगच्छते ।

एतेन तत्सर्वं लिपिप्रमादप्रयुक्तमेव । स्थलान्तरस्थवामनमाधवग्रन्थविरुद्धत्वात् इत्यपि निरस्तम् । भाष्यसंमतार्थसंवादिन इकारपाठस्यैव वामनादितात्पर्यविषयत्वावश्यकत्वेन वैपरीत्यात् ।

नन्वेवम् अकारान्तत्ववैयर्थ्यमिति चेन्न । तद्बलेन वृद्धौ सत्याम् अङ्कापयति आञ्चीकपत् इत्यादिरूपाभ्युपगमात् ।

यदि तु चिति इत्यादाविदित्करणस्य णिज्विकल्पज्ञापकतायाः क्लृप्तत्वात् इहापि तथैवेत्याग्रहस्तथापि न क्षतिः। णिजभावपक्षे अनेकाच्त्वात् आम्, अङ्क्यात् इत्यादौ "अनिदिताम्" इति उपधालोपाप्रवृत्तिरित्यतोऽपि सार्थकतानिर्वाहात् ।

यत्तु अभ्यासे अकारश्रवणार्थतया अदन्तत्वसार्थक्यमिति । तच्चिन्त्यम् । इकारस्यैव तत्र व्यवस्थापितत्वात् ।

अथ सर्वमतेऽप्यभ्यासे जकारश्रवणानुपपत्तिः "पूर्वत्रासिद्धीयमद्विर्वचने"इति ढकारस्यैव सिद्धत्वात् इति चेन्न । तस्यानित्यतया ह्रुतिशब्द एव तत्प्रवृत्तेरित्यास्तामातिविस्तरः ॥

इति श्रीसिद्धान्तसुधानिधौ प्रथमस्याध्यायस्य प्रथमे पादे अष्टमाह्निकम् ।

# अदर्शनं लोपः ५४ ।

प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात् । स्थाने इत्यनुवृत्तेः । न चादर्शनशब्दस्यैवेयं संज्ञा स्यात् इति "लोपो व्योः" इत्यादौ स एवादेशः प्रसज्येतेति वाच्यम् । महासञ्ज्ञासामर्थ्यात् अर्थस्यैव संज्ञित्वात् । न च प्रदेशेष्वेव लौकिकलोपशब्दार्थो विज्ञास्यते पशुरपत्यम् इत्यादाविवेति संज्ञासूत्रमनारभ्यमिति वाच्यम् । प्रसक्तस्येति प्रतियोगिविशेषलाभार्थं तदारम्भात् । अन्यथा दधि मधु इत्यादौ क्विपः स्वाभाविकादर्शनसत्त्वेन लोपसंज्ञायां प्रत्ययलक्षणेन तुक् स्यात् ।

तथा च वार्त्तिकम् ।

"सिद्धं तु प्रसक्तादर्शनस्य लोपसंज्ञित्वात्" इति ।

ननु वार्त्तिकमते तत्सूत्रस्य विध्यर्थत्वात् अस्त्वेवम् । भाष्यमते तु तन्नियमार्थं स्थानिवत्सूत्रेणैव कार्यप्रवृत्तिरिति वक्ष्यते । न चात्र तुकस्तेन प्रसक्तिः । षष्ठीग्रहणस्य तत्रानुवर्तितत्वात् । अत एव ग्रामणीः इत्यादौ अर्थोपपदधातुसन्निधानात् अर्थतः शास्त्रतश्च अण्प्रसङ्गे क्विपो विधानेऽपि वृद्ध्यादिकं न भवति । तस्मादिदं सूत्रं निरर्थकमिति चेत् ।

मैवम् । "चाहलोप एवेत्यवधारणम्" "चादिलोपे विभाषा" इति सूत्रयोश्चादीनामप्रयोगस्यैव लोपपदार्थत्वात्षष्ठीनिर्देशेन लोपविध्यभावाल्लोपसंज्ञाऽनुपपत्तौ 'अयमेवारण्यं गच्छतु' 'अयमेव ग्रामं गच्छतु' इत्यादौ तिङन्तनिघातनिषेधस्य 'शुक्ला व्रीहयो भवन्ति' 'श्वेता गा आज्याय दुहन्ति' इत्यादौ निघातनिषेधविकल्पस्य चानुपपत्तेः । सूत्रारम्भे तु तत्र शास्त्रतो लोकतो वा तदप्रसक्तेर्न दोषः

न च वार्तिकमते ग्रामणीरित्यत्र वृद्धिः स्यादिति वाच्यम्। क्विपा अणः प्रसङ्गापहारात्। विशेषशास्त्रानिर्मुक्ते एव सामान्यशास्त्रस्य प्रवृत्तेः। "सत्सूद्विष" इति क्विपो विषये "कर्मण्यण्" इत्यस्य प्रसक्तेरेवाभावात्।

# प्रत्ययस्य लुक्श्लुलुपः ६०।

तन्त्रावृत्त्यादिना तद्भावितानामिमाः संज्ञाः अनेकसंज्ञाविधानसामर्थ्यात्। लुक्श्लुलुप् एतैः शब्दैः कृतं प्रत्ययादर्शनं क्रमेण तत्संज्ञं स्यात्। न चैवं विधिप्रदेशेषु इतरेतराश्रयापत्तिः अदर्शनस्य नित्यत्वेऽपि लुगादिसंज्ञया भावितत्वस्य तदभावेन पूर्ववत् परिहारासम्भवात् इति वाच्यम्। भाविसंज्ञाविज्ञानात्। प्रदेशाश्च "लुक् तद्धित" 'जुहोत्यादिभ्यः श्लुः" "जनपदे लुप्" इत्यादयः। लोपसंज्ञायाश्च नैताभिर्बाधः। एकसंज्ञाधिकारात्। अन्यत्र संज्ञानां समावेशदर्शनात्। अत एव "न लुमताङ्गस्य" इति निषेधः सङ्गच्छते। अन्यथा "प्रत्ययलोपे" इत्यस्य लुगादिविषये प्रसक्तेरेवाभावात्।

स्यादेतत्। प्रत्ययस्येति किमर्थम्। 'न तावदप्रत्ययनिवृत्त्यर्थम्। लुगादिविधौ सर्वत्र प्रत्ययस्यैव स्थानिवत्त्वादप्रसिद्धेः। अनुवादे च तद्भावितस्यैव ग्रहणात्।

ननु "लुक् तद्धितलुकि" इत्यत्र "गोस्त्रियोः" इत्यनुवृत्त्या गोशब्दस्यापि लुगापत्तिः। योगविभागात्। "गोरुपसर्जनस्य" ततः "स्त्रियाः"। "लुक्तद्धित" इत्यत्र "स्त्रियाः" इत्यनुवर्त्तते गोः इति निवृत्तम्। अन्यथा प्रत्ययग्रहणे कृतेऽपि गमेर्डोस्प्रत्ययस्य लुक् स्यात्।

"कंसीयपरशव्ययोः" इत्यत्रापि कंसीयपरशव्ययोः प्रातिप-

दिकात्परस्य लुक् विधीयते । "ङ्याप्प्रातिपदिकात्" इत्यधिकृतत्वात् । अतः प्रकृतिभागस्य न लोपः । अन्यथा "कमेः सः" कंसः परान् शृणाति परशुः इत्युकारसकारयोर्लुगापत्तेः ।

न च "अत्रिभृगुकुत्स" इत्यादौ प्रतियोगिविशेषसमर्पणार्थम् । तत्र "यस्कादिभ्यो गोत्रे" इत्यतो गोत्रपदानुवृत्तेरत्र्यादिगोत्रे यो विहितस्तस्य लुग्विधानात् ।

"जनपदे लुप्" इत्यत्र प्रातिपदिकाधिकारात्प्रत्ययानुवृत्तेश्च जनपदे विहितस्य चातुरर्थिकप्रत्ययस्य लुक् ।

"लवणाल्लुक्" इत्यत्रापि ठक एव, प्रकृतत्वात् "तस्मादित्युत्तरस्य" इति पञ्चम्या प्रत्यय इत्येतस्य षष्ठ्यन्तत्वकल्पनात् ।

ननु "यञञोश्च" "सुपो धातुप्रातिपदिकयोः" इत्यादौ लोपप्रतियोगिप्रत्ययस्यानेकाच्त्वेन "अलोऽन्त्यस्य","लवणाल्लुक्" इत्यादौ च "आदेः परस्य" इति आदिमात्रस्य लोपो मा भूदिति सर्वादेशार्थं प्रत्ययग्रहणम् ।

मैवम् । लोपे प्रकृते ऽपि "लुग्वादुह" इति लुग्वचनस्य सामान्यापेक्षज्ञापकतया लुमतां सर्वादेशत्वसिद्धेः । न च लोप एव सर्वादेशो लुगादयस्तु "अलोऽन्त्यस्य" इति वैपरीत्यं स्यादिति वाच्यम् । असञ्जातविरोधितया लोपस्यान्त्यादेशत्वसिद्धौ लुगादीनामेव सर्वादेशत्वकल्पनात् ।

मैवम् । "आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्" इत्यत्र "लुगणिञोः" इत्यतो लुग्ग्रहणमनुवर्त्तते न वा ? । नाद्यः । स्थानिनौ द्वौ आदेशास्तु लुका सह त्रय इति यथासंख्यविरहे एकैकस्यादेशत्रयप्रसङ्गात् । ततश्चागस्तयोऽपि कुण्डिनाः स्युः कुण्डिनाश्चागस्तयः । लुक् च ज्ञापकात्सर्वादेश-

स्तदा उभयत्रापि विभक्तिमात्रं श्रूयेत। नान्त्यः। प्रकृते सिद्धेऽपि अगस्तीनां छात्रा आगस्तीया इति प्राग्दीव्यतीये अजादौ प्रत्यये विवक्षितेऽप्यगस्त्यादेशस्य निषेधाभावात् प्रवृत्ताववृद्धत्वात् छप्रत्ययानुपपत्तेः। इह प्रत्ययग्रहणे तु आगस्त्यकौण्डिन्ययोः प्रत्ययांशस्य लुकि परिशिष्टभागयोर्यथासंख्यमगस्तिकुण्डिनचौ आदेशावित्यगस्तयः कुण्डिना इति च सिद्धम्। प्राग्दीव्यतीयविवक्षायां तु गोत्रे ऽलुगचीति लुक्प्रतिषेधे तत्संनियोगशिष्टागस्तिभावस्यापि निवृत्तावागस्त्येत्यस्य वृद्धत्वात् छे "सूर्यतिष्यागस्त्य" इति यलोपे आगस्तीया इति सिद्धम्। कौण्डिन्ये तूभयथाऽपि न विशेष इति तत्रैव वक्ष्यते। तस्माल्लुगित्यस्य तत्रावश्यमनुवर्त्यतया पूर्वदोषपरिहाराय प्रत्ययग्रहणमत्रावश्यकम्।

भाष्यकृतस्तु "प्रत्ययलोपे" इत्यत्र विशेषणार्थम्, द्वितीयग्रहणमुत्तरार्थम्। तेन समस्तप्रत्ययलोपे एव प्रत्ययलक्षणं न त्वेकदेशलोपे। अन्यथा आघ्नीय, संरायस्पोषेण मीय इत्यत्र परत्वादुपधालोपे पुनः प्रसङ्गविज्ञानादनुनासिकलोपः स्यादित्याहुः

हरदत्तस्तु सर्वादेशार्थमपीदम्, सामान्येन ज्ञापनस्यागतिकगतित्वात् इत्याह इति दिक्।

# प्रत्ययलोपे प्रत्ययलक्षणम् ६१।

प्रत्यये लुप्तेऽपि तन्निमित्तकं कार्यं स्यात्। तेन अतृणेट् इत्यत्र तिपो लुप्तत्वेऽपि "तृणह इम्" इति हलादिपित्सार्वधातुकं निमित्तीकृत्य इमागमः। न चात्र "स्थानिवत्" इत्यनेन गतार्थत्वम्। विशेषणत्वेनाप्यलाश्रयणे "अनल्विधौ" इति निषे-

त्वस्य स्वीकारात् । वर्णाश्रये प्रत्ययलक्षणं नास्ति इत्यस्य तु नायं विषयः वर्णप्राधान्यमात्रे तत्प्रवृत्तेः । तथा हि प्रकृतसूत्रे प्रत्ययलोपे तल्लक्षणम् इत्येवास्तु, यद्वा द्वितीयभाग एव माऽस्तु, स्थानिवत् इत्यनुवृत्त्या सिद्धेः। तदुपादानसामर्थ्याच्च प्रत्ययमात्रवृत्तिधर्मो यत्र निमित्ततावच्छेदकस्तदेव कार्यं प्रत्ययलोपे भवति न तु गवे हितम् गोहितम् इत्यादाववादेशः, अच्त्वस्य तत्र निमित्ततावच्छेदकस्य प्रत्ययाप्रत्ययसाधारण्यात्। यद्यत्र "नलुमता" इति निषेधः, तथाऽपि सुयशा इत्यत्र विसर्गसुलोपस्य स्थानिवत्त्वे "वा शरि" इति सकारादेशविकल्पस्य, सुवृड् इत्यत्र "खरि च" इति चर्त्वस्य दुर्वारत्वम् । इमागमविधौ तु सार्वधातुकस्य विशेष्यतया तत्त्वस्य प्रत्ययत्वव्याप्यतया तत्प्रवृत्तौ बाधकाभावात् । हलादाविति विशेषणतयैव वर्णस्य तत्राश्रयणात् । एतदर्थस्यैव 'वर्णाश्रये नास्ति' इत्यत्रोपनिबद्धत्वात् । अत एव धिन्विकृण्व्योर्विचि "लोपो व्योः" इति वलोपे तस्यानिमित्तत्वात् वस्तुतो निमित्तत्वस्य प्रत्ययवृत्तित्वेऽपि "न धातुलोपे" इति गुणनिषेधो न प्रवर्तते, आर्द्धधातुकत्वस्य तत्र निमित्ततायामनवच्छेदकत्वात्, वल्त्वस्य च प्रत्ययत्वव्याप्यत्वविरहात् । तेन सुधे, सुधेनौ, सुधेनः, सुकः, सुकर्णौ, सुकर्ण इत्यादि सिद्धम् । "हल्ङ्याभ्य" इति सुलोपे पदत्वात् "नलोपः प्रातिपदिकान्तस्य" इति नलोपः ।

एतेन—

सुधे सुधेवारिवधात्सुराणां सुकारणे लाघवतश्च रामः ।
विशेषणे द्वे य इहादिकर्तुर्वेदेदधीती स हि कैयटीये ॥

इति व्याख्यातम् ।

धातोर्लोपो यस्मिन्निति बहुव्रीहिणैव सिद्धे आर्द्धधातुक-ग्रहणसामर्थ्यात्तत्त्वेन निमित्तत्वलाभात्। न च 'तोतोर्ति इत्या-दिव्याप्त्या चारितार्थ्यम्, यङ्लुकश्छान्दसत्वात्। भाषा-विषयत्वेऽपि आर्द्धधातुकग्रहणस्याप्त्या द्वितीयस्य सामर्थ्य-मिति बोध्यम्। "पूर्वस्मिन्योगे यदार्द्धधातुकग्रहणम् तदन-वकाशम्" इति "क्ङिति च" इत्येतत्सूत्रीयभाष्योक्तेश्च अना-स्थामूलकत्वाद् इति।

इदं तु चिन्त्यम्—आर्द्धधातुकग्रहणाल्लोपगुणयोरेकव्य-क्तिनिमित्तकत्वमात्रमिष्यते न त्वार्द्धधातुकत्वावच्छिन्ननिमि-त्तत्वनिरूपितकार्यत्वपर्यन्तम्। लोलुव इत्यादावपि गुणनिषेधा-नुपपत्तेः। "यङोऽचि च" इति लोपे अच्प्रत्ययस्य वस्तुत आ-र्द्धधातुकत्वेऽपि आर्द्धधातुकत्वस्य निमित्ततानवच्छेदकत्वात्। तस्मादार्द्धधातुकत्वव्याप्यधर्मावच्छिन्ननिमित्तत्वनिरूपितकार्य-त्वविवक्षणम्। व्याप्यत्वं च भेदाभेदसाधारणम्। आर्द्ध-धातुकानतिरिक्तवृत्तित्वस्यैव धर्मेऽभिमतत्वात्। प्रकृते तु वल्-त्वस्य आर्द्धधातुकातिरिक्तवृत्तित्वान्न निषेधप्रवृत्तिरिति सुस्थम्।

उक्तभाष्यस्वारस्यादत्र विजेव न भवति। क्विपि तु ऊठि कृते धिनूः, धिन्वौ, धिन्वः, कृणूः कृण्वौ, कृण्व इत्यादि। सुधी, सुधिनौ, सुधिनः, सुकीः, सुकृणौ, सुकृणः इत्यादि तु न भवति इत्याहुः।

'यङ्लुको भाषाविषयत्वे आर्द्धधाकग्रहणस्य तोतोर्ति इत्यादौ चारितार्थ्यादावृत्तौ च मानाभावात् गुणनिषेधे सुधी, सुधिनौ, सुधिनः, सुकीः, सुकीर्णौ, सुकीर्ण इत्यपि भवति' इति दीक्षिताः।

ननु परिवीरित्यत्र क्विपो लोपे तुग्दीर्घयोरनेनैव विधाना-देकलक्षणत्वाद्विप्रतिषेधानुपपत्त्या परत्वाद्दीर्घत्वं न स्यात्। मै-

वम् । व्यपदेशातिदेशो ह्ययम्, ततश्च 'कृत्प्रत्ययः' इत्यादिव्यपदेशो लोपेऽतिदिश्यते, कार्यं तु तन्निबन्धनं तत्तच्छास्त्रैरेव भवति इति विप्रतिषेधसिद्धिः ।

तदुक्तम्—

"सिद्धन्तु स्थानिसंज्ञाऽनुदेशादान्यभाव्यस्य" इति ।

स्वार्थे ष्यङ् । आदेशस्य स्थानिसंज्ञया यो व्यपदेशस्तस्यानेन विधानादित्यर्थः । तस्मादल्विध्यर्थमिदम् इति वार्तिकमतम् ।

भाष्यकृतस्त्वाहुः अतृणेट् इत्यर्थं नेदम् । तत्र हलीत्येतस्य निवृत्तेः । न च तृणहानि इत्यादावतिव्याप्तिः । "नाभ्यस्तस्याचि" इत्यस्माद् 'अचि न' इत्यनुवृत्तेः । न चाशीरित्यत्र "शास इदङ्हलोः" इत्येतदर्थम् । आशासः क्वावुपसंख्यानात्सिद्धेः । तद्धि तवाप्यावश्यकम् । तत्र शासिमात्रग्रहणे आशास्त इत्यादौ माभूदिति नियमार्थम्, अङ्प्रकृतिभूतस्यैव शासः साहचर्यादित्त्वविधौ ग्रहणे तु आशास्ते इत्यादाविव क्विप्यपि तस्याप्रसक्त्या विध्यर्थमिति परं विशेषः । तस्मात्प्रत्ययलोपे प्रत्ययलक्षणमेव कार्यं न तु प्रत्ययाप्रत्ययसाधारणधर्मावच्छिन्ननिमित्तत्वनिरूप्यकार्यत्ववदपि कार्यमिति नियमार्थमिदम् । तेन शोभना दृषदोऽस्य सुदृषत्प्रासाद इत्यत्र सुशब्दात्परस्य मन्नन्तस्यासन्तस्य चोत्तरपदस्य बहुव्रीहावाद्युदात्तत्वं भवतीत्यर्थकेन "सोर्मनसी अलोमोषसी" इति सूत्रेणाद्युदात्तत्वं न प्रवर्तते । किं तु "नञ्सुभ्याम्" इत्यन्तोदात्तत्वमेव । अन्यथा "सुपो धातुप्रातिपदिकयोः" इति जसो लुकि स्थानिवद्भावेनोत्तरस्याऽसन्तत्वानपायात् । उक्तरीत्या तु असन्तस्य प्रत्यय-

व्यतिरिक्तवृत्तित्वान्न दोषः । अनिनस्मन्ग्रहणेषु अर्थवद्ग्रहण परिभाषाया अप्रवृत्तेः । एवं "अत्वसन्तस्य" इति दीर्घो ऽपि न भवतीत्यवधेयम् । वार्त्तिकमते तूक्तदोषव्यावृत्त्यर्थं यत्नान्तरारम्भे गौरवमिति ।

स्यादेतत् । नियमविधेरितरव्यावृत्तिरेव फलम् । 'व्रीहीनवहन्ति' इत्यादौ ह्येतद्व्यतिरेकेणापि तुषतण्डुलविभागरूपवैतुष्यसाधनत्वेन दलनादिविकल्पितावघातस्य प्राप्त्या तत्साधारणप्राप्तावेव तात्पर्ये विधिवैयर्थ्यम्, अतः पाक्षिकाप्राप्तिव्यवच्छेदे तात्पर्यम् । तेन पाक्षिकप्राप्तिप्रतियोगिनः साधनान्तरस्य निवृत्तिः । न चेदमेव नियमफलम् । अप्राप्तांशप्रापणरूपनियमाभावे तदनुपपत्तेः । तत्सत्त्वे चार्थादेव तत्सिद्धेः । प्रकृतविध्यभावे च स्थानिवद्भावस्य न पाक्षिकी प्राप्तिरिति चेत् ।

अत्राहुः—परिसंख्याप्यत्र नियमपदेन व्यवह्रियते । 'पञ्च पञ्चनखा भक्ष्या' इत्यस्य नियमत्वेन भाष्ये लिखितत्वात् । सा च यद्यपि दोषत्रयवती यथाश्रुतार्थत्यागात्, पञ्चातिरिक्ता न भक्ष्या इति परार्थकल्पनात्, प्राप्तपञ्चनखान्यभक्षणबाधाच्च । तथाऽप्यत्र सामान्यशास्त्रस्यापि प्रत्ययलोपस्थलतात्पर्यकत्वे शास्त्रप्राप्तस्यात्यन्तबाधासम्भवात्प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तताकस्यापि कार्यस्य वचनद्वयप्रामाण्याद्विकल्प एव स्यात् । पञ्चातिरिक्तभक्षणं तु प्रापकप्रमाणस्य रागस्य दौर्बल्याद्बाध्यते इति वैषम्यम् । अतः सामान्यशास्त्रस्योक्तकार्यातिरिक्तविषयकत्वमवश्यं कल्प्यम् । अतः प्राप्तबाधरूपो दोषो नास्ति । तेन प्रत्ययलक्षणस्य तद्भिन्ने, भवतीत्यस्य च न भवतीत्यत्र तात्पर्यात्प्रत्ययलक्षणातिरिक्तं न भवतीत्यर्थः । न च स्थानिवदित्यस्यानेनोपसंहारापत्तिः । तच्छास्त्रवैयर्थ्यापत्तेः । "तं च

र्द्धा कृत्वा पुरोडाशं बर्हिषदं करोति" "आग्नेयं चतुर्द्धा करोति" इत्यनयोस्तु परस्परोपसंहाराद्वैषम्यम् । आग्नेयपदं हविरन्तरात्पुरोडाशपदं चान्यदैवत्यपुरोडाशाद्व्यावर्त्यत इति । स्मृतिपुराणादौ त्ववान्तरवक्तृभेदान्न सामान्यशास्त्रवैयर्थ्यम्। अत एव 'न अङ्गुल्या दन्तधावनं कुर्यान्न तर्जन्या' इत्यादावेकवक्तृकवाक्ये नोपसंहारः किं तु दोषाधिक्यकल्पनमेवेति दिक् ।

अथ तथाऽपि पश्चेत्यत्र प्रत्ययलक्षणेन पदत्वं समासत्वात्प्रातिपदिकत्वम्, "स्नुक्रमोः" इति इट्, "उभयप्राप्तौ कर्मणि" इति षष्ठी इत्यादिग्रन्थानां का गतिः, इतरव्यावृत्तावेव तात्पर्यात् सामान्यशास्त्रस्यैव तद्विधायकत्वात् इति चेत् ।

अत्राहुः—

उभयप्राप्ताविति परिशेषिता षष्ठी इत्यादि व्याख्येयम् न तु विहितेति । अत एव "उभयप्राप्तौ कर्मणीति प्रतिषेधेऽकादिप्रयोगेऽप्रतिषेधः" इति वार्त्तिककृता तत्सूत्रस्य प्रतिषेधत्वमेवोक्तम् न तु विधित्वम् ।

यद्वा, सामान्यशास्त्रस्य विशेषे तात्पर्याभावस्योभयकल्प्यत्वात् प्रत्ययलक्षणेत्यादिकं यथाश्रुतमेवास्तु। अस्य च प्रयोजनापेक्षायां प्रत्ययलक्षणातिरिक्तकार्यव्यावृत्तिः फलतः सिद्ध्यति ।

यथा "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इति प्रत्यक्षविधिः लिङ्गकल्प्यविध्यपेक्षया पूर्वप्रवृत्तिकत्वात् अपूर्वविधिरेव । तावन्मात्रस्य च लैङ्गिकविधिनैव सिद्धत्वादेतद्वैयर्थ्यापत्त्या गर्दभाभिधानीव्यावृत्तिः फलं कल्प्यते । तदुक्तम्—

अप्राप्तविधिरेवायमतो मन्त्रस्य निश्चितः
प्रयोजनं विधेः किं स्यादस्येति तु निरूपणे ॥

न गर्दभाभिधानीतः फलमन्यन्निवर्त्तनात् ।

न चात्र विषयान्तरार्थं स्थानिवत्सूत्रस्यावश्यकत्वान्न प्रत्ययलोपसूत्रस्य तदपेक्षया प्रथमप्रवृत्तिः प्रत्यक्षत्वाविशेषादिति वाच्यम् । तथाऽपि स्थानित्वादेशत्वाभ्यां तत्तत्स्थान्यादेशानामनुगमेऽपि वस्तुतस्तेषां भिन्नत्वात् यावत् प्रत्ययतल्लोपयोरुपस्थित्या सामान्यशास्त्रस्य प्रत्ययलोपपरत्वं लभ्यते तावत् प्रत्ययलोपे प्रत्ययलक्षणमित्यनेन विशेषधर्मप्रकारकबोधजननात्प्रथमप्रवृत्तौ बाधकाभावात् । एतावान्परम् विशेषः—तत्र लैङ्गिकविधिकल्पनमेव प्रतिबध्यते प्रकृते तु सामान्यशास्त्रस्य प्रत्ययलोपविषयकत्वमात्रमिति । अस्मिंस्तु पक्षे पूर्वोक्तग्रन्था यथाश्रुता एव योज्याः । एतेन नियमसूत्राणां निषेधमुखेन विधिमुखेन वा प्रवृत्तिरिति पक्षद्वयं व्याख्यातम् ।

## न लुमताऽङ्गस्य ६३ ।

लुमता लुक्श्लुलुपामन्यतमेन शब्देन कृते प्रत्ययादर्शने तन्निमित्तमङ्गकार्यं न स्यात् । गर्गाः, मृष्टः, जुहुतः । यञ्शपोर्लुमता लोपात्तन्निमित्तौ वृद्धिगुणौ न । लुमता किम् । कार्यते, हार्यते । "णेरनिटि" इति णिलोपे ण्यपेक्षा, अमार्ट्, नित्यत्वाद्धल्ङ्यादिलोपेऽपि मृजेर्वृद्धिश्च यथा स्यात् । अङ्गस्येति किम् । पञ्च, सप्त । अत्र प्रत्ययलक्षणेन सुबन्तत्वात्पदसंज्ञा यथा स्यात् । अत्राङ्गशब्दस्य स्वरितत्वादङ्गाधिकारविहितमेव कार्यं निषिध्यत इति वार्त्तिककृत् ।

भाष्यकृतस्त्वाहुः—एवं सति उत्क्रामेत्यत्र "अतो हेः" इति हेर्लुकि "क्रमः परस्मैपदेषु" इति दीर्घः, जिगमिष इत्यत्र "गमेरिट् परस्मैपदेषु" इतीट्, विवृतसेत्यत्र "न वृद्भ्यश्चतुर्भ्यः"

त्तौटूप्रतिषेधश्च न स्यात् । एषामङ्गाधिकारीयत्वात् । अतोऽङ्गाधिकारीयं तद्बहिर्भूतं वा वस्तुतोऽङ्गस्य यत् कार्यं तत्रायं निषेधः । नचाङ्गकार्यमात्रनिषेधेऽप्युक्तदोषतादवस्थ्यम् । लोपप्रतियोगिपरस्मैपदनिरूपिताङ्गसंज्ञायाः क्रमेतिशबन्तमात्रवृत्तित्वात् दीर्घस्य च शब्निरूपिताङ्गत्वशालिनः क्रमेरेव विधानात् । एवमुत्तरद्वयेऽपि ।

तथा च यत्प्रत्ययनिरूपितं यस्याङ्गत्वं तत्प्रत्ययस्य स्थानिवत्त्वमाश्रित्य तन्निमित्तं कार्यं तस्य न भवतीत्यर्थः फलितः ।

अथ पक्षद्वयेऽपि "ञ्नित्यादिर्नित्यम्" "कितः" "पथिमथोः सर्वनामस्थाने" इति विहिताः स्वरा लुकि कृतेऽपि दुर्वाराः । तथा च गर्गाः, विदाः । यञञोर्लुक्" । उष्ट्रग्रीवा । "इवे प्रतिकृतौ" इति कनो "देवपथादिभ्यश्च" इति लुप् । तत्र "ञ्निति" इत्याद्युदात्तं स्यात् । असंज्ञायां चेदम् । संज्ञायां तु "संज्ञायामुपमानम्" इत्याद्युदात्तस्येष्टत्वादिति कैयटः । अत्रेरपत्यान्यत्रयः । "इतश्चानिञः" इति ढक् । तस्य "आत्रिभृगुकुत्स" इति लुक् । तत्र कितस्ताद्धितस्येत्यन्तोदात्तत्वं स्यात् । प्रत्ययग्रहणपरिभाषया तद्धितान्तस्य तद्विधानात् । न च फिट्स्वरेण तत्रान्तोदात्तत्वं दुर्वारम् । "राशदिभ्यां त्रिप्" "अदेस्त्रिनिश्च" इत्युणादिसूत्रेणात्रिः अत्री इति च रूपद्वयसिद्धेः । तत्र प्रत्ययस्य पित्त्वादनुदात्तत्वे शेषनिघातेन इकारान्तस्यात्रिशब्दस्याद्युदातत्वम् । नान्तस्य नित्स्वरेणान्तोदात्तत्वमित्यभ्युपगमात् । "अत्रेरिव शृणुतम्" इत्यत्र, "अत्रीणा स्तोममद्रिवः" इति लुकि चाद्युदात्तप्रयोगात् । "दूरे वा ये अन्ति वा केचिदत्रिण" इत्यन्तोदात्तप्रयोगाच्च । पन्थाः प्रियो यस्य स पथिप्रियः । "सुपो धातु' इति लुकि पथिमथोरित्याद्युदात्तत्वं च स्यात् । एषामङ्गाधिकारीयत्वाभावात् ।

वस्तुतोऽङ्गकार्यत्वाभावाच्च "सुप्तिङन्तम्" इति पदसंज्ञ्या इव उक्तस्वराणां प्रत्ययान्तकार्यत्वाभावात् । अङ्गत्वस्य तु प्रत्ययान्तावधिकपूर्वभागमात्रवृत्तित्वात् ।

ननु "कित" इति माऽस्त्वङ्गकार्यम्, इतरद् द्वयं तु सप्तमीनिर्देशाद्वस्तुतोऽङ्गस्य कार्यं भवत्येवेति भाष्यमते कथं तत्प्रसक्तिरिति चेन्न । सौवर्यः सप्तम्यस्तदन्तसप्तम्य इति स्वीकारात् ञ्निदन्तस्यादेरुदात्त इत्यर्थात् । तत्र च ज्ञापकं "भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति" इति पूर्वग्रहणम् । अन्यथा पिति परे विधीयमानस्य पूर्वकार्यत्वासिद्ध्या तद्वैयर्थ्यात् । अत एव "उपोत्तमं रिति" इति उदात्तत्वम् 'आहवनीय' इत्यादौ रिदन्तस्योपोत्तमे प्रत्ययस्यैव ईकारे प्रवर्त्तते नतु प्रकृतिभागस्योपोत्तमे हकाराकारे ।

एवं "चङ्यन्यतरस्याम्"इत्यपि चङन्त । एवेति सिद्धान्तः । न चैवं "चतुरः शसि" इत्युदात्तत्वं शसन्तस्यैव स्यात् । तथा च "षट्त्रिंशांश्च चतुरः कल्पयन्त" इति मध्योदात्तपाठविरोध इति वाच्यम् । शस्ग्रहणसामर्थ्यात्तदन्तबाधात् । अन्यथा "ऊडिदम्पदादि"इति सूत्र एव चतुर्शब्दं ब्रूयात् । तत्रासर्वनामस्थानग्रहणानुवृत्त्याऽनतिप्रसङ्गात् । न च आभ्यामित्यादौ तद्दोषः । "षट्त्रिचतुर्भ्यो हलादिः" इति तत्रोदात्तत्वस्यैव सिद्धान्तेऽपीष्टत्वात् । न चैवं स्वरविधौ षष्ठीनिर्देशस्यैवापत्तिः, रित इत्यादावर्द्धमात्राधिक्यादिति प्राप्ते वार्तिकम्—

"लुमति प्रतिषेधे एकस्वरस्योपसंख्यानं, सर्वामन्त्रितसिज्लुक्स्वरवर्जं, प्रयोजनं ञ्नितिकिल्लुक्स्वराः, पथिमथोः सर्वनामस्थाने लुक्" इति ।

अयमर्थः—प्रत्ययलक्षणेन प्राप्तोऽप्येकपदस्वरो न भवति। "सर्वामन्त्रितासिज्लुक्स्वरवर्जम्" इति वचनमारभ्यमित्यर्थः। पदद्वयाश्रयस्तु भवत्येव। यथा दधि तिष्ठतीत्यत्र "पदस्य" "पदाद्"इत्यधिकारीयः "तिङ्ङतिङः" इति निघातः। दधीत्यस्य पदसंज्ञार्थं प्रत्ययलक्षणस्यापेक्ष्यत्वात्। एवम् 'इह तिष्ठ' इत्यादि बोध्यम्। सर्वादिपर्युदासः किम्। 'सर्वस्तोमोऽतिरात्रः' इत्यत्र "सर्वस्य सुपि" इत्याद्युदात्तत्वम्, 'सर्पिरागच्छ' 'सप्त आगच्छत' इत्यत्र "आमन्त्रितस्य च" इति षाष्ठाद्युदात्तत्वम्, 'मा हि दाताम्' इत्यत्र "आदिः सिचोऽन्यतरस्याम्" इत्याद्युदात्तत्वं च यथा स्यात्। नचाद्ये "बहुव्रीहौ प्रकृत्या" इत्यत एव सिद्धम् "स्वाङ्गशिटामदन्तानाम्" इति सर्वशब्दस्याद्युदात्तत्वादिति वाच्यम्। "सर्वस्य सुपि" इत्यस्य प्रवृत्तिं विना "बहुव्रीहौ" इत्यस्य प्रवर्त्तयितुमशक्यत्वात्। तद्विहितस्यैवाद्युदात्तस्य "बहुव्रीहौ प्रकृत्या" इत्यनेन व्यवस्थाप्यत्वात्। सर्पिःशब्दस्यापि व्युत्पत्तिपक्षे प्रत्ययस्वरेण, अव्युत्पत्तिपक्षेऽपि फिट्स्वरेणान्तोदात्तत्वात्। "नब्विषयस्य" इत्याद्युदात्तस्य न प्रवृत्तिः। "अनिसन्तस्य" इति पर्युदासात्। 'घृतादिपाठादन्तोदान्तत्वम्' इति कैयटः। तत्तु अव्युत्पत्तिपक्षाभिप्रायम्।

ननु सप्तशब्दः "सप्यशूभ्यां तुट् च" इति कनिनन्तत्वात् आद्युदात्तः, अव्युत्पत्तिपक्षेऽपि "त्रः संख्यायाः" इति तथैवेति चेन्न। घृतादित्वात् अन्तोदात्तत्वात्। सप्त युञ्जति रथमेकचक्रमिति तत्प्रयोगाच्च। तस्मात्स्वरत्रयनिवृत्तिः प्रयोजनमित्यर्थः। "गातिस्था" इत्यत्र सिज्ग्रहणसामर्थ्यात् तल्लुकि स्वरासिद्धिः। अन्यथा च्लेरेव लुकं विदध्यात् अभूत्, अपात् इत्यादिसिद्धये। "अस्तिसिचो" इत्यत्र सकारान्तरप्रश्लेषस्याप्येवं परि-

त्यागसम्भवात् ।

न चैवम् "आतः" इति सूत्रं विध्यर्थमेव स्यात् न तु नियमार्थम्, तथा च लटो निवृत्तये च्लिलुकीति वक्तव्यत्वापत्त्या गौरवं विपरीतमिति वाच्यम् । "ङितः" इत्यनुवृत्त्यैव लटो-निवृत्तेः । तस्मात्सिज्लुक्स्वरस्योक्तपर्युदासे भेदप्रतियोगित्वेन निवेशो न कार्य इति । षष्ठे तु ज्ञापकेन समाहितम् । तथा च "संज्ञायामुपमानम्" इति सूत्रे वार्तिकम्—

"उपमानस्याद्युदात्तत्ववचनं ज्ञापकमनुबन्धलक्षणे स्वरे प्रत्ययलक्षणप्रतिषेधस्य" इति ।

अन्यथा चञ्चेव चञ्चा, वध्रिकेव वध्रिका । संज्ञार्थस्य कनो "लुम्मनुष्ये" इति लुब् । तत्र प्रत्ययलक्षणेन नित्स्वरेणैव तत्सिद्धेरित्याद्युदात्तवचनमुक्तार्थज्ञापकमेव । न च "न लुमताऽङ्गस्य" इति प्रतिषेधः । अङ्गाधिकारबहिर्भावात् । निदन्तस्यादेरित्यर्थाद्, वस्तुतोऽङ्गकार्यत्वाभावाच्च । "पथिमथोः" इति स्वरप्रतिषेधवचनं तु कर्त्तव्यमेव । तस्यानुबन्धलक्षणत्वाभावात् उक्तज्ञापकेन दुर्वारत्वात् । न च ज्ञापकस्य स्वरमात्रविषयकत्वं कल्प्यम् । आमन्त्रितासिज्लुक्स्वरयोरसिद्धिप्रसङ्गात् । न च सप्तमीनिर्दिष्टे स्वरे प्रत्ययलक्षणप्रतिषेधो ज्ञाप्यः । 'सर्वस्तोमः' इत्याद्युदात्तानुपपत्तेः ।

यद्वा सप्तमीनिर्दिष्टस्वरे प्रत्ययलक्षणं न भवतीति ज्ञाप्यम् । "सर्वस्य सुपि" इत्यत्र सप्तमीमपनीय सुप इति षष्ठ्यन्तं पाठ्यम् ।

अत्र वदन्ति । ज्ञापकं द्वेधा सामान्यापेक्षं विशेषापेक्षं च । यदि "भीह्री" इत्यत्र पूर्वग्रहणेन सप्तम्यर्थपक्षे तदन्तग्रहणपक्षे च यत्र फलभेदस्तत्रैव "सौवर्यः सप्तम्यस्तदन्तसप्तम्य" इति ज्ञाप्यते । तत्र हि पूर्वग्रहणाभावे तदन्त एवोदात्तः स्यात् । सप्तम्याश्रयणे तु पितं विहाय भीप्रभृतीनामेवोदात्त इति फले भेदः ।

एवं "उपोत्तमं रिति" "चङ्यन्यतरस्याम्" इत्यादौ बोध्यम् । "ञ्नित्योदिर्नित्यम्" "पथिमथोः सर्वनामस्थाने" इत्यादौ तूभयथाऽपि प्रकृत्यादेरेवोदात्तत्वमिति न कश्चिद्भेदः। अतो नात्र तदन्तसप्तमीत्वम्। अतो वस्तुतोऽङ्गस्य कार्यं भवत्येवेति "न लुमताऽङ्गस्य" इति प्रतिषेधप्रवृत्त्या न चित्स्वराद्यापत्तिरिति। प्रकृतसूत्रस्थभाष्यकैयटस्वरसोऽप्येवम् । षाष्ठतद्ग्रन्थास्तु सामान्यापेक्षज्ञापकाभिप्राया इति दिक् ।

'अत्रय' इत्यत्रापि नोक्तस्वरापत्तिः, तद्धितस्यैव कितोऽन्तोदात्तविधानात् । अत्र च तस्य लुप्तत्वात् । प्रत्ययलक्षणस्यान्यदीयकार्यस्यैव प्रत्ययलोपेऽपि विधानात् । प्रत्ययस्य तु यत्कार्यं तस्य तल्लोपेऽनुपपत्तेः । एकानिरूपितयोर्निमित्तत्वकार्यित्वयोरेकस्मिन्नसम्भवात् । न च तदपि प्रत्ययान्तस्यैव कार्यमिति वाच्यम् । न हि प्रत्ययग्रहणे तदन्तस्येति स्वतन्त्रं वचनम् किं तु विशेषणं तदन्तस्य संज्ञेत्येतदर्थमूलकम् । विशेषणविशेष्यभावे च कामचारात् तत्र प्रत्ययस्य विशेषणत्वानङ्गीकारात् । लोपस्याभावरूपतया अन्तस्य तदुदात्तस्य च बाधात्स्थानिवत्सूत्रस्याप्यप्रवृत्तेः । 'राजपुरुष' इत्यादावपि नाल्लोपः। वस्तुतो यदङ्गमिति व्याख्यानाद्भसंज्ञानिषेधात् सुबन्तत्वप्रवृत्तपदसंज्ञया च नकारस्य लोपात् । 'अहर्ददाति' इत्यत्र रेफोऽपि सिद्धः । "असुपि" इति निषेधस्य वस्तुतोऽङ्गकार्यत्वेन सुब्लुक्यप्रवृत्तेः । न च वार्त्तिकमते दोषो दुर्वारः । 'अह्नो रविधौ' इति वचनारम्भात् । न च "असुपि" इति वचनस्य सामर्थ्यात्प्रत्ययलक्षणं नास्तीति वाच्यम् । 'दीर्घाहा निदाघः' इति हल्ङ्यादिलोपेऽपि रेफापत्तेः । एतेन "असुपि" इति पर्युदासः, 'अहर्ददाति' इत्यत्र दाधातोः सुब्भिन्नस्य सत्त्वात् रेफ इति परास्तम् ।

न च रुत्वरत्वयोरसिद्धतया दुर्बलत्वात्पूर्वं नलोपात् अकारस्यैव रुत्वरत्वयोरापत्तिः। तदुभयारम्भसामर्थ्यात् तद्विषये नलोपविरहात्। अकारस्य रेफे रुत्वे वा विशेषाभावात्। न च 'अहर्गच्छ' 'हे दीर्घाहो निदाघ' इत्यत्र तदारम्भः चरितार्थः, तत्र नलोपनिषेधादिति वाच्यम्। तथा ऽपि "रूपरात्रि" इति रुत्ववैयर्थ्यात्। न चैतदपि सम्बुद्धौ चरितार्थम्। "अहन्" इत्यावर्त्य एकेन नलोपाभावो निरूप्यते, द्वितीयेन च रुत्वं विधीयते इति व्याख्यानात्।

स्यादेतत्। परमवाचा, परमगोदुहा, परमलिहा, परमदण्डिना, परमदिवा, परमकुमार्या, इत्यत्रान्तर्वर्तिविभक्तिनिबन्धनायाम् उत्तरपदस्य पदसंज्ञायां "चोः कुः" "दादेर्धातोर्घः" "होढः" "न लोपः प्रातिपदिकान्तस्य" "दिव उत्" "इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च" इत्येतेषां प्रवृत्तिः स्यात्। न च भसंज्ञया बाधः। भिन्नावधिकत्वात्। समस्तपदस्य भसंज्ञा उत्तरपदमात्रस्य तु पदसंज्ञेति। अत्र भाष्यम्—भसंज्ञायां सुबन्तमित्यनुवर्त्यम्। तथा च यजादावसर्वनामस्थाने परे यस्मात्प्रत्ययविधिस्तथाभूतः पूर्वसमुदायो भसंज्ञः, तदवयवसुबन्तसद्भावे तु तदपि भसंज्ञं भवतीत्यर्थः। प्रधानशिष्टा च भसंज्ञा राज्ञ इत्यादौ सुबन्तावयवाभावेऽपि प्रवर्त्तत एव, "कर्त्तुः क्यङ् सलोपश्च" इति हंसायते इत्यादाविव।

नचैवमपि सर्वनामस्थाने दोषो दुर्वारः तत्र "असर्वनामस्थाने" इति पदत्वनिषेधात्। तत्रापि सुबन्तमित्यनुवृत्तेः प्रतिषेधसामर्थ्याच्च "अनन्तरस्य विधिर्वा" इत्यस्य न प्रवृत्तिः। "सर्वनामस्थाने परे पूर्वसमुदायस्तदवयवभूतं सुबन्तं च पदसंज्ञं नेति तदर्थः। समुदायस्य "स्वादिषु" इति, अवयवस्य तु सुबन्तमिति

मात्रायाः पदसंज्ञाया निषेधात् 'परमवाचौ' इत्यादि सिद्धम् । न चैवं 'सुवाक्' 'सुराजा' इत्यादौ कुत्वनलोपादिकं न स्यात्, समुदायावयवयोर्द्वयोरप्युक्तरीत्या पदसंज्ञानिषेधात् इति वाच्यम् । "असर्वनामस्थाने" इत्यत्र "यचि भम्" इति सूत्रात् यचीत्यपकृष्य अजादौ सर्वनामस्थाने पदत्वनिषेधात् सौ पदसंज्ञासद्भावात् । न चैवं श्रूयमाणेऽपि सौ पूर्वस्य पदसंज्ञापत्तिः । इष्टत्वात् । तस्मात्समासचरमभागस्याजादौ सुपि न क्वचित्पदसंज्ञेति सिद्धम् ।

न चैवं 'दूरान्मुक्तः' इत्यादावलुक्, 'होतापोतारौ' इत्यादावनङ् च न स्यात् उत्तरपदे तद्विधानादिति वाच्यम् । उत्तरपदशब्दस्य समासचरमावयवे रूढतया तत्र पदसंज्ञाऽनपेक्षणात् । न चैवमपि 'दधिसेचौ' इत्यादौ "सात्पदाद्योः" इति षत्वनिषेधो न स्यादिति वाच्यम् । पदादादिः पदादिरिति व्याख्यानात् । पदोत्तरत्वे सति शब्दान्तरस्यादिरिति यावत् । न च रामेषु इत्यादावपि निषेधापत्तिः । "स्वादिषु" इति या पदसंज्ञा तामादायोक्तनिषेधस्याप्रवृत्तेः । तत्र च सातिग्रहणस्यैव ज्ञापकत्वात् । युक्तं चेदम् । पदस्यादिरिति व्याख्याने 'दधिसेचौ' इत्यादौ षत्वस्य दुर्वारत्वात् । "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः" इति वक्ष्यमाणत्वात् । न च बहुसेचौ इत्यादौ षत्वापत्तिः बहुचः प्रत्ययत्वेनापदत्वादिति वाच्यम् । बहुचः परस्य नेति वचनस्यारभ्यत्वात् । तथा हि पदात् इत्येव वाच्यम् । पदात्परस्य सस्य षत्वं न स्यादित्यर्थः । आदिपदस्थाने च बहुच् प्रक्षेप्यः बहुचः परस्य सस्य न षत्वमिति । वार्तिककृता तु 'परमवाचा' इत्यादिसाधनाय बहुवचनमेवारब्धम् । तदाह–

"उत्तरपदत्वे चापदादिविधौ" इति ।

उत्तरेत्यनेनोत्तरपदं गृह्यते । तस्य पदत्वे इति समासः । समासचरमावयवस्य पदसंज्ञायां कर्त्तव्यायां लुमता लुप्ते प्रत्ययलक्षणं न भवति । 'दधिसेचौ' इत्यादावपि पदसंज्ञानिषेधवारणाय अपदादिविधाविति । पदादिविधौ तु कर्त्तव्ये भवत्येव प्रत्ययलक्षणमित्यर्थः । एवं च प्राक् सुबुत्पत्तेः समासोऽत्र नाभिधेयः । 'धनक्रीता' इत्यादिसिद्धये तदनित्यत्वस्वीकारात् ।

कैयटस्तु नायमुपपदसमासः किं तु 'दध्नः सेचौ' इति षष्ठीसमासः, अनभिधानाच्च सोपपदान्न विच्, अतो 'दधिषेचौ' इत्यादेः नापत्तिरित्याह । एवमपि "बहुच्पूर्वस्य च" इति वचनं कार्यमेव, बहुचि कृते विशिष्टस्यार्थवत्त्वात्प्रातिपदिकत्वात्सुपो लुकि पुनर्विशिष्टात्सुबन्तरोत्पत्तेर्वक्ष्यमाणत्वात् अन्तर्वर्तिविभक्त्या पदसंज्ञामाश्रित्य कुत्वं मा भूत् इति ।

अत्र वदन्ति—"प्रत्ययलोप"इति सूत्र एव 'उत्तरपदत्वे च पदादिविधौ''बहुच्पूर्वस्य'इति पठनीयम् । पदादिविधावेव प्रत्ययलक्षणं न तु पदान्तविधौ इति नियमार्थं चेदं वाक्यद्वयम् । एवं च नञ्परित्यागाल्लाघवम् । एवं च सावपि पदम् इत्यपि नास्ति । पूर्वोक्तप्रकारस्यानादरणात् । अत एव हल्ङ्यादिसूत्रे भाष्यम्—

'अथ सावपि पदं भवति । एवमप्युभयतः स्पाशा रज्जुः' इति । 'अभूवन्' इत्यत्र जुस् न भवति । आत इत्यस्य नियमार्थत्वात् । न च देवदत्तं याजयाञ्चकार इत्यत्र लुक बाधित्वा परत्वात् तिबादिषु "आमः" इति तेषां लुकि प्रत्ययलक्षणेन तिङन्तत्वात् आमन्तस्य निघातस्ततः परस्य निघातनिषेधश्च स्यादिति वाच्यम् । येननाप्राप्तिन्यायेन लावस्थायामेव तिबादीन् बाधित्वा लुक्प्रवृत्तेः । तदुक्तम्—

पधस्य च" इति इकारस्य गुणः । ननु पूर्वस्यावध्यनव-च्छिन्नस्यैवोपादानात् शास इत्यत्र शकाराकारसमुदायस्यैवो-पधासंज्ञा स्यात् । समुदायावयवसान्निधौ एकाज्द्विर्वचनन्यायेन समुदायस्यैव कार्यित्वात् । तथा च "शास इदङ्हलोः" इती-त्त्वं समुदायस्यैव स्यात् इति चेन्न । पूर्वपदस्योत्सर्गतोऽव्य-वहितपूर्वपरत्वात् । समुदायसंज्ञायामपि "अलोऽन्त्यस्य" इति परिभाषया ऽनतिप्रसङ्गाच्च ।

अथ "नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे" इति प्रति-षेधः स्यात्, शब्दस्यावृत्तिर्न तु अर्थस्येत्यभ्यासस्यानर्थकत्वात् "भृञामित्"इत्यादेः सर्वादेशत्ववारणाय अनभ्यासेत्युक्तम् । वि-कारश्च भावात्मक एव, तेन देहि इत्यत्र अभ्यासलोपः सर्वा-देश एवेति । मैवम् । "तस्य लोप" इति सूत्रे ञिटुडूनां सर्व-लोपार्थं "तस्य" इति पदोपादानादेतस्याः सूत्रानभिमतत्वात् । भाष्यकृताऽपि तत्प्रयोजनानामन्यथोपपादितत्वात् । तथा हि "अव्यक्तानुकारणस्य" इति पररूपं तावदन्त्यस्य न भवति । "नामेडितस्यान्त्यस्य तु वा" इति ज्ञापकात् । अन्य-थाऽऽम्रेडितस्य वेत्येव ब्रूयात् । "घ्वसोरेद्धौ" इत्यत्रापि लोपग्र-हणानुवृत्तावपि पुनर्लोपग्रहणसामर्थ्यात् सर्वादेशः । तथाचैवं सूत्ररचना "घोरभ्यासस्य लोपोहौ" । व्याख्यातम् । "असे-श्चैत्" अस्तेर्घोश्च एद्भवति हौ परे इत्यर्थः ।

यद्वा लोपस्श् इति छेदः । संज्ञायां शकारानुबन्धस्य प्रयोज-नाभावादादेशे संज्ञिनि सर्वादेशत्वप्रवृत्तिः । "द्विशकारको निर्देश" इति भाष्यम् । तत्र लोप इति भिन्नं पदम् । लोपशब्दस्य कृदन्तस्य संज्ञिनाऽर्थेनार्थवत्त्वाद्विभक्तौ कृताया शकारः प्रतिनिर्दिश्यते । तस्य चोपदेश एव इत्सञ्ज्ञायां सर्वादेशो लोपः सम्पद्यते । न च

झलि परे यः संयोगस्तदादित्वात्सोर्लोपे एकशकारकपाठेनैव निर्वाह इति वाच्यम् । स्पष्टार्थं न तल्लोप इति भावात् । अत एव "अन उपधालोपिनः" इत्यादावल्लोपो न कृतः ।

यद्वा "झलो झलि" इतिवत् निमित्तकार्यिणोरेकपदस्थत्व एव "स्कोः"इत्यस्य प्रवृत्तिः। न च 'आभ्याम्' इत्यादौ "हलि लोप" इति अक्ककारस्य इदम इदो विहितस्य लोपस्यान्त्यप्रतियोगिकत्वापत्तिर्दुर्वारेति वाच्यम्। "अनाप्यकः" इत्यस्मात् 'अन्' इत्यनुवृत्त्या हलीति सप्तम्या अन् इत्यत्र षष्ठीं प्रकल्प्य अन एव लोपविधानात्, अलोऽन्त्यपरिभाषया नकारमात्रस्य लोपे "अतो गुणे" इति पररूपे च 'आभ्याम्' इति सिद्धेः । न च तथापि "अत्र लोपो ऽभ्यासस्य" इत्यत्रान्त्यादेशत्वप्रसङ्गतादवस्थ्यम् । अत्राभ्यासत्वाश्रये लोपो, न तु तदेकदेशे इति व्याख्यानात् ।

ननु ददौ, दधौ इत्यादिवारणाय सनीन्यस्य, जिज्ञपयिषति इत्यादिवारणाय सादाविति सन्विशेषणस्य, यियक्षति इति वारणाय मीमित्यादिप्रकृतिविशेषाणाम् , "मुचोऽकर्मकस्य गुणो वा" इति मुमुक्षति गाम् इत्यादिवारणाय विषयविशेषस्य च लाभार्थमेवात्रग्रहणमिति चेन्न । अनुवृत्त्यैवैषां सिद्धेः ।

न च तथाऽपि "विभाषा भवद्भगवदघवतामोच्चावस्य" इति वार्तिकेन विहित ओकारो वकारमात्रस्य स्यात् इति वाच्यम् । वस्येत्यपहाय अवस्येति निर्देशसामर्थ्यात्सर्वादेशत्वसिद्धेः ।

तस्मात्समुदायसंज्ञायामपि न दोषः । संयोगोपधत्वादिव्यवहारोऽप्यत्र सङ्गच्छते ।

पक्षान्तरे त्ववयवधर्मस्य समुदाये समारोपो बोध्यः ।

यद्वा, अल इति जसन्तम्। न च पूर्व इत्येकवचनान्तेन सा-

मानाधिकरण्यानुपपत्तिः । पूर्वे इति जसन्तस्यैव छेदात् । अन्त्य-स्यालत्वलाभस्त्वार्थः ।

यद्वा, अल इति निर्धारणे षष्ठी । जातावेकवचनम् । अलां मध्येऽन्त्यात्पूर्वोऽल् इत्यर्थः ॥

# तस्मिन्निति निर्दिष्टे पूर्वस्य ६६

सप्तमीनिर्देशे पूर्वस्यैव कार्यं स्यात्तच्च निर्दिष्टे अव्यवहितोच्चारिते । निश्शब्देन नैरन्तर्यस्य दिशिना चोच्चारणस्य लाभात् । नियमार्थं चेदम् । "इको यणचि" इत्यादीनामनियतप्रवृत्तिप्रसञ्जको यस्तर्कितोऽभावस्तत्प्रतियोगित्वात् । यदीदं वचनं न स्यात् तर्हि पूर्वस्य परस्य समीपस्यानन्तरस्य व्यवहितस्याव्यवहितस्य वा इको विनिगमकाभावात् यणादेशः स्यात्। सति त्वस्मिन्पूर्व एव विश्राम्यतीति । "इको यणचि" इत्यत्र हि भावलक्षणा सप्तमी। आचि सतीत्यर्थः । सत्त्वं च पूर्वपरोभयसाधारणम् । एवमुपश्लेषोऽपि । तथाच कार्यप्रतियोगित्वनिमित्तत्वयोरेकत्र युगपदसम्भवात् 'दध्युदकम्' इत्यादौ पर्यायेण द्वयोर्यण् स्यात् अतः पूर्वस्यैवेति नियम्यते 'अग्निचित्' इत्यत्र व्यवहितपूर्वेऽपि प्राप्तस्त्वव्यवहितस्यैवेति ।

यत्तु सत्सप्तम्यां "तस्मिन्"इति परिभाषा नोपतिष्ठते इति "श्नान्नलोपः" इति सूत्रे भाष्यकैयटयोरुक्तम् । तत् पूर्वपक्षिणः प्रौढिवादमात्रम् ।

ननु तस्मिन्निति शब्दो यत्र निर्दिश्यते यथा—"तस्मिन्नणि च युष्माकास्माकौ", तत्रैवायं प्रवर्त्तेत । 'गवित्ययमाह' इत्यादौ इतिशब्देन शब्दस्वरूपस्यैव बोधात् । न च तत्र प्रयोजनाभावः । हे यौष्माकीण अस्मभ्यं देहि, हे आस्माक युष्म-

ऽर्थं ददामि' इत्यादौ खञणभ्यां परस्यादेशव्यावृत्तेः फलत्वात् । मैवम् । लोके शब्दस्यार्थपरत्वात् इतिना शब्दपरत्वकल्पनात्, व्याकरणे तु शब्दपरत्वात् इतिनाऽर्थपरत्वसिद्धेः । इतिकरणस्य पदार्थविपर्यासकरत्वात् । तत्रैव पूर्वशब्दोच्चारणापत्तेश्च । एतत्सूत्रारम्भापेक्षया लाघवात् । तस्मात्सप्तम्यन्तानुकरणमेव तस्मिन्निति । सर्वनाम्ना अचि हलीति विशेषाणां संग्रहात्, "तस्यापत्यम्" इत्यादिवत् ॥

# तस्मादित्युत्तरस्य ६७ ।

पञ्चमीनिर्देशे उत्तरस्यैव कार्यं स्यात् तच्चाव्यवहितस्य । तेन "तिङ्ङतिङः" इति निघातः 'अग्निमीळे' इत्यत्रैव न त्वीळेऽग्निमित्यत्रापि ।

दिग्योगलक्षणा चेयम् । कारकविभक्तेरसम्भवात् । तथाचोत्तरशब्दवत्पूर्वशब्दस्याप्यध्याहारापत्तेः व्यवहितस्याप्युत्तरस्य कार्यप्रसङ्गाच्च नियमार्थमिदम् । तेन 'उत्थानम्' इत्यत्र "उदः स्थास्तम्भोः" इत्यस्य न प्रसङ्गः ।

यद्वार्त्तिकम्—

"तस्मिंस्तस्मादिति पूर्वोत्तरयोर्योगयोरविशेषान्नियमार्थं वचनं दध्युदकं, पचत्योदनम्" इति ।

इहापि तस्मादिति पञ्चम्यन्तानामनुकरणम् न तु यत्र तस्मादिति शब्दस्तत्रैतदुपस्थित्यर्थम्, पूर्वोक्तयुक्तेः ।

नन्वत्र प्रयोजनाभावादेव शङ्काऽनुदयः । "तस्मान्नुड्द्विहलः" "अत आदेः" इति दीर्घादकारात्पूर्वस्याङ्गस्यासम्भवात् । "तस्माच्छसो नः पुंसि" इत्यत्रापि वृक्षान् इत्यादौ पूर्वसवर्णदीर्घात् पूर्वस्य षकारस्य नत्वापत्तेः षष्ठी-

निर्दिष्टस्य शसो नत्वमिति व्याख्यानेन वारणात् ।

अत्राहुः—उच्चरत आनुपलभत इति प्रयोजनम्, दीर्घीभूतादाकारात्पूर्वस्योच्चरच्छब्दप्रकृतिकस्य शसो नत्वं मा भूदित्युक्तिसम्भवसत्त्वात् ।

एवम् "तस्मान्नुडचि" इत्यत्रापि अनश्व इत्यादौ लुप्तनकारान्नञः पूर्वं नुडागमो मा भूदिति योजनीयम् ।

इह सूत्रद्वये षष्ठीप्रक्लृप्तिपक्षोऽपि भाष्ये उक्तः । स यथा—"षष्ठी स्थानेयोगा" इति सूत्रादिह षष्ठीत्यनुवृत्त्या सत्यप्यर्थनिर्देशे ऽव्यवहितस्य पूर्वस्य षष्ठी, पञ्चम्यर्थनिर्देशे तादृशस्योत्तरस्य षष्ठी स्यादित्यर्थः । इक इत्यादौ षष्ठ्याः सत्त्वात्तदनुवादेन पूर्वस्यैषा, न तूत्तरस्य न वा पूर्वस्यापि व्यवहितस्येत्येतदेव बोध्यते । "आने मुक्" इत्यादौ तु षष्ठ्यपि प्रकल्प्यते । अन्यत्पूर्ववत् । सा चानियतयोगात्स्थानषष्ठी । यदुत्तरं स्थानषष्ठी तस्यैव च कार्यनियमोऽर्थात्सिद्धः । यत्र तूभयनिर्देशस्तत्रोभयोर्न प्रकल्पकत्वम् । कार्यित्वनिमित्तत्वयोर्युगपदेकस्मिन्नसम्भवात् । "एकः पूर्वपरयोः" इति ज्ञापकाच्च । अन्यथा "आद्गुणः" इत्यादौ आदिति पञ्चम्याऽचीति सप्तम्याः षष्ठीत्वं कल्प्यत इत्युभयोर्गुणादेशसिद्धौ तद्वैयर्थ्यात् । तथा च तत्र कैयटः—

सूत्रद्वयप्रमाणत्वात् द्वे भवेतां प्रकल्पिके ।
षष्ठ्या विभक्ती तेनात्र ज्ञापनार्थत्वमाश्रितम् ॥

द्वे पञ्चमीसप्तमीरूपविभक्ती । षष्ठ्याः परस्परोत्तरषष्ठ्या इत्यर्थः । किं तु परत्वानवकाशत्वाभ्यां नियमपक्षवत्षष्ठीप्रकल्पनपक्षेऽपि व्यवस्था । तथा हि—"आने मुक्" इत्यत्र सप्तम्यनवकाशा "अतो येयः" इति

पूर्वत्र चरितार्थाया अत इति पञ्चम्याः षष्ठीं प्रकल्पयति । एवम् "ईदासः" इत्यास इति पञ्चमी निरवकाशा "आने" इति सप्तम्याः पूर्वत्र सावकाशायाः । "तास्यनुदात्तेद्" इति सूत्रेऽपि "सार्वधातुके" इति सप्तमी अभ्यस्तासिजर्थत्वादुत्तरत्र सावकाशेति तासेरित्यादिपञ्चम्येव षष्ठीं प्रकल्पयति—लसार्वधातुकस्य स्यतास्यादिभ्य अनुदात्तत्वमिति । न च तत्र लसार्वधातुकमिति प्रथमान्तपाठान्न सप्तमीति वाच्यम् । " तास्यादिभ्योऽनुदात्तत्वे सप्तमीनिर्देशोऽभ्यस्तासिजर्थः " इति वक्ष्यमाणत्वात् । एवम् "बहोर्लोपः" इत्यत्र बहोरिति पञ्चम्यनवकाशा इष्ठमेयस्सु इति सप्तम्याः षष्ठीं प्रकल्पयति–बहोः परेषामेषां लोपः स्यादित्यर्थः । अत एव "भूच बहोः" इति षष्ठीनिर्देशः । "गोतो णित्" इति पञ्चमी सर्वनामस्थाने इति सप्तम्याः षष्ठीं प्रकल्पति । गोशब्दस्य णित्त्वे प्रयोजनाभावाच्च । न च 'तिष्ठति गौः' इत्यत्र पूर्वस्य वृद्धिः फलम् । गोशब्दं प्रति तिष्ठतेरनङ्गत्वात् । "आमि सर्वनाम्नः सुट्" इत्यत्रापि पञ्चम्यनवकाशा आमीति सप्तम्या उत्तरत्र सावकाशायाः षष्ठीं प्रकल्पयति । न च आदित्यनुवृत्तया पञ्चम्या सामानाधिकरण्याददन्तात्सर्वनाम्न इति पञ्चम्यपि कृतार्थेति वाच्यम् । तथाऽपि यथोद्देशपक्षे परत्वात् "तस्मादित्युत्तरस्य" इत्येतत्प्रवृत्तेः । तदुक्तम्—

'उभयनिर्देशे विप्रतिषेधात्पञ्चमीनिर्देश" इति ।

इदं चाभ्युपेत्योक्तम् । वर्णाश्रमेतराणाम् इत्यादिवारणाय सर्वनाम्नो विहितस्याम इति, येषाम् इत्याद्यर्थम् अकारात्परस्येति व्याख्यानात् । अकारान्तात्सर्वनाम्नो विहितस्याम इति व्याख्याने तु येषाम् इत्यादौ न स्यात् । दीर्घादित्यत्र तु षष्ठ्याः

स्थाने पञ्चमी, छान्दसव्यत्ययात् । तेन दीर्घस्यैव तुक् न तु छस्य, "विभाषा सेनासुराच्छाया" इति लिङ्गाच्च । अन्यथा छकारोत्तरं तुक्प्रसङ्गे श्चुत्वे "खरि च" इति चर्त्वे चकारद्वयं स्यात् ।

ननु प्रत्ययविधावपि "गुप्तिज्किद्भ्यः" इति पञ्चम्याः सन् इति प्रथमायाः षष्ठीप्रकल्पकत्वं स्यात् । न चेष्टापत्तिः आदेशान्तरप्रतिनिर्देशाभावात्सनः सनादेशे दोषाभावादिति वाच्यम् । स्थानिन एवात्र निर्दिष्टत्वादादेशस्योपदेशाभावादित्संज्ञाऽनुपपत्तेः । स्थानिनोऽप्युत्पत्तिकाल एव निवृत्त्यभिमुखतया प्रतिपन्नस्य इत्संज्ञाऽनन्वयात् ।

अत्राहुः—

परत्वविशिष्टस्य सन उत्पादनेनोपक्षीणायाः पञ्चम्या नास्ति प्रकल्पकत्वमिति । षष्ठी ह्यनुवादविभक्तिः । स च यथाप्राप्तस्य । प्रत्ययविधौ च तस्य पूर्वमप्रसिद्ध्याऽनुवादानुपपत्तेः । अनियमे नियमकारिण्याः परिभाषाया अनियमप्रसक्त्यभावे प्रवृत्त्यनर्हत्वाच्च । तस्मात्प्रत्ययविधौ पञ्चम्यो न प्रकल्पिका इति॥

## स्वं रूपं शब्दस्याशब्दसंज्ञा ६८।

शब्दस्य स्वकीयं रूपं संज्ञि शब्दशास्त्रे या संज्ञा तां विना इति दीक्षिताः ।

नव्यास्तु "अणुदित्सवर्णस्य" इत्यादिषु प्रथमान्तानां संज्ञासमर्पकत्वेन षष्ठ्यन्तानां संज्ञिसमर्पकत्वेन दृष्टत्वात् स्वं रूपं शब्दस्य संज्ञा स्यादित्यर्थः ।

तथा च प्रत्ययलोपसूत्रे भाष्यम्—

"स्वं रूपं शब्दस्य संज्ञा भवतीति हन्तेरपि हन्तिः संज्ञा

भविष्यतीति अत्रापि रूपं शब्दस्य संज्ञेति" इत्याह ।

हरदत्तस्तु–'ग्राह्यमित्यध्याहार्यम् । शब्दस्येति "कृत्यानां कर्त्तरि वा" इति षष्ठी । तेन शब्दः स्वमेव रूपं ग्राहयतीत्यर्थः । रूपपदं चाग्न्यादिपदवृत्तिजातिपरम् । व्यक्तिद्वारा च कार्ययोग, इति व्याचख्यौ ।

तेन "अग्नेर्ढक्" इति अग्निशब्दादेव ढक् न तु वह्निशब्दात् ।

अशब्देति किम् । "उपसर्गे घोः" इत्यादौ घुशब्दस्वरूपं मा ग्राहि, किं तु दाधारूपा धातव एव गृह्येरन्निति । तेन घुधातोः शब्दार्थान्न किप्रत्ययः । स्वपदं च यत्र यः शब्द उपात्तस्तत्परम् । शब्दे शास्त्रे संज्ञेति सप्तमीसमासः । षष्ठीसमासे कर्मादिष्वर्थसंज्ञासु स्वरूपग्रहणापत्तेः ।

ननु रूपग्रहणं विनाऽपि स्वशब्देन तदेव ग्राह्यम् । प्रतीतावुपदेशानपेक्षादसाधारणत्वादन्तरङ्गत्वान्नियतोपस्थितिकत्वाच्च, अर्थस्य प्रतीतौ शक्तिग्रहापेक्षत्वात् पर्यायान्तरबोध्यत्वेन साधारणत्वात्पदधीजन्यज्ञानविषयत्वेन बहिरङ्गत्वात् अनुकरणदशायामर्थानवगमादनियतोपस्थितिकत्वाच्चेति ।

अत्राहुः–इहार्थोऽपि विवक्षितो रूपवदिति ज्ञापनार्थं रूपग्रहणम् । तेन "अर्थवद्ग्रहणे नानर्थकस्य" सिद्धम् । ज्ञापकवशादर्थस्य, स्वं रूपमिति वचनाच्च शब्दस्येति, सिद्धमर्थवद्ग्रहणम् । तेन 'काशे' इत्यादौ "शे" इति प्रगृह्यत्वं नेत्यादि । यत्र त्वर्थवद्रूपेण शब्दो नाश्रीयते तत्र नेदमुपतिष्ठते । यथा–वर्णग्रहणेषु,–टेरेत्वं, तेनानर्थकस्यापि टेरेत्वं भवति ।

अत्र भाष्यकृतः–नैतत्समारभ्यम् । लोके हि योग्यतालक्षणेन सम्बन्धेन शब्दोऽर्थं बोधयति । व्याकरणेऽपि पशुरपस्यं देवता प्राञ्च उदञ्चो भरता इत्यादावर्थ एव गृह्यते । "अग्ने-

ढक्" इत्यादौ त्वर्थेन सह प्रत्ययस्य पौर्वापर्यासंभवात् शब्द-स्यैव ग्रहणम्। "ङ्याप्प्रातिपदिकात्" इत्यधिकाराच्च।

न चाशब्दसंज्ञेत्येतदर्थमारम्भः। घुसंज्ञारम्भादेव घुधातोरग्रहणात्। "व्यवहाराय नियमः" इत्युक्तत्वात्। एतेन 'कुमारीघ' इत्यत्र "घरूप" इति ह्रस्वो ऽभावप्रतियोगीति व्याख्यातः। "ई हल्यघोः" इत्यत्र तु घुशब्दस्याकारन्तत्वाभावादेव नोपादानम्। पर्युदासाभावे यद्ग्रहणप्रसक्तिस्तस्यैव पर्युदासाभ्युपगमात्।

न चार्थवद्ग्रहणपरिभाषाज्ञापनार्थम्। तस्या न्यायसिद्धत्वात्। शब्दविशिष्टस्यैवार्थस्योपस्थितेरौत्सर्गिकत्वात् विशेष्ये कार्यबाधाद्विशेषणीभूतशब्दे कार्यप्रवृत्तेर्वाच्यत्वात् अर्थस्य परित्यागापेक्षया शब्दविशेषणत्वेन कार्यिनियामकताया एव युक्तत्वात्।

प्रत्यासत्त्या च स एव शब्दो गृह्यते, न तु तत्पर्यायः, अनुपस्थितत्वात्। अत एव आग्नेयम् इत्यादौ अग्निपदेनैवोपादाने देवतात्वम्, न तु पर्यायान्तरेणेति "विधिशब्दस्य मन्त्रत्वे" इत्यधिकरणे सिद्धान्तः। एतेन "अभिव्यक्तपदार्था ये" इति न्यायो, गौणमुख्यन्यायोऽपि व्याख्यातः। गौणार्थस्य प्रथममनुपस्थितत्वात्।

न चोत्तरसूत्रचतुष्टये "स्वं रूपम्" इत्यस्यानुवृत्त्यर्थम्। तां विनाऽपि निर्वाहात्। ग्रहणकसूत्रे स्वस्यापि स्वसावर्ण्यात् ग्रहणसिद्धेः। अन्यथा 'अवात्ताम्' इत्यादौ "झलो झलि" इति लोपानुपपत्तेः। व्यक्तिभेदस्यात्रापि सुलभत्वात्। एवं तपरसूत्रेऽपि। "आदिरन्त्येन" इत्यत्रादिपदावृत्त्या सिद्धम्। तत्र लिङ्गं "नादिचि" इति निषेधः। अन्यथा "प्रथमयोः पूर्वसवर्णः" इत्यत्र "अकः" इत्यनुवृत्तेरकारस्य संग्रहणाभाव

तदप्रसक्त्या निषेधवैयर्थ्यात्।"येन विधिः–"इत्यत्रापि "तस्य च" इति वार्त्तिककृतैव वाच्यत्वात् । तस्मात्सूत्रमिदं प्रत्याख्यातम् ।

"सित्तद्विशेषाणां वृक्षाद्यर्थम्" । सिदित्युपलक्षणम् । किञ्चिल्लिङ्गासङ्गेन विशेषाणां संज्ञेति वक्तव्यम् । तेन "विभाषावृक्षमृग–" इति सूत्रे वृक्षम् मृगम् इत्यादि पाठ्यम् । विशेषाणामेव द्वन्द्व एकवत् । प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः । इदं च न्यायसिद्धम् । पर्यायाणां सहप्रयोगाभावात् सामान्यविशेषाणां चार्थाभावात्सामान्येन विशेषाणामाक्षेपात् द्वन्द्वस्यैवानुपपत्तेः ।

"पित्पर्यायवचनस्य च स्वाद्यर्थम्" । चकारात्स्वरूपस्य विशेषाणां च ग्रहणम् । "स्वे पुषः" । रैपोषं पुष्टः, अश्वपोषम्, स्वपोषम् । इदं वाचनिकमेव ।

"जित्पर्यायस्यैव राजाद्यर्थम्"। "सभा राजामनुष्यपूर्वा"। इनसभम्, ईश्वरसभम् । नेह राजसभा, हरिश्चन्द्रसभा । इदमपि न्यायासिद्धम् । नञ्प्रश्लेषेण अराजेति पर्युदासाश्रयणात् राजसदृशानां तत्पर्यायाणामेव ग्रहणात् । न च स्वस्यापि स्वपर्यायत्वम् । स्वभिन्नत्वे सत्यभिन्नवृत्तिनिमित्तकत्वं पर्यायत्वमिति स्वीकारात् । विशेषणेन स्वस्य, विशेष्येण च विशेषवाचकपदस्य वारणात् । इनशब्दो राजशब्दपर्याय इत्यस्य राजशब्दभिन्नत्वे सति राजशब्दशक्यतावच्छेदकधर्मावच्छिन्नशक्यताक इत्यर्थः ।

"झित्तस्य च तद्विशेषाणां च मत्स्याद्यर्थम्" । "पक्षिमत्स्यमृगान्हन्ति" । मात्स्यिकः, शाफरिकः । न तु पर्यायवचनानाम् अनिमिषान्हन्ति । 'मीनस्येष्यत'इति भाष्यम् । मैनिकः । 'मृगपक्षिणोस्तु पिन्निर्देशः कर्त्तव्यः । तेन स्वरूपस्य

पर्यायाणां विशेषाणां च ग्रहणम्' इति व्याख्यातारः । इदमपि वाचानिकम् ।

## अणुदित्सवर्णस्य चाप्रत्ययः ६९।

अविधीयमानोऽण् उदिच्च सवर्णस्य चकारात्स्वस्य च संज्ञा स्यात् । अत्राण् परेण णकारेणेति प्रागुक्तम् । "अस्य च्वौ" । शुक्लीस्यात् मालीस्यात् । एरच् । जयः, लयः । "ऋदोरप्" स्तवः, पवः । "उरण् रपरः" ।कर्ता, किरति । "ऋदोरप्"इत्यत्र ह्रस्वऋकारस्य तु न ग्रहणम् दीर्घाणामनण्त्वेन सवर्णग्राहकत्वं नास्ति इति सिद्धान्तात् । एतेन "अष्टन आ विभक्तौ" इत्यादिकं व्याख्यातम् । "अप्रत्ययः" इति पर्युदासाच्च । दीर्घाणामनण्त्वं च ग्रहणकशास्त्र एव वाक्यापरिसमाप्तिन्यायात् । "उरण्" इत्यादौ तु तेषामप्युपादानम् । तेन कारक इत्यादौ रपरत्वम् । तस्माद्दीर्घाणां ग्राहकत्वं नास्ति ग्राह्यत्वं त्वस्त्येवेति फलितार्थः । अप्रत्यय इत्युदितो न विशेषणम् । "कुहोश्चुः" । चकार, जगाद । अत एव "भाव्यमानोऽण् सवर्णान्न गृह्णाति" इत्याहुः । तुक्नुडादयस्तु नोदितः, "प्रतिज्ञानुनासिक्याः पाणिनीयाः" इत्यभ्युपगमात् । अप्रत्ययः किम् । विधीयमानानां प्रत्ययादेशागमानां ग्राहकत्वं मा भूत् । तेन "अत इञ्", "इदम इश्", "भुवो वुक्" इत्यादौ न दीर्घादि । न च इञादीनां अनण्त्वादेव न ग्राहकत्वमिति वाच्यम् । उपदेश इत्यनुवृत्त्या सूत्रान्तरगतानामेव हलामित्संज्ञाप्रवृत्तौ इकारादीनामेव विधेयत्वपर्यवसानात् ।

स्यादेतत् । "अकः सवर्णे दीर्घः" इत्यत्राकारोऽष्टादशानां ग्राहकोऽस्तु अण्त्वात् । अस्तु च इकारादीनामपि "आ-

दिरन्त्येन–" इत्युक्तेः । ईकारादयो दीर्घास्तु कथं ग्राह्याः । तद्वाचकस्य इकारादेः सूत्रेऽनुपादानात् । अकृशब्देन तदुपस्थितिरिति चेत्, तर्हि वाक्यार्थे तेऽनुयन्तु । पदार्थसंसर्गस्य वाक्यार्थत्वात् । न तु तेऽपि स्वार्थोपस्थापकाः । अनुच्चारितत्वात् । अत एव 'ऋचं वेत्ति' इत्यादौ शब्दविशेषं वेत्ति इत्येवार्थो न तु 'तदर्थं वेत्ति' इति । तथा च वार्त्तिकम्—

"तत्र प्रत्याहारग्रहणे सवर्णाग्रहणमनुपदेशात्", "ह्रस्वसंप्रत्ययादिति चेदुच्चार्यमाणमंप्रत्यायकत्वाच्छब्दस्यावचनम्" इति।

शब्दस्याप्रतीयमानस्यावचनम् अर्थाप्रतिपादकत्वमित्यर्थः।

अत्राहुः–प्रत्याहारग्रहणे सर्वत्र तद्वाच्यवाच्ये निरूढलक्षणा, "दीर्घाज्जसि च" इति ज्ञापकात् । तद्धि "प्रथमयोःपूर्वसवर्णदीर्घस्य निषेधः । न चाकृशब्दवाच्यो दीर्घो ऽस्ति । तथा च निषेधस्य निर्विषयत्वापात्तिः । आकारस्य सत्त्वेऽपि तत्र "नादिचि" इत्येव सिद्धेः । "प्वादीनाम्" इत्यादिनिर्देशाश्चेह लिङ्गमिति ।

अत्रेत्थं प्रत्यवतिष्ठन्ते–'ऋचं वेत्ति' इत्यत्र अर्थत्वेनार्थस्य कर्मतया वेदनान्वय आपाद्यते अग्नित्वादिना वा ? । नाद्यः । तादृशबोधेऽर्थपदोत्तरद्वितीयाज्ञानस्य हेतुत्वात् । नान्त्यः । तत्राप्यग्निमिति धियो हेतुत्वात् । न च यत्र कैयटोक्तरीत्या ऋक्शब्देन प्रकरणादिवशात् 'अग्निमीळे' इत्यादिरूपा ऋक् प्रतीयते तत्र 'अर्थं वेत्ति' इतिबोध आपाद्यत इति वाच्यम् । अर्थत्वविशिष्टवाचकस्य तदुत्तरद्वितीयायाश्चाज्ञानात् । ऋक्शब्दोत्तरं द्वितीयायास्त्वानुपूर्वीविशेषावच्छिन्नाया ऋच एव कर्मताबोधकत्वात् । अर्थस्य ऋक्शब्दार्थत्वाभावात् । न च इडनादिकर्मकबोध आपाद्यः । तदुत्तरकर्मविभक्तिज्ञानाविरहात् । न च 'अग्निमीळे'

इत्याद्यृगर्थस्य कर्मतासंसर्गेण वेदनान्वयस्तथा 'अग्निमीळे वेत्ति' इत्यादिजन्य इवेति वाच्यम्। ऋचम् इत्यनेन सह वेदनस्य जनितान्वयबोधतया निराकाङ्क्षत्वात्। एतेनाग्निकर्मकवेदनबोधापत्तिरपि निरस्ता। उच्चारितत्वस्य तु शाब्दबोधकारणतावच्छेदके न निवेशः। पुस्तकदर्शनादिना शब्दस्मरणादपि तदुत्पत्तेः। शब्दोपस्थितशब्दस्य नार्थबोधकत्वम्, लिप्याद्युपस्थितस्य त्वस्त्येवेति वैषम्ये च मानाभावात्। एतेन देवदत्तपदस्य 'घटम्' इति द्वितीयैकवचनान्तपदे गृहीतसङ्केतस्य 'देवदत्तं वेत्ति' इति वाक्यात् घटकर्मकवेदनबोधापत्तिरपि निरस्ता। घटमिति पदकर्मकवेदनान्वयबोधेन निराकाङ्क्षत्वात्। अगादिसंज्ञानां षष्ठ्यादिविशिष्टे इकारादौ सङ्केतज्ञानाभावाच्च।

वार्त्तिकस्य त्वयमभिप्रायः—"अकः सवर्णे—" इति वाक्यात् दीर्घोद्देश्यत्वरूपं स्थानित्वम् आक्षरसमाम्नायिकानामिकारादीनामेव स्यात् न तु दीर्घाणाम्। इकारोपस्थापके अक्पदे स्थानित्वबोधकषष्ठ्याः सत्त्वेऽपि दीर्घोपस्थापकात् इकारादुत्तरं तदभावात्, अतः श्रीशाद्यसिद्धिरिति। अनुच्चारितानामर्थोपस्थापकतैव नास्तीत्यर्थ उक्तदोषात्। वार्त्तिकपदं त्वेवं व्याख्येयम्—प्रत्याहारे, उच्चारिते सति इति शेषः, सवर्णानामग्रहणमन्वयबोधराहित्यं प्राप्नोति अनुपदेशात्संज्ञिष्वनुच्चारणात्। एवं च मध्यगत्वाभावात् आद्यन्तरूपया संज्ञया सह तेषामसति सङ्केतपरिच्छेदे उक्तप्रतिज्ञासिद्धिः। ह्रस्वसंप्रत्ययात्—ह्रस्वैरुपस्थापनात्। उच्चार्यमाणसंप्रत्ययात्—उच्चार्यमाणस्य तत्तद्बोधानुकूलयोग्याविभक्त्यन्तत्वादिना ज्ञातस्य सम्यगुद्देश्यविधेयभावविवेकेन प्रत्यायकत्वात् अन्वयबोधकत्वात् शब्दस्यावचनम्। इष्टान्वयबोधाजनकत्वमिति। "ऋक् इत्युक्ते संपाठमात्रं

गम्यते" इति भाष्यमपि अध्ययनादिकर्मत्वादिविधेयोद्देश्यतयेति शेषेण शब्दपरतयैव नेयम्। "ऋक्छब्देन प्रकरणादिवशात् विशिष्टसंनिवेशा ऋक् प्रतीयमानाऽपि स्वार्थं न प्रत्याययति" इति कैयटोऽप्युक्तरीत्यैव व्याख्येय इति। 'उच्चार्यमाणैरेव प्रत्यायकैर्भवितव्यमिति नास्ति नियमः। बुद्ध्युपारूढास्तु प्रत्यायकाः। अस्ति च मध्यवर्त्तिनां बुद्धावारोहः। ततश्च संज्ञित्वेन प्रत्याय्यमानस्यापि प्रत्यायकत्वं भविष्यति। अत्र च ज्ञापकं "दीर्घाज्जसि च" इति प्रतिषेध' इत्यादिपदमञ्जरीग्रन्थस्याप्यत्र स्वारस्यम्।

अत्रायं निष्कर्षः। शब्दोपस्थितस्य शब्दस्य नार्थबोधकत्वम्। अनुकरणस्थले शब्दस्योपस्थितस्याप्यर्थानवबोधकत्वात्। एतच्च "स्वं रूपम्–" इति सूत्रे कैयटहरदत्तादिग्रन्थेष्वेव स्पष्टम्। वार्त्तिकस्य तु नोक्तं व्याख्यानम्। अक इत्यनयैव षष्ठ्या तेषामपि स्थानित्वबोधनसम्भवात्। अत एव "द्विरेफमानय", "हिरण्यपूर्वं कशिपुं प्रचक्षते" इत्यादिस्थले भ्रमरादिवृत्तिकर्मत्वबोधः सङ्गच्छते। अक इति हि अइउऋऌइत्येषां संज्ञा। अनुकार्यानुकरणयोश्च भेद एवात्र विवक्षितः, अन्यथा विभक्त्यनुपपत्तेः। तथा च अकारोपस्थाप्यस्य अकारस्य तदुपस्थाप्यानां दीर्घाणां यथा स्थानित्वं तथाऽक्पदोपस्थाप्यस्य इकारादेस्तदुपस्थाप्यानां दीर्घाणां च तत्। अकारादितो वैलक्षण्याभावात्। तस्मादनुच्चारितस्य कथं ग्राहकत्वमित्येव पूर्वपक्षाभिप्रायः।

सिद्धान्तस्तु—अन्यत्र तथात्वेऽपि प्रकृते शब्दोपस्थितशब्दस्यापि ग्राहकत्वम् अन्यथा ग्रहणकशास्त्रं व्यर्थं स्यात्। "अस्य च्वौ" "एरनेकाचः" इत्यादावपि अकारस्योच्चार्यमाणस्य ग्राहकात् अकाराद् भिन्नत्वात्। एतेन दीर्घस्य सम्भवेऽपि "नादिचि"

इत्यस्य वैयर्थ्यम् इति निरस्तम् । अक इत्यत्राकारेणापि दीर्घ ग्रहणस्य युक्तिसाम्यात् अनुपपत्त्या "दीर्घाज्जसि च" इत्यस्य ज्ञापकतायाः सुस्थत्वात् । अत एव यत्र स्वरूपेणोच्चार्यन्ते "अस्यच्वौ" इत्यादौ तत्रैवैषां ग्राहकत्वं स्यात् इत्यपि कैयटेन पूर्वपक्ष उक्तः । अक इत्यादावप्यकारस्य सवर्णग्राहकत्वं न स्यात् इत्यापत्तेरपि तदाभिमतत्वात् ।

तदयमर्थः—गवित्ययमाहेत्यादावनुकरणस्य तन्मात्रबोधकत्वम् । अणां तु अनुकार्यवृत्तिधर्मावच्छिन्नयावद्व्यक्तिपरत्वम् । "अस्य" इत्यादिषु अकारस्यैवानुकार्यत्वात् तद्भेदानामेव ग्रहणम् । अक इत्यादौ तु "आदिरन्त्येन" इति वचनात् यावतामनुकार्यत्वं तद्भेदानामेव ग्रहणम् । "आदिरन्त्येन" इत्यनेन अकारादिष्विव "अणुदित्" इत्यनेन तद्भेदेष्वपि सङ्केतितत्वात् । न च तत्र प्रत्येकमकारादीनामपि सवर्णग्राहकत्वस्य बोध्यतया तत एव सिद्धौ अगित्यादीनां तद्विलक्षण ग्राहकत्वं न बोध्यते गौरवादिति वाच्यम् । "दीर्घाज्जसि च" इत्यादीनां तद्वाच्यवाच्ये निरूढलक्षणाकल्पकत्वमपेक्ष्य अगादिशब्दानाम् उक्तपरत्वकल्पकत्वस्यैव युक्तत्वात् । न च अणित्यत्र अण् अक् अङ् अच् अट् इत्यादिबोधाभावात् कथं तेषां यावद्व्यक्तिपरत्वबोध इति वाच्यम्। तदाऽपि तदुपस्थितेरावश्यकत्वात् शब्दव्यपदेशादेव झल्त्वमप्यायातीति भवदभ्युपगमात् ।

न च प्रत्याहारग्रहणाभावे "अस्य च्वौ" इत्यादौ ग्राहकत्वानुपपत्तिः। अणपदे तन्त्रावृत्त्येकशेषाणामन्यतमाङ्गीकारात्। अपि च भवन्मते वर्णग्रहणे ग्रहणकशास्त्रेण ग्राहकत्वम्, प्रत्याहारस्थलेतु उक्तज्ञापकलभ्यनिरूढलक्षणयेति पर्यवसितम् ।

तथा च अक इत्यादीनां ग्राहकत्वे ग्रहणकशास्त्रस्यानुपयोगात् अक्पदार्थबोधे च "आदिरन्त्येन" इत्यस्यैवापेक्षितत्वात्, ग्रहणकसूत्रेऽपि अणूपदेन दीर्घाणामुपस्थितौ बाधकाभावात् तेषामपि सवर्णग्राहकत्वापत्त्या 'दीर्घाणामनणुत्वेन सवर्णग्राहकत्वं नास्ति' इति सिद्धान्तभङ्गप्रसङ्गः। तथा च कैयटः—'अत्र हि सूत्रे प्रत्याहारसंनिविष्टा एव गृह्यन्ते। स्वात्मनि क्रियाविरोधात् अनिष्पादाद्, ग्रहणकशास्त्रान्तराभावाच्च अत्र सूत्रे अकारादिभिराकारादीनां ग्रहणासंभवः। अन्येषु तु प्रदेशेषु अनेन सूत्रेण अकारादिभिराकारादयो गृह्यमाणाः कार्याणि लभन्ते" इति। कौस्तुभेऽप्युक्तम्—'पदार्थससर्गो हि वाक्यार्थः। तद्बोधश्च पदार्थबोधोत्तरभावी। ततश्चाणूसूत्रेण ये उपस्थितास्तेषां सवर्णग्राहकत्वं सूत्रार्थः। अणूशब्दश्चाक्षरसमाम्नायपठितेषु सङ्केतित इति तानेवात्रोपस्थापयति' इत्यादि।

किं चैवं ग्रहणकसूत्रस्यैव वैयर्थ्यम्। उभयसाधारण्येन ग्राहकत्वस्य "दीर्घाद्—" इत्यादिनैव ज्ञापयितुं शक्यत्वात्। तस्मादुक्तरीतिरेव युक्ता। अत एव कैयटेन स्पष्टमुक्तम्—'तत्राकार उच्चारित "आदिरन्त्येन सहेता" इति मध्यपतिताना स्वरूपस्य च ग्राहकः, अस्माच्च वचनात्सवर्णानामपीत्यर्थ' इति। न च तत्प्रत्याहाराद्यक्षरमात्रपरम्। अकारस्योपलक्षणत्वात् युक्तेश्चोक्तत्वात् इति दिक्।

वार्त्तिककारस्त्वाह—

"सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणाद्" इति।

अकारादिनिर्देशानां जातिपरत्वात् तदवच्छिन्नयावद्व्यक्तिलाभात् अण्ग्रहणं न कार्यम्। ह्रस्वत्वं तु विधेयस्थले तद्विशेषणतया विवक्षितमिति नातिप्रसङ्गः। अनुवाद्यस्थले तु तदविवक्षणात्सर्व-

ग्रहणम् । "अष्टन आ" इत्यादौ तु दीर्घोच्चारणसामर्थ्यात् दीर्घव्यक्तिसमवेतमेव सामान्यं गृह्यते। पूर्ववया ब्राह्मणः प्रत्युपस्थेय इत्यत्र विशिष्टव्यक्तिनिष्ठब्राह्मणत्ववत् ।

यद्वा, व्यक्तिरेव शब्दार्थः । जातिस्त्वशब्दार्थोऽपि अभेदप्रत्ययहेतुरस्ति इति सर्वव्यक्तीनामभेदेनाश्रयणात् एकव्यक्तिनिर्देशे सर्वव्यक्तिग्रहणसिद्धिः। आकृतिग्रहणात् इत्यस्य तु अयमर्थः- आकृतेरेकाकारप्रत्ययनिमित्तत्वेन प्रतिपत्तिरिति । न चात्र ऋकारेण ऌकारग्रहणं न स्यात् । एकजात्यनाक्रान्तत्वादिति वाच्यम् । अत्राण्पदस्थाने ऋकारप्रक्षेपेण तत्सिद्धेः ।

# तपरस्तत्कालस्य ७०।

ननु तच्छब्दस्तपरपरः । तस्य कालानात्मकत्वात्तपरः कालो यस्येति सामानाधिकरण्यमनुपपन्नम् । तथा चोक्तम्—

आदित्यग्रहनक्षत्रपरिस्पन्दमथापरे ।
भिन्नमावृत्तिभेदेन कालं कालविदो विदुः ॥

मैवम्। तत्काल इव कालो यस्येत्युत्तरपदलोपाभ्युपगमात् । तःपरो यस्मात्स तात्परो वा स्वसमकालस्य उच्चार्यतावच्छेदकधर्मावच्छिन्नस्यैव ग्राहकः। तेन अत् इत् इत्यादौ ह्रस्वत्वावच्छिन्नषड्व्यक्तीनामेव ग्रहणम् । ऋदित्यादौ ऋऌइत्युभयसम्बन्धिनां षण्णां मिलित्वा द्वादशानाम् । तात्परस्योदाहरणम् । "वृद्धिरादैच्" इति । तेन त्रिमात्रादीनां एचां गुणवृद्धिसंज्ञाविरहात् गङ्गोदकम्, खट्वैलकम् इत्यादौ न त्रिमात्राद्यादेश इति एओङित्यादिसूत्रयोः प्रपञ्चितम् । कार्यकालपक्षे भाव्यमानत्वादेव सवर्णग्रहणवारणे तु वृद्धिसूत्रे तपरकरणं स्पष्टार्थमित्यपि वृद्धिसूत्र एव विचारितम् । गुणानां भेदकत्वपक्षे तु तत्र

तपरत्वम् आकारार्थमपि गुणान्तरयुक्तस्य तस्य ग्रहणस्य फलत्वात्।

इदं च सूत्रं विध्यर्थं नियमार्थं चेति पक्षद्वयमाकरसिद्धम्। तथा हि—अणित्यस्यानुवृत्त्या आकारादावणिभन्ने तत्कालानां सवर्णानां भिन्नगुणत्वेऽपि अनेन ग्रहणं विधीयते ।

नन्वेवमस्यानणसु चरितार्थत्वात् "अतो भिस ऐस्"इत्यादावणग्रहणे अकारेण दीर्घादीनामपि पूर्वसूत्रेण ग्रहणं स्यादिति चेन्न। तस्यापि "अस्य च्वौ"इत्यादौ ह्रस्वे चरितार्थतया विप्रतिषेधे परत्वात् अस्यैव प्रवृत्तेः। अन्यत्र संज्ञाना बाध्यबाधकभावविरहेऽपि अत्र फलभेदेन विरोधात्—सवर्णसंग्राहकत्वे ह्यष्टादशानां प्रसङ्गोऽन्यथा तु षण्णामिति । न च तपरत्वसामर्थ्यादेव न ग्रहणम्। "ऋत इद्धातोः" इत्यादौ मुखसुखार्थत्वस्यापि दर्शनात् ।

एतेनोक्तसंख्यानुपादानात् विरोधाभावेऽपि तपरत्वसामर्थ्यात् बाध्यबाधकभावानुपादानमित्यपास्तम् ।

अस्येति निर्देशेऽपि लाघवाच्च फलतो विरोधस्यापि बाधकत्वे तन्त्रतया शाब्दसंख्यानुपादानस्याकिंचित्करत्वात् ।

यदपि तकारविशिष्टेयं संज्ञा न त्वणमात्रम्। तत्कालस्येति तच्छब्दस्तु विशेष्यमात्रं परामृशति न तु विशिष्टम् । तदुच्चारणकालसदृशे लक्षणा तु प्राचां मतेऽप्यस्त्येव। सर्वनामपदेऽपि "एतस्यैव रेवतीषु वारवन्तीयम्", "तत्त्वमसि" इत्यादौ लक्षणायाः पूर्वोत्तरतन्त्रयोः स्थितत्वात्। तथा च टिघुभाद्यन्तर्गताणवत् इहैकदेशत्वेनानर्थक्याद्ग्राहकताप्रसङ्ग एव नास्ति। विभक्त्युत्पत्तिरप्येवं संगच्छते। वृद्धिसूत्रे 'अत्राकारः प्रयोगस्थैराकारैरर्थवान्' इति हरदत्तग्रन्थस्तु प्राचां रीत्या नेतव्य इति।

तदपि चिन्त्यम् । तकारस्योपलक्षणतया तद्विशिष्टस्य संज्ञात्वाभावात् ।

न च विशेषणत्वस्य मुख्यत्वात्तद्गुणाविज्ञानात् विशिष्टे तत् । अत्‌इत्यस्य अइत्यस्य च संज्ञात्वे गौरवात् । अत्, इत्- इत्यानुपूर्व्याः शक्ततावच्छेदकत्वे गौरवाच्च ।

एतेन पञ्चमीसमासानाश्रयणेऽपि न निर्वाहः । अत एवा-स्य नियमार्थत्वं विप्रतिषेधश्चेति भाष्योक्तं सङ्गच्छते । विशिष्ट-स्य संज्ञात्वे तस्यानणुत्वात्पूर्वेण प्राप्त्यभावात्, समान-विषयकत्वाभावाच्चोभयमप्यनुपपन्नं स्यात् । विभक्तिस्तु अक इत्यादिवत् । तत्रानुबन्धनिर्मुक्तस्यैव वाचकतायास्त्वयाऽपि स्वीकारात् ।

"दिव औत्" इत्यत्र विधीयमाने तपरकरणं स्वरार्थम् । "द्यौः पितः पृथिवि मातरध्रुक्" । उदात्तप्रयोगस्तु द्योशब्दस्य । "पृथिवी उत द्यौः" इति । "औत्" "अच्च घेः" इत्यादौ तु मु-खसुखार्थम् । व्याख्यानात् । "समिधाने अग्नौ" इत्यादौ ति-त्स्वराभावाद्' इति वृत्त्यादयः ।

यत्तु तैरुक्तम्—"इटोऽत्" इत्यत्र "न विभक्तौ" इति न निषेधः । "इदमस्थमुः" इति उकारानुबन्धनादनित्यत्वात्' इति ।

तदभ्युपगम्यवादमात्रम् । तित्स्वरापत्तेः । "भक्षीय तव राधसः" इत्यन्तोदात्तप्रयोगात् । तस्मान्मुखसुखार्थमेव' इति दीक्षिताः ।

स्यादेतत्—

अभ्यासार्थे द्रुता वृत्तिः प्रयोगार्थे तु मध्यमा ।
शिष्याणामुपदेशार्थे वृत्तिरिष्टा विलम्बिता ॥ इति

तिस्रो वृत्तयः । ताश्च क्रमेण तृतीयभागाधिकाः—द्रुतं

श्लोकमृचं चोच्चारयतो यस्या नाडिकाया नव पलानि स्रवन्ति तस्या एव मध्यमायां द्वादश, विलम्बितायां तु षोडशेति । तथा च प्रकृते विलम्बितायां तपरकरणे द्रुतमध्ययोः, मध्यमायां तपरकरणे द्रुतविलम्बितयोः, द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कार्यं स्यात्, कालभेदात् ।

अत्र वार्त्तिकम्—

"सिद्धन्त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते" इति ।

अस्यार्थः—व्यञ्जको ध्वनिर्मात्राकालावच्छिन्न एव वर्णमभिव्यञ्जयति, स्वरूपेण तु तदुत्तरकालमप्यनुवर्त्तते ।

यद्वा ह्रस्वव्यञ्जको ध्वनिर्वृत्तित्रयेऽपि मात्राकाल एव । किं तु मध्यमविलम्बितयोः पूर्वध्वन्यनुनिष्पादादिना न्यूनकालेन ध्वन्यन्तरेण पूर्वाभिव्यक्तवर्णस्यैव व्यक्त्यन्तरं जन्यते । अभिव्यञ्जकभेदेऽपि अभिव्यङ्ग्यभेदाभावात् । एवं दीर्घप्लुतव्यञ्जकयोरपि वृत्तित्रयेऽपि यथाक्रमं द्विमात्रत्रिमात्रत्वे । तदनुनिष्पादी तु ततो न्यून इति न दोषः । ह्रस्वदीर्घप्लुतास्तु स्वत एव भिन्नाः । वर्णोत्पत्तिपक्षे तु तदनुनिष्पादी दूरादपि ग्राह्यः कश्चित् ध्वनिरावश्यकः । तस्यैव कालभेदाद् वृत्तित्रैविध्यं बोध्यम् ।

तथा च भाष्यम्—

"ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु दृश्यते ।
अल्पो महांश्च केषां चिदुभयं तत्स्वभावतः" ॥

शब्दो द्विधा व्यञ्जकव्यङ्ग्यभेदात् । शब्दानां व्यङ्ग्यानां व्यञ्जकत्वेन सम्बन्धी यो ध्वनिः स एव महानल्पश्च लक्ष्यते । व्यङ्ग्यस्त्वभिन्नकाल एव । तदुभयम्, व्यङ्ग्यव्यञ्जकत्वरूपम् । केषां

चित्, ताल्वादिव्यापारजन्यानामेव, न तु भेर्यादिजन्यानामपि। स्वभावतः, कारणवैलक्षण्यात्। 'व्यक्तानामुभयं गृह्यते। अव्यक्ताना तु ध्वनिरेव' इति कैयटः।

# आदिरन्त्येन सहेता ७१।

आद्यन्तावयवद्वारा समुदायानुकरणेन सिद्धे अन्त्यव्यावृत्त्यर्थमिदं सूत्रमिति दीक्षिताः।

अन्त्येन इता सहोच्चार्यमाण आदिर्वर्णो वर्णसमुदायो वा मध्यगानां स्वस्य च संज्ञा स्यात्। वर्णो यथा—अल् इत्यादिः। संघातो यथा—कृञ् इत्यादिः। कृभ्वस्तीनां ग्रहणात्। 'आद्यन्तौ मध्यापेक्षाविति मध्यानामेव संज्ञित्वम्। "स्वं रूपम्" इत्यनुवर्त्तनात् स्वरूपस्य च। सहग्रहणाच्चाद्यन्तौ समुदितौ संज्ञेति "इको यणाचि" इति समुदायादेव विभक्तिर्नादिमात्रात्। स्वं रूपं चादेरेव गृह्यते नान्त्यस्य। तस्याप्राधान्यात्। अतो दध्यत्र इत्यत्र केवल एव यकार आदेशो न तु णकारसहितः, इति कैयटादयः।

अत्र कौस्तुभकृतः—"प्रत्याहारेष्वाद्या वाचकाः, तत्र ग्रहणकशास्त्रं सावकाशम्" इति ग्रहणकशास्त्रीयभाष्यपर्यालोचनया वाचकत्वं तावदाद्यवर्णविश्रान्तम्। अन्त्यस्तु द्योतकः। सहग्रहणात्तु विशिष्टाद्विभक्तिरिति द्योतकान्तराद्वैषम्यम्। तथा च इत्संज्ञयाऽपहृतस्यान्त्यस्य कथं संज्ञित्वप्रसक्तिः। अन्यथा अजादिसंज्ञानामपि णकारादावतिप्रसङ्गात्। विशिष्टस्य संज्ञात्वेऽपि यणूशब्दापादानस्यानुपपन्नत्वात्। ककाराविशिष्टस्यैव स्थानित्वात् इकारस्य स्थानित्वासम्भवाद्' इति।

अत्रेदं वक्तव्यम्। समुदायस्यैव संज्ञात्वमुपपादितमेव ग्रह-

णकसूत्रे । इत्संज्ञासत्त्वेऽप्यन्त्यस्य संज्ञाप्रवृत्तेः पूर्वं लोपाभावात् स्थानित्वप्रसक्तिः । मध्यगतानुबन्धानां तु पूर्वमेव लोप इति वैषम्यम् ।

वस्तुतस्तु

"आचारादप्रधानत्वाल्लोपश्च बलवत्तरः" ।

इति वार्त्तिके आचारादित्येव संमतः पक्षः । तथा चानुबन्धान्यत्वे सति तत्समुदायघटकवर्णत्वम् अजादिपदशक्यतावच्छेदकमिति प्रत्याहाराह्निकान्ते व्याख्यातम् । अन्त्येनेति किम् । 'सुट्प्रत्याहारस्तृतीयैकवचनावयवेन टकारेण मा भूत् । "टाङसिङसाम्" इति निर्देशेन तस्य पूर्वान्तत्वाभावनिश्चयाद्' इति वृत्तिकृतः ।

'न च तदन्तं पूर्वसमुदायमादाय दोषः । अन्त्यत्वप्रयुक्ता यस्येत्संज्ञा तस्यैवात्र ग्रहणात् । तस्य च "चुटू" इति प्रत्यादित्वेनैव इत्संज्ञत्वाद्' इति हरदत्तः ।

रप्रत्याहारस्तु लकाराकारस्यानुनासिकत्वप्रतिज्ञानसामर्थ्यात् ।

दीक्षितास्तु–'औटष्टित्वस्यानन्यार्थतया प्रत्यासत्तिन्यायाच्च तेनैव प्रत्याहारादन्त्यपदं मास्तु । तस्मात् मध्यमेन इता सहित आदिस्तदुत्तरेषाम्, अन्त्येन इता सहितो मध्यमः पूर्वेषां संज्ञा मा भूदित्यन्त्यादिग्रहणम् । इतेति किम् । उक्तरीत्या रप्रत्याहारो यथा स्याद्'इत्याहुः ।

नव्यास्तु–'सह आसमन्तादेति सहेता मध्यमो वर्णः आद्यन्तपदसमभिव्याहाराद् । एतेस्तृचि रूपम् । "एत्येधत्यूठ्सु"इति वृद्धिवारणाय आकारप्रश्लेषः । "ओमाङोः" इति पररूपम् । अन्त्येनादिः अण् इत्यादिसंज्ञको भवतीत्यर्थः । स्वंरूपमि-

त्यनुवृत्तिः। वृद्ध्यादिवत्सामानाधिकरण्यात्संज्ञात्वप्रत्ययः। एवं च "हलन्त्यम्" इत्यत्रान्योन्याश्रयशङ्काऽपि न' इत्याहुः।

# येन विधिस्तदन्तस्य ७२।

विशेषणं तदन्तस्य स्वस्य च संज्ञा स्यात्। "एरच्"। चयः, जयः। "ओरावश्यके"। अवश्यलाव्यम्। विधिरिति कर्मणि किः। येनेति करणे तृतीया। कृद्योगषष्ठ्या कर्त्तरि तस्या बाधितत्वात्। करणस्य च परतन्त्रत्वनियमात् तृतीयया पारतन्त्र्यं लक्ष्यते। न च सुब्विभक्तौ न लक्षणा, व्यत्ययानुशासनवैयर्थ्यात् इति वाच्यम्। "प्रहासे च" इत्यादिव्यत्ययानुशासनात् तिङ्क्ष्वपि तदनापत्तौ 'रथो गच्छति' इत्यादौ तिङो व्यापारलक्षणानुपपत्तेः।

अत्र नैयायिकाः—विभक्त्यन्तार्थे विभक्तेर्न लक्षणा, तेन नोक्तविरोधः। अत एव 'अर्थेनैव विशेषो हि, इत्यत्राऽभेदे तृतीया' इति मणिकृतः।

"प्रयाजशेषेण हवींष्यभिघारयति"इत्यत्र'प्रयाजशेषं हविःषु क्षारयति' इति मीमांसकोक्तिस्तु व्यत्ययस्यानुशासनिकत्वात् नानुपपन्ना।

प्रकृतमनुसरामः। कर्त्तृव्यापारव्याप्यत्वरूपं पारतन्त्र्यमिकारादीनां न भवति इति अप्राधान्यं विशेषणत्वरूपं गृह्यते। तथा च विशेषणत्वेनोपात्तं स्वान्तस्य विशेष्यस्य संज्ञा विशेषणत्वस्य च विशेष्यत्वनिरूपितत्वात् विशेष्यसन्निधावेव प्रवर्त्तते। स च क्वचित्साक्षात्, यथा—"ईदूदेद्"इत्यत्र द्विवचनस्य, क्वचिदधिकारात्, यथा—"एरच्"इत्यत्र धातोः, क्वचिदाक्षेपात्, यथा—"इको झल्"

इत्यत्र सना धातोः । "इको यणचि" इत्यादौ तु विशेष्यस्य कथमप्यसन्निधानात् तदन्तविध्यभावः ।

अत्र वार्त्तिकम् ।

"येन विधिस्तदन्तस्य चेद्ग्रहणोपाधीनां तदन्तोपाधिताप्रसङ्गः" ।

ग्रहणमिति कर्मणि ल्युट् । गृह्यमाणविशेषणत्वेन सम्मतानां ओष्ठ्यपूर्वत्वादीनामित्यर्थः । तथा हि–ॠकारोऽत्र ॠकारान्तस्य धातोर्विशेषणमिति स्वयं विशेषणानाकाङ्क्षत्वात् पूर्वमेव विशेष्यान्वयं प्रतिपद्यते–ॠदन्तस्य धातोरिति । ततश्च ॠदन्तत्वविशिष्टे धातौ 'विशिष्टे वैशिष्ट्यम्' इति रीत्या ओष्ठ्यपूर्वत्वं विशेषणं स्यात् ।

यद्वा, 'एकत्र द्वयम्' इतिरीत्या ॠदन्तत्वम् ओष्ठ्यपूर्वत्वं च द्वयमपि धातोर्विशेषणं स्यात् । तथा च संकीर्णम् इत्यादावतिव्याप्तिः । उपसर्गमकारस्य धातोः पूर्वं सत्त्वात् । न ह्योष्ठ्यस्य धात्ववयवत्वमाश्रयितुं शक्यम्, अवयवावयवित्वयोरेकानिरूपितयोरेकस्य विरोधात् । एवं 'पूर्तम्' इत्यादावव्याप्तिः । ॠकारान्तत्वेऽपि ओष्ठ्यपूर्वत्वाभावात् ।

एवम्–"उतश्च प्रत्ययात्" इत्यत्रासंयोगपूर्वत्वमुकारस्य विशेषणं न स्यात् किं तु अङ्गप्रत्ययान्यतरस्य । तत्र आद्ये 'क्षणु' इत्यादावव्याप्तिः । द्वितीये तक्ष्णुहि इत्यादिसिद्धावपि अश्नुहि इत्यादावतिव्याप्तिरिति ।

अत्र सिद्धान्तवार्त्तिकम्–

"सिद्धं तु विशेषणविशेष्ययोर्यथेष्टत्वाद्" इति ।

अयमर्थः–वृद्ध्यादिसंज्ञा गुणप्रधानभावानपेक्षा एव यथोद्देशं प्रवर्त्तन्ते । इयं तु गुणप्रधानभावमापेक्षत्वात्कार्यकाला, विधि-

वाक्यव्यतिरेकेण विशेषणविशेष्यभावानवगमात् । अतो विशेषणसम्बन्धवेलायां गुणभावानवगमात्प्रथमं 'विशेषणसबन्धमनुभूय ऋकारादिस्तदन्तस्य संज्ञा भवति । तथा च 'विशिष्टस्य वैशिष्ट्यम्' इति न्यायेन ओष्ठ्यपूर्वकत्वविशिष्टो य ऋकारस्तदन्तस्य धातोरिति फलितम् । एवमन्यत्रापीति ।

अत्र सिद्धान्ताभिमतविशेषणविशेष्यभावव्यवस्थापनार्थं प्रवृत्तानि वार्त्तिकानि व्याख्यायन्ते ।

"समासप्रत्ययविधौ प्रतिषेधः" "उगिद्वर्णग्रहणवर्जम्" ।

समासविधौ प्रत्ययविधौ च तदन्तविधिप्रतिषेधः । श्रितादयो विशेष्यत्वेन सुबादयस्तु विशेषणत्वेनाश्रयणीयाः । तथा च श्रिताद्यन्तैः सुबन्तैः सहेति नार्थः किं तु सुबन्तैः श्रितादिभिरित्येव । विशेषणत्वाभावात्तदन्तविधिर्नेति फलितोऽर्थः । तेन "द्वितीयाश्रित—"इति समासः कष्टं परमश्रित इत्यत्र न भवति किं तु कष्टश्रित इत्यत्रैव । "नडादिभ्यः फक्"नाडायन इत्यत्रैव । प्रातिपदिकेभ्यो नडादिभ्य इत्यर्थः । नडादीनामेव विशेष्यत्वं न तु नडाद्यन्तेभ्यः प्रातिपदिकेभ्यः इति तदर्थः, नडादीनां विशेषणत्वानाश्रयणात् । नेह सूत्रनडस्यापत्यं सौत्रनाडिः । "अत इञ्" । अनुशतिकादित्वात् उभयपदवृद्धिः । न च "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति" इति परिभाषयैव सिद्धिः, "पूर्वादिनिः" इत्यत एव सिद्धे "सपूर्वाच्च" इत्यस्य तज्ज्ञापकत्वात् इति वाच्यम् । तस्याः समासप्रत्ययविधिमात्रविषयकत्वमित्येतस्य वार्त्तिकेन ज्ञाप्यत्वात् । अत एव "गोस्त्रियोः" इति सूत्रे गोऽन्तं यत्प्रातिपदिकमिति व्याचक्षते ।

एतेन 'प्रत्ययविधौ ज्ञापितत्वात् उक्तपरिभाषायाः "व्यपदेशिवद्भावोऽप्रातिपदिकेन" इति परिभाषायाश्च प्रत्ययमात्र-

विषयकत्वमिति सीरदेवोक्तिरपास्ता ।

नच "शेषो घ्यसखि" इत्यत्र "ग्रहणवता" इति परिभाषया तदन्तविधिप्रतिषेधाद् अतिसखिशब्दस्य घिसंज्ञापर्युदासो नेति कैयटहरदत्तादिग्रन्थविरोध इति वाच्यम् । तेषां प्रौढिवाद-मात्रत्वात् । तत्र विशेष्यसन्निध्यभावादेव तदन्तविध्यप्रसक्तेः ।

स्यादेतत् । श्रिताद्यन्तैः सुबन्तैरित्यर्थस्य पूर्वपक्षसिद्धत्वे कष्टं परमश्रित इत्यत्र समासस्यैव कथं प्रसक्तिः । श्रितान्तस्य सुबन्तत्वाभावात् । श्रितान्तत्वस्य च विभक्तिपूर्वभागे सुबन्त-त्वस्य च विशिष्टे विश्रामात् । द्वयोः सामानाधिकरण्याभावात् ।

अत्राहुः—परमश्रितेति सम्बुद्ध्यान्तमुदाहरणीयम् । तद्धि प्रत्ययलक्षणेन सुबन्तं श्रितान्तं च स्वरूपेण श्रूयते इति ।

अथ सिद्धान्तेऽपि सुबन्तैः श्रितादिभिरित्यर्थे श्रितादीनां सुबन्तत्वं बाधितम् । तस्य विशिष्टवृत्तित्वात् । न च श्रि-तादीनां तत्प्रकृतिके लक्षणा। उक्तरीत्या सम्बुद्धौ चारितार्थ्या-त् । तथा च कृष्णश्रितम् इत्यादि न स्यात् ।

अत्राहुः—

समासतद्धितविधौ सर्वत्र श्रितादीनां नडादीनां च त-त्प्रकृतिके लक्षणैव । "खट्वा क्षेपे" "नदीभिश्च" इत्यादा-वभेदस्य बाधितत्वात् तत्र पूर्वपदस्य द्वितीयाद्यन्तत्वस्याव-श्यकतया सम्बुद्ध्यन्तत्वानुपपत्तेः । "पूर्वकालैक-" इत्यादौ तत्सम्भवेऽपि "एकविभक्तौ" इत्यादिनिर्देशो न सिद्ध्येत् । तस्मात्सामान्यापेक्षज्ञापकबलेन ऐकरूप्याय सर्वत्र तत्तत्प्रकृतिके लक्षणेति स्थिते इहत्यभाष्यवृत्त्योः कैयटहरदत्तकृतं भङ्क्त्वा-व्याख्यानमनादेयम् ।

यत्तु श्रितादीनां कृदन्तत्वेन "गतिकारकोपपदानाम्-"

इति सुबुत्पत्तेः प्रागेव समास इष्टः, अन्यथा 'काष्ठश्रितेयः' न सिद्ध्येत्। "प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च" ग्रहणात्। अत एव किल प्राचा श्रितादिभिरित्येव व्याख्यातम् नतु सुबन्तैरिति।

तन्न। प्रधानस्त्रीप्रत्यये तदादिनियमाभावात्। "स्त्रीभ्यो ढक्" इति स्त्रीप्रत्ययग्रहणेन कष्टश्रिताशब्दादेव ढगुत्पत्त्या काष्टश्रितेयसिद्धेः। न च कदाचिच्छ्रिताशब्दादप्यापत्तिः। असामर्थ्यात्। "कर्तृकरणे कृता-" इत्यादिवत्कारकतद्विशेषयोः "द्वितीयाश्रित-" इति सूत्रे ऽनुपादानाच्चेति।

अन्ये तु श्रितादिप्रकृतिकसुबन्तेनेति नान्तरीयकतया प्रकृतिर्विशेषणीयेति श्रिताद्यन्तप्रकृतिकेन सुबन्तेनेति, नडादिप्रकृतिकषष्ठ्यन्तादित्यत्र च नडाद्यन्तप्रकृतिकषष्ठ्यन्तादित्यर्थस्यापत्त्या-कष्टं परमश्रितः, सौत्रनाडिः इत्यादावतिप्रसङ्गतादवस्थ्यम्। अतो वार्त्तिककृतो वाचनिकमेव तदन्तविधिवारणमित्याहुः।

अस्यापवादमाह-"उगित् इति"। उगिता वर्णेन च प्रातिपदिकं विशेष्यते। अतस्तत्र प्रत्ययविधावपि तदन्तविधिर्भवत्येवेत्यर्थः। महान्तमतिक्रान्ता अतिमहती। "उगितश्च" इति ङीप्। नच गौरादित्वान्ङीषा सिद्धिः। "अनुपसर्जनात्" इति तत्राधिकृतत्वात्।

अन्ये तु गौरादिषु महद्बृहदित्यनयोः प्रामादिकः पाठः। 'महते सौभगाय' इत्यादौ विभक्तेरुदात्तत्वार्थं "शतुरनुमो नद्यजादी" इति सूत्रे नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानारम्भात् ङीपाऽप्युदात्तसिद्धेरित्याहुः।

वर्णग्रहणे यथा—"अत इञ्"। अदन्तात्प्रातिपदिकादि-

स्यर्थः । दाक्षिः । न च सामर्थ्यात्तदन्तविधिः । अस्यापत्यम् इः कामः इत्यत्र चारितार्थ्यात् । "बाह्वादिभ्यश्च" इत्युत्तरत्र वृद्ध्याद्युदात्तत्वाभ्यां ञित्त्वस्य तथात्वाच्च । न च औपगवादेरेव इञ्स्यात् न तु दाक्षिः इत्यत्र, अकारस्यानर्थकत्वादिति वाच्यम् । वर्णग्रहणेऽर्थवद्ग्रहणपरिभाषाया अप्रवृत्तेः । अत एवैतत्सूत्रशेषे वार्त्तिकम्—

"अलैवानर्थकेन" इति ।

एवं च सङ्घातेनार्थवतैव तदन्तविधिः । तेन स्त्रियौ परमस्त्रियौ इत्यत्रैव "स्त्रियाः" इतीयङ् । न तु शस्त्र्यौ, शस्त्र्य इत्यत्र । तथा "इन्हन्पूषार्यम्णां शौ" "सौ च" इति नियमे हन् शब्देन प्लीहन्शब्दस्याग्रहणात् दीर्घः । पायसं करोति इत्यत्र "संपर्युपेभ्यः—" इति सुडभावः । गर्मुत्स्थातेत्यत्र[1] "उदः स्थास्तम्भोः" इति पूर्वसवर्णाभावः । उदित्यस्य तवर्गेण विशेषणात्, तोरित्यस्य निवृत्तेर्वा । "वा पदान्तस्य" इत्यतः पदग्रहणानुवृत्तावपि पदेन तस्यैव विशेषणात् ।

अथ हन्स्त्रीग्रहणयोरङ्गाधिकारीयत्वात् संशब्दस्य "एङः पदान्ताद्—" इति पदाधिकारीयत्वात्, "उदः स्थास्तम्भोः" इत्यस्याप्युक्तरीत्या तथात्वात् "पदाङ्गाधिकारे तस्य तदुत्तरपदस्य च" इत्यत्र केवलपदाधिकारस्यापि ग्रहणात्, प्लीहन्शब्दे हन् इत्यस्य अङ्गत्वोत्तरपदत्वान्यतराभावात्प्रसक्तिरेव नास्ति, तस्माद् "अलैवानर्थकेन" इति व्यर्थमिति चेन्न ।

"पदाङ्गाधिकारे" इत्यस्यैव भाष्ये प्रत्याख्यानात् ।

---

१ गर्मुत्सुवर्णतृणयोरितिकोशात् गर्मुच्छब्दस्तृणवाची ।

"अलैवानर्थकेन" इति वचनेनार्थवता तदन्तविधेः सूत्रेणैव सम्भवात् । तदारम्भे तु परमश्वासावतिमहांश्चेति परमातिमहान् इति न स्यात् । अतिमहच्छब्दस्य महच्छब्दोत्तरपदत्वेऽप्यनङ्गत्वात् । विशिष्टस्य महदुत्तरपदत्वाभावात् । उत्तरपदेति समासान्त्यावयवस्यैव ग्रहणात् । "सान्तमहतः" इति दीर्घस्य, "उगिदचाम्" इति नुमश्च दुर्लभत्वात् । सूत्रेण तु तदन्तविधिना तत्सिद्धेः । "ग्रहणवता–" इति निषेधस्य समासप्रत्ययविधिमात्रविषयकत्वात् ।

अत्र वार्त्तिकम्—

"अकच्श्नम्वतः सर्वनामाव्ययधातुविधावुपसंख्यानम्"।

सर्वके । सर्वनामत्वाच्छीभावः । उच्चकैः । अव्ययत्वात् सुपो लुक् । 'उच्चकैः अधीयान' इत्यत्र "अव्ययानां न" इति निघातप्रतिषेधः । उच्चकैर्मुखम् इति । "नाव्ययदिक्शब्द–" इति उत्तरपदाद्युदात्तत्वनिषेधः । भिनत्ति । अत्रागमानुदात्तत्वेन प्रत्ययस्वरस्य बाधितत्वात् विशिष्टो धातुस्वर इति केचित् ।

अन्ये तु आभिनोऽत्र इति "दश्च" इति धातोर्विधीयमानं रुत्वमित्याहुः । न हीदं तद् नापि तदन्तमित्युपसंख्यानारम्भः।

यद्वा तदन्तान्तस्येति सूत्रार्थः । सर्वशब्दस्य योऽन्तोऽकारः स एव सर्वकशब्दस्यान्त इति । एवमुत्तरत्रापि । अन्वर्थसंज्ञाऽऽक्षिप्तस्य संज्ञिनः सर्वादिभिः, अव्ययसंज्ञाक्षिप्तस्य स्वरादिभिः, धातुसंज्ञाभाजा वाप्रकाराणा भूवादिभिर्विशेषणात् । उत्तरपदलोपश्च अत्र वाचनिको न तु उष्ट्रमुखादिवद्गम्यमानार्थस्य सामर्थ्यान्निवृत्तिरिति केचित् । चरमावयव एव अवयवबुद्ध्या तदन्तस्य सर्वादिशब्दान्तत्वव्यपदेशः ।

अथवाऽवयवे समुदायरूपारोपात् तदन्तत्वम्, पाश्र्वाय:-

शूलादिषु गौणेनाप्यर्थेन शास्त्रव्यवहारदर्शनादित्येके ।

मध्यपातिनामकजादीनां तदेकदेशत्वात्तत्त्वबुद्धिविघातकत्वं नास्तीति चेन्न । अन्यूनानधिकानामेव संज्ञाविधानात् । नित्यानां शब्दानां विकारोपजनराहित्येन सर्वसर्वकशब्दयोर्भेदात् ।

वस्तुतस्तदेकदेशभूतं तद्ग्रहणेन गृह्यते । "नेदमदसोः" इत्यत्र अकोः इति प्रतिषेधाज्ज्ञापकात् । अन्यथा इदमदसावुद्दिश्य विहितस्य कार्यस्य सककारयोरप्रसक्तेरिति दिक् ।

प्रकृतसूत्रप्रयोजनवार्तिकानि—

"प्रयोजनं सर्वनामाव्ययसंज्ञायाम्" ।

सर्वे, परमसर्वे, उच्चैः, परमोच्चैः ।

"उपपदविधौ भयाढ्यादिग्रहणम्" ।

भयङ्करः, अभयङ्करः, आढ्यङ्करणम्, स्वाढ्यङ्करणम् ।

भयाढ्यादीनां कर्मविशेषणताऽऽश्रयणात् । "क्षेमप्रिय-" इत्यादौ तु कर्मणा क्षेमादयो विशेष्यन्ते इति तदन्तविधेरप्रवृत्तिः ।

"ङीब्विधावुगिद्ग्रहणम्" ।

भवती, अतिभवती । महती, अतिमहती ।

"प्रतिषेधे स्वस्रादिग्रहणम्" ।

स्वसा, परमस्वसा, दुहिता, परमदुहिता । ऋदन्तत्वात्प्राप्तस्य ङीपो "न षट्स्वस्रादिभ्यः" इति प्रतिषेधः । नच विधावेव विशेषणं तदन्तस्य संज्ञा न तु प्रतिषेधेऽपीति वाच्यम् । विधिपरस्य कर्मव्युत्पत्त्योभयपरत्वात् । स्वस्रादिभिः प्रातिपदिकस्य विशेषणात् तदन्तविधिः ।

"अपरिमाणबिस्ताचितग्रहणं च प्रतिषेधे" ।

द्विबिस्ता, द्विपरमाबिस्ता, त्रिबिस्ता, त्रिपरमाबिस्ता । "अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि" । द्विगुना

आक्षिप्तमुत्तरपदं बिस्तादिभिर्विशेष्यते इति तदन्तविधिः ।

"दितिग्रहणं च" ।

दितेरपत्यं दैत्यः । अदितेरपत्यम् आदित्यः । "दित्यदित्यादि-" इतिसूत्रे अदितिग्रहणं न कार्यम् । न च परमदित्यादिपदेभ्योऽपि ण्यप्रसङ्गः । अनभिधानात् ।

"रोण्या अण्" ।

आजकरौणः, सैंहकरौणः ।

"तस्य चेति वक्तव्यम्" ।

रौणः । न च "स्वं रूपम्" इति रोणीशब्दग्रहणम् । वार्तिककृता तदनुवृत्तेरनङ्गीकारात् । अतएव "आद्यन्तवद्" इत्यत्र "येन विधिस्तदन्तत्वे" इति प्रयोजनमुक्तवान् । अन्यथा आद्यन्तवद्भावाभावेऽपि "अचो यत्" इत्यत्र तदन्तविधिना जेयम् इत्यादेः, स्वरूपग्रहणाच्च अध्येयमित्यादेः सिद्धिः । न च व्यपदेशिवद्भावेन केवलस्यापि तदन्तत्वम् । "अप्रातिपदिकेन" इति तन्निषेधात् । तत्र च लिङ्गं- "पूर्वादिनिः" "सपूर्वाच्च" इति योगद्वयवचनम् । अन्यथा "पूर्वान्तादिनिः" इति ब्रूयात् । व्यपदेशिवद्भावेन केवलादपि तत्सम्भवात् ।

न च रोणीशब्दो ङ्यन्तत्वात्प्रातिपदिकमेव न भवतीति वाच्यम् । "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि" इति परिभाषया स्त्रीप्रत्ययान्तानामप्युक्तपर्युदासे भेदप्रतियोगित्वेनोपादानात् । "तस्य च" इति वचनं तु न पूर्वोक्तस्यैव शेषः, अपि तु वक्ष्यमाणानामपीति बोध्यम् ।

"रथसीताहलेभ्यो यद्विधौ" ।

रथ्यः, परमरथ्यः, सीत्यम्, परमसीत्यम् । हल्या, परमहल्या । ठग्विधौ तु तदन्तविध्यभावात्तदभावः ।

"सुसर्वार्द्धदिक्शब्देभ्यो जनपदस्य" ।

सुपाञ्चालकः, सुमागधकः, सर्वपाञ्चालकः, सर्वमागधकः, अर्द्धपाञ्चालकः, अर्द्धमागधकः, पूर्वपाञ्चालकः, पूर्वमागधकः ।

"ऋतोर्वृद्धिमद्विधाववयवानाम्" ।

ऋतुवाचिनः शब्दाद्यो वृद्धिमान् प्रत्ययस्तद्विधाववयववानां तदन्तविधिरित्यर्थः । शरदः पूर्वो भागः पूर्वशरत्, तत्र भवं 'पूर्वशारदम्' । "सन्धिवेलाद्यृतुनक्षत्रेभ्यः" इत्यण् । "अवयवादृतोः'–' इत्युत्तरपदवृद्धिः । वृद्धिमदिति किम् । "प्रावृष एण्यः" इत्यत्र तदन्तविधिर्मा भूत् । तेन पूर्वप्रावृषम् इति ऋत्वणेव । अवयवानां किम् । पूर्वस्यां शरदि भवं पौर्वशरदिकम् इत्यत्र कालाट्ठञ् एव । तत्र यथाकथञ्चित्कालवाचिनां ग्रहणम् नतु ऋतुलक्षणोऽण् ।

"ठञ्विधौ संख्यायाम्" ।

द्वे षष्ठी परिमाणमस्येत्यर्थे "तद्धितार्थे" इति समासे "आर्हादगोपुच्छसङ्ख्या–" इति ठक् न । तदन्तविधिसत्त्वे संख्यावत्तदन्तादपि ठक्प्रतिषेधात् । तेन "प्राग्वतेः"इति ठञ् । द्विषाष्टिकः । न च "अध्यर्द्धपूर्वाद्" इति लुगापत्तिः । "सोऽस्यांशवस्नभृतयः" इत्यतः सोऽस्येत्यनुवृत्तावपि "तदस्य परिमाणम्" इत्यत्र प्रत्ययार्थसमर्थविभक्त्योः पुनर्निर्देशाद् लुक्संबद्धात्तस्मात्पुनर्निर्देशस्य लुगसम्बन्धरूपवैलक्षण्यज्ञापकत्वात् ।

यद्वा अनुवर्त्तमानेन सोऽस्येत्यनेन सहितं परिमाणं संख्यायाः इत्येतावद् प्रत्ययविधायकम् । तस्य लुकि "तदस्य परिमाणम्" इति वचनसामर्थ्यात्पुनस्तत्सजातीयः प्रत्ययः । न च तस्यापि लुगापत्तिः । विधानसामर्थ्यात् । द्विगुनिमित्तत्वाभावाद्वा ।

केचित्तु द्वे षष्टी भूत इति "तमधीष्टोभृतोभूतोभावी" इति ठक्। अनार्हीयत्वेनालुक्प्रसक्तेः। तत्र कालादित्यनुवृत्तावपि काले संख्येये वर्त्तमानात्षष्टिशब्दात्तदुत्पत्तिसम्भवाच्च। रमणीयादिभ्यस्त्वनभिधानान्न। परिमाणार्थे तु लुग्दुर्वारः।

तथाहि—"तेन क्रीतम्" इत्यारभ्य "तदर्हति" इत्यतः प्राक्तनेष्वर्थेषु अर्हत्यर्थे, तदुत्तरमपि वर्त्तयतीत्यारभ्य "आकालिकडाद्यन्तवचने" इत्यन्तेषु चार्थेषु "प्राग्वतेः" इति ठञ् भवति। एवं च आर्हीयानार्हीयार्थसाधारण्येऽपि परिमाणार्थस्य ठञ आर्हीयत्वं दुर्वारम्। परिमाणस्य "तदर्हति" इत्यतः प्राक् निर्देशात्। "तदस्य" इत्यस्य पुनरुपादानमात्रेणार्हीयत्वक्षत्यभावात्। अन्यथा द्वौ निष्कौ परिमाणमस्येति द्विनिष्क इति जीवितपरिमाणादन्यत्रापि लुक् न स्यात्। "द्वित्रिपूर्वान्निष्काद्" इति वचनस्य परिमाणातिरिक्तार्हीयार्थेषु सावकाशत्वात्। तस्मादुक्तरीत्यैव द्विषाष्टिकसिद्धिः। 'तदस्य' इति तु त्यक्तव्यं, 'सोऽस्य' इत्यनुवृत्त्यैव सिद्धेरित्याहुः। तच्च द्विषाष्टिकशब्दस्याद्युदात्ततायामनपेक्षितायां ग्राह्यम्।

"धर्मान्नञः"।

धर्मं चरति धार्मिकः। अधर्मं चरति आधर्मिकः। "अधर्माच्च" इति नारभ्यम्।

"पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च" इति प्रयोजनम्। "इष्टकेषीकामालानां चिततूलभारिषु"। इष्टकचितम्, पक्वेष्टकचितम्, इषीकतूलेन, मुञ्जेषीकतूलेन, मालभारी, उत्पलमालभारी। पदाङ्गेति पदशब्द उत्तरपदाधिकारपरः। तत्प्रयोजनस्यैवोदाहृतत्वादिति कैयटादयः। अत एव परममहत्परिमाणमित्यत्र षष्ठीसमासः। सामानाधिकरण्ये "आन्महतः"

इत्यात्वप्रसङ्गादिति किरणावल्यां व्याख्यातम् ।

उपायकृतस्तु कर्मधारयेऽपि न दोषः । न च "पदाङ्गाधिकारे"इति परममहच्छब्दस्याप्यात्वापत्तिः, तत्र केवलपदाधिकारस्यैव ग्रहणात् । उत्तरपदाधिकारस्यापि ग्रहणे "इष्टकेषीका–" इत्यत्र पुनस्तदन्तविध्युपसंख्यानवैयर्थ्यप्रसङ्गादित्याहुः ।

दीक्षितास्तु–'नेदं युक्तम् । उपसंख्यानस्याऽप्रसिद्धत्वात् । "इष्टकेषी–"इत्यादेस्तूक्तप्रयोजनत्वेनैवोदाहृतत्वात् ।

एतेन 'सततनैशतमोवृतमन्यतः' इति भारविप्रयोगे "ओजःसहोम्भस्तमसः" इति अलुकमाशङ्क्य वर्द्धमानोक्तरीत्या समादधानो दुर्घटवृत्तिकृदपि निरस्तः ।

यदपि 'ओजःप्रभृतीनां पूर्वपदं प्रति विशेष्यत्वाद्'इति हरदत्तः। तदपि वार्त्तिकविरोधादुपेक्ष्यम् । विशेषणविशेष्यभावनिर्णयायैव इहत्यवार्त्तिकानां प्रवृत्तिरिति कैयटवदेव स्वयमपि व्याख्यानात् । उक्तस्थले तु नपुंसके भावे क्तः । शेषे षष्ठी । तया समासः । सततं नैशतमोवृतं यत्रेति बहुव्रीहिः ।

यद्वा सततं नैशतमसो वृतं वृतिर्यत्र । 'वृतु वर्त्तने' घञर्थे भावे कप्रत्ययः' इत्याहुः ।

अङ्गाधिकारे प्रयोजनवार्तिकम्—

"प्रयोजनं महदप्स्वसृनप्तॄणां दीर्घविधौ"

महान्, परममहान् । आपः, स्वापस्तिष्ठन्ति । "न पूजनाद्" इति समासान्तनिषेधः । न च "द्व्यन्तरुपसर्गेभ्य" इति ईत्वापत्तिः । अप इति समासान्तविशिष्टस्यैव तत्रोपादानात् । तत्र च उक्तभाष्यस्यैव प्रमाणत्वात् । स्वसारौ, परमस्वसारौ । नप्तारौ, परमनप्तारौ ।

"पद्युष्मदस्मदस्थ्यनड्डहो नुम्"

पद्भावस्य प्रयोजनम् । "पादः पद्" इत्यत्र पाच्छब्देनाङ्गविशेषणात् 'द्विपदः पश्य' पादयतेरप्रत्ययः पात्, पदः, पदेत्यादि । "क्वौ लुप्तम्" इति णिलोपो न स्थानिवत् । उत्तरपदाधिकारे तु पादशब्दस्यैव विशेष्यत्वम् । तेन "पदाऽऽज्यातिगोपहतेषु"इति पद्भावः—पादेनोपहतं पदोपहतम् इत्यत्रैव, न तु दग्धपादोपहतम् इत्यत्र । उत्तरसूत्रेऽप्येवम् । तेन "हिमकाषिहतिषुच" इति पद्भावः 'पत्काषी' इत्यत्रैव, न तु 'परमपादकाषी' इत्यत्रापि । 'परमपत्काषी' इति प्रयोगे तु परमपदेन पत्काषिशब्दस्य कर्मधारयः । यूयम्, अतियूयम्, वयम्, अतिवयम्, अस्थ्ना, परमास्थ्ना, अनड्वान्, परमानड्वान् ।

"द्युपथिमथिपुङ्गोसखिचतुरनडुत्रिग्रहणम्" ।

"दिव औत्" द्यौः, सुद्यौः । पन्थाः, सुपन्थाः । "न पूजनात्"इति समासान्तनिषेधः । पुमान्, परमपुमान्, गौः, सुगौः, सखा, सुसखा सुसखायौ, चत्वारः, परमचत्वारः, अनड्वाहः, परमानड्वाहः, त्रयाणाम्, परमत्रयाणाम् । 'परमपन्थाः, परमगौः' इति भाष्ये क्वाचित्कोऽपपाठः । परमसखायौ इत्यत्रापि बहुव्रीहिः । गौणत्वेऽप्यनङ्णित्त्वयोः प्रवृत्तिरिति कैयटः ।

केचित्तु परमुदाहरणान्तरम् । अगौः, अपन्था इत्यत्र "पथो विभाषा" इति नञ्तत्पुरुषे समासान्तनिषेध इत्यर्थ इत्याहुः ।

"प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्" । इदं चाङ्गसंज्ञासूत्रे योगविभागेन साधयिष्यते । इह प्रत्ययस्य स्वाक्षिप्तस्य धातुप्रत्ययाद्यवयवकसमुदायविशेषणत्वात्तदन्तविधिः ।

इदं च संज्ञाविधौ न । "सुप्तिङन्तम्" इत्यन्तग्रहणात् । उत्तरपदाधिकारेऽपि न । "हृदयस्य हृल्लेखयदण्लासेषु" इत्यत्र

लखपदस्य पृथगुपादानात् । अन्यथा अण्णन्तत्वादेव सिद्धेः । उक्तस्यापवादमाह—

"प्रत्ययग्रहणे चापञ्चम्याः" इति ।

यत्र पञ्चम्यन्तात्परः प्रत्ययः कार्यान्तरविधानाय परिगृह्यते तत्र तदन्तविधिर्नेत्यर्थः । यथा "रदाभ्याम्" इत्यत्र । तत्र हि तदन्तविधिसद्भावे रेफदकाराभ्यां परो यो निष्ठान्तस्तदवयवस्य तकारस्य नत्वं स्यादित्यर्थापत्तौ 'दृषत्तीर्णः' इत्यत्र धात्ववयवतकारस्यापि नत्वापत्तिः । न च "संज्ञाविधौ प्रत्ययग्रहणं न" इत्यस्यात्रावकाशः । संज्ञाया विधेयत्वे एव तत्प्रवृत्तेः । नचैवं संज्ञाविधावित्यस्य वैयर्थ्यम् । तदन्तस्य संज्ञायां विधिप्रदेशेषु पुनस्तदन्तविधिना प्रत्ययान्तान्तस्य संज्ञा स्यादिति तन्निषेधसार्थक्यात् । पञ्चम्यन्तात्प्रत्ययविधौ तदन्तविधिर्नेति तु नार्थः । "ञितश्च तत्प्रत्ययाद्" इत्यत्र अञ्प्रत्ययादेव अञ्विधाने तस्यैवाङ्गसंज्ञायां वृद्धिस्वरयोः प्रसङ्गात् । "स्यतासी लृलुटोः" इत्यत्र धातोरित्यधिकारादपञ्चम्या इति निषेधात्, यद्वा लृलुटोर्विशेष्यत्वाश्रयणात्तदन्तविध्यभावः ।

"यस्मिन्विधिस्तदादावल्ग्रहणे" ।

सौत्रस्य तदन्तविधेर्वाचनिकोऽयमपवादः ।

दुराग्रहिणस्तु प्रकृतसूत्रे तस्मिन्नित्यस्य, "आदिरन्त्येन" इति सूत्रादादिग्रहणस्य, इतेति तृतीयान्तस्य चानुवृत्त्या इत्पदस्य च लक्षणया अल्परत्वाल्लभ्यत एतद् इत्याहुः ।

अपरे तु यान्तप्रत्ययस्यासम्भवेन प्रथमत्यागे कारणाभावात् यादावित्यर्थकेन "वान्तो यि प्रत्यये" इति सूत्रेणैवेयं परिभाषा ज्ञाप्यते इत्याहुः ।

अन्ये तु "गुणोऽपृक्ते" इत्यपृक्तग्रहणमत्र मूलम् । तद्धि

"उतो वृद्धिर्लुकि हलि" इत्यनुवृत्तौ क्रियते। हलीत्यनुवृत्तौ हलादौ इत्यर्थः स्यात्। अपृक्तग्रहणे तु 'प्रौर्णोत्' इत्यत्र वर्णमात्रे इत्याहुः। तेन "अचिश्नु" इत्यादौ अजादावित्यर्थो न तु अजन्त इति। तेन श्रियः, भ्रुवः इत्यादि। विशेषणेनैवायम्। अपवादस्योत्सर्गसमानविषयकत्वात्। तेन "अमि पूर्वः" इत्यत्राचीत्यस्य विशेष्यत्वाश्रयणात् अम्यचीत्यर्थो न त्वजादावमीति, विशेषणवैयर्थ्यात्। अमि योऽच् अमोऽवयव इति यावत्। तेन मकारसहितस्य पूर्वरूपं नेति दीक्षिताः।

वृत्तिकारादयस्तु अमि परत इत्येवार्थः। अजनुवृत्तौ प्रमाणाभावात्, "आदेः परस्य" इत्यत एव दोषानवकाशात्।

# वृद्धिर्यस्याचामादिस्तद्-वृद्धम् ७३।

यत्समुदायघटकानामचां मध्ये पूर्वोऽच् वृद्धिसंज्ञः स वृद्धसंज्ञः स्यात्। आम्रगुप्तीयः। वृद्धाच्छः। बहुत्वमविवक्षितम्। शालीयः। व्यपदेशिवद्भावादेकस्यापि। जानातीति ज्ञा ब्राह्मणी। तस्या अयं ज्ञीयः। "वा नामधेयस्य वृद्धसंज्ञा वक्तव्या"। पौरुषेयसंकेतः संज्ञा। उभयत्र विभाषेयम्। देवदत्तादीनामप्राप्ते वामनादीनां च प्राप्ते आरम्भात्। देवदत्तीयः दैवदत्तः। "विधाय मूर्त्तिं कपटेन वामनीम्' इति श्रीहर्षः। "गोत्रोत्तरपदस्य च नित्यम्"। वृद्धसंज्ञा वाच्येत्यर्थः। कम्बलप्रियस्य चारायणस्य शिष्याः कम्बलचारायणीयाः। घृतरौढीयाः। रूढस्यापत्यं रौढिः। पूर्ववत्। 'ओदनपाणिनीयाः'। पणनं पणः।

इत्यादिवार्त्तिकोक्तार्थसिद्धिरिति न्यासकारः ।

इहादिग्रहणं न सम्बध्यते, अच्सम्बद्धस्यैव तस्यानुवृत्तेः । यस्याचामादयस्त्यदादय इत्यन्वयस्य बाधितत्वात् । निर्धारणस्य सजातीयविषयकत्वानियमात् । त्यदादीनां चाज्रूपत्वाभावात् । पूर्वपक्षे तु त्वदीयः इत्यादौ छो न स्यात् । न च व्यपदेशिवद्भावः । "अप्रातिपदिकेन" इत्युक्तत्वात् । न च वचनसामर्थ्यम् । त्वत्पुत्राः इत्यादौ सावकाशत्वात् । आदिग्रहणानुवृत्त्यन्यथाऽनुपपत्त्या उपसर्जनानामपि त्यदादित्वसम्भवात् । अचामित्यस्य त्वनुवृत्तिरुत्तरार्थैव स्यात् । तस्मादिहादिग्रहणाननुवृत्तिरेव ।

# एङ् प्राचां देशे ७५ ।

मण्डूकप्लुतया यस्याचामादिरित्यनुवृत्तिः । एङ् यस्याचामादिस्तद्वृद्धसंज्ञं वा स्याद्देशाभिधाने । एणीपचनीयः, गोनर्दीयः, भोजकटीयः । "वृद्धाच्छः" । एङिति किम् । आहिच्छत्रः, कान्यकुब्जः । औत्सर्गिकोऽण् । विधेयसंज्ञासम्बन्धात्प्राचामित्याचार्यनिर्देशाद्विभाषालाभः । व्यवस्थितविकल्पश्चायम् । तेन क्रोडदेवदत्तशब्दयोरप्राग्देशवाचिनोर्वृद्धसंज्ञा । वृद्धसंज्ञत्वात् काश्यादित्वात् वृद्धलक्षणठञ्ञिठौ भवतः । प्राग्देशवाचिनस्त्वणेव । क्रौडो, दैवदत्त इति । "शैषिकेषु इति वक्तव्यम्" । सेपुरम्, स्कोनगरं च वाहीकग्रामौ । वृद्धत्वात् "वाहीकग्रामेभ्यश्च" इति ठञ्ञिठौ । सैपुरिकी, सैपुरिका, स्कौनगरिकी, स्कौनगरिका । शैषिकेषु इति वचनात् अपत्यविकारयोर्वृद्धलक्षणौ फिञ्मयटौ न भवत इति कूणिव्याख्यानाश्रयिणो भाष्यकारस्य मतम् । जयादित्यस्तु प्राचामिति देशविशेषणम् । प्राचि देशे विद्यमानानां पुंसां यो देश-

तदभिधाने इति सूत्रार्थः । पूर्वमते मतशब्दाध्याहारप्रसङ्गात् । तेन देवदत्तो नाम वाहीकग्रामस्तस्य प्राग्देशत्वाभावात् दैवदत्तः इत्यत्र वृद्धत्वाभावादेव ठञ्ञिठौ न भवत इति व्याचख्यौ । अत्र पक्षे सैपुरी इत्यादिकं वचनेनैव साध्यम् । तयोर्वाहीकग्रामतया तद्रीत्या वृद्धत्वाभावात् इति । देशे किम् । गोमती नाम प्राग्देशनदी । तत्र भवा मत्स्या गौमताः । नच देशग्रहणे नद्यपि ग्राह्या इति वाच्यम् । "विशिष्टलिङ्गो नदीदेशोऽग्रामाः" इत्यत्र पृथक् नद्याः उपादानात् ।

प्राग्देशविभागस्तु अमरेण उक्तः—

"शरावत्यास्तु योऽवधेः ।

देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः"

शरावती नदीविशेषः उत्तरपूर्वाभिमुखीति हरदत्तादयः । नैर्ऋत्याः पश्चिमाब्धिगामिनी इत्यमरव्याख्यातारः । तस्या दक्षिणपूर्वस्यां दिशि व्यवस्थितो देशः प्राग्देशः । उत्तरपरस्यांतु उदग्देशः ।

तदुक्तम्—

प्रागुदञ्चौ विभजते हंसः क्षीरोदकं यथा ।

विदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती ॥

बाहीकदेशस्तु प्रागुदग्बहिर्भूतः । "बहिषष्टिलोप" इति व्युत्पादनात् इति विवरणकाराः ।

दीक्षितास्तु "अव्ययात्त्यप्" इति सूत्रे "उदीच्यग्रामाच्च बह्वचोऽन्तादात्तात्" इत्यस्यावकाशः शिवपुरं 'शैवपुरः' । ठञः स एव । शाकलं नाम बाहीकग्रामः-इह उभयं प्राप्नोति इति भाष्ये बाहीकस्यापि उदग्रूपत्वं लभ्यते । हरदत्तादिभिरपि तथैव अनुवादाच्च । बाहीकदेशस्वरूपं तु कर्णपर्वणि—

पञ्चानां सिन्धुषष्ठानामन्तरे ये समाश्रिताः ।
बाहीका नाम ते देशा न तेषु दिवसं वसेत् ॥

धर्मबहिर्भूतत्वाद्बाहीका इति तात्पर्यम् । शतद्रूर्विपाशा इरावती वितस्ता चन्द्रभागेति पञ्च नद्यः । सिंधुनदस्तु षष्ठस्तन्मध्ये देशो बाहीक इति व्याख्यातारः । व्युत्पत्त्यन्तरमपि तत्रैव ।

बहिकश्च बहीकश्च विपाशायां पिशाचकौ ।
तयोरपत्यं बाहीका नैषा सृष्टिः प्रजापतेः ॥

एतद्विवेचनं च "बाहीकग्रामेभ्य" इत्यादौ उपयोक्ष्यते इत्याहुः ।

इति श्रीसिद्धान्तसुधानिधौ प्रथमाध्यायस्य प्रथमे
पादे नवमाह्निकम् । पादश्चायं समाप्तः ।



# द्वितीयपादप्रारम्भः ।

## गाङ्कुटादिभ्योऽञ्णिन्ङित्।१।

गाङित्यादेशग्रहणम् । ङकारस्यानन्यार्थत्वादिति द्वितीये वक्ष्यामः । तस्मात्कुटादिभ्यश्च परे ञ्णिद्भिन्नाः प्रत्यया ङिद्वत्स्युः । अत्र कुटादित्वं कुटोच्चारणोत्तरमुच्चारितत्वम् । तच्च कुटादिष्वेव । तथाऽपि तद्गुणबहुव्रीहिणा कुटत्वेन रूपेण कुटस्यापि बोधः । नचोभयसाधारणेनैकज्ञानविषयत्वादिना रूपेण कुटस्य तदादीनां च बोधोऽस्तु इति वाच्यम् । अतद्गुणसंविज्ञानस्थले बहुव्रीहिघटकपदार्थव्यावृत्तरूपेणैव बोधस्य वाच्यत्वात् । तत्साधारण्यार्थमत्रापि तथाकल्पनात् । उभयत्राप्यन्यपदार्थस्यैकरूपेणैव प्रतीतेः । वर्त्तिपदार्थस्योपलक्षणत्वविशेषणत्वाभ्यामेव बहुव्रीहिद्वैविध्यात् ।

प्राञ्चस्तु—अतद्गुणसंविज्ञाने लक्ष्यमात्रवृत्तिना तद्गुणे तूभयसाधारण्येन धर्मेण बोध इति विभागात् तद्गुणस्थले शक्यलक्ष्योभयसाधारणधर्म एव लक्ष्यतावच्छेदक इति वदन्ति । अत एव क्षणभङ्गवादे शब्दादिरित्यत्र चरमशब्दभिन्नत्वसमानाधिकरणसत्त्वेनालीकव्यावृत्तेन सर्वानुगम इति मिश्रादिभिर्व्याख्यातम् ।

ङिदिति चातिदेशः । तदुक्तम्—

'परत्र परशब्दः प्रयुज्यमानो विनाऽपि वतिं तदर्थं गमयति' इति । अध्यगीष्ट । "घुमास्थागापाजहातिसां हलि" इति ।

हलादिक्ङिदार्द्धधातुकनिमित्तक ईकारादेशः । 'कुट कौटिल्ये', चुकुटिथ, कुटिता । "क्ङितिच" इति गुणनिषेधः । 'कुङ् शब्दे' एतत्पर्यन्ताः कुटादयः ।

अथ कथं 'प्रवृत्तो वैलक्ष्यात्किमपि लिखितुं दैवहतकः' इत्यमरः । 'चित्रेणापि न शक्यते विलिखितुं सर्वाङ्गसंकोचभाक्' इति सुबन्धुश्च । लिखतेः कुटादावनन्तर्भावात् । अत एव 'विलेखितुं भीमभुवो लिपीषु' इति श्रीहर्ष इति ।

अत्र वदन्ति–प्रमाद एवायम्, संज्ञापूर्वकविधेरनित्यतया वा समाधेयम् ।

केचित्तु एकशेषेण कुटस्यादिरिति तत्पुरुषं व्याख्याय लिखतेरपि प्रकृतसूत्रेण संग्रह इत्याहुः ।

तन्न । 'लेखिता' इत्यादीनां वृत्तिकारहरदत्तादिभिरुदाहृतत्वात् । "आलेखने" इति सौत्रप्रयोगाविरोधाच्चेति ।

इह पूर्वपक्षत्रयं भाष्ये निरस्तम् । तथा हि–गाङादिभ्यः परे प्रत्यया ङितः स्युरित्यर्थे बाधः । तत्परस्य प्रत्ययस्य इत्संज्ञकङकाररहितत्वात् । सत्त्वे वा वचनान्तरसिद्धत्वादेतद्विधिवैयर्थ्यम् । न च चङादेरेवानेन विधानम् । अञ्णिदिति पर्युदासवैयर्थ्यात् । तदुक्तम्–"ङित्किद्वचने तयोरभावादप्रसिद्धिः" इति । किद्ग्रहणमुत्तराभिप्रायम् ।

अस्तु तर्हि गाङादिप्रकृतिकाञ्णिद्भिन्नप्रत्ययानुवादेन ङित्किताोर्विधिरिति द्वितीयः । उक्तप्रत्ययस्य ङकार इत्संज्ञको भवतीत्यर्थः । इद्धर्माक्रान्तस्यैव विधानादादौ मध्ये ऽन्ते वेति देशविशेषस्यानपेक्षणात् । इताश्च धर्मोऽश्रूयमाणानामपि कार्यविशेषकत्वम् । मैवम् । टित्त्वकित्त्वमित्त्वानामभावाद् अनन्तरार्थे च बहुव्रीहेरभावात् ङिदिति तत्पुरुषस्यैव वाच्यत्वात् "आदेः प-

ङस्य" इति आदेः स्थाने ङकारादेशप्रसङ्गात् । न च 'कुटिता' इत्यादौ प्रासिद्धाङित्त्वाश्रङादय एव विधीयन्तामिति वाच्यम् । तेषां तदर्थोक्तावसामर्थ्यात् । तृङादीनां चात्र प्रसिद्धिविरहात् । एतद्वचनादेव तेषामपूर्वविधिस्वीकारे तु ङिच्चेत्यन्तादेशत्वप्रसङ्गात् । न चानुबन्धानामसतामेव कार्यनिर्वाहकत्वात्कथमादेशत्वम् आदेशस्य भावरूपतयाऽन्यप्रसङ्गसंभवादिति वाच्यम् । लोपस्येव वचनसामर्थ्यादित्संज्ञकङकारस्याप्यादेशत्वसम्भवात् । स्थानिनिवृत्त्युत्तरं ङकारस्य निवृत्तिसम्भवात् । न च षष्ठीनिर्देशाभावः । पञ्चम्याः प्रथमायाः षष्ठीत्वप्रकल्पनोपपत्तेः ।

तदेतदुक्तम्–

"भवतीति चेदादेशप्रतिषेधः" इति ।

अस्तु तर्हि गाङादिभ्यः परोऽङिणत् ङित्संज्ञको भवतीति तृतीयः । मैवम् । क्ङितीतिशब्दात्किति ङितीत्यनयोर्भेदात्संज्ञिनामप्रतीत्यापत्तेः । परिच्छिन्नपरिमाणानामेव संज्ञात्वात् । न्यूनातिरिक्तशब्दोच्चारणस्य संज्ञास्वरूपानुपलम्भात् । ङित्संज्ञाया व्यचेः कुटादित्ववचनात् संप्रसारणार्थतया, लिटः कित्संज्ञायाश्च "वचिस्वपि" इति संप्रसारणार्थतयाऽप्युपपत्तेः, गाङ्कुटादिभ्यः परस्य ङित्संज्ञा तु न्यायवशादप्रयोजनैव स्यात् । "क्ङिति च" इत्यादौ यौगिकस्यैव ग्रहणसम्भवात् । किति ङितीत्यादौ च कृत्रिमत्वादनयोरेव ग्रहणं स्यात् । नच चङादीनां ङित्त्ववैयर्थ्यम् । यत्र संज्ञास्वरूपानुपलब्धिस्तत्र क्ङिति प्रदेशेषु ग्रहणार्थत्वात् । तदुक्तम्–

"संज्ञाकरणे क्ङिद्ग्रहणेऽसंप्रत्ययः शब्दभेदाद्" इति ।

तस्मादतिदेश एव स्थितः ।

ननु सिसृक्षति, दिदृक्षते, इत्यत्र "हलन्ताच्च" इति सनः

कित्त्वविधानेऽपि "सृजिदृशोर्झल्यमकिति" इत्यमागमः स्यात् तदुक्तम्—

"तद्वदतिदेशेऽकिद्विधिप्रसङ्गः" इति। अतिदेशानां स्वाश्रयानिवर्त्तकत्वात्। मैवम्। किति न भवतीति व्याख्यानात्। तदुक्तम्-

"सिद्धन्तु प्रसज्यप्रतिषेधाद्" इति।

अथ चुकुटिषति इत्यादौ सनो ङित्त्वात् तदन्तस्यात्मनेपदापत्तिः। मैवम्। उपदेशे यो ङित्तदन्तादिति व्याख्यानात्।

भाष्ये तु ङितीव ङिद्वदिति सप्तम्यर्थे वतिमाश्रित्य पूर्वस्य ङितीव कार्यमतिदिश्यते ऽतो न ङिदन्तत्वानिबन्धनमात्मनेपदमिति व्याख्यातम्। यद्वार्तिकं—"सिद्धं तु पूर्वस्य कार्यातिदेशाद्" इति। यद्यपीह वतिर्नोपात्तस्तथाऽप्यातिदेशस्य यावत्कार्यार्थत्वाभावाद्व्याख्यानाद्विशिष्टकार्यार्थ एवातिदेशः। उपदेशग्रहणानुवृत्त्या चोक्तस्थले नात्मनेपदमिति सामर्थ्यात् पूर्वस्य कार्यातिदेशोऽयमिति भाव इति कैयटः।

# विज इट्। २।

विजेः पर इडादिप्रत्ययो ङिद्वत्। वृद्धिसंज्ञासूत्रादादिपदानुवृत्त्या इडादिरित्यर्थलाभः। आदिभूतस्य इटो ङित्त्वे प्रयोजनाभावात्तदादिप्रत्ययलाभः। अत एवार्थवद्ग्रहणप्रत्ययाप्रत्ययपरिभाषाभ्यामुत्तमपुरुषैकवचनस्येटो ग्रहणे प्रसक्तेऽपि तन्न भवति, आद्यवयवत्वाभावात् इति न्यासकारः।

अन्ये तु आगमग्रहणस्यावश्यकतया तस्य गुणनिमित्तत्वाभावेन ङित्त्ववैयर्थ्यात् मत्वर्थलक्षणया इड्वान् प्रत्ययो गृह्यते। इट् च प्रत्ययस्यादिरेवेति फलितार्थः—इडादिप्रत्यय इति। अत आदिग्रहणानुवर्त्तनं व्यर्थमित्याहुः।

'विजिर् पृथग्भावे' इत्यस्य नेह ग्रहणं व्याख्यानात् । इटोऽसम्भवादिति तु हरदत्तः । केचित्तु विवेजिथ इत्यत्र थलि क्रादिनियमादिट् सम्भवत्येव । पित्त्वेन "असंयोगाल्लिट्" इति कित्त्वस्याप्रवृत्तेरित्याहुः ।

'ओविजी भयचलनयोः' । प्रायेणायमुत्पूर्वः । उद्विजिता, उद्विजिष्यते ।

## विभाषोर्णोः ३ ।

'ऊर्णुञ् आच्छादने' । अदादिः । अस्मात्पर इडादिप्रत्ययो वा ङिद्वत् । ऊर्णुविथ, ऊर्णुनविथ, ऊर्णुविता, ऊर्णविता ।

## सार्वधातुकमपित् ४।

अपित्सार्वधातुकं ङिद्वत् । तुदति । शस्य ङित्त्वान्न लघूपधगुणः । अतिदेशे कल्प्यमानो वतिस्तृतीयान्तादेव नतु षष्ठ्याद्यन्तात् । सादृश्यानुयोगिनि प्रथमाश्रवणाद् । अन्यथा षष्ठीसप्तम्योरन्यतरस्यापत्तेरिति दीक्षिताः ।

ननु सूत्रे वतेरभावाद्विवरणवाक्य एव तत्प्रयोगात् तदनुरोधेन सूत्रे सप्तम्याद्यन्तत्वापादनं न युक्तम् । विवरणवाक्ये तदापादने त्विष्टापत्तिरेव । सूत्रे उभयोः समानविभक्त्यन्तपदप्रयोगबलादेवातिदेशलाभादुपजीव्यविरोधाच्चेति ।

मैवम् । तृतीयान्तादेव वतिमाश्रित्य विवरणवाक्येऽपि सौत्रविभक्तिसम्भवे तत्रापि विभक्त्यन्तरकल्पने प्रमाणाभावात् । कैयटस्याप्यत्रैव स्वारस्यम् ।

अथ सार्वधातुकग्रहणं व्यर्थम् । ङ्वनिपः पित्त्वेन तन्ङित्त्वस्य ज्ञापकत्वाभावेऽपि चङादीनां ङित्त्वेनार्द्धधातुकानां ङि-

त्त्वाभावस्य ज्ञाप्यत्वात् । न चैवं तातङो ङित्त्वेन सार्वधातुकानामप्यङित्त्वज्ञापनं स्यादिति वाच्यम् । तिपः पित्त्वेनाऽप्राप्तप्रापणार्थत्वात् । ज्ञापकं च सजातीयापेक्षम् । तेन सार्वधातुकस्याप्यङित्त्वज्ञापनस्यानापत्तिः ।

मैवम् । सजातीयविषयकत्वे चङङौ लुग्विकरणानां, नजिङ् वर्तमानकालानाम्, ङ्वनिप् भूतकालानाम्, अथङ् औणादिकानाम्, नङ् घञर्थीयानां ज्ञापकः स्यादित्यार्द्धधातुकान्तराणां ङित्त्वापत्तिः । न च प्रत्ययत्वव्याप्यधर्मेण साजात्यं विवक्षणीयम्, न तूक्तधर्मैरिति वाच्यम् । विनिगमकाभावात् ।

स्यादेतत् । अपिदिति पर्युदासः प्रतिषेधो वा । नाद्यः । च्यवन्ते, प्लवन्ते इत्यादौ शपोऽन्तादेशस्य च "अतो गुणे" इति पररूपे परस्यापित इहाश्रयणादेकादेशस्यादिवद्भावात्पिद्भिन्नस्य सत्त्वात् ङित्त्वेन गुणनिषेधापत्तेः । न च पररूपात्पूर्वमेव गुणः । पररूपस्य नित्यत्वादन्तरङ्गत्वाच्च ।

यद्यपि सार्वधातुकावयवस्याकारस्यैकादेशः तथाऽपि परं प्रत्यादिवत्त्वादन्तशब्दोऽपित् सार्वधातुकं भवत्येवेति ङित्त्वप्रसङ्गः । च्यवे इत्युत्तमैकवचने तु सर्वस्यैव सार्वधातुकस्यैकादेशान्ङित्त्वप्रसक्तिसौलभ्यम् । तदुक्तम्—

"अपित् ङिदिति चेच्छबेकादेशप्रतिषेधः" इति ।

न द्वितीयः । तुदानि, लिखानि । "आडुत्तमस्य पिच्च" इत्याट् । पिदपितोरेकादेशस्यादिवद्भावात् पिन्नेति ङित्त्वप्रतिषेधापत्तेः । तदुक्तम्—

"न पित् ङिदिति चेदुत्तमैकादेशप्रतिषेधः" इति ।

अत्र भाष्यम्-"उभयथाऽपि न दोषः । एकादेशः पूर्वविधौ स्थानिवद्भवतीति व्यवधानात्" इति ।

यद्यपि च्यवन्ते इत्यत्र "वार्णादाङ्गम्" इति समाधानं सुलभम्, तथाप्युभयसाधारणपरिहाराभिधित्सया तन्नाश्रितमिति कैयटः ।

# असंयोगाल्लिट् कित् ५ ।

असंयोगात्परोऽपिल्लिट् कित्स्यात् । चक्रतुः । "सार्वधातुकार्द्धधातुकयोः" इति गुणे प्राप्ते "क्ङिति च" इति निषेधः । "ऋदुपधेभ्यो लिटः कित्त्वं गुणाद्विप्रतिषेधेन" । बिभिदतुः, बिभिदुः इत्यादौ कित्त्वं नित्यं गुणस्त्वनित्यः । वव्रते, वव्रधे इत्यादौ द्वयोरप्यनित्यत्वम् । कित्त्वे कृते गुणस्येव गुणे कृते रपरत्वेन संयोगात्परतया कित्त्वस्याप्यप्रसक्तेः । ततश्च परत्वाद् गुण एव स्यादिति विप्रतिषेधारम्भः । न च यथा क्सस्य कित्त्वसामर्थ्याद् गुणो बाध्यते तथेहाप्यतिदेशसामर्थ्यादिति वाच्यम् । क्सस्य कित्करणे प्रयोजनाभावाद् अनवकाशत्वात् । इह तु सम्प्रसारणेन कृतार्थत्वाद् दुर्बलातिदेशप्राप्तस्य गुणनिषेधस्य दुर्बलत्वाद् गुणेन सह विप्रतिषेधानुपपत्तिः । तातङ्न्यायो ऽप्यत्रानुसन्धेयः । तस्मात्परशब्दमिष्टवाचकमाश्रित्य सूत्रेण संगृहीतमेवार्थं स्फुटीकर्त्तुं वार्त्तिकारम्भः ।

स्यादेतत् । गाङादिप्रकृतिकस्य प्रत्ययस्य ङित्त्वम्,असंयोगादित्यादौ च कित्त्वमतिदिश्यते इति वैषम्ये किं बीजं उभयत्राप्यन्यतरस्यैवातिदेशौचित्यात् । एतेनोपदेशो ऽपि व्याख्यात इति चेत् । अत्र वार्त्तिकम् ।

"पृथगनुबन्धत्वे प्रयोजनं वचिस्वपियजादीनामसम्प्रसारणम्", "सार्वधातुके चङ्गादिषु जाग्रो गुणविधिः", "कुटादीनामिट्प्रतिषेधः" "क्त्वायां कित्प्रतिषेधश्च"।

सुप्त इत्यादिवत् स्वपित इत्यादौ सम्प्रसारणं स्यात्। चङ्गादयश्च "चङ्ङनजिङ्ङ्वनिबथङ्नङः" इतिभाष्यम्। शून इत्यादिवदशिश्वियद्, अश्वदित्यत्रापि स्याद्, सुप्त इत्यादिवत् स्वप्न इत्यत्रापि स्यात्। इष्टवान् इतिवत् यज्वा इत्यत्रापि स्यात्। उषित इतिवत् आवसथ इत्यत्रापि स्यात्। रुदिविदिभ्यां ङिदित्यतो ङिदित्यनुवृत्तौ "उपसर्गे वसेः" इत्यथप्रत्ययः। इष्टम् इतिवत् यज्ञ इत्यत्रापि स्यात्। "यजयाच–" इति नङ्। जागृत इत्यादिवत् जागरित इत्यादावपि अङितीति पर्युदासः स्यात्। गुणविधिरित्यत्राऽकारप्रश्लेषपरित्यागे तु दृष्टान्तदार्ष्टान्तिकवैपरीत्येन व्याख्येयम्। लूत्वा पूत्वा, इत्यादिवत् नुवित्वा इत्यादावपि "श्र्युकः किति" इतीट्प्रतिषेधः स्यात्। यद्यपि पूर्वस्य कार्य एवातिदेशः स्थापित इट्प्रतिषेधश्च परस्यैव कार्यः तथापि कितीतिसप्तमीनिर्देशात् इट्प्रतिषेधस्याप्यतिदेशः स्याद् इत्येतावन्मात्रेणोक्तमिति कैयटः। देवित्वा, सेवित्वा इत्यादिवत् कुटित्वा पुटित्वा इत्यत्रापि "न क्त्वा सेट्" इति कित्त्वप्रतिषेधः स्यात्। विशेषाभावादौपदेशिकवदातिदेशिकस्यापि कित्त्वस्य बाधसम्भवात्। न चौपदेशिकत्वस्य प्रथमोपस्थितत्वात्तद्बाधेन चरितार्थो निषेधः कथमातिदेशिककित्त्वं बाधेत। अत एव रागप्राप्तहिंसानिषेधेन चरितार्थम् "न हिंस्यात्सर्वा भूतानि" इति शास्त्रं "अग्नीषोमीयं पशुमालभेत" इत्यादिविहितहिंसायां न प्रवर्त्तते इति वाच्यम्। अप्राप्तस्यैवातिदेशात्। क्त्वायां कित्त्वातिदेश एव न स्यादित्यत्र तात्पर्यात्। चकारस्य यथाश्रुतत्वे तु

इट्प्रतिषेधसमुच्चयस्तदर्थः । लूत्वा, पूत्वा, इत्यादिवत् नुवित्वा, धुवित्वा इत्यत्रापि "श्र्युकः किति" इति इट्प्रतिषेधः स्यात् । 'णू स्तवने' 'धू विधूनने'। अत एव 'परिणूताखिलोदयः' इति-श्रीभागवतम् ।

भाष्यकृतस्तु—नैतत् प्रयोजनम् । ङित्त्वातिदेशे ऽप्यौपदेशिककित्त्वसत्त्वेन निषेधप्रवृत्त्या धूत्वा, नूत्वा इत्येव, साधुत्वात् विरोधाभावात् स्वाश्रयकित्त्वस्यानिवर्त्तनात् । न च "येन-नाप्राप्तिन्यायेन ङित्त्वेन कित्त्वबाधापत्तिः । 'कुटिता' इत्यादौ कित्त्वाभावेन नाप्राप्ते कित्त्वे ङित्त्वातिदेशानारम्भात् इत्याहुः ।

# इन्धिभवतिभ्याञ्च ६

'ञिइन्धी दीप्तौ' 'भू सत्तायाम्' । आभ्यां परो ऽपिल्लिट् कित्स्यात् । इन्धेः संयोगार्थं ग्रहणम्, भवतेः पिदर्थम् ।

ननु बभूवेति प्रथमणलि न कित्त्वविधानार्थम् । "अचो-ञ्णिति" इति वृद्धेर्निर्दिष्टस्थानिकतया तत्र "क्ङिति च" इति निषेधाप्रवृत्तेः । न च कित्त्वसामर्थ्यादनिग्लक्षणवृद्धेरपि निषेधः स्यादिति वाच्यम् । बभूविथेति थलि, 'अहं बभूव' इति उत्तमणलि च णित्त्वाभावपक्षे गुणनिषेधेन चरितार्थत्वात् ।

अत्र वार्त्तिकम्—

"इन्धेश्छन्दोविषयत्वाद् भुवो वुको नित्यत्वात् ताभ्यां लिटः किद्वचनानर्थक्यम्" इति ।

उक्तसूत्रप्रत्याख्यानमेतत् । इन्धेर्हि अनन्तरो लिट् नास्त्येव । "इजादेश्च गुरुमतः" इत्यामा व्यवधानात् । छन्दसि तु "अमन्त्रे" इति पर्युदासादाम्विरहेऽपि समीधे इत्यत्र "छन्दस्युभयथा"इति लिटः सार्वधातुकत्वात् "सार्वधातुकम-

पिद्” इति ङित्त्वान्नलोपः। आर्द्धधातुकत्वाच्च श्नमभावः। तथाच मन्त्रः—

“त्वामग्ने दध्यङ्ङृषिः पुत्र ईधे अथर्वणः” इति, “समीधे-दस्युहन्तमम्” इति च।

एवञ्च लिडव्यवहितपूर्वस्य भाषायां संम्भवो नास्तीत्यत्र तात्पर्यं न तु सामान्यत इन्धेर्भाषायामप्रयोगो ऽपीति कैयटादयः।

एतेन इन्धिग्रहणसामर्थ्यात् आम्विरहे भाषायामप्युक्तप्रयोगस्य साधुत्वकल्पनमपास्तम्, भाष्यवार्त्तिकविरुद्धत्वात्।

भू अ इति स्थिते च वुको नित्यत्वात्। न च शब्दान्तरप्राप्त्या वुगनित्यः। एकदेशविकृतस्यानन्यत्वात्। कृताकृतप्रसङ्गित्वेन नित्यत्वानपायाच्च। “ओः सुपि” इत्यत ओरित्यस्यानुवृत्तेः। वुकि कृते च गुणस्य प्राप्त्यभावात्।

# मृडमृदगुधकुषक्लिशवद-वसः क्त्वा ७

कित्स्यात्। “न क्त्वा सेट्” इति वक्ष्यमाणकित्त्वनिषेधस्यापवादः। ‘मृड सुखने’, ‘मृद क्षोदे’, ‘गुध परिवेष्टने, ‘गुध रोषे-च’, ‘कुष निष्कर्षे’, क्लिश हिंसायाम्’, ‘क्लिशू हिंसाय्याम्’। दिवादिक्राद्योर्द्वयोरप्युपादानम्। ‘वद व्यक्तायां वाचि,’ ‘वस निवासे’। उषित्वा। “वसति क्षुधोरिट्”। यजादित्वात्सम्प्रसारणम्।

अत्र भाष्यम्—“न क्त्वा सेट्” इति सूत्रं न कर्त्तव्यम्, इदं सूत्रं मृडादिभ्य एव परस्य क्त्वः कित्त्वं नान्येभ्य इति नियमार्थमस्तु। न च मृडादिभ्यः परः क्त्वैव किद्भवति

न तु निष्ठादिरिति विपरीतनियमापत्तिः । प्रयोगमूलत्वाद् व्याकरणस्मृतेरनिष्टनियमानुपपत्तेः । न च लूत्वा, पूत्वा इत्यादावपि कित्त्वानुपपत्तिः क्त्वामात्रस्य नियमापत्तेः, "क्त्वातोसुन्कसुनः" इत्यत्र विशेषणार्थत्वेन ककारसार्थक्यादिति वाच्यम् । सेट एव क्त्वो नियमारम्भात् । न च "क्लिशः क्त्वानिष्ठयोः" इति पक्षे क्लिशेरनिट्त्वात् ततः परस्य क्त्वः कित्त्वविधानमनिट्क्त्वाकित्त्वव्यावृत्त्यर्थं स्यादिति वाच्यम् । गुधकुषक्लिशां "रलो व्युपधाद्" इति कित्त्वविकल्पान्नित्यकित्त्वविध्यर्थत्वात् नियमार्थत्वायोगात् ।

# रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ८

चकारात् क्त्वाग्रहणम् । 'रुदिर् अश्रुविमोचने,' 'विद ज्ञाने,' 'मुष स्तेये,' 'ग्रह उपादाने,' 'ञिष्वप् शये' 'प्रच्छ ज्ञीप्सायाम् । रुरुदिषति रुदित्वा । "स्वपिप्रच्छयोः सन्नर्थं ग्रहणं किदेव हि क्त्वा" इति भाष्यम् । "न क्त्वा सेड्" इतिनिषेधस्य सुप्त्वा पृष्ट्वेत्यत्राप्रवृत्तेः । अनिट्कत्वात् । अत एव अनिटः क्त्वः कित्त्वानियमार्थत्वमस्य न इति कैयटः ।

# इको झल् ९

इगन्तात्परो झलादिः सन् कित्स्यात् । क्त्वाग्रहणं त्वत्र निवृत्तम् । अनिट्कस्य तस्य स्वयमेव झलादित्वात् । बुभूषति, दिदीषते । कित्त्वेन गुणनिषेधः । अत एव एज्वि-

षयत्वाभावात् दीङो "मीनातिमिनोतिदीङाम्" इत्यात्वं न ।

न च झलन्तः सन्नित्यर्थोऽस्तु । ततश्च 'चिचीषिता' इत्यादौ अतोलोपस्थल एव कित्त्वं स्यात् न तु 'चिचीषति' इत्यादौ । सञ्शबकारयोरेकादेशस्य पूर्वं प्रत्यन्तवद्भावादिति वाच्यम् । आदिग्रहणानुवृत्त्या व्याख्यानात् । इग्ग्रहणे इक् स्मरणे इत्येव तु न गृह्यते, गर्गादिषु जिगीषुशब्दपाठस्य ज्ञापकत्वात् । जयतेः परस्यच सनः कित्त्वानुपपत्तिप्रसङ्गात्, झलितिप्रत्याहारसाहचर्याच्च । तत्समीपस्य हलोऽसम्भवाद्धलन्ताच्चेत्यस्यानन्वयप्रसङ्गाच्च इति न्यासकारः ।

अत्र वार्त्तिकम्—

"इकः कित्त्वं गुणो मा भूत् दीर्घारम्भात् कृते भवेत् ।
अनर्थकं तु ह्रस्वार्थं दीर्घाणा तु प्रसज्यते ॥
सामर्थ्याद्धि पुनर्भाव्यमृदित्त्वं दीर्घसंश्रयम् ।
दीर्घाणां नाकृते दीर्घे णिलोपस्तु प्रयोजनम्" ॥

अस्यार्थः—"इको झल् हलन्ताच्च" इत्येक एव योगो ऽस्तु किमर्थो योगविभाग इत्याक्षेपाभिप्रायः । यथाश्रुते तूत्तरमाह— "गुणो मा भूद्" इति । "सार्वधातुकार्द्धधातुकयोः" इत्यनेनेत्यर्थः । नन्वत्र "अज्झनगमां सनि" इति दीर्घो येननाप्राप्तिन्यायेन गुणस्य बाधको भविष्यतीत्याह—"दीर्घारम्भाद्" इति । दीर्घोत्तरं गुणप्रसक्तेस्तन्निषेधार्थं कित्त्वमित्युत्तरमाह—"कृते भवेद्" इति । रूपविशेषाभावे ऽपि मन्त्रजपादिवदावर्त्तमानस्यैव शास्त्रस्य फलसाधनत्वादिति भावः । नन्वेवं दीर्घविधिवैयर्थ्यं शास्त्रपूर्वकप्रयोगस्यैव धर्मनिमित्ततया शास्त्रप्रवृत्तिमात्रस्याप्रयोजकत्वादित्याह—"अनर्थकन्तु" इति । उत्तरमाह —"ह्रस्वार्थम्" इति । ह्रस्वानां दीर्घविधिसामर्थ्याद् गुणाभावे ऽपि दीर्घा-

न्तानां प्रयोजनविरहाद्दीर्घविध्यप्रवृत्त्या गुणः स्यादिति तन्निषेधार्थं कित्त्वमिति भावः । "दीर्घाणां तु" इति गुणनिषेधार्थं दीर्घेष्वपि दीर्घशास्त्रं प्रवर्त्तत एव । अदग्धदहनन्यायस्य फलाभावमूलकत्वात् । फलञ्च ह्रस्वेषु रूपान्तरसम्पत्तिः दीर्घेषु तु रूपान्तरानापत्तिरित्यन्यदेतत् । अत एव "मो राजि समः क्वौ" इति मकारस्य मकारादेशविधिः । तदेतदुक्तम्— "सामर्थ्याद्धि पुनर्भाव्यम्" इति । ननु दीर्घविधिना गुणस्येव इकारस्यापि बाधापत्तिः । चिकीर्षति, जिहीर्षति । "अज्झन"इति दीर्घः । "ऋत इद्धातोः"इतीत्वं हि तत्रेष्यत इत्याशङ्क्याह–"ऋदित्त्वम्"इत्यादि । दीर्घत्वव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वादिदादेशस्य न बाध इत्यर्थः । उक्तं हि–'यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यते" इति । ननु ह्रस्वान्तानां दीर्घाभावे इत्त्वप्राप्त्यभावे ऽपि दीर्घाणां दीर्घव्यतिरेकेणैव इत्त्वप्राप्तिरस्त्येवेत्याशङ्क्याह–"दीर्घाणां नाकृते दीर्घे" इति । तत्रापि गुणबाधार्थं दीर्घविधिरवश्यं प्रवर्त्तयितव्यः । अन्यथा"इत्त्वोत्त्वाभ्यां गुणवृद्धी विप्रतिषेधेन"इति गुणप्रसङ्गादित्यर्थः । तदेवं कित्त्ववैयर्थ्ये प्राप्ते सिद्धान्तमाह "णिलोपस्तु"इति । ज्ञपि+स+ति इतिस्थिते णेर्गुणो लोपो दीर्घत्वं चेति त्रयं प्राप्नोति । तत्राऽसति कित्त्वे निरवकाशत्वाद्विशेषाभावाच्च गुण इव लोपो ऽपि दीर्घेण बाध्येत । पाचयतेः पाक्तिः इत्यादौ णिलोपस्यापि सावकाशत्वात् । "पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान्" इति न्यायेन लोप एव बाध्येत । गुणस्तु स्यादेव । कित्त्वविधाने तु 'चिचीषति' इत्यादिषु गुणप्रसक्त्यभावात्तत्र लब्धावकाशं दीर्घत्वं परत्वाण्णिलोपेन बाध्यते इति सिद्धम् ।

स्यादेतत् । असत्यपि कित्त्वे येननाप्राप्तिन्यायेन गुणस्यैव दीर्घो बाधको भविष्यति न तु णिलोपस्य, गुणबाधेन च सावकाशं दीर्घत्वं परत्वादेव णिलोपेन बाधिष्यत इत्यनारभ्यमेव कित्त्वम् ।

अत्राहुः—बाध्यविशेषचिन्तायां तथात्वे ऽपि बाध्यसामान्यचिन्तायां स्वविषये प्राप्तस्य सर्वस्य बाधाभ्युपगमात् ।

स्यादेतत् । असत्यपि कित्त्वे 'निमित्सति' 'प्रमित्सति' इत्यत्र मीनातिमिनोत्योः सनि निरवकाशत्वाद् गुणं बाधित्वा दीर्घः । ततः मिनोतेरपि मीग्रहणेन ग्रहणात्प्रतिपदविधानादिसम्भावेन गुणबाधः । तदुत्तरं "हलन्ताच्च" इति कित्त्वेन लघूपधगुणबाधः । तथा च "सनिमी" इत्यत्र 'मी' इतिसामान्यग्रहणार्थत्वाद्दीर्घविधेश्चरितार्थतायां 'ज्ञीप्सति' इत्यत्र दीर्घं बाधित्वा परत्वादेव णिलोपो बाधिष्यते इति कृतं कित्त्वेन ।

मैवम् । उक्तरीत्या दीर्घस्य सावकाशत्वात् द्वाभ्यामपि गुणलोपाभ्यां दीर्घबाधापत्तेः कित्त्वारम्भस्यावश्यकत्वात् । न च दीर्घस्य कुङ्धातुरवकाशः, 'चुकूषति' इत्यत्र कुटादित्वेनैव ङित्त्वाद् गुणनिषेधसिद्धेरिति वाच्यम् । उक्तभाष्यानुरोधेन दीर्घान्तत्वनिर्णयात् इति कैयटादयः । नच 'गु पुरीषोत्सर्गे' 'ध्रु गतिस्थैर्ययोः' इति सन्नन्ताववकाश इति वाच्यम् । तथा सति उहनगमामित्येव पाठापत्त्या अजितिप्रत्याहारग्रहणवैयर्थ्यापत्तेः । एवं कुङो ह्रस्वान्तत्वे ऽपि बाधकाभाव इति न्यासकाराभिप्रायः ।

# हलन्ताच्च १०

अन्तपदस्यावयवार्थत्वे ऽनन्वयः । इको हलवयवत्वाभा-

ज्ञात् । इग्वतो हलन्तादिति न्यासे 'पिपक्षति' इत्यत्र सम्प्रसारणापत्तिः । इगुपधाद्धलन्तादिति न्यासे दम्भेः सन्यव्याप्तिः । सूत्रभेदश्च । तथापि समीपार्थोऽन्तशब्दः । इक्समीपाद्धलः परो झलादिः सन् कित्स्यात् । 'गुहू संवरणे' । जुघुक्षति । 'भिदिर् विदारणे' । बिभित्सति ।

अथ दम्भेः सनि धिप्सति इत्यत्र नकारस्य सन्परत्वाभावात् भकारस्य च इक्समीपत्वाभावात्कित्त्वाभावे नलोपो न स्यात् ।

उच्यते । हल्त्वजात्योभयोरैक्यमाश्रित्य इक्परत्वानपायात् । तदुक्तम्—"दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धम्" इति । इदं च "निपात एकाज्" इत्येकग्रहणेन ज्ञापितम् । हकारादिषु चाभिन्नप्रत्ययाभिधानात् हल्त्वजातेः सद्भावः । त्यक्तभेदा व्यक्तय एव जातिरिति पक्षे ऽपि भेदव्युदासादभेदाश्रयणादिष्टसिद्धिरिति कैयटः । यद्यपि वृद्धिसूत्रोक्तन्यायेन हल्त्वजातावतिरिक्तायां मानाभावः, तथापि हल्पदजन्यायामुपस्थितौ यावतीनां जातीनां हकारादौ प्रत्येकं भकारत्वं तदतिरिक्तवर्णत्वसाक्षाद्व्याप्यजात्यनवच्छिन्नत्वमेवात्र विवक्षणीयम् ।

# लिङ्सिचावात्मनेपदेषु ११

इक्समीपाद्धलः परौ झलादी लिङ् आत्मनेपदपरः सिच्च कितौ स्तः । क्लृप्सीष्ट, क्लृप्सीयास्ताम्, क्लृप्सीरन्, अक्लृप्त, अक्लृप्साताम्, अक्लृप्सत । ऊदित्वाद्वेट् । झलादी किम् । कल्पिषीष्ट अकल्पिष्ट इति इट्पक्षे मा भूत् ।

स्यादेतत् । आत्मनेपदेष्विति निर्द्धारणसप्तमी परसप्तमी

वा। नाद्यः। निर्द्धारणस्य सजातीयाविषयतया लिङ्मात्रस्य विशेषणापत्तेः। लिङिति तदादेशग्रहणात्। न द्वितीयः। सिचो विशेषणे ऽपि लिङस्तदयोगात्। सीयुड्विशिष्टस्य लिङ्पदार्थत्वे तदपेक्षया लिङ्परत्वानुपपत्तेः। नाप्यर्थद्वयपरत्वम्। सकृच्छ्रुतत्वात्। नाप्येकशेषः। अर्थभेदान्सहविवक्षाविरहात्। अत्र भाष्यम्—"उभयथा ऽप्यदोषः" इति।

तथाहि—आत्मनेपदं यौ लिङ्सिचावित्यर्थः। नच सिचस्तङानोभयभिन्नत्वादात्मनेपदत्वानुपपत्तिः। तत्परत्वेन आत्मनेपदस्य सिचि औपचारिकत्वात्। गौणमुख्यार्थयोरात्मनेपदशब्दयोः सारूप्यमात्रप्रतिबद्धैकशेषाश्रयणात्। द्वितीयेऽप्यदोषः। अवयवगतपौर्वापर्यस्य समुदाये आरोपात्। तन्त्रेणार्थद्वयलाभाद्वा। परन्तु सम्भवव्यभिचाराभ्यां सिजेवात्मनेपदेन विशेष्यते न तु लिङ्। परस्मैपदेषु लिङो झलादित्वाभावेन तत एवात्मनेपदग्रहणसिद्धावात्मनेपदविशेषणस्य वैयर्थ्यात्।

अथ सिचोऽप्यात्मनेपदविशेषणं किमर्थम् अयाक्षीत् इत्यादौ इक इत्येव व्यावृत्तेः। अचैषीद् इत्यादौ अच्परत्वाभावादेव तथात्वात्। 'अकोषीत्' इत्यादौ इडागमे कृते झलादित्वाभावात्। अभैत्सीत् इत्यादौ "वदव्रज" इति वृद्धेरिग्लक्षणत्वाभावादेव "क्ङिति च" इति निषेधविरहात्तत्यपि कित्त्वे क्षतिविरहात्।

मैवम्। अस्राक्षीत्, अद्राक्षीत् इत्यादौ "सृजिदृशोः" इत्यकिल्लक्षणस्यामागमस्यानुपपत्तिप्रसङ्गात्।

## उश्च १२

ऋवर्णात्परौ झलादी पूर्वोक्तौ कितौ स्तः। भृषीष्ट, भृषी-

ष्यास्ताम्, भृषीरन, अभृत, अभृषाताम्, अभृषत ।

## वा गमः १३

गमः परौ झलादी पूर्वोक्तौ कितौ वा स्तः । सङ्गसीष्ट, संगंसीष्ट, समगत, समगंस्त । कित्त्वपक्षे ऽनुनासिकलोपः ।

## हनः सिच् १४

हन्तेः परः सिच् कित्स्यात् आत्मनेपदे परे । आहत, आहसाताम्, आहसत । पुनः सिज्ग्रहणं "एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः" इति ज्ञापनार्थम् । तेन पूर्वसूत्रद्वये "लिङ्सिचावात्मनेपदेषु" इतिसंपूर्णसूत्रानुवृत्तिः ।

## यमो गन्धने १५

सिच् कित्स्यात् । गन्धनं परदोषाविष्करणम् । 'उदायत' । गन्धने किम् । 'उदायंस्त पादम्' । आकृष्टवानित्यर्थः ।

## विभाषोपयमने १६

प्राग्वत् । रामः सीतामुपायत, उपायंस्त महास्त्राणि ।

## स्थाघ्वोरिच्च १७

सिच् कित्, इच्चान्तादेशः । समस्थित, समस्थिषाताम्, समस्थिषत, अदित, अदिषाताम्, अदिषत ।

अत्र वार्त्तिकम्—

"इच्च कस्य तकारेत्त्वं दीर्घो मा भूदृते ऽपि सः ।
अनन्तरे प्लुतो मा भूत्प्लुतश्च विषये स्मृतः" ।

नचात्र हेतुपदप्रयोगविरहात् "षष्ठी हेतुप्रयोगे" इत्यस्याप्रसक्त्या कस्येत्यत्र हेतुतृतीयापत्तिः । अत्र सम्बन्धित्वेनैव विवक्षितत्वात् । 'मदीयाः पुत्राः' इत्यत्र अपत्यत्वप्रकारकविवक्षाविरहेण सम्बन्धिसामान्यार्थे छप्रत्ययोत्पत्तेः । "तकारेत्त्वम्" इत्यत्र कर्मधारयोत्तरं त्वप्रत्ययः । "दीर्घो माभूद्" इति । आकारस्थाने आन्तरतम्यात्तस्यैव प्रसङ्गात् । "भाव्यमानो ऽण् सवर्णान्न गृह्णाति" इति परिहारो नोक्तः । 'अमूभ्याम्' इत्यादौ भाव्यमानस्याप्युकारस्य ग्राहकत्वदर्शनात्, समाधानान्तरसद्भावाच्चेति भावः । "ऋतेऽपि सः" इति । "घुमास्था" इत्यादिनैव ईत्वस्य सिद्धत्वात् इकारविधिसामर्थ्यादेव दीर्घो न भविष्यतीत्यर्थः । कित्त्वन्तु विधेयमेव । अन्यथा "घुमास्था" इत्यस्याप्यप्रवृत्तेः । प्रयोजनान्तरमाह "अनन्तरे प्लुतो मा भूद्" इति । असदृशे आदेशे क्रियमाणे प्लुतो ऽपि प्रसज्येत तद्व्यावृत्त्यर्थं तपरत्वमित्यर्थः । तदपि प्रत्याचष्टे "प्लुतश्च" इति । यद्यनेन प्लुतो विधीयेत तदा यत्र विषये "अनन्त्यस्यापि प्रश्नाख्यानयोः" इत्यादिना प्लुतो विहितस्तत्राप्यनेन विधीयेत । अस्मिन्कर्तव्ये "पूर्वत्रासिद्धम्" इत्याष्टमिकप्लुतस्यासिद्धत्वात् । ततश्च पक्षे ऽनुवाददोषः स्यादिति ह्रस्व एव भवतीत्यर्थः ।

केचित्तु तपरत्वसमर्थनमेतत् । असदृशादेशे क्रियमाणे दीर्घ एव स्यात् । नच तस्योक्तरीत्या ऽन्यथासिद्धिः । प्लुतनिवृत्त्यर्थतया सिद्धस्यापि विधानोपपत्तेः । मा भूत्प्लुत-

इति चेन्न । "प्लुतश्च विषये स्मृतः" । स चासति तपरत्वे न प्राप्नोतीति दीर्घनिवृत्त्यर्थं तपरत्वं स्थितमिति व्याचख्युः ।

प्लुतविधौ तु "वाक्यस्य टेः" इत्यधिकारात्कथमेकस्य प्लुतः स्यादिति चिन्त्यमेतदिति कैयटः ।

# न क्त्वा सेट् १८

सेट् क्त्वा किन्न स्यात् ।

अत्र वार्त्तिकम्—

"न सेडिति कृते ऽकित्त्वे निष्ठायामवधारणात् ।
ज्ञापकान्न परोक्षायां सनि झल्ग्रहणं विदुः ।
इत्त्वं कित्सान्नियोगेन रेण तुल्यं सुधीवनि ।
वस्वर्थं किदतिदेशात् गृहीतिः क्त्वा च विग्रहात्" ।

अयमर्थः–अकित्त्वे इति छेदः । 'न सेड्' इति सूत्रणीयम् । क्त्वाग्रहणे फलाभावात् । नच गुधितो, गुधितवान् इति निष्ठायामपि कित्त्वनिषेधापत्तिः । "निष्ठा शीङ्स्विदिमिदि" इत्यादिनियमादेव तदभावात् । एभ्य एव परा निष्ठा न किदित्यर्थात् । एभ्यः परा निष्ठैव किन्न भवतीति विपरीतनियमस्य व्याख्यानादेव परित्यागात् ।

ननु तथापि, परोक्षापदं पूर्वाचार्यप्रसिद्ध्या लिट्परम्, तत्र कित्त्वनिषेधे पपिव, पपिमेत्यादौ "आतो लोप इटि च" इत्याकारलोपो न स्यादिति चेन्न । क्ङिदार्द्धधातुकं निमित्तीकृत्य तदभावे ऽपि इटमेवाश्रित्य तत्सिद्धेः । नच तथापि जग्मिव, जघ्निव इत्यादौ "गमहन" इत्युपधालोपः कित्त्वाभावान्न स्यादिति वाच्यम् । औपदेशिककित्त्वस्यैवायं निषधो न त्वातिदेशिकस्येति व्याख्यानात्'असंयोगाल्लिट् कित्'इति आतिदेशिकाकित्त्वस्य सुस्थ

त्वात् । नचात्र प्रमाणाभावः । "इको झल्" इत्यत्र झल्ग्रहणस्यैव मानत्वात् । तद्धि 'शिशयिषते' इत्यत्र कित्त्वं मा भूदित्येतदर्थम् । आतिदेशिकस्यापि कित्त्वस्य निषेधे तु तत्र "इक" इति कित्त्वप्रसक्तावपि "न सेड्" इत्यनेन तन्निषेधसम्भवात् झल्ग्रहणं व्यर्थमेव स्यात् ।

यत्तु "अस्त्वत्र कित्त्वम्" इति भाष्यम् । तत्रास्त्वित्यस्य प्राप्नोत्वित्येवार्थः । निवृत्तस्य निषेद्धुमशक्यत्वादिति कैयटः ।

तथा च हल्ग्रहणं आतिदेशिककित्त्वस्य "न सेड्" इत्यनेन बाधो नेत्यत्र ज्ञापकम् इति स्थितम् ।

स्यादेतत् । "स्थाघ्वोः" इत्यत्रानुवृत्त्यर्थं झल्ग्रहणं झलादावेव यथा स्यात्, उपास्थायिषाताम् इत्यत्र मा भूत् । कर्मणि लुङ् । स्था स् आतामिति स्थिते इत्त्वं चिण्वद्भावश्च प्राप्नोति । परत्वाच्चिण्वद्भावात् युक् च प्राप्नोति वृद्धिश्च । वृद्ध्यपवादत्वात् युक् । तत्र कृते यकारस्य इत्त्वं स्यात् । न च पुनर्वृद्धिः । सकृद्गतिन्यायात् ।

मैवम् । कित्त्वसंनियोगशिष्टस्य इत्त्वस्य कित्त्वव्यतिरेके प्रवृत्त्यनुपपत्तेः । अत एव सुधीवा, सुपीवा इत्यादौ ङीप्संनियोगेन रकार उच्यमानो ङीबभावे न भवति । नच "अनो बहुव्रीहेः" इति तन्निषेधः । तस्य ङीम्मात्रनिषेधकत्वात् । "सन्नियोगशिष्टानामन्यतराभावे उभयोरप्यभाव" इति परिभाषयैव रेफादेशनिवृत्तेः । स च न्यायो "बिल्वकादिभ्यश्छस्य लुग्" इत्यत्र छग्रहणेन ज्ञापयिष्यते । यद्वा, आकारस्य इत्त्वे कृते वृद्ध्यायादेशौ । युगागमेन वृद्धेर्बाधे ऽपि इकारस्य वृद्धिसम्भवात् । नच पपिवान्, तस्थिवान् इत्यादौ आकारलोपो न स्यात् । क्वसोः कित्त्वस्यौपदेशिक-

त्त्वात् इति वाच्यम् । इटमेवाश्रित्य तत्सिद्धेः । नच जग्मिवान्, जघ्निवान् इत्युपधालोपो न स्यादिति वाच्यम् । आतिदेशिककित्त्वेन सिद्धेः । नच अञ्जेः क्वसौ "असंयोगाद्" इत्यातिदेशिककित्त्वस्याप्रवृत्त्या औपदेशिकस्य च 'न सेड्' इत्यनेन बाधान्नलोपो न स्यादिति वाच्यम् । क्वसोश्छान्दसत्वात्तत्र लिटः सार्वधातुकसंज्ञाया अपि सत्त्वात् "सार्वधातुकमपिद्" इति ङित्त्वमेवाश्रित्य तत्सिद्धेः ।

कैयटस्तु–'अत्र नलोपे कृते द्विर्वचने एकादेशे च "वस्वेकाजाद्धसाम्" इति इट् । तत्र हि कित्त्वप्रतिषेधान्नलोपनिवृत्तौ द्विहल्त्वान्नुटि सत्येकाच्त्वाभावात् इण्निवृत्तौ नलोपादीनां चक्रकप्राप्तिः, चक्रकेषु चेष्टतो व्यवस्था । भाष्ये तु परिहारान्तरसद्भावादेष परिहारो नाश्रितः' इत्याह ।

तस्मात् क्त्वाग्रहणं न कार्यमिति प्राप्ते सत्याह "गृहीतिः" इति । निगृहीतिः, उपस्निहितिः, निकुचितिः । अत्र कित्त्वं मा भूत् । "तितुत्र–" इति इण्निषेधे "अग्रहादीनाम्" इति वचनात् इट् । क्रमेण संप्रसारणं, गुणाभावो, नलोपश्च सिद्ध इत्यर्थः । इदानीं क्त्वाग्रहणं प्रत्याचष्टे–"क्त्वाच" इति । "विग्रहात्" योगविभागात्–"पूङः" । पूङः परा सेट् निष्ठा न कित् । ततः । "क्त्वाच" ।पूङः इति निवृत्तम् । सेट् निष्ठा किन्नेत्यर्थः ।

# निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः १९

सेट् निष्ठा न कित् । शयितः । "विभाषा भावादिकर्मणोः-" इति वेट् । प्रस्वेदितश्चैत्रः, प्रस्विन्नः इत्यादि । सेट् किम् ।

भस्विन्नं तेन। भावे कित्त्वमेव।

## मृषस्तितिक्षायाम् २०

सेट् निष्ठा न कित्। मर्षितः। तितिक्षायां किम्। अपमृषितं वाक्यम्।

## उदुपधाद्भावादिकर्मणो-रन्यतरस्याम् २१

उदुपधात्परा भावे आदिकर्मणि च सेट् निष्ठा न कित्। द्योतितं तेन, द्युतितं वा, प्रद्योतितः प्रद्युतितो वा चैत्रः। "आदिकर्मणि क्तः कर्त्तरिच" इति कर्त्तरि, भावे च क्तः। शब्विकरणेभ्य एवायमिष्टः। नेह गुधितम्।

## पूङः क्त्वा च २२

क्त्वा निष्ठा च न कित्।

ननु सेडित्यन्यतरस्यामिति चानुवृत्त्या सेटोरेव क्त्वानिष्ठयोः कित्त्वविकल्पः स्यात्। ततश्च पुवित्वा पुवित इति पक्षे स्यात्। "पूङः श्च" इतीटो विकल्पात्।

अत्र वार्तिकं–"न वा सेट्त्वस्याकिदाश्रयत्वादनिटि वा कित्त्वम्" इति।

अस्यार्थः–इड्विधौ "पूङश्च" इति सूत्रं नारभ्यम्। तेनानिटोरेव क्त्वानिष्ठयोरयं कित्त्वविकल्पः। कित्त्वपक्षे "श्र्युकः किति" इति इट्प्रतिषेधात् पूत्वा पूत इति, तदभावपक्षे तु इड्गुणयोः पवित्वा पवित इति सिद्धम्।

भारद्वाजीयास्तु पठन्ति नित्यमकित्त्वमिडाद्योः, क्त्वाग्रहणमुत्तरार्थमिति । लाघवमनादृत्य सूत्रकारेण इड्विधौ "पूङश्च" इति पठितम् । इह च न विकल्पानुवृत्तिरुत्तरत्र वाग्रहणादिति सिद्धमिष्टम् । क्त्वाग्रहणं तूत्तरार्थम् । "न क्त्वा सेट्" इत्यनेन कित्त्वनिषेधसिद्धेः । एतच्च सूत्राभिप्रायवर्णनमात्रम् । कात्यायनेन तु उक्तरीत्या लाघवात्तत् सूत्रं प्रत्याख्यातम् ।

# नोपधात्थफान्ताद्वा २३

नकारोपधात्थकारफकारान्यतरान्तात्परः सेट् क्त्वा वा कित् । अन्तग्रहणं स्पष्टार्थम् ।

न्यासकारस्तु— एतत्प्रकरणे प्रयत्नं विना तदन्तविधिर्नेति ज्ञापनार्थं तत् । तेनोत्तरसूत्रे 'ऋत' इति रूपेण धातुर्गृह्यते नतु ऋदन्त—इत्याह । श्रथित्वा, श्रन्थित्वा, गुफित्वा, गुम्फित्वा । नोपधात्किम् । कोथित्वा, रेफित्वा । 'कुथ पूतीभावे' । 'रिफ कत्थनयुद्धहिंसादानेषु' ।

नच "रलो व्युपधाद्" इति विकल्पो दुर्वार इति वाच्यम् । नोपधग्रहणसामर्थ्यात् ।

# वञ्चिलुञ्च्यृतश्च २४

पूर्ववत् । 'वञ्चु प्रलोभने' । 'लुञ्च अपनयने' । वचित्वा, वञ्चित्वा, लुचित्वा, लुञ्चित्वा, ऋतित्वा, अर्त्तित्वा । ऋतिः सौत्रस्तकारान्तो अस्मादेव निर्देशादिति तृतीये वक्ष्यामः । ईयङभावपक्षे ऽयं विकल्पः ।

## तृषिमृषिकृषेः काश्यपस्य २५

पूर्ववत् । काश्यपग्रहणं पूजार्थम् । विकल्पस्य प्रकृतत्वात् । तृषित्वा, तर्षित्वा इत्यादि । 'ञितृषा पिपासायाम्' 'मृष तितिक्षायाम्" "कृष तनूकरणे" ।

## रलो व्युपधाद्धलादेः संश्च २६

नन्वयं किच्वस्य विधिः प्रतिषेधो वा । नाद्यः । क्त्वा ग्रहणवैयर्थ्यात् । तत्र किच्वस्य सिद्धत्वात् । नान्त्यः । सन्ग्रहणवैयर्थ्यात् । तस्य स्वयमेवाकिच्वात् ।

मैवम् । "न क्त्वा सेट्" इति किच्वनिषेधप्राप्त्या विधेरेव युक्तत्वात् ।

उश्च इश्च वी तदन्यतरोपधाद्रलन्ताद्धलादेः परौ सेटौ सन् क्त्वा च वा कितौ स्तः । दिद्युतिषते, दिद्योतिषते, द्युतित्वा, द्योतित्वा । रलः किम् । दिदेविषति, देवित्वा । व्युपधात्किम् । वर्तित्वा, विवर्तिषते । हलादेः किम् । एषित्वा, एषिषिषति ।

इह नित्यमपि द्वित्वं गुणेन बाध्यते । ओणेर्ऋदित्करणेन सामान्यत उपधाकार्यस्य द्वित्वात्प्राबल्यबोधनात् । सेट् किम् । भुक्त्वा, बुभुक्षते । आदिग्रहणं स्पष्टार्थम् । व्युपधस्य हलन्तत्वाव्यभिचारात् ।

## ऊकालोऽज्झ्रस्वदीर्घप्लुतः २७

ऊकाल इति तत्कालस्येतिवद्व्याख्येयम् । एकद्वित्रिमात्रा अचः क्रमेण ह्रस्वदीर्घप्लुतसंज्ञाः । समाहारे ऽपि सौत्रं पुंस्त्वम् । नच सञ्ज्ञित्रयनिर्देशे मानाभावः । सञ्ज्ञात्रयस्य लिङ्गत्वात् ।

नच ह्रस्वदीर्घप्लुतसञ्ज्ञा ऽप्येकैवेति वाच्यम् । ह्रस्वादिशब्दैरेवोत्तरत्र व्यवहारात्, समुदायस्य संज्ञात्वविरहात् ।

स्यादेतत् । उक्तक्रमेण संज्ञिनिर्देशे नियामकाभावः । नच प्लुतस्य आदौ मध्ये वा निर्देशे प्रकृतिभावापत्त्या तस्यान्त एव निर्देश इति वाच्यम् । त्रिमात्रस्यान्ते निर्देशं विना प्लुतसंज्ञाविरहे प्रकृतिभावस्य दूरापास्तत्वात् । एतेन ह्रस्वस्य घिसंज्ञात्वात्पूर्वमेव निर्देश इत्यपि निरस्तम् । ह्रस्वसंज्ञाया अपि पूर्वनिर्देशाधीनत्वात् ।

मैवम् । "विभाषा पृष्टप्रतिवचने हेः" इति मात्रिकस्य प्लुतविधानात् ज्ञापकात् । मात्राकालस्यान्ते निर्देशे हि तस्यैव प्लुतसंज्ञापत्त्या मात्रिकस्य मात्रिकविधानं व्यर्थं स्यात् ।

न च विसदृशादेशविध्यर्थं तत् । अन्तरतमपरिभाषायाः प्रत्यक्षाया बाधितुमशक्यत्वात् । अन्ते मात्रिकानिर्देशस्य सन्दिग्धत्वात् ।

नच तथापि ह्रस्वस्य मध्ये निर्देशः स्यादिति वाच्यम् । "अतो दीर्घो यञि" "सुपिच" इति दीर्घविधानाज्ज्ञापकात् । मध्ये मात्रिकानिर्देशे हि पूर्ववद्वैयर्थ्यं स्यात् ।

न च द्विमात्रस्यान्ते निर्देशः स्यादिति वाच्यम् । "ओमभ्यादाने"इति द्विमात्रस्य प्लुतविधानात् । वैयर्थ्यापत्तिः प्राग्वत् । लिङ्गद्वयेनान्त्यमध्याभ्यां मात्रिकस्यापकृष्टत्वात्परिशेषादादितो निर्देश इति सिद्धा संज्ञिव्यवस्था ।

स्यादेतत् । ह्रस्वस्याणत्वात्सवर्णग्रहणे द्वित्रिमात्रयोरपि ह्रस्वसञ्ज्ञापत्तिः, तयोस्त्वनणत्वान्न ह्रस्वस्य दीर्घप्लुतसञ्ज्ञाप्रसङ्गो दोषः ।

अत्र वार्त्तिकम्—

"सिद्धं तु तपरनिर्देशात्"। उदूकाल इति पठनीयम् । त-परत्वाच्च न ग्राहकत्वम् ।

नचैवं द्रुतायां तपरकरणे मध्यविलम्बितयोरुपसंख्याना-पत्तिः। "सिद्धन्त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते" इति तपरसूत्रे परिहृतत्वात् ।

भाष्यकृतस्तु—कालग्रहणान्न दोषः । ऊ अच् इत्युक्ते ऽपि अच्त्वेन उकारादिविशेषणे व्यभिचाराभावात् वैयर्थ्यापत्त्या उकारादिभिरेवाऽचो विशेषणात् उकारादिकालत्वात् तत्स-दृशस्याचो ग्रहणे सिद्धेऽपि कालग्रहणं श्रूयमाणेनैव उकारेण कालविशेषणं यथा स्यात् न तु तद्गृहीतसवर्णैरपीत्येतदर्थम् । षण्मात्रस्याचो ऽसंभवात् संज्ञात्रयकरणाच्च कालशब्दस्य मात्रि-केणाप्युकारेण सम्बन्धात् । यद्वा ग्रहणकशास्त्रे ऽशब्दसंज्ञेत्यनुव-र्त्यम्, शब्दस्य संज्ञायां विधेयायाम् अणुसवर्णग्राहको न भवती-ति न दोषः। गुणानामभेदकतया च उदात्तादीनामपि मात्रिकाणां ह्रस्वसंज्ञा । उदात्तादिसंज्ञासु त्वज्ग्रहणं निवृत्तमिति दीर्घप्लुता-नामपि तत्संज्ञासिद्धिः । न चैवं हलामपि तदापत्तिः ।अयोग्य-त्वात् । "इको यणचि" इत्यादिकं तु न संज्ञाविधानम्, किन्तु "आदिरन्त्येन" इति विहितसंज्ञानुवाद इति न दोषः ।

यद्वा ह्रस्वसंज्ञाविधानसामर्थ्यात् न दीर्घप्लुतयोर्ह्रस्वसंज्ञा । त्रयाणां ह्रस्वसंज्ञायां हि ह्रस्वप्रदेशेषु त्रयाणामुपस्थित्या ऽन्तरतमादेशविधाने ह्रस्वसंज्ञावैयर्थ्यम् । न च वचनसामर्थ्यात् अनन्तरतमोऽप्यादेशः स्यादिति वाच्यम् । अच इत्येव वक्तव्यत्वापत्तेः ह्रस्वसंज्ञायां फलविशेषाभावात् ।

ननु ह्रस्वसंज्ञायामसत्यां यत्र एचो ह्रस्वो विधीयते तत्र 'एच इग्' इति प्रदेशेषु वक्तव्यं स्यात्, सत्यां तु "एच इग्ग्र-

स्वादेशे" इति सकृदेवेति लाघवमिति चेद् । मैवम् । एवं हि एकं संज्ञायां त्रीणिचान्यत्रेति चत्वारि पदानि, चत्वारि च "एच इग्घ्रस्वादेशे" इत्यत्र इत्यष्टौ पदानि, स्थलत्रये "एच इग्" इत्युक्तौ तु षडेवेति लाघववैपरीत्यात् ।

ननु 'हेड वेष्टने' इत्यस्य 'हिडयति' इत्यर्थं "मितां ह्रस्व" इत्यत्र, परमनुमन्य इत्यर्थं "खित्यनव्ययस्य" इत्यत्र च "एच इग्" इत्यस्य वक्तव्यत्वात् दश पदानि भवन्ति । तेन यथान्यासं "ह्रस्वादेशे" इत्यत्र आङः पृथग्गणनेऽपि न निस्तारः । नवपदापत्तावपि दशापेक्षया लाघवादिति चेत् ।

अत्र कैयटः—'लाघवोपलक्षणपरं भाष्यम् । पञ्चकृत्व 'एच इग्' इत्युपादाने शब्दगौरवेऽपि प्रतिपत्तिलाघावानपाया-दिति । तदेव लघुना न्यासेन सिद्धे ह्रस्वविधानं द्वित्रिमात्रयोर्न ह्रस्वसंज्ञा इत्यत्र ज्ञापकमिति सिद्धम् ।

# अचश्च ॥ २८ ॥

ह्रस्वदीर्घप्लुतशब्दैर्यत्र विधानं तत्र अच इति षष्ठ्यन्तमुप-तिष्ठते । तच्छेषतदपवादपक्षावप्यत्र भाष्ये निरस्तौ । तथाहि-अलोऽन्त्यस्य विधयो भवन्ति अचो ह्रस्वदीर्घप्लुता अन्त्यस्येति एकवाक्यत्वे तच्छेषपक्षः । भिन्नवाक्यत्वे तु अचो ह्रस्वादयः अन्त्यस्यानन्त्यस्य वेति तदपवादपक्षः। आद्ये दोषवार्त्तिकं "ह्र-स्वादिविधिरलोऽन्त्यस्येति चेत् वचिप्रच्छिशमादिप्रभृतिहानिग-मिदीर्घेष्वज्ग्रहणम्" इति । वाक्, प्राट्, शाम्यति, क्राम्यति, जिघांस-ति, जिगांसति। अचोऽन्त्यत्वाभावाद्दीर्घो न स्यादिति तत्र तत्र अच इति वक्तव्यं स्यात्। द्वितीयेऽपि "अचश्चेन्नपुंसकह्रस्वाकृत्सार्वधा-तुकनामिदीर्घेष्वनन्त्यप्रतिषेधः" । अन्यथा सुवाक् कुलं, भिद्यते,

षण्णाम् इत्यत्राप्युक्तविधयः प्रसज्येरन्। यकारादौ यदङ्गं तस्यावयवो योऽच् इति व्याख्याने 'भिद्यते' इत्यत्रातिप्रसङ्गोक्तिः। अवयवयकारादिविशेषणे तदभावादेवमन्यत्रापीति कैयटः। यदि तु नोपधायाः एव नामि नियमः, तदा अन्यते, तन्यते इत्यत्र "अकृत्–" इति दीर्घः स्यात्। यदि नाम्येव नोपधाया इति, तदा षण्णाम् इत्यत्र "नामि" इति दीर्घः स्यात्। अथ नियमद्वयं, तथापि भिद्यते, सुवाक् इत्यत्रातिप्रसङ्गो दुर्वार एव।

तस्मात्पदोपस्थितिपक्ष एव सिद्धान्तः। तथाहि—प्रदेशेषु "अच" इति षष्ठ्यन्तस्योपस्थितौ वचिप्रच्छिशमादिप्रभृतिहानिगामिदीर्घेषु वच्यादयो विशेषणम् अच इति विशेष्यं तेषामचां दीर्घ इति। "ह्रस्वो नपुंसक" इत्यादौ तु अच इत्येतन्नपुंसकस्येत्यादेर्विशेषणमिति तदन्तविधिनाऽजन्तस्य नपुंसकस्येत्यादिरर्थ इति नातिव्याप्तिः।

ननु "दिव औत्" "पथिमथ्यृभुक्षामात्" "त्यदादीनामः" इत्यत्राप्यच इत्यस्योपस्थितिः स्यात्।

मैवम्। ह्रस्वदीर्घप्लुतशब्दानामत्र स्वरूपमात्रपदार्थकानां विधीयमानाज्विशेषणतया ह्रस्वादिशब्दैर्विधीयमानस्याच इत्यर्थसम्पत्तेः। नच विशेष्याणामचामुपस्थित्यर्थं तदुपयोगः। अनुवृत्तेन अच्पदेनैव तेषामुपस्थापितत्वात्।

नन्वेवमत्रैवाज्ग्रहणं क्रियताम् नतु पूर्वसूत्रे इति चेत्—

अत्र वार्त्तिकम्—

"अज्ग्रहणं संयोगाच्समुदायनिवृत्त्यर्थम्"। अन्यथा प्ररक्ष्य प्रतक्ष्य इत्यत्र मात्रिकस्यापि संयोगस्य ह्रस्वसंज्ञायां तुक् स्यात्। तितउच्छत्रम् इत्यत्र च अच्समुदायस्य द्वि-

मात्रतया दीर्घसंज्ञाया "दीर्घात्" "पदान्ताद्वा" इति तुग्विकल्पश्च स्यादित्यर्थः । नचैकमचमाश्रित्य ह्रस्वलक्षणस्तुगपि पक्षे भविष्यतीति वाच्यम् । दीर्घलक्षणेन परत्वात्तद्बाधे सकृद्गताविति पुनरप्रवृत्तेः । नापि "पुनःप्रसङ्गविज्ञानम्" । नित्यविकल्पविध्योर्विरोधात् पूर्वेण परस्य बाधप्रसङ्गात् । यत्र पूर्वो विधिः परं न बाधते तत्रैव क्वचित्तदाश्रयणात् । समुदायसन्निधाववयवानां पारतन्त्र्येण पृथक् कार्यानारम्भकत्वाच्च । नचाज्ग्रहणे कृतेऽपि वर्णग्रहणे जातिग्रहणात् अच्समुदायस्य दीर्घसंज्ञा दुर्वारैवेति वाच्यम् । ऊकाल इति विशेषणाद्व्यक्तेरेवोपादानात् जातेः परिमाणाभावात् व्यक्तिद्वारैव तदाश्रयणात् एकैकवर्णव्यङ्ग्यत्वेन जातेः समुदायव्यङ्ग्यत्वाभावादिति कैयटः ।

# उच्चैरुदात्तः ॥ २९ ॥

# नीचैरनुदात्तः ॥ ३० ॥

ननु उच्चनीचयोरापेक्षिकयोरव्यवस्थितत्वात्कथं लक्षणत्वम् । नच गात्राणां निग्रहरूप आयामो, रूक्षत्वरूपं दारुण्यं, कण्ठस्य संवृततारूपं खस्य अणुत्वं चेति उच्चैः कारणानि । गात्रशैथिल्यरूपोऽन्ववसर्गः, स्वरस्निग्धत्वरूपं मृदुत्वं, कण्ठमहत्त्वरूपं खस्योरुत्वं चेति नीचैःकारणानीति वाच्यम् । महाप्राणो हि पुरुषो नीचैरप्युच्चारयन् स्वरेण महान्तं देशं व्याप्नोति, अल्पप्राणस्तु उच्चैरप्युच्चारयन् अल्पमेवेति दोषतादवस्थ्यात् ।

अत्र वार्त्तिकम्—

"सिद्धन्तु समानप्रक्रमवचनात्" इति । प्रक्रम्यन्ते वर्णा अस्मिन्निति प्रक्रमः स्थानम् । तदयमर्थः—ताल्वादिस्थाना-

नाम् ऊर्ध्वाधोभेदेन भागद्वयम् । ऊर्ध्वभागेनोच्चार्यमाण उदात्तः, अधोभागेन त्वनुदात्तः । अभ्यासज्ञेयश्चायं स्वरविशेषः । षड्ज-वदिति । एते अचामेव गुणा न तु हलाम् । अजुपरागात्तु हलामपि तथोपलब्धिः । 'इषेत्वोर्जेत्वा' इत्यादौ यथा । नच वैपरीत्यम् । 'आप्यायध्वम्' इत्यादौ आकारोदात्तत्वे तिङन्तस्य निघाते आकारस्य हलुपरागं विनाऽप्युदात्तत्वात् । तस्मादन्वयव्यतिरेकाभ्यां हल एवाच्स्वरानुविधायिन इति सिद्धम् । "स्वयं राजन्ते ते स्वराः अन्वग्भवति व्यञ्जनमित्यन्वर्थसञ्ज्ञयाऽप्येवम्" इति भाष्यम् । यद्यपि सादृश्यं न किञ्चिदस्ति, तथापि सम्प्रदायमात्रात् इयं निरुक्तिः ।

यद्वा अञ्जेः गत्यर्थत्वाद्द्विविधं गच्छत्यजुपरागादिति निर्वचने तात्पर्यमिति कैयटः ।

# समाहारः स्वरितः ॥ ३१ ॥

यद्यप्यचोर्न समाहारः । कार्यं, क्व, कन्या इत्यादौ स्थानिद्वारकस्यापि तस्याऽसम्भवात् । "ऋहलोर्ण्यत्" "किमोऽत्" । तित्स्वरितः । गाङ्गेऽनूप इत्यादौ तु गाङ्गशब्दस्याणन्तत्वात् अन्तोदात्तत्वे अनूपशब्दस्य "अनोरप्रधानकनीयसि" इत्यनुदात्तादित्वे एकादेशस्य च "स्वरितो वा ऽनुदात्ते पदादौ" इति स्वरितत्वे स्थानिद्वारकतत्सम्भवेऽपि तस्य गौणत्वात् । आदेशस्य स्वरितस्य वर्णान्तरत्वात् । नाप्युदात्तत्वानुदात्तत्वयोरेव समाहारो ग्राह्यः । अच्प्रस्तावात् । तथापि गुणिनोः समाहारानुपपत्तौ गुणयोस्तदाश्रयणम् ।

न च समाहारस्य संज्ञित्वानुपपत्तिः, स्वरितसञ्ज्ञया योग्यतया अच एव संज्ञित्वेनाक्षेपादिति वाच्यम् । उपचारात्समाहा-

प्लुतोऽच एव संज्ञित्वात् ।

नचैवं त्रैस्वर्येणाधीमहे इत्यादिशिष्टव्यवहारविरोधः । कैश्चिदुदात्तगुणैः कैश्चिदनुदात्तगुणैः कैश्चिदुभयगुणैरिति तदर्थात् । स्वरत्रैविध्यपरत्वाभावात् ।

# तस्यादित उदात्तमर्द्धह्रस्वम् ॥ ३२ ॥

स्थिते गुणद्वयसमाहारे विभागप्रदर्शनार्थमारम्भः ।

ननु ह्रस्वग्रहणाद्दीर्घप्लुतस्वरितयोरयं विभागो न स्यात् । कन्या, शक्तिके३ शक्तिके इति "कन्याराजमनुष्याणाम्" इत्यन्तः स्वरितः । "स्वरितमाम्रेडिते ऽसूया" इति स्वरितः प्लुतः ।

मैवम् । अर्द्धह्रस्वशब्दः प्रमाणे रूढः । व्युत्पत्त्यर्थं ह्रस्वस्योपादानम् । अर्द्धमात्रा त्वनेनाभिधीयते ततः प्रमेये मात्रप्रत्ययः । "प्रमाणे लः" इति तस्य लुक् । ततश्च ह्रस्वदीर्घप्लुतयोरपि बुद्ध्या ऽर्द्धमात्राविभागसम्भवान्न दोष इति भाष्यकैयटयोः स्थितम् । अत एव ' "येनविधिः" इति सूत्रे ह्रस्वशब्दमप्रमुख्यया वृत्त्या मात्रार्द्धे वर्त्तमानमङ्गीकृत्य दीर्घप्लुतयोरुदात्तविभागः कृत' इति बृहद्विवरणकारैरुक्तम् ।

अत्र दीक्षिताः—ह्रस्वग्रहणमवयुत्यानुवादमात्रम् । अर्द्धमित्येव विवक्षितम् । तेन दीर्घप्लुतयोरपि पूर्वार्द्धमुदात्तम् । तच्च न समांशरूपं किन्तु लेशरूपम् । तत्र प्रातिशाख्यविशेषानुरोधेन कस्यां चिच्छाखायां समांशः, कस्यांचिदर्द्धमात्रेति विशेषः । एकश्रुत्यादीनां प्रातिशाख्यानुरोधेनैव व्यवस्थादर्शनात् । न च दीर्घस्वरितसमार्द्धस्योदात्तत्वे प्रमाणाभा-

वः । ये१ऽरा इत्यत्र एकारस्य, तनूनपाच्छचीपतिमित्यत्र च पदपाठे ऊदीतोरर्द्धोदात्ततया बह्वृचैः पठ्यमानत्वात् । तनूनपाच्छचीपतिशब्दयोः "उभे वनस्पत्यादिषु युगपत्" इति पूर्वोत्तरपदयोराद्युदात्तत्वे शेषनिघातः । पूर्वपदयोश्च तनूशचीपदयोरन्त्यस्य पाक्षिकं स्वरितत्वं प्रातिशाख्ये उक्तम्–

जात्यवद्वा तथा वाऽन्त्यौ तनूशचीति पूर्वयोः । इति ।

स्वरितार्द्धस्योदात्तत्वे प्रातिशाख्यमपि–

एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः ।
तस्योदात्ततरोदात्तादर्द्धमात्रार्द्धमेव वा ॥
अनुदात्तः परः शेषः स उदात्तश्रुतिर्न चेत् ।
उदात्तं वोच्यते किञ्चित्स्वरितं वाऽक्षरं परम् । इति ।

स्वर इत्यन्तं स्वरितलक्षणम् । पूर्वेतिपदस्योदात्तानुदात्तत्वपरत्वात् । तस्य स्वरितस्य स्वतन्त्रोदात्तापेक्षया उदात्ततराऽर्द्धमात्रा बोध्येति । अर्द्धमात्रेति 'क३वोऽश्वाः'इत्याद्यभिप्रायम् । न चैवं स्वतन्त्रोदात्तापेक्षया उदात्ततराऽर्द्धमात्रा बोध्या इत्यस्य नीचस्थानत्वादनुदात्तत्वापत्तिः।अत्यन्तनीचस्यैव स्थानस्य तत्रोपादानात् । अर्द्धेति दीर्घाभिप्रायम् । अनेनैव त्रयाणामुपसंग्रहादिदमेवादर्त्तव्यमिति सूचयितुमेवकारः। अर्द्धमात्रापेक्षया समांशस्य बहुत्वेन तदुपकारकत्वात् । चरमोपन्यासाच्च । प्रातिशाख्यसमाख्यया तच्छाखापरत्वलाभे तच्छाखायां स्वरितस्य समानोदात्तपाठाच्च । अनुदात्त इत्यादि परिशेषसिद्धार्थानुवादः । स शेष उदात्तश्रुतिः । किमविशेषेण ? नेत्याह–नचेत्यादि । उदात्तस्वरितपरं विहायेत्यर्थः ।

शाकल्यो ऽप्याह—

अप्राकृतस्तु यः स्वारः स्वरितोदात्तपूर्वगः ।

उदादायार्द्धमस्याथ शिष्टं निघ्नन्ति कम्पितम् ॥
उदादाय उदात्तं कृत्वेत्याहुः ।

अत्र वदन्ति—नेदं युक्तम् । उक्ताकरग्रन्थविरोधात् । शाखाविशेषे तथा पाठेऽपि सर्वशाखासाधारणस्यास्य तदेकवाक्यतया संकोचानर्हत्वात् । लौकिकप्रयोगे विशेषवचनाभावे ऽर्द्धमात्रैवोदात्तेत्यत्र तात्पर्यात् । उक्तप्रातिशाख्यं च न साधकम् । अर्द्धमात्रा, अर्द्धमेव वेति पक्षयोः पाणिनिशाकल्ययोः सामान्यविशेषलक्षणाभिप्रायेण व्यवस्थितत्वात् । एवकारो विशेषलक्षणेन कृतायाः सामान्यलक्षणव्यावृत्तेरनुवादार्थः । वाशब्दो व्यवस्थितविकल्पार्थ इति ।

अपिच समांशग्रहणेऽर्द्धग्रहणवैयर्थ्यं "समं स्यादश्रुतत्वाद्" इत्येव सिद्धेः ।

न चार्द्धमात्राया अपि लाभार्थं तत् । उभयसाधारणरूपाभावात्, लेशत्वस्यैकस्याभावात्, एकशेषादिकल्पनेऽपि गौरवात् ।

एतेनार्द्धह्रस्वशब्देनार्द्धमात्रा लक्ष्यत इति हरदत्तादिग्रन्थास्तु मतान्तरपरतया कथंचिन्नेया इति परास्तम् । हरदत्तोक्तस्यैव प्रकृतसूत्रार्थत्वात् ।

यत्तु—आकरे अर्द्धमात्रायामर्द्धह्रस्वशब्दस्य रूढेरुक्तत्वात् समुदायस्य शक्त्यभावेन लक्षणाया अयोगाच्चायुक्त एव इति ।

तन्न । अर्द्धमात्रायां रूढावपि कैयटोक्तरीत्या तदवच्छिन्नधर्मिणो लक्षणयैव लाभात् । मात्रच्प्रत्ययलोपं न जानतामपि बोधोदयात् । तदनुशासनस्य "गुणवचनेभ्य" इत्यादिवल्लक्षणातात्पर्यग्राहकत्वादित्यास्तां विस्तरः ।

प्रकृतमनुसरामः—

अत्र वार्त्तिकं–"स्वरितस्यार्द्धह्रस्वोदात्तादोदात्तस्वरितपरस्य सन्नतरादूर्द्धमुदात्तादनुदात्तस्य स्वरितात्कार्यं स्वरितादिति सिद्ध्यर्थम्"

अस्यार्थः–आ अर्द्धह्रस्वोदात्तादिति आकारच्छेदः । इयं नवसूत्री "उदात्तादनुदात्तस्य स्वरितः" इत्येतदुत्तरमष्टमे पठनीया । तेन 'इमं मे गङ्गे यमुने सरस्वति' इत्यत्र मे–शब्दात्स्वरितात्परेषां गङ्गेत्यादीनाम् आमन्त्रितनिघातादनुदात्तानां "स्वरितात्संहितायामनुदात्तानाम्" इति वचनादेकश्रुतिर्भवति । अन्यथा "उदात्तादनुदात्तस्य" इति त्रैपादिकस्वरितस्य "स्वरितात्" इत्यत्रासिद्धत्वात्स्वरितात्परत्वमनुदात्तानां नास्ति इति एकश्रुतिर्न स्यात् । न चाश्रयात्सिद्धत्वं शङ्क्यम् । 'कार्यम्' इत्यादौ षाष्ठस्वरिते सावकाशत्वात् ।

"स्वरितोदात्तार्थं च" ।

तथाहि–सुब्रह्मणि साधुरिति यत्प्रत्ययः तित्त्वात्स्वरितः, ततष्टाप् पित्त्वादनुदात्तः, एकादेश आन्तरतम्यात्स्वरितः । तत्रानुदात्तभागस्यापि विद्यमानत्वात् । ओमित्युदात्तः । "ओमाङोश्च" इत्युदात्तस्वरितयोरेकादेशः स्वरित एव । एकदेशान्तरतम्यात् । इन्द्रशब्दश्चामन्त्रितत्वादनुदात्तः । 'सुब्रह्मण्योमिन्द्र आगच्छ' इत्यत्र "न सुब्रह्मण्यायां स्वरितस्य तूदात्तः" इत्योकारस्य स्वरितस्योदात्तविधानं सावकाशमिति त्रैपादिकस्य स्वरितस्योदात्तो न स्यात् । 'इन्द्र आगच्छ' इति यथा ।

"स्वरितोदात्ताच्च स्वरितार्थम्" ।

'इन्द्र आगच्छ, हरिव आगच्छ' । आशब्द उदात्तः । गच्छेति शेषनिघातादनुदात्तः । "उदात्तादनुदात्तस्य" इति स्वरितः । तस्यासिद्धत्वादुक्तसूत्रेणोदात्तत्वं न स्यात् ।

श्लोके उत्तरार्द्धे एवानुदात्तपदं प्रयुक्तम्, पूर्वान्वयभ्रम-वारणाय पुनःपदं प्रयुक्तम् । शौनकीये स्वराष्टकेऽपि–'एका-दिष्टमुदात्तेन तं तमेव नयेत्स्वरम्' इत्युक्तम् । एकादेशे प्रति-योगित्वेनानुदात्तस्यानुपादानाद्' इत्याहुः ।

तन्न । शाखाविशेषे तथा पाठस्य प्रातिशाख्यविधिनैव सिद्धे तदनुरोधेन सर्वभाषादर्शिभाष्यकारादिव्याख्यानस्यो-ल्लङ्घयितुमशक्यत्वात् ।

# एकश्रुति दूरात्सम्बुद्धौ ३३ ।

दूरात्संबोधने वाक्यमेकश्रुति स्यात् । 'आगच्छ माणवक' । पक्षे माणवकशब्दटेः प्लुत उदात्तः । एक-श्रुतिप्लुताभ्यामवयवभेदेन वाक्ये समुच्चिताभ्यां दूरात्सम्बो-धनं द्योत्यते । सम्बुद्धिपदं सम्बोधनपरम् । एकवचन-परत्वे 'देवा ब्राह्मणा' इत्यादावव्याप्तेः । तदुक्तम्—"उ-भयगतिरिह शास्त्रे भवति" इति । क्वचिदकृत्रिमस्यापि ग्रहणमि-त्यर्थः । एकवचनस्य दूरादिति विशेषणानुपपत्तेः । सम्बोधनस्य तु क्रियारूपत्वादपादानतया तत्सम्भवात् । एकश्रुतिश्च नो-दात्ता, "उच्चैस्तरां वा वषट्कार"इत्युदात्तविधानात् । अन्यथा "यज्ञकर्मणि" इत्येकश्रुत्यैव सिद्धेः । नाप्यनुदात्ता । "उदात्तस्व-रितपरस्य सन्नतर" इत्यनुदात्तत्वविधानात् । एकश्रुत्यनुवृत्त्यैव सिद्धावनुदात्तविधानमनर्थकं स्यात् । तस्मात्क्षीरोदकवदुदात्ता-नुदात्तयोर्भेदातिरोधानमेकश्रुतिरित्यर्थः सिद्धः । अत्रैव प्रच-यव्यवहारो वैदिकानाम् । स्वरिते तु त्रिभागेन तयोरुपलब्धिः । अन्ये तु व्याचक्षते–उभयत्रापि तरनिर्देशस्तन्त्रम् । "सोमस्याग्ने-वीहि३वौ३षट्" इत्यत्र "यज्ञकर्मणि"इत्येकश्रुतिर्विहिता, तदपे-

अया वौषट्शब्दस्योदात्ततरत्वं विधीयते। तच्चैकश्रुतेरुदात्तानुरागं विनाऽनुपपन्नम्। उत्कर्षस्य सप्रतियोगिकत्वात्। एवं "सन्नतर" इत्यत्रापि ।

तथा च सप्त स्वराः—उदात्तः, उदात्ततरः, अनुदात्तः, अनुदात्तरः, स्वरितः, स्वरितोदात्तः, स्वरित एवानुदात्तेनोपरक्त एकश्रुतिः । कस्यचित्तु स्वरितस्योदात्तभागो नानुदात्तेनानुरज्यत इति पृथक् स्वरितनिर्देश इति सिद्धम् ।

# यज्ञकर्मण्यजपन्यूङ्खसामसु ३४ ।

मन्त्रो यज्ञकर्मण्येकश्रुतिः स्यात् जपादीन्वर्जयित्वा । "अग्निर्मूर्द्धा दिवः"।यज्ञेति किम्। स्वाध्यायकाले त्रैस्वर्यमेव यथा स्यात्। अजपेति किम्। "ममाग्ने वर्चो विहवेष्वस्तु"। जपो नामोपांशुप्रयोगो यथा जले निमग्नस्य। न्यूङ्खास्तु षोडश ओकाराः। तेषु प्रथमसप्तमत्रयोदशास्त्रय उदात्तास्त्रिमात्राः, इतरे त्रयोदशानुदात्ता अर्द्धौकाराः। एवं चाश्वलायनेनोक्तमुदाहृतं चेति प्रसादकारः। "गीतिषु सामाऽऽख्या"इति जैमिनिसूत्रम्। अजपेतिपर्युदासात्तत्सदृशमन्त्रे इदमैकश्रुत्यम्। अत एव "इन्द्रशत्रुशब्दे ऊह्यमाने नैतत्प्रवृत्तिः" इति पस्पशायां प्रपञ्चितम्।

# उच्चैस्तरां वा वषट्कारः ३५ ।

यज्ञकर्माणि वौषट्शब्द उच्चैस्तरां वा स्यादेकश्रुतिर्वा । "सोमस्याग्ने वीहि३वौ३षट्"। वषट्शब्दोपादानं वैचित्र्यार्थम्।

वौषट्शब्दस्यैव विवक्षितत्वात् इति संप्रदायः । एतस्मान्निर्देशा-देव वर्णानिर्देशाभावेऽपि कारप्रत्ययः। तेन स्वाहाकारो हन्तकार इत्यादिसिद्धम् ।

# विभाषा छन्दसि ३६ ।

छन्दसि एकश्रुतिर्वा । व्यवस्थया च विकल्पः । यथा—बह्वृचानां संहितायां त्रैस्वर्यम्, ब्राह्मणे त्वेकश्रुतिरित्यादि । विकल्पस्य प्रकृतत्वेऽपि "यज्ञकर्मणि" इत्यस्य निवृत्तिसूचनार्थं पुनर्विभाषाग्रहणम् ।

ननु यज्ञकर्मण्येव नित्याया वैकल्पिकयाश्चैकश्रुतेर्विरोधाद्वि-धातुमशक्यत्वात्सामर्थ्यादेव 'यज्ञकर्मणि' इत्यस्य निवृत्तिसम्भ-वात्पुनर्विभाषाग्रहणं व्यर्थमिति चेन्न । अजपेत्यादिपर्युदासा-न्नित्यैकश्रुतेर्मन्त्राविषयकत्वम्, वैकल्पिकयास्तु ब्राह्मणपरत्वमिति व्यवस्थासम्भवात् । प्रतिषेधपक्षेऽपि नित्यैकश्रुतेरेव ऊहादिवि-षयत्वम्, वैकल्पिकयास्तु छन्दोविषयत्वमिति सम्भवात्तन्नि-वृत्त्यर्थतया सार्थक्यात् ।

अत्र व्याचक्षते—तन्त्रेणावृत्त्या वा "अच्छन्दसि" इति नञ्प्रश्लेषा-द्भाषायामप्यैच्छिको विकल्पः । दाण्डिनायनादि—सूत्रे "ऐक्ष्वा-कस्य स्वरभेदार्थं पृथक् निपातनम्" इत्युक्त्वा "एकश्रुत्यानिर्दे-शात्सिद्धम्। एकश्रुतिर्हि स्वरसर्वनाम। यथा—नपुंसकं लिङ्गसर्व-नाम" इति भाष्योक्तेः। अत एव विरुद्धस्वरकसमासद्वयस्यैकश्रुत्या सङ्ग्रहादभियुक्तानां श्लेषकाव्यनिर्माणं सङ्गच्छते। अत एव इन्द्र-शत्रुशब्दे बहुव्रीहिस्वरेण दोषप्रवृत्तिरुक्ता पस्पशायाम्, तदन्ते "श्वेतो धावति अलम्बुसानां याता" इति भाष्यं च। "वेद इव

लोके स्वरो न विशेषाध्यवसायहेतुः” इति काव्यप्रकाशस्य त्वेकश्रुत्या पाठादित्याशयः ।

नचैवं “झल्युपोत्तमम्” इति प्रक्रम्य “विभाषा भाषायाम्”इत्युक्तेर्वैयर्थ्यम् । त्रैस्वर्येण प्रक्रमे पाक्षिकानुदात्तलाभार्थत्वात् । वेति प्रकृते विभाषाग्रहणात्सूत्रकृतां तन्त्रादेरनभिमतत्वात् ।स्वरविधौ छन्दोऽधिकाराभावाच्चेति तिष्ठतु विस्तरः।

# न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ३७ ।

सुब्रह्मण्याख्ये निगदे पूर्वेण प्राप्ता एकश्रुतिर्न भवति किन्तु वचनान्तरविहितस्य स्वरितस्योदात्तः स्यात् । “सुब्रह्मण्योम्” । “इन्द्र आगच्छ” । ओकारस्योदात्तत्वं व्याख्यातम् । “ओमभ्यादाने” इति प्लुतोदात्तत्वं तु नास्ति, तस्याऽयज्ञकर्मविषयत्वादिति सम्प्रदायः । इन्द्रशब्द आमन्त्रिताद्युदात्तः, शेषनिघातेनाकारोऽनुदात्तः । “उदात्तादनुदात्तस्य” इति तस्य स्वरितः, तस्यानेन उदात्तः । “निपाता आद्युदात्ता” इत्याकार उदात्तः । गच्छ इत्यस्य “तिङ्ङतिङः” इति निघातः । “उदात्ताद्” इति गकाराकारस्य स्वरितः । तस्याप्युदात्तः । तथाच छकारभिन्ना आद्याश्चत्वार उदात्ताः । नच “उदात्ताद्” इति छकारस्याप्युदात्तत्वापत्तिः । तदुत्तरमेतत्प्रकरणपाठस्य पूर्वमुक्तत्वात्स्वरितोदात्तस्यासिद्धत्वात् ।

“हरिव आगच्छ” इत्यत्र आमन्त्रिताद्युदात्तः, इकारस्य

शेषनिघातः, तस्य स्वरितः, तस्योदात्तत्वम् इति 'हरिव' इत्यत्र द्वावुदात्तावन्त्योऽनुदात्तः । 'आगच्छ' इत्यपि पूर्ववत् ।

"आगच्छ मघवन्" इत्यत्र "आमन्त्रितस्य" इति मघवच्छब्दोऽनुदात्तः ।

"मेधातिथेः" इति षष्ठ्यन्तस्य "मेष" इत्यामन्त्रिते पराङ्गवद्भावात् आमन्त्रितस्वरेण मेधातिथिशब्दावयवो मे इत्युदात्तः, धा इत्यस्योक्तरीत्या स्वरितस्यानेनोदात्तः। मेधा इति द्वयमुदात्तम्। इतरदनुदात्तम् । एवं "वृषणश्वस्य मेने गौरावस्कान्दिन्नहल्यायै जार" इत्यादिषु पराङ्गवद्भावादि योज्यम् ।

"कौशिकब्राह्मण गोतमब्रुवाण" इत्यत्रापि द्वौ द्वावुदात्तावन्येऽनुदात्ताः । नच तृतीयस्यापि "उदात्तादनुदात्तस्य" इति स्वरितत्वादनेनोदात्तत्वापत्तिः, एवं परेषामपीति वाच्यम् । स्वरितग्रहणसामर्थ्यात् सर्वेषामुदात्तत्वे इष्टे "न" इत्यपहाय "सुब्रह्मण्यायामुदात्त" इत्येव ब्रूयात् । तस्मादुभयग्रहणसामर्थ्यान्न सर्वेषामुदात्तत्वम् ।

"श्वः सुत्यामागच्छ मघवन्"। श्व इति निपातस्वरेणाद्युदात्तः । सुत्याशब्दः "संज्ञायां समजनिपदनिपतमनविदषुञ्शीङ्भृञिणः" इति सुनोतेः क्यपि तत्रोदात्तानुवृत्तेरन्तोदात्तः, शेषनिघातेन 'सु' इत्यनुदात्तः । "उदात्तस्वरितपरस्य" इत्यनुदात्ततरः । आगच्छ इति द्वावुदात्तौ परोऽनुदात्त इति पूर्ववत् ।

"द्व्यहे सुत्याम्, त्र्यहे सुत्याम्" द्व्यह इति टजन्तत्वादन्तोदात्तम् ।

तथा च सामब्राह्मणम्—"तस्मादुत्करे तिष्ठन्सुब्रह्मण्यः सुब्रह्मण्यायाह्वयति–सुब्रह्मण्यो३म्, सुब्रह्मण्यो३म्, सुब्रह्मण्यो३म् इति ।

ह्वयमिव त्रिराह त्रिषत्या हि देवाः । 'इन्द्रागच्छ' इति यदाह 'इन्द्रागच्छ' इत्येतद्वा अस्य प्रत्यक्षं नाम तेनैवैनं त्रिराह्वयति । 'हरिव आगच्छ' इति, पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी ताभ्यां हीदं सर्वं हरति । 'मेधातिथेर्मेष' इति, मेधातिथिं ह काण्वायनिं मेषो भूत्वा जहार । 'वृषणश्वस्य मेने'। वृषणश्वस्य ह मेनका नाम दुहिताऽऽस तां हेन्द्रश्चकमे । 'गौरावस्कन्दिन्' इति । गौरमृगो ह भूत्वाऽवस्कद्यारण्याद्राजानं पिबति । 'अहल्यायै जार' इति । अहल्याया ह मैत्रेय्या जार आस । 'कौशिकब्राह्मण' इति । कौशिको ह स्मैनं ब्राह्मण उपन्येति । 'गोतमब्रुवाण' इति । देवासुरा ह संयत्ता आसंस्तानन्तरेण गोतमः शश्राम, तमिन्द्र एत्योवाच—इह नो भवान्स्पशश्चरत्विति, नाहमुत्सह इति, अथाहं भवतो रूपेण चराणीति, यथा मन्यस इति । स यत्तद् गोतमो अब्रुवाणश्चचार गोतमरूपेण वा तदेतदाह गोतमासीति । अर्हे सुत्यामागच्छ मघवन्निति, तद्यथाऽर्हतो ब्रूयादिति अर्हे वः पक्ताऽस्मि तदागच्छतेत्येवमेवैतद्देवेभ्यः सुत्यां प्राह । 'देवा ब्राह्मणाः' इति, देवा ह वै देवा अथ हैते मनुष्यदेवा ये ब्राह्मणाः शुश्रुवांसो ऽनूचानास्ते मनुष्यदेवाः । आहुतय एव देवानां दक्षिणा मनुष्यदेवानाम्, आहुतिभिर्हि देवान्प्रीणाति दक्षिणाभिर्मनुष्यदेवाञ्छुश्रुवुषोऽनूचानान्ब्राह्मणान्प्रीणाति" इति ।

"असावित्यन्तः" ।

वाचनिकमिदम् । प्रथमान्तस्यान्त उदात्तः । 'गार्ग्यो यजते, वात्स्यो यजते । ञित्वादाद्युदात्त्वं प्राप्तम् ।

तथा च द्राह्यायणिसूत्रम् "अर्थनिर्वचनमुच्चान्तम्" । 'अर्थो निरुच्यते बोध्यते प्राधान्येन प्रतिपाद्यते ऽनेनेत्यर्थनिर्वचनम् । पदमिति यावत् । पदमित्येव तु नोक्तम् । समासे पूर्वपदानामन्तोदात्तता मा भूद्' इति व्याख्यातारः । यजते

इत्यस्य निहतस्य "उदात्ताद्" इति स्वरितत्वे उदात्तः ।

"अमुष्येत्यन्तः" ।

षष्ठ्यन्तोपलक्षणमिदम् । 'दाक्षेः पिता यजते' । पूर्ववत् ।

"स्यान्तस्योपोत्तमं च"

अदन्तस्य षष्ठ्यन्तस्य उपान्त्यं चकारादन्तश्चेत्युभयमुदात्तं स्यात् । गार्ग्यस्य पिता यजते, वात्स्यस्य पिता यजते ।

"वा नामधेयस्य" ।

स्यान्तस्य नामधेयस्योपोत्तमं वा उदात्तं स्याद्, अन्त्यस्तु स्यादेव । देवदत्तस्य पिता यजते । 'जनिष्यमाणानाम्' इत्यत्र प्रत्ययस्वरेण स्यशब्द उदात्तः, "तास्यनुदात्तेद्" इति लसार्वधातुकस्वरेण शानजनुदात्तः । "उदात्ताद्" इति स्वरितः । तस्यानेनोदात्तत्वमिति ष्यमौ उदात्तौ । अन्यच्छेषनिघातेनानुदात्तम् । 'पितापितामह' इत्यत्र तु पितामहप्रपितामहयोः "असौ" इत्यन्तोदात्तत्वे "उदात्ताद्" इति स्वरितत्वे प्रकृतसूत्रेण पिप्रशब्दयोरेवोदात्तत्वं नतु तत्परतोऽपि ।

# देवब्रह्मणोरनुदात्तः ३८ ।

अत्र वार्त्तिकम्—"देवब्रह्मणोरनुदात्तत्वमेके" इति । देवा ब्रह्माण आगच्छत । अयमर्थः—देवा ब्रह्माण इति पदयोर्वैयधिकरण्यपक्षे पूर्वस्यामन्त्रितस्याविद्यमानवद्भावादुभयोरपि आमन्त्रिताद्युदात्तत्वे शेषनिघाते स्वरितत्वे च कृतेऽनुदात्तविधिरर्थवान । यदि तु तयोः सामानाधिकरण्यं तदा "विभाषितं विशेषवचने बहुवचनम्" इति पक्षे विद्यमानत्वाद् "आमन्त्रितस्य"इति निघातेनैव सिद्ध्या प्रयोजनाभावात् ।

# स्वरितात्संहितायामनुदात्तानाम् ३९ ।

स्वरितात्परेषामनुदात्तानां संहितायामेकश्रुतिः स्यात् । "इमं मे गङ्गे यमुने सरस्वति" । इममित्यन्तोदात्तम् । मे इत्यनुदात्तम् । "अनुदात्तं सर्वम्" इत्यधिकारात् । "उदात्तादनुदात्तस्य" इति तस्य स्वरितः । ततः परेषां गङ्गे इत्यादीनामेकश्रुतिः । संहितायां किम् । पदपाठे आमन्त्रितनिघातेनानुदात्तत्वमेव यथा स्यात् ।

स्यादेतत् । 'अनुदात्तानाम्' इति बहुत्वं विवक्षितं न वा । नाद्यः । 'आग्निवेश्यः', 'पचति' इत्यत्र द्वित्वैकत्वयोरव्याप्तेः । आग्निवेश्यशब्दो हि गर्गादियञन्तत्वादाद्युदात्तः । शेषनिघाते द्वितीयः "उदात्ताद्" इति स्वरितः । वेश्येति वर्णद्वयमनुदात्तम् । पचति इत्यत्र धातुरुदात्तः । शप्तिपौ पित्त्वादनुदात्तौ । शबकारः स्वरितः । ततः पर एक एवानुदात्त इत्येकश्रुतिर्न स्यात् ।

नान्त्यः । "इमं मे गङ्गे यमुने सरस्वति" इत्यत्र मेशब्दस्य स्वरितत्वात्ततः परस्यैकस्यैवैकश्रुतिः स्यात्, न 'यमुने' इत्यादीनाम्, व्यवहितत्वात् । "तस्मादित्युत्तरस्य" इतिवचनात् ।

अत्र भाष्यम्—वचनत्रयान्तानामनुदात्तपदानामेकशेषोऽयमिति ।

सरूपसूत्रारम्भपक्षे चेदम् । जातिपक्षे तु "जात्याख्यायाम्" इति बहुवचनम् । ततश्चैकद्विबहुषु स्वरितात्परस्या जातेरानन्तर्येणोपलम्भात्सर्वेषामेकश्रुत्यसिद्धिः ।

नन्वाद्ये षट्प्रभृतीनामेव कार्यं स्यात्सहविवक्षायामेकशेष-

विधानात् समुदितानामेव कार्यान्वयादिति चेन्न । निर्देशसङ्ख्या विवक्षायामपि प्रत्येकं कार्यप्रवृत्तेः, देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामितिवत् ।

## उदात्तस्वरितपरस्य सन्नतरः ४० ।

उदात्तः स्वरितो वा परो यस्मात्तस्यानुदात्तस्यानुदात्ततरः । "सरस्वति शुतुद्रि"। "व्यचक्षयत्स्वः" । इति वृत्तिकाराद्यः ।

केचित्तु–एकश्रुतिस्वरस्यानुदात्ततरः स्यादित्येवार्थः । अन्यथा "एकश्रुति दूरात्" इतिसूत्रगतभाष्यकैयटविरोधात् ।

किञ्च अस्यासिद्धत्वात्सरस्वतीशब्दावयवेकारस्यापि पूर्वेणैकश्रुतिः स्यात् ।

नचायं तदपवादः। अग्निम्, कन्या इत्यादौ सावकाशत्वात् ।

नच "न सु ने" इत्यत्र 'न' इति योगविभागान्नासिद्धत्वमिति हरदत्तादिरीत्या निर्वाहः । तदर्थ योगविभागस्य भाष्यादावनुक्तेः । अन्यथा शास्त्रान्तपाठकल्पनस्यापि वैयर्थ्यात् । एकश्रुतेरिव स्वरितस्यापि परत्वाद्बाधोपपत्तौ "नोदात्तस्वरितोदयम्" इतिसूत्रवैयर्थ्याच्चेति प्राहुः ।

## अपृक्त एकाल्प्रत्ययः ४१ ।

एकोऽल् यत्र स प्रत्ययोऽपृक्तसंज्ञः । प्रदेशाः–"सुतिस्यपृक्तं हल्" इत्यादयः ।

स्यादेतत् । एकहलित्येव वक्तव्यम् । 'अपृक्तं हल्' इत्यत्र हल्पदपरित्यागे लाघवात् । अल्ग्रहणे तु बिभेदेत्यादौ णलो लोपवारणाय तदावश्यकत्वात् ।

मैवम् । "यूनि लुगणिञोः" इति पदद्वयोच्चारणे गौरवात् ।

हल्ग्रहणेतु अपृक्तस्येत्येव तत्र वक्तव्यत्वात् ।

नचैवं फाण्टाहृतेरपत्यं फाण्टाहृतः । "फाण्टाहृतिमिमता-भ्याम्" इतिणप्रत्ययस्यापि लुगापत्तिः । अण एव लुका सिद्धौ णविधानानर्थक्यापत्त्या तद्वारणात् ।

नच "यञिञोश्च" इतिफग्बाधनार्थतया तत्सार्थक्यम् । पैलादिपाठं कृत्वाऽपि फको वारयितुं शक्यत्वात् ।

मैवम् । यथान्यासे ऽपृक्तसंज्ञायां हल्ग्रहणम्, हल्ङ्यादिसूत्रे द्वितीयहल्ग्रहणम्, "अणिञोः" इत्यत्रापृक्त-ग्रहणं चेति त्रयम्; उक्तरीत्याऽप्यपृक्तसंज्ञायां हल्ग्रहणम्, "अ-णिञोः"इत्यत्राणिञ्पदयोर्ग्रहणं चेति पदत्रयमेवेति न लाघवम्।

एवं च तथाऽप्येकग्रहणं मास्तु।नच दार्विः,जागृविरित्यादाव-तिप्रसङ्गः। अलेव यः प्रत्यय इति व्याख्यानात्।अन्यथाऽल्पद-वैयर्थ्यात्।अलन्तस्येत्यर्थे केवलस्याद्यन्तवद्भावेन तथात्वाश्रयणे तद्व्यावर्त्याभावात् ।

नचैवं हल्ग्रहणेऽपि समानम् इति वाच्यम् । अजन्तव्या-वृत्त्या तदन्तविधेश्चरितार्थत्वापत्तेः।तस्माद् "एकग्रहणं वर्णग्रहणे जातिग्रहणम् इति ज्ञापनार्थम्" इति भाष्यम्। "निपात एकाज्" इत्यत्र ज्ञापितस्यापि पुनर्ज्ञापनं मन्दबुद्ध्यनुग्रहार्थमिति कैयटः।

# तत्पुरुषः समानाधि-करणः कर्मधारयः ४२ ।

सामानाधिकरण्यं द्वेधा शाब्दमार्थं च । आद्यं यथा—नी-लमुत्पलमिति पदद्वयस्य, समानविभक्तिकत्वात् । द्वितीयमपि तत्रैव तदर्थयोरभेदेन विशेषणविशेष्यभावात् ।

तत्राद्यं बाधितसाधारणं 'माता वन्ध्या' इत्यादिदर्शनात् । द्वितीयं त्वबाधितमात्रवृत्तीति विवेकः । शब्दानुशासनप्रस्तावादाद्यमेवात्र निविष्टम् । काञ्चनमयवह्निमानित्याद्यभियुक्तप्रयोगदर्शनात् ।

वार्त्तिपदयोरेकविभक्तिकयोर्यस्तत्पुरुषः कर्मधारयसंज्ञः स स्यात् ।

तत्पुरुषप्रकरणादन्यत्रैतदारम्भस्तु कर्मधारयसंज्ञायास्तत्पुरुषसंज्ञाबाधकत्वं मा भूदिति । तत्रैकसंज्ञाधिकारात् । नीलश्च तदुत्पलं च नीलोत्पलम् । चित्रा गावो यस्येत्यादिबहुव्रीहेरपि समानाधिकरणत्वाद्व्यभिचारवारणाय तत्पुरुष इति । राजपुरुष इत्यादिवारणाय समानाधिकरण इति ।

नच तत्पुरुषस्य समुदायस्यैक्यात्सामानाधिकरण्यानुपपत्तिस्तस्य भेदनियतत्वादिति वाच्यम् । तत्परुषपदस्य तद्घटकपदलक्षकत्वात् ।

ननु मुख्यतत्पुरुषस्यापि सामानाधिकरण्यं सम्भवति–राजपुरुषः शोभन इत्यादौ, तत्र चरितार्थत्वात्कुतो लक्षणा ।

अत्र कैयटः–तत्पुरुषस्य पदान्तरेण सामानाधिकरण्यं बहिरङ्गं वर्त्तिपदानां तु तदन्तरङ्गमिति ।

नचैवं प्रत्येकं पदानामेव कर्मधारयसंज्ञाऽऽपत्तिः । एकाज्द्विर्वचनन्यायेन पदसमुदायस्यैव संज्ञाविधानात् ।

# प्रथमानिर्दिष्टं समास उपसर्जनम् ४३ ।

समासविधौ प्रथमान्तं पदमुक्तसंज्ञम् । कृष्णं श्रितः कृष्णश्रितः । कृष्णादिशब्दानां प्रथमान्तत्वाभावेऽपि "द्विती-

श्रित-" इत्यादौ तत्समर्पकद्वितीयादिपदानां प्रथमान्तत्वात् । तथाच समासपदं तद्विधायकशास्त्रपरमिति फलितम् । समासघटकपदापेक्षया समासविधेर्लघुतया तत्परत्वस्यैव न्याय्यत्वात् ।

स्यादेतत् । निर्देशापेक्षया समासस्याधारत्वात् एकत्र प्रथमानिर्दिष्टस्य सर्वत्रोपसर्जनसंज्ञा स्यात् । तदुक्तम्— "यस्य विधौ प्रथमानिर्देशस्ततो ऽन्यत्रोपसर्जनसंज्ञाप्रसङ्ग" इति । ततश्च राजकुमारीश्रित इत्यत्र श्रितादिसमासे कुमारीशब्दस्य प्रथमानिर्दिष्टत्वादुक्तसंज्ञायाम् उपसर्जनत्वानिमित्तो ह्रस्वः, पूर्वनिपातश्च पूर्वपदे षष्ठीतत्पुरुषेऽपि स्यात् ।

अत्र वार्त्तिकम्—

"सिद्धन्तु यस्य विधौ तं प्रतीति वचनाद्" इति ।

यस्य श्रितादेः समासविधौ प्रथमानिर्दिष्टं तं प्रत्येवोपसर्जनसंज्ञेत्यर्थात् । उपसर्जनमित्यन्वर्थसंज्ञया यत्प्रतियोगिकं यस्याप्रधानत्वं तत्प्रतियोगिकैवोक्तसंज्ञेति लाभात् ।

नन्वेवमर्द्धपिप्पली, पुरुषव्याघ्र इत्यादौ पूर्वपदार्थप्रधानेऽर्द्धादिशब्दानामुक्तसंज्ञा न स्यात् ।

मैवम् । अर्थसम्भवे सत्येवान्वर्थसंज्ञानां प्रवृत्तिनिमित्तमपेक्ष्य प्रवृत्तेः । अन्यत्र तु तदनपेक्ष्यैव, विधानसामर्थ्याद् । अत एव स्वादीनां कर्मप्रवचनीयसंज्ञेति वक्ष्यते ।

एतेन राज्ञः पुरुषस्येत्यादिकमपि व्याख्यातम् ।

भाष्ये तु परिहारान्तरमप्युक्तम् । पूर्वनिपातप्रकरणे हि "न वाऽनिष्टदर्शनाद्" इति पूर्वनिपातं प्रत्याख्यायोक्तम्–"षष्ठ्यन्तयोः समासेऽर्थाभेदात्प्रधानस्यापूर्वनिपातः" इति । वाक्यसमासयोरेकार्थत्वानुरोधाद्राज्ञ एव पूर्वनिपातो न पुरुषस्य, अन्यथाऽर्थभेदप्रसङ्गात् ।

न च राज्ञः कुमार्या इत्यत्रोपसर्जनह्रस्वापत्तिः । पुनर्ङीप्प्र-

म्भवादिष्टापत्तेः। वक्ष्यते हि—"परवल्लिङ्गम्" इति, "शब्दशब्दार्थौ" इति। यद्यप्येतत्तत्रैव दूषणीयं तथाप्यन्वर्थसंज्ञायामेव तात्पर्यम्।

# एकविभक्ति चापूर्वनिपाते ४४।

समासे यन्नियतविभक्तिकं तदप्युक्तसंज्ञं न तु तस्य पूर्वनिपातः। तत्तत्प्रयोगव्यक्तौ सर्वस्याप्येकविभक्तित्वात् सामर्थ्यात् यस्य पर्यायेणापि न सर्वविभक्तित्वं तस्येयं संज्ञा। 'निष्कौशाम्बिः' इत्यत्र हि कौशाम्बीशब्दो निष्क्रमणक्रियाऽपेक्षया ऽपादानशक्तिसम्बन्धात्पञ्चम्यन्त एव। क्रियान्तरापेक्षया शक्त्यन्तरानावेशात्।

स्यादेतत्। श्रितादिसमासे द्वितीयाद्यन्तानां कृष्णादिशब्दानामप्यनेन पूर्वनिपातनिषेधः स्यात्, पूर्वसूत्रस्य नीलोत्पलादिसमानाधिकरणसमासे सावकाशत्वात्।

मैवम्। अत्र पर्युदासाश्रयणात् पूर्वेण तत्र सिद्धेः।

यद्वा "एकविभक्ति-" इत्यनेन विहितोपसर्जनसंज्ञानिबन्धनस्यैव पूर्वनिपातस्य प्रतिषेधः। "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इतिन्यायात्।

"एकविभक्तावषष्ठ्यन्तवचनम्"

इह मा भूत् अर्द्धं पिप्पल्या अर्द्धपिप्पली। एकदेशिसमासमात्रविषयकश्चायं निषेध। तेन पञ्चानां कुमारीणां समाहारः पञ्चकुमारि इत्यादौ उपसर्जनत्वमेवेति द्वितीये विस्तरः।

"प्रयोजनं द्विगुप्राप्तापन्नालंपूर्वोपसर्गक्रान्ताद्यर्थे"।

क्रमेणोदाहरणम्। पञ्चभिर्गोभिः क्रीतः पञ्चगुः, प्राप्तो जीविकां प्राप्तजीविकः, आपन्नो जीविकामापन्नजीविकः, अलङ्कुमार्यै अलङ्कुमारिः, निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः।

इति सिद्धान्तसुधानिधौ प्रथमाध्यायस्य द्वितीये पादे प्रथमाह्निकम्॥

# अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ४५ ।

धातुप्रत्ययभिन्नमर्थवच्छब्दरूपं प्रातिपदिकसंज्ञं स्यात् । महासंज्ञाकरणं "को धातुः, कः प्रत्ययः, किं प्रातिपदिकम्" इत्याथर्वणश्रुत्यनुरोधात् । अर्थपदमभिधेयपरम् । संज्ञिविशेषलाभार्थमिदम् । तदुक्तम्—"अर्थवदितिव्यपदेशो वर्णानां मा भूद्" इति । नचाधातुरित्यादिपर्युदासात्तद्भिन्नस्यार्थवत एव लाभः । धर्मान्तरप्रयुक्तसादृश्यवतो वारणीयत्वात् । तेन वर्णेषु प्रत्येकं न व्यभिचारः । "वर्णानां च मा भूद्" इतिपाठे दशदाडिमाद्यनर्थकपदसमुदायस्य चकारेण समुच्चयः ।

स्यादेतत्—अस्तु वर्णानां संज्ञा । न च स्वादेरापत्तिः । एकवाक्यतया संख्याकर्मादिषु तेषां विधानात् ।

नैवम् । अविशेषेण स्वादीनामुत्पत्तेः । ततोऽर्थनियमः प्रकृतार्थापेक्षो वा प्रत्ययनियम इति अव्ययादिवत्सुपां दुर्वारत्वात् । ततश्च धनं वनमित्यादौ समुदायस्य पृथक् प्रातिपदिकसंज्ञायां तदन्तर्भावात् विभक्तिलोपेऽपि नलोपापत्तिः । न चाधातुरिति निषेधः । प्रत्येकस्माद्विभक्तेरापाद्यत्वात् । तत्र च धातुत्वाभावात् । अर्थवद्ग्रहणपरिभाषाया विशिष्टरूपोपादानविषयकत्वात् । "प्रादूहोढ" इत्यादिवत् ।

यत्तूक्तम्—"संघातस्यैकार्थ्यात् सुबभावो वर्णाद्" इति, तद् वर्णानामर्थवत्त्वपक्षे तन्त्रेणैकयैव विभक्त्या समुदायावयवार्थगतैकत्वप्रतीतिसिद्धेः । अनर्थकस्य तु संज्ञायां प्रकाशनीयार्थ-

विरहात् प्रत्येकवर्णादपि स्याद् । अन्यद् विचारितं पस्पशायाम् ।

ननु "सुपो धातुप्रातिपदिकयोः" इत्यत्र धातोः पार्थक्येन ग्रहणात् धातोः प्रातिपदिकसञ्ज्ञाविरहो ज्ञापयिष्यते । अन्यथा पुत्रीयतीत्यादौ प्रातिपदिकत्वादेव लुक्सिद्धेः तेन "अहन् वृत्रम्" इत्यादौ न नलोपापत्तिरित्यधातुग्रहणं व्यर्थम् ।

मैवम् । तत्र "अप्रत्यय" इति प्रातिपदिकसंज्ञानिषेधात् तदर्थतया धातुग्रहणोपपत्तेः ।

नच प्रत्ययलक्षणेन "अप्रत्यय" इति संज्ञानिषेधः । "न ङिसम्बुद्ध्योः" इत्यनेन लोपे कार्ये प्रत्ययलक्षणमाश्रित्योक्तपर्युदासो न प्रवर्तते इति ज्ञापितत्वात् ।

अप्रत्यय इति किम् । काण्डे, कुड्ये । अत्र विभक्त्यन्तस्य सञ्ज्ञायां "ह्रस्वो नपुंसके प्रातिपदिकस्य" इति मा भूत् ।

अत्र भाष्ये छिद् भिद् इत्यादौ 'अधातुः' इति निषेधात्प्रातिपदिकसंज्ञाविधायकत्वेन कृद्ग्रहणस्य चरितार्थत्वेऽपि तद्धितग्रहणस्य नियमार्थत्वं भविष्यति—एतदन्तस्यैव प्रत्ययान्तस्य संज्ञेति ।

स्यादेतद्—पदानां प्रत्येकं प्रत्ययान्तत्वेऽपि वाक्यस्य प्रातिपदिकसंज्ञा स्यात् । नच तत्र प्रत्ययान्तपर्युदासेन निर्वाहः । 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य च' इति प्रकृतिप्रत्ययसमुदायस्यैव ग्रहणात् । ननु अर्थवत्त्वाभावादेव तद्वारणम् । अन्वयव्यतिरेकाभ्यां पदानामेवार्थवत्त्वात्, वाक्यस्य चाकाङ्क्षादिलभ्यत्वात् ।

मैवम् । ध्वनिव्यङ्ग्यं नित्यं वाक्यं पदार्थसंसर्गरूपविशिष्टवाक्यार्थवाचकम् । अन्यथा वाक्यार्थस्याशाब्दत्वं स्यात् ।

तथाच वाक्यमेव मुख्यः शब्दः, वाक्यार्थ एव मुख्यः शब्दार्थः । पदपदार्थावस्थापनं तु लाघवार्थं सादृश्यात्कल्पितान्वयव्यतिरेकावाश्रित्य कल्पितम् । प्रतिवाक्यं व्युत्पत्त्यसम्भवात् इति सिद्धान्तात् ।

अत्र वार्तिकम्--

"अर्थवत्समुदायानां समासग्रहणं नियमार्थम्" इति ।

नन्वेवं बहुपटवः, उच्चकैः, नीचकैः इत्यादिकानामपि संज्ञा न स्यात् । द्योत्यवाच्याभ्यामर्थाभ्यां प्रत्ययस्य प्रकृतेश्चार्थवत्त्वात् अर्थवत्समुदायत्वरूपप्रतियोगितावच्छेदकधर्मावच्छिन्नत्वात् ।

नच संज्ञाविरहे यथा स्वाद्युत्पत्तिर्न भवति, तथा पूर्वोत्पन्नविभक्तिलोपोऽपि न भविष्यति इति तथैव सिद्धिरिति वाच्यम् । स्वरे दोषप्रसङ्गात् ।

तथाहि-"चित" इति सूत्रे "चितः सप्रकृतेः बह्वकजर्थम्" इतिवचनात्प्रकृतिमन्तर्भाव्य चित्स्वरो विधीयते । तथाच 'पटव' इति जसन्तस्य बहुचं प्रति प्रकृतित्वात् जसकारस्योदात्तत्वं स्यात् । पूर्वोपन्नसुपो लोपे तु पुनरुत्पन्नविभक्तेः प्रकृतावनन्तर्भावाट्टाकारस्योदात्तत्वमिति सिद्धमिष्टम् । उच्चकैरित्यादावपि अकज्वतः समुदायाद्विभक्त्यभावे पदत्वाभावाद् 'उच्चकैः पठति' इत्यादौ "तिङ्ङतिङः" इति निघातानुपपत्तिः, पदादित्याधिकारात् । तन्मध्यपतितन्यायस्यानाश्रयणेनेदम् । तस्मात्प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञा भवत्येवेति ज्ञापनार्थम् अप्रत्यय इति वक्तव्यम् ।

नचैवं बहुपटव इत्यादेरपि निषेधापत्तिः । प्रत्ययान्तस्यैव प्रतिषेधात् ।

न च 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणाभावः'। यत्र संज्ञा विधेया तत्रैव तन्निषेधात्। अत्र तु संज्ञाप्रतिषेध इति वैषम्यात्।

न च जसन्तं बहुपटव इत्येतदपि प्रत्ययान्तमेवेति वाच्यम्। पटुशब्दादेव जसुत्पत्तेः, समुदायस्य तदन्तत्वाभावात्।

न च न विद्यते प्रत्ययो यस्मिन् इति बहुव्रीहिणा प्रत्ययादेरपि बहुपटव इत्यस्य निषेधः स्यादिति वाच्यम्। वर्त्तिपदार्थप्राधान्येन तत्पुरुषस्यान्तरङ्गत्वात्।

अत्र भाष्यम्—तुल्यजातीयस्यैव समासग्रहणेन नियमः क्रियते सुबन्तानामेव समासविधानात्।

न चाश्वक्रीतीत्यादौ "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः" इतिवचनादसुबन्तेनापि सुबन्तस्य समासोऽस्तीति वाच्यम्। भेदसंसर्गद्वारकार्थवत्त्वयुक्तानामित्यर्थादिति कैयटः।

तथाच प्रकृतिप्रत्ययभावानापन्नसमुदायस्य समासभिन्नस्योक्तनियमेन व्यावृत्तिरिति फलितम्।

एतेनोक्तदोषभिया प्रत्ययान्तप्रतिषेधसामर्थ्यात्प्रकृतिप्रत्ययसमुदायस्य संज्ञा भवत्येवेति न्यासग्रन्थो यथाश्रुतपरत्वेन व्याख्यातः।

केचित्तु–यत्र संघाते पूर्वो भागः पदम् उत्तरस्तु प्रत्ययस्तस्य व्यावृत्तिः। बहुपटव इत्यत्र पूर्वभागस्य पदत्वाभावान्न दोषः। जन्मवानित्यादौ तूत्तरभागस्य प्रत्ययत्वात्। न च तद्धितग्रहणसामर्थ्यम्। औपगव इत्यादौ पूर्वस्य भसंज्ञया तत्र चरितार्थत्वात्। न चान्तर्वर्त्तिविभक्तिमाश्रित्य पदसंज्ञा। तुल्यावधिकया भसंज्ञया

द्बाधात् । न च 'अयमियान्' इत्यादिसमुदायस्य संज्ञाप्रसङ्गः पूर्वभागस्य पदत्वेऽप्युत्तरस्य प्रत्ययत्वादुक्तनियमेन तत्र प्रवृत्त्यभावादिति वाच्यम् । तद्विहितत्वस्यापि प्रत्ययविशेषणत्वात् । तद्विहितत्वाभावप्रयुक्तविशिष्टाभावस्य तत्राप्यनपायादित्याहुः ।

न च सुप्तिङ्समुदायस्य संज्ञापत्तिः । "जहिकर्मणा बहुलमाभीक्ष्ण्ये कर्त्तारं चाभिदधाति" इत्यस्य नियमार्थत्वात् । यद्यपि समाससंज्ञा समासान्तोदात्तार्था तथापि समासत्वादेव प्रातिपदिकत्वमिति तत्तुल्यजातीयताप्रतिपादनार्थमेतदुक्तमिति कैयटः ।

न च 'पश्य धावति' इत्यादेस्तिङ्समुदायस्य तदापत्तिः । "आख्यातमाख्यातेन क्रियासातत्ये" इत्यस्य नियमार्थत्वात् । तस्मात्समासग्रहणेन तुल्यजातीयानां सर्वेषां वाक्यानां नियमान्निवृत्तिरिति सिद्धम् ।

अत्र वदन्ति–नैयायिकमते समासस्य शक्तिलक्षणोभयरहितत्वादर्थवत्त्वाभावादप्राप्तसंज्ञाविधायकत्वे बहुपटव इत्यादेरासिद्धिः, तद्धितान्तत्वाभावात्समासत्वाभावात् ।

न च तद्धितग्रहणं तद्विशिष्टपरमिति वाच्यम् । पचतकीत्यादावतिव्याप्तेरिति ।

तन्न । पदार्थद्वयस्य विशेष्यत्वप्रकारत्वाभ्यामन्वयात् यत्र विशिष्टार्थलाभस्तादृशसमुदायस्यैव तैरनर्थकत्वोपगमात् । बहुचस्तु स्वार्थिकप्रत्ययत्वेन पटुशब्दस्यैव तादृशार्थकत्वात् ।

तथाच अयं विशेषः–वैयाकरणानां वाक्यसमासयोरपि बहुपटव इत्यादिवदर्थवत्त्वात्समासग्रहणस्य नियमार्थत्वाद् वाक्यवद्बहुपटव इत्यादेरपि व्यावृत्तिप्रसक्तौ तद्व्यावृत्तं नियमप्रतियोगितावच्छेदकं रूपमाश्रित्य वाक्यस्य संज्ञा वार्यते ।

नैयायिकानां तु समासस्य विशेषविधानात्संज्ञा न तु वाक्यस्य, विशेषविध्यभावाद् । अर्थवत्त्वाभावेन सामान्यविधेरप्रवृत्तेश्च । बहुपटव इत्यादेस्तु उभयमते ऽप्यर्थवत्त्वादेव प्रातिपदिकसंज्ञेति ।

यदप्युक्तम्–समासग्रहणस्य नियमार्थत्वाभावे 'मूलकेनोपदंशम्' इत्यादौ समुदायस्य प्रसङ्गः। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् । वैयाकरणमते तु समासग्रहणकृतनियमेन परत्वात्तद्बाधात् । एवञ्च "कृतद्धित" इति सूत्रे कृद्ग्रहणपरिभाषा नोपतिष्ठते एव फलाभावादिति ।

तदप्यसत् । विधिमुखेन नियमप्रवृत्तौ निषेधस्याक्षेप्यत्वात् प्रत्यक्षविधिना समं विप्रतिषेधायोगात् । आक्षेप्यापेक्षया प्रत्यक्षस्य बलवत्त्वात् । निषेधस्य समासभिन्नपरताया इव कृद्भिन्नपरताया अप्यवश्यं कल्पनीयत्वात्।

निषेधमुखेन प्रवृत्तिरिति पक्षेऽपि कृद्ग्रहणपरिभाषया कारकपूर्वस्यापि प्रातिपदिकसंज्ञायां सिद्धायां परेणापि नियमेन व्यवच्छेदो न स्यात् । कारकपूर्वस्य प्रातिपदिकसंज्ञाविधेरन्यत्र सावकाशत्वाभावात् सावकाशनिरवकाशयोर्विप्रतिषेधानुपपत्तेः।

न च नियमानुरोधात्तदप्रवृत्तिः । नियमस्य कृद्भिन्नपरत्वम्, कृद्ग्रहणपरिभाषासङ्कोचो वा कल्प्यते इत्यत्र नियामकाभावात् । परिभाषाया अप्रवृत्तौ नियमस्य कृत्साधारण्यम्, तत्सिद्धौ तत्परिभाषाया अप्रवृत्तिरित्यन्योऽन्याश्रयापत्तेश्च । प्रत्युत तस्याः प्रथमोपस्थितिकतया कारकपूर्वस्य संज्ञासिद्धौ नियमस्य तद्भिन्नपरताया एव युक्तत्वात् ।

अत एव "कृत्तद्धित" इत्यत्र कृद्ग्रहणपरिभाषोपस्थाने 'मूलकेनोपदंशम्' इत्यत्र समासाभावपक्षेऽपि

तृतीयाया लुक् स्यात् । न च समासविकल्पविधिवैयर्थ्यम् । 'दाधिउपदंशम्' इत्यत्र शाकलप्रकृतिभावार्थतया तदुपपत्तेः । अन्यथा "अमैवाव्ययेन" इति नित्यसमासापत्त्या "सिन्नित्यसमासयोः प्रतिषेधो वक्तव्यः" इति शाकलप्रकृतिभावनिषेधापत्तेरिति कैयटेन चतुर्थे उक्तम् । "गतिकारकोपपदात्कृत्" इति उत्तरपदप्रकृतिस्वरविरहार्थं तया तदुपपत्तिरिति च सीरदेवेनोक्तम् । परत्वान्नियमेन तत्संज्ञाबाधमनभिधाय कृद्ग्रहणपरिभाषाया अप्रवृत्तेरेव तेन प्रथममुक्तत्वात् ।

तथाहि प्रष्ठीत्यादौ समासात्प्रागेव "पुंयोगाद्"इत्यादिवचनैर्ङ्यादिप्रत्ययः स्यादित्याशङ्क्य प्रष्ठादिसमुदायस्य प्रातिपदिकत्वाभावात्स्त्रीप्रत्ययानुपपत्तिरित्युक्त्वा कृद्ग्रहणपरिभाषया समुदायस्य कृदन्तत्वात्संज्ञा स्यादित्याशङ्क्य अप्रत्यय इति पर्युदासात्प्रत्ययान्तस्य प्रातिपदिकसंज्ञाया अप्राप्तावपि कृद्ग्रहणेन कृदन्तस्य संज्ञा न तु गतिकारकपूर्वस्यापीत्युक्तम् । तस्मात्समासे कृते तन्निबन्धनप्रातिपदिकसंज्ञया स्त्रीप्रत्यय इति तद्ग्रन्थार्थः । अतस्तत्र कृद्ग्रहणपरिभाषा नोपतिष्ठते इत्युभाभ्यामुक्तम् ।

तस्मादेवं समाधेयम्—

"कृत्तद्धित" इत्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविध्यभावेऽपि अर्थवदित्यस्यानुवृत्त्या प्रक्रियादशायामन्वयव्यतिरेकाभ्याङ्कल्पितामर्थवत्तामाश्रित्य प्रकृतिप्रत्यययोर्मिलित्वा यदर्थबोधकत्वं तदर्थबोधकसमुदायस्य प्रातिपदिकसंज्ञेति तावद्भाष्यादावेव स्पष्टम् । ततश्च नैयायिकमतेऽपि अर्थवद्ग्रहणानुवृत्त्या प्रकृतिप्रत्ययसमुदायस्यैव विधानसामर्थ्यात्संज्ञा

न तु कारकपूर्वस्यापि । अधिकग्रहणे प्रमाणाभावात् । तद्बला-त्परिभाषाया एव प्रवृत्त्यभावात् ।

वस्तुतो नात्र तत्परिभाषाऽवकाशः । "गतिरनन्तर" इ-त्यत्र तस्या ज्ञापयिष्यमाणत्वात् । प्रत्येकपूर्वस्यैव ग्रहणमिति तदर्थात् । उभयपूर्वकस्य युगपदनुपादानात् । अवतप्तेन-कुलस्थितम्, उदकेविशीर्णमित्यादौ तथैव दर्शनाच्चेति दिक् ।

नन्वेतत्सूत्रं व्यर्थम्, व्युत्पत्तिपक्षे कृदन्तत्वादेव सर्वत्र सिद्धे-रिति चेन्न। अव्युत्पत्तिपक्षे सार्थक्यात् । तत्र चेदमेव ज्ञापकमि-ति प्राञ्चः ।

निरुक्तेऽप्युक्तम्—"नामान्याख्यातजानीति शाकटायनः, नैरुक्तसमयश्च, न सर्वाणीति गार्ग्यो वैयाकरणानाञ्चैके" इति ।

व्युत्पत्तिपक्षेऽपि निपातार्थमनुकरणार्थञ्चेति हरदत्तोक्तं तु चिन्त्यम् । तत्रापि प्रकृत्यादिकल्पनसम्भवात् ।

वस्तुतस्तु व्युत्पत्तिपक्षेऽपि बहुपटव इत्याद्यर्थं सूत्रम् । न चैवं बहुच्पूर्वं इत्येव सूत्र्यतामिति वाच्यम् । मूलकेनोपदंश-मित्यादौ कृदन्तत्वेनातिप्रसङ्गात् । अर्थवत्सूत्रं विना समा-सग्रहणस्य नियमार्थत्वायोगादिति दीक्षिताः ।

तदसत् । भेदविवक्षायामनुकरणानां प्रकृत्यादिकल्पने मानाभावात् ।

अयं तु विशेषः । भेदाविवक्षापक्षेऽनुकार्येणार्थवत्त्वात्प्राति-पदिकसंज्ञा "भुवो वुग्" इत्यादिवत् । अभेदविवक्षायां तु न, गवित्ययमाहेत्यादिवत् । मूलकेत्यादावतिप्रसङ्गस्य च निरस्तत्वात् ।

कृदन्ततद्धितान्तसमासाः प्रातिपदिकसंज्ञाः । प्रत्ययान्तप्रतिषेधस्य पूर्वमुक्तत्वात्तदपवादस्यास्य प्रत्ययान्त एव प्रवृत्तेः, "संज्ञाविधौ"इत्यस्य नात्र प्रवृत्तिरिति न्यासकारः । लिट् धुक् इत्यादौ अधातुरिति, कर्तेत्यादौ प्रत्ययान्तमिति पर्युदासे प्राप्तेऽयमारम्भः । समासग्रहणं च नियमार्थमिति व्याख्यातम् ।

ननु समासस्य प्रत्ययान्तत्वादप्राप्तविधिरयं स्यात् । मैवम् । प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणात् । न च "स्त्रीप्रत्यये चानुपसर्जनेन" इत्यनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावाद् 'राजकुमारी'इत्याद्यर्थं स्यादिति वाच्यम् । अन्तरङ्गस्यापि हल्ङ्यादिलोपस्य लुग्विषये प्रवृत्त्यभावात्, श्रूयमाणे एव सुपि समासप्रवृत्तेः, 'परिहृत्यापवादविषयम्' इतिन्यायात् । तत्राप्रत्ययान्तत्वेन समासवाक्ये प्रवृत्तायाः संज्ञाया एकदेशविकृतन्यायेन विभक्तिलुक्यपि सुलभत्वात् । अत एव गोमत्प्रियः इत्यादौ न नुमादयः । लुका लोपे प्रत्ययलक्षणाभावात् ।

ननु तथाऽप्यसमर्थसमासे विध्यर्थं स्यात् । मैवम् । अर्थवदित्यनुवृत्तेः, तस्य चानर्थकत्वात् । न चैवं तत्र संज्ञाऽनापत्तिः । धर्मिग्राहकमानेन तत्सिद्धेः । "असूर्यललाटयोः" इत्यनेन ह्यसूर्यशब्दे उपपदे खश् । विभक्त्यन्तं विना च उपोच्चारितपदरूपोपपदत्वानुपपत्तेः ।

स्यादेतत् । शशविषाणादिसमासार्थमयमपूर्वविधिः । तेषामनर्थकत्वात् । ननु शशपदं शशसबन्धाभाववत्परम् । तस्याभेदेन विषाणान्वयः । तथा च शशसम्बन्धाभाववदभिन्नं विषाणमित्यर्थवदेव तदिति वाच्यम् । शशविषाणं नास्तीत्यस्यायोग्यत्वापत्तेः ।

अतएव विषाणे शशसम्बन्धाभावनिश्चयदशायां शशविषाणनिर्मितं कार्मुकमिति वाक्यान्न शाब्दधीरित्यभियुक्ताः। अत एव—

एष वन्ध्यासुतो याति खपुष्पकृतशेखरः।
मृगतृष्णाऽम्भसि स्नातः शशशृङ्गधनुर्द्धरः॥

इत्यादेरपार्थकत्वमिति क्षीरस्वाम्यादिभिरुक्तम्। अत एव 'सङ्गतिग्रहणाभावाच्छशशृङ्गादिपदानामबोधकता' इति बौद्धाधिकारदीधितावुक्तम्।

मैवम्। "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति पातञ्जलसूत्रात् शशविषाणादेरलीकस्यापि शब्दबोध्यत्वात्। अनेन पदेनालीकं बोध्यमिति वृत्तेस्तत्र स्वीकाराच्च। अत एव 'गगनकमलस्यापि शब्दाभासप्रतिपन्नत्वाद्' इति लीलावत्यामुक्तम्।

अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि। इति—
खण्डनकारोक्तेश्च।

वस्तुतस्तु तन्निष्ठात्यन्ताभावप्रतियोगिनि शशपदस्य लक्षणा। ततश्च तदर्थेनार्थवत्वात्प्रातिपदिकसंज्ञा। 'शशसम्बन्धाविशेषवद्विषाणम्' इतिधीस्तु भ्रमादेव। एतेन शशविषाणं नास्तीत्यपि व्याख्यातम्। शशसम्बन्धविशेषस्यैव तत्र प्रतियोगितावच्छेदकताया भ्रमविषयत्वात्। अत एव 'शशादिप्रत्येकपदार्थव्युत्पन्नस्य शशविषाणादिपदात्तदर्थप्रत्ययप्रसङ्गाद्' इति दीधितावुक्तं विशिष्टस्यार्थवत्त्वं नास्तीत्यभिप्रायात्।

अयं तु विशेषः—तादृशार्थविशेषशक्तस्य शशविषाणादिसमासस्य कदाचिच्छक्तिभ्रमादन्यथाबोधकत्वमिति।

प्राञ्चस्तु खपुष्पशशशृङ्गादिशब्दानामभाववचनत्वादर्थवत्त्वम्। तथाहि—खे पुष्पं नास्तीति विग्रहे नञर्थान्तर्भावः। विग्रहे

नास्तीति कथनं समासार्थविवरणार्थम् । समासोत्तरं नास्तीति पदजातं त्वनुवादमात्रम् । स्पष्टं चैतन्मीमांसावार्त्तिकादावित्याहुरिति दिक् ।

# ह्रस्वो नपुंसके प्रातिपदिकस्य ४७।

अजन्तस्य प्रातिपदिकस्य नपुंसके ह्रस्वः । श्रीपम् । ह्रस्वश्रुत्या "अच" इत्युपस्थितौ तदन्तविधिः । प्रातिपदिकसम्बन्धिनोऽच इत्यन्वये तु वैयधिकरण्यम्, सुवाक् कुलमित्यादावतिव्याप्तिश्च स्यात् ।

न च नपुंसकपदेनैव प्रातिपदिकाक्षेपसम्भवात्तदुपादानवैयर्थ्यम् । काण्डे कुड्ये रमते ब्राह्मणकुलमित्यादिव्यावृत्त्यर्थत्वात् । साधनाश्रयसंख्यावत्तल्लिङ्गस्याप्युपादानसंभवात् ।

नचोक्तन्यायेन 'दोषा ब्राह्मणकुलम्'इत्यादौ सहचरितत्वाद्दोषाशब्दस्यौपचारिकत्वेऽव्ययस्यापि ह्रस्वापत्तिः प्रातिपदिकत्वादिति वाच्यम् । 'दोषा दिवा' इति शब्दौ हि रात्रावहनीति सप्तम्यर्थविशिष्टार्थौ । ब्राह्मणकुलसाधनानां क्रियाणां अधिकरणं कालो भवन् ब्राह्मणकुलस्याधिकरणम्[1]—'दोषा दृश्यते चरत्यधीते वा' इति । आधेयव्यवधानेनाधिकरणस्य क्रियाधारत्वात् । ततश्चाव्ययं नपुंसकस्याधिकरणमेव न तु नपुंसकमिति ।

ननु काण्डीभूतं ब्राह्मणकुलमित्यादौ प्रकृतिविकृत्योरभेदविवक्षायां च्विप्रत्ययान्तस्यापि नपुंसकत्वादतिव्याप्तिरिति । नच कृते ह्रस्वे "च्वौच"इति दीर्घो भविष्यतीति वाच्यम् । अन्तरङ्गे दीर्घे बहिरङ्गस्य ह्रस्वत्वस्यासिद्धत्वात् । एवं रमते इत्यत्रापि ह्रस्वत्वे टेरेत्वं नेति योज्यमिति चेन्न ।

---

१ अधिकरणं भवन् काल इति योजना ।

असत्त्ववाचित्वादव्ययस्य नपुंसकत्वाभावात्। एतेन तिबन्तमपि व्याख्यातम्। शक्त्याश्रयद्रव्यनिष्ठसंख्याप्रतिपादकस्याप्याख्यातस्य तदीयलिङ्गप्रतिपादने सामर्थ्यविरहात्। शब्दशक्तिस्वाभाव्यात्। 'काण्डे तिष्ठतः' इत्यत्रापि नपुंसकत्वाभावः, संख्यायाः प्राधान्यात्। अवयवधर्मेण समुदायस्य नपुंसकत्वव्यपदेशे तु काण्डे कुड्ये इत्यत्र स्यात्। प्रातिपदिकविभक्त्योरेकादेशस्य प्रातिपदिकग्रहणेन ग्रहणात् 'ह्रस्वो नपुंसके यत्तस्य' इति कर्त्तव्यं स्यात्। साक्षात्तस्यैव यदा नपुंसकत्वं तदा ह्रस्वो न त्ववयवद्वारके तस्मिन्निति तदर्थः।

अथवा तस्यैवानुपजातव्यतिरेकस्येत्यर्थः। विभक्त्यन्तं चोपजातव्यतिरेकमिति नातिप्रसङ्गः।

सूत्रकारस्य त्वयमभिप्रायः—मुख्यमेवात्र नपुंसकवृत्ति प्रातिपदिकं गृह्यते। अन्तवद्भावातिदेशात्तु प्रातिपदिकत्वं न मुख्यमिति। युगवरत्राय, युगवरत्रार्थम्, युगवरत्रेभ्य इत्यादौ तु न ह्रस्वः। बहिरङ्गत्वाद्दीर्घादीनामासिद्धत्वात्। एवमतिखट्वायेत्यादौ उत्तरसूत्रेण ह्रस्वोऽपि नेति व्याख्येयम्।

# गोस्त्रियोरुपसर्जनस्य ४८।

उपसर्जनेति गोस्त्रियोः, तेच प्रातिपदिकस्य विशेषणम्। तेन तदन्तविधिः। "ग्रहणवता प्रातिपदिकेन" इति निषेधस्य प्रत्ययविधिमात्रविषयकत्वात्। तथा चोपसर्जनभूते ये गोस्त्रियौ तदन्तं यत्प्रातिपदिकं तस्य ह्रस्वः स्यात्। "अलोऽन्त्यस्य"। निष्कौशाम्बिः, अतिखट्वः। "एकविभक्ति च" इत्युपसर्जनत्वम्। चित्रगुः। प्रथमानिर्दिष्टत्वात्।

स्यादेतत् । अतिश्रीः, अतिलक्ष्मीरित्यादौ ह्रस्वत्वं स्यात् । मैवम् ।

अत्र वार्त्तिकम्—

"गोटाङ्ग्रहणं कृन्निवृत्त्यर्थम्" ।

कृत्स्त्रीणां धातुस्त्रीणां चेत्यर्थः । टाङिति टापमारभ्य ष्यङो ङकारेण प्रत्याहारः । तथा च कृदन्तस्त्रीणां तद्बहिर्भावान्न दोषः ।

भाष्यकारास्त्वाहुः—स्त्रीग्रहणं स्वरितमाश्रित्य "स्त्रियाम्" इत्यधिकारे विहिता एव प्रत्यया गृह्यन्ते । "स्वरितेनाधिकारः" इति सूत्रस्य यत्र स्वरितत्वं तत्र तदधिकारोपादानमिति, अस्यापि व्याख्यास्यमानत्वात् ।

नन्वेवं राजकुमारीमतिक्रान्तोऽतिराजकुमारिरित्यादौ ह्रस्वो न स्यात् । प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्यैव ग्रहात् । कुमारशब्दस्य ङीप्रकृतित्वात्कुमारीशब्दस्यैव स्त्रीप्रत्ययान्तत्वान्न तु राजकुमारीशब्दस्येति चेन्न । स्त्रीप्रत्यये तदादिनियमाभावात् । अत एव परमकारीषगन्धीपुत्र इत्यत्र "ष्यङः संप्रसारणम्" इत्यस्य प्रवृत्तिः ।

ननूपसर्जनस्त्रीप्रत्यये तदादिनियमोऽस्त्येव अन्यथाऽतिकारीषगन्ध्यापुत्र इत्यत्रापि सम्प्रसारणापत्तेः ।

अत्र कैयटः—'क्वचिदुपसर्जनस्त्रीप्रत्ययेऽपि तदादिनियमो नास्ति हल्ङ्यादिसूत्रे दीर्घग्रहणात् । अन्यथा निष्कौशाम्बिः, अतिखट्व इत्यादौ उपसर्जनत्वात् ङ्याबन्ताभावादेव सुलोपानापत्त्या तद्वैयर्थ्यापत्तेः ।

नन्वेवं कुम्भकारीशब्दादपि स्त्रीभ्यो ढगुत्पत्त्या कौम्भकारेयसिद्धौ "अनुपसर्जनात्" इत्यत्र तत्सिद्धिर्न स्यादिति भाष्यविरोध इति चेन्न । तत्र तदादिनियमाभावे कदाचित् कारी-

शब्दादपि तदापत्तेरिति तदाशयादिति ।

न्यासकारस्त्वाह-'अङ्गसंज्ञासूत्रे योगविभागलभ्येयं परिभाषा । तत्र "वाऽऽमि"इत्यत्राव्यवस्थितविभाषार्थस्य वाशब्दस्यानुवृत्तिमाश्रित्यात्र तत्प्रवृत्तिर्नेति व्याख्येयम् ।

यद्वा"कृत्तद्धित"इत्यतोऽनुक्तसमुच्चयार्थश्चकारोऽनुवर्त्त्यः,इति ।

स्यादेतत् । गोकुलमित्यादावतिप्रसङ्गः । कुमारीपुत्र इत्यत्र कुमारीशब्दस्य प्रत्ययान्तत्वादप्रातिपदिकत्वेऽपि राजकुमारीशब्दस्य समासप्रातिपदिकत्वाद्राजकुमारीपुत्र इत्यत्रापि अतिप्रसङ्ग एव । खट्वायादो मालायाद इत्यादौ तु न तच्छङ्का, उभयत आश्रयेऽन्तादिवद्भावनिषेधात् । अत्र हि प्रातिपदिकं स्त्रीप्रत्ययश्चाश्रीयते-स्त्रीप्रत्ययान्तं यत्प्रातिपदिकमिति । एकादेशश्च यदि प्रातिपदिकस्यान्तवत्तदा स्त्रीप्रत्ययस्यान्तत्वं नास्ति, अथ स्त्रीप्रत्ययस्यादिवत्तदा प्रातिपदिकत्वं नास्तीति ।

मैवम् । गोकुलमित्यादौ तदन्तत्वाभावात् प्रातिपदिकेच व्यपदेशिवद्भावस्य निषेधात् ।

ननु "येन विधिः"इति सूत्रे "रोण्या अण्""तस्य च"इति वार्त्तिककृतोक्तत्वात् "स्वं रूपम्" इत्यस्यानुवृत्तिरिति लभ्यते । तथा च गोऽन्तत्वाभावेऽपि गोशब्दस्वरूपसत्त्वादेव गोकुलमित्यादौ ह्रस्वः स्यात् ।

मैवम् । "स्वं रूपम्" इत्यस्याननुवृत्तेः । आद्यन्तवत्सूत्रे "येन विधिस्तदन्तत्वे प्रयोजनम्"इति वार्त्तिकोक्तेः ।

न च तथापि "तस्य च"इति वार्त्तिकादेव गोकुलमित्यत्र ह्रस्वापत्तिः । तस्य वार्त्तिकमात्रशेषत्वात् ।

नापि द्वितीयः । उपसर्जनं यः स्त्रीप्रत्ययस्तदन्तस्योपसर्जनस्येत्युक्त्या यत्प्रतियोगिकं यस्योपसर्जनत्वं त-

त्प्रातियोगिकस्यैवान्तत्वस्य लाभात् । राजकुमारीशब्दस्य तु पुत्रपदेन यः षष्ठीसमासस्तन्निरूपितोपसर्जनत्वसत्त्वेऽपि तन्निरूपितान्त्यत्वाभावात् । अन्यथा "पूर्वपदप्रतिषेधः" इति वार्त्तिकारम्भेऽप्यनिर्वाहात् । पञ्च कुमार्यः प्रिया अस्येति त्रिपदे बहुव्रीहावाद्यपदद्वयस्य "तद्धितार्थोत्तरपद"इति द्विगुसमासे कुमारीशब्दस्य पूर्वपदत्वाभावात् ह्रस्वापत्तेः । भिन्नप्रतियोगिकयोरन्तत्वोपसर्जनत्वयोः सत्त्वात् । एतेन अगोपुत्र इत्यपि व्याख्यातम् ।

अथ तथाऽपि द्वन्द्वस्य प्रतिषेधो वक्तव्यः। कुक्कुटमयूर्याविव्यत्र समासार्थेऽवयवार्थस्योपसर्जनत्वाद्,"अनेकम्"इत्यनुवृत्त्या प्रथमानिर्दिष्टत्वाच्च मयूरीशब्दस्योपसर्जनत्वात्तस्मिन्नेव समासेऽन्त्यत्वाच्च ।

मैवम् । "परवल्लिङ्गम्" इति "शब्दशब्दार्थौ" इति वक्ष्यमाणत्वाल्लिङ्गतदर्थबोधकप्रत्ययोभयातिदेशस्वीकारान्मयूरीशब्दस्योक्तरीत्या ह्रस्वत्वेऽपि द्वन्द्वसमासोत्तरं ङीप्प्रत्ययोपपत्तेः । अवयवार्थयोरेव परस्परसन्निहितयोर्द्वन्द्वार्थत्वमिति प्राधान्यादुपसर्जनत्वाभावाच्च ।

स्यादेतत् । "कपि प्रतिषेधो वक्तव्यः" । बहुकुमारीकः । विषयसप्तमी चेयम् । कपः पूर्वमेवान्तरङ्गत्वात् ह्रस्वप्रवृत्तिप्रसङ्गात् । न च "न कपि" इति प्रतिषेधः । "केऽण" इति प्राप्तेरेव तेन प्रतिषेधाद् । "अनन्तरस्य" इति न्यायात् । अन्यथा प्रियं ग्रामणि यस्य प्रियग्रामणिक इत्यादेरपि निषेधापत्तेः । कुलादिविशेषणत्वाद्ग्रामणिशब्दे क्लीबत्वम् ।

मैवम् । कपः समासान्तावयवत्वात्कपि कृते स्त्रीप्रत्ययान्तस्य समासप्रातिपदिकत्वविरहात् । बह्वयवाग्रूक इत्यादौ

अतिमाल इत्यादौ च द्वयोः सावकाशतया परत्वात्कप एव प्रवृत्तेः। न चोपसर्जनस्त्रीप्रत्ययान्तप्रातिपदिकमात्रापेक्षं ह्रस्वत्वमन्तरङ्गं कप्तु समासविशेषस्य नद्युत्तरपदबहुव्रीहेः सापेक्षत्वाद्बहिरङ्ग इति वाच्यम्। समासार्थोत्तरपदान्ताः समासान्ता इति पक्षे कपोऽवयवापेक्षत्वात्, ह्रस्वस्य च समुदायापेक्षत्वाच्च सर्वेभ्यः समासकार्येभ्यः कपोऽन्तरङ्गत्वात्।

तस्माद् "ईयसो बहुव्रीहेः पुंवद्वचनम्" इत्येव वार्त्तिकमारभ्यम्। बह्व्यः श्रेयस्योऽस्य बहुश्रेयसी। "ईयसश्च" इति कप्प्रतिषेधः। बहुव्रीहेः किम्। श्रेयसीमतिक्रान्तोऽतिश्रेयसिरिति तत्पुरुषे ह्रस्वो यथा स्यात्।

# लुक् तद्धितलुकि ४९।

स्त्रीप्रत्ययस्य लुक् तद्धितलुकि सति। अभावरूपस्य लुकः परत्वासम्भवात्। पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः। "तद्धितार्थ" इति समासः। ततः "साऽस्य देवता" इत्यण्। तस्य "द्विगोर्लुगनपत्ये" इति लुक्। "इन्द्रवरुण–" इत्यादिना विहितस्य ङीपोऽनेन लुक्। सन्नियोगशिष्टन्यायेन आनुकोऽपि निवृत्तिः। पञ्चभिः शष्कुलीभिः क्रीतः पञ्चशष्कुलः। "तेन क्रीतम्" इत्यार्हीयस्य ठकः "अध्यर्द्धपूर्व–" इति लुक्। आमलक्याः फलं आमलकम्। "नित्यं वृद्धशरादिभ्य" इति मयट्। फले लुक्। एवं बदरं कुवलमिति। शष्कुल्यादयो गौरादिङीषन्ताः। लौकिकं चैषामुपसर्जनत्वम्। व्याप्तिन्यायादुभयविधस्याप्यत्र ग्रहणात्। लुकि किम्। गार्गीकुलम्। गार्ग्यशब्दाद् "यञश्च" इति ङीप् "यस्येति च" इत्यकारलोपे "हलस्तद्धितस्य" इति यकारलोपः।

स्यादेतत् । अवन्तेरपत्यं गोत्रं स्त्री अवन्ती । "वृद्धेत्कोसलाजादाद्" इति ञ्यङ् । कुन्तीत्यप्येवम् । कुरोरपत्यं स्त्री कुरूः । "कुरुनादिभ्यो ण्यः" । "स्त्रियामवन्तिकुन्तिकुरुभ्यश्च" इति लुक् । आद्याभ्याम् "इतो मनुष्यजातेः" इति ङीष् । अन्त्याद् "ऊङुतः" इत्यूङ् । अत्रावन्त्यादीनामुपसर्जनस्त्रीप्रत्ययसत्त्वात्तद्धितलुकश्च कृतत्वात्स्त्रीप्रत्ययस्य लुक् स्यात् ।

मैवम् । यत्र स्त्रीप्रत्ययान्तात्परस्य तद्धितस्य लुक् तत्रैवास्य लुकः प्रवृत्तेः । अत्र च कृते लुकि स्त्रीप्रत्ययोत्पत्तेः । तदुक्तम्—"अलुक्परत्वाद्" इति । उक्तोऽर्थः । बुद्धिपरिकल्पितं लुकः परत्वमाश्रित्य तु वार्त्तिककृतैवमुक्तम् ।

भाष्यकृतस्तु उपसर्जनत्वाभावादेव न दोषः । उपसर्जनेन स्त्रीप्रत्ययस्य विशेषणात्, शास्त्रीयस्योपसर्जनस्यासम्भवाद् अप्रधानरूपोपसर्जनत्वस्याश्रयणात् । अवन्तीत्यादौ चापत्यलक्षणाया जातेः प्राधान्येनाभिधानात्, अप्रातिपदिकत्वाच्च न ह्रस्वत्वम् । आमलकमित्यादौ तु तद्धितान्तत्वात्प्रातिपदिकत्वम् लिङ्गविशिष्टस्यैवोपादानान्न लिङ्गविशिष्टपरिभाषाप्रवृत्तिः । कुरूरित्यत्राप्युभयत आश्रयणेऽन्तवद्भावनिषेधात् ।

# इद्गोण्याः ५० ।

तद्धितलुकि गोणीशब्दस्योक्तविषये इत्त्वं स्यात् । पञ्चभिर्गोणीभिः क्रीतः पञ्चगोणिः । "तद्धितार्थ—" इति समासे क्रीतार्थे ठक् । पूर्ववत् तस्य लुक् । लुकि प्राप्ते ह्रस्वारम्भः । अत्र वार्त्तिकम्—

"इद्गोण्या नेति वक्तव्यं ह्रस्वता हि विधीयते ।
इति वा वचने तावन्मात्रार्थं वा कृतं भवेत् ॥
गोण्या इत्त्वं प्रकरणात् सूच्याद्यर्थमथापि वा ।"

अस्यार्थः—ननु गोण्या लुङ्निषेध एव कर्त्तव्यो न त्विच्वम्, "गोस्त्रियोः" इति ह्रस्वेन सिद्धेः। मैवम्। नेत्युक्ते इदित्युक्ते वा विशेषाभावात्। यदा गोणिमात्रमिदं गोणिरिति मात्रप्रत्ययस्य लोपः क्रियते, तदा लुकि निषिद्धे ह्रस्वत्वं सिद्धम्। तस्मात्प्रथमाविधाने परिमाणग्रहणस्य प्रयोजनं तद्धितं विनाऽपि यत्र परिमाणशब्दाः परिमेये वर्त्तन्ते तदाऽपि प्रथमा यथा स्यादिति। एवं चानुपसर्जनत्वादभेदोपचारेण प्रमेयवृत्तित्वादप्राप्ते ह्रस्वे इत्त्वविधिः। नन्वेवं सर्वत्र गोण्या इत्त्वं स्यात्। तर्ह्युपसर्जनस्येत्यनुवर्त्तते एव नतु तद्धितलुकीति, तेन यत्र स्वार्थोपसर्जनमर्थान्तरं प्रत्याय्यते तत्रेदमित्त्वं विधीयते। नहि तत्र ह्रस्वेन सिद्धिः। अप्रातिपदिकत्वेन तदप्रवृत्तेः। प्रकारान्तरेण प्रत्याचष्टे—गोण्या इत्त्वमिति। आशिष्यमिति शेषः। प्रकरणादिति। गोण्या इत्येव सूत्रणीयम्। न च संनिधानाल्लुकोऽनुवृत्तिप्रसङ्गः। वैयर्थ्यप्रसङ्गात्। तेनैव सिद्धेः। तथा च ह्रस्वानुवृत्तौ लुकोऽपवादो ह्रस्वत्वं विधीयते इति सिद्धमिष्टम्। सिद्धान्तमाह—सूच्यादीति। यद्यपि गोणिरिति मात्रलोपेनापि सिद्धम्, तथापि इदिति योगविभागार्थमिदम्। तेन पञ्चसूचिरित्यादि सिद्धम्। न चान्यत्राप्यापत्तिः। तस्येष्टमात्रासिद्ध्यर्थत्वात्। तपरत्वं तु दीर्घनिवृत्त्यर्थम्। न च दीर्घस्य दीर्घविध्यानर्थक्यम्। ह्रस्वलुग्बाधार्थत्वेनोपपत्तेः। न च भाव्यमानत्वादेव दीर्घनिवृत्तिः। लुको ह्रस्वस्य बाधनेन स्वरूपावस्थापनमात्रफलकतयाऽपूर्वविधायकत्वाभावात्।

## लुपि युक्तवद्व्यक्तिवचने ५१।

लुपि सति प्रकृतिवल्लिङ्गवचने स्तः। अनेन प्रकृत्यर्थसम्बन्धिन्यौ लिङ्गसंख्ये प्रत्ययार्थेऽतिदिश्येते। युक्तपदस्य प्रकृतिपरत्वात्।

प्रकृतिप्रत्ययार्थयोः परस्परं युक्तत्वेऽपि प्रत्ययार्थे प्रत्ययार्थातिदेशवैयर्थ्यात् । पञ्चालानां निवासो जनपदः पञ्चालाः । कुरवः, अङ्गाः, वङ्गाः, कलिङ्गाः । "जनपदे लुप्" इति लुप् । कुरुशब्दे ण्यस्य, अन्यत्राण इति विशेषः । पूर्वाचार्यवचनं चैतत् । अग्रे प्रत्याख्यास्यमानत्वात् । व्यक्तिवचने इति किम् । शिरीषाणामदूरभवो ग्रामः शिरीषाः । "अदूरभवश्च" इत्यण् । तस्य च "वरणादिभ्यश्च" इति लुप् । तेषां वनं शिरीषवनम् इत्यत्र णत्वं मा भूत् अन्यथा व्यक्तिसंख्ययोरिव प्रकृतिवृत्तेर्वनस्पतित्वस्याप्यतिदेशापत्त्या "विभाषौषधिवनस्पतिभ्यः" इति णत्वं स्यात् । तदप्रवृत्तौ तु ग्रामार्थकत्वान्न णत्वम् । 'फली वनस्पतिर्ज्ञेयः' इति भेदस्य णत्वविधावनाश्रयणात् । एवं कटुबदर्या अदूरभवो ग्रामः कटुबदरीत्यादि ।

स्यादेतत् । प्रकृतिगतस्य ग्रामापेक्षव्यतिरेकस्याप्यतिदेशात्षष्ठ्यपि स्यात्, वचनशब्दस्यैकवचनादिप्रत्ययवाचकत्वात् । एकवचनादिसंज्ञाविधिकालेऽनुनिष्पादिवचनशब्दस्यापि पारिभाषिकत्वानपायात् । वाक्ये च षष्ठीदर्शनात् । न च वचनशब्देन संख्यैवातिदिश्यते इति वाच्यम् । तद्वाचकशब्दातिदेशपर्यवसाने षष्ठ्या अपि संख्याप्रतिपादकत्वेन तदापत्तेः ।

मैवम् । शिरीषाणां ग्रामस्य च यः सम्बन्धो वाक्ये भासते लुपि कृते तस्य विशिष्टस्यैव प्रातिपदिकार्थेऽन्तर्भावात्, मासजात इत्यादिवत् ।

अत्र भाष्यम्—

"प्रागपि वृत्तेर्युक्तं वृत्तं चापीह यावता युक्तम् ।
वक्तुश्च कामचारः प्राग्वृत्तेर्लिङ्गसंख्ये ये" ॥

अस्यार्थः—वृत्तेः प्राग्वाक्यावस्थामपि प्रकृतिवाच्यं वस्तु प्रत्ययार्थेन संबद्धं वृत्त्यनन्तरमपि तथैव, उभयत्राप्यर्थभेदाभावा-

त्। वक्तुश्चेति चकारस्य भिन्नक्रमत्वात्प्राग्वृत्तेश्चेति योज्यम्। प्राग्वृत्तेर्ये लिङ्गसंख्ये चशब्दाद्वृत्तस्यापि ते अतिदेष्टुं कामचारः। तथा च प्राग्वृत्तेर्ये लिङ्गसंख्ये तयोर्नातिदेशः किन्तु प्रत्यासत्त्या वृत्तस्य ये लिङ्गसंख्ये तयोरेव। ततश्च यथा तावकीनो मामकीन इत्यादौ आदेशबलादुपसर्जनस्यापि संख्याविशेषावगतिः,यथा वा आदेशे प्रथमामामानाधिकरण्यदर्शनाल्लुटि तदवगतिस्तथाऽत्रापि प्रत्ययार्थेऽतिदिष्टसंख्याऽवगमात् तत्प्रकृत्यर्थेऽपि तदवगमः। तत्र वृत्तावुपसर्जनं प्रधानार्थमभिधत्ते इति व्यतिरेकाभावात् संख्यामात्रप्रत्ययार्थ प्रातिपदिकार्थमात्रे प्रथमैव भवति। शिरीषाणां मनुष्या इत्यादौ तु मनुष्यादिजनितव्यतिरेकापेक्षा षष्ठी। शिरीषग्रामयोर्यः सम्बन्धस्तस्यैव वृत्तावन्तर्भावात्। "अथवा प्राग्वृत्तेर्ये लिङ्गसंख्ये ते अतिदिश्येते। षष्ठी कस्मान्न भवति। सामान्यातिदेशे विशेषानतिदेशः" इति भाष्ये पाठान्तरम्। तत्र वाक्यावस्थायां प्रकृत्यर्थस्य ये लिङ्गसंख्ये ते अतिदिश्येते। षष्ठी तु व्यतिरेकनिबन्धना। न चेह प्रत्ययार्थस्य व्यतिरेकोऽस्ति। न च व्यतिरेकसहिता संख्याऽतिदिश्यते, संख्यामात्रातिदेशे सम्बन्धसहितसंख्याऽतिदेशाभावादित्यर्थ इति कैयटः।

अत्र वार्त्तिकम्—"समास उत्तरपदस्य बहुवचनस्य लुपः"। वर्तिपदार्थानामेवापेक्षितपरस्पराणां द्वन्द्वार्थमिदम्। उत्तरपदे यत्र बहुवचनस्य लुप् तत्रैव बहुवचनातिदेशो न तु पूर्वपदेऽपीति। मथुरापञ्चालाः। नेह पञ्चालमथुरे। एवं मथुरागोदा इति। न तु मथुरागोदौ। द्वन्द्वेऽपि गोदार्थस्य द्वित्वानतिक्रमादिति कैयटः।

# विशेषणानां चाजातेः ५२।

लुबर्थस्य विशेषणानामपि तद्वदेव लिङ्गवचने स्तो न तु जा-

तेः । पञ्चाला रमणीयाः । गोदौ रमणीयौ । गोदौ ह्रदविशेषौ । विशेषणानां विशेष्यसमानयोगक्षेमत्वात्सिद्धेऽपि जातिप्रतिषेधार्थमारम्भः । पञ्चाला जनपदः।गोदौ ग्रामः । जनपदग्रामशब्दौ जातिवचनौ । एवं तद्विशेषणेऽपि गोदौ ग्रामो रमणीयो बह्वन्न इत्यादि। अत्र हि सामानाधिकरण्येनान्वये जातिभिन्नानां विशेषणानां युक्तवद्व्यक्तिवचने, जातिरूपस्य तु विशेषणस्य नेत्यर्थः । वैयधिकरण्येनान्वये तु जातेर्यानि विशेषणानि तेषा नेति। भवतिना नञ्सम्बन्धादसमर्थसमासश्चायम् । आद्ये पञ्चाला जनपद इति सिद्धम् । सुभिक्षः संपन्नपानीयो बहुमाल्यफल इति तद्विशेषणानां तु बहुवचनान्तत्वं स्यात् । अन्त्ये वैपरीत्येन योज्यम् । तस्मात्सूत्रे आजातेरिति आङ् प्रश्लेष्यः तथा च यौवज्जा । नियतलिङ्गवचना एव तेषां संज्ञाः। आपो दारा वर्षाः सिकता इत्यादिवत् । तेषा तत्तज्जात्यवच्छिन्नैकव्यक्तिमात्रेऽपि बहुचनान्तानामेव प्रवृत्तेः ।

# लुब्योगाप्रख्यानात् ५४ ।

लुबपि न विधेयो योगस्य यौगिकार्थस्याप्रख्यानात् अनवगम्यमानत्वात् इत्यर्थः । पञ्चाला इत्यादिभ्यो देशविशेषबोधस्य पञ्चालत्वादिप्रकारकस्यैव जायमानत्वात् । क्षत्रियविशेषसम्बन्धित्वेन बोधस्यानुभवसिद्धत्वाभावात् ।

ननु "हस्ताज्जातौ" "कम्बलाच्च सञ्ज्ञायाम्" इत्यादौ सञ्ज्ञाशब्दानामपि व्युत्पादनमस्त्येव, हस्तीत्यादिभ्योऽपि जातिविशेष-

---

१ अत्रायं ग्रन्थस्त्रुटित उपलभ्यते आदर्शभूतेषु त्रिष्वपि पुस्तकेषु । नियतेत्यादिच "तदशिष्यम्" इति सूत्रव्याख्यानमुदाहरणतः, कौस्तुभात् , प्रदीपाच्चावसीयते ।

प्रकारकस्यैव बोधस्योदयात् । सत्यम् । तत्र तद्धितोत्पत्त्या रूपे विशेषात् । अत्र तु लुप आवश्यकतया तदभावादिति न्यासकृत् ।

## योगप्रमाणे च तदभावे दर्शनं स्यात् ५५ ।

चशब्दो हेत्वर्थः । योगस्य प्रमाणं योगप्रमाणम् । यौगिकार्थप्रत्यायकत्वमिति यावत् । यदि हि पञ्चालादयः शब्दाः क्षात्रयादिसम्बन्धं प्रवृत्तिनिमित्तमभिधायैव जनपदादौ प्रवर्त्तेरन् तदा तदभावे योगाभावे पञ्चालशब्दानामदर्शनमप्रयोगः स्यात् । दण्डसम्बन्धाभावे पुरुषे दण्डिपदाप्रयोगात् । नचेष्टापत्तिः । प्रयोगविरोधात् ।

## प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ५६ ।

वचनमित्यनन्तरं अशिष्यमित्यनुषङ्गः । प्रधानं प्रकृत्यर्थनिष्ठप्रकारतानिरूपितविशेष्यत्वरूपेण प्राधान्येन प्रतीपाद्यः प्रत्ययार्थो यत्र तत् । प्रत्ययार्थः प्रधानमित्येवं रूपं वचनमिति यावत् । अशिष्यमनारभ्यं अर्थस्य विशेषणविशेष्यभावरूपस्य अन्यप्रमाणत्वात् लोकानुभवमूलकत्वात् ।

तेन हि प्रत्ययार्थत्वावच्छेदेन प्राधान्यं बोध्यते उत तत्सामानाधिकरण्यमात्रेण ।

नाद्यः । घटमित्यादौ कर्मत्वादौ प्रातिपदिकार्थस्य प्रकारत्वेऽपि संख्याऽऽदेः प्रत्ययार्थस्य प्रातिपदिकार्थे प्रकारत्वात् ।

नान्त्यः । प्रकृत्यर्थस्यापि क्वचित्प्रधानतया प्रत्ययार्थेऽपि तद्वचनस्यानुपयुक्तत्वात् । तथा च क्रमेण लोकविरुद्धार्थबोधकत्वादिति लोकसिद्धार्थबोधकत्वादिति च हेतुद्वये तात्पर्यम् ।

## कालोपसर्जने च तुल्यम् ५७।

अतीताया रात्रेः पश्चिमार्द्धेनागामिन्याः पूर्वार्द्धेन च सहितो दिवसोऽद्यतनः,विशेषणमुपसर्जनमित्यादि पूर्वाचार्याणां वचनम्। तत्राप्याशिष्यत्वं समानं लोकसिद्धत्वात् ।

यद्वा लोकसिद्धत्वाख्यो हेतुस्तुल्यः । तथा चाशिष्यत्वासिद्धिरिति योज्यम् ।

## जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् ५८ ।

स्पष्टोऽर्थः। यद्यपि जातिरुपलक्षणं व्यक्तिस्तु पदार्थ इति पक्षे बहुष्वेकवचनमित्येव युक्तम्, "जातेरुपलक्षणत्वेनाख्यायाम्"इति व्याख्यानात्, तथाऽपि जातौ पदार्थ एतत् । तदुक्तम्-"जात्याख्यायां सामान्याभिधानादैकार्थ्यम्" इति । भाष्ये तु "यद् गार्ग्ये गार्ग्यत्वं तदेकम्"इत्यप्युक्तं तद् गोत्रस्य परिभाषिकजातित्वाभ्युपगमात्, बहुषु गर्गेषु गार्ग्यत्वस्यैकस्य भावादिति कैयटः । जातिश्चेह समानकालीनानेकवृत्तिरेव गृह्यते न तु भिन्नकालीनानेकवृत्तिर्डित्थत्वादिः । जातिपदार्थपक्षे सर्वेषां जातिशब्दत्वेऽपि "जात्याख्यायाम्" इत्युक्तिसामर्थ्यात् ।

नन्वत्र पक्षे व्रीहिभ्य आगत इत्यत्र "घेर्ङिति" इति गुणः स्यात् स्थानिवद्भावेन ङ्यादेशस्य भ्यसो ङित्त्वात् । मैवम् ।

एकस्मिन्नर्थे बहुत्वस्यैवानेनातिदेशात् स्थान्यादेशभावविरहात् ।

तदुक्तम्—"अर्थातिदेशात्सिद्धम्" इति ।

एवं "तिष्यपुनर्वस्वोः" इत्यत्रापि द्विवचनबहुवचनशब्दाभ्यां द्वित्वबहुत्वयोरभिधानमिति बोध्यम् ।

"सङ्ख्याप्रयोगे प्रतिषेधो वक्तव्यः" ।

एकस्मिन्बहुत्वातिदेशस्यैकशब्दप्रयोगेऽपि प्राप्तौ प्रतिषेधारम्भः । एको व्रीहिः संपन्नः सुभिक्षं करोति । विकल्पः किम् । व्रीहिरित्यपि यथा स्यात् । तत्र सम्पन्नो व्रीहिरित्यादौ भिन्नव्यक्तिपरत्वेऽपि एकत्वं व्रीहित्वजातावेवान्वेति क्वचित्पदार्थतावच्छेदकपदार्थयोरप्यन्वयस्वीकारादिति केचित् ।

अन्ये तु व्रीह्यादिपदशक्यतावच्छेदकतया व्रीहित्वादेः स्वरूपत एवोपस्थितत्या अन्वयितावच्छेदकव्रीहित्वत्वरूपेणानुपस्थितेस्तत्र पदार्थान्तरान्वयानुपपत्त्या स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसम्बन्धेन प्रकृत्यर्थे व्रीह्यादावेवैकत्वान्वय इत्याहुः ।

नव्यास्तु नेदं युक्तम् । नह्येकत्वमात्रमेकवचनस्यार्थः वस्तुमात्रसाधारण्यादर्थवत एव लाभादनुपयोगाच्च, किन्तु सजातीयान्तरराहित्यविशिष्टम् । तच्च सजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वरूपम् । साजात्यं च समभिव्याहृतपदार्थसम्बन्धित्वविशिष्टप्रकृत्यर्थतावच्छेदकरूपेण । तेनात्र घटोऽस्तीत्यादौ एतद्घटनिष्ठस्यैकत्वस्य घटान्तरनिष्ठभेदप्रतियोगितायां वस्त्वन्तरनिष्ठैकत्वस्य चैतद्घटनिष्ठभेदप्रतियोगितायामवच्छेदकतया घटनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वाप्रसिद्धावपि न क्षतिः । एतद्देशविद्यमानत्वविशिष्टघटानिष्ठभेदप्रतियोगितानवच्छेदकत्वस्य तद्घटनिष्ठैकत्वे एव प्रसिद्धेः । तत्र घटान्तरसत्त्वविवक्षायां तु तदप्रसिद्धमेव स्यात् । अत एव "पशुना यजेत" इत्यादावेकत्वस्य

## फल्गुनीप्रोष्ठपदानां च नक्षत्रे ६०।

द्वित्वे बहुत्वप्रयुक्तं कार्यं वा स्यात् नक्षत्रेऽर्थे। उदिते पूर्वे फल्गुन्यौ प्रोष्ठपदे वा। उदिताः पूर्वाः फल्गुन्यः प्रोष्ठपदा वा। नक्षत्रे किम्। फल्गुन्यौ माणविके।

इदमपि प्रत्याख्यातम्। तद्युक्तं चन्द्रमसमादाय बहुत्वसंभवात् छत्रिणो गच्छन्तीत्यादिवत्। अमावास्यायामप्यादित्यमण्डलप्रविष्टेन चन्द्रेण नक्षत्राणां योगात्। एकस्यां तूत्तरायां फल्गुनीशब्दस्यावृत्तेः पुष्पवन्तावित्यादिवन्नैकवचनम्। शिष्टप्रयोगस्य नियामकत्वाच्च नातिप्रसङ्गः।

## [1]छन्दसि पुनर्वस्वोरेकवचनम् ६१।

## विशाखयोश्च ६२।

द्वित्वे एकवचनं वा। पुनर्वसु, विशाखा वा नक्षत्रम्। पक्षे पुनर्वसू, विशाखे।

इमे अपि प्रत्याख्याते। तथा च वार्तिकम्—

"पुनर्वसु विशाखयोः सुपां सुलुक् पूर्वसवर्णेति सिद्धम्" इति॥

## तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ६३।

---

१ नानयो सूत्रयोः सर्वेष्वादर्शपुस्तकेषूपन्यासो व्याख्यान वा उपलभ्यते केवलमेकास्मिन् पुस्तके सूत्रोपन्यासमात्रमुपलभ्य कौस्तुभ—भाष्यानुरोधेन व्याख्यानमपि किञ्चिदुपन्यभान्तम्।

बहुत्वं द्वित्ववद्भवति । तिष्यश्च पुनर्वसू च तिष्यपुनर्वसू । तिष्येति किम् । कृत्तिकारोहिण्यः । नक्षत्रेति किम् । तिष्यश्च पुनर्वसू च माणवकाः तिष्यपुनर्वसवः । न चात्र गौणत्वादेव व्यावृत्तिरिति वाच्यम् । तिष्यपुनर्वसुयुक्तकालभवत्वेन माणवकेषु तिष्यपुनर्वसुशब्दस्य मुख्यत्वात् । न च तथापि पूर्वसूत्रादेव नक्षत्रपदलाभ इति वाच्यम् । कालार्थकतिष्यपुनर्वसुशब्दस्य वारणार्थत्वात् । बहवः तिष्यपुनर्वसवो गताः कतरेण तिष्येण गतः । यद्वा अनयोः प्रदेशान्तरस्थमपि कार्यं नक्षत्रत्वे एव स्यादित्येतदर्थम् । तेन "तिष्यपुनर्वस्वोर्नक्षत्राणि यलोप" इत्यत्र नक्षत्रपदं नोपादेयम् । ननु तत्र वाऽत्र वा तदुपादाने न कश्चिद्विशेष इति चेत्तर्हि पर्यायस्यापि ग्रहणार्थम् सिद्धपुनर्वसू इति सिद्धम् । द्वन्द्वेति किम् । यस्तिष्यः स एव पुनर्वसू येषां भ्रान्तानां ते तिष्यपुनर्वसवः । बह्विति किम् । समाहारे मा भूत् । उदितं तिष्यपुनर्वसु । न चाप्राणिनामिति पर्युदासाज्जातिप्रयुक्तैकवद्भावानुपपत्तिः । सर्वो द्वन्द्वो विभाषैकवद्भवतीत्यस्य ज्ञाप्यत्वात् । तेन बाभ्रवशालङ्कायनं बाभ्रवशालङ्कायना इत्यादि सिद्धम् । तथाहि—अप्राणिजातिद्वन्द्वे नित्यमेकवद्भावः प्राणिद्वन्द्वे तु विकल्पेन, एकवद्भावप्रकरणं प्राण्यङ्गादीनां समाहार एव द्वन्द्व इति विषयविभागार्थमिति वक्ष्यमाणत्वात् । तथा च तत्प्रकरणानुपात्तानां "चार्थे द्वन्द्व" इत्यनेनैव इतरेतरयोगद्वन्द्वे द्विवचनादि, समाहारद्वन्द्वे त्वेकवद्भाव इति न्यायसिद्धेऽर्थे बहुवचनग्रहणमपि लिङ्गमिति सिद्धम् । तथा च समाहारे प्राण्यङ्गादीनामेव द्वन्द्व इति तत्र विपरीतनियमवारणार्थमेतदिति तात्पर्यम् ।

इति श्रीसिद्धान्तसुधानिधौ प्रथमस्य द्वितीये द्वितीयमाह्निकम् ।

# अथ तृतीयमाह्निकम् ।

---

## सरूपाणामेकशेष एकविभक्तौ ६४

स्वाद्यन्यतमयावत्प्रत्ययप्रकृतिकानां येषां शब्दानां सारूप्यं तेषां मध्ये एक एव शिष्यते । वृक्षौ वृक्षाः । यद्यपि समानानामित्युक्तौ रूढत्वात्समानपदस्य तुल्यार्थत्वावगमे लाघवम्, सरूपाणामित्यत्र तु पदद्वयार्थावगमपूर्वकान्यपदार्थावगमात्प्रतिपत्तिगौरवम्, तथाऽपि शब्दार्थोभयकृतसाम्यविवक्षापत्त्या वृक्षा इत्यादावेवैकशेषः स्यान्न त्वक्षाः पादा इत्यादौ अर्थभेदात् । "स्वं रूपम्" इत्यत्र रूपग्रहणेन व्याकरणेऽर्थाङ्गीकारस्यापि ज्ञापितत्वात् । रूपग्रहणे तु शब्दस्वरूपमात्रगतं तुल्यत्वं गृह्यते इति न दोषः ।

नन्वेकग्रहणं व्यर्थम् । शेषशब्दस्य भावसाधनत्वपक्षे प्राथम्यादेकस्यैव शेषसिद्धेः । शिष्यते इति शेष इति कर्मसाधनत्वेऽप्येकत्वस्य विवक्षितत्वादेकस्यैव शेषसिद्धेः । मैवम् । आद्ये व्याप्तिन्यायादनेकस्यापि शेषापत्तेः । द्वितीयेऽपि "ग्रहं सम्मार्ष्टि" इतिवत्संस्कार्यसंख्याया अविवक्षितत्वात् ।

अथ शेषग्रहणं व्यर्थम् । सरूपाणामेकः साधुर्भवतीति वाक्यशेषाध्याहारेणान्तरतमस्यैकस्यादेशस्योपपत्तेः । मैवम् । एकस्यादेशत्वप्रसङ्गात् । "षष्ठीस्थाने योगा" इति नियमात् । ततश्चाश्वश्च अश्वश्चाश्वौ । समुदायघटकयोर्द्वयोर्द्वयोरश्वशब्दयोरादाद्युदात्तत्वादन्त्ये चानुदात्तत्वात्सर्वोदात्तस्य सर्वानुदात्तस्य वा-

ऽश्वशब्दस्य प्रसङ्गात् । उदात्तद्वयानुदात्तद्वयवतः समुदायस्य स्थाने तदन्यतरवत एवादेशस्यान्तरतमत्वात् ।

अथैकविभक्ताविति किमर्थम् । न च पयः पयो जरयति, वासो वासः छादयति, ब्राह्मणाभ्यां च कृतं ब्राह्मणाभ्यां च देहीत्यादावेकशेषवारणार्थमिति वाच्यम् । सहविवक्षायामित्यस्यावश्यकत्वात् । अत एव "इदितो नुम्धातोः" इत्येकशेषाभावः सङ्गच्छते । परस्परविशेष्यविशेषणभावानापन्नानामेव तत्संभवात् ।बहुव्रीहौ तु वार्त्तिपदार्थानां विशेष्यविशेषणभावसत्त्वात् । वक्ष्यति हि वार्त्तिककारः "न वाऽर्थविप्रतिषेधाद्युगपद्वचनाभाव" इति । युगपद्वचनं सहविवक्षा । यत्र शिष्यमाणो लुप्यमानार्थाभिधानसमर्थस्तत्र ह्येकशेषः । कर्तृत्वकर्मत्वसम्प्रदानत्वादयश्च एकेन युगपद्बोधयितुमशक्याः । युगपदेकस्माद्विभक्तिद्वयानुत्पत्तेः । चतुर्थ्यन्तस्य शेषे च ब्राह्मणेभ्य इत्युक्ते कर्तृत्वस्य, तृतीयान्तस्य शेषे ब्राह्मणैरित्युक्ते सम्प्रदानत्वस्यानवगमात् । एकेन भिन्नेन वा पदेनोपस्थितानामैकरूप्येणैव प्रत्ययार्थान्वयादित्यर्थः ।

मैवम् । तस्य सारूप्योपलक्षणार्थताया वक्ष्यमाणत्वात् ।

स्यादेतत् । अनेकव्यक्तिबुबोधयिषायामनेकशब्दप्रयोगे प्राप्ते तन्निवृत्त्यर्थं तावदयमारम्भः । ततश्च विरूपानेकशब्दप्रयोगस्य धवखदिरौ इत्यादौ दर्शनात् सरूपैकशेषारम्भवत् वृक्षा इत्यादौ सरूपैकशेषदर्शनाद्विरूपाणामनेकशेष इत्येवाऽऽरभ्यताम् दृष्टान्तमात्रस्य हेत्वभावस्य चोभयत्र साम्यात् । प्रयोगानुसरणे तु किञ्चिदारब्धव्यम् । व्यक्तिपक्षेऽपि एकस्यापि शब्दस्य बह्वर्थबोधकत्वसम्भवादन्यथैकशेषारम्भेऽप्यनिर्वाहात् । शब्दशक्तेर्वचनमूलकत्वा-

भावात्। किञ्च सरूपैकशेषे गौरवं द्वयोरेकशेषे एकस्य, यदा त्रयाणामेकः शिष्यते तदा द्वयोश्चतुरादीनामेकशेषे त्रयादीनां निवृत्तिरेकस्य च प्रवृत्तिर्व्याख्येये इति प्रवृत्तिनिवृत्तिलक्षणविषयभेदाद्बुद्धिगौरवापत्तेः। शेषशब्दस्य निवृत्तिविशिष्टावस्थानवाचित्वात् विरूपानेकशेषारम्भे तु प्रवृत्तिविषया बुद्धिरेकरूपैवेति, लाघवम्। उच्यते। "वृद्धो यूना"त्यादावेकशेषस्यैव विधेयत्वात् इह त्वनेकशेषविधाने प्रस्थानद्वयापत्त्या लाघवादेकशेषस्यैव युक्तत्वात्।

इदं त्ववधेयम्—एकपदस्य पूर्वोक्तरीत्या सजातीयान्तरराहित्यार्थकतया शब्दान्तरनिवृत्तिरेव विधीयते, अवस्थानं तु सिद्धत्वादनूद्यते। अत एव कैयटेन प्रवृत्तिनिवृत्तिलक्षणविषयभेदादित्युक्तम्। आपाततो "दध्ना जुहोति"इत्यादिवदवस्थानस्यापि विधेयत्वप्रतीतेः। निवृत्तेरवस्थाने वैशिष्ट्यञ्च निवर्त्तमानपदसमभिव्याहाराभावरूपम्। प्रतियोगिप्रसिद्धिश्च श्रूयमाणतत्पदसमभिव्याहृतशब्दान्तरस्थले एव अलौकिकप्रक्रियावाक्य एव वा सुलभा।

स्यादेतत्। षडत्र पक्षाः सम्भवन्ति। तथाहि—समुदायादेकविभक्तौ परत एकशेषो विधीयते एकशब्दस्य संख्यावाचित्वेन प्रसिद्धत्वात्। ननु "ङ्याप्प्रातिपदिकाद्" इत्यत्रैकवचनान्तानामेव द्वन्द्वः क्रियते वृत्तिपदार्थानां सर्वत्रैकत्वभानस्यौत्सर्गिकत्वात्। यौष्माकीन इत्यादौ आदेशादिबलादेव बहुत्वादिप्रतीतेः, तथा चैकत्वस्य विवक्षितत्वादेकस्मादेव प्रातिपदिकात्स्वादयो न तु समुदायात्। "कर्त्तुरीप्सिततमम्" इत्यादौ तु द्वयोर्बहूनां वा॰ ईप्सितस्य कर्मसंज्ञादर्शनाल्लक्ष्यानुरोधान्न संख्याविवक्षेति वैषम्यम्। तथा च समुदायादेकस्या विभक्तेः

परत्वाभावादसंभव एव। तदुक्तं "एकविभक्ताविति चेन्नाभावाद्विभक्तेः" इति ।

मैवम् । स्वार्थमादायावयवयोरिव परस्परापेक्षायां सत्यां समुदायार्थस्याप्यवयवार्थातिरिक्तस्यानुभूयमानत्वात् तमादाय समुदायस्याप्येकप्रातिपदिकत्वाद्विभक्त्युपपत्तेः । नचार्थवत्समुदायानां समासग्रहणं नियमार्थमिति वाच्यम् । तस्य सजातीयविषयकत्वात् सुबन्तानामेव व्यावृत्तेः । राजदर्शीत्यादावुपपदादिसमासेऽपि पूर्वपदस्य नलोपादिपदकार्यानुरोधेन सुबन्तत्वात् । तथा चैकाज्द्विर्वचनन्यायेन समुदायादेव द्विवचनाद्युत्पत्तिः । तेनैवावयवार्थानां संख्यान्वयात्मकानुग्रहसंपत्तेः । न च राजन् राजन् औ इत्यत्र परत्वान्नित्यत्वाच्चोपधादीर्घे कृते वैरूप्यादेकशेषो न स्यात् इति वाच्यम् । "विरूपाणामपि समानार्थानाम्" इति तत्सम्भवात् ।

यद्वा अन्तरङ्गत्वादेकशेषः। संबुद्धिभिन्नसर्वनामस्थानरूपविभक्तिविशेषम्, उपधां चापेक्षमाणस्य दीर्घस्य बहिरङ्गत्वात् । न च द्वन्द्वेऽपि द्वन्द्वं विनैव समुदायाद्विभक्तिप्रसङ्ग इति वाच्यम् । तद्विधावनेकं सुबन्तमित्यनुवृत्त्या उक्तन्यायबाधात् । तथा च वृक्ष वृक्ष औ इति स्थिते एकशेषप्रवृत्तिरित्येकः पक्षः ।

यद्वा पृथग्विभक्तौ परत एकशेषः । ननु वृक्ष स् वृक्ष स् इति स्थिते विभक्तौ परतः सरूपाणामेकशेषस्य विभक्तिनिमित्तकत्वात् प्रकृतिनिवृत्तौ तदुत्तरविभक्तेः केवलायाः प्रयोगः स्यात् । न च केवलयोः प्रकृतिप्रत्यययोः प्रयोग इति निषेध इति वाच्यम् । तयोः परस्परलोपप्रयोजकत्वे 'अग्निचिद्' 'इयती' इत्यादौ परस्परराहित्येऽपि प्रयोगदर्शनात् । न चान्येषां सकाराणां संयोगान्तलोपेन निस्तारः। संयोगान्तं

यत् पदं तदन्तस्य तद्विधानात् । वृक्षस्स्स् इति स्थिते च वृक्षस् इत्येकम्, स् इति द्वितीयम्, स् इति तृतीयं पदमिति कस्यापि पदस्य संयोगान्तत्वाभावात् । एतेन संयोगादिलोपोऽपि परास्तः ।

मैवम् । "संयोगान्तलोप" इति भाष्यस्य संयोगान्तस्यान्तः सकारस्तस्य लोपः । स च हल्ङ्यादिसूत्रेणेतिव्याख्येयत्वात् । इति द्वितीयः ।

अथवा समासादेकविभक्तौ परत एकशेषोऽस्तु । प्रथमसूत्राद् द्वन्द्वे इत्यनुवृत्तेः । तथा च वृक्षश्च वृक्षश्चेति द्वन्द्वे वृक्षवृक्षऔ अत्रैकशेष इति । तदुत्तरविभक्तेः "सुपो धातु–" इतिलोपान्न श्रवणापत्तिरिति तृतीयः ।

यद्वा पृथक् सर्वेषां विभक्त्यन्तानामेकशेषः एकविभक्तीनाभिति न्यासाश्रयणात् । सप्तमीनिर्देशे हि प्रकृतिमात्रनिवृत्तौ प्रत्ययश्रवणप्रसङ्गः, उक्तरीत्या तु विभक्त्यन्तानामेव निवृत्त्या नेति चतुर्थः ।

अथवा प्रातिपदिकानामेवैकशेषः । तथाहि–एकविभक्ताविति न क्रियते । "ह्रस्वो नपुंसके" इति सूत्रात्प्रातिपदिकग्रहणमनुवर्त्यानुत्पन्नायामेव विभक्तौ सरूपाणां प्रातिपदिकानामेकशेषो विधीयते । तिङन्तेष्वपि पचल् पचल् इति स्थिते कृदन्तत्वात्प्रातिपदिकसंज्ञायां तदुपपत्तेः । तथा च लुप्यमानप्रकृतिकविभक्तिश्रवणस्य नापत्तिः । न च प्रातिपदिकमात्रसारूप्यविवक्षायां जननीपरिच्छेत्तृवाचिनोरपि मातृशब्दयोरेकशेषापत्तिः । विभक्त्यन्तानामेकशेषपक्षेऽपि तुल्यत्वात् । क्वचिद्विभक्तौ सारूप्यसत्त्वात् । न च प्रातिपदिकावस्थायां सारूप्यस्य सार्वदिकत्वात्सर्वत्रैकशेषापत्तिः । विभक्त्यन्तानां सरूपाणामेकशेषे तु यस्यां

तृतीयादिविभक्तौ सारूप्यं तत्रैकशेषो नत्वन्यत्रेति वाच्यम् । अर्थविप्रतिषेधादत्राप्येकशेषानापत्तेः । मातृशब्दद्वयैकशेषे ताभिरित्यनुप्रयुक्ते पुमर्थस्य, तैरित्युक्ते च स्त्र्यर्थस्यानवबोधात् इति पञ्चमः ।

यद्वा द्विवचनबहुवचनान्तानामेकशेषः । युगपदधिकरणविवक्षायां चैकैकस्य पदस्यार्थद्वयबोधकत्वात् वृक्षावित्यादौ द्विवचनादिसिद्धिः । न चैवं एकशेषेण नित्येन वृक्षश्च वृक्षश्चेति वाक्यबाधापत्तिः । तत्र सहविवक्षाविरहात् भिन्नार्थत्वादेकशेषवृत्त्या वाक्यबाधाभावात् । इदं च द्वन्द्वे इत्यनुवर्त्य द्वन्द्वे प्रसक्ते सतीति व्याख्यानाल्लभ्यते इति षष्ठः ।

तत्र—नाद्यः । भिक्षाणां समूहो भैक्षमित्यादेरसिद्धेः । तथाहि—भिक्षा भिक्षा भिक्षा आम् अ इति स्थिते सर्वविधिभ्यो लुग्विधेर्बलवत्त्वादामो लुकि कृते एकशेषो न स्यात् । विभक्तिपरत्वाभावात् । न च प्रत्ययलक्षणम् । "न लुमताऽङ्गस्य" इति तन्निषेधात् । राम राम औ इत्यत्रापि परत्वाद्वृद्धौ हेत्वभावादेकशेषो न स्यात् । न चान्तादिवद्भावेन विभक्तेः परत्वमिति वाच्यम् । उभयत आश्रये तन्निषेधात् ।

न द्वितीयः । द्विवचनबहुवचनार्थं द्वन्द्वप्रतिषेधार्थं च वचनान्तरारम्भापत्तेः । न चानवकाश एकशेषो द्वन्द्वबाधकः । तिङन्तेषु एकशेषस्य सावकाशत्वात् । कारकभेदेन क्रियाभेदादनेकतिङन्तप्रसङ्गात् । ततश्च परत्वात् द्वन्द्वः स्यात् । न च तदुत्तरम् एकशेषः । सकृद्गताविति न्यायात् । पुनः प्रसङ्गविज्ञानेऽपि वक्ष्यमाणरीत्या स्वरसमासान्तेषु दोषप्रसङ्गात् । वृक्षम् वृक्षम् इत्यत्र पूर्वस्यापि वृक्षशब्दस्य पाक्षिकनिवृत्तिप्रसङ्गे मृवृक्षावित्यापत्तेः । परस्यैव निवृत्तौ नियामकाभावात् । एवं बहुत्वेऽपि

योज्यम् । न च संयोगादिलोपेन सिद्धिः । एकपदसम्बन्धी यः संयोगस्तदादेर्हलोऽत्राभावात् । म् स् इत्यनयोः प्रत्येकं पदत्वात् । इदं चोपलक्षणं परानिवृत्तावपि पूर्वोक्तस्य हल्ङ्यादिलोपस्यानुपपत्तेः । सुतिसीतिप्रत्ययैः प्रकृत्याक्षेपात् हलन्तायाः प्रकृतेः परेषामेव स्वादीनां लोपविधानात् । एवं गोदौ दाराः सिकता इत्यादीना नियतवचनानां यत्रैकशेषस्तत्र हल्ङ्यादिलोपादेः शङ्कितुमप्यशक्यत्वाच्च । एतेन संयोगान्तस्य पदान्तस्येति पक्षाश्रयेणापि निर्वाहो न सम्भवतीति दिक् । एवं शिष्यमाणप्रातिपदिकोत्तरविभक्तेः श्रवणप्रसङ्गश्चेत्यवधेयम् ।

नापि तृतीयः । तदुक्तम्—"समास इति चेत्स्वरसमासान्तेषु दोषः" इति ।

तथाहि अश्वश्चाश्वश्चेति द्वन्द्वे समासान्तोदात्तत्वे शेपनिघाते च यदि पूर्वशेषस्तदा सर्वानुदात्तत्वापत्तिः, अथ परशेषस्तदाऽन्तोदात्तत्वप्रसङ्गः परत्वादेकशेषं बाधित्वा समासान्तोदात्तत्वप्रवृत्तेः । न च येननाप्राप्तिन्यायेनैकशेषः समासान्तोदात्तत्वापवाद इति वाच्यम् । तदुत्तरमप्येकशेषप्रवृत्तिसम्भवाद्विरोधाभावाच्च । एवं ऋच् ऋच् अ इति स्थितेऽन्तर्वर्तिन्या विभक्तेर्लुका लुप्तत्वात् प्रत्ययलक्षणप्रतिषेधाच्च विभक्तिपरत्वाभावादेकशेषार्थं समुदायादन्या विभक्तिरुत्पाद्या, तस्यां च नास्ति सारूप्यम् । एको हि ऋच्शब्दः, अपर ऋचशब्दः । न च समासान्तः समासस्यैवावयवो नतूत्तरपदस्येति वाच्यम् । समासान्तकृतव्यवधानेन विभक्तिपरत्वाभावादेकशेषानापत्तेः । न चायमेव दोषो वक्तव्यो नत्वसारूप्यमिति वाच्यम् । समासार्थस्योत्तरपदस्यावयवः समासान्त इति

पक्षमाश्रित्य तथोक्तत्वात् । एवं स्वसा च स्वसारौ चेत्यत्र परत्वाद् गुणदीर्घयोः कृतयोः सारूप्याभावादेकशेषो न स्यात् । एवं नौश्च नावौ चेत्यादावनङ्गकार्ये आवादेशादावपि बोध्यम् । तथा हि यद्यन्तर्वर्त्तिन्यां विभक्तौ लुका लुप्तायामपि वचनसामर्थ्यात्प्रत्ययलक्षणमाश्रीयते तदाऽत्र वैरूप्यम्, अथ समासविभक्त्यैकविभक्तिपरत्वं तथाऽपि वैरूप्यतादवस्थ्यम् । एवम् "आख्यातमाख्यातेन" इत्यत्र प्रकरणे द्वन्द्वश्च सरूपाणामिति कल्पनीयम् । अन्यथा तिङन्तानामेकशेषानापत्तेः ।

नापि चतुर्थः । लुप्यमानानां प्रत्ययेन सहैव निवृत्तावपि शिष्यमाणप्रकृतिकप्रत्ययस्य श्रवणापत्त्या तल्लोपविधानस्य द्विबहुवचनविधानस्य द्वन्द्वप्रतिषेधवचनस्य चारम्भणीयत्वात् ।

नापि पञ्चमः । भैक्षमित्यस्यासिद्धेः । समर्थस्य यद् ङ्याप्प्रातिपदिकं तस्मात्तद्धिता इत्याबन्तादाणि कृते परत्वादादिवृद्धौ कृतायां वैरूप्यादेकशेषानापत्तेः । हरितस्य स्त्री हरिणी, एव हरिणस्यापि । हरिणी च हरिणी च हरिण्यावित्येकशेषानुपपत्तेश्च । प्रातिपदिकावस्थायां वैरूप्यात् । एवं श्येन्यौ रोहिण्यावित्यत्रापि । यद्यपि हरितशब्दात्पुंयोगे ङीषा हरितीति रूपं तथाऽपि हरितशब्दस्य स्त्री हरिणी स्त्रीप्रत्ययान्तो हरितशब्द इति यावदिति कैयटः । प्रातिपदिकग्रहणस्य विच्छिन्नत्वाच्च प्रातिपदिकानां लोके प्रयोगाभावात्सारूप्यस्य पदान्तर्भावेणैव ग्रहणात् । तदुक्तम्—"न वा पदस्यार्थे प्रयोगाद्" इति ।

नापि षष्ठः । जहत्स्वार्थाया वृत्तौ पदद्वयस्याप्यनर्थकत्वात् एकैकस्यानेकार्थाभिधायित्वानुपपत्तेः । अजहत्स्वार्थावृत्तिपक्षेऽपि प्रथमप्रवृत्तस्यैकवचनस्य त्यागायोगात् । अन्यथा षष्ठीतत्पुरुषाद्ययोगात् तत्रापि पूर्वपदस्योत्तरपदार्थे उपसंक्र-

मेण षष्ठ्याद्ययोगात् । तथा च भाष्यम्-"सेयं युगपदधिकरणवचनता दुःखा च दुरुपपादा च" इति । एतच्च द्वितीये प्रपञ्चयिष्यामः । तस्मात्षडपि पक्षा दुष्टा एवेति प्राप्ते सिद्धान्तमाह भाष्यकारः—

"प्रातिपदिकानां चैकशेषे सिद्धम्" इति । तथाहि—एकशेषे न एकविभक्तिर्निमित्तं किं तर्हि सारूप्ये उपलक्षणम् । एकविभक्तौ लौकिकप्रयोगे यानि सरूपाणि दृष्टानि तेषामेकशेषः । स चानैमितिकत्वाद्विभक्तिं नापेक्षते इत्यन्तरङ्गत्वात्सुबुत्पत्तेः प्रागेव प्रवर्त्तते । भाष्ये प्रातिपदिकग्रहणं चोपलक्षणम् । तेन हरिण्यादीनामपि तत्सिद्धिः । "स्वरभिन्नानां यत् परं तच्छिष्यते" इति वचनान्ङीवन्तस्य हरिणीशब्दस्य शेषः । केचित्तु हरितहरिणशब्दयोरेवैकशेषे उभयवाचित्वे ऽप्यन्यतरस्य वर्णवाचित्वं चाश्रित्य स्त्रीप्रत्यय इत्याहुः, तेषां पक्षे स्वरभेदप्रसङ्ग इति कैयटः । भैक्ष्यमित्यादावप्यनैमित्तिकत्वेनान्तरङ्गत्वात्पूर्वमेकशेषस्ततो वृद्धिः । यद्वैकशेषोत्तरमेव तद्धितोत्पत्तिरिति न दोषः ।

तस्मादयमत्रार्थः—विभक्तिपदमत्र स्वादिमात्रपरम्, सत्यप्याश्रयभेदेन क्रियाभेदे निवृत्तभेदाया एव तस्यास्तिङन्तेन बोधात् । प्रकर्षाभ्यावृत्त्यादीना च स्वाश्रयाभ्यावृत्त्यादिनिमित्तकत्वात् । पचत इत्यादिद्विवचनादीनां च कर्त्रादिनिष्ठसंख्याप्रतिपादकत्वात् । नच कर्तृकर्मणोर्विहितस्य लकारस्य तद्भेदाद्भेद एव युक्त इति वाच्यम् । इष्टापत्तेः । "लस्य" इत्यत्र लत्वजातेराश्रयणादनेकेषामपि लकाराणां स्थानेऽर्थत आन्तर्यात् द्विवचनबहुवचनयोः प्रवृत्तेः । एकपदं च समानार्थकं सत्सजातीयार्थकम् । साजात्यं च न विभक्तित्वेन विभक्तिपदादेव सिद्धेः, तदुपादानस्यापि वैयर्थ्याप-

त्तेश्च । विभक्तित्वावच्छेदेन सारूप्यस्यासम्भवादेवाविवक्षणीयत्वात् । तत्सामानाधिकरण्यमात्रेण सारूप्यस्य च सरूपपदोपादानादेव लाभात्, किन्तु विभक्तित्वव्याप्येन सुत्वादिना । न तु प्रथमात्वादिना । वृक्षः वृक्षौ वृक्षा इत्यादावपि सारूप्याभावात् । तात्पर्यवशाच्च प्रकृत्यर्थतावच्छेदकसुत्वादिधर्माणां यावत्त्वं गम्यते । तादृशयत्किञ्चिद्धर्मावच्छेदेन सारूप्यस्य तद्व्यतिरेकेणैव सिद्धेः । अवच्छिन्नत्वं च सप्तम्यर्थः । तथा च विभक्तित्वव्याप्या यावन्तः सुत्वादिधर्माः प्रत्येकं तदवच्छिन्नयावत्प्रत्ययव्यक्तिषु सारूप्यमित्यर्थः । सुत्वादियावद्धर्मावच्छिन्नाया एकस्याः प्रत्ययव्यक्तेरप्रसिद्धत्वात्प्रत्येकमित्युक्तम्, सुत्वाद्यवच्छिन्नयत्किञ्चिद्व्यक्तौ सारूप्यवारणाय यावदित्युक्तम् । तेन जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोर्नैकशेषः । औ इत्यारभ्य शस्पर्यन्तं सारूप्याभावात् । एतेनोत्तरसूत्रस्थस्यैवकारस्येहानुकर्षणात्सरूपाण्येवेत्यर्थो लभ्यते इत्यपास्तम् । उक्तरीत्यैव तल्लाभात् ।

नन्वेवं नियतवचनानां दाराश्च दाराश्चेत्यादीनामेकशेषो न स्यात् । मैवम् । यावत्यः प्रत्ययव्यक्तयो यस्मात्सम्भवन्ति तदवच्छेदेन सारूप्यस्य विवक्षितत्वाद् इति दिक् ।

स्यादेतत् । गर्गा इति न सिद्ध्यति । अपत्यबहुत्वे हि यञोऽपि बहव उत्पाद्याः प्रत्यर्थशब्दनिवेशाद्, अन्यथैकशेषवैयर्थ्यात् । न च द्वितीयादीनां यञां प्रकृतेः परत्वं न स्यादिति वाच्यम् । यञाकृतेरेकत्वाद्व्यवधानाभावात् । गर्ग य य य इति स्थिते प्रथमयञः प्रकृतिसन्निपातकृतवैरूप्यादेकशेषो न स्यात् । एवं विभक्तिनिमित्तकत्वपक्षेऽपि समुदायस्य तद्धितान्तत्वात्प्रातिपदिकसंज्ञायां एकविभक्त्युत्पत्तौ बोध्यम् । सहविवक्षायां विभक्त्यन्तानामेकशेष इति पक्षेऽपि गर्ग य अस् य अस्

इति स्थिते ऽप्येवम् । न च प्रकृत्यंशं विहाय यशब्दानां सारूप्या-त्तदुपपत्तिः । प्रकृतिविशिष्टसमुदायादेव विभक्त्युत्पत्त्या तल्लक्षि-तसारूप्याश्रये एकशेषे विभक्तिबहिर्भावस्यानुचितत्वात् । यञा प्रकृत्यर्थानपेक्षसमुदायानभिधायित्वाच्च । न चैकैकस्य प्रत्य-यार्थस्य प्रकृत्यर्थेन योगात्प्रधानावृत्त्या च गुणावृत्तेरन्याय्य-तया गर्गशब्दानामपि बहुत्वाद्गार्ग्यशब्दानामेवैकशेष इति वाच्यम् । "तद्राजस्य बहुषु" इति यलोपानुपपत्तेः । बहुषु वृत्ते-र्यञादेरेव तद्विधानात् । तस्य च यञामेकशेष एव शिष्यमाणय-ञो बह्वर्थकत्वादुपपत्तेः । उक्तरीत्या तु यञन्तस्यैव बह्वर्थकत्वात् ।

मैवम् । तत्कृते बहुत्वे इत्यस्यापि तदन्तकृते बहुत्वे इत्येव व्याख्यानात् । न चैकस्मिन्कश्यपापत्येऽञि कृते तस्माद् "इवे प्र-तिकृतौ" कन् । "जीविकार्थे चापण्ये" इति तस्य लुक् । प्रतिकृतिब-हुत्वविवक्षायां काश्यपा इत्यत्रापि लुक् स्यात्, अञन्तस्य बह्व-र्थकत्वादिति वाच्यम् । अपत्यबहुत्ववाचिन एव लोपविधा-नात् अस्य च प्रतिकृतिबहुत्ववाचित्वात् । यद्वा एकस्मादे-व गर्गशब्दात्परेषां बहूनां यञां सत्यपि प्रकृतिसन्निपातकृतवै-रूप्ये सर्वेषां प्रकृत्यर्थविशिष्टापत्याभिधायित्वाद् "विरूपाणामपि समानार्थानाम्" इत्येकशेष इति सिद्धम् । यद्येतत्सूत्रं न स्यात्तर्हि प्रत्येकं विभक्त्युत्पत्तौ द्वन्द्वः स्यात्, सति त्वनेकसुबन्ताभावान्न तत्प्रसक्तिः । एतेन द्वन्द्वापवाद एकशेष इति व्याख्यातम् ।

ननु पदार्थतावच्छेदकभेदे द्वन्द्व इति पक्षे घटश्च घटश्चेति द्वन्द्वस्य न प्रसङ्ग इति चेन्न । पदार्थभेदे द्वन्द्वपक्षे सम्भवात् । पयसी इत्यत्र जलत्वदुग्धत्वरूपपदार्थतावच्छेदकभेदसत्त्वाच्च । स्यादेतत् । एकश्च, एकश्च द्वौ च द्वौ चेत्येकशेषः स्यात् । अत्र

वार्तिकम्–"संख्याया अर्थासंप्रत्ययादन्यपदार्थत्वाच्चानेकशेषः" इति । यत्रैकः शब्दोऽनेकार्थाभिधानसमर्थः तत्रैवैकशेषः । प्रयुक्तानामेवान्वाख्यानात् । एकानित्युक्ते च सहायादेरेवार्थस्य प्रतीत्या द्वित्वप्रतीत्यभावात् । अन्यपदार्थत्वाच्चेत्यस्यासंदिग्धेन पदान्तरेण द्वावित्यादिनैव तदर्थः प्रत्याय्यते इत्यर्थः । एतेन तत्र द्वन्द्वोऽपि नास्त्यनभिधानात् । ननु गार्ग्यावित्यत्र गार्ग्यश्च गार्ग्यश्चेति सरूपैकशेषस्यापि सम्भवात्सन्देहादर्थासंप्रत्ययेऽपि एकशेषो दृश्यते उत्तरकालं प्रकरणादिना सन्देहनिवृत्तेः । न च तत्र "वृद्धो यूना" इत्यारम्भसामर्थ्यात् तथा, अत्र त्वसन्दिग्धविषयसम्भवान्नेति वाच्यम् । अक्षा इत्यादावप्यप्रवृत्त्यापत्तेः । मैवम् । अर्थासम्प्रत्यये सत्यन्यपदार्थत्वादिति विशिष्टस्य हेतुत्वात् ।

अत्रेदं तात्पर्यम्–यत्पदार्थतावच्छेदकावच्छिन्नं द्वित्वादिपर्याप्त्यधिकरणं तत्पदयोरेकशेषः । एकत्वावच्छिन्नं तु न द्वित्वादिपर्याप्त्यधिकरणम् । ननु घटत्वाद्यवच्छिन्नमपि प्रत्येकं न तथा, मिलितं त्वेकत्वावच्छिन्नमपि तथेति तुल्यम् । न च तत्र पदार्थताऽवच्छेदकं घटत्वादिकमुभयत्राप्यभिन्नम्, एकत्वं तु प्रतिव्यक्ति भिन्नमिति वाच्यम् । पयसी इत्यादावपि जलत्वदुग्धत्वरूपपदार्थतावच्छेदकयोः सामानाधिकरण्याभावात् । मैवम् । यत्पदार्थतावच्छेदकं प्रत्ययार्थसंख्यानिष्ठप्रतियोगितावच्छेदकताकभेदप्रकारतानिरूपितविशेष्यतावच्छेदक न भवति, तत्पदयोरेकशेषः । एकत्वं तु एको द्वित्ववद्भिन्न इति प्रतीतौ विशेष्यतावच्छेदकमेव । पर्याप्तिसम्बन्धस्य प्रतियोगितावच्छेदकत्वलाभाय प्रत्ययार्थेत्युक्तम् । एकघट घटाविति प्रयोगाभावेन विभक्त्यर्थद्वित्वादेः पर्याप्त्यैवान्वयस्य व्युत्पन्नत्वात् । एको द्वित्ववानि-

त्यत्र तु द्वित्वमाश्रयत्वमात्रेण विशेषणं न तु पर्याप्त्येति न-दोषः। घटो द्वित्ववद्भिन्न इत्यत्रापि एकत्वमेव यथोक्तभेद-प्रकारतानिरूपितविशेष्यतायामवच्छेदकं न तु घटत्वं न द्वाविति प्रयोगाभावात्। अत एव चैत्रो मैत्रश्च गच्छतः इत्यत्र प्रत्ये-कमेकत्वान्वयेऽपि चैत्रत्वमैत्रत्वे धर्मितावच्छेदकीकृत्यैवाख्या-तार्थद्वित्वान्वयधीर्न त्वेकत्वमपीत्यदोषः। एवं द्विशब्दादावपि योज्यम्।

प्रकृतमनुसरामः—एकार्थानामपि विरूपाणामेकशेषो वक्त-व्यः। वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ कुटिलदण्डौ वा। स-रूपाणामित्यनेन समानार्थकत्वस्यापि सङ्ग्रहात्। "स्वरभिन्नानां यस्योत्तरस्वरविधिस्तस्यैकशेषो वक्तव्यः"। स्वरेण भिन्नानां भिन्नस्वराणामिति यावत्। अक्षश्चाक्षश्च अक्षौ। एकोऽक्षशब्दोऽशे-र्देवने इति सप्रत्ययान्तत्वादन्तोदात्तः। द्वितीयस्तु घञन्तत्वादा-द्युदात्त इति तस्यैकशेषः। मीमांसकौ। एको मीमांसकशब्दो ण्वुलन्तत्वान्मध्योदात्तः अपरस्तु मीमांसामधीते इति "क्रमा-दिभ्यो वुन्" इति आद्युदात्तस्तस्यैकशेषः।

इदमप्यवधेयम्—घटावित्यादौ पदार्थतावच्छेदकसामाना-धिकरण्येन द्वित्वं प्रतीयते, अक्षावित्यादावपि पदार्थतावच्छेद-कयोर्बिभीतकत्वदेवनत्वयोः परस्परसामानाधिकरण्याभावे ऽपि प्रत्येकं तदधिकरणयोर्द्वयोर्द्वित्वान्वये द्वित्वेन सह तयोः सामाना-धिकरण्यमव्याहतम्, पदार्थतावच्छेदकयोः परस्परसामानाधिक-रण्यप्रत्ययस्यानुभवसिद्धत्वाभावात् प्रयोजनाभावात् घटावित्या-दावसम्भवाच्च। एकशेषस्थले च अक्षपदमेव एकपदार्थतावच्छे-दकप्रकारकत्वविशिष्टापरपदार्थतावच्छेदकप्रकारकज्ञानजनकम्। अनुभवानुरोधात्। तथाचानारभ्य एवैकशेषः। एकेनैव तादृश-

र्थबोधसिद्धेः, अन्यथा तदारम्भेऽप्यनिस्तारात् । नहि स्वतोऽसती शक्तिराचार्येण कर्तुं शक्यते । शब्दशक्तेर्लोकप्रयोगमात्रकल्प्यत्वात् । नचैवमग्निचित् सोमसुदित्यादौ क्विब्लोपादेरपि वैयर्थ्यापत्तिः । प्रत्ययलक्षणादेस्तत्प्रयोजनत्वात् । एकशेषस्य च प्रक्रियायामुपयोगविरहात् । नचैकेन शब्देन कथमनेकार्थाभिधानमिति वाच्यम् । तुल्यत्वात् वृत्तिविषयतावच्छेदकावच्छिन्नबोध्यत्वात् । एकद्विबहूनामर्थानां घटो गावौ दारा इत्यादिशब्दवृत्तिविषयत्वस्याविशेषात् । नचैवं प्लक्षन्यग्रोधावित्यादावपि सहविवक्षाया समुदायार्थप्रादुर्भावादेकेनैवार्थद्वयबोधात् द्वितीयप्रयोगो न स्यादिति वाच्यम् । प्लक्षावित्युक्ते प्लक्षान्तरेणैव सहत्वप्रतीतेः । क्वचित् द्विरूपेणाप्यर्थद्वयाभिधानदर्शनाच्च । यथा—द्यावाक्षामा । द्यावा चिदस्मै पृथिवी नमेते इति । द्योशब्देनात्र द्यावापृथिव्योरभिधानम् । औकारस्य "सुपां सुलुग्" इत्याकारादेशः । "गोतो णित्" इत्योकारान्तग्रहणात् णित्वाद् वृद्धिस्तत आवादेशः। पृथिवीइति द्विवचनान्तम्। "वा छन्दसि" इति पूर्वसवर्णदीर्घः । पृथिवीपदेन दिवस्पृथिव्योरभिधानम् । तथाच प्रकरणादिवशाद्यत्रार्थविशेषनिर्णयस्तत्र प्रवृत्तिनिमित्तभेदे ऽपि विरूपस्याप्यनेकार्थाभिधायित्वदर्शनात्सरूपस्य सुतरां तदुपपत्तेः ।

एतेन नानार्थानुरोधादेकशेषारम्भ इत्यपास्तम् । उक्तरीत्या एकेनैव शक्यतावच्छेदकद्वयप्रकारकधीसम्भवात् । नच द्वन्द्ववारणार्थमयमारम्भः । अनभिधानादेव तत्सिद्धेः ।

तदेवं पक्षद्वये ऽपि सूत्रं प्रत्याख्यातम् ।

अत एव "सरूपाणाम्" इति "जात्याख्यायाम्" इति च सूत्रयोर्भाष्यकृता प्रत्याख्यास्यमानत्वेऽपि लक्ष्यानुरोध एव

पक्षद्वयाश्रये बीजमित्युक्तं कौस्तुभे पस्पशायाम् ।

पदार्थतावच्छेदकैक्यस्थलाभिप्रायेण तु प्राह वार्त्तिककारः— "आकृत्यभिधानाद्वैकं विभक्तौ वाजप्यायनः" इति । सूत्राभिप्रायवर्णनमात्रार्थं वार्त्तिकान्तरं "द्रव्याभिधानं व्याडिः" इति । जातिव्यक्त्योः पदार्थत्वे तारतम्यं विप्रतिषेधसूत्रे निरूपयिष्यामः ।

जातिसद्भावे प्रमाणमाह—"प्रख्याऽविशेषाद्"इति । प्रख्याया बुद्धेरविशेषादेकरूपत्वात् । भिन्नव्यक्तिविशेष्यकयोरपि गौरित्याकारकयोर्द्वयोर्बोधयोः समानप्रकारकत्वानुभवात् । एवं चैकत्वमपि जातेर्धर्मिग्राहकमानसिद्धम् । लाघवेन नित्यत्वकल्पनाच्च नाश्रयनाशनाश्यत्वम् । नचैकस्या जातेर्युगपदनेकव्यक्तिषु कथं वृत्तिरिति वाच्यम् । तस्या अपि धर्मिग्राहकात्सिद्धेः ।

यत्तु "एक इन्द्रो ऽनेकस्मिन्क्रतुशते आहूतो युगपत्सर्वत्र भवति"इति भाष्यं तद् अभ्युच्चयमात्रम् । कायव्यूहेन तदुपपत्तेरुत्तरमीमांसायां निरूपितत्वात् । अचेतनदेवतापक्षे तु सन्निधानस्यैवानङ्गीकारात् ।

ननु गोत्वं व्यापकमवश्यं वाच्यम्, अन्यथा उत्पन्ने गोपिण्डे तत्प्रत्ययो न स्यात् । तदुक्तं बाह्यैः—

न याति न च तत्रासीदस्ति पश्चान्नचांशवत् ।
जहाति पूर्वं नाधारमहो व्यसनसन्ततिः ॥

ततश्च घटादावपि गोत्वप्रकारकप्रत्ययः ।

तदुक्तम्—

व्यक्तौ चैकत्र सा व्यक्त्याऽभेदात्सर्वत्रगा यदि ।
जातिर्दृश्येत सर्वत्रेति ।

मैवम् । समवायाख्यसम्बन्धविशेषस्य गोव्यक्तिभिरेव समं

स्वीकारात् । तत्र स्वभावस्यैव नियामकत्वात् । अत एव जीवानां व्यापकत्वे ऽप्यवच्छेदकत्वाख्यः सम्बन्धः शरीरविशेष एव स्वीक्रियते । अन्यथा सर्वशरीरावच्छेदेन सर्वेषां सुखादि-साक्षात्कारापत्तेः ।

यत्तु बौद्धाः—अपोह एव अतद्व्यावृत्तिरूपो जातिः । गो-भिन्नभेदस्य गोमात्रे सत्त्वादतिरिक्तगोत्वे मानाभावादिति । तद-सत् । गोभिन्नमित्यत्र यत्किञ्चिद्गोप्रतियोगिको भेदो निवेश्यते, गोत्वावच्छिन्नप्रतियोगिताको वा । नाद्यः । गोरपि यत्किञ्चिद्गवा-पेक्षया भिन्नत्वात् । तद्भेदस्य घटे ऽपि वृत्त्या तत्रापि गौरिति प्रत्ययापत्तेः । नान्त्यः । अतिरिक्तगोत्वासिद्धेः । तदाहुः—

सिद्धश्चागौरपोह्येत गोनिषेधात्मकश्च सः ।
तत्र गौरेव वक्तव्यो नञा यः प्रतिषिध्यते ॥ इति ।

क्रियाशब्दानामपि जातिवाचित्वमेव । गुडतण्डुलादिपा-कव्यक्तिष्ववान्तरवैलक्षण्यसत्त्वे ऽपि पाकत्वस्य प्रत्यभिज्ञाबला-त्सिद्धेः । भिन्नडित्थशब्दगतं यथा डित्थशब्दत्वं नाम तेष्व-भिन्नप्रत्ययाभिधानहेतु तथा सोऽयमिति शब्दार्थयोरभेदाध्यव-सायादध्यस्तडित्थशब्देषु संज्ञिष्वपि सम्बन्धादभिन्नप्रत्यया-भिधाननिमित्तम् ।

तथाच स्वाश्रयवाच्यत्वसम्बन्धेन व्यक्तिनिष्ठं डित्थ-शब्दत्वं तदर्थेषु प्रवृत्तिनिमित्तम् । वह्निमानित्यादौ स्वसम-वायिसंयोगसम्बन्धेन वह्नित्वमिवेत्याशयः ।

तौ एतौ इत्यादौ च परोक्षत्वप्रत्यक्षत्वादिकम् ।

अभावाश्चत्वार इत्यत्रापि निरुपाख्यत्वं नाम सामान्यमाश्र-यणीयम् । गोत्वाश्वत्वे सामान्ये इति व्यावृत्तेष्वनुवृत्तप्रत्य-यहेतुत्वं सामान्यानामपि सामान्यमस्ति ।

अथवा निःसामान्यानि सामान्यानीति तार्किकदर्शनं वैयाकरणैर्न नियमत आस्थेयम् । कार्यान्नीयमाना हि तेषां पदार्था इति सामान्येष्वपि सामान्यमस्ति इति कैयटः । नचैवं सामान्येष्वपि सामान्यस्वीकारेऽनवस्थापत्तिरिति वाच्यम् । एकव्यक्तित्वरूपबाधकसत्त्वेन तत्र जातेरस्वीकारात् । यत्तु घटत्वादिजातिमादाय तस्याप्यनेकव्यक्तिकत्वमस्त्येवेति । तन्न । तत्साधारणजात्यन्तरस्वीकारे प्रयोजनाभावात् । सामान्यत्वजात्यैव तत्रानुवृत्तप्रतीत्युपपत्तेरिति दिक् ।

ननु जातौ पदार्थे द्वित्वादीनां कथमन्वयः तस्या एकत्वात् । मैवम् । एकाश्रयसम्बन्धविवक्षायामाकृतेरेकवचनम् । यथा "पशुना यजेत" इति । अनेकाश्रयसम्बन्धविवक्षायां तु द्विवचनबहुवचने । नहि जातिपदार्थवादिना व्यक्तेरनभिधेयत्वं स्वीक्रियते, किन्तु गुणभावमात्रम् । तत्र पचति पचतः पचन्तीत्यादौ क्रियाप्राधान्येऽपि साधनसंख्याकृतो वचनभेदः, एवमाकृतिप्राधान्येऽपि द्रव्यसंख्याकृतः इत्यदोषात् । नन्वेवमपि लिङ्गभेदो न स्यात् ब्राह्मणी ब्राह्मण इति । उक्तं हि "विशेषणानां चाजातेः" इत्यत्र "आविष्टलिङ्गा जातिः" इति । सर्वदाऽप्येकमेवाश्रयगतं लिङ्गमुपादत्ते इत्यर्थः । मैवम् । स्तनकेशादिसम्बन्धरूपस्य स्त्रीत्वादेर्लौकिकस्यात्र लिङ्गत्वेनानुपादानात् । तथा सति लिङ्गान्तरसम्बन्धायोगात् । किन्तु स्वसिद्धान्तव्यवस्था शाब्दिकैराश्रीयते । तथाहि सत्त्वरजस्तमःपरिणामरूपाणां शब्दादीनां वृद्धिह्रासमध्यस्थाऽवस्थाः शब्दैकगोचरा लिङ्गत्वेन परिगृह्यन्ते । गुणानां वृद्धिः पुंस्त्वम्, अपचयः स्त्रीत्वम्, स्थितिमात्रं नपुंसकत्वम् । अत एवोत्कर्षापकर्षसत्त्वेऽपि तदविवक्षया स्थितिमात्राभिप्रायेण "सामान्ये नपुंसकम्" इति शास्त्रं सङ्गच्छते । एतच्च

। "स्त्रियाम्" इति सूत्रे प्रपञ्चयिष्यामः ।

# वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ६५ ।

अपत्यमन्तर्हितं वृद्धमिति पूर्वाचार्यपरिभाषया वृद्धपदं गोत्रपरं पारिभाषिकयुवपदसाहचर्यात् । युवप्रत्ययान्तेन सहोक्तौ गोत्रप्रत्ययान्तः शिष्यते उक्तप्रत्ययमात्रकृतं चेत्तयोः कृत्स्नं वैरूप्यम् । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । वृद्धेति किम् । गर्गश्च गार्ग्यायणश्च गर्गगार्ग्यायणौ । यूनेति किम् । गर्गश्च गार्ग्यश्च गर्गगार्ग्यौ । तल्लक्षणेति किम् । गार्ग्यश्च वात्स्यायनश्च गार्ग्यवात्स्यायनौ । कृत्स्नं किम् । भागवित्तिभागवित्तिकौ । भागवित्तशब्दाद्गोत्रापत्ये "अत इञ्" तस्माद्यून्यपत्ये "वृद्धाट्ठक् सौवीरेषु बहुलम्" इति ठक् । अत्र न केवलं प्रत्ययमात्रकृतं वैरूप्यं किन्तु कुत्सासौवीरगोत्रत्वकृतमपि । "गोत्रास्त्रियाः कुत्सने" इत्यतः "कुत्सने" इत्यस्यानुवृत्तेः । कृत्स्नं किम् । गार्ग्यश्च वात्स्यायनश्च गार्ग्यवात्स्यायनौ ।

# स्त्री पुंवच्च ६६ ।

यूना सहोक्तौ वृद्धा स्त्री शिष्यते तदर्थश्च पुंवत् । स्त्रीत्वप्रयुक्तवैरूप्याधिक्यादप्राप्तावारम्भः । गार्गी च गार्ग्यायणौ च गर्गाः । "अस्त्रियाम्" इत्यनुवृत्तौ "यञञोश्च" इति लुक् । दाक्षी च दाक्षायणश्च दाक्षी । इह स्त्रीशब्दस्य स्वरितत्वे तदधिकारीयप्रत्ययोपादाने पुंवत् स्त्रीप्रत्यय इति अभावातिदेशो वा, स्वरितत्वाभावे शब्दस्य-

ग्रहणं वा, अर्थग्रहणं वा। नाद्यः। उक्तस्थले गर्गा इत्यत्र यञः श्रवणापत्तेः। "अस्त्रियाम्" इति तल्लोपनिषेधात्। प्रसज्यप्रतिषेधे चाय दोषः। पर्युदासे तु स्त्रीसदृशार्थसत्त्वात् शिष्यमाणस्य लुप्यमानार्थाभिधायित्वात्। न द्वितीयः। स्त्रीत्वस्यानिवृत्त्या गर्गान्पश्येत्यत्र "तस्माच्छसो नः पुंसि" इति नत्वानुपपत्तेः। तस्मात् तृतीयः साधुः। पुमर्थातिदेशे तत्प्रयुक्तकार्यप्रवृत्तेः। एवमन्यत्रापि बोध्यम्।

## पुमान्स्त्रिया ६७।

सरूपाणां मध्ये स्त्रिया सहोक्तौ पुमान् शिष्यते स च पुंवदेव तल्लक्षण एव चेद्विशेषः। हंसश्च हंसी च हंसौ। शिष्यमाणस्य लुप्यमानार्थाभिधायित्वेन स्त्रीत्वस्यापि सत्त्वेन टाप्प्राप्तः पुंवदेवेत्यनुवृत्तेर्न भवति। पदान्तरगम्ये ऽपि तल्लक्षणविशेषे ऽयमेकशेषः। यथा गौश्चायं गौश्चेयमित्येतौ गावौ चरत इति कैयटः। तदितरकृतविशेषविरहरूपे विशिष्टाभावे ऽस्य तात्पर्यम्। स चात्रापि विशेष्याभावादस्त्येवेति दीक्षिताः। पुमानिति योगविभागाद्विशेषाभावे ऽप्येकशेषः, शिष्टप्रयोगस्य नियामकत्वाच्च नातिप्रसङ्ग इति न्यासकारः। हंसत्वजातेः शक्यतावच्छेदकत्वसाम्याच्छब्दभेदस्य स्त्रीत्वमात्रलक्षणत्वे ऽपि हंसश्च वरटा च इत्यादौ नैकशेषः। सरूपानुवृत्त्या प्रकृतिसाम्यलाभात्।

## भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ६८

भ्राता च स्वसा च भ्रातरौ। पुत्रश्च दुहिताच पुत्रौ। पूर्वसूत्रे सरूपपदानुवृत्तौ चैतदेव सूत्रं मानम्। अन्यथा ऽत्रापि तेनैव स्यात्।

"त्यदादीनि सर्वैः" इत्यत्र तु न तदनुवृत्तिर्बाधितत्वात् । अत्र भाष्यम् गार्ग्यश्च गार्ग्यायणश्चेत्यत्र वृद्धयूनोर्यदेकं गर्गापत्यत्वरूपं सामान्यं तस्यैव विवक्षितत्वात् सिद्धं गार्ग्याविति । वृद्धयूनोरत्रोपादानं किं वा वृद्धयोरेवेति विशेषावधारणार्थम् एकशेषारम्भपक्षेऽपि प्रकरणादेरेवापेक्षणीयत्वात् सामान्योपादाने ऽपि तेनैव विशेषनिर्णयसंभवात् ।

न च द्वन्द्ववारणार्थमेकशेषारम्भः । अनभिधानादेव तन्निवृत्तेः । स्त्रीपुंसयोरपि मृगक्षीरादिवज्जातिमात्रविवक्षायां ब्राह्मणावित्यादि सिद्धम् ।

स्यादेतत् । ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेत्यत्र "पुमान्स्त्रिया" इत्येकशेषप्रसङ्गः।यत्रैका प्रत्ययप्रकृतिरन्यत्तु वैरूप्यम्, तादृशविषयस्य सत्त्वात्। नच "एकविभक्तौ" इत्यनुवृत्त्या एकशेषनिमित्ते विभक्तौ परतो यत्र स्त्रीपुंसकृतो विशेषस्तत्रैकशेषः इह तु पूर्वपदविभक्तावपि स्त्रीपुंसकृतविशेषसत्त्वान्नेति वाच्यम् । कारकश्च कारिकाच कारकावित्येकशेषानापत्तेः । इत्त्वं ह्यत्र स्त्रीत्वकृतो विशेषस्तस्य चैकशेषनिमित्तविभक्तिमपेक्ष्य पूर्वत्वाभावात् । नच इत्त्वस्य स्त्रीप्रत्ययकृतविशेषरूपत्वे ऽपि स्त्रीत्वरूपार्थकृतविशेषत्वं नास्तीति वाच्यम् । तथा सति गोमांश्च गोमती च गोमन्तावित्यसिद्धेः । स्त्रीप्रत्ययेनात्र विशेषान्तरानाधानात् । स्त्रीत्वरूपार्थेन तु प्रत्ययरूपस्यैव विशेषस्योक्तत्वात् । तथाच क्वचिदर्थाहितस्य क्वचिच्च स्त्रीप्रत्ययाहितस्य विशेषस्यावश्यं ग्राह्यत्वात् । नच पक्षद्वये ऽपि पटुश्च पट्वीच पटू इत्यादावेकशेषो न स्यात्, यणादेशे स्त्रीत्वस्त्रीप्रत्ययान्यतरस्यापि निमित्तत्वाभावात्, अज्रूपत्वमेवाश्रित्य यणो विहितत्वादिति वाच्यम् । तद्भावभावितामात्रेण स्त्रीप्रत्ययस्य परंपरया च

स्त्रीत्वस्य यणादेशे निमित्तत्वात्, एवं इत्वेऽपीति ब्राह्मणवत्सा चेत्यादावेकशेषो दुर्वार इति।

मैवम्। तत्पदस्यानुवृत्त्या प्रधानयोरेव स्त्रीपुंसयोर्ग्रहणात्। सहविवक्षायां चैकशेषविधानात्। तस्याश्च प्रधानमात्रविषयकत्वात् यत्र प्रधानस्त्रीपुंसकृतो विशेषस्तत्रैकशेषः अत्र त्वप्रधानस्त्रीपुंसकृतस्यापि विशेषस्य सत्त्वादिति।

## नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ६९।

अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्चैकवद्वा तल्लक्षण एव चेद्विशेषः। शुक्लश्च कंबलः शुक्लं च वस्त्रं तदिदं शुक्लं ते इमे शुक्ले। शुक्लः कंबलः शुक्ला बृहतिका शुक्लं वस्त्रं च तदिदं शुक्लं तानीमानि शुक्लानि।

अत्र भाष्यं स्थितिमात्रविवक्षायां औत्सर्गिकं नपुंसकमेव सिद्धम्। न च पाक्षिकैकवद्भावार्थं सूत्रम्। जातिप्राधान्यविवक्षयैव सिद्धेः।

## पिता मात्रा ७०

स्पष्टम्। वेत्यनुवर्तते। पिता च माता च पितरौ मातापितरौ। दौहित्राभावे पितरौ धनभाजावित्येतद्व्याख्याने—यद्यपि युगपदधिकरणवचनतायां द्वन्द्वस्मरणात्तदपवादत्वादेकशेषस्य धनग्रहणे पित्रोः क्रमो न प्रतीयते तथापि विग्रहवाक्ये पूर्वनिपातादेकशेषाभावपक्षे च मातापितराविति मातृशब्दस्य पूर्वं श्रवणात्पाठक्रमेणार्थक्रमावगमाद्धनसम्बन्धे ऽपि क्रं

मापेक्षायां प्रतीतक्रमानुरोधेनैव प्रथमं माता धनभाक्, तदभावे पितेति गम्यते इति विज्ञानेश्वरः ।

एतेन जगतः पितरौ वन्दे इत्यपि व्याख्यातम् । योग्यतादिप्रमाणान्तरवशान्निर्णय इति पर्यवसानात् ।

एतेन भवानपि त्वद्दयिताच शेषे सायुज्यमासादयतं शिवाभ्यामिति विषयान्तरमपि व्याख्यातम् । स्त्रीलिङ्गस्य विग्रहवाक्ये पूर्वप्रयोगनियमे मानाभावात् । "उष्ट्री च करभश्च, हंसश्च वरटा चेत्यादौ कस्मान्न भवति" इति भाष्यदर्शनात् ।

# श्वशुरः श्वश्र्वा ७१

स्पष्टम् । श्वशुरौ श्वश्रूश्वशुरौ । सूत्रत्रयमधिकृत्य भाष्यम्—वृत्तिविषये भ्रात्रादिशब्दानां स्वस्रादिबोधकत्वं तावदेकशेषारम्भेऽपि स्वीकार्यम्, शिष्यमाणं लुप्यमानार्थाभिधायीति सिद्धान्तात्, तद्वरम् एकशेषं विनाऽपि शब्दार्थसम्बन्धस्य नित्यत्वात्सहविवक्षायामेव तथात्वं स्वीक्रियताम्; अनभिधानाच्च भ्रातृस्वसृशब्दयोर्न द्वन्द्वः; मातापितरौ श्वश्रूश्वशुरावित्यत्र च द्वन्द्वस्य वा—शब्दानुवृत्त्या त्वयाऽपि स्वीकारात्; किमयं सरूपयोरेकशेष उत विरूपयोरित्यवधारणार्थं प्रकरणादेर्नियामकत्वस्य वाच्यत्वाच्चेति । 'श्यालः स्वस्रोरथाग्रहीद्' इति भागवते तु स्वसृपदं "प्राणभृदुपदधाति" इतिवल्लिङ्गसमवायेन स्वसृतत्पत्योर्लाक्षणिकम् । नचोभयोः साम्यादल्पत्वानुपपत्तिः, तत्र प्राणपदगर्भमन्त्रस्य तद्रहितमन्त्रापेक्षया ऽल्पत्वात् इति वाच्यम् । लक्ष्यापेक्षया शक्यानां बहुत्वाभावमात्रस्य तत्र विवक्षितत्वात् इति श्रीधरः ।

# त्यदादीनि सर्वैर्नित्यम् ७२।

स्वभिन्नैः सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते। स च देवदत्तश्च तौ।

"त्यदादितः शेषे पुन्नपुंसकतो लिङ्गवचनानीति वक्तव्यम्"।

सा च देवदत्तश्च तौ। सा च कुण्डे च तानि। शिष्यमाणत्वात्त्यदादिलिङ्गे प्राप्ते आरम्भः। पुंनपुंसकयोस्त्वेकशेषे शब्दपरविप्रतिषेधान्नपुंसकशेषः। तच्च देवदत्तश्च ते।

"अद्वन्द्वतत्पुरुषविशेषणानामिति च वक्तव्यम्"।

स च कुक्कुटः सा च मयूरी कुक्कुटमयूर्यौ ते। तच्च साच अर्द्धपिप्पल्यौ ते।

न्यायसिद्धं चेदम्। "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति समासार्थस्य लिङ्गातिदेशात्तद्विशेषणस्य सर्वनाम्नस्तल्लिङ्गत्वसिद्धेरिति कैयटः। त्यदादीनां सर्वनामतया वस्तुमात्रपरामर्शकत्वात्पदान्तरेण सहोक्तौ तेषामेव शेषो न्यायसिद्ध इति नेदमारभ्यम्। नच त्यदादीनां यत्परं तच्छिष्यते इत्येतदर्थं सूत्रम्, तद्विना शब्दपरविप्रतिषेधालाभादिति वाच्यम्। सच यश्च तावानय यावानयेति पूर्वशेषस्यापीष्टत्वात्। सूत्रारम्भपक्षे च तदासिद्धेः। नापि तद्देवदत्ताविति प्रयोगवारणार्थम्। "सामान्यविशेषवाचिनोर्न द्वन्द्वः" इति वचनस्यावश्यकत्वात्। नचैवं शूद्राभीरम्, गोबलीवर्दम्, तृणोलपम्, इति न स्यादिति वाच्यम्। आभीराणां जात्यन्तरत्वात्। ब्राह्मणादुग्रकन्यायामाभीरो नाम जायते।

माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात्॥ इति—

स्मृतेः। गोशब्दस्य च स्त्रीगवीमात्रवाचकत्वात् वृषभे शक्त्यन्तरस्वीकारात्। न च सामान्यपदेन विशेषार्थस्यापि प्र-

तीतिसिद्धेः न द्वन्द्वप्रसक्तिरिति वाच्यम् । तं ब्राह्मणमानय गार्ग्यमिति प्रयोगदर्शनात् । विशेषणविशेष्यभाववद् विशेष्य-सन्निधौ सामान्यशब्दस्य तदितरविशेषपरत्वस्यापि ब्राह्मणा आगता वसिष्ठो ऽप्यागत इत्यादौ दर्शनात् । तस्मात्सामान्यविशेषयोर्द्वन्द्ववचनस्यावश्यकत्वात्तत एव सिद्धौ नैतत्सूत्र-मारभ्यमिति भाष्यम् ।

## ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री ७३।

पुमान्स्त्रियेत्यस्यापवादः । एषु सहविवक्षायां स्त्री शिष्यते । गाव इमाः । अजा इमाः । ग्राम्येति किम् । न्यङ्कव इमे । सूकरा इमे । पश्विति किम् । ब्राह्मणा इमे । सङ्घेति किम् । एतौ गावौ । संघे गुणत्वानुपपत्त्या तद्घटकानिष्ठं तद्ग्राह्यम्, द्व्यवयवसङ्घसम्भवे ऽपि सङ्घपदग्रहणसामर्थ्यादनेकघटितस्यैव विवक्षितत्वात् । अतरुणेति किम् । तरुणका इमे । वर्करा इमे । संघे तरुणत्वतदभावयोरन्वयानुपयोगात्संघघटकपशुव्यक्तिनिष्ठयोस्तयोरुपादानं सामर्थ्यात् । "अनेकशफेष्विति वाच्यम्" । नेह अश्वा इमे । उष्ट्रा इमे । विकल्पानुवृत्त्या व्यवस्थितत्वाच्चेदमिति न्यासकृत् ।

अत्रापि भाष्यम्—नैतदारभ्यम् । सङ्घेषु स्त्रीगवीनामेव बाहुल्यान्मल्लग्रामादिवद् भूयस्त्वेन व्यपदेशादेव स्त्रीशेषसिद्धेः, अग्राम्येषु तु पुंसामेव प्राधान्यात्, उष्ट्राणां तु आरण्यकत्वेन सूत्रारम्भेऽपि स्त्रीशेषत्वाभावात् । ब्राह्मणा इत्यादावपि पुंसामेव प्राधान्यात् । एतावित्यादौ च निर्ज्ञाते लिङ्गविशेषे पुंस एव शेषात्, वत्सा इमे इत्यादावपि पुंसामेव प्राधान्यादिति ।

इति श्रीसिद्धान्तसुधानिधौ प्रथमस्य द्वितीये तृतीयमाह्निकम्

पादश्चायं समाप्तः ॥

## अथ प्रथमाध्यायस्य तृतीयः पादः ।

# भूवादयो धातवः १।

क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः । भवति । धातुत्वाल्लुडादयः । याः पश्यसीत्यादौ धातुसंज्ञायां या इत्यादेरातो लोपस्य वारणाय क्रियावचना इति । हिरुक् इत्यादौ वर्जयित्वेत्याद्यर्थके निपाते, शिश्ये इत्यादौ भावतिङन्ते चातिव्याप्तिवारणाय भ्वादय इति गणपठिता इत्यर्थकम् । नच लाक्षणिकत्वादेव याशब्दस्य गणे ऽनुपादानमिति वाच्यम् । स्थलान्तरे प्रतिपदोक्तत्वस्य तत्रापेक्षितत्वात् । नचान्तरङ्गे लोपे ऽर्थनिमित्तकतया बहिरङ्गस्य टापोऽसिद्धत्वम् । लिङ्गस्य कारकापेक्षया प्रथमप्रतीतिकत्वेन अजादिप्रत्ययनिमित्तकस्य लोपस्यैव बहिरङ्गत्वात् । 'नाजानन्तर्ये' इति निषेध इत्यपि केचित् ।

नचार्थनिर्देशो नियामकः । तस्याभियुक्तान्तरकृतत्वेनापाणिनीयत्वात् ।

क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्शितः ।
प्रयोगतो ऽनुसर्त्तव्या अनेकार्था हि धातवः ॥
इत्यर्थान्तरव्यावृत्तौ तात्पर्याभावाच्च ।

अत एव "कुर्द खुर्द गुर्द गुद क्रीडायामेव" इत्येवकारः । "श्लिष आलिङ्गने" इत्यादिकं च सङ्गच्छते । नचैवं "टुवम् उद्गिरणे" इति निपातनादित्त्वमित्यस्यानुपपत्तिः । एतदपरितोषादेव पृषोदरादित्वस्यान्यैरुक्तत्वात् ।

भूवादय इति निपातनाद्वुकारागमः । नचासाधुत्वम् । वैयाकरणनिकाये प्रसिद्धत्वात् । नच क्रियावचनत्वस्य

सूत्रादलाभः । भवनं भूः क्रियासामान्यं तद् वदन्तीति भूवादय इत्यर्थात् । "वसिवपियजिराजिव्रजिसदिहनिवासिवादिवारिभ्य इञ्" इत्यत्र इञो वादयतेर्विधाने ऽपि बाहुलकाद्वदेरपि तत्सम्भवादिति केचित् ।

वादयतेरेवात्र इञ् निवृत्तप्रेषणतयाऽर्थभेदाभावात् । वदन्तीतिभाष्यस्य चार्थकथनपरत्वादित्यन्ये ।

नचैवं गणपठितत्वस्य दौर्लभ्यम् । "सनाद्यन्ता धातवः" इत्यस्यारम्भेण पठितानामेव संज्ञाऽनुमानात् । सौत्राणां तु स्तम्भ्वादीनामुदित्करणेन धात्वधिकारीयकार्यविधानेन च धातुत्वासिद्धेः । चुलुम्पादीनां च भ्वादेराकृतिगणत्वात् । वृत्करणस्य यजादिसमाप्त्यर्थत्वात् ।

एतेन दिवाद्यन्ते वृत्करणं पुषादिसमाप्त्यर्थम्, तेन मृग्यतीत्यादिकमपि व्याख्यातम् ।

वस्तुतो "बहुलमेतन्निदर्शनम्" इति चुराद्यन्ते गणसूत्रेण सर्वसिद्धिः । भ्वादिभ्योऽपि स्वार्थे णिच् ।

यद्वा दशगणीपाठो दिङ्मात्रम्,शिष्टप्रयोगादन्ये ऽपि धातवो ज्ञेया इति द्वेधा तस्य ग्रन्थकृद्भिर्व्याख्यानात् ।

यद्वा भूश्च वाश्चेति द्वन्द्वः । आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः । भूवौ आदी येषामिति बहुव्रीहिः । सादृश्यं च क्रियावाचित्वेनेति यथोक्तविशेषणद्वयलाभः । नच वातेर्धातुत्वानापत्तिः । भेदाघटितसादृश्यस्य तत्र सत्त्वात् ।

यद्वा वादय इत्यत्र बहुव्रीहितत्पुरुषयोरेकशेषः । "स्वरभिन्नानां यत्परं तच्छिष्यते" इति बहुव्रीहेः शेषः । भुवो वादय इति षष्ठीसमासः । वाच्यवाचकभावश्च षष्ठ्यर्थः ।

यद्वा तन्त्रावृत्त्यादिना उभयलाभः, "द्विर्वचनेऽचि" इत्यादिवत्। अत्र भूप्रभृतयो वासदृशा इत्येव सारम् ।

एतेन—

भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते ।
भुवो वार्थं वदन्तीति भ्वर्था वा वादयः स्मृताः ॥ इति—

वार्त्तिकं व्याख्यातम् ।

वस्तुतस्त्वभियुक्तानां परिभाषाविशेषसम्बन्धेन धातुपदवत्त्वमेव धातुत्वम्। तत्परिचायकं चोक्तसूत्रम्। नतु भ्वाद्यन्यतमत्वम्, गौरवात्। अनुकरणेषु तत्तद्रूपाणामतिप्रसङ्गाच्च। तद्व्यावृत्तस्य भूत्वादेरन्यतमत्वघटकस्य प्रकारान्तरेण दुर्वचत्वात्। अत एव सौत्राणाम्, चुलुम्पादीनां च सङ्ग्रहः। अत एव च धात्वर्थत्वं क्रियात्वमिति तान्त्रिकाणामुद्घोषः सङ्गच्छते।

अथ केयं क्रियानाम ? यत्त्वाहुः फलाव्यवहितपूर्वकालवर्ती व्यापारविशेषस्तथा। अधिश्रयणादीनां तु क्रियात्वमौपचारिकम्।

तदुक्तम्—

अनन्तरं फलं यस्याः कल्पते तां क्रियां विदुः ।
प्रधानभूतां तादर्थ्यादन्यासां तु तदाख्यया ॥ इति ।

नच काष्ठादिव्यापारस्य तथात्वाद्व्यभिचारः। जनकान्तराननुकूलत्वस्य वाच्यत्वात्। नापि पाकारम्भेपि क्रियाया भावित्वात्पक्ष्यतीत्यस्यापत्तिः। गौणमुख्यसाधारणतत्क्रियासमूहस्यातीतत्वे ऽपाक्षीदिति, प्रागभावे पक्ष्यतीति, यत्किञ्चित्सत्त्वे च पचतीति प्रयोग इति व्यवस्थाऽभ्युपगमात्। इदंच यङ्विधौ भाष्ये स्पष्टम्।

तन्न । मुख्यत्वसम्भवे गौणत्वस्यानुचितत्वात् ।

अथ पचित्वं जातिः,पचतीत्यनुगतव्यवहारात्, सैव क्रिया । नचैवमसाध्यत्वापत्तिः । तदाश्रयव्यक्तीनामेव तथात्वात् ।

तदुक्तम्—

जातिमन्ये कियामाहुरनेकव्यक्तिवर्त्तिनीम् ।
असाध्या व्यक्तिरूपेण सा साध्येवावभासते ॥ इति ।

तन्न । दण्डादिव्यापारस्यापि फलानुकूलत्वेन तदाश्रयस्य दण्डस्य कर्तृत्वे तिङा तदभिधानापत्त्या दण्डेन देवदत्तः पचतीत्यत्र दण्डेऽपि प्रथमापत्तेः । नच करणार्थेयं तृतीया । कर्तृत्वे करणत्वस्यानुपपत्तेः । "आकडारादेका संज्ञा"इति नियमात् । न च तदा दण्डादिव्यापारस्य धात्वर्थत्वेनाविवक्षितत्वान्न दोष इति वाच्यम् । तथाऽपि क्रियायाः साध्यत्वप्रत्ययस्यान्याविषयकत्वे मानाभावात् ।

अथ साध्यत्वेनाभिधीयमानो व्यापारविशेषः क्रिया । तदुक्तम्—

यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते ॥ इति ।

नच साध्यत्वेनाभिधाने मानाभावः, पचति, पाकः, करोति, कृतिरित्यादौ धात्वर्थप्रतीत्यविशेषे ऽपि क्रियान्तराकाङ्क्षानाकाङ्क्षयोदर्शनस्य मानत्वात् । तथाच क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकत्व साध्यत्वम् । तदेवासत्त्वभूतत्वम् । क्रियायाः प्रत्ययार्थतावादे ऽपि पचति पाकभवनेत्यादौ तथा दर्शनात्तथात्वावश्यकत्वादिति ।

तन्न । साध्यत्वप्रकारकशाब्दबोधस्य सर्वानुभवविरुद्ध-

त्वात्। भोक्तुमित्यादावसत्त्वभूता क्रिया भासते इति सिद्धान्तविरोधाच्च। क्रियान्तराकाङ्क्षायास्तत्र सत्त्वात् इति तृतीये वक्ष्यते इति चेत्।

अत्रोच्यते। फलानुकूलो व्यापारसमूह एव क्रिया। तदुक्तं भाष्ये "क्रिया नामेयमत्यन्तापरिदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुम्" इति। व्यापारसमूहघटकानामवयवानामेकक्षणानवच्छिन्नतया प्रत्यक्षासम्भवादित्यर्थः।

तथा च वाक्यपदीये—

गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते॥

युगपदनवस्थाने हेतुः क्रमजन्मनामिति। बुद्ध्या तावद्विषयकसमूहालम्बनज्ञानेन। प्रकल्पितः अभेदो यस्य। तथा चानेकवर्णसमुदाये एकज्ञानावच्छिन्नतया यथैकं पदमिति व्यवहारस्तथोक्तस्थले क्रियाया अपीत्यर्थः। पिण्डीभूतेति। यथा परमाणवः पिण्डीभूता उपलभ्यन्ते न केवलाः एवं पिण्डीभावात् क्रिया न प्रत्यक्षेति कैयटः।

काव्यप्रकाशकारेणाप्युक्तम्—

साध्यः पूर्वापरीभूतावयवः क्रियारूप इति। तद्व्याख्यातारोऽपि—साध्यः साध्यत्वेन विवक्षितः पूर्वापरीभूतत्वेन प्रतीयमाना अवयवाः प्रचयान्तर्गताः प्रचयिनोऽधिश्रयणादयो यस्य पाकादिधात्वर्थस्य सः। अक्रमस्य क्रमप्राप्तिश्च्व्यर्थः। प्रचयस्य तत्तत्प्रत्येकातिरिक्तस्याभावाद्व्यापाराणां प्रत्येकं पाकत्वेन क्रमेण पाक इति भ्रम एवेति। अत एवोक्तमाश्रित्यक्रमरूपत्वात् इति।

यद्वा अधिश्रयणादिरपि तत्तदाश्रयविशिष्टः क्रियारूपः, क्रियाया विशेष्यस्य चैकत्वाद् अक्रमत्वे ऽपि आश्रयीभूतविशेषणक्रमात्क्रमोपचारः ।

अन्ये तु स्थालीन्धनतण्डुलादिविशिष्टक्रिया पचादिधात्वर्थः, तदवयवाश्च स्वनिष्ठशक्त्यवच्छेदकत्वे सति स्वाश्रयाः स्थाल्यादयः, तेषां वास्तवपौर्वापर्याभावाच्छिन्नप्रत्यय इत्याहुः ।

नच यत्र चुल्ल्युपरिधारणादयो ऽवतारणपर्यन्ता व्यापाराः पुरुषभेदेन नानापाकक्रियासु युगपद्भवन्ति तदा पाकक्रियाप्रत्यक्षं स्यादिति वाच्यम् । तद्व्यक्तीनां परस्परसहकारित्वाभावात् ।

ननु पाकत्वं प्रत्येकव्यापारपर्याप्तम्, नतु संयोगादिवद्व्यासज्यवृत्ति भिन्नकालीनेषु एकस्य व्यासक्त्यनुपपत्तेः, उक्तग्रन्थान्तरेभ्योऽपि तथाप्रतीतेश्च ।

शब्दकण्टकोद्धारे ऽप्युक्तम्—चुल्लीज्वालनमारभ्यावतारणपर्यन्तव्यापारकलापे घटत्वादिवत् प्रत्येकपर्याप्तमेव पाकत्वं भावनात्वं वा आख्यातार्थो वा, फलावच्छिन्नव्यापारसमुदायस्य तदर्थत्वात् । उक्तं च भाष्ये—"नाना चैकार्था क्रिया पचतीति स्थाल्यधिश्रयणमुदकावसेचनं तण्डुलावपनमेधोऽपकर्षणमग्निज्वालनं दर्वीघट्टनमवतारणम्" इति, तथाच पाकप्रत्यक्षं स्यादेवेति चेन्न ।

पाकत्वस्य वस्तुतस्तथात्वेऽपि तत्समूहस्यैव क्रियाव्यवहारविषयत्वात् । तस्य च प्रत्यक्षायोगात् । अत एव पश्य मृगो धावतीत्यादावेकदेशस्यैव वर्त्तमानस्य दर्शनकर्मत्वमिति तृतीये वक्ष्यते । तदुक्तं हरिणा—

क्रमात्सदसतां तेषामात्मानो न समूहिनाम् ।
सद्वस्तुविषयैर्यान्ति सबन्धं चक्षुरादिभिः ॥

न यान्तीत्यन्वयः । क्रमिकव्यापारसमुदायस्य क्रियात्वात्तस्य वर्त्तमानत्वासम्भवान्न चक्षुरादिग्राह्यत्वम् । वर्त्तमानस्य तदेकदेशभूतस्य व्यापारस्य चाक्षुषत्वं तूपपन्नमेवेत्यर्थः । तत्सिद्धं क्रिया धात्वर्थ इति ।

अथोक्तरूपक्रियाया धात्वर्थत्वे किं मानम् ? । न तावत् "भावप्रधानमाख्यातम्" इति निरुक्तम् । आख्यातशब्दस्य धातावशक्तत्वात् । ननु 'सर्वमाख्यातजं नाम' इति निरुक्तकृताऽभिधानात्तस्य धातुवाचकत्वम् । प्रत्ययजन्यत्वस्य नामत्वसम्भवात् । "नाम च धातुजमाह निरुक्ते, व्याकरणे शकटस्य च तोकम्" इति भाष्योक्तेश्च । शकटस्य ऋषेस्तोकमपत्यमिति कैयटः । शाकटायन इति यावत् ।

तथाच निरुक्तम्—तत्र "नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च" इतीति चेत् ।

मैवम् । कृदन्ते धातावाख्यातपदप्रयोगाभावात् । तत्र लक्षणया तदुपपत्तेः । अत एव "येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि" इतिजैमिनिसूत्रे ऽपि लक्षणयैवाख्यातपदं धातुपरम् । उत्पत्तावुच्चारणकाले स्वे ऽर्थे प्रयोगो न विद्यते, स्वार्थसिद्धो न विद्यते इति यावत् ।

अयं तु विशेषः—जैमिनिसूत्रे तेन तिङन्तस्यैव धातोर्ग्रहणम्, निरुक्ते तु आख्यातपदस्योपलक्षणतया धातुस्वरूपमात्रस्येति । नापि भावपदस्य भावनापरत्वम् ।

धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते । इति—

वैयाकरणैः परिभाषितत्वे ऽपि निरुक्तस्मृतौ आख्यातार्थभावनाया एव ग्रहणात् । तस्य व्याकरणमात्रपरत्वात् । तत्रापि "नपुंसके भावे क्तः" इत्यादावेव तथा, नतु "तस्य

भावस्त्वतलौ" इत्यादाविति स्पष्टम् । किञ्च भावनाया धात्वर्थत्वे मुख्यविशेष्यत्वं न स्यात्, प्रत्ययार्थप्राधान्यभङ्गापत्तेः । क्वचित्तत्परित्यागे ऽपि उत्सर्गे पक्षपातस्य युक्तत्वात् । नच भावनायास्तिङर्थत्वे कृदन्तेषु तत्प्रतीतिर्न स्यादिति वाच्यम् । धात्वर्थकारकैस्तत्सिद्धेः ।

तदुक्तम्—

धात्वर्थकारकैरेव गुणभूतो ऽवगम्यते ।
भावनात्मा कृदन्तेषु तस्मान्नैवाभिधीयते ॥

अत एव भावनाप्रधानत्वादाख्यातेषु तत्सम्बन्धादेव गुणभूतकारकप्रतीतिसिद्धेर्न कर्तृकर्मणोरभिधानम् । नच स्वार्थफलव्यधिकरणव्यापारवाचित्वरूपसकर्मकत्वानिर्वचनानुपपत्तिः । तत्र हि वस्तुतः फलव्यधिकरणो यो व्यापारस्तद्वाचित्वं सकर्मकत्वम्, उत फलव्यधिकरणत्वेन व्यापारवाचकत्वम् । नाद्यः । पच्यादेरपि फलाविवक्षायामकर्मकत्वाङ्गीकारात् । तत्र वस्तुतः फलव्यधिकरणत्वस्याभावात् । नान्त्यः । अनुभवविरोधात् । नच सर्वदाऽकर्मकस्यैव वारणीयत्वान्न पूर्वोक्तातिव्याप्तिरिति । तादृशाकर्मकादिलक्षणस्यानुपयुक्तत्वात् । "लः कर्मणि भावे चाकर्मकेभ्यः" इत्यकर्मकग्रहणेनाविवक्षितकर्मकाणामपि ग्रहणस्येष्टत्वात् । 'नेह पच्यते' इत्यादौ भावलकार इति हरदत्तादिभिरुक्तत्वात् । 'पीता गावो' 'भुक्ता ब्राह्मणाः' 'कृतपूर्वी कटम्' 'गतं तिरश्चीनम्' इत्यादौ ग्रन्थकारैर्भावे क्तप्रत्ययव्याख्यानाच्च । ननु गतिबुद्ध्यादिसूत्रे गत्यर्थाकर्मकेति सूत्रेच अविद्यमानकर्मकाणामेव ग्रहणं देवदत्तेन पाचयतीति तृतीयानुरोधात्, दत्तवान्पक्ववानित्यर्थे दत्तः पक्क इत्यादेरापत्तेश्चेति चेत् । तर्हि तदननुगमतादवस्थ्यम्, तस्मादाविवक्षाविरहविशि-

ष्टकर्मसाकाङ्क्षधातुत्वमेव सकर्मकत्वं तदभावश्चाकर्मकत्वम् । पच्यादीनां स्वरूपेण कर्मसाकाङ्क्षत्वेऽप्यविवक्षादशायामकर्मकत्वादविवक्षाविरहेति ।

एतेन कृञो यत्नार्थकत्वे यतिवदकर्मकत्वापत्तिरिति निरस्तम्।

तथाहि—आकाङ्क्षा समभिव्याहारात्मिका शब्दधर्मः । तेनार्थैक्येऽपि घटः कर्मत्वमित्यादावनाकाङ्क्षत्वम् । घटमित्यादौ च साकाङ्क्षत्वम्, तद्वदेव यतेः कर्मानाकाङ्क्षा कृञश्च तदाकाङ्क्षेत्युपपत्तेः । आस्यादिधातूनां च स्वरूपेण अकर्मकत्वेऽपि मासादिकालयोगे तदाकाङ्क्षत्वात्सकर्मकत्वम् । अत एवैकस्यैव ग्रन्थधातोश्चैत्रनिष्ठव्यापारमादाय सकर्मकत्वं पुष्पनिष्ठव्यापारमादाय त्वकर्मकत्वमित्यभ्युपगमः ।

अथ भावयति घटमितिवद्भवति घटमित्यपि स्यात् । दृष्टान्ते णिचा दार्ष्टान्तिके चाख्यातेन व्यापारबोधाविशेषात् । नच प्रयोजकव्यापारो णिजर्थः, कर्तृव्यापारस्त्वाख्यातार्थ इति विशेष इति वाच्यम् । त्वद्रीत्या कारकचक्रप्रयोक्तुरेव कर्तृत्वेन घटस्यातथात्वात् । नच यस्यैवान्यापेक्षयाऽऽख्यातोपात्तव्यापारसमवायः स कर्ता इति बाधाध्याये व्यवस्थितत्वाददोष इति वाच्यम् ।

करोतिः क्रियमाणेन न कश्चित्कर्मणा विना ।
भवत्यर्थस्य कर्ता च करोतेः कर्म जायते ॥
करोत्यर्थस्य यः कर्ता भवितुः स प्रयोजकः ।
भविता तमपेक्ष्याऽथ प्रयोज्यत्वं प्रपद्यते ॥
तेन भूतिषु कर्तृत्वं प्रतिपन्नस्य वस्तुनः ।
प्रयोजकक्रियामाहुर्भावनां भावनाविदः ॥ इति ।

भावार्थाधिकरणे भट्टपादैर्भावनाया निरूपितत्वात् तदना-

श्रयस्य कर्तृत्वानुपपत्तेः । नच धातूपात्तव्यापाराश्रयत्वमेव कर्तृत्वमिति वाच्यम् ! व्यापारस्य धात्वर्थत्वसिद्धौ भावनायास्तिङर्थत्वानुपपत्तेरिति चेन्न ।

अनुकूलव्यापारे शक्तिपक्षे हि अनुकूलत्वं जनकत्वम् प्रयोजकसाधारणं वा । नाद्यः । फलजनकशरीरगतक्रियाविशेषोपक्षीणस्यात्मनिष्ठप्रयत्नादेरन्यथासिद्धरयाऽसङ्ग्रहापत्तेः । नान्त्यः । कृष्यादिसाधारण्यात् । नच यत्नत्वाधःसन्तापनत्वादीनां तत्तद्रूपेण शक्यतावच्छेदकत्वाङ्गीकारान्नातिप्रसङ्गः । तथापि पचति पाके यतते इत्यादिविवरणाद्यत्नादीनां धात्वर्थबहिर्भावस्य दुर्वारत्वात् । नच घञादियोगे धातोः फलमात्रमर्थः । सामान्यसामग्रीमर्यादया तद्बोधापत्तेः । घञादिसमभिव्याहारस्य तत्प्रतिबन्धकत्वे गौरवात् । तिबादिसमभिव्याहृतधातुत्वस्य शक्ततावच्छेदकत्वे कार्यकारणभावद्वयमवच्छेदकगौरवं तत्र व्यापारबोधानुभवविरोधश्च । स्तोक पाक इत्यस्योपपादनविरोधश्च । नच तत्र विवक्षाविरहादेव यत्नबर्हिभावः । देवदत्तः पचतीत्यत्र विवक्षाध्रौव्यात् । अन्यथा तस्य कर्तृत्वानुपपत्तेः । धातूपात्तव्यापारवत एव त्वन्मते तत्त्वात् । अत पचतीत्यत्र भासमानो यत्नो ऽवश्यं पन्यर्थाद्बहिः कार्यः । स एवाख्यातार्थः । विवरणवेलायां भासमानस्य तस्य परिशेषादाख्यातवाच्यत्वकल्पनात् । तत्रापि रथो गच्छतीत्यादेरनुरोधादनुकूलव्यापारवाचिणिजन्तभूधातुना विवरणात्, सङ्ग्राहकलाघवाच्चानुकूलव्यापारे एव शक्तिः, यत्नस्यापि तद्रूपेण सङ्ग्रहादिति मीमांसकाः ।

मण्डनमिश्रानुयायिनस्तु—फलमात्रं धात्वर्थः, अनुकूलव्यापारो व्यापारमात्रं वा ऽऽख्यातार्थः । जन्यजनकभावः संसर्गलभ्यः । लडाद्यर्थो वर्त्तमानत्वादि लिङर्थश्चेष्टसाधनत्वादि व्या-

पार एवान्वेति । आख्यातजन्यवर्त्तमानत्वप्रकारकबोधे तज्जन्यव्यापारोपस्थितेर्हेतुत्वकल्पनात् ।

नच व्यापारविगमे फलसत्त्वे पाको विद्यते इति स्यादिति वाच्यम् । भावार्थघञादेरनुकूलव्यापारार्थत्वात् । अत एव व्यापारसत्त्वे फलानुत्पत्तिदशायां पाको भविष्यतीति न प्रयोगः । नापि घटभूतलयोर्मिथः सयोग इतिवन्मिथो गमनमित्यादि । संयोग इत्यादौ तु घञादेः प्रयोगसाधुतामात्रम्, धात्वर्थमात्रप्रतीतेः । व्यापाररहितेऽपि वृक्षादौ संयुज्यते इत्यादिव्यवहारात्तत्र तिङोऽपि न व्यापारोऽर्थ इति न सकर्मकत्वम्, आश्रयत्वस्यैव तत्र तिङर्थत्वात् । नचैवं धात्वर्थतावच्छेदकफलशालित्वरूपं कर्मत्वं ग्रामादेरनुपपन्नम् । प्रत्ययोपनीतपरसमवेतव्यापारजन्यधात्वर्थफलशालित्वस्य कर्मत्वात् । प्रत्ययोपनीते परसमवेते च व्यापारस्य विशेषणम् । भूमिं प्रयाति विहग इत्यत्र विहगादेरपि स्वापेक्षया भिन्नो यः स्वावयवः तत्समवेतव्यापारजन्यधात्वर्थफलसंयोगवत्त्वात्स्वात्मानं प्रयातीत्यादिवारणाय प्रत्ययोपनीतेति । तादृशस्वार्थव्यापारस्तु न परसमवेतः । गमनात्मकव्यापारस्यैव प्रत्ययोपनीतत्वात्, तस्य च परसमवेतत्वाभावात् । गमनजन्यविभागशालिपूर्वदेशे ऽतिव्याप्तिवारणाय धात्वर्थेति । तण्डुलं पचतीत्यत्र आधेयत्वं द्वितीयार्थः, फले धात्वर्थे तदन्वयः । फलस्य जनकत्वसंबन्धेनाख्यातार्थव्यापारे तस्याश्रयत्वेन चैत्रेऽन्वयः । तण्डुलवृत्तिविक्लित्तिजनकव्यापारवांश्चैत्र इति धीः । चैत्रेण पच्यते तण्डुल इत्यत्र तृतीयार्थवृत्तित्वस्य तिङर्थे व्यापारे, तस्य जन्यत्वसम्बन्धेन धात्वर्थे फले, तस्याश्रयत्वेन तण्डुलादावन्वयः । चैत्रवृत्तिपरसमवेतव्यापारजन्यफलवांस्तण्डुल इति

एवं च नीलो घटो नास्तीत्यत्र नीलान्वितस्य घटस्याभावे ऽन्वयात् नीलघटत्वावच्छिन्नप्रतियोगित्वं संसर्गः तथा पार्थाद्यन्वितस्यान्ययोगस्य व्यवच्छेदे ऽन्वयात्पार्थान्ययोगत्वावच्छिन्नप्रतियोगिताकत्वं संसर्ग इति बोध्यम् । नच प्रतियोगितामात्रेणान्ययोगविशिष्टो व्यवच्छेद एवार्थो ऽस्तु व्युत्पत्तिबलादुक्तव्यवच्छेदलाभसम्भवादिति वाच्यम् । वाक्यार्थलाभ एव व्युत्पत्तेस्तन्त्रतया पदार्थस्य तदलभ्यत्वात् । नचैकपदार्थयोः कथं मिथो ऽन्वय इति वाच्यम् । आख्यातार्थकृतौ कालान्वयस्य परैरभ्युपगमादित्याहुः ।

केचित्तु व्यापारमात्रं धात्वर्थः । गतो गम्यते ग्राम इत्यादौ फलस्य कृदात्मनेपदाभ्यामेव लाभात्, ग्रामङ्गच्छति, ग्रामस्य गन्तेत्यादावपि द्वितीयादेः फलजनकत्वमर्थः । आदेशशक्त्यनङ्गीकारे तु तत्स्मारितद्वितीयाया एव सोऽर्थः ।

यद्वा षष्ठ्याः कर्मत्वे लक्षणा फलं चाधिकरणत्वसंसर्गेण नामार्थेऽन्वेति ।

यद्वा फलमात्रमर्थो जनकत्वं संसर्गः । नचैवं ग्रामं गच्छति त्यजतीत्यादौ फलसामान्यस्य द्वितीयादिना लाभेऽपि नियतसंयोगविभागादिलाभो न स्यात् । ततश्च गृहाद्ग्रामं गच्छति चैत्रे ग्रामस्येदं गमनं न तु गृहस्येति न स्यात् गृहवृत्तिफलजनकत्वसामान्याभावस्य तत्रासत्त्वादिति वाच्यम् । गम्यते ग्राम इत्यत्र फलमात्मनेपदार्थ इति वदतामपि फलविशेषप्रत्ययानुपपत्तिप्रसङ्गात् । नच तदवच्छिन्नव्यापारवाचिधातुसमभिव्याहारात्फलविशेषो लभ्यते यथेष्टसाधकत्ववाचकाद्विधेरेव स्वर्गादिपदसमभिव्याहारात्स्वर्गजनकत्वम् । प्रतीतिस्त्विष्टत्वफलत्वाभ्यां स्वर्गत्वसंयोगत्वाभ्यां

वेत्यन्यदेतदिति वाच्यम् । गमिसमभिव्याहारे द्वितीयायाः संयोगः, त्यजिसमभिव्याहारे च विभाग एवार्थ इत्यत्र तयोस्तात्पर्यग्राहकत्वसम्भवादित्याहुः ।

नैयायिकास्तु फलावच्छिन्नव्यापारवाचित्वमेव धातोः सकर्मकत्वम् । त्यजेर्विभागावच्छिन्ने, गमेश्च संयोगावच्छिन्ने स्पन्दे शक्तत्वात् । धात्वर्थजन्यफलशालित्वमात्रस्य कर्मत्वे पूर्वदेशे गमेः कर्मत्वम्, उत्तरस्मिन् त्यजेः, स्पन्देश्च पूर्वापरदेशयोः स्यात् । उक्तरीत्या तु स्पन्देर्व्यापारमात्रे शक्तिर्नतु फलावच्छिन्ने इति न सकर्मकत्वम् । नचैवं जानात्यादेः सकर्मकत्वं न स्यादिति वाच्यम् । तत्र तद्व्यवहारस्य भाक्तत्वात् । नचैवं तत्र द्वितीयादिकं न स्यादिति वाच्यम् । "कर्मणि द्वितीया" इत्यनुशासनं हि तत्समभिव्याहारमपेक्ष्य प्रवर्त्तते "तेन रक्तं रागाद्" इतिवत्, तथा च पच्यादियोगे धात्वर्थतावच्छेदकफलशालिनि तण्डुलादौ द्वितीयादिकं विदधाति, जानात्यादियोगे धात्वर्थविषये घटादौ, स्पन्दादियोगे तूक्तान्यतरप्रकाराभावान्न कुत्रचिदिति व्यवस्थोपपत्तेः । "सकर्मकधातुयोगे द्वितीया' इत्येतादृशानुशाभावात् । तदेवं विवादे कथं विशिष्टा भावना धात्वर्थ इति प्राप्ते सिद्धान्तमाह भाष्यकारः—

'किं करोति' इति क्रियासामान्यविषयकप्रश्ने पचतीत्यादेरुत्तरस्य प्रयोगात् धात्वर्थ एव व्यापारः ।

ननु किं विषयकयत्नवानित्येव प्रश्नार्थः, कृञो यत्नार्थत्वात् ।

तदुक्तं कुसुमाञ्जलौ—

कृताकृतविभागेन कर्तृरूपव्यवस्थया ।
यत्न एव कृतिः पूर्वा परस्मिन्सैव भावना ।

१ गमित्यज्योरिति पाठः ।

क्रियाजन्यत्वाविशेषे ऽपि यत्नजन्याजन्यत्वप्रतिसन्धानात्पटाङ्कुरयोः कृताकृतव्यवहारात्, ज्ञात्रादिवदाश्रयपरतृजन्तकर्तृपदस्य यत्नाश्रयबोधकत्वाच्च । क्रियायास्तदनुकूलव्यापारस्य वा कर्तृपदार्थत्वे तदाश्रय करणमात्रं वा कर्तृपदार्थः स्यात् । अत एव पचतीत्यस्य पाकं करोतीति कृञा तिङर्थस्यैव विवरणम् ।

तदुक्तम्—

भावनैव हि यत्नात्मा सर्वाख्यातस्य गोचरः ।
तया विवरणध्रौव्यादाक्षेपानुपपत्तितः ॥ इति ।

इति चेत् ।

मैवम् । कृञो यत्नमात्रार्थकत्वे 'क्रियते घटः स्वयमेव' इति कर्मवद्भावानुपपत्तेः । कर्मस्थक्रियेष्वेव तद्विधानमिति वक्ष्यमाणत्वात् । अन्यथा 'ज्ञायते घटः स्वयमेव' इत्यस्यापि प्रसङ्गात् । तदुक्तम् —

निर्वर्त्ये च विकार्ये च कर्मवद्भाव इष्यते ।
नतु प्राप्ये कर्मणीति सिद्धान्तो हि व्यवस्थितः ॥

प्राप्यत्वं च क्रियाकृतविशेषवत्तया ऽनुपलभ्यमानत्वमिति वक्ष्यते । तस्मादुत्पादनैव कृञर्थः । उत्पत्तिमत्तयाच घट उपलभ्यते एव 'अयं घटः केनाचित्कृतः' इति घटदर्शने ज्ञानोदयात् ।

नच घटोपादानविषयककृतौ साध्यतया घटस्यापि विषयत्वात् तद्व्यतिरेकेण च घटानुत्पत्तेर्यत्नवत्तयाऽपि घट उपलभ्यते एव, साक्षात्कारस्य त्वयाऽप्यभिधानादुत्पत्तेरतीन्द्रियत्वात् इति वाच्यम् ।

तदपेक्षया उत्पत्तेरेव तद्विषयत्वौचित्यात् । अन्यथा फलज्ञानस्यापि प्रवृत्तिप्रयोजकतया तद्विषयत्वस्याप्युत्पत्त्या आक्षेपात् 'ज्ञायते घटः स्वयमेव' इत्यादिकमपि स्यात् । नच तत्रो-

त्पत्तौ कृञो लक्षणा । उत्पादनाया उपाधिरूपतया शक्यतावच्छेदकत्वगौरवाद् । अत एवोत्पादना तिङर्थ इति रत्नकोषमतमपि मणिकृतैवमेव निरस्तम् । नच लक्ष्यतावच्छेदक इव शक्यतावच्छेदके ऽपि गौरवं न दोष इति शङ्क्यम् । लक्षणायाः शक्तिकल्पनोत्तरकल्प्यतया तत्र लाघवानादरणात् । अन्यथा निषादस्थपत्यधिकरणविरोध इति चेत् ।

न। उक्तप्रयोगरूपसाधकेन उत्पादनायामेव शक्तिपरिच्छेदात् ।

एवं किङ्करोतीत्यत्र कृञो यत्नार्थकत्वे प्रश्नवाक्ये तिङर्थयत्नानन्वयस्य वाच्यतया पचतीति उत्तरानुपपत्तिः । धातोः प्रश्नविषयार्थानवबोधात् ।

तथाहि—'किमेकं दैवतं लोके' इत्यादौ 'एकदैवतत्वव्याप्यधर्मप्रकारकज्ञानं ममेष्टसाधनम्' इति ज्ञानात् 'तादृशज्ञानं मम जायताम्' इतीच्छया उक्तवाक्यप्रयोगः । तस्य च 'एकदैवतत्वव्याप्यधर्मो मम जिज्ञासाविषयः' इति वाक्यार्थः । विष्णुर्दैवतमित्याद्युत्तरेण च जिज्ञासानिवृत्तिः, विष्णुत्वप्रकारकज्ञानोदयात् । तस्यैव विष्णुत्वांशे एकदैवतत्वव्याप्यधर्मप्रकारकज्ञानत्वरूपेणेच्छाविषयत्वात् । अन्यज्ञानादन्येच्छानुत्पत्तेः । सिद्धेऽपि तदनुत्पत्तेश्च । उत्पादनार्थत्वे तु व्यापारसामान्यविषयकप्रश्ने तद्विशेषविषयकोत्तरोपपत्तिरिति ।

नन्वेवं अस्ति भवतीत्यादिषु उभयांशाविरह इति चेत् ।

नैवम् । तत्रापि क्रियासद्भावात् ।

तदुक्तम् ।

अस्त्यादावपि धर्म्यंशे भाव्ये ऽस्त्येव हि भावना ।
अन्यत्राशेषभावात्तु सा तथा न प्रतीयते ।

धर्म्यंशे धर्मिभागे,भाव्ये भाव्यतया विवक्षायाम् । भूधातोरु-

त्पत्तिस्थित्युभयार्थकत्वात्।"तत्र भवः""तत्र जातः"इति भेदनिर्देशात् अत एव तत्र लडादिप्रयोगः, कालस्य क्रियात्मकत्वात् ।

क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका । इति,

कालानुपाति यद्रूपं तदस्तीति प्रतीयते । इति—

वाक्यपदीयोक्तेः ।

नचैवं 'घट करोति' इत्यत्रेव 'घटो भवति' इत्यादावपि तत्प्रतीतिः स्यादिति वाच्यम् । अशेषभावाद्भावनाफलयोरेकानिष्ठत्वाद्भावना स्पष्टं न प्रतीयते इत्युत्तरार्द्धार्थात् ।

नचैवं 'किङ्करोति' इति प्रश्ने 'पचति'इत्यादिवद् 'अस्ति' इत्यादिकमपि उत्तरं स्यादिति वाच्यम् । सुस्थतया निश्चिते प्रश्नस्य विशेषविषयकत्वज्ञानात् तदभावे ऽपि आसन्नविनाशधर्मिकयथोक्तप्रश्ने अस्तीत्युत्तरस्य सर्वाभिमतत्वात् ।

ननु 'दिगस्ति''आत्मा भवति'इत्यादौ उत्पत्तेर्बाधिततया कथं भावना वाच्येति चेन्न । तत्तत्क्षणविशिष्टत्वेन तेषामप्युत्पत्तेः ।

यद्वा स्वरूपधारणमेव फलं तदाश्रयतैव साध्यत्वेनाभिधीयमाना व्यापारः। तथाचात्माऽऽदिः स्वरूपधारणं करोतीत्यर्थः। अस्तीत्युत्पन्नस्यात्मधारणमुच्यते इति निरुक्तकारोक्तेः ।

आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते । इति—

वाक्यपदीयोक्तेश्च । नचैवं सकर्मकत्वापत्तिः । जीवत्यादिवदन्तर्भूतकर्मकत्वात् ।

यद्वा अस्तित्वमेव व्यापारः, अवच्छेदकतारूपा व्याप्तिः फलम् । अत एव 'मासमास्ते इत्यादौ धात्वर्थतावच्छेदकफलशालित्वरूपं मुख्यमेव कर्मत्वमिति भाष्ये द्वितीये वक्ष्यते ।

अथवा क्रियावाचित्वावश्यकत्वे ऽपि फलवाचित्वानावश्यकत्वात्सत्ताऽऽदिरेव क्रिया । अत एव 'पश्यति भवः स्वयमेव

'दर्शयते भवः' इत्यादौ निवृत्तप्रेषणे विषयतारूपफलस्यैव धात्वर्थत्वं क्रियात्वं चेति स्वीकारः ।

एवं पच्यते ओदनः स्वयमेवेत्यादौ ।

एकदेशे समूहे वा व्यापाराणां पचादयः ।

स्वभावतः प्रवर्त्तन्ते तुल्यरूपं समाश्रिताः ॥ इति—

वाक्यपदीयानुसारेण विक्लित्तिमात्रं धात्वर्थः । तद्रूपक्रियाश्रयत्वात् ओदनादीनां कर्तृत्वमिति व्याचक्षते ।

भाष्येतु निरुक्तमप्युदाहृतम्—"षड् भावविकारा इति ह स्माह वार्ष्यायणिः" इति ।

अत्र कैयटः-भावस्य क्रियायाः षट् प्रकाराः तेषु चास्तिः पठित इति तस्यापि क्रियात्वम् ।

अथवा भावस्य सत्ताया एते प्रकाराः । सत्तैवानेकक्रियात्मिका साधनसम्बन्धाध्यवसीयमानसाध्यरूपा जन्मादिरूपतया भासते इति ।

तथाच जातिसमुद्देशे हरिणोक्तम्—

सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिषु ॥

इत्युपक्रम्य,

प्राप्तक्रमविशेषेषु क्रिया सैवाभिधीयते ।

क्रमरूपस्य संहारे तत्सत्त्वमिति कथ्यते ॥ इति ।

व्यापारविशेषाणां साध्यत्वात्क्रमिकत्वाच्च तदुपहितसत्तायास्तद्योग इत्यर्थः ।

स्यादेतत् । जानाति, इच्छति, यतते, द्वेष्टि, इत्यादौ अवच्छेदकं फलं नास्त्येव, तथाच तत्र कथं सकर्मकत्वम्, वैयाकरणानां स्वार्थफलव्यधिकरणव्यापारवाचित्वस्यैव तत्त्वात् । नच ज्ञानजन्यं विषयताख्यमेव फलं घटनिष्ठमिति वाच्यम् । ज्ञानजन्याविषय-

तायां मानाभावात् । अतीतादौ तदुत्पत्तेरशक्यवचनत्वात् ।

तदुक्तं कुसुमाञ्जलौ—

स्वभावनियमाभावादुपकारोऽतिदुर्घटः ।

सुघटत्वेऽपि सत्यर्थे ऽसति का गतिरन्यथा ॥

पूर्वार्द्धस्यायमर्थः—विषयस्य ज्ञानेन सह पूर्वमसम्बन्धे घटज्ञानं पटेऽपि ज्ञाततां जनयेत् असम्बद्धत्वाविशेषात् । स्वभावादेव तज्ज्ञानं पटीयमिति चेन्न । ज्ञाततास्वीकारवैयर्थ्यात् । नच क्रियात्वात्कर्मनिष्ठफलजनकत्वानुमानम् । इच्छति नश्यति इत्यादौ व्यभिचारात् । न च 'घटो ज्ञातः' इति प्रत्यक्षं मानम् । ज्ञानवैशिष्ट्यस्यैव तद्विषयत्वात् ।

तदुक्तम्—

अनेकान्तादसिद्धेर्वा नच लिङ्गमिह क्रिया ।

तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोऽधिके ॥ इति ।

इष्टतादीनामपि सिद्धिप्रसङ्गादित्यर्थः ।

अत्र वदन्ति—आवरणभङ्गजनकज्ञानं ज्ञानानुकूलव्यापारो वा जानातेः, इच्छाद्वेषानुकूलव्यापार इच्छतिद्विष्यादीनामर्थ इति सकर्मत्वमुपपन्नमिति ।

अद्वैतचन्द्रिकाकृतस्तु—नैतद्युक्तम् । आवरणभङ्गरूपफलस्य परोक्षज्ञानविषयनिष्ठत्वाभावात् । परोक्षवृत्त्या ऽसत्त्वापादकस्यैवावरणस्य निवृत्तेः । तत्र वृत्तेर्विषयसम्बन्धाभावेन विषयनिष्ठाभानावरणभङ्गाभावात् । प्रमातृमात्रनिष्ठवृत्त्या प्रमातृनिष्ठावरणभङ्गस्यैव सम्पादनात् । परंपरया फलसम्बन्धमादाय सकर्मकत्वोक्तावकर्मकस्यापि तदापत्तेः । तस्यापि फलव्यापारयोर्धातुरित्यादिना त्वया स्ववाच्यव्यापारसमानाधिकरणफलवाचकत्वोक्तेः । सुखादिस्थले आवरणस्यैवाप्रसिद्धत्वाच्च

अत एव ज्ञानमपि न फलम् । चैतन्यस्य नित्यतया फलत्वायोगात् । वृत्तिज्ञानस्य परोक्षस्य विषयनिष्ठत्वाभावात् । विषयतासम्बधस्य वृत्त्यनियामकत्वात् । सुखादिस्थले तदसम्भवाच्च ।

यदपि विषयताजनकज्ञानादिकं जानात्यादेरर्थ इति ।

तदपि न । विषयताया ज्ञानाद्यतिरिक्तत्वे ऽपि ज्ञानादिजन्यत्वे मानाभावात् । ज्ञानादिपूर्वं विषयतासत्त्वेऽपि ज्ञानाद्यभावादेवोपपत्तेः । ज्ञानादीनां च स्वोत्पत्तिद्वितीयक्षणे स्वकार्योपधानासम्भवात्स्वोत्पत्तिक्षणे सविषयकत्वाभावात् । तस्मादेवं वाच्यम्—असत्त्वापादकाज्ञाननिरूपकत्वाभावस्य यदधिकरणत्वं तत्प्रयोजकचिदेव जानात्यर्थः । उक्ताधिकरणत्वरूपफलवत्त्वेन घटादेर्ज्ञानादिकर्मता । सुखादिनिष्ठे तादृशाधिकरणत्वे ऽपि सुखाद्युपहितरूपेण चित् प्रयोजिका । सुखादेरसत्त्वदशायां तादृशचिदभावे उक्ताधिकरणत्वाभावात्तद्भावे तद्भावाच्च । न च यथोक्तनिरूपकत्वाभावप्रयोजकचिदेव ज्ञाधात्वर्थो ऽस्त्विति वाच्यम् । घटाकारवृत्तिदशायां प्रमातारं जानातीति प्रसङ्गात् । तादृशवृत्तिप्रयुक्तस्योक्तनिरूपकत्वाभावस्य प्रमातरि सत्त्वात् । उक्तनिरूपकत्वाभावाधिकरणत्वोक्तौ तु प्रमातृनिष्ठस्य तस्य स्वतः सिद्धतया न वृत्त्यवच्छिन्नचित्प्रयोज्यत्वम् इति न तदापत्तिः, घटादौ विघ्नाभावाधिकरणत्वस्य मङ्गलाप्रयुक्तत्ववत् । एवं च वृत्त्युपहितरूपेण सुखाद्युपहितरूपेण च तादृशप्रयोजकत्वाद् वृत्त्यवच्छिन्नचितो जानात्यर्थत्वम् इति ग्रन्थसङ्गतिः ।

यदितु तार्किकादिरीत्या साक्षात्करोतिजानात्योर्मुख्यसकर्मकत्वं नाभ्युपेयते तत्र ज्ञाधातोः शक्यता शुद्धचिद्व्यक्तावेव निरवच्छिन्ना, शक्यनानात्व एवानुगमार्थमवच्छेदकस्वीकारा-

त् । घटं जानातीत्यादौ तदीयासत्त्वापादकाज्ञानविरोधित्वसम्बन्धेन घटादेर्ज्ञाधात्वर्थेऽन्वयः । तदीयत्वं च स्वावच्छिन्नचिद्विषयिताविषयितान्यतररूपस्तत्सम्बन्धः । स्वावच्छिन्नाचिद्विषयित्वमात्रनिवेशे ब्रह्म जानातीत्यादावनुपपत्तिः । ब्रह्मणश्चित्स्वरूपत्वेन सावच्छिन्नत्वाभावात् । विषयित्वमात्रनिवेशे च घटं जानातीत्यादावनुपपत्तिः । घटादेर्जडत्वेनावरणकृत्याभावात् । घटादिविषयकत्वस्याज्ञाने ऽनङ्गीकारात् । अत उभयमुपात्तम् । अभानापादकाज्ञानसत्त्वे ऽपि परोक्षवृत्तिकाले घटं जानामीत्याद्यनुभवादसत्त्वापादकेतीत्याहुः ।

इदं च तर्ककौतूहले विचारितमस्माभिरिति तिष्ठत्वतिविस्तरः ॥

# उपदेशे ऽजनुनासिक इत् २।

उपदिश्यतेऽनेनेत्युपदेशः । "कृत्यल्युटो बहुलम्" इति बाबाहुलकात्करणे घञ् । नच तदाश्रयणे मानाभावः । भाष्योक्तेरेव तथात्वात् । सच धातुप्रातिपदिकपाठे, सूत्रवार्त्तिके च । एतैर्हि शब्दा उपदिश्यन्ते । तत्रानुनासिकोऽच् इत् संज्ञा स्यात् । नच "पुंसि संज्ञायां घः प्रायेणम्" इति घप्रत्यय एवास्त्विति वाच्यम् । संज्ञात्वाभावात् । शास्त्रकारसङ्केतविरहात् । नच प्रायेण संज्ञायामिति व्याख्यानाद् असञ्ज्ञायामपि तदुपपत्तिः । प्रायसंज्ञाग्रहणयोर्विधेयविशेषणत्वमपहाय परस्परं विशेषणविशेष्यभावानौचित्यात् । तदुक्तं भाष्ये "नह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणम्" इति । उपाधिविशेषणयोश्च वाच्यत्वावाच्यत्वाभ्यां विशेषः । यथा हतिहरिशब्देन पशुरभिधीयते इति पशुरुपाधिः । गार्गिकया श्लाघते

इत्यत्र श्लाघाया वुञाऽनभिधानात्सा विशेषणम् ।

तदुक्तम्—

अर्थविशेष उपाधिस्तदन्तवाच्यः समानशब्दो यः ।

अनुपाधिरतोऽन्यः स्यात् श्लाघादिविशेषणं यद्वत् ॥

अनयोश्च क्रियाभावशब्दयोरिव क्वचित्पर्यायत्वं क्वचिद्भेदेन व्यवहार इति द्रष्टव्यम् । तस्माद्बाहुलकमेव स्थितमिति मूलानुयायिनः ।

एतेनोपदेशपदार्थविचारभाष्यस्योपक्रमस्थस्य न्यायप्राप्तानुवादकस्य प्राबल्यानुमानेनोक्तार्थे भाष्यकृतस्तात्पर्यं नास्तीति परास्तम् । उत्तरपक्षत्वेन साक्षादुपन्यस्ते तात्पर्याभावानुमानस्य बाधितत्वात् ।

यदप्युक्तम्—भाष्यकारस्य करणे घञुक्तिः किं पाणिनीयव्याकरणसापेक्षा उत तन्निरपेक्षा ।

नाद्यः । उक्तन्यायेन घञसिद्धेः । नान्त्यः । पाणिनीयसूत्रोपन्यासस्यासङ्गततापत्तेः । तस्मान्न्यायविरुद्धे भाष्यस्य न तात्पर्यमिति ।

तदप्यसत् । बहुलग्रहणानुसारेण सूत्रतात्पर्यस्यैव भाष्यकृता स्फुटीकृतत्वात् । अन्यथा बहुलग्रहणवैयर्थ्यापत्तेः । प्रत्याहारशब्देऽधिकरणे घञिति स्वयमङ्गीकृतत्वाच्च । अत एवासन्न्यायोपन्यासपूर्वकस्मृतिसाम्यमप्यपास्तम् । भावघञन्तत्वपक्षे उच्चारणक्रियाया अन्त्यत्वासम्भवेन शब्दद्वारकस्यान्त्यत्वस्य ग्रहणे गौरवाच्च । अन्यथा प्रतिज्ञासमधिगम्यं प्रतिज्ञाशब्दस्य लक्षणेति वदता कर्मण्यङा दूषणानुपपत्तेश्च ।

अन्ये त्वाहुः—वासरूपन्यायेन करणेऽपि घञ् सुवचः । नच क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्तीति वाच्यम् । बाधानवबाधात् । तत्र हि क्तल्युटौ नपुंसके भावे विहितावेव गृह्येते,

परस्परसाहचर्यात्। नतु भूतवर्त्तमानक्तौ करणाधिकरणल्युटौ च। तेन "निष्ठा" इतिभूतक्तविषये अशयिष्ट अभविष्ट इत्यादौ लुङ् सिद्धः। विधिसामर्थ्यात्समाधाने गौरवात्। तथा "ञीतः क्तः", "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्त्तमानक्तविषये क्ष्वेदते, क्ष्विद्यति, मेदते, मेद्यति, स्वेदते, स्विद्यति, इच्छति, जानाति पूजयतीत्यादौ लट्, तद्भिन्नधातुषु लड्विधेश्चरितार्थत्वात्। एवं करणल्युटो विषये उपदेशेत्यादौ, अधिकरणल्युटो विषये प्रासाद इत्यादौ घञ्। नचैवं धातुमात्रात्करणाधिकरणयोर्घञापत्तिः। "अभिधानलक्षणाः कृत्तद्धितसमासाः" इति न्यायात्।

अयमेव बाहुलकात्करणे घञं वदतो भगवतोऽप्यभिप्रायः। "कृत्यल्युटो बहुलम्" इत्यत्र ल्युड्ग्रहणं करणाधिकरणल्युट्परम्, क्वचित्कारकान्तरेऽपि भवति करणाधिकरणयोरपीत्यर्थकबहुलशब्दस्य तत्र [illegible]त्। भावातिरिक्ते साधने करणाधिकरणयोरित्यनेनैव ल्युटो विधानेन तत्र भावल्युटो ग्रहणासम्भवात्। अत एव तत्र कृद्ग्रहणमपि कर्मार्थकतत्परम्। कारकान्तरेऽपि भवतीत्यर्थेन बहुलग्रहणेन बहुभ्यो धातुभ्यः सदा भवति कस्माच्चिद्धातोः कदाचिद्भवतीत्यर्थः। तथाच प्रकृतपरिभाषायां करणाधिकरणल्युटो ग्रहणं न भवति वैयर्थ्यादिति पर्यवसानम्।

अत एव प्रत्ययसूत्रे प्रतियन्त्यर्थमनेनेति प्रत्ययः। यद्वा "पुंसि संज्ञायाम्" इति घइति अनुन्यासग्रन्थः सङ्गच्छते। बाहुलकात्परस्यापि करणल्युटोऽप्रवृत्तिपक्षे अचः सम्भवात्।

एतेन करणल्युटा बाधितत्वादेरच् तत्र न भवत्येव उक्तपरिभाषानुरोधादिति मैत्रेयग्रन्थो निरस्तः।

यत्तु सीरदेवेनोक्तम् तत्परिभाषाया क्तस्यावनपुंसके

भावे विहित एव गृह्यते ल्युटा साहचर्यात् । ल्युडपि यदि भावे विहित एव गृह्येत तर्हि तेनैव हासमित्यादेर्वारणसम्भवात् क्तग्रहणं व्यर्थमेव स्यात् । क्तग्रहणाऽग्रे तु ल्युट् त्यक्तुं न शक्यते सकर्मकेभ्यो भावे क्तस्याभावात् । तथाच क्तग्रहणसामर्थ्यात्सामान्यविहितो ल्युट् गृह्यते इति मैत्रेयोक्तं युक्तमिति ।

तन्न । ल्युट्सामान्यग्रहणे तत्साहचर्याद्भावे क्त एव गृह्यते इत्यस्य व्याहतत्वात् । नापि ल्युड्ग्रहणेन हासमित्यादिवारणसम्भवः, परस्परामप्राप्तिपक्षे एव परस्परेण प्रवर्त्तितव्यमित्यस्य सर्वसंमततया ल्युटोऽप्राप्तिपक्षे तस्य नित्यं बाधकत्वाभावेन घञो दुर्वारत्वात् ।

यदपि तेनोक्तं कुण्डगादिसूत्रे स्तम्बमनय इति वृत्तिग्रन्थोऽनुव्याख्याते ऽनुपपन्नः स्यात् । “परिमाणाख्यायां सर्वेभ्यः” इति घञोऽजपवादत्वात् ।

तदप्ययुक्तम् । तत्रत्यशब्दस्य परिमाणाख्यत्वाभावात् । नच संख्यावाचिन्युपपदे घञिति तदर्थः । एकस्तण्डुलनिचायः । द्वौ शूर्पनिष्पावौ इत्यादिभाष्योदाहरणविरोधात् । “उपपदमतिङ्” इति नित्यसमासप्रसङ्गादित्याहुरित्यास्तां तावत् ।

उदाहरणम् एधेत्यत्र अनुदात्ताकारस्य इत्सञ्ज्ञत्वाद् “अनुदात्तङित:” इत्यात्मनेपदम् । नच तस्यानुभवासिद्धत्वाभावः । सूत्रकृता तादृशस्यैव पाठे ऽपीदानीमनुनासिकपाठस्यापभ्रष्टत्वात् । तदुक्तं प्रतिज्ञानुनासिक्याः पाणिनीया इति । एवं तत्र तत्राभियुक्तव्यवहारवशादुन्नेयम् ।

उपदेशे किम् । अभ्र आँ अपः । “आङो ऽनुनासिकश्छन्दसि” इत्यनुनासिकः । अस्य शास्त्रे पाठाभावान्न संज्ञा ।

ननु “उञ ऊँ” इत्यत्रातिप्रसङ्गः, स्वरूपेणैव पठितत्वात्,

विधानसामर्थ्यस्य चोभयत्रापि अविशेषात् । नच 'अनेकान्ता अनुबन्धाः' इति पक्षे अत्र आं आटिन इत्यादावादित्त्वादिडभावार्थम् इत्सञ्ज्ञापत्तिः । आङिदित्येतावताऽपि तत्सिद्धेः । अत एव दधीच्छति दधि ब्राह्मणकुलम् । दधीयतेः क्विप्यल्लोपयलोपह्रस्वेषु "अणोऽप्रगृह्यस्य" इत्यनुनासिकस्य "अनुनासिक" इति इत्संज्ञायां नुमापत्तिः । दधिन-नादिषु पचानिभवतीत्यादिषु इत्कार्यं लोप एव स्यादत उपदेशग्रहणमित्यपास्तम् । "अणप्रगृह्य इद्" इत्येनादनेन तदुपपत्तेरनुनासिकविधानवैयर्थ्यात् । "इतश्च" इति लोपविधानवैफल्याच्च । तस्मादुपदेशपदं व्यर्थमिति चेत् ।

अत्राहुः—उत्तरार्थं तदिति । अजिति किम् । मनिनो मकारस्य मा भूत् । तथा च "अन्येभ्यो ऽपि दृश्यते" इति हलन्तेषु मित्त्वादन्त्यादचः परः स्यात् । अनुनासिकः किम् । चिरिणोति जिरिणोति । अत्र मा भूत् ।

# हलन्त्यम् ३।

उपदेशेऽन्त्यं हलित्स्यात् । नचापेक्षिकमन्त्यत्वमतिप्रसङ्गि । अन्त्यपदस्वारस्येन तत्तद्धातुत्वाद्युपाधिपरिच्छिन्ने समुदाये यदन्त्यं तस्योपादानात् । शीङ् स्वप्ने । ङित्त्वात्तङ् । शेते । उपदेशे किम् । अग्निचित् । सोमसुत् । नच तुग्विधानसामर्थ्यम् । आगत्येत्यादौ चरितार्थत्वात् । नच क्विपः पित्त्वविधानवैयर्थ्यम् । अग्निचितावित्यादौ सार्थक्यात् । इति हरदत्तः । अन्त्यं किम् । मनिनो मकारस्य मा भूत् । वेश्म सद्म । "सर्वधातुभ्यो मनिन्" । सत्यामित्सञ्ज्ञायां "मिदचोऽन्त्यात्परः" इत्यस्य प्रसङ्गात् ।

वस्तुतः पूर्वसूत्रे ऽज्ग्रहणसामर्थ्यादेवात्र न दोषः । अनेन तेन वा मकारस्येत्संज्ञायां विशेषाभावात् ।

एवं "षः प्रत्ययस्य" इत्यादिकमप्यत्र साधकं ज्ञेयम् । "श्रोत्रियंश्छन्दोऽधीते" "क्षेत्रियच् परक्षेत्रे चिकित्स्यः" इत्यादौ वाक्यार्थे पदवचनमिति पक्षे प्रकृतिप्रत्ययविभागाभावेऽपि उपदेशेऽन्त्यत्वादित्संज्ञा । सनुतर् इत्यादेः स्वरादिपाठेऽपि रेफो नेत्सञ्ज्ञः, उच्चारणसामर्थ्यात् । अन्तोदात्तनिपातनानुरोधेन रित्स्वरस्य दुर्वचत्वात् ।

स्यादेतत् । "आदिरन्त्येन" इत्यस्य इत्सञ्ज्ञाधीनप्रवृत्तिकतया "हलन्त्यम्" इति सूत्रस्य च तदधीनप्रवृत्तिकतया अन्योन्याश्रयः पदार्थबोधं विना वाक्यार्थबोधस्यासंभवात् ।

अत्राहुः—हलिति योगो विभज्यते हस्य ल् हल् । सामीप्यं षष्ठ्यर्थः । नच तत्र विप्रतिपत्तव्यम् । "अस्तेर्भूः" इत्यत्र "अस्तेः समीपे ऽनन्तरे वा" इति भाष्यदर्शनात् "ग्रो यङि" इत्यत्रानन्तर्यं षष्ठ्यर्थ इति शङ्कायास्तदारूढत्वाच्च । ब्राह्मणकम्बल इत्यादौ तु स्वस्वामिभावसंबन्धस्योत्थिताकाङ्क्षत्वात्प्रतीतिरित्युत्सर्गः । अन्यथा त्विष्टापत्तिः । अनन्तरादिषु बहुव्रीहेरेवानभिधानस्य भाष्यकारैरुक्तत्वात् । अत एव न समीपार्थे बहुव्रीहिरस्त्यनभिधानादिति सीरदेवेनाप्युक्तम् ।

यत्तु "ङेप्रथमयोरम्" "लसार्वधातुकमनुदात्तम्" "उदात्तस्वरितयोर्यणः" इत्यादौ क्लृप्तस्य स्थान्यादेशसम्बन्धस्य बाधः । नच हकारस्थानिकलकाराप्रसिद्धिः । "नहो धः" इति हस्य धत्वे "तोर्लि" इति लत्वे च उपानल्लुनातीत्यत्र तत्सत्त्वात् । नचासिद्धत्वम् । धुडादिष्वित्सञ्ज्ञानापत्तेः । इत्संज्ञायां "पूर्वत्रासिद्धम्" इत्यस्याप्रवृत्तेः । नापि साक्षाद्धकारस्थानिकलकाराभावेन परिभाषाबाधः । भविता भवितारावित्यादौ स्वरानापत्तेः । प्रथमोपस्थितपरिभाषाऽनुरोधेन परं-

परादेशग्रहणस्योचितत्वाच्चेति ।

तदसत् । हल्शब्दार्थप्रसिद्ध्युपपादकत्वेनोक्तकल्पनायां तदनुपपादकहकारस्थानिकलकारेत्सञ्ज्ञापादकशंकाया अयुक्तवान्तत्वात् । अनुवादे च परिभाषाऽनुपस्थानात् । अन्यथा "उदीचामातः स्थाने" इत्यत्र स्थानेग्रहणवैयर्थ्यात् । तेन स्थानेयोगपरिभाषाया अनित्यत्वज्ञापने ऽपि फलतो विशेषाभावात् । अत एव स्थानिवत्सूत्रे "अनल्" इत्येवास्तु अनुवादतया स्थानेयोगाभावात् । सम्बन्धसामान्ये षष्ठीमाश्रित्य अलोऽलेत्याद्यर्थलाभसंभवादिति शङ्कितं ग्रन्थकारैः । अत एव "सिद्धन्तु प्रसङ्गे रपरत्वात्" इति पक्षे ऋकारस्य योऽण् स प्रसङ्गावस्थायामेव रपरः स्यादित्यर्थे ऋकारसमीपस्थस्याप्यणो रपरत्वं स्यादित्याशङ्क्य द्वितीय स्थानशब्दमनुवर्त्य ऋकारस्थानिकस्याणो लाभ इत्युक्तमाकरे । घुडादौ तु कार्यकालपक्षमालम्ब्य इत्सञ्ज्ञाया उपपादितत्वात् । अत्र च तत्कल्पने प्रमाणाभावात् । लत्वस्यासिद्धत्वाभावे बीजस्य दुर्वचत्वात् । उपदेशे इत्यस्य प्रकृतत्वात् । नच श्रुत्या प्रकरणबाधः । उपदेशग्रहणमुत्तरार्थमिति सिद्धान्तात् । तस्यापि श्रुतित्वाविशेषात् ।

एतेन व्यस्तप्रयोगो ऽपि दुर्लभ इत्यपास्तम् ।

भवितेत्यादौ तु स्थानिवद्भावेन डादीनां सार्वधातुकत्वमस्त्येवेति न दोषः । परम्परया लादेशत्वस्यापि तत्र सत्त्वात् । नच तासेः परस्य लादेशसार्वधातुकस्यानुदात्तत्वविधानं भवितासीत्यादौ साक्षाल्लकारादेशे सिबादौ चरितार्थमिति कथमादेशादेशे डादौ तत्प्रवृत्तिरिति वाच्यम् । उभयपक्षसाधारण्यात् । अकारसन्निहितसार्वधातुकस्याप्रसिद्ध्या तत्र सामर्थ्याल्लकारादेशग्रहणमित्येवाधिकस्य वाच्यत्वात् । नच चलतीत्यादौ श-

बादिरेव तथा प्रसिद्धइति वाच्यम् । तास्यादेः परस्येत्यपि सार्वधातुकविशेषणस्य श्रूयमाणत्वात् । विशिष्टस्य तथाऽप्यप्रसिद्धेः । "लस्य" इति सूत्रे लकारो ऽनुनासिको निर्दिश्यते इति भाष्योक्तपक्षे "लसार्वधातुकम्"इत्यत्रापि तादृशस्यैव लकारस्योपादानाच्च । एतेन "उदात्तयणो हल्पूर्वात्", "उदात्तस्वरितयोर्यणः" इत्यादिकमपि व्याख्यातम् । यणो हल्पूर्वत्वनियमात् तत्परस्य चानुदात्तस्यैव तत्सूत्रप्रवृत्तिस्थले ऽपेक्षितत्वात् । तत्र बाधसद्भावात् षष्ठ्या सामीप्यस्य वक्तुमशक्यत्वात् । ननु "उदात्तयणः" इति सूत्रे हल्पूर्वग्रहणस्य बहुतितवा ब्राह्मण्येति व्यावर्त्त्यं भाष्ये वक्ष्यते इति चेत् । सत्यम् । तत्र "बहोर्नञ्वदुत्तरपदभूम्नि" इति अतिदेशोदात्ततया उकारपूर्ववार्त्तिनां शेषनिघातेन टाविभक्तेश्च सुप्स्वरेणानुदात्ततया बाधतादवस्थ्यात् । तथा चोभयोरपि नियमाभावात् प्रयोजनवशेन प्रकृते सामीप्यस्य षष्ठ्यर्थत्वे बाधकाभाव इति सिद्धम् ।

नन्वेवमपि लसूत्रस्थलकारस्य हकारसंनिधानेनैव हल्प्रत्याहारापत्तिः । अव्यवहितसामीप्यानुपपत्तावेव व्यवहिततदुपादानात् ।

यद्वा हल् च लूचेति द्वन्द्वः । नच हल्शब्दार्थानवबोधात्सहविवक्षाऽनुपपत्तौ कथं द्वन्द्व इति वाच्यम् । "आदेशप्रत्यययोः" इति सूत्रे आदेशाभिन्नः प्रत्ययावयवश्च यः सकार इति व्याख्याय सहविवक्षां विनाऽपि सौत्रो द्वन्द्व इति स्वयमेवोक्तत्वात् । नच तत्रोभयनिर्देशस्य प्रत्यक्षत्वात् तथा, अत्र तु नेति वाच्यम् । अन्योऽन्याश्रयपरिहारस्यावश्यकतयाऽत्रापि साम्यात् ।

वस्तुतो ऽत्र न तदनुपपत्तिः । हल्पदं सार्थकमाप्तप्रयुक्तत्वादिति सामान्यतोऽर्थवत्ताज्ञाने सति तस्याः सुस्थत्वात् ।

लकारस्येत्सञ्ज्ञायाम् "आदिरन्त्येन" इति प्रत्याहारसिद्धौ पश्चादेव हल्पदार्थविशेषज्ञानसम्भवात् । पाणिनेस्तादृशविवक्षायाः सम्भवाच्च । प्रयोगे वक्तृविवक्षाया एवापेक्षितत्वात् । वाक्यप्रयोगहेतुज्ञानस्य तच्छब्दातिरिक्तप्रमाणजन्यत्वनियमात् । अनेकशक्तेः शब्दस्य शक्त्यवच्छेदेन संज्ञिनि विनियोगात् इत्यादिकमप्यत्र योज्यम् ।

यत्तु "तुल्यास्यप्रयत्नं सवर्णम्" "अणुदित्सवर्णस्य" इतिप्रणयनेन अकारहकारादयो ग्राहका इत्यर्थस्य ज्ञातत्वेन "अइउण्" "हयवरट्" इत्यादीनां तदर्थाभिप्रायेण प्रणयनापत्तिरिति ।

तदसत् । अकारादिभिरकारादिग्रहणमापाद्यम्, उताकारादिहकारादीनां परस्परं ग्राह्यग्राहकभावः । नाद्यः । इष्टत्वात् । नान्त्यः । "नाज्झलौ" इति बाधकसत्त्वात् । एतेनाकारादीनां तुल्यस्थानानां च परस्परं सावर्ण्यं नेति सूत्रकारज्ञानं कल्प्यम्, तत्र चाकारहकारयोरिवाकारयोरपि सावर्ण्याभावो विषय इति निरस्तम् ।

आचार्यस्य विशेषदर्शित्वेन तद्विषयकज्ञानस्य बाधितत्वात् । अत एव ज्ञानज्ञानस्य तद्विषयविषयकत्वनियमे ऽपि भ्रमविषयकेऽपीश्वरज्ञाने ग्राह्यभ्रमविशेष्ये शुक्त्यादौ प्रकारीभूतरजतत्वादिवैशिष्ट्यविषयकत्वं नास्तीति नाकिं कश्चिद्वक्तः । तुल्यस्थानप्रयत्नानामप्यज्झलां परस्परं सावर्ण्यं नास्तीत्यस्मिन्नाचार्यज्ञाने अच्त्वावच्छिन्नस्य हल्त्वावच्छिन्नेन सावर्ण्याभाव एव विषयो न त्वच्त्वावच्छिन्नस्य तेन, हल्त्वावच्छिन्नस्य वा तेनेति स्पष्टत्वात् ।

यत्तु मुखनयनं पश्येत्यादावन्यतरपदार्थज्ञानशून्यस्यैकतरपदार्थविषयकदर्शनान्वयबोधे ऽपि उभयपदार्थज्ञानवतः सहबोधस्यैव सत्त्वेन वक्तृतात्पर्यनिर्वाहः । प्रकृते तु बोद्धृणां

सहबोधस्य वक्तुमशक्यत्वादाचार्याणामपि तदभिप्रायेण शब्द-प्रयोगाभावात्सहविवक्षाऽनुपपत्तिरेवेति ।

तदप्यसत् । 'द्वयोः सहबोधो जायताम्' इत्येव तात्पर्यम् । सचोभयशक्तिज्ञानवतः सहैव इतरस्य त्वन्यथेति हि वस्तुस्थितिः। प्रकृते तु सूत्रकारस्यैव युगपद् बोधः, अस्मदादीनान्तु पूर्व लकारेत्सञ्ज्ञाबोधः ततो हलपदार्थज्ञाने द्वयोः सहबोधः । 'सहैव बोधो जायताम्'इति तात्पर्ये मानाभावात् । सामान्यबोधस्तु अस्मदादीनामपि सहैव भवतीति स्पष्टम् । पदद्वयशक्तिज्ञानविरहिणोऽपि सह बोधो जायतामिति तात्पर्यस्य च बाधितत्वात् ।

ननु स्ववाक्यात्स्वान्वयबोधो न भवत्येव प्रकृतान्वयबोध-समानाकारकज्ञानाभावरूपस्वरूपसदाकाङ्क्षाविरहात् ।

मैवम् । इच्छाविरहविशिष्टस्यैव ज्ञानस्य तत्र निवेशात् ।

तथा चोक्तं शब्दालोके—प्रत्यक्षावगते ऽप्यनुमित्सावत् 'शब्देन जानीयाम्' इतीच्छायाः सौलभ्येनाकाङ्क्षासत्त्वे हेत्वन्तराभावस्य दुर्वचत्वात् । अत एव द्वितीयटीकाया स्वोक्तशब्दस्य स्वं प्रति अर्थप्रत्यायकत्वं सिद्धान्तितमिति ।

यत्त्वेकं विना ऽपरस्यान्वय इति स्वीकारे 'देवदत्तो यज्ञ-दत्तश्च गच्छतः' इतिवद् 'देवदत्तयज्ञदत्तौ गच्छति' इति प्रयोगापत्तिः । तथाचैतादृशविषये द्वन्द्वासाधुताया आवश्यकत्वात्सहितबोधस्यैव वक्तृतात्पर्यविषयत्वं वाच्यमिति ।

तदप्यसत् । सहबोधस्योपपादितत्वात् । धातुनाम्नोश्च समानवचनान्तत्वनियमादुक्तापत्तेरनवतारात् । साधुतार्थं द्विवचनापेक्षायामपि बोधार्थं तदभावात् । इयान् विशेषः-कर्त्राख्याते कर्तृपदेन समानवचनत्वं कर्माख्याते तु कर्मवाचकपदेनेति । तस्मादुक्तद्वन्द्वो निरवद्यः ।

अभ्युपेत्य तु ब्रूमः—हल्, ऌ इति पृथगेवास्तु। न चात्र संयोगान्तलोपानुपपत्तिः। एकस्यापि पदस्य संयोगान्तत्वाभावात्, पदसमुदायस्य पदग्रहणेनानुपादानात् इति वाच्यम्। संयोगान्तत्वपदान्तत्वयोः लकारविशेषणत्वपक्षे तदुपपत्तेः। संयोगस्य पदविशेषणत्वात्तदन्तविधिनैव सिद्धावन्तग्रहणं विशेष्येण पदेनापि सह संबन्धार्थम्। संयोगेति लुप्तषष्ठीकम् इति व्याख्यानात्। पृथक्सर्वेभ्यो विभक्तावेकशेष इति पक्षे वृक्षस् स् इत्यत्र संयोगान्तलोपस्य भाष्य एवोपन्यासात्। नच हल्ङ्यादिलोपाभिप्रायं तदिति कैयटव्याख्यानविरोधः। अत्र व्याचक्षते इत्युपक्रम्यान्यमतेनैव तत्प्रवृत्तेः। अन्यथा सुतिसीतिप्रत्ययैः प्रकृतिराक्षिप्यते इति कैयटोक्तसिद्धान्तविरोधात्। "अस्तिसिचोऽपृक्ते" इति सूत्रे द्विसकारको निर्देश इति भाष्यस्य सिचस्स् इति च्छेदे संयोगान्तलोपेन कौस्तुभ एव व्याख्यानात्।

यत्तु लोपद्वारेण लक्षणाया एवान्वाख्यानं तस्याः शक्यज्ञानं विनाऽनुपपत्तेः परस्पराश्रय इति।

तदप्यसत्। हल्पदार्थसम्बन्धिनिलक्षणाया इहानाश्रयणात्। किन्तु हल् इति समुदायस्य हल्ऌ इति समुदायपरत्वं कल्प्यते, तच्च न लक्षणया किन्तु लकारस्मरणेन तल्लोपज्ञानशून्यानां उक्तसमुदायज्ञानाभावात्। यत्र लोपज्ञानशून्यानामपि तादृशार्थबोधो यथा—नीलः पट इत्यादौ तत्रैव लक्षणायाः स्वीकारात्। व्यतिसे इत्यादौ लुप्तस्य धातोरेव तदर्थप्रत्यायकत्वमिति मणिकारादिभिरुक्तत्वात्।

यत्तु लकारे इत्संज्ञाप्रवृत्तिसमये हल्शब्दवाच्यं किञ्चिदित्संज्ञं भवतीति वाक्येन अक्षु इत्संज्ञापत्तिः। किञ्च उक्तरीतेर्यथाश्रुतग्राहिणं प्रति प्रवृत्तावपि 'नहि निर्विशेषं सामान्य-

म्' इति न्यायेन नियतशास्त्रार्थस्य युक्तत्वं, प्रकारान्तरेण तन्निर्णये लकारप्रश्लेषो ऽव्यर्थ इति ।

तदप्यसत् । हल्शब्दवाच्यं किञ्चिदस्तीति ज्ञानस्यापि हल्मात्रविषयकत्वात् । एतावाँस्तु भेदः वाच्यत्वेन ज्ञानं हकारादिवृत्त्यसाधारणधर्मांशे सप्रकारकं हल्त्वेन ज्ञानं निष्प्रकारकमिति । निर्विशेषं न सामान्यमिति न्यायस्य तु सामान्यप्रकारकज्ञानस्यापि विशेषविशेष्यकत्वमित्यर्थो नतु तद्धर्मावच्छिन्नविशेष्यकत्वमपीति । पूर्वं हल्शब्दवाच्यविशेषानवधारणे ऽपि पश्चात्तदवधारणात् । तावता तद्धर्मस्याऽन्वाचितायामुक्तिसम्भवाभावात् । नच हल्शब्दवाच्यं किञ्चिदस्तीति ज्ञानं न सूत्रप्रवृत्तावुपयोगि तस्य लक्ष्यसंस्कारकत्वाभावादिति वाच्यम् । परम्परया तत्सत्त्वात् । तादृशज्ञानाऽनङ्गीकारे तवापि सम्पूर्णसूत्रावृत्तिर्न स्यात् । तात्पर्यग्रहस्य तत्रापेक्षितत्वात् । तात्पर्यसत्त्वे त्वावृत्तिरित्युक्तेः ।

यदप्युक्तम्—असतः संज्ञिनः संज्ञाविरहप्रतिपादकभाष्येणानिर्धारिते संज्ञिन्यपि न्यायसाम्यात्तदभावोपपादनेन भाष्यविरोध इति ।

तदप्यसत् । कल्पनानुरोधेन तन्निर्णयसंभवात् । तथा च तत्र कैयटः—सत्यसति वा संज्ञिनि बुद्ध्या विषयीकृते शब्देन पूर्वनिर्दिष्टे संज्ञा प्रवर्तते इति तिष्ठतु विस्तरः ।

स्यादेतत् । तथाऽप्युभयत्र संयोगान्तलोपानुपपत्तिः । तत्र यणः प्रतिषेधारम्भात् । झल् इत्यपकृष्य संयोगान्तस्य झलो लोपविधानाच्चेति ।

मैवम् । बहिरङ्गलक्षणत्वाद्वेति तृतीयपक्षे तदुपपत्तेः ।

यदप्युक्तम्—अन्तरङ्गे संयोगान्तलोपे कर्तव्ये बहिरङ्गस्य सुलोपस्यासिद्धत्वमिति ।

तदप्यसत्। पचन्नित्यादौ झलपकर्षपक्षसाधारण्यात्। नच वचनसामर्थ्यम्। आङ्भ्यामित्यादौ चरितार्थत्वात्। यथोद्देशपक्षस्य त्वत्रापि सुवचत्वात्। नचैवं बहिरङ्गलक्षणत्वाद्वैत्यस्यानुपपत्तिरिति वाच्यम्। यत्र यणो लोपप्रसक्तिस्तत्र कार्यकालपक्षमाश्रित्य प्रवृत्तेर्वाच्यत्वात्। नचैकस्मिन्नेव लक्षणे एकस्याः परिभाषायाः प्रवृत्त्यप्रवृत्तिविरोधः। लक्ष्यभेदेन लक्षणभेदमाश्रित्य तदुपपत्तेः।

वस्तुतस्तु हल्ङ्यादिलोपापेक्षया संयोगान्तलोपस्यैव बहिरङ्गत्वं विजातीयसंज्ञाघटितत्वात्। नच तस्याप्यपृक्तसंज्ञाघटितत्वात्साम्यम्, तस्याश्च प्रत्ययघटितत्वमपीति वाच्यम्। संयोगसंज्ञाया अपि संज्ञाद्वयघटितत्वात्। हलांच विशेष्यतया अचामभावप्रतियोगितया तत्र निवेशात्। सुप्तिङन्तं पदं "स्वादिष्वसर्वनामस्थाने" इति द्विविधायाः पदसंज्ञायास्तत्र प्रवेशाच्च। "रात्सस्य" "स्कोः संयोगाद्योः" इत्यपवादद्वयानुसन्धानापेक्षप्रवृत्तिकत्वाच्च। हल्ङ्यादिलोपस्य च निरपवादतया तत्प्रवृत्तावपवादाविषयपरिहारस्यानपेक्षितत्वात्। अत एव तत्र हल्पदानुपादानपक्षे पचन्नित्यादौ नलोपानुपपत्तिरिति शङ्कितं भाष्यादौ। अन्यथा हल्ङ्यादिलोपस्यापि बहिरङ्गत्वादसिद्धत्वतादवस्थ्यं स्यात्। लक्षणविशेषप्राप्तेरप्रयोजकत्वात्। नचैवं यणपेक्षयापि संयोगान्तलोपस्य कथमन्तरङ्गत्वम्। यणादेशविधानस्य संज्ञात्रयघटितत्वात्। संयोगान्तलोपशास्त्रस्य तु उक्तरीत्या गुरुत्वात्। मैवम्। यणपवादानां भूयस्त्वात्तावद्विषयत्वानुसन्धानापेक्षप्रवृत्तिकस्य यणूशास्त्रस्य बहिरङ्गत्वानपायात्। निर्दिष्टपरिभाषासंस्कृतस्यैव तस्य लक्ष्यसंस्कारकत्वाच्च। तत्रत्यस्याऽव्यवधानस्य स्वप्रतियोगिकभेदवद्वर्णघटितत्वात्। संयोगसंज्ञाघटकस्य त्वज्मात्रघटितत्वात्। स्वत्वस्य चान-

नुगतत्वात् इति भगवदभिप्रायः ।

यद्वा हल्सूत्रे, "हलन्त्यम्" इति सूत्रे च ऌकारस्यैव तव-ल्कारइतिवद्गुणभूतस्य निर्देशः । नचैव ऌकारस्य कथमित्संज्ञा अच्संज्ञाया इदानीमप्यनिष्पत्तेः इतरेतराश्रयसाम्यात् । सत्यम् । "ऌदितः" इत्यनेन तज्ज्ञापनसम्भवात् इति कैयटः ।

अथवा णलो लकारेण लकारस्य इत्संज्ञा ज्ञाप्यते तस्य लित्स्वरार्थत्वात् । नच श्रवणार्थत्वम् । हल्ङ्यादिसूत्रे णल्व्यावृ-त्तये द्वितीयहल्ग्रहणस्य कृतत्वात् । अन्यथा ऽपृक्तत्वाभावादेव तदनापत्तेः । नच भवितेत्यादौ डादेशनिवृत्त्यर्थं तदिति वाच्य-म् । सुतिसीतिप्रत्ययैः प्रकृतेराक्षेपाद्धलन्तायाः प्रकृतेः परेषां स्वादीनां लोपविधानात् डादेशं प्रति च तासन्तस्य प्रकृतित्वा-भावात् । नचैवं या सेत्यादौ सुलोपो न स्यात् । नचैकदेशवि-कृतन्यायेन एकदेशस्य पूर्वान्ततया ग्रहणाद्वा हलन्तायाः प्रकृ-तेः परत्वमस्त्येवेति वाच्यम् । यः स इत्यादावतिव्याप्तेः । लो-पप्रवृत्तिकाले उभयत्रापि हलन्तत्वाभावात् । आबन्तात्परत्वमा-श्रित्य लोपस्य चोभयत आश्रये ऽन्तादिवद्भावनिषेधेन दुर्व-चत्वात् । नच "तदस्यां प्रहरणम्" इति निर्देशात्स निषेधो ऽनित्य इति वाच्यम् । तस्यापि हल्पदार्थानवबोधकाले तत्सामर्थ्यग्रहानुपपत्तेः । नच "लिति" इति ज्ञापकं ल्युडादौ चारितार्थत्वात् इति चेत् ।

सत्यम् । तावताऽपि ण्वुलादिलकारसाधारण्येन इत्संज्ञा-ज्ञानस्य जातत्वात् । तस्य चोत्तरकाले "हलन्त्यम्" इति सूत्रजन्यबोधसंवादित्वनिश्चयेन प्रामाण्यादिति भाष्याशयः ।

स्यादेतत् । हल्सञ्ज्ञातः पूर्वं कथं संयोगान्तलोपः संयो-गसञ्ज्ञाया हलसञ्ज्ञाघटितत्वात्, कथं वा हस्य ल् इति समासः

सुप्सञ्ज्ञाया अनिष्पत्तेः ।

एतेन द्वन्द्वसप्तमीतत्पुरुषबहुव्रीहयो व्याख्याता इति चेत् ।

सत्यम् । साधुत्वज्ञानोपयोगिशास्त्रार्थबोधस्यापि तद्बोध्यसाधुत्वकानां पदानां स्वार्थानुभावकतायामनुपयोगात् । अन्यथा काप्यर्थबोधानुपपत्तेः । प्रकृते तु हल्पदार्थज्ञानस्यापि हलन्त्यमिति वाक्यार्थबोधसामग्रीघटकत्वात्तत्रैव "आदिरन्त्येन सहेता" इत्येतद्वाक्यार्थबोधोपयोगीत्सञ्ज्ञाज्ञानापेक्षेति वैषम्यम् ।

स्यादेतत् । लस्येत्संज्ञायामपि नैतद्वाक्यार्थबोधोपपत्तिः । "न विभक्तौ तु स्माः" इत्यपवादवाक्यार्थज्ञानस्य पूर्वमपेक्षितत्वात् । "पूर्वं ह्यपवादा निविशन्ते पश्चादुत्सर्गाः" इति न्यायात् । तत्र च विभक्तिपदार्थज्ञानस्य, तत्र च सुप्तिङ्पदार्थज्ञानस्य, तत्र च "आदिरन्त्येन" इत्येतदर्थज्ञानस्य, तत्र च सञ्ज्ञाज्ञानस्यापेक्षितत्वात् तस्यच "हलन्त्यम्" इत्येतद्वाक्यार्थज्ञानाधीनत्वात्, तुशब्दार्थज्ञानस्यापि ग्रहणकशास्त्रार्थज्ञानाधीनत्वात् तस्य च उदित्यंशे इत्संज्ञाज्ञानसापेक्षत्वात्, उपदेशे ऽजनुनासिक इतीत्सञ्ज्ञाया अच्पदार्थज्ञानाधीनज्ञानत्वात् उक्तक्रमेणान्योन्याश्रयसाम्यादिति चेत् ।

मैवम् । नह्यपवादप्रवृत्तिपूर्वमुत्सर्गवाक्येन बोध एव न जन्यते प्रसक्त्यभावे निषेधानुल्लासात् । तथा च हल्त्वमुद्देश्यतावच्छेदकीकृत्य इत्संज्ञाबोधे सिद्धे सुप्तिङादिपदार्थबोधे बाधकाभावान्न विभक्ताविति वाक्यार्थज्ञानं ततो हल्त्वावच्छेदेन इत्सञ्ज्ञेति प्राथमिकबोधस्य विभक्तिस्थिततवर्गसकारमकारांशे अप्रामाण्यकल्पनं ततो विभक्तिस्थिततवर्गसकारमकारभिन्नत्वे सति हल्त्वरूपमुद्देश्यतावच्छेदकमुभयैकवाक्यतया सिध्यति । अस्तिचेदं पकारादावपीति पूर्वोत्पन्नसुबादिबुद्धेः प्रामाण्यमविरुद्धम् ।

यत्तु विभक्तिस्थतकारादावपीत्सञ्ज्ञाज्ञानं जातं तत्तात्पर्य-भ्रममूलकत्वादप्रयोजकमेवेति नातिप्रसङ्गः ।

यत्तु "न संप्रसारणे"इति सूत्रे,निष्पन्नस्य न प्रतिषेधः। अनिष्पन्नस्य कथं निमित्तत्वमित्याशंक्य संप्रसारणनिमित्तकपूर्वरूपस्यैवायं निषेधः । यद्वा यणि पर एव पूर्वस्य संप्रसारणनिषेध इति पक्षद्वयमपि भाष्यकारैरुक्तं तदभ्युच्चयमात्रम् ।

वस्तुतस्तु समानाङ्गग्रहणस्य तत्रावश्यकतया सम्प्रसारणपदस्य तत्स्थानिनि लक्षणयोक्तद्वितीयपक्षस्य युक्तत्वमेवेति वक्ष्यामः ।

अन्येतु हलन्त्यसूत्रमेवावर्त्तनीयं हलिति सूत्रे ऽन्त्यमित्स्यादित्यर्थः । ततो हलसंज्ञासिद्धौ हलन्त्यमिति सूत्रेण चकारादीनाम् इत्संज्ञायाम् अजादिसंज्ञासिद्धिरित्याहुः ।

अपरे तु हलिति सूत्रेणैव शषसारित्सन्तं समुदायमुद्दिश्य संज्ञा विधीयते । तत्र लकारस्यापि प्रविष्टत्वेन "हलन्त्यम्" इतीत्संज्ञायां वलादिप्रत्याहारसिद्धिः । नच रेफान्त्यसमुदायस्याज्ञातज्ञापकत्वरूपोपदेशत्वाभावादित्संज्ञानापत्तिः । अनेकसूत्रकरणसामर्थ्यादावृत्त्यादिनोभयरूपत्वे तु गौरवमिति वाच्यम् । हल्सञ्ज्ञाविधानसामर्थ्यादेव तदुपपत्तेः । आनुपूर्वीविशेषांशे उपदेशसत्त्वाच्च, स्वरूपांशे तस्य त्वयापि दुर्वचत्वात् । नच संज्ञासञ्ज्ञिनोरेकवाक्यानुपात्तत्वादात्त्वभावः । तात्पर्येणैकवाक्यताकल्पनात् । हलन्त्यसूत्रार्थबोधान्यथानुपपत्तेश्च तत्र ग्राहकत्वात् । अन्यथा सूत्रावृत्तेरप्यनुपपत्तेः । अत एव "तस्य लोपः" इत्यत्र तस्य ग्रहणं सर्वलोपार्थमिति सिद्धान्तः । नच हलित्यत्र व्यवहितानामनुवृत्तौ "अइउण्" इत्यादीनां चानुवृत्तौ बीजाभाव इति वाच्यम् । "नाज्झलौ" इत्यादिपर्यालोचनया चकारान्तानामननुवृत्तिसिद्धेः । अल्संज्ञामपेक्ष्या-

ऽन्यूनानतिरिक्तविषयकत्वापत्तेश्च। तादृशसंज्ञाद्वयस्य वैयर्थ्यात्।
हलन्त्यसूत्रावृत्तौ हि हलिति पदस्य तत्पदाभिन्ने सूत्रे लक्षणा तत्पदमात्रानुकरणेन लाभेऽपि तदभिन्नसूत्रत्वरूपेण बोधाभावात्। नच प्रथमोपस्थितत्वादस्यैव ग्रहणम्। "हलन्त्यम्" इति सूत्रोपस्थितिदशायां प्रथममेतदुपस्थितौ नियामकाभावात्। "हलोऽनन्तराः संयोगः" "नाज्झलौ" "रलो व्युपधाद्धलादेः संश्च" इत्येतेषामपि हलपदानां सत्त्वात्। हलपदघटितसूत्रत्वेन लक्षणायाम् उक्तविसर्गादीनामेवोक्तसंज्ञापत्तेः। अइउणित्यत आरभ्यैव प्राथम्यं विवक्षिणीयमिति चेत्। तथाऽपि तद्विषयकज्ञानकल्पनावश्यकत्वे शषसरित्यन्तसमुदायस्योद्देश्यत्वकल्पनेऽपि गौरवाभावात्। एवं "हल्" इति सूत्रे सूत्रान्तर्गतं सत् यदन्त्यमिति व्याख्याने हकाराकारावन्यत्र वर्त्तिनौ दुर्वारौ। अतस्तस्मिन्नेव सूत्रे ऽन्त्यत्वं विवक्षणीयम्। हल्सूत्रान्तर्गतत्वे सति हकारोच्चारणाव्यवहितोत्तरोच्चारणविषयत्वमुद्देश्यतावच्छेदकम् इति प्रतिपत्तिगौरवम् सप्तमीति योगविभागकल्पनं च। नच तस्यान्यत्र क्लृप्तत्वम्। एतद्विषयकतात्पर्यस्य कल्प्यत्वानपायात्।

एतेन सुप्सुपेत्यपि व्याख्यातमित्याहुः।

यत्तु वदन्ति—एकदेशावृत्तेर्विवक्षायां हरन्त्यमित्येव सूत्रितं स्यात्, भवदुक्तार्थस्य तावतापि लाभात्। पूर्वस्यापि समीपत्वानपायात्। हल्पदस्थाने सर्वत्र हरित्यस्यैव वाच्यत्वात् इति।

तन्न।

लाघवाभावादापत्त्यसिद्धेः। अन्यथा सूत्रावृत्तिविवक्षायां हलादिरित्येव ब्रूयादित्यस्यापि दुर्वारत्वात्। हरप्रत्याहारस्य तावतैव सिद्धेः।

नचैवमजादिसंज्ञार्थं "हलन्त्यम्" इति सूत्रान्तरकल्पने गौर-

वमिति शङ्क्यम् ।

उत्तरसूत्रान्नेत्यनुवर्त्य आदिभिन्नं हल् इत्संज्ञं स्यादित्यर्थोपपत्तेः। नचैवं गौरवप्रसङ्गः। "आदिर्ञिटुडव." इत्यत्रादिग्रहणत्यागाल्लाघवस्यास्त्वात् । तत्र नञ्पदाननुवृत्तेश्चोभयसंमतत्वात् । नच मध्यमानामपि हलामित्संज्ञापत्तिः । तत्तदुपाध्यवच्छिन्ने यदन्त्यं तदपेक्षस्यादित्वस्य ग्रहणे तदवच्छिन्नप्रतियोगिताकभेदस्य मध्यमे ऽप्यसत्त्वात् । द्वन्द्वस्य ततो लाभानुपपत्तेश्च । "रोरि" इतिलोपे "ढ्लोपे" इति दीर्घेच "हारन्त्यम्" इत्यस्यापत्तौ गौरवापत्तेः। न संयोगान्तलोपेन निर्वाहः। परत्वाद् "रोरि" इत्यस्य दुर्वारत्वात्। नच "पूर्वत्रासिद्धीये नास्ति विप्रतिषेधः" इति वाच्यम् । एवमप्यन्तरङ्गतया "रोरि" इत्यस्य बलवत्त्वात् ।

एवं "रात्सस्य" इति नियमादपि संयोगान्तलोपो दुर्लभः।

यत्तु नियमसूत्राणां निषेधरूपेण प्रवृत्तिपक्षे रात्परस्य सकारभिन्नस्य संयोगान्तस्य लोपो न स्यादिति तद्वाक्यार्थः । तत्र रेफस्य निमित्तत्वश्रवणात्सकारातिरिक्तवर्णो रेफातिरिक्त एव ग्राह्यः माठरादिन्यायादिति ।

तन्न । तत्पक्षस्य गौरवग्रस्तत्वादनभ्यर्हितत्वात्। अजर्घा इत्यादेरसिद्धेश्च। कुर्दधातोरुपधादीर्घानङ्गीकारपक्षे ऽपि यङ्लुकि लङि सिपि अचोकूरिति दीर्घस्य माधवेनोक्तत्वात् । "दश्च" इति रुत्वम्। त्वद्रीत्या संयोगान्तलोपस्यैव प्रसक्त्या "रोरि" इतिलोपाप्रवृत्त्या तद्विरोधात् ।

केचितु "हलन्त्यम्" इत्यत्र मकारोत्तरमेव लकारप्रश्लेषो व्याख्येय इत्याहुः ।

अन्येतु "उपदेशे इदन्त्यम्, अच्, अनुनासिक एव" सूत्रणीयम्। तृतीयसूत्रं नियमार्थम्–अचेद् इद्भवति तर्ह्यनुनासिक एवेति

तेन भूइत्यादौ नापत्तिः। नच विपरीतनियमापत्तिः। "मिदचोऽन्त्यात्" इत्यादिलिङ्गात्। नच नियमस्य अव्यवहितसूत्रप्राप्तसंज्ञाव्यावर्त्तनेन चरितार्थत्वात् भूइत्यादौ इत्संज्ञाया दुर्वारत्वमिति वाच्यम्। वाक्यार्थत्रयकल्पने, नियमवाक्ये निषेधत्वस्य कल्पने, विपरीतनियमादिवारणार्थं ज्ञापकान्तरकल्पनेच प्रतिपत्तिगौरवान्नेदं युक्तमित्यपरे।

योगविभागसामर्थ्यात्सूत्रद्वयप्राप्तसञ्ज्ञाव्यावृत्तेः अजनुनासिक इत्येकयोगे ऽनन्त्यस्यानुनासिकस्याच इत्सञ्ज्ञाविधानेऽन्त्यस्यानुनासिकस्यापि पूर्वसूत्रेण संज्ञेति फलितार्थस्य तुल्यत्वात्। अन्त्यांशे नियमो ऽनन्त्यांशे विधिरिति वैरूप्यस्य दुर्वचत्वात्। क्वचिदगत्या तत्सहनेऽपि तद्दोषदुष्टन्यासस्य कल्पयितुमयुक्तत्वात्। तत्सहने तूक्तरीत्या योगद्वयकल्पने ऽपि क्षत्यभावादित्याहुः।

अन्ये तु "अन्त्यम्" इत्येवावर्त्तनीयं ततो लस्येत्संज्ञायां हलन्त्यमित्येतद्वाक्यार्थबोधः। हलन्त्यमिति नियमार्थं हल् चेद्भवति तर्ह्यन्त्यमेवेति भ्वादौ न दोष इत्याहुः।

वस्तुतस्तु ऌकारनिर्देशवादिनो भाष्यकृतो ऽयंभावः—"अच्" इति योगं विभज्य "भूवादयः" इत्यतो "वादयः" इत्यनुवर्त्तनीयम्। अभिविध्यर्थकेनाङा औकारस्याव्ययीभावे नपुंसकह्रस्वत्वे च कृते उइति रूपम्। अकार आदौ येषां ते आदयः, उकाराभिन्ना आदय इति कर्मधारयः। यणादेशः। औकारपर्यन्ता अकारप्रभृतयः अच्संज्ञा इति वाक्यार्थः। ततः पूर्वोक्तरीत्या हल्पदार्थप्रसिद्धौ हलन्त्यमित्यस्य प्रवृत्तिः ततो ऽणादिसंज्ञासिद्धिरिति न काऽप्यनुपपत्तिः।

एतेन "सनाद्यन्ता धातवः" इत्येतदुत्तरं "भूवादयश्च" इति

सूत्रणीयं लाघवादिति तृतीये वक्ष्यमाणं केषां चित्कल्पनमप्यपास्तम् ।

अत्र पाठस्योक्तानुवृत्त्यर्थत्वात् ।

एतेनैव "हलन्त्यम्" इत्यस्य प्रवृत्त्युत्तरम् "उपदेशे ऽजनुनासिकः" इति सूत्रलेखनमपि निरस्तम् । उक्तरीत्यैवाच्संज्ञासिद्धेः ।

यद्वा हल्संज्ञाया एव "आदिरन्त्येन" इत्येतत्प्रवृत्तिव्यतिरेकेण सिद्धौ यत्नान्तरं कार्यम् । हल् इति विभज्य अनु इत्यनुवर्त्तनीयम् । आङा सह अकारस्याव्ययीभावे अ इति रूपम् औकारस्य तूक्तरीत्या उ इति । ततो द्वयोर्द्वन्द्वः—अं च उ चेति । गुणे कृते नपुंसकह्रस्वत्वे च उ इत्येव रूपम् । ततो नञ्समासे अनु इति सिद्धम् । अकारादारभ्य औकारपर्यन्ताक्षरभिन्नम् अक्षरं समाहारमित्यर्थः । नञिवयुक्तन्यायाद्भेदप्रतियोगितानवच्छेदकतत्प्रतियोगिवृत्त्यक्षरत्ववतोऽक्षरस्य भेदानुयोगित्वलाभः ।

यद्वा पूर्वोक्तरीत्याच्संज्ञा प्रसाध्या । "नाज्झलौ" इति सूत्रं तु प्रयत्नभेदेन भाष्यकृता प्रत्याख्यातं सत् हल्संज्ञाविधानार्थतया व्याख्येयम् । "सरूपाणामेकशेषः" इत्यत्रैतादृशरीतेः कैयटकौस्तुभादौ प्रसिद्धत्वात् । "नाज्झलावीदूदेद् द्विवचनं प्रगृह्यम्" इति संहितापाठे नाज्झलाप् इति च्छेदः । नाच् अज्भिन्नं हल्संज्ञामाप्नोति हलाप् हल्संज्ञमिति यावत् । यथाश्रुतच्छेदपक्षे चरितार्थत्वान्नात्राधिक्यशङ्का । समानाधिकरणनिर्देशापेक्षया प्रतिपत्तिगौरवाभावात् ।

यद्वा नाज्झला ईदूदेदिति संहितापाठः । हला हल्शब्देन सह स्यात् । साहित्यं च वाच्यत्वसम्बन्धरूपम् । अविच्छिन्नादिसम्प्रदायमूलकव्याख्यातृवचनादेव शिष्याणां हलादिपदार्थ-

बोधः । तस्य प्रामाण्यं तत्करीत्या शास्त्रैकमूलकत्वेन अवस्थाप्यते इति तत्त्वम् ।

## न विभक्तौ तुस्माः ४।

विभक्तिस्थास्तवर्गसकारमकारा इतो न । रामान्, पचेरन् । ब्राह्मणाः, पचतः । रामम् । अद्राक्षम् । विभक्तौ किम् । अचो यत् । ऊर्णाया युस् । रुधादिभ्यःश्नम् । नच किमोऽत् इत्यादावपि निषेधापत्तिः । "प्राग्दिशो विभक्तिः" इति संज्ञायाम् एतदप्रवृत्तेः । अत्र च ज्ञापकम्–"इदमस्थमुः" इति मकारस्य इत्संज्ञापरित्राणार्थमुकारकरणम् । नचैवं तदानीमित्यत्र दानीमो मित्त्वापत्तिः । तस्य यान्तत्वात् । संयोगान्तलोपस्य इत्संज्ञा प्रत्यसिद्धतया मान्तत्वाभावात् ।

यद्वा निषेधानित्यत्वमात्रं ज्ञाप्यम् । औत्, इटोऽत् इत्यादौ तकार उच्चारणार्थः । अन्यथा तित्स्वरापत्तेः । उरौ वा यो, भक्षीय तव राधस इत्यादौ प्रत्ययस्वरेणान्तोदात्ततादर्शनाच्च । लविषीयेत्यत्र भाष्ये एवान्तोदात्तत्वोक्तेश्च ।

## आदिर्ञिटुडवः ५।

उपदेशे आदिभूता एते इतः स्युः । आदिरिति सौत्रमेकवचनम् । ञि इन्धी इद्धः । "ञीतः" इति वर्त्तमाने क्तः । टुवेपृ "वेपथुः । "ट्वितो ऽथुच्" । डुवप् उप्त्रिमम् । "ड्वित" इति क्त्रिः । उपदेशे किम् । ञिकारीयति । डुङ् ध्वनौ । ऋदोरप् । ङ्वं कर्तुमिच्छति ञिङ्वयिषति । तत्करोति ण्यन्तात्सन् इत्यपि प्रत्युदाहार्यम् । आदिः किम् । पटूयति । पृथ्वादिषु पटुशब्दो-

पदेशसत्त्वात् । अत्रेत्संज्ञायाम् अवयवे अचरितार्थं लिङ्गं समुदायस्य विशेषकमित्यर्थश्च स्यात् ।

# षः प्रत्ययस्य ६।

प्रत्ययस्यादिः ष इत्सञ्ज्ञः । नर्तकी । शिल्पिनि ष्वुन् । षित्त्वात् ङीष् । प्रत्ययस्य किम् । षोडश । षष उत्वम् इत्यत्रोपदेशः । आदिः किम् । अविषः महिषः । अविमाविभ्यां टिषच् ।

ननु फलाभावादत्र नेत्संज्ञा । ईकारप्रत्ययस्य टित्त्वादेव सिद्धेः । नच ङीपि अनुदात्तत्वं ङीषि तूदात्तत्वमिति पक्षे ङीषर्थं षित्त्वं स्यादिति वाच्यम् । चित्परस्य ङीपो ऽपि उदात्तनिवृत्तिस्वरेणोदात्तत्वात् इति चेन्न । विनिगमकाभावेन पक्षे टकारस्यापि श्रवणप्रसङ्गात् ।

# चुटू ७।

प्रत्ययाद्यौ चुटू इतौ स्तः । वर्गद्वये द्वितीयचतुर्थानां छझठढानाम् ईय्-अन्त्-इक्-एय् इत्यादेशा वक्ष्यन्ते । गोत्रे कुञ्जादिभ्यः च्फञ् । कौञ्जायन्यः । जम् । ब्राह्मणाः । शण्डिकादिभ्यो ञ्यः । शण्डिकोऽभिजनो ऽस्य शाण्डिक्यः । चरेष्टः । कुरुचरी । जनेर्डः उपसरजः । प्रज्ञादिभ्यो णः । प्राज्ञः ।

इदं चानित्यम्, चुटुषाः प्रत्ययस्येति कर्तव्ये पृथग्योगसामर्थ्यात् । तेन केशचुञ्चुरित्यादौ चस्य नेत्संज्ञा । तथा चान्तोदात्तापत्तिः । पित्करणं तु पर्यायार्थं स्यात् । "नते नासिकायाः" इति टीटच् । अवटीटः ।

यद्वा । एतेषु "लोपो व्योः" इति यकारो लुप्तनिर्दिष्ट इति

भाष्यम् । भाष्यकारवचनाद्राजदन्तादेराकृतिगणत्वाद्वा पूर्वकालस्य परनिपातः ।

## लशक्वतद्धिते ८।

तद्धितभिन्ने प्रत्यये आदिभूता लशकवर्गा इतः स्युः । भवनम् । भवति । भूतः । प्रियंवदः । जिष्णुः । भङ्गुरः । हरये । ल्युट्–शप्–क्त–खश्–ग्स्नु–घुरच्–ङे इत्येतत्सम्बन्धिनां लादीनां यथाक्रममुक्तसंज्ञा । अतद्धिते किम् । चण्डालः । "प्राणिस्थादातः"इति लच् । लोमशः । "लोमादि–"इति शः । कर्णिका । "कर्णललाटाद्" इति कन् । अत्र "किति च" इति वृद्धिः स्यात् ।

"इर उपसङ्ख्यानम्"। "इरितो वा"इत्यत्र इर् इत् यस्येति समुदायानुकरणम् । अज्झल्समुदायत्वादप्राप्तावारम्भः। समुदायस्य संज्ञायामवयवाः पारतन्त्र्यादित्सञ्ज्ञां न लभन्ते इति इदित्त्वाभावान्न नुम् । नचैवं स्वरितेत्त्वस्याप्यनापत्तिः । सामर्थ्यादवयवगतस्य स्वरितस्य समुदाये आरोपात् ।

यद्वा रेफस्य "हलन्त्यम्"इति इकारस्य "उपदेशेऽजनुनासिकः"इतीत्सञ्ज्ञा । इराविती यस्येत्यवयवयोरेव इत्सञ्ज्ञकत्वेन व्याख्यानात्। नन्वेवं नुमापत्तिः। नच कुम्भीधान्यन्यायेन इकारमात्रं यत्रेत्सञ्ज्ञं तस्यैव नुमिति वाच्यम्। नन्दतीत्यादावव्याप्तेः। टुकारस्यापि तत्रेत्सञ्ज्ञत्वात् । मैवम् । तेषाम् ऋकारान्तत्वाश्रयणात् । "ऋत इद्धातोः" इति इत्त्वे रपरत्वे च कृते भिदिर् इत्यादिनिर्देशः । अनङ्गस्यापि निपातनादित्त्वम् । भिद् ऋ इत्यत्र पूर्वम् ऋकारस्येत्सञ्ज्ञा तत इत्त्वरपरत्वे । "इरितो वा" इत्यत्रापि ऋ इत् यस्यायम् इरित् निपातनादित्त्वरपरत्वे ।

यद्वा स्कन्दिर्प्रभृतीनां नकारपाठस्य अन्नेदितामेव नुमित्यत्र ज्ञापकत्वात् । नच नलोपाभावार्थो नकारोपदेशः । इदित्त्वादेव तदप्रसङ्गात् ।

अथवा "न दृशः" इति क्सप्रत्ययप्रतिषेधो ज्ञापकः । नुमि हि सति इगुपधत्वाभावादेव क्सो न स्यात् ।

यद्वा "गोः पादान्ते" इतिसूत्रादन्तग्रहणमनुवर्त्त्य अन्ते इदितामेव नुम् इति व्याख्येयम् । तेन चक्षिङो न नुम् ।

# तस्य लोपः ९।

तस्य इतो लोपः स्यात् । तस्य ग्रहणं सर्वलोपार्थम् । अन्यथा अभावरूपस्य लोपस्य भावापेक्षत्वात्प्रकरणादित्सञ्ज्ञस्य लाभोपपत्तेः । तेन ञिटुडूनामन्त्यलोपो न । नच नानर्थकेऽलोन्त्यविधिरित्येव तत्सिद्धिः । अलोन्त्यात्पूर्व इत्यत्र तत्प्रत्याख्यानात् ।

# यथासंख्यमनुदेशः समानाम् १०।

समसङ्ख्यानां सम्बन्धो यथाक्रमं स्यात् । स चोद्देश्यविधेयानां यथा-"नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः"। नन्दनः। ग्राही। पचः। उद्देश्यानामेव यथा-"समूलाकृतजीवेषु हन्कृञ्ग्रहः"। अत्र विधेयस्य णमुल एकत्वेऽपि अनुवाद्ययोः धातूपपदयोरेव यथासङ्ख्यम्। "परस्मैपदानां णलतु-" इत्यादौ परस्मैपदशब्देन सर्वेषां युगपत्प्रत्यासत्तेर्न पाठक्रमेण व्यवस्था । लोके अजाविधनौ देवदत्तयज्ञदत्ताविति समासनिर्देशे क्रमनियमाभावः । द्वन्द्वे-

ऽनेकावयवात्मकसमुदाय एवैकशब्दतः प्रतिपादनादित्यारम्भः।

ननु "विदिभिदिच्छिदेः कुरच्" इत्यादौ तच्छीलाद्यर्थत्रयेण यथासङ्ख्यं स्यात्। एवं "ल्यप्त्यात्" "ङसिङसोः" इत्यादावपीति चेत्।

अत्र भाष्यम्—"स्वरितेन" इत्यपकृष्यते तेन स्वरितत्वाभावान्न यथासङ्ख्यम्। प्रतिज्ञास्वरिताः पाणिनीयाः। अत एव "कर्तृकर्मणोश्च भूकृञोः" इत्यत्र न यथासङ्ख्यम्। तेन भवतेरकर्मकत्वात्कर्तर्येवोपपदे खल्। करोतेस्तु कर्मण्यपि।

केचित्तु प्राप्त्यर्थस्य भवतेरुपपदद्वये ऽपि स इत्याहुः। "नाडीमुष्ट्योश्च" इत्यत्र तु भवत्येव।

स्यादेतत्। "इको यणचि" इत्यत्र यथासङ्ख्यं न स्यात्। इकारोकार–ऋकाराणां प्रत्येकमष्टादश भेदाः ऌकारस्य तु द्वादशेति इकां षट्षष्टिसङ्ख्यत्वात्। यणां च सप्तत्वात्। भाव्यमानत्वे ऽपि गुणानामभेदकतया सानुनासिक्यानामपि यवलानां ग्रहणात्। नचात्रान्तरतमपरिभाषयैव निर्वाहः। स्थानेऽन्तरतमसूत्रे "किमुदाहरणम्। इको यणचि दध्यत्र। सङ्ख्यातानुदेशेनाप्येतत्सिद्धम्" इतिभाष्यविरोधात्।

अत्राहुः—इक्शब्दबोध्या या इत्वादिजातयस्तदवच्छिन्नानां यण्शब्दबोध्ययत्वादिजातिचतुष्टयावच्छिन्ना भवन्तीति सूत्रार्थः। तथाच निरूढलक्षणाऽपि नाङ्गीकार्येति लाघवम्। नच निरनुनासिकानामनुनासिकयकारादिप्रसङ्गवारणायान्तरतमपरिभाषाश्रयणे आवश्यके कृतमेतत्प्रवृत्त्येति वाच्यम्। तदंशे यथासङ्ख्यपरिभाषायाः पारविरहात्। अन्तरतमपरिभाषाप्रवृत्तावपि स्थान्यंशे परत्वाद्यथासङ्ख्यस्यैव प्रवृत्तेः। अत एव प्रत्याहारपाठे शब्दतः साम्यमस्तीति तत्र कैयटः।

एतेन ऋकारऌकाराभ्यां प्रत्येकं तस्या एव त्रिंशत उपस्थितौ सत्यामृकारस्य ऌकार ऌकारस्य च रेफ आदेशः परं स्यादित्यपि निरस्तम् ।

अत एव हयवरट्सूत्रे हरयवडितिन्यासे परत्वाद्यथासङ्ख्यमेव प्रवर्त्तेत इति शब्दकौस्तुभे ऽप्युक्तम् ।

# स्वरितेनाधिकारः ११।

इत्थम्भूतलक्षणे तृतीया । अधिकारो विनियोगः । स्वरितत्वं चाधिकारज्ञापनार्थम् न तु प्रयोगसमवेतम् । स्वरितत्वयुक्तं शब्दस्वरूपमधिकृतं बोध्यम् । यथा "प्रत्ययः" इत्यादि उत्तरत्रोपतिष्ठते । क्वचित्पूर्वत्रापि । तदुक्तम्—'अतिङित्युभयोः शेषः' इति । अवधिविशेषे तु व्याख्यानं प्रमाणम् । आतृतीयाध्यायान्तं धात्वधिकारो न तु लादेशेभ्यः प्रागेव । सप्तमाध्यायसमाप्तिपर्यन्तमङ्गाधिकारो न तु प्रागभ्यासविकारेभ्य एवेत्यादिदर्शनात् ।

यद्वा स्वरिते सति नाधिकार इत्यर्थः । तेन पूर्वाधिकारनिवृत्तिः । तथा च "विंशतिकात्खः" इत्यत्र स्वरितत्वदर्शनाद् "द्वित्रिपूर्वाद्" इत्यस्य निवृत्तिरनुमीयते ।

नचैकः स्वरितो ऽधिकारार्थ एकस्त्वधिकारनिवृत्त्यर्थ इति सन्देहनिर्णयानुपपत्तिः । व्याख्यानात्तदुपपत्तेः ।

नचैवं व्याख्यानमेवानुवृत्त्यननुवृत्तौ नियामकमस्तु किं प्रकृतसूत्रेणेति वाच्यम् । अर्थान्तरसंग्रहार्थत्वात् ।

तथाहि—स्वरितेनाधिकाररूपोऽर्थो ग्राह्यः । तेन "गोस्त्रियोः" इत्यत्र स्त्रीशब्दस्य स्वरितत्वप्रतिज्ञानात् "स्त्रियाम्"

इत्यधिकारे विहितः प्रत्ययो गृह्यते तेन "गोटाङ्ग्रहणं कृन्निवृत्त्यर्थम्" इतिवार्त्तिकं गतार्थम्।

किञ्च अधिकं कार्यमधिकारः। गौरवस्यापि ग्रहणमित्यर्थः। तेन यत्र गौणमुख्यन्यायो नेष्यते तत्र स्वरितः पाठ्यः यथा ऽपादानाधिकरणादौ। तेन "भीत्रार्थानाम्"इत्यादेर्बुद्धिकल्पितमपायमाश्रित्य प्रत्याख्यानं सङ्गच्छते। "छन्दसि"इत्यस्य प्रमाशब्दत्वेन गौणे आर्षग्रन्थरूपेऽपि छन्दसि प्रवृत्तिः। अत एवार्षत्वात्साधुत्वमिति तत्र तत्रोद्घोषः। गङ्गायां गाव इत्यादौ गङ्गाशब्दस्य नदीवृत्तित्वे ऽपि सामीप्याद्गौणमाधारत्वमिति तत्रापि सप्तमी। यदा तु गङ्गापदस्य तीरे तात्पर्यं तदा प्रकृतावेव लक्षणा विभक्तिर्मुख्यार्थैवेति विशेषः।

अपिच अधिकः कारः कृतिरियं पूर्वोऽपि परं बाधते स्वरितत्वयोगात्। तेन पूर्वविप्रतिषेधानां सङ्ग्रहः। तद्वार्त्तिकानां च तद्विवेकार्थत्वम् तुल्यजातीयस्य च परस्य पूर्वेण बाधो नतु नित्यत्वादियुक्तस्येति नातिप्रसङ्गः।

इति श्रीसिद्धान्तसुधानिधौ प्रथमस्याध्यायस्य
तृतीयपादे प्रथममाह्निकम्।

---

# अनुदात्तङित आत्मनेपदम् १२।

"भूवादयः" इयतो ऽनुवृत्तस्य "धातवः" इत्यस्य पञ्चम्यन्तत्वेन विपरिणामः । सादृश्यमात्रेण परिणामव्यवहारो वस्तुतो योग्यस्य शब्दान्तरस्यैव सन्निधानादिति कैयटः । आत्मनेपदेनैव धातुलकारयोराक्षेपः "इको झल्" इत्यत्र सना धातोरिवेति कौस्तुभः । ङिता धातोर्विशेषणात्तदन्तविधिः । द्वन्द्वान्ते श्रूयमाणस्य इत्पदस्य द्वाभ्यां सम्बन्धः । अनुदात्तांशे तदन्तविधेः फलाभावात् । "उपदेशे" इत्यनुवृत्तम् । तथाच अनुदात्तेत्कादुपदेशे यो ङित्तदन्ताच्च धातोर्लस्य स्थाने आत्मनेपदमेव स्यात् । एधते । स्पर्द्धते । बोभूयते । ऋतीयते । शीङस्तु व्यपदेशिवद्भावात् ङिदन्तत्वम् । विधीयते इत्यादौ त्ववयवे ऽचरितार्थेन ङकारेण क्यङन्तं ङित्, ततो व्यपदेशिवद्भावेन ङिदन्तत्वम् । उपदेशे किम् । चुकुटिषति । "गाङ्कुटादिभ्यः" इति अतिदेशात्सनो ङित्त्वम् । धातोरिति किम् । चङङ्भ्यां मा भूत् । अदुद्रुवत् । अच्युतत् ।

एतेन चिनुतः सुनुत इत्यादि व्याख्यातम् । "सार्वधातुकमपित्" इति ङित्त्वस्यातिदेशिकत्वात् ।

ननूपदेशधातुशब्दयोरनुवृत्तिर्व्यर्था । विकरणेभ्यो नियमो बलीयान् इत्यस्य "वृद्भ्यः स्यसनोः" इत्यत्र ज्ञापयिष्यमाणत्वात् । प्रथममेवात्मनेपदनियमस्य प्रवृत्तेरिति चेत् ।

अत्राहुः—

उपसङ्ख्यास्यमाणेनापि ङिता उपसञ्जातनिमित्तस्यापि परस्मैपदस्य बाधः स्यात् । विकरणव्यवधानेऽपि नियमप्रवृत्तिरित्यस्यापि ज्ञापनसम्भवात्, नियमस्य बलवत्तायाः पाक्षिकत्वाच्च ।

हरदत्तस्तु ङित इत्येव व्याचख्यौ। धात्वनुवृत्तौ प्रयोजनाभावात्। नियमस्य बलवत्त्वादेव चङादावदोषात्।

नच भाविना ङिता बाधः। परस्मैपदस्य परत्वात्।

अत एव प्रसादकृतोक्तं चङ्ङोस्तु परस्मैपदप्रवृत्त्यनन्तरं प्रवृत्तत्वेन ङित्त्वेऽपि तङ् नेति।

केचित्तु यङीयङोर्ङकारस्य गुणवृद्धिनिषेधेन चरितार्थत्वमाशङ्क्य यङः प्रागनुदात्तमकारं प्रश्लिष्य अनुदात्तेत्त्वादेव तङ्। न च यङन्ताद् "अनुदात्तेतश्च हलादेः" इति युच्प्रसङ्गः। "जुचंक्रम्यदन्द्रम्य" इति ज्ञापकात्तदभावात्। ईयङः प्रागिकारमीकारं वाऽनुदात्तं प्रश्लिष्य आद्ये अन्तेदित्त्वाभावान्न नुम्, द्वितीये एकाच् इत्यनुवृत्तेः "श्वीदितो निष्ठायाम्" इति नेण्निषेध इति कल्पयांचक्रुः।

ननु यङ्लुक्यतिव्याप्तिः, प्रत्ययलक्षणेन ङिदन्तत्वात्।

अत्र प्राञ्चः—"बोभूतुतेतिक्ते" इति तिजेर्यङ्लुगन्तादात्मनेपदविधानं ज्ञापकं यङ्लुगन्तात्प्रत्ययलक्षणेनात्मनेपदं नेति। अत एव "चर्करीतं च" इति अदादौ पठितस्य चकारात्परस्मैपदमिति व्याख्यानं ज्ञापकसिद्धार्थस्फुटीकरणार्थम् इत्याहुः।

यद्वा ङित्त्वस्य प्रत्ययाप्रत्ययसाधारणतया प्रत्ययलक्षणेनात्मनेपदं नेति। अत एव न तत्प्रयुक्तात्मनेपदप्रवृत्त्यभावः। अत एव गोङितामित्यादावत्रादयो न। शोभना दृषदो यत्र तत् सुदृषत् इत्यत्र "सोर्मनसी इति स्वरः" "अत्वसन्तस्य" इति दीर्घश्च न भवतीति सिद्धान्तः।

अथ पास्पर्द्धीत्यत्रात्मनेपदं स्यात् स्पर्द्धेरनुदात्तत्वात्। द्विः प्रयोगो द्विर्वचनं षाष्ठम् इति सिद्धान्तात्मकृत्यन्तरत्वाभावात्।

मैवम्। "श्तिपा शपाऽनुबन्धेन" इति निषेधात्। अनुबन्ध-

द्योषतादवस्थ्यमिति चेत् ।

न । लमात्रापेक्षत्वादन्तरङ्गा लादेशाः लकारविशेषापेक्षया बहिरङ्गाः स्यादय इति लादेशानां पूर्वमेव प्रवृत्तेः । लादेशानन्तरमेव स्यादीनां प्रवृत्तिः, अन्यथा तासेः परस्य लसार्वधातुकस्यानुदात्तविधिना विकरणस्वरस्सार्वधातुकस्वरं न बाधते इत्येतज्ज्ञापनानुपपत्तेरिति तृतीये वक्ष्यमाणत्वाच्च । येननाप्राप्तिन्यायेन शबादीन्बाधित्वा, शबादिविधावनुवर्त्तनाद्वा ।

ननु संज्ञया विधानं विहितानां च संज्ञेत्यन्योन्याश्रयः । एकवाक्यतापक्षे पूर्वं लादेशविध्यभावेन विहितानुवादेनात्मनेपदपरस्मैपदसंज्ञयोर्विध्ययोगादिति चेत् ।

मैवम् । परस्मैपदानुक्रमणपरित्यागेन तत्रेतरेतराश्रयाभावात् । नचैवमनुदात्तङिद्भ्यो ऽपि तत्प्रसङ्गः । तेषामात्मनेपदसम्बन्धावगमेन परस्मैपदसम्बन्धस्य बाधनात् । नच "अनुपराभ्यां कृञः" इत्यात्मनेपदनिषेधार्थं तदनुक्रमणस्यावश्यकत्वम् । "स्वरितञितः"इत्यनन्तरं कर्त्र्यनुपराभ्यां कृञो नेतिसूत्रणीयत्वात् । आत्मनेपदेषु च भाविसञ्ज्ञाविज्ञानात् ।

अत्र भाष्यम्–"पुषादिद्युताद्यॢदितः परस्मैपदेषु" "आत्मनेपदेष्वन्यतरस्याम्"इत्यादि ज्ञापयति "विकरणेभ्यो नियमो बलीयान्"इति कृतनियमानामसङ्करेण स्थितानामेव निमित्तत्वोपपत्तेः अतो न दोषः ।

अथ नियमात्प्रागपि सम्भवमात्रेण निमित्तत्वं स्यादिति-चेत्तर्हि "अनुपसर्गाद्विभाषा" इति ज्ञापकम् ।

नन्वेतदपि लिङ्लिडर्थं स्यात्–चक्रमे, चक्राम, क्रम्यात्, क्रंसीष्ट इति चेत् ।

अत्र कैयटादयः–"वृद्भ्यः स्यसनोः"इति स्ये विकल्पविधानं

ज्ञापकम् । अन्यथा पूर्वं विकरणे प्रत्यये कृते तेन व्यवहितत्वान्नियमाप्रवृत्तौ पदद्वयं सिद्धमेवेति किं विकल्पविधिना । तस्मान्नियम एव युक्तः । भाविसंज्ञाविधाने गौरवात् ।

स्यादेतत् । अनुदात्तङित एव आत्मनेपदं भवतीति प्रत्ययनियमो ऽयम्, उतानुदात्तङित आत्मनेपदमेव, भावकर्मणोरात्मनेपदमेवेति प्रकृत्यर्थनियमः[1] । नच पूर्वेण नियमाद् "भावकर्मणोः" इत्यस्य विध्यर्थत्वमेवेति वाच्यम् । समस्तमात्मनेपदप्रकरणम् एकं वाक्यमित्याशयात् अनुदात्तङिद्भ्यो ऽपि परस्मैपदापत्तेः । उक्तनियमेन अनुदात्तङिदन्येभ्य आत्मनेपदस्य निवृत्तावपि अनुदात्तङिद्भ्यः परस्मैपदस्य दुर्वारत्वात् । तदर्थं "शेषात्कर्तरि"इति नियमारम्भे च गौरवम् ।

किञ्च "वा क्यषः" इति परस्मैपदे विकल्पिते आत्मनेपदस्यानुदात्तङित्सु नियतत्वात्त्वत्पक्षे लकारमात्रश्रवणं स्यात् ।

न द्वितीयः । अनुदात्तङिद्भ्यस्तृजादीनामनुत्पत्तिप्रसङ्गात् । भावकर्मणोरात्मनेपदमेवेत्यर्थनियमे ऽप्येवम् ।

अत्र सिद्धान्तः–शेषात्परस्मैपदमेवेति नियमादाद्यपक्षे नातिप्रसङ्गः । नच तत्सूत्रारम्भादेव गौरवम् । प्रामाणिकत्वात् । नच कर्तरीत्युक्तेः कर्तरि परस्मैपदमेवास्तु, भावकर्मणोस्तु जागर्यते अद्यते इत्यादौ परस्मैपदं स्यादिति वाच्यम् । तत्रात्मनेपदमेवेति नियमात् । किञ्चेत्याद्यपि न । लादेशेषु कृतेषु नियमप्रवृत्तेः, आत्मनेपदस्य विकल्पेन विधानात् । शेषवचनेनैव परस्मैपदसिद्धेः ।

अथ कीदृशस्तत्र नियमः कर्तरि परस्मैपदं शेषादेवेति वा

१ अनुदात्त इति प्रकृतिनियमो भावकर्मणोरित्यर्थनियमइति तदनुसन्धायोभयघटितोक्तिः ।

शेषात्कर्त्तर्येवेति वा।

नाद्यः। अशेषात्कर्तरि तद्व्यावृत्तावपि भावकर्मणोः शेषादशेषाच्च तस्य दुर्वारत्वात्।

नान्त्यः। शेषाद्भावकर्मणोस्तद्व्यावृत्तावपि अशेषाद्भावकर्मकर्तृषु तस्य दुर्वारत्वात्।

मैवम्। योगविभागेन नियमद्वयाश्रयणात्—शेषादेव परस्मैपदं कर्तर्येवेतिच। एवं कृत्यर्थनियमोऽप्यदोषः। तृजादीनामनवकाशत्वात्। परस्मैपदमेवेति नियमेन तत्राप्यवकाशायोगात्। तयोरेवेति भावकर्मणोस्तव्यदादिविधेरप्यनवकाशत्वात्। चिणोऽप्यनवकाशत्वात्। वस्तुतो भावकर्मणोः सार्वधातुकार्थत्वात्।

नचैवमपि घञ् न स्यादिति वाच्यम्। अकर्तरीतिविहितस्यापादानादिषु सावकाशत्वेऽपि भावकर्मणोर्विहितस्यानवकाशत्वात्। नाप्यत्रात्मनेपदस्यानियतत्वादत्तीत्यादौ प्रसङ्गः। शेषात्परस्मैपदमेवेति नियमात्। नच तेन कर्तर्येवात्मनेपदव्यावृत्तावपि शेषाद्भावकर्मणोः परस्मैपदं दुर्वारमिति वाच्यम्। तत्रात्मनेपदमेवेति नियमात्। तस्मान्नियमद्वयमपि स्थितम्।

अत्रेदमवधेयम्—प्रकृत्यर्थनियम एव युक्तः। तथाहि—शेषात्कर्तरीत्यपहाय परस्मैपदमित्येव सूत्रणीयम्। यत्र परस्मैपदमात्मनेपदमपि प्राप्तं तत्र परस्मैपदमेव स्यात्। प्रत्ययनियमपक्षे तु "शेषाद्" इति "कर्तरि" इति च वाच्यम्। योगश्च विभजनीय इति गौरवम्। तिबादिवाक्येन सह वाक्यभेदः। परिसंख्याप्रयुक्तदोषत्रयं च नियमद्वयेऽपि समानम्। तदसहने तु लस्य तिबादय इत्यनेन सहैकवाक्यत्वादिदं प्रकरणं विधायकमेव शेषात्कर्तरीतिच कर्तव्यमेव अन्योन्याश्रयपरिहारायच भाविसंज्ञा विज्ञेया।

एवं च विकरणेषु न दोषः । लादेशोत्तरं सार्वधातुकमाश्रित्य विकरणप्रवृत्तेः । न च स्यादिषु दोषः । लमात्रापेक्षतयाऽन्तरङ्गेषु तिबादिषु कृतेषु लकारविशेषापेक्षतया बहिरङ्गाणां स्यादीनां प्रवृत्तेरिति कौस्तुभकृतः ।

## भावकर्मणोः १३।

विहितस्य लस्यात्मनेपदं स्यात् । सुप्यते । क्रियते । एकवाक्यतया विधिर्भिन्नवाक्यतया नियमो वेति पूर्ववत् । सोऽपि द्विधा—प्रत्ययनियमोऽर्थनियमश्चेति । नचान्त्ये को भवता लाभो लब्ध इत्यत्र घञो ऽसिद्धिः । सजातीयस्य परस्मैपदस्यैव व्यावृत्तेः ।

ननु भिद्यते कुशूलः स्वयमेवेत्यत्र कर्मकर्तरि परस्मैपदं प्राप्नोति । "कर्मवत्कर्मणा" इति हि शास्त्रस्य, व्यपदेशस्य वाऽतिदेशः। तथाच तेन तेन शास्त्रेण तत्तत्कार्यं कर्तव्यम् । कर्मण्यात्मनेपदमित्यस्यावकाशः शुद्धं कर्म, कर्तरि परस्मैपदमित्यस्य शुद्धः कर्ता, कर्मकर्त्रर्युभयप्रसङ्गे परत्वात्परस्मैपदमिति ।

मैवम् । प्राधान्यात्कार्यातिदेश एव सः । सर्वातिदेशानां कार्यार्थत्वात् । पक्षान्तरे तु "शेषात्कर्तरि" इति सूत्रे "कर्तरि कर्मव्यतिहारे" इत्यस्मात् "कर्तरि" इत्यनुवर्त्त्य कर्तैव यः कर्ता तत्र परस्मैपदम् । व्यपदेशान्तरस्याविषय इति यावत् । तत्र तु स्वाश्रयं कर्तृत्वमातिदेशिकं तु कर्मत्वमिति न परस्मैपदम् ।

## कर्तरि कर्मव्यतिहारे १४।

विनिमयविषयभूतायां क्रियायां वर्त्तमानाद्धातोः कर्तर्यात्मनेपदं स्यात् । व्यतिलुनीते ।

ननु क्रियाणां साध्यैकस्वभावत्वात्कथं व्यतिहार इति चेत्।

अत्राहुः—योग्यतावशादस्येयं क्रिया साध्या अस्या इदं साधनमिति निर्ज्ञातसाध्यसाधनभावयोर्व्यत्यासः क्रियाव्यतिहारः। यथा संप्रहरन्ते राजान इति। अत्रैकैव क्रिया संचारिणीव संलक्ष्यते इति। कर्तृग्रहणमुत्तरार्थम्।

## न गतिहिंसार्थेभ्यः १५।

पूर्वेण प्राप्तं न स्यात्। व्यतिगच्छन्ति। व्यतिघ्नन्ति।

"प्रतिषेधे हसादीनामुपसंख्यानम्"।

व्यतिहसन्ति। आदिपदं प्रकारार्थम् तेन शब्दार्थानां ग्रहणम्। व्यतिजल्पन्ति।

"हरतेरप्रतिषेधः"।

सम्प्रहरन्ते राजानः। अर्थग्रहणसामर्थ्याच्छब्दान्तरनिरपेक्षा एव ये गतिहिंसयोर्वर्त्तन्ते तेषामेव निषेधः। हरतिस्तूपसर्गयोगादेव हिंसावृत्तिरत इदं लभ्यते इत्याहुः।

ततः संप्रहरिष्यन्तौ दृष्ट्वा कर्णधनञ्जयावित्यत्र कर्मव्यतिहारो न विवक्षित इति कैयटः। 'वहेरनिषेधः' प्रापणार्थत्वात्। आक्षेपेण गतिप्रतीतेः। संविवहन्ते गर्गाः।

## इतरेतरान्योऽन्योपपदाच्च १६।

आत्मने पदं न स्यात्। "परस्परोपपदाच्चेति वक्तव्यम्" इतरेतरस्य व्यतिलुनन्ति। लौकिकव्यवहारे शब्दलाघवस्यानादरादितरेतरादिशब्दा उपसर्गाश्च कर्मव्यतिहारद्योतनाय प्रयुज्यन्ते तद्वदात्मनेपदमपि स्यादिति निषेधारम्भः। सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम् इत्यत्र क्रियाविनिमयस्याविवक्षा।

# नेर्विशः १७।

निपूर्वाद्विश आत्मनेपदं स्यात् । निविशते । नेः किम् । प्रविशति ।

अथ कथं न्यविशत न्यविक्षत इति । नच स्वाङ्गमव्यवधायकमिति वा समाधेयम् । अङ्गभक्तस्याटो विकरणान्तं प्रत्ययावयवत्वे ऽपि धातुं प्रत्यनवयवत्वात् ।

अत्राहुः—लावस्थायामेवाडागमः । "लुङ्लङ्—"इत्यत्र द्विलकारको निर्देशः इति भाष्ये वक्ष्यमाणत्वात् । लकारविशेषापेक्षमडागमं बाधित्वा लमात्रापेक्षत्वादन्तरङ्गेषु तिबादिषु कृतेषु नियमस्य प्रवृत्तेश्च । "विकरणेभ्यो नियमो बलीयान्" इति सिद्धान्तात् । अथ तज्ज्ञापकेन विकरणव्यवधाने ऽपि नियमप्रवृत्तिरिति ज्ञाप्यते तथाऽप्यदोषः । अन्तरङ्गत्वात्तिबादिषु सत्सु शब्दान्तरप्राप्त्या ऽनित्ययोरड्विकरणयोर्मध्ये परत्वादट्प्रवृत्तेः । नच विकरणः शब्दान्तरात्प्राप्तो न तु शब्दान्तरस्येति वाच्यम् । नहि शब्दान्तरस्येति वाचनिकं किन्तु न्यायः । तथा च शब्दान्तरस्य प्राप्नुवत इव शब्दान्तरात्प्राप्नुवतो ऽप्यनित्यत्वम् । यद्व्यक्तिसम्बन्धितया पूर्वं प्राप्नोति तद्व्यक्तिसम्बन्धितया पुनः प्राप्तेस्तुल्यत्वात् । अत एव "उपसर्गपूर्वनियमे ऽड्व्यवाये उपसंख्यानम्" इति वार्त्तिकं "शदेः शितः" इति सूत्रे भगवता प्रत्याख्यातमिति दिगिति केचित् ।

केचित्तु विकरणेभ्यः पूर्वमेव परत्वादडागमे तस्य धातुभक्तत्वान्न व्यवधायकत्वम् । विकरणेभ्यो नियमस्य बलवत्त्वे ऽपि अडागमाद्बलवत्त्वाभावेनाडागमात्पूर्वं "नेर्विशः" इति बहिरङ्गस्य नियमप्रवृत्त्ययोगाच्च । नच विकरणात्पूर्वं नियमो भवतीत्य-

त्रैव तात्पर्यं नत्वडागमादपि पूर्वम्, तथा च परत्वादडागमे कृते तस्य धातुभक्तत्वेनाव्यवधायकत्वान्नियमप्रवृत्तिरित्यभिप्राय इति वाच्यम्। नियमस्य विकरणाद्बलीयस्त्वे ऽपि नित्यस्य विकरणास्याडागमात्परस्य दुर्बलत्वस्यानुक्तत्वेनाडागमात्पूर्वं प्रवृत्तेरनिवारणात्। अडागमाभावस्थले तत्परिभाषायाः सार्थक्याच्च। विकरणव्यवधानेऽपीत्यादिकमप्ययुक्तम्। विकरणस्यानित्यत्वे मानाभावात्। अन्यस्य प्राप्नुवत एवानित्यत्वमिति भाष्यकृता व्यवहारात्। शब्दान्तरस्य प्राप्नुवन्विधिरनित्य इति वचनमूलन्यायस्याप्रसिद्धेः। भाष्यकृता अटो नित्यत्वोक्तावपि विकरणानामनित्यताया अनुक्तत्वात्। कृताकृतप्रसङ्गित्वमात्रेण न्यायान्नित्यत्वमाश्रित्य भुवो वुको नित्यत्वादिन्धेः छन्दोविषयत्वात्ताभ्या लिटः किद्वचनानर्थक्यमिति "इन्धिभवतिभ्याञ्च" इतिसूत्रं प्रत्याचक्षाणेन भगवता तत्सूत्रावयवभवतिग्रहणज्ञापितस्यान्यस्य प्राप्नुवन्विधिरनित्य इति वचनमाश्रित्य न्याय्यमड्विकरणयोर्नित्यत्वमाश्रित्यैव परत्वादटः पूर्वं प्रवृत्तिमभ्युपेत्य वा नेरित्यस्य षष्ठ्यन्तत्वमाश्रित्य तद्वार्त्तिकस्य प्रत्याख्यातत्वात्। एतेन वृत्तिसीरदेवग्रन्थावप्यपास्तावित्याहुः ।

## परिव्यवेभ्यः क्रियः १८।

एभ्यः क्रीणातेरात्मनेपदं स्यात्। क्रिय इत्यत्र प्रकृतिवदनुकरणमिति धातुत्वादियङ्।अकर्त्रभिप्रायार्थो ऽयमारम्भः।परिक्रीणीते। विक्रीणीते। अवक्रीणीते। परस्परसाहचर्यात्पर्यादय एव उपसर्गा गृह्यन्ते। नेह वे क्रीणासीति। एकदेशविकृतस्यानन्यत्वात्प्राप्तिः। नच विभक्तिविशिष्टस्य विरित्यस्यायं विकारो न तु विशब्द-

*येति कैयटेन वक्ष्यमाणत्वान्न दोष इति वाच्यम् । विभक्तेर्लोपा-त्प्रकृतिभागस्यैव विकारात् । पक्षिवाचिनो विशब्दस्य सम्भवे तु साहचर्यादुपसर्गग्रहणमिति कैयटेन वक्ष्यमाणत्वाच्चेत्याहुः ।

वस्तुतः परत्वान्नित्यत्वाच्च पूर्वं गुणे कृते पश्चात्सुलोपः । अन्यथा तत्र एङ्ग्रहणवैयर्थ्यात् तदा च विस् इत्यस्य वेस् इति विकार इति विशब्दस्य न वे इति विकार इति बोध्यम् ।

# विपराभ्यां जेः १९ ।

विजयते। पराजयते । जयाभिभूत्यर्थयोर्द्वयोरपीह ग्रहणम् । बहवो वयः पक्षिणो यत्र तत् बहुवि जयति वनम् इत्यत्र तु न भवति । जहत्स्वार्थायां वृत्तावनर्थकत्वात् । अजहत्स्वार्थायामपि तदर्थस्योपसर्जनत्वात् । सम्बोधने तु प्रागुक्तम् ।

नच वी जयत इत्यत्रैकादेशस्य पूर्वं प्रत्यन्तवद्भावाद्विशब्द-परो जिरस्तीति वाच्यम् । पूर्वस्य कार्ये कर्तव्ये एवान्तवद्भावात्। परा जयति सेना । उत्कृष्टेत्यर्थः । प्रकृतिवदित्यतिदेशस्यानि-त्यत्वात् जेरित्यत्र इयङभावः ।

# आङो दोऽनास्यविहरणे २०।

आङ्पूर्वान्मुखविकासनभिन्नार्थवृत्तेर्दाञ आत्मनेपदं स्यात् । आस्यवृत्तित्वाभावादन्येषां दारूपाणामग्रहणमिति कैयटः । विद्यामादत्ते । आस्यग्रहणं विशेषोपलक्षणार्थम् । मुखं व्याददाति । विपादिकां व्याददाति । नदीकूलं व्याददाति । पराङ्गकर्मकादना-स्येति निषेधो नेष्यते "स्वाङ्गकर्मकाच्च" इति वार्त्तिकात् ।स्वमङ्गमिह स्वाङ्गं न त्वद्रवं मूर्त्तिमदिति परिभाषितम् । व्याददते पिपी-लिकाः पतङ्गस्य मुखम् । आङिति ङितो ग्रहणान्नेह भिक्षामा-

ददाति । स्मृतावयमाकार इत्याहुः ।

अकर्त्रभिप्रायार्थो ऽयमारम्भः । कर्त्रभिप्राये तु आस्यकर्मकादपि भवत्येव । व्यादत्ते विहगपतिर्मुखं स्वकीयम् । मुखं व्यादाय स्वपितीत्यस्य सुप्त्वा मुखं व्यादत्ते इति व्यत्ययेनार्थ- इति वाचस्पतिमिश्राः ।

## क्रीडोऽनुसंपरिभ्यश्च २२।

क्रीड़ृ विहारे । चकारादाङ् । अनुक्रीडते इत्यादि । उपसर्गेण समा साहचर्यात् अनोः कर्मप्रवचनीयान्न । माणवकमनु क्रीडति । तेन सहेत्यर्थः । "तृतीयार्थे" इत्यनुः कर्मप्रवचनीयः ।

"समोऽकूजने" ।

मयाऽस्य संक्रीडति चक्रिचक्रे इति श्रीहर्षः । क्रीडते नागराज इति तु प्रमादः ।

"आगमेः क्षमायाम्" ।

आगमयस्व तावत् । सहस्व कंचित्कालं मा त्वरिष्ठा इत्यर्थः । यावदागमयते ऽथ नरेन्द्रानिति श्रीहर्षः ।

"शिक्षेर्जिज्ञासायाम्" ।

विद्यासु शिक्षते । इह शकिः सन्नन्तो गृह्यते इति विध्यर्थमिदम् । क्रियाविषयश्च शकिः प्रयुज्यते । भोक्तुं शक्नोतीत्यादिदर्शनात् । इह जिज्ञासाविषयः शकिर्गृह्यते । विद्यां जिज्ञासितुं घटते इत्यर्थः । नच तत्प्रयोगापत्तिः । आत्मनेपदेनैव जिज्ञासाप्रतीतेरिति केचित् ।

अन्ये तु "शिक्ष विद्योपादाने" इत्यस्य नियमार्थं ग्रहणमित्याहुः । नचाद्ये ज्ञानविशिष्टशक्तेरिच्छाविषयतया ज्ञानविषयकेच्छार्थकं जिज्ञासायामित्यसङ्गतमिति वा-

ध्यम् । ज्ञानस्यापि विशेषणतया विषयत्वानपायात् । इच्छा सन्वाच्या शक्तिर्धात्वर्थः, इच्छाया ज्ञानाविषयकत्व त्वात्मनेपदेन द्योत्यते इति ।

"किरतेर्हर्षजीविकाकुलायकरणेषु उपसंख्यानम्" ।

किरतिर्विक्षेपार्थः, हर्षादयस्तु विषयत्वेनोपात्ताः । एतेष्वेवार्थेषु "अपाच्चतुष्पाद्" इति सुटो विधानात् । अपस्किरते वृषो हृषः, कुक्कुटो भक्षार्थी, श्वा आश्रयार्थी वा । हर्षादिषु किम् । अपकिरति कुसुमम् । यद्यप्यात्मनेपदविधौ चतुष्पाच्छकुनिकर्तृकत्वं निमित्ततया नोपात्तं तथाऽपि सुटा सह समानविषयोऽयं तङ् । तेन गजोऽपकिरतीत्येव भवतीत्याहुः ।

"हरतेर्गतताच्छील्ये" ।

गतं प्रकारः । पैतृकमश्वा अनुहरन्ते मातृकं गावः । पित्रादेर्गतं प्रकारं सततं शीलयन्तीत्यर्थः । मातुरनुहरतीति तद्धितार्थसूत्रगतभाष्ये सादृश्यमात्रं विवक्षितमिति कैयटः ।

"आङि नुप्रच्छयोरुपसंख्यानम्" ।

आनुते । उत्कण्ठापूर्वकं शब्दं करोतीत्यर्थः । णु स्तुतौ । अदादिः । आपृच्छते गुरुम् ।

"आशिषि नाथः" ।

नियमार्थमेतत् । नचानुदात्तेत्त्ववैयर्थ्यम् । नाथन इति युजर्थत्वात् । सर्पिषो नाथते । सर्पिर्मे भूयादित्याशास्ते इत्यर्थः । "आशिषि नाथः" इति कर्मणि षष्ठी । दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथा इत्यत्र नाधसे इतीत्याहुः ।

"शप उपालम्भने" ।

शप आक्रोशे—स्वरितेत् । अकर्तृगफलार्थ आरम्भः । देवदत्ताय शपते । त्वत्पादौ स्पृशामि नैतन्मया कृतमित्येवं शपथं करो-

तीत्यर्थः । "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" इति सम्प्रदान-संज्ञा । यस्मै आख्यायते स ज्ञीप्स्यमान इत्येके । य आख्यायते स इत्यन्ये । मख्यः शपामि यदि किंचिदपि स्मरामि इत्यत्र तु स्वाभिप्रायाविष्करणमात्रविवक्षा ।

# समवप्रविभ्यः स्थः २२।

सन्तिष्ठते इत्यादि । "आङः प्रतिज्ञायामुपसंख्यानम्" अस्ति सकारमातिष्ठते । आगमौ गुणवृद्धी आतिष्ठते । अस्यार्थः—आपिशलिः "अस भुवि" इत्यत्र सकारमात्रं पठति । अस्ति आसीदित्यादावडाटावागमौ विधत्ते ।

# प्रकाशनस्थेयाख्ययोश्च २३।

गोपी कृष्णाय तिष्ठते । स्वाभिप्रायं प्रकाशयति । स्थेयो विवादपदनिर्णेता । बाहुलकादधिकरणे अचो यत् । तत्त्वाय तिष्ठ स्वमुखे स्व एवेति श्रीहर्षः । तत्त्वनिर्णयार्थमाश्रयेत्यर्थः ।

# उदो ऽनूर्ध्वकर्मणि २४

ऊर्ध्वसंयोगफलकत्वाभाववत्क्रियावृत्तेरुत्पूर्वात्तिष्ठतेस्तत्प्राग्वत् । "उद ईहायाम्" इति वार्तिकं कर्मपदप्रयोजनकथनार्थम् । कायपरिस्पन्दात्मिकाया चेष्टायामिति यावत् । अन्यथा अनूर्ध्वे इत्येवावक्ष्यत् । धातोः क्रियावाचित्वनियमात् तल्लाभात् । उत्तिष्ठमानस्तु परः । अनूर्ध्वेति किम् । जवेन पीठादुदतिष्ठदच्युतः । ईहायां किम् । उत्तिष्ठति सेना । जायते इत्यर्थः ।

## उपान्मन्त्रकरणे २५।

मन्त्रकरणकार्थवृत्तेरुपपूर्वकात्तिष्ठतेः प्राग्वत् । ऐन्द्र्या गार्हपत्यमुपतिष्ठते । मन्त्रेति किम् । भर्तारमुपतिष्ठति यौवनेन ।

"उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वक्तव्यम्" ।

अमन्त्रकरणार्थमेतत् । आदित्यमुपतिष्ठते ।

बहूनामप्यचित्तानामेको भवति चित्तवान् ।
पश्य वानरसैन्ये ऽस्मिन्यदर्कमुपतिष्ठते ॥
मैवं मंस्थाः सचित्तोऽयमेषो ऽपि हि यथा वयम् ।
कपेस्तदपि कापेय यदर्कमुपतिष्ठति ॥

इति भाष्यम् । देवपूजां मत्वा पूर्वमात्मनेपदं परत्र तु चापलमेतन्न पूजनमिति तदभाव इति कैयटः । स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती । देवतात्वारोपात् । रथिकानुपतिष्ठते । उपश्लिष्यतीत्यर्थः । अश्वारोहानुपतिष्ठते । अनुपश्लिष्टस्यापि मैत्रीसंबन्धः । अयं पंथाः स्रुघ्नमुपतिष्ठते । प्राप्नोतीत्यर्थः ।

"वा लिप्सायामिति वक्तव्यम्" ।

भिक्षुको ब्राह्मणमुपतिष्ठते उपतिष्ठति वा । लिप्सयोपगच्छतीत्यर्थः ।

## अकर्मकाच्च २६।

भोजनकाले उपतिष्ठते । सन्निहितो भवतीत्यर्थः ।

## उद्विभ्यान्तपः २७।

अकर्मकादित्येव । उत्तपते । वितपते । त्विषां त्रितपते पतिरिति प्रा-

रिः । दीप्यते इत्यर्थः ।

"स्वाङ्गकर्मकाच्च" ।

उत्तपते वितपते पाणिम् । नेह देवदत्तो यज्ञदत्तस्य पाणिं वितपति । सन्तापयतीत्यर्थः । सुवर्णमुत्तपति । सन्तापयति, विलापयति वा । उद्विभ्यां किम् । निष्टपति । "निसस्तपतौ" इति षत्वम् ।

ननु उद्विभ्यां तप आत्मनेपदमेवेति यक्चिण्निवृत्त्यर्थमिदं वचनं स्यात् । तथा च निष्टपते इत्युदाहार्यम् । दीप्यते इत्यर्थे ऽकर्मको हि तपिः अन्तर्भावितण्यर्थतया तापने वर्तमानश्च सकर्मकः । पुनः प्रयोजकव्यापारविवक्षायां कर्तुः कर्मवद्भावादात्मनेपदसिद्धेः ।

मैवम् । अर्थभेदे कर्मवद्भावं विनाऽपि सकर्मकाणामकर्मकत्वदर्शनात् । नदी वहति, भारं वहति इत्यादिप्रयोगात् । तस्मादुद्विभ्यर्थमेव सूत्रम् ।

# आङो यमहनः २८।

आङ्पूर्वकाभ्यामकर्मकाभ्यां स्वाङ्गकर्मकाभ्याञ्च यमिहनिभ्यामात्मनेपदं स्यात् । आयच्छते । आहते । आयच्छते पाणिम् । आहते शिरः । एतेन मोहादाहध्वं मा रघूत्तममिति भट्टिप्रयोगो व्याख्यातः । पराङ्गकर्मकाभावसत्त्वादात्मनेपदस्य सुस्थत्वात् । अकर्मकेति किम् । आयच्छति रज्जुं कूपात् । आहन्ति वृषलं पादेन । स्वाङ्गेति किम् । परशिर आहन्ति । गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्ष इति भारविप्रयोगस्तु प्रामादिक इति केचित् । नच आजेति पदं छि-

श्वा घ्ने हननायेति हन्तेर्भावे क्विपि चतुर्थ्येकवचनं शाङ्गम् । अ-
जेर्वीभावे विवायेति रूपस्वीकारात् ।

शिवस्य समीपमेत्य मल्लसंप्रदायेन स्वं वक्ष आस्फालित-
वानिति केचित् ।

यद्वा उन्मज्जन्मकर इवामरापगाया वेगेन प्रतिमुखमेत्य बा-
णनद्याः । गाण्डीवी स्थित इत्यध्याहारः । आजघ्ने इति कर्मणि
लकारः । तेनेत्यध्याहारः ।

यद्वा गाण्डीवमात्मन इच्छन् गाण्डीवी क्यजन्तात् क्विप् ।
कनकशीलेति । आचारक्विबन्तात्कर्तरि क्विपि तृतीया । द्वयोः
कर्मधारयः । नितरां भा यत्रेति वक्षोविशेषणम् । उन्मज्जन्म-
कर इति कर्मधारयात्सति सप्तमी । लकारः कर्मण्येव ।

# समो गम्यृच्छिभ्याम् २९ ।

सम्पूर्वाभ्यामकर्मकाभ्यामाभ्यां प्राग्वत् । सङ्गच्छते । स-
मृच्छते । अकर्मकाभ्यां किम् । खगः सङ्गच्छति यद्दिनाधिपम् ।
तथैक्यं समगच्छतेति त्वार्षम् । स्वार्थे ष्यञ् । एकं समपद्यते-
त्यर्थो वा ।

“विदिप्रच्छिस्वरतीनामुपसंख्यानम्” ।

परस्मैपदिभ्यां साहचर्याद्विदेर्ज्ञानार्थस्य ग्रहणम् । लाभार्थस्य
स्वरितेत्त्वात्, सत्ताविचारणार्थयोस्त्वात्मनेपदित्वात् । संवित्ते ।
संविदाते । संविद्रते । संपृच्छते । संस्वरते ।

“अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्” ।

अर्तीति भ्वादिजुहोत्यादेर्ग्रहणम् । मा समृत मा समृषातां मा
समृषतेति भाष्यात् । समारत समारेतां समारन्तेति वृत्तेश्च । “सर्ति-
शास्ति–”इत्यङ्विधौ तु लुप्तविकरणेन शास्तिना साहचर्याज्जौहो-

त्यादिकस्यैव ग्रहणम् । परस्मैपदेष्वित्यस्योत्तरार्थमनुवृत्तावपि योगविभागसामर्थ्यादङ्विधौ न सम्बन्धः । तेन भाष्यमुपपन्नम् । संशृणुते । सम्पश्यते । रक्षांसीति पुराऽपि संशृणुमहे इति मुरारिप्रयोगस्तु चिन्त्यः । अकर्मकादित्यनुवृत्तेः ।

केचित्तु रक्षांसि सन्तीति कथयद्भ्यः इत्यध्याहारः। हिताश्च यः संशृणुते स किं प्रभुरितिवदविवक्षितकर्मकत्वान्न दोषः ।

वस्तुतो रक्षासि सन्तीति वाक्यार्थस्य कर्मत्वात् द्वितीयान्तपदसमभिव्याहारविरहान्न दोषः ।

"उपसर्गादस्यत्यूह्योर्वेति वक्तव्यम्" ।

"अकर्मकाद्" इति अतः परं न सम्बध्यते इति कैयटादयः । निरस्यति । निरस्यते । समूहति । समूहते । उपसर्गात्किम् । अस्यति । ऊहते । अनुक्तमप्यूहति पण्डितो जन इति तु प्रमादः । ओहतीति सोपसर्गपाठे वा ।

# निसमुपविभ्यो ह्वः ३० ।

निह्वयते इत्यादि । अकर्त्रभिप्रायार्थ आरम्भः । नच आकारान्तस्यानुकरणात् निह्वास्यते इत्येवोदाहरणम् विकृतिग्रहणे प्रकृतिग्रहणाभावादिति वाच्यम् । एङन्ते एवानुक्रियमाणे लक्षणवशादात्वनिष्पत्तावपि आत्वस्याविवक्षितत्वात् ।

# स्पर्द्धायामाङः ३१।

आङ्पूर्वाद् ह्वयतेः स्पर्द्धायां प्राग्वत् । मल्लमाह्वयते। स्पर्द्धमानः सन्नाह्वयति । स्पर्द्धायां किम् । पुत्रमाह्वयति । स्पर्द्धाया एतद्धात्वर्थत्वे ऽपि आङ्पूर्वस्य शब्दनार्थत्वात्स्पर्द्धायां विषये विधिरयम् ।

## गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ३२।

सप्तस्वर्थेषु । अकर्त्रभिप्रायार्थ आरम्भः । गन्धनं सूचनं हिंसासादृश्यात् । उत्कुरुते । सूचयतीत्यर्थः । अवक्षेपणं भर्त्सनम् । श्येनो वर्त्तिकामुदाकुरुते । हरिमुपकुरुते । सेवते इत्यर्थः । परदारान्प्रकुरुते । सहसा तेषु प्रवर्तते इत्यर्थः । एधो दकस्योपस्कुरुते । एधशब्दो ऽकारान्तो ऽपि । एधान् हुताशनवत इति दर्शनात् । सान्तत्वं व्याख्याने । दकशब्द उदकार्थो ग्राह्यः । जीवनीयं दकं चेति हलायुधोक्तेः । तस्य गुणान्तराधानं करोतीत्यर्थः । प्रकथनं प्रकर्षेणोक्तिः । गाथाः प्रकुरुते । उपयोगो ऽप्रतिषिद्धविनियोगः । शतं प्रकुरुते । एषु किम् । कटं करोति ।

## अधेः प्रसहने ३३।

कृञ इत्यनुवर्तते । प्रसहनमभिभवः क्षमा च । षह मर्षणे ऽभिभवे चेति पाठात् । छन्दसीत्यस्य प्रायिकत्वात् । तमधिकुरुते । भवादृशाश्चेदधिकुर्वते परान् इति भारविः । क्षमत इत्यर्थः ।

## वेः शब्दकर्मणः ३४।

शब्दस्य कर्मकारकत्वे विपूर्वात्कृञ आत्मनेपदम् । स्वरान्विकुरुते । उच्चारयतीत्यर्थः । नेह चित्तं विकरोति कामः ।

## अकर्मकाच्च ३५।

वेः कृञ इति प्राग्वत् । प्रवृद्धानि विकुर्वते । विकृतानि भवन्तीत्यर्थः ।

## संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ३६।

एषु बोध्येषु नयतेरात्मनेपदम् । उत्सञ्जनज्ञानविगणनव्यया नयतेर्वाच्याः । अन्ये तु प्रयोगोपाधयः । शास्त्रे नयते । सोपपत्तिकान् शास्त्रसिद्धान्तान् शिष्येभ्यः प्रापयतीत्यर्थः । शिष्याणामिष्टार्थसिद्ध्या संमानननिष्पत्तिः । प्रयोगोपाधित्वं तु तज्जन्यशाब्दबोधाविषयत्वे सति प्रयोगनियामकत्वम् । उत्सञ्जनमुत्क्षेपणम् । दण्डमुन्नयते । माणवकमुपनयते । विधिना स्वसमीपं प्रापयतीत्यर्थः । तत्फलं माणवकसंस्कारः । तस्याचार्यगामित्वाभावादात्मनेपदविधानम् । अध्यापनार्थत्वे तु उपनयनस्येदं व्यर्थं स्यादिति मीमांसकाः । उपनीय वदेद्वेदमाचार्यः स उदाहृत इति स्मृत्या तदेवाचार्यपदप्रवृत्तिनिमित्तम् । विनिन्युरेनं गुरवो गुरुप्रियम् इत्यत्राचार्यकरणमविवक्षितम् ।

वस्तुतस्तु आचार्यकरणम् उपशब्दसमभिव्याहृतनयतेरेव प्रयोगोपाधिः । प्रयोगोपाधेः स्वरूपसत एव नियामकतया तद्विवक्षाया अनुपयोगात् । तत्त्वं नयते । निश्चिनोतीत्यर्थः । कर्मकरानुपनयते भृतिदानेनात्मसमीपं प्रापयतीत्यर्थः ।

विगणनम् । ऋणादेर्निर्यातनम् । करं विनयते । राजांशं ददातीत्यर्थः । शतं विनयते । धर्माद्यर्थं विनियुङ्क्ते इत्यर्थः । नेह घटं नयति ।

## कर्तृस्थे चाशरीरे कर्मणि ३७।

नयतेः कर्तृस्थे कर्मणि यदात्मनेपदं प्राप्तं तच्छरीरावयवभिन्ने एव स्यात् । शरीरपदमत्र तदवयवपरम् । चैत्रत्वादिजातीनां शरीरवृत्तितया तत्तादात्म्यापन्नस्यैव जीवस्य कर्तृतया शरीरस्य शरीरस्थत्वासम्भवात् । यद्यपि शरीराद्विविच्य लौकिकैरनिश्चये ऽपि वस्तुतः शरीरतादात्म्यापत्तेः कर्तृत्वानुपयोगः । कृतिसमवायित्वरूपस्य तस्यात्ममात्रवृत्तित्वात्। शरीरस्य त्ववच्छेदकतयैव तदाश्रयत्वात् । तथाप्यत्रोभयसाधारणमेवाश्रयत्वं विवक्षितम् । चैत्रः कर्तेति व्यवहारात् । क्रोधं विनयते । स्वकीयं क्रोधं निरस्यतीत्यर्थः । क्रोधापगमफलस्य चित्तप्रसादादेः कर्तृगत्वे ऽपि नियमार्थमिदम् । नेह गडुं विनयति । शरीरावयव एवायम् । विगणय्य नयन्ति पौरुषं विहितक्रोधरया जिगीषव इति भारविप्रयोगस्तु कर्तृगत्वाविवक्षायाम्। करोतीत्यर्थे प्राप्त्यर्थे वाऽत्र कृञो वृत्तिरित्यन्ये । सम्पदस्तव गिरामपि दूरात् यन्न नाम विनयं विनयन्ते इति श्रीहर्षे विनयन्तीत्येव पाठ इति नारायणः । णय गतावित्यस्यान्तर्भावितण्यर्थस्य प्रयोगोऽयमिति व्याख्यातमस्माभिः ।

## वृत्तिसर्गतायनेषु क्रमः ३८।

वृत्तिरप्रतिबन्धः । ऋच्यस्य क्रमते बुद्धिः । सर्ग उत्साहः। येनेन्द्रलोकावजयाय सृष्ट इति दर्शनात् । अध्ययनाय क्रमते ।

तायनं स्फीतता । क्रमन्ते ऽस्मिन् शास्त्राणि । स्फीतानि न्तीत्यर्थः ।

# उपपराभ्याम् ३९ ।

सोपसर्गे नियमार्थमिदम् । वृत्त्यादिषूपपरा इत्युपसर्गद्वय-पूर्वकादेव क्रमेः आत्मनेपदम् । उपक्रमते । नियमान्नेह । संक्रामति । वृत्त्यादिष्वेव नेह—उपक्रामति । पराक्रामति ।

# आङ उद्गमने ४० ।

"ज्योतिरुद्गमने इति वाच्यम्" । आक्रमते आदित्यः । उदयते इत्यर्थः । उद्गमनार्थः क्रमिरकर्मकः । नेह । आक्रमति धूमो हर्म्यतलात् । हर्म्यतलमिति भाष्ये तूद्गमनपूर्विकायां व्याप्तौ क्रमिर्बोध्यः । नभः समाक्रामति चन्द्रमाः क्रमादि-त्यत्र व्याप्तिरेवार्थो नतूद्गमनमिति कैयटः ।

# वेः पादविहरणे ४१ ।

साधु विक्रमते वाजी । क्रमेः पादविक्षेपवृत्तित्वे ऽपि धातूनामनेकार्थत्वादर्थान्तरे आत्मनेपदवारणायार्थनिर्देशः । नेह विक्रामति अजिनसन्धिः । स्फुटतीत्यर्थः ।

# प्रोपाभ्यां समर्थाभ्याम् ४२ ।

समर्थत्वं समानार्थत्वम् । शकन्ध्वादिः । संशब्द एव वा तदर्थः । प्रक्रामते । उपक्रमते । आरभते इत्यर्थः । आरम्भे किम् । प्रक्रामति । उपक्रामति । इह गमनागमने अर्थौ । उपपराभ्या-मित्यस्यापि न प्रवृत्तिः । वृत्त्यादेरत्राविवक्षितत्वात् ।

## अनुपसर्गाद्वा ४३

क्रामति क्रमते । अप्राप्तविभाषेयम् । "उपपराभ्याम्" इत्यस्य नियमार्थतया "वृत्तिसर्ग–"इत्यादेरनुपसर्गाविषयत्वात् ।

## अपह्नवे ज्ञः ४४

शतमपजानीते । अपलपतीत्यर्थः ।

## अकर्मकाच्च ४५

सर्पिषो जानीते । सर्पिषा उपायेन प्रवर्त्तते इत्यर्थः । जानातेरत्र ज्ञानपूर्वकप्रवृत्तिपरत्वात् । "ज्ञो ऽविदर्थस्य"इति करणे षष्ठी । सकरणादिति तु नोक्तम् । स्वरेण पुत्रं जानातीत्यत्रा-ऽतिव्याप्तेः ।

## संप्रतिभ्यामनाध्याने ४६

शतं सञ्जानीते । अवेक्षत इत्यर्थः । अनाध्याने किम् । मातुः संजानाति । "अधीगर्थ–" इति षष्ठी । नच तत्र शेषानुवृत्तेः "अकर्मकाच्च" इति पूर्वेण आत्मनेपदापत्तिः । अनाध्यान इति विभज्य पूर्वशेषतयापि तस्य व्याख्यानात् इत्याहुः ।

## भासनोपसम्भाषाज्ञानयत्न-विमत्युपमन्त्रणेषु वदः ४७।

उपसम्भाषोपमन्त्रणे वाच्ये, अन्ये प्रयोगोपाधयः । शास्त्रे

वदते। भासमानो ब्रवीतीत्यर्थः। शिष्यैः स्तूयमानो हि भासते। तेजोभङ्गे तु न शक्नुयाद्वदितुमिति भासनं हेतुभूतं सद् विशेषणमित्याहुः। कर्मकरानुपवदते। उपसान्त्वयतीत्यर्थः। शास्त्रे वदते। उक्तिविषयकज्ञानवानित्यर्थः। क्षेत्रे वदते। तद्विषयकोत्साहं स्फुटयतीत्यर्थः। आविष्करणरूपस्य वदत्यर्थस्य यत्नः कर्मेति केचित्। विशिष्ट एव वदत्यर्थ इत्यन्ये। क्षेत्रे विवदन्ते। विमत्या हेतुभूतया नानाविधं भाषन्ते इत्यर्थः। एतेषु किम्। यत्किञ्चिद्वदति।

## व्यक्तवाचां समुच्चारणे ४८।

व्यक्ता वाचि वर्णा येषां ते मनुष्यादयः। व्यधिकरणबहुव्रीह्याश्रयणात्। समुच्चारणं सम्भूयोच्चारणम्। सम्प्रवदन्ते ब्राह्मणाः। नेह वरतनु प्रवदन्ति कुक्कुटाः। शुकसारिकादीनां न सर्ववर्णविषयकं व्यक्तवाक्त्वम्, अपि तु पुरुषप्रयत्नवशेन कतिपयवर्णविषयमिति तत्रात्मनेपदं नेति कैयटः।

## अनोरकर्मकात् ४९।

अनुवदते कठः कलापस्य। अनुः सादृश्ये। तुल्यार्थयोगे शैषिकी षष्ठी। अकर्मकात् किम्। अयमपि च गिरं नस्त्वत्प्रबोधप्रयुक्तामनुवदति शुकस्ते मञ्जुवाक्पञ्जरस्थः। व्यक्तवाचामित्येव। अनुवदति वीणा।

## विभाषा विप्रलापे ५०।

विप्रलापो विरोधोक्तिः। विप्रवदन्ते विप्रवदन्ति वा वैद्याः। युगपत्परस्परविरुद्धं वदन्तीत्यर्थः। विप्रलापे किम्। सम्प्रवदन्ते

ब्राह्मणाः । व्यक्तवाचां किम् । विप्रवदन्ति शकुनयः । समुच्चारणे किम् । क्रमेण विप्रवदन्ति ।

# अवाद्ग्रः ५१।

अवगिरते । अवात् किम् । गिरति । गृणातेस्त्ववपूर्वस्य प्रयोगो नास्तीति भाष्यम् ।

# समः प्रतिज्ञाने ५२।

नित्यं शब्दं सङ्गिरते मीमांसकः । शब्दो नित्य इति प्रतिजानीते इत्यर्थः । नेह सङ्गिरति ग्रासम् ।

# उदश्चरः सकर्मकात् ५३

धर्ममुच्चरते । उल्लङ्घयतीत्यर्थः । द्वे तिस्रो रमणीयमंबरमणेर्घामुच्चरन्ते इति मुरारिः । सकर्मकात्किम् । क्षितेस्तदा यः स्वन उच्चचार । उत्पन्न इत्यर्थः ।

# समस्तृतीयायुक्तात् ५४।

पद्भ्यां नृपः सञ्चरमाण एषः । तृतीयेति किम् । उभौ लोकौ सञ्चरसि इमं चामुं च देव ।

# दाणश्च सा चेच्चतुर्थ्यर्थे ५५

सम्पूर्वाद्दाणस्तृतीयायुक्तादात्मनेपदं सा तृतीया चेच्चतुर्थ्यर्थे । दास्या संयच्छते । कामुकः सन् तस्यै ददातीत्यर्थः । तृतीया ऽप्यनेनैव चतुर्थ्यर्थे विधीयते चेच्छब्दस्य चकारार्थत्वादिति सम्प्रदायः । अशिष्टव्यवहारे चतुर्थ्यर्थे तृतीयेति वार्त्तिकं तदंशे

स्पष्टीकरणार्थम्। भाष्ये त्विदं सूत्रमपि प्रत्याख्यातम्। तदुक्तम्-

सहयुक्ते तृतीया स्याद्व्यतिहारे तङो विधिः।

यो ह्यस्या दत्तं भुङ्क्ते स्वयं च तस्यै ददाति तत्रायं प्रयोग इष्टः। तत्र सहयोगतृतीया कर्मव्यतिहारे चात्मनेपदमिति सिद्धम्। दास्यै विश्राण्य तया सहोपभुङ्क्ते इति कैयटः।

# उपाद्यमः स्वकरणे ५६।

अस्वस्य सतो यत्स्वीयत्वसम्पादनं तत्रेदम्। च्विप्रत्ययस्तु "समर्थानां प्रथमाद्वा" इति विकल्पान्न कृतः। भार्यामुपयच्छते। नेह स्वं शाटकमुपयच्छति। पाणिग्रहण एवेदमिति वृत्तिः। तद्भाष्यानुक्तत्वाद्धेयम्। उपायंस्त महास्त्राणीत्यादिविरोधाच्च।

# ज्ञाश्रुस्मृदृशां सनः ५७।

सोपसर्गाणां यत्रार्थे आत्मनेपदं पूर्वमुक्तं तद्भिन्नार्थमारम्भः। स्मरतेस्तु अप्राप्तावेव। धर्मं जिज्ञासते शुश्रुषते सुस्मूर्षते दिदृक्षते।

# नानोर्ज्ञः ५८।

पुत्रमनुजिज्ञासति। पूर्वप्राप्तेरयं निषेधः। अनन्तरस्येति न्यायात्। तेन सकर्मकस्येति निषेधः। अकर्मकात्तु "पूर्ववत्सन" इति भवत्येव। "अकर्मकाच्च" इत्यनेन केवलाद्विधानात्। तेन औषधस्यानुजिज्ञासते। औषधेन प्रवर्तितुमिच्छतीत्यर्थः।

# प्रत्याङ्भ्यां श्रुवः ५९

आत्मनेपदं न स्यात्। प्रतिशुश्रूषति आशुश्रूषति। परस्पर-

साहचर्यादुपसर्गग्रहणान्नेह देवदत्तं प्रति शुश्रूषते । "लक्षणेत्थंभूत-" इति प्रतिः कर्मप्रवचनीयः ।

## शदेः शितः ६०

शितः प्रकृतिभूतात् शदेरात्मनेपदं स्यात् । शीयते । शितः किम् । शत्स्यति । अशत्स्यत् । "शेषाद्"इति परस्मैपदम् ।

"उपसर्गपूर्वनियमे ड्व्यवाय उपसंख्यानम्" ।

न्यविशत । व्यक्रीणीत । यद्यपि विकरणेभ्यो नियमो बलीयानित्युक्तम्, तत्र च विकरणोत्पत्तेः प्रागेव नियमः ततो नित्यत्वाद्विकरणः ततो ऽडागम इति वार्त्तिकं गतार्थं तथापि तदनाश्रित्यायमारम्भः । नच धात्ववयवत्वादटो न व्यवधायकत्वम् । विकरणान्तस्याङ्गत्वात्समुदायावयवस्याटो धातुग्रहणेनानुपादानात् । न च परत्वादट् । कृताकृतप्रसङ्गित्वेन विकरणानां नित्यत्वात् । अटश्च शब्दान्तरस्य प्राप्नुवन्विधिरित्यानित्यत्वात् । नच कृते ऽपि अन्यस्मात्प्राप्त्या विकरणो ऽप्यनित्यः । शब्दान्तरात्प्राप्नुवतो ऽनित्यत्वानुक्तेः । नच लादेशात्पूर्वं परत्वाद्डागमः । लादेशस्य कृताकृतप्रसङ्गित्वेन नित्यत्वात् । कृते ऽप्यटि धातुग्रहणेन तद्ग्रहणादव्यवधायकत्वात् । अडागमस्त्वनित्यः । लादेशोत्तरं विकरणैर्नित्यतया स्वपूर्वं तत्प्रतिषेधात् । विकरणोत्तरं च शब्दान्तरप्राप्तत्वात् । यद्यपि लादेशे कृते स्थानिवद्भावेन लुङादिव्यपदेशादटो निमित्तसद्भावे ऽपि विकरणेन नित्यत्वादट् बाध्यते तथापि यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम्, उभयोर्नित्ययोः परत्वादट् प्राप्नोति । नच

तथापि तस्य धात्ववयवत्वाद्व्यवधायकत्वं नास्तीत्यात्मनेपदं सिद्धमिति वाच्यम्। लादेशोत्तरं नियमात्पूर्वं नित्यत्वात् विकरणोत्पत्त्या ऽडागमस्य विकरणान्तभक्तत्वाद्धातुव्यवधायकत्वान्न्यादिभ्यः परे अव्यवहिता विश्यादयो न भवन्तीत्यात्मनेपदं न स्यादिति वार्त्तिकाभिप्रायः।

भाष्यकारास्तु लमात्रापेक्षतया लादेशा अन्तरङ्गा अडागमस्तु तद्विशेषापेक्षत्वाद्बहिरङ्गः। अथ लादेशेन समं न सम्प्रधारणा किन्तु नियमेन सहैव। लादेशोत्तरं हि विकरणः, अडागमो, नियमश्चेति त्रयं प्राप्नोति। तत्र यदि सर्वतो नियमो बलवान्स्यात् तदा वार्त्तिकं विनैवेष्टसिद्धिः स्यात्। नच विकरणेभ्यो नियमो बलीयानिति निर्वाहः। कृतो ऽपि विकरणो न व्यवधायक इति ज्ञापनेनापि तज्ज्ञापनस्यान्यथासिद्धेः। नचैवं नित्य एव नियमः। निवेक्ष्यते निविशते इत्यादौ केवलविकरणस्य व्यवधायकत्वस्थले नियमप्रवृत्तावपि कृते विकरणे ऽडागम इत्यटो व्यवधायकत्वात्तदप्रवृत्तेः। नहि विकरणात्पूर्वम् अट् कर्त्तुं शक्यः। अङ्गात्पूर्वं विकरणानां वाच्यत्वात्। अन्यथा तरतः तरन्तीति न स्यात्। शपं विना गुणाभावात् तसादेर्ङित्त्वात्। ततश्च पूर्वमित्त्वमेव स्यात्। अडाड्भ्यामप्यन्यदाङ्गं पूर्वमप्येषितव्यम्। अन्यथा उपार्च्छदित्यत्र आटः पूर्वमुक्तौ तद्विशिष्टस्यैव ऋच्छिभावापत्तेः। वर्णमात्राश्रयत्वाद्दच्छिभावं बाधित्वा वृद्धेरेव पूर्वं प्रवृत्तेः। नच वार्णादाङ्गं बलीयः। समानाश्रयत्वात्। एकादेशस्य चादिवद्भावाद्दच्छिभावे ऋच्छादिति स्यान्न त्वार्च्छेदिति। नच शब्दान्तरस्याकृत आडिति कृत्वा पुनर्भविष्यति। पुनर्ऋच्छिभावः पुनराडित्यव्यवस्थाप्रसङ्गात्। तस्माद्वार्त्तिकमावश्यकमिति चेत्।

न । तरत इत्यत्र ह्यनित्यमिच्त्वं विकरणस्तु नित्य इति तस्यैव प्रवृत्तेः । तरतीत्यादौ गुणस्यापि नित्यत्वात्स एव परत्वात् । उपार्च्छेदित्यत्रापि उक्तरीत्या पुनराट् । नच पुनर्ऋच्छिभावापत्तिः । इष्टतो व्यवस्थासम्भवात् । इदञ्चाभ्युपगम्योक्तम् । वस्तुतः परत्वादृच्छिभावः पश्चादेवाट् । तस्माल्लादेशेषु कृतेषु परत्वादडागमः । नचाडागमो नित्यः । शब्दान्तरस्य प्राप्ताविव शब्दान्तरात्प्राप्तावपि अनित्यत्वस्य युक्तत्वात् । कृताकृतप्रसङ्गित्वस्य साधारणत्वात् । अङ्गत्वजात्याश्रयणाद्वाऽडागमस्य शब्दान्तरप्राप्तिविरहात् । यद्वा नेरिति षष्ठ्येव न तु पञ्चमी । व्यवहितस्याप्यर्थद्वारेण विशेष्यत्वात्सम्बन्धोपपत्तेः । यद्वा निशब्दात्परमात्मनेपदान्तं विशत इति पदं साधु भवतीति "नेर्विशः" इत्यस्यार्थः । सत्यप्यडागमे नेः परमनन्तरमेवेति दोषाभाव इत्याहुः ।

## म्रियतेर्लुङ्लिङोश्च ६१

शितो लुङ्लिङोश्च प्रकृतिभूतो यो म्रियतिस्तत एवात्मनेपदं नान्यस्मात् । शित्प्रकृतित्वं शिदुत्पत्तेः प्रागेव योग्यतया ग्राह्यम् । लुङ्लिङोस्तु सत्यामेवोत्पत्ताविति भेदः । म्रियते । म्रियेत । म्रियताम् । अम्रियत । अमृत । मृषीष्ट । नियमः किम् । ममार । मर्त्तासि । मरिष्यति । अमरिष्यत् । मृङो ङित्त्वं तु स्वरार्थम् । मा हि मृतेत्यत्र ङिदुपदेशात्परं "लसार्वधातुकम्"इति निघातो यथा स्यात् । नच सिज्लोपस्यासिद्धत्वम् । ङित्त्वसामर्थ्यात् । नच निघातः । हिचेति प्रतिषेधात् ।

# पूर्ववत्सनः ६२

शुद्धादात्मनेपदे यन्निमित्तं तत्सन्नन्तादप्यात्मनेपदं प्रवर्तयतीत्यर्थः । एतावतैव निमित्तातिदेशोऽयमिति व्यवहारः । पूर्वेण तुल्यमिति तृतीयान्ताद्वतिः । पञ्चम्यन्तात् विधानाभावात् । पूर्वस्मादिवेति तु गम्योऽर्थः । ब्राह्मणेन तुल्यं वैश्यादधीत इतिवत् । तत्र ब्राह्मणपदं तदपादानकाध्ययनपरम् । आसिसिषते । शिशयिष्यते । निविविक्षते । मुमुक्षत इत्यादि । नेह शिशत्सति । मुमूर्षति । नह्येषा शदिम्रियतिव्यक्तिः शित्प्रकृतिः, अतो नात्मनेपदनिमित्तम् । सनि कृते तु सन्नतमेव शित्प्रकृतिः । शिशयिष्यत इत्यादौ तु प्रकृतौ ङित्त्वानपायान्निमित्तताऽतिदेश इति वैषम्यम् । नचैवमनुचिकीर्षतीत्यत्रातिप्रसङ्गः गन्धनादेरर्थस्य ञित्त्वस्य चात्मनेपदनिमित्तस्यातिदेशापत्तेरिति वाच्यम् । "अनुपराभ्यां कृञः" इति पर्यालोचनया अनुपूर्वकत्वाभावविशिष्टस्यैव तस्यात्मनेपदनिमित्तत्वात् ।

यद्वा प्राक् सनो येभ्य आत्मनेपदं तेभ्यः सन्नन्तेभ्योऽपि भवतीति कार्यस्यैवातिदेशः । सर्वातिदेशानां कार्यार्थतया कार्यातिदेशस्य प्राधान्यात् । नच शदिमृङोरतिप्रसङ्गः । "शदेः शितः" "म्रियतेर्लुङ्लिङोश्च" इति सूत्रद्वयेऽपि सनो नेत्यनुवर्त्य वाक्यभेदेन व्याख्यानात् । जुगुप्सते इत्यादौ तु नित्यसन्नन्ततया प्राक्सन आत्मनेपदादर्शनादेतदतिदेशस्य न प्रवृत्तिः । तथाऽप्यनुबन्धासञ्जनादेव तत्रानुदात्तङित इत्यात्मनेपदमिति वक्ष्यते, अवयवेऽचरितार्थमिति न्यायात् । नच जुगुप्सयतीत्यादावतिव्याप्तिः । सन्पर्यन्तविशेषणेन चरितार्थत्वे तदतिरिक्तविशेषणे मानाभावात् । नच गोपयती-

आदावतिव्याप्तिः, सनेव विशेषणीयो नतु णिजित्यत्र बीजाभावादिति वाच्यम् । यत्रार्थे निन्दादौ सन्निष्यते तदर्थकानामेवानुदात्तेत्त्वात् अर्थान्तरे त्वननुबन्धकाश्चुरादावेव गुपादय इति सिद्धान्तात् ।

# आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ६३ ।

आम्प्रकृतिधातोरिवानुप्रयुज्यमानात्कृञो ऽप्यात्मनेपदम् । आम्प्रत्ययो यस्मादित्यतद्गुणो बहुव्रीहिः । अकर्त्रभिप्रायार्थं सूत्रम् । ईहां चक्रे । नच इन्दांचकारेत्यत्र प्रसङ्गः । पूर्ववदित्यनुवृत्तेः । पूर्ववदेवात्मनेपदं नतु तद्विपरीतमिति नियमार्थतयाऽपि वाक्यभेदेन व्याख्यानात् । कृञः किम् । भ्वस्त्योर्मा भूत् । कृञ्ग्रहणसामर्थ्यान्नात्र कृञ्प्रत्याहारः । अत एवानुप्रयोगविधौ कृञ्प्रत्याहारग्रहो वक्ष्यते ।

# प्रोपाभ्यां युजेरयज्ञपात्रेषु ६४।

"युजिर् योगे" इत्यस्य स्वरितेतो रुधादेरकर्त्रभिप्रायार्थो विधिः । "युज समाधौ" इति दिवादेरनुदात्तेत्त्वात् । यज्ञपात्रविषयतायास्तत्रासम्भवाच्च ।

"स्वराद्यन्तोपसृष्टादिति वक्तव्यम्" ।

प्रोपाभ्यामित्यपहाय यस्योपसर्गस्यादावन्ते वाऽजस्ति तत्पूर्वादिति पठनीयमित्यर्थः । तेन हलन्तभिन्नोपसर्गसंग्रहः । उद्युङ्क्ते । नियुङ्क्ते । अयज्ञेति किम् । द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति ।

# समः क्ष्णुवः ६५ ।

"समो गम्यृच्छिभ्याम्" इत्यतो विच्छिद्य पाठः सकर्मकादपि विधानार्थः । संक्ष्णुते शस्त्रम् । वक्षः पीठे घनाख्त्रण-किणकठिने सङ्क्ष्णुवानः पृषत्कानिति मुरारिः ।

# भुजोऽनवने ६६ ।

"भुज पालनाभ्यवहारयोः" । "अनवने" इति पर्युदासाल्लक्षणार्थे आत्मनेपदविधानम् । तेन "भुज कौटिल्ये" इत्यस्य न ग्रहणम् । संयोगवाद्विप्रयोगस्यापि विशेषनिर्णयहेतुत्वात् । अत एव सशङ्खचक्रो हरिरित्यत्रेवाशङ्खचक्रो हरिरित्यत्रापि हरिपदं नारायणपरम् । तदुक्तम्—संयोगो विप्रयोगश्चेत्युपक्रम्य विशेषस्मृतिहेतव इति । तच्चान्यत्र सविस्तरं व्याख्यातम् । ओदनं भुङ्क्ते । अनवने किम् । महीं भुनक्ति । बुभुजे पृथिवीपाल इत्यादौ उपभोगः, आत्मसात्करणं वाऽर्थः । नेह विभुजति पाणिम् । तेन "अनवन-कौटिल्ययोः" इति वार्त्तिकं स्पष्टार्थम् ।

# णेरणौ यत्कर्म णौ चेत्स-कर्ताऽनाध्याने ६७।

ण्यन्तादात्मनेपदं स्यादनाध्याने । अणौ यत्कर्म णौ चेदिति द्वितीयं वाक्यम् । यच्छब्देन तच्छब्दाक्षेपः, यत्तदोर्नित्यसम्बन्धात् । धर्मान्तरस्य चानिर्देशात्कर्मत्वमेव सन्निधानात्प्रतिनिर्दिश्यते ।

अणौ यत्कर्म णौ चेत्तत्कर्मेति प्रतिनिर्देशेन च कर्मान्तरव्यावृत्तिः क्रियते । न त्वणौ कर्मणो णौ कर्मत्वसद्भावः प्रतिपाद्यते । स कर्तेति वाक्यान्तरेण तस्य कर्तृत्वप्रतिपादनात्। एकक्रियापेक्षया युगपदेकस्य कर्मकर्तृत्वोभयविरोधात् । यथेष्टं वाक्यशेषपरिकल्पनादणौ यत्कर्म णौ चेत्तदेव कर्मेत्येवकाराध्याहारात्कर्मान्तरनिवृत्तिलाभः । ततः स कर्तेति तृतीयं वाक्यम् अणौ कर्मणो णौ कर्तृत्वप्रतिपादनपरम् । एषामेकवाक्यत्वे महावाक्यम्—लक्ष्यस्य संस्कारकं महावाक्यं सम्पद्यते । नचैवं दर्शयते भृत्यान्राजेति भाष्योदाहरणविरोधः । अणौ कर्मणो राज्ञोऽन्यस्य भृत्यानिति कर्मणः सद्भावादिति वाच्यम् । अण्यन्तावस्थायां ये कर्तृकर्मणी तदतिरिक्तस्यैव कर्मणो व्यावर्तनात् । यथा आरोहमाणो हस्ती स्थलमारोहयति मनुष्यानिति । इहतु अण्यन्तावस्थायां कर्तॄणां भृत्यानामेव णौ कर्मत्वमिति भवत्येवात्मनेपदम् । अत एव स्मरयत्येनं वनगुल्मः स्वयमेवेति प्रत्युदाहरणं सङ्गच्छते इति कैयटानुसार्यर्थः । नच यदित्यनेन कर्मैवोपात्तं नतु कर्ताऽपीति कथं कर्तृकर्मातिरिक्तकर्मव्यवच्छेद इति वाच्यम् । "कर्तरि कर्मव्यतिहारे" इत्यतः "कर्तरि" इत्यनुवृत्तं प्रथमान्तत्वेन विपरिणमय्य यच्च यश्चेति "नपुंसकमनपुंसकेन" इत्येकशेषमेकवद्भावं च कृत्वा व्याख्यानात् । एवं च करेणुरारोहयते निषादिनमिति आद्यप्रयोगो ऽप्युपपद्यते ।

अत्रेदमवधेयम्—अण्यन्ते यत् कर्म तदन्यकर्त्रभावे तत्र कर्तृत्वे च कर्मकर्तृत्वादेवात्मनेपदं सिद्धम् । तथा हि—लुनाति केदारं देवदत्तो लूयते केदारः स्वयमेवेति । यथा केदारः कर्मकर्ता तथा लावयते केदारः स्वयमेवेति ण्यन्ते ऽपि । लुनातिर्हि द्विधाभवनोपसर्जने द्विधाभावने वर्त्तते । फलावच्छिन्नव्यापारवाचित्वस्य

सकर्मकाणामावश्यकत्वात् । लुनाति केदारं देवदत्तः द्विधा भवन्तं द्विधा भावयतीत्यर्थः । सौकर्यातिशयविवक्षायां द्विधाभवनमात्रं तदर्थः । धातूनामनेकार्थत्वात् ।

वस्तुतोऽर्थभेदेन धातुभेदः सारूप्यात्तु तत्त्वाध्यवसायः । तत्र द्विधाभवने कर्तुः केदारस्य "कर्मवत्कर्मणा तुल्यक्रियः" इति कर्मकार्याणामतिदेशात् लूयते केदारः स्वयमेवेति प्रयोगः । स्वयमिति वचनं कर्त्रन्तरव्युदासार्थम् । आत्मनेत्यर्थे तु तदपेक्षया कर्मत्वमस्त्येवेति कर्मणि लकारेणैव सिद्धं स्यात् ।

यद्वा तेनात्मनः करणत्वमात्रं प्रतिपाद्यं प्रकृते तु द्विधाभवनमात्रवृत्तेर्लुनातेर्यदा देवदत्तादिप्रयोजकव्यापारे णिजुत्पद्यते तदा लुनाति केदारं देवदत्तः लावयति केदारं देवदत्त इत्यनयोस्तुल्योऽर्थः।पुनः सौकर्यातिशयविवक्षायाम् अविवक्षिते देवदत्तव्यापारे द्विधाभवनमात्रं लावयतेरर्थः । तत्र लूयते केदारः स्वयमेवेत्यनेन समानो लावयते केदारः स्वयमेवेत्यस्यार्थः । नच प्रयोज्यप्रयोजकभावनिवृत्तौ णिचो निवृत्तिः । उपायनिवृत्तावप्युपेयानिवृत्तेः । सिद्धशब्दव्युत्पत्तये प्रकृतिप्रत्ययविभागस्य अर्थोपादानत्यागयोश्च स्वीकारात् । अत एव शिखी नष्ट इत्यादौ विशेषणध्वंसमात्रपरत्वे ऽपि मत्वर्थीयस्य न निवृत्तिः ।

तदुक्तम्—

निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते । इति ।

सोऽयं निवृत्तप्रेषणपक्षे कक्षाचतुष्टयम्, तासु प्रथमतृतीये द्वितीयतुर्ये च तुल्यार्थे इति विवेकः । अथाध्यारोपितप्रेषणपक्षः लुनाति केदारं देवदत्तः लुनन्तं देवदत्तं सौकर्यातिशयात्केदारः प्रयुङ्क्ते इति केदारव्यापारे णिच्—लावयति केदारो देवदत्तेनेति

देवदत्तनिष्ठो यो लवनानुकूलो व्यापारस्तदनुकूलव्यापारवानित्यर्थः। स च व्यापारो लवनसौकर्यप्रयोजकः शालिपाकादिः। पुनः प्रयोज्यप्रयोजकभावाविवक्षायां प्रकृत्या णिचा चोपात्तयोः प्रेषणयोर्युगपत्त्यागे लावयते केदारः स्वयमेवेति तिस्रो भवन्ति कक्षाः । पक्षे ऽध्यारोपितप्रेषणेऽत्र निवृत्तप्रेषणसमकक्षातुल्य एवार्थः। एवं स्थिते निवृत्तप्रेषणक्रियायां "कर्मवत्कर्मणा" इत्यात्मनेपदं सिद्धम्। लावयति केदारं देवदत्त इति लावयतौ यादृशी कर्मावस्थायां केदारस्य द्विधाभवनकरणा क्रिया तादृश्येव तस्मिन् धातौ कर्त्रवस्थायामिति "णेरणौ" इति सूत्रमनारभ्यम्।

नचाध्यारोपितपक्षे आरोहयतीत्यत्र हस्तिनः कर्मत्वाभावात्समानधातौ कर्मत्वं नास्तीति पचत्योदनं देवदत्तो राध्यत्योदनः स्वयमेवेतिवत्कर्मवद्भावो न स्यादिति वाच्यम् । अध्यारोपितप्रेषणपक्षपरित्यागे ऽपि क्षतिविरहात्। निवृत्तप्रेषणक्रिययैव सर्वेष्टसिद्धेः । नच यक्चिणोर्निवृत्त्यर्थमिदम्। अणौ यत् कर्म णौ चेत्स कर्ता तदा णेरात्मनेपदमेव नान्यादिति नियमार्थत्वादिति वाच्यम् । "यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानम्" इतिवार्त्तिकस्यावश्यकतया तत एव तत्सिद्धेः ।

ननु उदपुपुच्छत पुच्छं स्वयमेवेत्यहेतुमण्णौ यक्चिणोः प्रतिषेधार्थं सूत्रम् । नच पुच्छशब्दस्य द्रव्यवाचकतया अण्यन्तावस्थायां कर्मण एवाभावात्प्रकृतसूत्रेणापि तद् दुर्वारम् । पुच्छशब्दस्य पुच्छकर्मिकायामुदसनाक्रियायां वृत्तेः। तस्मात्स्वार्थे णिङ्। यदा भ्राम्यमाणं पुच्छं संस्कारवशाच्चक्रमिव भ्रमणक्रियायां भूतायां स्वातन्त्र्येण विवक्ष्यते तदा उदपुपुच्छतेत्यात्मनेपदमेव णिङन्ताद्यथा स्यादिति नियम इति चेत्। न इहहेतुमत्पदमपहा-

यैव वार्त्तिकस्य भारद्वाजीयैः पठ्यमानत्वात्। अन्यथा गणयति गणं गोपालकः । गणयति गणः स्वयमेवेत्यत्र यक्चिणोः प्रतिषेधार्थं वचनान्तरमारभ्यं स्यात् । गणस्य णावेव कर्मत्वात्प्रकृतनियमेन तत्र यक्चिणोर्दुर्वारत्वात् ।

नन्वत्र कर्मवद्भावस्यैव दौर्लभ्यम् । तथाहि—कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्मवद्भावः क्रियाभावयोश्च परिस्पन्दतद्विरहान्यतरविशिष्टसाधनसाध्यत्वाद्भेदव्यवहारः । गणनं च संख्यानिमित्तः परिच्छेदो ज्ञानविशेषात्मकः कर्तरि वर्तते न तु कर्मणीति चेत् न । भागशो व्यवस्थापने ऽपि गणयतिर्वर्तते । भागशो ऽवतिष्ठमानङ्गणं गोपालको ऽवस्थापयति । तत्रानुकूलत्वाद्गणस्यैव कर्तृत्वविवक्षायां कर्मस्थभावकत्वात्कर्मवद्भावप्रसक्तेः ।

अत्र विवरणकाराः—पुच्छशब्दस्याणौ कर्मत्वेऽप्येतत्सूत्रस्य न तत्र प्रवृत्तिरिति भाष्यकैयटग्रन्थावभ्युपगम्यवादमात्रं वस्तुगत्या पुच्छशब्दस्य तत्कर्मकक्रियायामवृत्तेरनुभवविरोधात् ।

अत एव णेरिति सामान्यग्रहणे ऽपि पुच्छभाण्डादिणिङो न ग्रहणम् । अणौ कर्मणो ऽसम्भवादिति हरदत्तेनाप्युक्तमित्याहुः ।

अथाणौ कर्मणो णौ कर्मत्वे आत्मनेपदं यथा स्यात् णौ तु कर्मणो णौ कर्तृत्वे मा भूदित्येतदर्थमिदं सूत्रमिति चेत् न । अत्राप्यात्मनेपदस्येष्टत्वात्। नित्यत्वाण्णिचः केवलानां चुरादीनां प्रयोगाभावादणौ कर्मणो ऽसम्भवापत्तेरिति हेतुमाण्णिचो ग्रहणम् । अणाविति प्रतिषेधो ऽपि तस्यैव प्रत्यासत्त्या न्याय्यः इत्यहेतुमण्णौ गणस्य कर्मत्वं हेतुमण्णौ कर्तृत्वमिति प्रकृतसूत्रेणाप्यात्मनेपदस्य दुर्वारत्वात् ।

नन्वनिर्दिष्टविषयस्य प्रतिषेधस्य विधातुमशक्यत्वात् अनाध्याने इति प्रतिषेधार्थं सर्वं सूत्रमारभ्यते । स्मरति वनगुल्मं कोकिलः स्मरयत्येनं वनगुल्मः स्वयमेवेत्यत्रात्मनेपदं मा भूदिति चेत् । न । कर्तृस्थभावकत्वादत्र कर्मवद्भावस्य प्रसक्त्यभावात् इति प्राप्ते सिद्धान्तः—

कर्मस्थभावकेषूक्तरीत्या कर्मवद्भावेन सिद्धावपि कर्तृस्थभावकेष्वात्मनेपदविधानार्थं सूत्रम् । तथाहि—रुहिर्गतिविशेषवचन इति "याद्धितुपरं छन्दसि" इत्यत्र वक्ष्यति भाष्यकृत् । नच न्यग्भावरूपस्य फलस्यात्रापि कर्मस्थत्वमस्त्येवेति वाच्यम् । तस्य फलत्वाभावात् । तदुक्तं वाक्यपदीये—

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता ॥ इति ।

अतः क्रियाकृतविशेषदर्शनेन शब्दार्थानुसारेण वा क्रियायास्तात्स्थ्यं व्यवतिष्ठते । अतः पच्यादिधातूनां क्रिया कर्मस्था विक्लित्त्यादिमत्तया तण्डुलादेरुपलम्भात् । क्रियानिवृत्तावपि यत्र तत्कृतो विशेषः कर्मण्युपलभ्यते तत्रैव क्रियायाः कर्मस्थत्वम् । जानातीत्यादौ तु न तथेति स्पष्टमेव । आरोहतीत्यत्राप्युपरिगमनानुकूलव्यापार एव धात्वर्थो न तु हस्त्यादिन्यग्भावानुकूलः । उपरि गच्छेयमित्येव ह्युपदेशो न तु हस्तिनो न्यग्भावो भवत्विति । अत एव भूमिष्ठे शाखां नमयत्यारोहतीति न प्रयोगः । तस्मादारोहत्यादीनां कर्मस्थभावकत्वाभावात्तत्रात्मनेपदमनेन विधीयते ।

तथाहि आरोहन्ति हस्तिनं हस्तिपकाः । न्यग् भावयन्तीत्यर्थः । ततो हस्तिपकव्यापारपरित्यागे आरोहति हस्ती । न्यग् भवतीत्यर्थः ।

तदुक्तं हरिणा—

निवृत्तप्रेषणं कर्म स्वक्रियावयवे स्थितम् ।
निवर्त्तमाने कर्मत्वे स्वे कर्तृत्वे ऽवतिष्ठते ॥ इति ।

निवृत्तप्रेषणं कर्तृव्यापारजन्यफलाश्रयत्वेनाविवक्षितम् । स्वनिष्ठे विशिष्टक्रियावच्छेदकतया क्रियावयवे फलात्मके स्थितं स्वातन्त्र्येण विवक्षितम् । तादृशसमभिव्याहारे फलस्यैव क्रियात्वात् तदाश्रयस्य कर्तृत्वं विशिष्टव्यापारस्यात्राक्रियात्वात्तदाश्रयस्य न कर्तृत्वम् । विशिष्टपरत्वे तु व्यापारस्यैव क्रियात्वात्फलाश्रयस्य कर्मत्वमेवेत्यर्थः । ततो निवृत्तप्रेषणणिचि आरोहयन्ति हस्तिनं हस्तिपकाः । आरोहयन्तीत्यर्थः । पुनर्ण्यर्थत्यागे आरोहयते हस्ती । न्यग्भवतीत्यर्थः ।

तदुक्तम्—

न्यग्भावनं न्यग्भवनं रुहौ शुद्धे प्रतीयते
न्यग्भावनं न्यग्भवनं ण्यन्ते ऽपि प्रतिपद्यते ॥
अवस्थां पञ्चमीमाह ण्यन्तं तत्कर्मकर्त्तरि ।
निवृत्तप्रेषणाद्धातोः प्राकृते ऽर्थे णिजुच्यते ॥

यद्यपि प्रथमकक्षायां फलावच्छिन्नव्यापारप्रतीत्या न्यग्भवनमपि प्रतीयते एव, तथा ऽपि विशेष्यत्वं न्यग्भावनस्यैवेत्यर्थः । ततः शुद्ध एव व्यापारांशपरित्यागे न्यग्भवनमेव प्रतीयते इति द्वितीयकक्षा । ततो ण्यन्ते प्रथमकक्षावदेव न्यग्भावनं बुध्यते इति तृतीयकक्षा, अयं तु विशेषः—शुद्धे उभयमपि रुहेरर्थः, ण्यन्ते तु रुहेर्न्यग्भवनं णिचश्च व्यापारो ऽर्थ इति । ततो णिजर्थव्यापारविवक्षायां द्वितीयकक्षावदेव चतुर्थकक्षा । अत्र शुद्धण्यन्ते न्यग्भावनं शक्त्या प्रतीयते न्यग्भवनं तु लक्षणयेति

विवेकः । प्राकृते ऽर्थ इत्यस्य शक्यलक्ष्योभयसाधारणे प्रकृतिसम्बन्धिनीत्यर्थ इति केचित् ।

निवृत्तप्रेषणात्प्रयोज्यमात्राभिधायिनः प्राकृते प्रकृतिवाच्ये इति तु विवरणकाराः ।

तेषामयम्भावः—फलावच्छिन्नव्यापारे धातुशक्तिस्वीकारे फलमात्रबोधो लक्षणयैव । विशिष्टवाचकाना विशेषणमात्रपरत्वे लक्षणाया एव स्वीकारात् । फले व्यापारे च खण्डशक्तिस्वीकारे तु तात्पर्यविरहात् व्यापारानवबोधे फलप्रतीतिः शक्त्यैवेति । यदि तु एकोच्चारणान्तर्भावेनैव खण्डशक्तेर्वाच्यतया प्रत्येकरूपेण बोधने लक्षणैव, अत एव पुष्पवन्तादिपदाच्चन्द्रत्वसूर्यत्वान्यतरमात्रप्रकारको बोधो लक्षणयैवेति सिद्धान्तः इति नव्यरीतिराश्रीयते, तदा न्यग्भवनबोधो लक्षणयैवेति बोध्यम् ।

स्यादेतत् । कक्षाचतुष्टयस्यैवोक्तत्वात्पञ्चमी अवस्था कथमिति चेत् ।

अत्राहुः—उक्तरीत्या चतुष्टयबोधे ततः प्रकृतसूत्रेणात्मनेपदं प्रतिपाद्यते इति व्युत्पत्तिक्रमापेक्षया पञ्चमत्वम्, प्रयोगार्हं तु कक्षाचतुष्टयमेवेति केचित् ।

कौस्तुभकृतस्तु विशिष्टवाचकयोः शुद्धण्यन्तयोर्वाच्यावंशौ वाचकभेदाद् द्वेधा गणयित्वा तृतीयकक्षायामवस्थाचतुष्टयं चतुर्थकक्षायां पञ्चम्यवस्थेति विवक्षितमित्याहुः ।

एवं विषयत्वापत्त्युपसर्जनविषयत्वापादनार्थो दृशिः । पश्यन्ति भवं भक्ताः । चाक्षुषविषयं कुर्वन्तीत्यर्थः । भक्तव्यापारत्यागे पश्यति भवः । चाक्षुषविषयो भवतीत्यर्थः । अयं तु विशेषः-लुनात्यादेर्निवृत्तप्रेषणाद्वितीयकक्षायां कर्मस्थभावक्रियत्वात्कर्मवद्भाव-

प्रवृत्तिः, न त्वत्रोभयत्रेति । तथा च वृत्तिः—रुहिः कर्तृस्थक्रियः दृशिः कर्तृस्थभाव इति । तच्च प्रागेव व्याख्यातम् । ततः पश्यन्तं प्रेरयतीति णिचि दर्शयन्ति भवं भक्ताः। प्रथमकक्षावदर्थः । पुनर्ण्यर्थस्याविवक्षायां दर्शयते भवः । द्वितीयकक्षावदर्थः । प्रकृतसूत्रेण त्वात्मनेपदमिति दिक् ।

अत्र दीक्षिताः—एवं वर्णयतां कैयटादीनां प्रकृतसूत्रभाष्यवार्त्तिकग्रन्थविरोधः आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यानित्यत्रातिव्याप्तिशङ्कायां मनुष्यानिति कर्मान्तरसद्भावान्नेति हि प्रथमे प्रघट्टके "कर्मकर्तृत्वात्सिद्धम्" इति शङ्कायां "यक्चिणोर्निवृत्त्यर्थम्" इति द्वितीये "कर्तृस्थभावकार्थम्" इति तृतीये स्थितम् । तत्राद्यो विरुद्धः । मनुष्याणामणौ कर्तृत्वात् । मनुष्यस्थलयोरणौ कर्तृकर्मणोरेवेह कर्मतया तदतिरिक्तकर्माभावादात्मनेपदस्य दुर्वारत्वात् । द्वितीयोऽपि विरुद्धः । तदुक्तरीत्या कर्मवद्भावस्यैवाभावात् । "कर्मवदकर्मकाणाम्" इति हि वार्त्तिकम् । अत एव न तृतीयो ऽपि । तथा चोद्देश्यविस्मृतिरेवापततीति महानयं महतामपि प्रमादः ।

किञ्च कर्मान्तरनिवृत्तिपरवाक्यस्य निष्फलत्वमेव स्यात् उदाहरणदौर्लभ्यात् । नह्यणौ ये कर्तृकर्मणी तद्भिन्नं कर्म णौ सम्भवति यदनेन व्यावर्त्येतेति ।

तत्र केचिदाहुः—प्रथमप्रघट्टके तावन्मनुष्यानिति कर्मणः सत्त्वान्नातिव्याप्तिरित्यस्य हरदत्तादिभिरुक्तत्वेऽपि कैयटेनानुक्तत्वात् । स्थलरूपस्य कर्मणः सत्त्वान्नातिव्याप्तिरित्येव तदभिप्रायात् । वार्त्तिककाराभिमतं नियमार्थत्वं दूषयित्वा सूत्रस्य विध्यर्थत्वव्यवस्थापनपरभाष्यानुसारिणः कैयटस्य द्वितीयप्रघट्टकवार्त्तिकविरोधस्याकिञ्चित्करत्वात् । कर्तृस्थभावक्रियेषु सू-

र्त्तिकमतानुसारेणोक्तत्वात् । सूत्रशेषे कैयटेनोक्तरीत्या कर्मकर्ति वक्षायां स्वयमेव प्रतिपादितत्वात् ।

एतेन कर्मकर्तरि मूलोदाहरणानि कर्मवद्भावस्तु कर्तृस्थभावक्रियत्वान्नेति सिद्धान्तशरीरं भाष्यवृत्त्यादिनिष्कर्षे स्थितमिति निरस्तम् । अकर्मकमात्रपरत्वे मानाभावस्योक्तत्वात् । कर्मवद्भावाविषये कर्तृस्थभावादाविव तथाविधे सकर्मके ऽपि प्रवृत्तौ बाधकाभावात् ।

एतेन गभीरायाम् इत्यादिकमप्यपास्तम् । तद्वाक्ये गभीरपदस्य जनितान्वयबोधतया प्रकृतवाक्ये च त्वद्रीत्या कर्मणो ऽन्वयबोधानुपधानेन वैषम्यात् ।

यत्त्वध्यारोपितप्रेषणपक्षे द्वितीयकक्षायां कर्मान्वय इति ।

तदसत् । वाक्यान्तरे ऽन्वितत्वे ऽपि तद्वाक्ये ऽन्वितत्वं विना सार्थक्याभावात् । णिचस्तु स्वार्थिकत्वेनाप्युपपत्त्या न वैयर्थ्यमिति वैषम्यम् । वाक्यान्तरेषु सर्ववाक्यानामन्वितत्वाद्वाक्यविशेषे ऽनन्वितपदोपादानापत्त्याऽतिप्रसञ्जकत्वाच्च । अर्थवादस्थले तु "वायुर्वै क्षेपिष्ठा देवता" इत्यादौ अर्थस्याबाधितत्वेन शक्यार्थज्ञानजन्यशाब्दविषयीभूतक्षेपिष्ठत्वगुणको वायुः स्वदैवत्यकर्मजन्यफलं शीघ्रं प्रयच्छतीत्येवंरूपवाक्यार्थसम्बन्धादेव स्तुतिरूपं प्राशस्त्यं लक्ष्यते । यजमानः प्रस्तर इत्यादौ तु यथाश्रुतस्य बाधात् गौण्या यजमानकार्यकारित्वसजातीयकार्यकारी प्रस्तर इति शाब्दे जाते तदन्तरं स्वकार्यकर्तृरूपवाक्यार्थसम्बन्धात्प्राशस्त्यं लक्ष्यते । न त्वनन्वितश्रूयमाणपदार्थकस्यैव वाक्यार्थस्य तादिति न किञ्चिदेतत् ।

स्यादेतत् । एवं सत्यध्यारोपितप्रेषणपक्षद्वितीयकक्षायामप्यात्मनेपदमेव भवतीति पर्यवसाने लावयति केदारो देवद-

क्नेत्यत्र परस्मैपदं कैयटेनैव प्रयुज्यमानमसङ्गतं स्यादिति ।

अत्राहुः लेखकप्रमादादेव तथा पाठ इति ।

यत्तु विवरणकारैरुक्तं णौचेद्ग्रहणं समानक्रियार्थम् । नचाण्यन्तेन समानक्रियत्वं ण्यन्तस्येत्यात्मनेपदं न कृतमिति, तद्वक्ष्यमाणहरदत्तग्रन्थश्रद्धाजाड्यमात्रप्रयुक्तत्वादुपेक्ष्यमिति । अधिकमग्रे वक्ष्यामः ।

यत्तूक्तं कर्मान्तरनिवृत्तिपरवाक्यस्य व्यावर्त्यं नास्तीति ।

तदसत् । आरोहन्ति हस्तिनं हस्तिपकाः । आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यानित्यस्य वार्त्तिकभाष्यकाराभ्यामेव व्यावर्त्यत्वोक्त्या तदभावकथनस्य साहसमात्रत्वात् ।

अयं तु विशेषः—वार्त्तिककृता यथाश्रुतसूत्रार्थमादाय "णेरात्मनेपदविधाने अण्यन्तस्य कर्मणस्तत्रोपलब्धिरितरथा हि सर्वप्रसङ्गः" इति हि वचनमारब्धम् । अण्यन्तस्य यत्कर्म यदा ण्यन्ते तदेव कर्म भवति तदाऽऽत्मनेपदमिति तदर्थः । भाष्यकृता तु पूर्वोपन्यस्तकैयटोक्तरीत्या ऽवान्तरवाक्यभेदमाश्रित्य सूत्राक्षरैरेव तत्रातिव्याप्तिर्वारितेति । नच णौ ये कर्तृकर्मणी तदन्यकर्मव्यवच्छेदे तात्पर्यस्य कैयटेनोक्तत्वाद्, अत्र च आरोहन्ति स्थलं मनुष्या इत्यणौ कर्तृकर्मणोरेव मनुष्यस्थलयोर्ण्यन्ते कर्मत्वात्स्यादेवात्मनेपदमिति चेत् । न । आरोहन्ति हस्तिनं हस्तिपका इत्यत्राऽणौ कर्तृकर्मभ्यां हस्तिहस्तिपकाभ्याम् अन्यस्य स्थलमितिकर्मणः सत्त्वात् । नचारोहन्ति स्थलं मनुष्या इत्यण्यन्तावस्थामादायाऽतिप्रसङ्ग एवेति वाच्यम् । तस्यामवस्थायां यत्कर्म स्थलरूपं तस्योक्तण्यन्तावस्थायां कर्तृत्वविरहात्तृतीयवाक्यार्थेनैव तद्वारणात् । आरोहन्ति हस्तिनं हस्तिपका इत्यण्यन्ताव-

स्थायां ये कर्तृकर्मणी तदतिरिक्तकर्माभावं चादायातिप्र-सङ्गस्यापादयितुमशक्यत्वात्। तथा च यस्यामण्यन्तावस्थायां कर्मणो ण्यन्ते कर्तृत्वं तस्यामेव ये कर्तृकर्मणी तदतिरिक्त-कर्मव्यवच्छेदे तात्पर्यमिति पर्यवसन्नम्। आरोहयमाणो हस्ती-त्यत्र तु भवत्येवात्मनेपदम्। अध्यारोपितप्रेषणपक्षतृतीयकक्षायां विशेष्याभावादेव तदतिरिक्तकर्माभावसत्त्वात्। 'दर्शयते भृत्या-न् राजा' इत्यत्र तदीयद्वितीयकक्षायां तु पश्यन्ति भृत्या रा-जानमित्यण्यन्तावस्थायां कर्तॄणामेव भृत्यानां कर्मत्वात्कर्तृ-कर्मातिरिक्तत्वाभावप्रयुक्तविशिष्टाभावादिति न कोऽपि दोषः।

एतेन स सन्ततं दर्शयते गतस्मयः कृताधिपत्यामिव साधु बन्धुतामिति भारविप्रयोगोऽपि व्याख्यातः। अत एव "हृक्रोरन्यतरस्याम्" इत्यत्र "अभिवादिदृशोरात्मनेपदे उप-संख्यानम्" इति वार्त्तिकव्याख्याया पश्यन्ति भृत्या राजानम्, दर्शयते भृत्यान् राजा, दर्शयते भृत्यैराजा इत्यत्र "णेरणौ" इति आत्मनेपदमिति भाष्यकृद्भिर्व्याख्यातम्।

न च कर्मसञ्ज्ञाविरहपरमेव तद्भाष्यमिति वाच्यम्। सङ्कोचे मानाभावात्।

एतेन द्वितीयवाक्यार्थः प्रसासस्यैव गतार्थः। ण्यन्तादात्म-नेपदं स्यादणौ यत्कर्म णौ चेत्स कर्त्तेत्युक्ते प्रसासत्तेरेतद्गम्यते ये-न णिचा ण्यन्तादात्मनेपदं विधित्सितम् अण्यन्ते तत्प्रकृतौ यत्कर्म तदेव चेत्तस्मिन्नेव ण्यन्ते कर्तेति। इह तु यत्रायमुपाधिः कृतमेव तत्रात्मनेपदम् आरोहयमाण इति। स्थलमारोहयतीत्यत्र त्वणौ कर्मणः स्थलस्य णौ कर्तृत्वाभावादयमुपाधिरेव नास्ती-ति नात्मनेपदप्रसङ्ग इति।

तदप्यसत्। आरोहन्ति हस्तिनं हस्तिपका इत्यत्र शानच्प्र-

कृत्यन्तर्गतस्येव तिङ्प्रकृत्यन्तर्गतस्यापि णेरभावसत्त्वात् तत्र कर्मणो हस्तिनः स्थलमारोहयति मनुष्यानिति ण्यन्ते कर्तृत्वसद्भावादतिप्रसङ्गस्य दुर्वारत्वात् । ननु मनुष्याः स्थलमारोहन्तीत्यण्यन्ते कर्मणः स्थलस्य तत्र कर्तृत्वं नास्तीति चेत्किं यावतामणौ कर्मत्वं तावतां णौ कर्तृत्वमित्यभिमतं प्रत्यासत्तिवादिनः।ओमिति चेन्न।आरोहयमाणो हस्तीति अध्यारोपितप्रेषणतृतीयकक्षायामपि आत्मनेपदाभावप्रसङ्गात् । मनुष्याः स्थलमारोहन्तीत्यण्यन्तावस्थायां कर्मणः स्थलस्य तृतीयकक्षायां कर्तृत्वाभावात् । एतेन णित्वेनैक्यं गृहीत्वा शानच्प्रकृत्यन्तर्गतस्य णेरभावे कर्मणो हस्तिन एव तिङ्प्रकृतिभूतण्यन्तार्थे कर्तृत्वादुक्तस्थले ऽतिप्रसङ्गशङ्कोपपत्तिरित्यपि निरस्तम् । तिङ्प्रकृत्यन्तर्गतणिजभावस्यापि तत्र सत्त्वेनोक्तरीत्यैवातिप्रसङ्गोपपत्तौ णित्वेनैक्यविवक्षायां प्रयोजनाभावादिति केचित् ।

स्यादेतत् । येन णिचा ण्यन्तादात्मनेपदं विधित्सितं तत्र ये कर्तृकर्मणी तस्य णेरभावे यत्र तयोः कर्मत्वं कर्तृत्वं च तादृशण्यन्तादात्मनेपदमिति प्रत्यासत्त्यर्थ इति चेत् न । अध्यारोपितप्रेषणतृतीयकक्षायां निवृत्तप्रेषणस्य च चतुर्थकक्षायामव्याप्तेः । तत्र कर्मणो ऽप्रसिद्धत्वात् । अथ यथासम्भवं ण्यन्ते कर्तुरणौ कर्मत्व ण्यन्ते कर्मणोऽणौ कर्तृत्वं चेति चेन्न। उक्तस्थले ऽतिप्रसङ्गतादवस्थ्यात् । ण्यन्ते कर्मणो मनुष्याणामणौ कर्तृत्वसत्त्वात, निवृत्तप्रेषणतृतीयकक्षायामप्यतिप्रसङ्गाच्च। ण्यन्ते कर्मणो हस्तिन आरोहति हस्ती इति द्वितीयकक्षायां कर्तृत्वसद्भावात् ।

स्यादेतत्। येन णिचा ण्यन्तादात्मनेपदं विधित्सितं तस्य णेरभावे धात्वर्थताऽवच्छेदकं यत् फलं तदेव यस्मिन् ण्यन्ते धात्व-

र्थताऽवच्छेदकं धात्वर्थो वा भवति तस्मादात्मनेपदम्। आरोहन्ति हस्तिनं हस्तिपका इत्यत्र हि धात्वर्थत्वावच्छेदकं न्यग्भवनम्, स्थलमारोहयति मनुष्यानित्यत्र तु न्यग्भवनानुकूलो यो मनुष्यनिष्ठव्यापारस्तदनुकूलव्यापारश्च णिजर्थः। तथा च न्यग्भवने स्थलस्य तदनुकूलव्यापारे च मनुष्याणा अन्वये स्थलनिष्ठं यन्न्यग्भवनं तदनुकूलव्यापारवान्हस्तीति धीः। तत्र न्यग्भवनं ण्यन्तधात्वर्थतावच्छेदकतावच्छेदकमेव भवति नतु धात्वर्थतावच्छेदकं धात्वर्थो वा। व्यापारद्वयस्यैव क्रमेण तथात्वादिति नातिप्रसङ्गः। चरमकक्षायामकर्मकतया धात्वर्थतावच्छेदकमप्रसिद्धमिति धात्वर्थो वेत्युक्तम्। नच दर्शयते राजा भृत्यानित्येतत्संग्रहो न स्याद्धात्वर्थतावच्छेदकत्वाभावाद्विषयत्वापत्त्युपसर्जनविषयत्वापादनं हि पश्यन्ति भृत्या राजानमित्यत्र दृशेरर्थः। प्रेषणान्तरारोपे तु विषयत्वापत्त्यनुकूलो यो भृत्यनिष्ठो व्यापारश्चक्षुः संयोगादिस्तनुकूलो यो व्यापारश्चक्षुःसंयोगादेरनुकूलदेशावस्थानादिस्तदाश्रयो राजेत्यन्वयबोधः। विषयत्वापत्तौ राजनिष्ठत्वमर्थाद् गृह्यते, तत्र च चक्षुःसंयोगादिरेव ण्यन्तधात्वर्थतावच्छेदको न तु विषयत्वापत्तिरिति वाच्यम्। ण्यन्तत्वाभावदशाया धात्वर्थतावच्छेदकफलाश्रयो यस्तदन्यवृत्तित्वेनानवगम्यमानत्वे सति धात्वर्थे प्रकारत्वमात्रस्य साक्षात्परम्परासाधारणस्य धात्वर्थतावच्छेदकपदेन विवक्षितत्वात्। अत्र च विषयत्वापत्ते राजान्यावृत्तित्वेनानवगम्यमानत्वसत्त्वान्नातिव्याप्तिः। आरोहन्ति हस्तिनं हस्तिपका इत्यत्र धात्वर्थतावच्छेदकन्यग्भवनाश्रयाद्धस्तिनोऽन्यस्मिन्स्थले वृत्तित्वेन न्यग्भवनस्य स्थलमारोहयति मनुष्यानित्यत्र प्रतीयमानत्वान्नातिप्रसङ्ग इति चेत्। न। प्रत्यासत्त्या

हि यदन्तादात्मनेपदं यत्प्रतियोगिकाभावश्च कर्मोपलक्षणम् । यदन्तत्वं च कर्तृविशेषणम् । सा णिज्व्यक्तिरेका ग्राह्या इत्येतावन्मात्रे सिद्धे ण्यन्तत्वाभावदशायां धात्वर्थतावच्छेदकफलाश्रयो यत्र ण्यन्तावस्थायां णिजर्थव्यापाराश्रयस्तत्र ण्यन्तादात्मनेपदं स्याद् इत्येव सूत्रार्थो यथोक्तस्थलेऽपि प्रसक्ते एव सिद्ध्यति, नतूक्ततदन्यवृत्तित्वेनाप्रतीयमानपर्यन्तमिति तादृशार्थलाभायोक्तरीत्या द्वितीयवाक्यार्थाश्रयणमावश्यकमिति तत एवोक्तार्थः सिध्यति इति भगवदभिप्रायात् । तस्माद् द्वितीयवाक्यार्थबलाद्यात्रानर्थो विवक्षितः वाक्यैक्येऽपि स लभ्यते प्रत्यासत्त्येति साहसम् ।

तदयं भाष्यमतनिष्कर्षः—अण्यन्ते सति यत्र यौ किल फलव्यापारयोराश्रयौ ण्यन्ते तत्र तदन्यकर्मविरहस्तत्कर्मणः कर्तृता धातोः स्याच्चेत आत्मनेपदमनाध्यानार्थकादिति । असौ पन्था वार्त्तिकभाष्यकैयटमुखग्रन्थाशयग्रन्थिगः ।

वृत्तिकारमते त्वयमर्थः—ण्यन्तादात्मनेपदं स्यादनाध्याने अणौ यत्कर्मेत्यस्य कर्मान्तरानिवृत्तिरर्थः । व्याख्यानं कैयटोक्तरीत्यैव । एतावांस्तु विशेषः—तत्र णौ चेदित्यन्तेन कर्मान्तरनिवृत्तिलाभः, अत्र तु अणौ यत्कर्मेत्येतावतैव । सामर्थ्याण्णेरिति सन्निहितत्वाच्च ण्यन्तावस्थायामेव अणौ कर्मणो णौ कर्तृत्वविधानासिद्धिः । अणौ यत्कर्मेत्यनुवादसामर्थ्यादेवाणौ कर्मत्वसिद्धेस्तत्रैव तद्विधानस्यानुपयोगात् । कर्मपदं कर्ममात्रपरं नतु कर्तृकर्मोभयपरमिति ।

"णौ चेद्"इति तृतीयं वाक्यम् । अणौ यदित्यनुवृत्त्या अणौ यत् प्रतिपाद्यं वस्तु णौ चेत्तदेव प्रतिपाद्यमित्यर्थः । णौचेद्ग्रहणं समानक्रियार्थमिति वृत्तिग्रन्थस्वरसात् ।

स कर्तेति चतुर्थम् । अणौ यत्कर्म णौ चेत्स क-

तेति तदर्थः । अनाध्यान इत्यपि प्रसज्यप्रतिषेधपक्षे पञ्चमं वाक्यम् । आरोहन्ति हस्तिनं हस्तिपकाः । आरोहयते हस्ती स्वयमेव । सिञ्चन्ति हास्तिनं हस्तिपकाः । सेचयते हस्ती स्वयमेव । पश्यन्ति भृत्या राजानम्, दर्शयते राजा स्वयमेव । णेरिति किम् । आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती साध्वारोहति । अणाविति किम् । गणयति गणं गोपालकः, गणयति गणः स्वयमेव । गणसंख्याने चुरादावदन्तः । अतो लोपस्य स्थानिवत्त्वान्न वृद्धिः । गण्यमानो गणो यदा गणनक्रियायामानुलोम्यं प्रतिपद्यते तदा तद्व्यापारमात्रवृत्तेर्हेतुमण्णिच् । पुनर्निवृत्तप्रेषणदशायां प्रत्युदाहरणम् । णावेव गणः कर्म तत्रैव च कर्तेति नात्मनेपदम् । नापि कर्मवद्भावेन, कर्तृस्थक्रियत्वात् । संख्यानिमित्तकज्ञानविशेषात्मकस्य गणनस्य कर्तर्येव वृत्तेः । कर्मग्रहणं किम् । लुनाति दात्रेण, लावयति दात्रं स्वयमेव । अण्यन्तावस्थायां दात्रस्य करणत्वात् । णौचेद्ग्रहणं समानक्रियार्थम् । आरोहन्ति हस्तिनं हस्तिपकाः । आरोहयमाणो हस्ती भीतान् सेचयति मूत्रेण । प्रयोज्यप्रयोजकभावलक्षणे ऽपि क्रियाभेदे मा भूण्णिच् । प्रकृत्युपात्तक्रियायामेव यथा स्यादित्यर्थात् । यद्यपि प्रयोज्यप्रयोजकभावक्रियाभेदेऽप्यनेनात्मनेपदं वार्यत एव, तथाऽपि अत्यन्तभेदप्रदर्शनार्थं सेचयतीति धातुभेदः प्रत्युदाहृतः । भीताश्चात्रारोहयतेः कर्म न सेचयतेः । आरोहयमाण इति णिचश्चेत्यात्मनेपदम्, चानश् वा । भीता ह्यारोहयमाणा भीत्या मूत्रयन्ति । तेन हस्ती सिच्यते । कर्मणो ऽविवक्षितत्वात्सेचयतेरकर्मकत्वम् । यत्सग्रहणमनन्यकर्मार्थम् । तथाहि—

उद्देशप्रतिनिर्देशाल्लब्धे यत्संग्रहे पुनः ।

तद्ग्रहो वाक्यभेदेन कर्मान्तरनिवृत्तये ॥

तेनारोहन्ति हस्तिनं हस्तिपकाः । आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यान् इत्यत्र नात्मनेपदम्, मनुष्यरूपस्य कर्मान्तरस्य सत्त्वात् ।

यद्यपि भावकर्मणोरात्मनेपदस्य सिद्धत्वात्कर्तर्येवानेन भवितव्यम्, तथाऽप्यणौ यत् कर्म तस्मिन्नेव कर्तरि यथा स्यात्, कर्त्रन्तरे मा भूदित्येवमर्थं कर्तेत्युक्तम् । तेन आरोहन्ति हस्तिनं हस्तिपकाः । तानारोहयति महामात्र इत्यत्र न । रुहेर्गत्यर्थत्वाद्धस्तिपकानां कर्मसंज्ञा । यद्येवं कर्मान्तरसद्भावादेवात्र न भविष्यति । नैतदस्ति । अस्ति ह्यत्राणौ कर्मणो हस्तिनो णावपि कर्मत्वेनान्वयः । नचासति कर्तृत्वविधौ कर्मान्तरव्यावृत्तिर्लभ्यते । यद्वा प्रयोजकव्यापारे तात्पर्याद् यदा हस्तिपकाः कर्मत्वेनाविवक्षितास्तदेदं प्रत्युदाहरणम् । अनाध्याने किम् । स्मरति वनगुल्मं कोकिलः । स्मरयत्येनं कोकिलं वनगुल्मः । वृत्तौ वनगुल्मस्येति षष्ठी तु कर्मत्वोपलक्षणार्था । वनगुल्मस्य रमणीयत्वप्रतिपादनाय प्रयोजकत्वविवक्षायां णिच् । एनमिति बुद्धिस्थार्थत्वात्कोकिलस्य कर्मसंज्ञा । एतदप्युपलक्षणं कर्मान्तरसत्त्वादेव प्राप्त्यभावात् । तस्मात् कर्माविवक्षायां प्रत्युदाहरणं द्रष्टव्यमिति हरदत्तानुसारी तदर्थः । अधिकमग्रे वक्ष्यामः ।

कौस्तुभकारास्तु व्याचख्युः-णेरित्येकं वाक्यम् । अर्थः पूर्ववत् । अणौ यत्कर्म णौ चेदिति द्वितीयम् । अणौ या क्रिया सैव चेण्ण्यन्तेनोच्यते इति तदर्थः। "कर्तरि कर्मव्यतिहारे" इत्यादिवत् कर्मशब्दस्य क्रियापरत्वाश्रयणात् । स कर्तेति तृतीयम् । अणावित्यादेरनुवृत्त्या णिच्प्रकृत्यर्थं प्रति यत् कर्मकारकं स एव चे-

ण्यन्ते कर्तेत्यर्थः । शब्दाधिकाराश्रयणेन कर्मपदस्यात्र कारकविशेषपरतया व्याख्यानात् । भाष्यवार्त्तिकयोरपि द्वितीयवाक्यगतं कर्मपदं क्रियापरतयैव व्याख्येयम् । द्वितीयवाक्यप्रयोजनं तु अध्यारोपितप्रेषणपक्षे द्वितीयकक्षायां मा भूत् । तत्र प्रेषणाधिक्यान्नातिव्याप्तिः । तृतीयवाक्यप्रयोजनं तु निवृत्तप्रेषणपक्षे तृतीयकक्षायां मा भूत् । तत्राणौ कर्मत्वमेव न तु कर्तृत्वमिति नातिव्याप्तिः । निवृत्तप्रेषणपक्षे चतुर्थकक्षायां प्रथमकक्षामादाय तृतीयवाक्यार्थस्य द्वितीयकक्षामादाय च द्वितीयवाक्यार्थस्य समन्वयान्नातिव्याप्तिरिति ।

अत्रेदं वक्तव्यम्—अध्यारोपितप्रेषणद्वितीयकक्षायामप्यात्मनेपदस्य भाष्यकारैरभ्युपगमेन तद्वारणमनुपपन्नम् । एवं तृतीयकक्षायामप्यव्याप्तिः । आरोहन्ति हस्तिनं हस्तिपका इत्यत्र न्यग्भवनावच्छिन्नव्यापारस्य आरोहयते हस्तीत्यत्र च न्यग्भवनमात्रस्य प्रतीत्या समानक्रियत्वाभावात् ।

यत्तु क्रियाया आधिक्यमात्रं व्यवच्छिद्यते नतु न्यूनत्वमपीति । तन्न । प्रकृत्युपात्ता या क्रिया सैव चेण्ण्यन्तेनोच्येत इत्यतो न्यूनाधिक्यव्यवच्छेदस्यैव प्रतीयमानत्वात् । प्रकृत्युपात्तक्रियात्वं विशेष्यतावच्छेदकीकृत्य तदवच्छिन्नान्यस्मिण्ण्यन्तवाच्यत्वव्यवच्छेदस्येव तदवच्छिन्ने ण्यन्तवाच्यत्वस्यापि प्रतीतेः । एवकारार्थान्योन्याभावप्रतियोगितावच्छेदकधर्मस्य व्यवच्छेद्यधर्मप्रकारकबोधो विशेष्यतावच्छेदकतया च भानमिति नियमात् । अत एव 'पार्थ एव धनुर्धरः' इत्यादौ पार्थान्यस्मिन्धनुर्द्धरत्वव्यवच्छेदः, पार्थे धनुर्द्धरत्वं च प्रतीयते । अन्यथा "पार्थो धनुर्द्धरो न वा" इति संशयस्य तद्वाक्यार्थबोधादनिवृत्तिप्रसङ्ग इति सम्प्रदायः ।

स्यादेतत् । आरोहति हस्ती इत्यत्र निवृत्तप्रेषणद्वितीयकक्षायां न्यग्भवनमात्रस्य प्रकृत्युपात्तक्रियात्वात् तद्रूपविशेष्यतावच्छेदकसामानाधिकरण्यमात्रेण ण्यन्तवाच्यत्वप्रतीतावपि चरमकक्षायामात्मनेपदं सुलभमेवेति उक्तविशेष्यतावच्छेदकावच्छिन्नयावत्क्रियासाम्यस्यासम्भवादेव विवक्षानुपपत्तेरिति चेन्न । अध्यारोपितप्रेषणपक्षे द्वितीयकक्षायामप्यात्मनेपदस्य दुर्वारत्वात् । आरोहतीत्यत्रापि ण्यर्थस्यान्तर्भावयितुं शक्यतया आरोहति हस्तिपकान् हस्ती इत्यत्र न्यग्भवनानुकूलहस्तिपकनिष्ठव्यापारानुकूलव्यापारवान् हस्तीति बोधस्य आरोहयति हस्तिपकान् हस्तीत्येतद्वाक्यजन्यबोधस्य च तुल्यतया ण्यन्ताण्यन्तयोः समानक्रियत्वसाम्यात् । अध्यारोपितप्रेषणतृतीयकक्षायामपि निवृत्तप्रेषणद्वितीयकक्षामादायैव क्रियासाम्योक्तेः । अणौ कर्मणो णौ कर्तृत्वं नास्ति प्रथमकक्षाकर्मणो हस्तिन एव तत्र कर्मत्वात् । हस्तिपकानामेवोभयत्र कर्तृत्वादिति नातिव्याप्तिरिति वैषम्यम् । इयं कक्षा न ग्रन्थकारैरुक्तेति चेन्न । न्यायाविशेषे तस्याकिञ्चित्करत्वात् । ण्यन्तसमानार्थकत्वमात्रस्य बहिर्भावबीजत्वे निवृत्तप्रेषणप्रथमद्वितीयपक्षयोरप्युच्छेदापत्तेः । अपिच ग्रन्थकारैर्नोक्तेत्यसिद्धम्, शुद्धेऽपि णिजर्थमन्तर्भाव्य बहुषु व्याख्यायमानत्वात् ।

अवस्थां पञ्चमीमाह ण्यन्ते तत्कर्मकर्तरि । इति—

वाक्यपदीये आरोहयते हस्तीत्यवस्थायाः पञ्चमीत्वस्य साक्षादेवोक्तत्वाच्च । पूर्वोक्तकुसृष्टिव्याख्यानस्यानुपादेयत्वात् । तथा—

न्यग्भावनं न्यग्भवनं रुहौ शुद्धे प्रतीयते ।

इत्यत्र न्यग्भावनपदेन न्यग्भवनानुकूलव्यापारो न्य-

ग्भवनानुकूलव्यापारानुकूलव्यापारश्चेत्युभयमादाय कक्षाद्वयम- भिमतम् । ण्यन्तस्य पुनर्ण्यन्तस्य च न्यग्भावनपदे व्याख्यानात् । तथा चारोहन्ति हस्तिनं हस्तिपकाः । हस्तिनिष्ठं यन्न्यग्भवनं तदनुकूलव्यापारवन्त इत्यर्थः इति प्रथमकक्षा । ततोऽन्तर्भावितण्यर्थतायाम् आरोहति हस्तिपकान् हस्ती । न्यग्भवनानुकूलो यो हस्तिपकानिष्ठो व्यापारस्तदनुकूलव्यापारवानित्यर्थ इति द्वितीया । ततो व्यापारद्वयस्याप्यविवक्षायाम् आरोहति हस्ती इत्यादिकं पूर्ववदिति भवति आरोहयते हस्ती इत्यात्मनेपदार्हा कक्षा पञ्चमीति द्वितीयकक्षायामेव प्रेषणनिवृत्तिरित्यस्याप्रयोजकत्वात् । नन्वत्राणौ कर्मणो णौ कर्तृत्वाभावादेव नातिप्रसङ्गः । आरोहति हस्तिपकान् हस्ती आरोहयति हस्तिपकान् हस्तीत्युभयत्रापि सत्त्वात् । नच यामवस्थामादाय क्रियासाम्यं तत्कर्मण एव णौ कर्तृत्वं विवक्षितमिति वाच्यम् । अध्यारोपितप्रेषणपक्षतृतीयकक्षायामव्याप्तेः । द्वितीयकक्षामादाय हि तत्र क्रियासाम्यम् तत्र त्वकर्मणोऽप्रसिद्धत्वात् । निवृत्तप्रेषणतृतीयकक्षायां तु प्रथमकक्षामादाय क्रियासाम्येऽपि उक्ततृतीयवाक्यार्थानन्वयान्नातिव्याप्तिरिति स्पष्टमेव वैषम्यात् । वृत्तिकारस्याप्ययमेवाभिप्रायः । आरोहयमाणो हस्ती स्थलमारोहयति हस्ती मनुष्यानित्येतद्व्यावृत्त्यर्थं कर्मान्तरानिवृत्तेस्तेन व्याख्यातत्वात् । अन्यथा आरोहन्ति हस्तिनं हस्तिपका इत्येतदपेक्षया तत्र प्रेषणान्तरप्रतीत्या क्रियासाम्याभावादेवातिप्रसङ्गानुपपत्तेः । णौचेद्ग्रहणं समानक्रियार्थमिति तन्मतेऽपि स्वीकारात् ।

अयं तु विशेषः—त्वन्मते अणौ यत्कर्म णौ चेदित्येतेन समानक्रियत्वलाभः । तन्मते तु णौचेदित्यनेन पूर्वानुवृत्तिसहितेनेति ।

एतेन कर्मपदं क्रियापरमिति काण्याकरग्रन्थे नोक्तमिति परास्तम् ।

उक्तरीत्या तु न्यग्भवनानुकूलव्यापारस्य आरोहति हस्तिपकान् हस्तीत्यत्रेव स्थलमारोहयति मनुष्यानित्यत्रापि सत्त्वेन क्रियासाम्यसत्त्वादतिप्रसङ्गापत्तौ कर्मान्तरनिवृत्तिवाक्येन तद्वारणं सम्भवतीति । स्थलमित्यादिकर्मान्तराभावे तु अर्थादेव न्यग्भवनं हस्तिनिष्ठतयैव गम्यते इति । एतेन समानक्रियत्वाभावादध्यारोपितप्रेषणद्वितीयकक्षायां नात्मनेपदमिति विवरणग्रन्थो ऽपि चिन्त्यः । एतेनारोहन्ति हस्तिनं हस्तिपकाः, तानारोहयति हस्तीत्यत्र मा भूदिति हरदत्तो ऽपि व्याख्यातः । अध्यारोपितप्रेषणपक्षे द्वितीयकक्षायामपि यथाव्याख्यातनिवृत्तप्रेषणद्वितीयकक्षामादाय क्रियासाम्यस्य सत्त्वात् । एतेन निवृत्तप्रेषणपक्षे आद्यकक्षाद्वयस्य ण्यन्तत्वाभावात् तृतीयस्यां तु हस्तिनः कर्तृत्वाभावात्, चतुर्थ्यां तु कर्मान्वयात् अध्यारोपितप्रेषणपक्षे च द्वितीयकक्षायां समानक्रियत्वाभावात्, प्रथमायां च ण्यन्तत्वाभावात्, तृतीयस्यां च कर्माननन्वयात् हरदत्तोक्तिरनुक्तसम्भवग्रस्तेति कौस्तुभोक्तमप्यपास्तम् । तस्मात्समानक्रियत्वाविवक्षायामपि अध्यारोपितप्रेषणद्वितीयकक्षायामात्मनेपदं दुर्वारमेवेति सिद्धम् ।

केचित्तु कौस्तभोक्तार्थस्य सूत्रकाराभिमतत्वे "कर्मवत्कर्मणा तुल्यक्रियः"इति सूत्रादनन्तरं "णेरणावनाध्याने" इत्येव सूत्रं कुर्यात् । अनाध्याने समानधातावणौ कर्मणा तुल्यक्रियो ण्यन्तस्य कर्ता कर्मवदिति व्याख्याने तदभिमतार्थलाभात् । त्वद्रीत्या कार्यातिदेशाश्रयणेनैव सिध्या तदभिमतपूर्वविप्रतिषेधज्ञापनक्लेशाभावाच्च । कर्तृस्थभावक्रियार्थं सूत्रारम्भ इत्यस्य तुल्य-

त्वात् । यक्चिणोश्च कर्मस्थभावक्रियेष्विव कर्तृस्थभावक्रियेष्वपि विशेषवचनेनैव वारणीयत्वात् । किञ्च आरोहयमाणो हस्ती पर्वतमारोहयति इति निवृत्तप्रेषणतृतीयकक्षायामप्यात्मनेपदं स्यात् प्रथमकक्षामादाय क्रियासाम्यस्य, आरोहन्ति हस्तिनं हस्तिपका इत्यणौ कर्मणो हस्तिनः कर्तृत्वस्य च सत्त्वात् । कर्मान्तरनिवृत्तिवाक्यस्य त्वयाऽनभ्युपगमात् । नच यां कक्षामादाय क्रियासाम्यं तत्कक्षायामेव यत् कर्म तस्य णौ कर्तृत्वं विवक्षितमिति वाच्यम् । असम्भवापत्तेः । निवृत्तप्रेषणपक्षे द्वितीयकक्षामादाय क्रियासाम्यस्य प्रथमकक्षामादाय चाणौ कर्मणो णौ कर्तृत्वस्य स्वयमेव व्याख्यानात् । द्वितीयकक्षायां कर्मण एवाप्रसिद्धत्वात् । नचेष्टापत्तिः । भाष्यकारादिमतविरुद्धत्वात् । यस्यामण्यन्तावस्थायां कर्मणो ण्यन्ते कर्तृत्वं तस्यामेव ये कर्तृकर्मणी तदन्यकर्मव्यवच्छेदे कर्मान्तरनिवृत्तिवाक्यस्य तात्पर्यमिति व्यवस्थितत्वात् । वृत्तिकौस्तुभोभयमते ऽप्यकर्मकाणामेवोदाहरणत्वस्वीकारात् इत्याहुः ।

स्यादेतत् । आरोहन्ति हस्तिनं हस्तिपका इत्येतत्समानार्थिकायाम् आरोहयन्ति हस्तिनं हस्तिपका इत्यस्यामपि निवृत्तप्रेषणकक्षायामात्मनेपदं स्यात् । आरोहति हस्तिपकान्हस्तीत्यणौ कर्मणां हस्तिपकानां णौ कर्तृत्वात् । तत्र ये कर्तृकर्मणी तदतिरिक्तकर्माभावाच्च अध्यारोपितप्रेषणद्वितीयकक्षाविशेषस्य दुर्वचत्वात् इति चेत् ।

न । क्रियासाम्यस्य भाष्यमते ऽपि विवक्षितत्वात् । उक्तण्यन्तानिवृत्तप्रेषणकक्षायां च क्रियायां न्यूनत्वेन तदभावात् । अध्यारोपितप्रेषणद्वितीयकक्षायां चोक्तोपाधिविशिष्टक्रियासाम्यसत्त्वादात्मनेपदोपपत्तेः । पक्षद्वयस्यापि चरमकक्षायां पूर्वोक्त-

विशिष्टाभावसहितस्य 'आरोहति हस्ती'इत्येतदवस्थामादाय क्रियासाम्यस्य सत्त्वादात्मनेपदमुपपन्नम्। क्रियासाम्यं च हरदत्तोक्तरीत्यैव व्याख्येयम् । कैयटस्याप्यत्रैव तात्पर्यम् । समानक्रियत्वं भाष्यकैयटसंमतमित्यस्य कौस्तुभकारैरङ्गीकाराच्च ।

अयं तु विशेषः—तन्मते ऽध्यारोपितप्रेषणद्वितीयकक्षाया मतिव्याप्तिवारणाय तथोक्तम्। अस्माभिस्तु यथोक्तानिवृत्तप्रेषणतृतीयकक्षायामिति । अत एव विवरणकारैः णौचेद्ग्रहणं समानक्रियाप्रतिपत्त्यर्थमिति तत्रोपन्यस्तम् । एतेन तद्विवरणं पदमञ्जरीश्रद्धाजाड्यमात्रप्रयुक्तमित्यपि निरस्तम् । उक्तरीत्या भाष्यादिसंमतत्वात्, परं त्वध्यारोपितप्रेषणद्वितीयकक्षायाम् अण्यन्तधात्वर्थक्रियासाम्यं नास्तीत्यंशे एव विवरणस्य चिन्त्यत्वमिति रहस्यम् ।

अत एव भाष्यमते "कर्मवत्कर्मणा" इत्यनन्तरं पूर्वोक्तरीत्या नैतत्सूत्रारम्भापत्तिः । अध्यारोपितप्रेषणद्वितीयकक्षायामात्मनेपदानुपपत्तिप्रसङ्गात् । कौस्तुभमते तु तस्या अलक्ष्यतया तद्दोषः कैश्चिदुक्त इति वैषम्यम्। एतादृशभाष्याभिप्रायव्यवस्थापनार्थमेव वृत्तिकृता चतुर्थवाक्यार्थो व्याख्यातः 'दर्शयते राजा भृत्यान्' इत्यत्र । तेनाप्यात्मनेपदोक्त्या भाष्यवृत्त्योर्मतैक्यनिर्णयात् । 'दर्शयते राजा भृत्यान् स्वयमेव'इति चतुर्थकक्षाया भाष्यमते ऽपि लक्ष्यतया तदुदाहरणेनाध्यारोपितप्रेषणाद्वितीयकक्षाया वृत्तिमते ऽप्यलक्ष्यत्वासिद्धेः । ननु 'कर्मकर्तरि'इत्यादिवृत्तिग्रन्थस्तु वार्त्तिकमतानुसारेण,'कर्तृस्थक्रियार्थम्' इत्यादितद्ग्रन्थो भाष्यवदत्यन्तायोगव्यवच्छेदार्थको न त्वन्ययोगव्यवच्छेदार्थको न्यायसाम्यात् । 'गणयति गणः स्वयमेव'इति ग्रन्थो ऽपि वार्त्तिकमतानुसारेणैव । भाष्यकारैर्णिग्रहणेन हेतुमण्णिच

एव ग्रहणात् । तत्राप्यात्मनेपदस्योदाहृतत्वात् । अत एव हे-लाराजेनोक्तं गणयति गणः स्वयमेवेत्यत्र त्वात्मनेपदनिवृ-त्त्यर्थं नियमार्थतया "णेरणौ" इति सूत्रं वार्त्तिककृता व्यवस्था-पितमिति । आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो ह-स्ती भीतान्सेचयति मूत्रेणेति प्रत्युदाहरणस्य त्वयमर्थः—भीता मूत्रेण हस्तिनं सिञ्चन्ति इति प्रथमकक्षा । संयोगानुकूलद्रव-द्रव्यनिष्ठक्रियानुकूलव्यापारश्च सेकपदार्थः । हस्तिनिष्ठसंयो-गानुकूला या मूत्ररूपद्रवद्रव्यनिष्ठाक्रिया तदनुकूलव्यापारवन्त इत्यर्थः । ततो ण्यर्थान्तर्भावे हस्ती भीतैर्मूत्रेण सिञ्चति । संयोगानुकूलद्रवद्रव्यक्रियानुकूलव्यापारानुकूलव्यापारवानित्य-र्थः । एतत्समानार्थायाम् अध्यारोपितप्रेषणद्वितीयकक्षायां हस्ती भीतैः सेचयते मूत्रेणेति । तत्रात्मनेपदं भवत्येव । गति-बुद्ध्यादिसूत्रस्यानवकाशाद्भीतानां कर्मत्वाभावात्कर्तरि तृतीया॥

# भीस्म्योर्हेतुभये ६८।

भयेति विस्मरणस्याप्युपलक्षणम् । आभ्यां ण्यन्ताभ्या-मात्मनेपदं प्रयोजकस्यैव तज्जनकत्वे । मुण्डो भीषयते । "भियो हेतुभये" इति षुक् । "बिभेतेः" इति वैकल्पिकात्वपक्षे भा-पयते । षुग्विधावीकारप्रश्लेषादत्र तदभावः । जटिलो वि-स्मापयते । हेतुभये किम् कुञ्चिकया भाययति, रूपेण वि-स्माययति । अत्र "नित्यं स्मयतेः" इति आत्वं न भवति । उक्तार्थकहेतुभयपदस्य तत्रानुवृत्तेः । यद्यपि हेतुव्यापारे णि-ज्विधानं तस्यापि भयहेतुत्वं तथा ऽपि विशेषणसामर्थ्याद्धातु-स्वरूपमेवान्यनिरपेक्षन्धात्वर्थप्रयोजकं चेत्यर्थः ।

एतेन मनुष्यवाचा मनुवंशकेतु विस्माययन्निति व्याख्यात-

विस्मापयन्निति पाठः प्रामादिकः । णिजन्तरेण प्राचेत्यस्य करणार्थत्वमपहाय प्रयोज्यकर्तृपरतया वा समाधेयः ।

## गृधिवञ्च्योः प्रलम्भने ६९ ।

ण्यन्ताभ्यामाभ्यां वञ्चनार्थाभ्यामात्मनेपदम् । माणवकं गर्द्धयते वञ्चयते वा । प्रलम्भने किम् । श्वानं गर्द्धयति । कुत्र-चित्तस्येच्छामुत्पादयतीत्यर्थः । अहिं वञ्चयति वर्जयतीत्यर्थः ।

## लियः संमाननशालीनीकरणयोश्च ७० ।

चकारात् प्रलम्भनग्रहणम् । लीङ् प्रश्लेषणे । दिवादिः । अञित् क्र्यादिः । द्वयोरप्युपादानम् । निरनुबन्धकपरिभाषाया "वामदेवाड् ड्यड्ड्यौ" इति डित्करणज्ञाप्यतया प्रत्ययविषयकत्वात् । जटाभिरालापयते । पूजां प्राप्नोतीत्यर्थः । श्येनो वर्त्तिकामुल्लापयते । न्यक्करोतीत्यर्थः । बालमुल्लापयते । वञ्चयतीत्यर्थः । "विभाषा लीयतेः" इत्यात्वम् एतद्विषये नित्यं व्यवस्थितविभाषात्वात् । नच "लीयतेः" इति श्यना निर्देशात् लीनातेरात्वं न स्यादिति वाच्यम् । उभयार्थको निर्देशो ऽयमिति सिद्धान्तात् । संमाननादिष्विति किम् । बालमुल्लापयति । आश्लेषयतीत्यर्थः ।

## मिथ्योपपदात् कृञोऽभ्यासे ७१ ।

ण्यन्तात्कृञो मिथ्योपपदादात्मनेपदं स्यात्पौनःपुन्ये । पदं मिथ्या कारयते । सापचारं स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः । कृञ् अत्राकर्मक उच्चारणार्थः । ण्यन्तस्तु उच्चारणार्थः सकर्म-

कश्च। मिथ्येति किम् । पदं सुष्टु कारयति । कृञः किम् । पदं मिथ्या वाचयति । अभ्यासे किम् । सकृत्पदं मिथ्या कारयति ।

# स्वरितञितः कर्त्रभिप्राये क्रियाफले ७२ ।

स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् कर्तृगामिनि क्रियाफले । क्रियाफलमत्र यदुद्देशेन तत्क्रियाप्रवृत्तिस्तत् । नत्ववान्तरफलं यत्तद् । तदुक्तम्—

यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः ।
तत् प्रधानं फलं तेषां न लाभादि प्रयोजनम् ॥

तेन दक्षिणावेतनादिकमादाय नात्मनेपदम् । अत्र क्रियाफलस्यातिरिक्तगामित्वविवक्षायामात्मनेपदमसाधु, न तु कर्तृगामित्वाविवक्षायाम् । अत एव कर्त्रभिप्राये इति किम् कर्तृभिन्नगामित्वे मा भूदिति व्याख्यातं नतु कर्तृगामित्वाभाव इति । तेन भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणेत्यत्रात्मनेपदमनर्थकमिति काव्यप्रकाशः सङ्गच्छते । अन्यथा च्युतसंस्कृतावेवान्तर्भावः स्यादिति प्रदीपकारादयः । यद्गतफलकामनया कर्म क्रियते तद्गतमेव फलमिति नियमात् गयाश्राद्धं पितरि, जातेष्टिः पुत्रे स्वर्गपूतत्वे जनयतः । मातापित्रादिस्वर्गकामनाकृतं च पुष्करणीयागादिकं मातापित्रादिस्वर्गजनकम् । "स्वर्गकामः" इत्यादौ स्वपरसाधारणस्वर्गस्य फलत्वकल्पनात् । यजेतेत्यात्मनेपदं च क्रियाफलस्य कर्त्रनिष्ठत्वेऽपि कर्त्रभिप्रेतत्वमात्रेण साध्विति मणिकृतः। मिश्रास्तु पुरुषविशेषस्य फलार्थं विशिष्य यत् कर्मोक्तं तत् तन्निष्ठफलेच्छया कृतं पुरुषान्तरे फलजनकमस्तु इत्थं च

पुत्रादिपूतत्वार्थमपि जातेष्ट्यादिकमस्तु यद्गतं फलं शास्त्रदेशितं तद्गतत्वेनैव फलकामना प्रयोजिकेत्यर्थे "स्वर्गकाम" इति श्रुतौ स्वत्वस्यौत्सर्गिकत्वान्मातापित्रादिस्वर्गार्थं पुष्करणीयागादिकरणविरोधः । दद्यादहरहः श्राद्धं पितॄणां प्रीतिमावहन्नित्यादौ परपित्रादिलाभापत्तिः । आत्मनेपदमपि फलस्य कर्तृगतत्वे एव साधु । कर्तारं चेत् क्रियाफलमभिप्रैति अभिसंबध्नातीति व्याख्यानात् । अत एव कर्त्रभिप्रायक्रियाफलयोः सामानाधिकरण्यं सूत्रे सङ्गच्छते । अभिप्रायपदस्य विषयलक्षणायां गौरवात् । अत एव यजन्ति याजका इति प्रत्युदाहरणम् । नच तेषां वेतनमात्रे ऽभिप्रायः । साङ्गे फले सत्येव वेतनमिति वेतनोपरागेण फलाभिप्रायस्यापि सत्त्वात् । तस्मात्परार्थं पुष्करिणीयागमहादानादेः शिष्टैरविगानेनाचरणात्स्वपरसाधारणस्वर्गादिकामः पुष्करणीयागादिकं कुर्यादिति विशिष्यैव श्रुतिः कल्प्यते इत्याहुः ।

केचित्तु तदपेक्षया प्रत्यक्षाविधेरेव शिष्टाचारबलात्सामान्यपरत्वावधारणादौत्सर्गिकस्वपरताबाधो युक्तः । पितृभ्य इत्यादौ तु स्वपितृभ्य इत्यादिवचनान्तरैकवाक्यतया शिष्टाचारेण च संबन्धित्वेनौत्सर्गिकस्वपितृपरत्वमेवेति मणिकृदुक्तं युक्तम् । आत्मनेपदमपि कर्त्रभिप्रेते क्रियाफले एव । विषयसप्तम्या क्रियाफलविषयके कर्त्रभिप्राये, अभिप्रेयते इति कर्म व्युत्पत्त्या वा उक्तार्थलाभात् । अत एव दक्षिणाद्युपरागेणापि यजमानस्वर्गादेः कामत्वे यजन्ते याजका इति । दाक्षिणादेरेव तथात्वे तु यजन्ति याजका इत्येवेति ग्रन्थकारैरुक्तम् ।

न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेषु पदानि वः ।
यज्ज्वलन्ति हि काष्ठानि तत् किं पाकं न कुर्वते ॥

इति कर्त्रनभिप्रायेऽप्यात्मनेपदस्य भट्टाचार्यैः प्रयुक्तत्वा-च्चेत्याहुः ।

केचित्तु इदमात्मनेपदं संविधानवृत्तिभ्यो भवति । पचते पाचयतीत्यर्थः । एवं यजते इत्यादि । धातूनामनेकार्थत्वात्प्रकृतिरेव यदा संविधाने वर्त्तते तदा तस्य द्योतकमात्मनेपदं भवति, यदा तु प्रकृत्या न विहितं संविधानं तदा तदभिधानाय णिजुत्पद्यते पाचयतीति। यदा तु "णिचश्च" इति ण्यन्तादात्मनेपदं भवति तदा द्वितीये संविधाने ण्यन्तस्य वृत्तिः । यथा राजा पाचयते इति । कर्त्रभिप्राये क्रियाफले इत्यनेन संविधानात्मक एव क्रियाविशेष उपलक्ष्यते । तदुक्तं वाक्यपदीये—

क्रियाप्रवृत्तावाख्याता कैश्चित्स्वार्थपरार्थता ।
असती वाऽसती वाऽपि विवक्षितनिबन्धना ॥
केषांचित्कर्त्रभिप्राये णिचा सह विकल्प्यते ।
आत्मनेपदमन्येषां तदर्था प्रकृतिर्यथा ॥
क्रीणीष्व पचते धत्ते चिनोति चिनुते ऽपि च ।
आप्तप्रयोगा दृश्यन्ते येषु ण्यर्थो ऽभिधीयते ॥

असतीवेत्यनेन कमलवनोद्घाटनं कुर्वते ये इत्यादयः समर्थिताः । तत्रापि स्वार्थताविवक्षायाः सम्भवात् । केषाञ्चिदिति श्लोकेन ण्यर्थस्य वाचकं द्योतकं वाऽऽत्मनेपदमिति मतद्वयं संगृहीतम् । चिनोति चिनुते इति चिनोति चाययतीति क्रमेणार्थ इत्याहुः ।

अत्रायं विवेकः—ण्यर्थे आत्मनेपदमिति मते ऽपि संविधाने शब्दशक्तिस्वाभाव्यात्स्वरितञित एव वर्त्तन्ते नान्ये धातव इति-स्वरितञिद्ग्रहणं भाष्ये प्रत्याख्यातम् ।

ये ऽपि स्वार्थे क्रियारम्भे आत्मनेपदं परार्थक्रियार-

क्षे परस्मैपदम् । सा च स्वार्थपरार्थता विवक्षानिमित्ता लौकिकप्रयोगे स्वरितञिद्विषयैव नतु यातीत्यादि विषयेत्याहुः, तन्मते ऽपि स्वरितञिद्ग्रहणं प्रत्याख्यातम् । इदं मतं क्रियाप्रवृत्ताविति कारिकयोक्तम् । पञ्चभिर्हलैः कृषतीत्यत्र "विभाषोपपदेन प्रतीयमाने" इति पाक्षिक आत्मनेपदाभावः । स्वामिदासौ पचत इत्यत्र क्रियामात्रविवक्षायां परस्मैपदम् । स्वामिगतधर्मस्य दासे आरोपे त्वात्मनेपदं भवत्येवेति कैयटः ।

## अपाद्वदः ७३ ।

पूर्वविषये आत्मनेपदम् । न्यायमपवदते । कर्त्रभिप्राये किम् । अपवदति ।

## णिचश्च ७४ ।

पूर्वविषये ण्यन्तादात्मनेपदम् । कटं कारयते । "कृतश्मश्रुरपि श्मश्रूणि कारयति" इति भाष्यं तु संविधानपक्षे, कर्तृगामित्वाविवक्षायां वा ।

अत्र कश्चिद् इदं चुरादिण्यन्ते न प्रवर्त्तते लक्षेः स्वरितेत्वकरणात् ।

तदाह—

स्वरितेत्स्याद्ग्रहिः क्न्यादौ लक्षिश्चैकश्चुरादिषु । इति—व्याचष्ट । णिजभावपक्षे स्वरितेत्त्वं सार्थकमिति नोक्तार्थज्ञापकमिति चन्द्रः । लक्षेः स्वरितेत्त्वं निर्मूलमिति मैत्रेयः । तदेतत्सर्वं हरदत्तेनोक्तम् । एष विधिर्न चुरादिणिजन्तात्स्यादिति

कश्चन निश्चिनुते स्म । आप्तवचोऽत्र न किञ्चन दृष्टम् । लक्षयतेः स्वरितेत्त्वमनार्षम् ।

## समुदाङ्भ्यो यमो ऽग्रन्थे ७५।

सर्वं प्राग्वत् । नतु ग्रन्थविषये । आङ्पूर्वकस्य विधानं सकर्मकार्थम् । अकर्मकत्वे "आङो यमहनः" इत्येव सिद्धेः । व्रीहीन्संयच्छते । भारमुद्यच्छते । वस्त्रमायच्छते । अग्रन्थे किम् । उद्यच्छति चिकित्सायां वैद्यः । अधिगमनपूर्वकमुद्यमनं धात्वर्थः । चिकित्सामधिगन्तुमुद्यमं करोतीत्यर्थः । कर्त्रभिप्राये इत्येव । संयच्छति, उद्यच्छति, आयच्छति ।

## अनुपसर्गाज्ज्ञः ७६ ।

प्राग्वत् । "अकर्मकाच्च" इति सिद्धे सकर्मकार्थमारम्भः । गां जानीते । अनुपसर्गात्किम् । स्वर्गं न प्रजानाति । इत्थं नृपः पूर्वमवालुलोचे ततो ऽनुजज्ञे गमनं सुतस्येत्यत्र नृपेणेति विपरिणामात्कर्मणि लकारो बोध्यः ।

## विभाषोपपदेन प्रतीयमाने ७७।

उपपदमत्र समीपे श्रूयमाणं पदम् । तेन क्रियाफलस्य कर्तृगामित्वप्रतीतौ स्वरितेत्प्रभृतिभ्यो वाऽऽत्मनेपदम् । उपपदेन कर्तृगत्वे प्रतीते उक्तार्थानामप्रयोगादात्मनेपदस्याप्राप्तौ अप्राप्त विभाषेयम् । स्वं यज्ञं यजति यजते वा । एवमन्यत् ।

## शेषात्कर्तरि परस्मैपदम् ७८।

आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात् ।

कर्मकर्तर्यपि परस्मैपदं स्यात्, सति तु कर्तृग्रहणे उत्तरत्र शेषग्रहणस्य कर्तृग्रहणस्य चानुवृत्तौ सत्यां शेषे कर्तरि परस्मैपदविधानात्कर्मकर्तरि न भवतीति चेत् ।

अत्र भाष्यं "कर्तरि कर्मव्यतिहारे" इत्यत्र 'कर्तरि' इत्यस्य प्रत्याख्यानात् तस्येहानुवृत्त्या कर्तैव यः कर्ता तत्र परस्मैपदं न तु कर्मकर्तरीति न दोष इति ।

## अनुपराभ्यां कृञः ७९।

यत्रार्थे आत्मनेपदमुक्तं तत्रापीदम् । अनुकरोति । पराकरोति ।

## अभिप्रत्यतिभ्यः क्षिपः ८०।

"क्षिप प्रेरणे" स्वरितेत् । अभिक्षिपतीत्यादि । एभ्यः किम् । आक्षिपते । कर्तरीत्येव । अतिक्षिप्यते सूत्रम् । कर्मकर्तर्यपि एवम् ।

## प्राद्वहः ८१।

वह प्रापणे । स्वरितेत् । प्रवहति । प्रात्किम् । आवहते ।

## परेर्मृषः ८२।

मृष तितिक्षायाम् । स्वरितेत् । परिमृष्यति । परेः किम् । आमृष्यते । "परेः" इति योगविभागाद्वहेरपीदमिति केचित् ।

## व्याङ्परिभ्यो रमः ८३।

रमु क्रीडायाम् । अनुदात्तेत् । विरमतीत्यादि ।

## उपाच्च ८४।

यद्यप्युपपूर्वो रमिर्निवृत्तिविनाशार्थत्वादकर्मकः, तत्र च विभाषाया वक्ष्यमाणत्वात् सकर्मकार्थं कथमयमारम्भः, तथाऽप्यन्तर्भावितण्यर्थत्वात्सकर्मकत्वं बोध्यम् । यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः ।

## विभाषाऽकर्मकात् ८५।

उपरमति उपरमते वा । निवर्तते इत्यर्थः ।

## बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ८६।

एभ्यो ण्यन्तेभ्यः परस्मैपदम् । "णिचश्च" इत्यस्यापवादः । बोधयति पद्मम् । योधयति काष्ठानि । नाशयति दुःखम् । जनयति सुखम् । अचित्तवत्कर्तृकत्वाद् "अणावकर्मकाद्" इत्यनेन नेह सिद्धिः । अध्यापयति । प्रावयति, द्रावयति, स्रावयति । क्रमेण प्रावयत्यादीनां प्रापयति विलापयति स्यन्दयतीत्यर्थः । चलनार्थत्वाभावे इदं वचनम् । नच स्यन्दयतीत्यर्थे "निगरणचलनार्थेभ्यः" इति सिद्धम् द्रवत्वजन्यचलनस्य स्यन्दनपदार्थत्वादिति वाच्यम् । द्रवत्वजन्यतावच्छेदकचलनत्वव्याप्यजातिविशेषशक्ततयाऽस्य विशेषशब्दत्वेऽप्यपर्यायत्वादित्याहुः ।

## निगरणचलनार्थेभ्यश्च ८७।

भक्षणकम्पनार्थेभ्यो ण्यन्तेभ्यः परस्मैपदं स्यात् । निगारयति

आशयति भोजयति चलयति चोपयति कम्पयति । सकर्मकार्थो ऽचित्तवत्कर्तृकार्थश्चारम्भः ।

"आदेः प्रतिषेधो वाच्यः" ।

आदयते देवदत्तेन ।

निजास्यलक्ष्मीमुकुरं चकोरैः स्वकौमुदीमादयमानमिन्दुमिति श्रीहर्षः ।

गतिबुद्ध्यादिसूत्रेण प्राप्ताया देवदत्तस्य कर्मसंज्ञाया "आदिखाद्योः प्रतिषेधः" इति वक्तव्यादभावः ।

कथं तर्हि—

इमां किमाचामयसे न चक्षुषी

चिरं चकोरस्य भवन्मुखस्पृशी ।

इति श्रीहर्षः ।

न पीयतां नाम चकोरजिह्वया

कथंचिदेतन्मुखचन्द्रिका सदा—इति पूर्वार्द्धानुसारेण पानार्थत्वोक्तावपि तस्य भक्षणविशेषतया सामान्यग्रहणेन ग्रहणस्य दुर्वारत्वात् । अन्यथाऽत्रैव सूत्रे चोपयतीत्यसङ्गतं स्यात् । चोपयतेर्मन्दगत्यर्थत्वात् । प्रत्यवसानार्थत्वं विना गतिबुद्ध्यादिसूत्रेण इमामित्यत्र कर्मत्वासङ्गतिप्रसङ्गाच्च ।

अत एव "न पादमि"इति सूत्रे पाग्रहणम् धेट उपसंख्यानं च सङ्गच्छते । अन्यथा पाधेटोरपि आचमिवत्पानार्थत्वेन निषेधवैयर्थ्यं स्यात् ।

अत्र दीक्षिताः—आचामयेति लोडन्तम् । 'से'इति संबोधनं दमयन्त्याः । ई लक्ष्मीः तया सह वर्त्तमाने इति व्याख्यानात् ।

केचित्तु चकोरस्य चक्षुषी भवन्मुखस्पृशी वर्त्तेते । अत एव इमां किं नाचायमसे चक्षुर्भ्यामित्याहुः ।

यद्वा इः कामः तस्य मा लक्ष्मीः तस्या अङ्किमा दृश्यतां त्वये‍ति शेषः। चकारः पूर्वोक्तनिषेधसमुच्चयार्थः। एतद्द्युतिशोभायां कामशोभासादृश्यादेतद्दर्शने तद्दर्शनमपि प्रसक्तम्, तच्चात्र त्वदनुरागाभावात्कामसादृश्यविषयदर्शनेच्छाविरहान्माऽस्तु, सामान्यतो रमणीयत्वेन दर्शनं तु क्रियतामिति भावः। आमयसे योजयसि बोधयसि वा। अमेर्बुध्यर्थत्वाद् "गतिबुद्धि-" इति कर्मत्वमिति नैषधभावप्रदीपे विस्तरः।

# अणावकर्मकाच्चित्तवत्कर्तृकात् ८८।

णेः पूर्वमकर्मकात् चित्तवत्कर्तृकाद् ण्यन्तात्परस्मैपदं स्यात्। शेते कृष्णः तं शाययति गोपी। अणाविति किम्। आरोहयमाणं प्रयुङ्क्ते आरोहयते इत्यत्र णावकर्मके मा भूत्। "णेरणौ" इति सूत्रे निवृत्तप्रेषणाध्यारोपितप्रेषणयोश्चरमकक्षायामकर्मकत्वव्यवस्थापनात्। अकर्मकात् किम्। कटं कुर्वाणं प्रयुङ्क्ते कारयते। चित्तवत्कर्तृकात्किम्। व्रीहीन्शोषयते।

केचित्तु अणाविति णिमात्रस्य पर्युदासाच्चुरादिण्यन्ताद्धेतुमण्णौ अणावित्यस्य प्रत्युदाहरणमाहुः।

अत्र भाष्यम्—बुधादिसूत्रादिह णेरित्यनुवर्त्तते, स च हेतुमण्णिजेव, बुधादिभ्यस्तस्यैव सम्भवात्। तेनायमर्थः—अहेतुमण्ण्यन्तो यो ऽकर्मकश्चित्तवत्कर्तृकश्च तस्माद्धेतुमण्ण्यन्तात्परस्मैपदं भवतीति। तेन चेतयमानं प्रयुङ्क्ते चेतयतीत्यादि सिद्ध्यतीति।

एतेन "अणावकर्मकाद्" इति चुरादिणिचो ण्यन्तात्परस्मैपदवचनमिति वार्त्तिकं व्याख्यातम् । तस्मात्केषा चिन्मतम् एतदुभयविरुद्धम् ।

यत्तु रूपयन्तं प्रयोजयति रूपयते इति केषां चित्प्रत्युदाहरणं तत् प्रयोजयतीति विग्रहस्वारस्यात् चुरादिण्यन्ताद्धेतुमण्णिचि । सौकर्यविवक्षायां प्रयोज्यव्यापारमात्रवृत्तावकर्मकत्वाद्, द्वितीयो हेतुमण्णिजिति बोध्यम् ।

एतेन चेतयमानं प्रयुङ्क्ते चेतयते इत्यपि व्याख्यातम् ।

# न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ९८।

एभ्यो ण्यन्तेभ्यः परस्मैपदं न स्यात् । अत्र पिबतिर्निगरणार्थः, इतरे चित्तवत्कर्तृकाः । नृतिश्चलनार्थोऽपि । अतो "निगरणचलन–"इति "अणावकर्मकाद्"इति च प्राप्तं परस्मैपदं निषिध्यते । पाययते । पा रक्षणे इत्यस्य न ग्रहण लुग्विकरणत्वात् । तेनाणावकर्मकत्वविवक्षायां पालयतीत्येव । दमु उपशमे । दमयते । आङ्पूर्वो यम उपरमे । आयामयते । "यमो ऽपरिवेषणे" इति मित्त्वनिषेधः । ङकारविशिष्टोपादानम् उपसर्गप्रतिपत्त्यर्थम् । तेनान्यान्वितादाकारात्परस्य न । आङ्पूर्वो यसुः प्रयत्ने । आयासयते । परिपूर्वो मुह् वैचित्ये । प्रत्येकमेष परिमोहयमाणवाणः । रोचयते । नर्तयते । सरस्वती वादयते विपञ्चीम् ।

चिरादनध्यायमवाङ्मुखी मुखे
ततः स्म सा वासयते दमस्वसा ।

"वस आच्छादने" इत्यस्य न ग्रहणं लुग्विकरणत्वात् ।

धेट उपसंख्यानम् । धापयेते शिशुमेकं समीची । प्रथमाह्निकवचनेन "वा च्छन्दसि" इति पूर्वसवर्णदीर्घः । अयं च कर्तृगे फले प्राप्तस्यात्मनेपदस्यापवादतया विहितस्य परस्मैपदस्यैव निषेधः ।

यत्त्वकर्त्रभिप्राये "शेषाद्" इति परस्मैपदं तद् भवत्येव । तेन वत्सान् पाययति पयः, दमयन्ती कमनीयतामदम् अत्रीवदद्वीणां परिवादकेन, भिक्षा वासयतीत्यादि सिद्धमिति ग्रन्थकृतः ।

# वा क्यषः ९०।

क्यषन्तात्परस्मैपदं वा । लोहितायति लोहितायते । पटपटायति पटपटायते । प्रकृत्यर्थनियमपक्षे एकवाक्यतया विधिरिति पक्षे च परस्मैपदस्यायं विकल्पः । भिन्नवाक्यतया नियमपक्षे तु पूर्वसूत्रे प्रतिषेधेनापवादमपनीयात्मनेपदस्याप्रवर्तनात् । तत्प्रतिषेधस्यैवात्रानुवृत्त्या तत्सामर्थ्यादात्मनेपदविकल्पः। आत्मनेपदप्रवृत्तिं विना तन्निषेधायोगाद्, आत्मनेपदस्य लक्षणयोपस्थितौ तस्यैव विकल्पसिद्धेः ।

# द्युद्भ्यो लुङि ९१।

द्युतादिभ्यः परस्मैपदं वा स्याल्लुङि । अद्युतत् अद्योतिष्ट। अलुठत् अलोठिष्ट । लुङि किम् । अन्यत्रानुदात्तेत्त्वान्नित्यं तङ् यथा स्यात् । नन्वत्र वाग्रहणानुवृत्तिर्व्यर्था । अनुदात्तेत्त्वान्निषिद्धस्य परस्मैपदस्यानेन प्रतिप्रसवे कृते "लस्य" इत्युत्सर्गेणैव पाक्षिकस्यात्मनेपदस्य सिद्धेरिति चेद् ।

अत्रानुपराभ्यामिति सूत्रवार्त्तिकम्-
"न वा द्युतादिभ्यो वा वचनाद्"इति ॥

अस्यार्थः—अशेषत्वात्कृञः "स्वरितञितः" इति पूर्वेण नियमादप्राप्तस्य परस्मैपदस्य "अनुपराभ्याम्" इत्यनेन विधानेऽपि अनुपरापूर्वात्करोतेर्मौलेन विधिवाक्येनात्मनेपदमपि स्यात् । नियमाशकरणेन परस्मैपदस्य प्रतिप्रसवेऽपि आत्मनेपदस्य निषेधाभावाद् इत्याशङ्कायां समाधानं नवेति । "द्युद्भ्यो लुङि"इत्यत्रान्तरेणापि वावचनानुवृत्तिं परस्मैपदप्रतिप्रसवादुभयस्मिन्सिद्धे स्वरितत्वे नवावचनानुवृत्तिर्लिङ्गं परस्मैपदप्रतिप्रसवे आत्मनेपदाभावस्येति ।

यद्वा आत्मनेपदापवादः परस्मैपदं विधीयते नतु प्रतिप्रसवद्वारेण नियमः प्रतिपाद्यते।एवं च यथा कर्त्रभिप्राये क्रियाफले परस्मैपदं न भवति तथा परस्मैपदविधावात्मनेपदमपि, येननाप्राप्तिन्यायेन बाधकत्वादिति । अस्मिन्नपि पक्षे पाक्षिकात्मनेपदप्रवृत्त्यर्थमिह वाग्रहणानुवृत्तिरिति ध्येयम् ।

## वृद्भ्यः स्यसनोः ९२।

वृतुवृधुशृधुस्यन्दूभ्यः परस्मैपदं वा स्यात्स्ये सनि च। वर्त्स्यति अवर्त्स्यत् विवृत्सति। "न वृद्भ्यः श्चतुर्भ्यः"इति नेट्। पक्षे वर्त्तिष्यते इत्यादि । स्यसनोः किम् । वर्त्तते ।

स्यादेतत् । लुङि पूर्वेण विकल्पो न सिद्ध्येत्। द्युतादावेव वृतादीनां पाठात् । तक्रकौण्डिन्यन्यायेनास्याः प्राप्तेः पूर्वप्राप्तिबाधकत्वात्। अत एवोत्तरसूत्रे चकारः।लुटीति विशेषविधिना स्यसनोरिति प्राप्तेर्बाधो यथा न स्यात् । अन्यथा क्लृपेरपि

वृतादित्वादनेनैव स्यसनोर्विकल्पसम्भवे चकारवैयर्थ्या-दिति चेत् ।

मैवम् । द्युतादिपाठसामर्थ्याद् वृतादिभ्यो ऽपि लुङि विकल्पसिद्धेः ।

यद्वा लुङीत्यस्य स्वरितत्वादिहाप्यनुवृत्तिः ।

## लुटि च क्लृपः ९३।

लुटि स्यसनोश्च कृपेः परस्मैपदं वा । कल्प्तासि कल्प्स्यति । चिक्लृप्सति । "तासि च क्लृपः" इति नेट् । पक्षे कल्पितासे कल्प्तासे कल्पिष्यते कल्प्स्यते अकल्प्स्यत् अकल्पिष्यत अकल्प्स्यत । चिकल्पिषते चिक्लृप्सते । अत्र ऊदित्वात्पाक्षिक इडभावः न तु पूर्ववन्निषेधः । तत्र परस्मैपदानुवृत्तेः । "द्युद्भ्यो लुङि" इत्यत्र विभाषाया इव स्वरितत्वप्रतिज्ञानादिह स्यसनोरित्यस्य स्वरितत्वादेवानुवृत्तिः । एवं च तदर्थाश्चकाराः प्रत्याख्यायन्ते इति भाष्यम् ।

इति सिद्धान्तसुधानिधौ प्रथमाध्यायस्य तृतीयपादे
द्वितीयमाह्निकं पादश्चायं समाप्तः ।

# प्रथमाध्याये चतुर्थः पादः

## आ कडारादेका संज्ञा ॥१॥

इत ऊर्ध्वं "कडाराः कर्मधारये" इत्यतः प्रागेकस्यैकैव संज्ञा स्यात् । उभयोः सावकाशत्वे विप्रतिषेधात्परैव, निरवकाशत्वे तु सैवेति विवेकः । नच "विप्रतिषेधे परं कार्यम्" इत्यनेन परस्याः तक्रकौण्डिन्यन्यायेन च निरवकाशाया विशेषविहितत्वादेव सिद्धिरिति वाच्यम् । संज्ञानां समावेशस्य दर्शनाद्विप्रतिषेधाऽनवकाशात् । फलभेदाभावस्य च तक्रकौण्डिन्यन्यायमूलत्वात् । कर्त्तव्यमित्यादौ प्रत्ययकृत्कृत्यसंज्ञाः, धातोरङ्गसंज्ञा, प्रातिपदिकसंज्ञा, "तयोरेव" इति कर्मणि विधानं चेति फलभेदश्चेति दर्शनात् ॥

नच 'आ द्वन्द्वादेका संज्ञा इत्येवास्तु, "चार्थे द्वन्द्वः" इत्यतः परत्रास्यानुपयोगाद् इति वाच्यम् । "द्वन्द्वश्च प्राणि–" इत्यस्य व्याप्तिन्यायादवधित्वापत्तौ संबुद्धिसंज्ञाऽऽमन्त्रितसंज्ञयोः समावेशानुपपत्तेः । अत एव "आ कडाराद्" इति पाठे "प्राक्कडारात्समासः" इत्यस्य नावधित्वम् । इह प्राक्कडारात्परं कार्यमित्यपि पाठः । तेन सह तारतम्यं भाष्ये विचारितम् ।

तथा हि–'एका संज्ञा' इति पाठे संज्ञाग्रहणे गौरवम् । 'परं कार्यम्' इति पाठे 'विप्रतिषेधे च' इत्येवोत्तरत्र सूत्रयित्वा तत्रत्यस्य 'परं कार्यम्' इत्यस्य त्यागे लाघवम् । एतत्सूत्रे च कार्यपदं संज्ञापरमेव प्रकरणात् । यस्याः संज्ञायाः परस्याः पूर्वया ऽन-

वकाशया बाधः प्राप्नोति सा पराऽनेन भाव्यत इति वि-
ध्यर्थमिदं न नियमार्थम्। एतदेव च परसंज्ञाविधानमेतत्प्रकरणे संज्ञानां बाध्यबाधकभावज्ञापकम्। तत्र परया ऽनवकाशया सावकाशा पूर्वा बाध्यते द्वयोश्च सावकाशयोर्विप्रतिषेधे परया पूर्वा बाध्यते।

नच मयाऽपि 'आ कडारादेका' इति सूत्रणीयं संज्ञाप्रकरणादेकेति स्त्रीलिङ्गनिर्देशः संज्ञाऽनुच्चारणेऽपि न विरुद्धः। एतत्सूत्रोत्तरं च "सरूपाणां शेष एकविभक्तौ" इति प्रकरणं कर्त्तव्यम् तत्र स्वरितत्वादत्रत्यस्यैकशब्दस्यानुवृत्तौ लिङ्गविपरिणामेन सम्बन्धे पुनरेकग्रहणं न कार्यमिति लाघवमिति वाच्यम्। तथाऽपि अङ्गसञ्ज्ञाया भपदसञ्ज्ञाभ्यां बाधापत्तेः। तथाच सार्पिष्कः याजुष्क इत्यादौ अङ्गस्य विधीयमाना आदिवृद्धिर्न स्यात्। अङ्गसंज्ञा हि कर्त्तव्यमित्यादिषु सावकाशा। धातुप्रत्ययेषु पूर्वस्य भपदसंज्ञयोरभावात्।

नच "तद्धितेष्वचामादेः" "किति च"इत्यङ्गस्य वृद्धिविधानसामर्थ्यात्समावेश इति वाच्यम्। वचनादनङ्गस्यापि वृद्धिप्रसङ्गात्। तथाच 'देवदत्तो गार्ग्यः' इत्यादौ देवदत्तादेः समुदायस्यादिवृद्धिः स्यात्। यथा डित्यभस्यापि अनुबन्धकरणसामर्थ्यात्कुमुद्वानित्यादौ टिलोपः। परं कार्यमिति पक्षे तु पूर्वे भपदसंज्ञे पराऽङ्गसंज्ञा इति न दोषः। "यस्मात्प्रत्ययविधिस्तदादि सुप्तिङन्तं पदं नःक्ये सिति च स्वादिष्वसर्वनामस्थाने यचि भं प्रत्ययेऽङ्गम्" इतिन्यासाश्रयणात्। तथाचारम्भसामर्थ्याद्भपदसंज्ञे परकार्यत्वाच्चाङ्गसंज्ञेति समावेशसिद्धिः।

नचैका संज्ञेति पाठे अङ्गं सद्भपदसंज्ञं भवतीति व्या-

ऽयानात्समावेश इति वाच्यम् । एका संज्ञेति वचनादङ्गसंज्ञाया नित्ये बाधे प्राप्ते पर्यायार्थानुवृत्तिः स्यात्, नियमबाधाभावाद् अनुवृत्तिसाफल्याच्च ।

ननु "न पदान्त–"इतिसूत्रे वेतस्वानिति सिद्ध्यर्थं भाष्यकृतोक्तम्–"यथा ऽन्यानि पदकार्याणि उपप्लवन्ते रुत्वं जश्त्वं च एवमिदमप्युपप्लोष्यते भसंज्ञा नाम"इति । तत्र पदं सञ्ज्ञं विज्ञायते भसंज्ञायां पदसंज्ञाऽनुवृत्तावपि भसंज्ञया बाधः पदकार्यनिवृत्तये ऽभ्युपगन्तव्यः । इह त्वङ्गसंज्ञानुवृत्तौ पर्याय उक्त इति विरोध इति चेत् ।

अत्राहुः—अङ्गसंज्ञानुवृत्तेः प्रयोजनान्तरविरहादिह पर्याय उक्तः, भसंज्ञायां पदसंज्ञानुवृत्तेस्तु प्रयोजनं भसंज्ञायाः पदकार्यत्वं यथा स्यादिति । ततश्च "न पदान्त–" इति अकारलोपस्य स्थानिवत्त्वनिषेधात् "तसौ मत्वर्थे" इति भसंज्ञायां पदत्वाभावे वेतस्वानिति सिद्धम् । भसंज्ञाविधौ हि पदमिति वर्त्तते अनुवृत्तिसामर्थ्यात्पूर्वं पदसंज्ञाप्रवृत्तौ भसंज्ञायाः पदकार्यत्वसिद्धिः । प्रवृत्तया तु भसंज्ञया पदसंज्ञा बाध्यते । एका संज्ञेतिनियमात् ।

किञ्च 'एका संज्ञा'इति पक्षे कर्मधारयसंज्ञायामेकसंज्ञाधिकारे ऽन्यत्र वा क्रियमाणायां तत्पुरुषग्रहणं कर्त्तव्यम् । आद्ये संज्ञासमावेशार्थं द्वितीये समासान्तरस्य कर्मधारयसञ्ज्ञानिवृत्त्यर्थम्। परं कार्यमिति पक्षे त्वस्मिन्नेव प्रकरणे कर्मधारयसंज्ञा क्रियते समावेशश्च सिद्ध्यतीति तत्पुरुषग्रहणं न कर्त्तव्यमिति लाघवम् । "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन कर्मधारयः" 'तस्यान्ते श्रितादिस्तत्पुरुषः' इति न्यासकल्पनात् । तत्रारम्भसामर्थ्यात् कर्मधारयसंज्ञा परकार्यत्वाच्च तत्पुरुषसं-

ज्ञा । नचैवं समानाधिकरणस्य कथं तत्पुरुषसंज्ञेति वाच्यम् । पाठक्रमादार्थक्रमस्य बलवत्त्वात् पूर्वं तत्पुरुष इति कर्त्तव्यं ततो द्वितीयाश्रितेति । तत्पुरुष इत्यत्र पूर्वकालेत्यादिसूत्राण्यनुवर्त्य तत्पुरुषसञ्ज्ञाविधानाद् । एकसंज्ञापक्षे तु व्यधिकरणानां तत्पुरुषसंज्ञां विधाय समानाधिकरणस्य तत्पुरुषसंज्ञानुवृत्त्या तत्पुरुषसंज्ञापूर्वककर्मधारयसंज्ञाविधाने ऽपि पर्याय एव स्यात् । समावेशस्य प्रयोजनं तु कारकगवीति पुंवद्भावसमासान्तौ ।

एवं एकासंज्ञेति पक्षे "द्विगुश्च"इत्यत्र चकारग्रहणं कार्यम् ।

ननु सर्वं सूत्रमेव कर्त्तव्यं कथं चकारमात्रं चोद्यते ।

अत्राहुः "द्विगुश्च"इति सूत्रं पक्षद्वयेऽपि न कर्त्तव्यम् एकसंज्ञापक्षे "संख्यापूर्वो द्विगुश्च"इति चशब्दः समावेशार्थः कर्त्तव्यो न पक्षान्तरे इति वार्त्तिकाभिप्रायः । भाष्यमप्येवं व्याख्येयं "तद्धितार्थ—" इत्यत्रोक्तः संख्यापूर्वकः समासस्तत्पुरुषो द्विगुश्च भवति । संज्ञाद्वयं लभते इति यावत् । एतदर्थश्चकारः कर्त्तव्य इति ।

परं कार्यमिति पक्षे तु "तद्धितार्थोत्तरपदसमाहारे च" "संख्यापूर्वो द्विगुः" तस्यांते श्रितादिस्तत्पुरुषः । एतत्पूर्ववद्व्याख्येयम् ।

तथा गतिदिवःकर्महेतुमत्सु चग्रहणं कार्यम् । "उपसर्गाः क्रियायोगे" "गतिश्च"इत्यत्र चकारः, अन्यथा ऽनवकाशा उपसर्गसंज्ञा ऊर्यादिषु सावकाशां गतिसंज्ञां बाधेत । वस्तुतो गतिरित्यत्र प्रादीनामनुवृत्त्या गतिसंज्ञा विधीयते तत्र च वचनसामर्थ्यात्पर्याये लब्धे उपसर्गसंज्ञाऽनुवृत्तिः समावेशार्थेति चकारग्रहणम् एकसंज्ञापक्षे ऽपि न कार्यम् । समावेशस्य च प्रणीतमभिषिक्तमिति गतिस्वरो णत्वषत्वे च प्रयोजनानि ।

एवं "साधकतमं करणम्" "दिवः कर्मच"इत्यत्र चकारः

कार्यः। अन्यथा कर्मसंज्ञया करणसंज्ञाया बाधः स्यात्। 'परं कार्यम्'इति पक्षे तु दिवः साधकतमं कर्म करणं करणसंज्ञं च भवति। ततः साधकतमं दिव इति निवृत्तम्। समावेशस्य चाक्षैर्देवयते देवदत्तो यज्ञदत्तेनेति। प्रयोज्यस्य कर्तुर्गतिबुद्धीतिनियमात्कर्मसंज्ञानिवृत्तिः,"अणावकर्मकाद्"इति परस्मैपदाभावश्च। नचैवम् 'अक्षान्दीव्यति'इति द्वितीया न स्यात् परत्वात्तृतीयया बाधात्। कर्मसंज्ञाया अकर्मकव्यपदेशव्यावृत्त्यर्थत्वात्। करणसंज्ञायाश्च 'देवना अक्षाः' इति ल्युडर्थत्वाद् इति वाच्यम्। 'कार्यकालं संज्ञापरिभाषम्' इति पक्षाश्रयणात्। 'कर्मणि द्वितीया'इत्यत्र यत्कर्मसंज्ञोपस्थानम् तदनवकाशम् इति द्वितीयासंभवात्। अक्षाणां देवितेत्यादौ कृद्योगषष्ठ्या अपवादत्वाद् द्वितीया बाध्यते। तृतीया तु परत्वात्।

"तत्प्रयोजको हेतुश्च"इत्यत्रापि चकारः कार्यः। अन्यथा कर्तृसंज्ञाबाधापत्तेः। समावेशस्य च कारयतीति हेतुमण्णिचि कर्त्तरि लकारः प्रयोजनम्।

एवं गुरुलघुसञ्ज्ञयोर्नदीघिसंज्ञाभ्यां बाधः स्यात्। यदि घिनदीसंज्ञे वर्णमात्रस्य तदाऽयं दोषः। यदा तु तदन्तस्य तदा भिन्नविषयत्वात् सिद्धः समावेशः। तत्प्रयोजनं तु वात्सीबन्धुरित्यत्र"नदीबन्धुनि"इति पूर्वपदान्तोदात्तत्वं वात्सीबन्धो इत्यत्र "गुरोरनृत" इति प्लुतो गुरुसंज्ञानिबन्धनः। घिलघुसंज्ञासमावेशस्य तु विश्च ना च विनरौ इति घिनिमित्तः पूर्वनिपातः, विन्रोर्भावो वैन्रमिति "इगन्ताच्च लघुपूर्वाद्"इत्यण्। अथ "द्वन्द्वमनोज्ञादिभ्यश्च"इति वुञ्प्रसंगान्नैवमिति विभाव्यते तदा विनरावाचष्टे विनयति "तत्करोति तदाचष्टे" इति णिच्। णाविष्ठवदित्यातिदेशाट्टिलोपः। विविनय्येति "ल्यपि लघुपूर्वाद्"इत्ययादेशः। नच

"अचः परस्मिन्" इत्यत्र पूर्वस्माद्विधावपि स्थानिवद्भावविधानाट्टिलोपः स्थानिवत्स्यादिति वाच्यम् । तस्यानित्यत्वात् । पञ्चमीसमासाश्रयणाद्वा ।

परस्मैपदसंज्ञां च पुरुषसंज्ञा बाधेत ततश्च क्रामतीत्यादौ दीर्घो न स्यात् । नच "सिचि वृद्धिः परस्मैपदेषु" इति ज्ञापकात्समावेशः । पर्यायसिद्धावपि समावेशासिद्धेः । ततश्च पाक्षिकी वृद्धिः स्यात् । यदि तु परस्मैपदमित्यस्य "तिङस्त्रीणि" इत्यत्रानुवृत्तिसामर्थ्यात्समावेशः, पर्यायस्यानुवृत्तिं विनाऽपि सिद्धेरिति कल्प्यते तदा न दोषः । तस्मादेका संज्ञेति पाठे चकारादिकं संज्ञासमावेशार्थमाश्रयणीयम् ।

परं कार्यमिति पाठे तु ऋत्वियशब्दो न सिध्यति । ऋतोरणः छन्दसि घस् । अयं ते योनिर्ऋत्वियः । प्रजां विंदाम ऋत्वियः । अत्र सितिचेति पदत्वमेवेष्यते । परं कार्यमिति वचनाद्भसंज्ञा ऽपि स्याद । तथाच ओर्गुणः प्रसज्येत । पदसंज्ञा त्ववग्रहार्था स्यात् ।

गतिबुद्ध्यादीनां ण्यन्तानां प्रयोज्यःकर्मसंज्ञां कर्तृसंज्ञां च प्राप्नोति ।

तथाहि एकसंज्ञाधिकारे कर्मसंज्ञाधिकारे कर्मसंज्ञायां सिद्धायां गत्यादिसूत्रं नियमार्थम् ।

तथाहि प्रयोज्यः स्वव्यापारे स्वतन्त्रः प्रयोजकव्यापारेण चाप्यत इति संज्ञाद्वयप्रसङ्गे एकसंज्ञाधिकारादन्यतरसंज्ञया भाव्यम्, तत्र प्रत्ययार्थस्य प्राधान्यात्तत्प्रयुक्तसंज्ञयैव भाव्यं गुणप्रधानसंनिधौ प्रधानस्य प्रयोजकत्वसंभवे गुणानां तद्विरुद्धस्वकार्यप्रयोजकत्वानुपपत्तेः । ततः सिद्धायां प्रयोज्यस्य कर्मसंज्ञायां गत्यर्थादीनामेवाण्यन्तानां कर्ता ण्यन्तावस्थायां कर्मसंज्ञो भवति नान्येषामिति नियमः क्रियते । तेन पाचयत्यो-

दत्तो देवदत्तो यज्ञदत्तेनेति कर्मसंज्ञा न प्रवर्त्तते ततश्च बाधकाभावाद्गुणक्रियानिमित्ता कर्तृसंज्ञैव भवति । परं कार्यमिति पाठे तु अविरोधात्सर्वत्र संज्ञाद्वयप्रसङ्गे गत्यर्थादीनामेवेति नियमेन ण्यन्तधात्वन्तरप्रयोज्यात् कर्मसंज्ञाव्यावृत्तावपि गत्यर्थादिप्रयोज्यस्य संज्ञाद्वयं स्यात् ।

यदि तु "हृक्रोरन्यतरस्याम्"इत्यत्रान्यतरस्यां ग्रहणं ज्ञापकं कर्मसंज्ञायां कर्तृसंज्ञा न भवति इति, यदि हि गत्यर्थादिप्रयोज्यस्य संज्ञाद्वयं स्यात् तदा तत्रैव सूत्रे हृक्रोरित्यपठिष्यदिति कल्प्यते तदा न दोषः ।

एवं घिसंज्ञायां शेषग्रहणं न कर्त्तव्यं नदीसंज्ञानिवृत्त्यर्थम् । अन्यथा शकटिशब्दात् ङेप्रत्यये नदीसंज्ञानिमित्ते आटि कृते तस्य ङिद्वत्त्वाद् घेर्ङितीति गुणः स्यात् ।

वस्तुतस्तु यद्यत्र घिसंज्ञा प्रवर्त्तेत तदाऽन्तरङ्गत्वात्पूर्वमेव तत्प्रवृत्तिः स्यात् नदीसञ्ज्ञा तु "ङिति ह्रस्वश्च"इतिङित्प्रत्ययापेक्षा बहिरङ्गा तत्र घिलक्षणे गुणे कृते ह्रस्वाभावादल्विधित्वाच्च स्थानिवत्त्वाभावान्नदीसंज्ञा नैव प्रवर्त्तेतेति नदीसंज्ञाविधानं व्यर्थमेव स्यादिति नदीसंज्ञाविधानसामर्थ्यादत्र घिसञ्ज्ञा न भवतीति बोध्यम् । नचैवं यणादेशोऽपि न स्यादिति वाच्यम् । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यत इति न्यायात्

"शेषो बहुव्रीहिः"इत्यत्र शेषग्रहणं च कर्त्तव्यम् । उन्मत्तगङ्गमित्यत्रान्यपदार्थप्रधानतया ऽव्ययीभावसंज्ञया सह बहुव्रीहिसंज्ञायाः समावेशवारणार्थम् । अन्यथा पूर्वपदप्रकृतिस्वरः पाक्षिकः सामासान्तश्च कप् स्यात् शस्त्रीश्यामेत्यत्र यदा श्यामा शब्द उपमाने शस्त्र्यामेव वर्त्तते उपमेयं तु समासवाच्यं तदाऽन्यपदार्थवृ-

त्तित्वाद्बहुव्रीहिसञ्ज्ञाप्रसंगे पाक्षिकः कप् स्यात्। "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः" इतिपूर्वपदप्रकृतिस्वरविधानादत्र स्वरे विशेषाभावः। समाहारशब्दस्य भावसाधनत्वपक्षे पञ्चगवमित्यस्य द्विगोरन्यपदार्थप्राधान्यात्पूर्वपदप्रकृतिस्वरत्वं स्यात्। कपस्तु नापत्तिरशेषत्वात्। नच टचश्चित्करणाद्बहुव्रीहिस्वरो न भविष्यतीति वाच्यम्। पञ्चपात्रमित्यस्योदाहार्यत्वात्। एवं निष्कौशाम्बिर्निर्वाराणसिरित्यत्र क्रान्तस्यान्यपदार्थस्य समासवाच्यत्वे बहुव्रीहिसंज्ञायां तन्निबन्धनो नदीलक्षणः कप्स्यात्। पूर्वपदस्यैव क्रान्ताद्यर्थत्वे अव्ययीभावः शेषग्रहणे क्रियमाणे ऽपि द्वीरावतीको देशइत्यत्र बहुव्रीहिर्न स्यात्। नदीभिश्चेत्यव्ययीभावप्रसङ्गात् समाह्रियमाणार्थस्य तद्वाच्यत्वे पञ्चनदमित्यादौ तदवकाशसत्त्वात् वीरपुरुषको ग्रामः, अब्राह्मणको देश इत्यत्रापि बहुव्रीहिर्न स्यात्। 'तत्पुरुषः समानाधिकरणः' 'अव्ययं विभक्ति'इत्यत्र चोपयुक्तत्वात्।एकासंज्ञेति पक्षे तु शेषग्रहणं न क्रियते अनवकाशाभिरव्ययीभावादिसञ्ज्ञाभिर्बहुव्रीहिसञ्ज्ञाबाधस्य सिद्धत्वात्। द्वीरावतीकादिषु तु परत्वाद्बहुव्रीहिर्भविष्यति। एवं प्रपतितपर्ण इत्यर्थे प्रपर्ण इति बहुव्रीहिर्न स्यात्। निःकौशाम्बिरित्यत्रेव तत्पुरुषसंज्ञाप्रसङ्गात्। एवञ्चसंज्ञापक्षे तु क्तार्थो यत्र समासार्थस्तत्र तत्पुरुषसंज्ञा। प्रपर्ण इत्यत्र तु क्तार्थः पर्णविशेषणं समासार्थस्त्वन्य एवेति बहुव्रीहिः सिद्धः तस्मादेका सञ्ज्ञेति पाठे यासां संज्ञाना समावेश इष्टस्तत्र चकाराणां सूत्र एव कृतत्वाद् न दोषः। परं कार्यमिति पाठे तु उक्तस्थलेषु दोष इति सिद्धम्।

अथ प्रयोजनान्युच्यन्ते तानि चात्रान्यस्मिन्वा प्रकरणे पठितानामनिष्यमाणसमावेशानां द्वितीयानाम् उपसंख्यान-

गत्युपसर्गसंज्ञे कर्मप्रवचनीयसंज्ञा। तेन सुसिक्तमित्यादौ षत्वम्, "सूपमानात् क्तः" इति गतिसंज्ञकसुशब्दाश्रयमन्तोदात्तत्वं च न भवतीति पूर्वपदप्रकृतिस्वर एव।

परस्मैपदसंज्ञामात्मनेपदसंज्ञा। तेनाच्योष्ट आक्रमत इत्यादौ वृद्धिदीर्घाद्यभावः।

समाससंज्ञाश्च या याः परा अनवकाशाश्च तास्ताः पूर्वाः सावकाशाश्च बाधन्ते। तेन लोहितगङ्गमित्यव्ययीभावः। द्वीरावतीक इति बहुव्रीहिरेव।

अर्थवत्प्रातिपदिकं गुणवचनं च समासकृत्तद्धिताव्ययसर्वनामसंज्ञं च भवतीति वक्तव्यम्। एकविषयत्वाच्चकारकरणाच्च गुणवचनप्रातिपदिकसंज्ञयोः समावेशः। उत्तरसंज्ञास्वनुवर्त्तनात् प्रातिपदिकसंज्ञायाः समावेशः। गुणवचनसंज्ञायास्तु ताभिः संज्ञासंज्ञान्ताभिर्बाधः। गुणवचनसंज्ञायास्तु ष्यञ्विधिः प्रयोजनम्। "गुणवचनब्राह्मणादिभ्यः" इत्यत्र ब्राह्मणादिग्रहणं तु समासादिसंज्ञाविषयीभूतशब्दसंग्रहार्थम्। प्राणभृज्जातिलक्षणप्रत्ययबाधनार्थं युवाद्यण्समावेशार्थं च।

असर्वलिङ्गा जातिरिति च वक्तव्यम्। लिङ्गानां च न सर्वभागिति लक्षणे तात्पर्यम्।

संख्यासंज्ञा द्रुसंज्ञा च वक्तव्या। द्रु इति षट्संज्ञायाः प्राचीनव्यवहारः।

एकद्रव्योपनिवेशिनी संज्ञेति च वक्तव्यम्। डित्थादियदृच्छाशब्दानां संज्ञासंज्ञेत्यर्थः। समासादिसंज्ञाभिर्गुणवचनसंज्ञाबाधात् चित्रगुत्वं कारकत्वं औपगवत्वं उच्चैस्त्वं सर्वत्वं गोत्वं बहुत्वं पञ्चत्वं डित्थत्वमित्यादौ न ष्यञ्। ऐक्यं राजपौरुष्यं इत्यादौ तु ब्राह्मणादित्वात्ष्यञ्।

# विप्रतिषेधे परं कार्यम् ॥ २ ॥

तुल्यबलविरोधे परं कार्यं स्यात् । कर्मव्यतिहारविशिष्टक्रियावचनात् सेधतेर्भावे घञ् । उपसर्गबलाद्विरोधलाभः । विप्रतिषेधः परस्परविरोधः । विषयान्तरे परस्परपरिहारेण लब्धावकाशयोः शास्त्रयोः क्वचिदेकत्र समावेशे तत्सम्भवात् । कार्यमित्यर्हेऽर्थे कृत्यः । तुल्यबलं च करणार्हः । अतो नित्यान्तरङ्गापवादानां निवृत्तिः । तत्र नित्यमावश्यकत्वाद्बाधकम् । अन्तरङ्गं लाघवात् । अपवादो वचनप्रामाण्यात् । तद्भिन्नं तु प्रकृतसूत्रविषयः । तदुक्तं 'परनित्यान्तरङ्गापवादानामुत्तरमुत्तरं बलीयः' इति ।

इह जातिपक्षो व्यक्तिपक्षश्च सम्भवति ।

तथा हि गवादिपदानां जातावेव शक्तिरिति मीमांसकाः । अत एव सरूपसूत्रे वार्त्तिकम् "आकृत्यभिधानादेकं विभक्तौ वाजप्यायनः" इति । वाजप्यायन आचार्यविशेषः । तथाहि जातेर्वाच्यत्वे लाघवं व्यक्तीनामानन्त्येन तत्र शक्तिग्रहासम्भवात् । गोत्वविशिष्टे शक्तिकल्पने च नागृहीतविशेषणन्यायेन गोत्व एव शक्तिकल्पनौचित्यात् । अन्यव्यक्तिविषयकशक्तिग्रहेण व्यक्त्यन्तरबोधोपगमे च व्यभिचारात् । नचैवं वाहयति दोग्धीत्यादावनुपपत्तिः । लक्षितव्यक्तौ तदन्वयात् । तथा च जैमिनिसूत्रम्—"तदर्थत्वात्प्रयोगस्याविभागः" इति । इदं हि जातिपक्षे "व्रीहीनवहन्ति" "यदि पशुरुपाकृतःपलायेतान्यन्तद्वर्णं तद्वयसमालभेत" इत्यादीनामनुपपत्तिरित्याशङ्क्य तन्निराकरणपरम् । एतदर्थस्तु लक्षितव्यक्तिमादायावघातादिप्रयोगसम्भवान्नासम्बद्धत्वमिति ।

तथा हि यत्र व्रीहित्वजातेरवघातादिक्रियाजन्यवितुषीभावादि-

रूपफलाश्रयत्वासम्भवस्तत्र जातिलक्षितव्यक्तौ कर्मत्वान्वयद्वारा तस्याः क्रियान्वयः,यत्र तु "पशुना यजेत"इत्यादौ करणत्वश्रवणं तत्र द्रव्यपरिच्छेदरूपव्यापारेण जातेरेव करणत्वोपपत्तेर्न लक्षणा। "अन्यं तद्वर्णम्"इत्यादावपि पशुपदलक्षितव्यक्तिप्रतियोगिक एवान्योन्याभावो व्याख्येयः।

यद्यपि गुरुमते 'कार्यान्वित एव शक्तिः'इति सिद्धान्तो जातेश्च कार्यान्वयासम्भवः,तथाऽपि स्वावच्छिन्नव्यक्तिद्वारकमेव कार्यान्वयमङ्गीकृत्य तदुपपाद्यम्। तथैव शब्दमणौ तन्मतोपन्यासदर्शनात्।

एतेन 'जातिविशिष्टव्यक्तौ शक्तिः'इति वादो गुरूणां संमतः, अन्यथा कार्यान्विते पदशक्तिवादस्तेषां न सिध्येदित्यपास्तम्।

नव्यास्तु घटत्वं धर्मितावच्छेदकीकृत्य शक्तत्वसम्बन्धेन घटवत्तानिश्चयत्वं कारणतावच्छेदकम्, उत घटपदत्वं धर्मितावच्छेदकीकृत्य शक्तत्वसम्बन्धेन घटवत्तानिश्चयत्वमिति विनिगमनाविरहाद् व्यक्तिशक्तौ गौरवम्। जातिशक्तिपक्षे तु घटपदं शक्तत्वसम्बन्धेन घटत्ववदिति पदत्वधर्मितावच्छेदककशक्तत्वसंसर्गकघटत्ववत्तानिश्चयत्वमेव तथा। घटत्वं शक्यत्वसम्बन्धेन घटपदवदिति निश्चयत्वेन कारणत्वे निरवच्छिन्नस्य घटत्वस्य धर्मित्वासंभवात् घटेतरावृत्तित्वे सति घटानिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वे च सति समवेतत्वरूपघटत्वत्वस्य धर्मितावच्छेदकत्वे गौरवापत्तेः। घटत्वस्य प्रकारतायां तु घटत्वत्वस्याप्रवेशात्स्वरूपेणैव जातेः प्रकारत्वोपगमात्। नच समवायावच्छिन्नजातिप्रकारताया एव निरवच्छिन्नत्वनियमः। मानाभावात्। अत एवानुमितिलक्षणे ऽनुभवत्वान्येति दीधितिफक्किकायां भेदप्रतियोगितावच्छेदकानुभवत्वत्वघटकानुभवेतरासमवेतत्वे सती-

द्यंशस्य वैयर्थ्यात्सकलानुभवसमवेतत्वमेवानुभवत्वत्वं निवेश्यमिति सकलानुभवसमवेतान्यत्वस्य ज्ञानत्वादावभावादेव तद्वारणे ज्ञानत्वादिवारकानुभवत्वं प्रकार इति व्याख्यातम् इत्याहुः ।

व्यक्तिवादिनस्त्वाहुः-व्यवहारेण शक्तिपरिच्छेदेन व्यक्तावेव शक्तिग्रह इति । तथाच सरूपसूत्रे वार्त्तिकम् "द्रव्याभिधानं व्याडिः"इति । व्यक्तीनामेव पदैरभिधानं व्याडिराचार्यो न्याय्यं मन्यते इत्यर्थः । इदमेव वैयाकरणमतम् । व्याकरणाधिकरणे व्याकरणप्रामाण्ये प्रतिपादिते तत्प्रसक्तकात्यायनादिसंमतव्यक्तिवादप्रामाण्यापवादत्वेनाकृत्यधिकरणं तदुत्तरमारभ्यत इति सङ्गतेस्तत्र दर्शितत्वात् ।

यत्तु व्यक्तीनामानन्त्यमिति । तन्न । अशक्याया एव जातेः शक्यतावच्छेदकत्वसम्भवात् ।

नच स्वावच्छेद्यधर्मानाश्रयस्य तदवच्छेदकत्वाभावनियमः । अव्यापकस्यापि व्यापकतावच्छेदकत्वाभ्युपगमात् । एतेनातिप्रसङ्गोऽपि निरस्तः ।

उक्तं च प्रत्यक्षदीधितौ अव्यापकस्याप्यनुमितिविषयत्वेऽतिप्रसङ्गस्य व्यापकतावच्छेदकत्वेनेवाशक्यस्यापि शाब्दधीविषयत्वेऽतिप्रसङ्गस्य शक्यतावच्छेदकत्वेनैव निराससम्भवात् । शक्यतावच्छेदके शक्तिसत्वे ऽपि न तस्यास्तद्बोध उपयोगः । विना लक्षणां लक्ष्यतावच्छेदकस्येव विनाऽपि शक्तिं तस्य बोधसम्भवादिति ।

यत्तु विनिगमनाविरहात्कारणताद्वयम् इति । तन्न । घटत्ववदिति प्रकारतायाम् अपि घटत्वत्वस्यावच्छेदकत्वाविशेषात् समवायस्वाश्रयतादात्म्याभ्यामेव जात्यंशे निरवच्छिन्नप्रका-

रतायास्तार्किकसंमतत्वात्। अनुभवत्वान्येत्यत्रापि सर्वेषां तथाऽनभिमतत्वात्।

अत एव कैश्चिदनुभवपदे शक्यतावच्छेदकत्वेनैवानुभवत्वप्रवेश इत्यादि व्याख्यातम्।

अस्तु वा स्वरूपेण प्रकारत्वं तथाऽपि विनिगमनाविरहः। स्वरूपेण विशेष्यत्वस्यापि संभवात्।

उक्तं हि शब्दखण्डे मिश्रव्याख्यातृभिः कैश्चित् स्वरूपतः प्रकारत्वस्येव स्वरूपतो विशेष्यत्वस्यापि सम्भवादितीति दिक्।

एवं जातेः शक्यत्वे तद्विशेष्यकशाब्दापत्तिः। पदानां स्वशक्यविशेष्यकज्ञानजनकत्वात्। घट इत्यादौ च तदनुभवविरुद्धम्।

नच घटत्वशक्तिज्ञानस्य घटत्वप्रकारकघटविशेष्यकशाब्दत्वं कार्यतावच्छेदकम्। 'घटत्वमस्ति'इत्यत्रापि तदापत्तेरिति तिष्ठतु विस्तरः।

प्रकृतमनुसरामः। प्राक्रियादशायां लक्ष्यानुरोधात् पक्षद्वयमाश्रीयते।

तथा हि जातिपक्षे तस्यां साक्षात्कार्यासम्भवेन तदवच्छिन्नव्यक्तिविशेष एव तत्प्रवृत्तेः स्वीकार्यत्वात्तावतैव जात्युद्देशकशास्त्रस्य चारितार्थ्यम्। तथा च "सुपिच"इत्यस्य रामाभ्यामित्यादौ "बहुवचने झल्येद्"इत्यस्य रामेषु इत्यादौ चरितार्थत्वाद् वृक्षेभ्य इत्यत्र युगपत्प्रसङ्गे विनिगमकाभावाद्द्वयोरप्यप्रवृत्तिः स्यात्।

तदुक्तम्—"अप्रतिपत्तिर्वोभयोस्तुल्यबलत्वाद्"इति। तत्र विप्रतिषेधसूत्रं विध्यर्थम्—परं भवतीति। तस्मिन्कृते च यदि पूर्वस्यापि निमित्तमस्ति तर्हि तदपि भवत्येव। यथाऽभिनद् हि इत्यत्राकचं बाधित्वा परत्वाद्द्विभावे कृतेऽप्यकच्। तदुक्तम् "पुनः प्रस-

ह्नविज्ञानात्सिद्धम् इति ।

व्यक्तिपक्षे तु सर्वासां व्यक्तीनां तत्तद्व्यक्तित्वेनोद्देश्यतया व्यक्त्यन्तरे प्रवृत्तावपि शास्त्रस्य तद्व्यक्तिप्रवृत्तिं विना चरितार्थत्वासम्भवात् शास्त्रद्वयप्रामाण्यादगत्या विकल्प एव स्यात् । तथाचोभयोः पाक्षिक्यां प्राप्तावारब्धं विप्रतिषेधसूत्रं नियमार्थम्—परमेव भवति न तु पूर्वमिति । तेन जुहुतात्त्वमित्यत्र जुहु हि इति स्थिते धिभावं बाधित्वा परत्वात्तातङि कृते स्थानिवत्त्वाप्रसक्तौ धिभावः पुनर्न प्रवर्त्तते ।

तदुक्तं "सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव"इति ॥

नचैवं शास्त्रान्तरस्यापि तद्व्यक्तिविषयकत्वात्तस्यामप्रवृत्तावप्रामाण्यापत्तिः । व्यावर्त्यत्वाभिमतशास्त्रस्यापरशास्त्रप्रवृत्त्यविषयव्यक्तावेव तात्पर्यमिति फलतः परशास्त्रप्रवृत्तिविषयव्यक्तौ तात्पर्यं नास्तीत्यस्य पर्यवसानात् । तस्मात्पक्षद्वयमपि लक्ष्यानुसाराद्व्यवस्थितम् ।

परादपि नित्यं बलीयः । तेन रधेर्णिचि परामपि "अत उपधायाः" इति वृद्धिं बाधित्वा "रधिजभोः"इति नुम् । शब्दान्तरप्राप्त्या तस्यानित्यत्वेऽपि कृताकृतप्रसङ्गित्वमात्रेण नित्यत्वाभ्युपगमात् । तेन रन्धयतीति सिद्धम् । अदुद्रुवदित्यादौ परमपि लघूपधगुणं बाधित्वा उवङ् अन्तरङ्गत्वात् । शुन इत्यत्र परमप्यल्लोपं बाधित्वा "संप्रसारणाच्च"इति पूर्वत्वम् । अल्लोपे हि स्थानिवद्भावाद्यण् स्यात् । बहुश्वा नगरीत्यत्र "अन उपधालोपिनः" इति ङीप्स्यात् ।

नच गौरादिलक्षणो ङीष् तथाऽपि स्यादिति वाच्यम् । उपसर्जनत्वात् ।

यत्त्वस्मिन्सूत्रे बहुशुनीति भाष्यं तदङ्गोपाभ्युपगमेन वृत्तत्वान्न सिद्धान्ते स्थितमिति कैयटादयः।

नच शुना इत्यादावुदात्तनिवृत्तिस्वरः स्यादिति कुतो नोक्तमिति वाच्यम्। "न गोश्वन्साववर्ण–"इति प्रतिषेधात्। श्वन्शब्दस्य गौरादिषु पाठादुदात्तनिवृत्तिस्वरोऽस्य न भवतीति ज्ञापितत्वाच्च। शुनीत्यत्रोदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वादन्तोदात्तत्वार्थं ङीष्विधानानुपपत्तेः। सौत्थितिरित्यत्र स्वरं बाधित्वा एकादेशोऽन्तरङ्गत्वात्। सु उत्थित इ इति स्थिते यदि पूर्वमुकारस्योदात्तत्वं स्यात् तदा "स्वरितो वा ऽनुदात्ते पदादौ" इति पक्षे स्वरितत्वं स्यात्। पूर्वं त्वेकादेशे नित्यमाद्युदात्तत्वम्।

वृद्ध्योरित्वोत्वे। स्तैर्णिः पौर्णिः। स्तृत इ इति स्थिते अन्तरङ्गत्वादित्त्वं ततो वृद्धिः। स्वरे तु न विशेषः। यदि पूर्वं स्वरस्तत इत्वोत्वे तथा ऽप्यान्तरतम्यादुदात्तसिद्धेः। आतेस्तीर्यते आपोपूर्यते इत्यत्र नित्यत्वात्प्राप्तं द्विवचन बाधित्वाऽन्तरङ्गत्वादित्त्वोत्त्वे।

इण्ङिशीनामाद्गुणः सवर्णदीर्घत्वात्। अयज इन्द्रमिति स्थिते परत्वात्प्राप्तं सवर्णदीर्घं बाधित्वा गुणोऽन्तरङ्गत्वात्। वृक्षे इन्द्रं ये इन्द्रम् इति ङिश्योरुदाहार्यम्।

यद्यपि सवर्णदीर्घो ऽपवादो दण्डाग्रमित्यादौ गुणस्य कुमारी ईहत इत्यादौ यणादेशस्य च नाप्राप्तत्वात् तथाऽपि एकनिमित्तप्राप्तविध्यन्तरबाधनेन सवर्णदीर्घस्य सावकाशत्वादन्तरङ्गबाधानौचित्यात्। अपवादोऽपि यद्यन्यत्र चरितार्थस्तदाऽन्तरङ्गेणोत्सर्गेणापि बाध्यत इति स्थितिः।

निरवकाशेन तु विध्यन्तरेण सावकाशे ऽन्तरङ्गो ऽपि विधिर्बाध्यते यथा गोत्रे ऽलुगचीति। अलुका-

लुक् । ऊङापोरेकादेश ईत्वलोपाभ्याम् ।

खट्वीयतीत्यत्र 'खट्व आ य ति'इति स्थिते परत्वात्प्राप्तमीत्वं बाधित्वाऽन्तरङ्गत्वादेकादेशः, अन्यथा ईत्वे कृते गुणः स्यात् । नच यस्येतिलोपसम्भवः । "पूर्वत्रिधौ"इतीत्वस्य स्थानिवद्भावात् । कामण्डलेयः भाद्रवाहेय इत्यत्र "ढे लोपो ऽकद्र्वाः"इति लोपं परमपि बाधित्वा ऽन्तरङ्गत्वादेकादेशः । नच ऊङ ईत्वासम्भवाद् लोपेत्वाभ्यामिति युक्तः पाठ इति वाच्यम् । यथासङ्ख्यानिवृत्त्यर्थत्वात् । नच "अजाद्यदन्तम्"इति तथैव युक्तत्वादिति कथं ज्ञापकत्वमिति वाच्यम् । लक्षणेषु प्रायेणास्यानादरणात् । तेन वौडिरित्यत्र आलोपं बाधित्वा एकादेशः पूर्वमाकारलोपे तस्य स्थानिवद्भावादसिद्धत्वाच्चाकारलोपाभावादाद्गुणः स्यात् ।

आत्वनपुंसकोपसर्जनह्रस्वत्वान्ययवायावेकादेशतुग्विधिभ्यः ।

ग्लाछत्रमित्यत्र विभज्यान्वाख्याने ग्लै छत्रमिति स्थिते यदि तुक्स्यात्तदा एजन्तत्वाभावादात्वं न स्याद् ढौकितेत्यादिवत् । उपदेशग्रहणमनपेक्ष्य चैतदुक्तम् । अतिर्यत्र अतिन्वत्रेत्यादौ 'अति रै अत्र'इति 'अति नौ अत्र'इति स्थिते आयाद्यादेशे सति अनेजन्तत्वाद्ध्रस्वो न स्यात् । आराशस्त्री इदमिति स्थिते पूर्वमेकादेशे तस्यान्तवद्भावाद्ध्रस्वे कृते आराशस्त्रीदमिति न स्यात् । पदसमुदायस्य विभज्यान्वाख्याने अग्निचि अत्रेति स्थिते पूर्वं यणादेशे तुक् न स्यात् । पुंसि विभक्त्या व्यवधानेऽपि नपुंसके यणापत्तेः ।

तुग्यणेकादेशगुणवृद्ध्यौत्वदीर्घत्वेत्वमुमेत्वरीविधिभ्यः ।

एभ्यस्तुग्भवत्यन्तरङ्गत्वात् । यणादेशाद्व्याख्यातम् । अग्निचिदिदम् अत्रैकादेशात्, अग्निचितेत्यादौ गुणात्, प्राच्छंक

इत्यादौ वृद्धेः, अग्निचितीत्यादावीत्वात्, जगद्भ्याम् जगन्वद्भ्या-मित्यादौ दीर्घत्वात्, जगत्यतीति क्यचि ईत्वात्, अग्निचिन्मन्ये इत्यादौ मुमागमात्, जगद्ध्य इत्यादौ एत्वात्, सुकृत्यतीत्यादौ क्यचि रीत्वात् ।

इयङादेशो गुणात् ।

धियति । धि धारणे । तिप् शः । परत्वात्तिबाश्रये गुणे प्राप्ते ऽन्तरङ्गत्वादियङ् । एवं प्रादुद्रुवदित्यादावुवङ् ।

श्वेःसंप्रसारणपूर्वत्वं यणादेशात् ।

शुशुवतुरित्यादौ परत्वात्प्राप्तम् “एरनेकाचः”इति यणं बाधित्वाऽन्तरङ्गत्वादुवङ् ।

ह्व आकारलोपात्पूर्वत्वम् ।

जुहुवतुरित्यत्र ह्वा अतुस् इति स्थिते “ह्वः संप्रसारण-म्” “अभ्यस्तस्यच”इति संप्रसारणे कृते आलोपं परत्वात्प्राप्तं बाधित्वाऽन्तरङ्गत्वापूर्वरूपम् । यद्याकारलोपः स्यात्तदा तस्य स्थानिवद्भावादाभीयत्वेनासिद्धत्वाद्वा उवङ् न स्यात् ।

स्वरो लोपात् ।

औपगवीत्यत्र अणि ङीपि च कृते यदि प्रत्ययाद्युदा-त्तत्वादनुदात्तत्वाद्वा पूर्व लोपः स्यात् तदा ईकारस्य उदात्त-निवृत्तिस्वरो न स्यात् ।

प्रत्ययविधिरेकादेशाद् यणादेशाच्च ।

अग्निरिन्द्रं वायुरुदकमित्यादौ सवर्णदीर्घं परमपि बा-धित्वा प्रत्ययोत्पत्तिः । यद्यपि केवलायाः प्रकृतेः प्रयोगो नास्ति तथाऽपि वाक्यस्य विभज्यान्वाख्याने क्रियमाणो ऽयं विचारः । प्रत्ययस्य नित्यत्वे ऽपि अन्तरङ्गत्वेनैव समाधानं कृतम् । एवम् अग्निरत्रेत्युदाहार्यम् ।

लादेशो वर्णविधेः ।

पचत्वत्रेत्यादौ यदि पूर्वं यण्स्यात्तदाऽल्विधित्वात्स्थानिवत्त्वाभावादुत्वं न स्यात् ।

तत्पुरुषान्तोदात्तत्वं पूर्वपदप्रकृतिस्वरात् ।

पूर्वा शाला प्रियाऽस्येति त्रिपदे बहुव्रीहौ कृते तद्धितार्थेति द्वयोराद्ययोस्तत्पुरुषः । तत्र त्रिपदाश्रयबहुव्रीहिनिमित्तः पूर्वपदप्रकृतिस्वरो बहिरङ्गत्वान्न प्रवर्त्तते, किं तु तत्पुरुषसमासाश्रयं शालाशब्दस्यान्तोदात्तत्वम् । पूर्वपदस्वरः "स्वाङ्गशिटामदन्तानाम्"इत्याद्युदात्तः ।

अत्रेदमवधेयम्–'अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवद्'इति परिभाषा लाघवन्यायमूलेति कैयटः । असिद्धं बहिरङ्गमन्तरङ्गे इति तु "वाह ऊठ्"इत्यत्र ज्ञाप्यते । दित्यवाह् अस् इति स्थिते वाहः संप्रसारणमेव कर्त्तव्यम्, तस्मिन्पूर्वत्वे च कृते ण्विनिमित्ते गुणे "वृद्धिरेचि"इतिवृद्धौ च दित्यौह इत्यादिसिद्धेः । नच यत्राकारान्तमुपपदं नास्ति तत्र कथं निर्वाहः । ज्ञापकत्वोपदर्शकभाष्यप्रामाण्येन तत्र ण्विर्नास्तीति कल्पनात् । छन्दसि क्वचिद् दर्शने तु ऊहतेः क्विपा तत्सम्भवात् । तथाच ऊठो विधानम् उक्तपरिभाषाज्ञापकम् । तस्यां हि सत्यां बहिरङ्गस्य संप्रसारणस्यासिद्धत्वादन्तरङ्गो गुणो न स्यादिति ऊठ्करणं सार्थकम् । तेन पचावेदमित्यादौ एत ऐत्वं न भवति । "षत्वतुकोरसिद्धः"इत्यनेन च तदपवादभूता "नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः"इति परिभाषा ज्ञाप्यते । कोऽसिश्चदधीत्येत्यादौ बहिरङ्गस्यैकादेशस्यासिद्धत्वादेव षत्वनिषेधतुकोः प्रवृत्तौ असिद्धवचनस्य वैयर्थ्यात् ।

यत्त्वत्रत्यं भाष्यम्–असिद्धपरिभाषया गतार्थत्वाद् 'अ-

न्तरङ्गं बलवद्' इति परिभाषा नारभ्येति। तद् विरुद्धम्, न्याय-सिद्धत्वात्। असिद्धपरिभाषायाः सापवादत्वाच्च।

यदि तु विवरणोक्तरीत्या "षत्वतुकोः" इत्यनेनासिद्धपरिभाषाया अनित्यत्वमेव ज्ञाप्यते नतु 'नाजानन्तर्ये' इति परिभाषा। गौरवात्, तदैतद्भाष्यमेव युक्तम्। प्रपञ्चितं चैतत्प्राक्।

नन्वन्तरङ्गस्य बलवत्त्वे पूर्वैषुकामशमः, अपरैषुकामशमः इत्यत्र पूर्व इषुकामशमी अ इति स्थिते अतरङ्गत्वाद्गुणे पूर्वोत्तरपदयोर्व्यपवर्गाभावादुभयत आश्रये ऽन्तादिवद्भावनिषेधाच्च "दिशो मद्राणाम्" "प्राचां ग्रामनगराणाम्" इत्युत्तरपदवृद्धिर्न स्यात्। "उत्तरपदवृद्धौ सर्वं च" इति चशब्दाद् दिक्शब्दानां विधीयमानं पूर्वपदान्तोदात्तत्वं च न स्यात्। पूर्वकार्ष्णमृत्तिक इत्यत्र द्वयोः सावकाशत्वात्। गुडोदकमित्यादौ "उदके केवले" इति पूर्वपदान्तोदात्तत्वं न स्यात्। उदश्वित उदकमित्यादौ सावकाशत्वादिति चेत् न। "नेन्द्रस्य परस्य" इति प्रतिषेधेन एकादेशं बाधित्वा पूर्वोत्तरपदकार्यं भवतीति ज्ञापितत्वाद् अन्यथा "यस्येति च" इति लोपेन एकादेशेन च द्वयोरचोरपहारात्तत्र स्वरस्यैवाऽप्राप्तेः। व्याकरणान्तरे तु य्वोर्वृद्धिप्रसङ्गे इयुवौ भवत इति वचनम्। तत्र वैयाकरणः, सौवश्वः। अत्र अन्तरङ्गतया पूर्वमेव यणादेशे इयुवौ न स्याताम् इत्याशङ्क्य भाष्यम् अनवकाशत्वात्तौ भविष्यतः। न च यण्विरहितस्थले तौ सावकाशाविति वाच्यम्। अचि परे तयोर्विधानात्। अन्यथा ऐतिकायनः, औपगव इत्यादौ "लोपो व्योः" इति लोपसम्भवेऽपि प्रैयमेधः, प्रैयङ्गव इत्यादौ तदसम्भवात्।

अथैवमपि पचेयुरित्यादि न सिद्ध्येत्। पच् अ यास् उस् इति स्थिते सलोपोत्तरमन्तरङ्गत्वात्पररूपे कृते व्यपवर्गा-

आवादियादेशो न स्यात् । एकादेशस्यान्तवद्भावे ऽपि रूपासिद्धेः ।

अत्र भाष्यम् "अतो येयः"इत्यत्र या इत्यस्य इयादेश इति नार्थः, किं तु यास् इत्यस्यैव इय् । संहितायाः सौत्रत्वात् । तथा च सलोपापवाद इयादेशः सलोपं विना च "उस्यपदान्ताद्"इत्यस्य प्रसक्त्यभावात् ।

लुक् लोपयणयवायावेकादेशेभ्यः ।

तेन गोमत्प्रिय इत्यादौ "सुपो धातुप्रातिपदिकयोः"इति सोर्लुक्, न तु "हल्ङ्यादिभ्यः"इति लोपः, प्रत्ययलक्षणेन नुमादिप्रसङ्गात् । ग्रामण्यः कुलं ग्रामणि कुलम् । यणादेशे कृते लुकि रूपं न सिध्येत् । गोहितं रैकुलं नौकुलमित्यादावप्येवम् । वृकाद्भयम् वृकभयं पूर्वमेकादेशे तस्यादिवद्भावाल्लुकि रूपासिद्धिः स्यात् । इदं च अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इत्यस्य "प्रत्ययोत्तरपदयोश्च"इत्यत्र ज्ञापितत्वात्सिद्धम् ।

इति श्रीसिद्धान्तसुधानिधौ प्रथमस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ।



# यू स्त्र्याख्यौ नदी ।३।

इवर्णोवर्णान्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः । दीर्घान्तयोरिय संज्ञा फलति, ह्रस्वान्तयोर्घिसंज्ञया बाधाद् इति प्रागुक्तम् । तेन मते धेनो "इत्यादौ अम्बार्थनद्योः" इतिह्रस्वो न । यू इति न आबन्तव्यावृत्त्यर्थम् ।

न च खट्वाबन्धुरित्यादौ "नदी बन्धुनि" इति पूर्वपदान्तोदात्तत्वम्, बहुखट्वक इत्यादौ "नद्यृतश्च" इति नित्यः कप्च प्रसज्येतेति वाच्यम्। "ङेराम् नद्याम्नीभ्यः" इत्यत्र पृथगाब्ग्रहणाज्ज्ञापकात्। तथा च खट्वाशब्दस्य नित्स्वरेणाद्युदात्तत्वात्पूर्वपदप्रकृतिस्वरेण खट्वाबन्धुरित्यादावाद्युदात्तसिद्धेः । तथाऽपि मात्रे मातुरित्यादावाडागमः स्यात् । नचाख्याग्रहणेन तन्निरासः । जननीवाचिनो नित्यस्त्रीलिङ्गत्वात परिच्छेत्तृवाचिनस्तदन्यत्वात् । नच "नद्यृतश्च" इति ऋकारस्य पृथगुपादानम् ऋदन्तानां नदीसंज्ञाविरहज्ञापकम् । बहुपितृक इत्याद्यर्थत्वात् ।

"यू इति दीर्घयोरेव निर्देशः" इति भाष्यम् । तत्र छान्दसत्वात्पूर्वसवर्णदीर्घः । नच "ङिति ह्रस्वश्च" इत्यत्रान्वयानुपपत्तिः । ह्रस्वदीर्घयोरभेदान्वयानुपपत्त्या य्वोः सवर्णो यो ह्रस्व इति व्याख्यानात् । स्त्र्याख्यौ किम् । वातप्रम्ये ।

ननु स्त्रियमाचक्षाते इति विग्रहे स्त्र्याख्यायाविति स्यात् । सुग्ल इत्यादौ सावकाशस्य "आतश्चोपसर्गे" इति कप्रत्ययस्य कर्मण्यणा बाधित्वात् ।

अत्र भाष्यम्—'छान्दसमेतत्' ।

अत एव–

यस्मिन्दशसहस्राणि पुत्रे जाते गवां ददौ ।

ब्राह्मणेभ्यः प्रियाख्येभ्यः सोऽयमुञ्छेन जीवति ॥ इति—

प्रयोगः ।

यद्वा स्त्रियामाख्यायेते विधीयते इति स्त्र्याख्यौ । घञर्थे कविधानम् । सप्तमीतिसमासः ।

नन्वेवं तन्त्रीलक्ष्मीश्रीभूप्रभृतीनां नदीसंज्ञा न स्यात् । ङ्यूङोरिव तयोरीकारोकारयोः स्त्रियां विहितत्वाभावात् । एतेन आख्यानमाख्या "आतश्चोपसर्गे" इति अङ् । स्त्रियामाख्या ययोरिति बहुव्रीहिरपि परास्त इति चेन्न ।

सत्यम् । क्विप्प्रत्ययसम्भवात् । असरूपत्वादणा तद्बाधात् । समुदायधर्मस्यावयव आरोपात् कृत्स्त्रिया अप्यत्र पक्षे संज्ञा । यद्वा मूलविभुजादित्वात्कप्रत्ययः । आख्याग्रहणं किमर्थमिति भाष्यम् क्विप्पक्षे यथाश्रुतमेव । कप्रत्ययपक्षे तु प्रवृत्तिनिमित्तनिर्देशः । यू स्त्रियामित्येव स्त्र्यर्थवृत्तित्वलाभात् । आख्याग्रहणसामर्थ्याद्धि नियम आश्रीयते । स्त्रियमेव आचक्षाते न तु लिङ्गान्तरमपीत्यर्थः । तेन ग्रामण्ये सेनान्ये इत्यत्र नदीसंज्ञा न भवति।ग्रामं सेनां च नयतीति क्रियाशब्दत्वाद् लिङ्गत्रयसाधारणतया स्त्रियामपि नदीसंज्ञाविरहः ।

नन्वेवं इष्वशनिप्रभृतीनामुभयलिङ्गानां पट्वादीनां च गुणवचनानां सर्वलिङ्गाना स्त्रीविषयत्वाभावात् स्त्रियां वृत्तावपि "ङिति ह्रस्वश्च" इति नदीसंज्ञा न स्यात् । मैवम् । तत्राख्याग्रहणमपहाय स्त्रीशब्दमात्रस्यानुवर्त्तनात् ।

अत्रेदं तत्त्वम्—लिङ्गान्तरानभिधायकत्वं नित्यस्त्रीत्वमिति कैयटः । शब्दान्तरसमभिहारं विनैव स्त्रियां वर्त्तमानत्वं तदिति हरदत्तः । नच सूत्राक्षरैरेतदर्थालाभः । आसमन्तात् चक्षाते

इत्यतो लिङ्गान्तरानभिधायकत्वस्यैवास्यापि लाभात् । समन्ता-द्भावस्य तन्मात्रपरतयैव नैरपेक्ष्यपरतया ऽपि नेतुं शक्यत्वात् ।

यत्त्वाचारक्विबन्तात्कर्त्तरि क्विपि श्रियै ब्राह्मणायेत्यादावति-व्याप्तिः । नच महासंज्ञाकरणबलात्स्त्रीवाचकस्येत्यर्थलाभः । त-स्मादेव नित्यांशस्यापि लाभेन स्त्र्याख्यावित्यस्य वैयर्थ्या-पत्तेः । ब्राह्मणार्थस्योक्तत्वे ऽपि प्रकृत्यर्थस्याप्युक्तत्वेन स्त्रियां वर्त्तमानत्वानपायाच्च । नचेदं लिङ्गं विशेष्यनिष्ठं नेति वा-च्यम् । एतद्बोधकपदस्य सूत्रे ऽनुपादानादिति । तन्न । स्त्रिय-माचक्षाते इति द्वितीयाया विशेष्यत्वार्थकतया सूत्रादेव तद-र्थलाभात् । घटं जानातीत्यादौ विशेष्यत्वस्य द्वितीयार्थतायाः क्लृप्तत्वात् प्रकृत्यर्थोक्तिमात्रेणातिप्रसङ्गदाने प्रकृते लिङ्गान्तरान-भिधायकत्वसद्भावात्कैयटमते ऽपि तस्य दुर्वारत्वाच्च ।

नच हरदत्तमते ग्रामण्ये इत्यादावपि नदीसंज्ञापत्तिः । ग्रामणीखलपूकटप्रूशब्दाना मुख्यवृत्तेः पुंस्येव सत्त्वात् । शक्तत्वाद्भयरहितत्वाच्च । कौशाम्बीनिर्गमनादिकं च स्त्री-पुंससाधारणमिति नाव्याप्तिः ।

किञ्च कैयटमते आध्यै ब्राह्मण्यै इति भाष्यविरोधः । आध्यानकर्तृत्वस्य लिङ्गत्रयसाधारण्याद्ग्रामणीशब्दादिवन्नदी-त्वानुपपत्तेः ।

ननु आसमन्ताद्धीर्यस्या इति बहुव्रीहौ उत्तरपदस्य नि-त्यस्त्रीत्वान्नदीत्वम् । "प्रथमलिङ्गग्रहणं च" इति वक्ष्यमाणत्वाद् । अतिलक्ष्म्यै ब्राह्मणायेतिवदिति चेन्न । यणो दुर्लभत्वापत्तेः । "गतिकारकपूर्वस्यैवेष्यते" इत्यत्र गतिसाहचर्येण कारकपूर्व-स्यापि नित्यसमासग्रहणम् । गतिसमासश्च प्रतिपदोक्त एव गृह्य-ते । तेन दुर्धियः निर्भियः वृश्चिकभियेत्यादावनित्यसमासत्वाद्

"एरनेकाचः"इति यणेति पुरुषोत्तमप्रभृतिभिर्व्याख्यानात् ।

अत एव कृन्मेजन्तसूत्रे "मा नः समस्य दूढ्यः"इति मन्त्रव्याख्यायां दुर्धिय इति कैयटः । अदूरविप्रकर्षेण चेदमर्थकथनम् । व्याख्येयमन्त्रे तु दुष्टं ध्यायतीति विग्रहे नित्यसमास एव । ततो यण् । "दुरो नाशदाशदभध्येषूत्वमुत्तरपदादेश्च ष्टुत्वम्"इति पृषोदरादिसूत्रस्थवार्त्तिकेन उत्वष्टुत्वे ।

यत्तु तद्वार्त्तिकव्याख्यायां दुष्टं ध्यायतीति "आतश्चोपसर्गे" इति कप्रत्यय इति कैयटहरदत्तादयः । तच्चिन्त्यम् । अन्तःस्वरितानुरोधेनार्थानुरोधेन च ख्यत्यादिवत् कृतयणादेशानुकरणतयैव व्याख्येयत्वात् । सर्वस्य दुर्बुद्धेरंहतिरुपद्रवो नोऽस्मान्मा वधीदिति तृतीयचरणस्थेनान्वयः । अपवर्जनमंहतिरित्यमरादंहतिशब्दस्य दानरूढत्वे तु प्रद्वेषप्रयुक्तमाभिचारिकाद्यङ्गभूतमेव तदिह ग्राह्यमिति दीक्षिताः ।

वस्तुतस्तु प्रकृतमन्त्रेऽस्तु तथा, वार्त्तिके तु कप्रत्ययान्तस्यापि ध्यशब्दस्य ग्रहणं युक्तम् । तन्त्रादिनोभयपरत्वसम्भवात् । अत एव 'येनासि कृत्ये प्रहिता दूढ्येनास्मज्जिघांसया'-इत्याथर्वणमन्त्रः सङ्गच्छत इति वृद्धानामभिप्रायः ।

आध्यानमाधीरिति व्युत्पत्त्या गुणगुणिनोरभेदोपचाराद्वाष्यं समाधेयमिति तूपचारे मानाभावादुपेक्ष्यम् । तस्मात्कैयटमते आध्यै इति भाष्यविरोधः स्थितः ।

अत्र वार्त्तिकम्—

"प्रथमलिङ्गग्रहणंच । प्रयोजनं क्विब्लुक्समासाः"इति ।

अयमर्थः–यः शब्दः प्रथमं स्त्रीत्वविशिष्टमर्थमाह पश्चात्तु प्रकारान्तरेण लिङ्गान्तरविशिष्टद्रव्यान्तरपरः, तस्य तदानीमस्त्र्याख्यत्वादप्राप्ता नदीसंज्ञाऽनेन विधीयते । कुमारीमिच्छति

कुमारीयति, कुमारीवाचरति कुमारयति वा ततः क्विप् । अल्लोपयलोपौ । "क्वौ लुप्तं न स्थानिवद्"इति यणभावः । कुमारी ब्राह्मणः । ङ्यन्तत्वात्सुलोपः । कुमार्य्यै ब्राह्मणाय । "आण्नद्याः" इत्याट् ।

ननु कैयटमते क्यच्क्विपोः प्रकृतिभूतस्य ङीबन्तस्यापि नित्यस्त्रीत्वं नास्ति कुमारशब्दात् क्यजन्तात् क्विपि निष्पन्नेन कुमारीशब्देन त्रिलिङ्गेन समानाकारत्वादिति चेत् । न । अर्थभेदेन शब्दभेदाश्रयणात् ।

अयं विशेषः—कुमार्यौ कुमार्यः । "एरनेकाचः"इति यण् । अमि शसि च कुमार्यं कुमार्यः । प्रध्यं प्रध्य इतिवत् । नच 'गतिकारकपूर्वस्यैव'इति निषेधः । 'तदितरपूर्वस्य न'इत्यर्थात् । विशिष्टाभावस्य केवले ऽपि सत्त्वात् कुमार्यै इत्यादौ स्त्रीलिङ्गवत् । हे कुमारि ब्राह्मणेत्यादि । कुमारशब्दान्निर्वृत्तस्य तु कुमारीशब्दस्य कुमारीः । अङ्यन्तत्वान्न सुलोपः । अनदीत्वान्न संबुद्धिह्रस्वः, वातप्रमीवत् । पत्नीशब्दात्तु पत्नियौ पत्निय इत्यादावियङ् । कुमारमात्मन इच्छन्ती ब्राह्मणी कुमारीरित्यत्र कैयटमते पूर्ववद्रूपम्, हरदत्तमते तु लक्ष्मीवत् । अमि शसि च यणिति विशेषः । तदेवं क्विब्व्याख्यातः ।

लुप् । खरकुट्यै ब्राह्मणाय । खरकुटीवेति इवार्थे कनो "लुम्मनुष्ये"इति लुप् । यद्यप्यत्र "लुपि युक्तवद्व्यक्तिवचने"इति स्त्रीत्वमप्यस्ति तथाऽपि स्वाश्रयस्य पुंस्त्वस्यानिवर्त्तनात्स्त्रीमात्रवृत्तित्वाभावादप्राप्ता नदीसंज्ञेति कैयटहरदत्तादयः ।

दीक्षितास्तु—एवं 'चञ्चाः पश्य'इत्यादौ शसो नत्वापत्तिः । तस्माल्लुबन्तैः खरकुटीचञ्चादिशब्दैः स्त्रीत्वाविशिष्ट एव लौकिकः पुमानभिधीयते इत्येव तत्त्वम् । एवं च लुपः प्रयोजनत्वेन गण-

न्मपि चिन्त्यमित्याहुः ।

वस्तुतो युक्तवद्भाववचनसामर्थ्यान्नत्वाभाव इति बोध्यम् । अतितन्त्र्यै ब्राह्मणाय । तन्त्रीमतिक्रान्त इति तत्पुरुषः । बह्व्यः श्रेयस्यो ऽस्य बहुश्रेयसी । "ईयसो बहुव्रीहेर्न"इति ह्रस्वस्य "ईयसश्च"इति समासान्तस्य कपो निषेधः । एषां संबुद्धौ ह्रस्वः, ङित्सु आडागमादिकं च नदीकार्यम् अवयवस्त्रीविषयत्वात्सिद्धम् । पूर्वमेवात्र स्त्र्याख्यत्वात्प्रवृत्ता नदीसंज्ञा पश्चादुपजायमाने ऽपि बहिरङ्गे लिङ्गान्तरयोगे न निवर्त्तत इति अवयवस्त्रीत्वेनैवोपपत्तौ पूर्ववार्त्तिकमनारभ्यमित्यर्थः । वर्णसंज्ञापक्षे समुदायस्य नद्यन्तत्वात्कार्यसिद्धिः। तदन्तस्य नदीसंज्ञापक्षे तु "अङ्गाधिकारे तस्य च तदुत्तरपदस्य च" इतिवचनाद् अतितन्त्रीबन्धुरित्यत्रापि पूर्वपदस्य नद्या विशेषणात् पूर्वपदान्तोदात्तत्वम् । क्विब्लुकोरपि एवं व्याख्येयम् ।

अत्राक्षेपवार्त्तिकम्—

"इयङुवङ्स्थानप्रतिषेधे यण्स्थानप्रतिषेधप्रसंगोऽवयवस्येयङुवङ्स्थानत्वाद्" इति ।

अवयवस्य स्त्रीविषयत्वात्समुदायस्य नदीसंज्ञावद् अवयवस्येयङुवङ्स्थानत्वात्समुदायस्य यण्स्थानस्यापि उत्तरसूत्रेण नदीसञ्ज्ञाप्रतिषेधः स्यात् । आध्यै ब्राह्मण्यै इति । इह ह्यवयवे इयङ् धियै इति, समुदाये तु "एरनेकाचः" इति यण् ।

अत्र सिद्धान्तमाह वार्त्तिककारः—सिद्धं त्वङ्गरूपग्रहणाद्यस्याङ्गस्येयुवौ तत्प्रतिषेधादिति ।

अस्यार्थः—"अचि श्नुधातुभ्रुवाम्"इत्यत्र इयङुवङ्भ्यामङ्गमाक्षिप्यते अङ्गाधिकारीयत्वात् । तेन यस्याङ्गस्येयङुवङौ निर्वर्त्येते तस्य नदीसंज्ञानिषेधः । आध्यै इत्यत्र चावयवस्याङ्गसंज्ञा

नास्ति, समुदायस्य त्वियङुवङ्स्थानत्वं नास्ति यणा बाधा-दिति न दोषः । एतदर्थमेव तत्र स्थानग्रहणम् इयङुवङोर्यदा स्थितिस्तदा प्रतिषेधो यथा स्यात् । यदा त्वपवादेन बाधस्त-दा मा भूदिति ।

"ह्रस्वेयुवस्थानप्रवृत्तौ च स्त्रीवचने" इति वाक्यान्तर-म् । "अवयवग्रहणात्सिद्धम्" इत्यस्यायमपवादः । ह्रस्वे-यङुवङ्स्थानानां प्रवृत्तिरर्थान्तरसंक्रान्तिः, तस्यां सत्यां स्त्रीवचन एव संज्ञा न लिङ्गान्तरवचने । चशब्दादप्रवृत्तौ चेत्यर्थः । शकृत्यै अतिशकृटये ब्राह्मणाय, श्रियै अतिश्रिये ब्राह्मणाय । इह तु स्यादेव अतिश्रिये अतिश्रियै वा ब्राह्मण्यै इति भाष्यम् । नचेह स्त्रीत्वं नास्तीति वाच्यम् । हरदत्तमते स-त्त्वात् । कैयटमतेऽपि "ङिति ह्रस्वश्च" इत्यत्र आख्याऽननुवृत्तेरुक्त-त्वात् । एवं च सुधीस्वयम्भ्वतिलक्ष्म्यतिचमूशब्देषु रूपद्वयं बो-ध्यम् । निष्कौशाम्बिः पुमानित्यत्र तु नदीसंज्ञायामपि न विशे-षः । ह्रस्वादेशेन नद्या अपहाराद् न सम्बुद्धिह्रस्वः, वर्ण-स्य नदीत्वात् । स्त्र्याख्यत्वं तु शक्त्याश्रयतामात्रात्, पर्याप्त्यधि-करणत्वस्याविवक्षणात् । तदन्तस्य नदीसंज्ञापक्षे ऽपि 'सर्वे सर्वपदादेशाः' इति न्यायेन सर्वादेशत्वात् । नच स्थानिवद्भा-वः, विशेषणतयाऽप्यलाश्रयणे निषेधस्योक्तत्वात् । "ङिति ह्रस्व-श्च" इति विकल्पस्तु भवत्येवेति कौस्तुभः ।

## नेयङुवङ्स्थानावस्त्री ४।

इयङुवङोः स्थितिर्यत्र तावीदूतौ नदीसंज्ञौ न स्तः स्त्रीशब्दं विना । स्थानं निरपवादा प्रसक्तिः । हे श्रीः, हे भ्रूः । अस्त्रीति किम् । हे स्त्रि । नदीत्वात् सम्बुद्धिह्रस्वः । अथ कथं विमानना

सुभ्रु कुतः पितुर्गृहे इति कालिदासः, हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप स इति भट्टिः । मुकुलयति च नेत्रे सर्वथा सुभ्रु खेद इति भवभूतिः । प्रसूननाराचशरासनेन सहैकवंशप्रभवभ्रु बभ्रु इति श्रीहर्षश्च ।

अत्राहुः प्रमाद एवेति हरदत्तादयः ।

दुर्घटवृत्तिकारस्तु भ्रूशब्दाद् "अप्राणिजातेः"इत्यूङि समासे उपसर्जनह्रस्वेन "ऊङुतः"इत्यूङि तस्य समुदायभक्तत्वान्नोवङ्-स्थानत्वमित्याह ।

दीक्षितास्तु नेदं युक्तम्—प्रत्ययस्य भक्ततायां प्रमाणाभावात् । एकादेशस्यान्तवद्भावेन भ्रुशब्दावयवताया अप्यनपायात् । अङ्गाधिकारे तदुत्तरपदग्रहणस्य निर्विवादतया समुदायभक्ते ऽप्युवङ्प्रवृत्तेश्च सुभ्रुवावित्यादीनां सर्वसम्मतत्वादित्याहुः ।

सामान्ये नपुंसकमिति केचित् ।

यथासंभवं क्रियाविशेषणत्वमित्यन्ये ।

# वाऽऽमि ५।

पूर्वोक्तावामि नदीसंज्ञौ वा स्तः । श्रीणां श्रियां भ्रूणां भ्रुवाम् । अस्त्रीत्येव । स्त्रीणाम् । द्वितीयैकवचनस्य तु नेह ग्रहः । विशेषाभावात् ।

# ङिति ह्रस्वश्च ६।

इयङुवङ्स्थानौ ह्रस्वौ च यू नदीसञ्ज्ञौ वा स्त्रियां ङिति परे । श्रियै श्रिये भ्रुवै भ्रुवे कृत्यै कृतये धेन्वै धेनवे । नदीसंज्ञापक्षे "आण्नद्याः"इत्याट् "आटश्च"इति वृद्धिः । अस्त्रीत्येव । स्त्रियै ।

स्त्रीलिङ्गाविति किम्। अग्नये वायवे। इह प्रथमलिङ्गग्रहणाभावान्निष्कौशाम्बिर्हरिवदित्युक्तम्। अतिस्त्रिरित्यत्र तु विशेषः। अनिस्त्रियावित्यादौ "स्त्रियाः"इति इयङ् स च गौणत्वेऽपि।

किं तु—

गुणनाभावौत्वनुड्भिः परत्वात्पुंसि बाध्यते।
क्लीबे नुमा च स्त्रीशब्दस्येयङित्यवधार्यताम्॥

"जसि च"इति गुणः। अतिस्त्रयः। "वाम्शसोः" अतिस्त्रिम् अतिस्त्रियम्, अतिस्त्रियः, अतिस्त्रीः। औट्शसोरियङ्। "आङो नाऽस्त्रियाम्" अतिस्त्रिणा। "घेर्ङिति"। अतिस्त्रये इत्यादि। ओसि अतिस्त्रियोः। ह्रस्वेति नुट्। अतिस्त्रीणाम्। "अच्च घेः"। अतिस्त्रौ।

औकार ओसि नित्यं स्यादम्शसोस्तु विभाषया।
इयादेशोऽचि नान्यत्र स्त्रियाः पुंस्युपसर्जने॥इति कौस्तुभः।

क्लीबे नुम्। अतिस्त्रिणी इत्यादि वारिवत्। स्त्रियां तु "ङिति ह्रस्वश्च"इति सञ्ज्ञाविकल्पः। नचास्त्रीति निषेधः। इयङुवङ्स्थानयोरेव तेन विशेषणात्। पूर्वसूत्रे तत्संबद्धत्वात्। नचावृत्त्योभयविशेषणत्वम्, मानाभावात्। तेनातिस्त्रियै अतिस्त्रये। औत्वं बाधित्वा परत्वादिदुद्भ्यामिति ङेराम्। अतिस्त्रियाम्। पक्षे अतिस्त्रौ इति।

अत्र 'वाऽचि ह्रस्वश्च'इत्येव सूत्रणीयम्। नतु "वामि ङिति ह्रस्वश्च"इति सूत्रद्वयम्। गौरवात। तस्मात्सूत्रद्वयं सन्निपातपरिभाषाज्ञापनार्थम्। अजादित्वस्य नदीसंज्ञाप्रयोजकत्वे हि नदीसंज्ञां निमित्तीकृत्य नुट् न स्यात। भ्रूणामिति आमोऽजादित्वव्याघातापत्तेरिति कौस्तुभः।

# शेषो घ्यसखि ७।

ह्रस्वौ यौ इउवर्णौ तदन्तं सखिभिन्नम् अनदीसंज्ञं घिसंज्ञं स्यात् । हरये भानवे । ह्रस्वौ किम् । ग्रामण्ये खलप्वे । यू किम् । मात्रे । असखीति किम् । सख्ये । अनदीसंज्ञं किम् । मत्यै । सुसखेरित्यादौ भवत्येव । समुदायस्य सखिशब्दभिन्नत्वात् । नच तदन्तविधिः । विशेष्यसम्बन्धाभावात् ।

नन्वेवं सखीत्यत्र ङीषन्ते "यस्येति च" इति इकारलोपव्याख्यानवैयर्थ्यम् । सवर्णदीर्घेऽपि दोषाभावात् । नचातिसखेरागच्छतीत्यत्र सर्वणदीर्घस्य पूर्वं प्रत्यन्तवद्भावाद् घिसंज्ञानिषेधः स्यादिति वृत्त्युक्तप्रयोजनसम्भवः । सत्यप्यन्तवद्भावे समस्तस्य सखिशब्दादन्यत्वानपायेन निषेधतादवस्थ्यादिति । मैवम् । सखी सख्यौ सख्य इत्यादौ अनङ्णित्वयोर्वारणाय लोपस्यावश्यकत्वात् । नच लिङ्गविशिष्टपरिभाषया दोषतादवस्थ्यम् । विभक्तौ लिङ्गविशिष्टाग्रहणात् ।

# पतिः समास एव ८।

पतिशब्दः समास एव घिसंज्ञः । भूपतये । नेह पत्या पत्ये । समासे पतिशब्दस्यैव घिसंज्ञेति विपरीतनियमं वारयितुमेवकारः । तेन दृढमुष्टिनेत्यादि सिद्धम् ।

इह पतिगृहे इत्यत्र घिसंज्ञत्वात् पूर्वनिपातनियमार्थं पृथक् सूत्रम्, अन्यथा "शेषो घ्यसखिपती" इत्यसूत्रयिष्यत् । बहुच्पूर्वस्य तु घिसंज्ञा सुसखिवत् । सखिना वानरेन्द्रेण, क्लीबे च पतिते पतौ, सीतायाः पतये नमः, कृष्णस्य सखिरर्जुनः इत्यादिकं तु छान्दसम् ।

आख्यानण्यन्तात्कर्मणि "अच इः" । लाक्षणिकत्वात् पा-दासे ग्रहणं नेत्यन्ये ।

वचो वाचस्पतेरपीत्यादौ "तत्पुरुषे कृति"इति बहुलग्रहणादलुक् । एतेन दिवस्पतेरादरदर्शिना रसादिति नैषध व्याख्यातम् । एवं च वास्तोष्पातिरपि । "षष्ठ्याःपति–"इत्यादिना सत्त्वम् । श्रियः पतिरित्याद्यनुरोधात्तत्र छन्दसीत्यनुवर्त्तते । पारस्करादित्वात्सुट् इति केचित् । "द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छच"इति सामान्यापेक्षज्ञापकादलुक् । कस्कादित्वात्सत्त्वम् । इणः परस्य तु षत्वमित्यन्ये ।

'वाचस्पतिं विश्वकर्माणमूतये', 'वास्तोष्पते भति'इत्यादौ पृथक्पदपाठो वैदिकानाम् ॥

# षष्ठीयुक्तश्छन्दसि वा ९।

पतिशब्दो घिसंज्ञः । क्षेत्रस्य पतिना वयम् ।

इह "च"इति योगविभागः । छन्दसीत्यनुवर्त्तते । तेन सर्वे विधयश्छन्दसि विकल्प्यन्त इत्यर्थः । "बहुलं छन्दसि" इत्यादिकं प्रपञ्चार्थम् ।

# ह्रस्वं लघु १०।

चेतति । चिती संज्ञाने । लघूपधगुणः । नच ह्रस्वप्रदेशेष्वपि लघुसंज्ञया व्यवहारः । सर्पिष्टमित्यादौ "ह्रस्वात्तादौ तद्धिते"इति षत्वाभावापत्तेः । गुरुसंज्ञया लघुसंज्ञाया बाधात् । तस्मादेकसंज्ञाऽधिकारात् पूर्वमेव ह्रस्वसंज्ञारम्भः ।

यत्तु भाष्ये तत्र ह्रस्वसंज्ञाया दीर्घप्लुतसंज्ञाभ्यां समावेशमाशङ्क्य एकसंज्ञाऽधिकारे ऽयं योगः करिष्यत इत्युक्तम्, तत्र च-

ारादिना ह्रस्वसंज्ञाया गुरुलघुसमावेशः करिष्यते इत्यभिप्रायः । यद्वा अत एव तत्र पक्षान्तरोपन्यास इति बोध्यम् ॥

## संयोगे गुरु ११।

ह्रस्वं गुरुसंज्ञं संयोगे परे । शिक्षा भिक्षा । "गुरोश्च हलः" इत्यप्रत्ययः ।

## दीर्घं च १२।

गुरुसंज्ञं स्यात् । ईहांचक्रे । "इजादेश्च गुरुमतः" इत्याम् ॥

## यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १३।

यस्मात्प्रत्ययो विहितस्तदादिः शब्दः प्रत्यये परे ऽङ्गसंज्ञः स्यात् । रामेण । प्रत्ययेति किम् ? स्त्री इयती । इदंशब्दाद्वतुपो वस्य घादेशः, प्रकृतेरीशूभावः, "यस्येति च" इति तल्लोपः । स्त्रीशब्दात्सुशब्दस्य तल्लोपस्य च विधिरस्तीति अङ्गसंज्ञा स्याद्भसंज्ञा चेति संज्ञाद्वयनिमित्तो "यस्य" इति लोपः स्यात् । नच इदमादेशलोपस्याभीयत्वादसिद्धत्वमिति प्रत्ययपरत्वाभावः । प्राग्भादसिद्धत्वमिति कैश्चिदभ्युपगमात् । नापि स्थानिवद्भावः । पदान्तरनिरपेक्षपदसंस्कारपक्षे स्त्रीशब्दस्यैकारस्यानादिष्टादचः पूर्वत्वाभावात् । विधिशब्दस्यापि तदेव प्रयोजनम् । तस्मिन्नसति परशब्दस्याप्यध्याहारप्रसङ्गात् ।

यत्तु भाष्ये दधि अधुनेति प्रत्युदाहृतम्, तत्तु अधुनेति प्रत्ययो निपात्यते इदमश्च लोप इति पक्षे, इदमो ऽशूभावो धुना

च प्रत्यय इति पक्षे तदसम्भवादिति कैयटः। नच विधिग्रहणेऽपि स्त्रीशब्दात्सुप्रत्ययविधानाद्दोषतादवस्थ्यम्। प्रत्यासत्त्या यस्माद्यः प्रत्ययो विहितस्तस्मिन्नेव प्रत्यये परे तद् अङ्गसञ्ज्ञमित्याश्रयणात्। तेन स्त्री अ पश्यतीत्यत्र नेयङ्। अशब्दाद् "अमि पूर्वः" इत्येकादेशस्य परादिवद्भावेन प्रत्ययत्वेऽपि अमः स्त्रीशब्दादविहितत्वात्। एवम् अततेर्डप्रत्यये टिलोपे च अशब्दस्य स्वतः प्रत्ययत्वे ऽपि न दोषः। डप्रत्ययस्याततेरेव विहितत्वेन स्त्रीशब्दप्रकृतिकत्वाभावात्। प्रत्ययापेक्षया यावान्पूर्वो भागस्तावतोऽङ्गसंज्ञा न तु प्रत्ययोत्पत्तिवेलायां यावतः प्रकृतित्वं तन्मात्रस्येत्यर्थः। तेन वदामि वदिष्यामीत्यादौ विकारणान्तस्याङ्गसंज्ञायाम् "अतो दीर्घो यञि" इति दीर्घः। नचारम्भसामर्थ्यम्, पय वय गतौ। यङ्लुकि "लोपो व्योः" इति यलोपे च पापामि पावाव इत्यादौ चरितार्थत्वात्। कुण्डानि। यदा नुम् परादिस्तदा "सुपि च" इति दीर्घः। दधीनीत्यादौ त्वकारान्तत्वाभावान्न। पूर्वान्तपक्षे सामानीत्यादिवत्सिध्यति। यदा त्वभक्तत्वपक्षस्तदेदं प्रयोजनमादिग्रहणस्य। पूर्वान्तपक्षस्यैव स्थापितत्वादप्रयोजनमेतत्। प्रत्यये किम्। प्रत्ययविशिष्टस्य ततो ऽप्यधिकस्य वा मा भूत्। तथा सति च वव्रश्चेत्युरदत्त्वस्य परनिमित्तत्वं न लभ्येत। तथा च स्थानिवद्भावाप्रवृत्त्या वकारस्य संप्रसारणं स्यात्। अल्विधित्वेन "स्थानिवदादेशः" इत्यस्य प्रवृत्तेर्दुर्वचत्वात्।

यत्तु "प्रकृत्यादि प्रत्ययेऽङ्गम्" इत्येव लाघवादुक्तुं युक्तम्। प्रकृतिमात्रस्य तु कर्त्ता कारक इत्यादौ व्यपदेशिवद्भावात् सिद्धमिति। तच्चिन्त्यम्। अङ्गातिरिक्तप्रकृतेर्दुर्वचत्वादात्माश्रयापत्तेः। नहि प्रत्ययाव्यवहितपूर्ववर्त्तित्वं प्रकृतित्वम्। स्त्री इयतीत्यादावतिव्याप्तेः। बहुगुड इत्यादावव्याप्तेश्च। स्फुटं चेदं भूषणे इ-

ास्तां विस्तरः ।

इह 'यस्मात्प्रत्ययविधिस्तदादि प्रत्यये'इति योगविभागः । परिभाषेयम् । प्रत्यये गृह्यमाणे यस्मात्तस्य विधिस्तदादिग्रहणं भवतीत्यर्थः । गृह्यमाणपदाध्याहारात्सूत्राणां सोपस्कारत्वात् । तेन "ञ्नित्यादिर्नित्यम्"इत्यादौ यत्र प्रत्ययः सप्तम्या निर्दिश्यते तत्र तदादेर्ग्रहणात् 'देवदत्तो गार्ग्यः'इत्यादौ सङ्घातस्याद्युदात्तत्वं न भवति किंतु गार्ग्यशब्दस्यैव । "सुप आत्मनः क्यच्"इत्यत्राप्यनेन तदादिनियमः । सुपा कर्मणस्तदादेर्वा विशेषणात्तदन्तविधिः । तेन महान्तं पुत्रमिच्छतीत्यादौ समुदायान्न क्यच् । समुदायस्यासुबन्तत्वात् । अवयवस्य सापेक्षत्वाद् असामर्थ्यात् । देवदत्तश्चिकीर्षतीत्यत्र सङ्घातस्य न धातुसंज्ञा । देवदत्तो गार्ग्य इति संघातस्य न प्रातिपदिकसंज्ञा । देवदत्तो गार्ग्यायण इति संघातान्न तद्धितोत्पत्तिः । अन्यथा वृद्धिस्वरौ संघातस्य स्याताम्, पूर्वस्य च सुपो लुक् स्यात् । तस्मात् प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणमिति परिभाषा वाचनिकीति सिद्धम् । यत्र पूर्वः कार्यित्वेनाश्रीयते तत्र तदादेः कार्यं भवति । यत्र तु प्रत्ययान्तः संघात आश्रीयते तत्र तदादेः प्रत्ययान्तस्य ग्रहणमित्यर्थः ।

केचित्तु उक्तयोगविभागलभ्यत्वे एतत्परिभाषायां तदन्तस्येत्यंशस्य निर्मूलत्वप्रसङ्गः । तदन्तशब्दस्यात्रानुपादानाद् इत्याहुः ।

तन्न । एकदेशानुमतिद्वारा पूर्वाचार्योक्तस्यांशान्तरस्यापि सङ्ग्रहसिद्धेः । ज्ञापकस्थल एव तथात्वमित्यत्र बीजाभावाव । इष्टसिध्यर्थताया ज्ञापकवद्योगविभागेऽपि तुल्यत्वात् ।

नन्वेवम् अवतप्तेनकुलस्थितं त एतद्, उदकेविशीर्ण

त एतत् इत्यादौ च गतिकारकाधिकेन समासो न स्या-दिति चेद् न। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषया तत्सिद्धेः।

प्रयोजनं समासतद्धितविधिस्वराः।

सांकूटिनम्,व्यावक्रोशी,इत्यादौ "अणिनुणः" इति सोपसर्गा-दण्। यदि तु कूटिन्नित्यस्मादण् स्यात्तदा तस्यैवादिवृद्धिः स्यात्। दूरादागतः। आगम्यते स्मेति कर्मणि क्तः। गतिस्वरेणाद्युदात्त आगतशब्दः। ततो दूरशब्दस्य "स्तोकान्तिक–" इति समासः। "पञ्चम्याः स्तोकादिभ्यः" इत्यलुक्। इह थाथादिस्वरेणान्तोदा-त्तत्वम्। नच समासस्वरेण सिद्धिः। "गतिरनन्तरः" कर्मार्थकक्ता-न्ते परे अव्यवहितगतिः प्रकृत्येति आद्युदात्तस्य तदपवादत्वात्। तथाच दूरादागतशब्दो मध्योदात्तः स्यात्। सत्यां तु परिभा-षायां "गतिकारकोपपदात्कृद्" इति कृत्स्वरापवादं कृत्स्वरं बा-धित्वा "थाथघञ्क्ताजबित्रकाणाम्" इति अन्तोदात्तत्वम्। क्तग्रह-णेन गतिकारकपूर्वस्यापि ग्रहणात्। नच थाथादिस्वरस्यापि गतिस्वरोऽपवाद इति वाच्यम्। गतेरुत्तरस्य क्तान्तस्य यदन्तो-दात्तत्वं तस्यैव सोऽपवादः। कारकादुत्तरस्य थाथादिस्वर एव भवतीति सिद्धान्तात्।

नन्वागतशब्दस्याद्युदात्तत्वे ऽपि दूरशब्देन समासे सति-शिष्टत्वात्समासान्तोदात्त एव भविष्यतीति चेत्।

अत्र कैयटादयः–अन्यार्थं कृतया परिभाषया कृदुत्तरपदप्र-कृतिस्वरेणाद्युदात्ते आगतशब्दे प्राप्ते सगतेरपि क्तान्तत्वात्स्थाना-न्तरप्राप्तत्वाद्गतिस्वरस्य बाधकस्यापि बाधेन थाथादिस्वरो भव-तीत्येवाभिप्रेतम्, नतु स्वर एवानन्यथासिद्धम् उदाहरणमिति। अस्या च "गतिरनन्तरः" इत्यनन्तरग्रहणं ज्ञापकम्। तद्धि अ-

उद्धृतमित्यत्र अभिशब्दस्य प्रकृतिस्वरो मा भूदित्येतदर्थम् । यदीयं न स्यात्तदा उद्धृतशब्दस्य क्तान्तत्वाभावात् क्तान्ते उत्तरपदे ऽनन्तरे परे गतेः स्वरो विधीयमानो नैव प्राप्नोतीति तद् व्यर्थ स्यात् ।

# सुप्तिङन्तं पदम् १४।

सुबन्तं तिङन्तं च पदसंज्ञं स्यात् । ब्राह्मणाः। ऊचुः। यद्यपि प्रत्ययग्रहणे तदन्तग्रहणात्सिद्धन्तथाऽपि 'सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति ज्ञापनार्थमन्तग्रहणम्। तेन कुमारी चासौ गौरितरा चेति विग्रहे कुमारगौरितरेति सिद्धम् । तरबन्तस्य घसंज्ञायां कुमारीशब्दस्य पुंवद्भावं परत्वाद्बाधित्वा "घरूप—" इति ह्रस्व एव स्यात्। गौरीशब्दस्य च तरपि परे ह्रस्वो न स्यात् ।

नन्वेवं "सनाद्यन्ताः" इत्यत्रान्तग्रहणं कार्यमिति गौरवम्, अन्यथा सनादेरेव धातुसंज्ञायां तदादेरवाङ्गत्वात्ततः पूर्वमट् स्यात्, "कृत्तद्धित—" इति सूत्रेच केवलानामेव कृत्तद्धितानां प्रातिपदिकसंज्ञा स्यात् । ततश्च भिद् छिद् इत्यादौ न स्यात्। नाप्यर्थवत्सूत्रेण सिद्धिः । अधातुरिति निषेधात्। नापि प्रत्ययलक्षणेन। प्रत्ययनिमित्तमन्यस्य यत्किञ्चित्कार्यं विधीयते तत्रैव तत्प्रवृत्तेः। प्रत्ययस्यैव यत् कार्यं तस्य तेन दुर्लभत्वात् । असतो वचनशतेनापि कार्यित्वानुपपत्तेः । एवम् औपगव इत्यत्र केवलस्य तद्धितस्य प्रातिपदिकसंज्ञायां षष्ठ्याः प्रातिपदिकानन्तर्गतत्वाल्लुक् न स्यादिति चेत् ।

अत्र भाष्यं "सनाद्यन्ताः" इत्यत्र कृतमेवान्तग्रहणम्, "कृत्तद्धित—" इत्यत्र त्वर्थवद्ग्रहणमनुवर्त्तते कृत्तद्धितान्तं चार्थवद् न केवलाः कृतस्तद्धिता वा" इति ।

स्यादेतत् । यद्यर्थवत्ता पारमार्थिकी सा कृत्तद्धितान्तस्या-पि नास्ति । पदस्य वाक्यस्य वा तथात्वात् । अथ प्रक्रियाद-शायाम् अन्वयव्यतिरेकाभ्यां कल्पिताऽर्थवत्ता तदा कृत्तद्धित-योरप्यस्तीति चेत् ।

अत्राहुः—अर्थवद्ग्रहणानुवृत्तिसामर्थ्याद् लौकिकार्थप्रत्या-सन्नो ऽभिव्यक्ततरो योऽर्थः प्रत्ययान्तेषु लक्ष्यते स आश्रीयत इति । प्रकृतिप्रत्यययोर्मिलित्वा यदर्थबोधकत्वं स इति यावत् ।

## नः क्ये १५।

क्यङि क्यचि च नान्तमेव पदसंज्ञम् ।नियमार्थमिदम् । सुब-न्तात्तदुत्पत्तेर्वक्ष्यमाणत्वात् । राजेवाचरति राजायते। "नलोपः प्रातिपदिकान्तस्य"इति नलोपः । क्यषन्तं तु भाष्यमते नो-दाहरणम् । "नायं नकारान्ताद्विधीयते"इति भाष्योक्तेः । लो-हितादिडाज्भ्य एव तद्विधानाच्च । नान्तमेवेति किम् । वाच्य-ति । स्रुच्यति । पदत्वाभावान्न कुत्वादि । न च विपरीतनि-यमापत्तिः । "नङि सम्बुद्ध्योः"इति "नलोपः प्रातिपदिकान्त-स्य"इति च ज्ञापकात् । अन्यथा 'नलोपः क्ये'इत्येवावक्ष्यत् ।

## सिति च १६।

सिति प्रत्यये परे पूर्वं पदसंज्ञम् । भसंज्ञाऽपवादः । "भ-वतष्ठक्छसौ" । भवदीयम् । पदत्वाज्जश्त्वम् । ऋतुः प्राप्तो ऽस्य ऋत्वियः । "ओर्गुणः"इति गुणाभावः ।

## स्वादिष्वसर्वनामस्थाने १७।

कप्रत्ययावधिषु सर्वनामस्थानभिन्नेषु स्वादिषु परेषु पूर्वं

संज्ञम् । राजभ्याम् । सर्वनामस्थाने तु राजानौ इत्यादि ।

नन्वेवं राजा इत्यत्र नलोपो न स्यात् । प्रत्ययलक्षणेन सर्वनामस्थानपरत्वाद् उक्तनिषेधेन पदसंज्ञाया दुर्लभत्वाद् इति चेत् न । असर्वनामस्थाने इत्यस्य पर्युदासत्वात् । "सुप्तिङन्तम्"इति प्राप्तपदसञ्ज्ञाया बाधाभावात् । अस्तु वा प्रसज्यप्रतिषेधः । एतत्सूत्रप्राप्तेरेव प्रतिषेधान्न दोषः । अनन्तरस्येति न्यायात् । न च परत्वादनया सुप्तिङन्तमित्यस्य बाधः । अस्याः प्रतिषिद्धत्वात् । तदुक्तम्—"नोत्सहते प्रतिषिद्धा सती बाधितुम्"इति । "स्वादिषु"इति हि प्राप्तिः किं पूर्वस्याः प्राप्तेर्बाधिका ऽस्त्वथ निषेधस्य बाध्या । तत्र प्राप्तबाधस्यानुचितत्वाद् अप्राप्त्यनुमानस्य बाधत्वाद् अपवादविषयपरिहारेणोत्सर्गस्य प्रवर्त्तनात् "स्वादिषु"इत्यस्य सर्वनामस्थानांशे प्रवृत्त्यभावात् तस्याः "सुप्तिङन्तम्"इत्येतद्बाधकत्वानुपपत्तेः । अत एव वृक्षा इत्यत्र "नादिचि"इति प्रतिषेधविषये पूर्वसवर्णदीर्घस्य प्रवृत्त्यभावे "वृद्धिरेचि"इत्यस्य प्रवृत्तिः ।

यद्वा "स्वादिषु"इति योगो विभज्यते—स्वादिषु पूर्वं पदसंज्ञं भवति । सर्वनामस्थाने ऽयचीत्यन्यो योगः । 'असर्वनामस्थाने' इत्यत्र श्रुतो नञ् यचीत्यनेन सम्बध्यते । यकारादि सर्वनामस्थानं नास्तीति यकारग्रहणं उत्तरार्थम् । तथाचाऽजादौ सर्वनामस्थाने पदसंज्ञानिषेधो न तु हलादौ इति राजेत्यत्र पदसंज्ञासिद्धिः । ततो भसंज्ञायां नञः सर्वनामस्थानेनैव सम्बन्धः । असर्वनामस्थाने यकारादावजादौ च पूर्वं भसंज्ञमित्यर्थः ।

ननु सावपि पदव्याख्याने 'भद्रं करोषि गौः'इत्यत्र "पूर्वस्याद्धस्यादुत्तरस्येदुतौ"इत्यस्य प्रसङ्गः । तत्र पदान्तग्रहणेनापि दुर्वारत्वात् । मैवम् । वाक्यपदयोरन्त्यो य एच् तस्य तद्विधानाद्, अत्र

तु वाक्यस्य विसर्जनीयो ऽन्त्यो न त्वौकारः। "भुवद्वद्भ्यो धारद्वद्भ्य इत्यनयोरुपसंख्यानम्"। "तसौ मत्वर्थे"इति भसंज्ञाप्राप्तौ पदसञ्ज्ञाविधानम्। शतृप्रत्यये व्यत्ययेन भवतेः शपो लुक् उवङ् ततो मतुप्।

# यचि भम् १८।

यकारो ऽज्वा इत्येतदन्यतरादिषु स्वादिष्वसर्वनामस्थानेषु कप्रत्ययावधिषु परतः पूर्वं भसंज्ञम्। पदसंज्ञापवादः। गार्ग्यः। "यस्य"इति लोपः। राज्ञः। "अल्लोपो ऽनः"।

भसंज्ञायामुत्तरपदलोपे षषः प्रतिषेधः।

अनुकम्पितः षडङ्गुलिदत्तः षडिकः। "बह्वचो मनुष्यनाम्नः"इत्यनुकंपायां ठच्। "ठाजादावूर्ध्वम्"इति ङ्गुलिशब्दस्य लोपः। "यस्येति च"इति अकारलोपः। अत्र तुल्यावधिकया भसंज्ञया प्रत्ययलक्षणेन सुबन्तत्वात्प्राप्तायाः पदसंज्ञाया बाधाज्जश्त्व न स्यादित्यारम्भः। सिद्धमचः स्थनिवत्त्वात्। भसंज्ञायां विधीयमानायां अकारलोपस्य स्थानिवद्भावादकारान्तमेतद्भसंज्ञां प्रतीति भिन्नावधिकत्वाद्भपदसंज्ञयोर्न बाध्यबाधकभावः। नच "न पदान्त–"इति स्थानिवत्त्वनिषेधः। पदान्तस्य विधेयत्वे तत्प्रवृत्तेः। कानि सन्ति कौ स्त इत्यत्र पदान्तयोर्विधेयत्वात्। इह तु जश्त्वस्य पूर्वमेव प्रवृत्तत्वात्।

नन्वेवं अनुकम्पितो वागाशीर्दत्तो वाचिक इत्यत्रापि कुत्वं स्यात्। नैवम्। सिद्धमेकाक्षरपूर्वपदानामुत्तरपदलोपवचनात्। तस्य च हलजादेशत्वाद् न स्थानिवद्भाव इति तुल्यावधिकया भसंज्ञया बाधात्, "षषष्ठाजादिवचनाद्"इत्यकारस्य पृथग्लोपान्न दोषः

"नभोऽङ्गिरोमनुषां वत्युपसंख्यानम्" ।

नभस्वत्, अङ्गिरस्वत्, मनुष्वत् । पदसंज्ञायां तु रुत्वं स्यात्, न सत्वम् । अपदान्तस्येति वचनात् ।

"वृषण्वस्वश्वयोः" ।

वृषण्वसुः । वृषणश्वस्य यन्छिरः । पदान्तस्येति निषेधाण्णत्वं न स्यात् । नलोपश्च स्यात् । नच भत्वादल्लोपापत्तिः । अङ्गसंज्ञाया अभावात्, तस्याङ्गाधिकारीयत्वात् । उपसंख्यानान्येतानिच्छन्दोविषयाणीति कैयटः ।

# तसौ मत्वर्थे ॥१८॥

तान्तसान्तौ भसंज्ञौ मत्वर्थे प्रत्यये । तडित्वान् । यशस्वी । नच यशस्वानित्यत्र न स्यादिति वाच्यम् । मतुपोऽपि मत्वर्थवृत्तित्वात् । देवदत्तशालायां ब्राह्मणा आनीयन्तामित्युक्ते हि ब्राह्मणत्वस्य देवदत्तवृत्तित्वे तस्यापि कार्यान्वयः । उद्देश्यतावच्छेदकरूपावच्छिन्नत्वात् । देवदत्तशाला भेद्यतामित्युक्ते तु न, शालात्वस्य देवदत्तावृत्तित्वात् । अत एव च्व्यर्थेष्वित्युक्त्वा अच्वाविति प्रतिषेधः सङ्गच्छते ।

# अयस्मयादीनि छन्दसि ॥१९॥

संज्ञाद्वयाधिकाराद् यथासम्भवं तदुभयद्वारैषां साधुत्वविधानम् । "उभयसंज्ञान्यपि" इति वार्त्तिकात् । "मयड्वैतयोर्भाषायाम्"इत्युक्ते छन्दसि कथं मयडित्याशङ्क्य अस्मादेव निपातनादिति न्यासकृत् । 'द्व्यचः छन्दसि''इतीत्यन्ये । अत्र भत्वाद्रुत्वाभावः । स सुष्टुभा स ऋक्वता गणेन । पदत्वात्कुत्वं भत्वाज्जश्त्वाभावः । कुत्वविध्येकवाक्यतापन्नपदत्वस्य भत्वेन बाधात् ।

## बहुषु बहुवचनम् ॥२०॥

बहुत्वे एतत्स्यात् । वृक्षाः । दारा इत्यादौ अवयवनिष्ठबहुत्वस्यावयविन्यारोपः । प्रकृत्यर्थवृत्तित्वस्य तावता ऽपि निर्वाहात् । जलपरमाणावप्याप इति प्रयोगस्तद्गुणानादायेति वर्द्धमानादयः । नच घटेऽपि घटा इत्यापत्तिः । तत्रारोपे प्रमाणाभावात् । दारा इत्यादौ तु बहुवचनान्तत्वनियमप्रतिपादककोशवृद्धव्यवहारादेर्नियामकत्वात् ।

## द्व्येकयोर्द्विवचनैकवचने॥२१॥

वृक्षौ वृक्षः । द्व्येकशब्दौ भावप्रधानौ, अन्यथा बहुवचनापत्तेः । पूर्वसूत्रे ऽपि बहुपदं बहुत्वपरम् । धर्मिगतबहुत्वस्य धर्मे आरोपाद्बहुवचनम् । अनेकपर्याप्तसंख्यारूपबहुत्वस्य ग्रहणं यथा स्यात् । तच्च वैपुल्यवाचिनो बहुशब्दस्य ग्रहणवारणार्थम् । तेन बहुः सूप इत्यादौ न ।

अत्र श्लोकवार्त्तिकम्—

सुपां कर्मादयो ऽप्यर्थाः संख्या चैव तथा तिङाम् ।
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा ।

"कर्मणि द्वितीया" इत्यादौ प्रकरणस्य संख्याशास्त्रस्य च स्वादिसूत्रेण सहैकवाक्यतया विधायकत्वम् । एकस्मिन् कर्मणीत्येवं गुणगुणिनोः सामानाधिकरण्येन सम्बन्धे संख्याकर्मादयः सुपामर्था भवन्ति । संख्याशास्त्रस्य तिबादिवाक्येनाप्येकवाक्यत्वम् । अत एव संख्या चैवेत्यस्य पृथगुपादानम् । तृतीयचरणेनार्थनियम उक्तः । चतुर्थेन प्रकृतार्थापेक्षः प्रत्ययनियमः उक्तः । तुल्यजातीयस्य नियमेन व्यावर्त्तनादव्ययेभ्यः स्वादीनामुत्पत्तिः ।

एकत्व एवैकवचनमिति नियमेन द्वित्वादेरेव व्यावर्त्तनात् । भवतु वा प्रत्ययानां सामान्ये नियमः, तथाऽपि "अव्ययादाप्सुपः" इति लोपविधानाज्ज्ञापकादव्ययेभ्यः स्वादिसिद्धिरतः पदत्वाद्रूत्वाद्युपपत्तिरिति भाष्यम् ।

इति श्रीसिद्धान्तसुधानिधौ प्रथमस्याध्यायस्य चतुर्थे पादे
द्वितीयमाह्निकं समाप्तम् ।



# कारके ॥२२॥

अधिकारोऽयम् । प्रथमार्थे सप्तमी । प्रसिद्ध्यभावादन्यत्राविधानाच्च सप्तमीनिर्देशानुपपत्तेः कारकसंज्ञाया एव विधेयत्वात् ।

नन्वेवं एकसंज्ञाधिकारादपादानादिसंज्ञाभिः समावेशो न स्यात् ।

अत्राहुः—"ध्रुवमपाये" इति योगविभागेन ध्रुवस्य कारकसंज्ञा विधीयते । ततो "अपादानम्" इति कारकग्रहणं ध्रुवमपाये इति चानुवर्त्तते । कारकं सदपादानसंज्ञमित्यर्थः । अनुवृत्तिं विनाऽपि वचनसामर्थ्यात् पर्याये लब्धे ऽनुवृत्तिसामर्थ्यात्समावेशसिद्धिः । एवं संप्रदानादिषु व्याख्येयम् । स्तम्बेरम इत्यादौ अधिकरणत्वात्सप्तमी । "गतिकारकोपपदात्कृद्" इत्युत्तरपदप्रकृतिस्वरश्च सिद्धः । थाथादिसूत्रे अप्साहचर्येण एरच एवोपादानात् । नचोपपदत्वादेव तत्सिद्धिः । सप्तम्यन्तत्वविशिष्टस्य सप्तमीनिर्दिष्टत्वाभावादिति ग्रन्थकृतः ।

अत्र नैयायिकाः-विभक्त्यर्थद्वारा क्रियान्वयि सत् क्रियानिमित्तं कारकम् । राज्ञः पुरुषो गच्छतीत्यत्राज्ञाद्वारा गमनप्रयोजकस्य राज्ञो वारणाय क्रियान्वयीति । साक्षात्क्रियान्वयित्वं न ग्रामादेः । तदन्वितान्वयित्वं राज्ञोऽपीति अतो विभक्त्यर्थद्वारेणेति । सम्बन्धस्य तु न क्रियायामन्वयः । सम्बन्धप्रकारकबोधे नामजन्योपस्थितेर्हेतुत्वात् । अत एव सम्बन्धिनो न कारकत्वम् । नचापादाने सम्प्रदाने चाव्याप्तिः, तयोः क्रियानिमित्तत्वाभावादिति वाच्यम् । परस्वत्वफलकत्यागविशेषो हि दानम्, तत्र

विशेषणपरस्वत्वांशहेतुतया संप्रदानस्य कारकत्वात् । स्वीकारस्य स्वत्वहेतुत्वात् । विभागफलकत्वे सत्यधःसंयोगफलिका च क्रिया पतनं तत्र विभागांशहेतुतया ऽपादानस्य कारकत्वात् । यथा उत्तरसंयोगनिमित्ततया संयोगफलकक्रियात्मकगमन-निमित्तत्वं ग्रामस्येत्याहुः ।

वैयाकरणास्तु अपादानाद्यन्यतमत्वं सङ्केतविशेषसम्बन्धेन कारकशब्दो वा कारकत्वम् ।

तदुक्तम्—

सामान्यान्यभिधीयन्ते सत्ता वा तैर्विशेषिता ।
संज्ञाशब्दस्वरूपं वा प्रत्ययैस्त्वतलादिभिः ॥ इति ।

तत्क्रियाकारकत्वं तु तत्क्रियान्यतमत्वादि सङ्केतविशेष-स्थाने बोध्यत्वसम्बन्धेनेति वाच्यम् । तत्क्रियाकारकस्य सङ्केताभावात् । नचाकर्मकक्रियायां कर्मघटितमन्यतमत्वं कथमिति वाच्यम् । तन्निर्मुक्तस्यैव वाच्यत्वात् ।

अन्वर्था चेयं संज्ञा करोतीति कारकमिति । तेन क्रिया-ऽनन्वयिनो न संज्ञा ।

ननु ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यत्र पुत्रो ऽपि कथं कारकम्, प्रष्टुः प्रश्नकारकत्वे ऽपि यं प्रति प्रश्नस्तस्य जनकत्वायोगात् । सत्यम् । जिज्ञासाविषयविषयकं हि वाक्यं प्रश्नः । जिज्ञासा च ज्ञानविषयकेच्छा । तदेकदेशे ज्ञाने तस्य जनकत्वात् अपादानादिवत् ।

नन्वङ्कुरो जायत इत्यादौ कथं कारकत्वं पूर्वमसत्त्वादिति चेन्न । बुद्धिव्यवस्थापितार्थस्य क्रियाकारकत्वस्वीकारात् ।

केचित्तु तत्र अङ्कुरादिपदं तदुपादाने निरूढलाक्षणि-

कम् । तथा चाङ्कुरावयवस्तदुत्पत्त्यनुकूलव्यापारवान् इति धीरिसाहुः ।

स्यादेतद् । वृक्षस्य पर्णं पतति इत्यत्र वृक्षस्य कारकतापत्तिः । वृक्षात्पततीत्यत्र कारकतायाः क्लृप्तत्वात् ।

अथात्र संबन्धित्वेनैव वृक्षस्य विवक्षा । अत एव वृक्षमजहत्यपि पर्णे शाखास्थे वृक्षस्य पर्णं पततीति न प्रयोग इति चेत्, तथाऽपि ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यत्र ब्राह्मणस्य कर्मसंज्ञा स्यात् ।

मैवम् । करोतीति कारकमित्यन्वर्थसंज्ञाश्रयणात् ।

नन्वेवं कारकशब्दस्य कर्तृपदसमानार्थकत्वात्करणं कारकम् अधिकरणं कारकमित्याद्यनुपपन्नम् । करणादीनां कर्तृपरन्त्रत्वात् ।

अत्र वार्तिकम्—सिद्धं तु प्रतिकारकं क्रियाभेदात्पचादीनां कारणाधिकरणयोः कर्तृभाव इति ।

अस्यार्थः— स्वव्यापारे सर्वेषां स्वातन्त्र्यात्तदनुष्ठानद्वारेण प्रधानक्रियायामुपयोगात्कर्तृसन्निधावपि स्वव्यापारस्यानिवर्तनात् पारतन्त्र्यावस्थायामप्यनिवृत्तं कारकत्वम् ।

तथाहि अधिश्रयणोदकावसेचनतण्डुलावपनैधोऽपकर्षणक्रियाः प्रधानस्य कर्तुर्व्यापारः । तत्र धात्वर्थविवक्षायां देवदत्तस्य कर्तृत्वे देवदत्तः पचतीति । संभवनं धारणं चाधिकरणस्य व्यापारः । तस्य पुरस्कारे स्थाली पचतीति । आविक्लित्तेर्ज्वलनं काष्ठानाम् । तत्र काष्ठानि पचन्तीति । एवं देवदत्तः छिनत्ति इत्यादौ योज्यम् । नन्वेवमपादाने ग्रामे ग्राम आगच्छतीति प्रयोगाभावात्तत्र कर्तृत्वं नास्तीति चेद् बलाहकाद्विद्योतते, बलाहके विद्योतते, बला-

करणाद्यवस्थायां तु न कर्तृसंज्ञा। "स्वतन्त्रः कर्ता" इत्यत्र कारकत्वादेव स्वातन्त्र्ये लब्धे पुनः स्वतन्त्रश्रुतेः स्वतः स्वातन्त्र्यवत एव कर्तृसंज्ञा नतु पारतन्त्र्यस्वातन्त्र्योभयवत इति नियमार्थत्वात्। कारकसंज्ञा तु वस्तुस्थित्या विद्यमानमनुद्भूतत्वेन विवक्षितमपि स्वातन्त्र्यमाश्रित्य करणादीनां विधानसामर्थ्यात्प्रवर्तते। यत्रच शक्तीनां निमित्तनिमित्तिभावेन युगपद्विवक्षा तत्र संज्ञानां विप्रतिषेध उच्यते। यथा धनुषा विध्यतीत्यत्र। धनुषोऽपायविवक्षां विना साधकतमत्वाभावात्संज्ञाद्वयप्रसङ्गे परत्वात्करणसंज्ञा। असिः छिनत्तीति सत्येव साधकतमत्वे स्वातन्त्र्यस्य विवक्षितत्वात्परत्वात्कर्तृसंज्ञा। तैक्ष्ण्यादीनां करणत्वम्। तेषा तु कर्तृत्वविवक्षायामात्मनः करणत्वम्। विवक्षावशेन तैक्ष्ण्यादीनां कर्तृत्वकरणत्वाभ्यां व्यवस्थापनात्। तस्मात्कर्तृत्वादिकं विवक्षानियतम् इति सिद्धम्।

तदुक्तं वाक्यपदीये—

वस्तुतस्तदनिर्देश्यं नहि वस्तु व्यवस्थितम्।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः॥ इति।

गौः सर्वं प्रति गौरेव न तु कश्चित्प्रत्यगौरितिवदिदं कर्मैव अयं कर्तैव इति नियमो नास्तीत्यर्थः। भाष्ये तु पक्षान्तरमप्युक्तम्—कारकपदमत्र क्रियापरम् करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्तेः। विषयत्वेन चायमधिकारः। क्रियायां विषये यध्रुवमित्यादिरर्थः। अत एव कारके इति निर्देशोऽपि सङ्गच्छते। निर्धारणस्यानेकाश्रयतया तदर्थत्वे बहुवचनापत्तेः। "कारकाद्दत्तश्रुतयोः" इत्यादौ कारकशब्दस्य स्वरितत्वात्तदधिकारोपात्तानामपादानादीनां ग्रहणमिति कैयटः॥

# ध्रुवमपाये ऽपादानम् ॥२३॥

अपायो विश्लेषस्तस्मिन् साध्ये यद् ध्रुवमवधिभूतं तदपादानसंज्ञम् । ध्रु गतिस्थैर्ययोः । कुटादिः । अस्मात्पचाद्यच् । ध्रुव स्थैर्ये इति पाठे तु इगुपधत्वात्कः । तथा च क्रियानाश्रयत्वं तदर्थः ।

तथा च यन्निष्ठविभागजनकत्वेन यन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वेन च या क्रिया विवक्षिता तत्त्वं तत्क्रियाऽपादानत्वम् । यत्पदं यत्पदाभिधेयपरम् । तेन वृक्षाद्वृक्षे पततीत्यत्र सप्तम्यन्तपदाभिधेयत्वविशिष्टस्य नापादानत्वम् । वृक्षात्पर्णं पततीत्यत्र विभागान्योन्याभावप्रतियोगितावच्छेदकत्वं पञ्चम्यर्थः । तिङर्थ आश्रयः । तस्य पतनक्रियायां वृत्तित्वेनान्वयः । पञ्चम्यर्थयोश्च यथाक्रमं जनकत्वस्वरूपसम्बन्धाभ्याम् ।

विभागजनकत्वं पञ्चम्यर्थ इति तार्किकरीत्या तु तस्यापि स्वरूपसंबन्धेनैवान्वयः । पर्णस्याभेदेनाश्रये, विभागान्योन्याभावयोर्वृत्तित्वेन वृक्षस्यान्वयः ।

वृक्षवृत्तिविभागजनकं वृक्षवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकं च पर्णरूपाश्रयवृत्ति पतनमिति शाब्दधीः । यथोक्तपतनाश्रयः पर्णमिति पर्णविशेष्यकबोधस्तार्किकाणां विशेषः ।

केचित्तु विभागः परसमवेतत्वं च पञ्चम्या अर्थः । तथाच वृक्षवृत्तिविभागजनकं वृक्षभिन्नसमवेतं च यत् पतनं तदाश्रयः पर्णमिति धीः ।

नन्वत्र पञ्चम्यर्थतावच्छेदकभेदे वृक्षादेः प्रकृत्यर्थस्य प्रतियोगितामात्रेणान्वयः, उत प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियो-

गितया वा, प्रकृत्यर्थतावच्छेदकाश्रययत्किञ्चित्प्रतियोगितया वा?,।

नाद्यः। पर्णात्पर्णं पततीत्यापत्तेः। स्वस्मिन्नपि द्वित्वावच्छिन्नप्रतियोगितया स्वभेदसत्त्वात्।

न द्वितीयः। द्रव्यात्पततीत्यनापत्तेः। द्रव्यत्वावच्छिन्नप्रतियोगिताकभेदस्य पर्णादावसत्त्वात्। अनुयोग्यवृत्तिधर्मस्यैव भेदप्रतियोगितावच्छेदकत्वात्।

न तृतीयः। वृक्षात्पतति पर्णे पर्णात्पततीति प्रसङ्गात्। पतनस्य तत्पर्णवृत्तिविभागाजनकत्वात्, प्रकृत्यर्थतावच्छेदकपर्णत्वाश्रयतदन्यपर्णव्यक्तित्वावच्छिन्नप्रतियोगिताकभेदवत्पतनाश्रयपर्णवृत्तित्वाच्चेति चेत्।

सत्यम्। या व्यक्तिर्विभागेनान्वेति तव्द्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रकृत्यर्थस्य भेदान्वयादित्याहुः।

यत्तु अपादानत्वादिकमखण्डमेवेति। तन्न। तद्रूपेण बोधाभावात्, अखण्डोपाधेरनङ्गीकाराच्च।

प्रकृतमनुसरामः—

धावतो ऽश्वात्पततीत्यादौ अश्वादेः क्रियावत्त्वेऽपि प्रकृतिपञ्चम्यर्थविभागजनकत्वान्वयिनी या क्रिया तद्रूपत्वमस्त्येव। एवं परस्परान्मेषावपसरत इत्यादौ।

तदुक्तम् वाक्यपदीये—

अपाये यदुदासीनं चलं वा यदि वा चलम्।
ध्रुवमेवातदावेशात्तदपादानमुच्यते॥
पततो ध्रुव एवाश्वो यस्मादश्वात्पतत्यसौ।
तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमुच्यते॥
उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्मजे।
विभागे प्रविभक्ते तु क्रिये तत्र व्यवस्थिते॥

मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् ।
मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक् ॥

स्यन्दनजन्यविभागाश्रयत्वेन वृक्षात्पर्णं स्यन्दते इति वारणाय क्रियेति सकर्मकधातुपरम् । एवं धात्वर्थानवच्छेदकत्वेन विभागविशेषणाद् वृक्षं त्यजतीत्यादौ नातिव्याप्तिः ।

ननु विभागविशिष्टक्रियायास्त्यज्यर्थतया विभागे विभागविशिष्टक्रियाजन्यत्वाभावान्न दोष इति चेत् ।

न, अधःसंयोगावच्छिन्नक्रियायाः पतत्यर्थतया वृक्षात्पततीत्यादेरप्यसिद्धेः । तदुपलक्षितव्यापारजन्यत्वस्य विभागे उभयत्र साम्यादिति वृक्षाद्विभजते इत्यादौ स्वरूपसंबन्धरूपमवधित्वं पञ्चम्यर्थः । अपाये विभागे ध्रुवमवधिभूतमित्यर्थः । वृक्षनिष्ठावधितानिरूपकविभागाश्रयः पर्णमिति धीः ।

नच स्वस्माद्विभजते इत्यस्यापत्तिः । स्वप्रतियोगिकत्वविशिष्टसंयोगस्येव स्वावधिकत्वविशिष्टविभागस्यापि स्वावृत्तित्वादिति तार्किकाः ।

इदंच त्रिविधम् । तदुक्तम्—

निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा ।
अपेक्षितक्रियं चेति त्रिधाऽपादानमुच्यते ॥

यत्र धातुना साक्षाद्गतिर्निर्दिश्यते तद् आद्यम् । यथाऽश्वात्पततीत्यादि । यत्र क्रिया धात्वन्तरार्थविशिष्टं स्वार्थमाह तद् द्वितीयम्, बलाहकाद्विद्योतते इति । अत्र निःसरणविशिष्टद्योतनं द्युतेरर्थः । बलाहकान्निःसृत्य द्योतते इत्यर्थः ।

एतेन कुसूलात्पचति इत्यादि व्याख्यातम् । आदाय पचतीत्यर्थात् ।

तृतीयं तु प्रत्यक्षसिद्धमागमनं हृदि निधाय यत्र पृच्छ-

ति कुतो भवानिति, पाटलिपुत्रादिति चोत्तरयति ।

अत्र कैयटो ऽस्मत्पितृचरणाश्च सांकाश्येभ्यः पाटलिपुत्रा अभिरूपतरा इति तृतीयोदाहरणम् । तत्रहि क्रियावधिपदं न श्रूयते केवलं प्रतीयते ।

यद्यप्यत्र "पञ्चमी विभक्ते"इतिसूत्रेण विभक्तवति निर्द्धारणाश्रये पञ्चमी तथापि भाष्ये "यस्तैः साम्यं गतवान् स एतत्प्रयुङ्क्ते"इत्युक्तम् ।

अस्यार्थः—तैः सांकाश्यकैः पाटलिपुत्रकाणां समगुणत्वाद् यः साम्यं ज्ञातवान् स प्रकर्षाश्रयेण पुनः पृथक् कृत्वा वाक्यं प्रयुङ्क्ते इति । तथाच ध्रुवमपाये इत्येव सिद्धमित्याहुः ।

तेषामयमाशयः—कुसूलात्पततीत्यस्मात् कुतो भवानित्यस्य वैषम्ये मानाभावः । कुसूलादादाय पचति कुतो भवानागत इति चोभयत्रापि क्रियाप्रयोगस्यापि संभवाच्च । नहि तत्रादानविशिष्टः पाको धात्वर्थः किन्तु आक्षेपादेवादानं गम्यते । पाकस्त्वाक्षेपकमात्रम् । तस्मादपेक्षितक्रियं यत्र क्रियापदप्रयोगाभावः सार्वत्रिकः किन्तु गम्यमानैव क्रिया तदिति युक्तम् ।

स्यादेतत् । सार्थाद् हीयते इत्यत्र कथमपादानत्वम् परत्वात्सार्थस्य कर्तृत्वप्रसङ्गात् । तदुक्तम्—"अपादानमुत्तराणि" इति । अन्यथा त्यज्यमानस्य कर्मसंज्ञा न स्यात् । कर्तृव्यापारव्याप्यत्वाभावात् । ततश्च हीयते हीन इति कर्मणि लकारो निष्ठा च न स्यात् । नच कर्मकर्तर्ययं लकारः । जहातेः कर्तृस्थक्रियत्वात् ।

अत्राहुः—कर्मकर्तर्येवायम् जहातेरपगमनार्थत्वात् । सा च

क्षुदुपघातादिना देवदत्तस्य तत्समर्थाचरणम् । यदा तु क्षुदुपघातादिना स्वयमेवापगच्छति तदा कर्मकर्तृत्वमिति । नन्वत्र ध्रुवग्रहणं व्यर्थम् । नच ग्रामादागच्छति शकटेनेत्यत्र करणवारणार्थम् । धनुषा विध्यतीत्यत्र क्रियमाणे ऽपि ध्रुवग्रहणे परत्वात्करणसंज्ञाप्रवृत्तिवदक्रियमाणे ऽपि प्रवृत्तिसम्भवात् । नापि ग्रामादागच्छन् कंसपात्र्यां पाणिनौदनं भुङ्क्ते इत्यत्र कंसपात्रीवारणार्थम् । अधिकरणसंज्ञया तद्बाधात् । यद्यपि कंसपात्र्या आगमनसाधनत्वं नास्ति भुजौ तु साधनम्, ध्रुवा च तत्र परत्वादधिकरणसंज्ञेत्याकडारादित्यत्रोक्तम्, तथाऽपि वस्तुस्थित्या ऽत्रागमनं प्रधानं तदङ्गं तु भोजनम् । शब्दात्तु विपरीतगुणप्रधानभावप्रत्ययः ।

तदुक्तम्—

चङ्क्रम्यमाणो ऽधीष्वात्र जपंश्चङ्क्रमणं कुरु ।

तादर्थ्यस्याविशेषे ऽपि शब्दाद्भेदः प्रतीयते ॥ इति ।

तत्र भुजेः साधनत्वात्तद्द्वारेण गमनस्यापि साधनमिति शङ्कोपपत्तिः । शाब्दं प्राधान्यमादाय तत्प्रयुक्तैव संज्ञेति परिहारभाष्यार्थ इति कैयटः ।

अत्र भाष्यम्—"वृक्षस्य पर्णं पततीत्यत्र वृक्षवारणार्थं तद्" इति ।

नन्वत्र कारकत्वं नास्ति अपायाभावाच्च सत्येवावधावपायो भवतीत्युक्तत्वात् । गतिं विना त्ववधिना नापाय इति कथ्यते इति स्वीकारात् ।

अत्र केचित् । सुज्ञानत्वात् पूर्वसूत्रे एवोक्तत्वाच्चायमर्थो भाष्यकारेण नोक्त इति ।

अन्ये तु सतीह ध्रुवग्रहणे विशिष्टो ऽपायो लभ्यते, असति

तु तस्मिन् पातमात्रस्य लोकेऽपायत्वेन प्रसिद्धत्वात्, कारकाधिकारानपेक्षया च प्रत्युदाहरणमिति कैयटः।

"जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्"।

अधर्माज्जुगुप्सते। विषयत्वं पञ्चम्या निन्दा धातोरर्थः। अधर्मं निन्दतीत्यर्थः। अधर्माद्विरमति। पञ्चम्या विषयत्वम्। धातोः करणानन्तरं यावज्जीवमकरणमर्थः। विषयत्वस्य करणेऽकरणे चान्वयः। अधर्मविषयककृत्युत्तरकालावच्छिन्नजीवनव्यापकाधर्मविषयककृत्यभाववानित्यर्थः। यावज्जीवपदादधार्मिके स्वप्नादिदशायां नोक्तप्रयोगः। कश्चित्कालं विरम्य येन पुनरधर्मकरणं तत्रोक्तप्रयोगो भाक्त इत्याहुः।

अन्ये तु कृतिध्वंसः समानकालत्वमभावश्च धात्वर्थः। तत्र ध्वंसः सामानाधिकरण्येन कृतौ सा समानकालत्वे तच्चाभावे। स कृतिश्च ध्वंसे आकाङ्क्षाविशेषबलात्प्रकारः। एकैव ध्वंसव्यक्तिः पूर्वोत्तरमाकाङ्क्षावशादवभासते। अधर्मविषयकस्वसमानाधिकरणकृत्यसमानकालकृतिध्वंस आश्रयवृत्तिरिति बोधः। अत्र स्वोत्पत्त्यवच्छेदकशरीरसजातीयशरीरावच्छिन्नसमवायेन सामानाधिकरण्यं वाच्यम्। साजात्यं च समभिव्याहृतपदोपस्थापितदेवदत्तत्वादिजात्या। तेन भाविदेहान्तरावच्छेदेनाधर्मकरणे स्वसमानाधिकरणतत्कृतिसमानकालत्वादेतत्कृतिध्वंसस्य कथमेतमादाय देवदत्तोऽधर्माद्विरमतीति प्रयोगो, न कथंच युवशरीरावच्छेदेन अधर्मं कुर्वत्यपि बालशरीरावच्छेदेनोत्पन्नचरमकृतिमादाय विरमतीति प्रयोग इति निरस्तम्। भाव्यधर्मकरणस्योक्तस्वसामानाधिकरण्याभावात्। युवशरीरावच्छेदेन कृतेर्बालशरीरावच्छिन्नकृतिध्वंससामानाधिकरण्याच्च। नचैनमेव कृतिध्वंसमादाय

भाविदेहावच्छेदेनाधर्मकरणे ऽपि भाविदेहावच्छिन्ने ऽपि चैत्रो ऽधर्माद्विरमतीत्यापत्तिः । समभिव्याहृतपदबोध्यशरीरावच्छिन्नसमवायस्य सामानाधिकरण्यघटकत्वात् । चैत्रादिपदेन विशिष्टात्मबोधने शरीरस्यापि बोधनात् । आत्मा विरमतीत्यादौ तु शुद्धसमवायेन सामानाधिकरण्यं भासते इति शरीरबोधककर्तृपदाभावे ऽपि न क्षतिरित्याहुः ।

वस्तुतस्तु कृतिध्वंसश्च धात्वर्थः । कृतेश्च स्वावच्छिन्नप्रतियोगिताकसामानाधिकरण्यकालिकोभयसम्बन्धप्रतियोगितावच्छेदकभेदः प्रतियोगित्वं चेत्युभयसम्बन्धेन ध्वंसेऽन्वयः । तथाच सामानाधिकरण्यं कालिकविशेषणता चेत्युभयसम्बन्धेन कृतिमान् यस्तद्भिन्नो यो ऽधर्मविषयककृतिध्वंसस्तद्वानित्यादिधीः । अधर्मविषयककृत्यन्तरप्रागभावसमानाधिकरणतादृशध्वंसवारणाय भिन्नान्तम् । तत्रापि व्यधिकरणकृतेः कालिकेन तत्कृतिध्वंसे सत्त्वात् सामानाधिकरण्येति । अतीतकृतिसामानाधिकरण्यस्य तादृशकृतिध्वंसे ऽपि सत्त्वात् कालिकेति बोध्यम् ।

धर्मात्प्रमाद्यति । पञ्चम्या विषयत्वं धातोरनवधानं तिङ आश्रयत्वमर्थः । धर्मविषयकावधानाभावाश्रय इत्यर्थः ।

अत्र भाष्यम्—जुगुप्सादयो ऽत्र जुगुप्सापूर्विकायां निवृत्तौ वर्तन्ते, अतो बुद्धिकल्पितमपादानत्वमस्त्येव । अनिष्टसाधनताज्ञानेन बुद्ध्यन्तं प्राप्य निवृत्तेः । अनिष्टसाधनत्वप्रकारतानिरूपितविशेष्यतासम्बन्धेन ज्ञानवत्त्वरूपायाः प्राप्तेश्चौरादौ सत्त्वात् । नच गौणे शास्त्राप्रवृत्तिः । कारकप्रकरणे गौणस्यापि ग्रहणात् । अपायादिपदानां स्वरितत्वात्तेन गौणमुख्यन्यायाभावादिति ।

## भीत्रार्थानां भयहेतुः ॥ २४ ॥

भयार्थानां त्राणार्थानां च योगे भयहेतुरपादानम् । चोराद्बिभेति, उद्विजते त्रायते रक्षतीत्यादि । जन्यत्वं पञ्चम्यर्थः । चोरजन्यभयाश्रय इति धीः । त्राणं भयाभावो धात्वर्थः । व्यापार आख्यातार्थः । शत्रुजन्यभयाभावानुकूलव्यापारवानित्यर्थः । हेतुपञ्चम्या सिद्धौ इदं प्रपञ्चार्थम् । भयहेतुग्रहणं स्पष्टार्थम् । चैत्रादौ परत्वात्कर्तृसंज्ञाप्रवृत्तेः ।

कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे । इति—

रामायणे कस्य संयुगे इत्यन्वयः ।

## पराजेरसोढः ॥ २५ ॥

अध्ययनात्पराजयते । अत्र धातोरसहिष्णुत्वम् । तच्च द्वेषविशेषो ऽभिभवाशक्यत्वज्ञानं वा । अध्ययनं न सहते इति विवरणात् । अध्ययनविषयकाभिभवाशक्यत्वज्ञानवानित्यर्थः । शत्रून् पराजयते इत्यत्र परत्वात्कर्मसंज्ञा । अभिभवतीत्यर्थः । तेनासोढग्रहणं स्पष्टार्थम् ।

## वारणार्थानामीप्सितः ॥ २६ ॥

वारणार्थानां प्रयोगे क्रियया ऽऽप्तुमिष्टोऽर्थो ऽपादानं स्यात् । कूपादन्धं वारयति ।

ननु कूपस्य निवार्यनिवारकाभ्यामुभाभ्यामनीप्सितत्वात् कथमपादानसंज्ञेति चेत् ।

अत्राहुः—प्रवृत्तिविघातो वारणमिति पक्षे वारकनिष्ठव्यापारजन्यप्रकृतधातूपात्तफलशालित्वेनान्धादेरेवेप्सितत्वे ऽपि

संकोचे मानाभावेन वारणशब्दवाच्यकोटौ प्रवृत्तेरपि प्रवेशात् । वार्यमाणनिष्ठगमनव्यापारजन्यसंयोगरूपफलशालित्वेन कूपादेरपीप्सितत्वम् ।

विभागानुकूलव्यापारो वारणमिति पक्षे तु विभागस्योभयनिष्ठत्वेन तच्छालित्वान्निवार्यनिवारकयोर्द्वयोरपि स्पष्टमेवेप्सितत्वमिति ।

तच्चिन्त्यम् । वारणस्थले कूपेऽन्धसंयोगस्यैवानुत्पत्त्या तच्छालित्वस्य वक्तुमशक्यत्वात् । एतेन विभागोऽपि व्याख्यातः । अन्धात्कूपं वारयतीत्यस्यापि प्रसङ्गाच्च ।

यत्तु संयोगस्यैवाभावात् सिद्धविभागपरिपालनमात्रेण फलत्वमिति ।

तदपि न । संयोगाभावे गुणविशेषात्मकविभागस्याप्यनुत्पत्तेः । पूर्वसिद्धविभागान्तरस्य फलत्वोक्तौ तु यत्र तद्व्यक्तेः पूर्वं कूपविभागोऽपि न जातस्तत्रोक्तप्रयोगानापत्तेश्च । नच संयोगात्यन्ताभावरूप एवात्र विभागो विवक्षणीयः । सत्यपि कूपपाते उक्तप्रयोगदर्शनात् । नच संयोगस्याव्याप्यवृत्तितया कूपसंयोगसत्त्वेऽपि तदत्यन्ताभावसत्त्वान्न विरोध इति वाच्यम् । प्रतियोगिसमानाधिकरणसंयोगात्यन्ताभावोद्देशेन वारणानुकूलव्यापारस्य केनाप्यननुष्ठानात् । तस्य स्वत एव सत्त्वात् । अन्यथाऽन्धकूपसंयोगानुकूलव्यापारवत्यपि कूपादन्धं वारयतीति प्रयोगप्रसङ्गात् इति दिक् ।

तस्मादन्धस्य कूपाधःसंयोगो मा भूदितीच्छापूर्वकत्वाद्वारणस्यान्धप्रतियोगिककूपाधोदेशसंयोगाभावविषयकत्वादिच्छायाः स्वीयाभावनिष्ठविशेष्यतानिरूपितप्रतियोगित्वसंसर्गावच्छिन्नसंयोगनिष्ठप्रकारतानिरूपितानुयोगित्वसंसर्गावच्छिन्न-

प्रकारताशालित्वरूपमेवेप्सितत्वं ग्राह्यम् । अतो ऽन्धकूपसंयोगाप्रसिद्धावपि न क्षतिः । उक्तेच्छायास्तत्रापि सुस्थत्वात् । अत्र पञ्चम्या अधःसंयोगानुकूलक्रियारूपं पतनम् । द्वितीयाया धात्वर्थव्यापारान्वितं पतनम् । धातोर्विरोधिव्यापारोऽर्थः । तथाचान्धवृत्तिकूपनिष्ठाधःसंयोगानुकूलक्रियाविरोधिव्यापारविषयककृतिमानिति बोधः । यत्र कूपे पतनमप्रसिद्धं तत्रोक्तप्रयोगो ऽसाधुरेवेत्येके ।

अन्ये तु धातोरभावानुकूलव्यापारो ऽर्थः । पञ्चम्या वृत्तित्वम् । द्वितीयाया धात्वर्थतावच्छेदकाभावान्वितं प्रतियोगित्वमनुयोगित्वं वा । अभावश्च कूपादिपदसमभिव्याहारात् पतनादिजन्याधःसंयोगादिना संबन्धेन । कूपवृत्त्यन्धप्रतियोगिकाभावानुकूलव्यापारविषयकयत्नवानिति धीः । एवं सविषादन्नान्मित्रं वारयतीत्यादौ यत्र मित्रस्य विषान्नभोजनमप्रसिद्धं तत्र भोजनादिसबन्धेन सविषान्नवृत्तिमित्रप्रतियोगिकाभावानुकूलव्यापारविषयकयत्नवानिति धीरित्याहुः ।

केचित्तु पतनाभावप्रकारकेच्छापूर्वकपतनाभावानुकूलो व्यापारः प्रकृते वारणम् । पञ्चम्यर्थः कर्मत्वम्, द्वितीयार्थः कर्तृत्वम्, पतनविशेष्यतानिरूपितप्रकारतासम्बन्धेनेच्छायामन्वेति । कूपपतनादेः क्वचिदप्रसिद्धत्वे ऽपि तादृशेच्छासत्त्वान्न दोषः । कूपकर्मत्वेनान्धकर्तृत्वेन च या पतनाभावेच्छा तत्पूर्वकपतनाभावानुकूलो यो व्यापारस्तद्विषयककृतिमानिति वाक्यार्थः । एवं सविषादन्नादित्यादौ भोजनाभावेच्छापूर्वकभोजनाभावानुकूलो व्यापारो वारणम् । अन्यत् पूर्ववदित्याहुः ।

अपरे तु उक्तोभयत्र आद्ये धातोः पतनं द्वितीये भोजनम् । उभयत्राभावानुकूलव्यापारश्चार्थः । पञ्चम्या आद्येऽव-

च्छिन्नत्वं द्वितीये कर्मत्वम्, उभयत्र द्वित्वं चार्थः । द्वितीयायाः कर्तृत्वमर्थः । धात्वर्थपतनादेरधिकरणत्वेन धात्वर्थतावच्छेदकेऽभावे ऽन्वयः । द्वित्वावच्छिन्नस्य पञ्चम्यर्थद्वितीयार्थोभयस्याभावे प्रतियोगित्वेनान्वयो ऽपि व्युत्पत्तिवैचित्र्यात् । तथाच पतनसामान्ये यः कूपावच्छिन्नत्वान्धकर्तृकत्वोभयाभावस्तदनुकूलव्यापारविषयकयत्नवान्, द्वितीये भोजनसामान्ये यः सविषान्नकर्मकत्वामित्रकर्तृकत्वोभयाभावस्तदनुकूलव्यापारविषयकयत्नवानिति धीः । आकाशं न पश्यति घटश्चैत्रो वेत्यादौ द्वितीयया विषयित्वं लक्षणया घटादिवृत्तित्वं द्वित्वं च बोध्यते । धातोर्लौकिकविषयित्वावच्छिन्नप्रत्यक्षम् । तथा च लौकिकप्रत्यक्षसामान्ये य आकाशविषयकत्वघटवृत्तित्वोभयाभावस्तन्निरूपको घट इत्यर्थः । आकाशविषयकचाक्षुषोपनीतभाने ऽपि लौकिकविषयित्वावच्छेदेन आकाशविषयकत्वचैत्रवृत्तित्वोभयाभावो ऽस्त्येव । एवमप्रसिद्धस्थले ऽन्यत्रापीत्याहुः ॥

## अन्तर्धौ येनादर्शनमिच्छति २७।

यत्समवेतप्रत्यक्षविषयत्वाभाव आत्मन इष्यते तदपादानम् । उपाध्यायादन्तर्धत्ते शिष्यः । अत्र स्वप्रत्यक्षाभावेच्छापूर्वकतदनुकूलसंनिकर्षाभावानुकूलव्यापारो धात्वर्थः । पञ्चम्यर्थो वृत्तित्वम् । तस्य स्वप्रत्यक्षाभावे ऽन्वयः । उपाध्यायवृत्तिर्यः स्वप्रत्यक्षाभावस्तदिच्छापूर्वकः प्रत्यक्षानुकूलसन्निकर्षाभावानुकूलो व्यापारः शिष्यवृत्तिरिति धीः । इच्छानिवेशात्सत्यपि चाक्षुषे न क्षतिः ।

# आख्यातोपयोगे ॥ २८ ॥

उपयोगो नियमपूर्वकमध्ययनम् तत्र वक्ताऽपादानम् । उपाध्यायादधीते । अध्ययनं तदुच्चारितशब्दप्रयोज्यशब्दानुसन्धानम् । पञ्चम्यर्थो वृत्तित्वम् । उपाध्यायवृत्ति यदुच्चारणं तज्जन्यशब्दप्रयोज्यशब्दानुसन्धानमिति ।

इदमपि भाष्ये प्रत्याख्यातम् । ध्रुवमपाय इत्यत एव सिद्धेः। तदुक्तम्—"यद्यपक्रामति किं नात्यन्तायापक्रामति सन्ततत्वात् । अथवा ज्योतिर्वज्ज्ञानानि भवन्ति" । व्याख्यातं च कैयटेन सन्ततत्वादिति शब्दस्य व्यञ्जका ध्वनय उपाध्यायेनोत्पाद्यमाना भिन्ना अपि सादृश्यात्तत्वेनाध्यवसीयमानाः श्रोतुः पुनः पुनः श्रोत्रपथं गच्छन्तो व्यक्तिस्फोटरूपं जातिस्फोटरूपं वा शब्दमभिव्यञ्जयन्तीत्यर्थः । अथवेति । यथा ज्वालारूपं ज्योतिरविच्छेदेनोत्पद्यमानं सदृशत्वेनाध्यवसीयमानं सन्ततं तथैवोपाध्यायज्ञानानि भिन्नानि शब्दरूपतामापद्यमानानि संततान्युच्यन्ते । ज्ञानस्य शब्दरूपापत्तिरिति दर्शनमत्र भाष्यकारस्य ।

तथाचोक्तम्—

वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते ।
कैश्चिद्दर्शनभेदो हि प्रवादेष्वनवस्थितः ॥ इति ।

# जनिकर्तुः प्रकृतिः ॥ २९ ॥

जायमानस्य हेतुरपादानसंज्ञः । पुत्रात्प्रमोदो जायते ।

ब्रह्मणः प्रजाः प्रजायन्ते । जनीत्यर्थग्रहणम् । अङ्गादङ्गात्सम्भवसि । जनेरिञ् । जनिघसिभ्यामिण्वा । "जनिवध्योश्च" इति न वृद्धिः । शेषषष्ठ्या समासः ।

यद्वा "कर्तरि च" इति निषेधस्यात एव ज्ञापकादनित्यत्वम् ।

इदमपि प्रत्याख्यातम् । गोमयाद् वृश्चिको जायते । गोलोमाविलोमभ्यो दूर्वा जायन्ते । अत्रापक्रमणं गौणम् । लोके हि यद्यस्मादुत्पद्यते तत्तस्मान्निर्गच्छतीत्युच्यते । वैशेषिकादिमते तु परमाण्वादिसमवेतं कारणेभ्यो ऽपृथग्देशं कार्यमुत्पद्यते इति नास्त्यपक्रमः । सांख्यमते ऽप्याविर्भावतिरोभावलक्षणजन्मनाशरूपपरिणामाभ्युपगमान्न तथा । "संततत्वान्नात्यन्तमपक्रामन्ति" इति भाष्यम् । अविच्छेदादित्यर्थः । यथा बिलाद्दीर्घभोगो भोगी निष्क्रामन्नप्याविच्छेदात्तत्रोपलभ्यते तथा दूर्वा अपीत्यर्थ इति कैयटः ।

अत्राद्वैतचन्द्रिकाकाराः—विभागरूपापक्रमणस्यावधावेवापक्रमतो न प्रतीतिः । इह तु युक्तत्वरूपमपक्रमणं तदवधौ प्रयुक्तस्य प्रतीतिरङ्गीक्रियते एव । तथैवानुभवात् ।

ननु प्रयुक्तत्वं कथमपादानपञ्चम्यर्थ इति चेत् । न । वृक्षात्पततीत्यादौ वृक्षाद्यवधिकविभागप्रतीत्या विभागस्येव कपालाद्घट इत्यादौ कपालाद्यवधिकप्रयुक्ततामतीत्या प्रयुक्तस्याप्यपायशब्देन वक्तुं शक्यत्वात् ।

तथा चेदं भाष्यतात्पर्यम्—अव्यवहितोत्तरक्षणसम्बन्धो ऽप्यत्रापायशब्दार्थः । तदेकदेशो ऽव्यवहितोत्तरत्वे निरूपकरूपस्याप्यवधेर्ध्रुवपदेन वाच्यत्वात् । कारणसमूहस्य तदवधित्वे ऽपि समूहसमूहिनोरभेदोपचारात् करणमात्रे ऽपि तत्संभवः । यद्यप्यन्यथासिद्धस्यास्याप्युक्तावधित्वम-

स्ति, तथाऽप्यनन्यथासिद्धत्वस्यापि निवेश्यत्वाद्, दण्डरूपाद्धट इत्यादेर्नापत्तिः । दण्डाद्धटो जायते इत्यादौ घटं प्रत्यनन्यथासिद्धदण्डघटितो यः समूहस्तदव्यवहितोत्तरक्षणसम्बन्धाभिन्ना या उत्पत्तिस्तद्वान् घटः। दण्डाद्धट इत्यादौ जायते इत्यादिक्रियाध्याहारावश्यकत्वे तु तादृशाव्यवहितोत्तरत्वमेव पञ्चम्यर्थः । तथैव धात्वर्थघटकक्षणेऽन्वयादिष्टार्थलाभः। वस्तुतः प्रयुक्तत्वमेव पञ्चम्यर्थः,तस्यैवापायशब्देन ध्रुवपदेन चोक्तिसंभवात् । अस्ति च घटादाविव तदुत्पत्तावपि दण्डादिप्रयुक्तत्वमिति दण्डाद्धट उत्पद्यते दण्डाद्धट इत्यस्य च प्रामाण्यम्। कैयटादिवाक्यं तु समाधानान्तराभिप्रायम् । निष्क्रामन् विभागानुकूलव्यापारोत्पत्तिकालावच्छिन्नः विभागपूर्वस्थूलकालव्यापारोत्पत्तिकालप्रदर्शनाय दीर्घभोग इति । तथाच विभागोत्पत्तिः, पूर्वं बिले भोगिन इवोत्पत्तेः प्रयुक्तत्वस्य वा क्रमणस्योत्तरकालमेव लोमादौ दूर्वादेः प्रत्यक्षम् । उत्पत्त्याद्यकाले तु तन्नास्त्येव । चक्षुराद्यसंयोगात् । उत्पत्तिक्षणे च लोमादौ दूर्वाद्यस्तीति परोक्षधीस्तु पूर्वोक्तरीत्या समाधेया।

यत्तु भोगिनोऽग्रावच्छेदेन बिलासंयोगरूपापक्रमणस्य सत्त्वेऽपि मूलावच्छेदेन बिलसंयोगाद्यथा बिले उपलब्धिस्तथा दूर्वादेः स्वपरिणामिलोमादिभागसम्बद्धतया प्रतयिमानस्यापि लोमादिभागान्तरावच्छेदेन लोमादिसम्बन्धाभावरूपापक्रमणमिति कैयटवाक्यार्थ इति तन्न ।

वृक्षावस्थितिकाले चलत्यपि पत्रादौ वृक्षाच्चलतीत्याद्यप्रयोगाद् वृक्षादिसंयोगाद्यसमकालिकस्यैव वृक्षादिसंयोगाभावादेरपायपदार्थतया बिलादिसंयोगाभावादेरपायपदार्थत्वाभावादित्याहुः ॥

# भुवः प्रभवः ॥ ३० ॥

भूकर्तुः प्रभवः प्राग्वत् । हिमवतो गङ्गा प्रभवति । भवनमत्र बहिःसंयोगः । बहिःपदार्थो हिमवद्भिन्नजम्बूद्वीपभूमिः । संयोगध्वंसकालीनत्वं पञ्चम्यर्थः । स च बहिःसंयोगत्वव्यापकविशेषणतासम्बन्धेन बहिःसंयोगे ऽन्वेति । आश्रयत्वं तिङर्थः । हिमवत्संयोगध्वंसकालीनाहिमवद्भिन्नजम्बूद्वीपीयभूमिसंयोगाश्रयो गङ्गेति धीः । प्रयागात्प्रभवति गङ्गेत्यप्रयोगात् बहिःसंयोगत्वव्यापकसम्बन्धानिवेशः । प्रयागभिन्नजम्बूद्वीपभूमिगङ्गासंयोगत्वं गङ्गाद्वारादिभूमिगङ्गासंयोगे कल्पादिकाले ऽप्यस्ति । न तु प्रयागगङ्गासंयोगध्वंसकालीनत्वमिति तद्वारणम् । हिमवद्भिन्नगङ्गासंयोगत्वावच्छेदेन तु हिमवद्गङ्गासंयोगध्वंसकालीनत्वमस्त्येवेति न दोषः ।

अन्ये तूक्तप्रयोगवारणाय प्राथमिकबहिःसंयोगः पञ्चम्यर्थः । बहिःपदार्थो भूखण्डम् । प्राथम्यं संयोगध्वंसाव्यवहितोत्तरक्षणवृत्तित्वम् । हिमवत्संयोगध्वंसकालीनाव्यवहितोत्तरक्षणवृत्तिपृथिवीसंयोगाश्रयत्ववती गङ्गेति धीरित्याहुः ।

इदमपि प्रत्याख्यातम् । अन्यान्याः प्रादुर्भवन्तीति भगवदुक्तेः ।

एतेनान्यान्यशय्यारचनाय लूनैरित्यादिश्रीहर्षप्रयोगा व्याख्याताः ।

अत्र वदन्ति कथंचिदुक्तप्रयोगाणां समर्थने ऽपि मुख्यार्थपुरस्कारेण षष्ठी स्यात् । नटस्य शृणोतीतिवत् । क्रियानुकूलव्यापारांशे नटोपाध्याययोरविशेषात् । अनभिधानब्रह्मास्त्रमाश्रित्य प्रत्याख्यानं तु न मनोरमम् । सन्सूत्रभाष्यवि-

रुद्धं च। एवं जुगुप्सेतिवार्तिकमप्यावश्यकम् । एवं च ध्रुवं भयहेतुरसोढ इत्यादिसंज्ञिनिर्देशोऽपि सार्थकः। परत्वात्तत्तत्संज्ञाप्रवृत्तावपि शेषत्वविवक्षायां "न माषाणामश्नीयाद्" इत्यादिवत् षष्ठ्या इष्टतया तत्रापादानसंज्ञावारणार्थत्वादिति अत्र भाष्यार्थविरोधः। उपाध्याये षष्ठी नेष्यते भयहेत्वादिषु त्विष्यते इत्यस्य वक्तुमशक्यत्वादिति बहुश्रुतैर्विचारणीयं च।

तदेतदभिसंधायास्मत्पितृचरणैरुक्तम् । अवधित्ववदपादानम् । अवधित्वंच प्रकृतधात्वर्थप्रयुक्तकर्तृकर्मान्यतरसंबन्धनिवृत्तिमत्त्वम् । अश्वात्पतति देवदत्त इत्यत्र प्रकृतधात्वर्थः पतनं तत्प्रयुक्ता देवदत्तरूपस्य कर्तुः संयोगस्य निवृत्तिरश्वे तद्वानश्वोऽपादानम् । परस्परान्मेषावपसरत इत्यत्रापि अपसरणप्रयुक्ता मेषयोः संयोगस्य निवृत्तिः। वृकाद्बिभेतीत्यत्र वृकप्रयुक्ता देवदत्तसम्बन्धस्य निवृत्तिर्वृके। चौरेभ्यस्त्रायते देवदत्तमित्यत्र त्राणप्रयुक्ता कर्मसंज्ञकदेवदत्तसंबन्धस्य निवृत्तिश्चौरेषु । उपाध्यायादधीते इत्यत्रापि कर्मणः शब्दस्य ध्वन्यात्मकस्य निवृत्तिरुपाध्याये वर्तते। कैयटोक्तविधात्र बोध्या। येनोत्पादितो ध्वनिरनित्यत्वान्निवर्तते इति कैयटाशयः। माषेभ्यो गां वारयतीत्यत्र वारणक्रियाप्रयुक्ता कर्मभूतानां गवां सम्बन्धस्य निवृत्तिर्माषेषु। गोमयाद्वृश्चिको जायते इत्यादावपि कर्तृभूतवृश्चिकताद्रूप्यसंबन्धनिवृत्तिर्गोमयादौ। हिमवतो गङ्गा प्रभवतीत्यादावपि प्रभवनक्रियाकर्तृगङ्गाजलसंबन्धस्य निवृत्तिर्हिमवति। यतः काश्चिदापो हिमवतो निर्गच्छन्ति काश्चिदन्यास्तत्र तिष्ठन्ति । समुद्रः कुण्डिकेत्यत्र कुण्डिकायाः पानीयबाहुल्यात्समुद्रत्वम् । समुद्रस्य वा सुतरस्त्वात्कुण्डिकात्वमसदपि विवक्षावशात् प्रतीयते । तथा गौण-

मुख्यसाधारणमेवाऽपादानत्वं सर्वत्र सम्भवतीति दिक् ॥

# कर्मणा यमभिप्रैति स संप्रदानम् ॥ ३२ ॥

तत्क्रियाकर्मणा करणभूतेन तत्क्रियाकर्ता यमभिप्रैति स संप्रदानसंज्ञः । करणीभूतकर्मजन्यफलभागित्वेनोद्देश्यत्वं सम्प्रदानत्वमिति यावत् । उपाध्यायाय गां ददाति । ग्रामं गच्छतीत्यत्र गमनकर्मग्रामजन्यसुखादिमत्तयोद्देश्यस्य चैत्रादेर्वारणाय करणीभूतेति । ग्रामो हि न गमने करणम् । धनं तु दाने तथैव । परस्वत्वहेतुत्यागविशेषात्मकदानघटकस्वत्वहेतुत्वात् । पितृस्वर्गोद्देशेन ब्राह्मणाय गोदानस्थले दानजन्यफलशालित्वेनैव पिताऽभिप्रेतो न तु गोजन्यफलशालित्वेनेति न व्यभिचारः । नचादृष्टद्वारा स्वर्गादिफलस्यापि गोजन्यत्वं, दत्ता गौः पितृस्वर्ग जनयिष्यतीत्यभिसन्धानादिति वाच्यम् । अदृष्टाद्वारकत्वेन धात्वर्थतावच्छेदकत्वेन वा फलस्य विशेषणात् । उक्तस्थले विप्रस्वत्वोद्देश्यकत्वं तदिच्छाजन्यरूपं दानान्वितं चतुर्थ्याः, द्वितीयायास्तु स्वत्वमर्थः । विप्रस्वत्वोद्देश्यकधनीयस्वत्वजनकदानानुकूलकृतिमान् इति धीः । एवं च दानक्रियामात्रनिरूपितं सम्प्रदानत्वमित्यनङ्गीकारात् वृक्षायोदकं सिञ्चतीत्यादावपि उदकजन्यफलभागित्वेनोद्देश्यत्वाद्वृक्षस्य सम्प्रदानत्वम् । वृक्षीयपत्राद्युद्देश्यकसेचनविषयककृतिमानिति धीः । नचाजा ग्रामं नयतीतिवद्वृक्षमुदकं सिञ्चतीति स्यात् । संयोगवत्तया वृक्षस्य द्रवद्रव्यक्रियावत्तया च उदकस्य कर्मत्वसम्भवादिति वाच्यम् । अनभिधानात् ।

मीमांसकास्त्वन्वर्थसंज्ञाविज्ञानात्त्यज्यमानद्रव्योद्देश्यत्वे सति

स्वीकारवत्त्वं संप्रदानत्वम्। स्वीकारो यथेष्टविनियोगयोग्यतोपधायकः प्रतिग्रहः। उद्देश्यत्वं चतुर्थ्यन्तपदोच्चारणजन्यज्ञानविषयत्वम्।

नामगोत्रे समुच्चार्य सम्यक् श्रद्धान्वितो ददेत्।
संकीर्त्य देशकालादि तुभ्यं सम्प्रददे इति॥
न ममेति स्वसत्ताया निवृत्तिमपि कीर्तयेत्।
दानहोमादिक कुर्यादेवं श्रद्धासमन्वितः॥

इति वृद्धवसिष्ठवचनात्॥ देवतायामतिव्याप्तिवारणाय विशेष्यम्। त्यज्यमानद्रव्योद्देश्यत्वमिन्द्रादावर्थे। त्यागकालीनचतुर्थ्यन्तपदोच्चार्यत्वं शब्दे। देवतात्वं तद्धितवाच्यम् वृद्धव्यवहारात्। अत एव तद्धितापेक्षया देवतालाभे चतुर्थ्या दौर्बल्यम्। स्वीकारवत्त्वांशत्यागेनैव त्यज्यमानद्रव्योद्देश्यत्वरूपदेवतात्वस्य चतुर्थीतो लाभात्।

तदुक्तं भट्टैः।
तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः।
देवतासङ्गतिस्तत्र दुर्बलं तु परं परम्॥

तत्र त्यागादिकमन्यलभ्यम्। उद्देश्यत्वमात्रं चतुर्थ्यर्थः। रजकाय वस्त्रं ददातीत्यादौ च लक्षणेति। वृत्तिकारस्याप्ययमेवाभिप्रायः।

कैयटादयस्तु "न शूद्राय मतिं दद्यात्" इति दर्शनात् "खण्डिकापोध्यायस्तस्मै चपेटां ददाति" इति भाष्यकारोदाहरणाच्च परस्वत्वापत्तिपर्यन्तस्वत्वनिवृत्तेर्दानत्वम्, ददातिविषयैव च सम्प्रदानसंज्ञेत्युभयमप्ययुक्तम्। अत एव क्रियाग्रहणं कर्तव्यमिति वार्तिकमपि प्रत्याख्यातमित्याहुः॥

नन्वेतन्मते तद्धितापेक्षया चतुर्थ्या दुर्बलत्व न स्यादिति

चेन्मैवम् । तन्मात्रस्य दौर्बल्यानुपपादकत्वात् ।

तथाहि—गुणाधिकरणे निरूपितं "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्"इति श्रुतं, तत्र वाजिनवाक्यं किं पूर्वयागानुवादेन द्रव्यदेवतान्यतरविधिः,अथ कर्मान्तरविधिः। स्ववाक्योपात्तयोर्द्रव्यदेवतयोर्वाक्यान्तरोपात्तद्रव्यदेवतापेक्षया प्रथमोपस्थितिकत्त्वात्तदवरुद्धे यागे निराकाङ्क्षतया वाक्यान्तरोपात्तयोर्न निवेश इति । वाजिनवाक्यस्थस्य यजेरधिकाराख्यप्रकरणसापेक्षस्य प्रकृतयागोपस्थापकत्वम् । आमिक्षावाक्यस्थस्य तु तदनपेक्षस्यैवेति । यजेः द्रव्यदेवतापदान्वये सन्निकर्षाच्च । यजिकल्पकस्य द्रव्यदेवतासंबन्धस्यामिक्षायां वैश्वदेवीत्येकपदोपादानात्प्रतीतिः । वाजिने तु पदान्तरोपादानादिति विप्रकर्षाच्च । वैश्वदेवीत्यत्र "सास्य देवता"इत्यनुशासनाद्देवताविशिष्टद्रव्यविशेषस्य तद्धितार्थत्वात् । द्रव्यानभिधाने आमिक्षापदसामानाधिकरण्यानुपपत्तेश्च । नच तस्य व्यक्तिन्यायेन धीः । "संप्रदाने चतुर्थी"इतिवद्देवतायां तद्धित इत्येवानुशासनप्रसङ्गात् । नच द्रव्यमात्रं तद्धितार्थो, देवतात्वं तु संसर्ग इति वाच्यम् । पदार्थानुशासने संसर्गस्यानुशासनानर्हत्वात् । "तस्यापत्यम्"इत्यादौ अपत्यत्वस्यापि प्रत्ययार्थत्वानापत्तेश्च । नच तद्धितस्य द्रव्यविशेषवाचकत्वे आमिक्षापदवैयर्थ्यम् । बुद्धिस्थप्रकारवाचिनस्तद्धितस्य पदान्तरसमभिव्याहारविरहे आमिक्षात्वादिविशेषरूपेणानुपस्थापकत्वात् तात्पर्यग्राहकतया तत्सार्थक्यात् । यदि च तद्धितान्तपदमात्रश्रवणेऽपि द्रव्यविशेषस्य संशयोत्पादात्सामान्यरूपेण द्रव्योपस्थितिस्तद्धितात् । तथापि विशेषस्यामिक्षापदेन समर्पणे ऽपि अनिर्धारितद्रव्यविशेषदेवतासंबन्धस्य पदश्रुतिमात्रप्रमाणकत्वमक्षतम् ।

वाजिभ्य इति चतुर्थी तु स्वरूपत एव सादिग्धा । पञ्चमी-साधारण्यात् । चतुर्थ्यपि संप्रदानत्वमात्रवाचिनी प्रतिग्रहीतृत्वा-शत्यागेन लक्षणयैव देवतात्वं वदेत्, नतु द्रव्यसंबन्धम् । देवत-यापि प्रतिसंबन्धितया द्रव्यस्यार्थापत्तिविधयाक्षेपेऽपि न त-स्य शाब्दत्वम् । नचाक्षेपोऽपि संभवति । प्रमाणान्तराभावे त-स्यावश्यकत्वात् । अत्र च वाजिनपदस्य सत्त्वात् । ततश्च वाजि-भ्य इति पदस्य द्रव्यमाकाङ्क्षत्वेऽपि द्रव्यसम्बन्धस्य पदान्त-रगम्यत्वादामिक्षासम्बन्धमपेक्ष्य वाजिनसंबन्धो विप्रकृष्टः । न-च संख्यावदभ्यासापादनेन निवेशः । कर्मस्वरूपे ह्येकत्वावच्छिन्ने सति अभ्यस्ते तस्मिन्नेकादशत्वनिवेशः । द्वित्वादिसंख्यायाः पू-र्वावधारितैकत्वसामानाधिकरण्यनियतत्वात् । वाजिनस्य त्वामि-क्षासामानाधिकरण्येनानिवेशात् अभ्यस्तस्यापि कर्मणः आमि-क्षावरोधनादवस्थैन निवेशासंभवात् । तस्माद् द्रव्यदेवतासं-बन्धकल्पितं सान्नाय्यप्रकृतिकं यागान्तरमेव आमिक्षाऽनुनिष्पा-दिवाजिनप्रतिपत्त्यर्थतयाऽऽमिक्षायागमात्राङ्गत्वेन विधीयते । तस्मात्पूर्वकर्मण्यनिविशमानो गुणो भेदकः । अनिवेशश्च प्रकृते संनिकर्षविप्रकर्षादिभिरुक्तन्यायैः । क्वचिद्वाक्यभेदापत्त्यादिनेत्य-न्यत्र निरूपितम् ।

अत्र च लक्षणया देवतात्वप्रतीतिरिति बीजाभावेऽपि न्यायान्तरेण यथोक्तैनैव चतुर्थ्या दौर्बल्यसिद्धेरिति ।

प्रकृतमनुसरामः । क्रियाग्रहणं कर्तव्यम् । पत्ये शेते । शयनक्रियया ईप्सितस्य पत्युरुक्तसंज्ञा । भाष्यकारास्तु सं-दर्शनाध्यवसायप्रार्थनादिभिरर्थ्यमानत्वात् क्रियाऽपि कृत्रिमं-कर्म । तथाच सूत्रेणैव सिद्धम् । अप्रयुज्यमाना अपि याः संदर्श-नादिक्रियास्तत्कर्मभूतया शयनक्रियया पत्युरभिप्रेयमाणत्वात् ।

पूर्वं हि शयनक्रियायाः ज्ञानं तत इच्छा ततः प्रवृत्तिरिति क्रमः । ज्ञानादिक्रियानिरूपितं च कर्मत्वं शयनादेः स्पष्टमिति । प्रतीयमानक्रियामपेक्ष्य कारकत्वस्य प्रविश, पिण्डीमित्यादौ दर्शनात् । "क्रियार्थोपपदस्य" इति सूत्रस्वारस्याच्च ।

नन्वेवं कटं करोतीत्यादावपि सम्प्रदानत्वापत्तिः ।

अत्राहुः—यदा संदर्शनादयो धात्वर्थाद्भेदेन विवक्ष्यन्ते तदा संप्रदानसंज्ञा । सा च विवक्षा प्रयोगदर्शनवशान्नियतविषयैवाश्रीयते ऽतो नातिप्रसङ्गः । तत्र भेदस्याविवक्षितत्वात् । अत एव गत्यर्थकर्मणीति प्रत्याख्यास्यते ।

उक्तंच वाक्यपदीये—

भेदस्य च विवक्षायां पूर्वां पूर्वां क्रियां प्रति ।
परस्याङ्गस्य कर्मत्वान्न क्रियाग्रहणं कृतम् ॥
क्रियाणां समुदाये तु यदैकत्वं विवक्षितम् ।
तदा कर्म क्रियायोगात्स्वाख्ययैवोपचर्यते ॥
भेदाभेदविवक्षा च स्वभावेन व्यवस्थिता ।
तस्माद्गत्यर्थकर्मत्वे व्यभिचारो न दृश्यते ॥
विकल्पेनैव सर्वत्र संज्ञे स्यातामुभे यदि ।
आरम्भेण न योगस्य प्रत्याख्यानं सम भवेत् ॥

स्वाख्यया—क्रियेप्सितत्वरूपकर्मसंज्ञया उपचर्यते—व्यवह्रियते, नतु सम्प्रदानसंज्ञया । गत्यर्थकर्मणि तु भेदाभेदोभयं पर्यायेण विवक्ष्यते इति संज्ञाद्वयाद्विभक्तिद्वयं सिद्धम् । स्पष्टमन्यत् ।

मीमांसकास्तु नियमेन ज्ञानादिप्रतीत्यभावान्नेदं युक्तम् । अत एव गत्यर्थकर्मणीति सूत्रे "क्रियाग्रहणमपि तत्र चोद्यते" इति भाष्यकृतोक्तवार्तिकं विधित्वेनाश्रितमित्याहुरिति तत्रैव स्फुटीकरिष्यामः ।

इदं च त्रिविधम् ।
अनिराकरणात्कर्तुस्त्यागाङ्गं कर्मणेप्सितम् ।
प्रेरणानुमतिभ्यां च लभते संप्रदानताम् ॥

इति वाक्यपदीयात् । सूर्यायार्घ्यं ददाति । विप्राय गां ददाति । उपाध्यायाय गां ददाति इति क्रमादुदाहरणम् । नच तादर्थ्यचतुर्थ्यैव सिद्धौ एतत्सूत्रवैयर्थ्यम् । दानक्रियायाः फलसम्बन्धितया प्राधान्यात्संप्रदानस्यैव तदर्थत्वम् नतु दानक्रियायाः सम्प्रदानार्थत्वमिति तदप्रसक्तेरिति हेलाराजः । अत एव त्यागाङ्गं "कर्मणेप्सितम्"इत्युक्तम् ॥ कर्मसंप्रदानयोः करणकर्मत्वे वाच्ये । पशुना रुद्रं यजते । पशुं रुद्राय ददातीत्यर्थः । इदं तु छान्दसव्यत्ययात्सिद्धं । लोके तु यजेः पूजार्थत्वात्पशोः करणत्वम् ।

# रुच्यर्थानां प्रीयमाणः ॥३३॥

उक्तसंज्ञः स्यात् । देवदत्ताय रोचते स्वदते वा मोदकः पथि । प्रीयमाणः किम् पथीत्यधिकरणे मा भूत् । आदित्यो रोचते इत्यत्र दीप्त्यर्थे न संज्ञा ।

अत्र वाक्यपदीयम् ।
हेतुत्वे कर्मसंज्ञायां शेषत्वे वापि कारकम् ।
रुच्यर्थादिषु शास्त्रेण सम्प्रदानाख्यमुच्यते ॥

अस्यार्थः । अन्यसमवेताभिलाषो रुच्यर्थः । अभिलाषविषयो भवतीत्यवगमात् । तादृशं मोदकं देवदत्तः प्रयुङ्क्ते । लौल्यात्तदानुगुण्यमाचरतीति देवदत्तस्य हेतुसंज्ञायां, रोचतेः प्रीणातीत्यर्थे तु कर्मसंज्ञायां, देवदत्तस्य यो ऽभिलाषस्तद्विषयो भवतीत्यर्थे तु शेषषष्ठ्यां प्राप्तायां संप्रदानसंज्ञारम्भः ।

# श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ॥ ३४ ॥

एषां प्रयोगे बोधयितुमिष्टः सम्प्रदानम् । देवदत्ताय श्लाघते । तं स्तौतीत्यर्थः । एवं हि देवदत्तः शक्यते ज्ञापयितुं । देवदत्ताय स्वं परं वा श्लाघ्यं कथयतीति केचित् ।

श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसाधिपः ॥

इति भट्टिप्रयोगात् आत्मानं श्लाघ्यं परस्त्रीभ्यः कथयन्नित्यर्थः । आद्यपक्षे कर्मत्वे, द्वितीये च शेषष्ठ्या प्राप्तायामारम्भः । ह्नुङादयः स्वार्थविशिष्टज्ञापनार्थत्वात्सकर्मकाः । तथा च ज्ञीप्स्यमान इति संज्ञिविशेषणम् । देवदत्ताय ह्नुते देवदत्तमपलपन् तदपलापं देवदत्तं बोधयति । सन्निहितमपि तं धनिकादेरपलपतीत्यर्थः । यद्वा ज्ञातव्यं देवदत्तं बोधयतीत्यर्थः । देवदत्ताय तिष्ठते ईदृशोऽहमित्यवस्थानेन बोध्यते ।

कस्तस्मै रमणगणप्रणयिने तिष्ठेत कः प्रज्वल—
द्दम्भोलिद्युतिमण्डलोज्ज्वलभुजस्तम्भाय जम्भारये ॥

इति मुरारिः ।

देवदत्ताय शपते । शपथेन किञ्चित्प्रकाशयतीत्यर्थः । ज्ञीप्स्यमान इत्युक्तेर्नेह । देवदत्तः श्लाघते गार्गिकया । श्लाघते पथीत्यादौ कर्त्रादिविषये न संज्ञा ।

# धारेरुत्तमर्णः ॥ ३५ ॥

उत्तमर्णो धनस्वामी । उत्कृष्टार्थपरादुच्छब्दात्तमप् । द्रव्यप्रकर्षत्वान्नाम् । अर्त्तेः क्तः । "ऋणमाधमर्ण्ये" इत्यत्र विनिमयनि-

रूपकमात्रस्य विवक्षितत्वादुत्तमर्णे ऽपि नत्वम् । एतन्निपातनादेव बहुव्रीहौ निष्ठान्तस्यापि परनिपातः । देवदत्ताय शतं धारयति । पुनर्दानमङ्गीकृत्य द्रव्यग्रहण धारणम् । षष्ठ्यां प्राप्तायामारम्भः । उत्तमर्णः किम् । उक्तवाक्ये ग्रामे इत्यादिप्रयोगे मा भूत् । नच परत्वादेव सिद्धिः । उत्तमर्णे ऽपि हेतुसंज्ञापत्तेः ।

## स्पृहेरीप्सितः ॥ ३६ ॥

स्पृह ईप्सायाम् । चुरादिरदन्तः । अस्य प्रयोगे ईप्सित उक्तसंज्ञः स्यात् । पुष्पेभ्यः स्पृहयति । ईप्सिततमत्वे तु परत्वात्कर्मत्वम् । पुष्पाणि स्पृहयति । शेषत्वविवक्षाया षष्ठ्येव ।

कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च ॥

इति हरदत्तादयः । कर्मसंज्ञायाः शेषषष्ठ्याश्च बाधिकेयं संज्ञेति हेलाराजः । एतत्पक्षे उक्तप्रयोगे कान्तायेति विभक्तिविपरिणामः ।

"परस्परेण स्पृहणीयशोभम्" ।

इत्यत्र दानीयो विप्र इतिवत्सम्प्रदाने एवानीयर् इति कल्प्यम् ।

## क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ॥ ३७ ॥

क्रोधाद्यर्थानां धातूनां प्रयोगे यं प्रति कोपस्तत्कारकमुक्तसंज्ञम् । देवदत्ताय क्रुध्यतीत्यादि । क्रोधो रोषः । द्रोहो ऽपकारः । ईर्ष्या परगुणासहनम् । असूया परगुणविध्वंसनम् । यद्यप्येते चित्तदोषा एवेति चित्तदोषार्थानामित्येव वक्तु

युक्तं तथापि यो ऽस्मान्द्वेष्टीत्यादौ द्विषेरनभिनन्दनार्थत्वेन क्रोधाद्यप्रवृत्तित्वात्तत्रातिप्रसङ्गः स्यात् । औषधं द्वेष्टीत्यादावनभिनन्दने ऽपि द्विषेः प्रयोगात् । यं प्रतीति किम् । भार्यामीर्ष्यति । परैर्दृश्यमानां न सहते इत्यर्थः । क्रुधद्रुहोरकर्मकत्वात्तद्योगे शेषषष्ठ्यां, इतरयोस्तु सकर्मकत्वात् द्वितीयायां प्राप्तायामारम्भः ।

## क्रुधद्रुहोरुपसृष्टयोः कर्म ॥३८॥

सोपसर्गयोरनयोः पूर्वोक्तं कर्मसंज्ञम् । पूर्वापवादः । देवदत्तमभिक्रुध्यति, अभिद्रुह्यति ।

## राधीक्ष्योर्यस्य विप्रश्नः ॥३९॥

एतयोर्विविधप्रश्नसम्बन्धि कारकं सम्प्रदानसंज्ञम् । कृष्णाय राध्यति, ईक्षते वा । पृष्टो गर्गः शुभाशुभं पर्यालोचयतीत्यर्थः । शुभाशुभरूपयोः कर्मणोर्धात्वर्थान्तर्भावादकर्मकत्वम् । षष्ठीप्राप्तौ वचनम् । राध्यतीति अकर्मकत्वात् श्यन् । तथा च दिवाद्यन्तर्गणसूत्रम् । "राधोऽकर्मकाद्वृद्धावेव" इति । राधो ऽकर्मकादेव श्यन्, एवकारस्य भिन्नक्रमत्वात् । यथा वृद्धाविति । अत एव "कर्मवत्कर्मणा" इति सूत्रे राध्यत्योदन इति भाष्यम्, सिध्यतीत्यर्थकत्वात् । एतेनैतयोः कर्मकारकं सम्प्रदानमिति प्रत्युक्तम् । यस्येत्यनर्थकं, यं प्रतीत्यनुवृत्त्या सिद्धेरिति केचित् । तन्न । यं प्रतीत्यस्य यद्विषयार्थकत्वादत्र पर्यालोचने शुभाशुभयोरेव विषयत्वाच्छुभाशुभयोश्च निर्विषयकत्वात् । शब्दाधिकारमाश्रित्यार्थान्तरकल्पने गौरवात् ।

# प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ॥४०॥

प्रतिपूर्व आङ्पूर्वश्च शृणोतिरभ्युपगमार्थः। तस्य पूर्वो व्यापारः प्रवर्तनाक्रिया, तस्याः कर्ता सम्प्रदानम्। विप्राय गां प्रतिशृणोति आशृणोति वा। विप्रेण मह्यं गां देहीति प्रवर्तितः प्रतिजानीते इत्यर्थः। हेतुसंज्ञायां प्राप्तायां विप्रेण प्रतिशृणोति इति प्रयोगवारणाय वचनम्। विवक्षाभेदेन देवदत्तो गां प्रतिश्रावयतीति केचित्।

एवं देवदत्तो रोचयति मोदकमित्यपि स्यात्। नचेष्टापत्तिः। तत्रत्यस्वपरग्रन्थविरोधात्। हेतुत्वबाधाण्णिजभावस्य प्रकृतेऽपि तुल्यत्वादित्यन्ये।

# अनुप्रतिगृणश्च ॥४१॥

अनु प्रति इत्यन्यतरस्माद् परस्य गृणातेः प्रागुक्तं कारकं तथा। गृणा इति श्नान्तस्यानुकरणम्। अनुप्रतिभ्यां गृणा इति समासः। आतो धातोरित्याकारलोपः।

केचित्तु अनुप्रतीति भिन्नं पदम्। प्रकृतिवदिति अव्ययत्वात्सुलोप इत्याहुः॥

शंसितुः प्रोत्साहनं तदर्थः। पूर्वो व्यापारः शंसनम्। होत्रे अनुगृणाति, प्रतिगृणाति वा। होता प्रथमं शंसति तमध्वर्युः "आद्यामो देवा" इत्यादिभिः शब्दैः प्रोत्साहयतीत्यर्थः।

# साधकतमं करणम् ॥४२॥

क्रियायां प्रकृष्टोपकारकं कारकं करणसंज्ञम्। नच कारकाधि-

कारादेव लब्धस्य साधकतमस्य पुनःश्रुत्यैव प्रकर्षार्थसिद्ध्या किं तमपेति वाच्यम् । सामर्थ्यात् प्रकर्षो ऽत्र प्रकरणे न गृह्यते इत्यस्य ज्ञाप्यत्वात् । तेन गङ्गाया घोष इत्यादि सिद्धम् । तीरनिष्ठाधारत्वस्य प्रवाहे उपचारात् । गङ्गापदस्य तीरलक्षकत्वे तु नेदं प्रयोजनम् । रामेण बाणेन हता वाली ।

अत्र प्राञ्चः कारकान्तरे ऽचरितार्थत्वे सति क्रियानिमित्तत्वं करणत्वम् । कारकान्तरनिष्ठव्यापारद्वारा क्रियाहेतुत्वाभावो विशेषणार्थः । कर्तृकर्मणोः करणनिष्ठव्यापारद्वारा क्रियाहेतुत्वान्न व्यभिचारः । अधिकरणस्यापि कर्तृकर्मान्यतरव्यापारद्वारा तथात्वम् । चैत्रो गेहे स्थाल्यामोदनं पचतीत्यादौ गृहस्य कर्तृव्यापारद्वारा, स्थाल्याः कर्मव्यापारद्वारा उपयोगात् । सम्प्रदानस्याप्यनुमतिप्रकाशनद्वारा, कर्तुरिच्छोत्पादनद्वारा वा, अपादानस्य पतनप्रतिबन्धकप्रयोगनाशकविभागद्वारा तथात्वम् । नच कुठारादिसंयोगस्यापि कर्तृकर्मव्यापारे चरितार्थत्वादव्याप्तिः । चरमकारणस्यैव लक्ष्यत्वात् । अत एव फलायोगव्यवच्छिन्नं कारणं करणमित्याहुः ।

अन्ये तु व्यापारवत्त्वे सति कारणत्वं करणत्वम् । न च कार्यमात्रे ज्ञानादौ चाऽदृष्टस्य मनोयोगस्य च व्यापारत्वादात्मनः करणत्वापत्तिः, इष्टत्वात् । अत एव "आत्मानमात्मना वेत्सि" इत्यादिप्रयोगाः । कर्तृत्वकरणत्वोपाधिभेदेनैकस्योभयात्मकत्वेऽप्यदोषात् । श्रावणप्रत्यक्षे श्रोत्रमनःसंयोगो व्यापारो, न शब्दः । शब्दात्यन्ताभावप्रत्यक्षे व्यभिचारात् । चाक्षुषादौ चक्षुरादेस्तत्संयोगः, अनुमितौ व्याप्तिज्ञानस्य परामर्शो व्यापार इत्याहुः ।

अन्ये तु कर्तृव्यापारविषयत्वं करणत्वं । तच्च फलानुकूलक-

र्त्तृव्यापारवत्त्वम् । अस्ति हि कुठारादौ छिदानुकूलकर्त्तृनिष्ठ-संयोगादिमत्त्वम् । न चाऽधिकरणस्याऽपि कर्त्तृनिष्ठव्यापारविषय-त्वाद्व्यभिचारः, तत्करणत्वस्येष्टत्वात् । स्थाल्याऽन्नं साधयती-त्यादिप्रयोगात् । तदुक्तम्—

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा तत्र करणं तत्तदा स्मृतम् ॥
वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥

एतेन गवा दानं साधयति, ब्राह्मणेन साधयतीत्यादि-व्याख्यातम् । चैत्र आत्मना चैत्रेण वा पचतीत्यप्रयोगाद-न्यावयवि सत् यदवच्छेदकतया कृतिमत्तद्भिन्नत्वेन व्यापार-वान् विशेष्यः । अन्त्यावयवीत्युपादानाद्धस्तेन पचतीत्यादेः संग्रहः । इदं च करणत्वं नाऽनुमानादिसाधारणमिति तत्र भिन्नमेव तत् । करणशब्दश्च नानार्थ इत्याहुः ।

# दिवः कर्म च ॥४३॥

दीव्यतेः साधकतमं कर्मसंज्ञम् । चात्करणसंज्ञम् । करण-शब्दानुवृत्तेर्वक्ष्यमाणान्यतरस्याग्रहणाकर्षणेन वा पर्यायलाभात्स-मावेशार्थश्चकारः । तत्फलं तु आकडारादिति सूत्रे व्याख्यातम् ।

# परिक्रयणे सम्प्रदानमन्यतर-स्याम् ॥४४॥

समयविशेषावच्छेदेन वेतनादिना स्वीकरणं परिक्रयणं, त

स्मिन् साधकतमं सम्प्रदानसंज्ञं वा । शताय शतेन वा परिक्रीतः ।

# आधारोऽधिकरणम् ॥४५॥

आध्रियते क्रियाऽनेनेत्याधारः । अध्यायन्यायेत्यादिना करणे घञ् । क्रियाधारत्वं कर्तृकर्मणोर्धारणात् । साक्षात्क्रियाश्रययोः कर्तृकर्मणोः पराभ्यां कर्तृकर्मसंज्ञाभ्यां बाधात् । कर्तृकर्मान्यतरव्यवधानेन क्रियाश्रयः कारकमधिकरणसंज्ञम् ।

तदाह हरिः—

कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् ।
उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥

कटे आस्ते, स्थाल्यां पचति । नन्वेवमग्नौ पचतीत्यादिप्रयोगानुपपत्तिः । कर्तृकर्मान्यतरद्वारकस्य क्रियावत्त्वस्य विरहात् । नचायं प्रयोगो नास्त्येवेति कल्प्यम् ।

यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते ।

इत्यादिस्मार्तप्रयोगदर्शनात् । नापि अग्न्यादिपदस्य स्थाल्यादिलक्षणया उक्तान्यतरद्वारकत्वसम्भव इति केषांचित् कल्पनं युक्तं, यच्छब्दस्यापि तत्परत्वापत्त्या तस्मिन् होमो विधीयते इत्यस्यानन्वितत्वप्रसङ्गात् इति चेत्सत्यम् । छान्दसत्वेन तदुपपत्तेः ।

नन्वधिकरणत्वं न धर्मसम्बन्धित्वं संयोगादेर्द्विष्ठतया बदरादेः कुण्डादिनिरूपिताधारत्वापत्तेः । नच स्वधर्मसम्बन्धस्तत्, कुण्डादिकं च न बदरादिधर्म इति वाच्यम् । धर्मत्वस्याधेयतारूपतया तस्य च स्वनिष्ठाधिकरणतानिरूपकत्वरूपतया ऽन्योन्याश्रयप्रसङ्गात् । नचोत्पत्तिस्थितिज्ञप्तीनामन्यतमापेक्षणीयमधिकरणं, समवायिकारणं घटादेः,भूतलादि जात्यादेः, समवायि समवा-

यादे', स्वरूपसम्बन्धि चेति क्रमादुदाहरणमिति वाच्यम्। अपेक्ष-णीयपदेन कारणोक्तौ असमवायादावतिव्याप्तेः। घटत्वादिव्य-र्थघटादौ समवायित्वानुपपत्तेश्च।

अत्र प्राञ्चः। तद्भिन्नत्वे सति तत्पतनप्रतिबन्धकसंयोग-वन्मूर्तत्वं तदधिकरणत्वम्। ब्रह्माण्डधारकसंयोगाश्रयेश्वरवारणाय मूर्तेति। जातिगुणादीनां तत्समवायित्वमेव तत्। समवायादे-स्तत्स्वरूपसम्बन्धित्वमिति नानैवाधिकरणत्वमित्याहुः।

नव्यास्तु एवमननुगमात्सप्तम्या नानार्थत्वापत्त्या ऽतिरिक्त-मेवाधिकरणत्वम्। नचाधेयत्वमेवातिरिक्तं, तन्निरूपकत्वं चाधा-रत्वमिति वाच्यम्। विनिगमकाभावात्। अतो द्वयमप्यति-रिक्तमित्याहुः।

अत्र प्राचीनानुसारिणः। तत्तत्संयोगसमवायादिरेवाधार-ता। आधारतात्वं चातिरिक्तं तत्साधारणमतो नाननुगमः। द-ण्डाधार इत्युक्ते आधारतात्वेन संयोगग्रह ऽपि संयोगत्वेन त-दग्रहाद् दण्डसंयोगी नवेति संशयसम्भवः। संयोगत्वाद्यवच्छि न्नप्रकारताकधिय एव तद्विरोधित्वादित्याहु.।

भूतले घट इत्याधारत्वं सप्तम्यर्थः। तस्य निरूपकत्वसम्बन्धेन घटे ऽन्वयः। भूतलनिष्ठाधिकरणत्वनिरूपको घट इति बोधः। निष्ठत्वनिरूपकत्वे संसर्गाविति तार्किकप्राञ्चः।

नव्यास्तु भूतले न घट इत्यादौ बोधो न स्यात्, निरूपकत्व-सम्बन्धस्य वृत्त्यनियामकत्वेनाभावप्रतियोगितानवच्छेदकतया नञर्थान्वयासम्भवात्। अत आधेयत्वं सप्तम्यर्थः। तत्र निरू-पितत्वसम्बन्धेन प्रकृत्यर्थस्यान्वयः सप्तम्यर्थस्य चाश्रयत्वसम्बन्धेन घटादाविति भूतलनिरूपिताधेयत्वाश्रयो घट इति धीरित्याहुः।

## अधिशीङ्स्थासां कर्म ॥४६॥

अधिपूर्वाणामेषामाधारः कर्मसंज्ञः स्यात् । अधिशेते, अधितिष्ठति, अध्यास्ते वा वैकुण्ठं हरिः ।

## अभिनिविशश्च ॥४७॥

एतत्पूर्वस्य विशतेराधारः प्राग्वत् । ग्राममभिनिविशते । अभिनिवेश आग्रहः । तदाश्रयत्वात्स्वार्थे ऽकर्मको ऽयम् । तत्राधिकरणस्य कर्मसंज्ञाविधिरयम् । प्रवेशनार्थतायां तस्याः सिद्धत्वात् । परिक्रयणे सम्प्रदानमिति सूत्रान्मण्डूकप्लुतिन्यायेन विकल्पानुवृत्तौ व्यवस्थितविभाषात्वस्वीकारात् पापे ऽभिनिविशते इत्यादौ सप्तमी । अत एव समर्थसूत्रे एष्वर्थेष्वभिनिविष्टानामिति भाष्यम् । उपसर्गद्वयस्य यथोक्तानुपूर्व्यवच्छिन्नत्वेन प्रयोगश्चायम् । नेः परनिपातकरणाल्लिङ्गात् । तेनेह न । निविशते यदि शूकशिखा पदे । कर्मत्वविवक्षायां तु तत्रापि द्वितीयैव ।

## उपान्वध्याङ्वसः ॥४८॥

उपवसति, अनुवसति, अधिवसति, आवसति वा ग्रामं सेना । वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः । अर्थशब्दो निवृत्तिवाची । व्यधिकरणे षष्ठ्यौ । अश्यर्थस्य भोजननिवृत्तेर्वाचको यो वसिस्तस्येत्यर्थः । यद्वा शीङोऽर्थः श्यर्थः । न श्यर्थो ऽश्यर्थः । अस्थानार्थस्येत्यर्थः । जलाशय इत्यादौ शेतेः स्थित्यर्थत्वदर्शनात् । ग्रामे उपवसति । ग्रामे तिष्ठतीत्यर्थे तु ग्राममुपवसतीति । उपोष्य रजनीमेकामिति कालाध्वनोरिति द्वितीया । एकादश्यां न भुञ्जीतेति कालिकाधिकरणत्वे सप्तमी । कारकविभक्तेर्बलवत्त्वात् ।

# कर्तुरीप्सिततमं कर्म ॥४९॥

कर्तृनिष्ठा या आत्यन्तिकी प्राप्तीच्छा तद्विषयः कारकं कर्मसंज्ञम्। यद्व्यापारवत्त्वप्रयुक्तं कर्तृत्वं तेनैव प्राप्तुमिष्टमिति सान्निधिलभ्यम्, तेन क्रियाजन्यफलशालित्वलाभः। फलेच्छाया उपायेच्छाविधया क्रियेच्छाजनकत्वात् फलस्यैवेप्सिततमत्वात्। नच चैत्रो ग्रामं गच्छतीत्यादौ संयोगशालिनश्चैत्रस्यापि कर्मत्वापत्तिः। परसमवेतत्वेन क्रियाया विशेषणात्।

अत्र खण्डनकृतः। वृक्षात्पर्णं पततीत्यादावपादानेऽतिव्याप्तिः। पर्णसमवेतपतनक्रियाजन्यविभागरूपफलशालित्वात्। नचेष्टापत्तिः। द्वितीयान्तत्वापत्तेः। नच घटः क्रियते इत्यादौ व्यभिचारः। घटं करोतीत्यादौ तस्यामेव क्रियायां प्रयोगान्तरे द्वितीयान्तत्वसत्त्वात्। नच कर्मत्वेन विवक्षाविषयत्वं द्वितीयाप्रयोजकं नतु कर्मत्वमात्रम्, युगपच्च कारकाणां न विवक्षेति वाच्यम्। कर्मत्वसत्त्वे विवक्षाया दुर्वारत्वात्। नच वैयाकरणसम्प्रदायो नियामक इति वाच्यम्। वस्तुमात्रं कर्मेत्यपि लक्षणप्रसङ्गात्। अतिप्रसङ्गस्योक्तरीत्यैव सुपरिहरत्वात्। नचापादानान्यत्वमपि विशेषणम्। नदी वर्धते इत्यादाववयवोपचयरूपाया वृद्धेः अप्राप्ततीरभागेन संयोगविभागौ फले इति तच्छालिनि तीरेऽतिव्याप्तेः। तथाच वृधेरकर्मकत्वं न स्यात्। नच क्रियानाशकत्वं फले विशेषणम्, पर्णसमवेतक्रियाजन्यवृक्षनिष्ठविभागश्च न क्रियानाशकः, उत्तरसंयोगस्यैव क्रियानाशकत्वात्, ग्रामादेश्च गन्तृसमवेतगमनविनाशहेतुसंयोगशालित्वान्नातिव्याप्तिरपीति वाच्यम्। वृद्धिफलसंयोगस्य क्रियानाशकत्वात्तीरादावतिव्याप्तितादवस्थ्यात्। एवमात्मानं जानातीत्यादावव्याप्तिरिति।

अत्राहुः । क्रियाफलं केनचिद्धातुना कर्त्रतिरिक्तनिष्ठत्वेन प्रतिपाद्यते । केन चिच्च न तथा, यद्वा कर्तृनिष्ठत्वेन प्रतिपाद्यते । अथवा कस्य चिद्धातोः कर्त्रतिरिक्तनिष्ठत्वेन फलप्रतिपत्तौ तात्पर्यं । कस्य चित्तु न तथा, यद्वा कर्तृनिष्ठत्वेन फलप्रतिपत्तौ तात्पर्यम् । तत्र क्रियाश्रयातिरिक्तनिष्ठतया धातुप्रतिपाद्यफलशालि कर्म । नच वृक्षतीरयोस्तथात्वम् । उच्चारणविशेषे विभागरूपफलस्य पतत्यर्थत्वाभावात् । अधःसंयोगस्य तदर्थत्वात् । वर्धतिना च कर्त्रतिरिक्तनिष्ठत्वेन कस्याप्यनभिधानात् । नचात्मानं जानातीत्यत्राव्याप्तिः । परसमवेतक्रियाफलशालित्वेन क्रियाश्रयातिरिक्तवृत्ति यत् क्रियाफलं तज्जातीयफलाश्रयत्वस्य विवक्षितत्वात् । घटादिवृत्तिव्यवहारसजातीयस्य व्यवहारादेरात्मन्यप्युपपत्तेः । यद्वा ऽऽत्मनः परत्वाभावे फलानाश्रयत्वे ऽपि च क्रियाश्रयातिरिक्तनिष्ठत्वेन फलस्य धातुनाऽनुच्यमानत्वान्न दोष इति ।

नैयायिकास्तु धात्वर्थतावच्छेदकफलशालित्वं तत् । संयोगावच्छिन्नक्रिया गमेरर्थः । विभागावच्छिन्ना त्यजेः । अधःसंयोगावच्छिन्ना पतेः । स्पन्दमात्रस्य तदर्थत्वे पर्यायत्वप्रसङ्गात् । तथाच गमनपतनजन्यविभागमादाय पूर्वदेशे, संयोगमादाय त्यजेरुत्तरदेशे कर्मत्वानापत्तिः । स्पन्दधातोश्च व्यापारमात्रवाचकतया धात्वर्थतावच्छेदकत्वस्य संयोगे विरहान्न पूर्वापरदेशयोस्तीरस्य च तथात्वप्रसङ्गः । फलावच्छिन्नव्यापारवाचित्वादेव धातूनां मुख्यं सकर्मकत्वम् । जानात्यादीनां तु नामार्थान्वितोद्देश्यत्वातिरिक्तविषयत्वरूपविभक्त्यर्थान्वय्यर्थकत्वरूपगौणं तत् । घटं जानातीत्यादितो घटविषयताशालिज्ञानाश्रय इति बोधात् । उभयसाधारणसकर्मकधातुयोग एव कर्मप्रत्ययाः अत एव

पतेर्न सकर्मकत्वम् । नामार्थान्वितस्य चतुर्थ्यर्थोद्देश्यत्वस्यैव, यत्ने ऽन्वयात् । अभुञ्जानेऽपि भोजनाय यतते इति प्रयोगात् । परसमवेतक्रियाजन्यत्वमपि फले निवेश्यम् । भूमिं प्रयाति विहगो, विजहाति महीरुहं, न तु स्वात्मानमिति प्रयोगात् । संयोगविभागयोरुक्तधात्वर्थतावच्छेदकफलत्वेन तच्छालिनः स्वस्य कर्मत्वप्रसङ्गात् । नच मल्लो मल्लं गच्छतीत्यादौ उभयकर्मजसंयोगस्य तादृशत्वात् स्वस्मिन् स्वकर्तृकक्रियाकर्मत्वव्यवहारापत्तिः । परसमवेतक्रियाजन्यफलशालित्वं यत्र तत्तत्क्रियाकर्मेति स्वीकारात् ।

इत्थं च द्वितीयादेः क्रियान्वितं परसमवेतत्वमर्थः । परत्वं च सुपा स्वप्रकृत्यर्थापेक्षया प्रत्याय्यते । कर्माख्यातेन तु स्वार्थफलान्वय्यपेक्षयेति विशेषः । तथाच भूमिं प्रयाति इत्यादेर्भूमिभिन्नसमवेतो भूमिवृत्तिसंयोगजनको यः स्पन्दस्तदनुकूलकृतिमानिति धीः । अतः स्वभिन्नसमवेतं स्ववृत्तिसंयोगजनकं यन्मल्लान्तरवृत्ति गमनं तदनुकूलकृतेः स्वस्मिन्नभावान्न मल्लः स्वं गच्छतीत्यादिः प्रयोगः । अत्र च द्वितीयाद्यर्थफले यद्व्यक्तेरन्वयस्तद्व्यक्तित्वावच्छिन्नप्रतियोगितासम्बन्धेन ग्रामादेः परत्वेऽन्वयः । तेन पृथिवीं प्रयातीत्यादौ पृथिवीत्वावच्छिन्नप्रतियोगिताकभेदस्य विहगादावसत्त्वे ऽपि न क्षतिः । न वा स्वात्मन्यप्युभयभेदसत्त्वात् स्वं प्रयातीत्यादिप्रयोगापत्तिरित्याहुः ।

अन्ये तु पृथिव्यादिपदं तत्तत्पृथिव्यादिव्यक्तौ लाक्षणिकम् । अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्त्यनुरोधादित्याहुः ।

केचित्तु क्रियान्वितं अन्योन्याभावप्रतियोगितावच्छेदकत्वं द्वितीयार्थो न परसमवेतत्वं । ततश्च भूमिवृत्तिसंयोगजनकं

भूमिनिष्ठान्योन्याभावप्रतियोगितावच्छेदकं च यत् प्रयाणं तदनुकूलकृतिमानिति धीः । स्वनिष्ठक्रियायाः स्वनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वविरहान्न स्वं प्रयातीत्यापत्तिरित्याहुः ।

एवं सति येन मल्लेन मल्लान्तरं न गतं तस्मिन् मल्लो मल्लं गच्छतीति प्रयोगः स्यात् । मल्लान्तरनिष्ठान्योन्याभावप्रतियोगितावच्छेदिकायास्तन्मल्लक्रियायास्तन्मल्लभूमिवृत्तिसंयोगजनकत्वात् । फलान्वयिमल्लव्यक्तेरेव प्रतियोगितया भेदान्वय इत्युक्तौ तु तद्व्यक्तित्वादेः प्रकारत्वे शक्त्यानन्त्यम् । संसर्गत्वकल्पनापेक्षया तु परसमवेतत्वमेव सम्यक् । अन्योन्याभावस्याव्याप्यवृत्तित्वे ऽव्याप्तेरित्यपरे ।

अथ पतेरधःसंयोगावच्छिन्नस्पन्दार्थतयोक्तसंयोगशालिनो भूतलादेः कर्मत्वापत्तौ वृक्षात्पर्णं भूतलं पततीति प्रयोगापत्तिरिति चेन्न ।

तथा विवक्षायामिष्टत्वात् । अत एव द्वितीयाऽऽश्रितातीतपतितेत्यादिसूत्रेण पतितयोगे द्वितीयासमासविधिः संगच्छते ।

अन्ये त्वाहुः । सकर्मकाकर्मकत्वव्यवस्था न व्यापारस्वरूपे किंत्ववच्छेदकफलविशेषानादाय शब्दविशेषे ।

तथाहि– धातुना व्यापारावच्छेदकत्वेन फलेऽभिहिते प्रतियोग्याकाङ्क्षायां सन्निहितो द्वितीयान्तस्यैवार्थस्तत्त्वेनान्वीयते इति ग्रामं गच्छतीत्यत्र ग्रामप्रतियोगिकसंयोगजनकव्यापारो वाक्यार्थः । पतिधात्वर्थावच्छेदकसंयोगे च न प्रतियोगित्वेन वृक्षो ऽन्वेति, अयोग्यत्वात् । न भूतलं, अधः संयोगावच्छिन्नव्यापारवाचिना धातुना प्रतियोगिविशेषितस्यैव फलस्योपस्थापनेन प्रतियोगिनिराकाङ्क्षत्वादिति न द्वितीयानिर्देशः । एवं वर्धते इत्यादावप्यूह्यम् ।

एवञ्च कटं करोतीत्यादौ कृधात्वर्थावच्छेदकोत्पत्तिरूपफलभागित्वात्कटादेर्मुख्यमेव कर्मत्वमिति ।

केचित्तु पतिना कर्तृमात्रानिष्ठत्वेनाधःसंयोगात्मकफलोपनयादकर्मकत्वम् । गम्यादीनां तु ग्रामनिष्ठत्वेन तदुपनयात्सकर्मकत्वमित्याहुः ।

एतन्मते संयोगावच्छिन्नव्यापारे लक्षणामङ्गीकृत्य द्वितीयासमासविधान समाधेयम् ।

केचित्तु पतिः सकर्मक एव किन्तु गुरुत्वजन्यविजातीयक्रियैव तदर्थः । तत्समभिव्याहृतद्वितीयायास्त्वधःसंयोगलक्षणं कर्मत्वम् । एवं त्यजिगम्यादेरपि व्यापार एवार्थो न तु फलावच्छिन्नो गौरवात् । द्वितीयादिस्तु तत्समभिव्याहाररूपतात्पर्यग्राहकवशाद्विभागसंयोगादिपरः । अतो ग्रामं त्यजति गच्छति इत्येतयोर्न पर्यायत्वम् । त्यजेर्विभागावच्छिन्नस्पन्दशाब्दत्वं, गमेः संयोगावच्छिन्नस्पन्दशाब्दत्वं कार्यतावच्छेदकमिति स्वीकारात् । गमनं त्याग इत्यत्रापि फलावच्छिन्नस्पन्दे लक्षणा । न च चैत्रेण ग्रामस्त्यज्यते इत्यत्र स्पन्दविशेषणकविभागादिविशेष्यकशाब्दानुपपत्तिः । विभागसंयोगान्यतरस्पन्दोभयवैशिष्ट्यावगाहिशाब्दत्वस्यैव विवक्षितत्वात् । विभागादिविशेषणकस्पन्दविशेष्यकत्वस्पन्दविशेषणकविभागादिविशेष्यकत्वेत्युभयस्य संग्रहात् । सकर्मकत्वव्यवहारस्त्वननुगततत्तन्निमित्तकः । परसमवेततत्तद्धात्वर्थान्वितफलशालित्वं तत्तद्धात्वर्थकर्मत्वम् । तेन पूर्वदेशादेर्गम्यादौ न कर्मत्वमिति वदन्ति ।

तन्नेत्यपरे । क्रियानिमित्तत्वं विना कर्मणोऽपादनस्य च कारकत्वायोगात् । जुहोतेस्तु देवतोद्देश्यको ऽग्निप्रक्षेपो ऽर्थः । स चाग्निसंयोगानुकूलक्रियानुकूलो घृतादिनिष्ठो नोदनादिव्यापारः ।

वैयर्थ्यतादवस्थ्यं। तथाप्युपेक्षायामतिव्याप्तिश्च। तस्या अपि स्वस्वत्वध्वंसद्वारा परस्वत्वप्रयोजकत्वात्। किञ्च दूरस्थपात्रोद्देशेन सक्तस्य प्रतिग्रहात्प्रागस्वामिकस्य द्रव्यस्यानुद्देश्येन पुरुषेण प्रतिग्रहात्स्वत्वं स्यात्। अन्योद्देश्यकत्यागस्य तद्विरोधित्वे गौरवम्।

न च संप्रदानस्यानुमतिप्रकाशनद्वारा दानहेतुत्वादसम्प्रदानकत्यागो दानाभास एवेति वाच्यम्।

तीर्थसङ्कल्पितद्रव्यं यदन्यत्र प्रदीयते।
दाता तत्फलमाप्नोति प्रतिग्राही न दोषभाक्॥
मनसा पात्रमुद्दिश्य भूमौ तोयं विनिःक्षिपेत्।
विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते॥
द्रव्यपात्रविकर्षश्चेत्परोक्षं दातुमुद्यतः।
तं ध्यायेद्वैभवं पात्रं द्रव्यमादिश्य दैवतम्॥
परोक्षे कल्पितं दानं पात्राभावे कथं भवेत्।
गोत्रजेभ्यस्तथा दद्यात् तदभावे स्वबन्धुषु॥

इत्यादि नारदीयषट्त्रिंशन्मतादिस्मृतिविरोधापत्तेः।

एवं स्वस्वत्वध्वंसजनकेत्यपि व्यर्थम्। अव्यावर्तकत्वात्। अग्निप्रक्षेपो होम इत्यप्ययुक्तम्। देवतोद्देश्यकस्वस्वत्वध्वंसजनकत्यागो यागः। स एव प्रक्षेपावच्छिन्नो होम इति वाचस्पतिमिश्रोक्तेः। याग एव विशिष्टदेशप्रक्षेपोपहितो होम एवं विवेकोक्तेश्च। अस्ति च ऋत्विजां यागाद्यजमानस्वत्वध्वंसः। अनुमतदासत्यागविशेषात्स्वामित्वध्वंसवत्।

वस्तुतो दानत्वयागत्वहोमत्वादयो मानसप्रत्यक्षगम्या जातिविशेषाः। नच श्राद्धस्य पित्रपेक्षया यागत्वं ब्राह्मणापेक्षया च दानत्वमिति विवेकोक्तेस्तत्र सांकर्यम्। श्राद्धस्य गौणतदुभय-

रूपत्वात् ।

वस्तुतः श्राद्धस्य यागत्वमेव । पित्रादिस्वत्वाजनकत्वात् । ब्राह्मणस्वत्वमपि सार्वत्रिकम् । ब्राह्मणासंभवेऽपि श्राद्धोक्तेः । "पिण्डांस्तु गोजविप्रेभ्य" इत्यादिना ऽन्यत्रापि तत्प्रतिपत्त्युक्तेः ।

विष्णुं यजत इत्यादौ द्वितीयार्थ उद्देश्यत्वं तच्च तस्येदमित्यारोपज्ञानविषयत्वम् । देवताचैतन्यपक्षे तु देवतायाः स्वत्वोपगमात् दानत्वव्याप्यं यागत्वं, तद्व्याप्यं होमत्वमिति बोध्यम् । देवपूजादिकमपि याग एव । अत एव संसृष्टिस्थलेऽसाधारणस्वत्वनाशोत्तरं साधारणस्वत्वोत्पादात्तत्र दानलक्षणस्य नातिव्याप्तिः । दानत्वजातेस्तत्रानङ्गीकारात् । परमात्रस्वत्वानुकूलत्वेन विशेषणान्न तथेति केचित् ।

सत्येव पूर्वस्वत्वे तत्र परस्वत्वोत्पत्तिमात्रम् । नच स्वत्ववति कथं परस्वत्वोत्पत्तिः । इच्छाया उत्तेजकत्वादित्यन्ये ।

अदृष्टजनकत्वविशेषणात्तन्निरास इत्यपरे ।

मिश्रास्तु देवतोद्देश्यकद्रव्यत्यागरूपं यागलक्षणं देवतायै दाने ऽतिव्याप्तम् । तथापि दाने देवतास्वत्वमुद्देश्यं न तु यागे । अत एव पूजारूपयागद्रव्यं गन्धपुष्पादि सर्वदेशीयाः शिष्टा उपयुञ्जते, न तु देवतायै दत्तं गृहालङ्करणादिकमित्याहुः ।

उद्धारकृतस्तु नैतद्युक्तम् । देवताचैतन्यपक्षे ऽपि तासामनुमत्यभावान्न संप्रदानत्वम् । तदभावे च कथं दानं, तद्विना च कथं स्वत्वं, अन्यथा यागेऽपि स्वत्वोत्पत्त्यापत्तेः । नचानुत्पन्नमेव स्वत्वमुद्देश्यत्वमात्रेण व्यावर्तकम् । तदुद्देश्यत्वे मानाभावात् । नच ददातिप्रयोगो मानम् । श्राद्धे ऽपि श्राद्धं दद्यादिति बहुशः प्रयोगात् । नच श्राद्धमपि दानम् । सकलसंप्रदायविरोधात् । देवस्वव्यवहारस्तु उद्देश्यतामात्रेण ।

गृहालङ्करणादीनामनुपयोगः ।

हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ।
पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः ॥

इत्यादिवत् प्रतिपत्तिवाक्याभावात् ।

न च—

अपि दीपावलोकं मे नोपयुञ्ज्यान्निवेदितम् ।

इति भगवद्वचनविरोधः । तस्यासाधारणस्थावरविषयतया रागप्राप्तभोजनविषयतया व्यवस्थापनात् । अथवाऽन्यस्मै निवेदितं तस्मै नोपयुञ्ज्यान्न निवेदयेत् इत्यर्थः ।

पित्रन्यदेवतोच्छिष्टं विष्णवे यः प्रयच्छति ।

इत्यादिनिन्दाबलात् । वस्तुतो दाने मन्त्राभावान्न देवतात्वमिति न यागत्वम् । एवं च ददातिप्रयोगेऽपि यत्र श्राद्धादौ मन्त्रः, स एव यागो नान्य इति । अतएव स्वीकारः स ऋत्विक्के दाने कारणं, नानृत्विक्के । अत एवोत्सर्गे ददातिर्मुख्य एवेत्याहुः । इत्यास्तां विस्तरः ।

इदं च सप्तविधमित्युक्तं वाक्यपदीये ।

निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम् ।
तच्चेप्सिततमं कर्म चतुर्धाऽन्यत्तु कल्पितम् ॥
औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम् ।
सञ्ज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम् ॥

इति । आद्यानां त्रयाणां लक्षणमप्युक्तम् ।

सती वा विद्यमाना वा प्रकृतिः परिणामिनी ।
यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते ॥
प्रकृतेस्तु विवक्षायां विकार्यं कैश्चिदन्यथा ।
निर्वर्त्यं च विकार्यं च कर्म शास्त्रे प्रदर्शितम् ॥

यदसज्जायते सद्वा जन्मना यत्प्रकाशते ।
तन्निर्वर्त्यं विकार्यं तु द्वेधा कर्म व्यवस्थितम् ॥
प्रकृत्युच्छेदसंभूतं किञ्चित्काष्ठादिभस्मवत् ।
किञ्चिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥
क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥

अयमर्थः । घटं करोतीत्यत्र सत्यपि घटस्य प्रकृतिर्न परिणामित्वेन विवक्षितेति निर्वर्त्यम् । भस्म करोतीत्यत्रापि काष्ठादिरूपप्रकृतेरविद्यमानाया अविवक्षायां, तथैवोक्तप्रकृतेः परिणामित्वाविवक्षायां तु विकार्यतैवेति केचित् ।

अन्ये त्वाहुः । घटं करोतीति निर्वर्त्यमेव । घटादिकं चासदेवोत्पद्यत इति तार्किकादयः ।
सदिति तु सांख्यादयः । तदुक्तं तत्रैव ।

उत्पत्तेः प्रागसद्भावो बुद्ध्यवस्थानिबन्धनः ।
अविशिष्टः सताऽन्येन कर्ता भवति जन्मनः ॥
कारणं कार्यभावेन यदा वा व्यवतिष्ठते ।
कार्यशब्दं तदा लब्ध्वा कार्यरूपेण जायते ॥
यथाऽहेः कुण्डलीभावो व्यग्राणां वा समग्रता ।
तथैव जन्यरूपत्वं सतामेके प्रचक्षते ॥

आद्यश्लोको ऽसत्कार्यवादे घटादीनां कथं जन्मकर्तृत्वमिति शङ्कासमाधानार्थः । बुद्धिकल्पितसत्तामादाय शब्दप्रयोगोपयुक्तं कर्तृत्वम् । तत्र कार्याव्यवहितप्राक्काले वृत्तित्वस्यानुपयुक्तत्वात् । कारणत्वं तु स्वस्य स्वं प्रति नाङ्गीक्रियत एव । यत्रोक्तापेक्षा स्यात् । उत्पत्तावपि घटप्रागभावस्यैव निमित्तत्वात् । सत्कार्यवादे ऽपि वेदान्ताद्यभिमते येन रूपेणोत्पत्तिस्तद्रूपेण पूर्वमसत्त्वात्,

कारणरूपेण सत्त्वस्य त्वप्रयोजकत्वादिति तदेदं तर्ह्यव्याकृत-मासीदिति वाक्यव्याख्यायां तर्ककौतूहले विस्तरः ।

अन्त्यद्वयं तु सत्कार्यवादाभिप्रायम् घटो नाश्यत्वमापन्नः, कटकमेव मुकुटं जातमित्यादिप्रतीत्या पूर्वावस्थाया उत्तरावस्था-तादात्म्यानुभवात् पूर्वोत्तरावस्थयोरभेदः । भिन्नकालीनयोरप्य-नुभवसाम्यात् प्रतियोगित्वानुयोगित्ववत्तादात्म्यस्यापि सम्भ-वात् । इदमेव वेदान्तिभिः संस्कारशब्देनाभिधीयते । परन्तु मि-थ्यात्वातत्साख्यापेक्षया विशेषः ।

प्रकृतमनुसरामः । विकार्यं द्वेधा । प्रकृतिभूतस्यात्मन उच्छेदे संभूतं प्राप्तम् । काष्ठं भस्म करोतीति । गुणान्तरोत्पत्त्या सुवर्णं कुण्डलं करोतीति । भस्मदशायां न काष्ठत्वप्रत्ययः, कुण्डलदशायां तु सुवर्णत्वप्रत्ययोऽस्तीति विशेषः । अत्र काष्ठसुवर्णयोः परिणा-मित्वविवक्षाविवक्षयोरपि भस्मकुण्डलयोर्निर्वर्त्यतैव । काष्ठसुवर्ण-योस्तु विकार्यत्वमेवेति बोध्यम् । नच क्रियाजन्यफलानाश्रयस्य काष्ठस्य कथं कर्मत्वमिति वाच्यम् । प्रकृतिविकृत्योर्निरूढयाऽभे-दविवक्षया तथात्वात् । काष्ठानि विकुर्वन् भस्म करोतीत्यर्थाद्वा । तण्डुलान् विक्लेदयन्नोदनं निर्वर्तयतीतिवत् । व्युत्पादितं चेदं द्व्यर्थः पचिरित्युपक्रम्य भाष्यकारैरिति ग्रन्थकृतः । प्राप्यं रूपं पश्यतीति । आवरणभङ्गस्य विषयत्वस्य वा क्रियाकृतविशेषस्य प्रतिपत्तृगम्यत्वेऽपि तदतिरिक्तागम्यत्वम् । औदासीन्येन ग्रामं गच्छन् तृणं स्पृशति । अनीप्सितं विषं भुङ्क्ते । संज्ञान्तरैरना-ख्यातमकथितं गां दोग्धि पयः । अन्यपूर्वकं संज्ञान्तरप्रसङ्गे वि-हितकर्मसंज्ञाकम् । क्रूरमभिक्रुध्यतीत्यादि ।

नैयायिकास्तु संयोगादिक्रियाफलशालि प्राप्यं ग्रामादि । यल्लब्धसत्ताकमेवावस्थान्तरमापद्यते तद्विकार्यम् । यथा प्रागुदा-

-हृतम् । तत्र हि काष्ठपदं तदवयवपरम् । तस्य सत एव भस्मादिभवनरूपावस्थान्तरप्राप्तेः । न च क्रिया यत्कर्मनाशकं फलं जनयति तद्विकार्यम् । काष्ठं लुनातीत्यत्र काष्ठमिति वाच्यम् । तत्र लक्षणया काष्ठावयवस्य कर्मतया क्रियायास्तन्नाशकत्वाभावात् । तत्र हि काष्ठपदस्य तदवयवः, लुनातेरारम्भकसंयोगविरोधिविभागहेतुक्रियानुकूलव्यापारो ऽर्थ इति काष्ठावयववृत्तिनाशविभागहेतु क्रियानुकूलव्यापारानुकूलकृतिमानिति शाब्दात् काष्ठावयवस्य प्राप्यकर्मतैव । अवस्थान्तरप्राप्त्यभावात् । तण्डुलं पचतीत्यत्र तण्डुलपदं तदवयवलक्षकम् । पच्यर्थो रूपादिपरावृत्त्यवच्छिन्नतेजःसंयोगः । तेन क्रियाजन्यफलशालित्वात् सतो ऽवस्थान्तरप्राप्तेश्चोभयविधं कर्मत्वम् । घटं करोतीत्यादि निर्वर्त्यम् । अत्र कृञः फलावच्छिन्नव्यापारबोधकतया गौणं कर्मत्वम् । क्रियानिमित्तत्वाभावान्न मुख्यं कारकत्वमपि, किन्तु साध्यत्वाख्यकृतिविषयतया गौणम् । कृञ्समभिव्याहृतद्वितीयादेरुक्तविषयतैवार्थः । अत एव कपालं करोतीति न शक्त्या प्रयोगः । उपादानत्वाख्यविषयताया एव तत्र सत्त्वात् ।

प्राञ्चस्तु घटपदं कपाले लाक्षणिकम् । तेन क्रियाजन्यघटात्मकफलशालित्वात् मुख्यमेव कर्मत्वादि । शक्त्या तु कपालं करोतीति न प्रयोगः । कृञ्समभिव्याहृतघटादेस्तदवयवे निरूढलाक्षणिकत्वादित्याहुः ।

यत्तु कर्तृकरणकर्माधिकरणविभक्तीनां आश्रय एवार्थः । फलाश्रयः कर्म, व्यापाराश्रयः कर्ता, कर्तृकर्मान्यतराश्रयो ऽधिकरणम् । तत्र फलादेरन्यलभ्यतया आश्रयमात्रमर्थः । तत्वमेवाखण्डशक्तिरूपमवच्छेदकम् । नच चैत्रो ग्रामं गच्छतीत्यादौ चैत्रादेरपि कर्मत्वे द्वितीयापत्तिः । संज्ञान्तरविरहविशिष्टकर्मसंज्ञा-

या एव द्वितीयाप्रयोजकत्वात् । परया कर्तृसंज्ञया कर्मसंज्ञा-बाधात् । एकसंज्ञाधिकारेण समावेशस्याप्यसम्भवादिति तच्चिन्त्यम् । आश्रयमात्रस्य वाच्यत्वे कर्तृसंज्ञापर्यवसानानुपपत्त्या तस्याः कर्मसंज्ञाबाधकत्वानुपपत्तेः । नच फलस्याश्रयोपरि विशेषणत्वविवक्षायां कर्मसंज्ञा, व्यापारस्य तथात्वे तु कर्तृसंज्ञेति वाच्यम् । फलाश्रयत्वादेः शाब्दबोधविषयत्वेऽपि कर्तृकर्मान्यतराश्रयत्वस्याधिकरणस्थले शाब्दबोधाविषयत्वात् तत्र नियामकाभावात् ।

## तथायुक्तं चानीप्सितम् ॥५०॥

ईप्सिततमवत्क्रियया युक्तमनीप्सितमपि कर्मसंज्ञम् । चौरान् पश्यति । अनीप्सितानामपि चौराणा चक्षुःसंयोगबलाद्दर्शनविषयत्वम् ।

## अकथितं च ॥५१॥

अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञम् । परिगणनं कर्तव्यम् । नटस्य शृणोतीत्यादावतिप्रसङ्गनिवारणार्थम् । तथा च भाष्यम् ।

दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना ॥
नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।
द्विकर्मकेषु ग्रहणं कर्तव्यमिति निश्चयः ॥

प्रच्छीसत्वानित्यमागमशासनमिति तुगभावः । इको यणचि-सनाद्यन्ता धातव इत्यादौ नुडाद्यभाववत् । उपयुज्यते इत्युपयोगो

मुख्यं कर्म क्षीरफलादि तस्य निमित्तं गवादि । गां दोग्धि पय इत्यत्र हि पयस ईप्सिततमत्वमुपयुज्यमानत्वान्न तु गोः । नच तथायुक्तत्वेन सिद्धिः । तथायुक्तत्वाभावात् । ब्रुविशास्योर्गुणेन कर्मणा च यत्सचते सम्बध्यते, क्रियायाः साध्यत्वात्प्राधान्यं, कारकाणां गुणत्वम् । षच समवाये स्वरितेत् । परस्मैपदेष्वेवैतत्पाठपक्षे षच सेवने इत्यस्यानुदात्तेतो रूपम् । धातूनामनेकार्थत्वात् । कविना क्रान्तदर्शिना मेधाविना ऽऽचार्येणेति यावत् । अकीर्तितमकथितमित्याचरितं व्यवहृतमित्यर्थः । अपादानाद्यविवक्षायां चैतदित्याह—अपूर्वविधाविति । पूर्वोक्तानामपादानादिसंज्ञानामविषये इत्यर्थः । नचैवं वक्ष्यमाणयोर्हेतुकर्तृसंज्ञयोर्विषयेऽतिप्रसङ्गः । पूर्वेत्यन्यमात्रस्योपलक्षणात् । नचाकथितमिति निष्ठार्थभूतत्वस्य वक्ष्यमाणो बाधः । तस्याविवक्षितत्वात् । अत एव पराजेरसोढ इत्यादौ पराजेष्यमाणस्याप्यपादानत्वमिति सम्प्रदायः । परत्वाद्धेतुकर्तृसंज्ञाभ्यामेतद्बाधः एकसंज्ञाधिकारादिति नव्याः ।

गत्यर्थानामिति गतिबुद्ध्यादिसूत्रोपात्तानामुपलक्षणम् । चकारेण जयत्यादिसङ्ग्रह इति कैयटः । ते च माधवेनोक्ताः ।

जयतेः कर्षतेर्मन्थेर्मुषेर्दण्डयतेः पचेः ।
तारेर्ग्राहेस्तथा मोचेस्त्याजेर्दापेश्च सङ्ग्रहः ॥

कारिकायां चशब्देन सुधाकरमुखैः कृतः । अथ भिक्षेः पृथगुपादानं व्यर्थम् । दुहादिनिर्देशस्यार्थपरत्वात् । याचिग्रहणेनैव संग्रहात् । नचार्थपरत्वे मानाभावः । अहमपीदमचोद्यं चोद्य इति तद्राजसूत्रे भाष्यनिर्देशात् । पृच्छिपर्यायतयैव चुदेर्द्विकर्मकत्वसम्भवात् । अत एव—

"शिलोच्चयोऽपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव"-

इति कालिदासादिप्रयोगाः सङ्गच्छन्ते । अत एव त्याजेरपि दुह्यर्थत्वादेव सङ्ग्रहः इति चेदत्राहुः ।

अनुनयार्थोऽत्र याचिः । अविनीतं विनयायानुनयतीति प्रत्ययात् । नच याचेरेव तर्हि ग्रहणमस्त्विति वाच्यम् । अर्थभेदाच्छब्दभेद इति प्रार्थनार्थस्य याचेरिहानुपादानात् । पक्षान्तरे तु स्पष्टार्थं भिक्षिग्रहणमिति ।

उदाहरणानि । गान्दोग्धि पयः । पौरवं गां याचते । अविनीतं विनयं याचते । अन्ववरुणद्धि गां व्रजम् । माणवकं पन्थानं पृच्छति । पौरवं गां भिक्षते । वृक्षमवचिनोति फलानि । पुत्रं ब्रूते धर्मं, अनुशास्ति वा । अजां नयति ग्रामम् । वहति भारं ग्रामम्, हरति वा । गमयति देवदत्तं ग्राममित्यादि । शतं जयति देवदत्तम् । कर्षति शाखां ग्रामम् । क्षीराधिं सुधां मथ्नाति । मुष्णाति शतं देवदत्तम् । गर्गान् शतं दण्डयति । तण्डुलानोदनं पचति । तारयति कपीन् समुद्रम् । ग्राहयति बटुं वेदम् । त्याजयति कोपं देवदत्तम् । दीपयति शास्त्रार्थं शिष्यान् । नचाजां गृहीत्वा ग्रामं नयतीत्यर्थादप्रयुज्यमानग्रहणक्रियापेक्षमेव कर्मत्वमिति वाच्यम् । अजा नीयते ग्राममित्यत्र नयत्युत्तरकर्मप्रत्ययेन ग्रहणकर्मणोऽजाया अनभिधानप्रसङ्गात् । "अन्यकर्मेति चेद् ब्रूयाद् लादीनामविधिर्भवेद्"इति भाष्योक्तेः । इह ग्राहेर्द्विकर्मकत्वं बहूनामनभिमतं, उक्तस्थले बुध्यर्थत्वादेव तत्संभवात् । अत एव—

"अजिग्रहत्त जनको धनुस्तत्" ।

इति भट्टिप्रयोगं अनेन भगवता त्रिपुरदाहः कृत इति बोधितवान् ।

"अयाचितारं नहि देवदेवमद्रिः सुतां ग्राहयितुं शशाक"

इति कालिदासप्रयोगमुदाहृतत्वेन बोधयितुम् ।

तमादौ कुलविद्यानामर्थमर्थविदां वरः ।

पश्चात्पार्थिवकन्यानां पाणिमग्राहयत्पिता ॥

इति तत्प्रयोगं च उत्तरार्धे तेनेति विभक्तिविपरिणामेनं व्याचख्युः । अत एव ।

"पत्नद्ग्रहं ग्राहितवान्नलेन सः" इति श्रीहर्षः ।

पचेस्तु द्विकर्मकत्वं "दुहिपच्योर्बहुलं सकर्मकयो"रिति कर्मवत्कर्मणेतिसूत्रगतवार्तिकव्याख्यायां कैयटेन स्फुटीकृतम् । माधवस्याप्यत्रैवानुमतिः ।

- नन्वेतत्कर्मसंज्ञासूत्रे द्व्यर्थः पचिरिति भाष्यविरुद्धम् । तत्र हि विक्लित्तिरुत्पत्तिश्च फलद्वयं व्यापारश्च पच्यर्थः । तथा च विक्लित्तिशालितया तण्डुलानामुत्पत्तिमत्तया चौदनस्य कर्मत्वम् । तेन तण्डुलनिष्ठविक्लित्तेरोदनानिष्ठोत्पत्तेश्चानुकूलो देवदत्तनिष्ठो व्यापार इत्यर्थः । तण्डुलान् पचतीत्यत्र तु विक्लेदयतीत्यर्थः । धातुत्वेन पच्युपात्ताया भावनायां पचित्वरूपेण पच्युपात्ताया विक्लित्तेः कर्मतयान्वयात् । ओदनं पचतीत्यत्र विक्लित्य निर्वर्तयतीत्यर्थः । करणत्वेन तदन्वयादिति निरूपितम् । द्विकर्मकत्वे तु उक्तप्रयासवैयर्थ्यं स्यात् । मैवम् । मतभेदाभिप्रायत्वात् । एतेनाकथितशब्दो यद्यप्रधानार्थो गृह्येत तदा पाणिना कांस्यपात्र्या दोग्धि पय इत्यत्र करणाधिकरणयोरपि कर्मसंज्ञा स्यात् । नच तयोरनवकाशत्वं पच्यादौ सावकाशत्वात् । नच तत्रापि एतत्प्रसङ्गः । दुह्यादिपरिगणनादिति हरदत्तग्रन्थो व्याख्यातः । यत्तु ग्राहेर्द्विकर्मकत्वे जायाप्रतिग्राहितगन्धमाल्यामिति न सिध्येत् । जायया गन्धमाल्यं प्रतिग्राहितेयेति विग्रहे बहुव्रीहेर्दुर्लभत्वात् । त्रिकतः शेषस्य भाष्ये वक्ष्यमाणत्वात् । नच गन्धमाल्ये प्रतिग्राहिते यामिति विग्रहः ।

धेनुरूपप्रयोज्यकर्मण एव क्तेनाभिधानात् । "ण्यन्ते कर्तुश्च-कर्मण"इति वक्ष्यमाणत्वात् । अत एव—

"भूपालैर्विगतस्पृहा अपि धनं विप्राः प्रतिग्राहिता"

इति प्रयोगः । प्रतिग्राहिते गन्धमाल्ये ययेति विग्रहे तु नानुपपत्तिः । उदरथ इत्यादिवत् । नचापादानाद्यविवक्षाया-मेव द्विकर्मकत्वं तद्विवक्षाया तूक्तविग्रहो भविष्यतीति वाच्यम् । हरतेश्चेति चकारसमुच्चितानां जयत्यादीनामकथितसूत्रविषयत्वे-ऽपि तथैव चेति समुच्चितानामणौ कर्तुर्णौ कर्मताभ्युपगमात् गसर्थैः साहचर्यात् । अत एव तार्यादयः पृथगेव संगृहीताः । ग्रहणकर्तृ-त्वाविवक्षायां प्रयोजकस्य हेतुत्वाभावे णिचो दुर्लभत्वाच्च । नच दीपिग्रहणवैयर्थ्यम् । अकर्मकत्वाद्गतिबुद्धीति सूत्रेणैव सिद्धेरिति वाच्यम् । ण्यन्ताण्णिचि तदनार्थक्यादिति तच्चिन्त्यम् ।

भरतस्तत्र गन्धर्वान् युधि निर्जित्य केवलम् ।

आतोद्यं ग्राहयामास समत्याजयदायुधम् ।

प्रतिग्राहितशब्दस्य बोधितार्थत्वमङ्गीकृत्य स्वेच्छयाऽन्यत-रकर्मणि प्रत्ययोत्पत्त्या जायया बोधिते गन्धमाल्ये यामिति विग्रहे तदुपपत्तेः । यद्वा प्रतिग्राहितशब्दे भावे क्तः । जाया-या इति षष्ठीसमासः । अर्श आदित्वादच् । जायानिष्ठो यः धे-नुकर्तृकस्वीकरणप्रयोजको व्यापारस्तद्विशिष्टे गन्धमाल्ये य-स्या इति बहुव्रीहिः । वैशिष्ट्य चेदं धेनोर्भवत्वितीच्छाविष-यत्वम् । एतेन ।

"स्वक्रीडाहंसमोहग्रहिलशिशुभृशप्रार्थितोन्निद्रचन्द्र"

इति नैषधं व्याख्यातम् । शिशुनिष्ठं उत्कण्ठं यत्प्रार्थनं तद्विषयी-भूत उन्निद्रचन्द्रा यस्या इति तदर्थात् । एतेनाप्रधानकर्मणः क्तेना-भिधानात् "काकपक्षधरमेत्य याचित"इतिवत् शिशुना उन्निद्रचन्द्र-

सार्थितेत्यत्र बहुव्रीहिदौर्लभ्याच्चिन्त्यमिति निरस्तम् ।

इदमिहावधेयम् । विभागानुकूलक्रियानुकूलव्यापारो दुहेः, संयोगानुकूलक्रियानुकूलव्यापारश्च नयतेरर्थः । विभागे गामित्यस्य, क्रियायां पय इत्यस्यान्वयः । गोवृत्तिविभागानुकूला या पयोवृत्तिः क्रिया तदनुकूलव्यापारस्य स्तननिष्पीडनादेः, ग्रामवृत्तिसंयोगानुकूला याऽजावृत्तिः क्रिया तदनुकूलव्यापारस्य च बोधः । साक्षाद्धात्वर्थतावच्छेदकयथोक्तक्रियाशालिनोरजापयसोः कर्मत्वम् । धात्वर्थतावच्छेदकतावच्छेदकविभागसंयोगरूपफलान्वितयोस्तु गोग्रामयोस्तदभावादनेन कर्मसंज्ञाविधानम् । अत एव द्व्यर्थः पचिरिति भाष्येण विक्लित्तिरूपफलान्वयित्वेन तण्डुलानां, उत्पत्तिरूपफलान्वयित्वेन चौदनस्येति द्विकर्मकत्वमुपपादितम् । अत एव पचेरपि चकारेण सङ्ग्रहस्तत्संमतः । एतेन पचेर्द्विकर्मकत्वे तद्भाष्यविरोधशङ्का निरस्ता । यदा तु विभागावधित्वं गोर्विवक्ष्यते, तदा गोः पयो दोग्धीत्यपादानत्वम् । गवावधिकविभागानुकूलपयोवृत्तिक्रियेत्यादिबोधात् । पयःसम्बन्धित्वविवक्षायां तु षष्ठ्येव । गोसम्बन्धि यत्पयस्तन्निष्ठविभागानुलक्रियानुकूलव्यापारस्य बोधात् । स च विभागो गवावधिक एव तात्पर्यवशात्प्रतीयते ।

इदमप्यवधेयम् । लकृत्यक्तखलर्था द्विकर्मकेभ्यो मुख्ये गौणे वा कर्मणीति विवक्षाया व्यवस्थामाह भाष्यकारः ।

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।
अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥

द्विकर्मपदेनात्र नीवह्योर्हरतेश्चैवेति त्रयश्चकारसमुच्चितः कृषिश्च गृह्यते । दुहादिपदेन कारिकोपात्ताश्चकारसमुच्चितानां मध्ये ऽहेतुमण्ण्यन्ता जिदण्ड्यादयश्च गृह्यन्ते । ण्यन्तपदेन तु गत्या-

दिसूत्रोपात्ताश्चशब्दसमुच्चितास्तार्यादयश्च । तत्र ह्यणौ कर्ता णौ कर्म, तस्याभिधाने लादय इत्यर्थः । तत्रापि बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु गुणकर्मणीति मतान्तरं यद्भाष्यम्—

कथितेऽभिहिते ()त्वविधिस्त्व()मतिर्गुणकर्मणि लादिविधिः सपरे।
ध्रुवचेष्टितयुक्तिषु चाप्यगुणे तदनल्पमतेर्वचनं स्मरतेति ॥

अत्राद्यचरणः । प्रधानकर्मणि लादिभिरभिहिते गुणकर्मणि षष्ठीत्येकीयमतदूषणपरः । तद्धि प्रागुक्तम् ।

कथिते लादयश्चेत्स्युः षष्ठीं कुर्यात्तदा गुणे ।
कारकं चेद्विजानीयाद्या या मन्येत सा भवेत् ॥

दुह्यते गौः पयः, याच्यते पौरवात्कम्बल इति पूर्वार्धोदाहरणम् । कारकत्वविवक्षाया तु यथास्वं विभक्तयः । दुह्यते गोः पयः, याच्यते पौरवात्कम्बल इति । तथा च कथितेति प्रधानकर्मपरम् । तस्मिन्नभिहिते त्वस्या द्वितीयापेक्षया भिन्नायाः षष्ठ्या विधिरिति । त्वस्यान्यस्याचार्यदेशीयस्य मतिर्नत्वाचार्यस्य । अप्रधानकर्मणि द्वितीयादर्शनादित्यर्थः ।

न्याय्यं पक्षमाह । गुणकर्मणीति । सपरे इत्यत्र परशब्दो गत्यादिसूत्रपरः । तत्सहिते दुहादौ गुणकर्मणि लादयः । दोहादिप्रवृत्तेः पयआद्यर्थत्वाद्गवादीनामप्राधान्यम् । तत्र प्रत्ययोत्पत्तिस्तु दुग्धाद्यर्थिनः प्रथम गवादावेव प्रवृत्तेः । तदुक्तम्—

गुणकर्मणि लादिविधिः पूर्वं गुणकर्मणा भवति योगात् ।
मुख्यं कर्मप्रेप्सुर्यस्माद् द्रव्येऽवयतते प्राक् ॥
तस्माच्छुद्धस्य दुहेर्भवति गवा पूर्वमेव सम्बन्धः ॥
गोर्दुहिना पयसस्तु प्राक् तस्माल्लादयस्तस्मिन् ।

---

( ) उभयत्रापि त्वशब्दोऽन्यार्थकः । पूर्वत्र च सर्वनाम्नो वृत्तिमात्र इति पुंवद्भावः ।

इति । गौर्दुह्यते पयः, दोग्धव्या, दुग्धा, सुदोहा वेत्यादि । ण्यन्ते तु प्रयोजकव्यापारस्य शाब्दं प्राधान्यम् । ण्यर्थतया तस्य विशेष्यतापन्नत्वात् । प्रयोज्यव्यापारस्य स्वार्थम् । प्रयोजकव्यापारस्य तदर्थत्वात्, अतस्तत्कर्मणोरपि तथात्वम् । अत्र उभयत्रापि पर्यायेण प्रत्ययः । बोध्यते माणवकं धर्मः, माणवको धर्ममिति वा । धृत्रयुक्तयोऽकर्मकाः । पूर्वाचार्यसङ्केतात् । चेष्टितयुक्तयो गत्यर्थाः । एष्वगुणे प्रयोज्ये कर्मणि लादयः । देवदत्तो ग्रामं गम्यते, गमयितव्यः, गमितः, सुगम इत्यादि । अनल्पमतेराचार्यस्य । तद् द्वितीयतृतीयचरणोपन्यस्तम् । स्मरतेत्यागमाविच्छेदोक्तिः स्वकल्पितत्वनिरासार्था । न च बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु गुणकर्मण्येव लादिप्रसङ्गः, ण्यन्ते कर्तुश्चेत्यस्य परत्वात्सार इत्यनेन बाधादिति वाच्यम् । अपर आहेति प्रायेण मतान्तरप्रतिपत्त्या तत्रापि विकल्पसिद्धेः ।

तदयं संग्रहः ।

मुख्ये ह्नीवहकृषा तु गुणे दुहादेर्वाशब्दकर्मकसबुद्ध्यशनार्थकानाम् ।

ण्यन्तान्तरस्य किल कर्मणि तु प्रयोज्ये संप्रत्ययं दधति लक्तखलर्थकृत्याः ॥

अथ कृद्योगे कर्मणि षष्ठी द्विकर्मकेभ्यः कुत्र कर्मणि स्यादिति चेत् ? अत्र भाष्यम् । उभयथा गोणिकापुत्र इति । नेताऽश्वस्य स्रुघ्नं स्रुघ्नस्य वा । अत्र ह्येकेन शब्देन भिन्नकक्षयोर्गुणप्रधानयोः कर्मणोरभिधानानुपपत्त्या प्रधानकर्मणोऽभिधानं न्याय्यम् । षष्ठी तु पृथगेव गुणप्रधानाभ्यां द्वितीयावद्विधीयते इति अविरोधादुभाभ्यां प्राप्ता प्रधाने नित्या भाष्यप्रामाण्याद्गुणकर्मणि वैकल्पिकी ।

"कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् ॥
देशश्चाकर्मकाणाम्"इति वक्तव्यम् ।

गन्तव्योऽध्वा ऽध्वगन्तव्यः । निपातनाद्विशेषणस्यापि परनिपातः । न च गन्तव्यपदवैयर्थ्यम् । गन्तव्यतया लोके प्रसिद्धस्य नियतपरिमाणस्य क्रोशयोजनादेरेव ग्रहणार्थत्वात् । मासमास्ते, गोदोहमास्ते गोदोहपर्याप्तकालमभिव्याप्य तिष्ठतीत्यर्थः । क्रोशमास्ते । कुरून् स्वपिति । न च कालाध्वनोरिति द्वितीयासिद्धेः कर्मसंज्ञावैयर्थ्यम् । गोदोहादेः कालोपाधित्वेऽपि कालत्वेनाप्रसिद्धत्वात् । कालाध्वनोस्तु लादिविध्यर्थत्वात् । आस्यते मासः, आसितव्यः, आसितः, स्वासो वा । एवं शय्यते क्रोश इत्यादि । देशपदं ग्रामसमुदायविशेषात्मककुरुपञ्चालादिपरम् । भाष्योदाहरणसामर्थ्यात् । तेनाधिशीङ्स्थासामित्यादेर्न वैयर्थ्यमिति कैयटः । यदि तु सकर्मकधात्वन्तरार्थविशिष्ट आसनादौ आस्यादयो वर्तन्ते, तदापूर्वेणैव सिद्धम् । मासमासनेन व्याप्नोतीत्यर्थात् । यद्वक्ष्यति प्राकृतमेवेदं कर्म, यथा कटं करोतीति द्वितीये विस्तरः ।

# गतिबुद्धिप्रत्यवसानार्थशब्द-कर्माकर्मकाणामणि कर्ता स णौ ॥ ५२ ॥

गतिबुद्धिभक्षणार्थानां शब्दकर्मकाणामकर्मकाणां च धातूनामणौ कर्ता णौ कर्म स्यात् । यद्यपि प्रयोजकव्यापारेण प्रयोज्यव्यापारस्येप्सिततमत्वात्तत्प्रयुक्तकर्मसंज्ञा सिद्धैव, तथापि

नियमार्थमिदम् । णिजर्थेनाप्यमानस्य यदि भवति तर्हि गत्यर्था-दीनामेव नान्येषामिति । तेन पाचयति देवदत्तो यज्ञदत्तेने-त्यत्र गुणक्रियाकर्तरि प्रयोज्ये पूर्वप्रवृत्तकर्तृसंज्ञाया एवात्र-स्थानात्तृतीया ।

तदुक्तम्—

गुणक्रियायां स्वातन्त्र्यात्प्रेषणे कर्मतां गतः ।
नियमात्कर्मसंज्ञायाः स्वधर्मेणाभिधीयते ॥

स्वधर्मेण कर्तृप्रत्ययेन तृतीययेति यावत् । गमयति देवदत्तं ग्रामं इत्यादि । देवदत्तो ग्रामं गच्छतीति अण्यन्तावस्थायां देवद-त्तस्य कर्तृत्वम् । नीवह्योः प्रतिषेधः । प्रापणार्थतया विशेषणत्वेन गतिप्रतीतिरिति संज्ञाप्रसक्तिः । नाययति वाहयति वा भारं देवदत्तेन । वहेरनियन्तृकर्तृकस्यैव प्रतिषेधः । वहन्ति वाहाः । वाहयति वाहान् रथिनं सूतः । नियन्तृपदं पशु-प्रेरकमात्रपरम् । तेन वाहयति बलीवर्दान् सस्यम् । कालं यापयतीत्यादावप्यनेन कर्मत्वम् । या प्रापणे इत्यत्र गतेरेव प्रापणपदार्थत्वात् । बुध्यर्थेति ज्ञानसामान्यवाचिनामेव ग्रह-णम् । ननु विशेषार्थाना स्मरत्यादीनाम्, श्रुदृशोरुपसंख्यानस्य वक्ष्यमाणत्वात् । बोधयति माणवकं धर्मम् । भोजयति, आशयति वा माणवकमोदनम् । आदयति, खादयति वान्नं बटुना ।

भक्षेरहिंसार्थस्य प्रतिषेधः । नच चुरादिण्यन्तत्वादणौ कर्तेत्यस्याप्रसिद्धिः । हेतुमण्णिजन्ते विधानादणावित्यत्रापि संनिधानात्तस्यैव प्रतिषेधात् । हेतुमण्णिजन्तत्वविरहदशायामित्य-र्थादत्रापि प्रसक्तेः । भक्षयत्यन्नं बटुना । अहिंसेति किम् । भ-क्षयन्ति बलीवर्दाः सस्यम् । भक्षयति बलीवर्दान् सस्यम् क्षे-त्रस्थानां यवानां चैतन्याभ्युपगमात् । यवभक्षणे तत्स्वामिनो

वा हिंसा । हिंसाङ्गे भक्षणे भक्षयतेर्वृत्तिस्वीकारात् । शब्दः कर्मकारकं येषां ते शब्दकर्मकाः । नतु कर्मपदं क्रियापरम् । प्रत्यवसानशब्दार्थेतिपाठादेव तादृशार्थलाभे कर्मशब्दस्यार्थात्पृथगुपादानसामर्थ्यात् । अध्यापयति पाठयति वा पुत्रं देवदत्तः ।

दृशेश्चोपसंख्यानम् । दर्शयति हरिं भक्तान् । चाक्षुषपरत्वाद्बुध्यर्थत्वेन सिद्धावपि तत्र ज्ञानसामान्यवाचिनामेव ग्रहणम्, नतु विशेषवाचिनामिति ज्ञापनार्थमुपसंख्यानम् । श्रावयति श्लोकं देवदत्तमिति तु शब्दक्रियाणामित्यर्थे शृणोतेरप्युपसंख्यानात् । अन्यथा तु शब्दकर्मकत्वात्सिद्धम् । आद्ये ह्वाययति क्रन्दयति वा देवदत्तेनेत्यत्र प्रतिषेधो वाच्यः । पक्षद्वयेऽपि शब्दायतेः प्रतिषेधो वाच्यः । अकर्मकत्वादपि प्रसक्तिसत्त्वात् । शब्दस्य कर्मणो धात्वर्थेऽन्तर्भावात् । शब्दाययति देवदत्तेन । अकर्मकपदं अविद्यमानकालाद्यन्यकर्मकपरम् । तेन मासमासयति चैत्रमित्यादि सिद्धम् । देवदत्तेन पाचयतीत्यादौ च न कर्मत्वम् ।

## हृक्रोरन्यतरस्याम् ॥५३॥

हारयति कारयति वा कटं भृत्यं भृत्येन वा । नवेति विभाषेति सूत्रे उभयत्र विभाषेयमिति वार्तिकम् । तथाहि—अभ्यवहारयति माणवकमोदनं, माणवकेन वेत्यत्र प्रत्यवसानार्थत्वात्प्राप्ते, विकुर्वते छात्राः, निकारयति छात्रान् छात्रैर्वेत्यत्र त्वप्राप्ते इदमारभ्यते ।

अभिवादिदृशोरात्मनेपदे वेति वक्तव्यम् ।

अभिवादयतेरप्राप्ते दृशेस्तु बुद्ध्यर्थत्वादुपसंख्यानाद्वा प्राप्ते

विभाषेयम् । अभिवदति गुरुं देवदत्तः । अभिवादयते गुरुं देवदत्तं देवदत्तेन वा । दर्शयते राजानं भृत्यान् भृत्यैर्वा । परस्मैपदे तु कर्मसञ्ज्ञाविरहपक्षे णेरणाविस्यात्मनेपदम् । तत्पक्षे तु णिचश्चेति ।

# स्वतन्त्रः कर्ता ॥५४॥

क्रियाया स्वातन्त्र्येण विवक्षितोऽर्थः कर्तृसंज्ञः स्यात् । स्वातन्त्र्य च धातूपात्तव्यापाराश्रयत्वम् । तदुक्तं हरिणा–

धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते ।

धातूपात्तफलाश्रये कर्मण्यतिव्याप्तिवारणाय व्यापारेति । पाचयति चैत्रो मैत्रेणेत्यादौ पाकस्य णिजर्थस्य च धातूपात्त-व्यापारत्वात्तयोरुभयोः कर्तृत्वम् । चैत्रवृत्तिकर्तृत्वस्यैव तिङुपात्त-त्वात् तत्रैव संख्यान्वय इति तु विशेषः । चैत्रो मैत्रं गमयतीत्यत्र मैत्रस्य कर्तृत्वेऽपि न तृतीया । कर्मसञ्ज्ञाविरोधात् । स्थाली पचती-त्यादौ स्थालीनिष्ठव्यापारस्यैव धातूपात्तत्वात्कर्तृत्वम् । तेन चैत्रो न पचतीत्यादौ धातूपात्तव्यापाराभावाश्रये चैत्रादौ नाव्याप्तिः । तद्व्यापारस्याभावप्रतियोगित्वेऽपि धात्वर्थत्वानपायात् । चैत्रवृ-त्तित्वेन भासमानत्वस्य लक्षणानन्तर्भावात् ।

यत्तु घटः पटो नेत्यादावन्योन्याभावप्रतियोगिनि घटादौ धात्वर्थाश्रयत्वाभावादव्याप्तिः । नच तत्राध्याहृतभवतिपदस्यो-भयतादात्म्यभवनलक्षकतया तादृशभवनमभावप्रतियोगीति शाब्द-ऽर्थादन्योन्याभावबोधोपपत्तेस्तदाश्रयत्वेन भवनस्य चोभयवृत्तित्वा-दुभयोः कर्तृत्वोपपत्तिरिति वाच्यम् । द्वयोरपि तिङुपात्तसंख्या-न्वापत्त्या घटो न पटाविति प्रयोगानापत्तेः ।

एतेन घटो न पट इत्यत्र घटपदं घटप्रतियोगिकान्योन्याभावल-क्षकं, नञ्पदं तात्पर्यग्राहकं अतश्चोभयोरपि शुक्लो घटः, अघटः पट इतिवत् पाक्षिकाभेदसम्बन्धमादाय विशेष्यविशेषणभावेन वाऽध्याहृतक्रियायामेवान्वय इत्यपास्तम्। घटो नश्यतीत्यादौ कथ-मपि कर्तृत्वानुपपत्तेश्चेति।

तदसत्। अन्योन्याभावप्रतियोगिनः कर्तृत्वविरहात्। साधुत्वप्रयोजकप्रथमायाः प्रथमातिक्रमे कारणाभाव एव प्र-योजक इत्यस्य स्वयमप्यङ्गीकारात्। यदपि यद्धात्वर्थावच्छि-न्नलिङ्गानन्वयिपदोपस्थाप्यार्थाश्रयत्वं यस्य तस्य तत्कर्तृत्वं, प-च्यते चैत्रेण, पचति चैत्र इत्यादौ चैत्रादेर्धात्वर्थावच्छिन्नकृत्या-श्रयत्वात् कर्मणि लकारेणापि कृतेरुक्तेः। घटो भवतीत्यादौ चाख्यातेनाश्रयत्वस्य, नश्यतीत्यादौ च प्रतियोगित्वस्य लक्षणात्। अवच्छिन्नत्वं च स्वरूपविशेषो न तु जनकत्वाद्येव। तेन प्रतियोगि-त्वादेर्नाशाद्यजनकत्वेऽपि न क्षतिः। चैत्रः पाचकः, पक्तेत्यादौ कृत्प्रत्ययेन पाकानुकूलकृतेर्लिङ्गानन्वयिन्या उक्तत्वात्। चैत्रस्य पाक इत्यादिघञन्ते घञाद्यर्थस्य लिङ्गान्वयेऽपि धातुना लक्ष्यस्य पाकावच्छिन्नव्यापारस्य लिङ्गानन्वयान्नाव्याप्तिः। यद्वा घञादिना कृतेर्लक्षणया शक्त्या च पाकस्योक्तिः। कृतौ च चैत्रस्यान्व-यात्कर्तृत्वम्। शेषे षष्ठीत्वाद्वा कर्तृत्वाभावेऽपि न क्षतिरित्यादि।

तदप्यसत्। कृदुक्तकृतेर्लिङ्गानन्वयित्वे प्रमाणाभावात्। चैत्रः पक्ता, मित्रा पक्त्रीत्यादिदर्शनात्। नच तल्लिङ्गमाश्रयवृत्त्येव, नतु कृतिवृत्ति कृत्यादिपदे एव कृतेः स्त्रीत्वादिप्रत्ययादिति वाच्यम्। तथापि कृतेः पृथगुपघञर्थन्वे कृतेर्न लिङ्गान्वय इति दुर्वचत्वात्। पाकानुकूलकृतिसाध्यः पाक इत्यस्य च सिद्धभावापन्नभावो घ-ञाद्यर्थ इति सिद्धान्तविरुद्धत्वात्। शेषषष्ठ्याश्च चैत्रपाक इ-

त्यादौ कृदुत्तरपदप्रकृतिस्वरानुपपत्त्यैव दुष्टत्वात् इति द्वितीये प्रपञ्चयिष्यामः ।

यदपि घटो न पटावित्यत्राध्याहृतभवत्यादेः प्रतियोगित्वाश्रयत्वोभयलक्षकत्वम् । घटपटसम्बन्धिनी यथाक्रमं अन्योन्याभावीये विद्यमानत्वसम्बन्धिनी प्रतियोगित्वाश्रयत्वे इति धीः । अनुयोगिवृत्तिसंख्यावचनमेवाख्याते भवति, नतु प्रतियोगिवृत्तिसंख्यावचनमपीति नियमोऽप्यनुभवानुसारात्कल्प्यः । यद्वा घटो न भवति पटौ न भवत इति क्रियाद्वयाध्याहारः । नञ्पदं द्योतकम् । एकघटवृत्तिभवनाश्रयत्वं पटद्वयवृत्तिभवनाश्रयत्वप्रतियोगिकान्योन्याभाववदिति बोधः । द्वयोराख्यातयोः पश्य मृगो धावतीतिवत्स्वप्रतियोगिकान्योन्याभाववत्त्वसंसर्गेणान्वयः । घटपटयोर्भेदानुभवश्च मानस इति ।

तदप्यसत् । घटो न घट इत्यस्याप्यापत्तेः । घटत्वावच्छिन्नत्वमेव प्रतियोगित्वे घटस्य सम्बन्ध इति चेत् न । घटस्य पटान्यवृत्त्यन्योन्याभावप्रतियोगित्वं, पटस्य घटत्वान्यधर्मावच्छिन्नप्रतियोगिताकान्योन्याभावाश्रयत्वमादायापि उक्तधीपर्यवसानसम्भवात् । यस्याश्रयत्वं तद्वृत्तिरेवान्योन्याभावो बुध्यते इत्यादिनियमकल्पनेऽपि शाब्देन घटः पटो न वेति संशयानिवृत्त्यादिकं न स्यात् । एकवाक्यत्वानुभवविरोधश्च ।

एतेन यद्वेत्यपास्तम् । घटपटयोर्भेदानुभवस्य शाब्दत्वाच्चेति तिष्ठतु तावत् ।

तार्किकप्राञ्चस्तु इतरकारकाप्रयोज्यत्वे सति कारकान्तरप्रयोजकत्वं कर्तृत्वम् । सत्यन्तं कुठारादिवारणाय । पुरुषादिजन्यसंयोगादिव्यापारविशिष्टत्वेन तत्प्रयोज्यत्वादित्याहुः ।

तच्चिन्त्यम् । ईश्वरप्रयोज्यानां जीवानां कर्तृत्वानापत्तेः ।

दण्डजन्यसंयोगादिविशिष्टत्वेन दण्डादिप्रयोज्यत्वे कुलालादावव्याप्तेश्च ।

नव्यास्तु तत्क्रियानुकूलकृतिमत्त्वं तत्क्रियाकर्तृत्वम् । काष्ठे पाकानुकूलव्यापारवत्त्वप्रतिसंधानेऽपि कर्तृपदाप्रयोगात् । कृताकृतविभागेनेत्याचार्योक्तरीत्या यत्नशक्तिमता तृजन्तेन कृधातुना व्युत्पन्नकर्तृपदस्य यत्नाश्रयबोधकत्वाच्च । अचेतने तत्प्रयोगस्य गौणत्वात् । गुरुतरभारोत्तोलनक्रियाविषयकयत्नसत्त्वेऽपि तदनिष्पत्तौ तत्क्रियाकर्तृत्वव्यवहारविरहात् विषयकत्वं विहायानुकूलत्वमुपात्तम् । यदि त्वन्यविषयां तदनुकूलां कृतिमादायाऽपि न तत्कर्तृत्वम्, अत एव मत्तो भूतं नतु मया कृतमिति तत्र व्यवहार इति नान्तरीयककृतिसाध्यपिष्टमध्यस्थशर्करादिभोजने चैत्रस्य न कर्तृत्वम्, तदा विषयकत्वमपि निवेश्यम् । तच्च साध्यत्वेन । तेन यागादिकृतेरुद्देश्यत्वाख्यविषयतया स्वर्गादौ सत्वेऽपि न यागादिकर्तुः स्वर्गादिकर्तृत्वम् । ईश्वरः पचतीतीष्टमेव । अन्यथा तु कार्यत्वानवच्छिन्नजन्यतानिरूपितमसाधारणमनुकूलत्वं निवेश्यमित्याहुः ।

## तत्प्रयोजको हेतुश्च ॥५५॥

तस्य कर्तुः प्रयोजको हेतुसंज्ञः, चात्कर्तृसंज्ञश्च । कुर्वन्तं प्रेरयति कारयति हरिः । हेतुसंज्ञया तद्व्यापारे हेतुमति चेति णिच् । कर्तृत्वात् कर्तरि लकारः । न च प्रयोज्यस्य स्वातन्त्र्याभावात्कथं कर्तृत्वमिति वाच्यम् । प्रयोजकसन्निधानेऽपि स्वव्यापारे स्वातन्त्र्यानपायात् । अत एव कुर्वत्यपि प्रयोज्ये प्रयोजकः कारयतीति व्यपदेश इति भाष्ये स्पष्टम् ।

इति श्रीसिद्धान्तसुधानिधौ प्रथमस्य चतुर्थे तृतीयमाह्निकम् ।

# प्राग्रीश्वरान्निपाताः ॥ ५६ ॥

प्रागिति तन्त्रावृत्त्यन्यतरेण द्विरन्वेति । अधिरीश्वरे इत्यत्र रीश्वरपदात्प्राक् प्राङ् निपाता इत्यधिकारः । तस्य ह्यवधित्वे पूर्वं निपातसंज्ञाः सन्तः पश्चाद् गत्युपसर्गसंज्ञाः, इति सञ्ज्ञासमावेशसिद्धिः । अन्यथा पर्यायः स्यात् । तन्त्रादौ ज्ञापकं तु प्राग्ग्रहणमेव । पञ्चम्यैव दिक्शब्दाक्षेपसम्भवात् । नच परशब्दाक्षेपापत्तिः । चादयोऽसत्त्वे, प्रादय इत्येतयोर्विधेयालाभेनानन्वयापत्तेः । रेफविशिष्टग्रहणं तु व्याप्तिन्यायेन ईश्वरे तोसुन्कसुनाविश्यत्रत्यस्यावधित्ववारणार्थम् । नच कृन्मेजन्त इति ज्ञापकाद्व्याप्तिन्यायबाधः । तेन से-क्सेन्प्रभृतीनां णमुल्तुमुनोश्च निपातत्वादेवाव्ययसंज्ञासिद्धौ पुनस्तद्विधानं व्यर्थं स्यादिति वाच्यम् । कृत्यार्थे तवैकेनित्यादेरेजन्तस्य खमुञादेश्च मान्तस्य तत्संज्ञार्थत्वेन तत्सार्थक्योपपत्तेः । तस्य ईश्वरे तोसुन्कसुनाविश्युत्तरं पठ्यमानत्वात् । अथाव्ययीभावस्याव्ययसंज्ञाविधानं व्याप्तिन्यायबाधकं व्याप्त्याश्रयणेऽव्ययीभावस्यापि निपातत्वादव्ययसंज्ञासिद्धेः, इति चेन्न । समासाना मध्येऽव्ययीभाव एवाव्ययसंज्ञ इति नियमार्थत्वेनोपपत्तेः ।

ननु प्रत्यासत्तिवशादधिरीश्वर इत्यत्रत्य एवेश्वरशब्दो ग्रहीष्यते अत एव कपिञ्जलानालभेतेत्यत्र प्रथमोपस्थितया त्रय एवालभ्यन्ते । आ वनान्तादा उदकान्तात्प्रियं पन्थानमनुव्रजेदित्यत्रापि प्रथमस्यैव वनान्तादेर्ग्रहणात्, इति चेन्न । स्नेहादिना द्वितीयादेरपि वनान्तादेर्ग्रहणात् । कपिञ्जलस्थले तु चतुरादौ न हिंस्यात्सर्वा भूतानि इति निषेधस्य बाधकत्वात् । अत्र च द्वितीयेश्वरग्रहणे बाधकाभावात् । नचैवं न लोकाव्ययेति सू-

त्रे लादीनामव्ययत्वादेवोपसन्दाने पृथगुपादानवैयर्थ्यम् । तावता तेषामव्ययसंज्ञाविरह एव ज्ञाप्येत । निपातसंज्ञा त्वस्त्येवेति सम्भवात् । तस्माद्रेफविशिष्ट ईश्वरशब्दो निर्देश्य इति सिद्धम् ।

वस्तुतो व्याप्तिपक्षस्य प्रत्यासत्तिर्लघीयसी कापिञ्जलाधिकरणे लाघवस्यैव न्यायबीजत्वात् । अन्यथा ब्राह्मणान्भोजयेत्यादौ त्रित्वानापत्तेः । अत एव शंय्वन्ता प्रायणीया सन्तिष्ठन्ते, पत्नीः संयाजयन्ति, इडान्तातिथ्या सन्तिष्ठते, नानुयाजान् यजतीत्यत्र पत्नीसंयाजपूर्वोत्तरवर्त्तिशंयुद्वयस्यानुयाजपूर्वोत्तरवर्त्तिन इडाद्वयस्य च मध्ये पूर्वयोरेव शंय्विडयोरवधित्वं नतूत्तरयोरिति सिद्धान्तः । तस्मादीश्वरपदमात्रोपादानेऽपि न दोषः ।

# चादयोऽसत्त्वे ॥ ५७ ॥

चादयो निपातसंज्ञाः नतु द्रव्ये सत्त्वशब्दस्य द्रव्यपरत्वात् । तदुक्तम्—

वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ॥

तदिदमादिशब्दैर्यस्य देवदत्तादेः परामर्शस्तदत्र द्रव्यम् । क्रियानिपाताद्यर्थस्य तदादिभिरनिर्देशात् । घटश्चेत्यस्मादिव घटः स इत्यस्मात्तादृशार्थानवबोधात् । लिङ्गसंख्यान्वयि द्रव्यमिति वा । च वा इत्यादि । निपातत्वादव्ययत्वं ततः सुपो लुक् । असत्त्वे किम् पशुना यजेत, पशुशब्दश्चादिः । चः समुच्चयमित्यादिकमपि प्रत्युदाहार्यम् । प्रकृतिवदनुकरणमित्यतिदेशस्यानित्यत्वात् । प्रसज्यप्रतिषेधः किम्, वातीति वाः, विभातीति विभः । क्रियाविशिष्टद्रव्यवाचकतया क्रियायाश्चासत्त्वरूपतया निपातसंज्ञा मा भूत् । पर्युदासे तु क्रियाकारक-

समुदायस्य सत्वभेदाश्रयत्वादतिप्रसङ्गः स्यात् । अन्यथा प्रयोजनं सर्वनामाऽव्ययसंज्ञायामित्युक्तरीत्या स्वराद्यन्तस्य परमोच्चैरित्यादेरिव तदन्तविधिना विप्रशब्दस्याप्यव्ययसंज्ञा स्यात् अव्ययसंज्ञाया निपातस्य विशेष्यतया तदन्तविधेः सुलभत्वात् । ततश्च सुपो लुक् स्यात् । विप्रकम्बल इत्यत्र च निपातान्तस्य पूर्वपदप्रकृतिस्वरः स्यात् ।

अथ चादयः । च वा ह अह एव एवं नूनं शश्वत् युगपत् भूयस् कूपत् सूपत् इमौ प्रश्नवितर्कप्रशंसासु । कुविदिति भूर्यर्थे योगप्रशंसास्तिभावेषु । नेदिति शङ्कायाम् । नेज्जिह्मायन्तो नरकं पताम । निपातसमुदायश्चायम् । नेदेवमायुनजन्नत्र देवा इति पदद्वयपाठात् । निपातैर्यद्यदीति निघातनिषेधः । प्रतिषेधविचारसमुच्चयेष्वयमिति शाकटायनः । चोदित्यापत्तौ । चण् तदर्थे । समुच्चयादौ त्वननुबन्धः क्वचित् । यत्र नह निश्चितनिषेधे । हन्त हर्षेऽनुकम्पायां च "हन्त हन्त महतामुदारता"। "हन्त हताः पथिकगेहिन्यः" । माकिर्माकीम् एतौ निषेधे । माकिर्नेशन् । माकीं रिषत् । न किं सम्भावितनिषेधे । रेफान्तोऽपि । सत्रमिद्धा न किरन्यस्त्वावान् । माङ् निषेधे । माङित्यत्र विशेषणार्थो ङकारः । मा भवतु मा भविष्यतीत्यादौ निरनुबन्धः । नञ् तथा । ञकारो नलोपो नञ इति विशेषणार्थः । नस्येत्युक्ते पामनपुत्र इत्यादावतिप्रसङ्गात् । नच स्त्रैणपुत्रेऽतिप्रसङ्गवारणाय अलुगुत्तरपदे इति उत्तरपदाक्षिप्तेन पूर्वपदेन नञो विशेषणस्यावश्यकत्वात्तत एव पामनपुत्रेऽपि नातिप्रसङ्ग इति वाच्यम् । अनन्यार्थञित्वस्य निपातस्यैव ग्रहणं न तु वृद्ध्यर्थत्वेनोपक्षीणञकारस्य तद्धितस्यापीति सम्भवात्, इति प्राञ्चः । नैकनीवृतेत्यादौ नकारेण सह सह सुपेति समासेऽतिप्रसङ्गवार-

णाय नित्यमावश्यकमिति नव्याः। यावत् तावत् त्वै न्वै एतौ वितर्के। श्रौषट् वौषट् स्वाहा वषट् स्वधा ॐ तथा हिरुक् खलु किल अथ सुष्टु आदहेति हिंसोपक्रमकुत्सनेषु। "आदह स्वधामनु" इत्यत्र आदिति पृथक्पदपाठः।

उपसर्गविभक्तिस्वरप्रतिरूपकाश्च।
अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते॥

उपसर्गत्वाभावादच उपसर्गादिति तत्त्वाभावः। अहं, शुभं, अहंयुः शुभंयुः, चिरेण, अन्तरेण, चिराय, चिरात्, अकस्मात् चिरस्य मम। ममत्वं गतराज्यस्य। वेलायां मात्रायां। वामिति युवामित्यर्थे। गेये केन विनीतौ वाम्। ते मे शब्दौ त्वया मयेत्यर्थे इति वामनः। तिङन्तप्रतिरूपकाणि यथा आह आम इत्यादि। स्वरास्तु सम्बोधनभर्त्सनानुकम्पापादपूरणप्रतिषेधेषु यथासम्भवं बोध्याः। अ अपेहि। आ एवं मन्यसे, इ इन्द्र पश्य, ई ईशः, उ उत्तिष्ठ, ऊ ऊषरे बीजं वपति, ए इतो भव, ओ श्रावय, ऋ ॠ ऌ ऐ औ एते मन्त्रस्तोमाः। पशु सम्यगर्थे। लोधं नयन्ति पशु मन्यमानाः। शुकं शैघ्र्ये। यथाकथाचेत्यनादरे। पाट्, प्याट्, अङ्ग, है, हे, भो, अये, इत्याद्याः सम्बोधने। द्येति हिंसाप्रातिलोम्यपादपूरणेषु। त्रिषु नानार्थे, एकपदे अकस्मादर्थे।

अयमेकपदे तया वियोगः प्रियया चोपनतःसुदुःसहो मे॥
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः॥ १॥

पुत् कुत्सायाम्। कुत्सितमवयवं छादयति पुच्छं, डप्रत्ययः। छान्तमिति शाकटायनः, कुत्सितं कसति गच्छति-पुल्कसः। अस्मि इत्यहमर्थे।

"अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः" ।

आत इति इतोऽपीत्यर्थे ।

"आतस्त्वां प्रति कोपनस्य तरलः शापोदकं दक्षिणः" ॥

प्रागेवेति सुतरामित्यर्थे इति वर्धमानादयः । आकृतिगणोऽयम् ।

## प्रादयः ॥ ५८ ॥

निपातसंज्ञाः नतु द्रव्ये । प्र परा अप सम् अनु अव निस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप । निसस्तपतावनासेवने इति निर्देशात्, निः कृतं दुः कृतमित्यत्र इदुदुपधस्याप्रत्ययस्य सकारस्येति भाष्याच्च निस् दुस् इति सान्तौ इति वृत्तिः । निरः कुषः, सुदुरोऽधिकरणे इति निर्देशाद्रेफान्तावपीति हरदत्तः । अद्रव्ये किम् । विः पक्षी । पराः सेनाः । योगविभागस्तु निपातसंज्ञासमावेशार्थः । प्रादयः उपसर्गाः क्रियायोगे इति योगैक्ये क्रियायोगाभावे निपातसंज्ञा नस्यात् । ततश्च प्रगत आचार्यः प्राचार्य इत्यत्राव्ययपूर्वपदप्रकृतिस्वरो न स्यात् ।

## ॥ उपसर्गाः क्रियायोगे ॥ ५९ ॥

प्रादय इत्यनुवृत्तमुद्देश्यसमर्पकम् ।

## ॥ गतिश्च ॥ ६० ॥

प्रादयो गतिसंज्ञाः क्रियायोगे । पुंल्लिङ्गोऽयं संज्ञाशब्दः । गतिरनन्तर इति ज्ञापकात् । अत एवायमव्युत्पन्नः । यद्वा क्तिजन्तोऽयम् । निर्देशसामर्थ्यान्न क्तिचि दीर्घश्चास्येत्यस्य न प्रवृ-

त्तिः । चकार उपसर्गसञ्ज्ञासमुच्चयार्थः । तेन प्रणेयमित्यादौ उपसर्गत्वाण्णत्वम् । गतिकारकेति कृदुत्तरप्रकृतिस्वरश्च । योगग्रहणं यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसञ्ज्ञा इत्येतदर्थम् । तेन प्रवृद्धं कृतं प्रकृतमित्यत्र गतिरनन्तर इति स्वरो न । कृतशब्दं प्रत्यगतित्वात् । तदर्थविशेषकत्वे तु भवत्येव ।

उपसर्गसंज्ञायां मरुच्छब्दस्योपसंख्यानम् मरुत्तः । अजन्तत्वाभावेऽप्यच उपसर्गादिति तत्वम् । नच किरङ्क प्रयोजनं स्यादिति वाच्यम् । अनभिधानादेव तदनुत्पत्तेः । न च मरुन्नयतीत्यत्र णत्वापत्तिः । तत्र प्रसेनोपसर्गसंज्ञेत्यर्थात् । निपातसंज्ञा तु नास्त्यस्य । मरुत्तशब्दस्याद्युदात्तत्वापत्तेः। सिद्धान्ते तु तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरे कृते मध्योदात्तत्वम् । मरुच्छब्दस्यान्तोदात्तत्वात् । नचोपसर्गाश्चाभिवर्जमित्याद्युदात्तत्वनादवस्थ्यम् । निपातत्वादेव तत्सिद्धौ अभेः प्रतिषेधमात्रं तत्सूत्रार्थ इति हरदत्तादिभिरुक्तत्वात् । अत एव नाभेरित्येव वाच्यम् । यद्वा एवमादिष्वभिः पठनीयः ।

तत्पर्वमरुद्भ्यामिति प्रकारान्तरेणापि मरुत्तशब्दो व्युत्पादयिष्यते । तत्र पित्त्वमेव, नित्त्वपाठस्तु प्रामादिकः । अत्रत्यकैयटादिविरोधात् । नचैवं पर्वताश्चिन्महि वृद्धौ विभायेत्यत्र पर्वतशब्दस्याद्युदात्तत्वानुपपत्तिः । नाव्ययपयस्येति पर्वशब्दस्याद्युदात्तत्वात् । श्रच्छब्दस्याङ्गविधावुपसंख्यानम् । श्रद्धा । भिदादौ श्रद्धाशब्दो न पठनीयः । गतिसञ्ज्ञायां कारिकाशब्दस्योपसंख्यानम् । कारिकाकृत्य । कुगतीति समासः । समासेऽनञ्पूर्वेति क्त्वो ल्यबादेशः । कारिका क्रिया मर्यादा स्थितिरित्यर्थः । यत्न इत्यन्ये । श्लोकवाचिनो न ग्रहणम् । क्रियायोग इति विशेषणात् ।

पुनश्चनसौ छन्दसि गतिसञ्ज्ञाविति वक्तव्यम् । पुनराधे-

-यं गतित्वात्समासः । कृदुत्तरपदप्रकृतिस्वरेण यतोऽनाव इति धेशब्द उदात्तः । पुनरुत्स्यूतं वासः । गतित्वात्समासः । स्वरस्तु मवृद्धादेराकृतिगणत्वादन्तोदात्तत्वम् । काठके तथैव पाठादिति कैयटः । शेषनिघातेन पुनः शब्दोऽनुदात्तः । वृत्तिकारस्तु गतिर्गताविति निघात इत्याह । उशिगूनश्चनोहितः । निपातत्वादाद्युदात्तस्य चनःशब्दस्य गतिरनन्तर इति प्रकृतिस्वरः ॥

# ऊर्यादिच्विडाचश्च ॥ ६१ ॥

गतिसंज्ञाः क्रियायोगे । कृभ्वस्तियोग एवैते प्रयुज्यन्ते । च्विडाचोस्तत्रैव विधानात् तत्साहचर्यात्, अन्यत्रानभिधानाच्च । तत्रापि प्रादुराविःशब्दयोस्त्रिभिर्योगः । अन्येषां तु कृञैवेति माधवादयः । संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणाभावेऽपि प्रत्ययमात्रस्य क्रियायोगाभावात्, च्वेः सर्वलोपित्वाच्च सामर्थ्यात्तदन्तग्रहणम् । ऊरीकृत्य । शुक्लीकृत्य । पटपटाकृत्य । अयमत्र विवेकः । श्रौषडादीनां स्वाहान्तानां चादिष्वपि पाठात् क्रियायोगं विनापि निपातत्वम् । आविःशब्दस्य साक्षात्प्रभृतिषु पाठात् कृञ्योगे विकल्पः । भ्वस्तियोगे तु प्रकृतसूत्रेण नित्यं तदिति । अथ कथं–

"वारुणीमदविशङ्कमथाविश्चक्षुषो ऽभवदसाविव रागः" ।

इति माघः । प्रमाद एवायमिति हरदत्तः ।

अन्ये तु ते प्राग्धातोरिति सूत्रस्य प्रयोगनियमार्थत्वपक्षे दोषसत्त्वेऽपि संज्ञानियमार्थत्वपक्षे नायं दोषः । प्रयोगः प्राक् पश्चाद्वा । प्राक् प्रयोगे तु गत्युपसर्गसंज्ञेति तदर्थात् । अत एव सुकटंकराणि वीरणानीति भाष्यम् । स्वाढ्यंभवामिति भाष्यवृत्ती । स्वाढ्येन भूयत इति वृत्तिश्च सङ्गच्छते । इत्थं–

"पुरो रामस्य जुहवाचकार ज्वलने वपुः" ॥ इति भट्टिः ।

"तस्य स्थित्वा कथमपि पुरः" इति मेघदूतः ।

"तुरासाहं पुरोधाय" इत्यादि प्रयोगात्पुरोऽव्ययमित्यस्य कृञ्मात्रशङ्कानवतारादित्याहुः ।

एतेन "अभयद्युगपद्विलोलजिह्वायुगलीढोभयसृक्कभागमाविः" ॥ इत्यपि व्याख्यातम् ।

ऊरी उरी उररी एतेऽङ्गीकारविस्तारयोः । वेताली धूमी एतौ विस्तारे । शकला स्रंसकला ध्वंसकला भ्रंसकला एते चत्वारो हिंसार्थाः । शकलाकृत्येत्यादि । गुलुगुधा पीडायाम् । सजूः सहार्थे । फलफली । विक्ली आक्ली एते विकारे । आलोष्ठी केवाली सेवाली शेवाली वर्षाली मसमसा मस्मसा एते हिंसायाम् । सर्वं तं मस्मसाकुरु इति मन्त्रः । वषट् वौषट् स्वाहा स्वधा व्याख्याताः । पांपी करुणविलापे । पापीकृत्य करुणं विलप्येत्यर्थः । प्रादुः प्राकट्ये । श्रत् शीघ्रार्थे । श्रत्कृत्य । आविः प्राकट्ये । गणरत्ने त्वन्येऽपि सङ्गृहीताः । पांपाली संकला केवासी एते हिंसायाम् । वार्दाली पार्दाली आलम्बी एते प्राकाश्ये हिंसायां च । इत्यूर्यादयः ।

## अनुकरणं चानितिपरम् ॥ ६२ ॥

गतिसंज्ञं क्रियायोगे । खाट्कृत्य । अनितिपरं किम् । खाडिति कृत्वा निरष्ठीवत् । इतेः परमितिपरं, न तथाऽनितिपरमिति समासे इति खाट्कृत्येत्यत्र संज्ञा न स्यात् । तस्मादितिः परो यस्मात्तदितिपरम्, न तादृगिति समासः । ननु श्रौषट् वौषडिति कृत्वा निरष्ठीवदित्यत्र वौषटा व्यवधानात् श्रौषटोऽनितिपरत्वाद्ग-

गतित्वापत्तिः । अव्यवहितपरत्वस्यैव परशब्दमुख्यार्थत्वात् । अन्यथा खाट्कृत्येति निरष्ठीवादेरादौ गतित्वानुपपत्तिप्रसङ्गात् । मैवम् । अनुकरणत्वसामान्यस्य विवक्षितत्वात् तस्य च व्यक्तिभेदेऽप्यभिन्नत्वादव्यवधानसम्भवात् । गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्या इति प्रयोगनियमपक्षे इति खाट्कृत्येतिप्रयोगवारणार्थमनितिपरमित्युक्तम् । संज्ञानियमपक्षे तु इतिशब्दव्यवधाने गतिसंज्ञाप्रसक्तिविरहान्न कार्यम् ।

# आदरानादरयोः सदसती ॥६३॥

क्रमाद्गतिसंज्ञे स्तः । सत्कृत्य । प्राशस्त्यज्ञानं आदरः । एतयोः किम् । सत्कृत्वा असत्कृत्वा । शोभनमशोभनं च कृत्वेत्यर्थः । नन्वादरे सदित्येवास्तु । नचासत्कृत्येति कथं नञ्समासे सति शिष्टत्वात्कृदुत्तरप्रकृतिस्वरं बाधित्वाऽव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वापत्तेः । न च सदसादिति समासे तु सच्छब्दस्य विहितायाः संज्ञाया असच्छब्देऽनुपपत्तेरिति वाच्यम् । तदन्तविधिना तत्संभवात् । नच विशेष्यसन्निध्यभावात्तद्योगः । संज्ञायाः कार्यार्थतया कार्यप्रदेशेषु प्रकृतस्य गतिना विशेषणात् । प्रकृतं च समासविधौ सुबिति । गतिरनन्तर इत्यत्र पूर्वपदं । गतिर्गतावित्यत्र पदस्येति । अव्ययपदसंज्ञायां त्वस्य तदन्तविधिः ।

अत्र भाष्यम् । आदरानादरयोः सदित्येव वक्तव्यम् । सच्छब्दस्यानादरे वृत्त्यभावात्सामर्थ्यात्तदन्तविधिनाऽसच्छब्दस्य गतिसंज्ञा । यथा गोःपदप्रोविनेत्यत्रामेत्रिते गोःपदशब्दवृत्त्यभावादगोः पदार्थमसेवितग्रहणम् ।

## भूषणेऽलम् ॥ ६४ ॥

अलङ्कृत्य भूषणे किम् । अलङ्कृत्वौदनं गतः । पर्याप्तमित्यर्थः । अनुकरणमित्यादि योगत्रयं स्वभावात्कृञ्विषयमिति सम्प्रदायः ।

## अन्तरपरिग्रहे ॥ ६५ ॥

अन्तर्हत्य मध्ये हत्वेत्यर्थः । अपरिग्रहे किम् । अन्तर्हत्वा मूषिकां श्येनो गतः । हतं परिगृह्य गत इत्यर्थः । हतं त्यक्त्वा गमने उदाहरणम् । परिगृह्य गमने तु प्रत्युदाहरणम् ।

"अन्तः शब्दस्याङ्किविधिसमासणत्वेषूपसंख्यानम्"। समासो गतिसंज्ञाप्रयुक्तः । अन्ये उपसर्गसंज्ञाप्रयुक्ताः । गतिसंज्ञा च प्रकृतसूत्रेणैव सिद्धेति विभागः । अन्तर्धा आतश्चोपसर्गे इति अङ् । अन्तर्द्धिः उपसर्गे घोरिति किः । समास उक्तः । अन्तर्हण्यात् हन्तेरत्पूर्वस्येति णत्वम् । अन्तरदेशे इति नारभ्यम् । देशे क्षुभ्नादित्वाण्णत्वाभावः । अयनं चेत्यपि न कर्तव्यम् । कृत्यच इति सिद्धेः, इति कैयटः । देशे निषेधार्थं सूत्रद्वयमिति हरदत्तः । पक्षद्वयेऽपि अन्तर्णयाति, अन्तर्भत्राणीत्यादौ णत्वम् ।

## कणेमनसी श्रद्धाप्रतीघाते ॥ ६६ ॥

कणे इति सप्तमीप्रतिरूपको मनशब्दश्च इच्छातिशयार्थौ निपातौ । कणेहत्य पयः पिबति । उत्कटेच्छापूर्वकं तन्निवृत्तिपर्यन्तं पिबतीत्यर्थः । मनोहत्येत्यप्येवम् ।

कान्ताभिः सह तत्क्रियाविनिमयान्नक्तंचराः कोष्णता–

भाजि व्यक्तमसृजि जक्षति कणेहत्य व्रणेभ्यः क्षणात् ।

इति मदीयप्रयोगः । श्रद्धेति किम् । कणे हत्वा गतः । मनो हत्वा । सूक्ष्मतण्डुलावयवः कणः ।

# पुरो ऽव्ययम् ॥ ६७ ॥

पूर्वाधरावराणामिति व्युत्पादितोऽसिप्रत्ययान्तः पुरःशब्द उक्तसंज्ञः । पुरस्कृत्य । नमस्पुरसोर्गत्योरिति सत्वम् । अव्ययं किम् । पुरः कृत्वा । पुःशब्दस्यैव बहुवचनम् ।

# अस्तं च ॥ ६८ ॥

अव्ययमित्येव । अस्तंगत्य । अव्ययं किम् । अस्तं काण्डं क्षिप्तमित्यर्थः ।

# अच्छ गत्यर्थवदेषु ॥ ६९ ॥

अव्ययमित्येव । अच्छगत्य, अच्छोद्य । अभिगत्य, अभिमुखमुक्त्वा चेत्यर्थः । अव्ययं किम् । जलमच्छं गच्छति ।

# अदो ऽनुपदेशे ॥ ७० ॥

त्यदादिरदःशब्दो ऽनुपदेशे गतिसंज्ञः । अदः कृत्वाऽदः कृतम् । स्वयमेव पर्यालोचने इदम् । अनुपदेशे किम् । परप्रेरणे मा भूत् । अदः कृत्वादः कुरु ।

# तिरो ऽन्तर्धौ ॥ ७१ ॥

तिरोभूय । अन्तर्द्धौ किम् । तिरो भूत्वा स्थितः । पार्श्वतो गत्वेत्यर्थः ।

# विभाषा कृञि ॥ ७२ ॥

पूर्वमनुवर्ततेऽतः प्राप्तविभाषेयम् । तिरस्कृत्य तिरःकृत्य । तिरसोऽन्यतरस्यामिति वा सत्वम् । प्रत्युदाहरणे तु न सत्वम् । तद्विधौ गतिग्रहणानुवृत्तेः । तिरः कृत्वा काष्ठं गतः ।

"लावण्यप्रसरतिरस्कृताङ्गलेखाम्" ।

इत्यादौ सत्वम् । व्याप्तेरेवान्तर्द्धिपदार्थत्वात् तिरस्कृत इति परिभूतेऽन्तर्ध्युपचारादिति वामनः । तदनुरोधात्सत्वविधौ गतिग्रहणाननुवृत्तिरिति माधवः ॥

# उपाजेऽन्वाजे ॥ ७३ ॥

दुर्बलस्य बलाधानमनयोरर्थः । एतौ कृञि वा गतिसज्ञौ । उपाजेकृत्य, उपाजे कृत्वा अन्वाजेकृत्य अन्वाजे कृत्वा । उपष्टभ्येत्यर्थः ।

# साक्षात्प्रभृतीनि च ॥ ७४ ॥

कृञि वा गतिसज्ञानि । च्व्यर्थग्रहणं कर्तव्यम् अभूततद्भावविषयाणामेव यथा स्यात् । यदा तु साक्षाद्भूता रूपान्तरेण क्रियन्ते तदा माभूत् । च्व्यन्तेषु तु पूर्वविप्रतिषेधादूर्यादीति नित्यैव गतिसंज्ञा तेन लवणीकृत्येत्यत्र न मान्तत्वम् । विकल्पसन्नियोगेन गणे तन्निपातनात् । यद्वा लवणशब्दस्य लवणमिति मान्तादेशः । तथाच पूर्वविप्रतिषेधं विनाऽपि त्रैशब्द्यसिद्धिः । लवणंकृत्य, लवणं कृत्वा, लवणीकृत्येति । च्व्यन्ताच्व्यन्तयोः पाक्षिके मान्तादेशे तुल्यं रूपम् । विकल्पस्य परत्वेऽपि तन्निर्मुक्ते च्व्यन्तस्य नित्यसंज्ञाप्रवृत्तेः । साक्षात् मिथ्या चिन्तेति मनो-

व्यापारे । चिन्ताकृत्य । भद्रा इत्यालोचनप्रशंसामङ्गलेषु । रोच-नेति श्रद्धोत्पादप्रशंसयोः । अमेति रहःसाहित्ययोः । आस्था-अद्धा प्राजर्या वीजर्या जरणक्रियायाम् । प्राजरुहा वीजरुजेति-रुहिक्रियायाम् । लवण शीतं उष्ण उदकं आर्द्र एषानां संज्ञाप्र-न्नियोगेन मान्तत्वनिपातः । मान्तादेशो वा । अग्नौ वशे विकम्पने विकसने प्रहसने संतपने इति सप्तमीप्रतिरूपकाः । प्रादुस् न-मस् आविस् । प्रादुराविसोः ऊर्यादित्वात्प्राप्ते विभाषा । आ-कृतिगणोऽयम् ॥

# अनत्याधान उरसिमनसी ॥ ७५ ॥

एतौ निपातौ कृञि वा गतिसंज्ञौ । उरसिकृत्य उरसि कृ-त्वा । अभ्युपगम्येत्यर्थः । मनसिकृत्य मनसि कृत्वा निश्चित्ये-त्यर्थः । अत्याधानं संयोगः, तत्र न । उरसि कृत्वा पाणिं शेते ॥

# मध्ये पदे निवचने च ॥ ७६ ॥

कृञि वा गतिसंज्ञानि अनत्याधाने ।

"मध्येकृत्य घनं धिनोति जलधिः स्वैरम्बुभिर्मेदिनीम्" ॥

इति मुरारिः । मध्ये कृत्वा । पदेकृत्य पदे कृत्वा । एद-न्तौ निपातौ । निवचनं वचनाभावः । संज्ञाविरहपक्षेऽपि अस्यै-दन्तत्वं निपात्यते इति व्याख्यातारः । निवचनेकृत्य निवचने कृत्वा । वाचं नियम्येत्यर्थः । अनत्याधाने किम् । हस्तिनः पदे कृत्वा शेते ।

# नित्यं हस्ते पाणावुपयमने ॥ ७७ ॥

उपयमनं दारकर्मेति केचित् । स्वीकारमात्रमित्यन्ये । ह-

स्तेकृत्य । पाणौकृत्य । उपयमने किम् । हस्ते कृत्वा स्वर्णं गतो भृत्यः ।

## प्राध्वं बन्धने ॥ ७८ ॥

चादौ प्राध्वमिति मान्त आनुकूल्यार्थवृत्तिर्निपातः । अयं कृञि नित्यं गतिसंज्ञो बन्धनप्रयुक्तं चेदानुकूल्यम् । प्राध्वंकृत्य । बन्धनेनानुकूलं कृत्वेत्यर्थः । प्रार्थनादिना तत्करणे तु प्राध्वं कृत्वा ।

## जीविकोपनिषदावौपम्ये ॥ ७९ ॥

जीविकामिव कृत्वा जीविकाकृत्य । उपनिषदमिव कृत्वा उपनिषत्कृत्य । समासस्य नित्यत्वेऽपि सादृश्यपरत्वाभावे गतिसंज्ञाविरहाज्जीविकादेर्विग्रहे प्रवेशः । अत एव तत्र इवपदप्रयोगोऽपि । औपम्ये किम् । जीविकां कृत्वा गतः ।

## ते प्राग्धातोः ॥ ८० ॥

ते गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोज्याः । छन्दसि परेऽपि । व्यवहिताश्चेति वक्तव्यम् । हरिभ्यां याह्योक आ । आमन्द्रैरिन्द्र हरिभिर्याहि । इह संज्ञानियमपक्षोऽपि भाष्ये उक्तः । तच्छब्देन प्रादीनुपनिषत्पर्यन्तान् स्वरूपेण परामृश्य धातोः पूर्वं प्रयोज्यमानानामेषां पूर्वसूत्रैकवाक्यतया गतिसंज्ञाया अनेन विधानात् । अत्र च्छन्दसि परेऽपि, व्यवहिताश्चेति सूत्रद्वयं, अनितिपरग्रहणं च न कर्तव्यमिति लाघवम् । परव्यवहितानां गत्युपसर्गसंज्ञावारणेऽपि प्रयोगस्यानिवारितत्वात् । ननु संकीर्णप्रयोगदर्शनादेतत्सूत्रमेव नारभ्यम् । भाषायां प्रयोगस्य व्यवस्थितत्वात् । छन्दसि तु परव्यवहितयोरपि प्रयोगस्येष्टत्वात् ।

अत्र वार्तिकम् । "उपसर्जनसन्निपाते तु पूर्वपरव्यवस्थार्थम्" । वृषभं कूलमुद्रुजम् । ऋषभं कूलमुद्वहम् । अत्र द्वयोरप्युपपदत्वा-त्समासे उपसर्जनं पूर्वमिति पर्यायेण पूर्वनिपातः स्यात् । कू-लमुद्रुजम्, उत्कूलं रुजमिति भ्रमनिवारणाय सूत्रारम्भात् ।

नन्वेवं सुखेन कटाः क्रियन्ते इति कर्तृकर्मणोश्च भूकृञोरिति खल् । सुकटंकराणि वीरणानीत्यत्रास्मान्नियमात् कटंसुकराणीत्ये-व स्यात् । न च खलः खित्करणसामर्थ्यादनव्ययस्य प्राक्प्रयोगे निर्णीते परिशेषात्सोरेव पूर्वप्रयोगः कटशब्दस्य पूर्वप्रयोगे तस्य खि-त्परत्वाभावात् । सुशब्दे चानव्ययस्येति पर्युदासान्मुमभावात्खित्व-वैयर्थ्यादिति वाच्यम् । तत्सामर्थ्याद्व्यवहितेऽपि मुम्सम्भवात् । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणाच्च । ईषच्छब्दस्य गतित्वाभा-वेन ईषदाढ्यम्भव इत्यत्र मुमर्थतया खित्वस्यान्यथा सिद्धत्वाच्च ।

अत्राहुः । प्रयोगनियमस्यान्यत्र सावकाशत्वात्तद्बाधेऽपि न क्षतिः । न च खित्त्वसामर्थ्यादव्ययस्यापि मुम् । प्रतिषे-धस्य प्रसक्तत्वात् । धातोः किम् । प्राचिकीर्षदित्यत्र सनः प्रा-क् प्रयोगो मा भूत् ।

## कर्मप्रवचनीयाः ॥ ८१ ॥

रीश्वरात्प्रागयमधिकारः । महासंज्ञाकरणमन्वर्थत्वविज्ञाना-र्थम् । अर्थमनुगता अर्थेनानुगता वाऽन्वर्था । अन्वितावयवार्थेति यावत् । रूढिरप्यवयवार्थापेक्ष्या । अन्यथाऽतिप्रसङ्गात् । कर्म क्रियां प्रोक्तवन्तः कर्मप्रवचनीयाः । भूते बाहुलकात्कर्तर्यनीयर् । तेन सम्प्रति क्रिया न द्योतयन्तीति लभ्यते । तदुक्तं हरिणा—

क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः ।
नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः ॥

तथाहि—शाकल्यस्य संहितामनु प्रावर्षत् । अत्र न तावदनुभूयते सुखमित्यादिवदनुः क्रियाविशेषद्योतकः । तदननुभवात् । क्रियापदसन्निधानविरहात् । नापि षष्ठीवत्सम्बन्धवाचकः । तस्य द्वितीययैवोक्तत्वात् । नापि प्रादेशं विपरिलिखतीत्यत्र विपरिमाय लिखतीत्यर्थाद्यथा विशब्दे मानक्रियाक्षेपस्तद्वत्क्रियाक्षेपकः । कारकविभक्तिप्रसङ्गात् । किन्तु संहिताशब्दोत्तरद्वितीयया सामान्यरूपेणानुगम्यमानं सम्बन्धं तद्वाक्येऽप्रयुज्यमानस्य निशमेर्या क्रिया तत्कृतत्वस्य वृष्टौ बोधाद्धेतुहेतुमद्भावलक्षणविशेषरूपेणावच्छिनत्ति । विशिष्टक्रियाभिजनितत्वेन हेतुहेतुमद्भावलक्षणविशेषरूपतया वा सम्बन्धस्य तद्वशेन सम्प्रत्ययात् ।

यत्तु येऽप्रयुज्यमानस्य क्रियामाहुरिति भाष्यम् तत्र क्रियाशब्देन तदुपजनितसम्बन्धविशेष उपचारादुच्यते । आहुरित्यस्य द्योतयन्तीत्यर्थ इति कैयटः । क्वचित्तु उक्तप्रवृत्तिनिमित्ताभावेऽपि वचनसामर्थ्यादियं संज्ञा । यथा सुः पूजायामित्यादौ सोः षत्वादिनिवृत्तये गत्युपसर्गसंज्ञाबाधनार्था ॥

# अनुर्लक्षणे ॥ ८२ ॥

लक्षणे द्योत्येऽनुः कर्मप्रवचनीयः । संहितामनु प्रावर्षत् । यद्यपि लक्षणेत्थंभूतेत्यादिना संज्ञा सिद्धा तथापि वृक्षमनु विद्योतते विद्युदिति हेतुभिन्ने लक्षणे सावकाशा तत्प्रयुक्ता द्वितीया धनेन कुलमित्यादौ सावकाशया हेताविति तृतीयया परत्वाद्बाध्येत । हेतुभूतसंहितोपलक्षितं वर्षणमिति बोधाद्धेतुहेतुमद्भावसत्त्वात् । अतः पुनः संज्ञाविधानं तत्सामर्थ्याच्च द्वितीयैव । तदुक्तम् ।

हेतुहेतुमतोर्योगपरिच्छेदे तुना कृते ।

र्थ्यात् परिच्छेदहेतुरुभयमपि गृह्यते । आमुक्तेः संसारः । आकुमारं यशः पाणिनेः । कुमारानपि प्राप्तमित्यर्थः ।

# लक्षणेत्थंभूताख्यानभाग-वीप्सासु प्रतिपर्यनवः ॥ ८८ ॥

एष्वर्थेषु विषयेषु प्रत्यादय उक्तसंज्ञाः । यथा विभक्तिसमीपादयोऽव्ययानामर्थास्तथा लक्षणादयो न प्रत्यादीनाम् । किन्तु पदान्तरवाच्याः सन्तः प्रत्यादीनां उक्तसंज्ञायां विषयत्वेन निर्दिष्टाः । वृक्षं प्रति परि अनु वा विद्योतते विद्युत् । अत्र वृक्षो विद्योतनस्य लक्षणम् । प्रत्यादयस्तु प्राप्तिक्रियाजनितसम्बन्धविशेषस्यावच्छेदकाः । कंचित्प्रकारं प्राप्त इत्थंभूतः । तदाख्याने यथा साधुर्देवदत्तो मातरं प्रतीत्यादि । भागे यदत्र मां प्रति स्यादित्यादि । योऽत्र मम भागः स्यात्स दीयतामित्यर्थः । स्वस्वामिभावो द्वितीयार्थः । वीप्सा व्याप्तुमिच्छा । साकल्यप्रतिपिपादयिषेति यावत् । भूतं भूतं प्रति पर्यनु वा प्रभुः । सकलभूतानामित्यर्थः । इहेत्थंभूताख्यानेनैव सिद्धौ तु वृक्ष वृक्षं प्रति सिञ्चतीत्यादि । इह परिशब्दः क्रियासम्बद्धः । वीप्सा तु द्विर्वचनद्योत्या । द्वितीया तु कर्मणि । कर्मप्रवचनीयसंज्ञा पुनरुपसर्गत्वनिवृत्त्यर्था तेनोपसर्गात्सुनोतीति षत्वं न । न च परिशब्दयोगे पञ्चम्यापत्तिः । तत्र वर्जनार्थपशब्दसाहचर्यात् ।

# अभिरभागे ॥ ८९ ॥

भागाभिन्ने लक्षणाद्यर्थत्रयेऽभिरुक्तसंज्ञः । वृक्षमभि विद्योतते । –

साधुर्मातरमभि । वृक्षमभि सिञ्चति । अभागे किम् । यदत्र ममाभिष्यात्तद्दीयताम् । उपसर्गप्रादुर्भ्यामिति षत्वम् ।

## प्रतिःप्रतिनिधिप्रतिदानयोः ९०॥

स्पष्टम् । अभिमन्युरर्जुनात्प्रति । तस्य प्रतिनिधिरित्यर्थः । मुख्यात्किञ्चिन्न्यूनः प्रतिनिधिः । तिलेभ्यः प्रतियच्छति माषान् । प्रतिनिधिप्रतिदाने च यस्मादिति पञ्चमी ।

## अधिपरी अनर्थकौ ॥ ९१ ॥

इह धात्वर्थातिरिक्तार्थविरह एवानर्थकत्वम् । सर्वथाऽनर्थकस्य प्रयोगायोगात् । धात्वर्थमात्रानुवर्त्तित्वात्तु गतिसंज्ञा प्राप्ता तद्बाधायोक्तसंज्ञाविधानम् । तेन कुतोऽध्यागच्छति, कुतः पर्यागच्छतीत्यत्र गतिर्गताविति निघातो न ।

## सुः पूजायाम् ॥ ९२ ॥

सुस्तुतम् । अनुपसर्गत्वान्न षत्वम् । पूजायां किम् सुषिक्तं किं तवात्र । पेक्षोऽयम् । सुष्टुतिरित्यत्रातिशयमात्रं विवक्षितं न पूजेत्याहुः ।

प्रशंसानुमते पूजाभृशकृच्छ्रसुखेषु सुः ॥ इति पाठात् ।

## अतिरतिक्रमणे च ॥ ९३ ॥

चकारात्पूजायाम् । अतिक्रमणमुचितादधिकानुष्ठानम् । अतिसिक्तम्, अतिस्तुतम् । बहुतरं समीचीनमिति क्रमेणार्थः ।

# अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु ॥ ९४ ॥

एषु द्योत्येष्वपिरुक्तसंज्ञः । यद्यनेऽपि शब्दार्था निर्दिश्येरन् तदा पदार्थस्योपादानमनर्थकं स्वपदार्थाऽव्यभिचारात् । सम्भावनाद्युपादानमप्येवम् । तेषामपि पदार्थत्वात् । तथा च सर्पिषोऽपि स्यादित्यत्र स्यादिति पदं कर्तृसामान्यवाच्यपि यदा सामर्थ्यात् बिन्दुरूपकर्तृविशेषपरं तदा तत्प्रति अपिः कर्मप्रवचनीयः । सर्पिःशब्दस्तु समुदाये वर्तते नावयवे । अत एवावयवोपजनितव्यतिरेके षष्ठी । प्रार्थनायां लिङ् । तस्या एव विषयभूते प्रकृत्यर्थे भवने कर्तृदौर्लभ्यप्रयुक्तं दौर्लभ्यं द्योतयन्नपिशब्दः स्यादित्यनेन सम्बध्यते । इदमेवापिशब्दस्य पदार्थद्योतकत्वम् । तदुक्तम्—

पदान्तरस्याप्रयुज्यमानस्यार्थः पदार्थ इति ।

एवं चात्र न कर्मप्रवचनीयप्रयुक्ता द्वितीया । सर्पिषो बिन्दुनान्वयो न त्वपिनेत्युक्तत्वात् । संज्ञाफलं तु उपसर्गप्रादुर्भावाभावः । अथ यदा गतार्थोऽपि बिन्दुशब्दः स्पष्टार्थं प्रयुज्यते तदा बिन्दोर्द्वितीया ऽस्तु । पदान्तरव्यतिरेकेऽपि यः पदार्थः प्रतीयते तस्यैव पदार्थपदार्थतया विवक्षितत्वात् । तद्वाचकपदाभावनियमस्यानभिमतत्वात् । मैवम् । उपपदविभक्तितः कारकविभक्तेर्बलवत्त्वात् । शक्त्युत्कर्षप्रकाशनार्थमत्युक्तिः सम्भावनम् । अपि सिञ्चेन्मूलसहस्रं, अपि स्तुयाद्विष्णुम् । अन्ववसर्गः कामचारानुज्ञा । अपि सिञ्च, अपि स्तुहि । अन्य-

तरत्स्वेच्छया कुर्वित्यर्थः । गर्हाया धिग् देवदत्त अपि स्तुयाद्वृषलम् । समुच्चये अपि मिञ्च अपि स्तुहि । उभयं कुर्वित्यर्थः । उपसर्गसंज्ञाबाधादुपसर्गात्सुनोतीति षत्वाभावः ।

## अधिरीश्वरे ॥ ९५ ॥

स्वस्वामिभावे द्योत्येऽधिरुक्तसंज्ञः स्यात् । अधि ब्रह्मदत्ते पञ्चालाः । अधि पञ्चालेषु ब्रह्मदत्तः । यस्य चेश्वरवचनमिति स्वस्वामिनोः पर्यायेण सप्तमी वक्ष्यते ।

## विभाषा कृञि ॥ ९६ ॥

अधिः कृञि योक्तसंज्ञः । ईश्वरे इत्यनुवर्तते । पूर्वेण प्राप्ते विभाषेयम् । यदत्र मामधिकरिष्यति । विनियोक्ष्यत इत्यर्थः । विनियोक्तुः ईश्वरत्वावगमात्कर्तृत्वाद्भ्रिनीया । इह गतिसंज्ञाया बाधितत्वात्तिङि चोदात्तवतीति निघातो न । मामधि कृत्वेत्यत्र प्रादिसमासो न । कर्मप्रवचनीयानां प्रतिषेध इति वक्ष्यमाणत्वात् । पक्षेऽधिकृत्य ।

## लः परस्मैपदम् ॥ ९७ ॥

आदेशापेक्षा षष्ठी । लस्यादेशाः परस्मैपदसंज्ञाः । आत्मनेपदसंज्ञया परस्मैपदसंज्ञाबाधार्थमिहानयोरारम्भः । नचैवं पुरुषसंज्ञाभिः शतृक्वसोः सावकाशा परस्मैपदसंज्ञा बाध्येतेति वाच्यम् । सिचिवृद्धिः परस्मैपदेष्विति परस्मैपदग्रहणेन परस्मैपदसंज्ञायाः पुरुषसंज्ञाभिर्बाधो नेति ज्ञापनात् । ज्ञापकस्य च सामान्यापेक्षत्वादात्मनेपदसंज्ञयाऽपि सह पुरुषसंज्ञानां समावेशः । अन्यथा परस्मैपदे सावकाशानां तासामनवकाशया

तया बाधप्रसङ्गात् ।

## तङानावात्मनेपदम् ॥ ९८ ॥

तङ् प्रत्याहारः शानच्कानचौ चैतत्संज्ञाः । आस्ते, आसीनः, चक्राणः । आनपदेन शानच्कानशोर्न ग्रहणम् । लादेशत्वाभावात् । तेन तौ परस्मैपदिभ्योऽपि भवतः । अत एव लोलमानादयश्चानशीति वामनः । स्मरारातौ जुह्वाना इति सौन्दर्यलहरी । स्तमानमारमेनेति माघः । एतेन त पश्यते निःकलं ध्यायमान इति आथर्वणश्रुतिरपि व्याख्याता ॥

## तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ॥ ९९ ॥

प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमाश्चेति कृतद्वन्द्वानामेकशेषः । तेन पदद्वये षट् त्रिकाः षडेव संज्ञा इति यथासंख्यनिर्वाहः । सूत्रत्रये महासंज्ञाकरणं पूर्वाचार्यानुरोधात् । इह त्रीणित्रीणीत्येकपदम् । द्वे वेति हरदत्तः । अवान्तरपदसंज्ञायां सत्यामपि समुदायपदसंज्ञामाश्रित्य संहितैकपदस्य प्रवृत्तिः । अन्यथा समासेऽपि पृथक्छेदः स्यात् । द्विरुक्तमध्ये पदान्तरप्रयोगस्याप्यापत्तिश्चेति कौस्तुभः ।

## तान्येकवचनद्विवचनबहुवचनान्येकशः ॥ १०० ॥

तानीति पुरुषसंज्ञाभिः समावेशार्थम् । अन्यथा पुरुष-

-चनसंज्ञयोः पर्यायः स्यात् । ततश्चाडुत्तमस्येत्यादि कार्यं पक्षे न प्रवर्त्तेत । लब्धप्रथमादिसंज्ञकानि त्रीणि त्रीणि एकशः क्रमेण एकवचनादिसंज्ञानि स्युः । एकश इति प्रथमान्ताद्वीप्सायां शस् । येन नाप्राप्तिन्यायेन द्विर्वचनापवादेन शसैव वीप्साया उक्तत्वान्न द्विर्वचनम् ।

यत्तु एकैकश इति प्राञ्चः । तदशुद्धम् । यत्तु एकैकशो ददाति इति भाष्यप्रयोगात्तदपि साध्विति । तन्न । यत्र तद्धितेनानुक्ता वीप्सा भवतीत्युपक्रम्य भाष्ये तथा प्रयुक्तत्वात् । अल्पार्थोऽप्येकशब्दोऽस्ति तस्माद्बह्वल्पार्थादिति शसिति कैयटव्याख्यानाच्च । संख्यैकवचनाच्चेति शस एव वीप्सायां विधानात् इति-दीक्षिताः ।

वस्तुतस्तु । एकां कपिलां एकैकशः सहस्रकृत्वो दत्त्वेति भाष्यप्रयोगात्सत्येकमिति कैयटेन तद्व्याख्यानाच्च स्वार्थिकोऽपि शस्प्रत्ययोऽस्ति । एवं च एकैकशो युवजनमिति गोवर्धनाचार्यप्रयोगः । ऐकैकश्येनेति बाधलक्षणे शास्त्रदीपिकादिप्रयोगाश्च सङ्गच्छन्ते इति नव्याः ।

# सुपः ॥ १०१ ॥

सुपस्त्रीणि त्रीणि क्रमादेकवचनादिसंज्ञानि स्युः । इहान्वर्थत्वमाश्रित्य द्व्येकयोर्द्विवचनैकवचने बहुषु बहुवचनमिति त्याज्यम् । एकवचनस्यौत्सर्गिकत्वेऽपि उपसर्जनकर्मप्रवचनीयादिसञ्ज्ञावद्यथासम्भवमन्वर्थतायाः सुवचत्वादित्याहुः । एकत्वे द्विवचनं लक्षणयापि न साध्विति ज्ञापनार्थं तदिति नैयायिकाः ।

## विभक्तिश्च ॥१०२॥

सुप्तिङौ विभक्तिसंज्ञौ स्तः । पुरुषवचनसंज्ञाभ्यां समावेशार्थश्चकारः । तिङां विभक्तिसंज्ञा तु न विभक्तौ तुस्मा इत्येत्सद्दृत्त्यर्थम् । सुपां तु त्यदाद्यत्वाद्यर्थमपि ।

## युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ॥१०३॥

लकारेण समानाधिकरणे युष्मदि प्रयुक्तेऽप्रयुक्तेऽपि मध्यमः स्यात् । त्वं पचसि । त्वं दृश्यसे । कर्तृकर्मणोः क्रमेण लकारः । तद्विशेषबोधकत्वात्त्वं शब्दस्य तत्सामानाधिकरण्यम् ।

नैयायिकास्तु कर्तृकर्मणोराख्यातार्थत्वाभावात् उभाभ्यां धर्माभ्यां एकधर्मिबोधकत्वरूपं न प्रकृते सामानाधिकरण्यम्, नीलो घट इत्यादिवत् । किन्तु तिङर्थसंख्याविशेष्यबोधकत्वरूपमेवेत्याहुः । समानाधिकरणे किम् । त्वां पश्यति । त्वया दृश्यते । आद्ये कर्तरि लकारः । त्वामिति कर्म । अन्त्ये कर्मणि लकारः । त्वयेति कर्तेति सामानाधिकरण्याभावः । अत्वं त्वं भवति त्वद्भवति इत्यत्र तु न मध्यमः । प्रकृतिविकृत्योरभेदविवक्षायामपि प्रकृतेरेव विकाररूपेण सम्पत्तौ कर्तृत्वात्प्रकृत्याश्रयस्य प्रथमस्यैव प्रवृत्तेः । यदग्ने स्यामहं त्वं, त्वं वाहं स्या इति मन्त्रप्रयोगात् । भवान्करोतीत्यत्रापि न मध्यमः । अलिङ्गः सम्बोधनैकविषयश्च युष्मदर्थः । सलिङ्गः संबोध्यासम्बोध्यसाधारणश्च भवदर्थ इति वैषम्यात् । न च युष्मदः सम्बोधनैकविषयत्वे तस्मात्सम्बोधन एव प्रथमापत्त्या आम-

न्त्रिताद्युदात्तत्वं पदात्परत्वे निघातश्च स्यादिति वाच्यम् । स-म्बोधनस्य प्रातिपदिकार्थे एवान्तर्भावात् । सम्बोधनेचेति सूत्रं तदाधिक्यार्थमिति वक्ष्यमाणत्वात् ।

केचित्तु तत्रेष्टापत्तिमाहुः । पठन्ति च ।

सम्बोधनार्थः सर्वत्र मध्यमे कैश्चिदिष्यते ।

तथा सम्बोधने सर्वा प्रथमां युष्मदो विदुः ॥

युष्मदर्थस्य सिद्धत्वान्नियता चाद्युदात्तता ।

युष्मदः प्रथमान्तस्य परश्चेन्न पदादसौ ॥ इति ।

तन्न । उक्तयुक्तिविरोधात् । युवं ह गर्भं जगतीषु धत्थः, यूयं पात स्वस्तिभिः इत्यादौ पादादावप्यन्तोदात्तत्वस्य । ये देवा यूयमिदापयस्थेत्यादौ पदात्परत्वेऽप्यनिघातस्य दर्श-नाच्चेत्यन्ये ।

# प्रहासे च मन्योपपदे मन्य-तेरुत्तम एकवच्च ॥ १०४ ॥

मन्यधातुरुपपदं यस्य तस्मिन् धातौ प्रकृतिभूते मध्यमः स्यात् परिहासे गम्यमाने मन्यतेस्तूत्तमः स्यात् स चैकवत्स्या-त् । मन्तॄणां भेदेऽपि एकवचनमेव स्यादिति यावत् । अन्वाच-ये चकारः । तेनैकवचनेऽपि प्रधानशिष्टौ मध्यमोत्तमौ प्रवर्त-ते । एहि मन्ये ओदनं भोक्ष्यसे भुक्तः सोऽतिथिभिः । सत्यप्यो-दने परिहासार्थं प्रतारणम् ।

किं मन्ये विहरिष्यसे बत इमां मुञ्जान्तराशामिमाम् ।

विहरिष्ये इति मन्यसे इत्यर्थः ।

एहि मन्ये राजपुत्र जामदग्न्यं विजेष्यसे ।

इति भवभूतिः । एतं एत वा मन्ये ओदनं भोक्ष्येथे भोक्ष्यध्वे इत्यादि । भोक्ष्यावहे इति मन्येथे, भोक्ष्यामहे इति मन्यध्वे । युष्मदीत्यनुवृत्तेर्नेह । एतु भवान् मन्यते ओदनं भोक्ष्ये इति । इपना निर्देशान्नेह । एहि मनुषे रथेन यास्यामीति । प्रहासे किम् । तत्त्वकथने मा भूत् । एहि मन्यसे ओदनं भोक्ष्ये इति भुक्तः सोऽतिथिभिरिति ।

## अस्मद्युत्तमः ॥ १०५ ॥

स्पष्टम् । अहं पश्यामि, दृश्ये वा । युष्मदस्मद्भ्यां समानाधिकरणत्वे परत्वादुत्तम एव । अहं च त्वं च वृत्रहन् संयुज्याव सनिभ्य आ ।

## शेषे प्रथमः ॥ १०६ ॥

मध्यमोत्तमविषयादन्यत्र प्रथमपुरुषः स्यात् । देवदत्तः पचति ॥

## परः सन्निकर्षः संहिता ॥१०७॥

वर्णानामातिशयितः सन्निधिः संहितासंज्ञः । प्रदेशाः संहितायामित्यादयः । यावता समयेन ऊत्मर्गतो वर्ण उच्चार्यते तदधिकव्यवधानाभाव एवातिशयः । न चैवं मध्यमायां विलम्बितायां च वृत्तौ संहितासंज्ञा न स्यादिति वाच्यम् । वृत्तिमात्रे सन्निकर्षसाम्येऽपि नैरन्तर्योच्चारणात् । द्रुतायां स्वल्प उपलब्धिकालो मध्यमायामधिको विलम्बितायामधिकतर इत्येतावता विशेषात् । प्राकृतवैकृतभेदेन ध्वनीनां भिन्नत्वात् । वैकृतध्वनिवशात्तस्यैव

वर्णस्य पुनः पुनरुपलब्धिर्यरिति ध्वनिभेदेन वृत्तिभेदात् । हस्तिद्वयस्य मशकद्वयस्य च संयोगसाम्येऽपि हस्तिनोर्बहुदेशव्यापकत्वं मशकयोःस्वल्पदेशव्यापकत्वमितिवत् ।

अथवा शब्दाविरामः संहिता । यदा प्रयोक्ता शब्दोच्चारणान्न विरमति तदा तत्सम्पत्तेः । एवं च मध्यमादावपि न दोषः । नचैवं वर्णानां भिन्नप्रयत्नजनितध्वनिव्यङ्ग्यत्वात्प्रतिवर्णं प्रयत्नभेदादेकप्रयत्ने स्मारितवर्णानन्तरोत्पन्नप्रयत्नान्तरेण वर्णान्तरोच्चारणादेकैकस्य वर्णस्य विरामसद्भावादवसानसंज्ञया संहितासंज्ञाबाधप्रसङ्गः । वर्णान्तरानुच्चारणे वृक्ष इत्यादौ सावकाशयाऽवसानसंज्ञया निरवकाशायाः संहितासंज्ञाया बाधानुत्पत्तेः ।

अथवा सर्वत्र विरामसद्भावात् अवसानसंज्ञायां विशेष आश्रयणीयः । शब्दार्थयोर्यत्र विरामस्तत्रावसानसंज्ञा । अत्र तु सत्यपि विरामे पदार्थस्य वाक्यार्थस्य वाऽविरामान्न तथा ।

यद्वा ह्रादाविरामः संहिता । प्रयत्नविशेषजन्यो विरतेऽपि वर्णेऽनुरणनरूपोऽन्यवर्णोच्चारणेऽप्यनुवर्तमानो घोषो ह्रादः ।

अथ वर्गाणां प्रथमद्वितीयानां शषसानां च संयोगे घोषविच्छेदादसन्निधानात्संज्ञा न स्यात् । ततश्च कुक्कुट इवायमिति कनो लुब्मनुष्ये इति लुपि कृते संज्ञायामुपमानमित्याद्युदात्तत्वम् । शिष्टमनुदात्तम् । तत्र संहिताधिकारीयमुदात्तादनुदात्तस्येति स्वरितत्वं न स्यात् । पचतीत्यत्र चकारस्याघोषत्वादकारोच्चारणे घोषविच्छेदात्स्वरितत्वानुपपत्तिः । द्वयोरकारयोर्घोषवतोर्मध्यवर्तिनोऽकारस्यापि घोषवत्तयोपलम्भात् । एकजपाकुसुमरूपेण स्फटिकद्वयस्याप्युपरागदर्शनात् । सन्निधिसत्त्वे एकस्यैवानेकस्यापि ह्रादेन प्रच्छादनसम्भवात् ।

यद्वा वर्णान्तरोच्चारणकालादन्येन वर्णशून्येन कालेनाव्यवं-

हितं पौर्वापर्यं संहिता । तेन मध्यमायां विलम्बितायां च परसन्निकर्षाभावेऽपि सञ्ज्ञा । यद्यपि युगपदुत्थितानां पौर्वापर्यं वर्णानां च यौगपद्यं तथापि बुद्धिनिबन्धन एव सन्निकर्षादिव्यवहारः । तदुक्तम्—

बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ता धीरस्तन्वन्नीतिः ।
शब्देनार्थान् वाच्यान् दृष्ट्वा बुद्धौ कुर्यात्पौर्वापर्यम् ॥

तननं तत् सास्ति यस्याः सा तत्वती सकलविषयव्यापिनी बुद्धिर्यस्य । तन्वन्नीतिरिति पाठे शत्रन्तस्य प्रयोगः । अर्थः पूर्ववत् ।

# विरामोऽवसानम् ॥ १०८ ॥

वर्णानामभावोऽवसानसंज्ञः । प्रदेशा वावसाने इत्यादयः । इहाभावोऽवसानमिति केचित्पठन्ति । न चाभावस्य पूर्वपरभावानुपपत्तिः । वर्णन्यायेन बुद्धिकल्पितस्य तस्योपपत्तेः । यद्वा विरम्यतेऽनेनेति करणे घञ् इति चरमवर्णः संज्ञी । खरवसानयोरित्येकापि सप्तमी विषयभेदाद्भिद्यते । खरि परे रेफस्य विसर्गः । अवसाने च रेफे स्थानिनीति ।

वार्तिककारस्त्वाह । संहितावसानयोर्लोकविदितत्वात्सिद्धमिति । उक्तसूत्रद्वयं नारभ्यमित्यर्थः ।

इति श्रीसिद्धान्तसुधानिधौ प्रथमस्याध्यायस्य चतुर्थपादे
चतुर्थमाह्निकम् ।

# पादोऽध्यायश्चायं समाप्तः ॥

सद्विद्वत्पदवाक्यमाननिगमाकूपारपारंगम—।
श्रीलक्ष्मीधरलब्धबोधजनुषा विश्वेश्वरेणोदिते ॥
श्रीसिद्धान्तसुधानिधौ सुधिषणैरध्यायमध्यायतं ।
ध्यायं ध्यायमिहाभिधेयमधुना शोधाय धीर्धीयताम् ॥ १ ॥

# अथ द्वितीयोऽध्यायः ।

---

## समर्थः पदविधिः ॥ १ ॥

पदसम्बन्धी विधिः समर्थाश्रितो बोध्यः । समर्थपदस्य तदाश्रिते लाक्षणिकत्वात् । विधिपदं कर्मसाधनम् । उपसर्गे घोः किरिति किप्रत्ययः । विध विधाने इत्यौणादिके इप्रत्यये त्वाद्युदात्तो विधिशब्दः । अयं त्वन्तोदात्त इति विशेषः । अत्र एकार्थीभावः सामर्थ्यमधिकार इत्येकः पक्षः । व्यपेक्षासामर्थ्यमधिकार इति द्वितीयः पक्षः । द्विविधं सामर्थ्यमधिकार इति तृतीयः पक्षः । एवं परिभाषायामपि त्रय इति षट् पक्षाः । तत्रैकार्थीभावः सामर्थ्यं परिभाषेति सिद्धान्तः । इतरे पूर्वपक्षा इति स्थितमाकरे । अन्यतरस्य द्वयोर्वा सुबन्तत्वे यः प्रवर्तते स पदविधिः ।

मीमांसकास्तु पदत्वप्रयोजकसाधारणमेव पदविधित्वं तेन व्रीहिभिर्यवैर्वा यजेतेत्यत्र व्रीहियवयोर्न समुच्चयः । साकाङ्क्षत्वेऽसामर्थ्येन ततस्तृतीयानुपपत्तेः । विभक्त्युत्पत्तौ सत्यां पदसंज्ञेति तृतीयाविधेरपि पदसंज्ञाप्रयोजकतया पदविधित्वेन समर्थपरिभाषाविषयत्वादित्याहुः ।

तदसत् । शब्दान्तरान्वयाकाङ्क्षायामेवासामर्थ्यात् । अन्यथा समुच्चयाभावेऽप्यवघातादिसाकाङ्क्षत्वेन तृतीयानुत्पत्तिप्रसङ्गात् । नीलं घटमित्यादावपि विभक्त्यनुत्पत्तिप्रसङ्गात् । नीलसाकाङ्क्षतया ऋद्धस्य राजपुरुष इतिवदसामर्थ्यात् । मन्मते तु

पदविधित्वविरहान्न परिभाषोपस्थानमिति वैषम्यम् । अत एव सन्सूत्रे उपसर्गार्थविशिष्टधात्वर्थस्य कर्मत्वमिति पक्षे उपसर्गसाकाङ्क्षत्वेऽपि धातोः सन्प्रत्ययः । पदविधित्वाभावेन समर्थपरिभाषाया अप्रवृत्तेः । महान्तं पुत्रमिच्छतीत्यत्र तु सुबन्तात् क्यजिविधानेन तस्य पदविधित्वान्न दोष इत्युक्तं भाष्ये । त्वद्रीत्या तु सन्प्रत्ययान्तात्तिङुत्पत्तौ पदसंज्ञेति तस्यापि पदविधित्वमस्त्येवेति समर्थपरिभाषोपस्थाने तद्विरोधापत्तिर्दुर्वारा ।

एतेन विशेषणत्वस्यान्ययोगव्यावृत्तिं विनाऽसम्भवेन द्रव्यान्तरसापेक्षत्वे विशेषणत्वस्याप्यनुपपत्तौ एकार्थीभावलक्षणसामर्थ्यानुपपत्तेरित्यपि निरस्तम् । अन्ययोगव्यावृत्तावेव विशेषणत्वस्वीकारे दण्डी पुरुष इत्यादेरनुपपत्तेः । स्वायोगव्यावृत्तिमात्रविवक्षायां तु समुच्चयेऽप्यदोषात् । अत एव 'यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रान्' इत्यत्र बृहद्रथन्तरसाध्यपृष्ठयोज्योतिष्टोमे विकल्पेऽपि स्वायोगव्यावृत्त्या विशेषणत्वसम्भवादेकार्थीभावलक्षणसामर्थ्यानपायाद्विशिष्टस्य यागस्याग्रतायां निमित्तमिति सिद्धान्तः । व्रीहिभिरित्यादौ तु व्रीहिजन्यत्वयागत्वयोः सामानाधिकरण्यमात्रस्य विधिबोध्यत्वात् । यवजन्यत्वसामानाधिकरण्यस्यापि शास्त्रान्तरेण बोधे उभयत्र विजातीययागत्वमेव जन्यतावच्छेदकं कल्प्यते तृणारणिमणिन्यायात् ।

सामार्थ्यं च न परस्परान्वययोग्यार्थकत्वं भार्या राज्ञः, पुरुषो देवदत्तस्येत्यादावतिव्याप्तेः । किन्तु तदर्थान्वितार्थबोधकत्वेन तात्पर्यविषयत्वं । तत्र तु राज्ञो भार्यापदार्थेन सहैवान्वयबोधे तात्पर्यं नतु पुरुषेणेति न दोषः । एतच्च वाक्ये व्यपे-

क्षासामर्थ्ये च एकार्थीभावपक्षे समुदायस्यैव विशिष्टार्थशक्तिस्वीकारेणैतादृशसामर्थ्याभावात् । तत्र चेत्थमुपपत्तिमाहुः । राजपुरुष इत्यादौ पदद्वयस्य स्वार्थपरत्वे वाक्यवद् वृत्तावपि विशेषणान्वयः स्यात् । एवं पुत्रीयति, कुम्भकार, औपगव इत्यादावपि बोध्यम् । न च सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणयोगो नेति वचनान्न तदापत्तिः । वचनेन तन्निवारणे गौरवापत्तेः । उक्तरीत्या तु समुदायस्य विशिष्टार्थशक्ततया तदेकदेशे राजादिपदार्थे विशेषणान्वयानुपपत्तेः सिद्धौ उक्तवचनस्य न्यायप्राप्तानुवादकत्वमात्रस्वीकारेण लाघवात् । श्वशुरपदजन्योपस्थितौ पितृविशेषणत्वेनोपस्थितायां भार्यायां सुशीलाया इत्यादिविशेषणानन्वयात् । एवं धवश्च खदिरश्चेत्यादौ इव समासेऽपि चकारप्रयोगापत्तिः । समासस्यैव तादृशविशिष्टार्थपरत्वे तु उक्तार्थतया तदनापत्तेः । नच मयापि तादृशार्थे निरूढलक्षणास्वीकारान्न तदापत्तिरिति वाच्यम् । शक्तेरेव तावता स्वीकर्तुमुचितत्वात् । समासे चित्रगुरित्यादौ यत्पदप्रयोगापत्तिश्च, प्राप्तोदको ग्राम इत्यादौ कर्तृप्रत्ययान्तप्राप्तपदे कर्तुः प्रत्ययार्थतया प्राधान्यापत्तौ उदककर्तृकप्राप्तिकर्मीभूतो ग्राम इत्यर्थासम्भवश्चेति ।

अन्ये त्वाहुः । राजपुरुष इत्यत्र राजपदस्य राजसम्बन्धिनि लक्षणया राज्ञः पदार्थैकदेशतया तत्रापि विशेषणान्वयस्यापादयितुमशक्यत्वात् । वस्तुतो विशेषणत्वेनोपस्थितस्येतरपदार्थानन्वये निराकाङ्क्षत्वं बीजम् । ततश्च रक्तः पटो भवतीत्यादाविव ऋद्धस्येत्यादिसमभिव्याहारे उत्थाप्याकाङ्क्षयाऽन्वयसम्भवादसाधुत्वज्ञापनार्थं सविशेषणानामिति वचनमावश्यकम् । अतोऽलुक्समासस्थलेऽपि न दोषः ।

यत्तु नप्ता सुन्दरः, घटो नित्य इत्यादौ विना लक्षणां सुन्दरनित्ययोः पुत्रे घटत्वे चान्वयमादाय साधुतावारणाय पदार्थैकदेशान्वये वाक्यस्यासाधुतायाः सामान्यत एव निर्णयः। किञ्च वार्त्तिकात्तादृशप्रयोगस्य साधुत्ववारणेऽपि शाब्दबोधस्तादृशप्रयोगाद्दुर्वारः इति शक्तिस्वीकार इति।

तदसत्। चैत्रस्य नप्तेत्यादेरपि असाधुत्वापत्तेः। बोधस्य भ्रान्त्यापि सम्भवेन शक्तिस्वीकारेण तस्य दुर्वारत्वाच्च।

भेद्यभेदकसम्बन्धोपाधिभेदनियन्त्रितम्।
साधुत्वं तदभावेऽपि बोधो नेह निवार्यते॥

इत्यभ्युपगमात्। नच घटो नित्य इत्यादेर्विनापि लक्षणां घटत्वे नित्यत्वान्वये साधुत्वं स्यादिति वाच्यम्। इष्टापत्तेः। आकाङ्क्षाविरहादेव तथानवबोधात्। विशेष्यतया पदार्थप्रकारकबोधे विशेष्यतया पदजन्योपस्थितेर्हेतुत्वात्। कचित्तु स्वारसिकानुभवबलेनागत्या पदार्थतावच्छेदकेऽप्यन्वयार्थमवच्छेदकतया पदजन्योपस्थितेरपि हेतुत्वकल्पनात्। अत एव घटः कर्मत्वमित्यादौ नासाधुत्वव्यवहारः।

यत्तु शब्दकौस्तुभे ध्रुवमपाये इति सूत्रे उक्तं आनयनयोगाद्घटस्य, कृतियोगादानयनपदस्य च कृद्योगषष्ठीप्रसङ्गसत्वादिदं वाक्यमसाध्वेवेति। तदसत्। घटानयनयोरन्वयस्यात्रानभिमतत्वात्। घटस्य कर्मत्वे तस्य वाऽऽनयनेऽन्वयस्यापाद्यत्वात्। चकारप्रयोगापादानमप्यनर्हम्। समुच्चयविशिष्टघटादिलक्षणयैवोपपत्तेः। अतिरिक्तशक्तिस्वीकारापेक्षया लक्षणाया एव युक्तत्वात्। यत्पदप्रयोगस्याप्यनापत्तिः। विग्रहे तथात्वेऽपि समासे गोपदस्य चित्रगवीस्वामिलक्षकतया स्वामिप्राधान्यासिद्धौ समासे तत्प्रयोगे प्रयोजनाभावात्। चित्रा गावो यस्येति विग्रहे गवामेव वि-

शेष्यतया समासार्थविबोधकत्वं विग्रहस्य कथं स्यादिति य-च्छब्दार्थस्य स्वामिनस्तच्छब्देन विशेष्यतासंपादनार्थमेवोद्देश्य-विधेयभावविवक्षया यत्तत्पदयोः प्रयोगात् । ननु गोपदस्य गोस्वा-मिलक्षणायां चित्रापदार्थानन्वयः । गोःपदार्थैकदेशत्वात् । नापि चित्रापदस्य चित्रास्वामिनि सा । गोपदार्थानन्वयादिति चेत् ।

अत्र वटेशोपाध्यायाः । वाक्ये एव लक्षणा नच चित्रा गौर्य-स्येति विग्रह एव लुप्तस्मृतयत्पदार्थस्तत्रानयनादिक्रियान्वयी तत्र चित्रगोसम्बन्धितयैवोपस्थितेः कर्मत्वान्वयानुपपत्तेः । नच नि-र्विभक्तिकमेव यत्पदम् विग्रहे । विग्रहवाक्यस्यान्वयाबोधकत्वा-पातात् । न च चित्रा गौर्यस्य तमानयेति वाक्यार्थः । तथाऽन-नुभवात् । नच यत्तदोर्नित्यसम्बन्धात्तत्पदोपस्थितिः, अध्याहारप्र-सङ्गादित्याहुः । अत एव गभीरायां नद्यां घोष इत्यादौ वा-क्ये एव लक्षणा । गभीरनद्योः परस्परमन्वयबोधानन्तरं व-स्तुगत्या गभीरनदीसम्बन्धितीरं तीरत्वेन रूपेण तत्र लक्ष्यते । परस्परान्वयबोधं विना विशिष्टार्थे वाक्यज्ञाप्यत्वाभावेन स्व-ज्ञाप्यसम्बन्धरूपलक्षणायास्तीरे ज्ञातुमशक्यत्वात् । अत एव सत्यं विज्ञानमानन्दं ब्रह्मेति वाक्ये वस्तुगत्या विशिष्टवाक्यार्थसम्ब-न्धि शुद्धं ब्रह्म लक्ष्यते इति वेदान्तविदः । एवमर्थवादादि-वाक्येऽपि प्राशस्त्यादिलक्षणास्तन्त्रान्तरे स्पष्टाः । एवमिहापि चित्रागवोरभेदान्वयबोधोत्तरं स्वज्ञाप्यगोसम्बन्धिनि चित्रगो-स्वामित्वरूपेण लक्षणा नतु स्वामित्वेन देवदत्तत्वेन वा । विशि-ष्टानुभवानुरोधात् । देवदत्तादिपदेनैव तल्लाभाच्चेति बोध्यम् ।

मणिकृतस्तु गभीरायां नदीति भागे लक्षणा, नद्यामि-त्यन्ते वा । नाद्यः । तस्य अप्रकृतित्वेन तदर्थे सुबर्थानन्वयात् । नान्त्यः । अत एव, सुबर्थे सुबर्थानन्वयाच्चेत्याहुः ।

अन्ये तु समुदायस्य लक्ष्यार्थवत्त्वेन नामत्वान्नाद्यो दोषः। सुम्मात्रार्थयोरनन्वयेऽपि समुदितवाक्यार्थस्यानथात्वेन न द्वितीयोऽपि। नचात्र वाक्यस्यासुबन्तत्वेन लक्ष्यार्थबोधकत्वानुपपत्तिः। अर्थवत्त्वेन तस्य नामत्वेऽपि तीररूपस्य तदर्थस्य नाभेदेन क्रियान्वयोऽयोग्यत्वात्, नापि भेदेन अव्युत्पत्तेरिति वाच्यम्। तीरवृत्तावेव लक्षणास्वीकारेण वाक्यस्य द्वितीयान्तत्वसम्भवेनाभेदान्वयस्य क्रियायां सम्भवात्। गभीरया नद्या वृक्षा जनिता इत्यादौ द्वितीयान्तत्वानुपपत्तावपि नदीत्याद्यन्त एव लक्षणास्वीकारान्नासाधुत्वानन्वयौ। एषैव रीतिरर्थवादवाक्येऽपि लक्षके बोध्या। तत्रापि हि क्रियायामेवान्येषामिव बलवदनिष्टाननुबन्धित्वरूपप्राशस्त्यस्यापि प्रथममन्वयः। पश्चादेव धात्वर्थे इत्याहुः।

तत्रेद चिन्त्यम्। तथापि समुदायस्य प्रत्ययत्वमनुपपन्नं यस्मात् प्रत्ययो विहितस्तस्यैव प्रकृतित्वात्। समुदायस्य लक्ष्यार्थवत्त्वेऽपि नामत्वमनुपपन्नम्। नदीशब्दस्य प्रत्ययान्तत्वेनाप्रत्यय इति पर्युदासात्। न च प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणमिति परिभाषया नदीशब्दस्यैव तेन पर्युदासो न विशिष्टस्येति वाच्यम्। तथापि अर्थवत्समुदायानां समासग्रहणं नियमार्थमिति पदद्वयसमुदायस्य नामत्वानुपपत्तेः। न च लक्षणायाः पदद्वयवृत्तित्वादर्थवत्समुदायत्वं नास्त्येकस्यैव समुदायस्यार्थवत्त्वादिति वाच्यम्। तथापि द्वयोरर्थवत्त्वानपायात्। अन्यथा वाक्यार्थस्य लक्षकत्वपक्षे विशिष्टार्थस्य समुदायप्रतिपाद्यतया वाक्यस्य प्रातिपदिकत्वापत्तेरपरिहार्यत्वात्। अत एव द्योत्यवाच्याभ्यामर्थाभ्यां प्रकृतिप्रत्यययोरर्थवत्त्वादुक्तनियमेन संज्ञानिषेधः स्या-

दिति भाष्यादिशङ्का संगच्छते । अन्यथा गभीरायामित्यत्रत्य-विभक्तेः प्रातिपदिकावयवतया लोपप्रसङ्गाच्च । एतेन गभीरया नद्येत्यादिकमपि निरस्तम् । अत एव द्वितीयोऽप्यपास्तः । नद्यामित्यत्रापि तत्र विभक्तिलोपप्रसङ्गस्याधिक्यात् । अर्थव-त्त्वसत्त्वेन तत्रापि प्रातिपदिकसञ्ज्ञाप्रसक्तेः । तत्र क्रियाविशेषण-तया द्वितीयान्तत्वस्वीकारेण भवता नामत्वस्वीकाराच्च । आस्ता-मप्रकृतमेतत् ।

अन्ये तु अस्तु विनिगमनाविरहाद्बहुव्रीहौ पदद्वयेऽपि लक्षणा तथापि न शक्तिकल्पनं गौरवादिति वदन्ति ।

नव्यास्तु गोपदे एव विशिष्टार्थलक्षणा । अत एवार्धपि-प्पली, उपकुम्भमित्यादौ पूर्वपदार्थप्रधानेऽपि षष्ठीतत्पुरुषाव्ययी-भावादावुत्तरपदस्यैव पिप्पल्यर्धादौ लक्षणा, पूर्वपदं तु तात्पर्य-ग्राहकं तदर्थस्योत्तरपदलक्ष्यस्य विशेष्यत्वाच्च प्रवादनिर्वाह इत्या-स्थीयते । एतेन गोपदस्य गोस्वामिलक्षकतायां एकदेशे गवि चित्रान्वयो न स्यादित्यपास्तम् । न च चित्रपदे विशिष्टलक्ष-णामादाय विनिगमनाविरहः । तस्य गुणवाचकतया तल्लक्षणायाः परम्परासम्बन्धरूपतया गुरुत्वात् । एतेन अषष्ठ्यर्थबहुव्रीह्यन्त-र्गतानां प्राप्तादिपदानामपि कर्त्रादिवाचकत्वेन साक्षात्सम्बन्ध-सत्त्वाद्विनिगमकाभाव इत्यपास्तम् । तथापि तेषां सामान्यरूपेण द्रव्यवाचकत्वम् । उदकादिपदानां तु विशिष्येति सम्भवात् । शूरादिपदानां गुणविशिष्टद्रव्यवाचित्वनियमेऽपि प्रकृते चि-त्रादिपदानामपि तथात्वेनाविशिष्टत्वात् शूरगुरित्यादावपि वि-निगमकस्य सुस्थत्वाच्च । केवलगुणवाचकत्वाभावमात्रस्याकिञ्चि-त्करत्वात् । उत्तरपदे लक्षणायां प्रत्ययसंनिधानलाभाच्च । न-चानेकेषां सुबन्तानामन्यपदार्थपरत्वे बहुव्रीहिविधानादेकमात्रपद-

स्यान्यपदार्थपरत्वे तदनुपपत्तिरिति वाच्यम् । तात्पर्यग्राहकत्वादिना तदुपयोगस्य मणिकारादिभिरुक्तत्वात् । अन्यथा समासस्यानेकपदत्वाभावात्तच्छक्तौ तत्रापि तद्विरोधतादवस्थ्यात् ।

यत्तु घटादिपदेऽपि प्रकृतिप्रत्ययविभागसम्भवात्प्रत्ययांशस्य जातिविशेषादौ लक्षणेति कल्पयितुं शक्यतया समुदायशक्तिविलयापत्तिरिति । तन्न । यौगिकार्थे समुदायशक्तिविलोप आपाद्यते, रूढ्यर्थे वा । नाद्यः । इष्टापत्तेः । नान्त्यः । तत्रावयवार्थसम्बन्धाभावात् । बहुव्रीहेरपि यदि देवदत्तत्वादि शक्यतावच्छेदकं तदैव घटपटादिसाम्यं स्यात्, नत्वेवमस्ति बोधयोर्वैलक्षण्यस्य सर्वसंमतत्वात् । नच चित्रगवीस्वामित्वविशिष्टदेवदत्तत्वादिकमेव शक्यतावच्छेदकं देवदत्तादिपदं च तात्पर्यग्राहकमिति वाच्यम् । नानार्थत्वापत्तेः । अन्यपदार्थे इत्यनुशासनविरोधात् । देवदत्तादिपदस्यैव सर्वमर्थो बहुव्रीहिस्तात्पर्यग्राहक इत्यापत्तेश्च । अत एव भाष्यकैयटयोः पदार्थाभिधानेऽनुप्रयोगानुपपत्तिरभिहितत्वात् । यथा चार्थे द्वन्द्व इत्यभिधानाद् द्वन्द्वे चकारस्याप्रयोगस्तथा देवदत्तपदार्थस्य समासेनाभिहितत्वाद्देवदत्तादिपदप्रयोगो न स्यात् । इति पूर्वपक्षयित्वा नत्वाऽनभिहितत्वादित्यनेन सामान्यार्थस्य समासेनाभिधानेऽपि विशेषस्यानभिधानात् विशेषप्रतिपत्त्यर्थं देवदत्तादिपदप्रयोग इति सिद्धान्तितम् । तथा च चित्रगवीस्वामित्वप्रकारकबोधत्वमेव चित्रगुरिति समुदायशक्तिज्ञानस्य कार्यतावच्छेदकम् । एवं च तार्किकादीनां गोपदलक्षणाज्ञानस्येति विशेषः । अत एव मीमांसावार्तिके ।

भवेता यदि वृक्षस्य वाजिकर्णौ कथचन ।
अक्लृप्तां समुदायस्य शक्तिं को जातु कल्पयेत् ॥

इत्युक्तम् । अर्थवदित्यादिसूत्रानुरोधेनाव्युत्पत्तिपक्षस्याव-

शाभ्युपेयतया समुदायशक्तिलोपापत्तेरनुचितत्वाच्च । कस्य शब्दस्याव्युत्पन्नत्वमित्यपेक्षायां च यत्रावयवार्थमादाय न तत्पदजन्यबोधोपपत्तिस्तस्येति विनिगमकस्य स्पष्टत्वात्, प्रकृतिभागप्रत्ययभागयोर्घटते घट इत्यादौ व्यभिचारेण घटत्वप्रकारकघटविशेष्यकबोधानुपपादकत्वात् । एतेन पङ्कजपदप्रतिबन्दिरपास्ता । तत्र पद्मत्वप्रकारकबोधार्थमेव समुदायशक्तिस्वीकारात् ।

यत्त्वेवमपि तत्र विभक्त्यर्थान्वयानापत्तिः प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः उत्तरपदोत्तरं प्रत्ययविधानाभावेन तदर्थस्य प्रकृत्यर्थत्वाभावादिति तत्तुच्छम् । प्रकृतित्वं हि अङ्गत्वमेव । यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गमिति वचनात् । तथा च समासोत्तरं विभक्तिविधानात् । एकस्य तात्पर्यग्राहकत्वमपरस्य लक्षकत्वमिति वैषम्यसत्त्वेऽपि लक्ष्यार्थे प्रकृत्यर्थत्वानपायात् । एतेन समासोत्तरं विभक्तिर्न स्यादित्यपि निरस्तम् ।

अभ्युपेत्यापि ब्रूमः । समासग्रहणादेव प्रातिपदिकसंज्ञा । नन्वेवं तस्य नियमार्थत्वाभावे कृत्तद्धितेतिसूत्रेण मूलकेनोपदंशमिति समुदायस्य प्रातिपदिकसंज्ञापत्तिः । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणादिति चेन्मैवम् । अनेन हि किमापाद्यते, समुदायोत्तरं विभक्तिर्वा, समुदायोत्तरं विभक्तिलोपो वा । नाद्यः । इष्टापत्तेः । अव्ययत्वेन लोपस्य सुलभत्वात् । न द्वितीयः । तृतीयाप्रभृतीन्यन्यतरस्यामिति सूत्रे तृतीयाग्रहणवैयर्थ्यापत्तेः । उपदंशस्तृतीयायामित्यस्य णमुल्मात्रविषयकत्वेन अमैवाव्ययेनेति सूत्रेणैव समाससिद्धेः । तद्धि पक्षे तृतीयाश्रवणार्थम् । तत्रापि लोपे तु किं विकल्पेन ।

वस्तुतस्तु कृद्ग्रहणे गतिकारकपूर्वस्य केवलस्य च ग्रहणम् । अन्यथा कष्टश्रित इत्यादौ द्वितीयाश्रितेति समासो न स्यात् ।

तथा च केवलस्य कृदन्तस्य कारकपूर्वस्य च प्रातिपदिकसंज्ञाविधान व्यर्थं स्यात्। इति नात्र तत्परिभाषोपस्थानमिति तत्रैव विपश्चितमित्यास्तां तावत्। एतेन व्यङ्गैः स्विष्टकृतं यजतीत्यत्राङ्गानुवादेन त्रित्वविधिर्न सम्भवति। समासे एकप्रसरताभङ्गप्रसङ्गात्। एकं हि पदं उद्देश्यकं विधायकं वा युक्तम्। नत्वेकोद्देशेनापरविधानमिति सिद्धान्तविरोध इत्यपास्तम्। उत्तरपदलक्षणायां एकपदार्थत्वस्य सुलभत्वात्।

वस्तुतो बहुव्रीहावेवोत्तरपदे लक्षणा उपकुम्भमर्धपिप्पलीत्यादौ तु पूर्वपदार्थस्य कुम्भसमीपपिप्पल्यर्धादेर्विभक्त्यर्थे प्रातिपदिकान्तरार्थे चान्वयो नानुपपन्नः। तादृशबोधे तादृशसमस्तपदप्रत्ययपदयोरव्यवहितपूर्वापरीभावस्य प्रातिपदिकान्तरार्थाभेदान्वयबोधे समानविभक्तिकयोस्तादृशसमस्तपदपदान्तरयोः समभिव्याहारस्यापि पृथगाकाङ्क्षात्वकल्पनादित्यभिनवः पन्थाः। समासग्रहणस्य विध्यर्थतया तदुत्तरं विभक्तेः सौलभ्यात्। न च तत्रोद्देश्यविधेयभावेन बोधः स्यादिति वाच्यम्। उद्देश्यविधेयभावावच्छिन्नविषयतया शाब्दे समासानन्तर्गतपदद्वयजन्योपस्थितेर्हेतुत्वकल्पनात्। एतेन राजपुरुषः सुन्दरः, यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् इत्यादौ च तथान्वयो न स्यादित्यपास्तम्। उद्देश्यविधेययोर्द्वयोः समासानन्तर्गतत्वस्य विवक्षितत्वात्। एतेन वषट्कर्तुः प्रथमभक्ष इत्यादिषु बाधशङ्का निरस्ता। शाब्दे पूर्वनिर्दिष्टस्योद्देश्यत्वं चरमनिर्दिष्टस्य विधेयत्वमिति नियमस्य सर्वसंमतत्वाच्च। वृद्धिसूत्रे च दर्शितमेतदित्यास्तां विस्तरः। तस्मादयमत्र भाष्याभिप्रायः। राज्ञः पुरुषः इत्यत्र राजा षष्ठ्यर्थे सम्बन्धे, स चाश्रयत्वेन पुरुषे विशेषणमिति राजसम्बन्धाश्रयः पुरुष इति बोधः। अत्र प्रकृत्यर्थो राजा प्रति-

योगित्वसम्बन्धेन षष्ठ्यर्थेऽन्वेति । तथा च प्रतियोगित्वाश्रयत्वयोः संसर्गत्वं, अन्येषां पदार्थत्वमिति विभागः । नचायं बोधो राजसम्बन्धिलक्षणया राजसम्बन्धिप्रकारकाभेदसंसर्गकपुरुषविशेष्यकबोधस्वीकारे समासादुपपादयितुं शक्यः । तथा च राजनिष्ठप्रकारतानिरूपितप्रतियोगित्वनिष्ठसांसर्गिकविषयतानिरूपितसम्बन्धनिष्ठविशेष्यताख्यप्रकारतानिरूपिताश्रयत्वनिष्ठसांसर्गिकविषयतानिरूपितपुरुषनिष्ठविशेष्यताशालिज्ञानत्वं राजपुरुषपदशक्तिज्ञानकार्यतावच्छेदकं कल्प्यते । न च तादृशार्थे समुदायलक्षणयैव तदुपपत्तिरिति वाच्यम् । उभयोस्तुल्यकक्षतया बोधकत्वेऽनादिप्रयोगे च समाने वृत्तेर्लक्षणात्वमेवेति दुराग्रहमात्रपर्यवसानात् ।

नचैवं प्रासादकादिबहुव्रीहौ विग्रहसमानाकारकबोधस्य केनाप्यनङ्गीकारात् तत्र शक्तिर्न स्यादिति वाच्यम् । तथापि एकत्र क्लृप्ततया तत्रापि तत्कल्पने बाधकाभावाच्च । नच वाक्ये संख्याया अपि राजादिविशेषणत्वेन भानात्कथं समानाकारकत्वमिति वाच्यम् । यावत्स्वंशे सम्भवस्तावतोऽपि त्यागानौचित्यात् । नचैकत्वविशिष्टराजसम्बन्धाश्रयेत्यादिकमेव शक्यतावच्छेदकं कल्प्यतामिति वाच्यम् । तथानुभवाभावात् । वृत्तावभेदैकत्वसंख्यैव भासते इति सिद्धान्तात् । संख्याविशेषाणामविभागेनावस्थानं अभेदैकत्वसंख्या । तदुक्तं वाक्यपदीये—

यथौषधिरसाः सर्वे मधुन्याहितशक्तयः ।
अविभागेन वर्तन्ते तां संख्यां तादृशीं विदुः ॥

यद्वा परित्यक्तविशेषं संख्यासामान्यमभेदैकत्वसंख्येति कैयटः । तदुक्तम्—

भेदानां वा परित्यागात्संख्यात्मा स तथाविधः ।

व्यापाराज्जातिभागस्य भेदापोहेन वर्तते ॥
अगृहीतविशेषेण यथा रूपेण रूपवान् ।
प्रख्यायते न शुक्लादिरूपभेदस्तु गम्यते ॥

इदं च मतभेदप्रदर्शनमात्रम् । संख्यासामान्ये मानाभावात् । ध्वनित चेदं अव्ययानां लिङ्गसामान्ययोगं दूषयता कैयटेनेति बोध्यम् । द्विपुत्र इत्यादौ शब्दविशेषोपादानात्सङ्ख्याविशेषप्रत्ययः । तावकीनो मामकीन इत्यादावादेशविशेषात् । शौर्पिकमित्यत्र प्रातिपदिकेन विशिष्टस्यैव परिमाणस्योपादानात् । मासजात इत्यादौ विशिष्टकालावगमे तात्पर्यात् । एवमन्यदप्यनुसन्धेयम् । न च प्रथमोपस्थितत्वात्कपिञ्जलन्यायेन राजपुरुष इत्यादौ राजादीनामेकत्वप्रत्ययोऽस्तु इति वाच्यम् । तद्वदत्र सङ्ख्योपस्थापकपदाभावात् । नचैव सङ्ख्यासामान्यमपि न प्रतीयेत इति वाच्यम् । संख्याविशेषानवच्छिन्न एव राजादिपदार्थो भासते इत्यस्य विवक्षितत्वात् । एतेन राज्ञो राज्ञोर्वेत्याद्याकाङ्क्षानुरोधात्सङ्ख्यात्वसामान्यप्रतीतिः कल्प्येति निरस्तम् । मानसादिसंख्यात्वज्ञानादेव तदुपपत्तेः । तस्य संख्यासंशयहेतुत्वे मानाभावाच्च । अतो विभक्तिलोपादिविधानं प्रक्रियामात्रम् । राजपुरुषादिपदमखण्डमेव । पदद्वयप्रत्यभिज्ञा तु सादृश्यमूलिका भ्रान्तिरिति निष्कर्षः ।

स्यादेतत् । कर्मधारये नीलोत्पलमित्यादौ नीलस्याभेदसंसर्गेणोत्पलपदार्थेऽन्वय इति दर्शनान्तराणां रीतिः । विशिष्ट एव शक्तिरिति वैयाकरणाः । एवं सति निषादस्थपतिं याजयेदित्यत्र षष्ठीसमासे पूर्वपदस्य सम्बन्धिनि लक्षणा, कर्मधारये त्वभेदः संसर्ग एवेति लाघवात्कर्मधारय एव । अपूर्वविद्याकल्पनप्रयुक्तगौरव तु फलमुखत्वाददोष इति सिद्धान्त इष्टः । स वैया-

करणमते न स्यात् । तैः षष्ठीसमासेऽपि विशिष्टशक्तिस्वीकारेण लक्षणाप्रयुक्तगौरवाभावात् । अत्राहुः ।

पर्यवस्यच्छाब्दबोधाविदूरप्राक्क्षणास्थिते ।
शक्तिग्रहेऽन्तरङ्गत्वबहिरङ्गत्वचिन्तनम् ॥

अयमर्थः । निषादस्थपतिपदं समासशक्तिपक्षे निषादरूपे स्थपतौ, निषादानां स्थपतौ, निषादस्वामिके पुरुषान्तरे चेति सर्वशक्तत्वान्नानार्थम् । तत्र तात्पर्याद्विशेषावगतिरिति निषादरूपे स्थपतावेव तात्पर्यं कल्प्यते । उपस्थितलाघवादिति ।

स्यादेतत् उक्तलाघवं विग्रहे विवक्षितं समासे वा । नाद्यः । तत्राभेदस्य विशेषणविभक्त्यर्थतया षष्ठीसमासविग्रहापेक्षया लाघवाभावात् । नच वाक्येऽप्यभेदः संसर्ग इति वाच्यम् । तत्र विभक्तेः प्रयोगसाधुत्वमात्रापेक्षयाऽर्थसाधुत्वस्याभ्यर्हितत्वेन तस्या अभेदार्थकताया एव न्याय्यत्वात् । अत एव वाक्ये अभेदस्य प्रकारत्वेन, समासे संसर्गत्वेन भानात्कथं तयोरेकार्थत्वमित्याशङ्क्य समानविषयकत्वमात्रेण समानार्थकत्वं नतु विशेषणसाम्येनापीति स्पष्टं शब्दालोकादौ । एवं च भेदाभावरूपाभेदस्य विग्रहे प्रकारत्वेन भानात्कर्मधारयविग्रहस्यैव गुरुत्वाद्विपरीतापत्तिः । न द्वितीयः । विग्रहसमानार्थकत्वानुरोधेन कर्मधारयस्यापि निषादाभेदप्रकारकविशेषणताविशेषसंसर्गकस्थपतिविशेष्यकज्ञानजनकताया वाच्यत्वात् । तत्र च निषादसम्बन्धिप्रकारकाभेदसंसर्गकस्थपतिविशेष्यकधीजनकतत्पुरुषापेक्षया गौरवाभावादिति ।

अत्रोच्यते । वाक्ये विभक्त्यर्थाभेदं वदद्भिरपि यथा समासेऽभेदः संसर्ग एवेत्युच्यते उक्तं हि मिश्रैः—नचैवं कर्मधारयेऽपि विभक्त्यर्थेऽभेदे लक्षणा मन्तव्येति निषादस्थपत्यधिकरणविरोधः । कर्मधारयेऽभेदस्य संसर्गमर्यादया भानाभ्युपगमादि-

ति । तथाऽत्रापि निषादप्रकारकाभेदसंसर्गकस्थपतिविशेष्यक-ज्ञानजनकत्वमेव कर्मधारयस्य स्वीक्रियते तथाच षष्ठीसमासे पूर्वपदार्थनिष्ठप्रकारतायां कर्मधारये च पूर्वपदार्थनिष्ठप्रकारताया अभेदस्य संसर्गतया प्रवेशेन तत्र सम्बन्धिनोऽधिकस्य शक्यतावच्छेदककोटावनुप्रवेशात्तद्गौरवं दुर्वारम् । अत एव लक्षणाया अविशेषेऽपि मत्वर्थलक्षणापेक्षया गौणी दुर्बलेति तद्व्यपदेशाधिकरणे निर्णीतम् । तथाच ।

परार्भीष्टे विशिष्टार्थे समासे शक्तियोगतः ।
सम्भवे सति धर्मस्य लघोरेव पुरस्क्रिया ॥ १ ॥

इति दिक्तु विस्तरः ।

अथ कथं देवदत्तस्य गुरुकुलमित्यादिकमिति चेत् ।

अत्राहुः ! सम्बन्धिशब्दस्थले सापेक्षत्वेऽपि भवत्येव वृत्तिः । तदुक्तं वाक्यपदीये—

सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते ।
वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते ॥ इति ।

तथा—तस्मात्समाससुब्धातुकृत्ताद्धितविशेषणे ।
न विशेषेण सम्बन्धः सापेक्षे तु भवेदयम् ॥

यद्वा स्वाश्रयसम्बन्धित्वसम्बन्धेन षष्ठ्यर्थस्य सम्बन्धस्य कुल एवान्वयः । तदुक्तम्—

समुदायेन सम्बन्धो येषां गुरुकुलादिना ।
संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह ॥ १ ॥

इति । चैत्रस्य नप्तेत्यादावपि षष्ठ्यर्थस्य स्वाश्रयजन्यत्व-सम्बन्धेन धर्मिण्यन्वय इति शब्दालोके । कचित्तु सापेक्षत्वेऽपि स सम्बन्धिकभिन्नस्थलेऽपि वृत्तिर्भाष्यप्रामाण्यात् । तथाहि—किमोदनः शालीनां, केषा शालीनामित्यर्थः । रक्तश्वेतभेदेन शालिद्वैविध्यात् ।

सक्त्वाढकमापणीयानां आपणसम्बन्धिनां सक्तूनामाढकमित्यर्थः । कुतो भवान् पाटलिपुत्रकः । पाटलिपुत्रादागतः पाटलिपुत्रकः । रोपधेतोः प्राचामिति वुन् । द्वे पाटलिपुत्रे, कस्मात् पाटलिपुत्राद्भवानागतः इत्यर्थः । आकिञ्चिकुत्राणादयस्तु असमर्थसमासा असाधवश्चेति स्थितम् । तत्सिद्ध एकार्थीभावसामर्थ्ये समासादय इति । वक्ष्यमाणविभाषायां च सामर्थ्यं विशेषणं, न तु समासे । गुणः कृतात्मसंस्कार इति न्यायात् । तथा च विकल्पेनैकार्थीभूतं सत्समस्यते इत्यादिस्तत्र तत्र वाक्यार्थः । नत्वेकस्मिन्नेव विषये विकल्पेन समास इत्यर्थोऽसम्भवात् । व्यपेक्षाया वाक्यमेव । एकार्थीभावे तु समास एवेति यावत् । यद्यप्यलौकिके प्रक्रियावाक्ये सामर्थ्यं नास्ति तस्य शाब्दबोधाजनकत्वात् तथापि परिनिष्ठिते विशेषणसम्बन्धाद्यभावदर्शनात् शवादौ द्वितीयादिसामानाधिकरण्यदर्शनेन लकारे तत्कल्पनवत् । एवं चित्रगुपदस्यान्यपदार्थपरत्वादलौकिकेऽपि तत्परत्वं कल्प्यते । अन्यपदार्थ इत्यादिमात्रानुवादेनैव देवताविग्रहवत्तत्सिद्धेश्चेत्याहुः ।

इति श्रीसिद्धान्तसुधानिधौ द्वितीयाध्यायस्य
प्रथमे पादे प्रथममाह्निकम् ॥



# सुबामन्त्रिते पराङ्गवत्स्वरे ॥

सुबन्तमामन्त्रिते परे पराङ्गवत्स्यात् स्वरे कर्तव्ये । तादात्म्यातिदेशोऽयम् । "तन्निमित्तग्रहण कर्तव्यम्" । अस्यामन्त्रितपदार्थस्य यन्निमित्तं तत्प्रातिपदिकमेव सुबन्तं पराङ्गवन्नतु तद्भिन्नमित्यर्थः । यत्ते दिवोदुहितर्मर्त्तभोजनम् । दिव इत्यस्य पराङ्गवद्भावाद्दाष्टमिको निघातः । नन्विह सुब्ग्रहण व्यर्थम् । आमन्त्रितस्य पदत्वेन तस्मिन् परे विधीयमानस्य पराङ्गवद्भावस्य पदविधित्वात्समर्थपरिभाषोपस्थाने तिङन्तस्य वारणसम्भवात् । व्यधिकरणस्य तस्य वस्तुतोऽसामर्थ्यात् । समानाधिकरणस्य तु समानाधिकरणमसमर्थमिति वाचनिकासामर्थ्यसत्त्वात् । षष्ठ्यामन्त्रितकारकवचनमित्यस्याव्याप्तिवारणायावश्यकतया तत एव तिङन्तवारणाच्च । प्रत्युत सुब्ग्रहणे कृते तीक्ष्णया सूच्या सीव्यन्नित्यत्र सुबन्तसमुदायस्य पराङ्गवद्भावो न स्यात् प्रत्ययग्रहणपरिभाषया सुबन्तत्वाभावादिति चेत् ।

सत्यम् । पीड्ये पीड्यमान करोष्यटन् इत्यादावतिप्रसङ्गात् । अस्ति ह्यत्र सामर्थ्यम् । सम्बोधनपद क्रियान्वयीति वक्ष्यमाणत्वात् । नच सर्पिः कालकमित्यादौ इसुसोः सामर्थ्ये इति षत्ववारणाय समानाधिकरणमसमर्थमित्युक्तत्वात् करोष्यटन् इत्यत्र न दोष इति वाच्यम् । सर्पिः पीयते इत्यादौ षत्वसिद्ध्ये अधात्वभिहितमित्यस्याप्युक्तत्वात् । नच सर्व नाम धातुजमिति दर्शने कालकादावपि तदापत्तिरिति वाच्यम् । क्रियायाः प्रतीतावेव पर्युदासात् । षष्ठ्यामन्त्रितेत्यपेक्षया च तन्निमित्तग्रहणमेव युक्तम् । गोषु स्वामिन्नित्यत्र पराङ्गवद्भावस्यान्यथाऽनुपपत्तेः । नहि गोष्विति षष्ठ्यन्तम् । नापि आमन्त्रि-

ते धातुवाच्या या क्रिया तस्याः कारकं स्वामीश्वराधिपतीति शेषविषये सप्तमीविधानात् । निमित्तत्वस्वत्वस्येव स्वामित्वस्य द्रव्यसापेक्षतया गत्वा तन्निरूपकत्वात् । तेन क्षत्रेणाग्ने स्वायुः संरभस्व, मित्रेणाग्ने मित्रधेये यतस्वेत्यत्र पराङ्गवद्भावः । एवं ऋतेन मित्रावरुणावृतावृधा वृतस्पृशा, क्रतुं बृहन्तमाशाथे इत्यत्र ऋतेनेत्यस्य, अयमग्ने जानतेत्यत्र अर्यामत्यस्य चेत्यवधेयम् ।

स्यादेतत् । मित्रावरुणावित्यस्यापि पराङ्गवद्भावो न स्यात् । ऋतस्य वर्धयितारावित्यर्थेऽन्तर्भावितण्यर्थ वृधेः क्विपि अन्येषामपि दृश्यते इति दीर्घे च ऋतावृधावित्यस्य व्युत्पत्तेः । तत्र च मित्रावरुणयोर्निमित्तत्वाभावात् । न चेष्टापत्तिः । ऋतावृधावित्यस्य निघातानापत्तेः । द्वितीयपादादित्वेनानुदात्तं सर्वमपादादाविति पर्युदासप्रसङ्गात् । अत एव इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोममिति मन्त्रे पूर्वपूर्वामन्त्रितानामविद्यमानवद्भावेऽपि मेशब्दात्परत्वमादाय क्रमाणो निघातो गङ्गे इत्यादित्रयस्यैव भवति नतु शुतुद्रीत्यस्यापि इति स्थितिः । ततश्च पादादित्वे ऽपि पराङ्गवद्भावादामन्त्रितस्य चेत्याद्युदात्तत्वमेव ऋतेनेत्यस्य स्यात् । न च मित्रावरुणावित्यस्य कथं पराङ्गवद्भावः । आमन्त्रितं पूर्वमविद्यमानवदिति तस्याविद्यमानवद्भावादिति वाच्यम् । पूर्वपदोपादानसामर्थ्यात्परस्य कार्य एवाविद्यमानवद्भावातिदेशात्स्वकार्ये पराङ्गवद्भावे तदयोगात् । अत एवाग्ने नयेत्यादौ तिङ्ङतिङ इति निघाताविरहेऽपि आमन्त्रिताद्युदात्तत्वं प्रवर्तते एव ।

यद्वा नामन्त्रिते समानाधिकरणे सामान्यवचनमिति वचनान्न दोषः । मित्रावरुणाविति सामान्यवचनं, तद्विशेषवचनं ऋतावृधाविति पराङ्गवन्न भवतीत्यर्थः । तथा च ऋतेनेत्यस्यैव मित्रा-

वरुणावित्यस्यापि पराङ्गवद्भावो दुर्लभ इति ।

अत्र वेदभाष्यशब्दकौस्तुभादयः । तन्निमित्तग्रहणं न कर्तव्यम् । तथाहि—परस्परान्वयरूपव्यपेक्षालक्षणमत्र सामर्थ्यं ग्राह्यम् । अत एवात्रैतदारम्भः सङ्गच्छते । तथा च ऋतेन मित्रावरुणावृतावृधावित्यत्र कारकाणां क्रियायामेवान्वयादृतेनेत्यस्योत्तरार्धगतेन क्रतुं बृहन्तमाशाथेइत्यत्रत्यकेनाशाथे इत्यनेनान्वयान्मित्रावरुणाभ्यामन्वयो नास्तीति सामर्थ्यविरहान्न पराङ्गवद्भावः । मित्रावरुणावृतावृधावित्यनयोस्तु शाब्दे क्रियान्वयेऽपि पार्ष्णिकपरस्परावच्छेदेनाभेदान्वयात्सामर्थ्यमस्तीति पराङ्गवद्भावसिद्धिः । समानाधिकरणमसमर्थमिति त्वत्रात्यभिहितपरमित्युक्तमेवेति । नचैवं शुतुद्रीत्यस्यापि निघातः स्यात् । सरस्वतिपदस्य पराङ्गवद्भावेनापादादित्वादिति वाच्यम् । सचतेति क्रियायां सर्वेषामन्वयेऽपि परस्परमसामर्थ्याद् । नचैवमेकत्वावरुद्धानां कथं बहुवचनान्तक्रियायामन्वयः तथाचैकत्वान्वयत्वाभावे निघातस्यापि दौर्लभ्यमिति वाच्यम् । प्रत्येकं तथात्वेऽपि मिलितेषु बहुत्वान्वयसम्भवात् । अहं च त्वं च वृत्रहन् सयुज्याव सनिभ्य आ, ।

तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः ।

इत्यादिवेदलोकप्रयोगदर्शनाच्चेत्याहुः ॥

तत्रेद वक्तव्यम् । ऋतस्य वर्धयितारावित्यनेन ऋतवर्धने मित्रावरुणयोर्निमित्तत्वस्य स्पष्टमेव लाभात्तस्य तन्निमित्तत्वं नास्तीत्ययुक्तम् । तद्धर्मावच्छिन्नकार्यताप्रतियोगिककारणतावच्छेदकधर्मवत्त्वस्यापि विवक्षितत्वात् । दिवो दुहितरित्यादावव्याप्तेः । गोषु स्वामिन्नित्यादावव्याप्तेश्च । न च तन्निमित्तग्रहणं विनैवोक्तरीत्या तन्न कर्तव्यमित्यभिप्राय इति वाच्यम् । एकार्थीभावः सामर्थ्यमधिकारश्चेति सिद्धान्तात् । पराङ्गवद्भावे च तन्निमित्त-

ग्रहणान्न दोष इति भाष्यकैयटयोर्व्यवस्थापितत्वात् । व्यपेक्षासामर्थ्यस्यात्र ग्रहीतुमशक्यत्वात् । अङ्गेति किम् । द्वयोः पृथगाद्युदात्तत्वं माभूत् । वदिति किम् । स्वाश्रयमपि यथा स्यात् । आम् कुण्डनाट । आम एकान्तरमामन्त्रितमिति निघातः । स्वर इति किम् । कूपे सिञ्चन्, चर्म नमन्, इत्यत्र षत्वणत्वे प्रति पराङ्गवद्भावो माभूत् । सति हि तस्मिन्नेकपद्यात्सकारस्य पदादित्वाभावात्सात्पदाद्योरिति षत्वनिषेधो न स्यात्, समानपदस्थत्वाण्णत्वं च स्यात् ।

अत्र भाष्यम् । अतिदेशेन स्वाश्रयं पदादित्वं न निवर्त्यते विरोधाभावात् । पूर्वपदात्संज्ञायामेवेति नियमाच्च न णत्वम् । पूर्वपदशब्दस्य समासपूर्वावयवे रूढत्वेऽपि व्याप्तिन्यायेन यौगिकस्यापि पूर्वपदस्य ग्रहणात् । यद्वा आमन्त्रितपदग्रहणात् आमन्त्रितत्वप्रयुक्तकार्य एवायं पराङ्गवद्भाव इति ।

— समानाधिकरणस्योपसंख्यानमनन्तरत्वात् । तीक्ष्णया सूच्या सीव्यन्, तीक्ष्णेन परशुना वृश्चन् । तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपस्थित्या आमन्त्रिते परे विधीयमानस्य पराङ्गवद्भावस्य व्यवहिते प्रवृत्तिविरहादारम्भः । नच परस्पराङ्गवद्भावे कृते पूर्वस्यापि स भविष्यतीति वाच्यम् । स्वर इत्यवधारणेन पराङ्गवद्भावे कर्त्तव्ये पराङ्गवद्भावस्य दुर्लभत्वात् । "छन्दसि परमपि पूर्वस्याङ्गवद्भवती"ति वक्तव्यम् । आ ते पितर्मरुतां सुम्नमेतु । प्रति त्वा दुहितर्दिवः । ऊषा इव दुहितर्दिवः । पितरित्यामन्त्रितनिघातेनानुदात्त, तस्मात्परं मरुतामित्येतदपि अनुदात्तमेव । "अव्ययप्रतिषेधश्च" । उच्चैरधीयान, नीचैरधीयान । "अनव्ययीभावस्ये"ति वक्तव्यम् । उपाग्न्यधीयान । यद्यपि लुङ्मुखस्वरोपचाराः प्रयोजनमिति पूर्वमुक्तं तथापि स्पष्टार्थमिदमुक्तम् ।

# प्राक्कडारात्समासः ॥ ३ ॥

कडाराः कर्मधारये इत्यतः प्राक् समास इत्यधिक्रियते । आदृत्त्या पूर्वं समाससंज्ञा, ततोऽव्ययीभावादिसंज्ञेति संज्ञान्तरव्यापकत्वसिद्धिः । अन्यथा पर्यायेणैव संज्ञाद्वयं स्यात् । उपसर्गकर्मप्रवचनीयसंज्ञावत् ।

स्यादेतत् । समाससंज्ञाया अनवकाशत्वादेव समावेशो भविष्यति । नच विस्पष्टपटुरित्यादौ तदवकाश इति वाच्यम् । विस्पष्टादीनि गुणवचनेषु इति पूर्वपदप्रकृतिस्वरविधानाज्ज्ञापकाद्वृद्धकुमारीवरन्यायेन समाससिद्धेरत्र सह सुपेत्यस्य प्रवृत्त्यनुपयोगात् । तत्रोत्तरपदार्थतावच्छेदके पाटवे व्युत्पत्तिबलाद्विस्पष्टत्वस्यान्वयात्पूर्वपदार्थतावच्छेदकस्योत्तरपदार्थतावच्छेदकस्य चैकधर्मिपरत्वाभावेन कर्मधारयत्वानुपपत्तेः ।

अत एव पठन्ति—

कः समास इति प्रश्ने विस्पष्टपटुगोचरे ॥

समासमात्रं ये ब्रूयुर्विस्पष्टपटवो हि ते ॥

न च काकतालीयं अजाकृपाणीयमित्यत्रावकाशः । अत्रापि समासाच्च तद्विषयादितीवार्थविषयकसमासानुवादेन छप्रत्ययविधानबलादेव समाससिद्ध्या सह सुपेत्यस्यानुपयोगात् । नचेदं बहुव्रीहिरेव काकतालमित्यत्र इवपदार्थस्य प्राधान्यादिति वाच्यम् । मत्वर्थ एव बहुव्रीहेर्विधानात् ।

वस्तुत उपमानशब्दस्यैवोपमेयवृत्तितया इवार्थप्राधान्याभावात् । काकतालशब्दयोः स्वसमवेतक्रियापरत्वेन काकागमनसदृशं चैत्रागमनं, तालपतनसदृशो दस्यूपनिपात इत्येकस्मिन्निवार्थे समासः । पतता तालेन यथा काकस्य वधस्तथा दस्युना चैत्रस्येति

द्वितीये तत्र छात्रत्ययः । तदाह —

यच्चौराणामस्य च समागमो यश्च तैर्वधो ऽस्य कृतः ।
उपनतमेतदकस्मादासीद्वा काकतालीयम् ॥

न च पुनाराजः पुनर्गव इत्यत्रातिनियोगात्रिभागेन तत्पुरुषसंज्ञां विनापि रूपसिद्धेः समाससज्ञा सानकाशेति वाच्यम् । पुनर्गवीति ङीबर्थं टच एव तत्रापेक्षिततेन तत्पुरुषसज्ञाया अवश्यापेक्षणीयतयाऽव्ययं मयूरव्यंसकादिभिरिति वा मयूरव्यंसकादित्वाद्वा तत्पुरुषस्यैव वाच्यत्वात् । न च पुनराधेयमित्यत्र विशेषकार्यादर्शनात्सावकाशा समाससज्ञेति वाच्यम् । गतिकारकोपपदात्कृदिति स्वरार्थं गतिसज्ञावश्यकत्वे कुगतिप्रादय इति तत्पुरुषस्यैव वाच्यत्वात् । यतोऽनाव इति धेयशब्दस्याद्युदात्तत्वात्पुनराधेयशब्दे एकार उदात्तः । अन्यथा समासान्तोदात्तत्वं स्यात् । न च पुनरुत्स्यूतं वासो देयं, पुनर्निःकृतो रथ इत्यत्रकाशः । पुनःशब्दस्य गतिसंज्ञायां थाथादिस्वरेणान्तोदात्तत्वम् । असत्यां तु समासस्वरेणेति विशेषाभावादिति वाच्यम् । गतिसंज्ञायां गतिरनन्तर इत्यनन्तरग्रहणसामर्थ्यात् थाथादिस्वरं बाधित्वा उच्छब्दस्य प्रकृतिस्वरत्वात् । उदात्तपुनःशब्दस्य तु शेषनिघातं बाधित्वा परत्वाद्गतिर्गताविति निघातो भवतीति विशेषसत्त्वात् । न च पुनश्चनसौ च्छन्दसीति तत्सिद्धिः । भाषाया स्वरसिद्धये गतिसंज्ञापेक्षाया आवश्यकत्वात् । नच काठके पुनरुत्स्यूतशब्दोऽन्तोदात्त एव पठ्यते इति वाच्यम् । व्यत्ययेन मयूरव्यंसकादेराकृतिगणत्वाद्वा तत्सिद्धेः । तत्सिद्ध समास इत्येवाधिक्रियतामिति चेत्सत्यम् । एकसंज्ञाधिकारे पर्यायापत्तेरावश्यकत्वात् । यद्यप्यविहितलक्षणः समासः सह सुपेत्यनेन विधीयते इति भाष्ये वक्ष्यते तथाप्यसंयुक्तपाठेन समाससंज्ञायाः सत्त्वार्थत्वं, न्यायव्युत्पादनाय त्वनवकाशव्युत्पादनमिति कैयटः ।

# सह सुपा ॥ ४ ॥

सहेति योगो विभज्यते । सुप आमन्त्रिते इत्यतश्च सुब्ग्रहणानुवृत्तिः । सुबन्तं समर्थेन सह समस्यते । यो जात एव पर्यभूषत् । यः शम्बरमन्वविन्दत् । अनुव्यचलत् । अनुप्राविशत् । सुप्सुपेति पुनर्विधानेन क्वापि गतिङन्तमात्रविषयत्वादस्य नातिप्रसङ्गः । योगविभागस्येष्टसिद्ध्यर्थत्वाच्चेह । सग्मन्वक्रा वृष्णा इन्द्राय भागम् । सुबिति संख्या विवक्षिता । तेन पूर्वं वेः समासः, पश्चाद्नोः । समासे शाकल्यप्रतिषेधाद्यणादेशः । समासान्तोदात्तत्वं तु न भवति । तिङ्ङतिङ इति निघातेन बाधितत्वादिति केचित् ।

अन्ये तु तथा सत्यनोर्गतिर्गताविति निघातः । विशब्द उदात्तः । उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येति स्वरितः । एवं चानुप्राविशदिति भाष्योदाहरणवैयर्थ्यम् । अतः सति शिष्टत्वात्समासान्तोदात्तत्वमेव । न च सुबुत्पत्तिप्रसङ्गः । तिङैकत्वस्योक्तत्वादित्याहुः ।

अपरे तु वचनग्रहणसामर्थ्यादुक्तेष्वप्येकत्वादिषु प्रथमा भवत्येव । न च श्रवणापत्तिः । हल्ङ्यादिलोपसम्भवात् । अत एव कष्टाद्ग्राममनुप्रविश्य देवदत्तेत्यत्राम एकान्तरमामन्त्रितमिति निघातप्रतिषेधः समाससंज्ञायाः प्रयोजनमिति तिङन्तनिघातवादिन इत्याहुः ।

अत्र दीक्षिताः । एवं मतस्वरूपमात्रं लिखद्भ्यां कैयटहरदत्ताभ्यां किं परत्वान्निघात उत सति शिष्टत्वात्समासान्तोदात्तत्वमिति नावधारितम् । किञ्च गतिकारकोपपदादिति उत्तरपदप्रकृतिस्वरत्वं भवति नवेत्यपि विचारयितुमर्हम् । तत्र कृद्ग्रहणस्य वार्तिककृता प्रत्याख्यानात् । किञ्च अनुव्यचलदित्यादौ

यथा तथाऽस्तु । यो जात इत्यादौ तु यद्वृत्तान्नित्यमिति निघातप्रतिषेधात्समासान्तोदात्तत्वं दुर्वारम् । किञ्च सति शिष्टत्वात्समासान्तोदात्तत्वमिति पक्षे अत्यायाहि शश्वतो वयं ते इत्यत्र आङ्उदात्तपाठो न सङ्गच्छते । अपि च निरिणामि इत्यत्र निशब्दे, वितन्वते इत्यत्र विशब्दे च निघातः । समासान्तोदात्तत्वं तु रिणातीत्यत्र नास्ति । तन्वते इत्यत्र त्वस्तीति वैषम्यं दुरुपपादम् । तस्मादिदमत्र तत्त्वम्—

वार्तिकमते तावदाद्य एव पक्षः । कृद्ग्रहणप्रत्याख्यानात् । उदात्तवता गतिमता च तिङा समासो वक्तव्य इति तत्पुरुषाधिकारे तिङ्समासविधानेन गतिसमासस्य तत्पुरुषत्वाभ्युपगमाच्च । वितन्वत इत्यत्र विचक्रादित्वादन्तोदात्तत्वं कल्प्यम् । अत्यायाहीत्यत्र तु तिङ्ङतिङ इति निघाते आङा समासः । उत्तरपदस्योदात्तशून्यतया गतिस्वराभावादव्ययपूर्वपदप्रकृतिस्वरेणाङुदात्तः । ततोऽतिशब्देन समासे कृते कृद्ग्रहणप्रत्याख्यानादुत्तरपदप्रकृतिस्वरेणेष्टसिद्धिः । निरिणातीत्यत्र तु यच्छब्दयोगे निघातनिषेधात्पूर्ववदेवेष्टं सिद्धम् ।

भाष्यमते तु सह सुपेत्यत्र योगविभागेनोक्तसमासविधानात्तत्पुरुषसंज्ञाविरहाद्गतिस्वरस्याव्ययपूर्वपदप्रकृतिस्वरस्य चाभावे समासान्तोदात्तेन वितन्वते इति सिद्धम् । अन्वविन्दत, निरिणातीत्यादौ उत्तरपदप्रकृतिस्वरत्वं तु बाहुलकात्समाधेयमित्याहुः ।

इदं तु इह वक्तव्यम् । कृद्ग्रहणप्रत्याख्याने धातोर्हि द्वये प्रत्यया विधीयन्ते, तिङः कृतश्च, तत्र कृता सह समासो भवति, तिङा च न भवति । तत्रान्तरेण कृद्ग्रहणं कृत एव भविष्यतीति भाष्यकारोक्त्या तिङ्समासे गतिकारकोपपदादिति स्वरो न प्रवर्तते इति गम्यते । तिङ्समासस्य स्वरूपतः सत्त्वेन उक्त-

स्वराभावविशिष्टस्यैव तदभावस्य वाच्यत्वात् अत एव प्रपचतितरामित्यत्र कृद्ग्रहणस्याव्याप्तिरुद्धाविता । अन्यथा प्रपचतीत्यत्रैव तत्कथनप्रसङ्गात् । अपिच उदात्तवता गतिमता च तिङा समासो वक्तव्य इति वार्तिकव्याख्याया यत्परियन्तीति उदात्तवत उदाहरणम् । निपातैर्यद्यदीति निघातप्रतिषेधाद्यन्तीत्यस्य प्रत्ययस्वरेणाद्युदात्तत्वात्परिशब्दस्य यन्तीत्यनेन समासः । अनुव्यचलदिति । पूर्वं परत्वात्तिङ्ङतिङ इति निघातः । तत उदात्तत्वाभावाद्गतिमतेति पृथगुक्तम् । तत्र त्रयाणा पदानां समासान्तोदात्तत्वं भवति । तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्या इति पूर्वपदप्रकृतिस्वरत्व तु न भवति । गतिर्गतावित्यनोरनुदात्तत्वात् । तत्र चोदात्तस्वरितग्रहणानुवर्तनात् । विशब्दस्य पूर्वपदत्वाभावादिति तावत्कैयटेनैव व्याख्यातम् । तथा च समासान्तोदात्तत्वं भवत्येनेति स्पष्टमेवोक्तम् ।

इदमप्यवधेयम् । तिङ्समासः छन्दस एव । अन्यथा पर्यभूषदित्यादौ हल्ङ्यादिलोपेन यत्प्रकरोतीत्यादौ नपुंसकत्वाभ्युपगमेन च निर्वाहेऽपि यत्प्रकुरुते इत्यादौ ह्रस्वस्य प्रकुर्वीरन्नित्यादौ न लोपस्य चापत्तेः छान्दसत्वेनैव सुलोपस्य वाच्यत्वात् । तस्मात्काव्यादौ उपसर्गः पृथक् पदमेवेति सिद्धान्तः। "इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्" । उक्तयोगाभ्यां सिद्धसमासानुवादेन विभक्त्यलोपस्वरौ विधीयेते । अयं चानित्यः । उद्बाहुरिव वामन इत्यादेर्जीमूतस्येव भवति प्रतीकमित्यत्र तैत्तिरीये पृथक्पदपाठस्य च दर्शनात् । एतेनेवसमासस्य छान्दसत्वमप्यपास्तम् । इवेन समासे श्रौत्याः समासगतोपमाया आलङ्कारिकैरुदाहृतत्वाच्चेति ।

हरीतकीं भुङ्क्ष्व राजन् मातेव हितकारिणीम् ॥

अद्वैतमप्यनुभवामि करस्थबिल्वतुल्यं शरीरमहिनिर्ल्वयिनीव वीक्षे ॥

इत्यादयः समस्तप्रयोगाः "नह्यस्ति प्रथमान्तेनैवे"त्याद्यनेकमन्यपदार्थे इति सूत्रस्थभाष्यस्वरसता एवेति दीक्षिताः ।

# अव्ययीभावः ॥ ५ ॥

अधिकारोऽयम् । यद्यपि पूर्वपदार्थप्रधानोऽव्ययीभावः । उत्तरपदार्थप्रधानस्तत्पुरुषः । अन्यपदार्थप्रधानो बहुव्रीहिः । उभयपदार्थप्रधानो द्वन्द्व इति प्राचां व्यवहार इहापि महासञ्ज्ञाकरणादाश्रितस्तथापि प्रायिक एव । उन्मत्तगङ्गमित्यव्ययीभावेऽन्यपदार्थस्य, अर्धपिप्पलीति तत्पुरुषे पूर्वपदार्थस्य, द्वित्रा इति बहुव्रीहौ उभयपदार्थस्य च प्राधान्यदर्शनात् । समाहारद्वन्द्व उभयपदार्थप्राधान्यादर्शनाच्च । एकार्थीभावपक्षे पदद्वयस्याप्यनर्थकत्वाच्चेति कैयटादयः ।

# अव्ययं विभक्तिसमीपसमृद्धि-
# व्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्द-
# प्रादुर्भावपश्चाद्यथानुपूर्व्य-
# यौगपद्यसादृश्यसंपत्ति-
# साकल्यान्तवचनेषु ॥ ६ ॥

अत्राव्ययमिति योगं विभज्य अपदिशमिति साधनीयम् ।
क्लीबे ऽन्तरं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम् ।

इत्यमर इति केचित्। तच्चिन्त्यम्। भाष्यादावनुक्तत्वात्। विभक्त्यर्थेऽव्ययीभावः। अव्ययीभावे शरत्प्रभृतिभ्य इति टच्। अव्ययीभावश्चेति क्लीबत्वमिति क्षीरस्वामिना तत्र व्याख्यातत्वात्। दिशोरिदमिति विग्रहस्य दर्शितत्वाच्च। सबन्धस्य चार्थवशान्मध्यरूपस्यैव ग्रहणात्। नन्वत्र विभक्तिपदमधिकरणमात्रपरम्। नचैव विभक्तीति सामान्यनिर्देशवैफल्यम्। परिशिष्टवदधिकरणवदस्यैव ग्रहणापत्तेरिति वाच्यम्। तथा सत्येकमात्राया अधिकत्वात्। मैवम्। अधिकरणमात्रविवक्षाया विभक्तिपदस्थाने ङिग्रहणस्यैव लाघवात्प्रसङ्गात्। नचैवं एकस्यैव लाभापत्तिः, तथात्वे सुङ्सेवाभिधानापत्तेः प्रथमोपस्थितत्वात्। तस्माद्विभक्तिपदोपादानस्वरसादधिकरणादतिरिक्तार्थवृत्तेरप्यव्ययस्य ग्रहणमभिमतमिति न काप्यनुपपत्तिः। तत्रश्च कर्तृकर्मकरणसंप्रदानापादानरूपशक्तिवृत्तेरव्ययस्याप्रसिद्धत्वात्। अधिकरणसंबन्धोभयपरमव्ययमत्र गृह्यते इति सिद्धम्।

यत्तु नारद इत्यबोधीत्यादौ इतिशब्देन कर्माभिधानस्य प्रसिद्धत्वादिति नारदमित्यव्ययीभावो भवत्येव विभक्तिपदस्वारस्यादिति कैश्चिदुक्तम्।

तच्चिन्त्यम्। तस्य कर्मत्वमात्रावृत्तित्वात्। तथाहि—नारदं अबोधि इत्येतज्जन्यबोधापेक्षया नारद इत्यबोधि इत्येतज्जन्यबोधस्य वैलक्षण्यमनुभवसिद्धम्। आद्ये उल्लेख्यज्ञानस्य नारदविशेष्यकत्वं नियमेन गम्यते। नारदत्वप्रकारकत्वं तु औत्सर्गिकम्। धर्मान्तरप्रकारकस्यापि नारदविशेष्यकज्ञानस्य तदुल्लेख्यत्वात्। द्वितीये तु नारदत्वप्रकारकत्वं नियमेन गम्यते, नारदविशेष्यकत्वं तु न तथा। नारदत्वप्रकारके भिन्नविशेष्यकेऽपि बोधे सति तादृशप्रयोगदर्शनात्। तथाच विशेष्यत्वरूपं

एत्र द्विजार्थः सूप इत्यादौ उक्तार्थस्यापि प्रयोगो वक्ष्यते। वि-भक्त्यर्थमात्रवृत्तेरेवाव्ययस्येह ग्रहणम्। वचनग्रहणस्य सामर्थ्या-द्विभक्त्यादिप्रसेकान्वयात्। अन्यथा तद्वैयर्थ्यात्। गृहस्योपरि, ग्रा-मस्य पुर इत्यादीनां त्वधिकरणार्थत्वे ऽपि दिग्देशकालेष्वधिकेषु वर्तमानत्वान्न समासः।

केचित्तु। निपातेनाभिहितत्वात्प्रथमान्तेनायं समासः। य-द्वा षष्ठ्यन्तेनेति मतद्वयमपि परिशिष्टोक्तत्वादङ्गीचक्रुः। तच्चि-न्त्यम्। समस्यमानपदस्य सप्तम्यन्तं विना समासे ऽधिकरणा-र्थकाधिशब्दप्रयोगानुपपत्तेः।

प्राञ्चस्तु हरौ अधिकृत्येति विग्रहमाहुः। तत्र नित्यसमा सत्वे ऽप्यस्वपदविग्रहत्वमक्षतम्। ल्यबन्तस्य समासघटकातिरि-क्तस्य प्रवेशात्। नच समासार्थलेशमप्यबोधयतस्तस्य विग्रहा-न्तर्भावो न युक्त इति वाच्यम्। समासार्थातिरिक्तार्थबोधकत्वे-न विग्रहबहिर्भावे कुम्भं करोति कुम्भकार इत्यपि न स्यात्। अणन्ते वर्तमानत्वसंख्याद्यनवबोधनात्। समासार्थबोधकत्वस्य अधिकं तु(१)प्रविष्टमिति न्यायेनोभयत्र साम्यात्। किञ्चैवं विग्रह-मात्रोच्छेदापत्तिः। तदन्यूनानतिरिक्तार्थबोधकत्वस्य कुत्राप्य-भावात्। चित्रगुरित्यत्र गोनिष्ठसंख्यानवबोधात्, विग्रहे च त-द्बोधात् इति दिक्।

समीपे कृष्णस्य समीपमुपकृष्णम्। अन्वर्थसंज्ञात्वात्सामीप्य-प्राधान्येऽयं, समीपवर्तिप्राधान्ये तु उपदशा इति बहुव्रीहिर्वक्ष्यते। अतो ऽत्र सामीप्यस्य भेदेनान्वयः। तत्र तु समीपवर्तिनो ऽभेदेने-ति विशेषः। नच समया, निकषा, आरादित्यादावतिप्रसङ्गः। तेषामधिकरणत्वविशिष्टसामीप्यपरत्वात्। ग्रामस्य समीपे इति

(१) अधिकं तु प्रविष्टं चेन्न तद्धानिकरं भवेत्॥ इति न्यायस्वरूपम्।

बोधात् । उपकुम्भमित्यादौ सामीप्यस्य घटादिनिष्ठत्वेन गम्यमानत्वात् । तथा च तत्र सामीप्यं देशान्तरे तद्वृत्तित्वं च घटादौ प्रकारः । उपकुम्भमित्यादौ तु कुम्भस्यैव सामीप्यनिरूपकत्वं तद्विशेष्यत्वं चेति विशेषः ।

यत्तु तत्र द्वितीयापञ्चम्योर्विधानसामर्थ्यान्न समास इति तन्न । चैत्रस्य ग्रामं समयेत्यादावसामर्थ्यादसमासे तद्विधेश्चरितार्थत्वात् । नच समासस्य नित्यतया वृत्तस्य विशेषणयोगो नेति चैत्रस्येत्यादेर्नापत्तिः । सविशेषणानां नेत्यस्यापि सत्त्वात् । नचानित्यसमासपरं तदिति वाच्यम् । मानाभावात् । तत्प्रयोगे एकार्थीभावेन समासप्राप्त्यभावाच्च । नच स्थूलस्य कुम्भस्य कार इत्यापत्तिः । कर्मयोगं विना ऽणो ऽसाधुत्वात् । स्थूलं कुम्भकार इत्यस्य चासामर्थ्यात् । अत एव महान्त पुत्रीयति इत्यादेरगमकत्व भाष्ये उक्तम् । व्यपेक्षाया वाक्यएव, एकार्थीभावे वृत्तिरेवेत्यस्य तदर्थत्वात् ।

समृद्धौ मद्राणां समृद्धिः सुमद्रं, मद्राणां विशेष्यत्वे तु कुगतीति तत्पुरुषः । समृद्धा मद्राः सुमद्रा इति ।

व्यृद्धौ दुर्यवनम् । अर्थाभावे तु अभावप्रतियोगिना समासः । इह तु ऋद्धेरभावप्रतियोगित्वं न तु यवनानामिति विशेषः ।

अर्थाभावे निर्मक्षिकम् । अविघ्नम् । संसर्गाभावेऽयं समासस्तस्य समस्यमानपदार्थविरोधित्वात् । भेदस्य तु पदार्थतावच्छेदकेनैव सह विरोधात् ।

यत्तु भूतले घटो नेत्यत्र घटाभावबोधो न भवति । अव्ययीभावस्य नित्यसमासत्वादिति । तन्न । अभावस्य विशेष्यत्व एवाऽव्ययीभावविधानात् । भूतलवृत्त्यभावप्रतियोगी घट इत्यभावप्रकारकप्रतियोगित्वसंसर्गकघटविशेष्यकबोधतात्पर्ये भूतलवृत्ति

त्वाभाववान् घट इति बोधे वा समापासक्तेः । न च भूतलवृत्तिर्घटाभाव इति बोधस्यापि तात्पर्यवशेन नैयायिकैः स्वीकारात्तत्र दोषो दुर्वार इति वाच्यम् । घटत्वावच्छिन्नप्रतियोगिताकप्रकारकाभेदसंसर्गकाभावविशेष्यकबोधे तात्पर्येऽव्ययीभावः । घटत्वावच्छिन्नप्रतियोगितासंसर्गकघटप्रकारकाभावविशेष्यकबोधे तात्पर्ये तु नेति विभागसम्भवात् । न चाघटमित्यत्रोक्तावच्छिन्नप्रतियोगितैव संसर्ग इति वाच्यम् । अर्थाभावपदात्तादृशप्रतियोगिताकप्रकारकबोधस्यैवोत्पत्त्या तदर्थविहिताव्ययीभावस्यापि तदर्थकत्वकल्पनात् । एतेन नानुयाजेष्विति पर्युदासो व्याख्यातः । तत्र ह्येवं निरूपितम् । यजतिषु येयजामहं करोति नानुयाजेष्विति श्रूयते । तत्र संशयः । प्रसज्यप्रतिषेधः, पर्युदासो वेति । तत्र नञोऽनुयाजान्वये नित्यत्वादब्राह्मण इतिवदनुयाजशब्देन समासापत्तिः सामर्थ्याविघातात् ।

वार्तिककारो हि वावचनानर्थक्यमाचक्षाणो नञ्समासस्य नित्यता विग्रहेण सह भिन्नार्थता च मेने । विग्रहसमासयोरेकार्थत्वे हि समासनियमाद्वाक्यनिवृत्तिप्रसङ्गे विभाषावचनमवश्यमाध्येयं स्यात् । इति प्राप्ते सिद्धान्तः । प्रतिषेधस्य प्रसक्तिपूर्वकत्वात्तस्याश्च लोकतोऽनिर्वाहात् । शास्त्रादेव तदङ्गीकारे च प्रसञ्जकप्रतिषेधकयोस्तुल्यबलत्वात्षोडशिन्यायेन विकल्पप्रसङ्गात्पर्युदास एव । सामर्थ्यसत्त्वेऽपि विभाषाधिकारे नञ्समासपाठान्न समासः । समासे विशेषणानन्वयो, वाक्ये तु तदन्वय इति वैषम्येऽपि अर्थभेदाभावेन समासेन वाक्य मा बाधीति तदावश्यकत्वात् । अन्यथा विभाषाधिकारात्प्राग्विहितेनोपकुम्भादिसमासेनापि वाक्यं न बाध्येत । उपपदसमासेन च कुम्भकारादिना । तस्मात्कात्यायनीयं वावचनानर्थक्यं न्यायसूत्रो-

भयविरोधादयुक्तमिति । शब्दचिन्तामणिप्रभृतयोऽप्येवम् ।

यदप्युक्तम् । घटो नास्ति, त्वं नासि, नास्मि अहं इत्यादौ पुरुषव्यवस्था न स्यात् । घटादीनामभावान्वये त्वदादीनां तिङ्सामानाधिकरण्याभावात् । घटाभावस्त्वदभावो मदभावश्चास्तीतिवत् सर्वत्र प्रथमपुरुषापत्तेः । अतोऽसमस्तनञः क्रियान्वय एव युक्त इति । तदप्यसत् । घटो नास्तीत्यत्र स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटत्वमभावे विशेषणम् । यद्वा घटत्वावच्छिन्नप्रतियोगिता घटस्याभावे संसर्गः । घटाभावोऽस्तीत्यत्र तु घटपदं घटत्वावच्छिन्नप्रतियोगिताके लाक्षणिकम् । अभेदश्च तस्याभावे संसर्गः । उभयथाप्यभावस्य विशेष्यत्वात् प्रथमपुरुषः । त्वं नासीत्यत्र वर्तमानाभावप्रतियोगी त्वमिति । त्वदभावोऽस्तीत्यत्र त्वत्प्रतियोगिको वर्तमानोऽभाव इति बोधः । आद्ये प्रतियोगित्वमाख्यातार्थः आश्रयतया त्वंपदार्थे विशेषणमिति युष्मत्सामानाधिकरण्यम् । द्वितीये त्वंपदलक्ष्यस्य त्वत्प्रतियोगिताकस्याभावेऽभेदः संसर्गः । अभावे चाख्यातार्थवर्तमानान्वय इति युष्मत्सामानाधिकरण्याभावः । एवमहं नास्मीत्यादावपि योज्यम् । एतेन वायौ रूपाणामभावोऽस्तीतिवत् रूपाणि न सन्तीत्यत्राप्येकवचनमेव स्यादित्यपि निरस्तम् । आद्ये रूपत्वावच्छिन्नप्रतियोगिताकाभावस्यैक्यादेकवचनम् । द्वितीये वायुवृत्त्यभावप्रतियोगीनि रूपाणीति विशेष्यभूतरूपात्मकप्रतियोगिभेदाद्बहुवचनम्, इत्यास्तामप्रस्तुतमेतत् । एतेनामावास्यायां श्राद्धं कुर्वीत, रात्रौ श्राद्धं न कुर्वीतेतिस्मृतिवाक्येऽपि पर्युदासो व्याख्यातः ।

यत्तु तत्र निषेधवाक्ये कुर्वीतपदवैयर्थ्यं दीधितिकृतोक्तम् । तन्न । प्रकरणाधारवाक्यार्थसम्बन्धिनि लक्षणाभ्युपगमाद्वाक्यान्त-

रलक्षणावादीति मैथिलसम्प्रदायः ।

अत्यये हिमस्यात्ययोऽतिहिमम् । तस्य ध्वंसः इत्यर्थः । न चार्थाभावेन सिद्धौ पृथगुपादानं व्यर्थम् । तत्रात्यन्ताभावस्यैवोपादानात् । अत्र चात्ययग्रहणस्यैव प्रमाणत्वात् । तेन प्रागभावार्थे नाव्ययीभावः ।

यत्तु ध्वंसत्वमभावत्वव्याप्यमखण्डमेवेत्यर्थाभावात्पृथगुपादानमिति तन्न । ध्वंसत्वस्याभावत्वाघटितत्वेऽपि ध्वंसस्याभावत्वानपायात् ।

संप्रति इत्यव्ययमधिकरणशक्तिप्रधानम् ।

एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथेत्यमरोक्तेः ।
अधिकरणकारकाक्षिप्ता युजिक्रिया नञा निषिध्यते । अतिनिद्रम् । निद्रा इदानीं न युज्यते इत्यर्थः । अतितैसृकमाच्छादनमिति वृत्तिः । तिसृभावे संज्ञाया कन्युपसंख्यानम् । तिसृका नाम ग्रामः । तत्र भव तैसृकमाच्छादनम् । तच्चातिशीते वा काले उपयोज्यम् । इदानी नोपभोगार्हं तैसृकमाच्छादनमिति तदर्थः । तैसृकपदस्याच्छादनपदसापेक्षत्वे ऽपि गमकत्वात्समास इत्याहुः ।

प्राञ्चस्तु असंप्रतीति सम्प्रत्यभावः अनेनोपभोग्यवस्तुनो यो वर्तमानकालस्तस्यैव निषेधः क्रियते इत्याहुः ॥

ननु अधिकरणस्य निषेधं प्रतियोगित्वेनान्वयो विरुद्धः । भूतले न घट इत्यादौ भूतलस्याभावप्रतियोगित्वानवभासनादिति चेन्न । वस्तुतो ऽधिकरणस्य नाभावप्रतियोगित्व, तज्जन्यबुद्धावधिकरणत्वेन प्रतीयमानस्य वा नाद्यः । अधिकरणस्य केवलान्वयितया घटादेरपि तथात्वानुपपत्तेः । नान्त्यः । कालस्य निषेधप्रतियोगित्वं वदता तस्याधिकरणत्वानुभवानङ्गीकारात् । नचाधिकरणशक्तिप्रधानस्याभावे प्रतियोगित्वेनान्वयो न स्यात्,

भूतलस्य वेति वाच्यम् । तथाभूतस्यापि दिवाशब्दस्य दिवामन्ये इत्यत्राधिकरणशक्तिप्राधान्यमपहाय वृत्तिस्वभावेन कर्मत्वाङ्गीकारात् । तथाचातिनिद्रमित्यस्य निद्रायोग्यकालाभावइत्यर्थः ।

शब्दप्रादुर्भावे इतिहरि । हरिशब्दस्य प्रकाश इत्यर्थः । हरिपदं शब्दस्वरूपपरम् । तस्य प्रकाशार्थेन इतिशब्देन समासः ।

पश्चादर्थे अनुरथम् । रथानां पश्चादित्यर्थः । इह व्यृद्धिपदस्याल्पाच्त्वेन प्रसक्तस्य पूर्वनिपातस्याकरण एतत्समासानित्यत्वज्ञापनार्थम् । अतो वाक्यस्यापि साधुत्वमिति केचित् । समीपाद्यर्थैः शब्दैरतद्धितान्तैः साहचर्यात् तथाविधस्यैवेह ग्रहणम् । अचः परस्मिन्नित्यत्र ततः पश्चादिति, अनेकमन्यपदार्थे इति सूत्रे सर्वपश्चादिति च भाष्यादित्यन्ये ।

योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । अनुरूप रूपस्य योग्यम् । वीप्सायाम् । अर्थमर्थं प्रतीति प्रत्यर्थम् । भाष्यप्रामाण्याद्वाक्यमपि साधु । यद्वा प्रतिशब्दो ऽत्र कर्मप्रवचनीयत्वात् संबन्धस्यावच्छेदकः । वीप्सा तु द्विर्वचनद्योत्या । अतोऽव्ययस्य वीप्सायामप्रवृत्तेर्न समास इति हरदत्तादयः ।

केचित्तु प्रतिशब्दस्य वीप्सायां कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यात्तद्गर्भं वाक्यमपि । नच ग्रामस्य वृक्षं प्रतीत्यत्र समासाप्रसक्त्या तत्रैव द्वितीयाविधानं सावकाशमिति वाच्यम् । समासावश्यकत्वे विशेषणस्यैवानन्वयापत्तेरित्याहुः । हरेः सादृश्यं सहरि । अनुपूर्वस्य भाव आनुपूर्व्यम् । ब्राह्मणादित्वात्ष्यञ् । षित्वान्ङीष् आनुपूर्वीति । अनुज्येष्ठम् । ज्येष्ठक्रमेणेत्यर्थः ।

यौगपद्ये सचक्रम् । सहशब्दस्य समासः । अव्ययीभावे चाकाले इति सभावः ।

सदृशः सख्या ससखि । सक्थिखीति वृत्तिः । अपचि-

तपरिमाणा मृणाली किस्वी । पूर्वं सादृश्यस्य प्राधान्यं अत्र तद्वत इति विशेषः । अन्यथा समृद्धा मद्राः सुमद्रा इतिवद्व्ययार्थप्राधान्याभावे समासो न स्यात् । "सपल्लवं व्यासपराशराभ्यामि"ति नैषधम् । पाणिपक्षे पल्लवसदृशाङ्गिलर्थः । सर्पाचरनुरूपमात्मभावः । सब्रह्मवर्गाणां तेषामनुरूपो ब्रह्मभावः ।

साकल्ये सतृणमभ्यवहरति । न किञ्चित्त्यजति । नतु तृणभक्षणे तात्पर्यम् । अन्तवचने साग्न्यधीते । अग्निशब्दस्तदर्थग्रन्थपरः । तत्पर्यन्तमधीते इत्यर्थः । नच साकल्येन सिद्धिः । यदा यावान्देशोऽध्येतव्यत्वेन परिगृहीतस्तदपेक्षसमाप्तेरन्तशब्देन, सकलापेक्षया च समाप्तेः साकल्यशब्देनोक्तत्वात् । अग्निना सहेति विग्रहः । अन्तत्वं द्योत्यमिति केचित् । अग्निरन्तोऽस्येति । अग्नेरन्तत्वमिति वा विग्रह इत्यन्ये ।

यत्तु सहशब्दस्यान्तवाचकत्वाभावादन्तत्वस्य सुतरामलाभादध्ययनेऽनन्वयाच्च नेदं युक्तमिति तदसत् । द्योत्यार्थेनैव शब्देनाऽस्वपदविग्रहोक्तौ बाधकाभावात् । अतएवान्तत्वस्यापि सुलभत्वात् । अन्तवाचकत्वे हि प्राधान्येनान्तत्वं नोपस्थितमिति शङ्का स्यात् । अध्ययनान्वयस्तु तृतीयान्तविग्रहेऽन्तत्वस्य द्योत्यत्वेऽपि तुल्यः । अध्येतव्यपरिच्छेदकत्वमात्रं त्वत्रापि तुल्यमेवेति दिक् ॥

# यथाऽसादृश्ये ॥ ७ ॥

यथार्थत्वेन सादृश्येन वा प्राप्तस्य पर्युदासार्थम् । सादृश्यभिन्नेऽर्थे यथाशब्दः समस्यते । तेनेह न । यथा हरिस्तथा हरः । नच तथाशब्देन सह हरशब्दस्य समासः स्यादेवेति वाच्यम् । सादृश्यप्रतियोगिना सहैव तद्विधानात् । यथाशब्दार्थस्य सादृश्य-

स्य प्रतियोगित्वसम्बन्धेनान्वयस्य व्युत्पन्नत्वात् । तथाशब्दार्थस्य त्वाश्रयत्वसम्बन्धेनैनान्वय इति वैषम्यात् । नचयथाशक्ति यथाबलमिति सादृश्यरूपप्रकारवाचिथाल्प्रत्ययान्तयथाशब्दस्य समासो न स्यादिति वाच्यम् । अव्युत्पन्नेन सह तदुपपत्तेः ।

## यावदवधारणे ॥८॥

इयत्तापरिच्छेदवृत्ति यावदित्यव्ययं सुपा सह समस्यते । यावादिति तद्धितान्तेनास्वपदविग्रहः । यावदमत्रं ब्राह्मणानामन्त्रयस्व । इहामत्रैर्ब्राह्मणाः परिच्छिद्यन्ते । अमत्रसंख्याकान् ब्राह्मणानित्यर्थः । यद्यपि अमत्रसंख्यया ब्राह्मणाः परिच्छिद्यन्ते तथापि केवलसंख्यायाः परिच्छेदकत्वायोगादमत्रानुरोधाच्च तेषां परिच्छेदकत्वोक्तिः । अवधारणे किम् । यावद्दत्तं तावद् भुक्तम् । कियदिति नावधारयामीत्यर्थः ।

## सुप्प्रतिना मात्रार्थे ॥९॥

अल्पार्थवृत्तिना प्रतिना सह सुबन्तं समस्यते । शाकस्य लेशः शाकप्रति । सूपप्रति । पुनः सुब्ग्रहणस्याव्ययाधिकारनिवृत्तिज्ञापकत्वात् । अन्यथा च स्वरादीनाम् दोषामन्यमहः दिवामन्यारात्रिरिति वृत्तिविषये सत्त्वप्रधानतादर्शनात्तादृशानामेवाव्ययाना प्रतिना समासः स्यात् । मात्रार्थे किम् । वृक्षं प्रति सिञ्चतीत्यादौ माभूत् । न च तत्र कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यान्न समास इति वाच्यम् । षत्वनिवृत्त्यर्थतया तदुपपत्तेः ॥

## अक्षशलाकासंख्याः परिणा ॥१०॥

संख्यायां विशेषस्य ग्रहणम् । अक्षशलाकयोः स्वरूपस्य ।

अक्षशलाकाशब्दौ एकवचनान्तौ । चतुःपर्यन्तसङ्ख्याश्चेत्येते तृतीयान्ताः । कितवव्यवहारे पराजये गम्यमाने विपरीतं वृत्त-मित्यर्थे परिणा सह समस्यन्ते तृतीयान्तत्व वर्तमानक्रियाकर्तृत्वा-न्न्यायसिद्धम् । अन्यद्वाचनिकम् । पञ्चिकाख्यं द्यूतं पञ्चभिरक्षैः शलाकाभिर्वा भवति । तत्र सर्वेषामुत्तानत्वे अवोमुखत्वे वा पात-यितुर्जयो वैषम्ये पराजयः । अक्षेण विपरीतं वृत्तमक्षपरि । शला-कया विपरीतं वृत्तं शलाकापरि । एकेन तथा एकपरि । एवं द्वि-परि त्रिपरि चतुःपरीति । पञ्चानामेकरूप्ये तु जयनियमात्पञ्च-परीति न भवत्येवेत्यवधेयम् ।

# विभाषा ॥ ११ ॥

अधिकारोऽयम्, अत एव पूर्वोक्तानां नित्यसमासत्वम् ।

# अपपरिबहिरञ्चवः पञ्चम्या ॥ १२ ॥

एते पञ्चम्या वा समस्यन्ते । अपहरि संसारः । अपहरेः । एवं परिणा । बहिर्ग्रामम् । बहिर्ग्रामात् । प्राग्ग्रामम् । प्राग् ग्रामात् । परस्परसाहचर्यादपपरी वर्जने इति कर्मप्रवचनीयौ । पञ्चम्य-पाङ्परिभिरिति तद्योगे पञ्चमी । अञ्चतिरप्यव्ययमेव । तत्साह-चर्यात् । तत्राप्यञ्चूत्तरपदेति पञ्चम्येवेति भाष्यम् । पञ्चमीग्रहणं तु बहिर्योगेऽपि षष्ठ्यर्थे पञ्चमीज्ञापनार्थम् । तेन बहिर्योगे चोपसं-ख्यानमिति नारभ्यम् ॥

# आङ्मर्यादाभिविध्योः ॥ १३ ॥

आमुक्ति आमुक्तेर्वा संसारः । आबालं आबालेभ्यो वा हरि-भक्तिः । अत्रार्थग्रहणं शक्यमकर्तुम् । एतयोरेवार्थयोः कर्मप्र-

वचनीयसंज्ञायाः पञ्चम्याश्च विधानात् । आपरमाणोरा च भूगोलमिति तु लेखकप्रमाद । भूगोलकादित्येव पाठो युक्तः । चकारेण समासविच्छेदाद् असमासे च पञ्चम्या आवश्यकत्वादित्याहुः ।

## लक्षणेनाभिप्रती आभिमुख्ये ॥ १४ ॥

आभिमुख्यद्योतकावभिप्रती चिह्नवाचिना सह वा समस्येते । अभिरभागे लक्षणेत्थंभूतेति च कर्मप्रवचनीयत्वाद् द्वितीया । अभ्यग्नि शलभाः पतन्ति । प्रत्यग्नि । लक्ष्यलक्षणभाव आभिमुख्यं चेत्युभयमाभिप्रतिभ्यां द्योत्यम् । लक्षणेन किम् । स्रुघ्नं प्रतिगतः । स्रुघ्नादागतस्तमेव प्रतिगत इत्यर्थः । अतः स्रुघ्नस्य कर्मत्वं न तु लक्षणत्वम् । अभिप्रतिग्रहणाद्येनाग्निस्तेन गत इत्यत्र न । आभिमुख्यग्रहण किम् । अभ्यंका गावः । प्रत्यंकाः । अभिनवः प्रतिनवश्चाङ्को यासां ताः । न चाव्ययार्थप्राधान्यस्यौत्सर्गिकस्यात्राभावादेव नाव्ययीभावप्रसङ्ग इति वाच्यम् । बहुव्रीहिविषयेऽप्यव्ययीभावो भवतीति ज्ञापनार्थत्वात् । तेन द्विमुनि व्याकरणमित्यादिसिद्धिः ।

## अनुर्यत्समया ॥ १५ ॥

यदिति सामान्ये क्लीबत्वम् । यं पदार्थं समया सामीप्यप्रतियोगी यः पदार्थ इति यावत् । तेन लक्षणभूतेनानुर्वा समस्यते । अनुवनमशनिर्गतः । वनस्यानु । वनसामीप्यनिरूपकं अशनिगमनाश्रयदेशोपलक्षणं च । समयेति किम् । वृक्षमनु विद्योतते विद्युत् । वृक्षस्य लक्षणत्वमेव न तु सामीप्यनिरूपकत्वम् । अव्ययं विभक्तिइत्येव सिद्धे विभाषार्थं सूत्रम् ।

## यस्य चायामः ॥१६॥

लक्षणेत्यनुवर्तते । यस्यायामोऽनुना द्योत्यस्तेन लक्षणेनानुर्वा समस्यते । अनुगङ्गं हास्तिनपुरम् । अनुगङ्गं वाराणसी । आयामलक्षणत्वे अनुना द्योत्ये दैर्घ्यस्य उपलक्षिततासम्बन्धेन वाराणस्यामन्वयः । एवं चायामस्यानुशब्दार्थस्य विशेषणत्वेनान्वये लक्षणत्वस्य संसर्गत्वमेव द्योत्यत्वेनोक्तम् । अव्ययार्थस्य भेदसम्बन्धेनापि नामार्थान्वयात् । यदि तूपलक्षितत्वमपि तदर्थः । तदा दैर्घ्यस्यानुशब्दार्थान्तरे उपलक्षितेऽत्र सम्बन्धे तस्य वाराणस्यामभेदेनान्वयः । उद्गायतेति फलितोर्थः ।

## तिष्ठद्गुप्रभृतीनि च ॥ १७ ॥

एतानि निपात्यन्ते । तिष्ठन्ति गावो यत्र स तिष्ठद्गु दोहनकालः । चकार एवकारार्थो वृत्त्यन्तरप्रवेशनिरासार्थः । अथ आतिष्ठद्गु जपन् संध्या पश्चिमामायतीगवमिति भट्टिप्रयोगे पूर्वत्र पञ्चमीलोपपृथक्पदत्वाभ्यां निर्वाहेऽपि द्वितीये कथं निर्वाह इति चेत् अत्राहुः। विजातीयवृत्तिरेव निषिध्यते अव्ययीभावस्तु भवत्येवेति । आयतीगवादिति पाठ इत्यन्ये । खलेयवादीनि प्रथमान्तानि। प्रातिपदिकार्थमात्रादन्यत्र न प्रयोग इत्यर्थः। तिष्ठद्गु वहद्गु। शत्रादेशो निपातनात् । गोस्त्रियोरिति ह्रस्व । आयतीगवम् । शत्रादेशपुंवत्त्वनिषेधसमासान्ताः । खलेयवम् खलेबुसम् । सप्तम्या अलुक् । लूनयवम् । लूयमानयवम् । पूयमानबुसम् । संह्रियमाणयवम् । संह्रियमाणबुसम् । एते कालार्थाः । समभूमि समपदाति । भूमेः समत्वमिति पूर्वपदार्थः प्रधानम् । सममित्युभयत्र मान्तपाठे पूर्वपदे मुमागमो निपात्यः । सम्भूमीत्यादिपाठे अन्त्यलोपः । उ-

क्तार्थे समशब्दस्य वा प्रयोगः । सुषमम् विषमम् । दुःषमम् । निःसमम् अपसमम् । समस्य शोभनत्वम् विगतत्वम् दुष्टत्वम् निर्गतत्वमपगतत्वं चेति विग्रहः । आयतीसमा आयतीसमं शत्रादेशपुंवद्भावनिषेधौ पापसमं पुण्यसमं समासं वत्सरः, प्राह्णं प्रमृगं प्ररथं प्रदक्षिणं प्रगतत्वमह्न इत्यादि विग्रहः । प्रतिगतस्य सङ्गतत्वं सम्प्रति । विपरीतमसम्प्रति । इच्कर्मव्यतिहारे दण्डादण्डि । द्विदण्ड्यादिष्वप्येतस्य विधानात्सोऽप्यव्ययीभावः ।

## पारेमध्ये षष्ठ्या वा ॥ १८ ॥

पारमध्यशब्दौ षष्ठ्यन्तेन सह वा समस्येते । निपातनादेदन्तत्वम् । सप्तम्या अलुका सिद्धेऽपि मध्येगङ्गादानयेत्यादेरसिद्धेः । इह विकल्पान्तरपक्षे षष्ठीतत्पुरुषार्थं महाविभाषयाऽप्यव्ययीभाववाक्ययोरेव सिद्धेः । विकल्पप्रतियोगिनोरन्यतराप्रवृत्तौ अन्यतरस्य प्रवृत्तिनियमात् । विकल्पान्तरसत्त्वे तु सामर्थ्यात्तत्पुरुषसिद्धिः । अत एवान्यत्र महाविभाषयोत्सर्गापवादयोर्विकल्पे अपवादनिर्मुक्तेनोत्सर्गप्रवृत्तिः । तेन पूर्वकायस्येत्येकदेशिसमासाभावपक्षे वाक्यमेव न तु षष्ठीसमासः । दक्षस्यापत्यं दाक्षिरिति इञा निर्मुक्तेऽणभावश्च । अत एवोदश्वितोऽन्यतरस्यामिति विभाषारम्भः ।

## संख्या वंश्येन ॥ १९ ॥

वंशे भवो वंश्यः । स च द्वेधा विद्यया जन्मना च । तदर्थकेन सह संख्या वा समस्यते । द्वौ मुनी पाणिनिकात्यायनौ द्विमुनि व्याकरणस्य त्रिमुनि । जन्मना यथा । एकविंशति भरद्वाजम् । इह

पूर्वपदार्थ उत्तरपदार्थे च समासार्थे वंश्ये विशेषणमित्यन्वयः। द्विमुनि व्याकरणमिति तु विद्यया सह तद्वतामभेदोपचारादिति वृत्तिः। लक्षणेति सूत्रे आभिमुख्यग्रहणाद्व्ययार्थप्राधान्याभावे ऽप्यव्ययीभाव इति दीक्षिताः।

## नदीभिश्च ॥२०॥

नदीभिः संख्या समस्यते। न च द्विरावतीको देश इत्यत्रापि अव्ययीभावः स्याद्विशेषानुपादानेन पूर्वोत्तरपदानिर्देशेन समासविधानाद्विशेषाभावादिति वाच्यम्। अन्यपदार्थे प्रतिषेध इति वार्तिकात्। पूर्वपदार्थप्राधान्याभावेन द्विरावतीक इत्यत्राव्ययीभावानुपपत्तेः। न च सप्तगङ्गमित्यत्रापि न तत्। समाहारपदस्य भावव्युत्पन्नत्वे समूहरूपस्य तस्यान्यपदार्थस्य कर्मप्रत्ययान्तत्वेन समाह्रियमाणपरत्वे च पूर्वपदार्थविशिष्टोत्तरपदार्थस्य प्राधान्यादिति वाच्यम्। प्रक्रान्ते द्विशब्दार्थे धर्मिविशेषाकाङ्क्षायां यमुनेत्युक्ते उत्तरपदार्थं प्रति पूर्वपदार्थस्य विशेष्यत्वात्। यद्वा वृत्तिविषये द्विप्रभृतिशब्दानां द्वित्वादिपरतया यमुनयोर्द्वित्वमित्यस्य समासार्थत्वात्पूर्वपदार्थनिर्वाहः। न च समुदायेनान्यपदार्थावगमात्पूर्वोत्तरपदाभ्यां द्वाभ्यां तद्व्यपदेशात्पूर्वपदार्थप्राधान्यमस्त्येवेति वाच्यम्। अन्वयव्यतिरेकाभ्यां तयोः संख्यानदीविशेषमात्रवाचकत्वावधारणात् समाहारे चायमिष्टः। सप्तगङ्गम्। द्वियमुनम्। स्वरूपस्य पारिभाषिकनद्याश्च नेह ग्रहः। बहुवचनसामर्थ्यात्। सर्वमेकनदीतर इत्यत्र समाहाराभावान्नाव्ययीभावः। अन्यथा नदीपौर्णमास्याग्रहायणीभ्य इति टच् स्यात्। न चाप्यत्रैवसत्र योगविभागेन क्रियमाणे गोदावर्याश्च नद्याश्चेसत्र दुर्वार इति वाच्यम्। प्रयोगदर्शनादेकनदीतरे तदप्रवृत्तेः।

## अन्यपदार्थे च संज्ञायाम् ॥ २१ ॥

अन्यपदार्थवृत्ति सुबन्तं नित्यं समस्यते संज्ञायाम् । उन्मत्तगङ्गं नाम देशः । लोहितगङ्गम् । शनैर्गङ्गम् । अन्येति किम् । कृष्णवेणी, संज्ञायां किं शीघ्रगङ्गो देशः । विभाषाधिकारेऽप्ययं नित्यसमासः । वाक्येन संज्ञानवगमात् ।

---

## तत्पुरुषः ॥ २२ ॥

बहुव्रीहेः प्रागधिकारोऽयम् ।

## द्विगुश्च ॥ २३ ॥

द्विगुरपि तत्पुरुषसंज्ञः । संख्यापूर्वो द्विगुरित्यत्र च कारपाठेन संज्ञासमावेशसिद्धेरिदं व्यर्थमित्युक्तम् । द्विगोस्तत्पुरुषत्वे टडाचौ प्रयोजनम् । पञ्चराजम् । राजाहरिति टच् । तस्य समुदायावयवतया उत्तरपदस्याकारान्तत्वाभावान्न स्त्रीत्वम् । समासार्थोत्तरपदान्ताः समासान्ता इति पक्षे तु पात्रादित्वम् । पञ्चराजीति निर्मूलम् । द्व्यहः । अह्नष्टखोरेवेति टिलोपः । रात्राह्नाहा इति पुंस्त्वम् । पञ्चगवम् । गोरतद्धितलुकीति टच् । प्राग्वन्न स्त्रीत्वम् । द्व्यङ्गुलम् । तत्पुरुषस्याङ्गुलेः संख्याव्ययादेरिति अच् ।

## द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥ २४ ॥

द्वितीयान्तं एतैः सुबन्तैः सह समस्यते स तत्पुरुष इत्यग्रे-

ऽपि बोध्यम् । कृष्णं श्रितः कृष्णश्रितः । दुःखातीतः । कूपप- तितः । न च तानिपततीति इड्विकल्पाद्यस्य विभाषेति निष्ठाया- मिडूनिषेधापात्तः । अस्मादेव निपातनादिट्प्रवृत्तेः । केचित्तु से- सिचीत्यादिना विकल्पितेट्कानां कृतीप्रभृतीनां इडदत्करणं यस्य विभाषेत्यस्य नित्यत्वज्ञापनार्थम् । तेन धावितामभराजाधियेत्या- दिकमपि सिद्धमित्याहुः । ग्रामगतः । तुहिनात्यस्तः । सुखप्राप्तः । सुखापन्नः ।

गमिगम्यादीनामुपसंख्यानम् । ग्रामं गमी ग्रामगमी । ग- मेरिनिरित्यौणादिक इनिः । आङि च णिरिति तु बाहुलकात्के- वलादपि । भविष्यति गम्यादय इति भविष्यदर्थे गत्यर्थकर्म- णीत्यत्र द्वितीयाग्रहणमपवादविषयेऽपि विधानार्थमिति कृद्योगे ऽपि द्वितीया ।

भाष्यमते तु गत्यर्थसूत्रप्रत्याख्यानात्कृद्योगे षष्ठ्येवेष्यत इति तत्पक्षे अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठीनिषेधः ।

तथा विदूराद्रदूरतागमो यथा म गामी तव कालशैलनाम् ।

इति श्रीहर्षः । मधुपिपासुप्रभृतयो गमिगम्यादित्वादिति वामनः । "मधुपिपासुमधुव्रतसेवित मुकुलजालमजृम्भत वीरुधाम्"। ननु श्रितादिभिः सह बहुव्रीहिणैव सिद्धेर्द्वितीयासमासविधि- वैयर्थ्यम् । अर्थभेदाभावात् । नच स्वरे भेदः । अहीने द्विती- येति तत्पुरुषेऽपि पूर्वपदप्रकृतिस्वरस्वविधानात् । अतीतात्यस्तप्रा- प्तापन्नैः सह तु स्वरार्थस्तत्पुरुषो विधेय एव । अतीतात्यस्तयो- रहीन इत्यनेन अनुपसर्ग इति पर्युदासेन च तत्र पूर्वपदप्रकृति- स्वरस्यानिष्टत्वात् । थाथादिस्वरेण तत्रान्तोदात्तसिद्धये तत्पु- रुषस्वरस्यावश्यकत्वात् । नच जातिकालसुखादिभ्योऽनाच्छादना- त् क्तोऽकृतमितप्रतिपन्ना इत्यनेन बहुव्रीहावन्तोदात्तविधानात् ।

जात्यादिभ्यः परेषु श्रितादिषु स्वरे दोषः स्यात् । तत्पुरुषारम्भे हि बहुव्रीहिरन्तोदात्ततरं तत्पुरुषस्य त्वहीनेति पूर्वपदप्रकृतिस्वरस्त्व-मिति द्वैस्वर्यम् । तत्पुरुषानारम्भे तु अन्तोदात्तत्वमेवेति वाच्यम् । वाजात इत्यत्र जातश्रितपतितगत इति श्रितादीनां प्रवेशः कृतः बहुव्रीहावपि स्वरद्वयस्य सुसाधत्वात् । नच स्वरविधौ समासविधौ वा श्रितादीनां प्रवेशे सामर्थ्यमेवेति वाच्यम् । अहीने द्वितीये-त्यस्यानारम्भेण लाघवात् । समासद्वयपुरस्कारेण बहुव्रीहिमात्र-पुरस्कारेण वा द्वैस्वर्ये विशेषाभावात् । नच यत्र बहुव्रीहितत्पु-रुषयोः प्राप्तिस्तत्र तत्पुरुष एवेति ज्ञापनार्थमिदं तेन राजसख इत्येव भवति नतु राजा सखास्येति बहुव्रीहिरपीति वाच्यम् । स्वस्ति सोमसखा पुनरेहि गर्गसख इत्युभयस्यापि इष्टप्रमाणत्वात् ।

अत्र भाष्यकाराः । बहुव्रीहौ शेषाद्विभाषेति कपा भाव्यं न तत्पुरुषे इति त्वन्मते जात्यादावपि रूपभेदापत्तिः । बहुव्रीहा-वेव स्वरद्वयस्वीकारात् । सिद्धान्ते तु तत्र तत्पुरुषेऽहीने द्वितीये-ति पूर्वपदप्रकृतिस्वरो नतु कप् । बहुव्रीहौ तु कबस्ति नतु पूर्व-पदप्रकृतिस्वरः, अन्तोदात्तवचनादिति विशेषः ।

## स्वयं क्तेन ॥ २५ ॥

सुबन्तं स्वयमित्येतत् क्तान्तप्रकृतिकं यत्सुप् तदन्तेन समस्यते । द्वितीयायास्तु नेह सम्बन्धः । कर्त्रर्थत्वात् । स्वयं कृत-मित्यैकपद्यात्समासान्तरप्रवेशः । आम एकान्तरमिति निघात-निषेधः । स्वयं कृतस्यापत्य स्वायंकृतिरिति तद्धितश्च ॥

## खट्वा क्षेपे ॥ २६ ॥

खट्वेति द्वितीयान्तं क्तान्तेन सुबन्तेन समस्यते निन्दायाम् ।

खट्वारूढो जाल्मः ।

जाल्मोऽसमीक्ष्यकारी स्यादित्यमरः । समावर्तनोत्तरं खट्वारोहणं विहितम्, तत्पूर्वमेव तदाचरणमित्याक्षिप्तं निषिद्धाचरणमस्य प्रवृत्तिनिमित्तम्, अवयवार्थस्त्वविवक्षितः ।

येन स्यात्कर्मणा रूढः खट्वामनुशयी नरः ।
आदितस्तन्न कर्तव्यमिच्छता भव्यमात्मनः ॥

इत्यादौ वाक्येन निन्दानवगमाद्विभाषाधिकारेऽपि समासस्य नित्यत्वम् ।

# सामि ॥ २७ ॥

सुबन्तमेतत् क्तान्तेन वा समस्यते । सामि त्वर्द्धे जुगुप्सिते इत्यमरः । असत्त्वार्थकत्वान्न द्वितीयान्तत्वम् । सामिकृतम् ।
पूर्वं गाधिसुतेन सामिघटिता मुक्ता तु मन्दाकिनी । इति श्रीहर्षः ।

# कालाः ॥ २८ ॥

द्वितीयान्ताः कालवाचिनः क्तेन सह समस्यन्ते । अनत्यन्तसंयोगार्थं वचनम् । मासं प्रमितः मासप्रमितः प्रतिपच्चन्द्रः । माङ्माने । आदिकर्मणि क्तः । मासं परिच्छेत्तुमारब्धवानित्यर्थः । प्रतिपच्चन्द्रस्य मासेन सह नात्यन्तसंयोगः । प्रतिपद्विशिष्टस्य तिथ्यन्तरचन्द्रे विरहात् ।

# अत्यन्तसंयोगे च ॥ २९ ॥

काला इत्येव । अक्तान्तार्थ आरम्भः । मुहूर्तं सुखं मुहूर्तसुखम् । तद्व्यापीत्यर्थः । कालाध्वनोरत्यन्तसंयोगे द्वितीया ।

# तृतीया तत्कृतार्थेन गुणवचनेन ॥ ३० ॥

तृतीयान्तं स्वार्थनिष्ठजनकत्वप्रतियोगिजन्यत्ववदर्थकेन गुणवचनेन, अर्थशब्देन च सह समस्यते । तत्कृतेति पृथक् । छान्दसस्तृतीयालोपः । तत्पदं तृतीयान्तार्थपरम् । तत्कृतत्वमपि गुणशब्दस्य स्वार्थद्वारकम् । शङ्कुलया खण्डः शङ्कुलाखण्डः । किरिणा काणः किरिकाणः । खडि भेदने । कण निमीलने । घञन्तौ काणखण्डशब्दौ उपचारान्मतुब्लोपाद् वा गुणविशिष्टद्रव्यवाचिनावपि गुणवाचिनौ भवत एव । तन्मात्रवाचकत्वस्याविवक्षणात् । वचनग्रहणसामर्थ्याच्च केवलगुणवाचिनो न ग्रहणम् । घृतेन पाटवमिति । धान्येनार्थो धान्यार्थः । कर्मणि भावे वा घञ् । प्रयोजनं इच्छा तदर्थः । हेतुतृतीयायाः समासः ॥ तत्कृतेति किम् । दध्ना पटुरित्यत्र माभूत् । यदा भुङ्क्ते इतिभोजनापेक्षो दध्नः करणभावः । यदातु विशिष्टद्रव्यसंस्कृतं दध्यपि पाटवं करोति क्रियाकारकभावो विवक्ष्यते तदा भवत्येव समासः । तस्माद्यत्रोत्तरपदे क्रियाया न प्रतीतिस्तत्रापि तत्कृतत्वेन समासः । भोजनादिद्वारके सामर्थ्ये माभूदिति तत्कृतग्रहणम् । एवं कुङ्कुमेन लोहितं मुखमित्यादावपि समासः । गुणेति किम् । गोभिर्वपावान् । गव्यदध्यादिभोजनात्पीनत्वमित्यस्ति तत्कृतत्वम् । नचाय गुणवचनो भवत्येवेति वाच्यम् । केवलगुणबोधकस्य यस्य क्वचिद्गुणविशिष्टद्रव्यबोधकत्वं तस्यैव गुणवचनत्वात् । वपावच्छब्दस्य द्रव्यमात्रवाचित्वात् । गुणश्च सत्त्वे निविशतेऽपैतीति लक्षयिष्यते ।

## पूर्वसदृशसमोनार्थकलह-निपुणमिश्रश्लक्ष्णैः ॥ ३१ ॥

एतैः सह तृतीयान्तं प्राग्वत् । समासविधानादेव ज्ञापकात्पूर्वादियोगे तृतीया । मासेन पूर्वो मासपूर्वः । मात्रासदृशः समो वा । मातृसदृशः । मातृसमः । तुल्यार्थैरिति तृतीया । सदृशग्रहणं च सदृशप्रतिरूपयोः सादृश्य इत्यत्र षष्ठे भाष्यकृद्भिः प्रत्याख्यातम् ।

तथाहि । तुल्यार्थयोगे षष्ठ्यप्यस्ति तत्समासेनैवसिद्धिः । नच तत्पुरुषे तुल्यार्थतृतीयेति पूर्वपदस्य प्रकृतिस्वरार्थमिदं षष्ठीसमासेऽन्तोदात्तत्वापत्तेरिति वाच्यम् । सदृशप्रतिरूपयोः सादृश्ये इत्यनेनैव सिद्धेः । नच तत्रैव सदृशग्रहणमस्त्विति वाच्यम् । षष्ठीसमासपक्षेऽन्तोदात्तत्वं वारयितुं तदावश्यकत्वात् । नचानभिधानात्षष्ठीसमास एव मास्त्विति वाच्यम् । दास्याः सदृश इत्यत्र षष्ठ्या आक्रोशे इत्यलुक्समासस्य भाष्ये उदाहृतत्वात् । नच हेतुतृतीयान्तेन समासार्थमिह सदृशोपादानमिति वाच्यम् तत्कृतत्वादेव सिद्धेः । नच सदृशशब्दस्य केवलगुणवाचकत्वाभावाद्गुणवच्छब्दस्येव तत्समासो न स्यादिति वाच्यम् । षष्ठीसमासेनैव सिद्धिसम्भवादिति ॥ पूर्वसूत्रेऽर्थशब्देन समासस्य व्याख्यातत्वादिहार्थग्रहणं ऊनेन सम्बध्यते नतु पूर्वादिभिः । समशब्दस्य पृथगुपादानात् । माषेणोनं माषोनं कार्षापणम् । माषविकलम् । वाचाकलहो वाक्कलहः । आचारनिपुणः गुडमिश्रः । आचारश्लक्ष्णः । मिश्रग्रहणे सोपसर्गस्यापि ग्रहणम् । गुडसंमिश्राः मिश्रचानुपसर्गमसन्धाविस्यनुपसर्गग्रहणाद्प्येतत्सिद्धम् ।

अनन्तरस्योपसङ्ख्यानम् । मासावरः ।

# कर्तृकरणे कृता बहुलम् ॥३२॥

उभयमध्येऽन्यतरार्था तृतीया कृदन्तेन सह बहुलं समस्यते हरिणा त्रातो हरित्रातः नखैर्भिन्नो नखभिन्न । कृदग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् नखनिर्भिन्नः । अर्थग्रहण किम् । भिक्षाभिरुषितः । हेतावियं तृतीया बहुलग्रहणाच्छतृशानच्क्तवत्वादिभिर्न । हस्तेन कुर्वन्नित्यादि । नचैवं क्तेनेत्येवोच्यतामिति वाच्यम् नखनिर्भेद इत्यादौ घञाद्यन्ते समासानुपपत्तेः । तस्मादव्याप्त्यतिव्याप्तिनिरासार्थं बहुलमित्येव साधु । बहुलग्रहणाद्धि पादाभ्यां हारकः पादहारक इतिअपादानपञ्चम्यापि समासः कर्मणि ण्वुल् एव गलेचोपकः चुपमन्दाया गतौ हेतुमदूण्यन्तात्कर्तरिण्वुल् अमूर्धमस्तकात्स्वाङ्गादित्यलुक् । कृतेति किम् काष्ठैः पचतितरामित्यत्र माभूत ।

# कृत्यैरधिकार्थवचने ॥ ३३ ॥

स्तुतिनिन्दान्यतरतात्पर्यक स्वार्थोतात्पर्यकं अधिकार्थवचनं तत्र कर्तरि करणे च तृतीया कृत्यैः समस्यते । काकपेया नदी पूर्णत्वात्तीरस्थैः काकैरपि पातुंशक्येति स्तुतिः । अल्पतोयत्वात्काकैरपिपेयेतिनिन्दात्रा । क्रियोपादानस्य स्तुतिनिन्दातात्पर्यकत्वेन कर्तृकरणयोर्गौणत्वादप्राप्तः समासो विधीयते इतिकेचित् ।

अन्येतु पूर्वं क्रियाकारकयोरन्वये तदुत्तरं स्तुतिनिन्दयोरवगतिः अर्थवादाधिकरणन्यायात् । अतः प्रपञ्चार्थमेतत् अतएवकाकपीता नदीति अकृत्येनाप्यधिकार्थवचने समासो दृश्यते इत्याहुः

# अन्नेन व्यञ्जनम् ॥ ३४ ॥

संस्कारकद्रव्यवाचि तृतीयान्तं संस्कार्येण सह प्राग्वत्। दध्ना उपसिक्त ओदनो दध्योदनः। इह कारकाणां परस्परानन्वयेऽपि वृत्तावन्तर्भूतयोपसेकक्रियया सामर्थ्यसंपत्तिः। उपसेकं विना द्वयोः संस्कार्यसंस्कारकभावस्य प्रतीयमानस्यानुपपत्तेः। ननु वचनसामर्थ्यादसामर्थ्येऽपि समासोऽस्तु। किं(१)दध्ना ओदनो भुज्यतामित्यादावप्यापत्तेः।

# भक्ष्येण मिश्रीकरणम् ॥३५॥

गुडमिश्रा धानाः गुडधानाः। वृत्तौ मिश्रणक्रियान्तर्भावः। खरविशदमभ्यवहार्यं भक्ष्यम्। खरकठिनम्। विशद विभक्तावयवम्। न चैवं अब्भक्ष्यमित्यादिकथमिति वाच्यम् णिरजन्तस्य भक्षयतेरुक्तार्थतया तत्र गौणत्वेन कर्मण्यणन्तत्वेनवानिर्वाहात्।

# चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥ ३६ ॥

चतुर्थ्यन्तपदवाच्यार्थोद्देश्यक यत्तद्वाचिनाऽर्थादिशब्दैश्च सह चतुर्थ्यन्तं समस्यते तादर्थ्ये इह प्रकृतिविकृतिभाव एव समास इष्टः। बलिरक्षितग्रहणसामर्थ्यात् अन्यथा कुबेराय बलेरपि कुबेरार्थत्वात्तदर्थेत्यनेनैव समासः स्यात् यूपाय दारु यूपदारु कुण्डलाय हिरण्यम् कुण्डलहिरण्यम्। नेह रन्धनाय स्थाली। अश्वघासादयस्तु षष्ठीसमासा इति भाष्यम्। अत्रयूपदारु इत्यादौ

(१) अत्रादर्शपुस्तकद्वयेऽपि खण्डित एव पाठो दृश्यते।

उत्तरपदार्थस्य पूर्वपदार्थोद्देश्यकत्वप्रकारको बोधः अश्व-घासादौ तु अश्वादिसम्बन्धित्वप्रकारकइति विशेषः । अर्थेन नित्यसमासो विशेष्यलिङ्गता च वक्तव्या । द्विजायायं द्विजार्थः सूपः द्विजार्था यवागूः द्विजार्थंपयः। अत्र चतुर्थ्यैव तादर्थ्यस्योक्त्या अर्थशब्दस्य पृथक्प्रयोगासंभवेन नित्यत्वं न्यायसिद्धम् । समासेतु वचनसामार्थ्यादुक्तार्थस्याप्यर्थशब्दस्य प्रयोग इति वैषम्यम् तस्मात् परवल्लिङ्गताबाधाय विशेष्यलिङ्गत्वमात्रं वक्तव्यम् ।

ननु तदर्थं विकृतेः प्रकृताविस्यत्र तदर्थे सर्थविति सूत्रं कार्यम् । तादर्थ्येन चतुर्थ्या आक्षेपः । तस्मै हितमित्यतो वा तद्-नुवृत्तिः चतुर्थीसमर्थात्तदर्थे वाच्ये सर्थप्रत्ययः स्यात । आदिर्ञि-टुडवः, षः प्रत्ययस्येति संहितापाठे षकारद्वयस्य निर्देशो तत्र ष्टु-त्वेन सकारप्रश्लेषात्सकारस्येत्संज्ञा । सितिचेति पदत्वम् । तेन राजार्थं भवदर्थमित्यादौ । नलोपजश्त्वादि । पकारोऽनुदात्तार्थः । तस्मात्प्रकृतेर्यथापूर्वस्वरसिद्धिः । तेनार्थे इति पूर्वपदप्रकृतिस्वरो नारम्भणीयः । प्रत्ययत्वाच्च न पृथक्प्रयोगापत्तिः । तद्धितत्वा-दभिधेयलिङ्गताचेति किमर्थमेतदिति चेन्न । सर्थपः प्रत्ययत्वेऽप्यर्थ-श्चार्थमित्यत्रेगन्तुग्वङ्गः प्रसङ्गात । सकारप्रश्लेषे च मानाभावात् । वुञ्छणादिसूत्रेण सप्तसप्ते तृणसइत्यादावतिव्याप्तेश्च ।

अथ तथापि ब्राह्मणोऽर्थो यस्य स ब्राह्मणार्थ इतिबहुव्रीहि-रस्तु । ब्राह्मणार्थस्य वस्तुनो ब्राह्मणप्रयोज्यत्वात् । नचाद्विजार्थ-पय इत्यादौ पयसः पूर्वसिद्धत्वात्तत्र ब्राह्मणस्य नप्रयोजकत्व-मिति वाच्यम् । क्रियाद्वारा तत्सम्भवात् । एवं च चतुर्थ्यन्तेन विग्रहाभावः । विशेष्यलिङ्गत्वं पूर्वपदप्रकृतिस्वरत्वं चेति सर्वं बहु-व्रीहित्वादेव सिद्धमिति चेन्नैवम् । मद्दर्थमित्यत्रात्वकपोः प्रसङ्गात् ।

स्यादेतत् । तदर्थस्योत्तरपदस्यार्थशब्द आदेशः क्रियताम् । तथाच विग्रहाभावः सर्वलिङ्गता च सिद्धा । नच पदआदिशब्दप्रयोगानुपपत्तिः । आदेशस्य शब्दान्तरसाधारण्येनार्थविशेषाभिव्यक्त्यर्थं तदुपपत्तेः । तथाच तदर्थार्थेति योगविभागः । तदर्थस्योत्तरपदस्यार्थशब्द आदेशो विकल्पेन भवतीत्यर्थः । ततो बलिरक्षितयोरपि विभाषार्थशब्दआदेशः स्यात् । कुबेरार्थो बलिः कुबेरबलिः । पूर्वेण सिद्धौ ज्ञापनार्थमिदम् । प्रकृतिविकृतिभावादन्यत्र नित्योऽर्थादेश इति । रन्धनार्था स्थालीत्येव नतु रन्धनस्थालीति । यूपार्थं दारु यूपदारु इतिचोभयमपि चेन्मैवम् । उदकार्थो वीवध इत्यत्र वीवधशब्दस्यार्थादेशे मन्थौदनेत्यादिना उदकशब्दस्योदादेशासङ्गात् । अतो यथान्यासमेव रम्यम् ॥

## पञ्चमी भयेन ॥ ३७ ॥

पञ्चम्यन्तं भयप्रकृतिकेन सुबन्तेन सह प्राग्वत् । चौरभयम् । भयभीतभीतिभीभिरितिवाच्यम् । वृकभीतः । नेह वृकेभ्यस्त्रासः । पूर्वस्यैव बाहुलकस्याय प्रपञ्चः । तेन ग्रामनिर्गतोऽधर्मजुगुप्सुरित्यादि ॥

## अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ॥ ३८ ॥

एतैः सह पञ्चम्यन्तं अल्पं समस्यते स तत्पुरुषः । बहुलपार्थादित्यत्र मङ्गलामङ्गलवचनमिति वचनेऽपि अस्मादेव निपातेनाच्छस् । सुखापेतः । कल्पनापोढः । चक्रपतितः । स्वर्गपतितः । तरङ्गापत्रस्तः । अप्रातिपदिकत्वार्थकत्वेनाल्पश इत्युक्तेर्नेह । प्रासा-

दाद्पनीतः । बाहुलकस्यैवायं प्रपञ्चः ॥

# स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ३९

अर्थेति पूर्वोक्तविशेषणम् । स्तोकान्मुक्तः । अल्पान्मुक्तः । अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । कृच्छ्रान्मुक्तः । पञ्चम्याः स्तोकादिभ्य इत्यलुक् ।

# सप्तमी शौण्डैः ॥ ४० ॥

बहुवचनाच्छौण्डादिभिरित्यर्थः । छत्रिणो गच्छन्तीत्यादिवद-जहत्स्वार्थलक्षणया शौण्डशब्दस्य तद्घटितधूर्तादिसमुदायपर-त्वात् । अक्षशौण्डः । प्रसक्तिरूपक्रियाया वृत्तावन्तर्भावात्तत्र सप्तम्यर्थान्वयः । अन्तःशब्दस्यात्र पठितस्य योगेऽवयविन आधारत्वविवक्षायां सप्तमी वृक्षे शाखेतिवत् । वनेऽन्तर्वनान्तः । अस्य वैकल्पिकत्वात्पक्षेऽव्ययीभावः । अन्तर्वणम् । प्रनिरन्तरिति णत्वमिति हरदत्तः । अन्तःशब्दार्थव्याचिख्यासायां विभक्ति-मात्रप्रयोगस्यासम्भवात्साधुत्वार्थमेव मध्यशब्दस्य प्रयोगात् । अधिकरणविशिष्टमध्यवाचकस्यास्य विभक्त्यर्थमात्रवृत्तित्वाभावा-न्न तथेति दीक्षिताः । वस्तुतो मध्ये इत्यभिधानेऽपि अधिकरणा-तिरिक्तोऽर्थो नास्त्येवान्तः शब्दस्य अधिकरणमात्रवृत्तिशब्दा-न्तरकल्पने गौरवात् । नच वनेऽन्तरिति स्वपदविग्रहस्यैव तथा-त्वसनुपपत्तिः, तत्पुरुषनिर्मुक्तेऽव्ययीभावस्य प्रसक्तेस्तस्य च नित्यत्वेन वाक्यबाधकत्वादिति वाच्यम् । वने इति सप्तम्या अ-धिकरणातिरिक्तार्थपरत्वस्य विग्रहे वक्तव्यत्वात् । अधिशब्दोऽप्य-त्र पठ्यते तस्य चाधिकरणप्राधान्येऽव्ययीभावः । आधेयप्राधान्ये त्वनेन तत्पुरुषः । अध्युत्तरपदत्वात्खप्रत्ययः । ब्राह्मणाधीनः ।

ब्राह्मणेष्वधि इति विग्रहः । शौण्ड धूर्तः कितव व्याड प्रवीण संवीत अन्तर अधिकरणप्रधान एवायम्, अधि पटु पण्डित कुशल चपल निपुण इत्र शौण्डादिगणो वृत्तः समास इत्यर्थः ।

## सिद्धशुष्कपक्वबन्धैश्च ॥ ४१ ॥

एतैः सप्तमी समस्यते साकाश्यसिद्धः । काम्पिल्यसिद्धः । संकाशेन कम्पिलेन च निर्वृत्तं साकाश्यं काम्पिल्यं वनम् । संकाशादिभ्यो ण्यः तत्र तपसा सिद्ध इत्यर्थः । आतपशुष्कः । स्थालीपक्वः । चक्रबन्धः । चक्रेबन्धः । बन्धे च विभाषेत्यलुक् ।

## ध्वाङ्क्षेण क्षेपे ॥ ४२ ॥

ध्वाङ्क्षवाचिना सह सप्तम्यन्तं समस्यते निन्दायाम् । तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः । तीर्थकाकः । यथा ध्वाङ्क्षस्तीर्थे चिरन्नावतिष्ठते तथाऽन्योऽपि चापलात्कार्येषु अनवस्थितस्तीर्थध्वाङ्क्ष इत्युच्यते । इवार्थो वृत्तावन्तर्भूतः । क्षेपे किम् तीर्थे ध्वांक्षस्तिष्ठति ।

## कृत्यैर्ऋणे ॥ ४३ ॥

ऋणपदमावश्यकोपलक्षणम् । कृत्येति यत्प्रत्ययश्च गृह्यते व्याख्यानात् बहुवचनं तु प्रकृतिभेदाभिप्रायम् मासेदेयमृणम् । पूर्वाह्णेगेयं साम । तत्पुरुषे कृतीत्यलुक् ।

## संज्ञायाम् ॥ ४४ ॥

सप्तम्यन्तं सुपा समस्यते संज्ञायाम् । अरण्येतिलकाः । अरण्येमाषाः । वनेकसेरुकाः । हलदन्तात्सप्तम्याः संज्ञायामित्यलुक् । वाक्येन संज्ञानवगमान्नित्यसमासत्वम् ।

# क्तेनाहोरात्रावयवाः ॥ ४५ ॥

दिनस्य रात्रेश्चावयवाः सप्तम्यन्ताः क्तान्तेन समस्यन्ते । पूर्वाण्हकृतम् । अपराण्हकृतम् । पूर्वरात्रकृतम् । अपररात्रकृतम् । अवयवेति किम् । अह्नि दृष्टम् । रात्रिवृत्तमनुयोक्तुमुद्यतेति बहुलग्रहणादिति केचित् । अधिकरणस्य शेषत्वविवक्षायां षष्ठीसमासो वा ।

# तत्र ॥ ४६ ॥

तत्रेति सप्तम्यन्तं क्तान्तेन सह समस्यते । तत्रभुक्तम् । तत्र कृतम् । यद्यप्यधिकरणार्थस्याभिहितत्वात्तत्र शब्दात्प्रथमैव युक्ता। तथापि तत्रभवानित्यादौ विभक्त्यन्तरेऽपि दर्शनादधिकरणप्रतिपत्तये तत्रशब्दस्यापि सप्तम्यपेक्षितत्वमिति वृत्तिकृतः । दीक्षितास्तु अत्र सप्तम्यधिकारेऽपि अर्थवशात्तद्बाधः । पूर्वपदप्रकृतिस्वरस्याप्यव्ययत्वादेव सिद्धिः । सप्तम्या लोपस्यावश्यकत्वेन विभक्त्यन्तरसाधारण्यस्य तदवस्थत्वाच्चेत्याहुः ॥

# क्षेपे ॥ ४७ ॥

सप्तम्यन्तं क्तान्तेन समस्यते निन्दायाम् । अवतप्तेनकुलस्थितं त एतत् । यथा तप्तप्रदेशे नकुलश्चिरं न तिष्ठति । तथा कार्याण्यारभ्य मध्ये परित्यजन् एवमुच्यते । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणान्नकुलस्थितशब्देन समासः । उदकेविशीर्णम् । प्रवाहेमूत्रितम् । भस्मनिहुतम् । निष्फलमिति यावत् तत्पुरुषे कृति बहुलमित्यलुक् ।

## पात्रेसमितादयश्च ॥४८॥

एते निन्दायां निपात्यन्ते । क्तान्तानां पूर्वेण सिद्धे युक्त्यारोह्यादित्वात्पूर्वपदाद्युदात्तार्थमिह पाठः । तत्र पात्रेसमितादयश्चेत्यन्तर्गणसूत्रात् । पात्रेसमिताः । पात्रेबहुलाः । भोजनसमये एव सङ्गता न तु कार्ये । उदुम्बरमशकः । अल्पसन्तोषेण नान्यदस्तीति मन्यमानः । उदुम्बरकृमिः । कूपकच्छपः । कूपमण्डूकः । कुम्भमण्डूकः । उदपानमण्डूकः । नगरकाकः । नगरवायसः । मातरिपुरुषः । पितरिशूरः अन्यत्र पौरुषहीनत्वात्, उदुम्बरमशकादिषु उपमयाक्षेपः । मातरिपुरुष इति मातृसेवनेन । पिण्डीशूरादिषु निरीहत्वेऽपि निन्दात्तिः । पिण्डीशूरः । गेहेशूरः गेहेनर्दी । गेहेक्ष्वेडी । गेहेमेही । गेहेविजिती । गेहेव्याडः । गेहेदृप्तः । गेहेधृष्टः । गेहेतृप्तः । आखनिकबकः । आखनिको जलस्रोतःखातः, तत्र यथा बको यत्किञ्चित्प्राप्तं भक्षयति तथाऽन्योऽपीत्यर्थः । गोष्ठेशूरः । गोष्ठेविजिती । गोष्ठेक्ष्वेडी । गोष्ठेपटुः । गोष्ठेपण्डितः । गोष्ठेप्रगल्भः । कर्णेटिरिटिरा । कर्णेचुरुचुरा । आकृतिगणोऽयम् । चकारोऽवधारणार्थः । तेन परमाः पात्रेसमिता इत्येव । न तु समासान्तरम् । परमपात्रेसमिता इति पाठे तु विस्पष्टपटुवत्समासप्रसक्तिरिति कैयटः ।

## पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ॥४९॥

सप्त सुबन्ताः समानाधिकरणेन सुबन्तेन समस्यन्ते । पूर्वकालेत्यर्थस्य, अन्येषां स्वरूपस्य निर्देशः । ससम्बन्धिकत्वेन पूर्वकालस्यापरकालेन समासः । विशेषणमित्येव सिद्धे पूर्वनिपात-

नियमार्थमिदम् । एकशब्दस्य तु अपूर्वविधिरेव । दिक्संख्ये संज्ञायामिति नियमेनान्यत्र तदप्राप्तेः । एतेन दिक्संख्ये इति नियमस्यैकाधिकरणे इति निर्देशादनित्यत्वमिति कैश्चिदुक्तं परास्तम् । पूर्वं स्नातः पश्चादनुलिप्तः स्नातानुलिप्तः । पूर्वोत्तरकालयोरत्र समासार्थत्वं स्नानानन्तरकालीनानुलेपनाश्रय इत्यर्थः स्नानस्य पूर्वत्वप्रतीतिः । एकशाटी, सर्वयाज्ञिकाः । जरत्तार्किकाः । पुराणमीमांसकाः, नवपाठकाः, केवलवैयाकरणाः । समानाधिकरणेन किम् । एकस्याः शौक्ल्यम् । पूरणगुणेति षष्ठीसमासस्याप्यभावः ।

## दिक्संख्ये संज्ञायाम् ॥ ५० ॥

समानाधिकरणेनेत्यापादसमाप्तेरनुवर्तते । संज्ञायामेव समानाधिकरणेन दिक्संख्ययोः समासो नान्यत्र । पूर्वेषुकामशमी । इषुकामशमीशब्देन पूर्वशब्दस्य समासः । ग्रामविशेषसंज्ञेयम् । पञ्चाम्राः । सप्तर्षयः । नेह उत्तरा वृक्षाः । पञ्च ब्राह्मणाः । त्रिवलीत्यादयो मध्यमपदलोपात् । पूर्वसूत्रमित्यादौ दिगर्थत्वाभावात्समासः ॥

इति श्रीसिद्धान्तसुधानिधौ द्वितीयाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥ श्रीः ॥



## तद्धितार्थोत्तरपदसमाहारे च।५१।

तद्धितार्थे विषय उत्तरपदे च परे समाहारे च वाच्ये दिक् संख्ये समानाधिकरणेन समस्येते। एवं च विषयभेदात्सप्तम्यर्थ-भेदो बोध्यः। पूर्वस्यां शालायां भवः पौर्वशालः। तद्धित-विवक्षायां तदुत्पत्तेः पूर्वमेव पूर्वशालाशब्दयोः समासः। ततो दिक्पूर्वपदादसंज्ञायामितिञ आपरशाल इति। एवम् उत्तरपदे पूर्व-शालाप्रियः उभयत्रापि प्रतिपदोक्तत्वासर्वनाम्न इति पुंवद्भावः पूर्वाशाला प्रिया यस्येतित्रिपदे बहुव्रीहौ कृते प्रियाशब्दे उत्तरपदे पूर्वयोस्तत्पुरुषः! तेन समासान्तोदात्तस्वरेण लशब्दाकार उदात्तः पूर्वभागे तत्पुरुषाभावे तु पूर्वपदप्रकृतिस्वरेण पूर्वपदस्याद्युदात्तत्वं स्यात्। दिक्षु समाहारो नास्त्यनभिधानात्। दिक्शब्दस्यो-दाहरणद्वयमेव। सख्यायाः क्रमेणोदाहरणत्रयम् यथा—षण्णांमातृ-णामपत्यं षाण्मातुरः। पाञ्चनापितिः। अनपत्य इति पर्युदासान्न लुक्। पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः। संस्कृतं भक्षाइत्यण् द्विगोर्लुगनपत्ये इति लुक्। पञ्च गावो धनं यस्य स पञ्चगवधनः पूर्ववत्समासः तेन गोरतद्धितलुकीति टच्।

न च महाविभाषया तत्पुरुषस्य वैकल्पिकत्वात्पक्षे पञ्चगो-धन इति स्यादिति वाच्यम् 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमास वचन'मिति वार्त्तिकारम्भात्। अत एव वाक च त्वक् प्रिये यस्य स वाकत्वचप्रियः। छत्रोपानहप्रियइति त्रिपदबहुव्रीहौ द्वन्द्वा-च्चुदषहान्तादिति नित्यः समासान्तः। इदं च तत्पुरुषांशे न्यायसिद्धम् बहुव्रीहावन्तर्भूतस्य पूर्वपदद्वयस्यैकार्थीभावसत्त्वेन तत्पुरुषस्य दुर्वारत्वात्। महाविभाषया हि सत्येकार्थीभाव समा-सस्य दुर्वारत्वात्। समुदायस्यैकार्थीभावे तदवयवयोस्तदभावस्य

ऽव्याहतत्वात् । तथा च विकल्पे प्राप्ते नित्यत्वविधानमिति प्राचां ग्रन्था असङ्गता एवेति केचित् । तच्चिन्त्यम् त्रयाणां समासे कृते ऽन्यपदार्थोपसंक्रमेण परस्परसंबन्धाभावात् द्वन्द्वतत्पुरुषयोरप्राप्तौ वचनमिति तदुक्तेरेवासङ्गतत्वात्

एकार्थिभावसामर्थ्ये बहुव्रीहिरिति तदवयवयोः पूर्वशालाशब्दयोरप्येकार्थीभाव इत्युक्तौ हि कोऽभिप्रायः पदद्वयस्यैकार्थीभावो वा ! पदद्वयस्यापि वा नाद्यः अन्यपदार्थापेक्षया पदत्रयस्यैकार्थीभावे विवादाभावात् । तेन च पूर्वपदद्वयस्य तत्पुरुषो नित्य इति दुर्घटत्वात् । नान्त्यः । परस्परसबन्धाभावादित्यस्यानुपपत्तेः तदेकार्थीभावस्य वैकल्पिकतया पाक्षिकतत्पुरुषाभावस्य दुर्वारत्वात् ।

ननु यत्र हृत्स्यमात्रे वाक्यप्रयोगस्तत्र महाविभाषाप्रवृत्तिः । इह तु पदत्रयस्य बहुव्रीहौ तद्घटकपदद्वयस्य प्रयोगानुपपत्त्या तत्पुरुषसंज्ञाया अर्थान्नित्यत्वसिद्धिः । अत एव वाक्येन संज्ञानवगमाद्विभाषाधिकारीयस्यापि संज्ञायामित्यादिना विहितस्य समासस्य नित्यत्वं स्वीक्रियते इतिचेत् । सत्यम् इदं तावदत्र भवान् व्याचष्टां किमयं समासः सामर्थ्येऽसामर्थ्ये वा । नाद्यः । परस्परसंबन्धाभावादिति भवदुक्तिव्याघातात् । नान्त्यः सुसूक्ष्मजटकेशेनेत्यादौ अनेकपदे बहुव्रीहौ विशेषणं विशेष्येणेति समासप्रसक्तेर्बहुलवचनात्तत्परिहारस्य च समर्थसूत्रीये भाष्यकैयटग्रन्थे प्रसिद्धत्वात् । सामर्थ्याभावे विशेषणसमासप्रसक्तेः शङ्कितुमप्यशक्यत्वात् । एवं अधिकषाष्टिवर्ष इत्यत्र तद्धितार्थेति तत्पुरुष बाधित्वा परत्वात् संख्ययाव्ययेति बहुव्रीहिप्रसङ्गस्य तत्र शङ्कितत्वाच्च । तद्धितार्थेति तत्पुरुषस्य वचनसामर्थ्यादुत्तरपदे परतः प्रवृत्तावपि संख्ययेत्यादिबहुव्रीहेः प्रवृत्तौ बीजाभावात् द्वित्रा इत्यादौ तस्य

चरितार्थत्वात् ।

वृत्त्यभावे यत्र वाक्यमित्यस्य तु कोऽर्थः । त्रिपदबहुव्रीह्यभावपक्षे वा पूर्वभागे तत्पुरुषाभावे वा ? नाद्यः । पूर्वशालाप्रिया यस्येति वाक्यस्येष्टत्वात् नान्त्यः । पूर्वशालेत्यस्यापीष्टत्वात् वृत्त्यन्तर्गतयोरेव पृथक् प्रयोगो यत्रेतिचेन्न अप्रसिद्धेः । राज्ञ पुरुष इत्यादावपि तदभावात् ! वृत्तिविशिष्टयोः क्वापि वाक्यानन्वयात् वृत्त्युपलक्षितयोस्तत्रापि पार्थक्येन प्रयोगसत्त्वात् । राजपुरुषमानयेत्यादौ वृत्तिवाक्ययोरवान्तरार्थभेदेऽपि प्रधानार्थभेदाभावात् । वृत्त्या वाक्यस्य बोधो माभूत इत्येतदर्थमेव महाविभाषाधिकारः । वृत्तिवाक्ययोः स्वभावादेव व्यवस्थेति सिद्धान्तः ।

तथा च भाष्यम् "इह द्वौ पक्षो वृत्तिश्चावृत्तिश्च, स्वभावतश्च तद्भवति । वाक्यं च वृत्तिश्च तत्र स्वाभाविके वृत्तिविषये नित्यप्रत्यये प्राप्ते वावचनेन किमन्यच्छक्यमभिसम्बन्धुमन्यदतःसंज्ञायाः । नच सज्ञाया भावाभावाविष्येते" इत्यादि । एकार्थीभावसत्त्वे वृत्तेरावश्यकतया तद्विकल्पस्य विधातुमशक्यत्वात्संज्ञाविकल्प एव स्यात् । ततश्च तन्निबन्धनकार्यविकल्पापत्तिरित्यस्यार्थः । यदि त्वत्र सामर्थ्यं विनैव वचनसामर्थ्यात्तत्पुरुषस्तदा तद्विकल्पस्य विधातु शक्यत्वात्प्रकृते एतद्भाष्योपन्यासस्यानवकाशात् ।

मीमांसकास्तु 'पृष्ठस्य युपगद्विभेरेकाहवाद्बृसामत्व'मितिदाशमिकाधिकरणे 'पृष्ठ्यः षडहो बृहद्रथन्तरसामा कार्य'इत्यत्र पूर्वभागे द्वन्द्वगर्भो बहुव्रीहिरुक्तवार्त्तिकादिति पूर्वपक्षयित्वा वार्त्तिकस्य यत्र पूर्वपदे समासान्तप्राप्तिस्तन्मात्रविषयत्वादत्र केवलात्रिपदबहुव्रीहिरतः प्रत्यहं बृहद्रथन्तरयोर्मध्ये यत्किञ्चित्साम न तु द्वयमिति सिद्धान्तयांचक्रुः । तत्र स्वरे विशेषस्य स्पष्टतया समासान्त-

पर्यन्तमाग्रहे बीजाभावादिति दीक्षिताः ।

नचैवं समासद्वयापत्तिरिति वाच्यम् । षडहापेक्षयैव समुच्चयस्य गम्यमानत्वेन प्रत्यहं तदनापत्तेरिति तत्पूर्वपक्ष एवोक्तत्वात्

वस्तुतस्तु भाष्ये समासान्तप्रयुक्तानामेव त्रयाणामुदाहृतत्वात् कैयटेनापि समासान्तप्रयोजकाभावप्रतियोगित्वेनैव तत्र द्वन्द्वतत्पुरुषयोरुक्तत्वात्तन्मात्रविषयकत्वमेव युक्तम् । अत एव कैयटेन जातिरप्राणिनामिति चात्र द्वन्द्वः । इतरेतरयोगद्वन्द्वे तु कार्येणैव भेदः स्यादित्युक्तम्, अन्यथेतरयोगेऽपि स्वरे विशेषः स्यादेवेति तद्ग्रन्थस्यासङ्गतत्वापत्तेरिति विभावनीयम् । समाहारे पञ्चमूली पञ्चकुमारी पञ्चानां मूलानां कुमारीणां च समाहार इति विग्रहः । न तु पञ्चमूलाः समाहृता इति उत्तरपदार्थप्राधान्येन ।

न च कर्मसाधनसमाहाराश्रयणे तदपि सम्यगेवेति वाच्यम् । पञ्चकुमारीत्यत्र उपसर्जनह्रस्वानापत्तेः । समासशास्त्रे प्रथमानिर्दिष्टत्वाभावात् नानाविभक्तिसंबन्धेन नियतविभक्तिकत्वाभावादेकविभक्ति चेत्यनेनापि उपसर्जनसंज्ञानुपपत्तेः ।

न च नपुंसकह्रस्वेन निर्वाहः । पञ्चखट्वीत्यस्य तथाप्यसिद्धेः । या टावन्त इति स्त्रीलिङ्गत्वपक्षे हीदं रूपम् । तत्र च ह्रस्वाभावे द्विगोरत इति ङीप् न स्यात् । सिद्धान्ते तु नानाविभक्तियोगस्य समासार्थसमाहारनिष्ठतया कुमारीपदस्य नित्यं षष्ठ्यन्तत्वादेकविभक्तिचेति उपसर्जनत्वं सिद्धम् ।

न चैकविभक्तावषष्ठ्यन्तवचनमिति वक्ष्यमाणत्वादर्धपिप्पल्यादिवदत्र न तत्प्रवृत्तिरिति वाच्यम् तस्यैकदेशिसमासमात्रपरत्वात्, अत्र च भावसाधनसमाहारशब्दस्थापनपरभाष्यस्यैव प्रमाणत्वात् । एवं द्विगुरेकवचनमित्यस्यारम्भादपि गौरवम् । भाव-

परत्वे तु समाहारस्यैकत्वादेव तत्सिद्धेर्न तदावश्यकमिति लाघवम् ॥

न चैवं पञ्चमूलीमानयेत्यादौ द्रव्यस्यानयनाद्यन्वयानुपपत्तिः, आक्षेपेण तत्संभवात् जातेः पदार्थत्वपक्षे गामानयेत्यादिवत् । द्विगुरेकवचनमित्यस्य तु स नपुंसकमिति वक्ष्यामीत्यारम्भो बोध्यः । स्यादेतत्—समाहारसमूहपदयोरेकार्थकत्वात्समूहस्यापि तद्धितार्थत्वात् तद्धितार्थेत्यनेनैव सिद्धे समाहारग्रहणं व्यर्थम् न चैवं तद्धितश्रवणापत्तिः । द्विगोर्लुगिति लुक्संभवात् ।

नन्वेवं पञ्चमूलीत्यत्रापरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि इति ङीप्प्रतिषेध स्यात्पञ्चभिरश्वैः क्रीता पञ्चाश्वेत्यादिवत्, पञ्चगवं इत्यत्र गोरतद्धितलुकीति पर्युदासाच्च टच् न स्यादिति वाच्यम् । उभयत्रापि न तद्धितलुक्यतद्धितलुकीति अंशमपहाय समाहार इति पठित्वा तस्य च नियमार्थत्वमाश्रित्य सर्वनिर्वाहात् । समाहार एव तद्धितलुकि ङीप्समासान्तौ भवतो नान्यत्रेति । तेन पञ्चानामश्वानां समाहारः पञ्चाश्वी पञ्चगवम् नेह पञ्चाश्वा पञ्चभिर्गोभिः क्रीतः पञ्चगुः । तदेतदुक्तं वार्त्तिककृता समाहारसमूहयोरविशेषात्समाहारग्रहणमनर्थकम् तद्धितार्थकृतत्वादिति । अविशेषादर्थभेदाभावात् शब्दस्वरूपपरतया नैकशेषः ।

अत्र भाष्यम् एवं सति पञ्चकुमारि इत्यत्र लुक्तद्धितलुकीति स्त्रीप्रत्यक्लुगापत्तिः । तस्मात् पृथक्समाहारग्रहणात्समासस्यैव समाहारो वाच्यो न तद्धितस्येति व्याख्यानाच्च तद्धितापत्तिः । अत एव तद्धितार्थ इत्यत्र विषयसप्तमी व्याख्याता, एवं च पाञ्चनापितिरित्यादौ तद्धितोत्पत्तिः । समासेनैव तद्धितार्थोक्तौ तु उक्तार्थत्वात्स न स्यात् । तथा च द्विगोर्लुगिति लुगप्यसंगतः स्यात्तद्बलादेव तद्धितोत्पत्तिव्याख्याने तु गौरवमित्यलं बहुना ।

उत्तरपदेन परिमाणिना द्विगोः समासवचनम् । द्वौ मासौ जा-

तस्य द्विमासजातः त्रिमासजातः । अत्र हि कालाः परिमाणिनेति त्रिपदसमास इष्यते सुप्सुपेत्येकत्वाविवक्षया च न प्राप्नोति इति वार्तिकारम्भः । तत्रैकत्वविवक्षायां चेदमेव लिङ्गम् । तत्र कृते जातशब्दे उत्तरपदे द्विमासशब्दयोस्तद्धितार्थेत्यादिनोत्तरपदनिमित्तको द्विगुः क्रियते । कालान्ते द्विगौ पूर्वपदे प्रकृतिस्वरो यथा स्यात् । व्यह्नजात इति च समासान्तः ।

न च द्वौ मासौ द्विमासं, समाहारद्विगौ पात्रादित्वान्न स्त्रीत्वम्, तज्जातस्येति समास इति वाच्यम् । समासान्तोदात्तत्वेन तकाराकारस्योदात्तत्वप्रसङ्गात् । सर्वत्र मत्वर्थे प्रतिषेध इति वाच्यम् । पञ्च खट्वा अस्या विद्यन्ते इति विग्रहे हि तद्धितार्थेति तत्पुरुष एव स्यान्न बहुव्रीहिः । मत्वर्थे बहुव्रीहिविधानात् तस्य च तद्धितार्थत्वात् ।

न च बहुव्रीहिविधानसामर्थ्यम् । चित्रगुरित्यादौ सावकाशत्वात् । न च तत्रेष्टापत्तिः । आवन्तत्वेन द्विगोरिति ङीपस्तदभावपक्षे च नपुंसकत्वप्रसङ्गात् । एवं पञ्चगुरित्यत्र टच् स्यात् । न च द्विगोर्लुगिति निर्वाहः । प्राग्दीव्यतः इत्यधिकारात् मतुपश्च तद्बहिर्भावात् । तथा च मतुब्लोपार्थं वचनमारम्भणीयमित्येव दोषः । अतद्धितलुकीत्यत एव ङीप्समासान्तयोर्निषेधसिद्धेः भाष्यमते तु त्रिकतः शेषस्य वक्ष्यमाणतया परत्वाद्बहुव्रीहिरिति दिक् ।

# संख्यापूर्वो द्विगुः ॥५२॥

तद्धितार्थ इत्यत्र विहितः सङ्ख्यापूर्वस्तत्पुरुषो द्विगुसंज्ञः स्यात् । तेन पञ्चकपाल इत्यत्र द्विगोरिति व्याख्यातोऽस्य लुक् । पञ्चनावप्रिय इत्यत्र नावो द्विगोरिति टच् समाहारे पञ्चमूलीत्यत्र

द्विगोरिति ङीप्, अव्यवहितपूर्वसूत्रस्यैव ग्रहणादेकभिक्षेत्यत्र तदभावः।

न चैवमेकशाटीत्यत्र द्विगोरिति ङीप् न स्यात् इति वाच्यम्। ङीबन्तशाटीशब्देनैव तत्र समासात् शाटकेत्यत्र कप्रत्ययप्रकृतिभूतशाटशब्दाज्जातिलक्षणो ङीष्। न चैकापूपीति न स्यादिति वाच्यम्। समाहारेत्यत एव सिद्धेः। अनेकविषयकस्य दानस्य संभ्रमस्य वा महत्त्वाद्वा श्रद्धातिशयाद्वा कार्यरामादिना वा एकस्मिन्नपि संभवात् तस्यैव समाहारपदार्थत्वात्। न चैवं पञ्चहोतारो दशहोतार इत्यत्र इगन्ते द्विगाविति पूर्वपदप्रकृतिस्वरो न स्यादिति वाच्यम्। आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानेन तत्संभवात्। अत एव सप्तर्षय इत्यत्र पूर्वपदप्रकृतिस्वरो न भवति, किन्त्वन्तोदात्तत्वमेव। सप्तर्षयस्तपसे ये निषेदुरिति तद्दर्शनात्।

# कुत्सितानि कुत्सनैः ॥५२॥

गणादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात्कुत्स अवक्षेपण इत्यस्माद्वर्तमाने क्तः बहुवचनप्रयोगाच्छब्दस्वरूपपरत्वनिरासः। कुत्स्यमानवाचीनि कुत्साप्रतिपादकशब्दैः सह समस्यन्ते। शब्दप्रवृत्तिनिमित्तकुत्सायामेवायम् विशेष्यस्य पूर्वनिपातार्थं चेदम् वैयाकरणखसूचिः। सूचयतेरिच्चेतीकारप्रत्ययः। प्रतिवादिना पृष्टो यस्तत्प्रसङ्गाविच्छेदाय अहो निर्मलं गगनमित्यादि कथयति, गगनं प्रपश्यति वा स एवमुच्यते तद्विचारासमर्थत्वे तात्पर्यम्। नात्र व्याकरणाध्ययनस्य कुत्सा किन्तु प्रतिभानहीनतायाः। न च तस्याः शब्दप्रवृत्तिनिमित्तत्वं नेतिवाच्यम् प्रतिभानविशेषानुपपादकत्वेनैवाध्ययनस्य कुत्सनोपपत्तेः। याज्ञिककितवः प्रायेण द्रव्या-

र्थित्वात् किं तवास्तीति पृच्छन् द्यूतकारः कितवशब्दार्थः किं तवास्तीति शब्दानुकृतिनिरुक्तदर्शनात् । अत एव सभामेति कितवः पृच्छमान इति श्रुतिरिति दीक्षिताः । एवं याज्ञिकोऽपि दक्षिणामात्रपरत्वादयाज्यमपि यो याजयति स उच्यते । मीमांसकदुर्दुरूढः । दुल उत्क्षेपे । दुरूपूर्व औणादिकः कूटप्रत्ययः । बहुलमन्यत्रापीति णिलोपः । रलयोरैक्यम् 'कस्या चिद्वाचि कौश्चिद्यादि मम निहितं दूषणम् दुर्दुरुढै'रिति प्रयोगात्स्वातन्त्र्येणापि कुत्सनार्थः । प्रवृत्तीति किम् । वैयाकरणो दरिद्र । नात्राऽध्ययनं कुत्स्यते किन्तु धर्मी । दारिद्र्यादि च तन्निमित्तम् ।

# पापाणके कुत्सितैः ॥५३॥

एते कुत्सितैः समस्यन्ते । पूर्वनिपातवैपरीत्यार्थमेतत् । पापनापितः । अणककुलालः । कुत्सित इत्यर्थः ।

# उपमानानि सामान्यवचनैः ५४

यन्निमित्तकं द्वयोःसादृश्यं तद्धर्मवाचिना सह सादृश्यप्रतियोगिवाचिनः शब्दाः समस्यन्ते । घन इव श्यामो घनश्यामः । अत्रोपमेयविशेषणत्वेन यद्यपि श्यामत्वमुपात्तम् । तथापि घनस्य श्यामत्वमर्थगम्यम् । अत एव धर्मविशिष्टद्रव्यवाचकस्योपादानार्थं वचनपदोपादानम् । अत्र घनपदं घनसदृशे लाक्षणिकम् । भूतपूर्वगत्या तु उपमानत्वम् अत एव मृगीव चपलेत्यत्र पुंवत्कर्मधारयेति सामानाधिकरण्यनिमित्तकः पुवद्भाव इति वदन्ति ।

वस्तुतस्तु लक्षणायामपि तत्प्रयुक्तसामानाधिकरण्येन पुंवद्भावे शस्त्रीश्यामेत्यत्रापि स स्यात् । जातेश्चेति निषेधस्याप्युभ-

पत्र साम्यात् । अत एव कैयटेन मृगक्षीरादिवत्स्त्रीत्वाविवक्षयैव पुंवद्भावस्यान्यथा सिद्धिरित्युक्तम् । अरविन्दसुन्दरं मुखमित्यत्रारविन्दपदस्यारविन्दनिरूपितसादृश्यप्रयोजके लक्षणा । तस्याभेदसंसर्गेण सुंदरपदार्थैकदेशे सौन्दर्येऽन्वयः । तथा चारविन्दनिरूपितसादृश्यप्रयोजकसौन्दर्यवदभिन्नं मुखमिति धीरिति केचित् । अरविन्दपदस्यैव लक्षणया सर्वोऽर्थः सुन्दरपदं तात्पर्यग्राहकमित्यन्ये । समुदायस्यैव तादृशविशिष्टार्थपरत्वमित्यन्ये । अत्र सर्वत्रापि समासगतवाचकलुप्तोपमानत्वं आलङ्कारिकसिद्धान्तसिद्धं न स्यादित्यलंकारकौस्तुभे निरूपितमस्माभिः ।

# उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ॥ ५५ ॥

उपमेयं व्याघ्रादिभिरुपमानैः सह समस्यते सादृश्यप्रयोजकसामान्यधर्मस्य यदि प्रयोगो न स्यात् । विशेष्यस्य पूर्वनिपातार्थं सूत्रम् । पुरुषो व्याघ्र इव पुरुषव्याघ्रः । व्याघ्रप्रतियोगिकसादृश्यवान् पुरुष इत्यर्थः । अत एवोपमितसमासे पूर्वपदार्थस्य प्राधान्यम् मुखं चन्द्र इति रूपकसमासे तूत्तरपदार्थस्येत्यालङ्कारिकसंप्रदायः । सामान्येति किम् पुरुषोऽयं व्याघ्र इव शूरः ।

अथ कथं भाष्याब्धिः कातिगम्भीर इति । न चायं मयूरव्यंसकादिसमास एवेति वाच्यम् । प्रकृतभाष्यप्राधान्यभङ्गापत्तेरिति चेत् अत्राहुः । गाम्भीर्यप्रयुक्तं साम्यमिह न विवक्षितम् किन्तु विततदुरवगाहित्वादिप्रयुक्तमेव । तस्य चाप्रयोगात्समासः सुलभ इति । न च सामान्यधर्मसामान्याभाव एव समासविधानमिति वाच्यम् । साम्यप्रयोजकत्वेनाभिमतो यो धर्मस्तदप्रयोग एव तद्विधा-

व्यस्यैव विशेष्यत्वमिति नियमः । गुणस्य द्रव्यपरिच्छेदद्वारे-कक्रियान्वयित्वेन तदपेक्षया वाक्यार्थे द्रव्यस्य प्राधान्यात् ।

अत एव श्वेतं छागमालभेतेति चोदनायां विशिष्टालाभे गुणान्तरावच्छिन्नच्छाग एवालभ्यते । न तु श्वेतावच्छिन्नद्रव्या-न्तरमिति भाष्यकाराः । एवमुत्पलनीलमिति भवत्येवेति प्रल-पितं निर्मूलत्वादुपेक्ष्यम् । विशेषणविशेष्यभावे इच्छाया एव नियामकत्वेऽपि भाष्यकारेण तादृशसमासस्यासाधुत्वोक्तेः । न्यासकारादिभिः साक्षादेवोक्तत्वाच्च । लीलावत्युपायव्याख्या-तारोऽप्येवमेवेति दिक् ।

बहुलग्रहणं किम् । तक्षकः सर्पः । रामो जामदग्न्यः । अर्जु-नः कार्तवीर्य इत्यादौ माभूत् । कृष्णसर्पः लोहितशालिरित्या-दौ च नित्यं स्यात् कार्तवीर्यार्जुन इत्यादौ तु भवत्येव समासः । प्रयोगदर्शनात् । एवं सामान्यविशेषभावस्थले सामान्यस्य विशे-ष्यत्वं विशेषस्य विशेषणत्वमिति तद्व्यवस्था । सामान्यस्य नि-र्विशेषं न सामान्यमिति न्यायेन विशेषाकाङ्क्षायास्तत्रावश्यकत्वात् ।

# पूर्वापरप्रथमचरमजघन्यस-मानमध्यमध्यमवीराश्च ।५७।

एते सुबन्ताः समानाधिकरणेन सुबन्तेन समस्यन्ते । गुण-क्रियाशब्दैः सह समासेऽपि पूर्वादीनां पूर्वनिपातनियमार्थं सूत्रम् । पूर्ववैयाकरणः । अपराध्यापकः इत्यादि । यद्यपि हतः सराज-न्यकमेकवीर इत्यत्र पूर्वकालैकेति बाधित्वा परत्वादस्यैव प्रवृत्त्या वीरैक इति युक्तम् । तथापि पूर्वविप्रतिषेधो बोध्य इति केचित् । बाहुलकात्तदित्यन्ये ॥

# श्रेण्यादय कृतादिभिः ॥५९॥

श्रेण्यादिषु च्व्यर्थवचन कर्तव्यम् । अश्रेणयः श्रेणयः कृताः श्रेणीकृताः । च्व्यन्तस्य तु गतित्वात्कुगतीति नित्यसमासः । श्रेणीकृता इति । एकेन शिल्पेन पण्येन वा ये जीवन्ति तेषां समूहः श्रेणिः । सिद्धानामेव श्रेणीनां न समासः गुणान्तराधाने तु यदा पृथक्स्थितानां श्रेणीकरणं तदा समासः । 'वणिक्पथे पूगकृतानि यत्र' इति माघः । श्रेणी एक पूग कुन्द राशि विशिष्ट निचय निधन इन्द्र देव मुण्ड भूत श्रवण वदान्य अध्यापक अभिरूपक ब्राह्मण क्षत्रिय पटु पण्डित कुशल चपल निपुण कृपण इति श्रेण्यादिः । कृतादिस्त्वाकृतिगणः ।

# क्तेन नञ्विशिष्टेनानञ् ॥६०॥

नञ्मात्राधिकेन क्तान्तेन सहानञ्युक्तं क्तान्तं समस्यते कृतं च तदकृतं च कृताकृतम् । एकस्यैव वस्तुन एकदेशावच्छेदेन कृताकृतत्वोक्तिः । पीतापीतम् । उदितानुदितम् । इत्यादि । अत्रानञ् इत्यत्र बहुव्रीहिः । विशेष्याकाङ्क्षया तृतीयान्तपदोपस्थाप्यं क्तान्तमेव विशेषणानुरोधात् प्रथमान्तत्वेन सम्बध्यते ।

अत्र वार्तिकम्—'अवधारणं नञा चेत् नुडिड्विशिष्टेन न कल्प्येत' । 'अथ चेदधिकविवक्षा कार्यं तुल्यप्रकृतिकेनेति' । अस्यार्थः—विशिष्टशब्दः समयोः सम्प्रधारणविवक्षायां अवधारणविशिष्टे आधिक्ये वर्तते, स्वरूपवर्णनमात्रविवक्षायां तु आधिक्यमात्रे । देवदत्तयज्ञदत्तावाढ्यौ अभिरूपौ देवदत्तस्तु यज्ञदत्तात्स्वाध्यायेन विशिष्ट इत्युक्ते स्वाध्यायेनैवाधि-

कथम् । गुणान्तराणां तु साम्यं कदाचित्प्रतीयते । कदाचित्तु स्वाध्यायाधिक्यमात्रं गम्यते । गुणान्तराणां त्वविवक्षेत्यनुभवात् ।

अत्र च नञ्विशिष्टेति नञ्मात्राधिक्यविवक्षायां यथा प्रकृत्यन्तरे न भवति सिद्धं चाभुक्तं चेति । तथा नुडिड्भ्यां विशिष्टेऽपि न स्यात् । क्लिष्टाक्लिशितम् । उदितानुदितमित्यादौ । अथाऽऽधिक्यमात्रं तदर्थो न तु विशेषान्तरव्यावृत्तिः । तदा यथा नुडिडाधिक्ये भवति तथा प्रकृत्यन्तरेऽपि स्यात् सिद्धं चाभुक्तं चेति । ततश्च समानप्रकृतिकेनेति कर्तव्यम् । अतः अर्थान्तरानापादकविकाराधिक्ये भवत्येव । प्रकृत्यन्तरादौ तु न भवति । छातांछातम् । शाछोरन्यतरस्यामित्यात्वम् । त्राणात्रातमित्यादौ त्वसिद्धत्वान्नत्वस्य भेदकत्वाभावः । कृतप्रतिकृतादीनामुपसंख्यानम् । कृतापकृतम् । मुक्तविमुक्तम् । पीतविपीतम् । गतप्रत्यागतम् । भावे क्तः । गमनोत्तराल्पकालीनप्रत्यागमनेन सहचाराद्गतप्रत्यागते । एवं यातानुयातम् । क्रयाक्रयिका । अल्पार्थे कप्रत्ययान्तः स्वभावात्स्त्री । अन्येषामपीति दीर्घः । द्वितीयस्याल्पपरत्वात्प्रथमक्रयपदस्यार्थान्महाक्रयपरत्वम् । एवं पुटापुटिका । फलाफलिका । मानोन्मानिकेति । शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् । शाकप्रियः पार्थिवः शाकपार्थिवः । आकृतिगणोऽयम् ॥

# सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ॥ ६१ ॥

एते प्रशस्यैः समस्यन्ते । गुणक्रियाशब्दैः समासे सदा-

दिशब्दानां पूर्वनिपातनियमार्थ आरम्भः । मत्पाठकः । महाराजः । यत्तु पुरुषोत्तम इत्यत्र उत्तमश्चासौ पुरुषश्चेति समासे विशेषणत्वादुत्तमशब्दस्य पूर्वनिपातापत्तिरित्युपायग्रन्थमुपादाय कामचारात्पुरुषशब्दस्य पूर्वनिपातसमर्थनाय प्रवर्तन्ते । तदुपेक्ष्यम् । एतद्विरोधात् । पूजेति किम् । उत्कृष्टो गौः । पङ्कादुद्धृत इत्यर्थः । महोदधिरित्यादौ 'विशेषण'मिति समासः । महापापमित्यादौ तु पूज्यमानत्वादनेनैव । उत्तरपदवाच्यतावच्छेदकसमानाधिकरणोत्कर्षस्य प्रशंसार्थत्वात् । स च पापान्तरापेक्षयाऽधिकदुःखजनकत्वमेवेति बोध्यम् ।

## वृन्दारकनागकुञ्जरैः पूज्यमानम् ॥ ६२ ॥

व्याघ्रादेराकृतिगणत्वेन सिद्धे पूज्यमानमेवेति नियमार्थमेतदित्येके । सामान्यप्रयोगेऽपि विध्यर्थमित्यन्ये । वस्तुतः सादृश्ये गम्ये तत् । इदं तु प्राशस्त्यमात्रे गम्ये । गोवृन्दारक इत्यादेः प्राशस्त्यप्रकारकबोधोदयात् । उत्तरपदार्थप्रतियोगिकसादृश्यप्रकारकपूर्वपदार्थविशेष्यकबोधानुदयात् । पूज्यमानमित्यस्य पूजायां गम्यायां समास इत्यर्थः ।

## कतरकतमौ जातिपरिप्रश्ने ॥ ६३ ॥

एतौ समर्थेन समस्येते । कतरकठः । कतमकलापः । 'गोत्रं च चरणैः सहे'ति पारिभाषिकं जातित्वम् । यद्यपि 'वा बहूनां जातिपरिप्रश्ने डतमजि'ति व्युत्पन्नकतमशब्दस्य तन्मात्रविषयत्वात् साहचर्येण कतरशब्दस्यापि तद्विषयकस्य ग्रहणं सिद्धम् ।

तथापि जातिप्रश्नोपादानं कतमशब्दस्यान्यत्रापि साधुत्वज्ञापनार्थम्। अत एव भवतो भवता वा कतरः कतमो वा देवदत्तः इति प्रत्युदाहरन्ति।

## किं क्षेपे ॥ ६४ ॥

किंराजा। यो न रक्षति। 'किमः क्षेपे' इति समासान्तनिषेधः। क्षेपे किम्। को राजा प्रश्नोऽयम्।

## पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयिणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः ॥ ६५ ॥

पोटा स्त्रीपुंसलक्षणेत्यमरः। शास्त्रीयस्त्रीत्वविशिष्टे नपुंसकेऽस्य शक्तिरिति केचित्। स्तनश्मश्रुादियुक्ता स्त्री तथेत्यमरव्याख्यातारः। गृष्टिरेकवारप्रसूता गौः। धेनुरचिरप्रसूता। वशा वन्ध्या। वेहद्गर्भघ्नी। बष्कयिणी तरुणवत्सा। इभपोटा इभयुवतिः। अग्निस्तोकः। उदश्वित्कतिपयम्। गोगृष्टिरित्यादि। 'हयद्विषद्बष्कयिणीपयः सुत'मिति श्रीहर्षः। कठप्रवक्तेत्यादि। न च कठधूर्त इत्यत्र 'कुत्सितानि कुत्सनै'रित्यनेन गतार्थत्वम्। प्रवृत्तिनिमित्तकुत्सायामेव तत्प्रवृत्तेः। अत्र तु धर्मिणः कुत्स्यमानत्वात्। धूर्तबकोबालमत्स्यानामिति तु प्रमाद इत्याहुः। त्रैविद्यतपस्विनोऽपि धूर्तबका एवेति चेदिति कुसुमाञ्जलिप्रयोगे तु बकशब्दस्य

तत्सदृशलक्षणायां निर्धारणसप्तम्या समासो बोध्यः ।

## प्रशंसावचनैश्च ॥ ६६ ॥

वचनग्रहणं यौगिकानां प्रशस्तादीनां विशेषार्थकानां च शुचिप्रभृतीनां स्वार्थभिन्ने प्रयोगात्प्रशंसागमकानां व्याघ्रादिपदानां च निरासेन प्रशंसामात्ररूढशब्दपरिग्रहार्थम् । मतल्लिकामचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनीत्यमरः । एते च नियतलिङ्गाः । अरिर्मघोरैक्षत गोमतल्लिकामिति माघः । एवं गोमचर्चिकेत्यादि । प्रशस्ता गौरित्यर्थः । मतल्लिका प्रशस्ता स्युः प्रकाण्डस्थलभित्तय इति गणरत्नमहोदधिकारोक्तेः 'तस्यैकनागस्य कपोलभित्त्यो'रिति भित्तिशब्दः प्रशंसार्थ इति रघुव्याख्यातारः । प्रशंसावचनपोटायुवतीत्येकयोगसम्भवाद्योगद्वयफलं चिन्त्यमिति केचित् ।

## युवा खलतिपलितवलिनजरतीभिः ॥ ६७ ॥

जरद्भिरिति पाठान्तरम् । आद्यपाठे युवशब्दस्य भिन्नलिङ्गत्वाज्जरतीशब्दसामानाधिकरण्यानुपपत्त्या प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषा युवतिशब्दस्य स्त्रीलिङ्गान्तत्वोपपादकत्वेन ज्ञाप्यते । नचैवमपि अर्थभेदात्सामानाधिकरण्यस्यारोपेणैव वाच्यत्वात्पूर्वमेव तदस्त्विति वाच्यम् । सर्वत्र तदनौचित्येन लक्ष्यानुरोधेन च परिभाषाज्ञापनस्य युक्तत्वात् । श्रमणादिषु स्त्रीलिङ्गानामेव बहूनां पाठात् 'कुमारः श्रमणादिभि'रित्यस्य वा ज्ञापकत्वात् । नच तत्राक्षेपसम्भवात्को विशेष

इति वाच्यम् । अश्वादिभ्यः फञ्विधौ 'पुंसि जाते' इति गणसूत्रे पुंसीत्युक्तेरेव ज्ञापकत्वसम्भवात् । अन्यथा पुल्लिङ्गजातशब्द-निर्देशे लिङ्गान्तरविशिष्टस्य ग्रहणानुपपत्त्यैव तद्वैयर्थ्यात् । वस्तुत एकादेशस्य पूर्वान्तत्वेन ग्रहणात् पुंसीत्यस्य तद्व्यावर्त-कतया सार्थक्यात्पूर्वोक्तमेव युक्तमित्याहुः ।

# कृत्यतुल्याख्या अजात्या ॥६८॥

कृत्यप्रत्ययान्तास्तुल्यार्थाश्चाजात्यर्थेन समस्यन्ते । भोज्यो-ष्णम् । भोज्यलवणम् । तुल्यश्वेतः । सदृशश्वेतः । अजात्येति किम् । भोज्य ओदनः । न च विशेषणसमासः । प्रतिषेधसाम-र्थ्यात् । 'तस्य सत्कृत्यशालिनः' इति भाट्टप्रयोगे सन्महदित्यस्मा-त्परत्वादेतत्प्राप्तावपि षष्ठीसमास इत्याहुः ।

# वर्णो वर्णेन ॥ ६९ ॥

रूपविशेषवाचकशब्दस्तादृशेन समस्यते । कृष्णसारङ्गः । चित्रस्य कृष्णासम्भिन्नस्यापि सम्भवात्कृष्णेति । अव्याप्यवृ-त्तिनानारूपसमाहारश्चित्रमिति पक्षे कृष्णस्यापि तत्र सत्त्वात् । चित्रस्यातिरिक्तत्वमते तु अवयवनिष्ठकृष्णत्वेनैव तत्प्रतीत्युप-पत्त्या तत्र लक्षणा ।

नन्विह तत्कृतत्वादेव सिद्धम् । एवं 'वर्णो वर्णेष्विति पूर्वपद-प्रकृतिस्वरोऽपि न विधेयः । 'तत्पुरुषे तुल्यार्थतृतीये'त्यनेनैव सिद्धेः । मैवम् । शुक्लबभ्रुः कृष्णशुक्ल इत्यादौ तदभावात् । अत एव स्वरसूत्रमपि उभाभ्यां वाच्यम् । कृष्णसारङ्ग इत्यत्र तत्पुरुषेतुल्यार्थतृतीयेति पूर्वपदप्रकृतिस्वरवारणार्थम् । तथा च स्वरसूत्रे वर्णो ऽनेते इत्येवास्तु । नचैवं तृतीया तत्कृतेनेति यत्र

तृतीयान्तस्य वर्णेन समासस्तत्रापि स्यादिति वाच्यम् । प्रतिपदोक्तवर्णसमासस्यैव ग्रहणात् ।

केचित्तु विशेषणसमासेनैवोपपत्त्या इद सूत्रं मास्तु । स्वरसूत्रं यथाश्रुतमेवास्त्वित्याहुः । 'मत्वर्थीयचिकीर्षाया न कर्मधारय' इति वक्तव्यम् । तेन वीरपुरुषवान् ग्राम इत्यादि न स्यात् । किन्तु प्रथमत एव सम्बन्धविवक्षायां वीरपुरुष इति बहुव्रीहिरेव । न्यायलभ्यं चैतदिति भाष्यम् । कर्मधारयोत्तरं हि मत्वर्थीये क्रियमाणे वर्तिपदार्थप्राधान्यमाश्रित्य कर्मधारयः । ततस्तत्पदार्थानामन्यत्र गुणभावमाश्रित्य मत्वर्थीय इति प्रतिपत्तिगौरवम् । पूर्वमेवान्यपदार्थविवक्षायां तु वर्तिपदार्थानां प्रथमतो गुणभाव एवाश्रीययते इति स्वपदार्थप्राधान्याश्रयणाल्लाघवमिति कैयटः ।

केचित्तु बहुव्रीहौ समस्यमानपदद्वयेनैवान्यपदार्थबुद्धिः, कर्मधारये तु मत्वर्थीयसापेक्षेणैवेति शब्दे लाघवम् । विशेष्यस्य पृथक् प्रयोगस्तूभयत्रापि तुल्यः । नचैवं वृक्षवनस्येत्यादावतिप्रसङ्गः । प्रयोगदर्शनात्प्रकृतविषय एव यथोक्तलाघवस्यानादरणादित्याहुः । नचैवं कृष्णसर्पवान् वल्मीकः लोहितशालिमान् ग्राम इत्यादिकं न स्यादिति वाच्यम् । जातिविशेषस्य कर्मधारयमात्रगम्यत्वात् । सर्वशब्दस्य त्वकारान्तैः कर्मधारय इष्टः । तस्माच्च ठनं बाधित्वा इनिरेवेति वक्तव्यम् । सर्वधनी सर्वबीजी सर्वकेशी ।

# कुमारः श्रमणादिभिः ॥७०॥

अत्र स्त्रीलिङ्गान्तत्वेन पठितैः श्रमणादिभिः सह कुमारीशब्दस्य समासः । पुंल्लिङ्गैरध्यापकादिभिस्तूभयथापि । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् । कुमारी श्रमणा—कुमार-

श्रमणा । श्रमणा, प्रव्रजिता, कुलटा, गर्भिणी, तापसी दासी, बन्धकी, अध्यापक, अभिरूपक, पण्डित, पटु, कुशल, चपल, निपुण । उक्तपरिभाषा चानित्या । शक्तिलाङ्गलापमख्याने घटीशब्दस्य घटशब्दात्पृथगुपादानसामर्थ्यात् । तेन महतीप्रिय इत्यत्र 'आन्महत' इत्यात्वम्, द्विषतीताप इत्यत्र 'द्विषत्परयोस्तापेरिति खच् च न भवति । एव मद्रराज्ञीत्यत्र टजपीत्यवधेयम् ।

# चतुष्पादो गर्भिण्या ॥७१॥

मण्डूकप्लुत्या जातिपदस्यानुवृत्तिरिति केचित् । शब्दान्तरसमभिव्याहारव्यतिरेकेणैव तद्बोधनसमर्था अन्तरङ्गत्वाद्गृह्यन्ते । न तु कालक्ष्यादयः तेषां यौगिकानां शब्दान्तरसंनिधानादेव बोधकत्वादित्यन्ये । चतुष्पादृत्तजातिवाची सुबन्तो गर्भिणीशब्देन समस्यते । 'गोगर्भिणीप्रियनवोत्पलमालभारी'ति भवभूतिः । 'इह महिषविषाणव्यस्तपाषाणपीठस्खलनसुलभरोहिद्गर्भिणीभ्रूणहत्या' इतिमुरारिः । जातिः किम् । कालाक्षीगर्भिणी । कालाक्षीपदस्य आधुनिकसंकेतेनैव गवि वृत्तेः । चतुष्पात् किम् । ब्राह्मणी गर्भिणी ।

# मयूरव्यंसकादयश्च ॥ ७२ ॥

एते समुदाया निपात्यन्ते । मयूरश्चासौ व्यंसकश्चेति मयूरव्यंसकः । व्यंसको धूर्तः । एवं मुण्डपर्यन्तानामिति केचित् ।

अन्ये तु मयूर इव व्यंसकः । छात्र इव व्यंसकः । काम्बोज इव मुण्डःइत्युपमितसमासापवादोऽयं समासः । न च वैयर्थ्यम् । 'तत्पुरुषे तुल्यार्थतृतीये'ति पूर्वपदप्रकृतिस्वरबाधनार्थत्वात् । प्रतिपदोक्तोपमानशब्दगर्भितसमासस्यैव तत्र ग्रहणादित्याहुः । छन्दसि

पादगृह्य हस्तगृह्य लङ्गूलगृह्य पुनर्दाय 'पत्माक्षिणः पितरं पादगृह्यः'। अग्निर्होता हस्तगृह्या निनाय । तृतीयमुदाहार्यम् । पुनर्दाय ब्रह्मजायाम् । 'पुनश्चनसौ छन्दसी'ति गतिसंज्ञा तु वार्तिकोक्ता

एहीडादयोऽन्यपदार्थे एहीड इति यस्मिन् कर्मणि तदेहीडम् । एहियवम् । एहि वाणिजेति यस्यां क्रियायां सा एहिवाणिजा, अपेहिवाणिजा । प्रेहिवाणिजा । एहि स्वागतमिति यस्यां सा एहिस्वागता । प्रोह करटमिति यस्यां सा प्रोहकरटा । प्रोहकटा प्रोहकर्दमा । निपातनात्परस्मैपदम् । उद्धरचूडा । आहरबाला । आहरवसना । आहरवनिता । कृन्तविचक्षणेति यस्यां क्रियायां सा कृन्तविचक्षणा । कृन्धिविचक्षणेति पाठान्तरम् । पात्रादुद्धर उत्सृज देहीति यस्या उद्धरोत्सृजा । अमातत्यार्थं वचनम् । उद्धमविधमा । उत्पचनिपचा । उत्पतनिपता । अन्यपदार्थस्य क्रियायाः स्त्रीत्वाट्टाप् । उदक्च अवाक्च उच्चावचम् । उच्चैश्च नीचैश्च उच्चनीचम् । आचितश्चोपचितश्च आचोपचम् । आचपचम् । निश्चितश्च प्रचित च निश्चप्रचम् । न विद्यते किञ्चन यस्य सोऽकिञ्चनः । यत्किञ्चनः । स्नात्वाकालकः । समासान्तोदात्तत्वम् ल्यबभावश्च निपातनात् । अन्तर्भूतक्रियापेक्षं समानकर्तृत्वम् । संपन्न इति प्रतीतेः । पीत्वास्थिरकः । भुक्त्वासुहितः । प्रोष्यपापीयान् । 'राघवः प्रोष्य पापीयान् जहीहि तमकिञ्चन' मिति भाट्टिः । उत्पत्यपाकला । उत्पतनं कृत्वा या पाण्डुर्भवति । हस्तिज्वरः पाकलः । तद्विशेषः कूटपाकलः । 'कलभं कठोर इव कूटपाकल' इति भवभूतिः । गजं वातात्मको हन्यात्तथा वै कूटपाकल इति गजशास्त्रमिति तव्द्याख्यातारः । निपत्यरोहिणी निषद्यश्यामा अपेहिप्रणसा ।

जहि कर्मणा बहुलमाभीक्ष्णे कर्तारं चाभिदधाति। जहीति लो-ण्मध्यमैकवचनान्तम् । तदाभीक्ष्ण्ये गम्ये कर्मणा सह समस्यते बहुलम्। समासेन कर्तरि च गम्यमाने। जहिजोड इति आभीक्ष्ण्येन य आह स जहिजोडः। जहिस्तम्बः उज्जहिस्तम्बः।

आख्यातमाख्यातेन क्रियासातत्ये अश्नीतपिबतेति यत्र सततमभिधीयते साऽश्नीतपिबता । 'अश्नीतपिबतीयन्ती प्रसिता स्मरकर्मणी'ति माघः। पचतभृज्जता खादतमोदता। आहर निवपा। आहरनिः कषा उत्पचनिपचा। भिन्धि लवणमिति यस्यां भिन्धिलवणा। पचलवणा। आकृतिगणोऽयम् । अन्येऽप्यभियुक्तव्यवहाराद्बोध्याः। कुतोऽपि यस्य भयं नास्ति सोऽकुतोभयः। कां दिशं गच्छामीति य आह स कान्दिशीकः । पाठसामर्थ्यादीकण्। द्वितीयाया अलुक् च। कान्दिशीको भयद्रुत इत्यमरः। अहोऽहपुरुष इत्यहकारवानहोपुरुषस्तस्य भाव आहोपुरुषिका मनोज्ञादित्वाद्भावे वुञ् इति कैयटः। कमलकुशलावधाने भानोरहोपुरुषव्रतमिति श्रीहर्षः। अहंशक्तोऽहं शक्त इति यस्यां साऽहमहमिका। यदृच्छ यदृच्छा। एहि रे याहि रे यस्यां सा एहिरेयाहिरा। पाठादात्वम्। उन्मृड्ढि अवमृड्ढि इति यस्यां सा उन्मृजाऽवमृजा। इहैतानयोः साधुत्वम् । अवश्यकार्यम्। अन्यद्वनं वनान्तरम् । अन्तरशब्दो भिन्नार्थः। सचाभेदेन वने विशेषणम्। प्रतियोगित्वमपि पूर्वपदार्थस्यैव भेदे प्रतीयते। वनान्तरं गच्छतीत्यादौ अस्माद्वनाद्भिन्नं वनं गच्छतीति बोधात् 'वनान्तरादुपावृत्तैरि'त्यादौ दर्शनाच्च। तस्मादन्तरशब्दो भिन्नार्थः। वनपदस्य वारद्वयमन्वयः। तद्व्यक्तित्वावच्छिन्नप्रतियोगितासम्बन्धेन भेदे प्रकारत्वम्। विशेषणतावच्छिन्नभेदप्रकारतानिरूप्यविशेष्यत्वं चेत्यवधेयम् । एवं प्रातिपदिकार्थ

एव प्रातिपदिकार्थमात्रम् । मुखमेव चन्द्रो मुखचन्द्रः । रूपकस्थले मयूरव्यंसकादित्वात्समास इति आलङ्कारिकाः । अत्र मुखप्रतियोगिकाभेदवान् चन्द्र इति बोध इति केचित् । मुखनिष्ठाभेदप्रतियोगी चन्द्र इत्यन्ये । एतद्विवेचनं त्वलङ्कारकौस्तुभे स्पष्टम् ।

इति श्रीसिद्धान्तसुधानिधौ द्वितीयस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम् । पादश्च समाप्तः ।

॥ श्रीः ॥

# अथ द्वितीयपादः

## पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ॥ १ ॥

एकत्वसंख्याविशिष्टेनावयविना सह पूर्वादयः समस्यन्ते । पूर्वं कायस्येति पूर्वकायः । अपरस्यार्धे पश्चभावो वक्तव्यः । पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायमिति कालिदासः । षष्ठीसमासव्यावृत्त्यर्थमेतत् । विशेषणसमासेनापि पूर्वकायशब्दसिद्धेः । समुदायवृत्ताः शब्दा अवयवेष्वपीति न्यायात् इत्याहुः ।

न च दिशि दृष्टः शब्दो दिक्शब्द इत्यर्थाद्दिग्वाचकस्यापि पूर्वशब्दस्य योगे अन्यारादिति पञ्चम्या एव युक्तत्वात्षष्ठ्येव कथमिति वाच्यम् । तस्य परमाम्रेडितमिति लिङ्गेन अवयवयोगे षष्ठ्या एवेष्यमाणत्वात् । यत्तु एकदेशिशब्दश्चावयवरूढोऽत एव मत्वर्थीय इत्याहुः । तन्न । एकगोपूर्वादिति ठञ इव न कर्मधारयादित्यस्यापि सौत्रत्वादेव बाधसिद्धेः । न्यायैकदेशिन इत्यादिकं तूभयथापि गौणम् । एकदेशस्वामिनि तु यद्येकदेशिशब्दोऽसाधुस्तदावयवावयविसम्बन्ध एवायं निपात इति कल्प्यम् । एकदेशिनेति किम् । पूर्वं नाभेः कायस्य । नाभेरिति दिग्योगे पञ्चमी । नाभिमपेक्ष्य पूर्वभागः कायसम्बन्धीत्यर्थः । अत्र पूर्वं प्रति नाभेरवधित्वं नत्ववयवित्वमित्यसमासः । कायेन सह तु भवत्येव । नाभेः पूर्वकायः । पूर्वशब्दस्य नित्यसापेक्षत्वात् । एकाधिकरणे-

किम् । पूर्वं छात्राणामामन्त्रयस्व । इह समुदाये षष्ठी । उद्भूतावयवभेदत्वाद्बहुत्वं एकत्वानवच्छिन्नत्वान्न समासः ।

अत्र व्याख्यातारः । सङ्ख्याविसायपूर्वस्येति ज्ञापकेन सर्वस्यैकदेशिवाचिनोऽह्नादेशः । अन्यथा सायपूर्वत्वानुपपत्तेः । अतो मध्याह्नः सायाह्न इत्यादि । ज्ञापकस्य सामान्यापेक्षतया च सर्वाप्यवयववाची कालेन समस्यते इति ज्ञाप्यम् । तेन मध्यरात्रः उपरताः पश्चिमरात्रगोचरादित्यादि सिद्धम् । अहः सर्वैकदेशेत्यादेराह्लोह्न इत्यादेश्चैकदेशिसमासमात्रविषयकत्वेन विशेषणसमासेनोभयत्राप्यनिर्वाहात् । ज्ञापकसिद्धं न सर्वत्रेति न्यायाच्च दिनमध्य इत्यादिसिद्धिरित्याहुः ॥

# अर्धं नपुंसकम् ॥ २ ॥

नित्यक्लीबोऽर्धशब्द एकत्वावच्छिन्नावयविना सह समस्यते । अर्धं पिप्पल्या अर्धपिप्पली । नपुंसकपदं च यत्रार्थे नियमेन नपुंसकत्वं तत्रैव समास इत्यर्थकम् । नचार्धमिति निर्देशादेव तत्सिद्धिः । सूत्रे लिङ्गवचनमतन्त्रमिति ज्ञापनार्थत्वात् । तेन तस्येदमित्यादेर्लिङ्गत्रयेऽपि प्रवृत्तिः । 'भित्तं शकलखण्डे वा पुंस्यर्धोऽर्धं समेंऽशके' इत्यमरः । समांशवाच्यर्धशब्दो नपुंसकमात्रलिङ्ग इत्यर्थः ।

अत्राहुः—वापुंसीत्युभयान्वयी । तत्राद्ययोर्नपुंसकनिर्देशात्पुंस्त्वस्य स्त्रीत्वेन सह विकल्पस्यानुपपत्त्याऽस्त्रियामित्यर्थः । भिन्नलिङ्गानां न द्वन्द्व इति परिभाषितत्वेन खण्डस्य स्त्रीत्वायोगात् । शकलशब्दे च स्त्रीत्वाभावस्य निर्देशादेव निश्चितत्वात् । अर्धशब्दे तु निर्देशात्पुंस्त्वप्रतीत्या वा पुंसीत्यस्याविशेषात्स्त्रीन-

पुंसकपरत्वम् । तथाचार्धशब्दः स्त्रीलिङ्ग इति । तदसत् । अस्त्रि-यामित्यस्य पूर्वं निर्णीतत्वेनोत्तरत्रापि तदर्थस्य न्याय्यत्वात् । शब्दाधिकारस्य बहिरङ्गत्वात् । दैवतानि पुंसिवा । वापुंसि पद्म । पुंसि वा हरिचन्दनम् । इत्यादौ पुंविकल्पे नपुंसकेनैव सह तल्लाभात् । क्लीबत्वस्य निर्देशात्पुंसिवेति स्त्रिया सह विकल्पापत्तेः । नच-तत्र पुंस्त्वतदभावयोर्विधाने तदभावपक्षे निर्दिष्टलिङ्गग्रहणा-त्तथा । अत्र तु निर्देशविशेषविधिभ्यां सिद्धस्य पुंस्त्वस्य विध्यनर्हत्वात्तदभावविधेरविशेषात्तदन्यलिङ्गद्वयसिद्धिरन्यतरमात्र-ग्रहणे बीजाभावात् इति वाच्यम् । पूर्वोत्तरयोर्नपुंसकस्थिति-सत्त्वात् । अन्यत्र तदभावपक्षे एकस्यैव विधानाच्च । त्रिष्वित्य-स्य वक्तव्यत्वापत्तेश्च । यदि स्त्रीत्वमिष्टं तदा प्रमाणान्तरादस्तु अमरग्रन्थस्य तु द्विलिङ्गत्वे एव तात्पर्यम् । अवयववाची त्वभि-धेयवशात्सर्वलिङ्ग इति कैयटः । क्षीरस्वामिनापि निर्देशात्पुंसि-इत्युक्त्वा व्याख्यातम्—वाच्यलिङ्ग इत्येके । यट्टीका'खण्डमात्रवृ-त्तितायामभिधेयलिंग इति' इति दिक् ।

न च विग्रहे नियतविभक्तिकत्वात्पिप्पलीशब्दस्योपसर्जनत-या ह्रस्वापत्तिः । एकविभक्तावषष्ठ्यन्तवचनमिति निषेधात् । एकाधिकरणे किम् अर्धं पिप्पलीनाम् । अर्धपिप्पल्य इति तु कृत-समासानामेकशेषात् । अर्थभेदस्तु स्पष्टः । एकदेशिनेति किम् । अर्धं पशोर्देवदत्तस्य । देवदत्तस्यात्र पशुं प्रति स्वामि-त्वम् । पशुना सह तु भवत्येव समासः पूर्ववत् । नपुंसकं किम् । ग्रामार्धो नगरार्धः ।

भाष्यकारास्त्वेतत्प्रत्याचख्युः । समुदायवृत्तीनां शब्दाना-मवयवेऽपि वृत्तिस्वीकारेणार्धपिप्पलीत्यादेः कर्मधारयादेव सिद्धेः । अन्यथा—अर्धाकारः अर्धजरतीयं अर्धोक्तमर्धविलोकितमित्या-

दौ समविभागविरहादनिर्वाहात् । नच षष्ठीसमासबाधार्थम् । तस्यापीष्टत्वात् इति । प्रेम्णा शरीरार्धहरां हरस्येति कालिदासः । एतेन—

पणार्धक्रीतताम्बूलचर्वणाद्रार्वितानना: ।
अनभ्यासगलल्लाला यान्त्येते वारयात्रिकाः ॥ १ ॥

इत्यादि व्याख्यातम् ।

# द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ॥ ३ ॥

एतान्यवयविना वा समस्यन्ते द्रव्यैक्ये । द्वितीयं भिक्षाया द्वितीयभिक्षा भिक्षाद्वितीयम् । एवमन्यत् । तुरीयस्यापीष्यते इति वृत्तिः । अवयविना किम् । द्वितीयं भिक्षाया भिक्षुकस्य । अत्र स्वामिना भिक्षुकेण समासो माभूत् । द्रव्यैक्ये किम् । द्वितीयं भिक्षाणाम् । नचात्रापि पूर्ववत्कर्मधारयषष्ठीसमासाभ्यां सूत्रवैयर्थ्यम् । पूरणगुणेति षष्ठीसमासनिषेधात् । नच सूत्रारम्भेऽपि तद्दोषसाम्यम् । विभाषाग्रहणसामर्थ्यान्निषेधाप्रवृत्तेः । नच पाक्षिकवाक्यार्थं तत् । महाविभाषयैव तत्सिद्धेः । नच 'पूरणाद्भागे तीयादन्' इति स्वार्थेऽन्प्रत्ययं कृत्वा षष्ठीसमासनिषेधो नास्तीति कल्पयितुं शक्यम् । स्वार्थिकानां प्रकृत्यर्थेनार्थवत्त्वादन्नन्तस्यापि पूरणार्थत्वमिति सिद्धान्तात् । न च पूरणाधिकारविहितत्वमेव पूरणार्थत्वम् । तत्र तदर्थत्वमात्रोपादानात् । नचैवं पूरणादिशब्दानामप्युदात्तानापत्त्या 'कुम्भपूरणभवः पटुरुच्चै'रित्यादेरनुपपत्तिः । पादपूरणमित्यादिनिर्देशेन प्रत्ययानामेव ग्रहणात् । नचैवं षष्ठाष्टमाभ्यां ञ चेति च-

कारेण विहितस्यानोऽपि पूरणत्वेन निषेधप्रवृत्तौ 'तान्युञ्छषष्ठाङ्कितसैकतानि 'इति कालिदासप्रयोगानुपपत्तिः । तस्य ग्रामादिकत्वादिति केचित् । षष्ठशब्दात्तत्करोति तदाचष्टे इत्याख्यानण्यन्तात्पचादित्वादजित्यपरे। उञ्छेषु षष्ठः उञ्छात्मको वा षष्ठः। समुदायवृत्ता इतिन्यायादित्यन्ये ।

# प्राप्तापन्ने च द्वितीयया ॥४॥

प्राप्तो जीविकां प्राप्तजीविकः । एवमापन्नजीविकः । पक्षे द्वितीयाश्रितेति समासः । जीविकाप्राप्तः जीविकापन्नः। नच बहुव्रीहिणा गतार्थत्वम् । समासान्तोदात्तत्वस्यासिद्धेः । प्राप्तसुखं इत्यादौ जातिकालसुखादिभ्य इति निष्ठायाः परनिपातापत्तेश्च । लिङ्गविशिष्टपरिभाषया प्राप्ता जीविकां प्राप्तजीविका स्त्री । न च 'जीविकाशब्दस्यैकविभक्तिचेति उपसर्जनत्वेन ह्रस्वेऽपि प्राप्ताशब्दे स न स्यादिति वाच्यम् । अकारप्रश्लेषेण पूर्वपदस्याकारादेशस्यापि विधानादिति भाष्यम् । नच द्विवचनोत्तरं तत्प्रश्लेषे प्रकृतिभावापत्तिः। सौत्रत्वादिति प्राञ्चः। यद्वा समाहारे द्वन्द्वः । विषये सप्तमी अकारादेशापेक्षा । प्राप्तापन्नशब्दयोरकारादेशो भवतीत्यर्थः । नचैवं प्रथमानिर्दिष्टत्वाभावात्तयोरुपसर्जनसंज्ञानापत्तिः सुबित्यनुवृत्त्या सन्निधानात्सूत्रारम्भसामर्थ्याद्वा तयोरेव तत्सिद्धेः । द्वितीयान्तस्य तत्सिद्धौ द्वितीयाश्रितेत्यादिना गतार्थत्वापत्तेरिति कैयटः। सूत्रान्ते प्रश्लेष इति दीक्षिताः ।

# कालाः परिमाणिना ॥५॥

परिच्छेद्यवाचिना सुबन्तेन कालाः समस्यन्ते । मासो जातस्य

यस्य स मासजातः । नच समासेऽपि षष्ठीश्रवण जातशब्दे स्यादिति वाच्यम् । सम्बन्धस्य समासाभिहितस्य तत्रान्तर्भावात् उक्तार्थानामप्रयोगात् । मासजातस्य वल्लभिसादौ तु स्वस्वामि-भावसम्बन्धे षष्ठी । परिच्छेद्यपरिच्छेदकभावस्यैव वृत्तावन्तर्भा-वात् । अत एव बहुव्रीहौ तद्विग्रहे च विपरीतो विशेष्यविशेषण-भावः । शब्दशक्तिस्वाभाव्यात् । अतो मासजातो दृश्यतामि-त्यादौ जातस्यैव क्रियायोगो न तु विग्रहे प्रधानस्यापि मासस्य । एकत्वं चात्र मासस्य गम्यते । शब्दस्वाभाव्यात् । द्वित्वा-दिसंख्यायाः सापेक्षत्वात् । अत एव हरिणोक्तम्—

शौर्पिके मासजाते च परिमाणं स्वभावतः ।
उपाधिभूतमाश्रित्य संख्याभेदेन वर्तते ॥ इति ॥

देवदत्तस्य परिच्छेद्यत्वं जननद्वारकम् । मासपरिच्छेद्यं यज्जननं तदाश्रय इत्यर्थात् । एवं च परिच्छेद्यत्वं संसर्ग इति फलितार्थः । तच्च तन्मासघटकदिनप्रागभावानधिकरण-कालवृत्तित्वम् । नतु तन्मासघटकक्षणप्रागभावानधिकरणकाला-न्तरम् । तन्मासाद्यदिनमध्याह्नोत्पन्नादावपि मासजातपदप्र-योगात् । तच्छब्दप्रयोगापेक्षया मासो व्युत्पत्तिबलसाध्यः । नच-तन्मासोत्तरोत्पन्नेऽपि तत्प्रयोगापत्तिः । प्रत्ययार्थस्यातीतत्वस्या-पि जनने भानात् । तथाच तन्मासघटकदिनप्रागभावानधिक-रणकालवृत्त्यतीतं च यज्जननं तदाश्रय इत्यर्थः । व्यहजात इत्यादिकं प्राग्व्याख्यातम् ।

नन्वेवं सति परिमाणिमात्रेण त्रिपद(१)तत्पुरुषः । अन्यत्र तु

(१) उत्तरपदेन परिमाणिना द्विगोः सिद्धये बहूनां तत्पुरुष-स्योपसंख्यानमिति वार्त्तिकेनेत्यर्थः ।

द्विपद एवेति स्थिते 'त्रिलोकनाथेन सता मखद्विषः' इति कालिदासः। 'नवरसरुचिरा' मिति काव्यप्रकाशश्च कथम्। नच विशेषणसमासमाद्यपदद्वयस्य कृत्वा ततो द्विपदतत्पुरुष इति वाच्यम्। दिक्संख्ययोः संज्ञायामेव तद्विधानात्। समाहारद्विगौ च ङीप्प्रसङ्गात्। 'यदि त्रिलोकी गणनापरा स्या' दित्यादिदर्शनेन पात्रादित्वस्य कल्पयितुमशक्यत्वात्। अत्राहुः—त्र्यवयवो लोकस्त्रिलोकः। शाकपार्थिवादिः लोकशब्दस्य समुदायपरत्वात्। इदं च भाष्ये स्पष्टम्।

## नञ् ॥ ६ ॥

अयं सुपा सह समस्यते। अब्राह्मणः अनुत्पलः। अत्र वदन्ति। आरोपितत्वं नञा द्योत्यते। तच्चोत्तरपदार्थतावच्छेदकनिष्ठं। तथाचारोपितब्राह्मणत्वं तद्विशिष्टे समासः शक्तः। आरोप एव विशेषणविशेष्ययोः संसर्गः। ब्राह्मणभिन्नबोधस्त्वार्थः। अतएवानुपसर्जनत्वादतस्मिन्नित्यादि सर्वनामकार्यनिर्वाह इति।

तत्रेदं वाच्यम्। आरोपस्य नियमेनानुपपत्त्या कथं तत्संसर्गको बोधः प्रयोक्तृनिष्ठारोपस्य योग्यानुपलब्धिबाधितत्वात्। अन्यनिष्ठस्यच मानाभावग्रस्तत्वात्। नहि ब्राह्मणपदादारोपसंसर्गकबोधसंभवः। तदीयशक्तिज्ञानकार्यतावच्छेदकसमवायस्यैव संसर्गत्वात्। कालिकादिना ब्राह्मणत्ववति ब्राह्मणपदाप्रयोगात् समवायस्वाश्रयतादात्म्ययोः संसर्गतायामेव जात्यंशे निरवच्छिन्नप्रकारताकबुद्धेः मिश्रादिसमनत्वेन आरोपस्य संसर्गताया ब्राह्मणत्वांशेऽन्याप्रकारकज्ञानस्यासंभवाच्च। नच समवायेन स्वाश्रयतात्म्येन वा सम्बन्धेन विशिष्टस्यैवारोपस्य संसर्गत्वमत्रास्त्विति वाच्यम्। तथापि आरोपितत्वस्य नञ्द्योत्यत्वानुपपत्तेः। संसर्गस्य द्योत्य-

त्वानङ्गीकारात् । आरोपस्य संसर्गत्वे तदुत्तरमार्थिकभेदबोधाना-पत्तेश्च । नच ब्राह्मणत्वोपरि प्रकारत्वेनाऽऽरोपितत्वभानं आरोपस्यच स्वाश्रयेऽनङ्गीकारेणार्थाद्भेदबोध इति वाच्यम् । आरोपसंसर्गतोक्तेर्व्यर्थत्वापत्तेः । ब्राह्मणत्वस्य ब्राह्मणत्वेनानुपस्थिततया तत्रारोपितत्वस्य प्रकारतया भानासंभवाच्च । ब्राह्मणत्वांशे निः प्रकारकानुभवविरोधाच्च ।

किंचारोपितत्वं विशेषणमुपलक्षणं वा नाद्यः । तदानीमारोपे मानाभावात् । नान्त्यः क्षत्रियादावारोपितस्य तस्य ब्राह्मणेऽपि सत्त्वेन ततोभेदप्रतीतेरार्थिक्या असिद्धेः । तस्मादब्राह्मण इत्यत्र नञर्थभेदे ब्राह्मणत्वावच्छिन्नप्रतियोगितयाऽन्वयः भेदस्य विशेषणतयाऽऽश्रये इति युक्तम् । अतएव ब्राह्मणे तत्प्रयोगाभावः । नचैवं उत्तरपदार्थप्राधान्यं न स्यादिति वाच्यम् । अर्धपिप्पल्यादिवदिष्टापत्तेरिति नैयायिकाः । एतेनारोपमात्रं द्योत्यं विषयत्वं संसर्ग इत्यप्यपास्तम् ।

नन्वेवं असः, असर्वस्मै इत्यादौ सत्व स्मायादेशश्च न स्यात् उपसर्जनानामन्तर्गणकार्यस्य सर्वनामकार्यस्य चानङ्गीकारादिति चेदुच्यते । 'एतत्तदोः सुलोप' इत्यस्य एतत्तदर्थनिष्ठैकत्वाभिधायिनः सोर्लोप इत्यर्थः सिद्धान्ते त्वयापीष्टः । तथाच अनेषो ददाति असो ददाति इत्यत्र तदर्थस्य गुणीभूतत्वादेकत्वस्य तत्रानन्वयादेव लोपस्याप्रसक्त्या अनञ्समास इतिज्ञापनार्थम् । नञ्समासे उपसर्जनस्यापि सर्वनाम्नस्तत्कार्यं भवतीति । नचैतत्तदोरित्यत्र सर्वनामत्वं नापेक्ष्यं मानाभावादिति वाच्यम् । अकोरित्यकच्सहितव्यावृत्त्यर्थविशेषणोपादानेन सर्वनाम्नोरेव ग्रहणात् । 'सेव्यतेऽनेकया मन्नतापाङ्गये'त्यत्र तु विशेष्यस्यैकत्वादेकवचनम् । अतएव 'पतन्त्यनेके जलधेरिवोर्मय' इत्या

दौ विशेष्यबोधाद्बहुतरम् । एतेन 'अनेकमन्यपदार्थे' इति व्याख्यातम् । सुबन्तमित्यस्य जातिपरस्य तत्रापि विशेष्यत्वात् । एतेनाध्यारोपितैकत्वाना प्रकृत्यर्थत्वादनेक इति बहुवचनं नतु वास्तवप्रकृतिभेदाभिप्रायम् । यद्वाऽनेकश्चानेकश्चेत्येकशेष इत्यप्यनाश्रयणीयम् । इत्यास्तां विस्तरः । यत्तु मत अन्यपदार्थप्रधानोऽयं समासः भावप्राधान्यमाश्रित्य नियम्यते ब्राह्मणत्वं यत्रेत्यर्थात् । उन्मत्तगङ्गादावव्ययीभावस्येह तत्पुरुषस्य बहुव्रीहिबाधकत्वादकर्ता अभोक्तेत्यादौ 'नद्यृतश्चे'ति कबभावस्तत्फलमिति । तदपि भाष्ये निरस्तम् । अतस्मिन्नित्यादेरसिद्धेः । अवर्षा हेमन्त इत्यत्र हेमन्तवत्त्वाद्विशेषस्याप्येकवचनापत्तेश्च । अयनो ब्राह्मण इत्यादौ परवल्लिङ्गतापत्तेश्च ।

मतान्तरतु—

तपः श्रुतं चयोनिश्चेत्येतद्ब्राह्मणलक्षणम् ।

तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः

इति वचनात् । ब्राह्मणादिशब्दाः तदीयगुणसमुदाये जातौ च शक्ताः अपूर्णो ब्राह्मणोऽब्राह्मण इतिसमासार्थ इति । तदप्यसत् । जातिब्राह्मणेऽप्यब्राह्मणशब्दप्रयोगापत्तेः ।

जन्मना ब्राह्मणो ज्ञेयः संस्काराद्द्विज उच्यते ।

इत्यादिवचनानुरोधेन तपः श्रुतयोरुत्कर्षमात्राधायकत्वेन ब्राह्मणपदप्रवृत्तिनिमित्तत्वाभावाच्च । अतएव 'सुरापाननिषेधस्तु जात्याश्रय इति स्थिति'रिति कुमारवचनादिप्रामाण्याद् 'ब्राह्मणो न सुरा पिबेत्' 'ब्राह्मणं न हन्या'दित्यादीनां जातिमात्रपरत्वमितिसिद्धान्तः । अतएव छान्दोग्योपनिषदि संस्कारादिहीनेऽपि जाबाले नैतदब्राह्मणो विवक्तुमर्हतीत्यादिना गौतमस्य तत्संस्कारप्रवृत्तिर्ब्राह्मणत्वनिश्चयादित्युक्तम् । 'तदभावनिर्धारणे च प्रवृत्ते'-

रिति वेदान्त(१)सूत्रेऽपि तत्स्पष्टम् ।

प्रकृतमनुसरामः । यत्तु—

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।

अप्राशस्त्यं विरोधश्च नञर्थाः षट्प्रकीर्तिता इति ।

तत्रान्योन्याभावात्यन्ताभावयोः शक्तिः । अन्ये तु व्युत्पत्तितात्पर्यादिवशागम्याः । अब्राह्मण इत्यत्र ब्राह्मणभिन्न इति प्रतीतौ भेदप्रतियोगिवृत्तिप्रतियोगितावच्छेदकधर्मसाक्षाद्व्यापकधर्मावच्छिन्नानुयोगिताकत्वं भेदस्यावबुध्यते । घटादावब्राह्मण इत्यप्रयोगात् । अत एवाजपन्यूंखसामसु इत्यत्रजपादिवृत्तिप्रतियोगितावच्छेदकीभूतजपत्वव्यापकमन्त्रत्वावच्छिन्न एव जपादिभिन्ने एकश्रुतिविधानादूहिने इन्द्रशत्रुशब्दे तदभाव इति स्पष्टमाकरे । तथाच तद्धर्मेण मनुष्यत्वादिना प्रतियोगिसादृश्यमनुयोगिनो वस्तुगत्या भवतीत्यर्थो नतु तत्र सादृश्यस्यापि भानम् । तदल्पता पुष्करिण्यां जलं नास्तीत्यादौ प्रकृष्टजले जलपदस्य लाक्षणिकत्वात् । एतेनानुदरा कन्येति व्याख्यातम् । अपचसि त्वं जाल्मेत्यत्र नञो न लोपस्तिङि क्षेपे इति प्रशस्तपाके पचेर्लक्षणया तस्याभावान्वये धातोरेव वा अप्रशस्तपाकपरतया नञस्तात्पर्यग्राहकतया तल्लाभः । एवमस्य ज्ञानं नास्तीत्यादौ योज्यम् ।

विरोधोऽधर्म इत्यादौ धर्मभेदस्य तज्जनकाश्वमेधादिक्रियायामपि सत्त्वात् । धर्मजनकत्वरूपो विरोधो ब्रह्मवधादौ प्रतीयते । अतश्च प्रतियोगिविशेषणतया वा अन्यथा वा एषाम-

(१) अ० १ पा० ३ सू० ३७ 'नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगा.' (छान्दोग्योपनिषत् ४-४-५) इति श्रुतिलिङ्गाद्यत्सत्यवचनेन शूद्रत्वाभावे निर्णीते जाबालं गौतम उपनेतुमनुशासितुं च प्रववृत । अतो नास्ति शूद्रस्य ब्रह्मविद्यायामधिकार इति सूत्रार्थः ।

र्थानाम्भानमिति दिक् ।

इदत्ववधेयम् । अविघ्नमित्यत्रापि परत्वात्तत्पुरुषः स्यात् । अव्ययीभावस्य निर्मक्षिकमित्यादौ सावकाशत्वात् । इति प्राप्ते उच्यते । 'रक्षोहागमलध्वसंदेहाः प्रयोजनं' 'अथासंहिमये'ति 'अद्धुनायामसंहित'मितिच भाष्यवार्तिकयोः प्रयोगादुभयसमावेशो ज्ञाप्यते इति ।

इदं चावधेयम् । न ब्राह्मणस्य भाव इति भावप्रतिषेधयोर्युगपत्सम्बन्धविवक्षायां नञ्समासस्य भावप्रत्ययस्यच प्रसङ्गे यदि परत्वात्प्रत्ययः स्यात् । पुनः प्रसङ्गविज्ञानाच्च पश्चात्समासः । तदा तत्पुरुषे तुल्यार्थतृतीयेति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमब्राह्मणत्वपदे स्यात् । इष्यतेतु प्रत्ययस्वरेणान्तोदात्तत्वम् । तस्मात्समास एव प्रथमम् । प्रकृत्यर्थस्य सापेक्षत्वेनासामर्थ्यात्प्रत्ययानुत्पत्तेः । नञ्समासस्तु प्रधानस्य सापेक्षत्वाद्भवत्येवेति वैषम्यम् । अतः सति शिष्टत्वात्प्रत्ययस्वरः । तल्प्रत्यये लितीतिपूर्वोदात्तत्वं च सिद्धमित्याहुः ॥

## ईषदकृता ॥ ७ ॥

अत्र वार्तिकम् । ईषद्गुणवचनेनेति । अकृतेत्यपनीय तत्स्थाने गुणवचनेनेत्येव वक्तव्यमित्यर्थः । तेनेषत्पिङ्गलः ईषद्रक्तं ईषदुन्नतं इत्यादि सिद्धम् । ईषद्गार्ग्य इत्यादौच नातिव्याप्तिः । यद्यपि गर्गापत्यत्वे उत्कर्षापकर्षौ नस्तस्तदेकार्थवृत्तिक्रियागुणानां तत्संभवात् गार्ग्यकल्पो गार्ग्यपाशइत्यादौ तत्समानाधिकरणानामेव गुणानां तदर्थयोगात् ।

## षष्ठी ॥ ८ ॥

षष्ठ्यन्तं सुबन्तेन समर्थेन सह समस्यते । राज्ञः पुरुषो राजपुरुषः । इह षष्ठीलोपमजानतामप्यर्थबोधाद्राजपदं राजसम्बन्धिनि लाक्षणिकम् । तस्याभेदेन पुरुषेऽन्वयः इतिदर्शनान्तरम् शाब्दिकमते तु समासे शक्तिस्वीकाराद्राजनिरूपितप्रकारकाश्रयत्वसंसर्गकपुरुषविशेष्यको बोध इति प्रागुक्तम् । कृद्योगा च षष्ठी समस्यते इतिवाच्यम् । इध्मप्रव्रश्चनः । पलाशशातनः । प्रतिपदविधाना षष्ठी न समस्यते इति वक्ष्यमाणस्यायमपवादः । अन्यदग्रे वाच्यम् ।

# याजकादिभिश्च ॥ ९ ॥

एभिः षष्ठी समस्यते । तृजकाभ्यां कर्तरीत्यस्यायं प्रतिप्रसवः । ब्राह्मणयाजकः । याजक पूजक परिचारक परिषेचक स्नातक अध्यापक उत्सादक उद्वर्तक होतृ पोतृ भर्तृ रथगणक पत्तिगणक इति ।

'गुणात्तरेण तरलोपश्चेति वक्तव्यम्' । सर्वं गुणकार्त्स्न्ये इति सूत्रे पठितमेतद्भाष्ये । तरबन्तस्य गुणवाचिना समासः तरब्लोपश्च । सर्वेषामश्वेततरः सर्वश्वेतः । सर्वेषां महत्तरः सर्वमहान् पूरणगुणेति निषेधस्यापवाद इतिभाष्यम् । ननिर्धारणे इत्यस्यापीति वृत्तिः । गुणस्य स्वाश्रयेणैव समासनिषेधादिति तदाशयः ।

# न निर्द्धारणे ॥ १० ॥

निर्द्धारणे या षष्ठी सा न समस्यते । नृणां द्विजः श्रेष्ठः निर्द्धारणस्य द्विजापेक्षत्वात्तेन समासः प्राप्तः । अथ पुरुषोत्तम इतिकथम् । तत्रकेचित् । निर्धारणविषयस्य तत्प्रतियोगिनश्चैकधर्मावच्छिन्नत्वे निर्धारणम् । गवां कृष्णा बहुक्षीरेत्यत्र गोत्वस्योभयत्र सत्त्वात्

अत्रतु सुखसमवायिकारणतावच्छेदकत्वेन सिद्धाया आत्मत्वजातेः परमात्मन्यवृत्तित्वान्न निर्धारणपक्षो न निषेधः । आत्मपदवाच्यतावच्छेदकासिद्धौ विभुमैन्धवादिष्वतिप्रसङ्गादित्याहुः । तन्न उक्तरीत्या सिद्धस्यैवात्मत्वस्यात्मपदवाच्यतावच्छेदकत्वमिति जल्परमाणुष्वपि तत्सिद्धेः । अतएवेश्वरेऽपि श्रौतात्मपदप्रयोगः । सङ्गच्छते ।

अन्येतु निर्धारणविषयप्रतियोगिनोस्तन्निमित्तधर्मस्य शाब्दत्वे समासनिषेधः । जीवान्मध्यः परमात्मनो निर्धारणेन नित्यज्ञानवत्वादिकं निमित्तं तत्प्रयोगाभावात्समास इत्याहुः । द्विवचनविभज्योपेतिसूत्रस्थकैयटस्वरसोऽप्येवम् । लीलावत्युपाये तु पञ्चमीतियोगविभागात्पञ्चमीसमासः ।

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदेच प्रथितःपुरुषोत्तमः ॥
इतिभगवद्गीतोक्तेरित्युक्तम् ।
द्वाविमौ पुरुषौलोके क्षरश्चाक्षरएवच ॥

इति तत्रोक्तत्वात्तदर्थलाभइति तद्व्याख्यातारः । कुसुमाञ्जल्युपाये तु निर्धारणसप्तम्या समासः । नचैवपष्ठीसमास निषेधवैयर्थ्यम् । तत्रान्तोदात्तत्व, सप्तमीसमासे तु तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरइतिभेदादित्युक्तम् । यत्तु संज्ञायामितिसमासस्य नित्यत्वात्स्वपदविग्रहत्वमयुक्तमिति तदकिञ्चित्करम् । सप्तमीशौण्डै रित्यत्र सप्तमीतियोगविभागात्समासस्य वाच्यत्वात् । अतएव नरशूर इतिप्रयोगस्यापि सिद्धिस्तत्रव्याख्यातेतिदिक् । प्रतिपदविधाना च षष्ठी न समस्यते इति वाच्यम् । सर्पिषो ज्ञानम् । ज्ञोविदर्थस्येति षष्ठी । षष्ठीशेष इत्यपहायान्यासर्वा षष्ठी

प्रतिपदविधाना । नच न निर्द्धारणे इति अस्य वैयर्थ्यम् । यतश्च निर्द्धारणमिति सूत्रस्य सप्तमीमात्रविधायकत्वाद्विशेषविहित- सप्तम्या सामान्यप्राप्तषष्ठ्या बाधो माभूदिति चकारेण तदभ्यनु- ज्ञानेऽपि षष्ठीशेषे इत्यस्यैव तद्विधायकत्वात् । एवं स्वा- मीश्वरेत्यादावपीति गृहस्वामी सर्वेश्वर इत्यादिसिद्धम् ।

अत्रायं सिद्धान्तः । ज्ञोऽविदर्थस्येत्यादि चतुर्दशसूत्र्या दिवस्तदर्थस्येत्यादिषट्सूत्र्यां शेष इत्यनुवर्तते । तत्र च षष्ठी शेष- इत्येव तत्सिध्या तद्विधानं नियमार्थम् । षष्ठीभवति श्रूयते एव । षष्ठीभवतीत्यसन्तायोगव्यवच्छेदस्य शेषवचनादेव सिद्धेः । क्रिया- संगतस्याप्येवकारस्यायोगव्यवच्छेदार्थत्वम् । ज्ञानमर्थंगृह्णात्येवेत्या- दौ क्वचित्तथा व्युत्पत्तेश्च । यद्वा षष्ठ्येव भवतीति नियमव्यावर्त्य- स्य पूर्वप्राप्तस्य विभक्त्यन्तरस्याभावाल्लोपएव व्यावर्त्यः । तथा च षष्ठीलोपप्रयोजकः समास एव न भवतीति फलितार्थः । तस्य च तिङन्ते प्राप्त्यभावादेव व्यावर्त्यत्वानुपपत्त्या मातुः स्मरण- मित्यादौ षष्ठीलोपाभावस्तदर्थः । मातुः स्मरतीत्युदाहरणं च वृत्तिकारादीनां कृदन्तस्यैवोपलक्षणमिति प्रामाणिकाः । नचै- वं हरिस्मरणमित्यादीनामनुपपत्तिः । कर्मषष्ठ्या समासेन तत्संभवात् । नच विशेषाभावः । तत्र समासान्तोदात्तत्वं, कर्मषष्ठ्या समासेतु कारकपरत्वात्कृदुत्तरपदप्रकृतिस्वरत्वमिति विशेषात् । तदुक्तं वाक्यपदीये ।

कारकैर्व्यपदिष्टेच श्रूयमाणक्रिये पुनः ।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये ॥

इति । अपिच मातुः स्मृतमित्यत्र नलोकेति कर्मषष्ठीनिषे धात् शेषषष्ठ्याश्चोक्तरीत्या समासाभावाद्वाक्यस्यैव साधुत्वम् । तदुक्तम् ।

निष्ठायां कर्मविषया षष्ठी च प्रतिषिध्यते ।
शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते ॥

तथाच प्रतिपदविधानेति निषेधो व्यर्थः । तदुपवादः कृद्योगा चेत्येतदपि व्यर्थमेव । कर्तृकर्मणोः कृतीत्यत्र तु शेष इत्यस्य निवृत्त्या कर्मणिषष्ठीमप्राप्तामेवेदं विधत्तइति तद्योगे षष्ठीसमासो भवत्येवेति दिक् ।

## पूरणगुणसुहितार्थसदव्ययत-व्यसमानाधिकरणेन ॥ ११ ॥

पूरणाद्यर्थैः सदादिभिश्च षष्ठी न समस्यते । सतांषष्ठः । पूरणार्थाः प्रत्यया एव गृह्यन्ते इति प्रागुक्तम् । गुणाति ये केवलं गुणे गुणविशिष्टद्रव्ये च वर्तन्ते तेषामुपादानम् । चन्दनस्य गन्ध इत्यादौ हि वैयधिकरण्यमेव । नतु कदापि चन्दनं गन्धइति सामानाधिकरण्यम् । शुक्लादीनां तु पटस्य शुक्लइति शुक्लः पट इति चोभयं व्युत्पन्नम् । यद्यपि मतुब्लोपादाश्रयलक्षणया वा सामानाधिकरण्यं तच्च गन्धवच्चन्दनमित्यादावपि । तदाश्रयाभेदप्रत्ययः समानः, तथापि मतुपं विना नास्तीत्ययमेव विशेषः । लक्षणायाश्च तत्पदेषु निरूढत्वाभावात् । आधुनिकलक्षणायाश्च निषेधात् । ननुभेदाभेदवादिमते गुणाभेदस्यैव द्रव्ये स्वीकारात्तत्ररूपादिपदेऽतिप्रसङ्गः स्यादितिचेन्न । तैरपिपटोरूपमितप्रयोगप्रतीत्योरनङ्गीकारात् । रूपत्वादिव्याप्यधर्माणामेवाभेदप्रतियोगितावच्छेदकत्वमिति स्वीकारात् । तस्मादेकानुपूर्व्यवच्छिन्नस्य यस्य शब्दस्य गुणतद्विशिष्टद्रव्योभयवाचकत्वं तेषामेवायं निषेध इति चन्दनगन्धः पटरूपमित्यादौ भवत्येव समासः । नचपटस्यशौक्ल्यमित्यत्र निषे-

धो न स्यात्सर्वदा व्यधिकरणत्वादिति वाच्यम् । यत्प्रतिपाद्यगुणप्रतिपादकशब्दस्य सामानाधिकरण्यवैयधिकरण्याभ्यामन्वयबोधकत्वं तेनापि सह समासनिषेधात् । अस्तिच शुक्लगुणस्यप्रकृत्यर्थतावच्छेदकधर्मत्वाच्चभावप्रत्ययान्तगुणविशिष्टद्रव्यवाचि प्रकृतिकशौक्ल्यपदप्रतिपाद्यत्व तत्प्रतिपादकशुक्लपदस्य चोभयथा बोधकत्वात् । नच रूपपदप्रतिपाद्यगुणप्रतिपादक शुक्लपदमादाय तस्यापि निषेधः स्यादिति वाच्यम् । समान प्रकारकत्वेनप्रतिपादकत्वस्योक्तत्वात् । नचैतावान् विशेषःकुतो लभ्यत इति वाच्यम् । तत्स्थैश्च गुणैः समासइति वार्त्तिकस्य मानत्वात् । गुणिनासह भेदेनान्वयबोधकत्वस्य तदर्थत्वात् । तस्यचगुणमात्रसाधारण्येन भेदमात्रेणान्वयबोधकत्वलाभात् । नच ब्राह्मणस्य शुक्ल इति नोदाहरणं दन्तादिनैव सह साकाङ्क्षत्वादिति वाच्यम् । प्रकरणादिना विशेष्यस्य निर्ज्ञातत्वे शुक्लेनापि सामर्थ्यात् । संख्यायास्तु न निषेधः । शतसहस्रान्ताच्चनिष्कात् क्रोशशतयोजनशतयोरुपसंख्यानं खारीशतमपि ददातीति मुनित्रयोक्तेर्ज्ञापकत्वात् । अनित्यश्चायं गुणेन षष्ठीसमासनिषेधः । उत्तरपदार्थप्राधान्यमित्यादिमुनिप्रयोगात् तेन यत्नगौरवादिसिद्धिः । सुहितार्थास्तृप्त्यर्थाः । फलानां सुहिताः । करणस्य शेषत्वविवक्षायां षष्ठी । न लोकेति निषेधस्य कृद्योगलक्षणषष्ठीविषयकत्वात् ।

नन्वेवं तृतीयासमासेन फलतृप्त इत्यादेरापत्तिः ।

फलैर्नानाविधैश्चित्रैःस्वादुशीतैश्च वारिभिः ।

तृप्तास्तां भ्राजथुमतीं पप्रच्छुः कस्य पूरियम् ।

इतिभट्टिप्रयोगेण सुहितार्थयोगे शेषत्वविवक्षैवेति नियमस्य वक्तुमशक्यत्वात् । नचेष्टापत्तिः, निषेधवैयर्थ्यादिति चेन्न षष्ठ्या

समासेऽन्तोदात्तत्वं स्यात् । तृतीयया तु थाथादिस्वरापवादस्तृतीयाकर्मणीति पूर्वपदप्रकृतिस्वर इति विशेषात् । पितॄनतार्प्सीत्वइतिप्रयोगेणतृपेः सकर्मकस्यापि सत्त्वात्कर्मणिक्तप्रत्ययसम्भवात् फलतर्पणमित्यत्र कारकात्परत्वेनकृदुत्तरपदप्रकतिस्वराच्च । अतएव सुहितार्थयोगे करणस्यशेषत्वविवक्षैवेत्याहुरितिहरदत्तेन तत्रापरितोष उद्भावित इत्याहुः ।

सत् द्विजस्य कुर्वन्, द्विजस्य कुर्वाणः । शेषेषष्ठी । चोरस्य द्विषन् । द्विषः शतुर्वावचनमितिपक्षे कर्मणि षष्ठी । ब्राह्मणस्य पश्यन्नित्यत्र तु न प्रसङ्गो लादेशप्रयोगे षष्ठ्या निषेधात् । ओदनाद्यपेक्षायाश्चशत्राद्यन्तेन सहासामर्थ्यात् । अव्ययं ब्राह्मणस्य कृत्वा । तादर्थ्यस्य शेषत्वविवक्षायांषष्ठी । ब्राह्मणसंबन्धिनी क्रियेत्यर्थः । एवं पुरा सूर्यस्योदेतोराधेयः । कर्तरिषष्ठी । नच नलोकेतिनिषेधः । तोसुन्कसुनोः प्रतिप्रसवस्य वक्ष्यमाणत्वात् । अत्र वृक्षस्योपरीति अव्ययत्वात्समासप्रतिषेध इति कैयटहरदत्तौ । पूर्वोत्तरसाहचर्यात्कृदव्ययेनैव निषेध इति रक्षितादयः। अतएवाव्ययपदेन कृन्मेजन्तः क्त्वातोसुन्कसुन इत्युक्त्वा अव्ययकृतो गृह्यन्ते इतिमाधवेनोक्तम्। तेन-यत्कृतेऽरीन्निगृण्हीमः।तत्पाणिमात्मोपरिपातुकं तु इत्यादिसिद्धम् सर्वपश्चादितिभाष्यप्रयोगोऽप्यत्रप्रमाणम् । तव्येति निरनुबन्धग्रहणात्तव्यतामह भवत्येव समासः । गतिकारकोपपदादिति कृदुत्तरपदप्रकृतिस्वरः । तव्यतस्तित्त्वेनान्तस्वरितत्वम् । तव्यस्य त्वाद्युदात्तत्वात्मध्योदात्तत्वं स्यादिति विशेषः । समानाधिकरणेन शुक्रस्य माणवकस्य, राज्ञः पाटलिपुत्रकस्य, पाणिनेः सूत्रकारस्येति भाष्यम्। माराविं शब्दो माक्रियता मित्याह मारविकः । मारावीति माङ्युक्तस्य रावीति रुधातोर्भावेचिणन्तस्या-

नुकरणम् । तदाहेति माशब्दादिभ्य उपसंख्यानमिति ठक् । मारविदस्येति पाठे उक्तशब्दं ददातीति स एवार्थः । एवं तक्षकस्य सर्पस्येत्यप्युदाहार्यम् । अन्यदग्रे वक्ष्यामः ।

## क्तेन च पूजायाम् ॥ १२ ॥

मतिबुद्धीतिविहितक्तान्तेन षष्ठी न समस्यते । पूजार्थान्मत्याद्यर्थाच्च तद्विधानात्पूजया तत्सूत्रविहितक्तप्रत्यय उपलक्ष्यते । तेनगत्याद्यर्थप्रकृतिकक्तान्तस्यापि निषेधः । राज्ञां मतो बुद्धः पूजितो वा । क्तस्यच वर्तमाने इतिषष्ठी । कलहंसरामसहितः कृतवानित्यादौ तु कर्तुः शेषत्वे षष्ठी ततः समासः । शेष षष्ठया समासेऽन्तोदात्तत्वम् । अन्यथा कारकपरत्वात्कृदुत्तरपदप्रकृतिस्वर इतिविशेषान्न निषेध इति केचित् । अन्ये तु भूते क्तान्तात्कर्तरि तृतीया । पूजितो यःसुरासुरैरिति दर्शनात् । कर्तृकरणे कृताबहुलमिति समासः । तेनेत्यधिकारे उपज्ञात इतिनिर्देशेन वर्तमानार्थकेनक्तेन भूतार्थस्य क्तस्य बाधो नेति ज्ञापितत्वात् । तस्यचोक्तप्रयोगानुरोधेन सामान्यापेक्षत्वाश्रयणादित्याहुः ।

## अधिकरणवाचिना च ॥ १३ ॥

क्तेन षष्ठी न समस्यते । इदमेषामासितं गतं भुक्तं वा । क्तोऽधिकरणेचेतिक्तः । अधिकरणवाचिनश्चेतिकर्तरि षष्ठी । वाचिग्रहणं स्पष्टार्थम् । किंवृत्तं यद्वृत्तं मित्यादौ भावे क्तः व्यधिकरणे बहुव्रीहिः । तद्वाकर्तरि क्तः । तृतीयासमास इत्याहुः ।

## कर्मणि च ॥ १४ ॥

चकार इतिशब्दार्थः । कर्मणीति सप्तम्यन्तानुकरणम् । तं-

शब्दमुच्चार्य विहिता षष्ठी न समस्यते । उभयप्राप्तौ कर्मणीति सूत्रविहितेति यावत् । चित्रं गवां दोहोऽगोपेन । अत्र तन्नियमात्कर्मणि षष्ठी । अथशब्दानुशासनमित्यत्र तु कर्तृकर्मणोरित्येव षष्ठी । शब्दानामनुशासनं नत्वर्थानामित्यर्थे कर्तृविशेषनिवृत्तावतात्पर्यात् । अतो नायं निषेध इत्याहुः । एतदभिप्रायेणैव अथातोब्रह्मजिज्ञासेत्यत्र कल्पतरावुक्तम्—प्रकृते तु ब्रह्मकर्मत्वमेवोपादीयते नतु कर्तृमतोऽतिशय इति उभयप्राप्त्यभावात्कर्तृकर्मणोः कृतीत्येव षष्ठी । तेन ब्रह्मजिज्ञासेत्युपपन्नः समास इति । केचित्तु तत्राकाकारयोः स्त्रीप्रत्यययोः प्रतिषेध इत्याश्रित्योभयप्राप्ताविन्यस्य बाधात् कर्तृकर्मणोरिति षष्ठी । अतः समास इत्याहुः । प्रसक्तिमात्रमुभयोरपेक्षितं नतु शब्दमुपादानमिति तदभिप्रायः । अतएवशेषषष्ठ्या समासइतिपक्षोऽपि कैयटादिभिरुक्तः । केचित्तविशेषेण विभाषेति पक्षस्यापि तत्रवक्ष्यमाणत्वान्नियमाप्रवृत्तिपक्षे इदमित्याहुः ।

# तृजकाभ्यां कर्तरि ॥ १५ ॥

कर्त्रर्थतृजकाभ्यां षष्ठ्या न समासः तृचः कर्त्रर्थत्वाव्यभिचारात् । कर्तरीत्यकस्यैव विशेषणं अपां स्रष्टा वज्रस्यभर्ता । नचयाजकादित्वाद्भर्तृशब्दे समासः शङ्क्यः । पत्यर्थस्यैव तत्र ग्रहणात् । ओदनस्य पाचकः कर्तरि किम् । इक्षूणां भक्षणमिक्षुभक्षिका । पर्यायार्हर्णोत्पत्तिषु ण्वुच् । धात्वर्थनिर्देशे ण्वुल्वा । अथ कथं घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः निर्जाननेत्रावतरत्वबोधिकामित्यादि । अत्र न्यासकारः । तृन्समासोऽयम् । नच तत्र नलोकेति षष्ठीनिषेधः । प्रकृतसूत्रेऽनुबन्धनिर्देशेन तदनित्यत्वासिद्धेरित्याह—शेषषष्ठ्यासमास इति कैयटादयः । अन्येतु

जनिकर्तुः प्रकृतिः, तत्प्रयोजको हेतुश्चेत्यादिनिर्देशादयं निषेधो ऽनित्य इत्याहुः ।

# कर्तरि च ॥१६॥

कर्तृषष्ठ्या अकेन सह समासो न स्यात् । भवतः शायिका । पर्यायार्हर्णोत्पत्तिषु ण्वुच् । तृचो योगे कर्तुरभिधानेन कर्तृषष्ठ्याऽनुपपत्त्या नात्र तृचोऽनुवृत्तिः ।

# नित्यं क्रीडाजीविकयोः ॥१७॥

अर्थद्वये षष्ठी नित्य समस्यते । नचात्र निषेधस्यैव नित्यत्वान्वयः सन्निहितत्वादिति वाच्यम् । तस्य प्रतिषेधारम्भसामर्थ्यादेव नित्यत्वात् । विधेश्चवैकल्पिकत्वेन तस्यैव नित्यत्वान्वये वचनसार्थक्यात् । उद्दालकपुष्पभञ्जिका । संज्ञायामिति भावे ण्वुल् । क्रीडाविशेषस्येयं संज्ञा । कर्मणि षष्ठी । जीविकायां दन्तलेखकः । क्रीडाया विकल्पे जीविकाया तृजकाभ्या कर्तरि इति निषेधे च प्राप्ते इदम् । अत्र जयादित्यः । तृजकाभ्यां मित्यत्र कर्तरीति षष्ठ्या विशेषणं नतु प्रत्यययोः । नच कर्त्रर्थकतृचा योगे कर्तृषष्ठ्या असंभवात्तद्ग्रहणवैयर्थ्यम् । तस्योत्तरार्थत्वात् : कर्तरिचेति सूत्रे हि कर्तृग्रहणं तृजकयोर्विशेषणम् । कर्त्रर्थकाभ्यां तृजकाभ्यां षष्ठी न समस्यते इति । एतन्मतेऽपि फलितार्थः प्रागुक्तार्थेन तुल्य एव । किन्तु सूत्रद्वयेऽर्थव्यत्यय इति विशेषः । नित्यं क्रीडेतिसूत्रे अकप्रत्ययमात्रमुदाहरणमिति तुल्यम् ।

वामनस्तु रमणीयकर्तेति जीविकायामपि तृचा समासमाह । अकेजीविकार्थे इतिसूत्रेऽकइति किमित्युक्त्वा तत्प्रत्युदाहरणात् । क्रीडायां लक्षणाभावेन तृजभावेऽपि जीविकाया ण्वुल्तृचावित

तृचोऽपिसुलभत्वात् । अतएव तृजुत्तरार्थ इति व्याख्यातम् । अन्यथा कर्मणिचेति सूत्रे तद्विच्छेदेऽत्राप्यनुवृत्तिप्रसङ्गादित्याहुः ।

# कुगतिप्रादयः ॥ १८ ॥

कुशब्दो गतिसंज्ञाःप्रादयश्च समर्थेन नित्यं समस्यन्ते । कुशब्दः पापार्थोऽत्रगृह्यते नपृथिव्यर्थः । अव्ययसाहचर्यात् । अव्यये नञ्कुनिपातानामिति वार्तिकोक्त्या तस्याप्यव्ययत्वात् । कुपुरुषः कुत्सित पुरुषइत्यर्थः । ईषदर्थेचेति कोः कादेशविधानात्तत्रापि समासः । ऊरीकृत्य । प्रादिग्रहणमगत्यर्थम् । तत्र विषयविभागो वार्तिकैरुक्तः—स्वती पूजायाम् । सुभुजा । अतिराजा नपूजनादिति समासान्तनिषेधः । अतिमित्क्रमेत भवतेत्यतिक्रमणेऽप्यतिः समस्यते इति कैयटः । अतिरतिक्रमणेचेति कर्मप्रवचनीयत्वात्षत्वाभावः । सुष्टुतमित्यत्रोपसर्गत्वात्षत्वम् । दुर्निन्दायाम् । दुर्गवः । समासान्तष्टच् । आङीषदर्थे । आकडारः । क्रियायोगे तु गतित्वात्समासः । आमन्द्रैरिन्द्रहरिभिर्याहि मयूररोमभिरित्यत्र तु सामर्थ्येऽपिइन्द्रं प्रत्यगतित्वात्तद्वतेषदर्थत्वाभावाच्च न समासः ।

प्रादयो गताद्यर्थे प्रथमया । प्रगत आचार्यः प्राचार्यः । प्रान्तेवासी प्रपितामहः । वृत्तिविषये गताद्यर्थवृत्तीनां प्रादीना गतित्वाभावेऽपि प्रादिग्रहणसामर्थ्यात्समासः । अत्यादयः क्रान्ताद्यर्थे द्वितीयया । अतिक्रान्तो मालामतिमालः । अवादयः क्रुष्टाद्यर्थे तृतीयया । अवक्रुष्टः कोकिलया ऽवकोकिलः । पर्यादयो ग्लानाद्यर्थे चतुर्थ्या । परिग्लानो ऽध्ययनाय पर्यध्ययनः । अलं कुमार्यै अलंकुमारिः । एकविभक्तिचेत्युपसर्जनत्वात् ह्रस्वः । नित्यसमासत्वेऽपि चतुर्थीविधानसामर्थ्यात्पक्षे वाक्यम् । अतएव-

तत्सूत्रेऽलंकुमार्यैअलकुमारिरिति भाष्यम् ।

दीक्षितास्तु नायमेतद्विषयः । प्रादिसमासस्यायं प्रपञ्च इति सिद्धान्तात् । अलंशब्दस्य च प्रादित्वविरहात् । किन्तु द्विगुप्राप्तापन्नालंपूर्वेत्यनेन ज्ञाप्यमानोऽलंपूर्वस्तत्पुरुषोऽत्रसूत्रे पृथग्गतिग्रहणात्पर्याप्त्यर्थेनापि तेन भवन्नभिधानानुरोधाच्चतुर्थ्यन्तेनैव भवति । तस्य चानित्यत्वं निर्बाधमेवेत्याहुः ।

निरादयः क्रान्ताद्यर्थे पञ्चम्या । निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः । नच प्रादिग्रहणस्यागत्यर्थत्वात्कर्मप्रवचनीयानामपि समासापत्तिः । कर्मप्रवचनीयानां प्रतिषेधो वक्तव्य इति वचनेन तद्वारणात् । वृक्षं प्रति विद्योतते विद्युत् । अथ कथमधीत्येति । अधिपरी अनर्थकाविति कर्मप्रवचनीयत्वादिति चेत् अत्र केचित् । अन्वापकृधूर्तैरिति निर्देशादनित्यो निषेधः । अतएव सुस्तुतमतिस्तुतमिति षत्वाभावेऽपि समासः कैयटादावुक्तः इत्याहुः । अधीत्य स्नात्वेति खट्वाक्षेपेसूत्रगतभाष्यप्रामाण्यादित्ति तत्त्वम् । अव्ययंप्रवृद्धादिभिः समस्यत इतिवक्तव्यम् । पुनः प्रवृद्धं बहिर्भवति । पुनर्गवम् । पुनः सुखम् । इवेन विभक्त्यलोप इत्यादि । अव्ययमव्ययेन प्रप्रयज्ञपतिमिति । उदात्तवता गतिमता च तिङाऽव्ययं समस्यते इतिवक्तव्यम् । अनुव्यचलत् । यत्परियन्ति । एतत्तत्वं सहसुपेसत्रोक्तम् ।

# उपपदमतिङ् ॥ १९ ॥

उपपदं सुबन्तं समर्थेन नित्यं समस्यते । अतिङन्तश्च समासः । कुम्भकारः । अतिङिति किम् । मा भवान् भूत् । अन्यथा माङि लुङिति सप्तमीनिर्दिष्टस्य माङउपपदत्वाल्लुङन्तेन समासःस्यात् । यद्यपि इहसूत्रेऽतिङिति नोपपदविशेषणम् । किन्तुसमासस्यैवेति

स्पष्टतया भाष्ये नोक्तम् । तथापि अनत्रकल्प्त्येति सूत्रे क्रिवृत्त-स्यानधिकारादक्रिवृत्तग्रहणानर्थक्यमित्युक्त्वा उपपदसंज्ञार्थमित्या-शङ्क्य अतिङिति समासप्रतिषेधात्संज्ञानर्थक्यमिति सिद्धान्तित-त्वाल्लभ्यते । पूर्वसूत्रेऽपि गतीतिपृथक्कृत्पातिङिति पृथक्योज्यम् । तेनमपततीत्यादौ न समासः । नचसुप्सुपेत्यधिकारादेव तिङन्त-व्यावृत्तिरिति वाच्यम् । सुप्सुपेत्यस्य निवृत्तिज्ञापनार्थत्वात् । सुबिति प्रथमान्तं त्वनुवर्तते एव । अन्यथा राजदर्शीत्यादौ पूर्व-पदस्यासुबन्तत्वान्नलोपो नस्यात् । निर्गत इतिरुत्वम् । संयन्ते तिपरसवर्णविकल्पश्च न स्यात् । सुप्सुपेति निवृत्तमितिभाष्यस्य तु एकदेशनिवृत्तावेव तात्पर्यमिति कैयटादयः ।

ननु कारको गत इत्यत्र तुमुन्ण्वुलौ क्रियायां क्रियार्थायां इति कर्तु गत इत्यर्थे गतशब्दे उपपदे ण्वुल्विधानात्समास निवृत्त्यर्थं अक्रियार्थमतिङ्ग्रहणमस्तु । अन्यथा गतकारक इति स्यात् । अक्रियेत्युक्ते तु प्रकृतिवाच्यक्रियाश्रयप्रत्ययोत्पत्त्या क्रियावाचि-त्वान्न समास इतिचेन्न । अतिङिति सुबन्तविशेषणतया सुबन्तस्य द्रव्यवाचित्वेन क्रियार्थत्वाभावात् । कृदन्ते प्रकृत्यर्थस्य क्रियायाः प्रत्ययार्थे कर्तरि विशेषणत्वात् । अतएव गतशब्दे समासस्याप्य-प्रसक्तिः । धातुमात्रस्योपपदत्वात् । धातोश्च क्रियावाचित्वात्त-दाश्रयप्रत्ययोत्पत्तेः । नच तर्हिधातोरेव समासः स्यादिति वाच्य-म् । प्रत्ययार्थेन सह संसृष्टस्य निः कृष्य समासस्याशक्यत्वात् सुबन्तत्वाभावाच्च । नचकारकस्य गतिरित्यत्र भावप्रत्य-यस्य क्रियावाचकत्वात्तदन्तेन समासनिषेधार्थं अति-ङ्ग्रहणं स्यादिति वाच्यम् । तत्रापि प्रत्ययेन सत्त्व-रूपतापन्नक्रियाभिधानात् । साध्यरूपक्रियाया धातुमात्र-बोध्यत्वात् । सुबन्तस्य क्रियावाचित्वाभावात् । क्रियावाचिन

श्च सुबन्तत्त्वाभावात् । कृदभिहितो भावो द्रव्यवत्प्रकाशत इतिन्यायात् । द्रव्यधर्मान्लिङ्ग सख्यादीन् गृण्हातीत्यर्थात् । अन्यदग्रे वक्ष्यामः । तस्मात्सुपेत्यस्य निवृत्तिरेव तत्प्रयोजनम् ।

तेन गतिकारकोपपदाना कृद्भिः सह समासवचनं प्राग्सुबुत्पत्तेरिति परिभाषा ज्ञाप्यते । एकदेशानुमतिद्वारा समस्तपरिभाषाया लक्ष्यानुरोधेन ज्ञापनसंभवात् । गतीना यथा । व्याजिघ्रतीति व्याघ्री । आतोऽनुपसर्गे कः । नच पाघ्रेति शप्रत्ययापत्तिः । जिघ्रतेः संज्ञायां प्रतिषेधारम्भात् । विआइति उपसर्गद्वयस्य घ्रशब्दात् सुपोऽनुत्पत्तावेव तेन समासः । अन्यथास्वार्थद्रव्यलिङ्गसंख्याकारकाणा क्रमेण प्रत्यय इति प्रक्रियामाश्रित्य पूर्व लिङ्गाकाङ्क्षाध्रौव्येण तन्निमित्तकप्रत्ययो लक्षणान्तराभावाट्टाबेव स्यात् । घ्रशब्दमात्रस्य जातिवाचकत्वाभावात् । ङीषश्च सूकरीत्यादौ सावकाशत्वात् । पश्चाद्गतिसमासे व्याघ्राशब्दस्य जातिवाचित्वेऽपि अदन्तत्वाभावात् ङीष् न स्यात् सुबुत्पत्तेः प्रागेव समासे तु व्याघ्रशब्दस्य पूर्वसिद्धौ जातिलक्षणो ङीष् सिद्धः । नच तत्रसामान्यनिमित्तटाबापत्तिः । अन्तरङ्गत्वात्समासस्यैव प्रवृत्तेः तदुत्तरं ङीषैव तद्बाधात् ।

एवं कारकाणां अल्पैरभ्रैर्लिप्ताअभ्रलिप्ती कर्तृकरणेकृता बहुलमिति समासः । ततः करणपूर्वादित्यनुवर्तमाने क्तादल्पाख्यायामिति ङीप् । यदि सुबुत्पत्त्यनन्तरं स स्यात्तदा पूर्वटाबुत्पत्तौ ङीष् न स्यात् । अत इत्यधिकारात् । नच वचनसामर्थ्यम् । अभ्रैर्विलिप्ताद्यौरिति वाक्यावस्थायामपि ङीपापत्तेः । पूर्वशब्दस्य व्यवस्थावचनत्वम् । अनइत्यस्य प्रातिपदिकादित्यस्य चाधिकारस्य बाधो वेति कल्प्यत्वात् । साहि तस्य धनक्रीतेत्याद्यनुपपत्तेः । ननुत्वद्रीत्यापि उक्तप्रयोगोऽनुपपन्न एव । एवंदधिसेचावित्यादौ

सात्पदाद्योरिति षत्वनिषेधश्च नस्यादिति चेत् ।

अत्राहुः । क्वचित्सुबुत्पत्तावपि कारकसमासो भवतीति सुपेत्यस्यनिवृत्तावेव तात्पर्यं नतु सुपः प्रागेव समास इत्यत्र । तथाच कार्यानुरोधात्क्वचिदुत्पन्ने क्वचिच्चानुत्पन्ने सुपि समास इति । दर्विसेचावित्यत्र तु निरुपपदात्सेचयतेः क्विपि कृते षष्ठीसमासेऽपि सिद्धमिति प्रागुक्तम् ।

उपपदानां यथा कच्छेन पिबति कच्छपी । सुपीतियोगविभागात्कः । आतोनुपसर्गे इति कप्रत्ययः । जातिनिमित्तत्वेनावयवार्थबाधस्यावश्यकत्वादिति कैयटः । व्याघ्रीवद्व्याख्येयम् । यत्तु अतिङित्युपपदविशेषणं तेन प्रधानहारको व्रजतीत्यत्र नेति तन्न । प्रथमान्तसुब्ग्रहणस्यापि निवृत्तिप्रसङ्गात् ।

# अमैवाव्ययेन ॥ २० ॥

अम्मात्रविधायकसूत्रे यत्सप्तमीनिर्दिष्टं तदेवोपपदं अव्ययेन समस्यते इति नियमोऽयं । इदं चामैवेत्यस्यावृत्त्या निरूपितत्वस्य तृतीयार्थत्वात् । तस्य चोपपदविशेषणत्वाल्लभ्यते । अम्मात्रनिरूपित यस्योपपदत्वं तदव्ययेन समस्यते इति पर्यवसानात् । तावन्मात्रस्य च पूर्वेणैव सिद्धत्वान्नियमविधिस्वाभाव्यात्तदेव समस्यत इत्यर्थसिद्धिः । एवंच तुल्यविधानमित्यध्याहारो नादरणीयः । स्वादुंकारम् । संपन्नंकारम् । लवणंकारम् । स्वादुमिणमुलितिस्वादुग्रहणस्यार्थपरत्वात् । निपातनात्पूर्वपदे मान्तत्वम् । अत्र प्रत्ययान्तरविध्यभावात्स्वादुशब्दस्याम्मात्रनिरूपितमुपपदत्वम् । अतएवाव्ययान्तर प्रत्युपपदत्वाभावादमैव समासः । अग्रेभोजम् । अग्रेभुक्त्वा । अत्र तु विभाषाग्रेप्रथमपूर्वेष्विति क्त्वाणमुलोर्विधानान्न तन्मात्रनिरूपितं तत् इति न समास. । उभयनिरूपितोपपदसंज्ञाया

## शेषो बहुव्रीहिः ॥ २३ ॥

अधिकारोऽयम् शेषः किम् । उन्मत्तगङ्गम् । येषां पदानां यस्मिन्नर्थे सज्ञान्तरं नोक्तं तेषां तदर्थे यः समासः स बहुव्रीहिः । नचाकडारादेका संज्ञेति निरवकाशत्वादव्ययीभावादिसज्ञा भविष्यन्तीति वाच्यम् । प्राक्कडारात्परंकार्यमिति पाठे परत्वाद्बहुव्रीहिसंज्ञाप्रसङ्गात् । एकसंज्ञाधिकारे तु त्रिकतः शेषो भाष्ये व्याख्यातः । तथाहि । द्वितीयाश्रितेत्यारभ्य द्वितीयादीनां त्रिकाणां षण्णां समास उक्तः । ततश्च प्रथमायाः शेषत्वे प्रथमान्तानां पदानां बहुव्रीहिरित्यर्थात्समानाधिकरणानामित्यपि सिद्धम् । कण्ठेकाल इत्यादौ तु सप्तम्याः पूर्वनिपातविधानाज्ज्ञापकाद्बहुव्रीहिः ।

इति श्रीसिद्धान्तसुधानिधौ द्वितीयस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम् । श्रीः ॥



# अनेकमन्यपदार्थे ॥ २४ ॥

अनेकं सुबन्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः । अन्यपदं समस्यमानपदद्वयाभिन्नपरम् । समस्यमानपदद्वयं च प्रथमान्तम् । त्रिकतः शेषस्योक्तत्वात् । तद्भिन्नपदं च द्वितीयाद्यन्तं तदर्थश्च कर्मत्वादि तस्य प्रकृत्यर्थविशेषणत्वेन प्रतीयमानत्वात् । अतएव पठन्ति । अप्रथमाविभक्त्यर्थेचायमिति । तथाच द्वितीयाद्यर्थविशिष्ट एव बहुव्रीह्यर्थः । प्राप्तमुदकं य स प्राप्तोदको ग्रामः । ऊढो रथो येन स ऊढरथोऽनड्वान् । उपहृतः पशुर्यस्मैस उपहृतपशू रुद्रः । उद्धृत ओदनो यस्याः सा उदधृतादना स्थाली। चित्रा गावो यस्य स चित्रगुर्देवदत्तः । वीराः पुरुषा यस्मिन् स वीरपुरुषो ग्रामः । अत्र सर्वत्र कर्मत्वादिविशिष्टस्य ग्रामादेर्लाभः । उदककर्तृकप्राप्तिकर्म रथकर्मकावहनकर्ता पशुकर्मकोपहरणोद्देश्यः । ओदनकर्मकोद्धरणावधिः । चित्रगवीस्वामी । वीराभिन्नपुरुषाधिकरण इत्यादिबोधात् । अतो वृष्टे देवे गत इत्यादौ पदद्वयस्य भावलक्षणसप्तम्यन्तस्य समयपरिच्छेदद्वारा गमनक्रियारूपान्यपदार्थतात्पर्यकत्वेऽपि गमने वृष्टिधर्मोत्तरकालीनत्वस्यैव प्रतीत्या कर्मत्वादिबोधाभावान्न बहुव्रीहिः । एतेन चित्रागावो यस्येति विग्रहे गवां प्राधान्यम् । समासे तु स्वामिनइतिवृत्तिवाक्ययोर्विशेष्यभेदः स्यात् । अतश्चित्राणां गवामयमित्यादिरेव विग्रह इति मीमांसकोक्त परास्तम् । समस्यमानपदयोः प्रथमान्तत्वं विना बहुव्रीहेरेव दुर्लभत्वात् । मत्वर्थे बहुव्रीहिरिति कात्यायन वचनविरोधाच्च । तदस्यास्तीति प्रथमान्तादस्त्यर्थे वर्तमानान्मतुपो विधानात् । वृत्तिवाक्ययोर्विशेष्यभेदस्याप्रयोजकत्वात् । तथाच क्वचिद्गुणप्रधानत्वमर्थानामविवक्षितमितिप्रक्रम्य हरिणोक्तम् ।

आख्यातं तद्धितकृतोर्यत्किञ्चिदुपदर्शकम् ।
गुणप्रधानभावादौ तत्र दृष्टो विपर्यय इति ॥

अक्षैर्दीव्यति आक्षिकः । व्याकरणमधीते वैयाकरणः । पचतीति पाचकः । विग्रहे कर्तुः क्रियायां गुणीभूतत्वेऽपि वृत्तौ विशेष्यत्वेन प्रत्ययात् । भावना च तेषां तिङ्वाच्या अस्माकं तु धात्वर्थ इति विशेषः । मासजात इत्यत्र वृत्तिवाक्ययोर्विशेष्यभेदः प्रागेव व्याख्यातः । अतएव सर्वतन्त्रेषु चित्रा गावो यस्येत्येव विग्रहो दर्श्यते इति दिक् । अनेकग्रहणं बहूनां समाससिद्ध्यर्थम् । तथाचसमर्थसूत्रे भाष्यम् ।

सुसूक्ष्मजटकेशेन सुनताजिनवाससा ।
समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिद्ध्यति ॥

चतुः पदोऽयं बहुव्रीहिः । ङ्याप्योः संज्ञ छन्दसोरित्यत्र बहुलवचनाज्जटाशब्दे ह्रस्वः । यद्वा त्रिपदबहुव्रीहिं कृत्वा पश्चात्केश शब्देन बहुव्रीहिः । एवं सुष्टु नतं वासो यत्रेति व्याख्येयम् । समन्तानि शितीनि रन्ध्राणि यस्येति विग्रहः । ननु त्रिपदे बहुव्रीहौ पूर्वशालाप्रियः पञ्चगवधन इत्यत्र शालाशब्दस्योदात्तत्वं समासान्तश्च यद्यपि उत्तरपदनिमित्तकतत्पुरुषसंज्ञया सिद्ध्यति । तथापि खादिरी इतरा शम्या यस्येति खादिरेतरशम्यमित्यत्र खादिरीशब्दस्य पुंवद्भावो न स्यात् । उत्तरपदस्य ततः परत्वाभावादिति चेत् न । तत्रेतरा चासौ शम्या चेति कर्मधारयं कृत्वा खादिरीइतरशम्याऽस्येति द्विपदस्यैव बहुव्रीहेर्वाच्यत्वात् । खादिरीपदस्य विकारतद्धितान्तत्वाद्वृद्धिनिमित्तस्येति प्रतिषेधस्याप्रवृत्तेः ।

अथ पूर्वशालाप्रियइत्यादावपवादत्वाद्बहुव्रीहिस्वरो दुर्वारः । नच विषयभेदाद्विरोधाभावः । तस्यावयवाश्रयतयाऽन्तरङ्गत्वेनबहुव्रीहिस्वरस्यैवापत्तेः नच समुच्चयेन निर्वाहः, अनुदात्तंपद

मेकवर्जमिति पदद्वये उदात्तद्वयानुपपत्तेः । नचान्तरङ्गत्वं न स्वरबलीयस्त्वे हेतुः बहिरङ्गेणापि सतिशिष्टेन स्वरेण बाधादिति वाच्यम् । तथापि निमित्तस्वरान्निमित्तिस्वरो बलीयानिति बहुव्रीहौ स्वावयवोत्तरपदाश्रये पूर्वयोस्तत्पुरुषे निमित्ततया बहुव्रीहिस्वरं बाधित्वा तत्पुरुषस्वरस्यैवोपपत्तेः । नच निमित्तिस्वरबलीयस्त्वे मानाभावः । युक्तारोह्यादिष्वेकशितिपाच्छब्दपाठस्य मानत्वात् । अन्यथैकशब्दस्य कन्नन्तत्वात् । यद्वा स्वाङ्गशिटामित्याद्युदात्तत्वात् एकः शितिः पादो यस्येति त्रिपदे बहुव्रीहौ तद्धितार्थेति द्वयोस्तत्पुरुषे च तत्स्वरं बाधित्वा बहुव्रीहौ प्रकृत्या पूर्वपदाद्युदात्तसिद्धौ तदर्थस्य पाठस्य वैयर्थ्यात् ।

नन्वेकः शितिः पादो यस्येति पूर्वपदे कर्मधारयगर्भे बहुव्रीहाविगन्ते द्विगाविति पूर्वपदाद्युदात्तत्वम् । एकः शितिर्येषां ते एकशितयः पादा यस्येति पूर्वपदे बहुव्रीहिगर्भे बहुव्रीहावपि बहुव्रीहौ प्रकृत्येति वा सिद्धमिति युक्तारोह्यादिष्वेकशितिपाच्छब्दपाठप्रत्याख्यानात्कथं तस्य ज्ञापकत्वमिति चेत्सत्यम् । तथापि निमित्तस्वरान्निमित्तिस्वरो बलीयानित्यस्य वाचनिकत्वाङ्गीकारात् । नच सुसूक्ष्मजटकेशेनेत्यादौ त्रिपदे बहुव्रीहौ पूर्वपदद्वयस्य तत्पुरुषसंज्ञायामन्तोदात्तापत्तिरिति वाच्यम् । नहि बहुव्रीह्यवयवस्य तत्पुरुषत्वमत्र विधेयम् । किन्तु लक्षणान्तरेण यस्य तत्पुरुषसंज्ञाप्राप्तस्यनुवादः । दिक्संख्ययोस्तु तद्धितार्थोत्तरपदेति तत्पुरुषसंज्ञाविधानवैषम्यम् । नच तत्रापि विशेषणं विशेष्येति तद्विधानमिति वाच्यम् । समुदायस्य वृत्ताववयवस्य संज्ञान्तरं विशेषवचनं विना न प्रवर्तते इति बहुलवचनात्सिद्धेः । अन्यथापूर्वशालाप्रिय इत्यत्रापि वचनान्तरेण सिद्धेरुत्तरपदे परे तत्पुरुषविधानवैयर्थ्यात् ।

नन्वेवमप्यधिकषाष्टिवर्ष इत्यत्र त्रिपदे बहुव्रीहौ अधिकश-

हगं चाल्पुकीति अधिकशब्दस्य सङ्ख्यासञ्ज्ञत्वात्तद्धितार्थोत्तरपदेति पदद्वयस्य तत्पुरुषेऽन्तोदात्तता स्यात् । मैवम् । इगन्ते द्विगाविति पूर्वपदाद्युदात्तसिद्धेः ।

नन्वधिकशतवर्षं इत्यत्र दोषतादवस्थ्यम् । अधिकषष्टिः इत्यत्रापि डच्प्रकरणे तत्पुरुषे सङ्ख्याया उपसङ्ख्यानमिति डच्प्रसङ्गः । किञ्च तद्धितार्थोत्तरपदेति तत्पुरुषं बाधित्वा संख्ययाऽव्ययेति बहुव्रीहौ बहुव्रीहौसङ्ख्येयेऽडिति डच्प्रसङ्ग इति चेन्न । उपसंख्यानस्य गोत्रिंशदाद्यनुरोधेनाव्ययादिमात्रपरत्वात् । अधिकषष्टिर्वर्षाणामस्येति विग्रहे षष्टिपदस्य सङ्ख्यापरतया संख्येयपरत्वाभावाच्च । नचैवं वर्षाणां संख्येयत्वादनेकमन्यपदार्थे इति बहुव्रीहिप्रसङ्गः । तस्यसङ्ख्येयवृत्तित्वाच्च डजपि वयस्विन्यभिधेये बहुव्रीहिगर्भबहुव्रीहिप्रसङ्गश्चेति वाच्यम् । वृत्तिविषये द्व्येकयोरित्यादिनिर्देशेन दशादीनामपि सङ्ख्यामात्रपरत्वात्संख्येयस्यान्यपदार्थत्वात्संख्योत्तरपदस्य बहुव्रीहेः प्रत्याख्यानात् । अव्ययिकन्यायेनाधिका षष्टिर्वर्षाणामिति वाक्यमेवेति स्वीकारात् ।

नचैवमप्यधिकशतवर्षं इत्यत्र तकाराकारस्यैवोदात्तत्वं स्यान्नत्वाधिकशब्दस्याद्युदात्तत्वमिति वाच्यम् । तस्य युक्तारोह्यादिषु द्रष्टव्यत्वात् ।

स्यादेतत् । अनेकग्रहणं चित्रगुरित्यादावुत्तरपदस्याप्युपसर्जनसञ्ज्ञार्थमेवास्त्विति चेन्न । एकविभक्तिचापूर्वनिपात इत्येवासिद्धेः । चित्रगुमानयेत्यादौ समासार्थस्य विभक्त्यन्तरयोगेऽपि चित्रा गावो यस्येति विग्रहे समस्यमानपदयोः प्रथमान्तत्वनियमात् । नचैवं राज्ञः कुमारी राजकुमारी तां पश्येत्यादिदर्शनात्कुमारीशब्दस्यापि नियतविभक्तित्वादतिप्रसङ्ग इति वाच्य-

म् । तत्र द्वितीयाद्यन्तेनापि कुमारीशब्देन विग्रहोपगमात् । तत्तत्प्रयोगव्यक्तौ सर्वस्याप्येकविभक्तित्वात्समासत्वव्याप्यधर्मावच्छिन्नयत्तत्पुरुषादि तन्निरूपितविग्रहत्वावच्छेदेन यस्यैकविभक्तित्वमित्यर्थपर्यवसानात् ।

अथ प्रथमान्तेन विग्रह इत्येव पक्षो युक्तः। अन्यथा कर्मत्वादेः समासेनैवाभिहितत्वाद्राजकुमारीं पश्येत्यादौ द्वितीयादिकं न स्यात । अतः प्रातिपदिकार्थमात्रविवक्षायां प्रथम प्रथमया (१) संस्कृत्वा ततः पश्येत्यादिसम्बन्धविवक्षाया द्वितीयादिकमनुपपन्नम् । अपिचोक्तविभक्तेः समासबहिर्भूतायाः कथं विग्रहे प्रवेशः । एवं पूरणगुणेतिसूत्रे समानाधिकरणेन षष्ठीसमासनिषेधोऽपि व्यर्थः । तथाहि तक्षकस्य सर्पस्येत्यत्र विषादिरूपसमासबाह्यपदार्थापेक्षा षष्ठी तथाच कटोऽपि कर्म भीष्मादयोऽपीति पक्षे द्वयोरपि षष्ठ्यन्तये पश्चात्प्रातिपदिकार्थयोः परस्परावच्छेदः । ततश्च षष्ठ्यन्तयोर्मिथोऽसामर्थ्यं स्पष्टम् । ततश्च प्रथमान्तयोरेव समासप्रसङ्गस्तत्र बहुलवचनान्नेति प्रागुक्तम् । एवं राज्ञः कुमार्या इत्यत्र द्वयोः षष्ठ्यन्तात्पूर्वनिपातनियमो न स्यादित्याशङ्कापि मन्दा । कुमारीशब्दे प्रथमान्तत्वावश्यकत्वात् । अतः प्रथमान्तेनैव विग्रहो युक्त इति प्राप्ते उच्यते ।

समासोत्तरश्रुतस्य द्वितीयादेरपि द्वितीयपदोत्तरं विग्रहे प्रवेश उपस्थितत्वात् बाधकाभावात् । अन्यथा विग्रहे नियतविभक्तित्वेनोपसर्जनसंज्ञायां कुमारीशब्दादेर्ह्रस्वापत्तेः । साधकत्वाच्च । अतएव बहुव्रीहिप्रकृतिकाद्द्वितीयादेर्विग्रहे वर्तिपदोत्तरं न प्रयोगः । स्वामिगतकर्मत्वाद्यबोधकत्वेन विरुद्धार्थकत्वात् । अतएवच कर्मत्वादेर्नसमासेनाभिधानम् । अनुप्रवे-

(१) संस्कृत्वेति । अत्र पदसंस्कारं कृत्वा इति पाठान्तरम् ।

त्रमात्रेण वाच्यत्वे पचन्तीति पाचका इत्यत्र बहुत्वस्यापि कृद्-र्थत्वापत्तेः । षष्ठीसमासकर्मधारयादेः सर्वविभक्तिसाधारण्येन विभक्तिविशेषार्थिना तत्तदर्थकुक्षावन्तर्भावयितुमशक्यतया सर्वसाधारणस्यैवार्थस्य तद्बोधकल्पनौचित्यात् । कर्मत्वादेश्चान्वयव्यतिरेकाभ्यां तत्तद्विभक्तिबोध्यत्वात् । अतएव द्वितीयार्थे बहुव्रीहौ कर्मत्वादेर्वर्तिपदार्थादेव धर्मिविशेषणत्वेन प्रतीतत्वात्। उदककर्तृकप्राप्तिक्रियानिरूपितकर्मत्वादिबोधार्थं नद्वितीयादिःकिन्तु क्रियान्तरनिरूपितकर्मत्वादिबोधार्थमेवेति नियमः । एवं नीलोत्पलस्येत्यादौ षष्ठ्या विग्रहेऽपि न सबन्धस्य समासे प्रवेशः । तदंशे विवरणत्वाभावात् । अत एव निषेधसार्थक्यं पार्ष्ठिकपरस्परावच्छेदेऽपि सामर्थ्यस्यानपायात् । 'मित्रावरुणावृत्तावृधा' मित्यत्र प्रथमं द्वयोः क्रियान्वयेऽपि पार्ष्ठिकाभेदमादायैव सामर्थ्येन पराङ्गवद्भावस्य पूर्वमुपपादितत्वाच्च ।

वस्तुतः कारकविभक्तीनामेव क्रियान्वयनियमात् । तदन्तानामेव कटोऽपि कर्मेति न्यायेन क्रियान्वये पश्चान्निगथाऽवच्छेदः । षष्ठ्यास्तु कारकविभक्तित्वाभावात्प्रथममेव नामार्थान्वयः तस्यां सामानाधिकरण्याद्विभक्तिरिति पक्षस्यैव व्यवस्थितत्वात् । अतएव षष्ठ्याःक्रियान्वयात्पूर्वमेव नामार्थान्वयादत्राभिधानीमित्यादौ विशिष्टोद्देशेऽपि न वाक्यभेदः । अतएव समानाधिकरणमसमर्थमिति वाचनिकमितिसिद्धान्तः । अतएव सर्पिषः पीयमानस्येति समानाधिकरणषष्ठीसमासप्रतिषेधोदाहरणं भाष्यकृद्भिरुक्तम् । अथात्वभिहितमिति वाचनिकात् सामर्थ्यप्रतिप्रसवादिति तदभिप्रायः । एवंच पञ्चकं प्रातिपदिकार्थ इतिपक्षे द्वितीयादयो यथा प्रातिपदिकोत्तरं द्योतकतयैवोपयुज्यंते तथा राजकुमारीमित्यादावपीति क्लेशोऽप्यनाश्रयणीयः । एवमलौकिकविग्रहेऽपि लौकिक-

विग्रहश्चेदेव विभक्तिः तस्मात्परिनिष्ठितविभक्त्या विग्रहपक्षोऽप्यदुष्ट इति तिष्ठतु विस्तरः ।

अन्यग्रहणं किम् । वर्तिपदार्थप्राधान्ये सावकाशस्य तत्पुरुषस्यान्यपदार्थे बहुव्रीहिणा परत्वाद्बाधो यथा स्यात् । अन्यथा नीले उत्पले सर इत्यादौ समानाधिकरणस्थले बहुव्रीहेरेव बाधापत्तेः । कण्ठेकाल इत्यादौ व्यधिकरणस्थले बहुव्रीहिः सावकाशत्वात् । पद्ग्रहणं किं वाक्यार्थे माभूत् । ग्राहवती नदीति । अस्य हि मा स्नासीरिति तात्पर्यगम्यो वाक्यार्थः । अर्थग्रहणं किम् । कृत्स्ने पदार्थे यथा स्यात् । अन्यथा षष्ठ्यर्थसंबन्धमात्रमर्थः स्यात् तथाच देवदत्तादिसामानाधिकरण्यं न स्यात् नामार्थयोर्भेदान्वयायोगात् । त्रिकतः शेषस्योक्ततया समानाधिकरणानामेव बहुव्रीहिः । नेह । पञ्चभिर्भुक्तमस्य । पञ्च भुक्तवन्तो यस्येत्यत्रापि न भवत्यनभिधानात् । अव्ययानां वाच्यः । उच्चैर्मुखः उच्चैः शब्दस्याधिकरणशक्तिप्रधानत्वाद्वैयधिकरण्यादप्राप्तौ वचनमिति कैयटादयः ।

अन्ये तु प्रथमान्तत्वमात्रस्येहापि सत्त्वादकर्तव्यमेवेदम् । अत एव वाक् च दृषच्च प्रिया यस्येति त्रिपदे बहुव्रीहौ कृतेऽवान्तरद्वन्द्वोऽभ्युपगतः ।

प्रादिभ्यो धातुजस्य बहुव्रीहिस्तदुत्तरपदलोपस्तु वा वक्तव्यः । प्रपतितपर्णः प्रपर्णः ।

नञोऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपः । अविद्यमानो घटो यत्र तदघटं भूतलम् । अविद्यमानघटं वा ।

अस्तिक्षीरादीनामुपसंख्यानमसुबन्तत्वात् अव्ययत्वात्सिद्धम् । तिङन्तत्वादप्राप्तौ वचनम् । तिङन्तप्रतिरूपकमव्ययमिति प्रत्याख्यानम् । यद्यपि किंसब्रह्मचारीसत्र के सब्रह्मचारिणो यस्येति समासे कठ इत्युत्तरानुपपत्तिः । प्रश्नस्य बहुवचनान्तत्वे उत्तरेण-

कवचनायोगात् । केषामिति षष्ठीसमासेऽपि स एव दोषः । आद्युदात्तत्वानुपपत्तिश्च । एतेन सुप्सुपेति कः सब्रह्मचारीति समानाधिकरणसमास इत्यपास्तम् । कः सब्रह्मचारी यस्य स किंसब्रह्मचारी त्वं इति समासे एकत्वस्वरयोरुपपत्तावपि तद्भिन्नस्य प्रश्नविषयत्वादहंकठ इति अस्मत्सामानाधिकरण्यमनुपपन्नं स्यात् । तथापि प्रथमोक्त एव बहुव्रीहिः । स्वस्य कठत्वोक्त्या तेषामपि कठत्वाक्षेपात् । अन्यथा सब्रह्मचारित्वायोगात् । अतएव कठा इति बहुवचनस्योत्तरे सर्वदा नास्तित्वम् । वर्तिपदार्थानां उपसर्जनत्वात्तदुपलक्षितस्यान्यपदार्थस्य प्राधान्यात् किंसब्रह्मचारीति समासेन तेषामनभिधानात् । वाक्येन प्रश्ने तूत्तरेऽपि बहुवचनं भवत्येवेति सिद्धान्तः । द्वौ द्रोणौ अर्द्धद्रोणश्चार्धतृतीया द्रोणा इत्युच्यन्ते । अर्धस्तृतीयो येषामिति बहुव्रीहिः ।

नचान्यपदार्थस्य वर्तिपदार्थव्यतिरिक्तत्वानियमादत्र च बहुत्वान्यथानुपपत्त्या वृत्तौ वर्तिपदार्थस्याप्यन्तर्भावात्कथं बहुव्रीहिरिति वाच्यम् । अर्धस्य द्वयोश्च यः समुदायः स समासार्थः । तदवयवाश्च कदाचिद्भेदेन कदाचिदभेदेन विवक्ष्यन्ते । यथा ब्राह्मणानां सङ्घः । सङ्घीभवन्ति ब्राह्मणा इति । ततश्चोद्भूतावयवभेदः समुदायः समासार्थ इति बहुवचनम् । द्रोणशब्दस्य लक्षणया द्रोणयोस्तदर्धे च वृत्तिरिति सामानाधिकरण्यमिति दोषाभावात् । नचैवं 'असिद्वितीयोऽनुससार पाण्डवं' 'संकर्षणद्वितीयस्य बल कृष्णस्य वर्धता'मित्यादावपि द्वयोः पूरणस्य द्वितीयस्य द्व्यात्मकसमुदायावयवत्वात्तदवयवस्य समुदायस्य समासार्थत्वाद्द्विवचनापत्तिः । द्वितीयशब्दस्याव्युत्पन्नस्य सहायार्थस्य तत्र प्रयोगात् ।

सचायं बहुव्रीहिर्द्विविधः । तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्च तस्यान्यपदार्थस्य यत्र क्रियान्वयः स आद्यः । यथा लम्बक-

णेमानयेत्यादौ । तदभावे द्वितीयः । यथा चित्रगुमानयेत्यादौ एवं च विशेषणत्वोपलक्षणात्वाभ्यां तद्गुणातद्गुणविभागः ।

यत्तु कैयटः संयोगसमवायलक्षणे संबन्धे तद्गुणसंविज्ञानम् । स्वस्वामिभावादिके तु संबन्धे बहुव्रीहावतद्गुणसंविज्ञानमिति संक्षेपेण विषयविभाग इति । तत्संभवमात्राभिधानम् । अतएव संक्षेपेणेत्युक्तम् । सर्वादीनि सर्वनामानीत्यत्र समुदायेन सर्वशब्दस्योक्तद्वयाभावात् सर्वनामसंज्ञानुपपत्तेः । जन्माद्यस्य यत इति सूत्रे जन्मनो ब्रह्मलक्षणत्वानुपपत्तेश्च । विशेषणादिविभागश्च कल्पतरावुक्तः । कार्यान्वयित्वेन विभेदकं हि विशेषणं नैल्यमिवोत्पलस्य अनन्वयित्वेन भेदकानामुपाधिता लक्षणता च सिद्धा ।

यावत्कार्यमवस्थायि भेदहेतोरुपाधिता ।
कादाचित्कतया भेदधीहेतुरुपलक्षणम् ॥

उपलक्षणत्वं च प्रत्याय्यव्यावृत्त्यनवच्छेदकत्वे सति तत्समानाधिकरणत्वं बुद्धेः । विशेषणत्वं च तदवच्छेदकत्वे सतीत्यादि स्पष्टमन्यत्र । प्रकृते तु कार्यान्वयानन्वयाभ्यामेव तद्भेदः । तत्रौत्सर्गिकस्तद्गुणसंविज्ञानो विशेषणत्वस्य मुख्यत्वात् । बोधकसत्त्वे तु द्वितीयः । आषाढादिचतुर्मासानित्यादौ श्रावणादिमासचतुष्टयस्य वचनान्तरैकवाक्यतया ग्रहणात् । अतएव द्विपदगर्भो बहुव्रीहिस्तद्गुण एवेत्यपास्तम् । जक्षित्यादयः षडित्यादौ व्यभिचारादिति अद्वैतचन्द्रिकायाम् ।

## संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये ॥ २५ ॥

संख्येयार्थया संख्यया अव्ययादयः समस्यन्ते । दशानां स-

मीपे ये सन्ति ते उपदशाः। उपविंशाः। बहुव्रीहौ संख्येयेति डच्। 'तिविंशतेर्डिती'ति तिलोपः। 'अयं वीरो वारानजयदुपविंशम् वसुमती'मिति मुरारिः। सामीप्यप्राधान्ये त्वव्ययीभाव इति प्रागुक्तम्। एवमासन्नविंशाः। सामीप्यमव्यवहितपूर्वोत्तरान्यतरानिष्ठम्। 'वारानामन्नत्रिंशान् विशसितविषमक्षत्रजातिप्ररोह' इति मुरारिः। अदूरत्रिंशाः। आधकचत्वारिंशाः। द्वौ वा त्रयो वा द्वित्राः। यद्यपि द्वौ त्रयो येषामुन्मुग्धानामिति विग्रहे पूर्वेणैव सिद्धम्। बहुव्रीहेरसंख्येयवृत्तित्वात्समासान्तदौर्लभ्यं च। द्वौ वा त्रयो वेति विग्रहे पक्षे द्विवचनप्रसङ्गः। तथापि संख्यायामनिर्ज्ञातायां बहुवचनं प्रयोक्तव्यम्। कति भवतः पुत्रा इति दर्शनात्।

इदं च वाचनिकमिति केचित् अन्येतु वाशब्दस्यात्र संशयार्थत्वात्संशयस्यानियतसंख्याविमर्शित्वात्तद्विषयबहुत्वसद्भावान्न्यायसिद्धमित्याहुः।

यद्वा कार्यान्वयस्यान्यतरमात्रवृत्तित्वेऽपि बोधे पञ्चानां विषयत्वात्। तदुक्तं सैषा पञ्चाधिष्ठिता वागिति। द्विदशा इत्यत्र द्वौ दशेति न विग्रहः। दशसंख्याया एकत्वात्। नापि द्विशब्दस्य दशत्वावृत्तिगतसंख्यापरत्वात् द्विर्दशेति सुजन्ताद्विशब्देन तस्य शब्दान्तरत्वेन संख्यावाचित्वाभावात्। नापि द्वौ दशतौ वर्गाविति। अदन्तस्य संख्यार्थत्वाभावात्। तथापि सुजन्तेनैव विग्रहः। अस्वपदविग्रहापगमात्। शब्दशक्तिस्वाभाव्येन समासेन क्रियाभ्यावृत्तिलक्षणसुजर्थस्याभिधानान्न तत्र तत्प्रयोगः। वाक्ये तु सुचं विना तदर्थानवगमात्तत्प्रयोग इति विशेषः। एवंच न्यायसाम्याद्द्वौ दशताविरयपि विग्रहः। तदुक्तम्।

शब्दान्तरत्वाद्वाक्येषु विशेषा यद्यपि श्रुताः।
वृत्तिशब्दोन्य एवायमर्थान्तरनिबन्धनः। इति।

इतिकैयटः । सुजादीनां विशेषाणां वाक्ये प्रयोगेऽपि वृत्त्यन्तर्गतस्य द्व्यादिशब्दस्य तद्भिन्नतया सुजाद्यर्थप्रत्यायकत्वमिति कारिकार्थः । न च द्वित्राः द्विदशाः इत्यत्र वार्थसुजर्थयोः प्राधान्यात्पूर्वेणैव सिद्धमिति वाच्यम् । तयोः प्राधान्याभावात् । कवभावार्थत्वाच्च ।

## दिङ्नामान्यन्तराले ॥२६॥

दिशां संज्ञाः समस्यन्ते अन्तराले वाच्ये । दक्षिणस्याः पूर्वस्याश्च दिशोऽन्तरालं दक्षिणपूर्वा । सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति भाष्यम् । नामेति रूढिग्रहणार्थम् । तेनैन्द्रीकौवेर्यादीनामन्तरालप्राधान्ये समासाभावः । अप्रथमाविभक्त्यर्थे इत्युक्तत्वाद्वैयधिकरण्याच्च पूर्वेणासिद्धौ वचनम् । विभाषादिक्समासे इति सर्वनामसंज्ञाविकल्पे अस्यैव ग्रहणाय प्रतिपदोक्तत्वसंपादनार्थमप्येतत् । कवभावार्थं च ।

## तत्र तेनेदमिति सरूपे ॥२७॥

सप्तम्यन्ते ग्रहणविषये तृतीयान्ते च प्रहरणविषये सरूपे पदे इदं युद्धं प्रवृत्तमित्यर्थे कर्मव्यतीहारे समस्येते । इतिशब्दस्य लौकिकविवक्षापरत्वेन ग्रहणप्रहरणकर्मव्यतीहारयुद्धानां लाभः । तत्रापि युद्धं विषयीभूतं अन्ये वाच्या इति विशेषः । ग्रहणप्रहरणशब्दयोर्यथाक्रममधिकरणे करणे च ल्युट् । केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि । मुष्टीमुष्टि । दण्डैश्च दण्डैश्च प्रहृत्य दण्डादण्डि । इच्कर्मव्यतीहारे इति समासान्त इच् । तस्य तिष्ठद्गुप्रभृतीनिचेत्यव्ययीभावमध्ये पाठादव्ययत्वम् । अन्येषामपीति दीर्घः ।

न च इदंशब्दात्पूर्वमाकार प्रश्लिष्यैवात्वं विधीयतां उत्तरपदे यस्येति लोपावश्यकत्वेन प्रयोजनाभावादिति वाच्यम् । यदि नियोगतोऽस्यानेनैव दीर्घत्वं स्यादिति भाष्येण अस्यमीत्यादावतिप्रसङ्गस्य भाष्ये दर्शितत्वात् । एवं च मुष्टामुष्टीति प्रामादिकमिति कैयटादयः । सरूपेतिकिम् । हलैश्च मुसलैश्चेदं युद्धं प्रवृत्तम् । इदं सूत्रं वैयधिकरण्यार्थम् । प्रथमाविभक्त्यर्थे एकशेषबाधनार्थं कबभावार्थंच । अन्यथा सहविवक्षितत्वात्सरूपत्वादेकविभक्तित्वाच्चैकशेषः स्यात् समूहान्यथानुपपत्त्या समूहविषयिण्यानया बहुव्रीहिसञ्ज्ञया त्वारम्भसामर्थ्यात्तद्बाधात् । नचपरत्वात्पूर्वयोगेनैवैकशेषबाधः स्यात् । अन्यपदार्थापेक्षया तस्य बहिरङ्गत्वात् । परादप्यन्तरङ्गस्यैकशेषस्य बलवत्वात् । नच विशेषविहितेनेचा बाधात्कबभावः । शेषाद्विभाषेति कबभावे पक्षे इचः सावकाशत्वात् ।

तथाहि तत्रशेषपदं तन्त्रावृत्त्यादिना उभयपरम् । उपयुक्तादन्यः शेषः । अनुक्तसमासान्त इति यावत् । द्वितीयस्य तु शेषाधिकारोऽर्थः । आद्येन प्रियमधुक इत्यादौ द्वितीयेन दक्षिणपूर्वादौ तदभावः । दिङ्नामानीत्यादौ शेषग्रहणाननुवृत्तेः शेषाधिकारएव गृह्यते नतूपयुक्तादन्य इति कैयटफक्किकायास्तु एवकारस्य क्रियासंगतिं कृत्वा शेषाधिकारोऽपि गृह्यते नतूपयुक्तादन्यएवेति केवलानुपयुक्तग्रहणव्यवच्छेदे तात्पर्यमित्याहुः ।

# तेन सहेति तुल्ययोगे ॥२८॥

तुल्ययोगवृत्तिः सहशब्दः तृतीयान्तेन वा समस्यते । पुत्रेणसह सपुत्र आगतः । सहपुत्रः । वोपसर्जनस्येति सादेशः । पितुरन्यपदार्थस्य प्राधान्येऽपि वैयधिकरण्यार्थं प्रथमार्थं कबभावार्थं च वचनम् । तुल्ययोगेति किम्—

सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ।

तेषु विद्यमानेष्वित्यर्थः । अतएवाग्ना ई पत्नीवत्सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहेत्यत्रैकक्रियान्वयं विनापि सहयोगोपपत्त्या त्वष्टुर्देवतात्व नेति सिद्धान्तः । तुल्ययोगवचनं प्रायिकम् विभाषा साकाङ्क्ष विभाषाप्रपूर्वस्येत्यादिज्ञापकात् । तेन सकर्मक इत्यादि सिद्धम् ।

# चार्थे द्वन्द्वः ॥ २९ ॥

प्रागुक्तसमासं अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः । समुच्चयान्वाचयेतरेतरयोग समाहाराश्चार्थाः । मिथोऽनपेक्षयोरेकस्मिन्नन्वयः समुच्चयः । यथा "अहरहर्नयमानो गामश्वं पुरुषं पशुम् । वैवस्वतो न तृप्यति सुराया इव दुर्मतिः" । अत्रगवादीनां नयनान्वयः । गम्यमानार्थत्वात् चशब्दाप्रयोगः । मुख्यानुषङ्गिकोद्देश्यत्वाभ्यां भिन्नक्रियान्वयित्वमन्वाचयः । भिक्षामट गांचानयेति । अत्रभिक्षाटनस्यावश्यकत्वं गवानयनस्य कृताकृतत्वम् ।

यद्यपि धवंछिन्धि खदिरमपीत्यन्यतरस्यावश्यकत्वविवक्षायां क्रियासाम्येऽप्यन्वाचय एव । घटमानय पटं चेत्यादावुभयप्राधान्यविवक्षायां समुच्चय एव । तथापि क्रियैक्यभेदौ न नियामकौ किन्तु गुणप्रधानभावविवक्षैवेति कैयटः ।

मिलितानामन्वय इतरेतरयोगः । समूहः समाहारः । तत्राद्ययोर्न समासः । असामर्थ्यात् । अन्त्ययोस्तु धवखदिरौ वाग्दृषदम् । नच चार्थे विधानात् द्वन्द्वस्याव्ययत्वापत्तिः । तत्प्रकरणे पाठाभावात् । शेषग्रहणं किम् । याज्ञिकश्चायं वैयाकरणश्चायं याज्ञिकवैयाकरणः, कठबह्वृचः, नीलोत्पलमित्यादौ माभूत् । विशे-

षणमित्यादावुपयुक्तत्वेन शेषत्वाभावः । अन्यथैकस्मिन्धर्मिणि अनेकधर्मसमुच्चयेन चार्थसद्भावात् । द्वन्द्वसंज्ञापत्तौ अभ्यर्हितत्वाद्वैयाकरणादेः पूर्वनिपातः स्यात् । तत्पुरुषेतु काणखञ्जादिवदनियतपूर्वनिपातसिद्धिः । इदंच परंकार्यमिति पक्षे । एकसंज्ञाधिकारे तुविशेषविहितत्त्वादेव तत्पुरुषसंज्ञासिद्धेः । नच शेषग्रहणपक्षे ।

उपास्नातं स्थूलसिकतं तूष्णींगङ्गमहाह्रदम् ।
द्रोण चेदशको गन्तुं मत्वा तावां कृताकृते ॥

इत्यत्र द्वन्द्वो नस्यात् क्तेननञ्विशिष्टेनेति समासविधानादशेषत्वादिति वाच्यम् । कृताकृतेत्यत्र भिन्नयोरेव कर्मणोरभिमतत्वात् ।एकस्यैकदेशावच्छेदेन कृताकृतत्वविवक्षायामेव च क्तेनेत्यादिसमासप्रवृत्तेः । अत्र पदार्थभेदे द्वन्द्व इत्यके । अन्येतु पदार्थतावच्छेदकभेदेद्वन्द्वः । चार्थे इत्यस्यापि भेदेगम्ये इति नार्थः । धवखदिरावित्यत्र विभक्त्यर्थोपस्थित्यभावेन एकस्यान्यस्मिन् विशेषणत्वाभावेन भेदस्य संसर्गतया भानायोगात् । अत एव नप्रकारविशेषत्वाभ्यां, अपदार्थत्वात्, छिन्धीत्यनन्वयाच्च । अतोवास्तव एवभेदो विवक्षणीयः । सचपदार्थप्रतियोगिकश्चेत्यत्र नियामकाभावात् । तेननीलोत्पलादौ व्याप्तिविशिष्टपक्षधर्मेत्यादौच पदार्थैक्येऽपि समस्यमानार्थतावच्छेदकस्य व्याप्तिविशिष्टपक्षधर्मत्वादेभेदात्तत्सम्भवः ।

नचैवमेकशेषानुशासनवैयर्थ्यम् । पयसी इत्यत्र जलदुग्धोभयपरत्वे जलत्वदुग्धत्वरूपपदार्थतावच्छेदकभेदेन तत्सार्थक्यात् । नचनीलघटयोरित्यत्र द्वित्वानन्वयः पदार्थे बाधात् । तदवच्छेदकस्यैकदेशत्वाद्द्रव्यभिन्नतयाद्वित्वान्वयानर्हत्वाच्चेतिवाच्यम् । साधुत्वमात्रार्थत्वात् । नचनीलघटयोरभेदइत्यत्र कर्मधारय

एवास्तु । नच द्विवचनानुपपत्तिः, एकधर्मिणि कर्मधारयोत्तरमिव द्वन्द्वोत्तरमपि द्विवचनानुशासनाभावादिति वाच्यम् । कर्मधारयादेव नीलाभिन्नतया घटोपस्थितौ तस्याभेदानाकाङ्क्षत्वादनन्वयापत्तेः । तत्राभेदस्य संसर्गतया भानेऽपि फलानुरोधेन निराकाङ्क्षत्वादित्याहुः ।

अपरे तु पदप्रतिपाद्यभेदे द्वन्द्वः । अतो नोभयत्राप्यनुपपत्तिः । एकशेषस्थले घटद्वयस्यात्र च नीलत्वघटत्वयोश्च भेदात् । नचैवमेकस्मिन् घटे घटश्चघटश्च घटा इत्यपि प्रसङ्गः । तत्प्रतिपाद्यानां घटघटत्वसमवायानां भेदादितिवाच्यम् । समस्यमानपदयोर्मध्येऽन्यतरपदबोध्ययावद्व्यक्तिभेदस्यान्यतरपदबोध्ये विवक्षितत्वात् । यद्वा विषयितासम्बन्धेनैकपदस्य यत्कार्यतावच्छेदकं तद्भिन्नविषयतासम्बन्धावच्छिन्नकार्यताकत्वस्यान्यपदेऽभिमतत्वात् । अत्र तु पदद्वयस्यापि घटत्वविशिष्टैतद्घट एव कार्यतावच्छेदक इत्याहुः ।

प्रकृतमनुसरामः । अनेकग्रहणं किम् । होतृपोतृनेष्टोद्गातारः । नचायं द्वयोर्द्वन्द्वगर्भो द्वन्द्व इति वाच्यम् । होतृपोत्रोरप्यानङ् प्रसङ्गात् ।

स्यादेतत् । धवखदिरयोः परस्परमनन्वये सामर्थ्याभावात्समासो न स्यात् । नचैकक्रियान्वयित्वमेव तदिति कैयटोक्तरीत्या निर्वाहः । कुतः सर्वो मृत्तिकयेत्यर्थे कृतः सर्वमृत्तिक इत्यापत्तेः । करणत्वकर्मत्वाभ्यां सर्वमृत्तिकापदार्थयोः क्रियान्वयित्वात् । नच वचनसामर्थ्यादसामर्थ्येऽपि समासो यद्वा कर्मत्वाद्येकरूपेणान्वयित्वसामर्थ्यमितिवाच्यम् । अन्वाचयेऽहरहरित्यादौ चातिप्रसङ्गात् । उत्तरपदोत्तरं द्विवचनाद्यनुपपत्तिश्च । तदर्थस्यैकत्वात् । तस्मात्धवपदं धवखदिरोभयपरम् । एवं खादिरपदमपि । तथाच पदद्वयार्थयोः परस्परमभेदान्वयरूपं सामर्थ्यं वाक्ये च तद्-

भावः स्पष्टः। द्वितीयार्थस्य प्रतिपत्त्यर्थं च शब्दान्तरप्रयोगः। अर्थद्वयस्यैव पदद्वयबोध्यत्वान्न बहुवचनप्रसङ्गः। अत एव द्यावाचिदस्मै पृथिवी नमेते इत्यत्र पृथिवीशब्दस्य द्विवचनान्तत्वं संगच्छते। वाच्छन्दसीति पूर्वसवर्णः। अन्यथा संनमेते इति द्विवचनान्तेन सामानाधिकरण्यं पृथिवीशब्दोत्तर पदपाठे वेलायामितिशब्दप्रयोगः प्रगृह्यसंज्ञानिबन्धनप्रकृतिभावश्च न स्यात्।

तदेतत्सर्वमभिसंधाय वार्तिककारेणोक्तम्। युगपदधिकरण वचने द्वन्द्व इति। अधिकरणं समस्यमानपदयोरर्थौ तयोर्युगपद्वचने पदद्वयस्यापि पदद्वयार्थबोधकत्वे इत्यर्थः।

अत्र भाष्यकाराः। सेयं युगपदधिकरणवचनता दुःखा च दुरुपपादा चेति। दुःखेति प्रतीतिविरोधात्। दुरुपपादेति प्रमाणाभावात्। वृद्धव्यवहारेण शब्दार्थावसायात्। धवपदस्य खदिरबोधकत्वाभावात्। धवखदिरावितिवाक्यावृत्तिजन्यबोधादत्र वैलक्षण्याच्च। उद्देश्यतावच्छेदकविधेययोरैक्ये घटो घट इत्यादिवच्छाब्दबोधानुपपत्तेश्च। एकपदमुख्यार्थेन समसपरपदमुख्यार्थस्याभेदबोधोपगमे च योग्यताविरहात्। एकार्थत्वेऽपि तादृशान्वयसंभवे पदद्वयस्याप्यर्थद्वयबोधकत्वकल्पनप्रयासवैयर्थ्याच्च। पृथिवीत्यत्र च छान्दसव्यत्ययेनैकवचनस्थाने द्विवचनोपपत्तेः। द्वन्द्वेन समुदायाभिधायिना द्विवचनाद्युपपत्तेः। न च तस्यैकत्वादेकवचनापत्तिः। उद्भूतावयवभेदस्य समुदायस्य समासार्थत्वात्। अर्थग्रहणसामर्थ्याच्चकारेण प्रकाशितो योऽर्थस्तत्र द्वन्द्वः। गामश्वमित्यादौ तु चकारप्रयोगव्यतिरेकेणापि समुच्चयावगमान्न तस्य चमात्रप्रकाशितत्वं सामर्थ्यं तु पूर्वोक्तमेव। अन्यथा यथोक्तरीत्यापि अनिस्तारात्। कुतः सर्वमार्त्तिक इत्यत्र विधायकाभावेन समासापत्तेरभावात्। कुता-

सहैव तस्य विहितत्वात् । क्वचिदसामर्थ्ये समासदर्शनमात्रेण तदा-पत्तिसौकर्ये च असूर्यंपश्याइत्यसमासमात्रेण कृतः सर्वमृत्तिकइति समासापत्तेस्तेनापि परिहर्तुमशक्यत्वात् । वचनप्रामाण्यात्समास-इत्यस्य तुल्यत्वादिति यत्किंचिदेतत् ।

न्यग्रोधो दृश्यता प्लक्षश्चेत्युक्ते न्यग्रोधस्य न चार्थवृत्तित्वं किन्तु प्लक्षस्यैव । अतोऽनेकपदस्यचार्थवृत्तित्वाभावान्न समासः ।

यत्तु वदन्ति । विग्रहेयुगपदधिकरणवाचिताया दुरुपपादत्वं भाष्यार्थो नतु समासेऽपि । तत्पूर्व विग्रहे खल्वपि युगपदधिकरण वचनता दृश्यते । धवौच खदिरौचेत्यादिदर्शनेन तथैव युक्तत्वात् । प्रक्रियादशायां प्रथमप्रवृत्तैकवचनस्य त्यागायोगात् । नच समासे प्रत्येकपदयोरुभयार्थत्वे विग्रहेऽपि तथात्वमिति वाच्यम् । राज-पुरुषइत्यादौ राजपदस्य सबन्धिलाक्षणिकत्वेन विग्रहस्यापि रा-जाचासौ पुरुषश्चेत्याकारापत्तेः । नचेष्टापत्तिः । षष्ठ्या आक्रोशे इत्यादेरलुग्विधेस्तत्स्वरविधेश्च विरोधापत्तेः । इति ।

तदसत् । तद्विषयं चेति पूर्वग्रन्थे समासेऽपि युगपदधिकरण-वचनत्वस्य दर्शितत्वेन तत्साधारण्येनैव दूषणे भाष्यतात्पर्या-त् । अन्यथा चार्थेद्वन्द्व इति न्यासमसमर्थनानुपपत्तेः । विग्रहे तद्धारणानुपपत्तेश्च समासार्थाविबोधकस्यैव तत्त्वात् । नच षष्ठी-समासाद्युच्छेदः । तत्रषष्ठयासम्बन्धस्य वक्तुं शक्यत्वात् । ताव-तापि सम्बन्धी नोक्त इति चेत् किं ततः । धर्ममात्रस्योक्तत्वात् । विग्रहे सर्वांशसाम्यस्य ब्रह्मणाप्यानेतुमशक्यत्वात् । अत्र चधव-श्चेति विग्रहे समासान्तर्गतधवशब्दाद्द्वितीयार्थस्य प्रत्याययितुम-शक्यत्वात् ।

अतएवालुग्विध्यादेर्न विरोधः । अतएव युष्मदस्मत्प्रत्यय-

गोचरयोरित्यत्र युगपदधिकरणवचनत्वानुरोधेन द्विवचनान्ताभ्या मेव युष्मदस्मभ्यां द्वन्द्वे विग्रह इत्याशङ्क्योक्तभाष्यकैयटानुसारेणोभयथापि तदभाव इत्युक्तमौपनिषदवृद्धैः ।

नन्वेव आङ्गश्च वाङ्गश्च कालिङ्गश्चेति अङ्गवङ्गकलिङ्गा इति नस्यात् । तद्राजस्य बहुषु तेनैवास्त्रियामिति अपत्यकृतबहुत्वविवक्षायां अपत्यप्रत्ययस्य लुग्विधानात् । युगपदधिकरणता विनाच तद्राजार्थस्य बहुत्वानन्वयात् । तद्राजात्तेन बहुत्वोक्तौ लुगित्यर्थे भियवाङ्गाइत्यत्रापि तत्प्रसङ्गादिति चेन्न । बहुषुवर्तमानस्येत्यर्थमादाय संप्रति प्रतीयमानं यद्बहुत्व तदाश्रयस्य तद्राजेन पूर्वमभिधानात्, इत्यस्य त्वयापि वाच्यत्वात् । तच्चसमासोत्तरसुपेति मम विशेषः । नहियुगपदधिकरणवचनपक्षेऽपि बहुत्वं तदर्थः । धर्मिणामेव तदर्थत्वात् । वस्तुतो बहूनां बोधस्य तदभावेऽप्यविशेषात् । अएव तत्रैव बहुवचने परे लुगितिपक्षेऽपि प्रत्येकस्मादपि परतोबहुवचनमस्त्येवेति नदोषइति भाष्यकारैरेवोक्तम् । अलौकिकद्वन्द्वविग्रहे वर्तिपदानामेकवचनान्तत्वस्य युगपदधिकरणवचनत्वपक्षे नदभिप्रायविरुद्धत्वात् । समाहारद्वन्द्वे पाणिपादं वादयेत्यत्र प्रकृत्यर्थैकदेशे कर्मत्वस्य, एकत्वस्यतु समाहार एवान्वयो व्युत्पत्तिवैचित्र्यात् ।

यत्तु समाहारसंज्ञा नदीवृद्ध्यादिवत् पारिभाषिकी नतु तस्य शब्दार्थत्वम् । एकत्वमनन्वितमेव । नच द्विवचनाद्यापत्तिरसाधुत्वादिति । तन्न । रथघोषाधिकरणविरोधात् । रथघोषेणमाहेन्द्रस्य स्तोत्रमुपाकरोतीत्यत्रोभयपदलाक्षणिकसमाहारद्वन्द्वापेक्षया पूर्वपदमात्र लाक्षणिकषष्ठीसमासस्य लाक्षणिकतायास्तत्रोक्तत्वादेषा दिक् । इदं एकविंशतिरित्यादौ समाहारद्वन्द्व इति भाष्यम् । नच नपुंसकापत्तिः । लिङ्गस्य लोकाश्रयत्वात् । तेन राजन्यबहुवचनद्वन्द्वेऽन्ध-

कद्वाष्णिषु संख्येतिपूर्वपदप्रकृतिस्वरः सिद्धः । शतसहस्रमित्यादिषष्ठीसमासवारणाय नस्य द्वन्द्वविषयत्वात् । यदि त्वेकाधिका विंशतिरिति शाकपार्थिवादित्वादधिकपदलोपस्तदा समासान्तोदात्तत्वम् ।

# उपसर्जनं पूर्वम् ॥ ३० ॥

समासे उपसर्जनं पूर्वं प्रयोज्यम् । अधिहरि । नच राज्ञः पुरुषस्येत्यत्र द्वयोरपि षष्ठीति समासशास्त्रे प्रथमानिर्दिष्टत्वादुपसर्जनतया पर्यायेण पूर्वनिपातापत्तिः । अन्वर्थसंज्ञयाप्रधाने एव तत्प्रवृत्तेः । अत्र विशेष्यतया पुरुषस्यैव प्राधान्यात् ।

# राजदन्तादिषु परम् ॥ ३१ ॥

एषु उपसर्जनं परं स्यात् । दन्तानां राजा राजदन्तः । वनस्याग्रेऽग्रेवणम् । गणे निपातनादलुक् । आकृतिगणोऽयम् । धर्मादिष्वनियम इष्यते । अर्थधर्मौ धर्मार्थौ । जम्पती । दम्पती । जायापती । गणपाठाज्जायाया दंजम्भावः ।

# द्वन्द्वे घि ॥ ३२ ॥

हरिहरौ । अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे हरिहरगुरवः ।

# अजाद्यदन्तम् ॥ ३३ ॥

अजादित्वादन्तत्वविशिष्टं द्वन्द्वे पूर्वं स्यात् । बहुष्वनियमः । अश्वरथेन्द्राः । इन्द्राश्वरथाः । घ्यन्तादजाद्यदन्तं विप्रतिषेधेन । इन्द्राग्नी ।

## अल्पाच्तरम् ॥ ३४ ॥

द्वन्द्वेऽल्पाच्कं पूर्वं स्यात् । नच बहूनां संनिधाने द्विवचनोपपदत्वाभावात्तरबनुत्पत्त्या तत्र नियमो न स्यादिति वाच्यम् । निपातनात्स्वार्थे तरप् कुत्वचुत्वाभावश्चेत्याश्रयणात् । धवखदिरौ । ग्रामादे धनपतिरामकेशवानाम् । मृदङ्गशङ्खतूणवाः पृथक्कूदन्ति समदीसादौ द्वयोः पृथग्द्वन्द्वं कृत्वा पूर्वेण पुनर्द्वन्द्वः । नच जातिरप्राणिनामित्येकवद्भावापत्तिः । नियतद्रव्यपरत्वात् । नापि तूर्याङ्गत्वेन । शङ्खस्य तदभावात् । यद्वा तूर्यशिल्पोपजीविनामेव तूर्याङ्गत्वेन ग्रहणात् । पूर्वाभ्यामल्पाच्तरं विप्रतिषेधेन । वागग्नी । वागिन्द्रौ । अनित्यमिदं प्रकरणम् । लक्षणहेत्वोः, समुद्राभ्राद्धः इत्यादि निर्देशात् । एतेन 'बर्हिराज्ययोरसंस्कारे शब्दलाभा'दिति जैमिनिसूत्रम् 'अधीतिबोधाचरणप्रचारणै'रित्यादि व्याख्यातम् ।

ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण पूर्वनिपातो वक्तव्यः । शिशिरवसन्तौ कृत्तिकारोहिण्यौ । समेतिकिम् । ग्रीष्मवसन्तौ । अभ्यर्हितं पूर्वम् । मातापितरौ, एते मान्या यथापूर्वं तेभ्योमाता गरीयसीति याज्ञवल्क्यः । लघ्वक्षरं पूर्वम् । कुशकाशम् ॥ सर्वतोऽभ्यर्हितं पूर्वं लघ्वक्षरादपीति वक्तव्यम् ॥ दीक्षातपसी ॥ वर्णानामानुपूर्व्येण ॥ ब्राह्मणक्षत्रियविट्शूद्राः ॥ भ्रातुर्ज्यायसः ॥ युधिष्ठिरार्जुनौ ॥ संख्याया अल्पीयस्याः ॥ एकादश द्वादश द्वन्द्वादन्यत्राप्येतत् । द्वित्राः । 'त्र्येकयो'रिति सौत्रत्वात्सिद्धम् ॥

## सप्तमीविशेषणे बहुव्रीहौ ॥ ३५ ॥

सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं प्रयोज्यम् । कण्ठेका

लः । यदा कण्ठे किञ्चिदस्तीति सामान्यतो ज्ञाते काल इत्युच्यते तदा कण्ठस्य विशेष्यत्वात्सप्तम्याः पृथगुपादानम् । अन्यदा विशेषणतयैव सिद्धेः । चित्रगुः ।

॥ सर्वनामसंख्ययोरुपसंख्यानम् ॥ विश्वदेवः । इदमपि विश्वशब्दस्य विशेष्यत्वे । द्विशुक्लः । द्वयोर्विशेषणत्वादनियमप्रसङ्गः । द्विपुत्र इत्यादि विशेषणत्वादपि सिद्धम् । तः परो यस्मात्स तपरः । जहत्स्वं पदात् स जहत्स्वः । तादृगर्थो यस्यां सा जहत्स्वार्था वृत्तिरिति तु सूत्रभाष्यप्रयोगाद्राजदन्तादित्वाद्वा सिद्धमित्याहुः । उक्तोभयसन्निपाते संख्यायाः शब्दपरविप्रतिषेधाश्रयणात् । अत एव संख्यासर्वनाम्नोरिति नोक्तम् । द्व्यन्याय त्र्यन्याय ।

वा प्रियस्य । प्रियगुडः । गुडप्रियः । गड्वादिभ्यः परा सप्तमीति वक्तव्यम् । गडुकण्ठः । गडुशिराः । क्वचिन्न । वहेगडुः । इह सप्तमीति ज्ञापक सामान्यापेक्षम् । तेन 'मनुष्यजन्मापि सुरासुरान् गुणै' रित्यादि सिद्धम् । तथाच वामनः—'अवर्ज्यो बहुव्रीहिर्जन्माद्युत्तरपद' इति । शिष्टप्रयोगस्य नियामकत्वाच्च नातिप्रसङ्गः ।

यत्तु शाबरभाष्ये अग्निहोत्रं जुहोतीत्यत्र सिद्धान्तेऽपि अग्नये होत्रमस्मिन्निति बहुव्रीहिरिति । सोमेश्वरेणच अग्निर्होत्रं यस्येतिषष्ठीबहुव्रीहिरित्युक्तम् । तत्र यद्यपि वैयधिकरण्यं तैत्तिरीयशाखायामन्तोदात्तपाठविरोधश्च । तथापि वाजसनेयके सर्वोदात्तस्वरपाठस्य तत्पुरुषेणाप्यनुपपत्त्याऽन्यतरत्र छान्दसत्वकल्पनस्यावश्यकत्वात् । व्यधिकरणबहुव्रीहेरपि क्वचिदाश्रयणाच्च नातीव दोष इत्यभिप्रायः ।

नव्यमीमांसकास्तु 'उणादयोबहुल'मित्यनुसाराज्जुहोतेर्भावे त्रन् प्रत्ययः । अग्नेर्होत्रो होम इति षष्ठीतत्पुरुषः । यदग्नयेचेत्यादिप्रमाणावगतदेवतात्वाद् द्रव्यसम्बन्धविशेषो लक्षणया ष-

ष्ठ्यर्थः । अतोऽग्निदेवताकत्वं प्रवृत्तिनिमित्तम् । नच प्रातः प्रयोगेऽग्निदेवताकत्वाभावान्नैवमिति वाच्यम् । एकस्यैव होमस्य ज्योतिष्टोमवत्सायंप्रातरभ्यासेऽपि कर्मभेदाभावेन विजातीयहोमत्वसामानाधिकरण्येन तत्सत्त्वादेव तदुपपत्तेः । (नहि तदवच्छेदेन सदेव)। तथा वैश्वदेवेन यजेतेत्यत्र विश्वेदेवसम्बन्धस्यैकयागमात्रवृत्तित्वेऽपि तेन यागाष्टकनामधेयत्वस्वीकारादित्याहुः ।

यत्तु होत्रशब्दमधिकरणे व्युत्पाद्य षष्ठीतत्पुरुष इत्युक्तम् । तत्राग्निसम्बन्धिहोमाधिकरणमितिबोधेऽग्नेरधिकरणत्वं नायातीति विभाव्यमिति दिक् ।

## निष्ठा ॥ ३६ ॥

निष्ठान्तं बहुव्रीहौ पूर्वं स्यात् । कृतकृत्यः निष्ठाशब्देन विहितस्यैव ग्रहणान्नपुंसके भावे क्त इत्यस्याग्रहणात् चारुस्मितमिति ॥ जातिकालसुखादिभ्यः परा निष्ठा वाच्या ॥ सारङ्गजग्धी पलाण्डुभक्षिती मासजाता सुखजाता दुःखजाता । नचजातिकालसुखादिभ्यः पराया निष्ठाया उत्तरपदान्तोदात्तत्ववचनादेव ज्ञापकात्सिद्धिः । अकृतमितप्रतिपन्नाइति येषान्तन्निषेधस्तदर्थं परनिपातस्य वाच्यत्वात् । वस्तुतस्तु प्रतिषेधस्योत्तरपदान्तोदात्तप्रसक्तिपूर्वकत्वात्तस्य च परनिपातं विनानुपपत्तेस्तेषामपि प्रतिषेधादेव ज्ञापकात्सिद्धिः । क्वचिन्न । कृतकटः पीतोदकः ।

## वाहिताग्न्यादिषु ॥ ३७ ॥

आहिताग्निः । अग्न्याहितः । प्रहरणादिभ्यः परे निष्ठासप्तम्यौ । अस्युद्यतः । मुसलोद्यतः । असिपाणिः । दण्डपाणिः । क्वचिन्न । विवृतासिः ।

अथ तृतीयः पादः ।

# अनभिहिते ॥ ३९ ॥

अधिकारोऽयम् । द्वितीयादयो विभक्तयोऽनभिहिते कर्मादौ भवन्तीत्यर्थः । अभिधानं प्रतिपादनं अश्वाभिधानीमादत्ते । अभिहितश्लोक इति बन्धनोच्चारणार्थयोः हिनोतेर्गतिवृद्ध्यर्थयोरपि प्रकृतानुपयोगात् । तण्डुलं पचति चैत्रः । चैत्रेण तण्डुलः पच्यते । आद्ये कर्तर्याख्यातोत्पत्त्या कर्तृकर्मणोरभिहितत्वानभिहितत्वाभ्यां तृतीयाविरहद्वितीये । अन्ते च कर्मणोऽभिहितत्वात्कर्तुश्चानभिहितत्वात् द्वाभ्यां द्वितीयाविरहतृतीये ।

अभिधानंच प्रायेण तिङ्कृत्तद्धितसमासैः । देवदत्तः पाचकः । कर्तरि ण्वुल् । देवदत्तेन पक्वस्तण्डुलः । कर्मणि क्तः । औपगवः । चित्रगुः । तद्धितसमासाभ्यां जन्यजनकभावस्य स्वस्वामिभावस्य चोक्तत्वान्न षष्ठी । क्वचिन्निपातेनाप्यभिधानम् ।

विषवृक्षोऽपि संवर्ध्य स्वयं च्छेत्तुमसाम्प्रतम् ।

न युज्यते इत्यर्थः । अथकथं—

'स्मृत्वा वालिभुजौ न सांप्रतमवज्ञातुं च ते वानरा' निति मुरारिः । उच्यते । अवज्ञानानिरूपितं तत्र कर्मत्वम् । अतएव पक्त्वौदनं भुज्यते पक्त्वौदनो भुज्यते इत्युभयं प्रामाणिकम् । 'क्रमादमुं नारद इत्यबोधि सः' ।

तथाहि । अयं नारद इति श्रीकृष्णसमवेत ज्ञानं इतिशब्दश्च तदाकारपरामर्शकः अदःशब्दोत्तरद्वितीयाया विशेष्यत्वमर्थः । तथाचपूर्वोक्तव्यक्तिविशेष्यकनारदत्वप्रकारकज्ञानाश्रयः श्रीकृष्णइत्यर्थः । ज्ञानाकारपरमर्शकेतिशब्देन स्वपरामर्शनीयज्ञाने स्वाव्यवहितपूर्ववर्तिपदजन्यबोधप्रकारकत्वलाभात् । इदमेवकर्मा-

भिधानम् ।

अयन्तु विशेषः। द्वितीयाया ज्ञानार्थकधातुना योगे विशेष्यत्व मर्थः । घटत्वेन पटज्ञाने घटं जानातीत्यादेरप्रयोगात् । इति शब्दस्य तु उक्तप्रकारबोधकत्वं पटं घट इति जानातीतिप्रयोगात् । अतश्च द्वितीयाया प्रकृत्यर्थतावच्छेदकतदतिरिक्तधर्मप्रकारकत्वसाधारण्येन प्रकृत्यर्थविषयकत्व इतिशब्देन च स्वपूर्वपदार्थतावच्छेदकधर्मातिरिक्तधर्मप्रकारकत्व ज्ञानस्य नियमेन बोध्यते । विशेष्यं च पूर्वपदार्थोऽन्यो वेति न नियमः । अतएवामुमित्यत्र द्वितीया । विशेष्यत्वस्य इतिशब्देनानभिहितत्वात् । घटं जानातीत्यत्र तु प्रकारविशेष्ययोरेकपदोपात्ततया घटत्वापेक्षया घटपदे न द्वितीयान्यविभक्तिः । एवञ्च प्रकारत्वानभिधानस्य द्वितीयाप्रयोजकत्वविरहात् । अन्यथा घटत्वेन पटं जानातीत्यत्र घटत्वेऽपि द्वितीयाप्रसङ्गात् । नेदं प्रकृतोदाहरणं युक्तम् । तथापि व्यधिकरणप्रकारकस्थले तथात्वेऽपि प्रकृते ज्ञानस्य प्रमाणत्वात् । नारदविशेष्यताया अपि तद्बोध्यत्वमित्यभिप्रायः ।

नचैवममुमित्यत्रापि द्वितीया न स्यादिति वाच्यम् । अयं नारद इत्यबोधीत्यतो नारदविशेष्यकत्वस्य नियमतोऽनवभासनात् । इदंत्वावच्छिन्नविषयतातो नारदत्वावच्छिन्नविषयताया भेदादिति दिक् ।

स्यादेतत् । कर्मादीनां तिङादिभिरभिधाने उक्तार्थानामप्रयोग इति न्यायेन द्वितीयादीनां प्रसक्त्यभावादयमधिकारो व्यर्थः । नचैको द्वावित्यादौ व्यभिचारः । तत्र प्रकृतिप्रत्ययार्थयोः संख्ययोर्भेदाभ्युपगमात् । यथा शतमित्यत्र प्रवृत्तिनिमित्तशतसंख्या द्रव्यादिनिष्ठान्या, विभक्त्यर्थभूता प्रातिपदिकार्थशतादिगतैकत्वसंख्या चान्या । तथात्रापि प्रवृत्तिनिमित्तं विभक्तिवाच्यम्—

चैकत्वं भिन्नमिति सम्भवात् । तदुक्तंहरिणा—

निमित्तमेकमित्यत्र विभक्त्या नाभिधीयते ।

तद्गतस्तु यदेकत्वं विभक्तिस्तत्र वर्तते इति ॥

यद्वा गुणोपसर्जन द्रव्यं प्रातिपदिकस्यार्थः । द्रव्योपसर्जनस्तु गुणो विभक्तेः । तथाचैकत्वादेः प्राधान्येनाभिधानार्थं विभक्तिः । एतेन द्वावित्यत्र प्रवृत्तिनिमित्तद्वित्वस्यैकत्वात् द्विशब्दोत्तराद्द्विवचनानुपपत्तिः । गुणे गुणानङ्गीकारश्चेत्यादेरुक्तावपि न क्षतिः । अन्यथाच प्रातिपदिकमात्रप्रयोगस्यानर्हत्वादेकादिशब्दानां द्रव्यविशेषणत्वं न स्यात् । यद्वा वचनग्रहणसामर्थ्यादेकत्वाद्युक्तावपि प्रथमास्वीकारात् इति प्राप्ते—

उच्यते । 'कर्मणि द्वितीया' 'बहुषुबहुवचन'मित्यादेश्चैकवाक्यतया प्रवृत्तिः । तत्र कर्मादीनामेकत्वादीनां च विशेषणविशेष्यभावे विनिगमकाभावाद्द्वेधा वाक्यार्थः । एकस्य यत्कर्म तत्र द्वितीयैकवचनमित्यादिरेकः । कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमिति द्वितीयः । तत्र प्रथमपक्षे द्वितीयादीनां कृदादीनां च कर्मादिवाचकत्वादन्यतरेणोक्तौ अन्यतरस्य गतार्थत्वान्नार्थोऽनभिहिताधिकारेण । द्वितीये तु कर्मादिसङ्ख्यायाः कृदादिभिरनभिधानाच्चैः कर्ममात्रे उक्तेऽपि तत्संख्याभिधानार्थं अस्ति द्वितीयादीनां प्राप्तिरिति तन्निवृत्त्यर्थतया न दोषः । तदुक्तं भाष्यकारैः । अथ हि कर्मादयो विभक्त्यर्था नार्थोऽनभिहिताधिकारेणेति ।

नन्वेवं कट करोति भीष्ममुदारन्दर्शनीयमित्यत्र विशेषणोत्तरं द्वितीयादिकं न स्यात् । विशिष्टस्यैव कटादेः करोतिक्रिययेप्सिततमत्वात्तस्य च विशेष्यपदोत्तरद्वितीययैवाभिहितत्वात्प्रातिपदिकार्थमात्रे प्रथमाप्रसङ्गात् । कटः कृतो भीष्म उदारो दर्शनीय इत्यादिवत् । आरम्भपक्षे तु तिङ्कृत्तद्धितेत्यादिपरिगणनेन द्वितीयया

ऽभिहितेऽपि कर्मणि विशेषणेभ्योऽपि द्वितीयाया निर्बाधत्वादिति चेत् ।

अत्राहुः—गुणविशिष्टस्य कटस्य कर्मत्वं प्रतिपाद्यम् । द्वितीयोत्पत्तिं विना च कटस्य तद्विशिष्टत्वमप्रत्ययाभावात्तस्यापि कर्मत्वं न स्यादिति सामानाधिकरण्यात् भीष्मादेर्द्वितीया । नच प्रथमैव स्यादिति वाच्यम् । विशेष्यपदोत्तरं द्वितीयाया एवोपस्थितत्वात् । पाठक्रमापेक्षया प्रथमायाः प्रथमोपस्थितेरेतदपेक्षया बहिरङ्गत्वात् ।

यद्वा विशिष्टस्य विधित्सायां धर्मिमात्रेण परितोषाभावाद्धर्माणामपीप्सिततमत्वात्तेषामपि कर्मत्वम् । तस्य चान्यवाचकपदोत्तरद्वितीययानभिधानात् । कृतः कट इत्यादौ तु क्तप्रत्ययस्य धातूत्तरवर्तित्वेन प्रातिपदिकार्थविशेषनिष्ठकर्मत्वमात्रानभिधायकत्वादविशेषाद्धर्मधर्म्युभयनिष्ठतदभिधानात्सर्वेषां प्रथमान्तत्वमिति वैषम्यम् । अत एवारुणयैकहायन्येत्यादौ कारकविभक्तीनां क्रिययान्वयः शाब्दः । पार्ष्ठिकस्तु परस्परं विशेषणविशेष्यभावो, गुणस्य साक्षात्क्रयसाधनत्वाभावेऽपि तत्साधनगोरूपद्रव्यपरिच्छेदकत्वेनैव क्रयसाधनत्वनिर्वाहादिति मीमांसकाः । नीलं घटमित्यादावभेदः संसर्गः । भेदसंसर्गकनामार्थप्रकारकबुद्धावेव प्रत्ययजन्योपस्थितेर्हेतुत्वात् विशेषणविभक्तिः साधुत्वार्था । एवमव्ययातिरिक्तत्वमपि नामविशेषणम् । चन्द्र इव मुखं, घटो नेत्यादौ अव्ययार्थे सादृश्येऽभावे च प्रतियोगितया चन्द्रघटादेः सादृश्यादेश्चानुयोगितया मुखादावन्वयात् इति नैयायिकाः । विशेषणविभक्तिरभेदार्था । अतो भेदसंसर्गकेति कार्यतावच्छेदके न देयम् । चन्द्र इवेत्यादौ चन्द्रादिपदोत्तराया विभक्तेः प्रतियोगित्वं, इवादिपदोत्तरायाश्चानुयोगित्वमर्थ इति तदेकदेशिनः ।

स्यादेतत्। सूत्रारम्भपक्षेऽनभिहित इति प्रसज्यप्रतिषेधः, पर्युदासो वा। नाद्यः। असमर्थसमासवाक्यभेदयोरापत्तेः। ग्रामादेआस्ते इत्यत्र ग्रामादेक्रियाद्रव्याधिकरणत्वात्। तस्य च सदिप्रकृतिकेन घञैवाभिधानात्तन्निबन्धनसप्तमीनिषेधप्रसङ्गात्। एतेन द्वितीयोऽपि निरस्तः। अभिहितस्याभिहितभिन्नत्वाभावात्। नच सदिक्रियानिरूपिताधिकरणशक्तेरभिधानेऽपि आसिक्रियानिरूपिताधिकरणशक्तेरनभिधानमाश्रित्य सप्तमीति वाच्यम्। आसने आस्ते शयने शेते इत्यादौ ततोऽप्यनिर्वाहात्। द्रव्यातिरिक्ते कारके प्रमाणाभावेन शक्तिरूपकारकभेदेनोभयोपादानस्यावश्यकत्वात्। द्रव्यस्वरूपातिरेकेण शक्तेः प्रत्यक्षानवगाह्यत्वात्। तत्पूर्वकानुमानस्यापि तस्यामप्रवृत्तेः। कार्यस्य द्रव्यान्वयव्यतिरेकमात्रानुविधायित्वेन कार्याभावप्रयोजकाभावप्रतियोगित्वेनापि तदसिद्धेः इति चेत्।

उच्यते। यदि द्रव्यमात्रं साधनं स्यात् तदा तस्यैकरूपत्वात्तन्निबन्धनाबाधितप्रत्यभिज्ञानविषयत्वान्नानार्थक्रियाकरणनिबन्धनो व्यपदेशभेदो न स्यात्। दृश्यते चासौ क्व देवदत्त इति प्रश्ने असौ वृक्षे इत्युत्तरे अधिकरणत्वेन प्रतीयमानस्य वृक्षस्य कतरस्मिन्निति वृक्षविशेषप्रश्ने यस्तिष्ठतीत्युत्तरे कर्तृरूपतया प्रतीतेः। नह्यधिकरणतया कर्तृरूपतया च प्रतीत्योर्वैलक्षण्यमपलपितु शक्यम्। तच्च विषयभेदायत्तं ज्ञानस्वरूपत्वे सौगतमतप्रवेशापत्तेः। अतस्तदुपपादकत्वेन कर्त्रादिरूपाः षट्शक्तयोऽवश्यमङ्गीकरणीयाः। यत्समावेशादेकस्मिन्नेव तत्तद्व्यपदेशभेदाः। अन्यथा कर्मकरणादीनां व्यवस्थैव स्यात्। तदेतदुक्तं वाक्यपदीये—नित्याः षट्शक्तयोऽन्येषामिति। ताश्च क्रियाभेदभिन्ना एव। अन्यथायं गमनस्य कर्ता नतु पाकस्येत्यादेरयोगात्। ननु द्रव्यव्यक्तिभेदेनापि तद्भेदो मा-

नाभावात । एवंच कर्तृत्वादिकं तासामनुगमकं शक्यतावच्छेदककमित्यप्यास्थेयम् । अन्यथा तदंशेऽनुगतव्यवहारोऽपि न स्यात् ।

अथैवमासने आस्ते इत्यादि कथमिति चेत् अत्राहुः—आसनशयनकरणापादानसंप्रदानादिशब्दैरासनादिक्रियायोग्यं वस्तुमात्रमनुद्भूतशक्तिकमभिधीयते । तत्र शक्त्युद्भवप्रतिपादनाय विभक्तिरवश्योत्पाद्या । ततश्चासिसाधनमितिभाष्यस्य साधनान्तरनिरासे तात्पर्यम् । शब्दव्युत्पत्तयेकेवलमत्रासिक्रियोपादीयते इत्यर्थ इति । उद्भवश्चायमेव यदाधेयकालविशेषादिरूपनिरूपकविशिष्टत्वेन प्रतीतिः । आसनमित्यत्र कालविशेषस्याधेयविशेषस्य चानवगमात् । केवलस्य च लिङादेः प्रयोगानर्हत्वात् । धात्वन्तरप्रयोगे च क्रियान्तरनिरूप्याधिकरणानिरूपकस्यैवाधेयादेर्लाभादासिक्रियानिरूप्याधिकरणनिरूपकाधेयादेरनवगमतादवस्थ्यात् । अपि च प्रत्ययेनाधिकरणाभिधानेऽपि शक्त्यन्तरानाविष्टं शुद्धं शक्तिस्वरूपं न प्रत्याय्यते । आसनेनेत्यादौ कर्मादियोगानुभवात् विभक्तीनामेव शुद्धकारकशक्तिबोधकत्वात् ।

उक्तं च भट्टपादैः । कृदन्तेन हि द्रव्यविशिष्टं कारकमुच्यते । नतु विभक्त्येव निष्कृष्टाशक्तिः । तथा च कारकं कारकेणेति स्यादिति । एवं च निष्कृष्टरूपप्रतिपत्तिरेव उद्भव इति दिक् ।

नन्वेवमपि पक्त्वौदनो भुज्यते इति न स्यात् । क्त्वाप्रत्ययस्य कर्मार्थतायाः केनाप्यनङ्गीकारात् । आख्यातेन भुजिक्रियानिरूपितशक्त्यभिधानेऽपि पचिक्रियानिरूपितकर्मशक्तेरनभिधानेन द्वितीयापत्तेरितिचेत् मैवम् । प्रधानक्रियानिरूपितशक्त्यनुरोधेनैवाभिधानानभिधानप्रयुक्तकार्याणां प्रवृत्तेः ।

एतेन चैत्रेण भुक्त्वागच्छतीति भवत्येव । तद्वदित्यतिदेशेन प्रधानोक्तिप्रयुक्तकार्यातिदेशेऽपि स्वनिष्ठानभिधानप्रयुक्तकार्यनि-

षेधाभावादतिदेशे तथैव व्युत्पत्तेरिति निरस्तम् । प्रधानानुरोधेनैव गुणकार्यप्रवृत्तेः कैयटादिविरोधाच्च । अतिदेशाविरुद्धस्यैव स्वाश्रयस्य प्रवृत्तेः कर्मवत्सूत्रगतभाष्यादि सिद्धत्वात् । तदुक्तं हरिणा—

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
यदा गुणे तदा तद्वदनुक्तापि प्रतीयते ॥

इति । अयमर्थः । वाक्यार्थे तिङन्तवाच्यैव क्रिया प्रधानम् । इतरत्त्वस्य प्रधानप्रतियोगिकत्वलाभायाऽऽद्यदन्तस्यापीतरपदस्य परनिपातः । पृथक् इति शक्त्यन्वयि । क्रियाभेदेन कारकशक्तिभेदात् । अनुरुध्यते इति व्याचष्टे प्रधानेति । यदाभिधीयते-इत्यन्वयः । अनुक्तापि आख्यातेन । स्वप्रकृत्यर्थक्रियानिरूपितशक्तिमात्राभिधानात् । क्त्वाप्रकृत्यर्थक्रियानिरूपितशक्तेरभिधातुमशक्यत्वात् । तद्वद्—उक्तवत् । गुणानां प्रधानमुखप्रेक्षितया एकस्मिन्नेव पदे प्रधानशक्त्यभिधानप्रयुक्तकार्यबोधेन स्वानभिधानप्रयुक्ततद्विरुद्धकार्यप्रयोजकत्वानुपपत्तेः । क्रियाद्वारकश्चैतत्साधनयोः शक्त्योर्गुणप्रधानभाव इत्यर्थः । अङ्गगुणविरोधन्यायोऽप्यत्रानुसंधेयः ।

यत्तु मीमांसकैरुक्तम् । एवं सति ओदनं भुक्त्वा शास्त्रं पठ्यते 'श्रुत्वाप्यर्थं नानुमतस्तेनसोऽर्थःकुबुद्धिने'त्यादिप्रयोगानुपपत्तिरतो यद्वृत्तिकारकत्वं स्वान्वयिक्रियाप्रतिपादकेन पदेन वृत्त्याप्रतिपाद्यं तत्वं प्रथमाप्रयोजकम् । अभिहितत्वं अन्वयश्च प्राथमिकः । तेनौदुंबरो यूपोभवति, स्वर्गकामो यजेतेत्यत्र यूपम्भावयेदिति कर्मत्वलक्षणायामपि शक्तिजन्यबोधे कर्तृत्वस्योक्तत्वात्प्रथमोपपत्तिः । यत्र त्वन्वयानुपपत्त्यालक्षणाजन्यबोध एव प्राथमिकः । यथाऽग्निः पा-

के यतते चैत्रः इत्यत्राग्नेः करणत्वे तत्र यतनिपदेन करणत्वानभिधानात्प्रथमाया असाधुत्वमेव । पक्वौदनो भुज्यते इत्यादौ चौदनस्य पाकक्रियाया नान्वयः । किन्तु द्वितीयान्तौदनपदाध्याहार एवेति ।

तदसत् । तत्र गुणप्रधानक्रियाभेदेनत्वानभिधानाभिधानप्रयुक्तकार्यारम्भे बाधकाभावात् । यत्पदोपस्थाप्यकारकनिष्ठशक्त्यभिधान प्रत्ययेन तत्पदोपस्थाप्यकारकनिष्ठक्रियान्तरसाधनशक्तेरेव विरुद्धकार्यानारम्भकत्वाच्च । द्वितीये पदभेदेन तद्दूषाभावात् । नचैवं चैत्रेण भुक्त्वा चैत्रो गच्छतीति प्रयोगापत्तिः । समानकर्तृकत्वस्यव्यभिचाराभावेन गुणक्रियाया पृथक्कर्तृवाचकपदप्रयोगाभावात् । अतएव चैत्रोभुक्त्वा चैत्रो गच्छतीति न प्रयोगः । कर्मैक्यस्यतत्रनावश्यकत्वात्क्वचित्कर्मणः पृथक्प्रयोगोऽपीति अनेनजीवेनात्मनानुप्रविश्य नामरूपेव्याकरवाणीति वाक्यव्याख्यानप्रस्तावे तर्ककौतूहले विस्तरः ।

प्रकृतमनुसरामः । यत्तु नव्यमीमांसकैरुक्तम् । पचतीत्युक्ते कीदृग्विधइति प्रश्नानुरोधेन तदुपपादकधर्मिज्ञानार्थआख्यातस्य लक्षणयाकर्त्रादिपरत्वात् तादृशाभिधानादिकमेव विभक्तिव्यवस्थापकम् । नचैवं कृत्प्रत्ययेन शक्त्या तिङाच लक्षणया तदभिधानमिति उभयसाधारणाभिधानानुपपत्तिरितिवाच्यम् । वृत्त्या प्रतिपाद्यत्वस्य तदर्थत्वादिति । तदसत् । एवंसत्युभयापेक्षया कर्त्रादिशक्तेरेवानुशासनसिद्धायाः कल्पयितुमुचिततरात् ।

यदपि यत्रतु षष्ठोक्तन्यायेनाश्रयानेकत्वग्राहक प्रमाणमस्ति । यथादम्पत्योः । तत्रयजेतेत्यादिविधिवाक्ये एकवचनश्रवणादाख्यातेनाश्रयलक्षणा एकत्वानन्वयापत्तेः । द्वित्वलक्षणायांच प्रमाणाभावात् । अतस्तत्राख्यातेन कर्तृत्वत्वंलक्ष्यतावच्छेदकीकृत्यकर्तृत्वंलक्ष्यते नत्वाश्रयोऽपि । तस्यार्थादेवबोधोपपत्तेः । स्वर्गकामा-

दिपदस्यापि तत्र लक्षणया भाव्यमात्रपरत्वात् । प्रथमाप्रयोजकं तु सर्वत्रकर्तृत्वोक्तिरेव । साच यत्र कर्तरि लक्षणा तत्रकर्तृत्वप्रकारिका यत्र कर्तृत्वे लक्षणा तत्रकर्तृत्वविशेष्यकेतिभेदः ।

अथवा कर्तृत्वादेः सामानाधिकरण्यसंसर्गेण कृतावन्वयात् तद्घटकतया संसर्गमर्यादयैवकर्त्रादेर्भानम् । तदादायैवानुशासनम् । एवं चाभिहितत्वलक्षणे दृश्यत्वेऽपि नदेयम् । किन्तुसांसर्गिकविषयतासाधारण्येन शाब्दविषयाप्रतिपाद्यत्वमात्रमिति ।

तदप्ययुक्तम् । लः कर्मणीत्याद्यनुशासनविरोधात् । संसर्गस्य शाब्दतात्पर्याविषयकत्वात् । गुणाधिकरणे वैश्वदेवीत्यादौ प्रकृतिप्रत्ययार्थयोः संसर्गबलाद्देवतात्वप्रतीतिरिति पक्षदूषणाय ससर्गविधया भासमानस्य पदार्थानुशासनप्रवृत्तैरनुशासनानुपपत्तेरितिमीमांसाकौस्तुभे स्वयमेवाभिहितत्वात् । कर्तरिकृदित्यत्र वाच्ये इत्यर्थस्य वाप्यनुमतत्वादुत्तरत्रकथं चित् प्रतिपाद्ये इत्यर्थानुपपत्तेः । शब्दाधिकारस्याप्यनभ्यर्हितत्वात् । तज्जन्यप्रतीति विशेषस्यैवाभिहितपदार्थत्वाच्च । दण्डीत्यादिशाब्देऽभेदस्य संसर्गत्वेऽपि तस्य दण्डिपदाभिधेयत्वव्यवहारविरहात् । यजेतेत्यादौ तु पदार्थतावच्छेदककर्तृत्वान्वयेऽपि संख्याया नक्षतिः ।

तदाहुः । परस्परसापेक्षयोरेवाग्नीषोमयोरिवदेवतात्वं कर्तृत्वम् । कर्तृरूपैक्याच्चाख्यातोपात्तसंख्याग्नीषोमौ देवतेतिवत्सह प्रयोगेऽप्यविरुद्धेतिदिक् ।

नैयायिकास्तु अनभिहितसंख्याके इति अधिकारार्थः । चैत्रः पचतीत्यत्र कर्तृसंख्यायाः पच्यते तण्डुलइत्यत्रकर्मसंख्याया एवाख्यातेनाभिधानात् । नच कर्तृकर्मणोः समानवचनत्वे उभयसंख्याभिधानापत्तिः । साकाङ्क्ष एव तदन्वयात् । तदुक्तमाचार्यैः—

आक्षेपलभ्ये संख्येये नाभिधानस्य कल्पना ।
सख्येयमात्रलाभेऽपि साकाङ्क्षेण व्यवस्थितिरिति ।

नच सुपैव एकत्वप्रत्ययात्तिङो न तदर्थत्वं । चैत्रो मैत्रश्च गच्छत-इत्यत्र द्वित्वप्रतीतेस्तिङ्मात्रसाध्यत्वात् । नच तत्र सुप एव द्वित्वे-लक्षणा । सुब्विभक्तौ लक्षणाङ्गीकारे व्युत्पत्त्यनुशासनविरोधात् । नच विभक्त्यन्तरार्थ एव सुपो न लक्षणा, द्वित्वं तु तद्विभक्त्यर्थोऽपीति वाच्यम् । तथापि चैत्रद्वयादेरेवबोधप्रसङ्गादुभयनिष्ठद्वित्वप्रतीत्यनुपपत्तेः । प्रकृत्यर्थमात्रगतसंख्याबोधकत्वस्य तत्र व्युत्पत्तेः । नचैकत्वेनोपस्थिते कथं द्वित्वान्वयः । तस्याविवक्षितत्वात् । द्वयोः प्रत्येकमेकत्वबोधेऽपि द्वौ गमनानुकूलकृतिमन्ताविति बोधोपपत्तेः । नच ब्राह्मणाः पठत इत्यत्र बहवो ब्राह्मणाः द्वौ पठनानुकूलकृतिमन्ताविति बोधापत्तिः । आख्यातजन्यद्वित्वबोधे ब्राह्मणाः पठत इत्यादिज्ञानस्य प्रतिबन्धकत्वात् । नच तथापि आख्यातैकवचनस्यैकत्वे शक्तौ न मानमिति वाच्यम् । तण्डुलं पचतीत्याद्यनुरोधेनाद्वितीयाद्येकवचनानामेकत्वेशक्तावपिप्रथमैकवचनस्यैकत्वशक्तौ विनिगमकाभावात् ।

तथाचाख्यातार्थसंख्याप्रकारकबोधे भावनाप्रकारतानिरूपितविशेष्यतासम्बन्धेन प्रथमान्तपदजन्योपस्थितिर्हेतुः । भावनायाश्चविशेष्योऽन्याविशेषणत्वे सतिप्रथमान्तपदोपस्थाप्यः । भावनाया आश्रयाकाङ्क्षत्वात्पुरुषस्यापि क्रियाकाङ्क्षत्वात् ।

तदुक्तमाचार्यैः । नह्यन्यतराकाङ्क्षान्वयहेतुः, किन्तूभयाकाङ्क्षा । प्रातिपदिकार्थो हि फलेनान्वयमलभमानः क्रियासम्बन्धमपेक्षते । भावनापि व्यापारभूता सतीव्यापारिणमित्युभयाकाङ्क्षेति । तस्मात्तिङि संख्याभिधानानभिधानाभ्यां कृत्प्रत्ययस्थलेतुकर्तृकर्मणोरभिधानानभिधानाभ्यां व्यवस्था । अनभिहितइत्यस्य-

चकर्तृकर्मसंज्ञायाः कर्तृकर्मणो नानभिधाने इत्यर्थः । एतेन कर्त्रे-कत्वत्वादिना शक्तौगौरवमित्यादिकमपास्तम् ।

नव्यास्तु पच्यते तण्डुलइत्यत्र फलावच्छिन्नक्रियायाधात्वर्थत्वे कर्तृक्रियायाश्चाख्यातार्थत्वे मैत्रवृत्तिव्यापारजन्यफलशाली तण्डुलइति बोधो न स्यात् । शक्तिशाद्धयोर्विशेषणविशेष्यभावविपर्ययापत्तेः तस्माद्व्यापारो धात्वर्थः, फलमात्मनेपदार्थः, जन्यत्वं संसर्गः, मैत्रवृत्तिकृतिजन्यव्यापारजन्यफलशालीतिबोधः । एवंच पचतीत्यत्रकृतेः, पच्यतेइत्यत्रफलस्याभिधानानभिधानाभ्यांव्यवस्था घटो ज्ञायतेइत्यादौ विषयताया घटो नश्यतीत्यादौचप्रतियोगिताया अपिभाक्तकर्मत्वकर्तृत्वे तत्साधारणस्यैवाभिधानम् । कृत्प्रत्ययेच सामानाधिकरण्यानुरोधेन विशिष्टवाचित्वेऽपि विशेषणस्याप्यभिधानसत्त्वेन सर्वत्रैकरूप्योपपत्तेः । कृतामपि कृतावेवशक्तिः तद्विशिष्टे लक्षणेति तु न युक्तम् । क्वचिदपि कृतिमात्रबोधस्य कृत्प्रत्ययादभावादित्याहुः ।

# कर्मणि द्वितीया ॥ ४० ॥

अनभिहितेकर्मणि द्वितीया स्यात् । ग्रामङ्गच्छति ओदनं पचतीत्यादि । द्वितीयादयः शब्दाः सुपां त्रिकेषु वर्तन्ते पूर्वाचार्यव्यवहारात् । एवं च सङ्केतविशेषसम्बन्धेन द्वितीयादिपदवत्त्वमेव द्वितीयात्वादि । अन्यथातिप्रसक्तत्वात् । कर्माद्यर्थत्वस्यान्योन्याश्रयग्रासात् । आख्यातादौ व्यभिचाराच्च । इह स्वादिसूत्रैकवाक्यतयाविधिः । वाक्यभेदेन नियमो वा । सोऽपि कर्मणि द्वितीयेत्यादि प्रकृतार्थापेक्षः प्रत्ययनियमः । द्वितीयाकर्मण्येवेत्यादिरर्थनियमो वेति सर्वे पक्षा ग्रन्थारूढाः ।

सुपां कर्मादयोप्यर्थाः सङ्ख्या चैव तथा तिङाम् ।

प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा ॥ १ ॥

इति भाष्योक्तेः । इह तिङामिति स्वारस्यात्सुपामपि कर्मादिकमेव वाच्यम् । नतु कर्मत्वम् । तिङां कर्मत्वार्थकत्वे तयोरेवेति सूत्रे तयोरेवानुवृत्तौ कृतामपि तत्परत्वापत्तौ कृतः कट इत्यादौ सामानाधिकरण्येनान्वयायोगात् । ल. कर्मणि, कर्मणि द्वितीयेत्यादौ धर्मपरत्वालाभाच्च । घटमित्यत्र घटः कर्मेत्यभेदबोधात्कर्मत्वसंसर्गेण घटादेरानयनाद्यन्वयाच्च प्रकारत्वसंसर्गत्वाभ्यां कर्मत्वादिभानमिति न युक्तम् । अनुभवविरोधात् ।

नच घट आनयनकर्म घटीयमानयनमित्यादिव्यवहारात् उभयमपि प्रामाणिकमिति वाच्यम् । पर्वतो वह्निसंयोगी पर्वतीयो वह्निरित्यादिव्यवहारेण पर्वतो वह्निमानित्यादौ पर्वते वह्निसंयोग्यभेदो ऽथच संयोगसम्बन्धेन वह्निः प्रकारः इत्यस्यच प्रसङ्गात् । नचेष्टापत्तिः । वह्निसंयोगिनमनुमिनोमीत्यनुव्यवसायानुदयात् । वह्निसंयोग्यभेदस्य ' व्यापकतावच्छेदकसम्बन्धत्वाभावेनानुमितौ विषयत्वानुपपत्तेरन्यथातिप्रसङ्गात् । अनुमित्याकारकथने न तस्य तात्पर्यं किन्तु वस्तुगतिकथनमात्रे इत्यस्यापि तुल्यत्वात् ।

नच वह्निसंयोगिनोऽपि लिङ्गान्तरेण प्रत्यक्षादिना वा ग्रहणात्तथायुक्त, इहतु घटस्य कर्मत्वसम्बन्धेन कुत्राप्यानयनानन्वये वस्तुतोऽपि तत्कथमिति वैषम्यमिति वाच्यम् । शाब्दबोधाभावेऽपि वस्तुत आनयने कर्मत्वेन घटसत्त्वेन तदुपपत्तेः । सदृशज्ञानान्तरमादायैव साम्यात् । यत्प्रकारकयत्संसर्गकयद्विशेष्यकशाब्दबोधो नभवति तादृशज्ञानान्तरमपि नभवति इति नियामकाभावात् । दण्डसंयोगेन पुरुषे शाब्दबोधानुदयेऽपि तादृशचाक्षुषादीनां सर्वसिद्धत्वात् । अत एव तण्डुलः पचतीत्यादौ तण्डुलादेः कर्मत्वसम्बन्धेन पाकान्वयापत्तिरित्यादिकं सङ्गच्छते । पटादेर-

भेदेन कर्मान्वये निराकाङ्क्षतया कर्मत्वसम्बन्धेन धात्वर्थान्वया-नुपपत्तेश्च । घटकर्मकं घटवच्चानयनमितिबोधाभावाच्चेत्यास्ताम् ।

आधार आधेयं वा द्वितीयार्थः । ओदनं पचतीत्यत्र ओदन-रूपो य आधारस्तद्विशिष्टाया विक्लित्तेर्बोधात् । आधेयत्वं संसर्गः । ओदनाधेया वा विक्लित्तिरर्थः । आधेयरूपप्रत्ययार्थस्य प्रकृत्यर्थं प्रति विशेष्यत्वात् ।

आधेयत्वमेव संसर्ग इति पक्षान्तरम् । तत्रापि आधेयत्वस्य संसर्गत्वं प्रकृत्यर्थप्रकारतानिरूपितप्रत्ययार्थविशेष्यतायां प्रत्यया-र्थप्रकारतानिरूपितधात्वर्थविशेष्यताया वा । नाद्यः । स्वनिष्ठवि-शेष्यताया स्वस्यैव संसर्गत्वानुपपत्तेः । नान्त्यः । स्वनिष्ठप्रकार-तायामपि तदयोगात् । तस्मादोदनस्य निरूपकत्वसम्बन्धेन द्वि-तीयार्थैकदेशे आधेयत्वे तद्वतश्चाभेदेन धात्वर्थे विक्लित्तावन्वयादो-दनानिष्ठाधिकरणत्वनिरूपितं यदाधेयत्वं तद्वदभिन्ना या विक्लि-त्तिस्तज्जनको मैत्रकर्तृको व्यापारइति वाक्यार्थ इति युक्तम् । आ-कृत्यधिकरणरीत्या आधारत्वमाधेयत्वं वाऽर्थ इति पक्षान्तरम् ।

वस्तुतो मतद्वयेऽपि तण्डुलं पचतीत्यत्राधेयत्वं मैत्रेणपच्यते तण्डुलइत्यत्राधिकरणत्वरूपं कर्मत्वं द्वितीयाख्यातयो र्यथाक्र-ममर्थः । तथाच तण्डुलवृत्तिर्याविक्लित्तिरित्यादिः पूर्ववद्बोधः ।

द्वितीये तु तण्डुलस्याभेदेनतिङर्थआधारे स्वरूपसम्बन्ध-रूपवृत्तित्वेनाधारत्वे वान्वयः । आधारस्य वृत्तित्वेन आधारत्वस्य स्वनिरूपकसम्बन्धेनधात्वर्थे विक्लित्तावन्वयः । ओदनरूपं यद-धिकरणं तद्वृत्तिर्याविक्लितिः तण्डुलनिष्ठाधिकरणत्वनिरूपकाधेय-त्ववती वा याविक्लित्तिस्तज्जनको व्यापार इति बोधे तात्पर्यम् । अत एवचैत्रेण पच्यते तण्डुल इत्यत्र तृतीयार्थो व्यापारः धात्वर्थः फलं अधिकरणं तिङर्थः व्यापारस्य जन्यत्वेन फलेऽन्वयः ततश्चै-

निन्दार्थः । कृष्णाभक्तविषयिका निन्दा । द्वितीया प्रकृत्यर्थविशेषणस्यैव निन्दाया हेतुत्वं व्युत्पत्तिलभ्यम् । कृष्णभक्त्यभावेनैव निन्दाप्रवृत्तेः । सच निन्दाया विशेष्यतावच्छेदकत्वेन भासते । कृष्णभक्तिरहितत्वावच्छेदेन निन्दाप्रतीतेः ।

क्वचित्तु विशेषणपदार्थानामेव निन्दानिमित्तत्वं धिक्करभमतिदीर्घग्रीवमित्यादौ । क्वचित्तात्पर्यगम्यानां धिकृतञ्च तां च मदनं चइमां चमाचेत्यादौ यां चिन्तयामि सततं मयिसानरक्ताइत्यादि विशेषणगम्यस्यस्वविषयकानुरागाभाववद्विषयकानुरागवत्त्वादेः ।

कथं धिङ्मूर्खेति । अत्राहुः । सम्बोधनस्य क्रियान्वयेन धिक्शब्दयोगो नास्ति । आक्षेपेण क्रियापदस्यात्रापि सुलभत्वात् । तत्त्वन्तु मूर्खत्वप्रयुक्तनिन्दाविवक्षाया द्वितीया । अत्र तु निमित्तान्तरप्रयुक्तानिन्दा । रत्नावलीव कान्ता मम हस्ताद्भ्रंशिता भवतेत्यादिना मागरिकाविच्छेदकारित्वेन निन्दाप्रतीतेः । एवमन्यत्रापि योज्यम् ।

मीमांसकास्तु आधारत्वं द्वितीयार्थः तस्य च स्वनिरूपकधिक्काराश्रयसम्बन्धेनभावनायामन्वयः । धिङ्मूर्खेत्यत्र मूर्खस्य सम्बोधनद्वारा क्रियान्वये धिक्कारघटितमसर्गेण तदनन्वयात्प्रथमेत्याहुः ।

केचित्तु उपपदविभक्तेः कारकविभक्तिर्बलीयसीति सम्बोधनविभक्तिरेव । नच तस्य कारकत्वे मानाभावः । देव प्रसीदेत्यादौ वस्तुतः सम्बोध्यस्यकर्तृत्वेऽपि देव त्वाभजे इत्यादौ तदभावाद्वास्तवक्रियाश्रयत्वमात्रेण तथात्वेऽतिप्रसङ्गादिति वाच्यम् । उपपदविभक्त्यन्यविभक्तेरेव कारकविभक्तित्वेन विवक्षितत्वात् । उपपदविभक्तित्वंच—शब्दविशेषयोगेनविहितत्वम् । अतोनान्योन्याश्रयः । नच कर्त्रादिषडन्यतमार्थविहितत्वं कारकविभक्तित्वं तदन्यविभक्तित्वंचोपपदविभक्तित्वमस्त्वेव किं न स्यादिति वा-

च्यम् । गुरुत्वात् । शब्दविशेषयोगस्य तत्तत्प्रत्येकोपपदविभक्तौ सुग्रहत्वात् । उक्तग्रहे च कर्त्रादिसर्वार्थानामुपस्थितेरपेक्षितत्वात् । अन्यथा तद्घटितान्यतमत्वग्रहायोगादित्याहुः ॥

उपर्युपरि अध्यधि लोकं हरिः । नवानधोधोबृहतः पयोधरान् उपर्यध्यधसः सामीप्ये इति द्वित्वम् । एवंच वीप्साप्रयुक्तद्वित्वे न द्वितीयेति कैयटाशयः । तेन उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः इत्यादिसिद्धम् । उपरिबुद्धीनामिति पृथक्पदमिति केचित् । इनपदस्य श्रेष्ठपरतया बुद्धिश्रेष्ठामिति द्वितीयान्तमेवेत्यन्ये ॥

तन्न इनपदस्य विशेष्यलिङ्गत्वे प्रमाणाभावाद्बुद्धिमित्यध्याहारापत्तेश्च । तत्र सामीप्यविशिष्ट उपरितनो देश उपर्युपरिशब्दस्य, तादृश एवाधस्तनो देशोऽधोध इत्यस्यार्थः । निरूपितत्वं द्वितीयार्थः । लोकनिरूपितं यत्सामीप्यं तद्विशिष्टोर्ध्वदेशवृत्तिर्हरिः । एतेनाध्यधिलोकं हरिरिति व्याख्यातम् । अधिशब्दोऽत्रोपर्यर्थे वर्तते इति षष्ठी प्राप्नोतीति कैयटोक्तेः । पयोधरनिरूपितसामीप्यवान् योऽधोदेशस्तद्वृत्ति नारदमित्यर्थः ।

ततोऽन्यत्रापीत्युक्तान् परिगणयति वृत्तिकारः । 'अभितः परितः समयानिकषाहाप्रतियोगेपी'ति । 'पर्यभिभ्यां चे'ति तसिलन्तावभितः परितः शब्दौ उभयतः सर्वत इत्यनयोरर्थे वर्तेते । आभिमुख्यवृत्तेरप्यभितः शब्दस्य तिङन्तप्रतिरूपकनिपातस्यात्र ग्रहणमिति कैयटः ।

यत्तु तसिलन्तस्य लाक्षणिकत्वान्न ग्रहणमिति तन्न । अन्यत्रेति शब्देन द्वयोरप्युपादानात् । स्वरूपेणोपादाने एव लक्षणप्रतिपदोक्तपरिभाषावतारात् । समयानिकषाशब्दौ समीपार्थौ । सर्वत्र षष्ठी प्राप्ता । ग्रामं समया । लङ्कां निकषा । अधिकरणप्रधानावेतौ । प्रतियोगित्वं द्वितीयार्थः । ग्रामलङ्काप्रतियोगिकसा-

मीष्याश्रये देशे इत्यर्थः । हाशब्दः शोकार्थः । हा कृष्णाभक्तम् । तद्विषयकः शोक इत्यर्थः । हा तातेत्यादावन्तरङ्गत्वात्सबोधनविभक्तिरिति कैयटः ।

बुभुक्षितं न प्रतिभाति किञ्चित् । क्रियायोगादुपसर्गोऽयं प्रतिशब्दो न कर्मप्रवचनीयः । अत्राधेयत्वं द्वितीयार्थः । विषयत्वमाख्यातार्थः । स्वरूपसंबन्धः प्रथमार्थः । तथा च किञ्चिन्निष्ठं प्रतिभाविषयत्वं बुभुक्षितवृत्त्यभावप्रतियोगिप्रतिभानिष्ठविषयतानिरूपितम् । यद्वा किञ्चिन्निष्ठाभावप्रतियोगिप्रतिभाविषयत्वं बुभुक्षितवृत्तिप्रतिभानिष्ठविषयतानिरूपितमिति नव्यमीमांसकाः ।

तच्चिन्त्यम् । किञ्चिन्निष्ठप्रतिभाविषयत्वस्य बुभुक्षितवृत्त्यभावप्रतियोगिनी या प्रतिभा तद्विषयत्वस्य चैक्येन निरूप्यनिरूपकभावानुपपत्तेः । बुभुक्षितवृत्तिप्रतिभास्वीकारे प्रतिभाविषयत्वस्य किञ्चिन्निष्ठाभावप्रतियोगित्वानुपपत्तेश्च । प्रतिभाया ज्ञानरूपायाः सविषयत्वनियमात् ।

वस्तुतस्तु बुभुक्षितवृत्तिनिरूपितत्वं स्वविषयकत्वं चेत्युभयसम्बन्धेन प्रतिभात्यन्ताभाववत्किञ्चिदिति धीः । यद्वा किञ्चिद्विषयकप्रतिभाविरहो बुभुक्षितवृत्तिः । एतेन स्त्रीरत्नलाभोचितयत्नमग्नमेन हि न स्म प्रतिभाति किञ्चिदिति नैषध व्याख्यातम् ।

दृशिग्रहणादन्येऽपि चैत्र यावच्छीतम् । तत्पर्यन्तकालवृत्त्यभावाप्रतियोगि शीतमितिधीः । उष्णत्वे एव तदभावप्रतियोगित्वसिद्धिः । पुरुषाराधनमृते । ऋतेद्वितीयाचेतिचान्द्रसूत्रम् । पञ्चमीत्वग्रे विधेया । अथस्तोकंपचतीत्यादौ क्रियाविशेषणे कथ द्वितीया विधायकाभावादिति चेत् ।

अत्राहुः । विक्लित्यादेः फलस्य धातूपात्तभावनां प्रति कर्मत्वात् तत्सामानाधिकरण्यात् द्वितीया । अतएव सक्तूल्लवावित्यादौ

कारकपूर्वत्वाच्च । नच विक्लित्त्यादेः क्रियाजन्यफलाश्रयत्वाभावेन कर्मत्वाभावात्तद्विशेषणे सुतरां द्वितीयानुपपत्तिः । विक्लित्तिवत्तदुत्पत्तेरपि विक्लित्तिमुत्पादयतीति विवरणानुरोधेन धातुवाच्यत्वात्क्रियाजन्योत्पत्तिमत्त्वेन विक्लित्तेर्मुख्यकर्मत्वात् । सुखं स्वपितीत्याद्यकर्मकधातुयोगेऽपि शरीरलाघवादेः सुखसाधनत्वात् सुखपदस्य सुखसाधने लक्षणा । सुखसाधनं शयनं करोतीत्यर्थः स्वव्यधिकरणफलहेतुव्यापारवाचित्वाभावेनाकर्मकत्वात् । धात्वर्थस्य चासत्त्वभूतत्वेन लिङ्गविशेषानन्वयात् तद्विशेषणे सामान्यविषयं नपुंसकमेव । अतएवादि पचतीत्यादौ नातिप्रसङ्गः । नियतलिङ्गेषु सामान्यप्रवृत्तानवकाशात् । कृद्योगषष्ठीकर्मलकारयोश्च मुख्यकर्मण्येव प्रवृत्तेः । अ स्तोकमोदनः पच्यते स्तोकमोदनस्य पक्ता इत्यादौ द्वितीया ।

यत्र तु विधिवशाद्धात्वर्थस्य करणत्वं तत्र तद्विशेषणे तृतीया । ज्योतिष्टोमेन यजेतेति ज्योतिष्टोमाख्येन यागेन स्वर्गं भावयेदिति स्वर्गस्य भाव्यत्वेनान्वये धात्वर्थस्य तदभावात् करणत्वाङ्गीकारात् । तत्रापि समीचीनमित्यादिविशेषणं भावनाया नतु धात्वर्थस्य । अतएव सा प्रथमैव नतु द्वितीयेति ।

वस्तुतस्तु अननुष्ठितस्य यागस्य फलसाधनत्वायोगात्तस्याप्यर्थाक्षेपेण भाव्यत्वाङ्गीकारात्तदवस्थामादाय द्वितीयान्तत्वेऽपि न क्षतिः । अतएवोद्भिदा यजेतेत्यत्र गुणविधित्वपक्षेऽर्थाक्षिप्तभाव्यत्वे करणत्वेनान्वयोपपत्तेर्मत्वर्थलक्षणा नास्तीति मीमांसकाः । नच सकलकारकाणां क्रियाविशेषणत्वादतिप्रसङ्गः । कारकाणां विभक्त्यर्थत्वादसत्त्वरूपत्वाच्च । शक्त्याधारस्तु यद्यपि नामार्थः सत्त्वरूपश्च तथापि नाक्रियाविशेषणम् । किन्तु तादृशकारकविशेषणमेव । अतएव नामार्थस्य भेदेन धात्वर्थान्वयो नास्तीति

सिद्धान्त इति ।

अत्र मीमांसकाः । व्यापारव्यधिकरणधातुवाच्यमुख्यफलाश्रयरूपकर्मण्येव लकारषष्ठ्योः प्रवृत्तौ चैत्रेणास्यते मासः, सुप्यते रात्रिरिति कर्मलकारानापत्तिः । तादृशफलसत्त्वे तस्यप्राकृतसकर्मकत्वं न स्यात् । उत्पत्तिफलयोरन्यलक्ष्यत्वेन धातुनाच्यकल्पनानर्हत्वाच्च । अतस्ततोऽन्यत्रापि दृश्यते इत्यनेन तत्र द्वितीया । अतएव नकर्मणि लकारषष्ठ्यौ इत्याहुः ।

तन्न । 'देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणा'मिति भाष्ये कर्मसंज्ञाविधानस्य तत्प्रयुक्तलकारषष्ठीसिध्यर्थत्वात् । अन्यथा द्वितीयामात्रविधानापत्तेः। धातुक्रोडीकृतस्यकर्मणोल्लकारेण नाभिधानमपितु तद्बाह्यस्यैव। विक्लित्यादेश्च धात्वर्थबाह्यत्वादित्यत्रदोषाभावाच्च।

इदंत्वत्रवक्तव्यम् । फलव्यापारयोर्धात्वर्थत्वेऽपि उत्पत्तिः कस्यार्थः यामादायफलस्य कर्मत्वं स्यात् । आख्यातस्येति चेत् न, तथात्वस्यान्यत्राकल्पितत्वात् । तत्प्रकारकबोधे धातुजन्यफलोपस्थितिहेतुत्वकल्पनापत्तेश्च । व्यापारएवधात्वर्थान्वयस्यान्यत्र क्लृप्तत्वात् । रत्नकोषकृन्मतेतुउत्पादनैवातिङर्थः । नतूत्पत्तिर्नवा तस्यापि विक्लित्तिविशेषणत्वं । नचाक्षिप्तोत्पत्तिरूपफलत्वेनैव कर्मत्वम् । कस्मात्त्वं नद्या इत्यादौ गम्यमानक्रियाया अपि विभक्तिनिमित्तत्वोपगमादिति वाच्यम् । तद्वदत्रानुभवाभावात् । विक्लित्तः स्वोत्पत्त्याक्षेपकत्वे मानाभावात् । व्यापारस्यापि तदाक्षेपकत्वापत्तेश्च । प्रत्युतओदनस्य निर्वर्त्यकर्मतयाविक्लित्तेरपि तत्स्वरूपान्तर्भावेण साध्यत्वोपस्थित्या तस्य चानुत्पन्नैकस्वभावत्वात् असत्त्वभूतफले कारकविभक्तेस्तावताप्यसिद्धौ तद्विशेषणेदूरापास्तत्वात् । स्वर्गकामोयजेतेत्यादौ तुमाद्यस्याभिन्नपदोपात्ततया धात्वर्थस्य करणत्वेनान्वये तस्य सिद्धैकस्वभावत्त्वादसिद्ध-

स्य तदनुपपत्त्या अर्थाद्भाव्यत्वलाभ इति वैषम्यम् ।

फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥

इति रीत्या फलजनकत्वस्य व्यापारे लाभात् । तच्छाद्बे फलस्य भाव्यत्वानवगाहनात् ।

अभ्युपेत्यापि ब्रूमः । पच्यते ओदनः स्वयमेवेत्यादौ विक्लित्तिमात्रं धात्वर्थः । तद्रूपक्रियाश्रयत्वादोदनस्य कर्तृत्वमित्याकरः । तदुक्तं वाक्यपदीये—

एकदेशे समूहे वा व्यापाराणां पचादयः ।

स्वभावतः प्रवर्त्तन्ते तुल्यरूपं समाश्रिताः ॥ इति ।

तद्विशेषणस्य स्तोकादेः कर्मत्वं न स्यात् । व्यापारस्य तत्समभिव्याहारे धात्वर्थत्वाभावे विक्लित्तेः क्रियाजन्यफलाश्रयत्वाभावात् । एवं पश्यति भवः स्वयमेव, दर्शयते भव इत्यादौ विषयत्वापादनांशत्यागेन विषयत्वापत्तिमात्रस्य धात्वर्थत्वात् । तत्र विषयत्वापादनस्यानवगमात् क्रियात्वाभावात् विषय(१)त्वापत्तेः कर्मत्वानुपपत्त्या तत्र क्रियाविशेषणानामपि तन्न स्यात् । नच तत्र न भवत्येव विशेषणान्वय इति वाच्यम् । मानाभावात् । एवं स्तोकमोदनः पच्यते इत्यादेरप्यनुपपत्तिः । पाकः क्रियते इति विवरणानुरोधेन तत्र पाकवृत्तिकर्मत्वस्याभिहितत्वेन तद्विशेषणे द्वितीयानौचित्यात् । एवं च धात्वर्थान्तर्भूतस्य कर्मणो लकारेण नाभिधानमित्यप्यशास्त्रीयं वैधर्म्याभिधानम् ।

तथाहि—तत्कर्मत्वप्रयुक्ताया विशेषणद्वितीयाया अप्यनुपपत्तेः । सामानाधिकरण्याद्विशेषणे विभक्तिरिति पक्षे द्वितीयान्तसामानाधिकरण्याभावात् । कटोऽपि कर्मेत्यङ्गीकारे तु स्तोकादि-

(१) विषयान्तापत्ते' इति पाठः अन्यपुस्तकद्वये दृश्यते परन्तु सोऽसङ्गत इव भातीत्युपेक्षितः ।

कर्मणो धात्वर्थबहिर्भूतत्वात्तदभिधानस्य दुर्वारत्वात् ।

नचैवं ज्योतिष्टोमेनेत्यत्र तृतीयापि न स्यादिति वाच्यम् । तत्र तस्यैव प्राधान्यात् । एवमोदनं पचतीत्यस्य निर्वर्त्यकर्मतया फलविशिष्टस्यैवौदनपदार्थतया पचति व्यापारमात्रार्थो नतु फलावच्छिन्नव्यापारार्थः । साध्यत्वाख्यविषयतयैवौदनस्य कर्मत्वात् । अतो नोक्तरीत्या प्रकृतसिद्धिः । तस्मात्ततोऽन्यत्रापि दृश्यते इत्येवाश्रयणीयम् ।

केचित्तु 'तत्प्रत्यनुपूर्वमीपलोमकूल'मिति सूत्रे तदिति नपुंसकद्वितीयैकवचनान्तेन तच्छब्देन वर्तते इति प्रकृतवर्तनक्रियाविशेषोपादानं ज्ञापकम् । यद्यपि तदधीते इत्यादौ सौत्रं नपुंसकत्वं न विवक्ष्यते तथापि प्रकृते मङ्गाह्यलिङ्गान्तराभावात्तद्विवक्षेत्याहुः ।

## तृतीया च होश्छन्दसि ॥३॥

जुहोतेः कर्मणि तृतीया द्वितीये स्तश्छन्दसि । यवाग्वाग्निहोत्रं जुहोति । अग्निहोत्रमत्र हविः । होमः प्रक्षेपः । विभक्तेर्भिन्नत्वेऽपि विरुद्धार्थकत्वाभावात् यवागूहविषोरभेदान्वयः ।

भाष्यकृतस्तु अग्निहोत्रशब्दो ज्योतिष्यपि वर्तते । अग्निहोत्रं प्रज्वलितमिति दर्शनात् । जुहोतिश्च प्रीणने । आग्नेषु हूयमानेष्वति दर्शनात् । यदा यवागूशब्दात्तृतीया तदा तयाऽग्निं प्रीणातीत्यर्थः । यदा तु द्वितीया तदा यवाग्वाख्यं हविः प्रक्षिपतीत्यर्थः । अतः सूत्रं न कार्यमित्याहुः ।

## अन्तरान्तरेण युक्ते ॥४॥

अन्तराशब्दो यद्यप्यन्तरायां पुरीति टाबन्तोऽप्यस्ति, अन्तरेण शब्दोऽपि तृतीयान्तोऽपि तथापि प्रतिपदोक्तत्वान्निपातयोर्ग्र-

हणम् । उद्भूताधारशक्तिके मध्ये इत्यर्थे विनार्थे चैतौ । ग्राममन्त-रा वसुमतीमपि गाधिजन्मा । मृणालसूत्रामलमन्तरेण स्थितश्च-लच्चामरयोर्द्वयं सः, त्वामन्तरा तामरसायताक्षि, अन्तरेण हरिं न सुखम् । सम्बन्धित्वमात्रयोर्द्वितीयार्थः । द्यावापृथिव्योश्चामरद्व-यस्य च मध्ये इत्यर्थः । विनार्थे प्रतियोगित्वं द्वितीयार्थः । तदाद्ये संयोगविशेषावच्छिन्नं, द्वितीये भक्तिविशेषावच्छिन्नमित्याद्यनसेयम् ।

किन्ते बाभ्रवशालङ्कायनानामन्तरेण गतेनेत्यत्र तु तेषां तार-तम्येन ज्ञातेन किमित्यर्थः । द्वयोश्चैवान्तरा, अविद्यमाना अन्त-रा येषामिति भाष्ये तु सम्बन्धमात्रे षष्ठी । मध्यापेक्षया अवधि-त्वविवक्षायामेव द्वितीयास्वीकारात् । सम्बन्धविवक्षायां हि न ज्ञायते किं तयोरेवावधित्वं उतान्यसहितयोरित्याहुः ।

यत्तु अन्तरेण पुरुषमित्यादौ प्रतियोगित्वविवक्षायां षष्ठी न स्यात् । तद्विवक्षया द्वितीयासत्त्वेऽपि तयोरेवावधित्वं न त्वन्यस-हितयोरिति निर्णयासम्भवाच्च । मानान्तरेण निर्णयस्य तुल्य-त्वादिति तन्न । द्वितीयाप्रयोगस्यैव तादृशतात्पर्ये ग्राहकत्वात् । मध्यस्यावधिनिरूप्यत्वेन सप्रतियोगिकत्वाभावाच्च । अवधि-त्वस्यैव तेन विवक्षायां तु विशेषाभावात् । मध्यस्योभयनिरूप्य-तया तादृशप्रयोगाभावाच्च । निरूपकप्रतीत्यैव मध्यप्रतीत्युपप-त्तौ तदतिरिक्तावधित्वानिराकाङ्क्षत्वाच्च ।

यद्यपि तव मम च मध्ये कमण्डलुरित्यत्र षष्ठ्यन्तयोः कम-ण्डलावेवान्वयः, तन्निरूप्यत्वं मध्यमस्य मानान्तरगम्यम् । द्विती-याप्रयोगे तु तदपेक्षयैव मध्यबोधो युक्तपदस्वारस्यात् इति । त-च्चिन्त्यम् । सम्बन्धो हि मध्यनिरूपकत्वं, स्वस्वामिभावादिर्वा ? । नाद्यः । त्वन्मन्निरूप्यमध्यवृत्तिः कमण्डलुर्मध्यवृत्तिरितिबोधस्य निराकाङ्क्षत्वात् । नान्त्यः । अन्यदीयेऽपि कमण्डलौ तव मम चे

स्यादिप्रयोगात् । तत्र मम च कमण्डलुरन्तरेति वाक्यजन्यधियो वैलक्षण्याच्च ॥

# कालाध्वनोरत्यन्तसंयोगे ॥ ५॥

द्वितीया स्यात् । कालो मासादिरूपस्तदुपाधिः । अध्वा गन्तव्यत्वेन प्रसिद्धः । क्रोशयोजनादिः । मासमधीते । क्रोशं शेते । अत्यन्तेति किम् । अमावास्यायां यजते । अत्यन्तो व्यापकः सम्बन्धः, तन्निष्ठात्यन्ताभावाप्रतियोगित्वमिति यावत् । तथा च कालिकसम्बन्धावच्छिन्नप्रतियोगिताको यो मासनिष्ठात्यन्ताभावस्तदप्रतियोग्यध्ययनमिति धीः । अवच्छेदकतासम्बन्धावच्छिन्नप्रतियोगिताकत्वं क्रोशनिष्ठात्यन्ताभावे निवेश्य पूर्ववदन्यद्वाच्यम् ।

ननु द्वितीयामात्रविधाने आस्यते मासः, शय्यते क्रोश इति आसितो मासः आसितव्यः मास इत्यादौ कर्मणि लकारादयो न स्युरिति चेत् ।

अत्र वार्तिककारः । कर्मवदिति वक्तव्यम् । तेन नोक्तदोषः । वत्करणन्तु स्वाश्रयमपि यथा स्यात् । आस्यते मासम् । शय्यते क्रोशम् । अकर्मकत्वात् भावे लकारादय इति ।

भाष्यकृतस्त्वाहुः प्राकृतमेवेदं कर्मेति । अयमर्थः । व्यापनादिविशिष्ट आसनादिर्मासमास्ते इत्यादौ धात्वर्थः । ततो विशेषणीभूतव्यापनादिक्रियापेक्षं स्वाभाविकमेतत्कर्म । ततश्चासनादेः करणत्वेनान्वयः । स्वर्गकामो यजेतेत्यादिवत् । आसनेन मासं व्याप्नोतीत्यर्थः । प्रयोगस्य व्यवस्थितत्वाच्च कटे आस्ते इत्यादौ शुद्ध एवासनादौ वृत्तिरिति नातिप्रसङ्गः । तथाच वाक्यपदीये—

कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः ॥
सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते ॥ इति ।

सार्वत्रिकस्यामनादेरपेक्षया व्यापनादेः क्रियान्तरत्वम् । अकर्मकेत्युपलक्षणम् । मासमधीते इति भाष्योदाहरणात् । मासमास्ते कट इत्यादौ कटशब्दात्तु न द्वितीया व्यापनकर्मत्वादिति हेलाराजः । देशकालाध्वगन्तव्या इति नियमादिति केचित् ।

नचैवमपि भावे लकारादिकं न स्यादिति वाच्यम् । अकर्मकेष्व इति धातूनामन्यपदार्थत्वात्तेषा प्रयोगान्तरे तदर्थानामेव कालादिसम्बन्धदर्शनात्तैरकर्मकत्वासम्भवात्सामर्थ्याद्विशेषाङ्गीकारेण द्रव्यरूपेण कर्मणा येऽकर्मकास्तेषा ग्रहणात् । अथवाऽन्तरङ्गेण द्रव्यकर्मणा बहिरङ्गस्य कालादेस्तिरोभावात्तदपेक्षसकर्मकाकर्मकव्यवहाराप्रवृत्तेः । अन्तरङ्गकर्मणोऽसन्निधाने तु बहिरङ्गेणापि कालादिकर्मणा सकर्मकत्वस्वीकारेण मासआस्यते इति कर्मण्यपि लकारादिः । उक्तंच वाक्यपदीये ।

आधारत्वमिव प्राप्तास्ते द्रव्यगुणकर्मसु ॥
कालाद्यो भिन्नकक्षं यान्ति कर्मत्वमुत्तरम् ॥
अतस्तैः कर्मभिर्धातु र्युक्तो द्रव्यैरकर्मकः ।
लस्य कर्मणि भावे च निमित्तत्वाय कल्पते इति ॥

एतेन 'सस्ने माघमघातिघाति यमुनागङ्गौघसङ्गे ययेति नैषधं व्याख्यातम् । सस्नौ माघमिति सङ्गेनयोते च पाठकल्पनन्तु भ्रान्तिनिबन्धनत्वादुपेक्ष्यम् । सूत्रं तु क्रोशं कुटिला नदीत्यत्र गुणेनात्यन्तसंयोगे द्वितीयार्थम् । क्रोशस्य क्रियायोगाभावे कर्मत्वानुपपत्तेः । अवच्छिन्नत्वं द्वितीयार्थः । क्रोशावच्छिन्नकौटिल्याश्रय इत्यर्थः ।

## अपवर्गे तृतीया ॥ ६ ॥

अपवर्ग. क्रियाविरहः । सच द्वेधा । साधनवैकल्येन फलप्रा-

त्या च । तत्र सामर्थ्यात्फलप्राप्तिनिबन्धन एवापवर्गोऽत्र ग्राह्यो नत्वशक्त्यादिकृतः । एतदभिप्रायेणैवापवर्गः फलप्राप्तिरिति व्याख्यातम् । तत्र तात्पर्ये कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात् । अह्ना क्रोशेन वानुवाकोऽधीतः । नेह । मासमधीतो नायातः । अत्र फलोपधानविशिष्टेऽध्ययने धातोर्लक्षणा । अन्यत्पूर्ववत् । दिनादिव्यापकं फलोपधायकमध्ययनमिति धीः । प्रत्युदाहरणे नायात इति फलराहित्यद्योतनार्थम् ।

# सप्तमीपञ्चम्यौ कारकमध्ये ॥७॥

कारकमध्यवर्तिनोः कालाध्वनोः एते स्तः । इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत् । देवदत्ताधिकरणदेशस्य लक्ष्यरूपकर्मणश्चेति द्वयोः कारकयोर्मध्यवर्ती क्रोशः । ननु अद्य देवदत्तो भुक्त्वा द्व्यहात् द्व्यहे वा भोक्तेत्यत्र द्रव्यस्य देवदत्तरूपकारकस्यैकत्वाद्भेदनिबन्धनो मध्यभावो नास्तीति चेत् । न, वार्तिकरीत्या क्रियामध्ये इति न्यासेनैवोपपत्तेः ।

भाष्यकृतस्तु शक्तेः कारकत्वस्य पूर्वमुक्तत्वात् अद्यतनभोजनाक्रियानिरूपितकर्तृत्वाद्व्यहोत्तरकालीनभोजनाक्रियानिरूपितकर्तृत्वस्य भेदात् कारकमध्यत्वमस्त्येवेत्याहुः ।

वस्तुतः क्रियाभेदेन शक्तिभेदो नतु कालभेदेन । अनवस्थापत्तेर्मानाभावाच्च । क्रियाभेदश्च क्रियाविभाजकोपाध्यवच्छिन्नप्रतियोगिताकः सच नाद्यतनद्व्यहकालीनभुजिक्रिययोः । अतो वार्तिकमावश्यकं लाघवाच्चेति विभावनीयम् ।

अधिकरणत्वं विभक्त्यर्थः । पञ्चम्यर्थो विधिः । अत्र मध्ये भोजनाभावो विवक्षितः । मध्यस्य निरूपकानधिकरणत्वनिय-

मात् । एतद्दिनाऽव्यवहितोत्तरदिनवृत्त्यभावप्रतियोगिभोजनकर्त्रीति-धीः । व्यहे भोजनाभावेऽप्युक्तप्रयोगात् । क्रोशोदाहरणे तु एत-द्देशवृत्तेरेव क्रोशवृत्तिलक्ष्यवेधसामर्थ्यं प्रतिपाद्यम् । नतु सान्निहि-तलक्ष्यवेधाभावोऽपकर्षपर्यवसानात्कैमुतिकत्वाच्च ॥

# कर्मप्रवचनीययुक्ते द्वितीया ।८।

कर्मप्रवचनीयसंज्ञाः प्रागुक्ताः तद्योगे द्वितीया स्यात् । जप-मनु प्रावर्षत् । हेतुभूतजपोपलक्षितं वर्षणमिति धीः । अथ सामा-न्यतो लक्षणप्रणयने वृक्ष परि विद्योतते इत्यत्रापि विशेषविहित-त्वात् 'पञ्चम्यपाङ्परिभि'रिति पञ्चमी स्यात् । साधु देवदत्तो मा-तरं प्रतीत्यत्र परत्वात् 'साधुनिपुणाभ्यामर्चाया'मिति सप्तमी स्यात् । अप्रतेरित्यस्योपात्तत्वेऽपि तत्रैव गौरवात् । इति चेत् ।

अत्र वार्तिकम् । प्रत्यादिभिश्च लक्षणादिष्विति वक्तव्यमि-ति । ततश्च तदर्थपुरस्कारेणैव द्वितीयाविधानान्नोक्तदोष इति भावः । अप्रतेरित्यस्योक्तत्वान्न सप्तमी । वर्जनार्थकापशब्दसाह-चर्येण परेरपि तादृशस्यैव ग्रहणान्न पञ्चम्यपीति भाष्यम् ।

# यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ॥ ९ ॥

यदपेक्षयाधिक्यं कर्मप्रवचनीयद्योत्यं तस्मात्, ऐश्वर्यद्यो-तककर्मप्रवचनीययुक्ताच्च सप्तमी स्यात् । उप परार्धे हरेर्गुणाः । ततोऽप्याधिकाः । स्वस्वामिभ्यां पर्यायेण । यस्येति षष्ठ्या नि-रूप्यत्ववृत्तित्वोभयपरत्वमाश्रित्य यच्छब्दस्योभयपरत्वात् । अधि-भुवि रामो भूवृत्तिस्वत्वप्रतियोगी । अधिरामे भूः । रामनिरूप्यस्व-

स्वाश्रयः । अधिकयोगे पञ्चमीसप्तम्यौ । 'यस्मादधिक' 'तदस्मिन्नधिक'मिति च सौत्रनिर्देशात् । अधिको लोकात् लोके वा हरिः । स्वत्वादिसम्बन्धस्य वृत्त्यनियामकत्वात्सूत्रारम्भः ॥

भाष्ये तु स्वस्वामिनोराधिकरणत्वविवक्षया पर्यायेण सप्तमीसिद्धेर्यस्यचेत्यंशः प्रत्याख्यातः । अधिरीश्वरे इति कर्मप्रवचनीयसंज्ञापि न कार्या । ऐश्वर्यविषयस्य अधेः क्रियायोगाभावादेव गत्युपसर्गसंज्ञयोरप्रसङ्गात् ।

## पञ्चम्यपाङ्परिभिः ॥ १० ॥

कर्मप्रवचनीयैस्तैर्योगे पञ्चमी । अपविष्णोः परिविष्णोः संसारः । विष्णुनिष्ठात्यन्ताभावप्रतियोगीत्यर्थः । परिर्वर्जनार्थ एवात्रेति प्रागुक्तम् ॥

## आङ् मर्यादावचने ॥

आपाटलिपुत्रात् वृष्टो देवः । तद्वर्जायित्वेत्यर्थः ॥

## प्रतिनिधिप्रतिदाने च यस्मात् ११

तत्र कर्मप्रवचनीययुक्ते पञ्चमी । प्रद्युम्नः कृष्णात्प्रति । तिलेभ्यः प्रतियच्छति माषान् । 'यस्मादि'त्यनेनैव पञ्चमी ।

## गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥ १२ ॥

अध्वन्यर्थग्रहणम् । तेन पर्यायाणामपि पर्युदासः । आस्थितप्रतिषेधश्च वक्तव्यः । भेदप्रतीयोगीऽध्वा गन्त्राधिष्ठितस्तेन त्रि-

शेषणीयः । तथाच गन्त्रधिष्ठिताऽध्वभिन्ने गत्यर्थानां कर्मणि एते स्तः चेष्टायां सत्याम् । ग्रामं ग्रामाय वा गच्छति । अध्वभिन्ने किम्, पन्थानं गच्छति । अध्वनो गन्त्रधिष्ठितत्वेन विशेषणं किम्, उत्पथात्पथ आक्रमितुमिष्यमाणत्वे चतुर्थी यथा स्यात् । उत्पथेन पथे गच्छति । गत्यर्थेति किम् । ओदनं पचति । कर्मणि किम्, अश्वेन व्रजति । चेष्टायां किम्, मनसा हरिं व्रजति ।

अनध्वनीत्यस्य स्थाने ऽसंप्राप्ते इति वक्तव्यम् । असम्प्राप्तं वस्तु गमनेन यत्संप्रेक्ष्यते तत्र कर्मणीत्यर्थः । तेन स्त्रियं गच्छतीत्यत्र न चतुर्थी । सम्प्राप्तत्वात् । ननु असम्प्राप्तत्वं केन सम्बन्धेन । स्वस्वामिभावसम्बन्धेन स्त्रियाः सम्प्राप्तत्वेऽपि धात्वर्थतावच्छेदकसम्बन्धेनासंप्राप्तेः । यत्किञ्चित्सम्बन्धेन ग्रामादेरपि प्राप्तत्वात् । नैवम् । तत्साक्षात्सम्बन्धाभावविशिष्टसंयोगादिनाऽसंप्राप्तेर्विवक्षितत्वात् । अत एवाजां नयतीत्यजायां न चतुर्थी । केचित्तु नयतिर्न गत्यर्थः । आक्षेपादेव तत्र गतिप्रतीतेरित्याहुः ।

अत्र भाष्यकाराः । गमनक्रियया ग्रामस्येप्सिततमत्वान्क्रियाग्रहणं कर्तव्यमिति वार्तिकेन गतार्थमिदं सूत्रमिति ।

अत्र कैयटादयः । यद्यपीदं वार्तिकं कर्मणा यमभिप्रैतीत्यत्र भाष्यकृता प्रत्याख्यातम् । तथापि तत्रत्यन्यायस्मरणार्थमिदमुक्तम् । सर्वापि क्रिया ज्ञानेच्छादिक्रिया (कर्म) तद्व्यतिरेकेणचेतनसाध्यक्रियानुपपत्तेः । तदुक्तम्—पूर्वं हि सम्पश्यत्यध्यवस्यतीत्यादि । तत्र यदा गमनस्य सन्दर्शनादीनां च भेदविवक्षा तदा सन्दर्शनादिक्रियाभिराप्यमानत्वात् कर्मणा गमनेनाभिप्रेयमाणस्य ग्रामस्य सम्प्रदानत्वाच्चतुर्थी । यदा त्वभेदविवक्षा तदा

गमनस्य कर्मत्वाभावा द्ग्रामः कर्मैव भवति इति द्वितीया । भेदाभेदविवक्षा च लौकिकप्रयोगानुसारेण, नियतविषये त्वारम्भप्रत्याख्यानयोर्नास्ति फलभेद इति ।

अत्र नव्यमीमांसकाः । नैतद्युक्तम् । पच्यादिभ्यो ज्ञानाद्यनुभवाभावात् । नियमेनारोपेऽपि प्रमाणाभावात् । विध्यभावे कारणाभावेन प्रयोगगतसाधुत्वज्ञानाभावात्तेन भेदाभेदव्यवस्थाप्रतीत्यनुपपत्तेश्च । अत एवात्र सूत्रे भाष्यकृतापि तद्वार्तिकस्य विधित्वमाश्रितम् । नचैवं गत्यर्थकर्मणीत्यादिसूत्रप्रत्याख्यानानुपपत्तिः । धात्वर्थतावच्छेदकफलशालित्वरूपे तत्समनियतेऽखण्डोपाधौ च विवक्षिते द्वितीया । तदनवच्छेदकक्रियाजन्यफलशालित्वे विवक्षिते चतुर्थीत्यभिप्रायात् । गमनजन्यस्वास्थ्याद्याश्रयत्वेन ग्रामाय गच्छतीत्यस्योपपत्तेः ।

नचैवमध्वादिरूपापवादविषयेऽपि प्रयोगद्वयापत्तिः । तदंशेऽप्रत्याख्यानस्य भाष्याभिमतत्वात् । भाष्यकारो हि—अध्वादीनां न स्वरूपेणापवादविषयत्व । स्त्रियङ्गच्छतीत्यत्र द्वितीयानियमानापत्तेः । अपि तु संप्राप्तत्वेन, प्राप्त एव पन्थाः स्त्री च । तत्र पन्थानं गच्छति स्त्रियं गच्छतीति द्वितीयानियम इति प्रतिपादयन्न संयुक्ते कर्मणि द्वितीयाचतुर्थ्यौ भवत इत्याह । अतो वार्तिकप्रत्याख्याने न भाष्यतात्पर्यमित्याहुः ।

अत एव वृत्तिकारेणात्र द्वितीयोपादानं अपवादविषयेऽपि द्वितीयाविधानार्थम् । अन्यथा चतुर्थीविकल्पमेव कुर्यात् । तेनैतत्सूत्रविषये कर्तृकर्मणोः कृतीत्यस्य न प्रवृत्तिः । अतो ग्रामं गन्तेति तृजन्ते द्वितीयैवेत्युक्तम् । सर्वात्मनैतत्सूत्रप्रत्याख्याने तु तत्र षष्ठ्या एव भाष्यसम्मतत्वापत्त्या वृत्तिग्रन्थानुपपत्तेः ।

यत्तु द्वितीयेति सूत्रे ग्रामं गामीत्यत्रावश्यके णिनौ द्वितीयेवेति वृत्तिमतं कैयटादौ एतत्तत्वाख्यानोद्भावनेन दूषितं, तदपि स्वमतोपष्टम्भमात्रेणेति द्रष्टव्यम् ।

# चतुर्थी सम्प्रदाने ॥ १३ ॥

विप्राय गां ददाति । तादर्थ्ये उपसंख्यानम् । तत्पदं कार्यपरम् । तस्मै इदं तदर्थमितिकार्यविशिष्टकारणलाभः । तदुत्तरभावप्रत्ययात्कार्यकारणभावसम्बन्धलाभः । कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानमितिन्यायात् । तस्योभयवृत्तित्वेऽपि राज्ञः पुरुष इत्यादौ षष्ठीव यूपाय दार्विति चतुर्थी विशेषणादेव । अत एव हेतुतृतीयापि दारुशब्दे न प्रवर्तते । प्रकृत्यैव हेतुत्वस्य प्रतिपादितत्वात् । हेतुत्वस्य प्रकृत्यर्थानन्तर्भावे एव तद्विधानात् । तदाहुः ।

तस्मादित्युपकार्यं हि कार्यं प्रसवमृश्यते ।
तदर्थशब्दात्सम्बन्धे भावप्रत्यय इष्यते ॥
गम्यमानविभक्तित्वाच्चतुर्थी कार्यवाचिनी ।
गुणे कृतास्पदा तस्मात्कारणं नावगाहते ॥

नचोपसंख्यानेन सूत्रं गतार्थम् । हरये रोचते भक्तिरित्याद्यर्थं तदारम्भात् । उपकारापकारसाधारणं तादर्थ्यम् । मशकेभ्यो धूमः । एतेन—

गोनासाय नियोजिता गदरजाः सर्पाय बद्धौषधिः ।
कण्ठस्थाय विषाय वीर्यमहतः पाणौ मणीन् बिभ्रती ।
भर्तुर्भूतगणाय गोत्रजरती निर्दिष्टमन्त्राक्षरा ।
रक्षत्वाद्रिसुता विवाहसमये प्रीता च भीता च वः ॥
इति कविराजशेषप्रयोगा व्याख्याताः ।

'क्लृपि सम्पद्यमाने च विकारवाचकाच्चतुर्थी' । सम्पद्यने प्रादुर्भवतीत्यर्थात् । भक्तिर्ज्ञानाय कल्पते । प्रकृतिविकृत्योरभेदविवक्षाया भक्तिर्ज्ञान कल्पते इति प्रथमैवेति न चतुर्थीत्यन्ये । अपादानत्वविवक्षायां भक्तेर्ज्ञान कल्पते इति पञ्चमीति केचित् ।

अन्येतु तत्रापि विरोधाभावाच्चतुर्थीत्याहुः । 'उत्पातेन ज्ञापिते च' । शुभाशुभसूचको विकार उत्पातः । तज्ज्ञाप्ये स्वोत्तरकालभावित्वेन बोध्ये चतुर्थी । वाताय कपिला विद्युत्, आतपायातिलोहिनी ॥ मांसौदनाय व्याहरति मृगः । हितयोगे चतुर्थी तत्समासविधानज्ञाप्या । ब्राह्मणाय हितम् सम्बन्धित्वं चतुर्थ्यर्थः ।

# क्रियार्थोपपदस्य च कर्मणि-स्थानिनः ॥ १४ ॥

पारिभाषिकोपपदस्य क्रियार्थक्रियारूपस्य तुमुन्ण्वुल्निरूपितभिन्नस्यासम्भवात् सामर्थ्यात्तयोरेव विशेष्यत्वम् । स्थानिपदं यद्यप्यादेशप्रयोज्यनिवृत्तिप्रतियोगित्वेन प्रसिद्धं, तथाप्यप्रयुज्यमानत्वमत्र तदर्थः । फलेभ्यो याति । फलान्याहर्तुं फलान्याहारको वा यातीत्यर्थः । गम्यमानाहरणक्रियानिरूपितं कर्मत्वं चतुर्थ्यर्थः ॥

# तुमर्थाच्च भाववचनात् ॥१५॥

भाववचनाश्चेति सूत्रेण तुमर्थे विहिता ये घञादयस्तदन्ताच्च चतुर्थी । यागाय याति । पाकाय पचनाय पक्तये । नच तादर्थ्येन गतार्थत्वम् । तुमुनेव घञादिभिरेव तादर्थ्यस्य द्योतितत्वात्

प्रथमाया एव प्रसक्तेस्तद्बाधार्थत्वात् । नच तर्हि भाववचनाश्चेति सूत्रमेव व्यर्थं शुद्धभावे घञ व्युत्पाद्य तादर्थ्यचतुर्थ्यैव निर्वाहादिति वाच्यम् । क्रियार्थायां क्रियायामुपपदे विशेषविहितेन तुमुना घञो बाधापत्तेः ।

## नमः स्वस्तिस्वाहास्वधालंवषड्योगाच्च ॥ १६ ॥

एभिर्योगे चतुर्थी स्यात् । हरये नमः । स्वापकर्षबोधानुकूलो व्यापारो नमस्कारः । अवधित्वं चतुर्थ्यर्थः । हर्यवधिकस्वापकर्षबोधनमित्यर्थः । स्वस्ति जाल्माय । अत्र स्वरूपकथनं जाल्मत्वादाशीरविवक्षा । स्वाहावषट्शब्दौ देवेभ्यः, स्वधेति पितृभ्यो हविर्दाने । 'तस्या द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं वषट्कारं च, हन्तकारं मनुष्याः, स्वधाकारं पितर' इति श्रुतेः । 'स्रजा नमस्कृत्य तथैव शक्र' इत्यादौ कृञ एव नमस्कारोऽर्थः, नमः शब्दस्तात्पर्यग्राहकः । अतो द्वितीया । उपपदविभक्तेः कारकविभक्तिर्बलीयसीति न्यायात् ।

नमस्कुर्मो नृसिंहाय, रावणाय नमस्कुर्यादित्यादौ 'क्रियार्थोपपदस्ये'ति चतुर्थी । नृसिंह मनुकूलयितुमित्यर्थः । अलमिति पर्याप्त्यर्थग्रहणम् । अलं मल्लो मल्लाय । दैत्येभ्यो हरिः प्रभुः समर्थ इत्यादि । 'प्रभुर्बुभूषुर्भुवनत्रयस्य य' इत्यादौ ऐश्वर्यमर्थः । पर्याप्तेस्तदभिभवसामर्थ्यरूपत्वात् । चकारः पुनर्विधानार्थः । तेनाशीर्विवक्षायामपि षष्ठीं बाधित्वा चतुर्थी । स्वस्ति गोभ्यो भूयात् अन्यथा पूर्वोक्ते सावकाशायाश्चतुर्थ्याः स्वस्तिभिन्नकुशलार्थेषु सावकाशया षष्ठ्या पक्षे परत्वाद्बाधः स्यात् ।

# मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ॥ १७ ॥

अप्राणिष्वित्यपनीय नौकाकान्नशुकशृगालभिन्नेष्विति वक्तव्यम् । एतत्स्फोरणार्थमेव भेदाश्रयान्वयिनोऽपि बहुत्वस्य प्रतियोगितावच्छेदकबहुत्वसूचनाय निर्देशः । मन्येति श्यन्प्रयोगस्तनादिनिवृत्त्यर्थः । नतु तादृशशब्दयोग एव चतुर्थीत्येतदर्थः । 'तृणाय मत्वा रघुनन्दनो थे'त्यादिप्रयोगविरोधात् । नच यक्निर्देश एव स्यादिति वाच्यम् । अनभिहिताधिकारात् । अनादर इत्येतदुत्तरं 'उपमाने' इत्यधिकमापिशलिसूत्रम् । तथाच यत्प्रतियोगिकसादृश्याश्रयत्वेन तदभावाश्रयत्वेन वा प्रकृतस्य तिरस्कारविवक्षा तद्वाचकाच्चतुर्थी स्यात् । आद्ये तृणाय मत्वेत्यादि । द्वितीये न त्वां तृणाय मन्ये । एव नत्वा शुने मन्ये इत्यादि । प्रकृष्य कुत्सितग्रहण कर्तव्यमिति वार्तिकम् । साम्याभावविवक्षायामेव चतुर्थी नतु साम्यविवक्षायाम् । प्रतिकृष्येति पाठेऽप्ययमेवार्थः ।

इति श्रीसिद्धान्तसुधानिधौ द्वितीयाध्यायस्य
तृतीये पादे प्रथममाह्निकम् ।



# कर्तृकरणयोस्तृतीया ॥१८॥

रामेण बाणेन हतो वाली । प्रकृत्यादिभ्य उपसङ्ख्यानम् । प्रकृत्याभिरूपः । क्रियापदाश्रवणात् कर्तृकरणयोरभावात् षष्ठी प्राप्ता । साहजिक प्रकृतिपदस्य, अभेदस्तृतीयायाः, रमणीयत्ववानभिरूपपदस्यार्थः । साहजिकाभिन्नरमणीयत्ववानित्यर्थः । प्रायेण याज्ञिकाः बहवो याज्ञिका इत्यर्थः । अवच्छेदकत्वाभावविशिष्टे बाहुल्ये प्रायशब्दः । प्रायेण याज्ञिक इतिच याज्ञिकत्वसमानाधिकरणधर्मलिङ्गकानुमितिविषययाज्ञिकत्ववति प्रयोगः । तथा च सम्भावितयाज्ञिकत्वाश्रय इति धीः ।

केचित्तु तृतीयाया अवच्छिन्नत्वमर्थः । तथा च किञ्चिन्न्यूनबाहुल्यावच्छिन्नयज्ञविद्यासम्बन्धवानिति धीरित्याहुः । गोत्रेण गार्ग्य इत्यत्र गोत्रत्वावच्छिन्नगर्गसम्बन्धवान् गोत्राभिन्नसम्बन्धवानिति वार्थः । समवायेन रूपवानित्यादावपि समवायाभिन्नरूपसम्बन्धवानिति धीरिति केचित् । समेन विषमेण याति । समादिदेशावच्छिन्नं गमनमित्यर्थः । द्विद्रोणेन धान्यं क्रीणाति, पञ्चकेन पशून् क्रीणाति । द्रोणद्वयपरिमितं धान्यं, पञ्चघाटकसमुदायावच्छिन्नान् पशून् क्रीणातीत्यर्थः ।

भाष्यकृतस्त्वाहुः । प्रकृत्याभिरूपः कृतो, न त्वलङ्कारादिनेति गम्यमानक्रियायां करणत्वात्सिद्धम् । संघीभूय यज्ञमधीयत इत्यर्थादध्ययनं प्रति बाहुल्यं करणमेव । अध्यवसायस्थलेऽपि ज्ञानं प्रति तत् । आचरणादिबाहुल्येनान्येषाम् याज्ञिकत्वप्रकारकतद्विशेष्यकप्रतीत्युत्पत्तेः । प्रायेण सामान्यविधौ गुणानामित्यादिदर्शनाद्विभक्तिप्रतिरूपकः प्रायेणेति निपात इत्येके । गोत्रेण गार्ग्य इत्यत्रापि अनेनाहं ज्ञाये इत्यर्थः । समेनेत्यत्र यथेत्यध्याहारः ।

द्विद्रोणेनेत्यत्र तदर्थमूलकलक्षणया सिद्धमिति ।

## सहयुक्तेऽप्रधाने ॥ १९ ॥

सहार्थेन युक्तेऽप्रधाने तृतीया । पुत्रेण सहागतः पिता । पितुरागमनान्वयः शाब्दोऽन्यस्य त्वार्थः । भिन्नविभक्त्यन्तत्वात् । युक्तग्रहणं सहार्थे गम्यमानेऽपि तृतीयार्थम् । वृद्धो यूनेत्यादिदर्शनात् । तेन 'तुला यदारोहति दन्तवाससे'त्यादि सिद्धम् । अप्रधानग्रहणं शक्यमकर्तुम् । प्रातिपदिकमात्रापेक्षत्वादन्तरङ्गत्वेन पितेत्यत्र प्रथमासिद्धेः । एवंचाप्रधानत्वप्रकारकबोधार्थं तदिति कल्पनायासो निर्मूलः । भाष्यकारादिसर्वाभियुक्तानुभवविरोधात् । पित्रा सह पुत्र आगत इत्यादेरपि दर्शनेन वास्तवाप्राधान्यस्याप्रयोजकत्वात् । सहैव दशभिः पुत्रैर्भारं वहति गर्दभीत्यादौ वहनक्रियान्वयाभावेऽपि विद्यमानेत्यध्याहारात्तदंशे साहित्याच्तृतीया । पुत्रकर्तृकागमनविशिष्टागमनकर्तेत्यन्वयः । वैशिष्ट्यं त्वेकदेशकालावच्छिन्नत्वम् । शिष्येण सह गुरुर्ब्राह्मणः,पुत्रेण सह पिता सुन्दर इत्यत्र वृत्तित्वं तृतीयार्थो ब्राह्मणपदार्थतावच्छेदकब्राह्मणत्वान्वयी, शिष्यवृत्तिब्राह्मणत्वाश्रयो गुरुः । पुत्रवृत्तिसौन्दर्याश्रयः पितेति धीः । यद्वा तृतीयार्थो वृत्तिः साहित्यं एकधर्मान्वयित्वं शिष्यसाहित्यवान् गुरुर्ब्राह्मण इत्यादिरर्थः ॥

## येनाङ्गविकारः ॥ २० ॥

विकारो हानिराधिक्यं वा । येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते तस्मात्तृतीया । अक्ष्णा काणः । पादेन खञ्जः । पाणिना कुणिः । 'स बाल आसीद्वपुषा चतुर्भुजो मुखेन पूर्णेन्दुनिभस्त्रिलोचनः' । अत्राक्ष्णेत्युक्ते निरूपयतीत्याकाङ्क्षोदयात् ।

करणे इत्यस्य नाधिक्यमिति केचित् ।

अन्येतु यद्यपि चक्षुष्मत्त्वे सति चक्षुष्मद्गोलकद्वयशून्यत्वं काण पदार्थः । तथाप्यत्र चक्षुष्मत्त्वमक्ष्णेत्यस्यार्थः । वैशिष्ट्यस्य तृतीयार्थत्वात् । येनाङ्गेन विकारस्तज्जातीयवाचकपदात्तृतीयेति ।

अन्ये तु अक्षिपदं गोलकपरम् । अभेदे तृतीया । काणपदार्थैकदेशे चक्षुःशून्ये तदन्वयः । गोलकाभिन्नं यच्चक्षुःशून्यं तद्वानित्यर्थः । यस्य गोलकमपि नास्ति तत्रोक्तप्रयोगो गौणः । सूत्रार्थसङ्गतिरप्येवमित्याहुः । खञ्जः संस्थानविशेषशून्यपादवान् । पादवृत्ति यदुक्तशून्यत्वं तदाश्रयपादवान् पादाभिन्नो य उक्तशून्यस्तद्वान्वा इत्यादि । मुखवृत्तिलोचनत्रयवानिति विकारलाभोऽर्थात् । यद्वा वृत्तिविषये त्रिपदं पूरणार्थपर तृतीयं लोचनं यस्य त्रिलोचनः । मुखावच्छेदेन यत्तृतीयं लोचनं तद्वानित्यर्थः ।

# इत्थंभूतलक्षणे ॥ २१ ॥

तृतीया । इतरस्माद्व्यावर्तकं धर्मं प्राप्त इत्थंभूतः । इतरत्वं च समभिव्याहृतपदार्थतावच्छेदकावच्छिन्नप्रतियोगिताकं तस्य लक्षणमुक्तधर्मस्तत्र तृतीया । जटाभिस्तापसः । अतापसव्यावृत्तिधीजनको धर्मो जटा भवत्येव । तापसत्वसामानाधिकरण्यमात्रेण सत्त्वात् । किन्तु तापसभिन्नेऽपि सत्त्वादतापसव्यावृत्तौ नावच्छेदिका । तथा च प्रत्यायव्यावृत्त्यनवच्छेदकत्वे सति तद्व्यावृत्तिसमानाधिकरणत्वरूपे उपलक्षणत्वे तृतीयेत्यर्थः । अतएव शैत्येन जलं, शमादिना तापस इत्यादिर्न प्रयोगः । एतेन 'लताप्रतानोद्ग्रथितैः स केशै'रित्यादि व्याख्यातम् । अत एव तत्र केशैरुपलक्षित इति व्याख्यातम् । यदि विशेषणेऽपि तृतीया दृश्यते तदा तत्साधारणं वैशिष्ट्यं तृतीयार्थ इत्याहुः ॥

## संज्ञोऽन्यतरस्यां कर्मणि॥२२॥

संपूर्वस्य जानातेः कर्मणि तृतीया वा स्यात्। मात्रा मातरं वा संजानीते। 'सम्प्रतिभ्यामनाध्याने' इति तङ्। मातुः संज्ञातेत्यत्र पूर्वविप्रतिषेधेन षष्ठी 'संज्ञः कृत्प्रयोगे षष्ठी विप्रतिषेधेन' इति वार्त्तिकात्। 'उपपदविभक्तेश्चोपपदविभक्तिः' अन्यारादित्यादेः स्वामीश्वरेत्यादेश्चान्यो देवदत्तादित्यादौ गोषु गवा वा स्वामीत्यादौ च सावकाशत्वात् अन्यो गोषु स्वामीत्यत्र स्वामीश्वरेत्यादेरेव प्रवृत्तिः। नन्वत्र पूर्वस्वाम्यपेक्षमन्यत्वं प्रतिपाद्यं, नतु गवापेक्षम्। निर्ज्ञातत्वात्। विवक्षायां च पञ्चम्या इष्टत्वात्। सत्यम्। तुल्यो गोभिः स्वामीत्युदाहरणम्। गोस्वामिनि जाड्यादिप्रयुक्तगोसादृश्यविवक्षायां पदद्वयार्थयोगस्य गवा सत्त्वात्।

## हेतौ॥२३॥

तदर्थे तृतीया स्यात्। धनेन कुलम्। विद्यया यशः। योग्यतामात्रप्रयुक्तोऽनाश्रितव्यापारोऽर्थो द्रव्यगुणक्रियाविषयो हेतुः। करणं तु व्यापारनियतं क्रियामात्रविषयं चेति भेदः। तदुक्तम्—

द्रव्यादिनियतो हेतुः कारकं नियतक्रियमिति।
अनाश्रिते तु व्यापारे निमित्तं हेतुरुच्यते॥ इतिच॥

अध्ययनेन वसति। वासप्रवर्तकेच्छाजनकेच्छाविषयतया हेतुत्वं, फलेच्छया उपायेच्छेति ततो वासः।

अयमप्यस्य सूत्रस्य विशेषः। 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्'। प्रायग्रहणात्सर्वनाम्नः प्रथमा द्वितीययोरभावः। अन्यासां यथादर्शनं प्रयोगः। पर्यायग्रहणं अन्यनिवृत्त्यर्थमिति केचित्। उपलक्षणत्वात्प्रपञ्चार्थमित्यन्ये। अन्नेन हेतुना वस-

तीत्यादि ।

## अकर्तर्यृणे पञ्चमी ॥२४॥

कर्तृभिन्नं यदृणं हेतुभूतं ततः पञ्चमी स्यात् । तृतीयापवादः । शताद्बद्धः । अकर्तरि किम् । शतेन बन्धितः । ऋणत्वं शतस्य प्रसिद्धम् । तत्प्रयोजको हेतुश्चेति चकारात्कर्तृसंज्ञं च । पूर्वसूत्रे शास्त्रीयसाधारणहेतुग्रहणे बाधकाभावात् कर्तृकरणयोरिति तृतीयायास्तत्र प्राबल्यात्सिद्धेः ।

## विभाषा गुणेऽस्त्रियाम् ॥२५॥

गुणे हेतावस्त्रीलिङ्गे पञ्चमी वा स्यात् । जाड्याज्जाड्येन वा बद्धः । पाण्डित्यात्पाण्डित्येन वा मुक्तः । गुणेति किम् । धनेन कुलम् । अस्त्रियां किम् । बुद्ध्या मुक्तः । गुणपदं परतन्त्रमात्रपरम् । यस्य गुणस्य भावाच्छब्दे निवेश इतिवत् । तेन वह्निमान्धूमादित्यादौ पञ्चमीति केचित् । नास्ति घटोऽनुपलब्धेरित्यादौ तु बाहुलकं प्रकृतेस्तनुदृष्टेरितिवार्तिकप्रयोगात् । अन्येतु विभाषेति योगविभागादुभयत्रापि सिद्धमित्याहुः ।

## षष्ठीहेतुप्रयोगे ॥२६॥

हेतुशब्दप्रयोगे हेतुत्वे द्योत्ये षष्ठी । अन्नस्य हेतोर्वसति ।

## सर्वनाम्नस्तृतीया च ॥२७॥

पूर्वविषये तृतीया षष्ठी च । केन हेतुना वसति । कस्य हेतोर्वा*।

# अपादाने पञ्चमी ॥२८॥

ग्रामादागच्छति । 'ल्यब्लोपे कर्मण्यधिकरणे चोपसंख्यानम्' । प्रासादादासनात्प्रेक्षते । प्रासदमारुह्यासने उपविश्येत्यर्थः । ल्यबन्तप्रयोगेऽपि यत्र तदर्थप्रतीतिस्तद्विषयकमिति केचित् । द्वितीयासप्तम्योरपवादः ।

"प्रश्नाख्यानयोश्च" कुतो भवान् । पाटलिपुत्रात् । गम्यमानक्रियामादाय सिद्धार्थकथनमेतत् । "यतश्चाऽध्वकालनिर्माणं तत्र पञ्चमी तद्युक्तादध्वनः प्रथमासप्तम्यौ, कालात्सप्तमीच वक्तव्या"। निर्माणं परिच्छेदः । तद्योगश्चार्थद्वारकः । गवीधुमतः साकाश्य चत्वारि योजनानि चतुर्षु योजनेषु वा । कार्तिक्या आग्रहायणी मासे । उभयत्र दैशिककालिके परत्वे यथाक्रम प्रथमासप्तम्योः सप्तम्याश्चार्थः । तत्रावच्छिन्नत्वसम्बन्धेन प्रकृत्यर्थो विशेषणम् । तस्याश्रयत्वसम्बन्धेन सांकाश्ये आग्रहायण्यां चान्वयः गवीधुमदवधिकयोजनचतुष्टयावच्छिन्नपरत्वाश्रयः । कार्तिक्यवधिकमासावच्छिन्नपरत्वाश्रयश्चेत्यन्वयधीः ।

अत्रभाष्यम्—गवीधुमतो निःसृत्य यदा चत्वारि योजनानि गतानि भवन्ति ततः साकाश्यम् । यद्वा चतुर्षु योजनेषु गतेषु ततः साङ्काश्यम् । कार्तिक्याः प्रभृत्याग्रहायणी मासे । तथाच गम्यमानक्रियामादायैव सिद्ध्या वार्तिकं नारभ्यमिति । भाष्यप्रयोगात्प्रभृतियोगे पञ्चमी । तत्रार्थग्रहणाच्च तत आरभ्येति तद्व्याख्यापरकैयटः । तेन'इति स चिकुरादारभ्यैनां नखावधि वर्णय'न्नित्यादि सिद्धम् ।

# अन्यारादितरर्तेदिक्शब्दाञ्चू-

# त्तरपदाजाहियुक्ते ॥२९॥

एभैर्योगे पञ्चमी स्यात् । अन्येत्यर्थपरम् । इतरग्रहणं प्रपञ्चार्थम् । नीचार्थयोगे 'पञ्चमी विभक्ते' इत्येव सिद्धेः । घटादन्यो भिन्नो वेत्यादि । अत्र प्रतियोगित्वं पञ्चम्यर्थः । तस्य पदार्थैकदेशेऽन्योन्याभावेऽन्वयः । नन्वेव घटः पटो नेत्यत्रातिप्रसङ्गः । नच तस्यान्योन्याभावद्योतकत्वान्न दोषः तदाश्रयवाचकपदयोगे पञ्चमीविधानादिति वाच्यम् । भिन्न इत्यादौ तदसिद्धेरिति चेदत्राहुः—नञो द्योतकत्वान्न दोष इति ।

(१)अन्ये तु एवमपि घटस्यान्योन्याभावस्तादात्म्यावच्छिन्नप्रतियोगिताकाभाव इत्यादावातिप्रसङ्गः । अतोऽन्योन्याभावादिपदानां अन्योन्यपदवाच्यतादात्म्याद्यभावत्वेन बोधो नतु भेदत्वेन । नञोऽप्युभयसाधारणमभावत्वमेव शक्यतावच्छेदकमतो न दोषः । नच नञ्योगे षष्ठी तथापि दुर्वारा । नियतप्रयोगा हि केचिदव्यया इति नेयं विभाषेत्यादिभाष्यप्रयोगाच्चेत्याहुः ।

तन्न । अन्योन्याभावत्वात्यन्ताभावत्वयोरेव नञ्पदशक्यतावच्छेदकताया दीधितिकारादिभिरुक्तत्वात् । अन्यथा तत्तत्प्रकारकसन्देहनिवृत्त्यनुपपत्तेः । तस्मादन्यवाचकसत्वार्थकपदानामेव योगे पञ्चमी । अत्र चेतरपदं तात्पर्यग्राहकमिति बोध्यम् ।

गुणरहस्ये तु—अन्ये तु एवमपि घटस्यान्योन्याभावस्तादात्म्यसम्बधावच्छिन्नप्रतियोगिताकाभाव इत्यादावतिप्रसङ्गः ।

---

(१) अत्र यादृश 'अन्येतु' इत्यादि मतमनूद्य खण्डित, तस्यैव गुणरहस्ये 'अन्येतु'इत्यादिनाऽनूद्य खण्डना यथास्थितस्यैव चोक्तिद्वयस्य प्रकृतग्रन्थकृतानुवादकरणादापाततः पुनरुक्तवद्भानेऽपि न दोषः, 'तन्न' इत्यादिना खण्डनप्रकारस्य भिन्नत्वेन पृथगुल्लेखस्यौचित्यात् ।

अतोऽन्योन्याभावादिपदानामन्योन्यपदवाच्यतादात्म्याद्यभावत्वे-न बोधो नतु भेदत्वेन । नञोऽप्युभयसाधारणमभावत्वमेव शक्यतावच्छेदकमतो न दोषः । नच नञ्योगे षष्ठी तथापि दुर्वारा नियतप्रयोगा हि केचिदव्यया इति नेयं विभाषेत्यादि भाष्यप्रयोगाच्चेत्याहुः । तन्न । अन्योन्याभावपदस्यापि भेदपदवद्भेदत्वेनैव बोधकत्वात् । तादात्म्याभावत्वेन बोधो हि तादात्म्यस्य प्रतियोगित्वावगाही प्रतियोगितावच्छेदकत्वावगाही वा । नाद्यः । घटादेरेव प्रतियोगित्वानुभवात् । नान्त्यः । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वस्य भेदत्वे संयोगाद्यवच्छिन्नप्रतियोगिताकात्यन्ताभावेऽतिव्याप्तेः । संयोगस्य संयोगितादात्म्यरूपत्वात् । भेदप्रतियोगितायाः सम्बन्धावच्छिन्नत्वस्य नव्यैरनङ्गीकाराच्च । अखण्डोपाधिरूपताया एव स्वीकाराच्च । अत्यन्ताभावत्वान्योन्याभावत्वयोः पृथगेव नञ्पदशक्यतावच्छेदकताया दीधितिकारादिभिरुक्तत्वात् । अन्यथा तत्तत्प्रकारकसंदेहनिवृत्त्यनुपपत्तेः । तस्मादन्यत्ववाचकसत्त्वार्थकपदयोगे एव पञ्चमी तत्र चेतरपदोपादानं तात्पर्यग्राहकं अतो नञ्योगे न प्रसङ्गः ।

अन्ये तु यत्र प्रतियोगित्वसम्बन्धेन प्रतियोगिनोऽन्योऽन्याभावान्वयो न व्युत्पन्नस्तत्र षष्ठ्याः पञ्चम्या वा प्रतियोगिवाचकपदोत्तरमपेक्षा । यथा घटस्याभावो घटादन्य इत्यादौ । निपातातिरिक्तनामार्थयोर्भेदान्वयानर्हत्वात् नञर्थे तु प्रतियोगित्वसम्बन्धेन घटादेरन्वयस्य व्युत्पन्नत्वात्षष्ठ्या इव पञ्चम्या अपि नाकाङ्क्षा इत्याहुः ।

आराद्दूरसमीपयोः । आराद्देवदत्तात् । दूरान्तिकार्थैः षष्ठ्यन्तरस्यामिति प्राप्तम् । ऋते कृशानोर्न हि मन्त्रपूतम् । द्वितीयापीति प्रागुक्तम् । स्रक् पारिजातस्य ऋते न शालाम् । दिशि दृष्टः

शब्दो दिक्शब्दः । तत्समभिव्याहारे दिग्वाचकत्वाभावेऽपि यदा-कदाचिद्दिक्परः इत्यर्थः । ग्रामात्पूर्वो देशः । चैत्रात्पूर्वः फाल्गुनः । अन्यथा विना योगे षष्ठ्येव । पूर्वं कायस्येति प्रागुक्तम् । अञ्चूत्तरपदस्य दिक्शब्दत्वेऽपि 'षष्ठ्यतसर्थप्रत्ययेने'त्यस्य बाधार्थं पृथगुपादानम् । नच तेन सध्र्यङ् इत्यादौ पञ्चम्यर्थं तदिति वाच्यम् । साहचर्याद्दिक्शब्दस्यैवाञ्चूत्तरपदस्य ग्रहणात् प्राक्-ग्रामात् प्रत्यग्वा । दक्षिणाग्रामात् । दक्षिणादाच् । दक्षिणाहि उत्तराहि वा ग्रामात् । आहि च दूरे, उत्तराच्चेत्याहिः ।

# षष्ठ्यतसर्थप्रत्ययेन ॥३०॥

दक्षिणत उत्तरतो वा ग्रामस्य । दक्षिणोत्तराभ्यामतसुच् । एवं पुरः पुरस्तादुपर्युपरिष्टात् । 'विन्ध्याद्दक्षिणतोऽखिलैरपि बुधैः कृष्णादिको नेष्यते' इति तु ततः पश्चात्स्रंस्यते इति भाष्यप्रयोगस्य सामान्यापेक्षज्ञापकत्वादिति केचित् ।

अन्ये तु प्रमाद एवायम् । ज्ञापकस्य पश्चाद्यागमात्रविषय-कत्वादित्याहुः । श्रुतस्यैव चात्रातसुच्प्रत्ययस्य निमित्तता न तु लुप्तस्य । प्राक्ग्रामादित्यादौ प्रत्ययलोपे षष्ठ्यभावस्य कैयट-सिद्धत्वात् ।

# एनपा द्वितीया ॥३१॥

योगविभागात्षष्ठीच । दक्षिणेन ग्रामम् ग्रामस्य वा । उत्तरेण । 'तत्रागारं धनपतिगृहादुत्तरेणास्मदीय'मिति तु प्रमाद इत्येके । उत्तरेणेति तृतीयैकवचनान्तम् । 'दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेने'ति तृतीयान्तेनाभेदान्वयीत्यपरे । गृहानिति द्वितीयान्तमित्यन्ये ।

## पृथग्विनानानाभि--स्तृतीयान्यतरस्याम् ॥३२॥

अन्यतरस्यामिति समुच्चयार्थम् । मण्डूकप्लुतया पञ्चम्यनुवृत्तिः । एभिर्योगे तृतीयापञ्चम्यौ स्तः । घटात्पृथक् घटेन वा । हिरुङ् नानाच वर्जने इत्यमरः । 'नाना नारी निःफला लोकयात्रे'ति क्षीरस्वामी । योगविभागाद्द्वितीयापीति वृत्तिः । नाना विष्णु मोक्षदो नान्यदेवः ।

## करणे च स्तोकाल्पकृच्छ्रकतिप-यस्यासत्त्ववचनस्य ॥२३॥

अद्रव्यार्थेभ्य एभ्यः करणे तृतीयापञ्चम्यौ स्तः । स्तोकेन स्तोकाद्वा मुक्तः । असत्त्वेति किम् । स्तोकेन विषेण हतः ।

## दूरान्तिकार्थैःषष्ठ्यन्य-तरस्याम् ॥३४॥

पञ्चम्या सह विकल्पः । दूरमान्तिके वा ग्रामस्य ग्रामाद्वा ।

## दूरान्तिकार्थेभ्यो द्वितीया च ३५।

चकारात्पञ्चमीतृतीये । प्रातिपदिकार्थे विधिरयम् । नत्वत्र विभक्त्यर्थः कश्चित् । ग्रामस्य दूरं दूराद् दूरेण वा । एवमन्तिकेऽपि । 'तद्युक्तात्पञ्चमीप्रतिषेधो नवा तत्रापि दर्शना'दिति वा-

तिकम् । यदपेक्षया दूरत्वं तत्र पञ्चमी न स्यात् । अथ वा तत्रापि दर्शनादवाच्यः प्रतिषेधः । 'दूरादावसथान्मूत्रं दूरात्पादावनेजनम् । दूराच्च भाव्यं दस्युभ्यो दूराच्च कुपिताद्गुरोः' । अत्र यदा दूरपदं धर्ममात्रपरं तदैव अमत्ववचनेनानुवृत्तिः । यदा तु धर्मिपरं तदा सामानाधिकरण्याद्विशेष्यसमानविभक्तिकत्वम् । दूरः पन्थाः 'अदवीयानयं पन्थाः स्वर्लोकमुपतिष्ठते' इति मुरारिः ।

# सप्तम्यधिकरणे च ॥ ३६ ॥

चकारो दूरान्तिकसमुच्चयार्थः । कटे आस्ते । दूरे ग्रामात् । पूर्वोक्तविभक्तित्रयेण सहैतद्वाक्यविहितसप्तम्याः समुच्चयात् दूरान्तिकार्थेभ्यश्चतस्रो विभक्तयः सिद्धाः । 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' । इन्नन्तस्येत्यर्थः । अधीती व्याकरणे । अधीतमनेनेतिकर्मक्तप्रत्ययान्तादधीतशब्दात् 'इष्टादिभ्यश्चे'ति कर्तरि इनिः । कर्मणि द्वितीया कृतपूर्वी कटमितिवत्प्राप्ता तदपवादोऽयम् । अधिकरणविवक्षायां सप्तमीसिद्धावपि कर्मविवक्षाया द्वितीयाया दुर्वारत्वात् । मासमधीती व्याकरणे । इत्यत्र मासे न सप्तमी । कालस्य बहिरङ्गकर्मत्वात् । नच क्तप्रत्ययेन कर्मणोऽभिधानात्कथं द्वितीयापत्तिः । तद्धितार्थेन सहैकार्थीभूतस्य क्तान्तस्य पृथग्व्याकरणेन सम्बन्धाभावात् । गुणभूतक्रिययापि कर्मणः सम्बन्धसम्भवात् । सहाधीतवान् व्याकरणमित्यादिवत् अग्रे विस्तरः । 'साध्वसाधुप्रयोगे च' साधुः कृष्णो मातरि । असाधुर्मातुले । क्रियाविरहादधिकरणे सप्तम्यप्राप्तौ वचनम् । केचित्तु वैषयिकाधिकरणत्वेन तत्सिद्धावपि षष्ठीनिषेधार्थमित्याहुः । 'साधुनिपुणाभ्याम-

र्चाया'मित्यनेन सिद्धेऽपि अनर्चार्थमत्र साधुग्रहणम् । तेन तत्त्वकथनेऽपि साधुयोगे सप्तमी । तत्रार्चापदं तु निपुणस्यैव विशेषणम् । साधुर्भृत्यो राज्ञ इति तु भृत्यापेक्षया षष्ठी नतु साध्वपेक्षयेति सम्प्रदायः । वार्तिकेन सूत्रवैयर्थ्याभावात्तत्सूत्रे साधुशब्दोपादानमित्यप्याहुः ।

'अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च' । ऋद्धेषु भुञ्जानेषु दरिद्रा आसते । ब्राह्मणेषु तरत्सु वृषला आसते । ऋद्धादीनां भोजनार्हत्वं । मूर्खेष्वासीनेषु ऋद्धा भुञ्जते । वृषलेष्वासीनेषु ब्राह्मणास्तरन्ति । मूर्खाणां भोजनाद्यनर्हत्वम् । कारकार्हाणामकारकत्वम्, अकारकत्वार्हाणाञ्च कारकत्वं विपर्यासः । ऋद्धेष्वासीनेषु मूर्खा भुञ्जते । ब्राह्मणेष्वासीनेषु वृषलास्तरन्ति । इदं च लक्ष्यलक्षणभावाविवक्षायां सप्तमीविध्यर्थम् । अन्यथोत्तरसूत्रेण सिद्धेरिति कैयटादयः ।

केचित्तु आसते इत्यनेन भोजनाभावो लक्ष्यते, ऋद्धदरिद्रादिपदैश्च क्रियार्हत्वानर्हत्वे व्यङ्ग्ये । औचित्यमनौचित्यञ्च व्यङ्ग्यो वाक्यार्थः । एतादृशलक्ष्यलक्षणभाव उत्तरसूत्रीयात्तस्माद्व्यावृत्त एवेति न वार्तिकवैयर्थ्यमित्याहुः ।

'निमित्तात्कर्मयोगे'

प्रवृत्तिहेतुज्ञानविषयत्वेन निमित्तपदं फलपरम् । हेतुतृतीयापवादः । कर्मणा योगो वास्तवः संयोगसमवायान्यतरः । नतु-शाब्दविषयत्वनियमः । क्रियाकर्मणा सह सम्बन्धशालिनः फलात्सप्तमीति वार्तिकार्थः ।

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥

पुष्कलकः शङ्कुः । सीम्नि सीमज्ञानार्थं निखात इति केचि-

त् । पुष्कलको गन्धमृगः । सीमा अण्डकोशः । तदर्थं हत इत्यन्ये । चर्मणीत्यत्र चर्मद्वीपिनोः समवायः । त्रयाणां संयोगः । दन्तकेशादीनां शरीरावयवत्वाभावात् । गन्धमृगार्थत्वेऽपि समवाय इति विशेषः । कर्मयोगे किम् । वेतनेन धान्यं लुनाति ।

अत्र नैयायिकाः । अत्र जनकत्वं जन्यत्वं वा सप्तम्यर्थः । चर्मपदं तदीययथेष्टविनियोगपरम् । चर्मयथेष्टविनियोगजनकद्वीपिहननानुकूलकृतिमान् । यद्वा निमित्तत्वम्—यथेष्टविनियोगविषयत्वेनेच्छाविषयत्वम् । तादृशेच्छाविषयत्वस्य सप्तम्यर्थस्य जन्यत्वसम्बन्धेन हननान्वयः, यत्किञ्चित्कर्मप्रकारकबोधजनकधातुयोगश्चात्र विवक्षितः, तज्जनकत्वं सकर्मकधातोः कर्मबोधकपदयोगेन चर्मणीत्यादौ, अकर्मकस्य तु कर्मविशिष्टस्वार्थशक्त्या, अविद्यारजनीक्षये यदुदेतीति दर्शनात् । उदयगिरिशिखरमारोहतीत्यर्थात् । रजनीक्षयस्य सूर्योदयाजन्यत्वेऽपि ज्ञानविषयत्वेनोद्देश्यतया निमित्तत्वम् । सीम्नि पुष्कलको हत इतिवत् । तेन लोकानां रजनीक्षयज्ञानार्थं यदुदेतीत्यर्थः ।

केचित्तु एतद् द्वीपवर्तियावद्रविरश्मिसंसर्गाभावविशिष्टः कालो रात्रिः । यावदिति संसर्गाभावविशेषणम् । तद्रश्म्युत्पत्तौ तत्प्रागभावनाशे विशिष्टकालनाशाद्रजनीक्षयप्रयोजकत्वं सूर्योदये सुलभमित्याहुः ।

# यस्य च भावेन भावलक्षणम् ३७

यस्य क्रियया क्रियान्तरं परिच्छिद्यते ततः सप्तमी स्यात् । निर्ज्ञातकालया क्रियया अनिर्ज्ञातकालायास्तस्याः परिच्छेदात् । गोषु दुह्यमानास्वागतः । दुह्यमानेति गोविशेषणम् । तथैवानुभवात् । कालिकसामानाधिकरण्यं सप्तम्यर्थः । तस्यागमनक्रिया-

यामन्वयः दुह्यमानत्वविशिष्टगवाधिकरणकालवृत्ति यदतीतमागमनं तदाश्रयः। दोहविशिष्टानां च गवां कालान्तरे विशेषणभावनिबन्धनादभावात् दोहसमानकालीनत्वमागमने पर्यवस्यतीत्यतो भावलक्षणत्वमव्याहतम्। दुग्धास्वागत इत्यत्रातीतदोहनकालीनत्वस्यागमने बाधात् दोहनध्वंसविशिष्टे लक्षणा। तथाच विद्यमानध्वसप्रतियोगिदोहनकर्मसु गोषु इत्यर्थः। दोहन विशेषणतापन्नं यत्प्रतियोगित्वं तद्विशेषणीभूतस्य ध्वसस्य समानकालीनत्वमागमने भाति। तथाच गोकर्मकदोहनप्रतियोगिकविद्यमानध्वंसाधिकरणकालवृत्ति यदागमनं इत्यादिः। धोक्ष्यमाणास्वित्यत्रापि विद्यमानध्वसप्रतियोगी यो दोहनप्रागभावः तदधिकरणेत्यादि योज्यम्। गुणकर्मान्यत्वे सति सत्त्वादित्यभियुक्तप्रयोगात्। यत्र परधर्मेण धर्मान्तरं स्वसामानाधिकरण्येन प्रतिपाद्यते तत्र सप्तमीति सूत्रार्थः। तेन विशेषणतासमवायोभयघटितदैशिकसामानाधिकरण्येन द्रव्यत्वादेः प्रतिपादनेऽप्यदोष इति तार्किकाः।

## षष्ठी चानादरे ॥ ३८ ॥

अनादराधिके भावलक्षणे षष्ठी सप्तमी च स्यात्। रुदति रुदतो वा प्राव्राजीत्। रुदन्तं पुत्रादिकमनादृत्य सन्यस्तवानित्यर्थः। अत्र प्रव्रजनहेतुभूताभावप्रतियोगिरागविषयत्वेन पुत्रादेः प्रव्रजनप्रतिकूलत्वात्तदनादरः। अन्यादृशस्थले तदप्रत्ययात्।

## स्वामीश्वराधिपतिदायाद-साक्षिप्रतिभूप्रसूतैश्च ॥ ३९ ॥

एतैः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः । पाक्षिकसप्तम्यर्थं वचनम् । षष्ठ्यास्त्वभ्यनुज्ञानमात्रम् । गवां गोषु वा स्वामी । दायं भागं आदत्ते दायादः । निपातनात्सोपसर्गादपि कः । गोपदार्थस्याभेदेन दायेऽन्वयः । गवात्मकस्याशस्यादातेत्यर्थः । गवां प्रसूतः । गा एवानुभवितुं जात इत्यर्थः ।

## आयुक्तकुशलाभ्यां चासेवायाम् ॥ ४० ॥

आसेवा तदेकपरत्वम् । तदर्थे आभ्यां षष्ठीसप्तम्यौ । हरिभजनस्य हरिभजने वा आयुक्तः कुशलो वा । आसेवेति किम् । आयुक्तो गौः शकटे । ईषद्युक्त इत्यर्थः ।

## यतश्च निर्द्धारणम् ॥ ४१ ॥

जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारण तद्यस्मात्ततः षष्ठीसप्तम्यौ । नृणां नृषु वा द्विजः श्रेष्ठः । गवां गोषु वा कृष्णा बहुक्षीरा । गच्छतां गच्छत्सु वा धावन् शीघ्रः । छात्राणा छात्रेषु वा मैत्रः पटुः । अत्र विभक्तेरन्योन्याभावोऽत्यन्ताभावः प्रतियोगी चार्थः । अन्योन्याभावे कृष्णाभिन्नगव्याः सामानाधिकरण्येन कृष्णत्वविशिष्टगोत्वावच्छिन्नप्रतियोगितासम्बन्धेनान्वयः । तस्यानुयोगितया गोपदार्थे, तस्य वृत्तित्वेनात्यन्ताभावे, तस्य प्रतियोगिनि, तस्याभेदेन निर्धारणनिमित्ते गुण बहुक्षीरत्वादौ, तस्य कृष्णाभिन्नाया गवि ततश्च कृष्णगवीभिन्नगोवृत्त्यत्यन्ताभावप्रतियोगिबहुक्षीरत्ववदभिन्ना कृष्णगवीत्यन्वयधीः । एवं च निर्धारणप्रतियोगिनि अत्यन्ताभावप्रतियोगित्वेन

बहुक्षीरत्वादेः प्रतीतौ निर्धारणनिमित्तत्वमपि सङ्गच्छते ।

यत्तु भेदोऽभेदश्च विभक्त्यर्थः कृष्णक्षीरपदार्थयोः प्रतियोगितया गोपदार्थस्याश्रयत्वेनान्वयः । अभेदे च गोपदार्थस्य प्रतियोगितया कृष्णपदार्थस्याधिकरणतयान्वयः । तथाच कृष्ण भिन्ना गौर्न सम्पन्नक्षीरतमा, गवाभिन्ना कृष्णा सम्पन्नक्षीरतमेति-धीरिति । तदसत् । एकवाक्यत्वानुभवविरोधात् । कृष्णगोपदार्थयोः विशेषणविशेष्यभाववैपरीत्येन वारद्वयमन्वयाच्च ।

यदपि विभक्त्यर्थः पूर्ववत् । कृष्णार्थस्य भेदे, तस्याश्रयतया गवि, तस्याः प्रतियोगित्वेन भेदे, तस्याश्रयतया सम्पन्नक्षीरतमायां, गोः प्रतियोगित्वेन भेदे, तस्याश्रयत्वेन कृष्णाया, तत्र सम्पन्नक्षीरतमाया अभेदेनान्वयः । तथाच गवाभिन्नकृष्णा कृष्णभिन्नगोभिन्नसम्पन्नक्षीरतमाभिन्नेति धीः । यद्वा सम्पन्नक्षीरतमा कृष्णभिन्नगोभिन्ना गवाभिन्नकृष्णा सम्पन्नक्षीरतमाऽभिन्नेति भिन्नविशेष्यको बोध इति ।

तदप्यसत् । अन्वयबाहुल्यात् । कृष्णा गौः सम्पन्नक्षीरतमाभिन्नेतिसंशयनिवृत्त्यनुपपत्तेश्च । कृष्णवत एव भेदे प्रतियोगित्वेनान्वये गौरवाच्च ।

केचित्तु अभेदो विभक्त्यर्थः । तत्र गोः प्रतियोगित्वेनान्वयः । गवाभेदस्य कृष्णाया सम्पन्नक्षीरतमाया चान्वयः । गवाभिन्नसपन्नक्षीरतमायाश्चाभेदेन सम्बन्धेन गवाभिन्नकृष्णायां ततश्च गवाभिन्नकृष्णा गवाभिन्नसम्पन्नक्षीरतमाभिन्नेति धीः । नच गवान्तरे सपन्नक्षीरतमत्वाभावप्रत्ययासिद्धिः । व्यापकत्वविशिष्टाभेदसंसर्गत्वादित्याहुः । तदपि चिन्त्यम् । गवाभेदस्य कृष्णायां संपन्नक्षीरतमाया चान्वये गौरवात् । कृष्णाभिन्नगोविशेष्यकसम्पन्नक्षीरतमत्वसंशयनिवृत्त्यनुपपत्तेश्च ।

## पञ्चमी विभक्ते ॥४२॥

निर्धारणप्रतियोगिन्यवच्छेदकधर्मो यत्र निर्धारणविषये नास्ति तत्र निर्धारणप्रतियोगिनः पञ्चमी स्यात् । माथुराः पाटलिपुत्रकेभ्य आढ्यतराः । पाटलिपुत्रकनिष्ठात्यन्ताभावप्रतियोगि यदाढ्यतरत्वं तद्वन्तो माथुराः । अभावः पञ्चम्यर्थः । तत्र प्रकृत्यर्थस्य वृत्तित्वेनात्यन्ताभावे, तस्य च प्रतियोगितया आढ्यतरत्वादौ निर्धारणनिमित्तेऽन्वयः ।

## साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ॥ ४३ ॥

प्रशंसातात्पर्ये आभ्यां योगे पञ्चमी स्यात् । नतु प्रतेः प्रयोगे । साधुर्मातरि निपुणो वा । अर्चाया किम् । साधुर्भृत्यो राज्ञः । स्वरूपकथने तात्पर्यम् । साधुशब्दयोगेऽनर्चायामपि सप्तमीति प्रागुक्तम् । 'अप्रत्यादिभिरिति वक्तव्यम्' । साधुर्निपुणो वा मातरं प्रति पर्यनु वा ।

## प्रसितोत्सुकाभ्यां तृतीया च ४४

चात्सप्तमी ।

तत्परे प्रसितासक्ताविष्टार्थोद्युक्त उत्सुकः । इत्यमरः ।

तेन प्रकर्षेण सितः शुक्लो वेत्यत्रैतदभावः । प्रसित उत्सुको वा हरिणा हरौ वा । विषयत्वं विभक्त्यर्थः । 'स्वप्राणेश्वरनर्महर्म्यकटकातिथ्यग्रहायोत्सुकं' इत्यत्र तुमर्थाच्चेति चतुर्थी । 'पर्यु-

त्सुको निजमहोत्सवदर्शनाये'ति रत्नावल्याम् ।

# नक्षत्रे च लुपि ॥ ४५ ॥

लुप्संज्ञाप्रयोज्यलोपप्रतियोगिनः प्रत्ययस्यार्थे वर्तमानान्नक्षत्राप्रकृतिशब्दात्कालिकाधिकरणे तृतीयासप्तम्यौ स्तः । 'मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्' । मूले श्रवणे इति वा । पुष्ये पायसमश्नीयात् मघाभिः पललौदनम् । 'नक्षत्रेण युक्तः काल' इत्यण् । 'लुबविशेष' इति तस्य लोपः । रात्र्यवच्छेदेन दिनावच्छेदेन वा मूलयोग इति विशेषस्यानवगम्यमानत्वात् । अधिकरणे किम् । पुष्ये शनिः । अद्य पुष्यः ।

इति श्रीसिद्धान्तसुधानिधौ द्वितीयाध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ।



मर्थात्प्रथमा । घट इत्यादावप्यस्त्यात्र्यध्याहारस्यावश्यकत्वात् । मात्रग्रहणेन सम्बोधने चेत्यस्यारम्भेण च विभक्तित्र्याद्याधिक्यस्य व्यवच्छेदाच्च । राहोः शिर इत्यादावपि औपाधिकभेदेन षष्ठीप्रवृत्त्या अभेदस्य षष्ठ्यर्थत्वाभावाच्चेति क्लेशः परास्तः । अव्ययेषु प्रथमाविभक्तेः सावकाशत्वात् ।

नच सङ्ख्याशास्त्रैकवाक्यतयास्य प्रवृत्तेस्तत्र कथं प्रवृत्तिरिति वाच्यम् । अर्थे प्रथमेत्युक्तेऽपि कस्यार्थे इत्याकाङ्क्षायां ङ्याप्प्रातिपदिकादित्यनेन प्रकृतिमर्पयमाणात् यस्माद्विहितास्तस्येति सम्भवात् प्रातिपदिकग्रहणस्याधिक्यात्संख्यारहितेऽप्यव्ययार्थे प्रथमेत्यर्थस्याकरसिद्धत्वात् । एतदुदाहरणतया उच्चैर्नीचैरित्यस्य लिखितत्वाच्च । षष्ठ्यैव पदत्वसिद्धावपि ग्राम उच्चैस्तव स्वं ग्राम उच्चैस्ते स्वं इत्यत्र सपूर्वायाः प्रथमाया विभाषेत्येतत्प्रवृत्त्यर्थं प्रथमाया अपेक्षितत्वात् । नच तत्राप्यभेदान्वयस्य ग्रामादौ सत्त्वात् निरवकाशत्वमविशिष्टमिति वाच्यम् । विजयते इत्यादौ द्योतकेषु उपसर्गेषु सावकाशत्वानपायात् ।

नच तत्र प्रथमोत्पत्तौ प्रयोजनाभावः । आते पितर्मरुतां सुम्नमेतु, प्रतित्वा दुहितर्दिव इत्यादौ पदोत्तरं विहितानां युष्मदस्मदादेशाना तिङ्ङतिङइति निघातस्य च तथात्वात् । 'निपातस्यानर्थकस्य प्रातिपदिकसंज्ञे'ति वार्तिकात् । द्योत्यार्थेनैवार्थवत्त्वाद्वा । जयत्यादेः प्रकृष्टजयपरत्वेऽपि प्रकर्षे प्रशब्दान्वयव्यतिरेकानुविधानसत्त्वात् ।

अपि च स्वः पश्येत्यादौ अव्ययोत्तरं प्रथमाया एव स्वीकारात् स्वरादेः कर्मत्वसंसर्गेण धात्वर्थान्वयः प्रथमायाः कर्मत्वे लक्षणा वेत्यवश्य वाच्यम् । तथाच तत्रापि प्रथमाविधेः सावकाशत्वं सुलभमेव । किञ्च चैत्रः पचतीत्यत्रैव तदवकाशः । नच तिङर्थे

कर्तर्यभेदेन सम्बन्धेन तदन्वयान्न तथेति वाच्यम् । नैयायिकैः कृतेरेव तत्रान्वयस्वीकारात् । एतदनुरोधेन प्रथमान्तमुख्यविशेष्यकबोधस्य सूत्रकाराभिमतत्वकल्पनस्यापि सम्भवाच्च । धान्येन धनीत्यादौ अभेदस्यापि विभक्त्यर्थत्वाच्च । षष्ठ्याः शेषार्थत्वेनाभेदस्य तदर्थताया दुर्वारत्वात् । कालादौ सर्वेषां स्वरूपसम्बन्धत्वेन षष्ठीवाच्यतावच्छेदकसम्बन्धत्वावच्छिन्नत्वस्य पदार्थमात्रे सत्त्वाद्विभक्तिवाच्याधिक्यव्यवच्छेदासम्भवाच्च । एतेन 'नवा वाक्यार्थत्वात्'इति वार्तिकं व्याख्यातम् ।

यत्तु प्रातिपदिकार्थेति वाक्ये लिङ्गविशिष्टपरिभाषायाः संबन्धोऽस्ति नवा नाद्यः यस्मात्स्वादिविधिस्तस्मादित्यर्थपर्यवसाने प्रातिपदिकग्रहणवैयर्थ्यात् । नान्त्यः मृडानी हिमानीत्यादौ प्रथमानापत्तेः । अर्थे प्रथमेतिन्यासे तु यस्मात्स्वादिविधिस्तस्येति लाभेन स्वादीनां च प्रातिपदिकाल्लिङ्गबोधकप्रत्ययाविशिष्टाच्च विहितत्वान्नियतोपस्थितिकत्वस्य तदर्थतया पुयोगमहत्त्वादेरपि तथात्वात्तत्सिद्धेः इति ।

तत्तुच्छम् । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापीति परिभाषायाः प्रातिपदिकोद्देशेन यत्कार्यं विधीयते तन्मात्रपरत्वात् । धर्मिग्राहकमानेन तथैव लब्धत्वाच्च । इह च न प्रातिपदिकोद्देशेन प्रथमाविधानं किन्तु प्रातिपदिकार्थे वाच्ये प्रथमेति । ङ्याप्प्रातिपदिकादित्यस्यैव प्रातिपदिकोद्देशेन स्वादिविधायकतया तत्र परिभाषाप्रवृत्तेः सर्वसंमतत्वाच्च । नचोक्तदोषः लिङ्गग्रहणेन तत्सिद्धेः । नच पुयोगादेरधिकार्थस्य प्रतीत्या न तथेति वाच्यम् । लिङ्गबोधकप्रत्ययार्थातिरिक्तार्थस्यैव व्यवच्छेद्यत्वात् । पुंयोगमहत्त्वादेश्च ङ्यादिबोध्यत्वात् । एतेन मृणाल्यादयो व्याख्याताः । स्त्रीस्यात्काचिन्मृणाल्यादि विवक्षापचये यदीत्यमरः ।

यत्तु अर्थे प्रथमेति न्यासेनोपपत्तिरिति तन्न। कस्येति विशेषाकाङ्क्षापेक्षया कर्मण्यर्थे इत्यस्याआकाङ्क्षायाः स्वरूपविषयकत्वेनान्तरङ्गत्वात्। कर्माद्यर्थे प्रथमेरस्यापि प्रसङ्गात्। कर्मादीनां संनिहितत्वात् पूर्वोपस्थितत्वात् अर्थत्वस्य कर्मत्वकरणत्वादिरूपशक्यतावच्छेदकानुगममात्रपरतया कर्मत्वादेरेव शाब्दे लाभोपपत्तेः। सर्वनाम्ना बुद्धिस्थत्वादिवत् शक्यतावच्छेदकैक्यस्यापि शक्यैक्यसंपादकत्वात्। ततश्च कस्येत्याकाङ्क्षाविरहेण ङ्याप्प्रातिपदिकानां प्रतियोगित्वेन लाभानुपपत्तौ सर्वविप्लवप्रसङ्गात्। अनभिहिते कर्मादौ द्वितीयादि, प्रथमा त्वभिहितानाभहितसाधारण्येनेति अनभिहितस्थले द्वितीयादिभिः सह वैकल्पिकत्वेन प्रथमायाः समावेशसम्भवात्।

एतेन सम्बोधनेचेति ज्ञापकेन मात्रग्रहणस्य प्रत्याख्यानमपि निरस्तम्। उक्तविधया तस्या अपूर्वविधित्वेनैवोपपत्तिप्रसङ्गात्। प्रातिपदिकपदोपादाने तु अन्तरङ्गतया सम्बन्धिन्येव साकाङ्क्षतया तदन्वयेनैवाकाङ्क्षाशान्तौ कर्मादीनां नान्वय इति वैषम्यम्। एवंच त्वदुक्तौ सूत्रस्यैव वैयर्थ्यापत्तिः। स्वौजसमौट्इत्यादिनैव प्रथमाया विधानात्। कर्मणि द्वितीयैवेत्याद्यर्थनियमपक्षे प्रातिपदिकार्थमात्रे द्वितीयादीना, कर्मण्येव द्वितीयेत्यादिप्रत्ययनियमपक्षे कर्मादौ प्रथमायाश्च व्यावृत्त्यर्थं नियमद्वयसम्पादकत्वेन सूत्रमार्थक्यमिष्टम्। तच्च कर्मादावेव प्रथामाया विधानप्रसङ्गेन दूरापास्तं स्यात्।

ननु प्रत्ययनियमपक्षे कर्मादौ प्रथमायाः स्वयमेव प्राप्तत्वात्। सूत्रवैयर्थ्यभीत्या कर्मादौ प्रथमाविधाने सूत्रतात्पर्यं न कल्पयिष्यते किन्तु ङ्याप्प्रातिपदिकार्थे इत्यत्रैवेति चेन्न। शास्त्रतात्पर्यानुसारेणैव नियमस्य कल्प्यत्वात्। प्रातिपदिकार्थमात्रे प्र-

थमाविधानस्यैवानुपपत्तौ यथोक्तनियमस्यैव शशविषाणायमानत्वात् । द्वितीयादीनां परस्परातिरिक्तार्थे परस्परव्यवच्छेदपरतयैव कर्मणि द्वितीयेत्यादिशास्त्राणां तात्पर्यप्रसङ्गात् । द्वितीया कर्मण्येव तृतीया कर्तृकरणयोरेवेत्यादिभिरेव नियमस्वरूपापत्तेः । तृतीयादिव्यवच्छेदश्च तत्फलमित्यस्य सम्भवात् । प्रथमायाः कर्मादावेव विहितत्वे तद्व्यवच्छेदस्याशक्यत्वात् । ततश्च प्रातिपदिकार्थमात्रे प्रथमाविधानसिद्धौ प्रत्ययनियमस्य प्रथमाव्यवच्छेदार्थत्वं, तत्सिद्धौ च प्रथमायाः प्रातिपदिकार्थमात्रे विधानं इति दोषो दुर्वारः । अन्यथाऽर्थे प्रथमेति न्यासे प्रातिपदिकस्यार्थोपरि प्रतियोगित्वेनान्वयलाभानुपपत्तेरुक्तत्वादिति तिष्ठतु तावत् ।

एवं परिमाणग्रहणमप्यावश्यकम् । प्रकृत्यर्थस्याभेदेन प्रथमार्थे परिमाणे तस्य च परिच्छिन्नत्वसम्बन्धेन व्रीहावन्वये यादृशो बोधस्तस्यासिद्धेः । नचोक्तबोधोऽसिद्ध एव । लिङ्गादिसाहचर्येण न्यायप्राप्तार्थानुवादकत्वस्यैव परिमाणांशे स्वीकारेण परिमाणस्य वाच्यत्वकल्पनादिति वाच्यम् । अनन्तस्थले द्रोणादिशब्दानां तत्परिमितलक्षणमपेक्ष्य प्रथमाया वाच्यत्वस्यैव कल्पयितुमुचितत्वात् । नच द्रोणं व्रीहिमानयेत्यादौ लक्षणावश्यकत्वात्प्रथमास्थलेऽपि तथेति वाच्यम् । तथापि लक्षणाया निरूढत्वसम्पादनाय परिमाणग्रहणस्यावश्यकत्वात् । 'गुणवचनेभ्यो मतुपो लुगिष्ट' इत्यादिवत् ।

वचनग्रहणं तूक्तेष्वप्येकत्वादिषु यथा स्यात् । एकः द्वौ बहवः । अन्यथानभिहिताधिकाराद्बहुषु बहुवचनमित्यादिनास्य प्रकरणस्यैकवाक्यत्वात्परिगणनस्य च प्रत्याख्यातत्वात्प्रकृत्यैव एकत्वादीनामभिहितत्वात् । अनभिहिताधिकारप्रत्याख्यानेऽपि उक्तार्थत्वादेव प्रथमा न स्यात् ।

यत्तु न केवला प्रकृतिः प्रयोक्तव्या न केवलः प्रत्ययः इति वचनादेव एकादिभ्यः प्रथमा भविष्यति । अन्यथा एक पश्य, एकेन कृतमित्यादौ गत्यन्तराभावादिति तन्न । तत्र कर्मत्वादीनामनुक्तत्वेन द्वितीयादेः सम्भवात् । नच प्रातिपदिकार्थस्यानुक्तत्वात्प्रथमेति तुल्यम् । तस्य प्रातिपदिकेनैवोक्तत्वात् । नचैवं प्रथमाविधायकस्यैव निर्विषयत्वानुपपत्तिः । तत्र वचनबलात्प्रथमाप्रवृत्तावपि एक इत्यादौ वचनव्यत्ययस्य दुर्वारत्वात् ।

यत्तु एकत्वे एकवचनमित्याद्यर्थनियमैर्द्विवचनादीनां व्यावर्तनेऽपि एकत्वादावेकवचनादीनां विधानाभावादुक्तार्थानामप्रयोग इति न्यायाप्रवृत्तिः । एकत्वे एकवचनमिति प्रत्ययनियमपक्षेऽपि सजातीयापेक्षतया संख्यान्तरे एकवचनादीनां व्यावर्तनेऽपि संख्यारहिते एकवचनादीनामव्यावर्तनात् । एक इत्यादौ एकत्वादिप्रत्ययः सुपैव नतु प्रकृत्येत्यत्र नियामकाभावात् । उपस्थितानामर्थानामत्यन्तत्यागे मानाभावाच्च । संख्यान्तरसम्भवे एव नियमप्रवृत्तेः । एकशब्दादौ च द्विवचनादीनां यथायथमसम्भवादित्यादि ।

तदपि चिन्त्यम् । शास्त्रतात्पर्याविषयत्वेऽर्थानां त्यागेऽपि क्षतिविरहात् । उपस्थितिमात्रस्याप्रयोजकत्वात् ।

एतेनानन्वितार्थकप्रयोगापेक्षयानुवादमात्रप्रयोगस्य न्याय्यत्वादिति निरस्तम् । प्रथमोपस्थितत्वे द्वौ बहव इत्यत्रैकवचनापत्तेर्दुर्वारत्वात् च ।

यदपि सम्बोधनेचेति ज्ञापकेन कर्माद्याधिक्ये प्रथमाया अप्रवृत्तेर्मात्रग्रहणं व्यर्थमिति ।

तत्राप्याहुः—तदभावे शेषे षष्ठ्यापत्तौ तद्बाधनार्थं सूत्रस्यावश्यकत्वात्कथं नियमार्थत्वमिति । यत्त्वेवं कर्मणि द्वितीयेत्यादी

नामपि नियमत्वं न स्यात् । अतः सोत्सर्गं सापवादं च प्रकरणं तदेव लक्ष्यसंस्कारकं एवञ्च कर्मणि द्वितीयेत्यस्याभावे शेषे-षष्ठीत्यस्याप्यभावाद्द्वितीयाया अपि प्राप्तत्वेन नियमत्वं युक्तमेवेति ।

तत्रेदं वक्तव्यम्—वार्त्तिककारस्त्वाह अभिहिते प्रथमेति । तिङादिभिरभिहिते कर्त्रादौ प्रथमा भवतीत्यर्थः । वृक्ष इत्यादौ अस्तिक्रियाध्याहारात् उदाहरणानि । एवञ्च वीरः पुरुष इत्यादौ विशेषणविशेष्यभावस्याधिक्येऽपि अभिहितत्वात्प्रथमा सिध्यतीति भावः ।

एतच्च निरस्तम् । अभिहितानभिहिते हि प्रथमाभाव इति । अस्यार्थः । प्रासादे आस्ते इत्यत्र क्रियाद्वयनिरूपितमधिकरणं प्रासादाख्यं, तच्च सदिप्रकृतिकेन घञाभिहितं आसेर्लटानभि-हितं तत्रैकस्याः शक्तेरभिहितत्वात्तान्निबन्धना प्रथमा परत्वा-त्सप्तमीं बाधित्वा स्यात् । अथ तिङ्समानाधिकरणे प्रथमेति वक्तव्यम् । उक्तस्थले तु वैयधिकरण्यात्प्रथमाया अभावः । ति-ङ्सामानाधिकरण्यं हि तत्प्रतिपाद्यप्रतिपादकत्वम् । तच्च चै-त्रः पचतीत्यादावस्ति । कर्तृत्वरूपेणाख्यातेन प्रातिस्विकरूपे-ण च प्रातिपदिकेन चैत्रस्य प्रतिपादनात् । प्रासादे आस्ते इत्य-त्र त्वाख्यातोक्तकर्तृविशेषप्रतिपादकत्वविरहात् । प्रासादशब्दे न प्रथमेति चेत् ।

नैवम् । लटि तिङामप्रसिद्धिप्रसङ्गात् । तथाहि—देवदत्त पच् लट् इति स्थिते तिङुत्पत्तेः पूर्वं तिङ्समानाधिकरणत्वाभा-वेन प्रथमैवेति नियमस्याभावात् । देवदत्तशब्दादविशेषविहिताः सर्वे स्वादयः सम्भवन्त्येवेत्यप्रथमासामानाधिकरण्यसत्त्वाच्छतृशा-नचावेव स्याताम् । नचेष्टापत्तिः । देवदत्तः पचतीति वाक्यवि-लोपापत्तेः । नच कर्मण्येव द्वितीयेत्यादिविभक्तिनियमाश्रयणा-

त्र द्वितीयादिकमपीति वाच्यम् । कर्मणि द्वितीयैवेत्यर्थनियमपक्षे तदापत्तेः । शेषत्वेन षष्ठ्याः सम्भवाच्च ।

नच तिङ्विधिसामर्थ्यात्तिबादयो भविष्यन्तीति वाच्यम् । लङादौ तिङ्विधेः सावकाशत्वात् । अत एव प्रथमाविधेरपि न सामर्थ्यम् । लड्भिन्नलकारस्थले एव सावकाशत्वात् ।

नचाप्रथमासमानाधिकरणे इत्यस्य प्रसज्यप्रतिषेधत्वमाश्रित्य प्रथमासामानाधिकरण्ये शतृशानचोर्निषिद्धत्वादत्र च तस्यापि सत्त्वान्न शतृशानचोरापत्तिरिति वाच्यम् । असमर्थसमासस्य वाक्यभेदस्य चाश्रयणे गौरवात् ।

भाष्ये तु पर्युदासपक्षेऽपि विभक्तिनियमे दोषो नेत्युक्तम् । तच्चिन्त्यमिति दीक्षिताः । द्वितीया कर्मण्येवेत्यादिविभक्तिनियमे द्वितीयादेरनुत्पत्तावपि षष्ठ्या दुर्वारत्वात् । षष्ठी शेषे एवेति नियतत्वात् । विभक्त्यन्तरनियमो यत्र न प्रवृत्तः तस्यैव शेषत्वात् । तथाच प्रथमाभिन्नविभक्तिसामानाधिकरण्यसत्त्वाद् दुर्वारौ शतृशानचाविति ।

# सम्बोधने च ॥ ४७ ॥

प्रथमा स्यात् । चैत्र मैत्र आगच्छति । सबोधन च अयमेतद्वाक्यार्थबोधवान्भवत्वितीच्छा । तत्र विवक्षितवित्रेकेनेच्छा प्रथमार्थः । विशेष्यतासम्बन्धेन प्रकृत्यर्थस्येच्छायां तस्याश्च स्वनिष्ठविशेष्यतानिरूपितविषयितासम्बन्धावच्छिन्नप्रकारताशालिबोधनिष्ठविशेष्यतानिरूपितविषयितासम्बन्धेन क्रियायामन्वयः । मैत्रकर्तृकगमनक्रियाबोधोऽस्य जायतामित्याकारकेच्छाया तथैव सत्त्वात् । चैत्रविषयिका या इच्छा तस्यां विषयित्वेन विशेषणीभूतो यो बोधः तस्मिन् विषयितासम्बन्धेन प्रकारतापन्ना मैत्र-

कर्तृकागमनक्रियेत्यन्वयधीः ।

एतेनाचेतनेऽपि सम्बोधनं व्याख्यातम् । उक्तेच्छायास्तत्रापि सम्भवात् । तेनैकवाक्यतया अजानि देवदत्तेत्यादौ निघातः । तदुक्तं हरिणा—

सम्बोधनपदं यच्च तत्क्रियायां विशेषणम् ।
अजानि देवदत्तेति निघातोऽत्र तथा सतीति ॥

# सामन्त्रितम् ॥ ४८ ॥

उक्तप्रथमान्तमामन्त्रितसंज्ञं स्यात् । महासंज्ञाकरणसामर्थ्यात्तदन्तग्रहणम् । संज्ञाप्रदेशा 'आमन्त्रितं पूर्वमविद्यमानव'दित्यादयः । सेति किम् हे पचन् हे पचमानेत्यादौ शत्रादेः सम्बोधन एव विहितत्वात्प्रातिपदिकार्थ एव तदन्तर्भावात्पूर्वसूत्रेणैव प्रथमायामपि उक्तसंज्ञा यथा स्यात् । यदा तु उक्तशत्रादेरपि कर्तृबोधकत्वमेव लोट इव द्विर्वचनरहितस्य तदा 'सम्बोधने चे'त्येव प्रथमा । अनन्तरस्य विधिर्वेति तस्या एव संज्ञाप्रवृत्तावपि रूपसिद्धेः सेति न कर्तव्यम् ।

# एकवचनं सम्बुद्धिः ॥ ४९ ॥

आमन्त्रितप्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात् । संज्ञाप्रदेशा 'एङ्ह्रस्वात्संबुद्धे'रित्यादयः । सुः सम्बुद्धिरिति वक्तव्ये एकवचनग्रहणं प्रत्ययमात्रस्य संज्ञा यथा स्यात् । प्रकृत्याद्यन्तस्य माभूत् ।

# षष्ठी शेषे ॥ ५० ॥

शेषशब्दोऽन्यार्थः, तत्र पूर्वोक्तानां कर्मादीनां प्रतियोगित्वे-

नान्वये कर्मादिकारकेभ्योऽन्येऽर्थाः शेष इत्युच्यन्ते । यद्यपि वास्तवः क्रियाकारकभावः सर्वत्रास्ति राज्ञः पुरुष इत्यत्र राजा पुरुषाय ददातीति प्रत्ययात् कर्तृसम्प्रदानभावः । वृक्षस्य शाखेति लोकप्रसिद्ध्या वृक्षस्य, वैशेषिकरीत्या तु शाखाया अधिकरणत्वं, क्रयापहारयाञ्चाविनिमयानां स्वत्वोपायानां क्रियात्मकत्वाच्च । अपहारस्य स्वत्वहेतुताया: शास्त्रानभिहितत्वेऽपि यथेष्टविनियोगात्मकताद्युपायत्वात् । तथापि स्वस्वामिभावादिमात्रसबन्धविवक्षायां क्रियाकारकसम्बन्धस्य वस्तुसतोऽप्यविवक्षैव शेषः । तदुक्तम् —

सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः ।
श्रुतायामश्रुतायां वा क्रियाया सोऽभिधीयते इति ।

अश्रुतायां राज्ञः पुरुष इत्यादौ । श्रुतायां मातुः स्मरतीत्यादौ । मातुः सम्बन्धि स्मरणमित्यर्थः । इह प्रत्ययनियमपक्षे शेष एव षष्ठीत्यवधारणार्थं शेषग्रहणम् ।

अर्थनियमपक्षे तु षष्ठीत्येव वाच्यम् । षष्ठ्यास्तदन्यस्याश्च प्राप्तौ षष्ठ्येवेति । ननु प्रतिसम्बन्धिनि षष्ठीनिवृत्त्यर्थं शेषग्रहणमस्तु । सम्बन्धस्य द्विष्ठतया तस्मादपि तत्प्रसक्तेः । नच प्रातिपदिकार्थमात्रेऽन्तरङ्गत्वात्प्रथमेति वाच्यम् । सम्बन्धस्याधिकस्य प्रत्ययादितिचेन्न । तस्य वाक्यार्थतया पश्चात्प्रतीतिरित्यस्य प्रागेवोक्तत्वात् । पुरुषइत्युक्ते प्रातिपदिकार्थमात्रप्रतीतेः । राज्ञ इत्येतावन्मात्रोक्तावपि प्रतियोगिविशेषानवच्छिन्नस्य(१) स्वामित्वस्य प्रतीतेश्चेत्यन्वयव्यतिरेकाभ्यां राजपुरुषयोर्गुणप्रधानभावव्यवस्थया षष्ठीनियमोपपत्तेः तदुक्तम्—

(१) प्रतियोगिविशेषानवच्छिन्नस्य सबन्धिविशेषानवच्छिन्नस्येत्यर्थः

द्विष्ठोऽप्यसौ परार्थत्वाद्गुणेषु व्यतिरिच्यते ।
तत्राभिधीयमानस्तु प्रधानेषु प्रयुज्यते ॥

सम्बन्धस्योभयनिष्ठस्य गुणोत्तरषष्ठ्यैव प्रत्यायितत्वान्न-प्रतिसम्बन्धिनि प्रधाने षष्ठीत्यर्थः ।

तथाहि—क्रियापेक्षाः कारकशक्तयः प्रातिपदिकार्थेषु कल्प्यन्ते यदा प्रातिपदिकार्थस्य क्रियाविशेषविवक्षायां शक्तिलक्षणार्थातिरेको भवति तदा शक्तयः प्रातिपदिकार्थेर्न प्रतिपद्यन्ते । दात्रेण लुनातीत्येव तदा प्रयोगो नतु दात्रं करणमिति । क्रियायोगविवक्षायां करणादिशब्दैः शक्तयो न प्रतिपाद्यन्ते अपितु विभक्तिभिरेव । निष्कृष्टशक्त्यभिधानस्य तदेकसाध्यत्वात् । विवेचितं चैतत्प्राक् ।

यदा तु योग्यतामात्रविवक्षा तदा दात्रं करणमिति । तदा च विभक्त्युत्पत्तौ संज्ञानामानिमित्तत्वम् । तदुक्तम् ।

स्वशब्दैरभिधाने तु स धर्मो नाभिधीयते ।
विभक्त्यादिभिरेवासावुपकारः प्रतीयते

इति । विभक्तिपदं सुप्तिङुभयपरम् । आदिपदं कारकार्थककृत्तद्धितपरम् । तथास्वविशेषसम्बन्धविवक्षायां राज्ञः पुरुष इति । स्वामित्वमात्राभिप्राये तु राजा स्वामीत्यभिप्रायः । यदा तु पुरुषनिष्ठस्वत्वनिरूपित राज्ञः स्वामित्वं विवक्ष्यते तदा पुरुषस्य राजेति । राज्ञः पुरुषस्य धनं इत्यत्र तु पुरुषधनयोर्यः सम्बन्धस्तस्य राजपदोत्तरषष्ठ्यानभिहितत्वात्तत्प्रतिपादनार्थं षष्ठीति बोध्यम् ।

## ज्ञोऽविदर्थस्य करणे ॥५१॥

ज्ञानभिन्नार्थकत्वेन विवक्षितस्य जानातेः करणे शेषत्वेन

विवक्षिते षष्ठी । सर्पिषो ज्ञानम् । वस्तुतः करणीभूतं यत्सर्पिस्त-त्सम्बन्धिनी प्रवृत्तिः । ज्ञानपदं तत्पूर्वकत्वसम्बन्धेन प्रवृत्तिपरम् । एतत्प्रकरणं समासनिवृत्त्यर्थमिति पूर्वं व्याख्यातम् । यत्तु तिङन्तो-दाहरणं ग्रन्थेषु तदुपलक्षणं कृदन्ततत्तद्धातूनामिति प्रामाणिकाः ।

## अधीगर्थदयेशां कर्मणि ॥५२॥

शेषत्वेन विवक्षिते षष्ठी । इक्स्मरणे । ककार इहैव विशेष-णार्थः । सोपसर्गग्रहणं तु एकदेशानुमतिद्वारा 'इङिकावध्युपसर्ग-तो न व्यभिचरत' इति सूचनार्थम् । अतएव स्मृत्यर्थेति नोक्तम् । तथापि इण्वदिकइत्यत्र कटी इत्यत्रप्रश्लिष्टस्यायतेर्वारणाय किं त्वग्रौव्याच्च । मातुरध्ययत पितुः स्मरणमित्यादि ।

## कृञः प्रतियत्ने ॥५३॥

प्रतियत्नो गुणाधानम् । एधो दकस्योपस्करणम् । (जातिर-प्राणिनामित्येकवद्भावः) ।

## रुजार्थानां भाववचनानाम-ज्वरेः ॥ ५४ ॥

अज्वरिसंताप्योरितिवक्तव्यम् । भेदप्रतियोगिकोटौ संतापि-रपि निवेश्य इत्यर्थः । उभयभिन्नानां भावकर्तृकाणां रुजार्थानां कर्मणि शेषे षष्ठी । चौरस्य रोगस्य रुजा । वचनेत्यत्र धातोर्ल्युटः साधुत्वमात्रार्थमुपादानात्तदर्थस्याविवक्षितत्वात्प्रत्ययार्थस्य कर्तुरेव विवक्षितत्वाद्भावकर्तृकोऽर्थः संपन्नः ।

केचित्तु भावे वचनं येषा ते भाववचनाः सन्ति भावे कर्तरि

येषां वचनमुच्चारणं भावकर्तृकधात्वर्थप्रतिपादनाय येषामभिधान-मिति यावदित्याहुः ।

अज्वरीत्यादि किम् । रोगस्य चोरज्वरः चोरसंतापो वा इत्यत्र कर्मषष्ठ्येव यथा स्यात् । तेन समाससिद्धिः स्वरे च विशेष इति प्रागुक्तम् ।

# आशिषि नाथः ॥ ५५ ॥

सर्पिषो नाथनम् । तत्संबन्धिनी इच्छेत्यर्थः । आशिषि किम् । माणवकस्य नाथनम् । याच्ञात्र नाथत्यर्थः । अत्र समासोऽपि ।

# जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ॥ ५६ ॥

चौरस्योज्जासनम् । जसुहिंसायाम् । निप्रौ संहतौ विपर्यस्तौ व्यस्तौ च । चोरस्य निप्रहणनम् । प्रणिहननम् । निहननं प्रहणनं वा । नट स्पन्दने चुरादिः । नटनृत्तावित्यस्य घटादेर्न ग्रहणम् । दीर्घनिर्देशात् । चौरस्योन्नाटनम् । क्रथ हिंसायामिति घटादिः । तस्य मित्त्वेऽप्यत्र निपातनाद्वृद्धिरिति वृत्तिः । अतएव युजादौ क्रथेः पाठः प्रामादिक इति संप्रदायः । नच घटादिपाठवैयर्थ्यम् । अक्राथि अक्राथि, क्रथं क्रथं, क्राथंक्राथमित्यत्र 'चिण्णमुलोर्दीर्घोऽन्यतरस्या'मिति विकल्पेन चरितार्थत्वात् ।

यत्तु न्यासकृतोक्तम् । दीर्घनिर्देशान्मित्वेऽपि वृद्धिः षष्ठ्यपि तत्रैव । चङन्तेषु तु वृध्यभावाद्द्वितीयैव । चोरमचक्रथदिति ।

तत्राहुः—तिङन्तानामेतत्प्रकरणे उदाहरणत्वं नच क्राथेरेव षष्ठी नतु ह्रस्वस्येति व्याख्यानात्प्रकरणं भित्त्वा तिङन्तोदाहरणत्वमस्त्विति वाच्यम्। मानाभावात्। तथापि द्वितीयाया दुर्वारत्वाच्चेति।

एतेनातिदेशिकषित्त्वेन षिद्भिदादिभ्य इत्यङर्थो घटादिपाठ इति हरदत्तोक्तमपि परास्तम्। घटादयः षित इत्यस्य घटादिगणान्तराले पाठात् षित्वातिदेशवचनोत्तरं पठ्यमानस्य क्रथेःषित्त्वायोगादिति। वृषलस्य पेषणम्। हिंसायां किम्। धानापेषणम्। अचेतनानां मुख्यहिंसाविरहः।

# व्यवहृपणोः समर्थयोः ॥५७॥

द्यूते क्रयविक्रयव्यवहारे चानयोस्तुल्यार्थत्वम्। शतस्य व्यवहरणं पणनं वा। शतसम्बन्धि क्रयविक्रयरूपेण विनियोगो देवनं वेत्यर्थः। एकार्थयोः किम्। शलाकाव्यवहारः गणनेत्यर्थः ब्राह्मणपणनं स्तुतिरित्यर्थः।

# दिवस्तदर्थस्य ॥ ५८ ॥

इह शेष इत्यस्य नान्वयः। उत्तरसूत्रद्वयारम्भात्। अन्यथा तत्र कर्मणि द्वितीयाविधानानुपयोगात्। अतएव पूर्वसूत्रे दिविर्न निर्दिष्टः। तत्र शेषसम्बन्धात्। पणादिसमानार्थकस्य दिवः कर्मणि षष्ठी। अत्र तिङन्तमप्युदाहरणम्। कर्मणि षष्ठ्या अप्राप्ताया एव विधानात्समासनिवृत्तौ तात्पर्याभावात्। शतस्य दीव्यति। तदर्थस्य किम्। ब्राह्मणं दीव्यति स्तौतीत्यर्थः।

# विभाषोपसर्गे ॥५९ ॥

शतस्य शतं वा प्रदीव्यति।

## द्वितीया ब्राह्मणे ॥ ६० ॥

मन्त्रभिन्नो वेदो ब्राह्मणम्। 'शेषे ब्राह्मण शब्द' इति जैमिनिसूत्रात्। तद्विषये प्रयोगे पूर्वोक्तार्थस्य दिवः कर्मणि द्वितीया। षष्ठ्यपवादः। नच गां घ्नन्ति, गां प्रदीव्यन्ति इत्यत्र व्यवस्थितविभाषया पूर्वेणैव सिद्धमिति वाच्यम्। गामस्य तदहः सभायां दीव्येयुः इत्यनुपसर्गार्थ एतदारम्भात्।

## प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने ॥ ६१ ॥

इष गताविति दैवादिकस्य लोटि मध्यमैकवचने प्रेष्येति। साहचर्याद् ब्रुविरपि लोण्मध्यमैकवचनान्त एवात्र गृह्यते। देवतासंप्रदानं यस्यार्थस्य तद्व्रूस्योः देवतोद्देश्यकत्यागार्थयोरिति यावत्। प्रेष्यब्रूहीति शब्दयोः कर्मणो हविर्विशेषवाचकाच्छब्दात्षष्ठी। अग्नये छागस्य हविषो वपाया मेदसः प्रेष्य अनुब्रूहि वा। प्रेष्येत्यादि किम्। अग्नये छागं वपां जुहुधि। हविषः किम्। अग्नये गोमयानि प्रेष्य। देवतेति किम्। माणवकाय पुरोडाशान्प्रेष्य। हविषोऽप्रस्थितस्येति वक्तव्यम्। प्रस्थितत्वेन हविर्विशेषणे षष्ठी न भवतीत्यर्थः। इन्द्राग्निभ्यां छागं हविर्वपां मेदः प्रस्थितं प्रेष्येति। इह शेषस्य नान्वयः। तिङन्तयोरेवानुकरणेन समासानापत्तेः उत्तरत्र च्छन्दोग्रहणाद्भाषायामपीदम्।

## चतुर्थ्यर्थे बहुलं छन्दसि ॥ ६२ ॥

षष्ठी स्यात्। पुरुषमृगश्चन्द्रमसे गोधाकालकादार्वाघास्तटे

वनस्पतीनाम्। षष्ठ्यर्थे चतुर्थीत्यपि वक्तव्यम्। या खर्वेण पिबति तस्यै खर्वः। यद्वा चतुर्थीत्येको योगः। प्रकरणात् षष्ठ्यर्थे इत्यस्य लाभः। अर्थे इत्यपरः। चतुर्थ्यर्थे षष्ठीति तदर्थः। व्यत्ययवचनाद्वा सिद्धम्।

## यजेश्च करणे ॥ ६३ ॥

छन्दसि करणे बहुलं षष्ठी, घृतस्य घृतेन वा यजते।

## कृत्वोर्थप्रयोगे कालेऽधिकरणे ६४

अत्र प्राञ्चः। शेषग्रहणमनुवर्तते उत्तरसूत्रे कर्मग्रहणात्। अन्यथा कर्तरि चेत्यवक्ष्यत्। शेषसंबद्धं कर्मग्रहणं मानुवृत्तदित्यर्थमेव कर्मणस्तत्र पृथगुपादानादिति।

अन्ये तु सन्निहिततरस्य प्रकृतसूत्रस्थाधिकरणस्यैव निवृत्त्यर्थं कर्मग्रहणसम्भवाद्व्याख्यानमेव शेषानुवृत्तौ मानमित्याहुः। पञ्चकृत्वोऽह्नो भोजनम्। द्विरह्नो भोजनम्। शेषे किम्। द्विरहन्यधीते इति सप्तम्याः षष्ठ्या बाधो माभूत्।

## कर्तृकर्मणोः कृति ॥६५॥

शेष इति निवृत्तम्। कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात्। भवतः शायिका। अपां स्रष्टा। कर्तृकर्मणोः किम्। शास्त्रेण भेत्ता।

ननु कृतीति व्यर्थम्। धातोर्हि द्वये प्रत्यया विधीयन्ते तिङः कृतश्च। तत्र तिङ्प्रयोगे न लोकेति षष्ठीप्रतिषेधात्कृद्योग एव षष्ठीपर्यवसानं सुलभं नचाव्ययप्रयोगे वक्ष्यमाणः षष्ठीनिषेधः कृतोऽव्ययस्य ये कर्तृकर्मणी तत्रैव प्रवर्ततां ननु उच्चैः कटानां

स्रष्टेत्यत्राकृतोऽव्ययस्य ये कर्तृकर्मणी तत्र माभूदित्युत्तरार्थं तदिति वाच्यम् । उच्चैःस्थानस्थितानां कटानां स्रष्टेत्यर्थात् कृदन्तस्यैव ते कर्तृकर्मणी नत्वक्रियावाचिन उच्चैः शब्दस्येति । सामर्थ्यादेव तत्र कृद्ग्रहणलाभात् । नचोभयप्राप्ताविति वक्ष्यमाणे कृतीति शब्दोपात्ते विशेष्ये उभयप्राप्तावित्यस्य बहुव्रीहित्वसिद्धेः । अन्यथान्तरङ्गत्वात्तत्पुरुषः स्यात् । ततश्च द्वयोः कृतोर्ये कर्तृकर्मणी तत्र निषेधो माभूत् । आश्चर्यमिदं वृत्तम् ओदनस्य च नाम पाको ब्राह्मणानां च प्रादुर्भाव इति वाच्यम् । तथाप्यत्र तद्ग्रहणे प्रयोजनाभावात् । तत्रापि व्याख्यानेन बहुव्रीहिनिर्णयसम्भवाच्चेति चेत् ।

अत्रभाष्यकृतः । तद्धितस्य ये कर्तृकर्मणी तत्र माभूदिति कृद्ग्रहणम् । कृतपूर्वी कटम् । भुक्तपूर्वी ओदनमिति । कृतं पूर्वमनेनेति सुप्सुपेति समासः । सपूर्वाच्चेति इनिः । कर्तात्र तद्धितेनोक्त इति ततः षष्ठ्या अप्रसक्तावपि कटात् कर्मण षष्ठी माभूत् ।

स्यादेतत् । कृतः कटः पूर्वमनेनेत्यस्मिन् विग्रहे क्तप्रत्ययेन कर्मणोऽभिहितत्वाद्द्वितीयया न भाव्यम् । सुतरां तदपवादेन षष्ठ्या इहाप्यनभिहिताधिकारात् । एवं कृतशब्दस्य कटेन सापेक्षत्वात्समासतद्धितावनुपपन्नाविति चेन्न । अत्राहुः—

विशेषकर्मसंबन्धनिर्मुक्तेऽपि कटादिभिः ।
विशेषनिरपेक्षोऽन्यः कृतशब्दः प्रवर्तते ॥
अकर्मकत्वे सत्येवं क्तान्ते भावाभिधायिनि ।
ततः क्रियावता कर्त्रा योगो भवति कर्मणाम् ॥
अविग्रहा गत्यादिस्था यथा ग्रामादिकर्मभिः ।
क्रिया संबध्यते तद्वत्कृतपूर्व्यादिषु स्थितेति ॥

अस्यार्थः—कृतः कटोऽनेनेति वाक्ये कृतकटयोः सामानाधि-

करण्यं अस्मिश्चार्थविशेषे न भाष्यमेव वृत्त्या । तस्याः सामान्यविषयत्वात् । तथाहि— कर्मसामान्ये भावे वा क्तप्रत्यये सति कटरूपकर्मविशेषान्वयमप्रतिपद्यमान एव कृतशब्दः पूर्वशब्देन समस्यते । नच कर्मसामान्येति पक्षे कटस्याभिधानं दुर्वारं शक्यं च क्षुदुपहन्तुमित्यादिवदिति वाच्यम्, तद्धितवृत्तावेकार्थीभूतस्य कृतशब्दार्थस्य पृथक्कटेन संबन्धाभावात् । इतिप्रथमश्लोकार्थः ।

नन्वेवं कटशब्दस्यापि क्रियायोगाभावे द्वितीया नस्यादिति चेन्न । ग्रामं कृतवानित्यादौ गुणभूतयाऽपि क्रियया कारकाणां संबन्धदर्शनात् । तदाह— अविग्रहेति । प्राधान्येनागृह्यमाणापीत्यर्थः । पूर्वं कृतमनेनेत्यर्थे व्युत्पादितस्य कृतपूर्वीत्यस्य पूर्वं कृतवानित्यर्थसंपत्त्या करोतिक्रियापेक्षकर्मत्वानपायात् । इति

अत्र नव्यमीमांसकाः । एवं सति राजपदस्यापि ऋद्धपदानपेक्षस्य पुरुषपदेन समासे कृते पश्चादृद्धपदान्वयापत्तिः । ओदनः पच्यतेतमां, गुरुर्धरित्री क्रियतेतरा त्वयेत्यादावपि द्वितीयापत्तिश्च । उक्तयुक्तेः गुणीभूतेन लकारार्थेन कर्मणा ओदनादीनां योग इत्युक्तौ च क्तप्रत्ययार्थेनापि तदापत्तेः । क्रियायाः कारकेष्विव शक्तेरपि शक्तिमत्युत्थिताकाङ्क्षत्वात्, वैषम्ये बीजाभावात् । ओदनं पच्यते इति भावाख्यातेऽपि द्वितीयापत्तिश्च । तस्मान्न धात्वर्थे कर्मान्वयः । मीमांसकमते धात्वर्थान्वयस्य कारकाणामव्युत्पत्तेः । नापि क्तार्थेन प्रथमापत्तेः । असमर्थसमासापत्तेश्च । अपितु तद्धितार्थ एव । कर्तृत्वस्यात्र तद्धितार्थतया पाचकादिवद्विशेषणतया लक्षणया स्वातन्त्र्येण वा कृतेरपि तद्धितार्थत्वात् । तस्यां च लिङ्गान्वयिन्यां विशेष्यवाचकपदोपस्थाप्यायां चान्वये ओदनस्य पाचक इतिवन्न समासभङ्गः । तद्वाचकपदेन कर्मत्वानुक्त्या प्रथमानापत्तिश्च । पच्यतेतमामित्यादौ तु अतिशयमात्र-

स्य तद्धितार्थत्वान्न कृत्यभिधानम् । तत्र लकारार्थकृतावेव तदन्वयात्तेनैव तदन्वयात्तेनैव कर्मत्वस्योक्तत्वान्न द्वितीया । तरप्रत्ययस्य तात्पर्यग्राहकत्वाङ्गीकारेण तरामित्यस्यानर्थकत्वेन विशेषणसापेक्षस्यापि तेन सह व्युत्पत्तेश्च । एवमोदनस्य पाचकतम इत्यादौ योज्यम् । व्याकरणं प्राज्ञ इत्यत्रापि स्वार्थिकतद्धितेन कृदर्थकृतेरप्युपादानेन तत्र कर्मान्वयो द्रष्टव्यः ।

नचैवं ओदनस्य पाचकः, कृष्णस्य कृतिरित्यत्र कारकान्वयो न स्यात् । धात्वर्थे त्वयानभ्युपगमात् । घञर्थस्य च लिङ्गान्वयित्वात् । तादृशेऽप्यन्वयोपगमे च वस्तुपदाभिधेयायामपि तत्प्रसङ्गादिति वाच्यम् । तत्रापि पक्तेत्यादिवत् कृतिविशिष्टपाकस्य कृतिलक्षणाभ्यां पृथक्कृतिपाकयोर्वाभिधानेन कृतौ कारकान्वयोपपत्तेः । पाकानुकूलकृतिसाध्यः पाक इत्यन्वयसंभवात् ।

यद्वा तत्र शेषषष्ठ्येव । तस्या अपि अध्याहृतास्त्यादिक्रियायां परम्परान्वयः । नच कृद्योगे षष्ठीविधिवैयर्थ्यम् । कर्त्रादिवाचकतृजादिपरत्वमात्रेण तदुपपत्तेः । तत्सिद्धं कृद्योग एव कर्तृकर्मणोः षष्ठी । नतु सार्थकतद्धितयोगे कारकवाचितद्धितयोगे वेत्येतदर्थं कृद्ग्रहणं तद्धितयोगे कारकाणां कृतावन्वय इत्येवं ज्ञापकत्वादिति ।

तत्रेदं वक्तव्यम् । अतिप्रसङ्गनिरासः प्रयोगानुसारादेव सुलभः । अन्यथा कुतो भवान् पाटलिपुत्रक इत्यादावसमर्थसमासस्य भाष्यसिद्धत्वात्सर्वसंमततया तेनाप्यतिप्रसङ्गापत्तिः स्यात् । किञ्चात्र कृतशब्दाज्ज्ञाते प्रत्ययः कर्मणि वा नाद्यः । तद्धितस्य कृति लक्षणायां मानाभावप्रसङ्गात् । अन्यथा शय्यते इत्यादावपि तत्प्रसङ्गात् । नान्त्यः । स हि सामान्ये, विशेषरूपे वा । नाद्यः । त्वदुक्तदोषापत्तेः । नान्त्यः । अनन्वितत्वं कटाभिधानं

चेत्यन्यतरस्य दुर्वारत्वात् । किञ्च पूर्वीति तद्धितस्य लिङ्गान्वयित्वात्कथं तदर्थकृतौ कारकान्वयः । कृतेन तत्र लिङ्गान्वयीति चेत् ।

न । कृतेः पृथक्घञर्थत्वे कृतेर्न लिङ्गान्वय इत्यस्य विनिगन्तुमशक्यत्वात् । पाकानुकूलकृतिसाध्यः पाक इत्यप्ययुक्तम् । घञादिभिः सिद्धभावापन्नभावः प्रत्याय्यते इति सिद्धान्तविरोधात् । नापि तृजादिमात्रविषयकत्वेन सूत्रसार्थक्यम् । हरिस्मरणमित्यादौ कर्मषष्ठ्या समासे कारकपूर्वतया कृदुत्तरप्रकृतिस्वर इत्यस्य समासस्य च सर्वाभियुक्तसंमतस्यासिद्धिप्रसङ्गात् । मातुःस्मृतमित्यादेरसिद्धेश्च । कृद्योगषष्ठ्यास्तत्राप्रवृत्तौ शेषषष्ठ्या एव नलोकेति सूत्रे निष्ठाप्रयोगे निषेध इति त्वया वाच्यत्वात् इत्यास्तां विस्तरः ।

प्रकृतमनुसरामः । अत्र प्रत्यवतिष्ठन्ते । अस्तु क्तार्थपरित्यागेन कथंचिद्वृत्तिः मासजातादौ वृत्तिवाक्ययोरुपस्थितत्यागस्यापि दर्शनात् । एवमपि कृद्ग्रहणं व्यर्थम् । नलोकेति निष्ठायोगे षष्ठीनिषेधसिद्धेः । निष्ठान्तधातूपात्त क्रियायोगे तन्निषेधात् । ग्रामं गतवानित्यादावपि कारकाणां क्रिययैवान्वयात् । नच पाचयति चैत्रो मैत्रेणेत्यादौ णिच्प्रकृत्यर्थक्रियाकर्तुः प्रयोज्यात्षष्ठी माभूदित्यर्थं तदिति वाच्यम् । लयोगे नेत्येव निषेधोपपत्तेः । नच णिजन्तोपस्थाप्यक्रियायोग एव नतु लकारान्तोपस्थाप्यक्रियया णिच एव लकारान्तरत्वादिति वाच्यम् । लप्रकृत्या लान्तपदेन वा या क्रियोपात्ता तद्योगे नेत्यर्थस्य गुणक्रियासाधारण्यात् । लक्ष्यानुरोधेन गौणमुख्यन्यायाप्रवृत्तेः । अन्यथा तत्र तृतीयापि न स्यात् । भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामित्युभयत्र षष्ठ्या अपीष्टत्वादिति ।

अत्राहुः— तद्धिताविवक्षव्यवच्छेदार्थं कृद्ग्रहणं व्याकरणं प्राज्ञ इति प्रज्ञादिभ्यश्चेति स्वार्थेऽण् इति सांप्रदायिकाः । एवं च ओदनस्य पाचकतम इत्यत्र षष्ठी नेति ग्रन्थकृतामाशयः । कर्तव्यपूर्वी कटमित्यत्र तव्ययोगे माभूदिति कृद्ग्रहणव्यावर्त्यमपि संभवत्येव । भाष्यस्यात्रोदासीनतयाभियुक्तप्रयोगदर्शनादन्यतरन्निर्णेयमिति दीक्षिताः । यथा लक्षणमप्रयुक्ते इति न्यायेन कर्तव्यपूर्वी कटमित्येव युक्तमिति रहस्यम् ।

अत्र पक्षधरमिश्राः । देवदत्त ओदनमित्यत्र पचतीति शब्दस्यानध्याहारे कर्तुरनभिधानात्तृतीया स्यादिति दोषस्तदध्याहारेऽपि समानः । न्यायादिमते आख्यातेन कर्तुरनभिधानात् । कर्तृसंख्याभिहितेति चेत् देवदत्तस्य पाक इत्यत्रापि तृतीयापत्तिः । कृत्प्रत्ययेन संख्यानभिधानादितिमणिकारफक्किकायां व्याचख्युः ।

नन्वत्र कृद्योगे षष्ठ्येवापवादिका अन्यथा तृतीयाप्रसक्तौ तत्सूत्रप्रणयनानुपपत्तिरिति । मैवम् । कृद्योगेऽपि षष्ठी न कर्तृत्वप्रकारेण बोधयति किन्तु सम्बन्धत्वेन । सम्बन्धस्तु कर्तृत्वमेवेत्यन्यदेतत् । तथा च कर्तृसंख्यानभिधाने कर्तृत्वप्रकारकान्वयबोधार्थं तृतीयानियमे प्रकृतेऽपि तथा स्यादित्यर्थ इति ।

नन्वेवं सूत्रवैयर्थ्यम् । सम्बन्धत्वप्रकारकबोधजनिकायाः शेषवचनादेव सिद्धेः । एवं चैत्रस्य गत इत्यादौ शेषषष्ठीत्यस्यानुपपत्तिः । न लोकेतिसूत्रेण शेषषष्ठीनिषेधस्यैवैतन्मते वाच्यत्वात् । हरिस्मरणमित्यादौ कर्मषष्ठ्या समासे कृदुत्तरप्रकृतिस्वरानुपपत्तिश्च । तृतीयादेः कर्तृत्वप्रकारकबोधजनकतया तदपवादस्यापि षष्ठ्यास्तथौचित्याच्चेति ।

उच्यते । सम्बन्धत्वेन कर्तृत्वकर्मत्वबोधिका षष्ठी निष्ठायो-

गे न साधुरित्यत्र नलोकेत्यादिसूत्रस्य तात्पर्यात्सम्बन्धान्तरबोधिकायाः साधुत्वमेवेति टीकाकृतः। नचैतदप्ययुक्तम्। शेषषष्ठ्यापि सम्बन्धत्वरूपेण कर्तृत्वादेरेव बोधनात्। अत एवाधीगर्थेतिसूत्रे मातृस्मरणयोरस्थानादिक्रियानिमित्तः सम्बन्धो यद्वा स्मरणक्रियारूपतया स्वत एव संबोधनक्रियान्तरकृतः यथा जतुकाष्ठयोः संश्लेषो जतुकृतः, जतुनस्तु स्वेनैव नतु जत्वन्तरेणेति मतद्वयं कैयटेनोक्तम्। अन्यथा शेषषष्ठ्यापि सम्बन्धत्वेन विषयस्यैव बोधे मातरं स्मरतीत्यादिवत् शङ्कानुत्थानात्। सम्बन्धत्वं तु कर्तृत्वमेवेति। मिश्रोक्तेरपि कृद्योगषष्ठीपरत्वात्।

वस्तुतस्तु उभयत्राप्यस्तु सम्बन्धत्वप्रकारककर्तृत्वविशेष्यक एव बोधः तथापि न सूत्रवैयर्थ्यम्। नलोकादिसूत्रे निषेधप्रतियोगित्वेनैतत्सूत्रोक्तषष्ठ्या ऽन्वयार्थतया सार्थक्यात्। एतेन स्वरोऽपि व्याख्यातः। नच कृद्योगेऽपि शेषवचनादेव षष्ठीप्राप्तौ अस्यारम्भात्। ज्ञोऽविदर्थस्येत्याद्यष्टसूत्रीवत्समासनिवृत्त्यर्थत्वमेव स्यादिति वाच्यम्। कर्मणिचेति समासनिषेधसूत्रस्य वैयर्थ्यात्। तस्य कर्तृकर्मणोरित्येतत्सूत्रीयषष्ठीग्रहणव्यावृत्तिमात्रार्थत्वात्। उभयप्राप्ताविति सूत्रस्यैतद्बोध्यषष्ठीनियममात्रपरत्वाच्च। अधीगर्थेत्यादीनां कर्मणि शेषषष्ठीविधायकानां वैयर्थ्याच्च। तेषां कृन्मात्रविषयकत्वस्य सिद्धान्तितत्वात्। तत्रैतत्सूत्रेणैव त्वद्रीत्या समासनिवृत्तिसिद्धेः।

इदं च वस्तुगत्योक्तम्। कृद्योगे तृतीयाद्वितीययोरसाधुत्वज्ञापनार्थत्वेनैवोपपत्तेः। चैत्रेण हत इत्यादौ च निष्ठायोगे षष्ठीनिषेधस्य वक्ष्यमाणत्वात्।

# उभयप्राप्तौ कर्मणि ॥ ६६ ॥

उभयोः कर्तृकर्मणोः प्राप्तिर्यत्र तस्मिन् कृति कर्मण्येव षष्ठी स्यात् । नियमार्थमिदम् । आश्चर्यं गवां दोहोऽगोपेन । 'अकाकारयोः प्रयोगे प्रतिषेधो न' इति वक्तव्यम् । उक्तनियमो न प्रवर्तते इत्यर्थः । भेदिका देवदत्तस्य काष्ठानाम् । चिकीर्षा विष्णुमित्रस्य कटस्य । उभयत्र षष्ठी । नच क्तिना बाधा न भवति सुटा सीयुटो बाधा नेतिच वृत्तिरसङ्गतेति वाच्यम् । अप्रत्ययादित्यकारस्यैव प्राथम्येन ग्रहणात् । गुरोश्च हल इत्यकारस्य प्रकृतेऽनुपादानात् इति केचित् । करणत्वविवक्षयेति केचित् । 'शेषे विभाषा' इति वक्तव्यम् । स्त्रीप्रत्ययविषयमेवेदमिति केचित् । विचित्रा खलु पाणिनेः सूत्रस्य कृतिः पाणिनिना वा ।

अन्येतु उभयभिन्ने प्रत्ययमात्रे विकल्पः । नञित्रयुक्तन्यायस्यानित्यत्वादित्याहुः । शब्दानामनुशासनमाचार्यस्याचार्येण वा ।

# क्तस्य च वर्तमाने ॥ ६७ ॥

नलोकेति वक्ष्यमाणनिषेधस्यापवादः । वर्तमानार्थक्तस्य योगे षष्ठी । राज्ञां मतो बुद्धः पूजितो वा । 'नपुंसके भावे उपसंख्यानम्' । छात्रस्य हसितम् । शेषवचनाद्वा सिद्धम् । कर्तृत्वविवक्षायां तृतीया । छात्रेण हसितम् ।

# अधिकरणवाचिनश्च ॥ ६८ ॥

क्तस्य योगे षष्ठी । इदमेषां शयितम् । अकर्मकेभ्यस्तूभयत्रापि । इदमेषां भुक्तमोदनस्य । नचोभयप्राप्तौ कर्मणीत्यस्य प्राप्तिः । कर्तृकर्मणोःकृतीत्येतन्मात्रपरत्वात् । एवंच गत्यर्थेषु चातुःशब्द्यम् । इहाहिना सृप्तमिति भावे । इहाहिः सृप्त, इदमहिः सृप्त इति कर्तरि । इहाहेः सृप्तं ग्रामस्य पार्श्वं इति । पार्श्वं इत्यधि-

करणप्रयोगो नायमधिकरणे क्तः किन्तु भावे इति सूचनार्थः ।

## नलोकाव्ययनिष्ठाखल-र्थतृनाम् ॥ ६९ ॥

तृनामित्यत्र प्रत्ययस्वरूपतिरोभावापत्त्या णत्वं न प्रयुक्तमिति केचित् । सौत्रत्वादिति कैयटानुसारिणः । एषां योगे षष्ठी न स्यात् । कर्तृकर्मणोरित्यस्यापवादः । लादेशः । ओदनं पचन् पचमानः पेचानः पेचिवान् । 'लादेशे सल्लिट्ग्रहणं किकिनोः प्रतिषेधार्थम्' । लग्रहणमपनीय सल्लिडिति वक्तव्यम् । सदिति शतृशानचोर्ग्रहणम् । लिट्पदेन कानच्क्वसोः लिट्संज्ञाविधानात् किकिनोश्च । यथान्यासे तु किकिनोर्लादेशत्वाभावात् पपिः सोमं ददिर्गा इत्यत्र निषेधो न स्यात् ।

भाष्ये तु किकिनौ लिट्चेति लिट्कार्यातिदेशः । नतु लिट्संज्ञा । विशेषातिदेशे च सामान्यमप्यतिदिश्यते । अव्यभिचारात् । तेन लमात्रनिबन्धनः षष्ठीप्रतिषेध इत्युक्तम् । उः कटं चिकीर्षुः । कन्यामलङ्करिष्णुः । उकारान्तप्रयोगे इत्यर्थात् । व्यपदेशिवद्भावेन केवलेनापि निषेधसौलभ्यात् । उकेन सह द्वन्द्वं कृत्वा पश्चाल्लकारेण समासः तेन सहैव द्वन्द्वे तु गुणावादेशौ स्याताम् । उकः काशीमागामुकः । कमेर्भाषायामनिषेधः । लक्ष्म्याः कामुकः । अव्यय कटं कृत्वा । तोसुन्कसुनोरप्रतिषेधः । पुरा सूर्यस्योदेतोराधेयः । पुराक्रूरस्य विसृपो विरप्शिन् । निष्ठा देवदत्तेन कृतम् । ओदनं भुक्तवान् । खलर्थः त्वया सुकरम् । इक्ष्वाकूणा दुरापेऽर्थे इतिशेषषष्ठी । सिद्धय इत्यत्र वान्वयः । ईषज्जयः स्फुटमनेन दशाननोऽपीति मुरारिः ।

'शानँश्चानश् शतॄणामुपसङ्ख्यानम्' । तृन्निति शतृशानचावित्यारभ्य तृनो नकारेण प्रत्याहारः । तेन शानन्प्रभृतीनामपि ग्रहणम् । सोम पवमानः । पूङ्यजोः शानन् । नडमाघ्राणः । ताच्छील्यादौ चानश् । अधीयन् पारायणम् । इङ्धार्योरिति शतृप्रत्ययः । तृन् । पाता सुतमिन्द्रो अस्तु सोमम् । प्र सर्वस्वं दाता तृणमिव सुरेशं विजयते इति सुबन्धुः । 'द्विषःशतुर्वेति वक्तव्यम्' । मुरस्य मुरं वा द्विषन् । एतच्च प्रत्ययग्रहणे प्रतिषेधार्थम् । प्रत्याहारग्रहणे विध्यर्थमिति विशेषः ।

## अकेनोर्भविष्यदाधमर्ण्ययोः॥ ७० ॥

यथासंख्यवारणाय योगविभागः । अकस्य भविष्यति । इन आधमर्ण्ये च । चकारेण भविष्यतीत्यनुवृत्तिः । षष्ठी न स्यात् । एधानाहारको व्रजति । व्रज गामी । आधमर्ण्ये शतं दायी । भविष्यदित्यस्य स्वरितत्वम् । प्रतिज्ञास्वरिताः पाणिनीयाः । तेन भविष्यदधिकारविहितस्यैवाकस्य ग्रहणान्नेह वर्षशतस्य पूरकः । ण्वुल्तृचाविति सामान्यतो विहितोऽयं नतु भविष्यदधिकारस्थः ।

## कृत्यानां कर्तरि वा ॥ ७१ ॥

षष्ठी वा स्यात् । कर्तव्यमिदं कृष्णस्य कृष्णेन वा । नच कृत्यानां भावकर्मणोरेव विधानात्कर्तृग्रहणं व्यर्थम् । कर्मणोऽभिधानावश्यकत्वेन तत्र षष्ठ्याः प्रसक्त्यभावादिति वाच्यम् । गेयो माणवकः साम्नामित्यत्र तत्सम्भवात् । भव्यगेयेत्यादिना

कर्तरि यद्विधानेन कर्मणोऽनभिधानात्। नच आकृष्टव्या ग्रामं शाखेत्यत्र दोषवारणार्थमपि तत् । कृषेर्द्विकर्मकत्वात्प्रधानकर्मणः शाखायाः कृत्येनाभिधानात् । गौणकर्मणो ग्रामस्यानभिधानादिति वाच्यम्। योगविभागेनैव तद्वारणात् । कृत्यानामुभयप्राप्तौ नेत्यनुवर्तते अतः कर्तर्यपि न षष्ठी किन्तु तृतीयैव । नेतव्या व्रजं गावः कृष्णेन। कर्तरि वा । सर्वं निवृत्तम्। अर्थः पूर्ववत् ।

# तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् ॥ ७२ ॥

तुल्यार्थयोगे तृतीया वा स्याच्छेषे पक्षे षष्ठी। कृष्णेन कृष्णस्य वा तुल्यः समो वा। अतुलेति किम् । कृष्णस्य तुलोपमा वा नास्ति। अथ कथं तुलां यदारोहति दन्तवाससा, स्फुटोपमं भूतिसितेन शंभुनेत्यादि ।

अत्राहुः—तोलनं तुला अत्रैव निपातनादङ्णिलोपौ। उपमितिरुपमा धात्वर्थं प्रति करणात्तृतीया । तेनोपमीयेत तमालनीलमित्यादिवत्। प्रकृतसूत्रस्य तु शेषषष्ठ्यपवादत्वेन तृतीयाविधायकस्य नेह प्रवृत्तिरिति ।

अन्येतु 'स्त्रबालभारस्य तदुत्तमाङ्गजैः समं चमर्य्यैव तुलाभिलाषिणः' इत्यादिवत्सहयोगे तृतीया। सहार्थोऽत्र गम्यमान इति परं विशेष इत्याहुः ।

तत्त्वं तु भेदानुयोगिपदानां धर्मिसमर्पकतया भेदप्रतियोगित्वमपि तादृशयोरेव तुलोपमाशब्दयोः कृष्णस्य तुलोपमा वा नास्ति इत्यत्र तुलोपमाशब्दयोस्तद्वत्परत्वाङ्गीकारात् । तुलां य-

दारोहतीत्यादौ तु सादृश्यमात्रपरत्वान्नेयं तृतीया । अत एव इवादिप्रयोगे न तृतीयाप्रसक्तिः । तत्र शेषषष्ठ्या अप्यप्रसक्तेश्च । वेति वर्तमानेऽप्यन्यतरस्यां ग्रहणं उत्तरत्र चकारेण स्वस्यानुकर्षणार्थम् । अन्यथा संनिहितायास्तृतीयाया एवानुकर्षप्रसङ्गात् ।

## चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ॥ ७३ ॥

एतैर्योगे चतुर्थीषष्ठ्यौ स्त आशिषि गम्यायाम् । सुखपर्यन्तानां द्वन्द्वं कृत्वाऽर्थशब्देन बहुव्रीहिः । मद्रभद्रयोरन्यतरो न पठनीय इति केचित् । अर्थशब्दोऽपि पृथगेव निमित्तम् । व्याख्यानात्तु सर्वशब्दानामनार्थपरत्वमित्यन्ये । आयुष्यं चिरजीवितं वा चैत्रस्य चैत्राय वा भूयात् । एवं मद्रं भद्रं कुशलं निरामयं सुखं अर्थः प्रयोजनं हितं पथ्यमित्यादि । हितयोगे चतुर्थ्या अनाशिषि सावकाशत्वादाशिष्यनेन विकल्पः । आशिषि किम् । चैत्रस्यायुष्यमस्ति । तत्वकथनमेतत् । श्रीः

इति श्रीसिद्धान्तसुधानिधौ द्वितीयाध्यायस्य
तृतीये पादे तृतीयमाह्निकम् । पादश्चायं समाप्तः ।



# अथ चतुर्थः पादः ।

## द्विगुरेकवचनम् ॥ १ ॥

बाहुलकात्कर्तरि ल्युट् । सामान्ये नपुंसकम् । समाहारे द्विगुरेकार्थप्रतिपादकः स्यात् । तद्धितार्थेति सूत्रे समाहारशब्दो भावसाधन इति स्थितम् तथाचैकत्वं न्यायसिद्धम् । तदुक्तं वार्तिककृता 'नवा समाहारैकत्वा'दिति ततश्च कर्मसाधनत्वभ्रमनिरासार्थं सूत्रम् । स नपुंसकमित्यस्य प्रवृत्त्यर्थं च । नचोत्तरपदनिमित्ते द्विगौ एकत्वविधानार्थमस्त्विति वाच्यम् । तदर्थस्योत्तरपदार्थे गुणभावात्प्रातिपदिकत्वसद्भावेऽपि विभक्त्यनुत्पत्तेः । तद्धितार्थे द्विगावपि पञ्चकपालशब्दं संस्कृतप्रत्ययान्तं कृत्वैकशेषे क्रियमाणे द्विग्वर्थसमुदायस्य द्विग्वर्थत्वाभावाद्बहिरङ्गत्वात्प्रथमकल्पके ऽन्तरङ्गे द्विगौ चरितार्थत्वाच्चैकवद्भावो वचनसत्त्वेऽपि न प्रवर्तते सुतरां न्यायसिद्धः । यदा तु पञ्चसु कपालेषु संस्कृता इति प्रथममेव बहुत्वावच्छिन्ना अर्था विवक्षितास्तदा समाहाररूपत्वमेव नास्तीति न दोषः ।

## द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ॥ २ ॥

अङ्गशब्दस्य प्रत्येकमन्वयः । द्वन्द्वघटकयावत्पदानां उक्तत्रयान्यतमप्रमात्राङ्गवाचित्वे एकवद्भावः । पाणिपादम् । मार्दङ्गिकपाणविकम् । रथिकाश्वारोहम् । नेह मार्दङ्गिकाश्वारोहाः । प्राणिनामङ्गमवयवः । तूर्याणामुपकारकम् । सेनाया

अपेक्षाबुद्धिविशेषविषयः इति बोद्धम् । पाणिपादमित्यादौ जातिरप्राणिनामित्येव सिद्धे व्यतिकरनिरासार्थं वचनम् । रथवाजिपत्तिकरिणीसमाकुलमित्यादौ सेनाङ्गवाचिपदाना अन्त्यवर्जं द्वन्द्वं कृत्वा अन्त्येन मध्यमपदलोपो व्याख्येयः । पातितै रथनागाश्वैरित्यादौ कृतद्वन्द्वानामेकशेषेणापि समाधेयम् । एतेन इत्थं रथाश्वेभनिषादिनां प्रगे इति माघोऽपि व्याख्यातः । यद्यपि समाहारद्वन्द्वोऽपि चार्थे द्वन्द्व इत्यनेन एकवद्भावश्च न्यायेन सिद्धस्तथापि नियमार्थमिदम् । एतेषां समाहार एव द्वन्द्वो नेतरेतरयोग इति । नच समाहारे एषामेव द्वन्द्व इति विपरीतनियमोऽस्त्विति वाच्यम् । तिष्यपुनर्वस्वोरिति सूत्रे बहुवचनग्रहणात् तिष्यपुनर्वस्विदमिति समाहारैकवचनव्यावृत्तेस्तदर्थत्वात् ।

## अनुवादे चरणानाम् ॥ ३ ॥

चरणशब्दः कठकलापादिपरः । कठादिशब्दश्च शाखाभेदेषु मुख्यो अध्येतृषु गौणः । स्फुटं चेदं शाखान्तराधिकरणे । गोत्रंच चरणैः सहेत्येषां जातिसंज्ञा । तत्र जातिरप्राणिनामित्येव शाखाभेदवाचिनामेकवद्भावः सिद्धः । पुरुषभेदानामेकवद्भावार्थमारम्भः । उदगात्कठकालापम् । प्रत्यष्ठात्कठकौथुमम् । उदगात्कौमोदपैप्पलादम् । कठकलापेषु उदितेषु प्रतिष्ठितेषु वा तत्र गन्तव्यमिति पूर्वोक्तं विस्मृत्यासीनं प्रत्युक्तौ भवत्यनुवादः । 'स्थेणोरद्यतन्यां चेति वक्तव्यम्' । नेह नन्दन्तु कठकालापा वर्द्धन्तां कठकौथुमाः । अद्यतन्यां किम् । उद्यन्ति कठकालापाः ।

## अध्वर्युक्रतुरनपुंसकम् ॥ ४ ॥

अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात् । इत्यमरः ।

अत्राध्वर्युशब्दो यजुर्वेदपरः। तत्रोत्पन्नस्य विनियुक्तस्य वा क्रतोर्वाचकानामक्लीबाना द्वन्द्व एकवत्। अर्काश्वमेधम्। साह्नातिरात्रम्। अध्वर्युपदं किम्। इषुवज्रौ। उद्भिद्बलभिदौ। सामवेद एषां विधानम्। क्रतुशब्दस्य सोमयागेषु रूढत्वाद्दर्शपौर्णमासावित्यादौ नेति वृत्तिः। अनपुंसकं किं राजसूयवाजपेये। अर्धर्चादिपाठात्क्लीबत्वपक्षे प्रत्युदाहरणम्।

## अध्ययनतोऽविप्रकृष्टाख्यानाम् ॥ ५ ॥

अध्ययनेन निमित्तेन येषामविप्रकृष्टा संनिहिता आख्या तेषां द्वन्द्व एकवत्। पदकक्रमकम्। क्रमकवार्तिकम्। पदं क्रमं वाधीते इति क्रमादिभ्यो वुन्। वृत्तिं संहितामधीते वार्तिकः। उक्थ्यादित्वाट्ठक् पदाध्ययनोत्तरं क्रमाध्ययनं इति पौर्वापर्यं सन्निधिः। अन्ये तु क्रमाध्ययनस्य संहिताध्ययनव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वमेव तथेति बोध्यम्। अध्ययनतः किम्। पितापुत्रौ। अविप्रकृष्टेति किम्। याज्ञिकवैयाकरणौ।

## जातिरप्राणिनाम् ॥ ६ ॥

प्राणिभिन्नवृत्तिर्या जातिः तद्वाचिनां द्वन्द्व एकवत्। आराशस्त्रि। जातिः किम्। नन्दकपाञ्चजन्यौ एकव्यक्तिकत्वान्न जातित्वम्। अप्राणीति किम्।
ब्राह्मणक्षत्रियविट्शूद्राः। नाजिवयुक्तन्यायेन द्रव्यवृत्तिजातेरेव ग्रहः। नेह रूपरसौ। गमनाकुञ्चने। पृथिव्यप्तेजोवायूनामित्यादौ तु द्रव्यप्राधान्यं विवक्षितम्। बदरामलकानीत्यादेरिष्टत्वा-

व । रञ्जिता नु विविधास्तरुशैला इत्यादौ मध्यमपदलोपः ।

## विशिष्टलिङ्गो नदीदेशोऽग्रामाः ॥ ७ ॥

अग्रामा इति बहुवचनं सौत्रम् । भिन्नलिङ्गानां नदीवाचिनां देशवाचिनां च ग्रामभिन्नानां द्वन्द्व एकवत् । उध्यश्चेरावती च उध्येरावति । कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम् । भिन्नलिङ्गः किम् । गङ्गायमुने । मद्रकेकयाः । नदीदेश इति किम् । कुक्कुटमयूर्यौ 'अग्रामा इत्यत्र नगराणां प्रतिषेधः' अभक्ष्यो ग्रामकुक्कुट इत्यादौ नगरस्यापि ग्रामशब्देन ग्रहणादारम्भः । नगराणां नायं पर्युदास इत्यर्थः । मथुरापाटलिपुत्रम् । 'उभयतश्च ग्रामाणां प्रतिषेधः' । ग्रामनगरयोर्द्वन्द्वे ग्रामनिमित्तः प्रतिषेध एव प्रवर्तते इत्यर्थः । शौर्यं नगरम् । केतवता ग्रामः । शौर्यकेतवते । अग्रामाः किम् । जाम्बवं नगरम् । शाल्र्किनी ग्रामः । जाम्बवशाल्र्किन्यौ । देश इह जनपदः तेन पर्वतानां न कैलासगन्धमादने ॥

## क्षुद्रजन्तवः ॥ ८ ॥

एषां द्वन्द्व एकवत । यूकालिक्षम् ।
क्षुद्रजन्तुरनस्थि स्यादथवा क्षुद्र एव सः ।
शतं वा प्रसृतौ येषां केचिदानकुलादपि ॥
पश्चादुपन्यस्तं एव पक्षो व्यापित्वाद्ग्राह्य इति ग्रन्थकृतः ।

## येषां च विरोधः शाश्वतिकः ॥ ९ ॥

विरोधो वैरम् । नतु सहानवस्थानादि । प्रतियोग्यभावयो-

रित्यादावतिप्रसङ्गात् । शाश्वतिकः सार्वदिकः । निपातनादिका-देशः तत्वं चात्र एकार्थाभिनिवेशप्रयुक्तत्वाभावः । गोव्याघ्रम् । गजसिंहम् । शाश्वतिकः किम् । देवासुरैरमृतमम्बुनिधिर्ममन्थे । एतेन तेषां न नित्यो विरोधो मथनप्रवृत्तिकाले तदभावादिति निरस्तम् । कालानवच्छिन्नत्वेन वैरविवक्षायां गोव्याघ्रमित्यादावव्याप्तेः । विषयान्तरसंचारस्तुपुप्त्यादौ तद्विच्छेदस्यावश्यकत्वात् । इह पशुशकुनिद्वन्द्वैकवद्भावविकल्पस्यावकाशो महाजोरभ्रं महाजोरभ्राः । हंसचक्रवाकम् । हंसचक्रवाकाः । येषांचेत्यस्य श्रमणब्राह्मणम् । मार्जारमूषकम् । अश्वमहिषम् । काकोलूकमित्यत्र परत्वाद्विभाषा प्राप्ता चकारस्य निर्धारणार्थतया तां बाधित्वा एकवद्भाव एव । तेन पशुशकुनिद्वन्द्वे विरोधिना पूर्वविप्रतिषेध इति नारभ्यम् ।

## शूद्राणामनिरवासितानाम् ॥ १० ॥

अबहिः कृतानां शूद्राणां द्वन्द्व एकवत् । तक्षायस्कारम् । रजकतन्तुवायम् । निरवसानं बहिःकारः । तच्चार्यावर्तात् स च प्रागादर्शात्प्रत्यक्कालिकवचनात् । दक्षिणेन हिमवन्तं उत्तरेण पारियात्रमिति भाष्यम् । आदर्शादयः पर्वतविशेषा इति कैयटः । एवं तु किष्किन्धगान्धिकं शकयवनम् । शौर्यक्रौञ्चमिति न सिध्येत् । ग्रामघोषनगरादिभ्यो बहिर्भावविवक्षायां चण्डालमृतपा इत्यादावव्याप्तिः । यज्ञात्कर्मणस्तदुक्तौ तक्षायस्कारमिति न स्यात् । तस्मात्पात्रादबहिः कृतानामित्येवार्थः ।

## गवाश्वप्रभृतीनि च ॥ ११ ॥

- एतानि कृतैकवद्भावानि निपात्यन्ते । गवाश्वम् । गवाविकम् । गवैडकम् । अजाविकम् । अजैडकम् । एषां पशुद्वन्द्वविकल्पः प्राप्तः । कुब्जवामनम् । कुब्जकैरातम् पुत्रपौत्रम् । श्वचण्डालम् । स्त्रीकुमारम् । दासीमाणवकम् । उष्ट्रखरम् । शाटीपच्छदम् । प्राणिजात्यर्थानां विध्यर्थः । अप्राणिजातीनामबहुप्रकृत्यर्थः पाठः । उष्ट्रशशम् । मूत्रशकृत् । मूत्रपुरीषम् । यकृन्मेदः । मांसशोणितम् । दर्भपूतीकम् । अर्जुनपुरुषम् । तृणोलपम् । दासीदासम् । अत्र पुमान्स्त्रियेत्येकशेषाभावः । कुटीकुटम् । भागवतीभागवतम् ।

अत्रवार्तिकम् । 'गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तं' यद्रूपविशिष्टमुच्चारितं तत्रैवैकवद्भाव इत्यर्थः । तेनावयवदेशाभावपक्षे न । 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः ॥'

# ॥ विभाषावृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्॥१२॥

शकुन्यन्तानां द्वन्द्वः अन्यत्कण्ठोक्तं द्वन्द्वत्रयं चैकवद्वा । वृक्षादौ विशेषग्रहणम् । एकपदस्य द्वन्द्वाभावात्पदद्वयैकशेषात्त्र पर्यायद्वयस्यापि विरूपाणामपि समानार्थानामित्येकशेषात् । सामान्यविशेषयोश्च द्वन्द्वनिषेधस्य वाचानिकत्वात् । प्राच्यभरतेष्विति निर्देशादनित्यत्वेऽपि प्रकृते निषेधस्यैव प्रवृत्तेः । प्लक्षन्यग्रोधम् प्लक्षन्यग्रोधाः । रुरुपृषतम् । रुरुपृषताः । कुशकाशम् । कुशकाशाः । व्रीहियवम् । व्रीहियवाः । दधिघृतं दधिघृते ।

गोमहिषम् । गोमहिषाः । तित्तिरिकपिञ्जलम् । तित्तिरिकपिञ्जलाः । अश्ववडवम् । अश्ववडवौ । पूर्वापरम् । पूर्वापरे । अधरोत्तरम् अधरोत्तरे ।

अत्रवार्तिकम्—'बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानाम्' ॥ समस्यमानपदानां बहुवचनान्तत्वे सत्येषां द्वन्द्वः एकवद्भवति नान्यथेत्यर्थः । अनेन प्रकरणविहित एवैकवद्भावो नियतमेवैषां विषयत्वेन व्यवस्थाप्यते नत्वेतत्सूत्रविहित एव । प्लक्षन्यग्रोधावित्यत्र जातिरप्राणिनामिति नित्यैकवद्भावप्रसङ्गात् । बदरामलकम् । बदरामलकानीति भाष्यम् । तत्र बदरामलकानीति प्राप्ते जातिरप्राणिनामिति नित्य एकवद्भाव इति व्याचष्ट कैयटः ।

केचित्तु नित्य एकवद्भावे प्राप्ते विकल्पोऽनेन क्रियते इत्याहुः ।

अन्ये तु अस्य बहुप्रकृतिके विकल्पविधिपरत्वेऽन्यत्र नित्यैकवद्भावापत्त्या बदरामलके तिष्ठत इति भाष्यविरोधान्नेदं युक्तमित्याहुः ।

अत्रायं वाक्यार्थः । फलादीनां द्वन्द्वोऽनेन लक्षणान्तरेण वा एकवद्भवन् बहुप्रकृतिरेव । तेन प्लक्षन्यग्रोधौ, व्रीहियवौ, कुशकाशौ इत्यादौ प्रकृतविकल्पो जातिरप्राणिनामिति निषेधश्च न । एतत्सूत्रोपात्तानां तु विषयविभागः प्रदर्श्यते । अप्राणिनां नित्यं प्राप्ते विकल्पो विधीयते सचैकजातिव्याप्यानां जातीनां—पदार्थविभाजकोपाधिसाक्षाद्व्याप्यजातिव्याप्यानामिति यावत् । विजातीयानां तु यथाप्राप्तं । व्रीहिकुशप्लक्षमित्यत्र जातिरप्राणिनामिति नित्यः प्लक्षशब्दस्पर्शम् । प्लक्षशब्दस्पर्शाः, इत्यत्र चार्थे द्वन्द्व इत्युभयम् । अद्रव्यवृत्तिजातितया शब्दत्वादेर्जातिरप्राणि-

नामित्यस्याप्रवृत्तेः । हस्त्यश्वादिषु सेनाङ्गत्वान्नित्यं प्राप्तो विकल्पः । मृगशकुन्यंशे तु यो विभाषा प्राप्त एकवचनो द्वन्द्वः स मृगाविशेषाणा तैरेव सह नान्यैरिति । इतरैः सह त्वितरेतरयोग एवेति फलितोऽर्थः ।

तेन पूर्वापरम्, अधरोत्तरमिति व्याख्यानम् । अश्ववडवग्रहणं पशुद्वन्द्वत्वादेव सिद्धेः प्रतिपदविधानार्थम् । तेनैकवद्भावपक्षे पूर्ववदश्ववडवावित्येतद्बाधित्वा सनपुंसकमित्यस्य प्रवृत्तिः । तच्छब्देनैकवद्भावविशिष्टपरामर्शात् । पूर्ववदिति तु एकवद्भावाभावपक्षे प्रवर्तते इति ॥

# विप्रतिषिद्धं चानधिकरणवाचि ॥१३॥

नियमार्थमिदम् । एकवद्भावविशिष्टो यो द्वन्द्वो विकल्पेन प्राप्तःस विरुद्धवचनानां यदि भवति तदा अद्रव्यवाचिनामेवेति । तेन विरुद्धद्रव्यार्थानामितरेतरयोग एव । शीतोष्णे उदके स्तः । अत्र विरुद्धत्वं परस्परात्यन्ताभावसामानाधिकरण्यं परम्परया जलस्योष्णत्वं तद्द्वारको गुणद्वयविशिष्टजलयोर्विरोधः । विप्रतिषिद्धं किम् । नन्दकपाञ्चजन्यम् । पाक्षिकः समाहारद्वन्द्वः । कामक्रोधाविति प्रत्युदाहृतं वृत्तौ । तत्राहुः—शीतोष्णं सुखदुःखमित्यादिवत्पाक्षिकैकवद्भावो दुर्वारः । प्रकृतसूत्रस्य नियमार्थत्वात् । नचाद्रव्यवाचिनां यदि भवति तदा विप्रतिषिद्धानामेवेति तदभिप्रायः । शीतोष्णे उदके इत्यस्यानधिकरणवाचीत्येतत्—प्रत्युदाहरणतया तत्रैव लिखितत्वात्, उक्तरीत्या तत्रापि पाक्षिकैकवद्भावापत्तेः ।

## न दधिपय आदीनि ॥१४॥

एतानि नैकवत्स्युः । दधिपयसी, मधुसर्पिषी, सर्पिर्मधुनी । अन्यथा व्यञ्जनत्वाद्विकल्पः स्यात् । ब्रह्मप्रजापती । शिववैश्रवणौ । स्कन्दविशाखौ ।

स्कन्दश्चैव विशाखश्च द्वौ सुतौ संबभूवतुः ॥

इति भारतम् । परिव्राट्कौशिकौ । प्रवर्ग्योपसदौ । शुक्लकृष्णे । इध्माबर्हिषी । निपातनादात्वम् । दीक्षातपसी । श्रद्धामेधे । मेधातपसी अध्ययनतपसी उलूखलमुसले । उदूखलमुसले । आद्यवसाने । श्रद्धामेधे । ऋक्सामे । वाङ्मनसे । नचात्र दधिपयसीत्यादौ व्यञ्जनत्वप्रयुक्तविकल्पनिषेधेऽपि जातिलक्षणो नित्य एकवद्भावोऽस्तीति शङ्कनीयम् । लक्षणविशेषप्राप्तेः प्रतियोगित्वेनानुपादानात् । एकवद्भावमात्रस्य निषेधात् । नच जातिरप्राणिनामित्यस्यापि निषेधः । तथाच तेनेतरेतरयोगे प्रकृतसूत्रेण च समाहारे द्वन्द्वनिषेधात् एषां द्वन्द्व एव न स्यादिति वाच्यम् । नियमवाक्यानां विधिरूपेण प्रवृत्तिरिति पक्षे जातिरप्राणिनामित्यादिभिर्विहितस्यैकवद्भावस्यानेन निषेधात् ॥

## अधिकरणैतावत्त्वे च ॥१५॥

द्रव्यसंख्याप्रतीतौ नैतत्स्यात् । दश दन्तोष्ठाः । अयंच प्राप्यङ्गानां समाहार एव द्वन्द्व इति निषेधो न समाहारद्वन्द्वस्य । वैयर्थ्यात् प्रधानभूते समाहारे एव दशत्वसंख्यान्वयापत्तेः । दशपञ्चपूल्येतिवत् । तथाच वार्तिपदार्थानां संख्याविशेषबोधनतात्पर्ये इतरेतरयोगस्य न्यायत एव प्राप्तेः । तेन 'पञ्चस्विहास्याग्निकरेष्वभिख्याभिक्षाधुना माधुकरी सदक्षे'त्यादिसिद्धम् । नचैवं दश-

ब्राह्मणक्षत्रिया इत्यादेरनुपपत्तिः । उक्तन्यायेनैव तद्वारणात् । तत्त्वं तु नोक्तन्यायेन तद्वारणं सुशकम् । उत्तरसूत्रवक्ष्यमाणरीत्याऽवयवेष्वेव संख्यान्वयसंभवात् । दृष्टान्ते तु समाहारिणां भिन्नसंख्यावरुद्धत्वेन वैधर्म्यात् ॥

# विभाषा समीपे ॥१६॥

शब्दोपात्तसंख्यासामीप्यावच्छिन्नसंख्यया द्रव्यविशेषणे समाहार एवेत्येवरूपो नियमो वा स्यात् । उपदशम् पाणिपादम् । उपदशाः पाणिपादाः । नवैकादश वेत्यर्थः । तत्रोपदशमिति सामीप्यप्राधान्येऽव्ययीभावः । समीपप्राधान्ये बहुव्रीहिरित्युक्तम् एकवद्भावपक्षेऽव्ययीभावस्य अन्यदा बहुव्रीहेः प्रयोगः । समानसंख्यावगत्यनुरोधात् । यद्यप्यव्ययीभावो निःसंख्यस्तथाप्यभेदैकत्वसंख्याभिप्रायमिति संप्रदायः । सामीप्यतद्वतोरभेदोपचारात्सामानाधिकरण्यम् । नच संख्यायाः समाहार एवान्वयोपपत्तौ द्वन्द्ववर्तिपदार्थानां तत्परिच्छेद्यत्वानुपपत्तिः । समाहारसमाहारिणोरप्यभेदोपचारात् । एकवत्त्वाभावपक्षे बहुव्रीहिः । समानवचनान्तत्वात् । अव्ययीभावे बहुवचनानुपपत्तेः । संभवेऽप्यम्भावापत्तेश्च । एकवद्भावपक्षेऽपि बहुव्रीहेरनुप्रयोगे तु षष्ठ्यामुपदशस्य पाणिपादस्येति स्यात् । इष्यते तु उपदशं पाणिपादस्येत्येवमाकरः ।

# स नपुंसकम् ॥१७॥

समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात् । परवल्लिङ्गापवादः । पञ्चगवम् । दन्तोष्ठम् । प्रकरणादनुवाद्यलाभेऽपि सग्रहणमेतत्प्रकरणबहिर्भूतस्यापि समाहारद्वन्द्वस्य परिग्रहार्थम् । अतएव युवो-

रनाकावित्यादौ समाहारद्वन्द्वे नपुंसकता स्यादिति वदन्ति । एतेन जन्माद्यस्य यत इति सूत्रे जन्मादीति सौत्रनपुंसकत्वानुरोधेन जन्मस्थितिभङ्गमिति शाङ्करभाष्यं व्याख्यातम् ।

अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः । पञ्चपूली । अतइत्यधिकारे द्विगोरिति ङीप्विधानं चेह लिङ्गम् । 'वावन्तः' आवन्तो-द्विगुः स्त्रियां वा । पञ्चखट्वम् । पञ्चखट्वी । स्त्रीत्वपक्षे उपसर्जनह्रस्व इति पूर्वं व्याख्यातम् ।

'अनो नलोपश्च, वा च द्विगुः स्त्रियाम्' । पञ्चतक्षम् । पञ्चतक्षी । नचान्तर्वर्तिविभक्त्या पदत्वान्नलोपसिद्धिरिति वाच्यम् । उत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणनिषेधात् । 'पात्राद्यन्तस्य प्रतिषेधः' । पञ्चपात्रम् । त्रिभुवनम् । चतुर्युगम् । द्विमासम् । पात्रादिराकृतिगणः ।

# अव्ययीभावश्च ॥ १८ ॥

नपुंसकं स्यात् । अधिस्त्रि उन्मत्तगङ्गम् । पूर्वपदार्थप्राधान्ये लिङ्गाभावे, अन्यपदार्थप्राधान्ये विशेष्यलिङ्गे प्राप्तेऽयमारम्भः । चकारात्पुण्याहम् । सुदिनाहम् । 'पुण्यसुदिनाभ्यामह्नः क्लीबत्वम्' । कर्मधारये राजाहःसखिभ्यष्टच् इतिटच् । रात्राह्नाहाः पुंसीत्यपवादः । सुदिनशब्दः प्रशस्तार्थः । 'सुदिनासु सभासु कार्यमेतत्प्रविचिन्वीत विशेषतः स्वयं वे'तिदर्शनात् ।

'पथः संख्याव्ययादेः' ; त्रयाणां पन्थाः त्रिपथम् । विरूपः पन्थाः विपथम् । समासान्ताव्यभिचारिसंख्यादिपथशब्दसाहचर्यादव्ययादेरपि कृतसमासान्तस्यैवेदम् । नेह । अतिपन्थाः सुपन्थाश्चेति । नपूजनादिति समासान्तनिषेधः । स्वतिभ्यामेवेति परिगणनात्सत्पथश्चार्चितेऽध्वनीति सिद्धम् ।

मकारान्तं विना नकिञ्चिदनुपपन्नमिति व्यर्थ एव तदुपन्यासः प्रत्युत पथशब्दसत्त्वे सूत्रस्य तद्घटितपथशब्दविषयत्वेनापि व्याख्यातुं शक्यतया भिन्नविषयत्वात् वार्तिकेन सूत्रस्य गतार्थत्वात् शङ्कैव न स्यादिति त्वदुक्तावेव कैयटफक्किकायाः प्रातिकूल्यमिति यत्किञ्चिदेतत् । इदंच क्लीबत्वविधानं परवल्लिङ्गताया एवापवादः । तेन विपथा नगरीत्यत्र बहुव्रीहौ पन्थानमतिक्रान्तातिपथेति तत्पुरुषे च तदभावः । 'द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषुने'ति अतिपथेत्यत्र परवल्लिङ्गताप्रतिषेधात् । नचैवमुत्पथमिति प्रतीकस्य कुगतीति तत्पुरुष इतिकैयटव्याख्यानविरोधः । तत्रोत्कृष्टः पन्था इति विग्रहेण पथ उद्गत इतिविग्रहाभावेन गतिसमासत्वाभावात्परवल्लिङ्गस्यैव प्राप्तेः । तस्मादुत्तरपदार्थप्राधान्ये इदं क्लीबत्वविधानमिति सिद्धम् ॥

# तत्पुरुषोऽनञ्कर्मधारयः ॥१९॥

कर्मधारयशब्दः समानाधिकरणतत्पुरुषपरः । एवंच खण्डशक्तिपक्षे तत्पुरुषस्य पृथक्शक्तिविषयतया नञ्पदेनापि तदन्वयः । तथा च नञ्तत्पुरुषभिन्नः समानाधिकरणतत्पुरुषभिन्नश्च तत्पुरुष इत्यर्थः । केचित्तु नविद्यते नञ्कर्मधारयत्वं यत्र भावप्रधान्यादित्याहुः । अधिकारोऽयम् । ननु संज्ञायामित्युत्तरसूत्रे नास्योपयोगः । संज्ञायां कथान्तस्योशीनरविषयस्य तत्पुरुषातिरिक्तस्य नञ्कर्मधारयरूपस्य वा समासस्यासंभवात् । अनादिसंज्ञाया एव तत्र ग्रहणादिदानींतन्या अनुपादानात् । नाव्युपज्ञोपक्रमामितिसूत्रे षष्ठीतत्पुरुषव्यतिरेकेण तदादित्वासंप्रत्ययात् । नापि च्छायेति सूत्रे षष्ठीतत्पुरुषं विना पूर्वपदार्थबाहुल्यानवबोधात् । नापि सभेत्यत्राशालेति वचनात्संघातार्थस्यैव सभाशब्दस्य ग्रहणात् समूहि-

व्यतिरेकेण समूहानुपपत्त्या षष्ठीतत्पुरुषस्यैव ग्रहणसंभवात् इति चेत्सत्यम् । विभाषासेनेत्यादिसूत्रे तदुपयोगात् । तत्रार्थवशात्षष्ठीतत्पुरुषपर्यन्तमानानुपपत्तेः । तत्पुरुषः किम् । दृढसेनो राजा । अनञ् किम् असेना । अकर्मधारयः किम् । परमसेना । इहाधिकारपाठस्तु मन्दबुद्ध्यनुग्रहार्थमित्याहुः ॥

# संज्ञायां कन्थोशीनरेषु ॥२०॥

कन्थान्तस्तत्पुरुषः क्लीबं स्यादुशीनरदेशोत्पन्नकन्थायाः सञ्ज्ञा चेत् । सुशमस्यापत्यानि सौशमयः तेषां कन्था सौशमिकन्थम् । संज्ञायां किम् वीरणकन्या । उशीनरेषु किम् । दाक्षिकन्था ।

# उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ॥२१॥

उपज्ञायते इत्युपज्ञा । आतश्चोपसर्गे इति कर्मण्यङ् । उपक्रम्यते इत्युपक्रमः । कर्मणि घञ् । नोदात्तोपदेशस्येति न वृद्धिः । उपज्ञाशब्दान्त उपक्रमशब्दान्तश्च तत्पुरुषः क्लीबं स्यात् उक्तधात्वर्थयोः प्राथम्यविवक्षायाम् । पाणिनेरुपज्ञा पाणिन्युपज्ञं ग्रन्थः । नन्दोपक्रम द्रोणः । आचिख्यासाग्रहणात् संबन्धमात्रविवक्षाया देवदत्तोपज्ञो रथः ॥

# छाया बाहुल्ये ॥२२॥

पूर्वपदार्थबाहुल्ये सति छायान्तस्तत्पुरुषः क्लीबं स्यात् । इक्षूणां छाया इक्षुच्छायम् । एकस्येक्षोरुपजीव्यच्छाया प्रसपयोजकत्वात् । इक्षुच्छायानिषादिन्य इति तु जात्यभिप्राय एकत्वे, आसमन्ता-

त्विपादिन्य इति केचित् ।

## सभा राजाऽमनुष्यपूर्वा ॥२३॥

राजपूर्वो मनुष्यभिन्नपूर्वश्च सभाशब्दः क्लीब स्यात् । इनसभम् । ईश्वरसभम् । पर्यायस्यैवेष्यते । इदं च सभाशब्दोत्तरमकारप्रश्लेषात्पर्युदासलभ्यमित्युक्तं प्राक् । नेह । राजसभा । चन्द्रगुप्तसभा । विशेषस्य राजत्वानवच्छिन्नशक्यताकत्वात् न राजमादृश्यम् । नृपतिसभामगमन्नेपमान इति तु नृपतिशब्दस्य गजपतिवद्राजविशेषार्थत्वादिति केचित् । नृपतिशब्दे बहुव्रीहिः । सभाशब्देन कर्मधारयः अनञ्कर्मधारय इत्युक्ते र्नक्लीबत्वमित्यन्ये । अमनुष्यशब्दो रूढ्या रक्षः पिशाचादिपरः । रक्षः सभम् । नेह काष्ठसभा ।

## अशाला च ॥२४॥

शालावाची संघातवाची च सभाशब्दः । राजामनुष्यपूर्वत्वे पूर्वेण पूर्वस्य क्लीबत्वमुक्तम् । संघातार्थमारम्भः । स्त्रीसभम् । स्त्रीसंघात इत्यर्थः । अशाला किम् । अनाथसभा । अनाथकुटीत्यर्थः ।

## विभाषासेनासुराच्छायाशालानिशानाम् ॥२५॥

एतदन्तस्य तत्पुरुषस्य वा क्लीबत्वम् ब्राह्मणसेनम् । ब्राह्मणसेना । यवसुरम् । यवसुरा । कुड्यच्छायम् । कुड्यच्छाया । शोभार्थोऽप्यत्र छायाशब्दः । 'क तन्छयच्छायलवोऽपि पल्लवे' । गोशालम् गोशाला । श्वनिशम् । श्वनिशा । कृष्णचतुर्दशीत्याहुः । तिरश्चामपिफलकामनास्तीति पूर्वपक्षोपन्यासार्थं 'शुनश्च-

तुर्दश्यामुपवसतः पञ्चाम इति शाबरभाष्योक्तेः ।

# परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः २६॥

एतयोरुत्तरपदलिङ्गसदृशं लिङ्गं स्यात् । कुक्कुटमयूर्याविमे मयूरीकुक्कुटाविमौ । अर्धं पिप्पल्या अर्धपिप्पली । उत्तरपदार्थप्रधानस्य स्वयमेव सिद्धेः द्वन्द्वस्योभयपदार्थप्रधानतया पर्यायेण लिङ्गद्वयप्राप्तौ नियमार्थं तत्पुरुषे विध्यर्थं च ।

'द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः' । पञ्चकपालः पुरोडाशः । प्राप्तजीविकः । आपन्नजीविकः । अलञ्जीविकः । निष्कौशाम्बिः । अत्रेदमवधेयम् । अवयवार्थव्यतिरिक्तसमुदायाभावपक्षे द्वन्द्वतत्पुरुषयोरित्यस्य सप्तम्यन्तत्वे द्वन्द्वे तत्पुरुषे च यत्परं तद्वल्लिङ्गं भवतीति सूत्रार्थः । तथा च कार्यिणोऽनुपादानात्परशब्दस्य ससंबन्धिकत्वात्तदाक्षिप्तपूर्वपदस्यैव कार्यप्रसङ्गे मयूरीकुक्कुटावित्यत्र पूर्वपदस्य पुंस्त्वातिदेशे स्त्रीप्रत्ययनिवृत्तिः । कुक्कुटमयूर्यावित्यत्र स्त्रीप्रत्ययश्च स्यात् ।

यदि तु षष्ठीनिर्देशो व्यतिरिक्तश्च समुदाय इत्याश्रित्य समासादन्यवल्लिङ्गमतिदिश्यते उत्तरपदार्थलिङ्गसदृशं समासार्थस्य लिङ्गान्तरमिति तदाश्ववडवावित्यत्र परवल्लिङ्गे प्राप्ते पूर्वपदार्थलिङ्गसदृशं लिङ्गं समासार्थस्य विधीयते नतूत्तरपदार्थस्येति स्त्रीत्वस्यानिवृत्तेराप: श्रवणे प्राप्ते लुग् वक्तव्यः स्यात् । तदुक्तम् । 'समासादन्यादितिचेदश्ववडवयोष्टाब्लुग्वचन'मिति । समासार्थस्य पुंस्त्वेऽपि उत्तरपदार्थस्य स्त्रीत्वानपायात् ।

नचोपसर्जनह्रस्वत्वेन निस्तारः । द्वन्द्वे सर्वेषां प्रथमानिर्दिष्टत्वेऽप्युपसर्जनसंज्ञाविरहात् सर्वपदार्थप्रधानत्वात् उपसर्जनसंज्ञाया आन्वर्थत्वात् । अतएव राज्ञः कुमार्या इत्यत्र न ह्रस्व इति प्रागु-

क्तम् । नच समुदायार्थेऽवयवार्थस्य गुणभावादुपसर्जनत्वमिति वाच्यम् । व्यतिरिक्तसमुदायरूपद्वन्द्वार्थाभ्युपगमेऽपि अवयवार्थानां कार्यसंबन्धात्फलतः प्राधान्यसत्त्वात् ।

अभ्युपेत्य तु ब्रूमः । एवमपि कुक्कुटमयूर्याविति्यत्र दोषनादवस्थ्यम् । अथ तत्र पुनः स्त्रीप्रत्ययादिसिद्धम् । तदुक्तं 'परवल्लिङ्गमिति शब्दशब्दार्थाविति' तन्त्रादिना लिङ्गाभिधायी प्रत्ययो नसंभवति तत्रार्थस्यैवातिदेशः । मयूरीकुक्कुटावित्यादौ उभयसंबन्धे तूभयोः कुक्कुटमयूर्यावित्यादि । एवं चौपदेशिकस्य ह्रस्वः आतिदेशिकस्य श्रवणंचेति सिद्धमिष्टम् । नच पुनर्ह्रस्वापत्तिः । अनुपसर्जनत्वात्तदन्तस्याप्रातिपदिकत्वाच्च । नचैवमपि दत्तागार्ग्यायण्यौ, दत्ताकारीषगन्ध्ये इत्यत्रह्रस्वे कृते समासात्पुनःष्फक्ष्यङौ स्यातामिति वाच्यम् । भस्याढेतद्धिते इति पूर्वोत्पन्नयोर्निवृत्तिसंभवादिष्टापत्तेः । नैवम् दत्ता च युवतिश्चदत्तायुवती इत्यत्रातिप्रत्ययद्वयश्रवणापत्तेः । भसंज्ञाविरहेण तत्र पुंवद्भावानुपपत्तेः । तस्मादुपसर्जनह्रस्वे दोष एवेति स्थितम् । इति प्राप्ते ।

सिद्धान्तः 'समासादन्यलिङ्गमिति चेदश्ववडवयोष्टाब्लुग्वचनं निपातनात्सिद्ध'मिति । विभाषावृक्षमृगेति सूत्रे अश्ववडवेति ह्रस्वोच्चारणेन टापो निवृत्तिर्निपात्यते इति भावः । द्विगुप्राप्तेति वार्तिकमपि प्रत्याख्यातं भाष्ये । तथाहि—परवल्लिङ्गद्वन्द्वस्येत्येव वक्तव्यम् । नचपूर्वकायोऽर्द्धपिप्पलीसादेरसिद्धिः । कर्मधारयाश्रयणेनैकदेशिसमासस्यार्द्धनपुंसकमित्यस्य च प्रत्याख्यानात् । नचषष्ठीसमासनिवृत्त्यर्थं तत् । तस्यापीष्टतायाः प्रागुक्तत्वात् । पूर्वापरेत्यत्रापि षष्ठीसमासस्यानभिधानादेव वारणसंभवादिति ।

# पूर्ववदश्ववडवौ ॥ २७ ॥

द्विवचनमतन्त्रम् । अर्थातिदेशोऽयम् । परवल्लिङ्गतापवादः । अश्ववडवौ । अश्ववडवान् । अश्ववडवैर्जवनैरित्यादि ॥

# हेमन्तशिशिरावहोरात्रे च-च्छन्दसि ॥२८॥

हेमन्तशिशिरावृतूनांपीर्णामि । हेमन्तश्चशिशिरंच हेमन्तशिशिरौ । हेमन्तः शिशिरोऽस्त्रियामिति शिशिरशब्दस्योभयलिङ्गत्वादहेमन्तशिशिराविति न पठनीयमिति केचित् । वस्तुतस्तु नपुंसकशिशिरशब्दस्योत्तरपदत्वेऽपि छन्दसि हेमन्तशिशिरावित्यस्य नियमार्थमेतत् । अहोरात्रे शिवे स्याताम् । द्विवचनमतन्त्रम् । अर्थातिदेशतया निपातनत्वाभावात् । तेन 'पूर्वपक्षाश्चितयोऽपरपक्षाः पुरीषमहोरात्राणीष्टका' 'अहोरात्राणि विदधत्' । न चेदं समाहारद्वन्द्वे सत्येकशेषादेव सिद्धम् । तत्रापि पुंस्त्वस्य वक्ष्यमाणत्वात् । लोके तु दुःखे हेमन्तशिशिरे । अहोरात्रौ पुण्यौ ।

# रात्राह्नाहाः पुंसि ॥२९॥

एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव । रात्रेः पुर्वभागः पूर्वरात्रः । एकदेशिसमासः । 'अहः सर्वैकदेशे' त्यच् पूर्वाह्णः । राजाहः सखिभ्यइति टच् । 'अह्नोह्न एतेभ्य'इत्यह्नादेशः । अह्नोदन्तादितिणत्वम् । द्व्यहः । 'नसंख्यादेः समाहारे' इति अह्नादेशनिषेधः । 'अह्नष्टखोरेव' इतिटिलोपः । परवाल्लिङ्गमित्यस्यैवायमपवादः । सन्निधानात् । परत्वात्तु समाहारे नपुंसकस्य बाधः । अहोरात्रः । नच रात्रादीनां समासोत्तरपदानामेवानेन पुंस्त्वं विधीयते । तदन्तस्य तु परवादित्यनेनैव सिद्धमिति वाच्यम् । समाहारे नपुंसकापत्तेः । तस्य पर-

वदित्येतद्रूपत्वादस्त्वात् । नचेष्टापत्तिः । मासेन स्यादहोरात्रः । ते तु त्रिंशदहोरात्र इत्यादिविरोधात् । द्विरात्रस्त्रिरात्र इत्यादौ तु संख्यापूर्वा रात्रिरिति लिङ्गानुशासने विशिष्टपुस्त्वविधानात् वृत्त्याद्युक्तं पुंस्त्वं चिन्त्यम् । 'अनुवाकादयः पुंसीतिवाच्यम्' । अनुवाकः । शंयुवाकः सूक्तवाकः । वाक्यविशेषार्थकत्वात्क्लीबत्वादारम्भः ।

## अपथं नपुंसकम् ॥३०॥

तत्पुरुषे । अन्यत्र त्वपथा नगरी । समासान्तविशिष्टनिषेधान्नेह । अपन्थाः ।

## अर्धर्चाः पुंसि च ॥३१॥

चकारेण क्लीबानुकर्षः । आदिपरिग्रहार्थं बहुवचनम् । आकृतिगणोऽयम् । तेच गणरत्ने संगृहीतास्तएव चास्माभिरक्षरक्रमेण निबध्यन्ते ।

अर्द्धर्चकूर्चकवचकचा वर्चस्कपङ्कनलीकाः ।
निष्कानीकपिनाकाढकमोदककटकटङ्कपिण्याकाः ॥ १ ॥
मञ्चकपञ्चकदण्डकतण्डकषाष्ठिकचषकसरकशोकाः ।
शाकाशोकौ शुल्क मस्तकवरका विटङ्कपिटकशूकाः ॥ २ ॥
फलकनपुंसकमूलकपातकनखपुङ्खशङ्खाश्च ।
शृङ्गविडङ्गतडागोद्योगनिदाघा ध्वजव्रजाम्भोजाः ॥ ३ ॥
कुञ्जोवाजःकुक्कुटकिरीटकुटकूटकर्वटकपाटाः ।
नटनिकटशकटकंकटपटपेटमठकण्ठकाण्डदण्डानि ॥ ४ ॥
नीडाण्डमण्डखण्डा षाढतृणस्थाणुवेणुरेणुतृणाः ।
तोरणसुवर्णभूषणकार्षापणवारणचरणरणाः ॥ ५ ॥

बाणव्रणापराण्हद्रोणाह्नगहस्तपलितघृतभूताः ।
कुस्तक्ष्वेडितनृत्तप्रयुतत्रमन्तामृतायुता वास्तु ॥ ६ ॥
पुन्नपुंसकयोः शेषार्द्धपिण्याककण्टकाः ।
मोदकस्तण्डकष्टङ्कः शाटकः खर्व्वटोऽर्बुदः ॥ ७ ॥
घातकोद्योगचरकतमालामलका नडः ।
कुष्ट मुण्डं सीधु पुस्तं क्ष्वेडितं क्षेमकुट्टिमम् ॥ ८ ॥
संगम शतमानाभिशंबलाव्ययताण्डवम् ।
कवियं कन्दकार्पासं पारावारं युगन्धरम् ॥ ९ ॥
पूय पत्रीवपात्रीवे यूषं चममचिक्कसौ ।
अर्द्धर्चादौ घृतादीना पुस्त्वाद्यं वैदिकं ध्रुवम् ॥ १० ॥
तन्नोक्तमिह लोकेऽपि तच्चेदस्त्यस्तु शेषवत् ।

पिण्याकंतिलखलि ॥ तण्डकं परिस्तारः—च्छदोगानां ग्रन्थविशेषः । दण्डकं छेदः । खर्व्वटः चतुश्शतग्रामाणा संग्रहस्थानम् अर्बुदोऽक्षिरोगसंख्याभेदौ । पातको गोहत्यादिः । चरकं वैद्यविशेषः । नडोऽन्तः सुषिरं तृणम् । पुस्त मांसशष्कुली ।

द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते ।
शतमानं तु दशभिः धरणैः पलमेवच ॥

इति स्मृतिः । अर्मोऽक्षिरुक् । शंबलः पथि व्ययः । कवियमश्वमुखबन्धनम् । पारमवारंच नदीतीरे । पूयं क्लिन्नास्त्रक् । प्रग्रीवं वातायनम् । पात्रीवं यज्ञोपकरणम् । विष्कसं यवपृष्ठम् । परवल्लिङ्गमित्यतिदेशोपयोगप्रसङ्गात्पाणिनीयलिङ्गानुशासनसूत्राणि व्याख्यायन्ते ।

लिङ्गं । स्त्री । अधिकारसूत्रे एते । आद्यो व्यापकः । द्वितीयः पुंसीत्येतत्पर्यन्तः । ऋकारान्तमातृदुहितृस्वसृयातृननान्दरः । अन्येषामृदन्तानां ङीप्विधानात् । स्वस्रादिसप्तकमध्येच तिसृ-

चतस्र एतत्स्थानिनो स्त्रिचतुरो ऋदन्तत्वाभावात् । पञ्चैवेमे स्त्रीलिङ्गाः ।

**अन्यूप्रत्ययान्तो धातुः** । अनिप्रत्ययान्तेऽवनिरित्यादिः । ऊप्रत्ययान्तश्च भूरित्यादिः । प्रत्ययेति किम् । देवयतेः क्विप् । द्यूः । विशेष्यनिघ्न एव ।

**अशनिभरण्यरणयः पुंसि च** । अन्यन्तत्वान्नित्यस्त्रीत्वप्राप्तौ पाक्षिकपुंस्त्वार्थमारम्भः । इयमयं वाऽशनिरिति ।

**मिन्यन्तः** ॥ मिप्रत्ययान्तो निप्रत्ययान्तो धातुः स्त्रियाम् । भूमिः । ग्लानिः । भवामि भवानीत्यादौ असत्त्वभूतत्वान्नातिव्याप्तिः ।

**वह्निवृष्ण्यग्नयः पुंसि** । पूर्वस्यापवादः ।

**श्रोणियोन्यूर्मयः पुंसि च** ॥ इयमयं वा श्रोणिः ।

**क्तिन्नन्तः** ॥ कृतिरित्यादि

**ईकारान्तश्च** लक्ष्मीरित्यादि

**ऊङाबन्तश्च** कुरूः ॥ विद्या

**य्वाद्यन्तमेकाक्षरम्** ॥ ईदूदन्तं प्राग्वत् श्रीः । भूः । एकाक्षरं किम् । वातप्रमीः ॥

**विंशत्यादिरानवतेः** ॥ तद्गुणसंविज्ञानो बहुव्रीहिः । आङभिव्याप्तौ । इयं विंशतिः । त्रिंशत् चत्वारिंशत् । पञ्चाशत् । षष्टिः । सप्ततिः । अशीतिः । नवतिः ॥

**दुन्दुभिरक्षेषु** ॥ दुन्दुभ्या किल तत्कृतं पतितया यद्द्रौपदी हारिता । अक्षेति किम् । केनास्मत्सिंहनादप्रतिगमितसखो दुन्दुभिस्ताडितोऽयम् ॥

**नाभिरक्षत्रिये** ॥ इयं नाभिः ॥

**उभावन्यत्र पुंसि** ॥ दुन्दुभिर्नाभिश्चोक्तान्यस्मिन्नर्थे पुंसि । नाभिः क्षत्रियः । 'समुच्छ्वसत्पङ्कजकोशकोमलैरुपाहितश्री-

ण्युपनीवि नाभिगिरिरिनिभारानिप्रयोगात्पुंस्त्वमपि । लिङ्गस्य लोकाश्रयत्वात् ।

नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् ।

द्वयोः प्राणिमतीके स्यात् स्त्रियां कस्तूरिकामदे । इति मेदिनी ।

तलन्तः स्त्रियां स्यात् । शुक्लस्य भावः शुक्लता । ब्राह्मणस्य कर्म ब्राह्मणता । ग्रामाणां समूहो ग्रामता । देव एव देवता ।

भूमिविद्युत्सरिल्लतावनिताभिधानानि । भूर्भूमिः । विद्युत्सौदामनी । सरिन्निम्नगा । लता वल्ली । वनिता योषित् ।

यादो नपुंसकम् । सरिदर्थोऽपि यादःशब्दः क्लीबम् ।

भाःस्रुक् स्रग्दिगुष्णिगुपानहः । इयं भा इत्यादिः ।

स्थूणोर्णे नपुंसके च । स्त्रियां क्लीबे च स्युः । स्थूणा । स्थूणम् । ऊर्णा । ऊर्णम् । स्थूणा स्तम्भः । ऊर्णा मेषादिलोम ।

गृहशशाभ्यां क्लीबे । नियमार्थम् । गृहस्थूणम् । शशोर्णं शशलोमनीत्यमरः ।

प्रावृड् विप्रुड् रुट्तृड्विड्त्विषः । स्त्रियां स्युः । विप्रुषः स्पर्शमात्रवेद्या जलकणा इति वाचस्पतिमिश्राः ।

दर्विविदिवेदिखनिशान्यश्रिवेशिकृष्योषधिकट्यङ्गुलयः । पक्षे ङीप् । दर्वी । दर्विरित्यादि ।

तिथिनाडिरुचिवीचिनालिधूलि(किकि)केलिछविरात्र्यादयः । इयं तिथिरित्यादि । तिथयो द्वयोरित्यमरः । निखिलान्निशिपूर्णिमातिथीन् । इतिश्रीहर्षः ।

शष्कुलिराजिकुट्यशनिवर्ति भ्रुकुटि त्रुटि वलि पङ्क्तयः । एतेऽपि स्त्रियां स्युः ।

प्रतिपदापद्विपत्संपत् शरत्संसत्परिषदुषः संवित्क्षुत्पुन्मुत् समिधः । इयंप्रतिपदित्यादि । उषाः प्रातर्देव-

ता। जगद्वन्द्यां देवीमुषसमिव वंदे भगवतीमिति भवभूतिः।

आशीर्धूः पूर्गीर्द्वारः। इयमाशीरित्यादि।

अप्सुमनःसमासिकतावर्षाणां बहुत्वंच। पुष्पार्थो ऽत्र सुमनःशब्दः। प्रायिकं चैषां बहुत्वम्। एका च सिकता तैलदानेऽसमर्थेति भाष्यम्। समां समां विजायते इति सूत्रम्। वेश्या श्मशानसुमना इव वर्जनीयेति मृच्छकटिकायाम्।

स्रक्त्वक्ज्योग्वाग्यवागूनौस्फिचः। स्पष्टम्।

तृटिसीमासंवध्याः। स्पष्टम्।

चुल्लिवेणि खार्यश्च। स्पष्टम्।

ताराधाराज्योत्स्नादयश्च। शलाका स्त्रियां नित्यम्। नित्यग्रहणमन्येषां क्वचिद्व्यभिचारसूचनार्थम्।

इति स्त्र्यधिकारः

पुमान्। अधिकारोऽयम्। अधिकारान्तरपर्यन्तः।

घञबन्तः। पाकस्त्यागः। करो गरः। भावार्थ एवेदम्। नपुंसकत्वविशिष्टे भावे क्तल्युड्भ्यां स्त्रीत्वविशिष्टे तु क्तिनादिभिर्बाधितत्वेन परिशेषात्। कर्मादौ तु घञाद्यन्तमपि विशेष्यलिङ्गं 'संबन्धमनुवर्तिष्यते इति भाष्यप्रयोगात्।

घाजन्तश्च। विस्तरः। गोचरः। चयः। जयः।

भयलिङ्गभगपदानि नपुंसके। स्पष्टम्।

नङन्तः। यज्ञः। यत्नः।

याच्ञा स्त्रियाम्। पूर्वापवादः।

क्यन्तो घुः। किप्रत्ययान्तो घुसंज्ञो धातुः पुंसि। आधिः। निधिः। उदधिः। क्यन्तः किम्? दानम्। घुः किम्? जज्ञिर्बीजम्।

इषुधिः स्त्री च। पूर्वस्यापवादः।

देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुज-

कण्ठखड्गशरपङ्काभिधानानि । एतत्पर्यायाः पुंसि । देवाः । अमराः । असुरा दैत्याः । आत्मा क्षेत्रज्ञः । स्वर्गः नाकः । गिरिः पर्वतः । समुद्रोऽकूपारः । नखः कररुहः । केशः कचः । दन्तः दशनः । स्तनः कुचः । भुजो दोः । कण्ठः गलः । खड्गः करवालः । शरो मार्गणः । पङ्कः कर्दमः इत्यादिः ।

**त्रिविष्टपत्रिभुवने नपुंसके** । स्वर्गपर्यायत्वेन प्राप्तपुंस्त्वापवादः ।

**द्यौःस्त्रियाम्** । द्योदिवोस्तन्त्रेणोक्तिः ।

**इषुबाहूस्त्रियाञ्च** । चात्पुंसि ।

**बाणकाण्डौ नपुंसकेच** । प्राग्वत् । नान्तः । राजा । तक्षा । अपवादो वक्ष्यते ।

**क्रतुपुरुषकपोलगुल्फमेघाभिधानानि** । क्रतुर्यज्ञइत्यादि

**अभ्रं नपुंसकम्** । मेघनामत्वेन प्राप्तपुंस्त्वापवादः ।

**उकारान्तः** । प्रभुः । इक्षुः । विशेषवचनाभावे चेदम् ।

**धेनुरज्जुकुहूसरयुतनु करेणु प्रियंगवः स्त्रियाम्** ।

**समासे रज्जुः पुंसिच** । कर्कटरज्ज्वा । कर्कटरज्जुना ।

**श्मश्रुजानुवसुस्वाद्वश्रुजतुत्रपुतालूनि नपुंसके**

**वसुचार्थवाची** । तेन वसुर्मयूखाग्निधनाधिपेषु इत्यादौ पुंस्त्वम् ।

**मद्गुमधु शीधुसानुकमण्डलूनि नपुंसकेच** । चात्पुंसि । **रुत्वन्तः** । मेरुः । सेतुः ।

**दारुकशेरुवस्तुमस्तूनि नपुंसके** । पूर्वापवादः ।

**प्राग्रश्मेरकारान्तः** । रश्मिदिवसाभिधानामितः प्राक् अकारान्त इत्यधिकारः ।

**कोपधः** । स्तबकः कल्कः ।

**चिबुकशालूक प्रातिपदिकांशुकोल्मुकानि नपुंसके।** पूर्वापवादः। कण्टकानीकसरकमोदक चषकमस्तक पुस्तक तटाक निष्क शुष्कवर्चस्क पिनाक भाण्डक पुलाकानि नपुंसके च।

**टोपधः।** अकारान्तत्वे सति टोपधः पुंसि। घटः। पटः। किरीटमुकुटललाटवटवीट शृंगाट कराट लोष्टानि नपुंसके। कुटकूटकवाटकर्पट तटनिकटकीटकटानि नपुंसके च। चात्पुंसि।

**णोपधः।** गुणः। पाषाणः।

**ऋणलवणपर्णतोरणरणोष्णानि नपुंसके।** पूर्वापवादः। कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च।

**थोपधः।** रथः। **काष्ठपृष्ठरिक्थोक्थानि नपुंसके।**

**काष्ठा दिगर्थास्त्रियाम्।** इमाः काष्ठाः। तीर्थप्राथयूथगाथानि नपुंसके च।

**नोपधः।** इनः। फेनः। जघनाजिन तुहिन कानन वृजिन विपिन वेतन शमनमिथुनश्मशानरत्ननिम्नचिह्नानि नपुंसके। पूर्वापवादः। मानयानाभिधान नलिनोद्यानशयनासनस्थान चन्दनालानसमानवसनभवनसंभावनविभावन विमानानि नपुंसके च।

**पोपधः।** यूपः। दीपः। पापरूपोडुप तल्पशिल्पपुष्पशष्प समीपान्तरीपाणि नपुंसके। पूर्वापवादः।

**शूर्पकुतपकुणपद्वीपविटपानिनपुंसकेच।** शूर्पः इदं शूर्पमित्यादि

**भोपधः।** स्तम्भः कुम्भः

**तलभं नपुंसकम्।** पूर्वस्यापवादः।

**जृम्भं नपुंसकेच।** **मोपधः।** सोमः। भीमः।

**रुक्म सिध्मयुग्मेध्मगुल्माध्यात्म कुङ्कुमानि नपुं-**

सके । पूर्वापवादः ।

संग्रामदाडिमकुसुमाश्रम क्षेमक्षौमहोमोद्दामानि नपुंसकेच । योपधः । समयः । हयः ।

किसलयहृदयोत्तरीयाणि नपुंसके । गोमयकषाय-

मलयान्वयाव्ययानि नपुंसकेच । रोपधः । क्षुरः । अङ्कुरः ।

द्वाराग्रस्फारतक्रचक्रवप्रक्षिप्रक्षुद्रच्छिद्र नारतीरदूरकृच्छ्ररन्ध्राश्रश्वभ्र(ग)भीर तिमिरक्रूरविचित्रकेयूरकेदारोदर शरीरकन्दर मन्दारपञ्जरजठराजिरवैरचामरपुष्करगह्वरकुहरकुटीरकुलीरचत्वार काश्मीरनीराम्बरशिशिर तन्त्रमन्त्रक्षेत्रमित्रकलत्रचित्रसूत्रव क्त्रनेत्रगोत्राङ्गुलित्रभलत्रास्त्रशास्त्रवस्त्र पत्र पात्रक्षेत्राणि नपुसके । पूर्वापवादः ।

शुक्रमदेवतायाम् । इदं शुक्रं रेतः ।

चक्रवज्रान्धकार सारवारपारक्षीरतोमर शृङ्गारभृङ्गारमंदारोशीरतिमिरशिशिराणिनपुंसकेच । सोपधः । वत्सः । वायसः । महानसः ।

पनसबिसबुस साहसानि नपुंसके । चमसांसरसनिर्यासोपवासकार्पासवास मास कांसमांसानि नपुंसकेच । कंसं चाप्राणिनि । कंसोऽस्त्री पानभाजनम् । प्राणिनि तु कंसो राजा ।

समाप्तोऽकारान्ताधिकारः ।

रश्मिदिवसाभिधानानि । एतानि पुंसि । रश्मिः मयूखः । दिवसः । घस्रः ।

दीधितिः स्त्रियाम् । पूर्वापवादः ।

दिनाहनी नपुंसके । तद्वत् ।

मानाभिधानानि । कुडवः । प्रस्थः ।

द्रोणाढकौ नपुंसकेच । इदं द्रोणम् अयं द्रोणः ।

खारीमानिके स्त्रियाम् । इयं खारी । इयं मानिका ।

दाराक्षतलाजासूनां बहुत्वंच । एते वयमिमे दाराः ।

नाडयपजनोपपदानि व्रणाङ्गपदानि । अयं नाडीव्रणः । अपाङ्गः जनपदः । उक्तस्थले क्लीबत्वनिवृत्त्यर्थं सूत्रम् ।

मरुद्गरुत्तरदृत्विजः अयं मरुदित्यादि ।

ऋषिराशिदृतिग्रन्थिकृमिध्वनिबलिकौलि मौलिरविकविकपिमुनयः । ध्वजगजमुञ्जपुञ्जाः ।

हस्तकुन्त व्रातवातदूतधूर्तसूतचूतमुहूर्ताः । मुहूर्तोऽस्त्रियामित्यमरः ।

खण्डमण्डकरण्डवरण्ड तुण्डगण्ड मुण्डपाखण्ड शिखण्डाः ।

वंशांशपुरोडाशाः । पुरोदाश्यते इति पुरोडाशः । निपातनाड्डत्वम् ।

हृदकन्दकुन्दबुद्बुदशब्दाः । अर्घपाथिमथ्यृभुक्षिस्तम्बनितम्बपूगाः । पल्लव पल्वल कफरेफ कटाहनिर्व्यूहमठमाणि तरङ्गतुरङ्गगन्धस्कन्धमृदङ्ग सङ्ग समुद्रपुंरवाः ।

सारथ्यतिथिकुक्षिबस्ति पाण्यञ्जलयः । इति पुंल्लिङ्गाधिकारः ।

नपुसकम् । अधिकारोऽयम् ।

भावे ल्युडन्तः । हसनम् । भावे क्विप् । इध्मव्रश्चनः । कुठारः ।

निष्ठा च । भाव इत्यनुवर्तते । हसितम् । गीतम् ।

त्वतल्ष्यञौ तद्धितौ । शुक्लत्वं । शौक्ल्यम् । षित्वसामर्थ्यात्पक्षे स्त्रीत्वम् । चातुर्यम् । चातुरी । सामग्र्यम् । सामग्री ।

कर्मणिच ब्राह्मणादिगुणवचनेभ्यः । ब्राह्मणस्य कर्म ब्राह्मण्यम् ।

यत्यढक्यगञण्वुञ्छाश्च । भावकर्मणोरनुवृत्तिः ।

स्तेनाद्यत् । स्तेयम् ।

सख्युर्यः । सख्यम् ।

कपिज्ञात्योर्ढक् । कापेयम् ज्ञातेयम् ।

पत्यन्तपुरोहितादिभ्यो यक् । आधिपत्यम् ।

प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् औष्ट्रम् । औद्गात्रम् ।

युवादिभ्योऽण् । द्वैहायनम् ।

द्वन्द्वमनोज्ञादिभ्यो वुञ् । पैतापुत्रकम् । मानोज्ञकम् ।

हौत्रादिभ्यः । अच्छावाकीयम् ।

अव्ययीभावः । अधिस्त्रि । 'द्वन्द्वैकत्वम्' । पाणिपादम् ।

अभाषायां हेमन्तशिशिरावहोरात्रेच । अनञ्कर्मधारयस्तत्पुरुषः । अधिकारोऽयम् ।

अनल्पे छाया शरच्छायम् ।

राजामनुष्यपूर्वा सभा । इनसभमित्यादि ।

सुरासेनाच्छायाशालानिशास्त्रियांच ।

शिष्टः परवत् । अन्यस्तत्पुरुषः परवल्लिङ्गः स्यात् ।

रात्राह्नाहाः पुंसि । अपथपुण्याहे नपुंसके ।

संख्यापूर्वारात्रिः । सख्येति किम् । सर्वरात्रः ।

द्विगुः स्त्रियांच । पञ्चमूली । त्रिभुवनम् ।

इसुसन्तः । हविः । धनुः ।

अर्चिः स्त्रियां च । इयमिदं वाऽर्चिः ।

च्छदिः स्त्रियामेव पटलं छदिरित्यमरः । साहचर्यात्क्लीबे इतित्वमरव्याख्यातारः ।

मुखनयनलोहवनमांसरुधिरकार्मुक विवरहल धनान्नाभिधानानि । मुखम् । आननम् । नयनम् । लोचनमित्यादि ।

सीरार्थौदनाः पुंसि । वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च । अटवी स्त्रियाम् ।

लोपधः । कुलम् । कूलम् । स्थलम् ।

तूलोपलतालकुसूलतरल कवलदेवलवृषलाः पुंसि । अयं तूलः ।

शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालवालनिबलपलगलाविडालाखिलशूलाः पुंसि च ।

शतादिःसंख्या । शतम् । सहस्रम् । शतादिरिति किम् । एको द्वौ बहवः । पूर्वपदभ्रमनिरासार्थं संख्यापदम् । शतशृङ्गो नाम पर्वतः ।

शतायुतप्रयुताः पुंसि च ।

लक्षाकोटी स्त्रियाम् । कियती पञ्चसहस्री कियती लक्षाऽथकोटिरपि कियती । 'वा लक्षा नियुतं च तदित्यमरात्क्लीबेऽपि लक्षम् ।

शङ्कुः पुंसि । सहस्रः क्वचित् ।

मन्द्व्यच्कोऽकर्तरि । मन्नन्तो द्व्यच्कः क्लीबे न तु कर्तरि । चर्म । वर्म । द्व्यच् किम् । अणिमा । महिमा । अकर्तरि किम् । ददाति दामा ।

ब्रह्मन् पुंसि च । नामलोमनी नपुंसके । सपञ्चार्थम् ।

असन्तो ह्यच्कः ॥ यशः । मनः तपः । ह्यच्किम् चन्द्रमाः ॥

अप्सराः स्त्रियाम् ॥ त्रान्तं । पत्रम् । छत्रम् ॥

यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव ॥ भृत्रामित्र[छात्रपुत्रमन्त्र]वृत्रमेढ्रोष्ट्राः पुंसि ॥ तस्यमित्राण्यमित्रास्ते इति माघः ॥

पत्रपात्रपवित्रसूत्रच्छत्राः पुंसिच॥ बलकुसुमयुद्धपत्तनरणाभिधानानि ॥ पद्मकमलोत्पलानि पुंसिच । वापुंसिपद्ममित्यमरः ॥ पद्माह्निमेप्रावृषिखञ्जरीटानिति श्रीहर्षः ॥

आहवसंग्रामौ पुंसि ॥ आजिः स्त्रियामेव । फलजातिः । फलवाची शब्दः क्लीबे । आमलकम् । आम्रम् ॥

वृक्षजातिः स्त्रियामेव । क्वचिदेवेदम् । हरीतकी ॥

वियज्जगच्छकन् कृषत् पृषत् शकृत् यकृद्दश्विन्तः नवनीतावतानृतामृतनिमित्तवित्तपित्तव्रतरजतवृत्तपलितानि ॥ श्राद्धकुलिशदैवपीठकुण्डाङ्काङ्गदधिसक्थ्याज्यसस्यदारूकाशकणवबीजानि दैवं पुंसिच ॥ धान्याज्यसस्य रूप्य कुप्यपण्याधिष्ण्यहव्यकव्यकाव्यसत्यापत्यमूल्यशिक्यकुड्यहर्म्यतूर्यसैन्यानि ॥ द्वन्द्ववर्हदुःखबाडिशपिच्छबिम्बकुटुम्बशरवृंदारकाणि ॥ अक्षमिन्द्रिये ॥ इति नपुंसकाधिकारः ।

स्त्रीपुंसयोः । गोमणियष्टिमुष्टिपाटलिशाल्मलित्रुटिमषिमरीचयः ॥ मन्युसिन्धुकर्कन्धु किष्कुकण्डुरेणवः ॥ गुणवचनमकारान्तं नपुंसकंच ॥ त्रिलिङ्गमिति फलितार्थः । पटु, पटुः, पट्वी ॥

अपत्यार्थतद्धिते ॥ औपगवः ॥ औपगवी ॥

इति स्त्रीपुंसाधिकारः ॥

पुंनपुंसकयोः घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः ॥ शृङ्गार्घनिदाघोद्यमशल्यदृढाः ॥ व्रजकुञ्जकुथकूर्चपुच्छदर्पार्भार्द्धर्चदर्भपुच्छाः ॥ कबन्धौषधायुधान्धाः ॥ दण्डमण्डखण्डशवसैन्धवपार्श्वाकाशकुशकाशांकुशकुलिशाः ॥ शलाकायां कुशा । अयोविकारः कुशी ।

गृहमेहदेहपट्टपटहाष्टापदाम्बुदककुदाश्च ॥

इति पुंनपुंसकाधिकारः ॥ अविशिष्टलिङ्गम् ॥ अव्ययम् ॥ कतियुष्मदस्मदः । ष्णान्तासंख्या ॥ शिष्टा परवत् ॥ षान्तनान्तभिन्ना संख्या विशेष्यालिङ्गा ॥

गुणवचनं च । धर्मिलिङ्गमित्यर्थः ॥

कृत्याश्च ॥ करणाधिकरणयोर्ल्युट् ॥ सर्वादीनि सर्वनामानि ॥ स्पष्टार्थेयं त्रिसूत्री । इति पाणिनीयलिङ्गानुशासनं समाप्तम् ॥



प्रकृतमनुसरामः

# इदमोऽन्वादेशेऽशनुदात्त स्तृतीयादौ ॥३२॥

अन्वादेशविषयस्येदंशब्दस्य तृतीयादावनुदात्तोऽशादेशः स्यात् एकस्मिन् विधावुद्देश्यत्वेनोपात्तस्य विध्यन्तरेऽप्युपदेशोपादानमन्वादेशः । पश्चात्कथनमात्रस्य तथात्वे देवदत्तं भोजय इमंच यज्ञदत्तमित्याचक्ष्यमाणस्यैनादेशस्य प्रसङ्गात् । तत्र प्रत्यासत्त्या इदमैव कथितस्यानुकथनमेव तथेतिभ्रान्तिनिरासार्थम्—अन्वादेशश्च कथितानुकथनमात्रमिति भाष्यम् । तेन शब्दान्तरेणेदमा वेति नाग्रहः । अतएवैकस्याभिधेयस्य पूर्वशब्देन प्रतिपादितस्य द्वितीयं प्रतिपादनमन्वादेश इति वृत्तावुम् । उद्देश्यत्वञ्च तत्कोटिप्रवेशसाधारणम् । वन्यद्विपेनोन्मथितात्वगस्य, अथैनमद्रेस्तनयाशुशोचेत्यत्रास्येत्यस्योद्देश्यत्वविशेषणत्वात् । अथ कथं भीरुरयं त्वमेव तादिमं रात्रे गृहं प्रापयेति ।

अत्राहुः—तदमुमिति अदःशब्द एव पाठ्यइति । अन्ये तु भीरुरयमिति न विधिः किन्त्वनुवाद इति ।

तन्न । पर्वतोवह्निमानित्यत्र वह्नेरिव निषयताविशेषस्यैवात्र विधिपदार्थत्वादज्ञातज्ञापकत्वरूपस्य विधित्वस्याविवक्षितत्वात् । अयं भीरुरित्यानुपूर्व्या इदमुद्देशेन भीरुत्वस्य विधेयत्वावश्यकत्वात् । अपूर्वं बोधयितुमित्यस्य कोर्थः, सम्बोध्यं बोधयितुमितित्रा यं कंचिदिति वा । नाद्यः । सम्बोधनरहितवाक्ये तदसिद्धेः । तदेनमुल्लङ्घितशासनं विधेरित्यादेरसिद्धेश्च । नान्त्यः । प्रकृतेऽपि तस्य सत्त्वात् ।

तस्माद्वाक्यद्वयस्य परस्परनिरपेक्षत्वे सत्येवान्वादेशः । अत्रापि भीरुत्वस्य तच्छब्देन हेतुत्वप्रतीतेरेकवाक्यत्वान्न तथा । वन्यद्विपेनोन्मथिता स्रगस्येत्यस्य शोचनहेतुत्वेऽपि तस्यशब्दानुपात्तत्वान्नदोष इति केचित् । एतेनायं दण्डो हरानेन । एतमातञ्ङितं विद्यादित्यपि व्याख्यातम् । मर्यादाभिविधौ च य इत्यनेन सहैकवाक्यत्वात् । तदुक्तं वृत्तिकारैः—यत्र किञ्चिद्विधाय वाक्यान्तरेण पुनरन्यदुपदिश्यते सोऽन्वादेशः, इहतु वस्तुनिर्देशमात्रं कृत्वैकमेव विधानमिति । एतेन निरपेक्षत्वान्नान्वादेशत्वमित्यपास्तम् । अनु—पश्चादादेशो विधिरिति निराकाङ्क्षत्वस्य प्रतीयमानत्वात्(१) ।

यत्तु तथापि तदेनमुल्लङ्घितशासनं विधे विधेहि कीनाशनिकेतनातिथिमित्येतद्विरोध इति तन्न । यद्वाक्यापेक्षमन्वादेशत्वं तद्वाक्यार्थमात्रस्यान्वादेश्यवाक्यार्थहेतुत्वे एवान्वादेशत्वाभावात् । तदेनमित्यत्र चानेकवाक्यार्थानां हेतुत्वादिति दिक् ।

हे रोहिणि त्वमसि शीलवतीषु धन्या ।
एनं निवारय पतिं सखि दुर्विनीतम् ।
जालान्तरेण मम वासगृहं प्रविष्टः ।
श्रोणीतटं स्पृशति किं कुलधर्म एषः ।

इत्यत्र स्वयं श्रोणीतटं स्पृशति एनं निवारयेति व्यत्यासेन योज्यम् । आशीविषेण रदनच्छददंशदानमेतेन ते पुनरनर्थतया न गण्यमित्यत्र त्वन्वादेशाविषयत्वमविवक्षितम् । अभून्नृपो विबुधसख इत्यत्रानद्यतनत्ववदित्याहुः ।

ननु टायामोसि चान्वादेशो वक्ष्यते, अन्याः सर्वा हलादय एव विभक्तयः, तत्र इदूपलोपेनैवसिद्धमतोऽनुदात्तत्वमात्रं

(१) गम्यत्वादिति पाठान्तरम् ।

विधेयमिति चेत् । न, साकच्कार्थमादेशारम्भात् । नहि तत्रेऽप्यलोपो लभ्यते । अक इति प्रतिषेधात् । इमकाभ्यां छात्राभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतमिति । शित्करणं तु सर्वादेशार्थम् । अन्यथाऽलोन्त्यस्य स्यात् ।

नचान्त्यादेशे प्रयोजनाभावादेतद्व्यावृत्तिः, सदाद्यत्वेनैव तत्राकारसत्त्वादिति वाच्यम् । आदेशान्तरप्रतिषेधार्थत्वेन सार्थक्यसम्भवात् । मो राजि समः क्वावित्यादिवत् । यद्वाऽकारद्वयात्मकोयमादेशो ऽनेकाल्त्वात्सर्वस्य भविष्यतीति न कर्तव्यं शित्वम् । यद्वाऽनुदात्तत्वमात्रं विधेयम् । विचित्रास्तद्धितवृत्तय इत्यन्वादेशेऽकचोऽनुत्पत्तेः । महाविभाषाधिकारेण व्यवस्थितविभाषाविज्ञानात् । नचाकचं विनाऽज्ञातार्थानवबोधः । आदेशपक्षेऽपि समानत्वात् । प्रकरणादिना तदुपपादने त्वकचमन्तरेणापि तदुपपत्तेः । लाघवस्य सम्भवात् ।

अत्रेदमवधेयम् । अन्वादेशपक्षे आभ्यामिति सर्वानुदात्तम् । सुप्स्वरेण विभक्तेरप्यनुदात्तत्वात् । अन्वादेशत्वाभावे तु अन्तोदात्तम् । ऊडिदंपदाद्यप्पुम्रैद्युभ्य इति विभक्तेरुदात्तत्वात् । नन्वन्वादेशत्वेऽपि उक्तसूत्रेण विभक्तेरुदात्तत्वं स्यात् । नचेष्टापत्तिः । प्रतेबभूविचक्षणशंसामि, आभ्यां गा अनुइत्यादौ तददर्शनात् । मैवम् । अन्तोदात्तग्रहणानुवृत्त्या अन्तोदात्तादिदमादेः परस्या एव विभक्तेरुदात्तविधानात् । अशश्चानुदात्तत्वात् ।

स्यादेतत् । तथापि सावेकाचस्तृतीयादिर्विभक्तिरित्याद्युदात्तत्वं दुर्वारम् । साविति सप्तमीबहुवचनस्य ग्रहणात् ।

यत्तु हरदत्तः । ऊडिदमिति सूत्रेऽन्तोदात्तानुवृत्तिसामर्थ्यान्नात्र सावेकाच इत्यस्य प्रवृत्तिः । अनेन तेन वा उदात्तत्वे त्रि-

शेषाभावात् । नच यदीमेना उशत इत्यत्र शसोऽप्यात्त्या तस्य चरितार्थत्वम् । तत्र सावेकाच इत्यस्याप्रवृत्तेरिति वाच्यम् । ग्रीवायां बद्धोऽपि कक्ष आसानि मत्स्यं नदीन उदमिक्षियन्तमित्यादिवारणायएकाच इत्यस्यावश्यमनुवर्त्तनतया तत एव सिद्धेः । अन्तोदात्तानामेवासन्नित्यादीनामादेशविधौ पाठात् । यद्वा साविति प्रथमैकवचनमेव ग्राह्यम् । नच त्वयेत्यत्रातिप्रसङ्गः । नगोश्वन्सावर्णेति प्रतिषेधात् । शेषलोपपक्षेऽलोप इति पक्षे सावेकाच्त्वाभावाच्च । रूपविवक्षायां प्रयोजनाभावादेभिरित्यादौ प्राप्तिरेव नास्तीति ।

तच्चिन्त्यम् । आभ्यामित्येतद्व्यावृत्त्यैवान्तोदात्तानुवृत्तेरुपक्षीणत्वात् । नहि तत्र सावेकाच इत्यस्य प्रवृत्तिः । सप्तमीबहुवचने एषु इत्यत्र ए इतिरूपं तस्याभ्यामित्यत्राभावात्, तथाच एभिरग्ने सुन्वन्तिसोमान्पिबासि त्वमेषामित्यादौ एइति रूपसत्त्वाद्विभक्ते रुदात्तत्वप्रसङ्गः स्यादेव । अन्ये त्वन्वादेशेऽशमुदाहरन्ति । सप्तमीबहुवचनेएष्विति अशादेशे भवत्येकाच् । प्रथमैकवचने त्वयमेकाच् नभवतीति स्वराप्रसङ्गइति कैयटग्रन्थानुसारादिष्टापत्तिर्वैदिकपाठविरोधात् । द्वितीयसमाधानमप्ययुक्तम् । रूपाविवक्षायां दोषाभ्यां स्वाहेत्यादौ तैत्तिरीयके मध्योदात्तविरोधापत्तेः । प्रथमैकवचने तस्यैकाच्त्वात् । इन्द्रो जातो वसितस्य राजेत्यत्रान्तोदात्तत्वानुपपत्तेश्च । यानितिरूपस्य षष्ठ्यामभावात् । सप्तमीबहुवचनग्रहणे तु यादिति तकारान्तप्रकृतिरूपस्य षष्ठ्यामपि सत्त्वात्सिद्धं विभक्तेरुदात्तत्वमिति ।

अत्रदीक्षिताः—सावेकाच इत्यत्राप्यन्तोदात्तग्रहणमनुवर्तनीयमतोऽन्वादेशे आभ्यामेभिरित्यादौ नोदात्तत्वप्रसङ्गः । वृत्तिकारादिभिस्तदनुक्तावपिफलानुरोधेन तदनुवर्तने बाधकाभावात् ।

# एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ॥३३॥

अन्वादेशविषयस्यैतदोऽश्स्यात् सचानुदात्तस्त्रतसोः परतस्तौ चानुदात्तौ स्तः । एतस्मिन् ग्रामे सुखं वसामः, अथो अधीमहे ऽतो न गन्तास्मः । त्रतसोः प्रत्ययस्वरेणोदात्तत्वमाभूदित्यनुदात्तारम्भः ।

ननु त्रतासिलोः कृतयोः प्रकृतेर्लित्स्वरेणोदात्तत्वे शेषनिघातेनानुदात्तश्चतयोर्भविष्यतीति त्रतसौचानुदात्तावित्यंशो न कार्य इति चेत् । न, लित्स्वरस्य परत्वेऽपि नित्यत्वादनुदात्तस्यैव प्रसङ्गात् । कृताकृतप्रसङ्गित्वेन तस्य नित्यत्वात् । लित्स्वरस्त्वनुदात्ते कृते नावर्तते । अनुदात्तविधानसामर्थ्यात् । ततश्च पूर्वस्य उदात्तभाविनो विरहे त्रतसोः यथाप्राप्तः प्रत्ययस्वर एव यथा स्यात् । अपवादनिर्मुक्ते उत्सर्गस्य प्रवृत्तिनियमात् । अत एव गोः पदप्रं वृष्टोदेव इत्यत्र वर्षप्रमाणऊलोपश्चास्यान्यतरस्यामिति णमुल ऊकारलोपस्य च सहविधानात् लित्स्वराभावे प्रत्ययाद्युदात्तत्वे सति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तंपदमिति सिद्धान्तः । तस्मादवश्यारभ्यमनुदात्तत्वम् ।

# द्वितीयाटौस्स्वेनः ॥३४॥

द्वितीयायां टापि ओसोश्चेदमेतदोरेनादेशः स्यादन्वादेशविषये । इमं छात्रं छन्दोऽध्यापय, एनं व्याकरणमध्यापयेत्यादि । एतं छात्रं छन्दोऽध्यापय, अथो एनं व्याकरणमध्यापयेत्यादि ।

यद्यपि पूर्वसूत्रे इदमित्यस्य नानुवृत्तिः तथाप्यत्र स्थानि-

विशेषानुपादानादनन्वादेश्ये तस्मिन्नपेक्षालक्षणेनाधिकारेण पूर्वसूत्रोपात्तयोरिदमेतदोरनुवृत्तेः स्थानित्वसिद्धिः । एतयातं ङित्वं विद्यात्, अयं दण्डो हरानेन इत्यादौ तु यथादेशस्तथा व्याख्यातम् । तथाचैतच्छब्दस्य पूर्वोक्तार्थचतुष्टयपराकारपरामर्षकत्वात् ङिद्विधावुद्देश्य परामर्शकत्वमेव नास्ति । उभयाभिन्नार्थे ङित्वमित्यस्यैव चतुर्थचरणानुसारेणार्थसिद्धत्वात् । अयं दण्ड इत्यत्रापि इदमुद्देशेन दण्ड एव विधेयः ।

तथा च पूर्वविधावुद्देश्यत्वेन दण्डस्यानुपादानान्नान्वादेशत्वम् । अतएव पूर्वस्मिन् विधावुद्देश्यत्वेनोपात्तस्येत्युक्तम् । नच तत्र मानाभावः । भाष्याद्युदाहृतस्योक्तप्रयोगस्यैव तथात्वात् ।

अथ कथं 'शोणं पदप्रणयिनं गुणमस्य पश्य किंचास्य सेवनपरैव सरस्वती या । एनं भजस्व सुभगे भुवनाधिनाथं के वा भजन्ति तमिमं कमलाशयाने'ति । नचान्वादेशमादाय द्वितीयस्यनान्वादेशत्वमिति वाच्यम् । अन्वादेशलक्षणस्य साधारण्यात्तथाकल्पने मानाभावात् । नच विध्यर्थकप्रत्ययान्तपदघटितवाक्ये एव तादिति वाच्यम् । मानाभावात् । अथैनं प्रत्यबोधयदित्यादिप्रयोगाविरोधाच्च ।

उच्यते तत्रेदंशब्दस्योद्देश्यपरामर्षकत्वाभावात्, तच्छब्देनैव निर्दिष्टत्वात् । नच वैयर्थ्यम् । संभेदे[१] तदभावात् । अत एव 'योविकल्पमिदमर्थमण्डलं पश्यतीश निखिलं भवद्वपुः । आत्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भय'मित्यत्र इदंशब्दस्य तच्छब्दसमानार्थकत्वं काव्यप्रकाशादावङ्गीकृतं एवं 'यत्त्वदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपते. । दीव्यताक्षैस्तदा तेन नूनं तदपि हारितम्, ॥ 'करवाल करालदोः सहायो युधि यो-

(१)सभेदे नान्यतर वैयर्थ्यमिति न्यायात् ।

ऽसौ विजयार्जुनैकमल्लः । 'यदि भूपतिना स तत्र कार्ये विनि- युज्येत ततः कृतं कृतं स्यात्' । इत्यादौ यच्छब्दाव्यवहितोत्तरव- र्तिनोस्तददसोरपि उद्देश्यमात्रसमर्पकत्वमित्यप्युक्तम् । एतेन त्व- मेव तमिममित्यपिव्याख्यातम् । एकपद्येन योजयितुमशक्यत्वा- त् । नचविनिगमकाभावः । प्राथम्यस्यैव तथात्वात् इमं प्रसिद्धं । यः पूर्वमुक्तस्तं वरुण केचन भजन्तीत्यर्थात् । एतेन 'विबुधैरसि यस्य दारुणैरसमाप्ते परिकर्मणि स्मृतः । तमिमं कुरु दक्षिणेतरं चरणं निर्मितराग मे हिमे' इति कुमारप्रयोगः । 'तमिमं ज्योति- ष्टोमादिभिरिष्टै'रिति कुसुमाञ्जलिश्च व्याख्यातः । अतएव 'तमेतं वेदानुवचनेन विविदिषन्ती'ति बृहदारण्यकं सङ्गच्छते । 'तमा- त्मेत्येवोपासीतेत्यारभ्येत्येषसेतुर्विधरण' इत्यन्तैः सूत्रादिभिः उक्तम् । एत बुद्धेः साक्षिणमिति व्याख्यातत्वाच्च ।

'नपुंसकैकवचने एनदिति वक्तव्यम्' । अन्यथाऽतोमित्यम्भावे एन- मित्यापत्तेः कुण्डमानय प्रक्षालयैनत्परिवर्त्तयैनत् । नन्वेवंमत्रा- प्येनत् एव वक्तव्यः त्यदाद्यत्वेनपुंलिंगएनमित्यस्यक्लीवसाधार ण्येनएनौएनान् एने एनानीत्यस्यचसिद्धेरितिचेत् न एनच्छ्रितकः त्यस्यचेष्टत्वात् अंतरङ्गानपिविधीन्बहिरङ्गोलुग्बाधतइतित्यदाद्यत्वं बाधित्वालुक्प्रवृत्तौप्रत्ययलक्षणनिषेधात्त्यदाद्यत्वस्याप्रवृत्तेः ।

अत्रभाष्यं 'यथालक्षणप्रयुक्ते' इति प्रयोगानुपलम्भे लक्ष- णानुसारेण संस्कारप्रवृत्तिः तत्र नलुमताङ्गस्येत्यत्रांगाधिकार- निर्देशे तद्बहिर्भूते एतदादेशविधौ प्रत्ययलक्षणत्वादेनच्छ्रितक इति भाष्यं अथांगसम्बन्धिकार्यमात्रेप्रत्ययलक्षणनिषेधो नत्वं ङ्गाधिका- रविहितत्वाग्रहः तदा एतच्छ्रितक इति भाष्यमिति संप्रदायविदः ।

केचित्तु एतच्छ्रितइत्येवभवति सुपो धातुवितिलुकाएनस्यैनदादे- शस्यबाबाधात् एनदित्यस्यतकारोच्चारणसामर्थ्यादेकपदाश्रय-

त्वेनांतरंगे स्वमोर्लुकि प्रवृत्तावपि बहिरंगे समासलुकि तदप्रवृत्तेः ।

# आर्द्धधातुके ॥ ३५ ॥

ण्यक्षत्रियेतियावदधिकारोयं ननु व्यक्तौ पदार्थे तत्तद्व्यक्ती नां विशिष्य शास्त्रतात्पर्यविषयत्वादार्द्धधातुक इति परसप्तम्याभाव्यं तथाच पूर्वमार्द्धधातुकप्रत्ययोत्पत्तिः ततोवक्ष्यमाणैरादेशैर्भाव्यं अन्यथानिमित्ताभावात् तत्रार्द्धधातुकविशेषाश्रयेषुजग्ध्यादिषुयद्यपिनदोषस्तथापिसामान्याश्रयेषु अस्तेर्भूः अजेर्वी चक्षिङः ख्याञादिषुदोषोदुर्वारः तथाहि भव्यं प्रवेयं आख्येय इति नस्यात् ण्यत्प्रत्ययोत्तरं आदेशेतच्छ्रवणप्रसङ्गात् पूर्वं हलन्तत्वेनयत्प्रत्ययस्यदुर्लभत्वाव नचजातिपक्षमाश्रित्यार्द्धधातुकसामान्यमुपजीव्यं नतुविशेष इति वाच्यं निर्विशेषसामान्याभावात् लव्यंपव्यमित्यादावार्द्धधातुकसामान्ये गुणावादेशयोः कृतयोर्हलंतलक्षणस्यण्यतोदुर्वारत्वाच्च । दित्स्यंधित्स्यमिति आर्द्धधातुकसामान्येअतोलोपकृतेण्यत्प्रसङ्गाच्च नचाविशेषेणजध्यादीन्विधायसार्वधातुकेनेतिनिषेधोविधास्यतेनत्वार्द्धधातुकइत्यधिकार इति वाच्यं सूत्रभेदप्रसङ्गात् ।

उच्यते जातिपक्षएवाश्रयणीयः नचादित्स्यमितिदोषः अचोयदिसूत्रेत्यमज्ग्रहणमजंतभूतपूर्वादपितदर्थमिति वक्ष्यमाणत्वात् नचजातेः परत्वासम्भवः अतएवविषयसप्तम्याश्रयणात् तथाचार्धधातुकविवक्षाया प्रथमतएवादेशादिप्रवृत्तौ पश्चाद्यथानिमित्तं प्रत्ययविशेषाव्यवतिष्ठन्ते बुद्धिस्थत्वं च अभिव्यक्तेप्रत्ययविशेषे आर्द्धधातुकमित्याकारकबुद्धिविषयत्वमेवेति बोध्य । व्यक्तिपक्षेतुआर्द्धधातुकास्वितिपाठितव्यं अर्श आदित्वाद्वा सति सप्तम्या आर्द्धधातुकपरासुशब्दसंहतिषुव्युत्पाद्यमाना-

स्वस्त्यादीनां भ्वादय आदेशाइत्यर्थः। नन्वङ्गाधिकारस्थेआर्द्धधातुकाधिकार एवजग्ध्यादीन्विधायायमधिकारस्त्यज्यतां मैवं जक्षतुः अधिजगेअध्यगीष्ट बभूव विव्यतुः इत्यत्रतत्तदादेशानामाभीयत्वेनासिद्धत्वादुपधालोपाल्लोपत्ववुग्यणामभावापत्तेः । नच तर्हि तेप्यत्रैव विधीयन्तामिति वाच्यम् । गतो गतवानित्यत्रानुनासिकलोपस्य सिद्धत्वादतोलोपापत्तेः । आर्धधातुकोपदेशकाले यदकारान्तमिति व्याख्यायासिद्धत्वत्सूत्रमत्याख्याने तु एक आर्द्धधातुकाधिकारो मास्तु। अङ्गस्यैवाधिकारस्य विषयसप्तमीत्वं परसप्तमीत्वं चेतिज्ञापकबलेनोभयरूपतासम्भवात् ।

# अदोजग्धिर्ल्यप्ति किति ॥३६॥

अदो जग्ध्यादेशः स्यात् । ल्यपि तादौ कितिच । प्रजग्ध्यम् । जग्धः जग्धिः । अन्नमित्यत्रतुन । अन्नाम्म इति निपातनादिति वृत्तिः ।

ननु ल्यबादेशात्पूर्वं क्त्वाप्रत्ययमाश्रित्यैव जग्धिरस्तु किं ल्यपः पृथग्ग्रहणेन । नच परत्वात्पूर्वमेव ल्यप् । प्रकृत्यादेशस्य तकारादिप्रत्ययमात्रापेक्षतयान्तरङ्गत्वात् । ल्यबादेशस्य तु पूर्वपदापेक्षसमासापेक्षत्वेन बहिरङ्गत्वादितिचेत् ।

मैवम् । अन्तरङ्गानपिविधीन् बहिरङ्गो लुग्बाधते इति ज्ञापनार्थत्वात् । तेन प्रधाय प्रस्थायेत्यादौ दधातेर्हिभावं स्थाधातोरित्वं च बाधित्वा ल्यबादेशः । अन्यथाऽन्तरङ्गत्वात्तयोः प्रसङ्गे ल्यबादेशस्योपदेशिवद्वचनमनादिष्टार्थं बहिरङ्गलक्षणत्वादिति वचनमाश्रयणीयं स्यात् । तेन प्रदायेत्यत्र न ददादेशः प्रखन्येत्यत्र जनसनेत्यात्वाभावः, येविभाषेति विकल्पः । प्रकृ-

म्येत्यनुनासिकस्य किझलोरिति दीर्घाभावः, आपृच्छ्य प्रदीव्ये-त्यत्र नशुठाविति बोध्यम् । अत एव व्याघ्रभूतिरवादीत्—

जग्धिविधिर्ल्यपियत्तदकस्मात्सिद्धमदास्ति कितीति वि-धानात् ।

हिप्रभृतींस्तु सदा बहिरङ्गो ल्यब्भवतीति कृतं तदु विद्धि।

जग्धौ सिद्धेऽन्तरङ्गत्वात्तिकितीति ल्यबुच्यते ।

ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम् ।

## लुङ् सनोर्घस्लृ ॥ ३७ ॥

अदेर्घस्लृ आदेशो लुङि सनि च । लृदित्वादङ् । अघस-त् । अत्तुमिच्छति जिघत्सति । सन्यङोरिति द्वित्वम् । हलादिः शेषः । सन्यत इतीत्वम् । कुहोश्चुरिति अभ्यासे जकारः । अ-च्युपसंख्यानम् । प्रात्तीति प्रघसः ।

## घञपोश्च ॥ ३८ ॥

अनयोर्घस्लृ । घासः । प्रघसः । उपसर्गेऽद इत्यप् ।

## बहुलं छन्दसि ॥ ३९ ॥

घस्तां नूनम् । मन्त्रेघसेत्युपधालोपाभावार्थं बहुलोपादा-नम् । आत्तामत्तमध्यतो मेदउद्धृतम् । बहुलं छन्दसीत्यडभा-वः । सग्धिश्चमे । व्याख्यातम् ।

## लिट्यन्यतरस्याम् ॥ ४० ॥

अदो लिटि अयमादेशो वा स्यात् । जघास आद । न-च भ्वादिषु घस्लृ अदने इति स्वतन्त्रोऽपि धातुः तस्य जघासे-

ति, अत्तेश्चादति सिद्धे किमनेनेति वाच्यम् । तस्यामार्वत्रिक-कत्वज्ञापनार्थत्वात् । तथाच यत्र लिङ्गं वचनं वास्ति तत्रैव तस्य प्रयोगो नान्यत्र । तथाहि—पाठः शपि परस्मैपदे लिङ्गम् । घसति । घसतु । अघसत् । घसेत् । लृदित्करणमङि । अघसादित्यादि । अनिट्कारिकासु पाठो वलाद्यार्धधातुके । घस्ता । घत्स्यति इत्यादि । सृघस्यदः क्मरजिति विशिष्योपादानात् घस्मरः । अन्यत्रानभिधानम् ।

## वेञो वयिः ॥ ४१ ॥

वेञो लिटि परे वयिरादेशो वा स्यात् । ऊयतुः । ऊयुः । 'लिटि वयोय'इति यकारस्य संप्रसारणनिषेधः । ववौ, ववतुः । ववुरित्यादि । आदेशाभावपक्षे रूपम् ।

## हनो वध लिङि ॥ ४२ ॥

## लुङि च ॥ ४३ ॥

अत्र वधादेशः । वध्यात् । अवधीत् । विधिलिङस्त्वार्धधातुकत्वाभावान्न । हन्यात् । अकारस्योच्चारणार्थत्वे लुङि अतो हलादेर्लघोरिति हलन्तलक्षणावृद्धिः स्यात् । हन्तीति वधकः । हन्तेर्ण्वुल् । औपसंख्यानिको वधादेशः । तत्रातउपधाया इति वृद्धिः प्राप्ता, जनिवध्योश्चेति यद्यपि निषिद्धा, तत्रापि स्थानिवद्भावाद्धनस्त इति तकारोऽन्तादेशः स्यात् । अवधीदित्यादौ एकाच उपदेशेऽनुदात्तादिति इट्प्रतिषेधश्च स्यात् । इति भाष्ये वार्तिकम् । 'आदेशे वृद्धितत्वप्रतिषेध इड्विधिश्चेति । तथाचोक्तवचनादतिप्रसङ्गसमाधानमिति वार्तिकाभिप्रायः ।

भाष्यकृतस्त्वाहुः—अदन्त एवायम् । तेनातो लोपस्य स्थानिवद्भावाद्धलन्तत्वं नास्तीति वृद्धेरप्रसङ्गः । तत्रमप्यलोन्त्यस्य विधीयमानमकारस्य लुप्तत्वान्न भवति । स्वरविधौस्थानिवत्त्वाभावात् । नापिधकारस्यअल्लोपस्य स्थानिवत्त्वेन धकारस्यान्तत्वाभावात् । स्वोपदेशेऽनेकाच्त्वाच्च नेट्प्रतिषेध इति । अन्यत्स्थानिवत्सूत्रे निर्णीतम् ।

# आत्मनेपदेष्वन्यतरस्याम् ॥४४॥

हनो वधादेशो वा । आत्मनेपदे यो लुङ् तत्परे आर्द्धधातुके । आवधिष्ट । आवधिषाताम् । आवधिषत । आहत । आहसाताम् । आहसत । आङो यमहन इत्यात्मनेपदम् । हनः सिजिति कित्वम् । अनुदात्तोपदेशेति नलोपः । पूर्वसूत्रे योगविभागसामर्थ्यादात्मनेपदेषु लिङि नास्य प्रवृत्तिः ॥

# इणो गा लुङि ॥ ४५ ॥

इण्गतौ इत्यस्यगा इत्यादेशो लुङि । गातिस्थेति सिचो लुक् । अगात् । इणवदिक इतिवक्तव्यम् । अध्यगात् । अध्यगुः । आत इति झेर्जुस् ।

# णौ गमिरबोधने ॥ ४६ ॥

इणो गमिः स्याण्णौ नतुबोधने । गमयति । बोधने तु प्रत्याययति । इणवदिक इति वक्तव्यम् । अधिगमयति । इक् स्मरणे ।

अत्र केचित् । आर्धधातुकबहिर्भूतानामपि कार्याणामानिदेशः । तेनेणोयण इकोऽपि । अधियन्ति । अधीत्य । एति-

स्तुशास्विति क्यबित्याहुः ।

अन्येतु आर्धधातुकीयानामेवातिदेशादियङ्केत्र । अधीयन्ति-अत एव 'ससीतयोराघवयोरधीयन्निति भट्टिरित्याहुः ।

# सनि च ॥ ४७ ॥

इणो गमिः स्यान्नतुबोधने । जिगमिषति । बोधने तु प्रतीषिषति । इह सनि कृतेऽजादेर्द्वितीयस्येति वचनात्सनएव द्वित्वम् । सन्यत इतीत्वम् । आदेशप्रत्यययोरिति षत्वम् । बोद्धुमिच्छतीत्यर्थः । अतिदेशादिकोऽपि । अधिजिगमिषति । कर्मणि तङ् । अज्झनगमां सनीति झलादौ सनि दीर्घः । गमेरिट् परस्मैपदेषु इत्युक्तेरात्मनेपदे तदभावात् । जिगास्यते । अधिजिगास्यते । अत्रादेशगमेरेव दीर्घविधानात्प्रकृतिगमेर्न दीर्घः । जिगंस्यते । सञ्जिगसते ।

# इङश्च ॥४८॥

इङ् अध्ययनेऽस्यगमिः स्यात्सनि । अधिजिगासते । अध्ययनं कर्तुमिच्छतीत्यर्थः ।

# गाङ् लिटि ॥४९॥

इङो गाङ् स्याल्लिटि परे विवक्षिते वा । अधिजगे । नच स्थानिवद्भावादात्मनेपदसिद्धौ ङित्ववैयर्थ्यम् । गाङ्कुटादिभ्य इत्यत्रेणो गादेशस्य ग्रहणं माभूदित्यर्थकत्वात । अन्यथा अगासातां ग्रामौ देवदत्तेनेत्यत्र ङित्वादीत्वप्रसङ्गात् । न च गाङ्तावित्यस्यैव तत्रोपादानम् । तदीयङकारस्यैवात्मनेपदप्रवर्तनेन चरितार्थत्वादादेश ङित्वस्य त्वनन्यार्थत्वेन बलवत्त्वात् ।

अथ सानुबन्धाद्यत्र षष्ठ्युच्चार्यते तत्रेत्संज्ञायामकृतायामेवादेशप्रवृत्तिः। कृतायां वा इत्सञ्ज्ञायां तन्निबन्धनकार्याणि न प्रवर्तन्ते इति ज्ञापनार्थं ङकारनिर्देशः। तदुक्तम्—ज्ञापकं वा सानुबन्धस्यादेशवचन इत्कार्याभावस्येति तेन चक्षिङः ख्याञादेशे नियमात्मनेपदं न भवति किन्तु ञित्वाद्वैकल्पिकमेव। पचमानो यजमान इत्यत्र टितइत्येत्वं न। नन्दना कारका। इत्यत्र युवोरनाकावित्यादेशयोः कृतयोः उगितश्चेति ङीप्, उगिदचामिति नुम् च न भवति। ल्युः कर्तरीत्यमरेण पुस्त्वोक्तेः प्रायिकत्वात्। अत एव विशिष्य सा भीमनरेन्द्रनन्दनेति श्रीहर्षः।

नन्वेवं तस्थस्थमिपां तान्तन्ताम इत्यत्र मिपोऽनुबन्धविशिष्टस्य निर्देशादमादेशस्य पित्वानुपपत्तौ सार्वधातुकमपिदिति ङित्वादचिनवम्, अकरवमित्यादौ क्ङितिचेति निषेधाद्गुणो न स्यात्। माहिस्मचिनवमित्यत्रानुदात्तत्वं च न स्यात्। एवं वेदवेत्थ इत्यत्रापि तिप्सिपोरादेशे गुणो न स्यादिति चेन्न। पकारमपनीय तस्थस्थमिनामित्येव पठनीयत्वात्। णलथलोर्विधौ तिप्सिपोरनुबन्धविशिष्टयोरनुपादानाच्च। अत्र भाष्यम्। ञित्करणसामर्थ्यादेव तङ्विकल्पसिद्धेः। तिङ्ङसिइत्यादौ उपात्तानामेवात्मनेपदानामत्वविधानात्। सिद्धं तु युवोरनुनासिकत्वादिति वक्ष्यमाणत्वात्। ततश्च स्थानिनोरेवोगित्वाभावे तदादेशयोरुगित्वस्य दूरापास्तत्वात्। तस्माद्विशेषणार्थमेवङित्वमितिस्थितम्।

## विभाषालुङ्लृङोः॥ ५०॥

अनयोरिङो गाङ् वा। अध्यगीष्ट। अध्यगीषाताम्। अध्यगीषत। गाङ् कुटेतिङित्वात् घुमास्थागेति इत्वम्। पक्षेऽध्यैष्ट। अध्यैषाताम्। अध्यैषत। अध्यगीष्यत। अध्यैष्यत।

# णौ च संश्चङोः ॥ ५१ ॥

इङो गाङ् वा स्यात् सन्परे चङ्परे च णौ । अधिजिगापयिषति । अध्यापिपयिषति क्रीङ्जीनां णावित्यात्वम् । अध्यजीगपत् । अध्यापिपत् ॥

# अस्तेर्भूः ॥ ५२ ॥

अस्तेर्भूभावः स्यादार्धधातुके । तत्रास्तेः प्रयोगनिवृत्त्यर्थ आरम्भः । भविता । भवितुम् । इन्दामासेत्यादावनुप्रयोगाविधानसामर्थ्यान्न भूभावः । अन्यथाऽभूततद्भावेऽस्तिकृभुयोगे इति पठित्वाऽस्ति प्रत्याहाराद्बहिः कुर्यात् । यथान्यामे मयो यण इति भकारवकारयोर्द्वित्वेऽर्धमात्रागौरवाय । यद्वा कृस्चानुप्रयुज्यत इति वा ब्रूयात् । प्रादुरासबहुलक्षपाच्छविः इत्यादौ तिङन्तप्रतिरूपकमव्ययमखण्डमेव । एतेन प्रादुरासुरथ कामकेलय इत्यपि व्याख्यातम् । आमेत्यसतेरिति वामनः । अस गतिदीप्त्यादानेषु । लुका निर्देशादस्य न भूभावः ॥

# ब्रुवो वचिः ॥५३॥

ब्रूञ् व्यक्तायां वाचि । अस्य वचिरादेश आर्धधातुके ॥ वचपरिभाषणे लुङ् । वच उम् । अवोचत् ॥

# चक्षिङः ख्याञ् ॥५४॥

# लिटि च ॥

अत्र भाष्यम् । ख्शाञ् इत्ययमादेशः । पूर्वत्रासिद्धमित्याधि-

कारे णत्वप्रकरणानन्तरं शस्य यत्वं विभाषा वक्तव्यम् । तथाच तस्यासिद्धत्वात्तन्निमित्तककार्यं न भवति। किन्तु शकारनिमित्तकमेव । चर्त्वस्य तु परत्वात्तस्मिन् कर्तव्ये यत्वं सिद्धमेवेति चर्त्वं न प्रवर्तते इति ख्यातेत्यादि सिद्धम् । यत्वाभावपक्षेतु खकारस्य चर्त्वेन ककारे कृते क्शातेत्यादि सिद्धम् ।

तथाच वार्तिकम् । असिद्धे शस्य यवचनं विभाषेति । तेन सुष्ठुप्रचष्टे सुप्रख्यः । आतश्चोपसर्गे इति कः । सुप्रख्यस्य भावः सौप्रख्यम् । योपधलक्षणो वुञ् न किन्तु ष्यञेव । तथासुप्रख्येन निर्वृत्तो देशः सौप्रख्यः तत्र भव इत्यर्थे सौप्रख्यीयः । धन्वयोपधादिति वुञभावे वृद्धाच्छः । आख्यात इत्यत्र संयोगादेरातो धातोर्यण्वत इति निष्ठानत्वाभावः । पुख्यानमित्यत्र पुमः खय्यम्पर इति रुत्वाभावः । पर्याख्यानमित्यत्र शकारेण व्यवधानात्कृत्यच इतिणत्वाभावः । ख्याप्रकथने इत्यस्यापि तथा लुब्योगाप्रख्यानादिति निपातनात् । नमः ख्यात्रे इत्यत्र स स्थानत्वाभावात् शर्परे इत्यस्यैव प्रवृत्तिः । जिव्हामूलीयस्येयं पूर्वाचार्यसंज्ञा । तस्मात्ख्शाञादेश इति स्थितम् । वर्जने प्रतिषेधो वक्तव्यः । अवसंचक्ष्याः । परिसंचक्ष्याः वर्ज्या इत्यर्थ । असनयोश्चप्रतिषेधः । नृचक्षारक्ष इति वेदे । नृचक्षोरक्ष इति लोके । विचक्षणः । अनुदात्तेतश्च हलादेरिति युच् । बहुलं तणयन्नवधकगात्रविचक्षणाजिराद्यर्थम् । सर्वप्रकरणापेक्षोयमारम्भः। तणि इतिसंज्ञाछन्दसोः पूर्वाचार्यसंकेतः । अन्नम् । अत्र ज ग्ध्यादेशाभावः । वधक इतिण्वुल् । तत्र वधादेशो विधीयते । गात्रम् । इण औणादिके ष्ट्रनि गादेशः । विचक्षण इति ख्याञादेशाभावः । आजिरेत्यत्र वीभावाभाव इत्यर्थः ।

अत्रेदमवधेयम्—ख्याप्रकथने इत्यप्ययदादौ पठ्यते । ससा-

र्वधातुकमात्रविषयः । अन्यथा तस्मान्नमः ख्यात्रे इत्यत्र जिह्वामूलीयस्य दुर्वारतया सस्थानत्वं नमः ख्यात्रे इति वार्तिकस्यासङ्गतिप्रसङ्गात् इति केचित् ।

तच्चिन्त्यम् । तावतापि यत्र जिह्वामूलीयप्रसक्तिस्तादृशसमभिव्याहारे तत्प्रयोगो नास्तीत्येव कल्पयितुमुचितत्वात् । नख्याख्येति नत्वनिर्देशप्रसङ्गाच्च । ख्याप्रकथने इत्यस्यैव प्रतिपदोक्तत्वात्स निषेधो नतु ख्शाञादेशस्य । तत्र यत्वस्य लाक्षणिकत्वादितिकैयटोक्तेश्च । लुब्योगाप्रख्यानादित्यत्र निपातनाणत्वाभाव इति प्रतिपादककैयटग्रन्थविरोधाच्च ।

एतेन नख्याख्येत्यत्र ख्याग्रहणं नकर्तव्यमेवेति निरस्तम् । भाष्यवार्तिककाराभ्यां तथानुक्तत्वात् । एतेनख्याधातुरपि ख्शादियत्वविधिरप्युभयसाधारण इति हरदत्तमाधवादिग्रन्थोप्यपास्तः । चक्षिङमुपक्रम्यैव तद्विधानात्सार्वधातुकेऽपि ख्शादिप्रयोगापत्तेश्च । इष्टापत्तेश्च स्वपरग्रन्थविरुद्धत्वात् । एतेन गोसंख्य इत्यत्र गाः सञ्चष्टे इत्येव विग्रह इत्यपि निरस्तम् । अत एव संपूर्वस्य ख्यातेर्नप्रयोग इति तत्र न्यासकारः । अतएव दृशे विख्येचेति सूत्रे ख्यातेरपि केप्रत्यय इति तेनैवोक्तम् । संख्येतिप्रयोगस्तु आदेशस्येति तदभिप्रायः । एतेन ख्याधातौ नेतिकेचिदिति प्राचीनोक्तिर्व्याख्याता । पुंख्यानमित्यत्रफलैकरूप्यार्थं नप्रत्ययेवेत्यर्थकत्वात् । वुत्रूत्वजिह्वामूलीयानां तुतत्रेष्टत्वात् । रूपद्वये बाधकाभावात् । नचाप्रख्यानादित्यादेशप्रयोगेऽप्युपपत्तेर्ज्ञापकत्वानुपपत्तिः । असनयोश्च निषेधात् । बाहुलके च प्रमाणाभावात् । इति दिक् ।

# वालिटि । ५५ ।

पूर्वोक्तं लिटि वास्यात् । चख्यौ । चक्शौ । चचक्षे । चयो द्वितीयाः शरि पौष्करसादेरिति ककारस्य न खकारः ।

# अजेर्व्यघञपोः । ५६ ।

अज गतिक्षेपणयोः अस्य वीत्यादेशो वा स्यादार्धधातुकविषये घञमपञ्च वर्जयित्वा । विवाय । विव्यतुः । विव्युः । वीभावनिषेधे क्यच उपसंख्यानम् । समज्या । नचापोऽकारमारभ्य क्यपः पकारेणप्रत्याहारात्सिद्धमिति वाच्यम् । संवीतिरित्यत्र वीभावानुपपत्तेः । वस्तुतो वाग्रहणमनुवर्त्य व्यवस्थितविभाषया व्याख्येयम् । तेन प्रवेता, प्रवेतु, प्रवीतोरथः, संवीतिरित्यत्र वीभावः । समाजः उदाजः । समजनं समज्येत्यत्र तदभावः । तेन वलादावार्धधातुके ल्युटिच विकल्पः । प्राजितेत्यपि सिद्धम् । नियन्ता प्राजिता यन्ता सूत इत्यमरः । प्राजनम् । प्रवयणम् । नचैवं वायाविस्यस्य वैयर्थ्यम् । नहि तद्विकल्पार्थम् । अपितु याजिमनीति बाहुलकाद्युचि अजतेर्वीभावविधानार्थम् । तेन वायुरिति सिद्धमिति भाष्यम् । एवं थलादौ आजिथेत्यादि ज्ञेयम् । पूर्वमेव प्रत्ययोत्पत्तेर्हलादित्वाद्यङ् । वेवीयते । यङ्लुक्तु न । लुका विषयापहारादार्धधातुकव्यक्त्यभिव्यक्त्यभावात । संग्रहः कौस्तुभे उक्तः ।

अजेर्वी वेति घञपोः क्यपि चायं न संमतः ।
वलादौ यौ च वान्यत्र नित्यमित्येव निर्णयः ।

आर्धधातुकाधिकारः समाप्तः ।

# ण्यक्षत्रियार्षञितो यूनि लुगणिञोः । ५८ ।

परस्याणिञ्भिन्नस्यापि लुगित्यर्थः । बौधिः पिता । बौधिः पुत्रः । जाबालिः पिता । जाबालिः पुत्रः । औदुम्बरिः पिता । औदुम्बरिः पुत्रः । भण्डिजङ्घकर्णखरकौ वैश्यौ ताभ्यामत इञ् । तदन्तात्फको लुक् । भाण्डिजङ्घिः पिता पुत्रश्च । कार्णखरकिरप्येवम् ।

# पैलादिभ्यश्च ॥ ५९ ॥

युवप्रत्ययस्य लुक् स्यात् पीलाया वेत्यण् । अणो द्व्यच इति फिञ् तस्य लुक् पैलः पिता पुत्रश्च । अन्ये पैलादय इञन्ताः । तेभ्य इञः प्राचामिति लुक्सिद्धावप्यप्रागर्थः पाठः । पैलशालङ्कि, सात्यकि, सात्यंकामि, औदव्रजि, औदमेघि, औदश्वि, औदमज्जि, दैवस्थानि, पैङ्गलि, औदयिनि, मौलिङ्कि, वाणि, सौमनि, औदमानि, औञ्जिह्नयनि, औञ्जिहानि, औदशुद्धि, आकृतिगणोऽयम् ।

तद्राजाच्चाण इत्यन्तर्गणसूत्रम् । तद्राजसंज्ञकादणः परस्य युवप्रत्ययस्य लुक् । द्व्यञ्मगधेत्यण् । अणोद्व्यच इति फिञ् । तस्य लुक् आङ्गः पिता पुत्रश्च ॥

# इञः प्राचाम् ॥ ६० ॥

गोत्रे य इञ् तदन्ताद्युवप्रत्ययस्य लुक् तच्चेद्गोत्रं प्राचाम् । नच प्राचामिति विकल्पार्थम् । अभियुक्तव्याख्यानात् । पन्न प्राप्तं अङ्गारं येन पन्नागारः । तत इञ् । यञिञोश्चेतिफक् । तस्य लुक् । पान्नागारिः पिता पुत्रश्च(१) । प्राचा किम् । दाक्षिः ।

(१) मन्थरा मन्दा एषणा यस्य मन्थरैषण. विरक्तत्वात् मान्थरैषणिः पितापुत्रश्च इति पुस्तकान्तरे पाठोऽधिकः

पिता दाक्षायणिः पुत्रः ॥

# न तौल्वलिभ्यः ॥६१॥

तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य पूर्वेण प्राप्तो लुक् न । तुल्वलस्यापत्यं तौल्वलिः पिता । फक् । तौल्वलायनः पुत्रः । तौल्वालि, तैल्वलि, धाराणि, पाराणि । धारयति पारयतिभ्यां नन्द्यादिल्युः । तत इञ् । दैलीपि, दैवालि, दैवमित्रि, दैवयज्ञि । देवा मित्रमस्य । देवेभ्यो यज्ञमस्येत्यर्थः । प्राणेहति, चापटाकि, आनुहरति, श्वाफल्कि, आनुमति, आहिंसि, आसुरि, आयुधि, नैमिषि, आसिबन्धकि, बैलि, पौष्कि, पौष्करसादि- आनुहारति । पुष्करे तीर्थविशेषे सीदति पुष्करसत् । अनुहरतीत्यनुहरत् । बाह्वादित्वादिञ् । अनुशतिकादित्वादुभयपदवृद्धिः । पौष्यि, वैरकि, वैहति, विलक्षणौकर्णो अस्य वैकार्णिः । कामालि । उपकोशलो ह वै कामलायन इति छन्दोग्योपानिषत् । कारेणुपालि । करेणुं पालयति करेणुपालः । श्रीः ।

इति श्रीसिद्धान्तसुधानिधौ द्वितीयस्य चतुर्थपादे प्रथममाह्निकम् ॥



# तद्राजस्य बहुषु तेनैवास्त्रियाम् ६२

तद्राजप्रत्ययस्य लुक्स्यात्स्वार्थमात्रकृते बहुत्वे नतु स्त्रियाम्। ऐक्ष्वाकः। ऐक्ष्वाकौ। जनपदशब्दात् क्षत्रियादञ् तस्य बहुत्वेलुक् इक्ष्वाकवः। इक्ष्वाकूणां दुरापेऽर्थे इति कालिदासः।

कथं तर्हि ऐक्ष्वाकेषु च मैथिलेषु च फलन्त्वस्माकमद्याशिष इति मुरारिः। अत्राहुः—इक्ष्वाकुषुजनपदेषु भवः। कोपधादण्। अस्य तद्राजत्वाभावान्न लुक् इति। कौरव्याः पशवः। तस्यामेव रघोः पाण्ड्या इत्यादौ कौरव्ये पाण्ड्येच साधव इति व्याख्येयमिति। रघूणामन्वयं वक्ष्ये, ते यूयं रघवः प्रसिद्धमहसो यैः सोपि देवाधिपः। निरुध्यमाना यदुभिः कथञ्चिदित्यादौ तद्राजत्वाभावादपत्यप्रत्ययस्य लोपानुपपत्तावपि तदपत्ये लक्षणेति ग्रन्थकृतः। वंशत्वं जन्यजनकान्यतरत्वम्। अन्यस्य दुर्वचत्वात्। तथाच रघोरपत्यानां जन्यान् जनकांश्च वक्ष्ये। जनकत्वं साक्षात्परम्परासाधारणम्। जनकत्वेन रघुपर्यन्ताना जन्यत्वेन दशरथादीना सङ्ग्रहः। तेषामपि रघोरपत्यत्वात् तज्जनकत्वेनाजस्यापि सङ्ग्रह इति न दोषः।

प्रकृतमनुसरामः। इह बहुपदं बहुवचनपरमर्थपर वेति संशयः। उभयत्र लिङ्गसद्भावात्। तथाहि—तेनैवेति वचनमाद्ये लिङ्गम्। तद्धि प्रियो वाङ्गो येषा ते प्रियवाङ्गाः इत्यत्र लुको वारणार्थम्। नचतत्संभवति। तद्राजस्य बहुत्वे वृत्त्यभावेन लुगप्रसक्तौ तद्वारणायोपायस्यानुपादेयत्वात्। बहुवचनपरत्वे तु तत्र लुक्प्रसक्तिः। तथाच तेनैवेत्येतदुपादानं स्वगयोज्यनिषेधप्रतियोगिप्रसञ्जकत्वेन बहुष्वित्यस्य बहुवचनपरत्वं ग्राहयतीति फलितार्थः,

द्वितीये त्वास्त्रियामिति लिङ्गम् । तद्धि आङ्गाः स्त्रियइत्यत्र-लुकोऽप्रवृत्त्यर्थम् । नचोक्तरीत्या तत्रास्ति लुगापत्तिः । स्त्रीप्रत्यय-व्यवहितत्वेन बहुवचनस्य तद्राजात्परत्वाभावात् । भवति तु बह्वर्थत्वे आङ्गीशब्दवाच्यानां स्त्रीणां बहुत्वादिति पूर्ववदर्थपरत्वग्राह-कत्वमिति । तत्राद्यः पक्षः बहुवचने परे लुगित्ययुक्तः । अन्यथा ह्यास्त्रियामिति निषेधः कर्तव्य इति गौरवम् । एतद्रीत्या तु स्त्रीप्रत्यय-व्यवधानादेव तदप्रवृत्तौ निषेधानुपयोगात् । नचाम्बष्ठ्यस्याप-त्यानि बह्व्यः स्त्रियः आम्बष्ठ्याः । वृद्धेत्कोसलाजादादिति ञ्यङ् । यङः श्चाबिति चाप् । सवर्णदीर्घः । तथान्तरङ्गत्वान्न व्यव-धायक इति लुक्प्रसङ्गात्पूर्वपक्षेऽप्यास्त्रियामित्यावश्यकमिति वाच्य-म् । अतः परस्मिन्निति स्थानिवद्भावेन लुगप्रसक्तेः ।

नच सिद्धान्तेऽपि तेनैवेत्यस्यानुपादानाल्लाघवम् । प्रियवाङ्गा इत्यत्र समासार्थबहुत्वे तद्राजान्तस्य बह्वर्थकत्वाभावादेव लुगप्र-सङ्गादितिवाच्यम् । तथापि गार्ग्यश्च वात्स्यश्च वाजश्च गर्गवत्स-वाजा इत्यादौ लोपप्रतियोगिनोऽपत्यप्रत्ययस्यैकस्मिन्नेवार्थे उत्प न्नत्वात् बह्वर्थत्वाभावाल्लुक् न स्यात् । तदुक्तं द्वन्द्वेऽबहुषु लुग्व-चनमिति लुगर्थे वचनान्तरमारम्भणीयं स्यादित्यर्थः । नचपूर्वपक्षेऽपि बहुवचनेपरे लुग्विधानात्तस्मिन्नितिनिर्दिष्टेपूर्वस्येति परिभाषो-पस्थाने प्रत्येकस्य बहुवचनपरत्वाभावाल्लोपो न स्यात् । समासा-दुत्पन्नस्य बहुवचनस्यान्त्यादेव परत्वादिति वाच्यम् । अन्त्यमात्र-स्य तावत् सिद्धेः ।

किञ्च विदस्यापत्यानि बहूनि वैदाः । विदादित्वादञ् । वि-दानामपत्यं युवा वैदः, वैदौ । अतइञ् । ण्यक्षत्रियार्षञितो यूनिलु-क् । अत्र बहुष्वर्थेषु उत्पन्नोऽपत्यप्रत्ययो युवापत्यविवक्षायां द्वि-त्वविशिष्टे एकत्वविशिष्टेवाऽर्थान्तरे संक्रान्तः । तस्य बहुषूत्पन्नत्वा-

त् लुक्प्राप्तौ अलुग्वचनमारम्भणीयं स्यात् । प्रत्ययपक्षेतु बहुवचनपरत्वाभावादेव नलुक् ।

तदुक्तम्—गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोर्लुगिति । द्व्येकयोरितिभावप्रधानो निर्देशः[१]नचात्र गोत्रेऽलुगचीति सूत्रेणाजादौ प्राग्दीव्यतीये परे लुङ्निषेधादेव सिद्धिरितिवाच्यम् । अजादिप्रत्ययपरत्वाभावात् । वर्णाश्रयेच प्रत्ययलक्षणनिषेधात् । एवं बेदस्य बैदयोर्वाऽपत्यं बहवो माणवकाः बिदाः। अत्रापि यञञोश्चेति लुङ्न स्यात् । अञो बहुप्रकृतित्वाभावात् । नच प्रत्ययग्रहणे तदन्तग्रहणादञन्तस्यैव बहुत्वेन विशेषणाल्लुक्सिद्धिरितिवाच्यम् । काश्यपप्रतिकृतयः काश्यपा इत्यत्रातिप्रसङ्गात् । कश्यपस्य गोत्रापत्यं काश्यपः । बिदादित्वादञ् । तत्प्रकृतय इत्यर्थे इवेप्रतिकृताविति कन्प्रत्ययः । जीविकार्थेचापण्य इति वा । आर्चासुपूजनार्थासुचित्रकर्मध्वजेषु चेति पाठाद्वा तस्य लुक् । एतस्याञन्तस्य बहुषु वृत्तेर्लुक्प्रसङ्गात् । तस्मादञ्गो बहुष्वित्येव तत्र वक्तव्यम् । प्रत्ययादर्शनस्यैव लुगादिसंज्ञाविधानात् । प्रत्ययानामेव कार्यभाक्त्वेन बहुत्वेनतेषामेव विशेषणीयत्वात् । तथाच बिदा इत्यत्राञ्प्रत्ययस्यैकस्मादेवोत्पन्नतया लुङ् नस्यादिति लुग्वचनं कर्त्तव्यम् । तदुक्तम्—एकवचनस्य द्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि इति । उक्तार्थम् ।

अथोच्यते । युगपदधिकरणवचने द्वन्द्ववचनात् गर्गवत्सवाजा इत्यत्र वार्तिपदत्रयस्यार्थत्रयवाचकत्वात्प्रत्येकं तद्राजप्रत्ययानां बहुत्वार्थकत्वमस्त्येवेति द्वन्द्वे पूर्वोक्तमबहुषु लुग्वचनमनारभ्यमेवेति । तर्हि पूर्वपक्षिणापि बहुवचने परे लुगङ्गीकारात् बहुवचनं प्रत्येकस्मादपि परतोऽस्त्येवेति न तद्दोषावकाश इति समानम् ।

[१] पुस्तकान्तरे निर्देश इत्यस्याग्रे 'उक्तार्थम् इति पाठोऽधिकः ।

नच लुकि कृते कथं तद्धिति वाच्यम् । प्रत्ययलक्षणेन निर्वाहात् । नच नलुमताङ्गस्येति तन्निषेधः शङ्क्यः । लुमता लुप्ते यः प्रत्ययस्तस्मिन् यदङ्गं तस्य यत्कार्यं अङ्गाधिकारविहितं तद्बहिर्भूतं वा तन्न भवतीति तद्व्याख्यानात् । लुक्च प्रत्ययस्यैव कार्यं नतु समस्तस्याङ्गस्येति प्रत्ययलक्षणस्य सुलभत्वात् । एतेनाङ्गानतिक्रान्तोऽत्यङ्ग इत्यत्र अति अङ्ग जस् इति स्थितेऽन्तरङ्गानपीति न्यायेन लुकि पूर्वं कृते बहुवचनपरत्वाभावात्तद्राजलोपो न स्यात् ।

नन्वेवं पञ्चभिर्गार्गीभिः क्रीतः पटः पञ्चगार्ग्यो दशगार्ग्य इत्यत्रातिप्रसङ्गः । क्रीतार्थस्यार्हीयस्य ठकोऽध्यर्धेति लुक् । लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य लुक् । तत्र यञ्लुकोऽङ्गकार्यत्वाभावादुक्तरीत्या प्रत्ययलक्षणप्रवृत्त्याभिसमाश्रित्य यञञोश्चेति लुक्प्रसङ्गात् पञ्चगर्गो दशगर्ग इत्यस्यापत्तेः । नचास्त्रियामिति निर्वाहः । वर्तिपदार्थस्यार्थान्तरेऽर्थे पुंसि संक्रान्तत्वादिति चेत् । न । इष्टापत्तेः । गर्गेभ्य आगतं गर्गरूप्यं गर्गमयमित्यत्र लौकिकविग्रहे सुबन्तप्रयोगेऽपि प्रातिपदिकादेव प्रत्ययोत्पत्त्या बहुवचनपरत्वाभावाल्लुङ् न स्यादित्यपि परास्तम् । समर्थानां प्रथमाद्वेत्यधिकारात्सुबन्तेनैव सामर्थ्यात् । सुबन्तस्यैव द्वितीयस्य सम्बन्धात् । प्रातिपदिकाधिकारस्य तु वृद्धादिविशेषणार्थत्वात् ।

नन्वेवं बिदानामपत्यं बैदः बैदौ इत्यत्र लुक् स्यादिति सिद्धान्तिनं प्रतिउक्तापत्तिर्नसङ्गच्छते । उक्तरीत्या बहुवचनपरत्वेन पूर्वपक्षिणाप्यलुको वक्तव्यत्वात् । यदि त्वचीत्यनेनैव निषेधः । वर्णाश्रये इति निषेधस्य वर्णरूपाश्रयकार्यनिषेधकत्वेन प्रत्ययस्यासाधारणं यद्रूपं तत्त्वेन यत्र निमित्तत्वं तद्विषयकत्वाभावात् । अतएव गोहितमित्यादाववादेशादयो न भवन्ति । अच्त्वस्य प्रत्ययाप्रत्ययसाधारण्येन वर्णाश्रयत्वात् । अतुणेडित्यत्रेमाग-

मस्तु तिपो लुप्तत्वेऽपि प्रत्ययलक्षणेन भवत्येव । तस्य हल्यादि-गित्सार्वधातुकाश्रयत्वात् । सार्वधातुकत्वस्य प्रत्ययत्वव्याप्यत्वा-त् । एवं लुकोऽपि अजादिप्रत्ययाश्रयत्वेन वर्णाश्रयत्वाभावा-दित्युच्यते तदपि तुल्यम् । अथवाऽविशेषेणालुक् विधाय हलि-नेति निषेधो वक्तव्य । तेन गर्गरूप्यागित्यादौ नदोषः । नचैवं बिदानामपत्यं बहवो माणवका इत्यत्रापि अलुक्स्यादिति वा-च्यम् । अपत्याधिकाराद्न्यत्र लौकिकस्यापत्यमात्रस्य गोत्रस्य ग्रहणात् । युववहुत्वे वर्तमानस्यैव यञञोश्चेति लुक्सम्भवात् । नच तत्राप्यलुक्प्रवृत्तिः स्यादिति वाच्यम । समर्थानाप्रथमा-दित्यस्यानुवृत्त्या समर्थानां प्रथमस्य गोत्रप्रत्ययस्यालुग्भवति इति व्याख्यानात् । प्राथमकल्पिके प्रत्ययार्थे वर्तमानस्य तस्य प्राथम्यं यथा गार्गीया इत्यादौ । प्रकृतेतु युवप्रत्ययस्य लुकि कृते गोत्रप्रत्ययान्तस्य बैदशब्दस्य युवलक्षण द्वितीयमर्थमुपसंक्रान्त-त्वान्नप्राथम्यमिति पुनरलुग्विध्यप्रवृत्तिः । इदंचावश्यमभ्युपगम्यम् । अत्रिभरद्वाजिका, वसिष्ठकश्यपिका, भृग्वङ्गिरसिका, कुत्सकु-शिकिका, अत्रेरपत्यानीति 'इतश्चानिञ' इति ढक् । भरद्वाजस्या-पत्यानि । बिदादित्वादञ् । उभाभ्यां युववहुत्वेऽत इञ् । तस्य ण्यक्षत्रियार्षेति लुक् । अत्रिभृगु कुत्सेतिढको लुक् । यञञोश्चेति अञो लुक् । अत्रिभरद्वाजाना मैथुनिकेति द्वन्द्वाद्वुन् वैरमैथुनि-कयोरितिवुन् । कश्यपकुत्साभ्यामञ् । वाशिष्ठार्दिभ्य ऋष्यण् ।

यदि द्वितीयमर्थमुपसंक्रान्तस्याप्यलुक् स्यात्तदा गोत्रेऽलुग-चीति यथाश्रुतन्यासेऽपि अलुक् दुर्वारः स्यात् । यद्वा गर्गभा-र्गविकाग्रहण नियमार्थम् । गर्गादिभ्यो यञ् । तस्य लुक् । भृगु-शब्दादृष्यण् । तदन्ताद्यूनयञ् । तस्य लुक् । गर्गभृगूणां मैथुनि-केति वुन् । अत्रात्रिभृगुकुत्सेत्यादिना लुक् प्राप्तो गोपवनादि

पाठेन प्रतिषिध्यते । यदि च द्वितीयमर्थमुपसंक्रान्तस्या-प्यलुक् स्यात्तदा गोपवनादिषु गर्गभार्गविकापाठो व्यर्थः स्यात् । अतो द्वितीयमर्थमुपसंक्रान्तस्यालुग्विधिर्नप्रवर्तते इति तेन ज्ञाप्यते इति नकोऽपि दोष इति कल्प्यते । इदमपि ममानम् । यदप्युक्तं बैदस्य बैदयोर्वाऽपत्य बहवो माणवका बिदाः । अत्राञो बहुत्वक्रान्तिकत्वाभावाल्लुक्न स्यादिति । तदप्यसत् । अञन्तं यद्बहुष्विति व्याख्यानेन तत्सम्भवात् । नच काश्यपप्रतिकृतयः काश्यपाइत्यत्र दोषः । अपत्यबहुत्वे वर्तमानस्यैव अञन्तस्य तत्रग्रहणात् । प्रतिकृतिबहुत्ववृत्तेः काश्यपाइत्यञन्तस्य लुगप्रसक्तेः लोपप्रतियोगिप्रत्ययार्थत्वेन साजात्यविवक्षयोक्तार्थलाभात् । गोत्रयूनोरपत्यत्वेन साजात्यसत्त्वात् । प्रतिकृतेश्च तदभावात् । तस्मात्सिद्धान्तेऽपि नगौरवम् । इति चेत्सत्यम् । तथापि पूर्वपक्षेऽपि दोषस्यानुपन्यासादिति भाति—

सिद्धान्तमाह भाष्यकारः । बहुवचने परतो लुगित्युच्यमाने अत्रय इत्यत्र दोषः । तथाहि—अत्रिशब्दादितश्चानिञ इति ढक् । कित इत्यन्तोदात्तत्वम् । तत्र जसि परतो लुकिक्रियमाणेऽनुदात्तस्य च यत्रोदात्तलोप इत्युदात्तनिवृत्तिस्वरेण जस उदात्तत्वं स्यात् । अर्थपक्षेतु लुकः परनिमित्तत्वाभावान्न तत्प्रसङ्ग इति जसोऽनुदात्तौ सुप्पितौ इत्यनुदात्तत्वमेव । आङ्गयः स्त्रिय इत्यादिवारणाय त्वस्त्रियामिति कृतमेवेति दिक् ।

अथास्त्रियामिति पर्युदासः, प्रसज्यप्रतिषेधो वा आद्ये गार्गीच वात्स्यश्च वाज्यश्चेति द्वन्द्वे सर्वेषा लुक् स्यात् । एकैकस्य शब्दरूपस्य स्त्रीपुंसात्मकसमुदायाभिधायित्वात् । अन्त्ये तु नातिस्पष्टमेवेति चेदत्रापि भाष्यम् । देवा ज्ञातुमर्हन्तीति । देवा दिव्यदृशः पण्डिता इति यावत् । तत्रद्वेधा कैयटेन व्याख्यातम् ।

पर्युदासस्यैकवाक्यतया लाघवान्न्याय्यत्वमिति केचिदाहुः। अन्ये तु गार्गीशब्देन स्त्रीत्वप्रयुक्तानामर्थानामभिधानाद्यञो लुकाभाव्यम्। अन्येषां तु भाव्यमित्याहुः।

अथ यत्र लोपभाजां तद्रहितानां च समासस्तत्र लोपभागियोगिप्रत्ययान्तपदस्य बह्वर्थत्वाल्लोपः, उत तेनैवेति वचनान्न लोपः। [१]अविद्यमानसन्निधिकृतत्वात् बहुत्वस्य तन्मात्रकृतत्वाभावादिति चेत्। अत्रापि भाष्यम्। उभयथापीति ज्ञापकसद्भावात्। भृगुवत्साग्रायणेषु, अगार्ग्यगालवानामिति च प्रयोगदर्शनात्। आद्ये हि द्वौ लोपिनौ। आग्रायणस्तु नडादिफगन्तत्वात्तद्राजसंज्ञानास्तीति लोपी द्वयोश्च लुक् कृतः। अन्त्येतु द्वौ लोपिनौ। गालवस्तु ऋष्यणन्तः पूर्ववन्न लोपी। नच लोपिनो लोपः कृत इति तथाच ज्ञापकद्वयसद्भावादुभयमप्युपपन्नमिति भावः।

# यस्कादिभ्योगोत्रे ॥६३॥

एभ्यः परस्य गोत्रप्रत्ययस्य लुक् स्यात् तत्कृते बहुत्वे नतु स्त्रियाम्। गोत्रे कुञ्जादिभ्यश्च्फञ् इति गोत्रप्रत्ययप्रकरण तस्मादन्यत्र लौकिकगोत्रग्रहणम्। अपत्याधिकारे गोत्रग्रहणसामर्थ्यादेव पारिभाषिकगोत्रग्रहणम्। यस्काः। लह्याः। बहुषु किम्। यास्कः। लाह्यः। स्त्रियांतु यास्क्यः स्त्रियः। गोत्रे किम्। यास्काः छात्राः। यस्क लह्य द्रुह्य अयस्थूण तृणकर्ण एते पञ्च शिवादौ इत्यण्। सदामत्त कम्बलभार अहियोग कर्णाटक पिण्डीजङ्घ बकसक्थ एभ्यः षड्भ्य इञ्। विश्रि कद्रु अजबस्ति मित्रयु एभ्यश्चतुर्भ्यः शुभ्रादित्वाड्ढक्। रक्षोमुख जङ्घारथ मन्थक उत्कास कटुक पुष्करसत् वेषपुर परिमेखल क्रोष्टुमाय क्रोष्टुमान क्रोष्टुपाद शीर्षमाय

[१] अलुप्यमानसन्निधिकृतत्वात्। इति पाठान्तरम्।

एभ्यो द्वादशभ्य इञ् । यद्यपि तौल्वल्यादौ इञः प्राचामिति प्राप्तस्य लुक् प्रतिषेधाय पठितस्य पुष्करसदिसस्य प्राच्यत्वे विवादाभावात् । बह्वच इञः प्राच्यभरतेष्वित्यस्येव लुक्सिद्धः । तथापि गोपवनादिप्रतिषेधबाधाय तस्य यस्कादिषु पाठः । तत्र तौल्वल्यादय इत्यस्य कौश्चित्पठ्यमानत्वात । यैस्तु तत्र नपठ्यतेतैरप्यस्मादेवज्ञापकात्तौल्वल्यादिप्रकृतिभूतानां तुल्वलेत्यादीनां गोपवनाद्यन्तर्भावस्यानुमेयत्वात् । खरपद अस्य नडादित्वात्फक् । पदक पर्यक आभ्यामत इञ् । भलन्दन अस्माच्छिवादित्वादण् । भण्डिल भण्डिक भण्डित भण्डित एभ्यश्चतुर्भ्योऽश्वादित्वात्फञ् ।

# यञञोश्च ॥ ६४ ॥

गोत्रे यद्यञन्तमञन्तच तदवयवयोरेतयोर्लुक् तत्कृते बहुत्वे नतु स्त्रियाम् । गर्गाः । वत्साः । गर्गादिभ्यो यञो लुक् । बिदाः । ऊर्वाः । बिदाद्यञो लुक् । तत्कृतेति किम् । प्रियगार्ग्याः अन्यपदार्थकृतमिह बहुत्वम् । अस्त्रियां किम् । गार्ग्यः स्त्रियः । गोत्रेकिम् । द्वैप्याः । द्वीपादनुसमुद्रं यञ् । औत्साः । उत्सादिभ्योऽञ् । प्रवराध्यायप्रसिद्धमिहगोत्रम् । नेह । पौत्रदौहित्राः । तद्राजसंज्ञारहितानां लुगर्थमेतदादिरारम्भः ।

यञादीनामेकस्य द्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम् । आदिपदेन वक्ष्यमाणानामपि बहुत्वे लुग्भाजामुपग्रहः । आदिशब्दस्य व्यवस्थापरत्वात् । गार्ग्यस्य गार्ग्ययोर्वाकुलं गार्ग्यकुलं गर्गकुलंवा । बैदस्य बैदयोर्वा कुलं बैदकुलं बिदकुलं वा । यञादीनां किम् । आङ्गकुलादौ माभूत् । संख्याविशेषग्रहणं किम् । गर्गाणां कुल गर्गकुलम् । परत्वाद्विकल्पो माभूत् । तत्पु-

षष्ठीतिकिम । गार्ग्यस्य समीपमुपगार्ग्यम् । षष्ठ्याः किम् । शोभनगार्ग्याः । कर्मधारये माभूत् ।

## अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ॥ ६५ ॥

बहुत्वे गोत्रप्रत्ययस्य लुक् स्यात् । अत्रयः । भृगवः । कुत्साः । वसिष्ठाः । गोतमाः । अङ्गिरसः । यथात्राङ्गिरसः पूर्वे भृगवश्चापसोधिरे । अत्रयश्च वसिष्ठाश्च तथैतस्त्वापमेत्रिमोति आथर्वणश्रुतिः । तेनैवेत्येव प्रियात्रेयाः । अस्त्रियामित्येव । आत्रेय्यः स्त्रियः ।

## बह्वच इञः प्राच्यभरतेषु ६६

प्राच्यगोत्रे भरतगोत्रे च वर्तमानस्य बह्वच्प्रकृतिकस्य इञो बहुत्वे लुक् । पन्नागाराः । मन्थरैषणाः । युधिष्ठिराः । अर्जुनाः । बह्वचः किम् । चैकयः । पौषयः । प्राच्यभरतेषु किम् । बालाकयः । हास्तिदासयः । इह कर्मधारये प्राच्यग्रहणं व्यर्थम् । व्यावर्त्याभावात् । द्वन्द्वे तु अन्यत्र भरतानामभावात् । प्राच्यग्रहणेनैव सिद्धिः ।

यद्यपि सामान्यविशेषयोर्वाचनिको द्वन्द्वनिषेधः तथापि सौत्रत्वादेव तत्संभवः । एवं चान्यत्र प्राच्यग्रहणे भरतग्रहणं नभवतीति ज्ञापनाय भरतानां पृथङ् निर्देशः । तेनेञः प्राचामित्यत्र भरतगोत्रग्रहणं न । औद्दालकिः पिता । औद्दालकायनः पुत्रः ।

## न गोपवनादिभ्यः ॥ ६७ ॥

गोत्रप्रत्ययस्य न लुक् । गौपवनाः । शैग्रवाः । विदाद्यन्तर्गणो गोपवनादिः । तत्समासये मध्ये वृत्करणाभावात् । आगणान्ताद् ग्रहणे प्राप्ते गोपवनादिप्रतिषेधः प्राग्घरितादिभ्य इति वाच्यम् । तेन हारिता इत्यत्रालुगेव ॥

## तिककितवादिभ्यो द्वन्द्वे ॥६८॥

एभ्यो गोत्रप्रत्ययस्य बहुषुलुक्द्वन्द्वे । तैकायनयश्च कैतवायनयश्च तिककितवाः । तिकादिभ्यः फिञो लुक् । नच गणे द्वन्द्वरूपाणामेव पाठात्तिकादिभ्य इत्येवोच्यतामिति वाच्यम् । द्वन्द्वे पूर्वपदानामेव प्रत्ययस्य लुक् नतूत्तरपदानामिति शङ्कानिवृत्त्यर्थत्वात् । शाङ्करयश्च भाण्डीरथयश्च वङ्करभण्डीरथाः । अत इञो लुक् । औपकायनाश्च लामकायनाश्च उपकलमकाः । नडादिफको लुक् । माढकयश्च नारकयश्च मढकनरकाः । अत इञो लुक् । वाकनखयश्च श्वागुरपरिणद्धयश्च बकनखश्वगुरपरिणद्धाः । औब्जयश्च काकुभाश्च उब्जककुभाः । अत इञ्शिवाद्यणोर्यथाक्रम लुक् । लाङ्कयश्च शान्तमुखयश्च लङ्कशान्तमुखाः । अतइञोलुक् । (१)औरगयश्च शालङ्कयश्च उरगशलङ्कयः । तिकादिफिञतइञोलुक् कार्ष्णाजिनयश्च कार्ष्णसुन्दरयश्च कृष्णाजिनकृष्णसुन्दराः । अतइञोलुक् । आग्निवेश्याश्च दाशेरकयश्चाग्निवेशदाशेरकाः । गर्गादियञोऽतइञश्च लुक् । भ्राष्ट्रकयश्च कापिष्ठलयश्च भ्राष्ट्रककपिष्ठलाः । अतइञो लुक् ॥

---

[1] औरगायनयश्चेतिपाठः साधु'

# उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ॥

एभ्यो गोत्रप्रत्ययस्य बहुत्वे वा लुक् द्वन्द्वेऽद्वन्द्वे च । अद्वन्द्व पदस्य द्वन्द्वानुवृत्त्यभावज्ञापकत्वात् । एषां मध्ये त्रयो द्वन्द्वास्तिककितवादिषु पठ्यन्ते इति वृत्तिः । कैयटस्तु भ्राष्ट्रकि कापिष्ठलि इति द्वन्द्वस्य तिककितवादिषु पाठोऽनार्षः । भ्राष्ट्रककापिष्ठलाः । भ्राष्ट्रकिकापिष्ठलयः इति भाष्योदाहरणादित्याह । तस्मात्कृष्णाजिनकृष्णसुन्दराः अनयोः पूर्वेण द्वन्द्वे नित्यो लुक् । अद्वन्द्वे विकल्पः । उपका औपकायनाः । लमका लामकायनाः । कृष्णाजिनाः कार्ष्णाजिनयः । कृष्णसुन्दराः कार्ष्णसुन्दरयः । अन्येषां तु द्वन्द्वे तदभावे वा विकल्पेन लुक् । भ्राष्ट्रकाः । भ्राष्ट्रकयः । कापिष्ठलाः । कापिष्ठलयः । वडारक अडारक भ्रष्टक अकन्धक पिङ्गलक पिष्ट सुपिष्ट मयूरकर्ण खरिजङ्घ शलाघण पतञ्जल कावेरिणि गड्ड उषितक कुश कुत्स निदाघ कलशीलकण्ठ कामकण्ठ कृष्णपिङ्गलकर्ण पर्णक जटिलक बधिरक जन्तुक अनुलोम प्रतिलोम अविदग्ध प्रतान अनभिहित ॥

# आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ॥ ७० ॥

एतदवयवस्याणो यञश्च गोत्रप्रत्ययस्य बहुषु लुक् । प्रकृतिभागस्य यथाक्रमं उक्तावादेशौ च स्याताम् । अगस्तयः कुण्डिनाः ननु द्वयोर्विशिष्टयोरेवादेशद्वयं यथाक्रमं विधीयतां किं प्रत्यय लोपं विधाय प्रकृतिभागस्यादेशकरणेनेति चेत् न, आगस्तीया इत्यस्यासिद्धिप्रसङ्गात् । अगस्त्याद्रष्याणि आगस्त्यः । अग-

स्तीनां छात्रा इति प्राग्दीव्यतीयेऽजादौ प्रत्यये विवक्षितेऽप्य-गस्तीत्यादेशापत्त्या वृद्धत्वाभावाच्छो न स्यात् । लुकं कृत्वा-ऽगस्तीत्यादेशविधाने तु तत्र गोत्रेऽलुगचीति लुक्प्रतिषेधात् । तत्संनियोगशिष्ट आदेशोऽपि नभवति इति वृद्धत्वाच्छप्रत्यये सूर्य-तिष्यागस्त्येति यलोपे चकृते आगस्तीया इति सिद्धम् । कौण्डि-न्येतु उभयथापि न विशेषः । कौण्डिन्यशब्दात्कण्वादिभ्योगोत्र इत्यणि कृते आपत्यस्येति यलोपेच कौण्डिनाः छात्रा इत्येव-सिद्धेः । चकारः स्वरार्थः । कुण्डिनीशब्दस्येनिप्रत्यये मध्योदा-त्तत्वात् । गर्गादिभ्यो यञ् । भस्याढेइति पुंवद्भावे नस्तद्धिते इति टिलोपे कौण्डय इति स्यात् अस्मादेव निपातनान्न पुंवत् । यस्येतिचेनीकारलोपः । वस्तुतष्टिलोपाभावमात्रं निपात्यम् ।

# सुपोधातुप्रातिपदिकयोः ॥७१॥

एतयोरवयवस्यसुपो लुक् । पुत्रमात्मन इच्छति पुत्रीय-ति । सनाद्यन्ता इति प्रत्ययविशिष्टस्य धातुसञ्ज्ञायां पुत्रपदो-त्तराद्द्वितीयाया लुक् । सुबन्तात्क्यच् । राज्ञः पुरुषो राजपुरुषः ॥

# अदिप्रभृतिभ्यः शपः ॥७२॥

एभ्यः शपो लुक् । अत्ति । योन्यदेवमुपासते इत्यादौ आसतेरादानार्थे रूपम् । आश्वसेयुर्निशाचराः । न विश्वसेदवि-श्वस्ते इत्यादौ गणकार्यस्यानित्यत्वान्न लुक् । घटादयः षित इत्येव सिद्धे क्षमूष् इति षित्करणेन ज्ञापितत्वादिति केचित् । पचाद्यजन्तादाचारक्विबित्यन्ये । एतेन पथिकत्र न ग प्रत्ययादा-श्वसन्ति इति मेघदूतं, देवीगिरां दीर्घतरं श्वसन्तीति भानुदत्त-प्रयोगश्च व्याख्यातः ॥

## बहुलं छन्दसि ॥७३॥

बहुल शपो लुक । वृत्र हनति वृत्रहा । अहिः शयते । बहुलोक्तेरन्यत्रापि । त्राध्वं नो देवाः ॥

## यङोऽचि च ॥७४॥

अच्प्रत्यये परे यङो लुक् । लोलुवः । पोपुवः । पचाद्यच् । इदमेव ज्ञापयति सर्वे धातवः पचाद्यन्तःपातिन इति । चकारादन्यत्रापि बहुलम् । बेभिदीति । चेच्छिदीति । अत्राच्प्रत्ययनिमित्तको लुक् परनिमित्तकः चकारलभ्यस्त्वनैमित्तिक इति विवेकः । अत्र भाष्यमते छन्दसीत्यस्यानुवृत्तिः नतु वृत्तिमते । हुश्नुवोरित्यत्र सार्वधातुकग्रहणेन क्वचिद्भाषायामपि यङ्लुको भाष्यकारेणापि स्वीकारात् । पूर्वप्रयोगानुसारेणैव प्रयोगव्यवस्थासंभवात्

नन्वत्राजिति प्रत्याहारः एव गृह्यतामिति चेत् । अत्राहुः । तथासत्यणीत्येवावक्ष्यत् । यङन्तादन्यस्याचोऽसंभवात् । नच पापच्यै इत्यत्र तत्संभवः । शपा व्यवधानात् । एकादेशस्य स्थानिवद्भावात् । लिटस्तझयोरेशित्वाम आवश्यकत्वात् । अमन्त्र इतिवचनान्मन्त्रे कथञ्चित्तत्संभवे तु यङा प्रत्ययेन साहचर्यात् ॥

## जुहोत्यादिभ्यः श्लुः ॥७५॥

मण्डूकप्लुत्या शपोऽनुवृत्तिर्नतुसन्निहितस्यापि यङः श्लाविति द्वित्वविधानसामर्थ्यात् । अन्यथा सन्यङो रित्यनेनैव सिद्धेः ॥

## बहुलं छन्दसि ॥७६॥

शप श्लुः स्यात्। जुहोत्यादिभ्योऽपि क्वचिन्न। देवतानो स्वस्ति मघवा धातिन्द्रः। ददाति प्रियाणि। अन्यस्मादपि। पूर्णा विवष्टि। जनिमा विवक्ति॥

# गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु॥ ७७॥

एभ्यः सिचो लुक् परस्मैपदेषु। लुगेवानुवर्तते नतु श्लुः। व्याख्यानात्। गादेशस्यश्तिपि शब्लुकानिर्देशात्। इणादेशो गा अत्र गृह्यते नतु गै इत्यादिः। अनएवगामादाग्रहणेष्वविशेष इत्यस्य न प्रवृत्तिः। अन्यव्यावृत्तरूपेणैवोपादानात्। गादेशस्य लुङ्मात्रविषयकत्वेऽप्यनुकरणेऽपि प्रकृतिवदित्यतिदेशेन शपो लुक्प्रवृत्तेः। अगात्। अस्थात्। अदात्। अधात्। पिबतेरेवग्रहणं नतु पातेः। लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणात्। अपात्। अभूत्। अस्त्यादेशस्यापीदं रूपम्। आर्धधातुकमात्रविषयकस्यतस्य शपो लुक्सम्बन्धाभावेन लुग्विकरणपरिभाषाया अप्रवृत्तेः। गैशब्द इत्यस्य त्वगासीत्, पारक्षणे अपासीत्। यमरमनमातामितीट्सकौ। पैशोषणे इत्यस्यापि नसंग्रहः लाक्षणिकत्वात्। परस्मैपदे किम्। अगासातां ग्रामौ देवदत्तेन।

अत्रभूभ्य इतिभीधातोर्ङसानिर्देशः। एरनेकाचइति यण्। तेन माभेः शशाङ्कममसीधुनि नास्ति राहुरिति सिद्धमिति कल्पनमनादेयम्। मास्मभैषीस्त्वयाद्येव इतिभट्टिविरोधात्। माभेर्मांसं विक्या इति तु छान्दसम्। माभेरिति तु प्रामादिकमित्याहुः। आगमशासनस्यानित्यत्वादीडभावे वा समाधेयम्॥

## विभाषा घ्राधेट्शाच्छासः ॥७८॥

पूर्वविप्रतिषेधे वा लुक् । धेटः पूर्वेण प्राप्ते इतरेषामप्राप्ते विकल्पः । अघ्रात् । अधात् अशात् । अच्छात् । असात् । शो तनूकरणे षोऽन्तकर्मणि । पक्षे अघ्रासीदित्यादि । परस्मैपदे किम् । अघ्रासत सुमनसो देवदत्तेन । कर्मणि लङ् ।

## तनादिभ्यस्तथासोः ॥ ७९ ॥

सिचो वा लुक् तथासोः परतः । थासा साहचर्यादेकवचनस्य तस्य ग्रहणम् । अतत । अतथाः । अतनिष्ट । अतनिष्ठाः । असात असाथाः । जनसनेत्यात्वम् । पक्षेऽसनिष्ट असनिष्ठाः । यूयमतनिष्टेत्यत्र न लुक् । बहुवचनस्यात्रानुपादानात् ।

## मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः ॥८०॥

एभ्यो लेर्लुक् मन्त्रे । अक्षन् पितरोऽमीमदन्त पितरः । घस्लादेशगमहनेत्युपधालोपः । शासिवसीति षत्वम् । अडभावे मा त्वा ह्वृकासो अशिवास उक्षन् । ह्वृ कौटिल्ये इत्यस्य गुणाविशिष्टस्य निर्देशः । अकार उच्चारणार्थः । मा ह्वार्मित्रस्य । धूर्तिः प्रणङ् मर्त्यस्य । नशेर्वेति कुत्वम् । वृ इति वृङ्वृञोर्ग्रहणम् । सुरुचो वेन आवः । मानआधक् । दादेर्धातोर्घ इति घत्वम् । एकाच इति भष्भावः । आदिति आकारान्तग्रहः । आप्रा द्यावापृथिवी अन्तरिक्षम् । वृजी वर्जने । मा रो अस्मिन् महाधने परावर्क् । परावर्ग्भारभृद्यथा । अक्रन् कर्म कर्मकृतः । अग्मन् । मन्त्रपदं

ब्राह्मणस्याप्युपलक्षणम् । अहत वा अस्य दन्ताः । ऐतरेय ब्राह्मणे हरिश्चन्द्र प्रतिवरुणस्योक्तिः ।

लिग्रहणमादिः सिचोऽन्यतरस्यामिति स्वरस्यामन्वृत्त्यर्थम् । अन्यथा सिचमेवान्ववर्तिष्यदादिति कैयटहरदत्तादयः । नचालिङ्लिटोरपि लोपापत्तिः । सिचः स्थानिभूतो योलिः इति व्याख्यानात् । केचित्तु विभाषेत्यनुवर्तते । न ता अगृभ्णन्नजनिष्टहिष-इत्याद्यनुरोधात् । तेन सिजनुवृत्त्यादिकमपि अफलम् । नचालिङ्ल टोर्लुगापत्तिः । छन्दसि रूपान्तरस्यानापाद्यत्वादित्याहुः ।

# आमः ॥८१॥

इजादेश्चेत्यादिनाम् वक्ष्यते । ततः परस्य लुक् । ईहांचक्रे । तिबाद्यादेशापवादत्वाल्लावस्थायामेवायम् । तेन चक्षुः कामं याजयांचकारेत्यादावामन्तस्यातिङन्तत्वादनिघातः । अनुप्रयुज्यमानस्य च निघातः । आमन्तस्य सुबन्तत्वात्पदत्वम् । कृन्मेजन्त इत्यव्ययत्वात्सुपोलोपः । कृदतिङित्यत्र तिङ्भाविन एव लकारस्य कृत्संज्ञानिषेधात् । नचैव यत्प्रकारयांचकारेत्यत्र तिबादिलुकि सति गतिर्गतौ तिङि चोदात्तवतीति प्रशब्दस्य निघातो नस्यात् । आमन्तस्य तिङन्तत्वाभावादिति वाच्यम् । प्रशब्दस्य कारयामित्यनेन समासे समासस्वरेणान्तोदात्तेऽव्ययपूर्वपदप्रकृतिस्वरेण चाद्युदात्ते प्राप्ते तद्बाधेन कृत्स्वरे कृते लोपनिघातेनैव प्रशब्दानुदात्तत्वसिद्धेः । नच नकारयांचकारेत्यादौ सुबन्तत्वेन नञ्समासापत्तिः । ततश्च नकारलोपापत्तिरिति वाच्यम् । अनभिव्यक्तार्थेनामन्तेन सह सामर्थ्याभावात् ।

आमेत्लेर्लोपेलुङ्लोटोरुपसंख्यानम् । तां वैजत्रापयोनिदामक्रन् । अस्य भवन्तो विदाङ्कुर्वन्तु । लिग्रहणानुवृत्त्याऽन्यत्र

नप्राप्नोतीत्यारम्भः । अनुप्रयोगवचनसामर्थ्यात्प्रसङ्गमात्रलोपस्ये-ष्टत्वात् तदनुवृत्तिर्नेति भाष्यम् । तत्रानिपातनेनापि लुक्सिद्धिरिति-कैयटः । आमन्तस्यानभिव्यक्तपदार्थत्वात्स्वाभाविकैव तरबादे-रनुत्पत्तिर्लुग्द्वारेणान्वाख्यायते ॥

## अव्ययादाप्सुपः ॥८२॥

अव्ययाद्विहितस्यापः सुपश्च लुक् । तत्र शालायाम् । अथ तत्र वार्तिकम् । अव्ययादापो लुग्वचनानर्थक्यं लिङ्गाभावा-दिति । नच स्त्रीसमानाधिकरणत्वात्तदापत्तिः । भूतमियंब्राह्मणी-त्यत्रातिप्रसङ्गात् । यद्यपि एकत्वे सुः इत्याद्येकवाक्यत्वे सुबुत्प-त्तिर्नप्राप्नोति । अव्ययानां संख्याराहित्यात् । तथाप्यविशेषेण-स्वाद्युत्पत्तौ द्व्येकयोरित्यादिर्नियमविधिः । यद्वाऽस्मादेव ज्ञापका-त्सुबुत्पत्तिः । तेनप्रत्ययलक्षणेन पदत्वाद्रुत्वादिसिद्धिः । अतएव घटो नेत्यादौ शङ्खः पाण्डुर इत्यादौच निपातोत्तरविभक्तीना प्र-तियोगित्वादौ लक्षणेति तार्किकसंप्रदायः ॥

## नाव्ययीभावादतोऽम्त्वपञ्चम्याः ॥८३॥

अत्र योगविभागः । अदन्तादव्ययीभावात्सुपो लुङ् न ततोऽम्त्वपञ्चम्याः । पञ्चमी भिन्नस्यामादेशश्च । अलुक् सर्ववि-भक्तिसाधारणःअम्भावस्तु पञ्चमीभिन्नस्यैवेति फलितम् । अ-न्यथा पञ्चम्यां अम इवालुकोऽपि प्रसक्त्यापत्तेः । यद्वा तुशब्दो-ऽवधारणार्थः । तथाचापञ्चम्या अमेव लुक् तु तस्या अपीत्येक-वाक्यतायामपि तदर्थसिद्धिः । दिशयोर्मध्यमपदिशम् ।

पञ्चमीप्रतिषेधेऽपादानपञ्चम्या ग्रहणम् । नेह आपाटलिपुत्रं वृष्टो देवः । कर्मप्रवचनीययोगेऽत्र पञ्चमी । यद्वाऽव्ययीभावाद्विहितायाः पञ्चम्या अमादेशनिषेधः । अन्तूत्तरपदाद्विहिता सा । तस्याश्च समासावयवत्वात्तस्यच प्रातिपदिकत्वाल्लुकि कृते समासात्सुशब्दे उत्पन्ने तस्या अम्भावः । यदातु समासाद्विहिता पञ्चमी तदा श्रूयते एव । आउपकुम्भात् । कुम्भस्यसमीपमित्यव्ययीभावः । तत आङ्योगे पञ्चमी ॥

# तृतीया सप्तम्योर्बहुलम् ॥८४॥

अम्भावः स्यात् । उपदिशम् । उपादिशेन । उपदिशे एतेन 'प्रतिहट्टपथे घरट्टजादि'ति नैषधं (१)व्याख्यातम् । सप्तम्या ऋद्धिनदीसमाससंख्यावयवेभ्यो नित्यमिति वाच्यम् । बहुलग्रहणसिद्धार्थकथनमेतत् । ऋद्धिः—सुमद्रम् । सुमगधम् । नदीसमासः—उन्मत्तगङ्गम् । लोहितगङ्गम् । संख्या—एकविंशतिभारद्वाजम् त्रिपञ्चाशद्गौतमम् । एकविंशतिर्भरद्वाजाः । त्रिपञ्चाशद्गौतमवंश्याः इति संख्यावंश्येनेति समासः । वार्तपदानां स्वार्थविशिष्टार्थान्तराभिधायित्वाद्गौतमभारद्वाजशब्दयोरेकत्वविशिष्टयोरेकत्वविशिष्टेऽर्थान्तरे संक्रमात्तद्राजस्येति लुगभाव इति कैयटः । वृत्तिप्रवेशात्प्रागेव गर्गाणां कुलं गर्गकुलमित्यादिवल्लोपप्रसङ्गाद्वाक्यप्रयोगादेव नलोप इति दीक्षिताः । ततः सप्तमी । नित्योऽम्भावः ।

# लुटः प्रथमस्य डारौरसः ॥८५॥

लुडादेशस्य प्रथमपुरुषस्य एते आदेशाः स्युः । नच टेरेत्व-

(१) नैषधीयचरिते द्वितीयसर्गे पञ्चाशीतितमोऽस्य श्लोकः ।

मात्मनेपदे परत्वात्स्यादिति वाच्यम् । पुनः प्रसङ्गविज्ञानेन तत्तदुत्तरमेवोक्तादेशानां प्रवृत्तेः । ईजतुरित्यादौ सम्प्रसारणे कृते द्वित्ववत् ।

ननु स्थानिनः षट् आदेशास्तु त्रयः अतो यथासंख्येन कथं निर्वाह इति चेत् । न, अर्थत आन्तर्येण व्यवस्थासम्भवात् । यद्वा डारौरसश्च डारौरसश्चेत्येकशेषाश्रयणात्, कृतैकशेषाणां द्वन्द्वे तु एकवचनद्विवचनयोर्डा, बहुवचनैकवचनयो रौ, द्विवचनबहुवचनयोश्च रसादेशः स्यात् । कृतद्वन्द्वानामेकशेषे तु तिप्तस्झीनां डारौरसः क्रमेण । तआमांश्च इत्येषां डारौरस इतीष्टसिद्धिः । अयमर्थो भाष्ये—

डारौरसः कृते टेरे यथा द्वित्वप्रसारणे ।
समसंख्येन नार्थोऽस्ति सिद्धं स्थानेऽर्थतोऽन्तरा ॥
आन्तर्यतो व्यवस्था त्रय एवेमे भवन्ति सर्वेषाम् ।
टेरेत्वंच परत्वात्कृतेऽपि तस्मिन्निमे सन्तु ॥ इति ।

स्यादेतत् । डादेशोऽलोन्त्यपरिभाषयाऽन्त्यमात्रस्य प्राप्नोति । नच डित्करणेन निर्वाहः सार्वधातुकत्वापत्त्या श्वः कर्तेत्यत्र तास्यनुदात्तेदिति सूत्रेण तासेः परं लसार्वधातुकमनुदात्तमित्यस्य निघातस्यापत्तेः । तिङ्ङतिङ इति निघातस्य तु न प्रसङ्गः । नलुटीति निषेधात् इति चेत् । न, अन्त्यादेशेऽपि टिलोपेन आख्याततकारसहितस्यैव आसो निवृत्त्या रूपसिद्धेः । नचान्त्यस्य डादेशे तकारान्तं नाङ्गम् । तकारस्य प्रत्ययावयवत्वात् । प्रत्ययावधिकपूर्वभागस्यैवाङ्गसंज्ञाविधानादिति वाच्यम् । डित्वसामर्थ्यादङ्गसंज्ञामङ्गसंज्ञां विनैव तत्प्रवृत्तेः । नचैवं तिङ्ग्रहणेन ग्रहणं न स्यात् रूपान्तरापत्तेरिति वाच्यम् । पचन्ति पचन्तु इत्यादिवदेकदेशविकृतस्यानन्यत्वात् ।

अथवा सर्वादेशः प्रत्ययसंज्ञेत्संज्ञा लोपश्चेत्येतेषां पूर्वपूर्वसा-

पेक्षत्वादनेकाल्त्वादेव सिद्धम् । अन्तादेशत्वे हि प्रत्ययावयव एव स्यान्नतु प्रत्ययः । समुदायस्यैव तथात्वात् । तदभावे च नेत्संज्ञा । तदभावेच न लोपः । अतः पूर्वमनेकाल्त्वात्सर्वादेशः । तत इत्संज्ञादीति न क्षतिः । यद्वा अ, अ इति प्रश्लिष्टनिर्देशोऽयम् । तेनानेकाल्त्वात्सर्वादेश इति भाष्यम् ।

स्यादेतत् । तिङादीनांलसार्वधातुकानुदात्तत्वं परत्वात्प्राप्नोति । शब्दान्तरप्राप्त्याऽनुदात्तस्यादेशाना चानित्यत्वात् । तथाच तेषामुदात्तत्वं न स्यात् । इति चेत् । न, अन्तरङ्गत्वादादेशानामेव प्रथमं प्रवृत्तेः । नच तथापि तेषामनुदात्तत्वं क्रियतामु त लोप इति वीक्षायां परत्वाट्टिलोप एव ततः पुनः प्रसङ्गविज्ञानादनुदात्तत्वमेव डादीनां स्यादिति वाच्यम् । टिलोपानन्तरं स्वरविप्रतिषेधाश्रयेण उदात्तनिवृत्तिस्वरस्यैव तास्यनुदात्तेदित्यनुदात्तत्वं बाधित्वा प्रवृत्तेः । नतु तथात्मनेपदैकवचनस्य तस्य स्थाने योऽजादेशः तत्रपरत्वाट्टिलोपे कृते पश्चादेवानुदात्तत्वप्रवृत्त्याऽनुदात्तस्य च यत्रोदात्तलोप इत्यस्याप्रवृत्तेः । अनुदात्ते कृते सति तद्विशिष्टनिमित्तको यत्रोदात्तलोपस्तत्रैव तत्सम्भवात् तिप्स्थानीयडादेशस्तु तिपः पित्त्वेनानुदात्तत्वात्स्थानिवद्भावेनानुदात्त इति तत्र स्यादेवोदात्तनिवृत्तिस्वरेणोदात्तत्वम् । तकारस्थानीयडादेशे तु तास्यनुदात्तेदित्यस्य प्रवृत्ति विनानुदात्तस्यचेति स्वरस्यैवानवकाशत्वेन तयोर्विप्रतिषेधायोगादिति चेत् ।

अत्र भाष्यकाराः । लसार्वधातुकानुदात्तत्वं हि प्रत्ययस्वरस्यापवादः । नचापवादविषये उत्सर्गा अभिनिविशन्ते तथाच परत्वाट्टिलोपे कृतेऽपि अनुदात्तस्यचेति स्वरः प्रवर्तते एव । उदात्तत्वाभावमात्रस्य तत्रत्यानुदात्तशब्देन विवक्षितत्वात् । एवं स्थिते शास्त्रीयानुदात्तत्वाभावेऽपि डादेशे प्रत्ययस्वरस्य प्रवृत्तिर्निर-

हेण उदात्तत्वाभावरूपानुदात्तत्वस्य सत्त्वात् उदात्तनिवृत्तिस्वरो निःप्रत्यूह एव । नचतासेरुदात्तत्वात्पूर्वमेव टिलोपप्रवृत्तेरुदात्त-लोपोऽपि कथमिति वाच्यम् । बाधकाभावेन उदात्तनिवृत्तिस्वरस्यैवतासेः प्रवृत्तेः डादेशेतु अपवादप्रवृत्तेर्भावितया पूर्वं न प्रत्ययस्वरप्रवृत्तिरिति वैषम्यम् । तस्मात्पदद्वयेऽपि स्वरसिद्धिरिति सर्वं शिवम् ।

इति श्रीसिद्धान्त सुधानिधौ द्वितीयाध्यायस्य चतुर्थपादे द्वितीयमान्हिकम् । पादोऽध्यायश्चायं समाप्तः ।

सद्विद्वत्पदवाक्यमाननिगमाकूपारपारङ्गम-
श्रीलक्ष्मीधरलब्धबोधजनुषा विश्वेश्वरेणोदिते ।
श्रीसिद्धान्तसुधानिधौ सुधिषणैरध्यायमध्यायतं(१)
ध्यायंध्यायमिहाभिधेयमधुना शोधाय धीर्धीयताम् ॥ १ ॥



(१) अधिकमायतोऽध्यायतः अतिविस्तृत इत्यर्थः ।

## अथ तृतीयोऽध्यायः

# प्रत्ययः ॥ १ ॥

अधिकारोऽयम् । पञ्चमसमाप्तिपर्यन्तम् । अत्र विधीयमानाः प्रत्ययसंज्ञाः स्युः । तेन प्रकृत्यादौ नातिव्याप्तिः । अथैवमपि हनस्त च, त्रपुजतुनोः षुक् इत्यादिविकारागमेषु अतिव्याप्तिर्दुर्वारा । नच परत्वाभावात्तेषां संज्ञा न भविष्यतीति वाच्यम् । श्नम्बहुजकक्षु परत्वं विनापि प्रत्ययत्वस्वीकारादिति चेत् ।

अत्राहुः—प्रयोजनाभावान्न तेषां संज्ञेति । तथाहि—परविधानार्थं न तेषां तत्संज्ञा । षष्ठ्यैव स्थानसंबन्धावयवसंबन्धान्यतरस्य प्रतिपादितत्वात् । नाप्युदात्तत्वार्थम् । आगमानां विशिष्यानुदात्तस्वरविधानात् । विकाराणां तु निरच्कानां स्वरस्यैव विरहात् । साच्कानां तु प्रवृत्तिकालेएवान्तरङ्गत्वात्स्थानिस्वरप्रवृत्तेः । पञ्चमीनिर्देशाभावाच्च । नच तद्व्यतिरेकेणापि प्रत्ययसंज्ञाबलादेव परत्वं स्यादिति वाच्यम् । षष्ठ्यैव स्ववाक्योपात्तसंबन्धविशेषोक्तौ विरोधाद्वाक्यान्तरोपात्तपरत्वान्वयानुपपत्तेः ।

नन्वेवं गापोष्टगित्यादावानन्तर्यसंबन्धे षष्ठीविज्ञानात्प्रत्ययविज्ञानोत्पत्तावपि विकारागमस्थलेऽनुवाद्यस्य षष्ठीनिर्दिष्टत्वात् प्रत्ययविधिर्नस्यात् । पञ्चमीनिर्देशाभावात् । श्रुतयोरेवस्थान्यादेशयोरागमागमिनोश्च संबन्धप्रतिपादने वाक्यस्योपयोगात् । वाक्यान्तरस्य च संबन्धविशेषकल्पकस्याभावात् । नच हनस्तचेत्यत्र धातोरिति त्रपुजतुनोः षुगित्यत्रच प्रातिपदिकादिति पञ्चम्यन्तस्यानुवृत्त्या तेन प्रत्ययविधिः । श्रूयमाणेनच षष्ठ्यन्तेन स्थान्यादेशभावस्यागमागमिभावस्य च निर्वाह इति वाच्यम् । हन्तेरादेशविधावुपयोगा-

त् । विभक्तिभेदाच्च । तेनधातोर्विशेषयितुमशक्यतया हन्तेस्त-कारादेशो धातुमात्राच्च क्यप् इति वाक्यार्थप्रसङ्गात् । यद्वा हन्तेस्तो भवति धातोः क्यप् भवति कस्माद्ध-न्तेरिति वाक्यभेदेन हन्तिना धातुविशेषणात् । यद्वा महासंज्ञाक-रणमन्वर्थत्वविधानार्थम् । तेन निरर्थकानां विकारागमानां न प्र-त्ययसंज्ञा । विकारागमानांचानर्थकत्वमन्वयव्यतिरेकाभ्यां प्रकृते-रेव तदर्थत्वात् तरबादिवदर्थान्तरद्योतकत्वाभावान्निर्विवादम् । नच प्रत्ययसंज्ञासिद्धौ प्रकृत्यर्थेनैवार्थवत्त्वान्निर्वाह इति वाच्यम् अर्थवत्त्वाभावेन प्रत्ययत्वमेव नास्तीत्युक्तौ उक्तयुक्तेरन्योन्याश्रय-ग्रस्तत्वेनानुल्लासात् ।

अथप्रत्याययतीति कर्तृसाधनः प्रत्ययशब्दः उत प्रत्याय्यते इति कर्मसाधनः ? नाद्यः । स्वार्थिकेष्वव्याप्तेः । प्रकृत्यर्थातिरि-क्तार्थविषयबोधस्य तैरजननात् । नान्त्यः । यस्यार्थः प्रकृत्या प्र-त्याय्यते स प्रत्याय्यमानार्थ इति तदर्थात् । स्वार्थिकसन्प्रत्यये संगृहीतेऽपि इच्छार्थकसनादावव्याप्तेः । इच्छार्थानां तथा प्रकृति-बोध्यार्थबोधकत्वादितिचेत्

उच्यते । एक एव शब्दोऽनेकशक्तियोगात्प्रवृत्तिनिमित्तद्व-यावच्छिन्नोऽधिक्रियते इति यथासंभवमुभयत्र संज्ञाप्रवृत्तिः । ण्य-न्तस्य निपातनादचि णेर्लुक् । नचागमेऽप्येवं स्यादिति वाच्यम् । प्रत्ययस्यागमव्यतिरेकेणापि प्रयोगादागमस्य तु तदभावादिति प्रत्ययस्यैवान्वयव्यतिरेकाभ्यामर्थवत्त्वपर्यवसानात् ।

अनुन्यासकारस्तु प्रतियन्त्यर्थमनेनेति करणेऽच्प्रत्ययः । य-द्वा पुंसि संज्ञायां घप्रत्यय इत्याह । नच ल्युटा बाधितत्वात्करणे कथमुक्तप्रत्ययौ । कृत्ल्युट्तुमुन्खलर्थे वासरूपविधेरभावादिति वा-च्यम् । तत्र करणाधिकरणयोरित्यस्य ल्युटोऽनुपादानादिति अ-

न्यत्र विस्तरः ।

तत्सिद्धं यौगिकोऽयं प्रत्ययशब्द इति नचप्रकृत्यादावव्याप्तिः । अधिकारविशेषविहितत्वस्य प्रयोगोपाधित्वात् तत्प्रकारकबोधाभावेनोक्तधर्मे रूढ्यवच्छेदकत्वस्य वक्तुमशक्यत्वात् अत एव गोशब्दशक्तौ गोत्वं नोपाधिस्तत्प्रकारकबोधादिति न्यायचिन्तामणावुक्तम् ।

नैयायिकास्तु—

याद्दशार्थप्रकृत्यन्यो निपातान्यश्च वृत्तिमान् ।
स ताद्दशार्थे शब्दः स्यात् प्रत्ययोऽसौ चतुर्विधः ॥

याद्दशार्थेत्यस्य वृत्तावप्यन्वयः । वृत्तिः शक्तिर्निरूढलक्षणा वा । प्राशस्त्ये मतुपो विधानात् । तथाच याद्दशार्थप्रकृतिनिपातभिन्नत्वे सति यः शब्दो याद्दशार्थे उक्तान्यतरवृत्तिमान् स ताद्दशार्थकप्रत्ययः । उक्तान्यतरवृत्त्या गुणगुणिनोः स्थितिप्रस्थानयोश्च बोधके शुक्लस्थादौ व्यभिचारवारणाय प्रकृतिभिन्नेति । शक्त्या समुच्चयादिबोधके चादिनिपाते तद्वारणाय निपातभिन्नेति । स्वरादयस्तु स्वपरतायामेव प्रकृतयो नत्वेकत्वादौ । तृतीयादौ सत्यपि कर्मत्वादेर्लक्षणा न निरूढा । प्रायशः प्रयोगविरहात् । पशुना रुद्रं यजते इत्यादौ त्वानुशासनिकत्वात् । स्वार्थिकप्रत्ययमात्रस्य स्वरूपमर्थः । तेन जुगुप्सते देवतेत्यादौ स्वार्थिकसन्तलादौ नातिव्याप्तिः । भावघञादीनामप्युक्तैव गतिः । भावपदस्य धात्वर्थस्वरूपपरत्वात् । अन्यथा पाकं पश्येत्यादौ धात्वर्थस्य कर्मत्वान्वयो न स्यात् । सुबर्थे धात्वर्थान्वयस्याव्युत्पत्तेः । यद्वा

इतरार्थानवच्छिन्ने स्वार्थे यो बोधनाक्षमः ।
तिङर्थस्य विभाग्यन्यः स वा प्रत्यय उच्यते ।

यः शब्दः शब्दान्तराविशेषिततया यादृशस्वार्थविशेष्यकतिङर्थप्रकारकान्वयबोधने स्वरूपयोग्यः स तादृशार्थे प्रत्ययः। चैत्रोऽस्तीत्यादौ पदान्तरार्थानवच्छिन्नस्वार्थे नाम्नि तिङर्थान्वयबोधकत्वमेवेति नातिव्याप्तिः। चैत्रत्वविशिष्टचैत्रस्यैकनामार्थत्वेन तत्रैव कृत्यन्वयात्। पदान्तरार्थं धर्मितावच्छेदकीकृत्य यदर्थप्रकारकबोधो न भवत्येव तत्त्वमित्यर्थात्। पदान्तरपदेन च प्रत्ययत्वाभिमतार्थप्रकारकबोधो विशेष्यतासंबन्धेन यच्छब्दार्थे भवति तद्भिन्नपदं ग्राह्यम्। अन्यथा तिङपेक्षया भेदस्य चैत्रपदेऽपि सत्त्वात्तदर्थचैत्रत्वधर्मितावच्छेदककचैत्रविशेष्यकतिङर्थकृतिप्रकारकबोधोदयेनातिव्याप्तिः। यजत स्थीयते इत्यादौ तिङां, पुत्रीयतीत्यादौ क्यजादीनां, पाचकोस्तीत्यादौ कृतां, काश्यपिरित्यादौ तद्धितानां प्रकृत्यर्थावच्छिन्न एव स्वार्थे कृत्यादौ तिङर्थस्य वर्तमानत्वादेर्बोधकत्वं नतु तदनवच्छिन्न इति न तेष्वव्याप्तिः। निभनीकाशादीनां समासमात्रप्रयोगभाजां तादृशस्वार्थे तिङर्थान्वयबोधं प्रति स्वरूपायोग्यत्वात् तद्वारणाय निभाद्यन्यत्वमपि निवेश्यमित्याहुः॥

# परश्च ॥ २ ॥

स्पष्टोऽर्थः। ननुपञ्चमीनिर्देशपरशब्दाध्याहारेण गापोरित्यादिषष्ठीनिर्देशे च आनन्तर्याश्रयेण परत्वसिद्धौ व्यर्थमेतदिति चेत्। न, पञ्चम्याकाङ्क्षितस्यावधेः पूर्वशब्देनापि समर्पणसंभवात्। आनन्तर्यस्यापि पूर्वत्वेन निर्वाहसंभवात् नियमार्थतया सूत्रप्रवृत्तेः। नच बहुजकचोः पूर्वं मध्ये च विधेर्बहुजेव पूर्वमकजेव मध्ये इति नियमार्थत्वात् प्रत्ययान्तराणां तद्देशव्यावृत्त्या परत्वमेवार्थाद्भविष्यतीति वाच्यम्। मध्यस्यानियतत्वेन टेः प्रागित्येव मध्यविशेषस्य तेन नियमेऽपि मध्यान्तरस्य व्यावर्तयितुम-

ज्ञापकत्वात् । वहुजकचोर्विधेयत्वेन पुरस्तादेव वहुच् । प्राकृटेरेवाकच् इत्यस्यैव नियमार्थतया प्रसयान्तरे देशभेदस्य व्यावर्तयितुमशक्यत्वाच्च । नच तस्मादित्युत्तरस्येत्यनेन निस्तारः । परस्य सतो यत्कार्यं तत्रैव प्रसक्तेः । धर्मिणः परत्वानिधाने तस्यानुपयोगात् । नियमारम्भपूर्वविधौ अप्रवृत्तेः ।

ननु नित्यशब्दपक्षे स्वभावत एव परस्य सनादेः साधुत्वमात्रं प्रतिपाद्यते । कार्यशब्दपक्षेऽपि न परग्रहणेनार्थः । तस्मादित्यस्य पञ्चमीनिर्देशलिङ्गेन प्रदेशपूर्वस्थितस्य द्वैधार्थपर्यवसानात् । सत एव कार्यित्वेनोपादाने उत्तरस्य कार्यं भवतीति कार्यापेक्षा षष्ठी । असत एव विधाने उत्तरस्य भावो भवतीति भावापेक्षया कर्तृषष्ठीति ज्ञापनात् । नचैवं सन्नित्यादिप्रथमानिर्देशैरर्थक्यमिति वाच्यम् । निर्देशमात्रार्थत्वात् । पश्चात्परस्य सनो भावो भवतीति षष्ठीकल्पनात् ।

यद्वाऽनियतदेशे सनादेरुत्पत्तावपि कृत्कृन्यप्रत्ययादिसंज्ञाशास्त्रकार्यं यद्विधीयते तन्नान्यदेशस्य । यद्देशस्य च शास्त्रीयं कार्यं तद्देशस्यैव साधुत्वात्प्रयोगो भविष्यतीति न दोषः । विकारागमेषु च पूर्वोक्तरीतेरनुसर्तव्यत्वात् । गापोष्टगित्यादौ धातोरित्यधिकाराद्धातोः परष्टक् गापोरत्वनन्तर इति व्याख्येयम् । नचप्रयोगासमवायिनां क्विवादीनां सर्वदा लोपप्रतियोगिनां तस्मादित्युत्तरस्येत्यस्यानुपस्थानादनियतदेशे लोपः स्यात्तद्वारणाय परभूतानामेव लोपो यथास्यादित्येवमर्थमिति वाच्यम् । अनुबन्धासंजनेन लिङ्गेन तेषां परभूतानामेव लोपनिर्णयात् । अनुबन्धकार्यस्य कितीत्यादिविहितस्य परभूतप्रत्ययाश्रयत्वात् । तस्मिन्निति निर्दिष्टे पूर्वस्येति वचनात् । नचानियतदेशपक्षेऽपि पाक्षिकी परतापुपत्तीत्यैवानुदनासङ्गस्य कृतार्थत्वात् कथं नियमेन परत्वसिद्धि-

रिति वाच्यम् । पाक्षिकवैयर्थ्यस्य तथापि दुष्परिहरत्वात् । स्पृशोनुदक इत्यादौ सकृत्श्रुतायाः पञ्चम्याः पूर्वपरान्यतराध्याहारेणोपपत्तौ यदा पूर्वशब्द एवाऽध्याह्रियते तदानुबन्धानर्थक्यस्य दुर्वारतया परभूतलोपलिङ्गत्वे बाधकाभावाच्चेति प्राप्ते ।

सिद्धान्तः । प्रयोगनियमार्थं वेति । वाशब्दो वार्तिकमते क्विबाद्यर्थं परवचनमिति पक्षस्य स्थितत्वाद्विकल्पार्थे । भाष्यमते तु उक्तरीत्यान्यथासिद्धत्वात्तर्हीत्यर्थे परभूतानामेव प्रयोगो नत्वपरभूतानामेवेति नियमार्थमिदम् । नचाविपरीतप्रयोगस्यादर्शनान्न तथेति वाच्यम् । सदेवदत्तो बाभ्रव्यो माण्डव्यो लामकायन इति प्रयोक्तव्ये बभ्रुर्मण्डुर्लमक इति, किमस्य प्रमाणमिति वक्तव्ये कि मस्यद्वयसमिति च प्रयोगादर्शनात् तदसाधुत्वदर्शनाय नकेवला प्रकृतिः प्रयोक्तव्या, न केवलः प्रत्यय इति, नियमो बोध्यते । न च चन्द्रो मुखमित्यादाविवाभेदोपचारात्कथमसाधुत्वमिति वाच्यम् । भृत्यादावपि तदभेदोपचारदर्शनादपत्यार्थस्य नियमेनानवगमात् । तदुक्तं हरिणा—

सोऽयमित्यभिसंबन्धात्तद्धितेन विना यदि ।
बभ्र्वादयः प्रयुज्येरन्नापत्ये नियमो भवेत् ॥

तस्मादपत्यविवक्षायामभेदोपचारव्यतिरेकेण गर्गा इति बहुवचनान्तवदेकवचनान्तानां बभ्र्वादीनां प्रयोगो माभूदिति नियमार्थं वचनम् । एतेन रघूणामित्यादौ अभेदलक्षणेति सांप्रदायिकग्रन्थो व्याख्यातः । अभेदोपचारेणैव प्रयोगनिषेधात् । अत एव शक्तिभ्रमेण गवि प्रयुक्तो गवयशब्दोऽसाधुः । सादृश्यलक्षणया तु साधुरेवेत्यभ्युपगमः । उभयनियमश्चायम् । तस्मादित्युत्तरस्येतिसिद्धे प्रकृतेः पर एव प्रयोगो नतु पूर्व इति, माकदाचिदप्रयुक्तो भूदितिच । ननु वावचने परत्वोपलक्षितः सन् पक्षे भवति, पक्षे तु नैवोत्पद्यते इति

पाक्षिकप्रत्ययानुत्पत्त्यर्थं परग्रहणमस्तु । परत्वस्य प्रयोगे नियतत्वेन निवृत्तौ तात्पर्यायोगात् । अन्यथा तत्र प्रत्ययानुवृत्त्या वावचनेन प्रत्ययसंज्ञाया एव विकल्पः स्यादिति चेन्न । तत्र वृत्तिपक्षे सनो नित्यत्वात् । कर्तुमिच्छतीत्यवृत्तिपक्षे च तदनुत्पत्ते र्वावचनस्य प्रत्याख्यानात् । तस्मात्प्रयोगनियमार्थमेवेति स्थितम् ॥

# आद्युदात्तश्च ॥ ३ ॥

नन्वस्वरस्याच उच्चारणानुपपत्तेरन्तोदात्तमध्योदात्तानुदात्तस्वरितानां च चित्स्वरित्स्व पित्स्वरितत्स्वर्लिङ्गेन प्रत्ययविशेषे नियतत्वात्पारिशेष्यात्प्रत्ययान्तराणामाद्युदात्तत्वसिद्धिरिति चेन्न । न, चिदादीनामनियतस्वरप्राप्तौ अन्तोदात्त एव चिदिति नियमो नतु चिदेवान्तोदात्तइति स्वरान्तरस्य तत्र व्यावृत्त्यनुपपत्तेः । तथा चतल्लिङ्गरहितानां प्रत्ययानामानियमेन स्वरप्राप्तौ नियमार्थमिदम् ।

स्यादेतत् । ञ्नित्यादिर्नित्यं प्रत्ययस्यच अदुपदेशाल्लसार्वधातुकमनुदात्त सुप्पितौ चेति स्वरान्तरसन्निधावेवाद्युदात्तानुदात्तत्वे विधीयेयाताम् । अलं प्रत्ययसंज्ञासंनियोगेन तद्विधानेन । एवमाद्युदात्तानुदात्तयोः सकृद्ग्रहणे लाघवमिति चेद । मैवम् । तथासति प्रत्ययग्रहणे यस्मात्सविहितस्तदादेस्तदन्तस्य चेति परिभाषया प्रकृतिप्रत्ययसमुदायस्यादिरुदात्तोऽन्त श्चानुदात्तः स्यात् । आद्युदात्तश्चेत्यस्य तु प्रतियोगमुपस्थाने आद्युदात्तत्वविशिष्ट एव तव्यादिरुत्पद्यतेऽनुदात्तत्वविशिष्टश्चतिबादिरिति नदोषः । उत्पन्नस्यैव प्रत्ययस्य तदादिग्रहणादिकार्यसंबन्धाद उत्पद्यमानस्य तदयोगाद ।

स्यादेतत् । ञ्नित्यादिर्नित्यमित्यारम्भादेवात्र न तदादिग्रहणम् । अन्यथा प्रत्ययस्यचेत्यनेनैव सिद्धौ तद्वैयर्थ्यापत्तेः । एवं

धातुप्रातिपदिकयोरन्तोदात्तत्वविधानसामर्थ्यात् सुप्पितौ चेत्यत्रापि न तदन्तग्रहणम्। अनुदात्तप्रत्ययपरत्वस्थले एव तयोरन्तोदात्तत्व-विधेः सप्रयोजनत्वात्। यातीत्यादौ कृष्णतर इत्यादौ च पिति प्रत्यये तच्छ्रवणात्। यात इत्यादौ सतिशिष्टेन प्रत्ययस्वरेण तद्बा-धात्। नचास्ते, शेते इत्यादौ तास्यनुदात्तेदिति लसार्वधातुकानु-दात्तत्वे धातुस्वरस्यावकाशोऽस्त्विति वाच्यम्। न्यायसाम्येन त-त्रापि तदादिग्रहणप्रसङ्गात्। नच यथान्यायं लवितव्यमित्यादौ तव्यप्रत्ययस्योत्पत्तिशिष्टाद्युदात्तत्वप्रवृत्तेस्तदुत्तर प्रवर्तमान इडाग-मः शेषनिघातेनानुदात्तो भवति। उक्तरीत्या तु तव्यप्रत्ययोत्पत्त्य-नन्तरं आद्युदात्तत्वं बाधित्वा परत्वादिडागमे कृते पुनः प्रसङ्गवि-ज्ञानात्प्रवर्तमानमाद्युदात्तत्वं इडागम एव विश्राम्येदिति वाच्यम्। आगमानामनुदात्तत्वस्यावश्यमारम्भणीयतया तेनैव गतार्थत्वात्।

तथाहि—लूञ् छेदने लुटि तिपो डा तासिः इट्। यद्यत्रेटोऽनु-दात्तत्वं नस्यात्तदा तासिभक्तत्वादिडुदात्तः। शेषनिघातेन च तास्याकारोऽनुदात्तः। टिलोपे कृते तस्योदात्तलोपनिमित्तादाका-रस्योदात्तनिवृत्तिस्वरेणोदात्तत्वं न स्यात्। इटोऽनुदात्तत्वे तु तास्या-कारस्योदात्तत्वादुदात्तनिवृत्तिस्वरः सिद्ध्यति। अत्र आद्युदात्तस्य इटश्च प्राप्तौ परत्वादिट्। कृताकृतप्रसङ्गित्वेन द्रुतोऽनित्यत्वात्। नचेटि कृते शब्दान्तरप्राप्तेः स्वरोऽनित्य इति वाच्यम्। स्वरेकृते इटोऽपि शब्दान्तरप्राप्त्या तथात्वात्। आगमस्वरस्यापि श-ब्दभेदहेतुत्वात्। श्रुतिभेदस्योभयत्र साम्यात्।

अथान्तरङ्गत्वादाद्युदात्तत्वमेव पूर्वं प्रवर्तते। उत्पत्तिसन्नि-योगशिष्टत्वात्। उत्पन्ने प्रत्यये प्रकृतिप्रत्ययद्वयाश्रयत्वादङ्गस्येडागम इति बहिरङ्गत्वात्। नच प्रत्ययग्रहणपरिभाषया प्रत्ययाश्रयणे प्र-कृतिरप्याश्रितैवेति वाच्यम्। प्रत्ययस्वरविधौ तदादिविधिर्नास्ती-

ति अस्य समनन्तरमेवोक्तत्वात् । तथाचाद्युदात्तत्वानन्तरं प्रवर्तमान इट् शेषनिघातेनानुदात्त एव भविष्यतीति किमित्यागमानामनुदात्तत्वमारभ्यमितिचेत् । न । तथापि लिङ्विषयेत्यत्राशीर्लिङि विशेषविहितत्वात्पूर्वं सीयुटि कृते पश्चाल्लादेशप्रवृत्त्या तत्र प्रवर्तमानमाद्युदात्तत्वं सीयुट एव स्यात् । आगमानामनुदात्तत्वविधाने तु सीयुटोऽनुदात्तत्वे कृते इटोऽदित्यकारादेशस्योदात्तत्वं सिध्यतीति तत्पावश्यमारभ्यत्वात् । एवंचागमे कृते तद्विशिष्टस्यैव प्रत्ययत्वं नतु केवलस्यापीति भाष्याभिप्रायो लभ्यते । अन्यथा सीयुटि कृतेऽपि इटः प्रत्ययत्वे तदुदात्तत्वस्य सिद्धावनुपपत्त्यभावादिति केचित् ।

अन्ये तु आगमविशिष्टस्य केवलस्यच प्रत्ययत्वात्कृदादित्सीयुट ईकार एवोदात्तः स्याद इति तद्व्यावृत्त्यर्थमागमानामविद्यमानवचनमावश्यकमेव । अतएव प्रत्ययादेर्झस्यान्तादेश इति व्याख्यानं निर्दोषम् । शयांतैरित्यत्र अडाटोः कृतयोरपि झकारस्य प्रत्ययादित्वानपायादिति व्याचख्युः ।

यत्तु आगमा अनुदात्ता इति विशेषवचनेन सीयुटोऽनुदात्तत्वे तत्रोदात्तत्वस्य न प्रवृत्तिरिति । तदनव । तद्वचनानारम्भपक्ष एवोक्तपरीभाष्यक्रद्भिरुपन्यासात् । उक्तदोषभयादेवागमानुदात्तत्ववचनस्याश्रितत्वात् । तच्च ज्ञापकबललभ्यम् । यासुट्परस्मैपदेषूदात्तो ङिच्चेति यासुट उदात्तवचनेनागमान्तराणामनुदात्तत्वानुमानात् । नचचितुयादिसाटौ पिद्वक्तत्वाद्यासुटोऽनुदात्तत्वप्रसङ्गे उदात्तविधानार्थत्वमेव तस्योति वाच्यम् । अपिच्चलिङिसेवं यासुट्संनियोगेन लिङोऽपित्त्वविधानेनापि तादृगार्थसिद्धेः । यथान्यासे हि नवमात्राः । उक्तन्यासे षडेवेति लाघवसम्भवात् । तथाच गुरुतरन्यासकरणसामर्थ्यादागमा अनुदात्ता इति ज्ञापन-

मव्याहतम् ।

यद्यप्यागमैः स्वोत्तरस्याच आदित्वनिरासात्कथमाद्युदात्तत्वम् । आगमानामविद्यमानवद्भावातिदेशे तु अत्रादेशादिकं न स्यात् । स्वरविधावेवाविद्यमानत्वमितिचेत् । लविनेत्यत्रोदात्तादनुदात्तस्येति स्वरितो न स्यात् । तृन्नन्ताद्युदात्तं हि तत् । शेषनिघातेन द्वयोरनुदात्तत्वम् । तत्राविद्यमानवद्भावेनेटः स्वरितत्वानुपपत्तेः । नचषाष्ठिकस्वरविधावेव तदतिदेश इति वाच्यम् । चिन्तित इत्यत्र निष्ठाच द्व्यजनादिति स्वरप्रसङ्गात् । तथापि प्रत्ययस्वरविधावुक्तातिदेशान्नदोषः । सचातिदेशो ज्ञापकसिद्धः । प्रत्ययाद्युदात्तत्वे कर्तव्ये यद्यागमानामादित्वविघातकत्वं स्यात् तदा चिनुयातामित्यादौ यासुटः प्रत्ययादित्वात्सिद्धमुदात्तत्वमिति यासुट उदात्तत्ववचनं व्यर्थं स्यादतः प्रत्ययाद्युदात्तत्वे कार्ये आगमानामविद्यमानवद्भावं ज्ञापयतीति नानुपपत्तिः । तस्मादागमानुदात्तत्वानुरोधादपि प्रत्ययसंज्ञासांनियोगेनाद्युदात्तत्वं नारम्भणीयम् ।

अथ स्रौघ्नी माथुरीत्यादौ विभज्यान्वाख्याने स्रौघ्न ई इति स्थिते आद्युदात्तत्वं बाधित्वा परत्वाद्यस्येतिचेति अकारलोपे कृते उदात्तनिवृत्त्यभावादुदात्तनिवृत्तिस्वरो न स्यात् । प्रत्ययसंज्ञासंनियोगेन त्वाद्युदात्तत्वविधानेऽणो लोपप्रवृत्तेः पूर्वमेवोदात्तत्वादनुदात्ते ङीपि परेच तल्लोपादुक्तस्वरासिद्धिरितिचेत्तदप्यसत् । स्वार्थादीना क्रमेण प्रतीतिरितिन्यायेन स्त्रीत्वनिमित्तकप्रत्ययस्य बहिरङ्गत्वात्तन्निमित्तकस्य लोपस्यापि तथात्वेन प्रथममन्तरङ्गस्याद्युदात्तस्यैव प्रवृत्तौ उक्तस्वरसिद्धेः । एवमङ्गस्य भस्येत्यस्य चापेक्षितत्वादपि लोपस्य बहिरङ्गत्वमवसेयम् । अन्यथा औत्सी कांसिकी आत्रेयीत्यत्रापि लोपेन ञित् नित् कित्

स्वराणां बाधापत्तौ उदात्तनिवृत्तिस्वरो न स्यात् । यद्यपि ञ्नित्‌दादिस्वराणा प्रत्ययस्वरापवादत्वादेव बलवत्त्वं कंसेन क्रीता कंसिकी । कंसाट्टिठजिति ठञ्श्चित्करणसामर्थ्यात्पूर्वमिकादेशः ततः प्रत्ययाद्युदात्तत्वं ततश्चादेरुदात्तत्व अन्त्यस्य लोप इति नास्ति विप्रतिषेधः । तथाप्यात्रेयीत्यत्र इतश्चानिञ इति ढक् । आयनादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति पूर्वमेयादेशः ततो ङीप् । अत्रान्तरङ्गपरिभाषां विनोदात्तनिवृत्तिस्वरो न स्यात् । अतः प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तवचनं व्यर्थमिति पूर्वपक्षः ।

सिद्धान्तस्तु उक्तन्यासे परत्वाद्धातुस्वरं प्रत्ययस्वरो बाधेत यथान्यासे तु प्रत्ययस्वरं धातुस्वरो बाधते परत्वादिति । अस्मिन्नेव प्रदेशे आद्युदात्तविधानं युक्तम् । प्रामाणिकगौरवस्य न्याय्यत्वात् । तथाहि प्रत्ययाद्युदात्तस्यावकाशः समत्वमित्यत्र प्रकृतेरनुदात्तत्वे धातुस्वरस्य प्रसयो यत्रानुदात्तः तत्र पचतीत्यादौ गोपायति धूपायतीत्यत्र धातोरन्तइति भवति विप्रतिषेधेन । तत्राहि गुपित्यस्य पूर्वमन्तोदात्तः तत आयप्रत्ययः सनाद्यन्ताइति धातुसंज्ञा । तत्र स्वरद्वयप्राप्तौ अन्तोदात्त एव । तथापचतीत्यादौ कार्यमित्यादौच सावकाशयोः पित्त्वतित्त्वनिबन्धनयोरनुदात्तस्वरितयोः कार्या हार्येत्यत्र टापि पूर्वमेकादेशे कृते तस्य पूर्वं प्रत्यान्तवद्भावात्तित्स्वरः परं प्रत्यादिवद्भावात्तु पित्स्वरः प्राप्नोति । विप्रतिषेधात्तित्स्वरः । पित्स्वराच्चित्स्वरो विप्रतिषेधेन । पित्स्वरस्यावकाशः पूर्वोक्तः । चित्स्वरस्य चलनः कम्पन इति युजन्तम् । आम्बष्ठ्या सौवर्येत्यत्र यङ श्चापि कृते उभयं प्राप्नोति । चित्स्वरो भवति परत्वात् ।

वस्तुतस्तु नायं विप्रतिषेधो युक्तः । आयप्रत्ययस्य संनियोगशिष्टत्वादाद्युदात्तत्वे कृतेऽपि सति शिष्टस्वरबलीयस्त्वमिति

रीत्या पश्चात्प्रवृत्तधातुसंज्ञानिबन्धनस्याद्युदात्तस्य निर्बाधत्वात् । चित्करणस्वरयोरपि तथा शब्दान्तरप्राप्त्या तयोरनित्यत्वेऽपि परत्वात्पूर्वं स्वरिते कृते एकादेश[illegible]ः [illegible]योरेकादेशोऽ[illegible]त्वादित्यत्र रः । [illegible]ऽनुदात्त[illegible]स्यापि स[illegible] । [illegible] [illegible]करण[illegible] [illegible]ः । नच(१) [illegible]ग्रहणात् इति [illegible] । तावन्मात्रार्थत्वे [illegible] एव [illegible] । [illegible]संज्ञासन्नियोगेन प्रत्ययानामाद्युदात्तत्वविधान [illegible] [illegible] ।

# अनुदात्तौ सुप्पितौ ॥ ४ ॥

पूर्वापवादः । सुपः पितश्च प्रत्यया अनुदात्ताः । सुप्त्वापित्त्वाभ्यामनुगमयितुं सूत्रे द्वित्वम् । दृषदौ दृषदः । पचति पठति ।

# गुप्तिज्किद्भ्यः सन् ॥ ५ ॥

गुप् गोपने । तिज् निशाने । कित निवासे रोगापनयने च । मानुत्तरसूत्रे वक्ष्यते एते अनुदात्तेतो निर्दिश्यन्ते इति भाष्यम् । तत्स्वरसादेव 'स्वाश्रयं कश्चिकित्सतु' इति खण्डनव्याख्याता चिकित्सतामिति युक्तमिति वर्द्धमानः । कैयटस्तु क्रमदर्शनात् कितिपठितो न त्वयमनुदात्तेदिति व्याचख्यौ । वक्ष्यमाणोपोत्रार्थेषु एतेषामात्मनेपदित्वमर्थान्तरेऽननुबन्धाश्चुरादय एवैते बोध्याः । अयं चार्थविशेषो मुनित्रयानुक्तोऽपि इच्छासन्विधौ [illegible]स्य वाग्रहणस्यैतत्सूत्रद्वये व्यवस्थितविभाषात्वेनार्थविशेषपुरस्कारेणैव सनो विधानाद्वृत्तिकारादिभिः प्रयोगानुसारादुपनिबद्धः । अत एतदर्थेषु [illegible]न्तरत्वादेषां नित्यं सन्विषयत्वादनुदात्तरूपालिङ्गस्या-

(१) सामान्यग्रहणाविघातार्थं इति पुस्तकान्तरे पाठः ।

वयवे चरितार्थत्वात्समुदायविशेषकत्वमिति सन्नन्ते च आत्मनेपदप्रवर्तकत्वम् । अथ विशेषः । गुपेर्निन्दायां सन् । तिजः क्षमायाम् । कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च । मानेर्जिज्ञासायाम् । बधेश्चित्तविकारे । दानेरार्जवे । शानेर्निशाने इति । सनाद्यन्ता धातव इति धातुत्वम् । तङ् सन्यङोरिति द्वित्वम् । धातोरित्यविहितत्वान्नार्धधातुकत्वम् । तेनेड्गुणौ न । यद्यपि हलन्ताच्चेति सनः कित्वादपि गुणाभावः सुसाधः तथाप्युक्तरीत्या तत्प्रसक्तिरेव नास्तीति किन्तदनुसरणेन । जुगुप्सते । तितिक्षते । चिकित्सति । प्रत्ययान्तत्वादाम् । जुगुप्सां चक्रे इत्यादि ।

# मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥ ६ ॥

एभ्यः सन्स्यात् अभ्यासस्य दीर्घश्च । मान पूजायाम् । बध बन्धने । अत्र दानशानौ स्वरितेतौ । आद्यौ अनुदात्तेतौ । मीमांसते । बीभत्सते भषभावचर्त्वे । दीदांसति । दीदांसते । शीशांसति । शीशांसते ।

ननु दीर्घत्वमभ्यासाकारस्य प्राप्नोति । विशेषविधेः सामान्यबाधकतया सन्यत इतीत्वस्य दुर्लभत्वात् । अभ्यासस्येतिवचनादभ्यासप्रतीक्षायामपि इत्वापेक्षायां प्रमाणाभावात् ।

उच्यते । ईच्चाभ्यासस्येति सूत्रयितव्यम् । नचैवं हलादिःशेषस्यापिबाधापत्तिः । ईचाच इति वाच्यत्वात् । हलादिशेषविना ऽभ्यासस्याजन्तत्वाभावेन तदबाधात् । यद्वा दीर्घश्चेतोभ्यासस्येति सूत्रणीयम् । तथाचानुवादसामर्थ्यादित्वप्रवृत्त्यनन्तरं दी-

र्घः । यद्वाऽऽभ्यासस्येति छेदः । अभ्यासस्य विकार आभ्यासः । स्वार्थादित्वमेव । लोपस्याभावरूपतया तदादेशस्य विधातुमशक्यत्वात् । तत्प्रयोज्यनिवृत्तिप्रतियोगित्वं हि स्थानित्वम् । ह्रस्वाकारस्यैव दीर्घविधानेतु तद्धितनिर्देशवैयर्थ्यम् । दीर्घश्रुत्याऽचश्चेति परिभाषोपस्थानात् । अजन्तस्य ह्रस्वस्य दीर्घस्य वा दीर्घविधाने विशेषाभावात् । यद्वासन्निमित्तकविकारस्यैव ग्रहणात्

वस्तुतस्तु अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्ते इति दीर्घोकित इत्संकिद्ग्रहणेनज्ञापयिष्यमाणत्वादित्वानन्तरमेव दीर्घ इति नदोषः । भामत्यां तु मीमांसाशब्दो माङ्माने इत्यस्माद्व्युत्पन्नः । नच तस्य सूत्रेऽनुपादानात्सनो ऽसिद्धिः । मानित्यनेनैव नकारान्तत्वं निपात्योक्तधातोर्ग्रहणसम्भवात् । मुण्डमिश्रादिसूत्रे हलकलयोरदन्तत्ववत् इति शब्दतात्पर्याभ्यामुक्तम् । नच सनिमीमेति इस्भावापत्तिः । घ्वादिसाहचर्येणेच्छासन्येव तद्विधानादिति दीक्षिताः । एवंच नान्तत्वनिपातनस्य स्वकल्पनायामन्तर्भावो न युक्तः । वाचस्पतिमिश्रैः स्वयमेवोक्तत्वात् । मानपूजायामिति वृत्तिग्रन्थो भङ्क्त्वाऽव्याख्येय इत्यपि मिश्रतात्पर्यकल्पनमयुक्तम् । तस्मादपि सन्प्रत्ययस्य मिश्रैरेव लिखितत्वात् । अतएव माङ्माने इत्यस्मान्मीमांसाशब्दे पूजितविचारार्थत्वं प्रसिद्धिवशात् । मानपूजायामित्यस्मात्तु स्मृत्यैवेति तत्र कल्पतरुकारैरुक्तमिति दिक् ।

# धातोः कर्मणः समानकर्तृकादिच्छायां वा ॥ ७ ॥

अत्रार्थद्वारके कर्मत्वसमानकर्तृकत्वे तेच सन्निधानादिच्छा-

र्घः। यद्वाऽऽभ्यासस्येति छेदः। अभ्यासस्य विकार आभ्यासः। सचार्थादित्वमेव। लोपस्याभावरूपतया तदादेशस्य विधातुमशक्यत्वात्। तत्प्रयोज्यनिवृत्तिप्रतियोगित्वं हि स्थानित्वम्। ह्रस्वाकारस्यैव दीर्घविधानेतु तद्धितनिर्देशवैयर्थ्यम्। दीर्घश्रुत्याऽचश्चेति परिभाषोपस्थानात्। अजन्तस्य ह्रस्वस्य दीर्घस्य वा दीर्घविधाने विशेषाभावात्। यद्वासन्निमित्तकविकारस्यैव ग्रहणात्

वस्तुतस्तु अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्ते इति दीर्घोकित इत्यकिद्ग्रहणेनज्ञापयिष्यमाणत्वादित्वानन्तरमेव दीर्घ इति नदोषः। भामत्यां तु मीमांसाशब्दो माङ्माने इत्यस्मात्कुत्पन्नः। नच तस्य सूत्रेऽनुपादानात्सनोऽसिद्धिः। मानित्यनेनैव नकारान्तत्वं निपात्योक्तवातोग्रहणसम्भवात्। मुण्डमिश्रादिसूत्रे हलकलयोरदन्तत्ववत् इति शब्दतात्पर्याभ्यामुक्तम्। नच सनिमीमेति इस्भावापत्तिः। घ्वादिसाहचर्येणेच्छासन्येव तद्विधानादिति दीक्षिताः। एवंच नान्तत्वनिपातनस्य स्वकल्पनायामन्तर्भावो न युक्तः। वाचस्पतिमिश्रैः स्वयमेवोक्तत्वात्। मानपूजायामिति वृत्तिग्रन्थो भङ्क्त्वाव्याख्येय इत्यपि मिश्रतात्पर्यकल्पनमयुक्तम्। तस्मादपि सन्प्रत्ययस्य मिश्रैरेव लिखितत्वात्। अतएव माङ्माने इत्यस्मान्मीमांसाशब्दे पूजितविचारार्थत्वं प्रसिद्धिवशात्। मानपूजायामित्यस्मात्तु स्मृत्यैवेति तत्र कल्पतरुकारैरुक्तमिति दिक्।

## धातोः कर्मणः समानकर्तृकादिच्छायां वा ॥ ७ ॥

अत्रार्थद्वारके कर्मत्वसमानकर्तृकत्वे तेच सन्निधानादिच्छा-

निरूपिते एव तथाच धात्वर्थविषयकेच्छायां धातोः सन् । सधात्वर्थ इच्छा च समानकर्तृके स्याताम् । इच्छाया धात्वर्थकर्तृसमेतत्वे सनीति यावत् । अतएवजिज्ञासा इत्यादौ स्वसमानाधिकरणज्ञानेच्छायाः प्रतीतिः । पक्तुमिच्छति पिपक्षति चैत्रः । सन्प्रकृत्यर्थस्य सनर्थ इच्छाया विषयत्वेनान्वयः । चैत्राभिन्नकर्तृका पाकविषयिका इच्छेति सनर्थविशेष्यको बोधः । सन्नन्तस्य धातुत्वेनेच्छायाः प्रधानत्वात् ।

न्यायमते तु सविषयार्थकधातूत्तराख्यातस्याश्रयत्वलाक्षणिकत्वेनेच्छाया आश्रये तस्याभेदेन चैत्रेऽन्वयः । पाकविशेष्यकेच्छाश्रयाभिन्नः चैत्रः ।

मणिकृन्मते तु इच्छाया एवाश्रयत्वसम्बन्धेन चैत्रेऽन्वयः । आख्यातं च धातुमाधुत्वार्थमित्युक्तेच्छाश्रयश्चैत्र इतिधीः । ओदनं बुभुक्षते इत्यत्रभोजनविशेष्यतया ओदनस्य इच्छाविषयत्वानुभवाद्धातोः सन्प्रत्ययाभिधेयेच्छाप्रकारवाचित्वं । पाकं चिकीर्षतीत्यत्रापि प्राधान्येन पाकस्येच्छाविषयत्वमनुभूयते नतुकृतेः इत्याहुः ।

केचित्तु सकर्मकधातावपि कर्माविवक्षायामकर्मकेऽपि गृहे तिष्ठासतीत्यादौ धात्वर्थविषयकेच्छाया एवानुभवः । अतः स्थितिप्रकारकगृहविशेष्यकेच्छाभिप्रायेण गृहं तिष्ठासतीति नप्रयोगः । नच विशेष्यत्वस्यौदनं बुभुक्षत इत्यादौ द्वितीयार्थत्वाभावे पाकत्वं चिकीर्षति शत्रुधननाशेच्छायां शत्रुधनं चिकीर्षतीत्यपि स्यादिति वाच्यम् । कृञ् योगे साध्यत्वाख्योद्देश्यत्वाख्यविषयतयोरन्यतरस्यैव द्वितीयार्थत्वादित्याहुः ।

स्यादेतत् । धातोरिति किमर्थम् । नचसोपसर्गात्तद्वारणार्थं तत् । अन्यथा द्विर्वचनाडागमावुपसर्गस्यैव स्यातामिति वाच्य-

म् । कर्मत्वसमानकर्तृकत्वयोरुपादानात्तयोश्च क्रियैकनिरूप्यत्वा-त् । क्रियायाश्च धातुमात्रवाच्यत्वात् । उपसर्गस्यच द्योतक-मात्रत्वात् । धातोरेव तदुत्पत्तिसम्भवात् । वाचकत्वपक्षेऽपि विशे-ष्यमात्रस्य कर्मत्वं विशेषणात्तु सामानाधिकरण्यप्रयुक्ता द्वितीयेति पक्षे उपसर्गार्थस्य पृथगकर्मकत्वात् । कटोऽपि कर्म भीष्मादु-योऽपीति पक्षेपि समुदायस्याकर्मकत्वात्तस्मादनुत्पत्तेः । अन्य-थाधानोरित्युक्तेष्यनिस्तारात् । अर्थद्वारके हि समुदायस्य क-र्मत्वे आश्रीयमाणेऽवयवस्याकर्मकत्वात् ततः सन् प्रत्ययो न स्यात् । कर्मण इति पञ्चम्यन्तनिर्देशात् । नच कर्मण इतिष-ष्ठीमाश्रित्य कर्मणोऽवयवाद्धातोः सन् इत्यर्थ इति वाच्यम् । के-वलाद्धातोस्तदनुत्पत्तिप्रसङ्गात् । तस्मात्

अडादीनां व्यवस्थायै पृथक्त्वेन प्रकल्पनात् ।
धातूपसर्गयोर्धातुः क्रियावाचीति निर्णयः ।

नापि सुबन्तात्सनुत्पत्तिवारणार्थं तत्र विशेषविहितानां क्यजादीनां अपवादविधया बाधकत्वात् । नच सनो वैकल्पि-कत्वात्तदभावपक्षे क्यजादीनां सावकाशत्वमिति वाच्यम् । उ-त्सर्गापवादयोर्द्वयोरपि वैकल्पिकत्वे अपवादनिर्मुक्ते उत्सर्गस्या-प्रवृत्त्या वाक्यस्यैव प्रवृत्तेः । सुबन्तादुत्पद्यमानेन सना इच्छा-नवबोधादनभिधानेनापि तद्वारणस्य सुकरत्वाच्च । नच प्रातिप-पदिकात्सनुत्पत्तिवारणार्थम् । कर्मणइति वचनात् कर्मत्वेच सति सुबन्तताया आवश्यकत्वात् । तदेतदाह वार्तिककारः । "कर्मग्र-हणात्सन्विधौ धातुग्रहणानर्थक्यम्" । सोपसर्गकर्मेति चेत् । क-र्मविशेषकत्वादुपसर्गस्यानुपसर्गं कर्म सोपसर्गस्य हि कर्मत्वे धात्वधिकारेऽपि सनोऽविधानमकर्मत्वादिति प्राप्ते—

सिद्धान्तः । यत्तावदुक्तम् । अनभिधानादिति तदगतिक-

गतिमात्रम् । लक्षणाश्रयणाद्धि लक्ष्यव्यवस्था न्याय्या । गत्यन्तराभावात्तु पचन्तीत्यादौ लक्ष्यानुरोधेन लक्षणव्यवस्थापनात् । यदप्युक्तम् । क्यजादीनामपवादत्वादिति तदप्यसत् । आत्मीयत्वेन सुबन्तेच्छायामेव क्यजादेर्विधानाद्राज्ञः पुत्रमिच्छतीत्यादौ परकीयत्वेन तदिच्छायां सनो दुर्वारत्वात् ।

अथात्र समानकर्तृकत्वग्रहणादेव न दोषः । सुबन्तेन सह समानकर्तृकत्वानुपपत्तेः । पुत्रादेः सत्त्वभूतार्थाभिधायित्वात्साध्यस्यैव साधनसम्बन्धयोग्यत्वात् । नच कटं करोतीत्यादौ कटादीनामपि सत्त्वभूतार्थपरत्वात्कथं साधनाकाङ्क्षेति वाच्यम् । शब्दान्तरसन्निधानादेव तत्र साध्यत्वप्रत्ययात् । तदुक्तं हरिणा—

निर्वर्त्यो वा विकार्यो वा प्राप्यो वा साधनाश्रयः ।
क्रियाणामेव साध्यत्वात्सिद्धरूपोऽभिधीयते ॥

अतो नैतदर्थं धातुग्रहणमित्युच्यते तथापि आसितुमिच्छति शयितुमिच्छतीत्यादौ तुमुनन्तस्य साध्यरूपाभिधायित्वात्कर्तृयोगसम्भवात्तत्र सनो दुर्वारत्वात् । क्यचि मान्ताव्ययप्रतिषेधस्य वक्ष्यमाणत्वात् । नन्वत्रेच्छतीत्यनेन तुमुनो निमित्तेन इच्छाया अभिधानान्न सन् । उक्तार्थानामप्रयोगात् । तुमुन उपपदनिमित्तकत्वेन तदभावे तुमुनोऽसम्भवेन इच्छतीत्यस्य प्रयोगं बाधित्वा सन्विधेर्दुरुपपादत्वात् इति चेत् ।

सत्यम् । तथाप्यासनमिच्छतीति ल्युटो भावमात्रविहितत्वादिच्छार्थोपपदनिमित्तत्वाभावात्सनो दुर्वारत्वात् । नचात्रापि ल्युडभिधेयभावस्य सत्त्वरूपत्वान्न समानकर्तृकत्वयोग इति वाच्यम् । धातुवाच्यक्रियाया असत्त्वभूतत्वात्तदपेक्ष्य समानकर्तृकत्वोपपत्तेः । अथ वृत्तिसमानार्थकेन वाक्येन भवितव्यम् । आसिसिषते इत्यस्य चासितुमिच्छतीति वाक्यं समानार्थम् । समानकर्तृकत्वस्योभयत्र

प्रत्ययात् । आसनमिच्छतीत्यत्र तु स्वस्य परस्य वेति संशया-त्समानकर्तृकत्वप्रतीतिनियमाभावात्सन्न भविष्यति । समानकर्तृ-कत्वस्य तत्र सनान्तर्भावयितुमशक्यत्वात् । अन्यथा धातुपदो-पादानेऽपि संगममिच्छति देवदत्तो यज्ञदत्तेनेत्यत्र सनो दुर्वा-रत्वात् । इह केवलस्य धातोः प्रयोगाभावात्क्त्वाप्रत्ययोपादान-म् धातोरेवं सन्प्रत्ययस्यापाद्यत्वात् । समानकर्तृकत्वप्रतिपि-पादयिषायां संजिगंसते वत्सो मात्रेति सन इष्टत्वात् ।

एवं कर्मसमानकर्तृकग्रहणमपि व्यर्थम् । संकीर्णप्रयोगदर्शने साध्वसाधुविभागार्थं हि शास्त्रारम्भः। गमनेनेच्छति देवदत्तस्यभो-जनमिच्छतीत्यर्थे च जिगमिषति बुभुक्षते इत्यादिप्रयोगादर्शनात् । इच्छायां सन्विधानेनैवोपपत्तेः । इच्छायाः कर्मणोऽवश्यंभावात् । संनिधानात्प्रकृत्यर्थस्यैव कर्मत्वाश्रयणात् । समानकर्तृकत्वस्यापि प्रत्यासत्त्यैव सिद्धिसम्भवादितिचेन्न । अङ्गपरिमाणार्थं कर्मणो धातोर्वेत्यन्यतरस्योपादानावश्यकत्वात् । समानकर्तृकत्वस्य गुरुत्वात् । इच्छायां वेत्युच्यमाने प्रत्ययपरत्वेन प्रकृतेराक्षेपेऽपि प्राचिकीर्षदित्यादौ सोपसर्गस्याङ्गत्वं स्यात् । साक्षात्प्रकृतिविशे-षनिर्देशेतु अंगस्वरूपस्य सुज्ञानत्वात् ।

इदं च यद्यपि अन्यतरग्रहणेनापि सिध्यति तथापि धातुग्रहण-मेवावश्यकम् । धातोरिति शब्दमुच्चार्यविहितत्वात्सन आर्धधातु-कसंज्ञाया अपि सिद्धेः तेन शिशयिषते इत्यादौ गुण इट् च सि-द्धः । पूर्वसूत्रद्वयाविहितस्य तु सनो नार्धधातुकत्वमित्युक्तमेव । नचेकोझलिति सनः किस्वविधानं गुणनिषेधार्थं सत् स्वप्रयो-ज्यनिषेधप्रतियोगिप्रसंजकत्वेनार्धधातुकत्वं सन आक्षेप्स्यतीति वाच्यम् । सामान्येन ज्ञापकत्वे सर्वत्र तत्प्रसङ्गात् । विशेषविषय-त्वे त्विगन्तान्यास्मिंस्तदनाक्षेपात् ।

यदप्युक्तम् । सोपसर्गं न कर्मेति । तदप्यसत् । संघातेन क्रियाविशेषप्रक्रमादर्थद्वारकस्य कर्मत्वस्य समुदाय एव विश्रान्तेः । विशिष्टक्रियाया एव साधनानिर्वर्त्यत्वात् । नहि विशेषणविशेष्ययोः स्वस्वकारणनिर्वर्त्यत्वान्नीलघटयोरिवात्रार्थः समाजः तत्रनीलत्वघटत्वयोर्भिन्नकारणप्रतियोगिककार्यतावच्छेदकतया विशिष्टस्यार्थसिद्धत्वादत्र तु प्रकर्षं प्रति कारणान्तरस्याकल्पितत्वात् । नचोपसर्गस्य द्योतकत्वाद्विशिष्टो धात्वर्थ एवेति वाच्यम् । तथापि तादृशविशेषस्यात्र शब्दानुपात्तत्वेन संघातस्यैव विशिष्टप्रतीत्यन्वयव्यतिरेकप्रयोजकान्वयव्यतिरेकप्रतियोगितया तस्मादेव सन्प्रत्ययापत्तेः ।

यत्तूपपदमतिङित्यत्रोक्तम् । साधनं हि क्रियां निर्वर्तयति तामुपसर्गो विशिनष्टि इति तदपि विशिष्टक्रियोत्पत्तिमाश्रित्यैवेत्यविरोधः । पूर्वं धातुः साधनेन युज्यते इति पक्षेऽपि प्रकृते विशिष्टक्रियाया एव कर्मत्वस्य प्रतिपिपादयिषितत्वात्सोपसर्गात्सन्प्रसङ्गसंभवाच्च ।

यदपि विशिष्टात्सन्प्रसयो नस्यादिति तदप्यसत् । कर्मणोऽवयवाद्धातोरिति व्याख्यानात् । नचैवं केवलादप्रसङ्गः । व्यपदेशिवद्भावेन केवलस्यापि स्वावयवत्वात् । अनुदात्तङित इत्यादौ ङिदन्तस्येति व्याख्यानावश्यकत्वे शीङादेर्ङिदन्तत्वस्य तथैव वाच्यत्वात् । नचैवं महान्तं पुत्रमिच्छतीत्यादौ क्यजपि स्यादिति वाच्यम् । सुबन्तात्क्यज्विधानेन तस्य पदविधित्वात्समर्थपरिभाषोपस्थानेन सापेक्षत्वादसामर्थ्यात् । सन्विधौ तु पदविधित्वाभावात्सापेक्षत्वेऽपि सन्प्रत्ययः ।

यद्वा धातुरेव विशिष्टक्रियावाची उपसर्गस्तु द्योतक इति नसापेक्षत्वम् । वावचनं तु व्यर्थम् । वृत्तेरेकार्थीभावविषयत्वात् ।

वाक्यस्यच व्यपेक्षाविषयत्वाद्भिन्नविषये बाध्यबाधकभावानुपप-त्त्या वाक्यस्य सुस्थत्वात् । प्रत्युत वावचनेन एकार्थीभावपक्षे सनभावस्य विधातुमशक्यतया प्रत्ययसंज्ञाया एवाभावस्य विधेयत्वादानर्थक्यापत्तेः । तन्निबन्धनकार्यविकल्पापत्तेश्च ।

अत्रवार्तिकम् । तुमुनन्ताद्वा, तस्य लुग्वचनमिति । अयमर्थः। तुमुनन्तात्सनिति लक्षणं कर्तव्यम् । समानकर्तृकधातुकर्मपदाना-मनुपादानेन लाघवात् । वचनसामर्थ्याच्चोपपदश्रवणं बाधित्वा पक्षे तदीयेऽर्थे सन्प्रत्ययो भवति । इच्छाग्रहणं प्रत्ययार्थनिर्देशा-थावश्यं कर्तव्यम् । तुमुनश्च लुग्वक्तव्यः । नन्वेवं तुमुनन्तस्य प-दत्वात्तुमुन् लुकि वृत्ते जिघांसतीत्यादौ नलोपादिप्रसङ्ग इतिचेत् । अत्राहुः । असिद्धं बहिरङ्गमन्तरङ्गे इति लुकोऽसिद्धत्वान्नदोष इति । अस्मिन् सूत्रन्यासे इकोझलिति ज्ञापकाद्वार्धधातुकत्वमाक्षे-प्यमिष्टासिध्यर्थम् । 'लिङुत्तमाद्वा सन् उत्तमस्य च लोपो वक्त-व्यः' । कुर्यामिति इच्छति चिकीर्षति । अत्र चैत्रश्चिकीर्षतीत्यत्र सन्प्रत्ययप्रकृतेस्तिङन्तत्वात्तिङ्ङतिङ इति निघातः आत्मविशेष गुणविशेषकान्तिवाचकस्य इषेरर्थे चायं विधीयते नतुश्यश्य-न्विकरणयोरित्यवधेयम् ।

'आशङ्कायामचेतनेषूपसंख्यानम्' श्वा मुमूर्षति । कूलं पिप-तिषति । यद्यपि श्वा चेतन एव तथापि दुःप्रसक्तः दुःखाभावप्र-योजकत्वेन मरणेच्छायास्तत्रासंभवादिदमुक्तम् । अचेतनग्रहणं नकर्तव्यमिति यावत् ।

भाष्यकारस्तु चेष्टादिना इच्छामनुमाय कटं चिकीर्षतीत्या-दिप्रयोगवत् अवयवशैथिल्यलोष्टपतनादिलिङ्गकेच्छानुमित्या उ-क्तस्थलेऽपि सन्प्रत्ययः । वस्तुतः कूलादौ इच्छाया असत्वेऽपि प्रतिविरहात् । नच लोष्टपतनादाविच्छाकार्यत्वमेव नास्ति इतिवा-

च्यम् । आरोपेणैव भ्रमानुमितिनिर्वाहात् । 'उपमानाद्वा सिद्ध'-मिति तु प्रत्याख्यातम् । 'नवै तिङन्तेनोपमानमस्ती'ति । अत्र व्याचक्षते । तिङन्तार्थेन नोपमानम् । क्रियायाः साध्यैकस्वभावत्वात् । अनिष्पन्नरूपत्वात् । इदं तदिति परामर्षाभावात् । तादृशपरामर्शविषयवस्तुगोचरत्वाच्चोपमानोपमेयभावस्य । नहि देवदत्तो गच्छतीत्यादौ देवदत्तादिशब्देन स गच्छत्ययं पचतीत्यादौ तदिदमाद्यैः पदैर्यथा देवदत्तादीनां परामर्षः तथा क्रियाया अस्ति । इयमित्यादिना क्रियायाः सिद्धरूपापन्नाया एवाभिधानात् । किं बहुना क्रियादिपदैरपि पचतीत्यादि समानाकारकप्रत्ययानुपधानात् । अत एवोक्तं मीमांसकैः—

याहशी भावनाख्याते धात्वर्थश्चापि तादृशः ।
नासौ तेनैव रूपेण कथ्यतेऽन्यैः पदैः क्वचित् ॥

नच तथाप्युपमानोपमेयभावस्य कानुपपत्तिरिति वाच्यम् । साधारणधर्मनिबन्धनत्वादुपमायाः असिद्धायाश्च क्रियाया धर्मानाश्रयत्वात् । तदाश्रयत्वाङ्गीकारे तु सिद्धरूपत्वापत्त्या स्वरूपप्रच्यवप्रसङ्गादित्यभिप्रायस्य पञ्चमे वक्ष्यमाणत्वात् । नचासिद्धेऽपि घटादौ प्रागभावप्रतियोगित्वादिधर्माणां सत्त्वादिदमयुक्त'मिति वाच्यम् । प्रतीतिबलादन्यथानुपपत्त्या च तत्र तथात्वेऽपि प्रकृते मानाभावात् । अत एवातीतघटादौ घटत्वं नास्तीति तार्किकाः । अपिच परिपूर्णेन चन्द्रादिना न्यूनधर्मस्य मुखादेरुपमानक्रिया च सर्वा स्वाश्रये परिसमाप्ता । उत्कर्षापकर्षहीनत्वात् । तदुक्तम् ।

येनैव हेतुना हंसः पततीत्यभिधीयते ।
अन्यो तस्य समाप्तत्वादुपमानार्थो न विद्यते ॥

अधः संयोगहेतुत्वस्योभयसमवेतपतने साम्यमेवात्र समाप्तिप-

दार्थः । भिन्नजातीयानां च क्रियाणां सादृश्यं नास्ति । उभयानुगतधर्मस्यैवोपमानियामकत्वात् । क्रियात्वस्य त्वकिञ्चित्करत्वात् । तदेतदभिप्रेत्योत्प्रेक्षायां लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः । इत्युदाहृत्याचार्यदण्डिनोक्तम् ।

केषाञ्चिदुपमाभ्रान्ति रिवश्रुत्येह जायते ।
नोपमानं तिङन्तेनेत्यतिक्रम्याप्तभाषितम् ॥

अयमर्थः किमत्रोपमानम् । न तावत्कर्ता । तस्य धात्वर्थभावनायां विशेषणत्वेन इवार्थे प्रकारत्वासम्भवात् । अन्यविशेषणस्यान्यत्रान्वयायोगात् । तदुक्तम्—

कर्ता यद्युपमानं स्यान्न्यग्भूतोऽसौ क्रियापदे ।
स्वक्रियासाधनव्यग्रो नालमन्यद्व्यपेक्षितुम् ॥

स्वविशेष्यक्रियायां साधनं विशेषणत्वेनान्वयः । तत्र व्यग्रः तदन्वये निराकाङ्क्षः । अन्यत्क्रियाभिन्नं व्यपेक्षितुं स्वप्रकारकान्वयबोधे विशेष्यतामापादयितुमसमर्थः । नच यथा पृथिव्यामेव गन्ध इत्यादौ सप्तम्यर्थविशेषणस्यापि पृथिव्यादेरेवकारार्थेऽन्योन्याभावेऽन्वयायोभयत्र युगपदेवान्वयो व्युत्पत्तिवैचित्र्यात् । यद्वा एवकारस्य समभिव्याहृतपदार्थतावच्छेदकावच्छिन्नान्यत्वबोधकत्वमिति कल्प्यते । तथात्र कर्तुर्भावनायां सादृश्येच समप्रमेवान्वयः । यद्वा इवपदस्य कर्तृसादृश्यपरत्वमिति वाच्यम् । तथापि लेपकर्तृसदृशं तम इति बोधासम्भवात् । धात्वर्थस्य कर्तरि विशेषणत्वानुपपत्तेः । क्रियाप्राधान्यभङ्गापत्तेश्च । नच लेपकर्तृसदृशतमःकर्तृका लेपक्रियेति बोधोऽस्त्विति वाच्यम् । विकल्पासहत्वात् । किमत्राख्यातार्थस्य कर्तुः सादृश्ये क्रियायां चान्वयः उत कर्तृविशिष्ट एवेवपदार्थः । नाद्यः । धात्वर्थे एव तदन्वयात् । नान्त्यः । स हि धात्वर्थलेपस्योभयत्रान्वयात् । लेपकर्तृसादृश्यस्ये-

वपदार्थत्वाद्वा । नाद्यः । तस्य विशेषणत्वायोगात् । नान्त्यः । उपमानस्य इवादिपदार्थबहिर्भावनियमात् । उपमेयतावच्छेदकरूपानवच्छिन्नत्वेन प्रतियोग्युपस्थितेः । सादृश्यबुद्ध्यपेक्षितत्वाच्च लेपकर्तृत्वेनैव सादृश्यविवक्षायां धर्मोपमानयोरैक्यापत्तेश्च । धर्मान्तरेण च लेपकर्तृसादृश्यस्य प्रकृतानुपयोगात् । अप्रसिद्धसादृश्यस्थले तन्निमित्तधर्मोपादानावश्यकत्वाच्च । चन्द्र इव मुखमित्यादौ प्रसिद्धिबलादाह्लादकत्वादिप्रत्ययसम्भवेन धर्मलोपोपादानयोः स्वीकारेऽपि 'त्रिविष्टपं तत्खलु भारतायते' इत्यादौ 'सुपर्वभिः शोभितमन्तराश्रितै' रित्याद्यनुपादाने सादृश्यानुल्लासस्याभियुक्तानुभवसिद्धत्वात् इत्यन्यत्र विस्तरः । नापि लेपनमेवोपमानम् । लेपक्रियातमसोः साधारणधर्माभावात् । लेपनस्यैव तद्धर्मत्वासंभवात् । धर्मधर्मिभावस्य भेदनिबन्धनत्वात् । धर्मधर्मितावच्छेदकरूपभेदस्य भेदाभेदवादिभिरप्यङ्गीकारात् । भेदमादायापौनरुक्त्यम् । अभेदमादाय सामानाधिकरण्यमिति तत्सिद्धान्तात् । अत एव कार्यादिस्थलेऽप्यन्यप्रकारेणैव भेदाभेदाभ्युपगमः । तदुक्तं भामत्याम् ।

कार्यरूपेण नानात्वमभेदः कारणात्मना ।
हाटकाद्यात्मना भेदः कुण्डलाद्यात्मना भिदेति ।

तदिदमुक्तं—

यदि लिम्पनमेवेष्टं लिम्पतिर्नाम कोऽपरः ।
स एव धर्मो धर्मी चेत्यनुन्मत्तो न भाषते इति ।

स्यादेतत् । 'तेन तुल्यं क्रियाचे'दिति सूत्रे क्रियाया उपमेयत्वं सूत्रवार्तिकभाष्यसिद्धं उक्तयुक्त्या तन्न स्यात् । उपमेयताया अपि क्रियायाः सामान्यधर्माश्रयत्वाविवक्षाया सत्त्वरूपत्वप्रसङ्गादुपमानक्रियातो वैलक्षण्यनिरुक्तेरिति चेत् ।

उच्यते। क्रियाया उपमानत्वं नास्तीत्यत्रैव ग्रन्थकाराणां तात्पर्यम्। सत्त्वरूपत्वप्रसङ्गस्तु युक्त्यन्तरस्योपलक्षणम्। तथाहि कूलं पिपतिषतीत्यत्रेवपदाध्याहारो विवक्षितः, अन्यथानुपपत्त्या लक्षणा वा? नाद्यः। पिपतिषायाः सादृश्यप्रतियोगित्वं, कूलस्य वा। नाद्यः। धात्वर्थस्य वाक्यार्थे प्राधान्योपगमात्। भावप्रधानमाख्यातमिति निरुक्तस्मरणाच्च। नच सत्त्वार्थकापेक्षयैव विशेष्यत्वं तदर्थ इति वाच्यम्। नहीदं वाचानिकं येनोक्तरीत्या व्यवस्थाप्येत किन्तु लाघवतर्कसहकृतानुभवसिद्धं तथाचान्यत्र तदन्वये कार्यकारणभावकल्पनावश्यकत्वम्। आख्यातार्थकर्त्रादेरपि लिङ्गसंख्यानन्वयित्वेन तत्रापि तद्विशेषणत्वापत्तेश्च। फलस्यापि तथात्वाच्च। नचाख्यातार्थापेक्षयैव प्राधान्ये तात्पर्यम्। प्रथमान्तस्य विशेष्यत्वप्रसङ्गात्। तस्मात्क्रियान्तरापेक्षया तिङन्तक्रियायाः प्राधान्यम्। अत एव पचति भवति पश्य मृगो धावति इत्यादौ कर्तृत्वकर्मत्वाभ्यां पाकधावनक्रिययोर्भवनदर्शनक्रियान्वयः। भोक्तुं पचतीत्यादौ सामानाधिकरण्येन तुमुन्प्रकृत्यर्थस्य तिङन्तार्थक्रियान्वयश्च सूत्रसिद्ध इत्यग्रे विस्तरः।

किञ्च क्रियासादृश्यस्य कूले नान्वयः। अयोग्यत्वात्। अन्यस्य चानुपस्थितत्वात्। न द्वितीयः। कूलसादृश्यस्यापि पिपतिषायामभावात्। एतेन इवद्योतकत्वेनाप्यनिस्तारः। नापि लक्षणेति द्वितीयः। पिपतिषासदृशे लक्षणायाः शङ्कितुमप्यशक्यत्वात्। क्रमिकव्यापारसमूहस्यैव क्रियात्वेन धातोस्तदतिरिक्तांशबोधने लक्षणयाप्यसामर्थ्यात्। अत एवेच्छाजन्यसदृशस्य सनर्थतया तस्यच पतनान्वयात्। कूलकर्तृकं इच्छाजन्यसदृशं पतनमिति बोधोऽप्यनाशङ्क्यः। प्रकृत्यर्थप्रकारकबोधंप्रति प्रत्ययजन्योपस्थितिहेतुतायाः क्लृप्तत्वात्। इच्छाजन्यत्वस्य पदार्थान्तरसाधा-

रणतया उपमानविशेषानवधारणाच्च । तादृशापतनपरत्वेऽपि गौरवाधिक्याच्च ।

ब्राह्मणवदधीते इत्यादौ तु ब्राह्मणपदस्य तदुपादानकाध्ययनपरत्वेऽपि तिङन्तानुपस्थाप्यत्वादध्ययनस्य वतिप्रत्ययार्थे सादृश्ये प्रतियोगित्वेनान्वयः । तस्यच तिङन्तार्थाध्ययनक्रियायामिति नदोषः । रोदितीव गायतीत्यादौ तु सादृश्यसम्बन्धेन क्रियायाः क्रियान्तरेऽन्वयः । इवपदस्य तात्पर्यग्राहकत्वात् । अत एवासत्त्वरूपत्वनिर्वाहः । पदान्तरार्थे विशेषणत्वानापन्नत्वात् । कर्मत्वकर्तृत्वयोरपि संसर्गताया एवोक्तत्वात् । नचोपमेयाक्रियाया अधिकरणत्वापत्तिरितिवाच्यम् । वृत्तिनियामकसंबन्धावच्छिन्नाधिकरणत्वस्यैव मुख्यत्वात्तस्यचात्रानवगमात् । वैशिष्ट्यमात्रस्य तथात्वे पर्वतीयो वह्निरित्यादौ व्यभिचारात् । अतएव भट्टमते भूतलाभावयोस्तादात्म्याङ्गीकारे भूतले घटाभाव इत्यादावाकाङ्क्षोत्थापनार्थं सप्तम्या उपयोगो नत्वाधिकरणत्वबोधार्थमिति सिद्धान्तः ।

एवंच कारकविभक्तिप्रकृतिपदानभिधेयत्वादेवासत्त्वभूतत्वम् । लिङ्गानन्वयस्तु स्पष्ट एव । संख्या तु यद्यपि उष्ट्रासिका आस्यन्ते हतशायिकाः शय्यन्ते इति भाष्यप्रयोगबलात्प्रतीयते तथापि ण्वुलर्थे भाव एव तदन्वयो नतु धात्वर्थे । तस्य संख्यांशे निराकाङ्क्षत्वेन तदन्वयानुपपत्तेः । अन्यथा चैत्रेण स्थीयते इत्यादौ एकत्वस्याप्यन्वयापत्तेः । एतेन कारकसंख्याद्यन्वयेऽपि सर्वनामपरामर्शानर्हत्वादेवासत्त्वरूपतेत्यपास्तम् । संकोचे मानाभावादित्यग्रे विस्तरः ।

प्रकृतमनुसरामः । यद्वा इच्छेवेच्छा इच्छाशब्दस्य सत्त्वभूतार्थाभिधायित्वात्तदर्थस्योपमानत्वात् । अत इच्छासदृशेऽपि व्या-

पारे सन्निविचिः । सच व्यापारोऽवयवशैथिल्यप्रयोजकत्वेन कू-लावयवनिष्ठस्पन्दादिः । लक्ष्यानुरोधेन गौणमुख्यन्यायाप्रवृ-त्त्या उभयत्र प्रत्ययः । यत्तु समाधानान्तरं भाष्ये सर्वस्य वा-चेतनावत्त्वात् । आस्कन्दकपिलकेत्युक्ते तृणमास्कन्दयति, अ-यस्कान्तमयः संक्रामति, शृणोत ग्रावाण इति लिङ्गाच्चेति ।

यच्च व्याख्यातं आत्माद्वैतदर्शने एतत् । वैचित्र्येण च सर्व-पदार्थानामुपलम्भात् सर्वत्रातिप्रसङ्गो नोद्भावनीय इति तत्प्रौढि-वादमात्रम् । ब्रह्मैवेदं सर्वमित्यादौ बाधायामध्यासे वा सामाना-धिकरण्यं नत्वभेदे इति वेदान्तिभिरभ्युपगमात् । अतएवोक्तम् ।

अस्ति भाति प्रियं रूपं नामचेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥
खवाताग्निजलोर्वीषु देवतिर्यङ्नरादिषु ।
अभिन्नाः सच्चिदानन्दा भिद्येते रूपनामनी ॥ इति ।

सांख्यैरपि अचेतनप्रकृतिपरिणामित्वाभ्युपगमात् इति-दिक् । ग्रामं गन्तुमिच्छतीत्यत्र ग्रामगमनयोरुभयोरपि इषिकर्म-त्वे ग्रामाय गन्तुमिच्छतीति गत्यर्थकर्मणीति चतुर्थी न स्यात् । गतिकर्मत्वाभावात् । गमेर्ग्रामः कर्म इषेस्तु गमनमित्युक्तौ च इष्यते ग्रामो गन्तुमित्यत्र कर्मप्रत्ययेन ग्रामस्याभिधानं न स्यात् । तस्येषिकर्मत्वाभावात् । स्वप्रकृत्यर्थसाधनत्व-प्रकारस्यैव प्रत्ययाभिधेयत्वात् । तस्माद्गमेर्ग्रामः कर्म इषेस्तु ग्रामो गमनं चेति सिद्धान्तः । इष्यते ग्रामोगन्तुमित्यत्र गमनस्य ग्रामार्थत्वादप्राधान्याद्भिन्नकक्षयोः कर्मणोरेकेनाभिधातुमशक्य-त्वात् । प्रधाने कार्यसंप्रत्ययाद्ग्रामस्यैवाभिधानम् । इषिक्रियाया-श्चाख्यातान्तवाच्यतया प्राधान्यात्प्रधानशक्त्यभिधानेन ग्रामात्प्र-थमा । गमिक्रियाया गुणत्वात्तदपेक्षया द्वितीयाचतुर्थ्योरनुपपत्तेः ।

गुणस्य प्रधानविरुद्धकार्यानारम्भकत्वादिति प्रागुक्तम् ।

शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥

यद्यपि सनैव इच्छाया अभिधानान्न पुनः सन्निति न वक्तुं शक्यम् । पाकेच्छायास्तेनाभिधानेऽपि पाकेच्छाविषयकेच्छाया अनुक्तत्वात् । अन्यथा प्रतीषिषतीत्यत्र इषेरपि सन्न स्यात् । तथापि वाचनिक एवायं निषेधः । इच्छासन्नन्ते चायम् । जिगुप्सिषते मीमांसिषते इत्यादौ स्वार्थसन्नन्तादिच्छासन इष्टत्वात् । शैषिकादित्यादावुदाहरणम्—शालायां भवः शालीयो घटः तत्र भवमुदकमिति पुनः छ प्रत्ययो न । विरूपस्तु भवत्येव । अहिच्छत्रे भव आहिच्छत्रः तत्रभव आहिच्छत्रीयः । दण्डोऽस्यास्तीति दण्डिक. सोस्यास्तीति पुनर्नठन् । विरूपस्तु भवत्येव । दण्डिमती सेनेति । एवंच वह्निमद्वानिति तार्किकप्रयोगाः प्रामादिकाः । तसौ मत्वर्थेइति भसंज्ञात्वात्पदकार्यस्य जश्त्वस्य च दुर्लभत्वात् ।

इति श्रीसिद्धान्तसुधानिधौ तृतीयाध्यायस्य
प्रथमे पादे प्रथमाह्निकम् ।

—:*:—

अथ द्वितीयमाह्निकम् ।

## सुप आत्मनः क्यच् ॥ ८ ॥

स्वाश्रयसम्बन्धित्वेनेच्छाविषयार्थकात्सुबन्तात्क्यच्प्रत्ययो वा । स्वपदमिच्छापरम् । स्वाश्रयत्वं समवायित्वं धातववयवत्वात्सुपो लुक् । क्याचिचेतीत्वम् । पुत्रमात्मन इच्छति पुत्रीयति । पुत्रविषयकेच्छाबोधे पुत्रस्य स्वीयत्वं स्वरूपसदेव प्रयोगानियामकं तत्र तस्य शाब्दे प्रकारत्वानुभवविरोधात् । यद्यपि क्यचश्चकारो नान्तोदात्तत्वार्थः एकाच्त्वेन प्रत्ययस्वरेणैव सिद्धेः पूर्वं प्रत्ययस्वरः पश्चात्सतिशिष्टो धातुस्वर इति क्रमसत्त्वात् । नापि क्याचिचेत्यत्र विशेषणार्थः । तदनुबन्धकग्रहणे नातदनुबन्धकस्येत्यत एव क्यषो व्यावृत्तेः । तन्मात्रानुबन्धकमपहाय तत्तदतिरिक्तोभयानुबन्धकस्य न ग्रहणमित्यस्य तदर्थत्वात् । नापि नःक्ये इत्यत्र सामान्यग्रहणविघातार्थः । अन्यथोक्तरीत्या तत्रक्यषो ग्रहणं न स्यात् । ननु इच्छेति भावेप्रत्ययः । आत्मन इति कर्तरि षष्ठी । क्रियाकारकसम्बन्धस्यान्तरङ्गत्वात् । तथाच राज्ञः पुत्रमिच्छतीत्यत्रापि क्यच्स्यात् । मैवम् । आत्मन इति विशेषणवैयर्थ्यात् । उक्तसम्बन्धमनादृत्य सुबन्तेनैवान्वयात् । तद्वारकस्यैवात्मन इच्छासम्बन्धस्य वाच्यत्वात् । तथाचेच्छासमवायिनः सुबन्तस्य च यःप्रसिद्धसम्बन्धस्तस्येष्यमाणतावच्छेदकत्वे क्यजिति फलितम् । अन्यथा एपितृस्वामिजन्यत्वस्य राजपुत्रेऽपि सत्त्वाद्दोषतादवस्थ्यात् । मात्वाह्नका अघायवो विदन्नित्यादौ तु व्यसनस्य स्वसंबन्धित्वेनेच्छानुपपत्त्या छान्दसःक्यच् । ज्ञापकं चात्रेत्त्वबाधनार्थमाकारविधानम् ।

अथ सुप इति किमर्थम् । न तावत्प्रातिपदिकवारणार्थम् । सुबन्तात्प्रातिपदिकाद्वा क्यचि विशेषाभावात् । नच पक्षद्वयेऽपि विशेषः । सुबन्तात्प्रत्ययोत्पत्तिपक्षे नियमार्थमावश्यकस्य नःक्ये इति सूत्रस्यैव प्रातिपदिकात्तदुत्पत्तिपक्षे विध्यर्थत्वसम्भवात् । नापि धातुव्यावृत्त्यर्थम् । विशेषविहितस्य सनो बाधकत्वात् । परेच्छायां च सनोऽभावात् ।

उच्यते महापुत्रमिच्छति महापुत्रीयतीत्यस्येष्टत्वेऽपि महान्तं पुत्रमिच्छतीति वाक्ये माभूदिति सुब्ग्रहणम् ।

ननु प्रत्येकं सुबन्तत्वात्तथाप्यनिस्तार इति चेत् न । किं समुदायादापत्तिः, उतावयवात् । नाद्यः । प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणात् । प्रकृतिप्रत्ययसमुदायद्वयस्य ग्रहीतुमशक्यत्वात् । नान्त्यः । असामर्थ्यात् । महान्तं पुत्रीयतीत्यस्यागमकत्वात् । ऋद्धस्य राजपुरुषः ऋद्धस्योपगोरपत्यं ऋद्धस्यौपगव इत्यादिवत् । तदुक्तम् । 'समानाधिकरणानां सर्वत्राप्रवृत्तिरयोगादेकेने'ति । समानाधिकरणानां शब्दानां मध्ये एकस्य बहिर्भाव एकस्य च वृत्तिप्रवेशो न भवति । सगुणस्यैव पुत्रस्येषिकर्मत्वादित्यर्थः । नचैवं राज्ञः पुत्रमिच्छतीत्यत्रापत्तिः । सविशेषणानां च सर्वत्राप्रवृत्तिरयोगादेकेनेत्यस्य वाच्यत्वात् । नचैवं पुत्रप्रातिपदिकार्थस्य इच्छाकर्मत्वविरहे द्वितीयाद्यनुपपत्तिः समुदायस्याप्रातिपदिकत्वात्ततोऽपीति वाच्यम् । सामानाधिकरण्यमात्रेण गुणेभ्यस्तदुत्पत्तेः नचैवं प्रत्ययस्याप्यापत्तिः । सविशेषणानामिति निषेधात् । महान्तं पुत्रीयतीत्यस्यागमकत्वात् । क्यजर्थैकार्थीभूतस्य विशेषणस्य व्यपेक्षानुपपत्तेः । युगपदेकार्थीभावव्यपेक्षयोरयोगात् ।

अथ कथं मुण्डयति माणवकमिति असामर्थ्यादितिचेत् । न

अत्र माणवकस्य करोतिक्रियाकर्मत्वाभावात् । मुण्डत्वस्यैव तथात्वात् । यत्र तूभयोस्तथात्वं तत्र भवत्येव वृत्तिः । बलीवर्दं करोति मुण्डं चेति । मुण्डयतेश्च क्रियाविशेषवाचित्वात्तदपेक्षया माणवके द्वितीया । नचैवं माणवकं मुण्डमिच्छतीत्यत्रापि क्यजापत्तिः । मुण्डत्वमेवेष्यते माणवकशब्दस्तु तदाश्रयविशेषप्रतिपत्त्यर्थतुल्यत्वादिति(१) वाच्यम् । माणवकस्य मुण्डत्वगुणेन संस्कार्यत्वादुभयोरेवेष्यमाणत्वात् । यद्वा गुणवचनत्वान्मुण्डशब्दस्य सापेक्षत्वेऽपि समासः । क्यच् तु पुत्रीयतीत्यादौ सावकाश इति वैषम्यम् । नच मुण्डयत्ययं नापित इत्यादौ मुण्डत्वविषये प्राचीण्यविवक्षायां द्रव्यविशेषस्यानाकाङ्क्षितत्वाण्णिजपि सावकाश इति वाच्यम् । तत्करोतीति सिद्धे मुण्डादिभ्यः पुनर्विधानस्य सापेक्षत्वेऽपि तद्विधानार्थत्वात् । यद्वा सौत्रधातवस्तेभ्यश्चुरादिवत्स्वार्थे णिच् । यद्यपि तेषामविशेषो नोक्तस्तथापि प्रयोगदर्शनादेव तन्निर्णयसंभवात् । यद्वा गा दोग्धि पय इत्यत्र शुद्धस्य दुहेः पूर्वं गवैव संबन्धः । पश्चात्तु दुहिना पयसः तथा करोति मौण्ड्येन संबध्यते । तद्विशिष्टस्तु माणवकेनेत्यदोषः । यद्वा विशेषापेक्षायां वाक्यम् । सामान्यापेक्षायां वृत्तिः । तत्र विशेषप्रतिपत्त्यर्थं माणवकादिपदोपादानम् । नचैवं क्यचोऽप्यापत्तिः । अगमकत्वात् ।

अथेष्टः पुत्रः इष्यते पुत्र इति कर्मणि क्यच् स्यान्नवेति संदेहे केचिदाहुः । इच्छाया क्यज्विधानात् इच्छतीति कर्तृप्रत्ययेन विग्रहवत् उक्तकर्मप्रत्ययाभ्यां विग्रहेऽपि भवत्येवेति ।

सिद्धान्तस्तु इष्टशब्दसामासाधिकरण्यात्पुत्र इति विशेषकर्मसंबन्धस्यानुभूतत्वात् तदवस्थायां वृत्तिरेव नास्ति । कुतः पूर्व-

---

(१) प्रतिपत्त्यर्थतुल्यत्वादितितुल्यत्वादिति वाक्यम् इति पाठान्तरम् ।

कटोऽनेनेत्यादिवत् । क्रियाफलस्य पुत्रादेः प्राधान्यप्रतिपिपादयिषायां पुत्र इष्ट इत्यादिवाक्यस्यैव प्रयोगात् । क्यजन्तस्याकर्मत्वात्कर्मणि प्रत्ययानुत्पादेन तादृशार्थे क्यजन्तस्य कर्मक्तप्रत्ययान्तस्य दर्शयितुमशक्यत्वात् । वाक्ये च कर्तृप्रत्ययस्य कर्मप्रत्ययस्य चोत्पत्त्यनन्तरमकर्मकत्वेन कर्मणि प्रत्ययानुत्पत्तेः ।

'क्यचि मान्ताव्ययस्यप्रतिषेधः' । इदमिच्छति, किमिच्छति । उच्चैरिच्छति । नीचैरिच्छति । 'गोसमानाक्षरनान्तादित्येके' । एभ्यः क्यच्प्रत्यय इति न्यास कुर्वन्तीत्यर्थः । गव्यति । घटीयति । मधूयति । दधीयति । कर्त्रीयति । राजीयति । तक्षीयति । अत्र वाच्यतीत्यादेरसिद्धिः । मतभेदप्रदर्शनार्थं तु भाष्यकारेणेदमुपन्यस्तमित्यभियुक्ताः ॥

# अशनायोदन्यधनायाबुभुक्षा-पिपासागर्धेषु ॥ ९ ॥

क्यजन्तास्त्रयो निपात्यन्ते । अशनायति । उदन्यति । धनायति । तत्कालीनोपभोगार्थमशनोदकयोर्धनान्तरस्य चेच्छायामिति बुभुक्षेत्यादेरर्थः कालान्तरोपयोगार्थमशनस्य स्नानार्थमुदकस्य धनाभावे सति धनेच्छाया च उदकीयतीत्यादि । एवंच बुभुक्षादीनां प्रयोगोपाधित्वम् ।

अन्येतु अशनायतीत्यादीनां बुभुक्षादिकमेवार्थः । प्रकृत्यर्थस्याविवक्षितत्वात् । उदन्या तु पिपासातृडिति कोशात् । किमुधनं धनायितुमिति भारविप्रयोगाच्चेत्याहुः । अत एव धारारायो धनायदीतिमयूरः ॥

# (१)अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि काम्यच्च॥१०॥११॥

पूर्वोक्तविषये काम्यच्प्रत्ययः स्यात् । पुत्रमात्मन इच्छति पुत्रकाम्यति । चकारोऽन्तोदात्तत्वार्थः । धातुस्वरेणैव सिद्धेः । नापि ककारस्येत्संज्ञापरित्राणार्थः । आदितः कर्तव्यत्वापत्तेः । तथापि चिदेवायं नत्वनुबन्धान्तरेण व्यपदिश्यते इति नियमार्थत्वात्ककारस्येत्संज्ञापरित्राणसिद्धिः ।

अत्रवार्तिकम् । 'काम्यचश्चित्करणानर्थक्यं कस्येदर्थाभावा' दिति । अयमर्थः प्रयोजनाभावादेव ककारस्य नेत्संज्ञा । कार्यविशेषस्य वा विरहे लोपमात्रस्य वर्णोपदेशफलत्वानुपपत्तेः । संहितापाठे काम्यच्चेति चकारद्वयेनापि तत्स्थितेश्च । अग्निचित्काम्यतीत्यत्र लघूपधगुणप्रतिषेधोऽपि न फलम् । धातोर्विहितत्वाभावेन काम्यच आर्धधातुकत्वाभावात्गुणप्रसक्तेरेव दुर्लभत्वात् । नापि उपयट्काम्यतीत्यत्र वचिस्वपियजादीनां किनीति संप्रसारणम् । यजादिभ्यो विहितो यः किदिति व्याख्ययैव तस्याप्रवृत्तेः । सुबन्तादस्य विहितत्वात् । विचः छन्दस्येव विधानात्तत्र संप्रसारणादर्शनाच्च । एवं तु वाक्काम्यतीत्यत्र संप्रसारणार्थं कित्वं स्यादतोविहितविशेषणत्वमेव युक्तम् । यद्वा धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानान्न दोषः । तस्माच्चित्वं व्यर्थमितिस्थितम् ॥

# उपमानादाचारे ॥ १२ ॥

---

(१)एतत्सूत्रव्याख्याग्रन्थ.खण्डित इति सकलमूलभूतपुस्तकस्थ चिह्नदर्शनादवगम्यते

उपमानात्कर्मणः सुबन्तादाचारे क्यच् । पुत्रमिवाचरति पुत्रीयति छात्रम् । अधिकरणाच्चेति वक्तव्यम् । कुटीयति प्रासादे । कुट्यामिवाचरति इत्यर्थः ।

पौरं सुतीयति जनं समराङ्गणेऽमा-
वन्तः पुरीयति विचित्रचरित्रचुञ्चुः ॥
नारीयते समरसीम्नि कृपाणपाणे-
रालोक्य तस्य चरितानि सपत्नसेना ॥

इति काव्यप्रकाशे वाचकलुप्तायामुपमायां कर्माधिकरणक्यचौ कर्तरि क्यङ्चेति त्रयमुदाहृतम् ।

तत्र व्याचक्षते । क्यजादीनामाचारमात्रार्थत्वे सुताद्यन्विते आचारे पौरादिकर्मकत्वान्वयो न स्यात् । ननु सुताद्यनन्वितस्यैवाचारस्य पौराद्यन्वयः । प्रकृत्यर्थानन्वितप्रत्ययार्थाबोधात् । अन्यथा चैत्रो न पचतीति बाधधीकाले चैत्रः पचतीतिवाक्याच्चैत्रः कृतिमानिति बोधापत्तेः । किञ्चाश्रुतस्येवादिपदस्य कल्पनापेक्षया क्यजादिशक्तिकल्पनमेव युक्तम् । नन्वेवं गौरवम् सन्प्रत्ययादेरपि इच्छाशक्तित्वलोपापत्तेः । तत्रापीच्छतीत्यादेरध्याहारसम्भवात् । अथ तत्रानुशासनबलाद्विनाप्यध्याहारं बोधाच्च शक्तिरिति चेत् । क्यजादावपि समानम् । अतः क्यच आचारजातीयाचारो भेदश्चार्थः । अतएव सुतं सुतीयतीत्यादेर्न प्रयोगः । तथाच पौरं सुतीयतीत्यादेः सुतभिन्नपौरवृत्तिर्यः सुताचारजातीयाचारस्तदनुकूलकृतिमानित्यादिरर्थः । एवंच सुतपौरादेः सादृश्यविशेष्यकबोधात् श्रौती पूर्णोपमैवेयं नतु वाचकलुप्तेति ।

तत्रेदं वक्तव्यम् । सन्प्रत्ययस्येच्छायामिव क्यचोऽपि भेदादौ शक्तिरित्यनुशासनान्न लभ्यते एव । सुतं सुतीयतीत्यादेश्च व्याहतत्वशब्दार्थभेदान्वयानर्हत्वादेव वारणम् । प्रकृत्यर्थान्वितेत्या-

दिकं त्वयुक्तम् । प्रकृतिप्रत्ययार्थयोः परस्परान्वयमात्रस्यात्र-श्यकत्वान्नतु प्रकृत्यर्थान्वयात्पूर्वं प्रत्ययार्थान्वयस्यापि । तावतै-वोक्तबोधकाले चैत्रः कृतिमानिति बोधवारणात् । तथा चोक्त-व्युत्पत्तिसिद्धिमेव लिखित्वा अग्र स्थित्वेत्यादौ क्त्वाप्रत्यय-स्याव्यवहितपूर्वकालस्याग्रेत्यनेन सममभेदान्वयबोधः समर्थितो द्र-व्योपायविवृतौ (१)पक्षधरमिश्रजलदठक्कुरादिभिः । अतएव देवद-त्तेन दृष्टो घट इत्यादौ निष्ठाप्रत्ययार्थस्य विषयस्य तृतीयार्थकृत्य-न्वयानन्तरमेव प्रकृत्यर्थदर्शनान्वयादेवदत्तकृतिविषयदर्शनवि-षय इति बोधाभ्युपगमः । तस्मादध्याहृतस्य इवपदस्यैव तद्भिन्न-वृत्तित्वं तद्वृत्तित्वं चार्थः । तथाच सुतभिन्नवृत्तिसुतवृत्तिपौर-विषयकाचारानुकूलकृतिमानिति धीः ।

नन्वेवं प्रकृत्यर्थस्य सुतादेः भेदादौ इवार्थे इवार्थस्य च वृ-त्तित्वस्य क्यजर्थे आचारेऽन्वय इति फलितम् । नच तद्युक्तम् । प्रत्ययार्थानन्वितस्य प्रकृत्यर्थस्यान्यत्रानन्वयात् । प्रत्ययार्थे प्र-कृत्यर्थभिन्नस्यान्वयविरहाच्चेति चेन्न । सुतादेः साक्षादाचाररूप-प्रत्ययार्थानन्वयेऽपि भेदादिविशेषणतापन्नस्य तदन्वयसत्त्वात् । अतएव यथाकथंचित् सम्बन्धमात्रेण प्रकृत्यर्थान्वयव्युत्पत्तिनि-र्वाह इति मिश्रैर्विभावितम् । सुतस्य क्यजर्थभेदे तस्य पौरेऽन्वय-व्यवधानेनैवाचाररूपप्रत्ययार्थे तदन्वय इति स्वयमपि लिखितत्वा-च्च । अतएव नातिरात्रे षोडशिनं गृह्णाति इत्यत्र षोडशिग्रहणा-भाव इष्टसाधनमित्यादिबोधो दीधीतिकारादिभिः स्वीकृतः । आ-ख्यातार्थकृतौ तदर्थवर्तमानत्वानन्वयाभ्युपगमेन द्वितीयानियमाभा-वाच्च । "नानुपमृद्य प्रादुर्भावात्"इति न्यायसूत्रेऽनुपमृद्य प्रादुर्भा-वाभावादिति व्याचक्षाणैर्वाचस्पतिमिश्रदीधितिकारादिभिः प्रादु

(१) द्रव्यकारणविवरणे इत्यर्थः ।

र्भावस्य नञर्थाभावान्वयं कृत्वा तत्र पञ्चम्यर्थहेतुत्वान्वयाङ्गीकारा-च्च । "तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः" इतिसूत्रेऽपीतरो-त्पत्त्यभावादिति बोधोपगमाच्च । कलंजभक्षणाभावविषयकं का-र्यमितिप्राभाकरान्वयबोधस्वीकाराच्चेत्यन्यत्र विस्तरः ।

यद्यपि नारीयते इत्यत्र चण्डीदासादिभिरुक्तम् । नात्र वाच-कलोपः । क्यङादीनामेव तदर्थविहितत्वेन तत्कर्मक्षमत्वात् । प्र-त्यये तथा स्वातन्त्र्येणाप्रयोगस्य वत्यादावपि तुल्यत्वात् । समुदितमेव पदं वाचकम् । प्रकृतिप्रत्ययौ स्वस्वार्थवाचका-विति मतद्वयेऽपि वत्यादिक्यङाद्योः साम्यमेव । सदृशाचारस्य क्यङाद्यर्थत्वात् । अतोवाचकलुप्ताभिधानमालङ्कारिकाणामयुक्त-मेवेति । तदप्यसत् । सदृशाचारस्य क्यङाद्यर्थत्वे मानाभावात् ।

यद्यपि धर्मलोपोऽप्यत्रोपमायां आचाररूपधर्मस्य वस्तुत्वा-दिवदुपमानुपपादकत्वादिति । तदप्यसत् । उपमानादित्यनेनोप-मानत्वेन तद्विशेषाणामिवाचार इत्यनेनापि आचारत्वेन धर्मवि-शेषाणामनुगमात् । सुतीयतीत्यादौ स्नेहनिर्भरत्वादेर्नारीयती-त्यादौ कातरत्वादेश्च प्रत्ययात् । प्रामाणिकलेखनस्य च तत्र सा-क्षित्वादित्यलङ्कारकौस्तुभविवरणे विस्तरः ।

# कर्तुः क्यङ् सलोपश्च ॥ १३ ॥

उपमानात्कर्तुः सुबन्तादाचारे क्यङ् तस्य सान्तत्वे सलोपश्च । चकारस्यान्वाचयवृत्तेर्विषयभेदस्य च स्वीकारात् । कृष्ण इवाचरति कृष्णायते । ङित्वादात्मनेपदम् । सलोपवाक्ये कर्तुरिति स्थान-षष्ठी सकारस्य तद्विशेषणत्वात्तदन्तविधिः । सान्तस्य कर्तुर्लोप इति अतो हंसायते इति न दोषः ।

'सलोपो वेति वक्तव्यम्' । पयायते । पयस्यते ।

'ओजसोऽप्सरसो नित्य वाच्यः' । ओजायमाने योऽहिं जघान । अप्सरायते । वृत्तावोजःपदं तद्वृत्तपरम् । विशेषणस्योजस एव सामान्यधर्मत्वं 'क्षोणीमास्तृणतीभिरन्तरतमं व्योमेदमोजायते' इति मुरारि ।

अपर आह—सलोपेऽप्सरस इत्येव । ओजायमानामिति छान्दसत्वात्सिद्धमिति मतभेदप्रदर्शनार्थोपन्यासो न स्वयं स्थितः पक्षः इत्याहुरिति कैयटः । तेन पयायनामभ्युदयस्त्वदीय इति नैषधमपि व्याख्यातम् ।

'आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः' ।

अवगल्भते । अवगल्भायते । क्लीबते । क्लीबायते । होडते । होडायते । धातुसंज्ञानामेवैतेषामनेकार्थत्वादाचारलक्षणक्रियावचनत्वमपि सिद्धम् । अवहोडेत्यादावप्रत्ययस्तु गुरोश्च हल इत्यनेनापि सिद्धः । तथापि अवगल्भाञ्चक्रे इत्यादौ प्रत्ययान्तत्वादामर्थमारम्भः ।

अपर आह—सर्वप्रातिपदिकेभ्य आचारक्विब्वक्तव्यः अश्वति । गर्दभति । प्रातिपदिकोपादानादिह सुप इत्यस्य नानुवृत्तिः । तेन शपोऽकारेण सह प्रकृत्यकारस्यातोगुण इति पररूपम् । पदत्वाभावात् । नचैवं पूर्ववार्तिकवैयर्थ्यम् । अनुदात्तानुबन्धेन तङर्थत्वात् । क्विपस्तत्रानुवाद्यत्वात् । तेन गल्भतीत्यादि ज्ञेयम् । अ इवाचरति अति । अतः अन्ति । प्रत्ययग्रहणस्थानेऽनेकाच इयुक्तेर्नाम् । अतुः उः । अन्तरङ्गत्वादतोलोप बाधित्वाऽतोगुणे इति पररूपम् । नचवार्णादाङ्गमिति न्यायेनातोलोपापत्तिः । व्याश्रयत्वात् । नचपरत्वनित्यत्वाभ्यां प्रथमं दीर्घत्वमाप्तिः । बहिरङ्गत्वेनासिद्धत्वात् । नाप्यपवादत्वेन । आनर्देत्यादौ चरितार्थत्वात् । अन्यत्र चरितार्थस्यापवादस्याप्यन्तरङ्गेण बाध-

स्वीकारात् । पररूपस्याङ्गग्रहणेन ग्रहणात्प्राप्तमनोलोपं बाधित्वा परत्वादत आदेरिति दीर्घः आत औ णल इत्यौकारादेशः । अतुसादौ आतो लोप इत्याहुः ।

वस्तुतो ण्याश्रयेऽपि परिभाषाप्रवृत्तेरचः परस्मिन्निति सूत्रीयकौस्तुभे व्यवस्थापितत्वात्, द्वितीयस्याकारस्य पररूपलोपोभयस्थानित्वया तदंशे समानाश्रयत्वाच्च, पररूपस्यैकः पूर्वपरयोरित्यधिकारीयत्वेन द्वयोरप्यकारयोस्तत्स्थानित्वात् । ण्यल्लोपाविति दीर्घं बाधित्वातोलोपस्य दुर्वारत्वाच्च, लक्ष्यं दृष्ट्वा बहुश्रुतैर्निर्णेयम् । मालेवाचरति मालाति । लिङ्गविशिष्टपरिभाषया एकादेशस्य पूर्वान्तत्वेनं ग्रहणाद्वा प्रातिपदिकेति क्विप् । प्रत्ययान्तत्वादाम् । मालाञ्चकार । अमालात् । ङीसाहचर्यादापोऽपि सोरेव लोपस्य हल्ङ्यादिसूत्रेण विहितत्वात् । यमरमनमातां सक्चेतीट्सकौ । अमालासीत् । कविरिव कवयति । आशीर्लिङि कवीयात् । नामधातोर्नवृद्धिरिति कैयटादयः । अकवयीत् । अकवायीदिति माधव इति दीक्षिताः ।

तत्त्वं तूभयमतेऽपि वृद्धिरेवेति इको गुणवृद्धी इति सूत्रे विवेचितमस्माभिः । तेन भूद्रूशब्दयोरभवीदद्रवीदित्यप्ययुक्तम् । धातुपाठस्थस्यैव भवतेरुपादानात्सिचो लुक्वुक् अभ्यासात्वचेत्येतेषां न प्रवृत्तिः । बुभाव । बुभुवतुरित्यादि ।

प्राञ्चस्तु स्वामाम स्वाचकारेत्यादिप्रत्ययान्तत्वादाममुदाहरन्ति । नच कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमिति तत्र प्रत्ययग्रहणस्य प्रत्याख्यास्यमानत्वादनेकाच्त्वाभावान्नेदमयुक्तमिति वाच्यम । क्ष्मायांचक्रे इत्यादेर्भाष्योदाहरणस्यानुपपत्तिप्रसङ्गात् । नच भूतपूर्वादप्यनेकाचो वचनसामर्थ्यादामिति वाच्यम् । अनुबन्धासञ्जनेन तस्य चरितार्थताया भाष्यसिद्धत्वात् । अतएव

काम्प्रत्ययादित्याम्प्रत्ययो यथा स्यादिति भाष्यकारैरुक्तम् । आम्प्रत्ययनिमित्ततायां प्रत्ययान्तत्वस्यानवच्छेदकत्वे तद्रूपमुद्दे-श्यतावच्छेदकीकृत्य विधेरुपन्यासानर्हत्वात् । कास्यनेकाजिति आमित्यस्यैव वक्तव्यत्वापत्तेः ।

कशब्दाच्चकाविति हरदत्तः । ण्यल्लोपाविति वृद्धिं बाधि-त्वातोलोपाच्चकेति माधवः । दिवूशब्दाद्द्वतीति माधवः । ऊठि यण् । नचासिद्धं बहिरङ्गमिति ऊठ् यणि कार्येऽसिद्धः । नाजा नन्तर्य इति निषेधात् । नच वार्णादाङ्गमिति पूर्वं गुणः । व्या-श्रयत्वात् । अतो द्यवनीति दीक्षिताः ।

# भृशादिभ्यो भुव्यच्वेर्लो-पश्च हलः ॥ १४ ॥

अभूततद्भावग्रहणं कर्तव्यम् । अभूततद्भावविषयेभ्यो भृ-शादिभ्यो भवत्यर्थे क्यङ्हलन्तानामेषां लोपश्च । पूर्ववद्वाक्यभेदो-ऽन्वाचये चकारः । अभृशो भृशो भवति भृशायते । अभूतेति किम् । क दिवा भृशा भवन्ति । ये रात्रौ भृशा नक्षत्रादयस्ते दिवा क भवन्तीति काकुः । एवं सत्यच्वेरिति न कर्तव्यम् ।

तथाहि—अभूतार्थे च्विविधानात्तदन्तात्क्यङ् न भविष्यति । उक्तार्थानामप्रयोगात् । नच पटपटायते इत्यत्र डाच्यपि क्यषून् स्यात् तस्यापि तदर्थे विधानादिति वाच्यम् । तत्र लोहितादिडा-ज्भ्य इति विशिष्योपादानसामर्थ्यात् । अप्रयुक्त एव भवतौ भव-त्यर्थविवक्षाया वचनप्रामाण्यात् डाचं विधाय भवत्यर्थे क्य-ष् विधीयमानत्वात् । इति वार्तिकम् ।

भाष्यकारास्त्वाहुः । अच्वेरिति पर्युदासेनाच्व्यन्ते च्विसदृ-

शेऽभूततद्भावे क्यङ्विधानाद्वार्तिकमेव नारभ्यमिति । अत्र, अभिमनस्, सुमनस् । उन्मनस् । दुर्मनस् इति हलन्ताः प्रकृतयः पठ्यन्ते । तत्र तत्रोपसर्गाणां प्रत्ययार्थे विशेषणत्वं मुत प्रकृत्यर्थ इति विचारः । यदि मनश्शब्देनासमस्ता सुदुरुदभयः तदाद्यः पक्षः, मनश्शब्दश्च तदा वृत्तिविषये तद्वति वर्तते । मनस्वी सुष्ठु भवति । उद्भवति । दुर्भवति । आभिमुख्येन भवतीत्यस्मिन्नर्थे क्यङित्यर्थसम्पत्तिरिति केचित् ।

अन्येतु अस्मिन्नर्थे भवतिः प्राप्त्यर्थो गृह्यते । अतो मनः शब्दस्य मत्वर्थलक्षणया तद्वत्परत्वम् । किन्तु मनः शोभनं प्राप्नोतीत्यादिरर्थ इत्याहुः । यदातु अभ्यादीनां मनः शब्देन कृतबहुव्रीहिकाणां निर्देशस्तदा प्रकृत्यर्थविशेषणत्वमिति द्वितीयः पक्षः । तत्र पूर्वपक्षेऽभिमनायते इत्यादौ मनः शब्दात्क्यङि मनायते इत्यादेस्तिङन्तस्य अतिङन्तात्स्वादेः परत्वात्तिङ्ङतिङ इति निघातः स्यात् । प्रकृत्यर्थ विशेषणत्वे तु सुमनायते इति विशिष्टस्यातिङन्तत्वात्तद्व्यतिरिक्तपदात्परत्वं नास्तीति न निघातः ।

किन्तु तत्र अड्ल्यब्द्विर्वचनेषु दोषः स्यात् । उपसर्गस्य धातुस्वरूपान्तर्भावात् ततः पूर्वमट् स्यात् । एवं समासाभावाल्ल्यप् न स्यात् । क्यङन्ताच्च सनि कृते सोपसर्गस्य द्वित्वं स्यात् । तथाच स्वमनायत सुमनाय्य अभिमिमनायिषत इत्यादिकं न स्यात् । मैवम् । संग्रामयतेः सोपसर्गाद्विधेरावश्यकत्वात् । असंसंग्रामत शूर इति यथा स्यात् । नच संग्रामेत्यखण्डमेव नतु सोपसर्गमिति वाच्यम् । वा पदान्तस्येति परसवर्णविकल्पानुपपत्तेः । नच्च नियमार्थम् । अस्मादेव सोपसर्गान्न त्वन्यस्मादिति । तथा च धातुसंज्ञानिमित्ते प्रत्यये कर्तव्ये उपसर्गसमानाकारं पूर्वपदं पृथक्कर्तव्यमिति ज्ञाप्यते । अन्यथा ग्रामेत्येवानुदात्तेतमपाठिष्यत् । अर्थात्

संशब्दपूर्वत्वलाभसंभवात् । इक् स्मरणे इत्यादावधिवत् । अनु-
बन्धश्च तत्र द्वितीयोऽकारः । पररूपाश्रयणात् । अन्यथा णौ च-
ङीत्युपधाह्रस्वापत्तेः । पूर्वपदोपादानाद्यत्र समासस्तत्रैव पृथक्करणं
नत्वादोलयित्वा प्रेङ्खोलयित्वेत्यादौ । आन्दुदोलत् । अपिप्रे-
ङ्खोलत् । अवधीरत्कवज्ञायांकांति ण्यन्तसज्ञा । आववधीरत् ।
इति बोपदेवः । अवधीर्येति काव्यप्रयोगास्तु धीरेति धात्वन्तरमू-
हित्वा समर्थनीयाः । एवंच स्वरविधावपि नदोषः । तत्रोपस-
र्गस्य धातावन्तर्भावात् । प्रत्ययार्थपक्षोऽप्येवं साधीयान् । नच
तत्रोपसर्गार्थे क्यङ्विधानात्तत्प्रयोगो न स्यात् । अपि काकः
श्येनायते इत्यादावाङ्वदिति वाच्यम् । मनायत इत्युक्ते सुदु-
रादीनां मध्ये कस्यार्थे क्यङिति विशेषानवगमेन तदर्थ मुपसर्गवि
शेषस्य प्रयोगात् । उत्पुच्छयत इत्यत्रापि । अनेकयोगसत्त्वेन
विशेषस्यावश्यकत्वात् । भृश शीघ्र चपल पण्डित उत्सुक उन्मनस्
अभिमनस् दुर्मनस् रहस् रोदस् रेहस् शश्वत् प्रमत् वेहत् रशित्
तृपत् शुचिवर्चस् ओजस् सुजरत् ।

# लोहितादिडाज्भ्यः क्यष् ॥१५॥

पूर्वोक्तविषये । वा क्यष इति परस्मैपदविकल्पः । लोहिता-
यति । लोहितायते । पटपटायति । पटपटायते । अव्यक्तानुक-
रणादिति डाचो विवक्षाया 'डाचि बहुलं द्वे' इति द्वित्वम् ।
ततो डाच् टिलोपः । पूर्वपटच्छब्दचरमावयवस्य तकारस्य नित्य-
माम्रेडिते इति पररूपात्पकारान्तर्भावः । अत्र ककारषकारौ
भाष्ये प्रत्याख्यातौ । वा क्यष इत्यत्र वायादित्यतोऽपि सिद्धेः ।
नियमार्थत्वात्प्रकरणस्य पाश्येत्यादावदोषात् । क्याच्छन्दसी-
त्यत्रापि भुरण्युरित्यादिसंग्रहाय यादित्येव वाच्यत्वात् । एतेन

ककारो व्याख्यातः । नच गुणनिषेधार्थः । आर्द्धधातुकत्वाभावादेव तदप्रसक्तेः । नच यस्य हलः क्यस्य विभाषेत्यत्र सामान्यग्रहणार्थः । हलन्तादेतदविधानात् । एतेन नः क्ये इत्येतदर्थत्वमप्यपास्तम् । नच लोहितायनीत्यत्राकृत्सार्वधातुकयोरितिदीर्घाद्यर्थः तत्र क्ङिद्ग्रहणाननुवृत्तेः । नच उरुया इत्यत्र सुपां सुलुगिति तृतीयास्थाने यादेशे दीर्घापत्तिः । छान्दसत्वात् । उपगायन्तु मा पत्नयो गर्भिणयो युवतय इतिवत्पुनर्ह्रस्वसम्भवाच्च ।

अत्रवार्तिकम् । 'लोहितादिडाज्भ्यः क्यष्वचनं भृशादिष्वितराणि' इति लोहितशब्दाड्डाजन्ताच्च क्यष् विधेयः । आदिशब्दो व्यर्थः । अन्येषां भृशादिपाठेन निर्वाहात् । परस्मैपदस्यानिष्टत्वात् । तेन ।

लोहितश्यामदुःखानि हर्षगर्वसुखानिच ।
मूर्छानिद्राकृपाधूमाः करुणानित्यचर्मणी ॥

इति पठितानां पदद्वयोदाहरणं निर्मूलम् ।

# कष्टाय क्रमणे ॥ १६ ॥

तादर्थ्ये चतुर्थी । कष्टार्थं यत्प्रातिपदिकं तस्मात्क्रमणेऽर्थे क्यङ् । अभिधानस्वाभाव्यात् । क्रमणविशेषस्यानार्जवस्य लाभः । अयमेवार्थः । 'सत्रकक्षकष्टकृच्छ्रगहनेभ्यः पापचिकीर्षायां'मिति वार्तिककृता व्याख्यातः । सत्रादयश्च शब्दा वृत्तिविषये पापपर्यायाः । नच पापादिशब्देऽतिप्रसङ्गः । व्यवस्थितविभाषाविज्ञानात् । कष्टायते । सत्रायते । पापं कर्तुं प्रवर्तत इत्यर्थः ।

# कर्मणो रोमन्थतपोभ्यां वर्तिचरोः ॥ १७ ॥

रोमन्थतपः शब्दाभ्यां कर्मभ्यां वर्तनायां चरणे चार्थे क्यङ् उत्साहे । रोमन्थं वर्तयति रोमन्थायते । तपश्चरति 'तपसः परस्मैपदं च' । 'तपस्यते लोकजिगीषुरग्रे' रिति च्छान्दसत्वात् । उद्गीर्णस्यावगीर्णस्य वा मन्थो रोमन्थ इति भाष्यम् । मुखप्रदेशादाकृष्टत्वमुद्गीर्णत्वम् । अपानदेशान्निःसृतत्वमवगीर्णत्वमिति कैयटः । 'हनुचलने' इति वक्तव्यम् । एतेन हनुचलनसहचरितं चर्वितस्य मुखप्रदेशादाकर्षणपूर्वकं चर्वणमुपलक्षयति । नेह । कीटो रोमन्थं वर्तयति । अपानदेशान्निःसृतमन्नमतीत्यर्थ इति कैयटः । वर्तुलं करोतीति न्यासकारादयः । अनभिधानादत्र नेति भाष्यम् । वर्तीत्यत्र ण्यन्तत्वाद्युचः प्राप्तावपि अस्मादेव निपातनात्क्तिन्निति बहवः । वस्तुतः इगन्तमेतत् । अर्थे लक्षणा । यदुपास्तिमसदवत्रेत्यादावुपयकारैस्तथा व्याख्यानात् । चरोरिति भावे क्विप् ।

## बाष्पोष्मभ्यामुद्वमने ॥१८॥

बाष्पमूष्माणं वा उद्वमति बाष्पायते । ऊष्मायते ।

'फेनाच्चेति वक्तव्यम्'

'मन्थेनेव तमोमयो निःधिरपामङ्काय फेनायते' इति मुरारिः ।

## शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ॥ १९ ॥

शब्दं करोति शब्दायते इत्यादि । 'शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणा' इति मेघदूतः । 'करतस्मै प्रथमाय मानिषु महावीराय वैरायता' मिति मुरारिः । द्वितीयेनोपमन्युनाम्ना मुनिना सह कलहायमानो दुर्वासाः साम गायन् क्रोधान्धो त्रिस्वरम-

करोदितिहर्षचरितम् । पक्षे तत्करोतीति णिजपीष्यते इति संप्रदायः । शब्दयतीत्यादि ।

'अटाट्टाशीकाकोटापोटा मोटा पुष्ट्रा स्नुष्टा सुदिनदुर्दिननीहाग्रहणकर्तव्यम् ।'

अटायते । अट्टायते इत्यादि ।

# सुखादिभ्यः कर्तृवेदनायाम् २०

कर्तृ इति लुप्तषष्ठीकम् । तच्च सुखादिविशेषणम् । वेदनस्य कर्तारमन्तरेणानुपपत्त्या तद्विशेषणवैयर्थ्यात् । तथाच वेदनाकर्तुः सुखादेर्वेदनायामित्यर्थः । वेदनापदस्य साक्षात्कारपरत्वे तात्पर्यग्राहकं कर्तृपदमिति यावत् । पर(तस्नद)गुणानां परायोग्यतया स्वसुखस्यैव स्वीयप्रत्यक्षविषयत्वात् । सुखायते । दुःखायते । नेह सुखं वेदयते प्रसाधको राज्ञः, सुखप्रसादादिलिङ्गेनानुमिनोतीत्यादिरर्थः । सुख दुःख तृप्र अम्र आम्र अलीक करुण कृपण सोढ प्रतीप ।

# नमोवरिवश्चित्रङः क्यच् ॥ २१ ॥

क्रियाविशेषे । पूजायां परिचर्यायामाश्चर्ये च । करण इत्यनुवृत्तस्य लक्ष्यानुरोधेन विशेषपरत्वात् एवं पुच्छादौ बोध्यम् । नच वेदनाग्रहणात्करणविच्छेदः । वेदनारूपे करण इत्यन्वयसंभवात् नमस्यति देवान् वरिवस्यति गुरून् चित्रीयते विस्मयते इत्यर्थः ङकारः क्यजन्तानुबन्धः प्रातिपदिकानुबन्धे प्रयोजनाभावात् । तेन क्यजन्तादात्मनेपदम् ।

केचित्तु परसमवेताश्रयोत्पादनमस्यार्थः । 'ततश्चित्रीयमाणोऽसौ' इति भट्टिप्रयोगादित्याहुः ।

अथ नमस्यति देवानिति कथं द्वितीया चतुर्थ्याः प्रसङ्गादिति-चेन्नैवम् । नमस्यधातुव्युत्पत्तये नमः शब्दसदृशावयवान्तरकल्पनेऽपि प्रकृत्यन्तरत्वात् । अर्थवत एव नमो निपातस्य योगे चतुर्थीविधानात् । यद्वा उपपदविभक्तेः कारकविभक्तिर्बलीयसीति सिद्धम् ।

## पुच्छभाण्डचीवराण्णिङ् ॥२२॥

पुच्छमुदस्यति उत्पुच्छयते । 'हर्षोत्पुच्छयमानकर्णकरवोत्कर्णं व्रजायोत्सुकाः' । विपुच्छयते । परिपुच्छयते । विविधं विरुद्धं वा उत्क्षेपणं व्यसनम् । परितः क्षेपणं पर्यसनम् । णाविष्ठवदिति टिलोपः । भाण्डानि समाचिनोति । राशीकरोति । संभाण्डयते सचीवरयते भिक्षुः । अर्जयति परिधत्ते वा । उदपुपुच्छत । समबभाण्डत । समचिचीवरत । ङकारस्त्वात्मनेपदार्थः । णकारो णेरनिटीति सामान्यग्रहणार्थः ॥

## मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् २३

कृञर्थे । इदं च प्रातिपदिकाद्धात्वर्थ इति णिचि सिद्धे प्रपञ्चार्थम् । राजानमतिक्रान्तवानत्यरराजत् । इत्यादावपि तद्दर्शनेन तत्करोति तदाचष्टे इत्यस्य धात्वर्थत्वनियमपरत्वाभावात् । सापेक्षेभ्योऽपि णिजर्थमिति प्रागुक्तम् । मुण्डं करोति मुण्डयतीत्यादि । व्रताद्भोजनतन्निवृत्त्योः । पयः शूद्रान्नं वा व्रतयति । वस्त्रात्समा-

च्छादने । संवस्त्रयति । हल्यादिभ्यो ग्रहणे । अदन्तत्वं निपातनात् । हलं कलं वा गृण्हाति हलयति कलयति । महद्धलं हालिः । परत्वादादौ वृद्धि पश्चाट्टिलोपः इष्ठवद्भावेनन्त्यग्लोपित्वान्न सन्वद्भावदीर्घौ । अजहलत् । अचकलत् । तदुक्तम् । हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थमिति । न चेकारलोपादप्यग्लोपः । परत्वाद्वृद्धौ ऐकारलोपे तदभावात् । कृतं गृण्हाति कृतयति । तूस्तानि विहन्ति तूस्तयति । न च कृताकृतप्रसङ्गित्वाल्लोपो नित्यः । वृद्धेरपि तथात्वात् । न च शब्दान्तरप्राप्तेरनित्यः । वृद्धेरपि तथात्वात् । यद्यपि लोपाभावेऽचोऽञ्णितीति अन्त्यस्य इकारस्य वृद्धिः । लोपपक्षे त्वत उपधाया इति हकारोत्तराकारस्येति एकलक्षणविहिताया एकस्थानिकायाश्च वृद्धेर्न शब्दान्तरात्प्राप्तिः । तथापि वृद्धिशब्दवाच्यत्वेन द्वयोरभेदमाश्रित्य भाष्यकृतोक्तम् ।

ननु टिलोपस्य स्थानिवद्भावादत उपधाया इति वृद्धिर्न प्राप्नोति । अत्राहुः—'प्राप्तौ सत्यां स्थानिवद्भावेन प्रतिबन्धः' क्रियते । पूर्वविधौ तद्विधानात् । अप्राप्तौ तु पूर्वविध्यभावात् स्थानिवद्भाव एव न स्यात् । वस्तुतो लोपे कृते वृद्धेरप्राप्त्या नित्यत्वं वक्तव्यम् । न्याय व्युत्पादनार्थं त्वन्यथोक्तमिति ॥

# धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥२२॥

क्रियातिशये वर्तमानादेकाचो हलादेर्धातोर्यङ् स्यात् । पुनः पुनरतिशयेन वा पचति पापच्यते । सन्यङोरिति द्वित्वम् । अभ्यासदीर्घः । यद्यपि समभिहारस्तुल्यकालीनानामनेकेषां मूर्तानां

धर्मः क्रिया चैकेन धातुना युगपदनेका न बोध्यते । साध्यैकस्वभावतया निवृत्तभेदाया एकस्या एवाभिधानात् । समुदायघटकानां चाधिश्रयणादीनां अवयवानां यौगपद्यं नास्तीति न समभिहारसंभवः । तथापि ।

'गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ।
समूहः स तथाभूतः प्रतिभेदं समूहिषु ॥
समाप्यते ततो भेदे कालभेदस्य संभवः ॥

इति रीत्या पूर्वापरसमानकालीनव्यापारसमुदायस्य बुद्धिविशेषविषयतापन्नस्य क्रियात्वात्तदवयवावान्तरव्यापारगतः पौनःपुन्येनानुष्ठीयमानप्रधानक्रियागतो वा समभिहारो गौण इहाश्रयणीयः । यद्वाधिश्रयणादीनां तादर्थ्यात् क्रियात्वम् । मुख्यं तु यदव्यवहितोत्तरं फलोत्पत्तिस्तस्यैव व्यापारस्य । तदुक्तम्—

अनन्तरं फलं यस्याः कल्प्यते तां क्रियां विदुः ।
प्रधानभूतां तादर्थ्यादन्यासां तु तदाख्यया ।

अतोऽवयवत्वं साधारं चोक्तम् । धातुग्रहणं सन्सूत्रस्थधातुपदवद्व्याख्येयम् । एकाचः किम् जागर्ति । हलादेः किम् ईक्षते भृशमित्यादौ मा भूत् । भृशं शोभते रोचते इत्यादौ त्वनभिधानान्न । पौनः पुन्ये तु भवत्येवेत्याहुः । सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनामुपसंख्यानम् । अनेकाच्त्वादजादित्वाच्चाप्राप्तौ वचनम् । सोसूच्यते । सोसूत्र्यते । अटाट्यते । अरार्यते । अशाश्यते ।

वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।
आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥

नुवद्भावातिदेशादेकाच्त्वप्रयुक्तो यङ् इडभावश्च । इजादि-

त्वाभावादामभावश्च । उदाहरणानि । ऊर्णोनूयते । ऊर्णुनाव । ऊर्णुतः । ऊर्णुत्वानित्यादि । तथा चानेनावश्यकातिदेशेन गतार्थत्वाद्यङ् विधावूर्णोतेरुपसंख्यानं न कर्तव्यमित्याशयः । क्रियासमभिहारे यङो विप्रतिषेधेन लोड्विधानम् । यङोऽवकाशः । लोलूयते इत्यादिरधातुसंबन्धः । लोटस्तु अनेकाजहलादिर्धातुसंबन्धः क्रियासमभिहारवृत्तिः । स भवान् जागृहीत्येवायं जागर्ति । ईहस्वेहस्वेत्येवायमीहते । इहोभयंप्राप्नोति । स भवान् लुनीहि लुनीहीत्येवायं लुनाति । लोट् भवति विप्रतिषेधेन । केवलस्य लोटः समभिहारानभिव्यञ्जकत्वात्तदन्तस्य द्वित्वं यदा तु यङन्तेन समभिहारान्तरं प्रतिपिपादयिषितं तदा विरोधाभावाद्भवत्येव । लोलूयस्व लोलूयस्वेत्येवायं लोलूयते । न वा नानार्थत्वात्कर्तृकर्मणोर्ल विधानम् । क्रियाविशेषे स्वार्थे यङ । लोड् बहिरङ्गः कर्त्राद्यपेक्षत्वाद्धातुसंबन्धापेक्षत्वाच्चेति स्वार्थे समभिहारे विहितो यङन्तरङ्गः । अतोविप्रतिषेधो नारभ्यः । सन्निधानाद्वाग्रहणानुकर्षाद्यङो वैकल्पिकत्वेन तदभावपक्षे लोटः सावकाशत्वात् । एवं यङैव समभिहारस्य द्योतितत्वान्नित्यवीप्सयोरिति क्रियासमभिहारे द्वे भवत इति वा द्विर्वचनाभावः । भृशार्थे पौनः पुन्यविवक्षायां तु पापच्यते पापच्यते इति भवत्येव ॥

# नित्यं कौटिल्ये गतौ ॥२३॥

गत्यर्थादेकाचो हलादेर्धातोः कौटिल्यविशिष्टसमभिहार एव यङ् नित्यग्रहणस्य नियमार्थत्वात् । चङ्क्रम्यते । कुटिलं गच्छतीत्यर्थः । नित्यग्रहणं भाष्ये प्रत्याख्यातम् । चंक्रम्यते इति पदबोध्यार्थस्य कुटिलं क्रामतीतिवाक्येन बोधयितुमशक्यतया तदर्थे

वाक्याप्रवृत्तेः। कौटिल्यमात्रमतिपिपादयिषायांतुवाक्यस्येष्टत्वात्।

## लुपसदचर जपजभदहदश गृभ्यो भावगर्हायाम् ॥२४॥

एभ्यो धात्वर्थ गर्हायामेव यङ्। गर्हितं लुम्पति लोलुप्यते। गर्हितस्य प्राप्त्यभावाद्वा प्रतियोगिनो लोपायोग्यत्वाद्वा तत्प्रतियोगिकलोपनिन्दा। सासद्यते। चञ्चूर्यते जञ्जप्यते। जञ्जभ्यते। दंदह्यते। दंदश्यते। जपजभ दहदशेतिनुक्। जेगिल्यते। ग्रो यङीतिरेफस्य लत्वम्। तक्रकौण्डिन्य न्यायेन कौटिल्यभावगर्हायां यङः क्रियासमभिहारमपोद्यस्वीकृतत्वात्तत्रार्थे यङभावः॥

## सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्ण चुरादिभ्यो णिच् ॥२५॥

प्रातिपदिकाद्धात्वर्थ इति धातुसूत्रेण सिद्धौ चुरादिव्यतिरिक्तानामुपादानं प्रपञ्चार्थम्। सत्यं करोति सत्यापयति।

"अर्थवेदसत्यानामापुक्चेतिवक्तव्यम्"। अर्थापयति। वेदापयति। आचार्यमतभेददर्शनाय भाष्येऽत्र बहवः पक्षा उपन्यस्ताः। आपुकि पुकि आकि वा पूर्वं कृते पश्चात्तद्विशिष्टाण्णिजुत्पत्तौ णाविष्ठवदिसतिदेशेन टिलोपः स्यादिति आशङ्क्याऽगेव कर्तव्यः। पररूपेऽचोञ्णितीति वृद्धौ कृतायामादन्तत्वात् णिनि-

मित्तः पुक् । अत्रापि टिलोपापत्तिः नच वचनसामर्थ्यं वृद्धिबाधेन कृतार्थत्वसम्भवात् । अगागममन्तरेणापि तत्सिद्धेः । तस्मादापुक् वक्तव्यः, तस्य णिज्भक्तत्वात्प्रातिपदिकाकारस्य टिलोपे सत्यापयति । एवं पुक् आक् वा विधेयः । वचनसामर्थ्याट्टिलोपाभाव इति ॥

# हेतुमति च ॥ २६ ॥

हेतुपदमत्र तत्प्रयोजको हेतुश्चेति पारिभाषिकहेतुपरम् । तद्व्यापारो हेतुमत्पदार्थः । स च त्रिविधः । प्रेषणमध्येषणं तत्समर्थाचरणं चेति । यद्यपि प्रयोजकस्य हेतुव्यपदेशः सकलकारकसाध्यपाकाद्यपेक्षो नतु तदर्थावान्तरप्रेषणादिव्यापारापेक्षः । काष्ठस्य पाकापेक्षया करणत्वस्य ज्वलनापेक्षया कर्तृत्वस्य दर्शनात् । ततश्च हेतुत्वस्य पाकनिरूपितत्वात्तस्यैव हेतुमद्व्यपदेशो युक्तो नतु प्रेषणादेः । तदनिरूपकत्वात् । स्वनिरूपकप्रतियोगिकत्वस्य संबन्धिशब्दे व्युत्पसिद्धत्वात । तथापि णिच्प्रकृत्यैव प्रधानक्रियायाः प्रकाशितत्वात्तदर्थे णिचोऽनुपादानात्तस्या नहेतुमत्पदार्थत्वं । नापि प्रयोजकानिरूपकस्य प्रयोज्यस्य, तस्य द्रव्यत्वात्सिद्धरूपत्वात् णिचश्च स्वभावात्करणाधिकाराद्वा क्रियार्थत्वात । अतः पारिशेष्यात्पाकार्थो यः प्रेषणादिलक्षणो यश्च पाकाद्यपेक्षहेतुव्यपदेशहेतुत्वोपलक्षितप्रयोजकसाध्यो व्यापारः स एव गृह्यते । इह पचतीत्युक्ते प्रयोज्यसाध्य एव व्यापारो बुध्यते नतुप्रयोजकसाध्यः । अतः करणस्य प्रत्ययार्थस्य हेतुमतीति विशेषणात् प्रत्ययार्थविशेषणत्वपक्षे णिजर्थः प्रेषणादिः । अथानेकार्थत्वाद्धातूनां तादर्थ्याद्वाऽधिश्रयणादिवत्प्रयोजकव्यापारोऽपि धात्वर्थः । पञ्चभिर्हलैः कृषतीति द-

र्शनात् । पचतीत्यादौ तु द्योतकस्य णिचो विरहादप्रतीतिः । सोऽयं प्रकृत्यर्थविशेषणपक्षः । इत्युभयथासंभवाद्विचारः ।

ननु प्रकृत्यर्थविशेषणपक्षे हेतुमत इति पञ्चमीनिर्देशः स्यात् । हेतुमतीति सप्तमीनिर्देशात्तु प्रत्ययार्थविशेषणत्वमेव निर्णीतमिति-कुतः संदेह इति वाच्यम् । प्रमाणे स्त्रियामित्यादौ प्रमाणे स्त्रियां च वर्तमानात्प्रातिपदिकादिति विषयसप्तमीनामपि दर्शनेन हेतु-मत्यभिधेये णिच् । उत, हेतुमति वर्तमानाद्धातोर्णिगिति तत्संभवात् । तत्र प्रत्ययार्थविशेषणत्वमेव युक्तम् । अन्वयव्यतिरेकाभ्यां णिचो वाचकत्वावधारणात् । द्योतकत्वकल्पने गौरवात् । प्रसयेत्यस्या-न्वर्थत्वाच्च । अतएव तनूकरणे तक्ष इत्यादौ तनूकरणादीनां न प्रकृत्यर्थत्वम् । कर्त्रादीनां सार्वधातुकार्थत्वात् । किञ्च प्रकृत्यर्थ-त्वपक्षे उक्तः करोति, प्रेषितः करोतीत्यादौ णिच्स्यात् । प्रकृ-त्योक्तेऽपि प्रयोजकव्यापारे तत्स्वीकारे उक्तप्रेषितादिशब्दाभिहि-तेऽपि तस्य दुर्वारत्वात् । करोत्यर्थस्य हेतुमद्विषयत्वात् । प्रत्य-यार्थत्वे तु उक्तार्थत्वाण्णिजभावः । पाचयत्योदनं देवदत्तो यज्ञ-दत्तेनेत्यत्र प्रयोज्यप्रयोजकयोर्द्वयोरपि कर्त्रोः कर्तृलकारेणाभि-धानापत्तौ पाचयतो देवदत्तयज्ञदत्ताविति स्यात् । धातूपात्तव्या-पाराश्रयत्वस्य साम्यात् । प्रत्ययार्थत्वे तु धात्वर्थव्यापारस्य प्र-त्ययार्थव्यापारे विशेषणत्वाण्णिजर्थकर्तुरेव प्राधान्यादभिधानं नतु तत्प्रकृत्यर्थकर्तुरिति तत्रानभिहिते कर्तरि तृतीया । गमितो ग्रामं देवदत्तो यज्ञदत्तेनेत्यत्राप्युभयव्यापारस्य गम्यर्थत्वात् गत्यर्था-कर्मकेति कर्तरि क्तप्रत्ययः स्यात् । इष्यते तु प्रयोज्यस्य कर्मत्वा-त्कर्मण्येव । तदुक्तम्—

अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मण इति ।

दकस्योपस्कारयतीत्यत्रापि प्रकृत्यर्थापेक्षयैवैधोदकस्य कर्मत्वात् । भेदिकेत्यत्रापि कुद्ग्रहणस्य कर्तृभूतपूर्वादपि षष्ठ्यर्थत्वात्स्वक्रियापेक्षकर्तृत्वाश्रयषष्ठीसंभवात् । प्रयोज्यव्यापाराभिमुख्यस्यैवाभिशद्धस्य द्योत्यत्वात्तस्य सुनोत्यर्थविशेषकत्वादभिषावयतीति षत्वसिद्धेः । ण्यर्थविशेषकत्वे तु षत्वाभावस्येष्टत्वात् । तदेवं प्रत्ययार्थपक्ष एव भाष्यकृता समर्थितः ।

कैयटस्तु प्रकृत्यर्थपक्षोऽपि साधुरेव । दोषाणां सुपरिहरत्वात् । प्रयोज्यव्यापारोपसर्जनस्य प्रयोजकव्यापारस्य धात्वर्थत्वात्तस्यैव णिचा द्योतनात्प्रधानकर्तर्येव लकारोत्पत्त्या कर्तृद्वयाभिधानाभावेन प्रयोज्यस्य तृतीयान्तत्वोपपत्तेः । णिचा च द्योतकेन प्रधानभूतस्य गत्यर्थत्वं निवर्तितम् । गमनानुकूलव्यापाररूपप्रधानार्थस्याभिधानादिति ण्यन्तात्प्रयोजककर्तरि क्तस्यानुत्पत्तेः । व्यतिभेदयन्त इत्यत्रापि हिंसानुकूलव्यापारस्यैव धात्वर्थतया विशेष्यत्वेन हिंसायास्तदर्थत्वाभावान्नात्मनेपदनिषेध इत्याह ।

अथ पृच्छतु मा भवानित्यत्र प्रष्टुः प्रयोज्यत्वादेतद्वाक्यवक्तुश्च प्रयोजकत्वात्तद्व्यापारे णिच्प्रसङ्गः । तथाचैकविषयत्वाण्णिच्लोटोः पर्यायः स्यादिति चेत् । न, प्रश्नक्रियायाः कर्ता त्वं भवेति कर्तृत्वस्यैवात्र विधेयत्वात् । राजा भव युध्यस्वेतिवत् । प्रश्नप्रवृत्तौ सिद्धायां तु तत्र प्रयोजकत्वाभावादेव णिजप्रसङ्गात् ।

ननु पाचयतीत्यादावपि स्वयं प्रवृत्ते प्रेरणानुपयोगात्समानमेवेतिचेत् । सत्यम् । प्रश्नो हि जिज्ञासाविषयविषयकं वाक्यम् । णिजर्थोऽपि पूर्वोक्तस्त्रेधा । प्रेषणमाज्ञा । अध्येषणं प्रार्थनम् । समर्थाचरणं त्वनुमतिरुपदेशोऽनुग्रह इति । अनुमतिर्निवारणाभावेच्छा उपदेशस्तदर्थिनस्तदुपायकथनम् । ज्वरहरणकामो दशमूलिकषायंपिबेदित्यादौ, अनुग्रहो बहुधाकेनचिज्जिघांसितं पलायमान

निरुन्धतः कारणाभावविघटकत्वेनानुग्राहकत्वं कारीषोऽग्निरध्यापयत इत्यत्राध्ययनप्रतिकूलशैत्यापनायकत्वेनाग्नेः । एवंचानुमतेः पृथगुपादानं गोबलीवर्दन्यायेन अनुरोध्येच्छाया विपरीतायास्तत्प्रवृत्तिविरोधित्वेन तदभावेनानुमन्तुरनुग्राहकत्वात् । एवंप्रवर्तनात्वं णिचः शक्यतावच्छेदकमित्यप्ययुक्तम् । चेतनशब्दमात्रव्यापारत्वात्तस्या अग्न्यादेरध्ययनादिप्रयोजकत्वानुपपत्तेः । तदतिरिक्तप्रवर्तनात्वे मानाभावात् । तमसः पारं दर्शयति भगवान् सनत्कुमार इत्यत्रापि ब्रह्मसाक्षात्कारप्रतिबन्धकाविद्यानिवृत्त्युपयोगितदुपदेशसंपादकत्वादनुग्राहकत्वम् तन्निवृत्तिश्चोपदेशमात्रादिति वेदान्तिनः । परम्परया निदिध्यासनादिति तार्किकाः ।

एवं स्थिते जिज्ञासायां नैतद्वाक्यवक्तुरुपयोगस्तस्या ज्ञानविशेष्यकेष्टसाधनताज्ञानजन्यत्वात् । नापि उक्तवाक्ये अर्थविशेषविशेष्यकस्वीयजिज्ञासाविषयत्वप्रकारकश्रोतृसमवेतज्ञानसाधनत्वज्ञानेनैव तदुत्पत्तेः । किन्तु प्रष्टव्यार्थनिर्वचनसामर्थ्यप्रदर्शनमात्मनोऽनेन विधीयते ब्राह्मणा भगवन्तो यो वः कामयते स मा पृच्छतु सर्वे वा पृच्छतेत्यादिवत् । तच्च न प्रश्नस्वरूपोपयोगि जिज्ञासानिवृत्तेरबुधप्रश्नेनानुपपत्तावपि प्रश्नस्वरूपस्य निर्वाहात् । तथाच यदीयव्यापारो नियोज्यप्रवृत्तिविषयक्रियास्वरूपसिद्धौ उक्तान्यतमविषयोपयोगी स एव प्रयोजक इति सिद्धम् ।

एतेन—

द्रव्यमात्रस्य तु प्रैषे पृच्छयादेर्लोट् विधीयते ।
सक्रियस्य प्रयोगस्तु यदा स विषयो णिचः ॥

इति हरिवाक्यं व्याख्यातम् प्रैषशब्देन प्रवृत्तप्रेषणस्य स्पष्टमभिधानात्तस्य यथोक्तार्थ एव पर्यवसानात् ।

एतेन प्रयोज्यप्रवृत्त्युपहिता प्रयुक्तिर्णिजर्थः । केवला तु

लोडर्थः। यद्वा प्रयोक्तृधर्मः प्रयुक्तिर्लोडर्थः अनियतकर्तृका तु णिजर्थः। पचेति हि वक्तैव प्रेरकः। पाचयतीत्यादौ तु वक्तृभिन्नोपीति अशास्त्रीयवैधर्म्यमात्राभिधानं निरस्तम्। प्रयोज्यस्य प्रवृत्त्यभावेऽपि पाचयतीत्यादिव्यवहारात् शब्दप्रयोगस्य वक्तृविशेषनियतत्वेऽपि प्रेरणस्यैकधर्मत्वादितिदिक्।

अत्र वार्तिककारः कृष्यादिषु चानुत्पत्तिः निर्व्यापारेऽपि पञ्चभिर्हलैः कृषतीतिप्रयोगदर्शनात्तत्रान्यैः कर्षयतीत्यर्थावगमात्। कृषेर्विलेखनार्थत्वात्। णिच्प्रसक्तौ तन्निषेधो वक्तव्यः। यज्यादिषु वा विपर्यासः पुष्पमित्रो यजते याजका याजयन्ति। अत्र हि यजेः प्रक्षेपविशेषार्थत्वात् तत्रर्त्विजां कर्तृत्वाद्यजमानस्य च प्रयोजककर्तृत्वात्पुष्पमित्रो याजयते याजका यजन्तीति प्राप्तम्। तत्र पुष्पमित्रादिव्यापारे णिजभावो वक्तव्यः।

भाष्यकारास्तु नात्र कृषिर्विलेखनवृत्तिः किन्तु भक्तबीजबलीवर्दैर्यत्प्रतिविधान तद्रूपसमर्थाचरणलक्षणव्यापारार्थः। धातूनामनेकार्थत्वात्। अतएव यत्समये उक्तसंविधानकरणं तत्र विलेखनाप्रवृत्तावपि उक्तप्रयोगः संगच्छते। ततश्चोपपदयोगाध्दातुनैव तस्यार्थस्य प्रकाशितत्वान्न णिच्। बिभापोपपदेन प्रतीयमाने इति तदभावः। विलेखनार्थत्वे तु पञ्चभिर्हलैः कर्षयतीति णिजिष्टएव। यज्यर्थोपि न प्रक्षेपमात्रं किन्तु त्यागविशेषोऽपि। सच यजमानसाध्य एव तत्प्रयोजकास्त्वृत्विजइति सिद्धमिष्टमित्याहुः।

तत्करोत्युपसंख्यानं सूत्रयत्याद्यर्थम्। व्याकरणस्य सूत्रं करोति सूत्रयतीत्याद्यर्थं करोत्यर्थेऽपि णिज्वक्तव्यः। लक्ष्यलक्षणसमुदायो वा व्याकरणशब्दार्थ इति षष्ठी, लक्षणमात्रार्थत्वे तु व्यपदेशिवद्भावेन षष्ठी। इहसत्वार्थस्यापि सूत्र शब्दस्य णिजर्थेन सहैकार्थीभावे व्याकरणेन सह संबन्धानाकाङ्क्षत्वाद्व्याकरणश-

न्दोत्तरं न षष्ठी किन्तु करोत्यर्थापेक्षा द्वितीयैव । तेन सह सामर्थ्यात् । इदंच प्रक्रियाविभागार्थम् । सूत्रिधातोर्विशिष्टक्रियावचनस्य सत्त्वादितिकैयटः ।

आख्यानात्कृतस्तदाचष्टे इति कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्चकारकम्" आख्यानं वृत्तम् । कर्मणिल्युट् तस्मात्तदाचष्टे इत्यर्थेणिच् आख्यानान्तर्गतकृत्प्रत्ययनिवृत्तिः प्रकृतेः स्वरूपेणावस्थानं णिजपेक्षया प्रकृतित्वात्कंसवधादिमादाय यथाख्यानक्रियापेक्षं कंसवधादेः कर्मत्वं तथा तन्निरूप्यकर्मत्वाभाववतोऽपि कंसादेरित्युक्तम् । प्रकृतिवद्भावातिदेशेनच कंसादेः णिच्प्रकृत्यपेक्षया बहिःकृतत्वात्तस्याङ्गसंज्ञाविरहान्न ततोऽडागमादि । एवंतु वत्करणेन स्वाश्रयकार्यस्यापि प्रवृत्त्या पुष्ययोगं जानाति पुष्येण-योजयतीति तृतीया । यद्वा प्रकृत्या तुल्यं वर्तते इति प्रकृतेरिववा प्रकृतिवदितिचातिदेशद्वयाश्रयणाल्लक्ष्यानुरोधात्काचित्कस्यचित्प्रवृत्तिरित्याश्रयणीयम् । प्रकृतिप्रत्यापत्त्याच नलोपादेरपि निवृत्त्या राजागमनमाचष्टे राजानमागमयतीत्याद्युपपत्तिः । अतएव लुप्यमानकृत्प्रत्ययप्रकृत्यर्थं प्रति यत्कारकं तद्वदिति न व्याख्यातम् । अत्र राज्ञ आगमनं प्रति कर्तृत्वेन कर्मत्वासिद्धेः अतएव क्रियाख्यानमत्र ग्राह्यं नतु संज्ञाभूताख्यानमात्रम् । कंसवधमाचष्टे कंसं घातयति । बलिं बन्धयति कृद्ग्रहणे गतिकारकपूर्वस्यापिग्रहणात्कंसवधादीनां कृदन्तत्वम् ।

दृश्यर्थायांच प्रवृत्तौ णिज्वाच्यः । कृतस्तदाचष्टे इत्यादिपूर्ववत् एवमुत्तरत्र । मृगान् रमयति । यदारण्यस्थो रममाणान् मृगान् प्रतिपाद्यमाचष्टे एतस्मिन्नवकाशे एवंविधा मृगा संतीति तदा प्रतिपाद्यदर्शनार्थाप्रवृत्तेः । यदातु ग्रामस्थो मृगरमणमाचष्टे तदामृगाणामसन्निकर्षान्नदृश्यर्था प्रवृत्ति रितिवाक्यमेव ।

आङ्लोपश्च कालात्यन्तसंयोगे मर्यादायाम्। आरात्रि-विवासमाचष्टे रात्रिं विवासयति। आङो लोपोऽत्राधिकः। रात्रिनिवृत्तिपर्यन्तं कथाः कथयतीत्यर्थः।

चित्रीकरणे प्राप्यर्थे। आश्चर्यकरणे गम्ये तत्प्राप्नोतीत्यर्थे णिज्वक्तव्यः। उज्जयिन्याः प्रस्थितो माहिष्मत्याम् सूर्यमुद्गमयति तत्र सूर्योद्गमनं प्राप्नोतीत्यर्थः। एकदिनेन तत्र गमनादाश्चर्यम्।

नक्षत्रयोगे ज्ञानार्थे। पुष्ययोगं जानाति पुष्येण योजयति। मघाभिर्योजयति। पुष्यो योगक्रियाकर्ता नहि चन्द्रं संबध्नाति। उभयप्राप्तौ कर्मणीति नियमात्षष्ठ्यभावे तृतीया-समासः। कंसं घातयतीत्यादौ सन्नियोगशिष्टन्यायेन कृत्प्रत्यया-भावाद्घधादेशानिवृत्तावपि अत्र कुत्वस्य सन्नियोगशिष्टत्वाभावात् तन्निवृत्त्यर्थं प्रकृतिप्रत्यापत्तिवचनम्।

वस्तुतस्तु सर्वत्र हेतुमतिचेत्यत्र पराधीनप्रवृत्तेरपि।

निमित्तेभ्यः प्रवर्तन्ते सर्व एव स्वभूतयः।

अभिप्रायानुरोधोऽपि स्वार्थस्यैव प्रसिद्धये॥

इति वाक्यपदीयोक्तरीत्या परम्परया स्वार्थपरत्वपर्यवसाना-त। गुर्वादेराज्ञाकरणेन हि ऐहिकामुष्मिकफलसंपत्तेः प्रयो-ज्यत्वस्य च प्रयोजकाभिप्रायानुवृत्तिनिबन्धनत्वात्। त्वरया माहिष्मतीं प्राप्नुयामित्यभिप्रायस्य सूर्येण स्वोदयद्वारा संपादनात। नचकंसं घातयतीत्यादौ चिरातीते वर्तमानत्वान्वया-योगात् वार्तिकावश्यकत्वमिति वाच्यम्। कंसाद्यनुकारिणां नटा-नां व्याख्यानोपाध्यायैः शौभिकपदाभिधेयैर्घातनात्। कंसपदस्य सामाजिकवृत्तिकंसत्वप्रकारकज्ञानविशेष्यनटपरत्वात्। चित्रेष्व-पि उद्गूर्णनिपातितप्रहारदर्शनात। कथकेनापि बुद्धिविषयत्वेन वर्तमानव्यपदेशात्। तदुक्तं हरिणा—

शास्त्रोपहितरूपांस्तान् बुद्धेर्विषयतां गतान् ॥
प्रत्यक्षानिव कंसादीन् साधनत्वेन मन्यते ॥

अतएव तद्दर्शनादिना यथायोग्यं तद्विषयकरागद्वेषादीनां तत्कार्याणां चोपलम्भ इति भाष्यम् ।

इति श्रीसिद्धान्तसुधानिधौ तृतीयाध्यायस्य प्रथमे पादे
द्वितीयाह्निकम् ।

# कण्ड्वादिभ्यो यक् ॥२७॥

एभ्यो धातुभ्यः स्वार्थे यक्। एते द्विविधा धातवः प्रातिपदिकानि च। यदि हि धातव एव स्युः तदा केषाञ्चिद्दीर्घपाठवैयर्थ्यम्। अकृत्सार्वधातुकयोरितिदीर्घसिद्धेः। प्रातिपदिकमात्रन्वेतु यकः कित्त्वानर्थक्यम्। आर्धधातुकत्वाभावादेव गुणाप्रसक्तेः। किञ्चकण्डूर्मन्तूरित्यादौयग्रहतिप्रयोगो नस्यात्। यको नित्यत्वात्।

ननुयगन्तादेव क्विपाउक्तरूपसिद्धिः। नचाल्लोपस्य स्थानिवत्त्वादुवङापत्तिः। क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषु तन्निषेधात्। नचक्वौ लुप्तमित्यस्य क्वाचित्कत्वादुवङश्चक्विनिमित्तकत्वाभावात्स्यादेव स्थानिवत्त्वमिति वाच्यम्। उवङि कृतेऽपि वकारस्यऊठ्संभवात्। वकारस्यादिष्टादचः पूर्वत्वेन तस्मिन् कर्तव्येऽल्लोपस्य स्थानिवत्त्वाभावेन कित्प्रत्ययपरत्वात्। अतएव पुनरुवङोऽप्रवृत्तिः इतिचेत् न, कण्डुवौ कण्डुव इत्यादिप्रसङ्गात्। ओः सुपीत्यस्य यणादेशस्यासंयोगपूर्वपरत्वात्। कण्डूवेत्यत्र नोङ्धात्वोरिति विभक्त्युदात्तनिषेधप्रसङ्गाच्च। मन्तुर्वल्गुरित्यादौ ह्रस्वस्य पिति कृतीति तुगापत्तेश्च। वल्गुर्मन्तुरित्यादौ दीर्घापत्तेश्च। तस्य यलोपापेक्षयाऽन्तरङ्गत्वाच्च। वलादित्वाभावेन यलोपानापत्तेश्च। नच क्विलोपात्पूर्वं यलोपः। परत्वान्नित्यत्वाच्च क्विपोलोपस्य बलवत्त्वात्। वलीति वर्णाश्रये प्रत्ययलक्षणाभावाच्च। इदंचवेरपृक्तलोपात्पूर्वं वलिलोप इत्यनाश्रित्योक्तम्। तदादरे स्वयं दोषो बहिः कार्यः। नन्वेवं वावचनं करिष्यते तथाच यगभावपक्षे सर्वेष्टसिद्धिः। नचयगन्तात्क्विपि तत्राप्येतद्दोषनादवस्थ्यमितिवाच्यम्। कण्डूरित्यत्र कर्त्रर्थानवगमादेभ्यो यगन्तेभ्यः क्विबनुत्पत्तेः। मैवम्। संपदादित्वाद्भावे क्विपो दुर्वारत्वात्।

अतएव क्रियायां कण्डूयतीति, वेदनामात्रे कण्डूरिति प्रयोगः संगच्छते । तदुक्तम् ।

धातुप्रकरणाद्धातुः कस्य चासंजनादपि ।
आहचायमिमं दीर्घं मन्ये धातुर्विभाषितइति ॥

व्याख्यातप्रायम् ।

यत्तु प्राञ्चः कण्ड्वादिभ्यो यक्स्या (त्स्वार्थे) कृञर्थे । कण्डूं करोति कण्डूयति । तत्र वदन्ति । यगृविधेरनन्तरं एतदारम्भात् धातोरेवयग्विधानम् । अतः प्रातिपदिकाद्विधानं करण इत्यस्यानुवर्तनंच न तदनुरुद्धम् । हेतुमति गुपूधूपेति पूर्वोत्तरसूत्रयोर्धातुग्रहणान्वयस्य निर्विवादत्वाच्च । आर्द्धधातुकसंज्ञारूपफलस्य यङादि विषयकयापि विस्पष्टत्वाच्च । सुख्यतीत्यादावतोलोपस्यान्यथानुपपन्नत्वाच्च । एतेन यकः कित्वमार्धधातुकत्वमेव ज्ञापयत्यावश्यकत्वात् लाघवाच्चातो नोक्तदोष इति तदभिप्रायकल्पनमपास्तम् । अप्रकृतस्यार्द्धधातुकत्वस्य कल्पने प्रकृतधात्वधिकारत्यागेच गौरवस्य विपरीतत्वात् । कण्ड्वादिद्वैविध्यस्य तैरपि स्वकृतस्यानुपपत्तिप्रसङ्गाच्च ।

नच यगन्ताः सन्तो धातव केवलास्तु प्रातिपदिकानि । यद्वा यगन्तधात्ववयवेषु तेषु धातुशब्दो गौणः प्रत्ययसदसद्भावाभ्यामवस्थाभेदाच्च द्वैविध्यमिति वाच्यम् । यक आगमत्वाभावेन तद्विशिष्टाः कण्ड्वादय इति वचनस्य व्याहतत्वात् । कण्ड्वादय इत्यस्यय ग्विशिष्टसमुदायपरत्वेऽपि तस्य प्रातिपदिकत्वाभावस्य स्पष्टत्वात् । एतादृशद्वैविध्यस्य क्यजादिप्रकृतिभूतप्रातिपदिकमात्रसाधारण्येन विशिष्योल्लेखानर्हत्वाच्चेति केचित् ।

इदंत्विह वक्तव्यम् । कण्डूवादीनां प्रातिपदिकमात्रत्वं यकस्तत्प्रकृतिकत्वैककल्पिकत्वं चेति तावदाशङ्कायां भाष्यारूढमेव ।

कित्वनिषेध्यगुणप्रसञ्जकत्वेनार्धधातुकत्वमुभाभ्यामेव कल्पनीयम् । प्रकृतेर्धातुकल्पनद्वारा साक्षाद्वेति तु भेदः । नचोक्तरीत्या सार्वधातुकत्वमप्याक्षिप्येत । गुणप्रसक्तेस्तावतापि निर्वाहात् । प्रकृतेर्धातुत्वाक्षेपे त्वार्द्धधातुकत्वमेव सिध्यति सार्वधातुकत्वबाधादिति वाच्यम् । तिङ्त्वशित्वाभावो धातोर्विहितत्वाभावश्चेत्यंशद्वयेन सार्वधातुकत्वाभावनिर्णयात् । अंशद्वयबाधापेक्षया धातोर्विहितत्वाभावज्ञानबाधेनार्धधातुकत्वकल्पनाया एव युक्तत्वात् । सुख्यतीत्यादावतोलोपानुरोधाच्च । अतएव सन्सूत्रेऽङ्गपरिमाणज्ञानस्य कर्मणइत्यनेन सिद्धावपि सन आर्द्धधातुकत्वार्थं धातोरित्येवावश्यकमिति सिद्धान्तः । यगन्ताः कण्ड्वादय इत्यत्रापि न व्याघातः आगमाभिप्रायेण तथाप्रयोगो नतुप्रकृत्यभिप्रायेणेति चेत् अत्रापि यगन्तधात्ववयवेषु गौणत्वस्योक्तत्वात् । कण्ड्वादयो द्विविधा इत्यत्र कण्डू इत्यादिशब्दस्वरूपमात्रस्योभयानुगतस्य विवक्षितत्वात् । तच्च क्वचिद्धात्ववयवभूतं क्वचिच्च न तथेत्यस्य द्वैविध्यग्रन्थार्थत्वात् ।

एतेन कण्ड्वादय इत्यस्य यग्विशिष्टसमुदायपरत्वे तस्य प्रातिपदिकत्वाभाव इति दूषणमपास्तम् । विभाजकोपाधेरेव विभाज्योपाधित्वस्य सहृदयेन शङ्कितुमप्यशक्यत्वात् ।

एतेन द्वैविध्यस्य तेनाप्युक्तौ प्रातिपदिकाच्च यगुत्पत्तौ केवलधातोः कण्डवतीत्यादि निरस्तम् । प्रातिपदिकत्वमात्राभिप्रायेण ग्रन्थव्याख्यायामुक्तदोषस्य निरनुयोज्यानुयोगत्वात् ।

कण्डू गात्र विघर्षणे । मन्तुरपराधे रोषेच । वल्गु पूजामाधुर्ययोः । अस्रूज् उपतापे । मनमउपताप इत्यन्यः पाठः । अर्थनिर्देशान्तर्गतं मनस्पदमिति दीक्षिताः । धात्वन्तरमेवेत्यन्ये । असु अस् इतिकेचित् । अस्यति अमूयति । लेट् लोट् धौर्त्ये पूर्वभावे स्वप्नेच ।

पूर्वेत्यपि धातुरिति केचित् । लेख्याति लोख्याति । लेलादीप्तौ । ध्यायतीव लेलायतीवेतिश्रुतौ चलतीवेति वेदान्तिनः । इरस् इरञ् इरज् ईर्ष्यायाम् । इरस्यति । हलिचेति दीर्घः । ईर्यति । ईर्यते । उपसूप्रभालीभावे । वेद् धौर्त्यस्वप्नयोः । मेधा आशुग्रहणे । कुषुभ क्षेपे । मगध परिवेष्टने । नीचदास्ये वा । तन्तस्पम्पस् दुःखे । सुखःदुख तत्क्रियायाम् । सुख्यति । दुःख्यति । तदनुभवतीत्यर्थः । सपर पूजायाम् । सपर्यति । अरर आराकर्मणि । भिषज चिकित्सायाम् । भिष्णज् उपसेवायाम् । इषुध शरधारणे । चरण गतौ । खुरण धौर्ये । तुरण त्वरायाम् । भुरण धारणपोषणयोः ।

कमर्थिनः कुषुभ्यन्तु कं मगध्यन्तु मागधाः।

कमिषुध्यन्तु यज्वानो रामोऽरण्यं भुरण्यती-

त्यत्र गमनार्थः । गद्गद वाक्स्खलने । एला केला खेला विलासे । इलेत्यन्ये । लेखा स्खलने च । अदन्तत्वपक्षे लेख्यति । लिट अल्पकुत्सनयोः । लिट्यति । लाट जीवने । हृणीङ्रोषे लज्जायांच । महीङ् पूजायाम् । स्वर्गलोके महीयते । पूज्यो भवतीत्यर्थः । रेखा श्लाघासादनयोः । द्रवस् परितापपरिचरणयोः । तिरस् अन्तर्धौ । अगद नीरोगत्वे । उरस् बलार्थः । तरण गतौ । पयस् प्रसृतौ । संभूयस् प्रभूतभावे । अम्बर संवर भरणे । आकृतिगणोऽयम् ॥

# गुपूधूपविच्छिपणिपनिभ्य आयः ॥ २८ ॥

एभ्य आयप्रत्ययः । गुपूरक्षणे । धूपसंतापे । विच्छ गतौ । पण व्यवहारे स्तुतौ च । पनच । गोपायति । धूपायति । इत्या-

दि । पणायति । पनायति । अनुदात्तेत्त्वस्य केवले चरितार्थत्वा-न्न तङ् । तेन पनायते इत्यात्मनेपदमुदाहरन् क्षीरस्वामी चिन्त्यः । नचपनेरप्यर्थद्वयमिति । वाच्यम् । पृथङ् निर्देशवैयर्थ्यादिति जयादित्यक्षीरदेवदीक्षितादयः ।

केचित्तु तन्मते धात्वर्थनिर्देशस्याधुनिकत्वाङ्गीकारादर्थनिबन्धनसाहचर्याश्रयणमयुक्तम् । अर्थद्वयपठितस्य पणेः पनिसाहचर्येणार्थावधारणासंभवाच्च । स्तुत्यर्थेऽनयोः सहपाठाभावात् । नचैवं पञ्चम्यपाङ्परिभिरित्यत्रापि साहचर्याद्वर्जनार्थस्यैव परेर्ग्रहणमिति सिद्धान्तविरोधः । तयोरपपरी वर्जने इति सूत्रे पाठादेव वर्जनार्थे साहचर्यस्य दृष्टत्वेनार्थभेदमाश्रित्य तन्निर्णयोपपत्तेरित्याहुः । नचोपलेभे वणिजा पणायामिति भट्टिः ॥

## ऋतेरीयङ् ॥ २९ ॥

स्वार्थे । ऋतीयते । ऋत इति तान्तः सौत्रो धातुः जुगुप्साकृपयोर्वर्तते । ऋतीयते स्यात् घृणयोरितिभट्टमल्लोक्तेः । जुगुप्सा करुणे घृणे इत्यभिधानात् ।

अर्तनं च ऋतीया च ऋणीया च घृणार्थकाः ।

इत्यमरः । तान्तत्वं च वञ्चिलुञ्च्यृतश्चेति निर्देशात्तदातिकेचित् ।

अन्येतु ईयङो दीर्घोच्चारणं तत्र लिङ्गम् । इदन्तत्वे हि इयङमेव कुर्यात् । सवर्णदीर्घेणेष्टसिद्धेरित्याहुः । तन्न एरनेकाच इति यण्प्रसङ्गात् ।

नचाकृत्सार्वेतिदीर्घेण यङन्त सिध्येदिति वाच्यम् । सन्यङोरिति द्वित्वापत्तेरिति केचित् । तन्न सन्साहचर्येणार्थविशेषवाचकस्यैव यङः तत्र ग्रहणसंभवात् । नच स्वार्थिकस्यापि सनस्तत्र ग्रहणादोषतादवस्थ्यम् तथापि ङकारफलस्यात्मनेपद-

स्यादितो ङित्वेनापि संभवात् । ङ्यप्रत्ययविधानेन सिद्धेः ॥ ङिदन्तत्वस्य समुदाये सुलभत्वात् । अन्यथा भ्राजधातोर्ऋकारस्य प्रागपि पठितुं शक्यत्वादित्याद्येरनुपपत्तेः ॥

## कमेर्णिङ् ॥ ३० ॥

स्वार्थे । कमु कान्तौ । कामयते । अथ णकारोऽत्र व्यर्थः । क्ङितिचेति निषेधेन वृद्ध्यर्थत्वानुपपत्तेः । नच णकारसामर्थ्याद्वृद्धिः । णेरनिटीत्यत्र सामान्यग्रहणार्थत्वेन सामर्थ्योपक्षयात् । नच तत्रैव सामान्यग्रहणविघातार्थत्वेन ङकारोऽपि चरितार्थः । तन्मात्रस्यानुबन्धान्तरेणापि संभवात् । आत्मनेपदार्थत्वेन ङस्य चरितार्थत्वाच्च । तथाच द्वयोः सावकाशतया वृद्धिनिषेध एव । विध्यपवादत्वेन निषेधानां बलीयस्त्वात् ।

स्यादेतत् नकम्यमिचमामिति मित्त्वनिषेधात् कमेर्न वृद्धिनिषेधोऽन्यथा ङित्वादेव वृद्धिनिषेधतादवस्थ्ये मित्त्वप्रतिषेधवैयर्थ्यात् । अथ कामयमानं प्रयुङ्क्ते इति णिङन्ताण्णिचि णिनिमित्ताया वृद्धेर्ह्रस्वत्वं माभूदित्येतदर्थत्वेन सार्थक्यम् । नचणिज्निमित्तवृद्धेर्ह्रस्वत्वमेव न प्राप्नोति णिङा व्यवधानादिति वाच्यम् । णेरनिटीति लोपे तदभावात् । नच स्थानिवद्भावादिति वाच्यम् । तथापि णिज्निमित्तवृद्धेर्णिङ्निमित्तह्रस्वत्वं माभूत् इत्यर्थकत्वेन चरितार्थत्वात् ।

अथ तत्र ह्रस्वत्वमेव न प्राप्नोति । अन्तरङ्गे ह्रस्वे कर्तव्ये बहिरङ्गाया वृद्धेरसिद्धत्वादिति चेत् । तथापि णिङ्निमित्तवृद्धेर्णिङा व्यवधानेन तदन्ते प्रसक्त्यभावात् लोपे कृतेऽपि स्थानिवद्भावात् । नच क्ङितुगुपधेति उपधाविधौ स्थानिवद्भावनिषेधः शङ्क्यः । प्रत्ययविधिमात्रविषयत्वात् । अतएव पटयतीत्यादौ

टिलोपस्य स्थानिवद्भावान्नोपधावृद्धिः । तस्माण्णिजुनिमित्तवृद्धे-र्णिङन्ते प्रसक्त्यभावान्न तस्या ह्रस्वत्वनिषेधार्थं मित्त्वप्रतिषेधः सार्थक इति चेन्न ।

तथापि चिण्णमुलोर्दीर्घोऽन्यतरस्यामिति दीर्घत्वं कमे-र्णिङि माभूदित्येतदर्थं मित्त्वप्रतिषेधप्रवृत्तेः । नच तत्र ह्रस्वविकल्प एव विधेयः । अशमि, अशामीत्यनयो र्ह्रस्वे तदभावे स्वाभाविकवृद्ध्यवस्थाने च सुलभत्वात् । तथाच तदर्थं मित्त्वप्रति-षेधस्य नोपयोग इति वाच्यम् । ण्यन्ताण्णौ कृते पूर्वणिलोपे स्था-निवद्भावेन णिचा व्यवधानात्तत्र ह्रस्वस्य दुर्लभत्वापत्तेः । दीर्घ-विधाने तु नपदान्तेति सूत्रेण दीर्घविधौ स्थानिवद्भावनिषेधात्त-त्सिद्धिरिति वैषम्यम् ।

किञ्च आयादीनामार्धधातुके वैकल्पिकत्वाद्णिङन्तात्कमे-र्यदा णिच् क्रियते तदा मित्त्वनिषेधोऽर्थवानेवेति वृद्धिप्रतिषेधो दुर्वार इति ।

अत्र वार्तिकम्—तद्धितकाम्योरिक्प्रकरणादिति । इग्लक्ष-णयोरेव गुणवृद्ध्योः क्ङिति चेत्ययं निषेधः । अत उपधाया वृद्धिस्तु नेग्लक्षणा । अतइति स्थानिनिर्देशात् । एवं नडादिभ्यः फकि कृते नाडायन इति किति चोति वृद्धिरपि इत्यर्थः ॥

# आयादय आर्धधातुके वा ॥३१॥

इह परमप्रमीत्वे पक्षद्वयं संभाव्यते । यदैतद्वाक्यनिरपेक्षैरा-यादिविधिवाक्यैः परनिमित्तानपेक्षा आयादयो विधीयन्ते तदा-ऽऽयादिभ्यो यदार्धधातुकं तस्मिन् परेऽनेन तेषां पाक्षिकी निवृत्तिः क्रियते । शब्दानां नित्यत्वेऽपि प्रक्रियादशायां क्वचिदु-त्पन्नस्य लोपादिना निवृत्तिः । क्वचिदपवादविधिना तद्विषये

उत्सर्गस्यानुत्पत्तिर्ज्ञाप्यत इति निवृत्तिपक्षस्याप्युपपत्तेः । अथ तद्योगस्य सूत्रत्रयशेषतया एतदेकवाक्यतया तेषां प्रवृत्तिस्तदा आयादिप्रकृतिके आर्धधातुके परत आयादयो विकल्पेनोत्पद्यन्ते इति पक्षः। नचैवं सार्वधातुके आयादीनां दौर्लभ्यम् । गुपूधूपेत्यत्रैवार्धधातुके वेति वक्तव्ये पृथक्पाठसामर्थ्यात्सार्वधातुकेऽप्यायादयो भवन्तीति विज्ञानात् । तत्राद्ये गोपायाचकार । गोपायति यद्यपि सिध्यति । तथापि आमि परत आयस्य पाक्षिक्यां निवृत्तौ जुगोपेति न सिध्येत् । गोपायाचकारेत्यस्य प्रसङ्गात् । गुप्तिरित्यपि न स्यात् । गोपायशब्दस्य प्रत्ययान्तत्वात् । अकारेण क्तिनो बाधात् । गुप्तइत्यत्र क्तप्रत्यये परे आयस्य पाक्षिकनिवृत्तौ प्रत्ययलक्षणेन लघूपधगुणप्रसङ्गश्च । नचात्र सूत्रे लोपशब्देन लोपानुपादानान्न प्रत्ययलक्षणत्वमिति वाच्यम् । प्रत्ययलोपसूत्रेलोपसंज्ञासूत्रे च तद्भावितग्रहणस्यानाश्रितत्वात् । द्वितीये तु गोपायांचकारेत्यस्यासिद्धिः । प्रत्ययान्तत्वं विनामो दुर्लभत्वात् । आमनुत्पत्तौ च निमित्ताभावादायप्रत्ययानुत्पत्तेः । अथायादिप्रकृतेर्यदार्धधातुकं लिट् तस्मिन् परे आयादिविकल्पप्रवृत्तेरतेषां च विकरणवदामूमध्यपातित्वादेतत्सिद्धम् । तथापि गोपायेति न स्यात् । प्रत्ययान्तत्वाभावादप्रत्ययादित्यस्याप्रवृत्तेः ।

अत्र वार्तिकम्—सिद्धं तु सार्वधातुके नित्यवचनात् । अविशेषेणायादीन् विधाय सार्वधातुके नित्यमिति वचनमारभ्यम् । नन्वेवं स्यादिभिरायादीनां बाधप्रसङ्गः, करिष्यति इत्यादौ गोपायतीत्यादौ च परस्परपरिहारेणोभयेषां सावकाशतया गोपायिष्यतीत्यादौ परत्वात्स्यादीनां प्राप्तेः गोपायतीत्यत्र प्रयोजनाभावेन शपोऽनुत्पत्तेरिति चेन्न । तत्रापि गोपायतीत्यत्र शप्श्यनोर्नित्यमित्येतदर्थं शप आवश्यकत्वात् । लक्षणसत्त्वाच्च । कामयते इत्यत्र

शपं विना इष्टसिद्धेश्च । तथाच निरवकाशत्वादेव तत्रायादीनां सिद्धेः । अथैवमपि आयादिभिः स्यादीनां बाधो दुर्वार इति चेत् तर्हि शपि नित्यमित्येव वचनं कर्तव्यम् । नचैवमपि विच्छे-स्तौदादिकत्वादसंग्रहः स्यादिति वाच्यम् । शिति नित्यमित्येव सूत्रणीयत्वादिति ।

भाष्यकारास्तु आर्धधातुके इति विषयसप्तमी । ततश्चार्धधा-तुकविवक्षायामेव गुपादिभ्यो वैकल्पिकेष्वायादिषु कृतेषु यथा-प्राप्तं प्रत्यया भविष्यन्तीति सूत्रभेदो नाश्रयणीय इत्याहुः ॥

# सनाद्यन्ता धातवः ॥३२॥

सन् क्यच् काम्यच् क्यङ् क्यष् क्विप् णिच् णिङ् यङ् यगाय ईयङ् च एते द्वादश सनादयः एतदन्ता धातुसंज्ञाः स्युः । संज्ञा-विधौ प्रत्ययग्रहणे तदन्तग्रहणाभावादन्तग्रहणम् । ननु भुवोऽर्थं वदन्ति भूवादय इति व्याख्यानात्क्रियावाचिनां सनाद्यन्ताना-मपि धातुसंज्ञा सिद्धा इतिचेन्न । भूप्रभृतयो वासदृशा इत्यर्थमा-श्रित्य क्रियावचनत्वे सति गणपठितस्य धातुसंज्ञाविधानात् । अन्यथा हिरुगित्यादावतिव्याप्तेः । नन्वेवं भूवचिख्यादीनां-आदेशानां तन्न स्यात् । यद्यपि भूवचिख्यादयो धातुमध्ये पठ्यन्ते तथाप्यादेशानां तद्भिन्नत्वात् । जग्ध्यादीनां स्वरूपेणापि पाठा-भावाच्चेति चेत् । न, स्थानिवद्भावेन तत्सिद्धेः ।

अत्र भाष्यम्—इष्यादीनामर्था आदिश्यन्ते सनादिषु । इष्यादयश्च पाठमभ्यगता इति तेषामपि स्थानिवद्भावेन सिद्धं धातुत्वम् । नचादेशशब्दस्य रूढतया स्थानिनिवृत्तिप्रयोजकस्यै-वादेशत्वम् । इष्यादिप्रयोगप्रसङ्गे च सनादीनां न विधानमिति वाच्यम् । आदिश्यन्ते इत्यादेशा इति क्रियानिमित्तत्वात्तस्य ।

नच षष्ठीनिर्दिष्टस्यादेशः स्थानिवदिति वाच्यम् । षष्ठीग्रहणस्य-तत्र निवर्त्तनात् । नचापवादेषूत्सर्गप्रसङ्गः । तेषामपि स्थानित्व-त्वप्रसङ्गादिति वाच्यम । शबाद्यपवादानां श्यनादीनां शित्क-रणेन तदभावज्ञापनादिति ।

अत्र प्रत्यवतिष्ठन्ते । स्थानिवद्भावेन सनादीनां धातुसंज्ञावि-धाने संज्ञाविधौ प्रत्ययग्रहणे तदन्तविध्यभावात्प्रत्ययानामेवाडा-दिधातुकार्यप्रसङ्गः । तेषामेवेष्याद्यर्थे विधानात् । यङ्प्रत्ययसम-भिहारविशिष्टक्रियावचनाद्धातोः स्वार्थे । आयादीनांच शुद्ध एव स्वार्थे विधानात्तेषां स्थानिनः कस्यचिन्निर्दिष्टस्याभावात्स्था-निवद्भावानुपपत्त्या धातुसंज्ञानुपपत्तिश्चेति ।

अत्र कैयटः । कर्तुमिच्छतीति करणाङ्गे इत्यर्थे सर्वे सर्व-पदादेशा इति न्यायाद्वर्तमानस्येषेः प्रसङ्गे चिकीर्षशब्दः सनन्त आदिश्यते इति सिद्धं तदन्तस्य धातुत्वम् । एवं समभिहारवि-शिष्टलवनक्रियावाचिलूशब्दप्रसङ्गे लोलूयशब्दो, गुपेः प्रसङ्गे गोपायशब्दश्चादिश्यते इति भगवतो भाष्यकारस्याभिप्राय इति । ननु भूवादयो धातव इत्यत्र सनाद्यन्ताश्चेतिन्यासे यद्यपि सना-दीनामियत्ता न लभ्यते तथापि सनाद्यन्ता धातव इत्यनन्तरं भूवादयश्चेति सूत्रणीयम् । एकवारं धातुपदोपादानेन लाघवा-दिति चेत् । तथैव युक्तमिति केचित् । तच्चिन्त्यम् । अनुदात्त-ङित इत्यत्र धातुग्रहणानुवृत्तेः कैयटादिप्रसिद्धत्वात् । अत्रैव तदारम्भे च तस्या दुर्लभत्वात् ।

# स्यतासी लृलुटोः ॥३३॥

लृ इति लृङ्लृटोः सामान्यग्रहणम् । यथाक्रमं लृलुटोः स्यतासी स्यातास् । भविष्यति । अभविष्यत् । भविता । आर्द्धधा-

तुकस्येड्वलादेरिति इट् ।

ननु विकरणानां क उत्सर्गः कोऽपवादः । नच यगुत्सर्गः । भावकर्मग्रहणानुवृत्त्या सार्वधातुकमात्रे विधानात् । शबादयः स्यादयश्च तदपवादा विशेषविहितत्वादिति वाच्यम् । पचति पचत इत्यादौ अपवादयोः शबादिस्ययोः सावकाशतया पक्ष्यतीत्यत्र परत्वाच्छबादिप्रसङ्गात् । किञ्च भावकर्मणोर्यग्विधानान्न तयोरुत्सर्गापवादभावः । समानविषयकत्वाभावात् । नच यक्शपावुत्सर्गौ श्यनादयो अपवादा इति वाच्यम् । दीव्यति पक्ष्यतीत्यादौ द्वयोः सावकाशयोः देविष्यतीत्यादौ परत्वाच्छ्यनादिभिः स्यादीनां बाधप्रसङ्गात् । मैवम् । श्यनादयः शप आदेशाः शप् स्यादिभिर्बाध्यते इति दिवादिभ्यः स्यादिविषये शप एवाप्रसक्त्या तदादेशानां श्यनादीनां प्रसक्त्यभावात् । कर्तरि शबित्यतोऽनुवृत्तस्य शप्पदस्य दिवादिभ्य इति पञ्चम्या तस्मादित्युत्तरस्येति षष्ठ्यन्तत्वकल्पनात् । यद्वा सार्वधातुके यक् । स्यतासी लृलुटोः च्लि लुङि च्लेः सिच् एवं कर्तरि शबित्यस्मादनन्तरं । एवं दिवादिभ्यः श्यनित्यस्मात् । एवमन्यत्राप्यवधेयम् ।

यद्वा लावस्थायामेव स्यादय इत्यन्तरङ्गाः । सार्वधातुके श्यनादय इति बहिरङ्गाः । ननु स्यादिभ्यः परत्वाल्लादय एव स्युः । नचैषामनित्यत्वम् । कृतेष्वपि स्यादिषु आतृतीयपरिसमाप्तेर्धात्वधिकारेऽपि धातोर्विहितस्य लस्येति विहितविशेषणाश्रयणाल्लादेशानां प्रसङ्गात् मैवम् । लादेशोत्तरभावित्वेऽपि स्यादीनामन्तरङ्गत्वानपायात् । तद्विधौ सार्वधातुकत्वादेः प्रत्ययधर्मस्य कर्त्रादेरर्थविशेषस्य वानपेक्षितत्वात् । श्यनादिविधौ तु तस्याश्रितत्वेन तेषां बहिरङ्गत्वात् ।

अवश्यंच लादेशानन्तरं स्यादिविधिरभ्युपेयः । अन्यथा तासेः परस्य लसार्वधातुकस्यानुदात्तविधानं 'विकरणस्वरः धातुस्वरं न बाधते' इत्यत्र ज्ञापकं न स्यात्। लावस्थायां तासेः परस्य सार्वधातुकस्यानुदात्तत्वमप्राप्तमेवेति तस्यापूर्वविधित्वमेव स्यात् लादेशोत्तरं तासिप्रवृत्तौ तु तदुदात्तस्यैव सतिशिष्टत्वात्तत्परस्य सार्वधातुकस्य शेषनिघातेनानुदात्तत्वं सिद्धमेवेति वैयर्थ्यप्रसङ्गादनुदात्तविधानमुक्तार्थज्ञापकं संपद्यते ।

एतेन संख्याशास्त्रात्मनेपदपरस्मैपदशास्त्राभ्यां सह लादेशविधानस्यैकवाक्यत्वात् लादेशानां बहिरङ्गत्वात् लावस्थायामेवान्तरङ्गत्वात्प्रतिपदविधानाच्च स्यादयो भवन्तीति निरस्तम् । उक्तज्ञापकानुपपत्तेरिति कैयटः ।

# सिब्बहुलं लेटि ॥३४॥

लेट् छन्दसि वक्ष्यते । सिबुत्सर्गः छन्दसि सनाद्यन्ते वाच्यः । परिनिमित्तमनुपादाय सनादिवर्गे धातोः सिब्विधेयः । तदन्तस्य धातुसंज्ञायां इन्द्रे वस्तेन नेषतु इत्यादि सिद्धम् । नीधातोः सिपि गुणे लोट् । गेषृनेषृभ्रेषृहेषृगताविस्यत्र नेपनेरपि प्रकृत्यन्तरत्वात्सिद्धमितिचेत् तथापि अवयासिसीष्ठा इत्यत्रैकाजुलक्षणेट्प्रतिषेधो माभूत् । यातेरवपूर्वात्सप् । लिङ् सुट् सीयुट् । सवन्तस्याङ्गस्यानेकाच्त्वादिट् । नच सिपैवानेकाच्त्वमस्त्विति वाच्यम् । श्रवणप्रसङ्गेन तस्योच्चारणार्थत्वस्यावश्यं वाच्यत्वात् । तदन्तस्य धातोरेकाच्त्वादिट्प्रतिषेधापत्तेः ।

अथ याशब्द उपदेशेऽनुदात्तः । न तस्मात्परमार्द्धधातुकम् । सिपा व्यवधानात् । सिबन्ताच्च परमार्धधातुकं नत्वसावुपदेशेऽनुदात्त इति चेत् । नैवम् । सनाद्यन्ता धातव इत्यस्य सनाद्यवयवा

धातुसंज्ञा इत्यर्थे मिपो याद्यवयवत्वात् यातिग्रहणेन ग्रहणादिट्-प्रतिषेधप्रसङ्गात् । स्थानिवत्त्वेन तत्सूत्रप्रत्याख्यानपक्षेऽपि स्थानिवद्भावेन सिबन्तस्यानुदात्तत्वात्तत्प्रसङ्गात् ।

अथवा यथान्यासपाठापेक्षमिदं भाष्यम् । यद्यप्यतोलोप इति लोपावश्यकत्वात्सवकारश्रवणं न कुत्रापि ततश्च तदनुबन्धः पकारो व्यर्थः । अनुदात्तस्य श्रवणाभावात् । तथापि सकारमात्रे कृते छन्दस्युभयथेति आशिषि लिङोऽपि सार्वधातुकत्वाद्-दुपदेशात्परस्य लसार्वधातुकस्यानुदात्तत्वे सति प्रत्ययस्वरेण वा सशब्दाकारस्योदात्ततया तस्यानुदात्त इटि परेऽतोलोप इति इटउदात्तनिवृत्तिस्वरेण उदात्तत्वं स्यात् । पकारोच्चारणे तु तत्सामर्थ्यात्सकाराकारस्य धातुस्वरेणोदात्तत्वं न भवति । एतत्प्रदेशपाठाद्वा याशब्दस्यैव धातुस्वरः । तथाचानुदात्तस्य सशब्दाकारस्य लोपो नतूदात्तस्येति उदात्तनिवृत्तिस्वराभावः । तिङ्ङतिङ इति निघातो निपातैर्यद्यदीति निषिद्धः अवशब्दस्य तिङि चोदात्तवतीति निघातः ।

सिप्बहुलं छन्दसि णिद्वक्तव्यः । सविता धर्मसाविषत् । प्रण आयूंषि तारिषत् । षूप्रेरणेइत्यस्मात्तरतेश्च लेट् । णित्वाद्वृद्धिः ।

# कास्प्रत्ययादाममन्त्रेलिटि ३५

कासः प्रत्ययान्ताच्च लिटि परे आम् स्यात् नतु मन्त्रे । अतो ब्राह्मणे भवत्येव । तंह कश्यपो याजयांचकारेत्यादि । कास्ग्रहणे चकास उपसंख्यानम् । चकासामास । नच कास्ग्रहणात्सिद्धिः । अत्रत्यकास्ग्रहणस्यानर्थकत्वात् । यद्वा कास्यनेकाज्ग्रहणं चुल्लुम्पाद्यर्थम् । प्रत्ययग्रहणमपनीय तत्स्थानेऽनेकाच इति वक्तव्यम् । चुलुम्पांचकार । चुलुम्प् लोपे इति बोपदेवः ।

अम्भोधेर्नारिकेलीरसमिव चुलुकैरुच्चुलुम्पांचकार ये ।

इति भवभूतिः । वृत्करणं यजादिसमाप्त्यर्थम् । भ्वादिस्त्वाकृतिगण इति सिद्धान्तात् । दरिद्रामास । चिकीर्षांबभूव । इत्यादय (ईयङन्ता) उदाहार्याः ॥

# इजादेश्च गुरुमतोऽनृच्छः ३६

इजादे र्गुरुमत ऋच्छस्यन्यस्य धातोर्लिटि परे आम्स्यात् । इन्दामास । एधाञ्चक्रे । गुरुमत आम्विधाने लिण्निमित्तात्प्रतिषेधः । इयेष उवोषेत्यादौ माभूत् । यद्यपि उवोषेत्यत्र उषविदेत्यामा विकल्पेन भाव्यं तथापि द्विबहुवचनयोर्गुणाभावाद्गुरुमत्त्वात्प्रतिषेधे परमिति प्रतिपदविधेश्च बलवत्त्वमनाश्रित्य भाष्यकृतोदाहृतम् । ईषतुरीषुरित्यत्रापि सवर्णदीर्घे गुरुमत्त्वादिजादेः सर्वत्र गुरुमत्त्वादाम्प्रसक्तिरिति भावः । गुरुमद्ग्रहणं तु इयजिथ त्वं इयजाहं उवपाहं इत्यादिव्यावृत्त्यर्थं स्यात् ।

यद्वा उपदेशे गुरुमत इति व्याख्येयम् । तथाचोक्तवार्तिकमनारभ्यम् । नचैवं व्युच्छाञ्चकारेत्यत्राव्याप्तिः । तुगागमोत्तरमेव तत्र संयोगे गुर्विति गुरुत्वप्रवृत्तेरिति वाच्यम् । ऋच्छेति पर्युदासेन तुङ्निबन्धन गुरुमत्वस्योपदेशग्रहणेन व्यावृत्तिर्नेत्यस्य ज्ञापितत्वात् । तुग्ग्रहणंचागममात्रोपलक्षणम् । तेनोर्खांचकारेति नुमागमनिबन्धनगुरुत्ववतोऽपि तत्सिद्धिः । अतएवानृच्छेतिज्ञापनार्थमेव नतु निषेधार्थम् । ऋच्छत्यृतामिति गुणविधानेन ऋच्छतेर्लिटि आमभावस्य ज्ञापयितुं शक्यत्वात् । नचाम्विधानेऽपि गुणार्थं तद्विधानमिति वाच्यम् । तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषाबाधकल्पनापेक्षया आम्विरहज्ञापनस्य लघुत्वात् । नच ऋगतिप्रापणयोरिरसस्य गुणविधानार्थं तदस्तु । नच श्रित्येव

तदादेशविधानाछ्टिच तदभावाच्चतपरत्वासम्भवः तत्प्रकृतिमात्र-परत्वसम्भवात् । तिष्ठतेरित् । जिघ्रतेर्वेत्यादौ चङि परे तिष्ठजि-घ्रयोरादेशयोरभावेऽपि स्थाघ्राधात्वोरुपादानात् तद्वदत्रापि ऋच्छ-तीति श्तिपा धातुनिर्देश इत्यस्य च वक्तुं शक्यत्वात् । नच तत्र गु-णविधानवैयर्थ्यम् द्विर्वचने सवर्णदीर्घेच कृते एकादेशस्य धातुग्रह-णेन ग्रहणेऋकारान्तत्वाद्गुणे रपरत्वेच अरतुः अरुरिति स्यात् । यणादेशात्पूर्वं द्विर्वचनं परत्वात् । स्थानिवद्भावेन यणादेशोत्तरमपि द्विर्वचनप्रवृत्त्या द्वयोरपि नित्यत्वात् । यद्वा । निन्यतुरित्यत्र भा-विनं यणमालोच्य यथापूर्वं नेयङ् । एवं द्वित्वे कृते सवर्णदीर्घ-प्रवृत्त्या न पूर्वं यण् । यणि कृतेतु स्थानिवत्त्वाद्द्विर्वचनम् । यणा-देशं बाधित्वा परत्वात्सवर्णदीर्घः अभ्यासग्रहणेन ग्रहणे तु उरदत्वं रपरत्वं हलादिः शेषः आतआदेरिति दीर्घत्वं अतोलोप इत्याकार-लोपश्चेति आरतुः आरुरिति सिद्धमितिचेन्न ।

परत्वादुरदत्वस्य प्रवृत्तेः । नच सवर्णदीर्घस्य वर्णमात्रा-श्रयत्वादुरदत्वस्य चाङ्गाधिकारीयत्वेन परनिमित्ततया बहिरङ्ग-त्वात्पूर्वं सवर्णदीर्घ एव स्यादिति वाच्यम् । प्रागभ्यासविकारे-भ्योऽङ्गाधिकाराश्रयणात् । उरदत्वस्याप्यन्तरङ्गत्वात् । ततश्च पर-त्वान्तरङ्गत्वाभ्यामुरदत्वम् । रपरत्वं हलादिः शेषः । अतआदे-रिति दीर्घः । परस्य यण्इत्यारतुरित्यादिसिद्धेः । अथ सप्तमा-ध्यायसमाप्तिपर्यन्तमङ्गाधिकारः बहुवचननिर्देशात् । अन्यथा वव्र-श्चेत्यादि न स्यात् । उरदत्वस्य परनिमित्तत्वाभावेऽचःपरस्मिन्नि-तिस्थानिवत्त्वाभावे न संप्रसारणे इतिनिषेधाप्रवृत्तौ वकारस्य संप्र-सारणापत्तेरितिचेत् ।

तथापि ऋच्छत्यृतामित्यत्र ऋऋतामितिप्रश्लेषेणार्तेर्विशिष्य गुणविधानात् । ऋच्छतिपदेन तस्य ग्रहीतुमशक्यत्वात् । नच

ऋकारनिर्देशे चक्रतुरित्यादावतिप्रसङ्गः वर्णग्रहणेतदन्तग्रहणादिति वाच्यम् । ऋतश्च संयोगादे रित्यस्य नियमार्थत्वात् । तस्माद्द्विनैवार्ते-र्गुणवचनम् आरतुरित्यादि ऋच्छिग्रहण विनैवार्तेर्लिटि गुणसिद्धिः एवंचानृच्छ इतिपर्युदासउच्छेराम्बेत्यन्यतरदावश्यकमिति स्थितम् ।

भाष्यकारस्तु उभयं न वक्तव्यम् । उपदेशे गुरुमतइत्यस्या-नाश्रयणात् । नचेयेषेत्यादावतिव्याप्तिः । सन्निपातपरिभाषया स-माधानात् । लिट्संनिपातकृतगुणस्य लिड्लोपनिमित्तमामं प्रति निमित्तत्वानुपपत्तेः । आमि सति हेर्लुक्प्रसङ्गात् । ऊर्णोतेस्तु नाम् । नुवद्भावस्योपसङ्ख्यातत्वात् । यद्वा संहितयापाठेऽनृच्छो दयायासश्चेति, ऋच्छ उकारान्तस्यचाम्निषेधात् । लुप्तविभक्ति निर्देशश्चायम् ।

# दयायासश्च ॥३७॥

दय दानगतिरक्षणहिंसादानेषु । अय गतौ आस उपवेशने एभ्य आम् लिटि । दयांचक्रे । अयांचक्रे । आसांचक्रे ।

# उषविदजागृभ्योऽन्यतर-स्याम् ॥ ३८ ॥

ओषांचकार । उवोष । विदामास । विवेद । जागरांबभूव । जजागार । विदेराम् किद्वक्तव्यः । तेन गुणाभावः । यद्वा विदेत्य-कारान्तत्वम् आम्विधौ सूत्रे संनिपात्यते । तेनलघूपधत्वाभावान्न गुणः । आम्विधावित्युक्तेर्वेत्तीति सिद्धम् । लिट्संनियोगेनेत्यु-क्ते तु विवेदेत्यपि नस्यात् । तथाच भारद्वाजीयाः पठन्ति । विदे-राम् किन्निपातनाद्वाऽगुणत्वमिति ।

## भीह्रीभृहुवां श्लुवच्च ॥३९॥

ञिभी भये। ह्रीलज्जायाम्। डुभृञ् धारणपोषणयोः। हु दानादनयोः। एभ्यो लिटि वाम्। आमि श्लाविवकार्यंच। श्लुवदतिदेशे प्रयोजनं द्वित्वेऽतिदेशेन गुणः। नलुमताङ्गस्येति निषेधस्य प्रत्ययलोप इत्येतस्य प्राप्तिविषयकत्वात्। बिभयां चकार। जिह्रयामास, बिभरांबभूव, जुहवामास।

## कृञ्चानुप्रयुज्यते लिटि ॥४०॥

आमन्ताल्लिट्पराःकृभ्वस्तयोऽनुप्रयुज्यन्ते। उदाहरणमुक्तम्। ननु विनापि वचनमनुप्रयोगसिद्धिः। तथाहि आमन्तात्कालविशेषमात्रं गम्यते। नतु साधनसंख्यादि। तथाच तदभिव्यक्त्यर्थं प्रकृत्यन्तरप्रयोग आवश्यकः। तत्र तस्यैव धातोर्नानुप्रयोगः। ओषामुवोषेति। उत्तरेणैव सर्वार्थप्रत्ययादामन्तवैयर्थ्यात् नापि पचत्यादेः आम्प्रकृतिसम्बद्धसाधनाद्यनवबोधात्। कृञस्तु सामान्यवचनत्वादनुप्रयोगः। वृक्षः शिंशपेतिवत्सामान्यविशेषयोरभेदान्वयात्तदर्थान्वययोग्यत्वात्। नच भ्वस्त्योरपि सामान्यत्वात्तत्प्रयोगवारणार्थं सूत्रम्। तदनुप्रयोगस्येष्टत्वात्। नच सूत्रात्तदलाभः। कृभ्वस्तियोग इत्यत्र कृशब्देन कृञो ञकारेण प्रत्याहारग्रहणात्। सम्पदाचेति सम्पदेस्तदन्तर्भावेऽपि अनन्वितार्थत्वेन तन्निरासात्। नाप्यात्मनेपदविध्यर्थम्। सिद्धेऽनुप्रयोगे पुनर्वचनमत्यन्तानुगुणस्योनुप्रयोगार्थम्। तेनात्मनेपदप्रकृतेरामन्तस्यात्मनेपदान्त एव करोतिरनुप्रयुज्यते। तथाचाम्प्रत्ययवत्सूत्रं नारभ्यमितिवाच्यम्।

परस्मैपदेनापि कर्त्रर्थस्यावगमात्तदन्तानुप्रयोगस्याम्प्रत्ययव-

दिति सूत्रव्यतिरेकेण दुर्वारत्वात् । नच लट्परानुप्रयोगवारणार्थम् । तस्यामन्त्रार्थभूतकालविरुद्धकालबोधकत्वेनानुप्रयोगप्रसक्तिविरहात् । अनुप्रयोगस्यामन्त्रार्थाभिव्यक्त्यर्थत्वात् । सामयिकवर्तमानतासंभवेभूत(पूर्व)पूर्वाश्रये लट्प्रयोगानुपपत्तेः । नचनिष्ठापरस्यानुप्रयोगवारणार्थम् । पुरुषोपग्रहविशेषानवगमप्रसङ्गेन तदनुप्रयोगवारणात् । नापि लुङ्परस्य तद्वारणार्थम् । अनद्यतनकालावबोधात्तन्निवृत्तेः । नापि लङ्परस्य तद्वारणार्थम् अनद्यतनपरोक्षबोधापत्तेरेव तदभावात् । नापिहशश्वतोर्लङ्चेत्यनद्यतने भूते परोक्षे लङ्विधानात्तदन्तानुप्रयोगवारणार्थम् । लिट्प्रयोगे तदन्तानुप्रयोगस्यैव न्याय्यत्वात् । लोकवेदयोस्तथैव दर्शनात् । विकल्पितानां खादिरपलाशादिसाधनानां मध्ये येनोपक्रमस्तेनैव समाप्तिविधानात् । उपक्रान्तशेषे तत्प्रतिनिधेरेवोपादानं नतु साधनान्तरस्य । साधनभेदेन क्रियान्यत्वादुपक्रान्तक्रियानिर्वाहविरहात् । लोकेऽपि स्वस्वामिभावप्रतिपादनाय यदा गवांस्वामीति षष्ठ्युपक्रान्ता तदाश्वानांचेत्यत्रापि षष्ठ्येव प्रयुज्यते । अश्वेषुइत्युक्ते अश्वेषु तिष्ठतीत्यादेरपि प्रत्ययस्य प्रसङ्गात् ।

यत्तु सर्वत्र सन्देहसम्भवात्सप्तम्यन्तप्रयोगोच्छेदापत्तिः । सन्देहनिवर्तकसामग्र्यां तादृशप्रयोगापत्तिश्च दार्ष्टान्तिके सन्देहाभावेन भाष्यविरोधश्च । आमन्तात्परं लङन्तानुप्रयोगेऽर्थान्तरसन्देहाभावादिति । तन्न । सन्देहस्य सार्वत्रिकत्वे मानाभावात् । सप्तम्यन्तोपक्रमे सप्तम्यन्तप्रयोगसम्भवाच्च । तस्माद्यो ऽर्थोयया शब्दाकृत्या प्रतिपादयितुमुपक्रान्तस्तयैवासौ निर्वाह्यः । प्रतिपत्तिलाघवात् । अन्यथा शब्दान्तरविषयकशक्तिज्ञानादेस्तदतिरिक्तार्थतात्पर्यसङ्कोचार्थं प्रक्रान्तार्थपरत्वादिप्रतिसन्धाने च तद्गौरवप्रसङ्गादिति प्राप्ते—

सिद्धान्तः । विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थंचेति । सिद्धेऽनुप्रयोगे नियमार्थं वचनम् । आमन्ताव्यवहितोत्तरमेवानुप्रयोगो न पूर्वं नापि व्यवहितमिति कथं तर्हि 'तं पातयां प्रथममास पपात पश्चात्' । 'सिन्धोः सोऽप्येकदेशे तमपि चुलुकयां कुम्भयोनिश्चकारे' त्यादि । प्रमाद एवायमिति केचित् । पातं यातीति पातयाः इत्यादिव्याख्येयमित्यन्ये ॥ तथापि 'संयोजयां विधिवदास समेतबन्धु'रित्यनुपपन्नम् । घञन्तत्वे संयोगेत्यापत्तेरितिचेत् । न घञर्थे कप्रत्ययस्यानुसन्धेयत्वात् ।

प्रकृतमनुसरामः । अनुप्रयुज्यमानयोर्भ्वस्त्योरामन्तानुरोधेन सकर्मकत्वात्कर्मणि लिट् । आमन्तवाच्यक्रियायाः प्राधान्यात् ।

तपर्त्तुपूर्तावपि मेदसांभरा विभावरीभिर्बिभरांबभूविरे ।

इत्यादिदर्शनात् । अस्तेर्भावकर्मणोर्लिटि कृते एधिइटिच रूपे विप्रतिपत्तिः । उभयत्रापि ह्एतीति हादेश एधामहे ईक्षामहे इतिकेचित् । तासिसाहचर्यादिदृयेव हत्वं तासेरेशोऽसम्भवादित्यन्ये । तत्साहचर्यादेव सार्वधातुके एव एति हत्वं नत्वत्रार्द्धधातुकत्वात् । अत उक्तद्वये एधामासे, ईक्षामासे एत्येव रूपमित्यपरे ।

# विदांकुर्वन्त्वित्यन्यतरस्याम् ४१

लोटि विदाम् लोडन्तकरोत्यनुप्रयोगश्च निपात्यते । विदप्रकृतिकस्य लोटो लोपश्च । आम इत्यत्र लेरित्यस्यानुवृत्तौ तत एव लोटोऽपि लोपः । एवमुत्तरसूत्रे लुङ्लिङोरपि बोध्यम् । पुरुषवचने त्वविवक्षिते । इति शब्दस्य प्रकारार्थस्योपादानात् साहश्यतु विदामित्येतदुत्तरप्रयुज्यमानलोडन्तकरोतित्वेन ग्राह्यमतो नातिप्रसङ्गः ।

विदांकुर्वन्तु महतस्तलं विद्विषदम्भसः ।

इति माघः ।

किं नस्तेन विदांकरोतु भगवानम्भोजिनीवल्लभः ।

इति मुरारिः ।

एवं विदांकुरु इत्यादि । आमभावपक्षे वेत्तु वित्तात् वित्तां विदन्तु इत्यादि ॥

# अभ्युत्सादयां प्रजनयां चिकयां रमयामकः पावयां क्रियाद्विदामक्रन्निति छन्दसि ॥४२॥

अकारिति लुङन्तकरोत्यनुप्रयोगश्च अ द्यचतुष्टये निपात्यते । तत्रापि चिकयामिति शुद्धाच्चिञ आम् द्विर्वचनं कुत्वं च । त्रिभ्यो ण्यन्तेभ्य आम्मात्रमिति विवेकः । अकरित्यत्र तिपि सार्वधातुकगुणः । हल्ङ्यादिलोपः । मन्त्रे घसेति च्लेर्लोपः । अभ्युत्सादयामकः प्रजनयामकः । चिकयामकः । रमयामकः । अभ्युदसीषदत् । प्राजीजनत् । अचैषीत् । अरीरमत् इतिलोके । पाक्षिकं छन्दस्यपीदम् । विकल्पस्यानुवर्तनात् । पावयां क्रियात् । पवतेः पुनातेर्वा ण्यन्तादाशीर्लिङि आम् । तादृशस्यैव कृञोऽनुप्रयोगः । ता वैजवापयो विदामक्रन् वेत्तेर्लुङ्याम् । लुङन्तकृञोऽनुप्रयोगः । सिचो लुक् । झान्तः इतश्चेति लोपः । संयोगान्तलोपः । अवेदिषुरित्यर्थः ।

इति श्रीसिद्धान्तसुधानिधौ तृतीयस्याध्यायस्य
प्रथमे पादे तृतीयमाह्निकम् ।

# च्लि लुङि ॥ ४३ ॥

धातोर्लुङि च्लिप्रत्ययः स्यात् । यद्यपि सिजादिभिरादेशै-रपहारादस्य क्वापि न प्रयोगः । नापि क्विबादिवत् किमपि कार्यम् । तथापि मन्त्रे घसह्वरणशवृदहादृच्कृगमिजनिभ्यो लेरिति सूत्रे विधेयलोपप्रतियोगितया लेरिति सामान्यग्रहणार्थं च्लिवि-धानम् । अन्यथा सक्ङ्मिचां ग्रहणं कर्तव्यं स्यात् । घसेरदन्त-त्वात्तदर्थं चङो, घस् गम्यो लृदित्वात्तदर्थमङो धात्वन्तरार्थं च सिच इति विवेकः । जनेर्विहितस्य तु चिणो यदि मन्त्रे लुग् दृश्यते तदा चतुर्थस्य तस्यापि ग्रहणं कार्यमित्यभिप्रायेण भाष्ये 'तत्रावरमस्त्रयाणां ग्रहण'मित्युक्तम् ।

"व्यवहितस्य क्सविधाने चानिड्वचने च्लिसप्रत्ययार्थम् ।" अस्यार्थः । शल इगुपधादिति सूत्रेऽनिट इत्यनेन च्लेर्विशेषणार्थं च्लिविधानम् । अन्यथा तस्य धातुविशेषणापत्तेः तत्र को दोष इति चेत् ।

तदा हि अनिट्त्वं प्रत्ययान्तरगतमाश्रयणीयम् । अन्यत्र यस्माद्धातोरिडागमो नास्तीति लुङादेशानां सार्वधातुकतया तेषामिट् प्रसक्तिविरहात् । तद्गतानिट्त्वस्य वक्तुमशक्य-त्वात् गनश्च गुहादिभ्यः क्सो न स्यात् । वैकल्पिकेनेटा तेषा मन्य-त्र सेट्त्वात् । यदि तु पक्षिकेणेडभावेन तेषामनिट्त्वमभिधीयेत तदा नित्यं क्सः स्यात् । च्लिप्रत्ययस्य विशेष्यत्वे तु तस्यार्धधा-तुकतया गुहादि प्रकृतिकस्य तस्य प्रकृतेरूदित्वेन यदा इडभा-वस्तदा क्सादेशादघुक्षदिति यदा त्विट् तदा सिजादेशादगूहीदिति सिद्धम् ।

'घस्लृभावे चे'ति वार्तिकान्तरम् । तथा हि लुङि यदार्धधातुकं

तस्मिन्नदेर्घस्लृभावो विधेयः । तत्र च्लौ परतो घस्लृभावे सति लुङित्वादङादेशः सिद्धः । अन्यथा सिच्येव परतो घस्लृभावः स्यादिति सिचः श्रवणापत्तिः । उत्सर्गस्यापि प्रवृत्तस्यापवादेन बाधितुमशक्यत्वात् । तदप्रवृत्तेरेवापवादकार्यत्वात् ।

एवं 'मन्त्रेघसे'ति सूत्रे सिचो लुग्विधाने 'आदिः सिचो न्यतरस्या' मिति स्वरः स्यात् । लुमता लुप्तेऽपि तस्मिन् प्रत्ययलक्षणेन तत्स्वरस्येष्टत्वात् । इदित्करणं तु मन्त्रेघसेति आम इति च सूत्रे लेरिति सामान्यग्रहणार्थम् । तथाच यथासंभवं च्लि-लिटोर्लुक् । तदविघातार्थश्चकारः अन्यथा लिटो ग्रहणं न स्यात् । च्लेः सिजित्यत्र तु लेरित्युक्तेऽपि नदोषः । लुङित्यनुवृत्त्यैव लिङ्-लिटोरनतिप्रसङ्गात् । तयोर्लुङ्परत्वासम्भवात् । तदनुबन्धकग्रहण परिभाषया समाधानाच्चेति ।

अत्र भाष्यकृतः । यथान्यासे 'च्लिलुङि' 'च्लेःसिच्' 'ले'रिति त्रीणि च्लिग्रहणानि । तदपेक्षमन्त्रे घसेतिसूत्रे चङ्क्सिचां त्रयाणां ग्रहणेऽपि गौरवाभावात् सिज्लुङीति वाच्यत्वात् । नच यथान्यासे गातिस्थेति सूत्रे सिच इत्यपहाय लेरित्येव पठनीयम् । तस्यैव मन्त्रेघसेतिसूत्रेऽनुवृत्त्या तत्र लेरित्यस्य परित्यागाल्लाघवमिति वाच्यम् । धेटश्चातुः शब्दप्रसङ्गात् विभाषाघ्राधेडित्यत्रापि लिग्रहणानुवृत्त्या लेरादेशेषु कृतेषु स्थानिवद्भावात् च्लि-ग्रहणेन ग्रहणाल्लुकि कृते चङ्निमित्तद्वित्वप्राप्त्या अदधादित्य-स्यापि प्रसङ्गात् । अदधत् । अधात् । अधासीदिति त्रयमे-व त्विष्यते ।

नच चङ्लोपस्य स्थानिवद्भावादातोलोप इत्यालोपेऽदध-दित्येव रूपमिति वाच्यम् । च्लिलुगुपधात्वे लुका लुप्तस्य स्थानि-वत्त्वनिषेधात् । नलुमतेति प्रत्ययलक्षणनिषेधाच्चाकारलोपस्य

दुर्लभत्वात् । अथ चङो लुकि न द्वित्वं न लुमतेति प्रत्ययलक्षणनिषेधादिति ब्रूषे, तथापि बहुवचनेऽधानित्यस्यापत्त्या रूपचतुष्टयस्य दुर्वारत्वात् । चङि न्लिलोपविकल्पे च अदधुः अधुः अधासिषुः इति त्रयमेव त्विष्टम् । नचानियमार्थत्वेनाभिमतस्याऽऽत इत्यस्य विध्यर्थत्वमाश्रित्य चङ्लोपेऽपि जुसा अदधुरित्येव रूपमिति वाच्यम् । तत्र सिज्ग्रहणानुवृत्त्या चङो लोपे जुसादेशानुपपत्तेः । सिजननुवृत्त्यनङ्गीकारे । अभूवन्नित्यत्रापि प्रत्ययलक्षणेन जुस्प्रसङ्गात् ।

अथ लुक् सिजपवादो विधायिष्यते अतोऽक्तेष्वादेशेषु लेरेव लुक् । तेनाभूवन्नित्यत्र न जुस् आत इति अधुरदुरयुरित्यादिसिद्ध्यर्थं अपूर्वविधिरिति चेत् मैवम् ।

मा हि दातामित्यत्रादिः सिचोऽन्यतरस्यामिति स्वरानुपपत्तेः । लेरन्यतरस्यामिति न्यासे चङादावतिप्रसङ्गात् ।

तस्मात्स्वरानुरोधेन च्लेरादेशानन्तरमेव लुगित्यवश्यं वक्तव्यम् । ततश्चाभूवन्नित्यतिप्रसङ्गवारणाय आत इत्यत्र सिजनुवृत्त्यावश्यकत्वे चङ्लोपपक्षे जुसादेशानुपपत्त्या अधानिति चतुर्थं रूपं दुर्वारमिति तदनुरोधेन गातिस्थेति सूत्रे सिज्ग्रहणमेव कार्यम् । तथाच मन्त्रेघसेति सूत्रे लेरिति पदमवश्योपादेयमिति च्लिग्रहणत्रयं दुर्वारमिति । तत्सूत्रे चङ्सिचामुपादानेन यथान्यासापेक्षया गौरवमिति तदनुरोधेन च्लेर्विधानं युक्तम् ।

यदप्युक्तम् 'क्सविधाने चानिड्वचने च्लिसंप्रसयार्थ' मिति तदप्यसत् । धातोरेव तत्रानिट इत्यनेन विशेषणीयत्वात् । नचेट आर्धधातुकभक्तत्वात्तस्यैव तदभावादानिडिति व्यपदेशो युक्तो नतु धातोः, प्रतियोगिप्रसक्तिपूर्वकत्वान्निषेधस्य । सामयिकात्यन्ताभावविशेषस्यैव तद्व्यपदेशनिमित्तत्वादिति वाच्यम् । धातोरिटश्च

निमित्तनैमित्तकभावसंबन्धेन षष्ठीबहुव्रीहेरुपपत्तेः । अवयवावयवि-भावस्य प्रकृते प्रतियोगितावच्छेदकसम्बन्धत्वाभावात् । यद्वा पञ्चम्यर्थे बहुव्रीहिः । विशेषणसामर्थ्यात् ।

ननु तथापि आर्धधातुकमात्रे ऽनिट इत्यर्थे गुहादिभ्यो न स्यात् । ऊदित्वाद्विकल्पितेट्कत्वात् । निष्ठायामनिट इत्यर्थे गुहादिभ्यो-ऽपि नित्यं क्सप्रसङ्गः । नचेष्टापत्तिः । तत्र तद्विकल्पस्यैष्यमाणत्वात् । क्त्वाया विकल्पितेट्कानामपि इषु रिषु श्रिषु मुष्प्रादीनां भूयसां शलन्तानामिगुपधानां निष्ठायामनिट्त्वात् । तेभ्योऽपि क्सप्रसङ्गश्च । लिटि अनिट इत्यर्थे तु कुतोऽपि न स्यात् । शलन्तानामिगुपधानां गूहसादीनामपि तत्र क्रादिनियमबलेन सेट्त्वात् । नच क्सेनानिट्त्वाश्रयेण भाव्यम् । क्सप्रत्ययेऽनिट इत्यर्थादिति वाच्यम् । तद्विषये लिटि प्राप्त्यभावादिति चेन्न । बलादावार्धधातुकेऽनिट इति व्याख्यानात् । विकल्पितेट्कानां गुहादीनामिटो-भावाभावाभ्यां भेदात् । इड्विशिष्टेभ्यः सिच् । तद्रहितेभ्य क्स इति इष्टसिद्धेः ।

यदप्युक्तम् । 'घस्लृभावे वेति । तदप्यसत् । विषयसप्तमी-माश्रित्य आर्धधातुकीयाः सामान्येन भवन्तीति व्याख्यानात् । अङ्प्रत्ययगतमार्धधातुकसामान्यमाश्रित्य घस्लादेशप्रवृत्तेरित्याहुः।

नन्वेवं च्लिप्रत्याख्याने मन्त्रेघसेति सूत्रेण सिचो लोपे आदिः सिच इति स्वरः स्यात् ।

अत्राहुः—छन्दसि क्वचिदडाटोरुदात्तत्वेन भाव्यं क्वचिन्निघातेन यत्र त्वडाटोस्तिङ्निघातस्य निषेधः प्रत्ययस्वरश्चैष्यते स विषयश्छन्दसि नास्ति एतच्च भाष्यकारेण च्लेः प्रत्याख्यानाद्विज्ञायते । माहि लावीरित्यादौ तु सिच एव चित्त्वेनानन्यार्थेन चागमानुदात्तत्वं बाधिष्यत इति तदर्थोऽप्यनुबन्धासङ्गार्थश्च्ल

नेकर्तव्य इति ।

## च्लेः सिच् ॥ ४४ ॥

च्लेः सिजादेशः स्यात् । चित्त्वं तु न विशेषणार्थम् । सौ वृद्धिरित्यप्यग्निर्वायुरित्यादौ परस्मैभावेनानतिप्रसङ्गात् । पृथ ङ्निर्देशादङ्गाङ्गिमात्रनिर्णयेन समुच्चयशङ्कानुपपत्तेः । नापि स्व- रार्थः । अनच्कत्वात् । नच माहि कार्ष्टामित्यत्र चितः सप्रकृते- रिति स्थानिवद्भावेन धातोरुदात्तार्थः । 'आदिर्सिचोऽन्यतरस्या' मिति पाक्षिकोदात्तप्रवृत्त्या चित्स्वरविषयत्वात् । नचेटि कृते त- स्योदात्तत्वार्थः । प्रत्ययस्वरेण सिद्धेः । तथापि इट आग- मा अनुदात्ता इत्यस्य प्रसक्त्या तद्बाधेनोदात्तत्वार्थमित्यर्थम् ।

ननु स्थानिवत्त्वाच्चित्त्वं सिद्धं तदुक्तम् । सिचः चित्करणा- नर्थक्यं स्थानिवत्त्वादिति चेत् ।

अत्र वार्तिकम् । अर्थवत्तु चित्करणसामर्थ्यादीट उदात्त- त्वमिति । अयमर्थः स्थानिवद्भावेन नेट उदात्तत्वसिद्धिः । येन नाप्राप्तिन्यायेन आगमानुदात्तत्वस्य प्रत्ययस्वरापवादत्वात्स्था- निवद्भावेनापि प्राप्तमुदात्तं बाधित्वानुदात्तत्वप्रसङ्गात् । पुनश्चि- त्करणसामर्थ्यात्तु प्रत्ययस्वर इति ।

अत्र केचित् । प्रत्ययस्वरस्य द्वावपवादौ । आगमानुदात्तत्वं यासुडत्र ज्ञापितं तत्समानदेशं चित्स्वरश्च षाष्ठिकः तत्रापवाद- विप्रतिषेधाच्चित्स्वर एव भविष्यति । अतो व्यर्थं सिचश्चित्त्वमिति ।

अत्र कैयटः । आगमानुदात्तत्वं चित्स्वरश्च न प्रत्ययस्व- रापवादः । प्रकृत्यागमानामानुगागमादीनां कुण्डजादीनां च चितां तदप्रसङ्गात् । स्थानिवदित्ययं कार्यातिदेशो न रूपातिदेशः । परत्वमपि चित्स्वरस्य नास्ति । आगमानुदात्तत्वेन चाविशेषा-

स्वर्यस्वरो बोध्यः । तस्मात्तद्बाधार्थं सिचश्चित्त्वमिति स्थितम् ।
इदित्करण तु न तावद्धन्त्यादौ नलोपवारणार्थम् । हनः सिजि-
ति सिचः किस्वविधानेन सिजन्तस्य नकारलोपो न भवतीति
ज्ञापितत्वात् । अन्यथेदित्वादेव नकारलोपनिषेधे कित्वेनापि
तल्लोपानुपपत्तेः ।

ननु सिचमेव निमित्तीकृत्य लोपो यथा स्यात् नतु ततः
परं यत्सार्वधातुकं तन्निमित्तीकृत्यैतदर्थं तत् । तथा सति हि अतो-
लोप इति सिचमाश्रित्याकारलोपः स्यात् । सिचं निमित्तीकृत्य
नकारलोपे तु समानाश्रत्वादसिद्धवदत्राभादित्यसिद्धत्वान्नातो लोप
इति चेन्न । बाह्यसार्वधातुकाश्रस्य नलोपस्य बहिरङ्गत्वादसिद्धं
बहिरङ्गमन्तरङ्गे इत्यनेन निर्वाहात् । आर्धधातुकोपदेशकाले य-
दकारान्तं तस्य लोपविधानाच्च । अन्यथा हत इत्यादावनिस्ता-
रात् । तदाहुः—अवयवलोपिनामतोलोपो नास्तीति । तस्मात्कि-
त्करणं ज्ञापकमेवेति व्यर्थमिदित्वम् ।

स्पृशमृशकृषतृपदृपा सिज्वेति वक्तव्यम् । त्रिभ्यः क्से द्वाभ्यां
च पुषादित्वादङि प्राप्ते पाक्षिकसिज्विध्यर्थं वचनम् । अस्पृक्षत् ।
अस्प्राक्षीत् । अमृक्षत् । अम्राक्षीत् । अकृक्षत् । अक्राक्षीत् । अतृ-
पत् । आत्रप्सीत् । अद्राप्सीत् ।

नच च्लेः चित्करणमत्याख्यानात्प्रयोजनाभावाच्च ककार-
स्येत्संज्ञाविरहे च्लिरेव विधीयते नतु लिः । ततश्झलादित्वादनु-
दात्तस्यचर्दुपधस्येत्यमागमे निमित्ताभावात् क्सादेशानुपपत्तौ सि-
च् । अमभावपक्षेतु क्स इति सिद्धमिष्टम् । नचैवमन्तस्य सि-
जादयः स्युरिति ककारश्रवणापत्तिः । सिचो यकारादित्वेनाने-
काल्त्वात्सर्वादेशसम्भवात् । यस्यच लोपोव्योरिति लोपात् । एवं
चादेः परस्येसस्याप्रवृत्तिः ।

नच तथापि चङ्ङोः सर्वादेशत्वानुपपत्तिः। चअङ् अअङ् इति तयोरपि अनेकाल्त्वव्याख्यानात्। चिण्भावकर्मणोरित्यत्रापि चकारस्य नेत्संज्ञेति सर्वादेशत्वसिद्धिः। अन्तावयवत्वे हि न प्रत्ययसंज्ञा ततो नेत्संज्ञा ततो लोपाभाव इति लुटः प्रथमस्येति सूत्रे स्पष्टमेतत्। धातुग्रहणानपेक्षणादत्रादेः परस्येत्यस्यानवकाशः दीपजनेत्यादौ तु तदवकाशे प्रसक्तेऽपि दीपादिभ्यो विहितस्य च्लेश्चिणिति व्याख्येयम्। अत एतद्वार्तिकं व्यर्थमिति चेत्। न,

सामान्यग्रहणाविघातार्थत्वेन चकारे इत्संज्ञाया अनुक्तत्वात्। लकारस्य झल्त्वाभावादमागमाभावे क्सस्यैव प्रसङ्गात्। सिजर्थं वार्तिकस्यावश्यकत्वात्। तथाच क्से कृतेऽस्पृक्षत् सिचि च पाक्षिकेऽमागमेऽस्प्राक्षीदिति तदभावे वृद्धावस्पार्क्षीदिति त्रैरूप्यं सिद्धम्॥

# शल इगुपधादनिटः क्सः॥४५॥

शलन्तो य इगुपधस्तस्मादनिटश्च्लेः क्सादेशः। अघुक्षत्। ननु च्लिनिमित्तकगुणस्य पूर्वप्रवृत्त्या न क्वापि इगुपधत्वम्। नच कित्वकरणसामर्थ्यात्पूर्वं क्सस्याचीत्यत्र विशेषणार्थत्वेन ककारोपपत्तेः। अन्यथावत्साइत्यादावपि सलोपप्रसङ्गात्। भूतपूर्वगत्याश्रये विहितविशेषणाश्रये च सुप्रसिद्धेः। मैवम्। भूतपूर्वगत्याश्रये कित्त्ववैयर्थ्यात्। सस्याचीत्युच्यमानेऽपि प्रत्ययत्वादर्थवत्त्वाच्चास्यैव सस्य ग्रहणसंभवात्। उणादीनामव्युत्पन्नत्वाद्वत्सा इत्यादावदोषात्। अनुबन्धविशिष्टरूपस्यानवकाशत्वाद्गुणात्पूर्वमेव क्सादेशप्रवृत्तेः।

ननु च्लेरवश्यं सिचा भाव्यमितीड्भावोपलक्षितमस्य स्वरूपं क्वापि नास्तीति विशेषणाप्रसिद्धिः। मैवम्। क्सस्यायं विषय इति सिचः पूर्वमप्रवृत्तेः। अपवादविषयपरिहारेणैवोत्सर्गप्रवृत्तेः।

क्सस्यापि तावन्न प्रवृत्तिः । अनिट इति विशेषणानवधारणात् । अतोलिकारस्यैव वलाद्यार्धधातुकत्वादिट्प्रसङ्गे तन्निषेधादनिट्त्वमस्तीति क्सादेशः । इट्प्रतिषेधाभावे तु सिजेव भवत्यकोषीदिति ।

# श्लिष आलिङ्गने ॥ ४६ ॥

अत्र 'श्लिष' इति एको योगः । श्लिषः परस्य च्लेः क्सादेशः स्यात । पुषादित्वात्प्राप्तस्याङो बाधनार्थमेतत् । तत 'आलिङ्गने' इत्यपरः । पूर्वेण सिद्धे नियमार्थोऽयम् । आलिङ्गने एव क्सो नतु प्रत्यासत्तिमात्रे । समाश्लिक्षत्कन्यां देवदत्तः । नेह समाश्लिषज्जतु काष्ठम् । नचात्मनेपदेऽपि चिणं बाधित्वा क्स एव स्यात् ततश्च समाश्लेषि कन्या देवदत्तेनेति न सिध्येदिति वाच्यम् । बाध्यविशेषचिन्तायां 'मध्येपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरा'निति न्यायेन तद्बाधात् । बाध्यसामान्यचिन्तायां तु चिण्ग्रहणं चिणेव यथा स्यात् यदन्यत् प्राप्नोति तन्माभूदित्यर्थमिति वक्ष्यमाणत्वात् ।

ननु कर्मण्यनालिङ्गने आतांप्रभृतिषु शलइगुपधेति क्सः प्रसज्येत । तत आतां प्रत्यये यद्यपि क्ससिचोर्न विशेषः क्सस्याचीत्यतो लोपात् । एवं च समाश्लिक्षत जतुनि काष्ठैरित्यत्रापि, तथापि आश्लिक्षाः इतिरूपं सिचं विना न सम्भवति । आश्लिक्षथा इति प्रसङ्गादिति चेत् मैवम् ।

योगविभागसामर्थ्याच्छल इगुपधादिति क्सस्यापि नियमेन व्यावर्तनात् । श्लिष इत्यनेन प्राप्तस्यैव क्सस्य नियमेन व्यावर्तने तद्वैयर्थ्यात् । एकवाक्यतया द्विधावपि तादृशार्थसिद्धेः । तस्मादालिङ्गने चिण्विषयादन्यत्र सिजेव नतु क्स इति सिद्धम् ।

## न दृशः ॥ ४८ ॥

क्सो न स्यात् । इरितोवेति अङ्गिचौ । अदर्शत् । अद्राक्षीत् ॥

## णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ॥ ४८ ॥

ण्यन्तेभ्यो धातुभ्यः श्र्यादिभ्यश्च शुद्धेभ्यः परस्य च्लेश्च- ङादेशः । द्वित्वादि । अचीकरदित्यादि । अशिश्रियत् । अदुद्रुवत् । असुस्रुवत् । अन्तरङ्गत्वादुवङ् । तदुक्तम् । 'शचङन्तस्यान्तरङ्गलक्षणत्वा'दिति । 'कमेरूपसंख्यानम्' । आर्द्धधातुके णिङो विकल्पेन विधानात्तदभावपक्षे सिचि प्राप्ते वचनम् । तत्पक्षे तु ण्यन्तत्वादेव सिद्धम् । तत्र ण्यन्तत्वात्सन्वद्भावादित्वदीर्घौ । अचीकमत । सन्वल्लघुनि चङ्गीति वक्तव्ये परग्रहणसामर्थ्यादन्यपदार्थो णिच् । अन्यस्यासम्भवात् । चङ् परे णौ परतो यल्लघु तत्र परतोऽभ्यासस्य सनीव कार्यं स्यादिति तदर्थः । णिङभावपक्षे त्वचकमतेति रूपम् ।

नाकमिष्ट सुखं यान्ति सुयुक्तैर्वडवारथैः ।
अथ पत्काषिणो यान्ति येऽचीकमत भाषिणः ।

अस्यार्थः—कमेर्लुङि किंरूपमिति प्रश्ने यैरचकमतेत्युक्तं ते उक्तरथैरिष्टसुखं नाकं यान्ति, उक्तलक्षणस्मरणात् । यैस्त्वचीकमतेत्युक्तं ते पद्भ्यामेव यान्ति । सामान्यलक्षणस्मरणेऽपि विशेषलक्षणस्मरणभावादिति निन्दार्थवादोऽयं लक्षणस्मरणादरार्थः इति कैयटः ।

अन्येतु अकमिष्टेति रूपं भवति इति यैरुक्तं त एवोपचारादकमिष्टशब्देनोच्यन्ते । अनुकार्यानुकरणयोरभेदस्य विवक्षितत्वान्न विभक्तिः । ते रथैर्गच्छन्तः सुखं न लभन्ते । असाधूच्चार-

णात् । यैस्त्वचीकमतेत्युक्त ते पदातयोऽपि सुखं यान्ति इति व्याचख्युः ।

कर्मकर्तरि वोपसंख्यानम् । अचीकरत कटः स्वयमेव । उदशिश्रियत कटः स्वयमेव । कर्मकर्तर्यपि कर्तृत्वसद्भावाद्बाधकाभावाच्च सूत्रेणैव सिद्धम् । नच चिणेव तत्र बाधकः । यक् चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानमिति निषेधात् ।

नन्वहेतुमण्ण्यर्थमुपसंख्यानं कर्तव्यम् । यथा उदपुपुच्छत गौः । पुच्छमुदस्यति इत्युत्पुच्छयते गौः । यदात्वन्तर्भावितण्यर्थत्वाद्गोः कर्मत्वं तदोत्पुच्छयते गामिति पुच्छोदसनानुकूलगोनिष्ठव्यापारानुकूलव्यापारवानित्यर्थः । पुनर्गोरेव सौकर्यातिशयेन कर्तृत्वविवक्षायां भूतकाले च लुङ् इति चेन्न ।

हेतुमदित्यपहाय णिमात्रे प्रतिषेधारम्भात् । तथाच भारद्वाजीयाः पठन्ति 'यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानमिति ।

# विभाषा धेट्श्व्योः ॥ ४९ ॥

आभ्यां परस्य च्लेः चङ् वा । अदधत् । सिच्पक्षे विभाषाघ्राधेट्शाच्छासः इति वा लुक् । अधात् । अधासीत् । टु ओश्वि गतिवृद्ध्योः । अशिश्वियत् । अङोऽप्यत्र विकल्पः । अश्वत् । अश्वयीत् । कर्तरीत्येव अशिश्वियातां गावौ वत्सेन ॥

# गुपेश्छन्दसि ॥ ५० ॥

चङादेशो वा । इमान्मामित्रावरुणा (१)गृहानजूगुपतम् । अगोपिष्टं । अगोपायिष्टं वा । भाषायां तु चङन्तवर्जम् ॥

---

(१) इमाम्ना मित्रावरुणा इति पुस्तकान्तरेपाठः ।

## ऊनयति ध्वनयत्येलयत्यर्दयतिभ्यः ॥ ५१ ॥

ऊन परिहाणे । ध्वन शब्दे । इल प्रेरणे । अर्द गतौ याचने च । एभ्यश्च्लेः छन्दसि चङ् न । मात्वायतो जरितुः काममूनयीः । त्वामिच्छतः स्तोतुः काममूनं माकार्षीरित्यर्थः । मात्वाग्निर्ध्वनयीद्धूमगन्धिः । काममैलयीत् । मैनमर्दयीत भाषायां तु औनिनत्(१) । अदिध्वनत् । ऐलिलत् । आर्दिदत् ॥

## अस्यतिवक्तिख्यातिभ्योऽङ् ५२॥

सिजपवादः । पर्यास्थत । उपसर्गादस्यत्यूह्योरित्यात्मनेपदम् । अस्यतेरिति थुक् । अवोचत् । वच उम् । अख्यत । आतोलोप इत्याकारलोपः ॥ अस्यतिग्रहणमात्मनेपदार्थम् । परस्मैपदे पुषादित्वादेव सिद्धेः । अन्तराले हृत्करणं ख्यादिसमाप्त्यर्थम् । आगणान्ताः पुषादय इति सिद्धान्तात् । अत्राध्यातिदेशिकस्य कर्मकार्यस्य कस्यचिदविधानाद्भावकाभावात्स्वाश्रयं कार्यं कर्मकर्तरि प्रवर्तते एवेति । पर्यास्थेतां कुण्डले स्वयमेव । तस्मादुपसंख्यानं नारभ्यम् ॥

## लिपिसिचिह्वश्च ॥ ५३ ॥

लिप उपदेहे । षिच क्षरणे । ह्वेञ् स्पर्धायां शब्देच । एभ्यः परस्य च्लेरङ् स्यात् । अलिपत् । असिचत् । अह्वत् । अन्त्ये आतो लोपः ॥

---

(१)'औननत्' इति तु वास्तव रूपम् ।

मूदितांच तत्र सत्त्वात । पुषादौ ञिष्विदा, मिदी, शमु, सूति सूयति धूञ्रूदितां वेसादिकार्यविशेषाणामनिर्वाहात । द्युतदीप्ता-वित्यारभ्य कृपूपर्यन्ता भ्वाद्यन्तर्गता द्युतादयः । तेभ्यो द्युद्भ्यो लुङीति परस्मैपदविकल्पः। परस्मैपदेऽङ् आत्मनेपदे सिजिति वि-वेकः । अद्युतत् । अद्योतिष्ट । अश्वितत् । अश्वेतिष्टेत्यादि । ऌदितो यथा गम्ऌ गतौ अगमत् । घस्ऌ अदने । अघसत् । शक्ऌ शक्तौ । अशकदित्यादि ।

## सर्तिशास्त्यर्तिभ्यश्च ॥५६॥

एभ्यश्च्लेरङ् । लुग्विकरणशासिना साहचर्यात् । ऋसृगताविति जुहोत्याद्योरेव सर्त्यर्त्यो ग्रहणम् । असरत् । अशिषत् । शास इदङ्हलोरितीत्वम् । शासिवसीति षत्वम् । आरत् ।

## इरितो वा ॥ ५७ ॥

इरितो धातोः परस्य च्लेरङ् वा । श्च्युतिर् आसेचने । अश्च्युतत् । पक्षे अश्च्योतीत् ॥

## जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचु-ग्लुञ्चुश्विभ्यश्च ॥ ५८ ॥

जॄष् वयोहानौ दिवादिः । स्तम्भुः सौत्रः । म्रुचुम्लुचु गतौ । ग्रुचुग्लुचुस्तेयकरणे । ग्लुञ्चु गतौ । श्विः प्रागुक्तः । एभ्यश्च्लेरङ् वा । अजरत् । ऋदृशोऽङीति गुणः । क्ङित्वान्नलोपो गुणाभावश्च । अस्तभत् । अम्रुचत् । अम्रोचीदित्यादि । श्वेरङि श्वयतेर इत्यकारादेशे अश्वदिति रूपम् ।

इह ग्लुचिग्लुञ्च्वोरन्यतरन्नोपादेयम् । ग्लुचिग्रहणे न्यग्लुचत्, न्यग्लोचीदिति रूपद्वयं तस्य न्यग्लुञ्चीदिति ग्लुञ्चेः । ग्लुञ्चिग्रहणेतु न्यग्लुचत् । न्यग्लुञ्चीत इतिरूपद्वयं ग्लुञ्चेः । न्यग्लोचीदिति तु ग्लुचोरस्यन्यतरोपादानेन रूपत्रयसिद्धेः । नचार्थभेदः । धातूनामनेकार्थत्वात् इति भाष्यम् । एवं चोभयोपादानसामर्थ्यादग्लुचादत्यत्र नलोपो नास्तीति कल्पनं निर्मूलम् ।

## कृमृदृरुहिभ्यश्छन्दसि ॥५९॥

च्लेरङादेशो वा । अकरत् । अथोऽमरत् । अदरदर्थान् । अन्तरिक्षाद्दिवमारुहम् । छन्दसि किम् । अकार्षीदित्यादि ।

## चिण्ते पदः ॥ ६० ॥

पद गतौ । आत्मनेपदी । अतस्तशब्द एकवचनं ग्राह्यम् । कर्तरि पदेः सिचो वा चिण् तशब्दे परे । चिणो लुगिति तशब्दलोपः । मत्यपादि । प्रतिपन्नवानित्यर्थः ।

## दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ॥ ६१ ॥

दीपीदीप्तौ । जनी प्रादुर्भावे । बुध अवगमने दिवादिः । पूर्वोत्तरयोर्नित्यात्मनेपदिभिः साहचर्यात् । तेन बुधिर्बोधने इति भौवादिकस्यानुपादानम् । सकर्मकत्वेऽपि भवत्येव । क्रमादमुं नारद इत्यबोधि स इत्यादिदर्शनात् । पूरी आप्यायने । तायृ संतानपालनयोः । ओप्यायी वृद्धौ । एकवचने तशब्दे परे एभ्यश्च्लेर्वा चिण् । पक्षे सिच् । अदीपि । अदीपिष्ट । अजनि । जनिष्ट

ध्योरिति न वृद्धिः । अजनिष्ट । अबोधि । अबुद्धेत्यादि ।

## चिण् भावकर्मणोः ॥ ६१ ॥

भावे कर्मणि च च्लेश्चिण् । अशायि देवदत्तेन । अपाचि तण्डुलश्चैत्रेण । नित्यत्वार्थं पुनश्चिणुपादानम् । यद्वा यदन्यत्प्राप्नोति तन्माभूदित्येतदर्थम् ।

## सार्वधातुके यक् ॥ ६२ ॥

भावकर्मणोरित्यनुवर्तते । स्थीयते चैत्रेण । पच्यते तण्डुलस्तेन । 'लः कर्मणि च भावे चाकर्मकेभ्य' इति लकारः । इह भावे एकवचनमेव । कर्मणि तु तदनुरोधेन त्रीणि वचनानीति विवेकः ।

अथ क्रिया साध्यरूपत्वान्निवृत्तभेदैव धातुना प्रत्याय्यते । तदुक्तम् ।

निवृत्तभेदा सर्वैव क्रियाख्यातेऽभिधीयते ।
श्रुतेरशक्यभेदानां प्रविभागप्रकल्पनेति ॥

एवं च कर्तृकर्माख्यातयोरपि साधनभेदाद्द्विवचनबहुवचने भवतः । एवं भावाख्यातेऽपि ते स्याताम् । नच तत्राख्यातार्थकर्तृकर्मगतसंख्याबोधकत्वाद्द्विवचनादि । अत्र साधनस्य कर्त्रादेस्तिङन्तत्वाच्यत्वान्न तथेति वाच्यम् । पाकः पाकावित्यादावपि द्विवचनादेरनापत्तेः । कर्त्राद्यनभिधानस्य तुल्यत्वादिति चेत् । मैवम् । शक्तिः कारकमिति हि प्रागुक्तम् । तदाश्रयश्च द्रव्यमनेकम् । नचौदनः पच्यत इति कर्मलकारेण शक्तेरेवाभिधाने तदाश्रयौदनादिसामानाधिकरण्यानुपपत्तिरिति वाच्यम् । शक्तिशक्तिमतोरभेदोपचारेण तदुपपत्तेः । एवं स्थिते यद्यपि असत्वभूतत्वाद्भावस्यैकत्वसंख्याप्यन्वयानर्हा तथापि भेदाभावरूपमे-

कत्वमादायैकवचनमेव ।

यद्वा 'एकवचनं' 'द्विवह्वोर्द्विबहुवचने' इति न्यासे एकवचनस्य द्विबहुत्वाभावमात्रेणोपपत्तिः । घञादिभिस्तु सत्त्वरूपो भावोऽभिधीयते इति द्रव्यभेदसंख्याभेदनिबन्धनो वचनभेदः । गुडतिलौदनाद्याश्रयभेदात्तदाश्रितपाकभेदात् ।

नचाख्यातवाच्यस्यापि भावस्याश्रयभेदोऽस्तीति वचनभेदापत्तिः क्वचिदिष्टत्वात् । उष्ट्रासिका आस्यन्ते हतशायिकाः शय्यन्ते इति । उष्ट्रादिभेदाश्रयभेदानेकप्रकारयुक्तान्यासनादीनि भिन्नानि । उष्ट्राणां हि स्वत एव विलक्षणान्यासनानि । हताश्च नानाप्रकारं शेरते । उत्तानावतानावकीर्णकेशा विवस्त्राश्च । तथा च यादृशान्युष्ट्राणामासनानि हतानां च शयनानि तादृशानि देवदत्तादिभिः क्रियन्ते इत्यर्थः। इवशब्दं विनापि तदर्थप्रत्ययात् । भवद्भिरास्यते इत्यत्र स्वाश्रयभेदादेवाश्रितभेदप्रत्ययात् प्रयोजनाभावाद्भावभेदः सन्नपि न विवक्षितः । ताम्रः पलाशेषु बभूव राग इत्यादिवत् । नच सर्वत्राश्रयभेदादाश्रितभेदप्रतीतिः । घटान् पचतीत्यादावभिन्नस्यैव पाकस्यावगमात् ।

वस्तुतो भाष्यप्रामाण्यादत्रैव बहुवचनं साधु ।

केचित्तु कर्मण्ययं लकारः उष्ट्रासिकास्वरूपभावस्य कर्मत्वात् । गोदोहस्सूयते इतिवदित्याहुः ।

केचित्तु उष्ट्रासिका इति द्वितीयाबहुवचनम् । क्रियाविशेषणत्वात् । स्त्रीत्वबहुत्वयोः प्रतीत्या क्लीवत्वैकत्वयोरप्रवृत्तेः । तथाच तत्सदृशान्यासनानि क्रियन्ते इत्यर्थः । नचैवमसत्त्वोक्तिविरोधः । लिङ्गक्रियानाधारकारकयोगाभावमात्रे तात्पर्यादिति ।

तच्चिन्त्यम् । किमाख्यातवाच्यस्य बहुत्वादुष्ट्रासिका इत्यत्र बहुत्वमुत तद्बहुत्वादास्यन्त इत्यत्र बहुत्वम्? । नाद्यः । प्रमाणा-

भावात । आस्यते स्थीयते इत्यत्र संख्यानवगाहित्वांशे प्रतीत्य-विशेषात्। किञ्च त्वन्मते सामानाधिकरण्यात्क्रियाविशेषणे द्वितीया । न चात्रोष्ट्रासिका इत्यस्याभेदेन धात्वर्थासनान्वयः। तादृशान्यासनानीति तदर्थविरोधात ।

न द्वितीयः । प्रमाणाभावात् । बहुवचनान्तस्यापि धात्वर्थान्वयसंभवात् । भिन्नसंख्यानवरोधस्य धात्वर्थे सत्त्वात् । नच चन्द्रो मुखमित्यादिवदुष्ट्रासिकानामभेदेनैव धात्वर्थासनान्वयः। सदृशानीति तु फलितार्थकथनमिति वाच्यम् । तत्रोभयोर्भिन्नधर्मावच्छिन्नोपस्थितिसत्त्वात् । उष्ट्रासिकाभिन्नान्यासनानीति बोधस्य निराकाङ्क्षत्वात् । अभेदान्वये भिन्नधर्मावच्छिन्नोपस्थितेस्तन्त्रत्वात । विशेष्यतावच्छेदकांशेऽधिकधर्मानवगाहिनो रक्तदण्डवान् दण्डवानित्यादिशाब्दस्यानङ्गीकारात् ।

एवं च सादृश्यसंम्बन्धेनोष्ट्रासिकाना धात्वर्थान्वय इत्येव कैयटाशयः। तत्र च द्वितीयान्तत्वमनुपयुक्तमेव । तस्मादास्यन्त इत्यत्र धातूपादानं साधुत्वमात्रार्थम् । दध्ना जुहोतीत्यादिवत्। उष्ट्रशब्दस्य तदासिकासदृशे लक्षणा । तस्याभेदेनासिकास्वन्वयः। उष्ट्रासिकाः क्रियन्ते इत्यनेन समानोऽर्थः। बहुत्वस्य तु ण्वुलुपस्थाप्यभावे सत्त्वरूपतापन्नेऽन्वयः। नचैवमन्यत्रातिप्रसङ्गः। प्रामाणिकप्रयोगानुरोधादेव लक्षणादिकल्पनात्। अन्यथा प्रकारान्तरेऽपि तदापत्तेः ।

तस्मादस्ति तिङभिहिताद्भावात्कृदभिहितस्य विशेषः पाका इत्यत्रैकशेषः। न तिङन्तस्य। एकस्य तिङन्तस्यानेककालभावबोधकत्वात् । भिन्नकालावबोधकानां लकाराणां युगपदेकप्रयोगसमावायाभावात् । किञ्च कृदभिहितो भावो द्रव्यवत्प्रकाशते। लिङ्गसंख्याकारकयोगित्वात् । यद्यपि सर्वनामपरामर्शार्हत्वरूपं द्रव्य-

स्त्वमुभयत्र तुल्यं तथापि प्रसिध्यप्रसिद्धिभ्यां दृष्टान्तदार्ष्टान्तिकभावः । इह संख्यायोगित्वं संपातायातम् । पूर्ववाक्येनैव तस्य सपादितत्वात् ।

अतएव 'द्रव्यं क्रियाभिनिर्वृत्तौ साधनत्वमुपैति । तद्वच्चास्य कृदभिहितस्य भवति पाको वर्तते इति । क्रियावन्न भवतीति' भाष्ये कारकान्वयमात्रमत्रोदाहृतम् । एवंच द्रव्यविशेष्यकां प्रतीतिं जनयतीत्यर्थव्याख्यानं युक्तम् । द्रव्यं कारकान्वययोग्यम् । तद्विशेष्यकबोधस्य पाक इत्यादौ स्पष्टत्वात् । तदुपस्थाप्यपाकस्य कारकान्वययोग्यत्वात् । नचायमर्थः कृत्प्रत्यये संभवति नतु तदर्थे भावे इति वाच्यम् । विषयतया जनकत्वस्य तत्रापि संभवात् । शाब्दे विषयस्याहेतुत्वेऽपि शाब्दहेतूपस्थितिविषयत्वरूपजनकत्वसंभवात् । अतएवात्र निर्मूलमनुशासनविरुद्धं चेत्युद्भावनमभिप्रायानवगाहनप्रयुक्तमित्युपेक्ष्यम् ।

नचौदनस्य पाक इत्यादौ षष्ठ्याद्यनन्वयापत्तिः । कारकाणां क्रिययैवान्वयित्वादिति वाच्यम् । पाक इत्यादौ प्रकृतिभागेनासत्त्वापन्नायाः प्रत्ययभागेन च सत्त्वापन्नायाः क्रियाया अभिधानात् । तदुक्तं हरिणा—

आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता ।
प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः ॥
साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।
सत्त्वभावस्तु यस्तस्याः स घञादिनिबन्धनः इति ॥

अतएव कृदन्तविशेषणत्वे स्तोकः पाक इति । धात्वर्थविशेषणत्वे तु स्तोकं पाक इत्यभ्युपगमः ।

अत्रेदमवधेयम् । द्वाभ्यां क्रियाद्वयप्रतीतिर्न तदर्थः । किन्तु कदाचिद्धातुमात्रस्य पाके तात्पर्यं कदाचित्समुदायस्येति ।

यत्तु रूपग्रन्थे घञन्तसमुदायस्य संयोगत्वविभागत्वविशिष्ट-वाचकत्वं निराकृत्य संयोगादिपदानां नैमित्तिकसञ्ज्ञात्वं दीधिति-कृता निराकृतं तत्प्रौढिमात्रमिति तार्किकाः ।

यत्त्वमृतरसप्रस्यन्दमाध्वीकभूरिति कुसुमाञ्जलिश्लोकेऽमृतस्य रसो रस्यमानममृतमिति यावदिति व्याख्याय कृदभिहितो भाव इत्युपायकृतोपन्यस्तम् । तत्रायमाशयः रस इति भावे कृत् । अमृतस्येत्यत्र कर्मणि षष्ठी । कृद्वाच्यक्रियायाः सत्त्वरूपत्वात्कथं तत्र कारकान्वय इत्याशङ्कोपपत्त्यर्थं कृदभिहितेत्यादेरुल्लेखः । धातुवाच्याया तदन्वय इति हृदयम् ।

यद्वा भावमात्रार्थत्वे भावस्यासत्त्वभूतत्वात्कथं तत्र सुबाद्यु-त्पत्तिः इत्याशङ्कायां कृदभिहितेत्यादेरुपष्टम्भः । पूर्वोक्तशङ्कासमा-धाने तु हृदयस्थ एवेत्यवधेयम् । तथाचामृतकर्मक रसनमिति धीः । तत्रप्रस्यन्दपदार्थान्वयानुरोधात् । रस्यमानममृतमितिअमृतप्राधा-न्यसंपादनार्थम् । एतेन रस्यमानममृतमितिव्याख्यानविरोधाद्रसन इति कृन्न भावार्थ इति दूषणाभासो निरस्तः । पदद्वयव्याख्यान परत्वेन फक्किकायाः कृन्मात्रार्थानभिप्रायकत्वात् । एतेन कान्ता-सम्मिततयोपदेशयुजे इति काव्यप्रकाशकारिकायामुक्तन्यायेन युक्तोपदेशायेति व्याख्यातृवचनमपि व्याख्यातम् । इत्यास्तां विस्तरः ।

प्रकृतमनुसरामः । ननु क्रियाया अपि क्रियायां कारकत्वम-स्त्येव । पचति भवति । पश्य मृगो धावतीति दर्शनात् । अत्र-कैयटः—करणादिरूपेण समवायं न गच्छतीति विवक्षितमित्याह । अयं त्वभ्युपगम्यवादः । कर्तृकर्मत्वयोः संसर्गमर्यादयैव भानोपग-मात् । कारकविभक्तिप्रकृतित्वाभावस्य च कारकत्वाभावपदेन विवक्षितत्वात् । न च साध्यक्रियायाः कथं कर्तृकर्मत्वे इति वा-

ध्यम् । विषयभेदादेकस्यार्थस्य साध्यसाधनभावसंबन्धसंभवात् । तदुक्तं हरिणा--

तत्र य प्रति साध्यत्वमामिन्द्रं तं प्रतिक्रिया ।
सिद्धा तु यस्मिन् साध्यत्व तमेव तु पुनःप्रति ॥
मृगो धावति पश्येति साध्यसाधनरूपता ।
तथा विषयभेदेन सरणस्योपपद्यते ॥

इति ॥ अस्यार्थः---क्रियासमूहस्य न दर्शनकर्मत्वम् । क्रमिकत्वादवयवाना लौकिक प्रत्यक्षासंभवात् । किन्तु येऽवयवाः सिद्धास्तेषामेव । तथाच समुदाये कारकान्वयोपयोगि साध्यत्वम् । अवयवेषु दर्शनोपयोगि सिद्धत्वमप्यस्तीति । कर्तृत्वकर्मत्वमाख्यातवाच्यस्य भावस्य विरुद्धं यतो भवतिक्रियापेक्षमेव तस्य कर्तृत्वम् । सर्वश्चार्थः स्वरूपेण भवतीति भवने कर्तृत्वमुपपन्नम् । उत्पद्यमानस्यासिद्धस्यैव सर्वत्र भवने कर्तृत्वदर्शनेन साध्यत्वोपस्थितावपि भवनकर्तृत्वान्वयस्य युक्तत्वात् । कर्मण्यपि फले रूपे क्रियायाः प्राधान्यात्कर्मत्वमपि । करणत्वादीना तु सर्वात्मना गुणाभावमन्तरेणानुपपत्त्या प्राधान्येऽत्यन्तविरोधित्वान्न भवन्तीति ।

यत्तु अर्थाध्याहारवादे कर्तृत्वादिकं प्रकार एवेति तन्न । घट पश्यतीत्यादेरपि साधुत्वापत्तेः । कारकशक्तेः विभक्त्यतिरिक्त शब्देन निष्कृष्य वक्तुमशक्यत्वात् च । प्रकृतिमात्रस्य प्रत्ययमात्रस्य च योऽर्थस्तस्यार्थाध्याहारेणाप्यलाभात् द्वारमित्यादौ पिधानाद्यविशिष्टार्थस्यैव तद्दर्शनात् ।

इदमप्यवधेयम्--पचति भवतीतिवत् पचति व्रजतीति नैकं वाक्यम् । शाब्दिकमते क्रियाया वाक्यार्थे प्राधान्यात् । पाकक्रिया व्रजतीत्यन्वयानर्हत्वात् । तार्किकमतेऽपि आख्यातार्थकृतिप्रकारकबोधे प्रथमान्तपदजन्योपस्थितेर्हेतुत्वात् । व्रजने तदन्वयबा-

धाच्च । पश्य मृगो धावतीत्यत्रापि मृगकर्तृकगमनस्य कर्मत्वेन दर्शनान्वयो योग्य एवेति दर्शनविषयको बोधः । तार्किकाणां तु मृगो धावतीति भिन्नं वाक्यम् । पश्येत्यत्र वाक्यार्थः कर्मेति तदुत्तरं न द्वितीया । वाक्यस्य प्रातिपदिकत्वविरहात् । एतेन धावन्तं मृगं पश्येति स्यादिति निरस्तम् । कृतेर्द्वितीयान्तपदोपस्थाप्येऽन्वयानर्हत्वात् । तद्विशिष्टमृगस्य कर्मत्वे धावन्तं मृगं पश्येति शतृशानचोर्दुर्वारत्वाच्च ।

यत्तु विशिष्टस्य कर्मत्वेऽपि तस्यानतिरिक्ततया विशेषणविशेष्ययोस्तत्त्वं दुर्वारमिति । तदसत् । पर्याप्तिसंबन्धेनोभयनिष्ठविषयताया एव विशिष्टपदार्थत्वात् । अन्यथा प्रत्येकप्रसिद्ध्या विशिष्टाप्रसिद्धिस्थलस्य दौर्लभ्यापत्तेः । तथा च प्रत्येकत्वस्य कर्मत्वपर्याप्त्यधिकरणतया न द्वितीया । तिङन्तात्तदसंभवाच्च । विशिष्टस्य च प्रातिपदिकात्वाभावादिति न दोषः ।

एतेन नच वाचानिकयेव प्रथमेति वाच्यम् । तादृशवचनस्य पाणिनीयशास्त्रेऽभानात् । क्रियाविशेष्यकबोधानुभवानुमानादिति निरस्तम् । प्रातिपदिकार्थमात्रे प्रथमेत्यस्यैव सत्त्वात् । अन्यथा क्रियाविशेष्यत्वपक्षेऽप्यनिस्तारात् ।

एतेन दर्शनं मृगो धावति कलत्रस्येति वाक्यं निरस्तम् । केनाप्यभियुक्तेनानुपन्यासात् ।

एतेन पश्य मृगो धावति तं पश्येत्यादिवाक्ययोर्वैलक्षण्यं न स्यादित्यपास्तम् । एकत्र मृगगमनस्यापरत्र च मृगस्य कर्मत्वेनैव वैलक्षण्यस्य स्पष्टत्वात् । मृगत्वस्य विशेष्यतावच्छेदकत्वेन पूर्वत्र भानाच्च । यो मृगो धावति तं पश्येत्यत्रापि गमनक्रियाविशिष्टस्य मृगस्य कर्मत्वाच्च । अत एव मृगो धावति तं पश्येति वाक्यस्य बोधकारणताया आवश्यकत्वे पश्य मृगो धावतीत्यस्य

न हेतुत्वम् । गौरवात् ।

यत्त्वेकविषयत्वाभावेन लाघवगौरवतर्कानवतार इति तदसत् । अवच्छेदकत्वकल्पने एव विषयैक्यस्यापेक्षितत्वात् । अतएव नीलधूमत्वं न व्याप्यतावच्छेदकं धूमप्रागभावत्वं त्ववच्छेदकं धूमत्वानधिकरणवृत्तित्वादिति दीधितिकारादयः ।

प्रकृते तु उक्तवाक्यद्वयजन्यबोधस्यान्यादृशत्वकल्पने मानाभावादेकाकारकबोधं प्रत्येव हेतुत्वकल्पने बाधकाभावात् । एतेनापाक्षीद्देवदत्तोऽवेहि इत्यादौ शत्रादेः प्रसङ्ग एव नास्ति लट एव तद्विधानादित्यपास्तम् । पश्य मृगो धावतीत्यत्र शत्रादिप्रसङ्गान्मृगादेर्न द्वितीयेत्यस्य सार्थकतानुपपत्त्याभावात् ।

पूर्वोदाहृतवाक्यपदीयकारिकायास्त्वयमर्थः । आख्यातशब्दे धावतीत्यादौ भागाभ्यां धातुस्वरूप—पश्येत्यादिसमभिव्याहारश्चेति द्वाभ्यां साध्यत्वं—स्वासमभिव्याहृतकारकाणामन्वयः स्वस्य कारकत्वेनान्यान्वयो वा । मृगो धावतीत्यत्र वाक्ये साधनत्वम् । कर्मत्वसंबन्धेनेतरक्रियान्वयश्च । पश्येत्येतत्समभिव्याहारे तस्य कर्मसाकाङ्क्षाया उपस्थितगमनक्रियाया एव तत्त्वेनान्वयात् ।

एतेन भागाभ्यां पश्य धावतीति तिङन्तशब्दाभ्यां पश्येति क्रियायाः साध्यत्वम् । धावतीत्यस्याश्च साधनत्वं कारकत्वेन क्रियान्तरान्वयः । न च—

असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते

इति वाक्यपदीयात्कथं कर्मीभूतभावनायास्तिङन्तार्थत्वमिति वाच्यम् । करणत्वादिनान्यान्वयित्वस्य तदर्थत्वादित्यपास्तम् । दृष्टान्ते तिङन्तद्वयस्य दार्ष्टान्तिके च प्रकृतिप्रत्यययोर्भागशब्देन परामर्शे वैरूप्यप्रसङ्गात् । एकस्यैव साध्यसाधनोभयरूपत्वमित्यस्यासिद्धेः । मद्रीत्या तु एकस्यापि पदान्तरसमभिव्याहाराद्भा-

याभ्यां गुणप्रधानभावस्येति उभयैकरूप्यसंभवात् । मृगो धावति पश्येति साध्यसाधनरूपतेति वाक्यपदीयस्य स्वव्याख्याने संमतिलेखनमप्यनादेयम् । मृगो धावतीत्युक्ते साध्यत्वमेव पश्येति समभिव्याहारे तु साधनत्वमपीति तदभिप्रायात् । अन्यथा यथासंख्येन विपरीतसाध्यसाधनभावलाभप्रसङ्गादित्यास्तां तावत् ।

एवं घञादावपि प्रकृतिभागस्यासत्त्वरूपापन्नक्रियाबोधकत्वं यदन्वयादोदनस्य पाक इत्यादौ कर्तृकर्मवाचकषष्ठ्यादिविभक्तयः भोक्तुं पाक इत्यादौ क्रियायोगनिबन्धनास्तुमुनादयश्च । एतेन शेषषष्ठ्येव तत्र स्यादिति शङ्का निरस्ता । कर्तृकर्मणोः कृतीति सूत्रवैयर्थ्यापत्तेश्च । प्रत्ययभागसमभिव्याहारात्तु सैव क्रियासत्त्वरूपत्वमापद्यते । यतस्तस्याः क्रियान्तरे साधनत्वान्वयः । अतएव तैलपाकेन तुल्यो घृतपाक इत्यादौ तद्रूपनिबन्धनास्तृतीयाद्य इति पञ्चमे कैयटादौ स्पष्टम् । तथाच घञादिसमभिव्याहारप्रयुक्तं सत्त्वरूपत्वं धातुस्वरूपनिबन्धनं चासत्त्वरूपत्वमिति उभयविधकार्यनिर्वाह इति भावः ।

युक्तं चैतत् । क्रियाविषयकशाब्दबोधे धातुशक्तिज्ञानहेतुत्वस्यावश्यकल्प्यतया घञादीनां हेतुत्वान्तरकल्पने गौरवात् । नचैकस्या एव क्रियाया उभयरूपत्वं विरुद्धमिति वाच्यम् । निरूपकभेदेन तदभावात् । अन्यथा दृष्टान्तेऽप्यनिस्तारात् । तत्र रूपद्वयसमावेशस्यावश्यकत्वाद्वाचकभेदाभावाच्च । अन्यथा गमनक्रियायां कारकान्वयादिकं स्यात् । अतएव स्तोकं पाक इति स्तोकः पाक इति चोभयथा विशेषणं संगच्छते । एकस्याः एव क्रियायाः प्रकृतिप्रत्ययाभ्यां बोधने त्वनुभवविरोधः । अतएव तयोरभेदान्वयेन न निस्तारः । एकरूपावच्छिन्नोपस्थितेरभेदान्वयप्रतिकूलत्वाच्च ।

अत एव भाष्ये द्रव्यवत्प्रकाशने इति वतिप्रत्ययः संगच्छते । केवलसत्त्वभूतार्थबोधकघटादिपदवैलक्षण्यसूचकत्वात् । अन्यथा घञर्थभावस्य केवलसत्त्वरूपतया उपमानोपमेयभावानुपपत्तेः । एवंच प्रसिद्धिवशादुपमानत्वं घटादेरिति कैयटफक्किकाभ्युपगम्य-वादत्वेनैव व्याख्येया । कृदभिहित इत्यस्य कृदन्ताभिहित इत्य-र्थस्यावश्यकत्वात् । तिङभिहित इत्यत्र तथात्वे विवादाभावात् । प्रत्ययग्रहणे तदन्तग्रहणस्य च निरूढतया च गौरवाभावात् । अयं चार्थः साध्यत्वेन क्रियातत्रेत्युत्तरकारिकायां स्पष्ट एव तस्या इति धात्वर्थक्रियाया उत्तरार्द्धे उपादानात् ।

अतएव कृष्णं नमेच्चेत्सुखं यायादित्यादौ चेच्छब्दादिसम-भिव्याहारे उत्थिताकाङ्क्षावशेन हेतुहेतुमद्भावसंबन्धेन क्रिया-याः क्रियान्तरान्वयः । अन्यथा कृष्णं नमेदित्यादावपि प्रस-ङ्गात् । पक्त्वा भुङ्क्ते इत्यादौ च समानकर्तृकत्वादिना प्रकृत्या प्रत्ययान्तस्यैव क्रियान्तराकाङ्क्षेति विशेषः । अतएव क्रियान्त-राकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वं न साध्यत्वम् । पक्त्वेत्या-द्यव्ययसत्त्वभूतक्रिया प्रतीयत इति सिद्धान्तविरोधात् ।

एतेन धात्वर्थफलान्वये स्तोकादिभ्यो द्वितीया नपुंसकता च । धात्वर्थभावनान्वये ज्योतिष्टोमेन भक्तिपूर्वं यजेतेत्यादिवत्प्रथमा सामान्ये च नपुंसकत्वम् । घञर्थान्वये तु प्रथमा पुंल्लिङ्गता चेति विभागाय शक्त्यन्तरमावश्यकमिति निरस्तम् । एतेन—

क्रियायाः सिद्धतावस्था साध्यावस्था च कीर्तिता ।
सिद्धतां द्रव्यमिच्छन्ति तत्रैवेच्छन्ति घञ्विधिम् ॥

इति वाक्यपदीयमपि व्याख्यातम् ।

साध्यभूतायामपि क्रियायां साधनत्वोपपत्त्यर्थो घञ्विधि-रित्यर्थात् । सिद्धत्वप्रकारकबोधार्थं घञादिरिति वक्तुमशक्य-

त्वात् । साध्यत्वसिद्धत्वयोर्धातुजन्यधीप्रकारत्वाभावेन वस्तुतस्तत्र यथासम्भवं साध्यत्वादिकमित्यत्रैव तात्पर्यात् । साध्यत्वेनाभिधीयते इत्यत्राप्येवम् । एवं—

याद्दशी भावनाख्याते धात्वर्थश्चापि ताद्दशः ।

नासौ तेनैव रूपेण कथ्यतेऽन्यैः पदैः क्वचित् ॥इति भट्टकारिका व्याख्याता । क्रियान्तराकाङ्क्षानाकाङ्क्षयोश्च समभिव्याहारविशेष एव नियामकः ।

यत्तु पचति पाकं उत्पादयति इत्यादौ उत्पाद्यत्वमेव कारकान्वयितावच्छेदकम् । अतएव पचतीत्युक्ते कस्मात् कस्मै कुत्र किमित्याकाङ्क्षा तत्समर्पककारकाणां तस्यामेवान्वयश्च सङ्गच्छते । उत्पत्तिमत्वेनोपस्थितस्यैव कारकाकाङ्क्षत्वात् । तस्याः स्वयमुत्पाद्यतयावगमेनासिद्धत्वादन्यक्रियासाधनत्वेनान्वयश्च भाष्योक्तो युज्यते। सिद्धस्यैव क्रियासाधनत्वादिति ।

तच्चिन्त्यम् । क्रियाजन्येत्यादौ उत्पाद्यत्वान्वयेऽपि कारकानन्वयात् । किञ्चैवमपाक्षीत्पपाचेत्यादौ कारकान्वयो न स्यात् । पाकानुकूलव्यापारमुत्पादितवानिति प्रतीत्या व्यापारस्य सिद्धत्वेन तदनाकाङ्क्षापत्तेः । अतीतोत्पत्तिकस्य सिद्धत्वनियमात् । उत्पत्तिप्रतियोगित्वमात्रस्य तदाकाङ्क्षानियामकत्वे तु घटादावपि कारकाद्यन्वयापत्तिरिति दिक् ।

# *कर्तरि शप् ॥ ६८ ॥

---

*अत्रग्रन्थकृता 'अचः कर्मकर्तरि' 'दुहश्च' 'नरुधः' 'तपोऽनुतापेच' इति चतुर्णां सूत्राणामव्याख्यानादस्मिन् सूत्रेऽष्टाध्यायीक्रमप्राप्तोऽङ्को ६८ य नियोजितः ।

कर्त्रर्थे सार्वधातुके परे धातोः शप् भवति । ननु भावकर्म-कर्त्तारो यक्शबादिविकरणानामेवार्थाः सन्तु अन्वयव्यतिरेकयोः सार्वधातुकस्याप्यभावात् । तद्व्यतिरेकेऽपि गच्छ ग्रामम्, अशायि भ-वता, अकारि कट इत्यादौ कर्त्रादिप्रत्ययात् । अत्तीत्यादौ विकर-णाभावेऽपि तत्प्रत्ययाच्च । अजागर्भवानित्यादावुभयाभावेऽपि त-द्बोधाच्च ।

किञ्चैकत्वे एकवचनमित्यादिनियमस्तेषां सार्वधातुकार्थत्वे विरुद्ध्येत । एकत्वातिरिक्तस्य कर्त्रादेरपि तेन बोधात् । अतएव विभक्त्यन्तः सार्थकः शब्दः पदमिति लक्षणनिरासे खण्डनकृतो-क्तम्—भवतीत्यत्रातिव्याप्तिरिति । शपः कर्त्तरि विहितत्वादिति तद्व्याख्यातार इति चेत् ।

मैवम् । एकत्वे एकवचनमेवेति नियमस्य वाच्यतया विरोधा-भावात् । एकत्वे एवेति नियमेऽपि द्वित्वादीनामेव व्यवच्छेदात् । धारय इत्यादौ च विकरणानुत्पत्तिप्रसङ्गात् । कृन्मात्रे विकरणा-नुत्पत्त्या कृतामेव कर्त्रर्थत्वस्यावश्यवक्तव्यत्वात् । लः कर्मणिचे-त्युक्त्या कर्त्रादीनां लकारार्थत्वावश्यकत्वाच्च ।

ननु कर्मादौ वर्तमानाद्विकरणाल्ल इति व्याख्येयम् । नच सा-र्वधातुकत्वस्य तिङादिवृत्तित्वात्तत्पूर्वं विकरणाभावान्निमित्तानु-पपत्तिरिति वाच्यम् । सार्वधातुके इति विषयसप्तमीमाश्रित्य पूर्वं विकरणप्रवृत्तौ भावकर्मकर्तृवाचिनो विकरणात्परो लः साधुर्भवती-ति व्याख्यानात् ।

मैवम् । लिङ्लिटोरार्धधातुकत्वेन तत्र विकरणानुत्पत्त्या ला-देशानामसाधुत्वप्रसङ्गात् । विधानसामर्थ्यात्साधुत्वे तु भावाद्य-र्थानामनवगमप्रसङ्गात् । अथ गमिक्रियाया यथा कर्तृकर्मणी द्वे सा-धने तत्र कर्तरि लकारः कर्मणि द्वितीया ग्रामं गच्छतीत्यादौ तथा

यदा भावकर्मणोर्लः तदा कर्तरि विकरणः यदा कर्तरि लः तदा भावकर्मणोः स इति स्यादिति चेन्न। कर्तृकर्मणोस्तत्र भिन्नपदवाच्यत्वात्तन्निबन्धनकार्यभेदसम्भवेऽपि एकपदे विरुद्धार्थयोर्विकरणसार्वधातुकयोर्विशिष्टार्थप्रतिपादने परस्परोपकारकत्वानुपपत्तेः। पचतीत्यत्र कर्मणो विकरणार्थत्वे तण्डुलादिपदात् द्वितीयानुपपत्तिप्रसङ्गाच्च। परिगणनस्य प्रत्याख्यातत्वात्।

तस्मात्सार्वधातुकार्था एव कर्त्रादयः। अत एव मणिकृतोक्तम्—अनर्थकानामपि इट्नुमाद्यागमानां षकारणकारादिवर्णविकाराणां श्यप्श्यनादीनां विकरणानां चानुशासनादिति। एतेन गच्छेत्यादौ विकरणस्यैव व्यापारवाचकत्वं तिङादिलापशून्यानामपि बोधोदयादिति मीमांसाकौस्तुभोक्तमपास्तम्॥

# दिवादिभ्यः श्यन् ॥ ६९ ॥

दीव्यति। शपोऽपवादाः श्यनादयः। ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वे श्यनः परस्य सार्वधातुकस्यानुदात्तत्वे लकारचतुष्टये आद्युदात्तानि रूपाणि। लङ्यडुस्वरेण तथात्वम्।

# वाभ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ॥ ७० ॥

एभ्यः श्यन् वा। उभयत्र विभाषेयम्। अनवस्थानार्थस्य भ्रमेः क्रमित्रस्योश्च दिवादित्वान्नित्यं प्राप्तेऽन्येषां च तदभावादप्राप्ते विधानात्। भ्राशृभ्लाशृ दीप्तौ अनुदात्तेतौ। दन्त्यान्ताविति बोपदेवः। भ्रमु चलने। भ्वादिर्ज्वलादिः फणादिः। भ्रमु अनवस्थाने दिवादिः पुषादिः शमादिः। भ्वादेर्भ्रम्यति शमादेस्तु दीर्घे

भ्राम्यति । इयमभावे द्वयोरपि भ्रमतीति त्रैरूप्यम् । क्रमु पादविक्षेपे । क्लमु ग्लानौ । त्रसी उद्वेगे । त्रुट छेदने । लष कान्तौ ।

# यसोऽनुपसर्गात् ॥ ७१ ॥

अनुपसर्गाद्वा श्यन् । यसु प्रयत्ने । यस्यति यसति । अनुपसर्गात्किम् । आयस्यति । प्रयस्यति । दिवादित्वान्नित्यम् ।

# संयसश्च ॥ ७२ ॥

संयस्यति । संयसति । पूर्वसूत्रेऽनुपसर्गादिति भाष्ये प्रत्याख्यातम् । अस्य नियमार्थत्वात् सोपसर्गस्य यसः विकल्पश्चेत्तर्हि समादेरेव ।

# स्वादिभ्यः श्नुः ॥ ७३ ॥

षुञ् अभिषवे । अभिषवः स्नानमिति चान्द्राः ।

वारांस्त्रीनभिषुण्वते विदधते वन्यैः शरीरस्थितीः ।

इति मुरारिः । सोममभिषुणोतीत्यादौ संस्कारार्थः । संधानं स्यादभिषव इति सुराप्रकरणेऽमरः । शकारः सार्वधातुकसंज्ञार्थः तेन सार्वधातुकमपिदिति ङित्वात्सु इत्यस्य विकरणनिमित्तको न गुणः । तदन्तस्य तु तिङ्निमित्तको गुणः । एवमुत्तरत्र । सुनुत इत्यादौ तस्याङित्वान्न गुणः ।

# श्रुवः शृ च ॥ ७४ ॥

श्रु श्रवणे । अस्य श्नुप्रत्ययः स्यात्तत्सन्नियोगेन शृभावश्च । शपोऽपवादोऽयम् । शृणोति, अश्रौषीदित्यादौ शपोऽप्रसक्त्या नायम् ॥

## अक्षोऽन्यतरस्याम् ॥ ७५ ॥

अक्षू व्याप्तौ । वा श्नुः । अक्ष्णोति । अक्षति ॥

## तनूकरणे तक्षः ॥ ७६ ॥

श्नुर्वा । श्नपोविषये । तक्ष्णोति तक्षति । तक्षणमवयवविभागः । नह । वाग्भिः संतक्षति । भर्त्सयतीत्यर्थः ॥

## तुदादिभ्यः शः ॥ ७७ ॥

तुदति । शित्वं लघूपधगुणबाधार्थम् । पित्त्वाभावादुदात्तत्व धातोरन्तोदात्तत्वबाधकं सति शिष्टत्वात् । ततोऽदुपदेशात्परं लसार्वधातुकमनुदात्तमिति मध्योदात्तानि रूपाणि । तुदन्तीत्यत्र त्वन्तेरनुदात्तत्वे एकादेशस्वरेणाद्युदात्तत्वम् ॥

## रुधादिभ्यः श्नम् ॥ ७८ ॥

मित्त्वादन्त्यादचःपरः । आगमस्यापि प्रत्ययत्वम् । विरोधाभावात् । तेन प्रत्ययादित्वाच्छस्येत्संज्ञा । अथास्य शित्वं न गुणवारणार्थम् । (१)भिशब्दादेव श्नमोविधानात् । तदवयवभिशब्दस्याङ्गसंज्ञाविरहात् । इगन्तत्वस्य रुधादौ कस्यापि धातोरभावात् । अतएव नार्द्धधातुकत्वाभावार्थम् । अङ्गसंज्ञाविरहादेवेटोऽप्रसक्तेः । नच पृपॄ इति क्र्याद्योश्छान्दसव्यत्ययेन श्नमिकृते पृणतीत्यत्र प्रादीना शिति ह्रस्वार्थम् । पृण प्रीणने इति तुदादौ पाठात् । एतेन शृणतीति व्याख्यातम् ।

नच यत्र भूम्या पृणसे इत्यत्र तदर्थम् । श्नोह्रस्वत्वेनोपप-

(१) भिनत्तीत्यादाविति शेषः ।

त्तेः । प्रसय इत्याद्यर्थं छन्दसि ह्रस्वत्वस्यावश्यकत्वात् । नचा-दुपदेशात्परं लसार्वधातुकमित्यनुदात्तार्थं श्नमेव वक्तव्य इति वा-च्यम् । श्नसोरल्लोपप्रसङ्गात् । उपधाया इत्यनुवृत्तौ अङ्क्त अञ्ज-तीत्यत्रातिप्रसङ्गात् । नापि श्नान्नलोप इत्यत्र विशेषणार्थम् । अन्यथा यज्ञानामित्यादावपि नलोपापत्तेरिति वाच्यम् । दीर्घत्व-स्य प्राक् प्रवृत्तेरिति चेन्न । परत्वान्नलोपप्रसङ्गात् । नच नामी-ति दीर्घस्याप्रवृत्तावपि सुपिचोति दीर्घत्वं भविष्यतीति वाच्यम् । सन्निपातन्यायेन तदप्रवृत्तेः । नच शित्करणेऽपि त्रिश्नानामित्यादौ तत्प्रवृत्तिर्दुर्वारेति वाच्यम् । लक्षणप्रतिपदोक्तन्यायेन तद्वारणात् ।

# तनादिकृञ्भ्य उः ॥ ७९ ॥

तनोति । सार्वधातुकेति गुणः । अत्र वार्तिकम् ।

तनादित्वात्कृञः सिद्धं सिज्लोपे च न दुष्यति ।
चिण्वद्भावेऽत्र दोषः स्यात् सोऽपि प्राप्तो विभाषया ॥

अस्यार्थः—कृञोऽपि तनादित्वादेव सिद्धतया पृथगुपादान-वैयर्थ्यम् । नचानुदात्तोपदेशवनतितनोत्यादीना मित्यनुनासिकलो-परूपं तनादिकार्यं कृञो माभूदिति ज्ञापनार्थम् । अनुनासिकाभावा-देव तदप्रसक्तेः । नच तनादिभ्यस्तथासोरिति सिज्लोपो माभूदि-त्येतदर्थम् । ह्रस्वादङ्गादिति तदावश्यकत्वे विशेषाभावात् । नच तेन लोपे पूर्वत्रासिद्धमिति सिज्लोपस्यासिद्धत्वाच्चिण्वद्भावसि-द्धिः । तनादिभ्य इत्यनेन तु सिज्लुकि स न स्यादिति वाच्यम् । लुको वैकल्पिकतया तदभावपक्षे ह्रस्वादङ्गादिति लोपप्रवृत्त्या त-त्सिद्धेः । नच येन नाप्राप्तिन्यायेन लुको ह्रस्वादङ्गादिति लोप-बाधकत्वात्कथमेवमिति वाच्यम् । अप्रवृत्तिपक्षे बाधायोगात् ।

# धिन्वि कृण्व्योर च ॥ ८० ॥

धिवि प्रीणने। कृवि हिंसायाम् । इदित्वान्नुमागमः । इका तन्निर्देशः। अनयोरकारोऽन्तादेशः स्यादुप्रत्ययश्च शपो विषये। पूर्वं वकारस्याकारादेशस्ततश्चानुकृष्ट उकार । अतोलोपः। तस्य स्थानिवद्भावान्न लघूपधगुणः। धिनोति। उप्रत्ययस्य सार्वधातुकार्द्धधातुकयोरिति पिन्निमित्तको गुणः। धिनुत इत्यादौ ङित्वान्न। अत एव वकारस्य लोपो न विहितः। लघूपधगुणापत्तेः। नच तत्रापि नधातुलोप इति गुणनिषेधः। उकारसंनियोगशिष्टत्वेन उकारस्य वलोपनिमित्तत्वानुपपत्तेः। आर्द्धधातुकनिमित्तत्वाभावात् लोपस्य तादृशस्थले एव निषेधव्यवस्थापनात्। तत्सूत्रप्रत्याख्यानाच्च। नुमविशिष्टनिर्देशस्तु नुमुत्तरमकारादेशो यथा स्यात्। अन्यथाकारोत्तरं (नुम्) स्यात्। तस्यान्त्याच्त्वात्।

भाष्ये तु परत्वात्पूर्वं नुम्। नच प्रत्ययोत्पत्तिसंनियोगशिष्टत्वादत्वमन्तरङ्गं प्रकृतिप्रत्ययावाश्रित्य नुमागमो बहिरङ्गः। तस्याङ्गाधिकारीयत्वादिति पूर्वमत्वमेव स्यादिति वाच्यम्। नुम्विधावुपदेशिवद्वचनं प्रत्ययविध्यर्थमिति वक्ष्यमाणत्वान्नुमोऽप्यन्तरङ्गत्वात्। अन्यथा कुण्डेत्यादौ गुरोश्चहल इति अप्रत्ययानुपपत्तेरित्युक्तम्।

अत्रेदम्बोध्यम्। कृञ् हिंसायामितिस्वादौ। कृण्वेस्तस्यच कृणोतीत्यादिरूपाणि तुल्यानि। तङितु कृणुत इत्यादि। लिडादौ करोतिवत्। चकारेत्यादि। अनयोस्तु चकृण्वेत्यादि।

केचित्तु स्वादिष्विमौ पठन्ति। नच तत्र स्वादिपाठसामर्थ्यात् श्नुप्रत्ययप्रवृत्तावुद्प्रसङ्गः श्नुविषय एवोक्तादेशप्रत्यययोर्विधानोपयोगात्। अन्यथा भ्वादिपाठे शपोऽपि दुर्वारत्वात्। अयं

स्वादिष्विति वृत्तिस्वारस्याच्च । कृणोतिपरत्वेन तद्व्याख्याने मानाभावात् ।

# क्र्यादिभ्यः श्ना ॥ ८१ ॥

क्रीणाति ।

# स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ॥ ८२ ॥

चात् श्ना । स्तम्भ्वादयश्चत्वारः सौत्राः नकारोपधा रोधनार्था इति केचित् । प्रथमतृतीयौ स्तम्भार्थौ । द्वितीयो निष्कोषणार्थः । चतुर्थोऽनवधारणार्थ इति माधवः । स्कुञ् आप्रवणे । स्तभ्नोति स्तभ्नातीत्यादि, स्कुनोति स्कुनुते ।

# हलः श्नः शानज्झौ ॥८३॥

हलः परस्य श्नः शानच् हौ परे । श्न इति निर्देश आदेशत्वप्रतिपत्त्यर्थः । अन्यथा स्वतन्त्रप्रत्ययान्तरत्वप्रसङ्गात् । गृहाण । सौत्रेभ्यः शानच् न । स्तभ्नीहीत्यादि इति केचित् । संकोचे मानाभावात्स्तभानेति माधवादयः । तत एव उद्दिवं स्तभान तेजसा दिवमुत्तभानेत्यादि वैदिकप्रयोगाः । एतेन मेदस्विनं नयनवारिगतं स्तभानेति मदीयो रुक्मिणीपरिणये प्रयोगो व्याख्यातः । शकारः सार्वधातुकत्वार्थः । तेन कुषाणेत्यादौ न गुणः । स्थानिवद्भावेन ङित्त्वासिद्धः । ननु सार्वधातुकादेशानुबन्धाः स्थानिवन्न भवन्तीति ज्ञापनार्थम् । तेन तातङि ङकारो नानुबन्धनीयः । अपित्वादेवातिदेशिकङित्त्वसिद्धेः । एवं तप्तनप्तनथनाश्चेति तादेशाना

अपित्सार्वधातुकादेशत्वप्रयुक्तं ङित्वं न भवति । तेन शृणोत ग्रावाणः । अस्मिन् हव्या जुहोतन इत्यादौ न गुणः इति चेन्न । अचिनवमित्यादौ पितादेशस्यामोऽपित्त्वापत्त्या गुणनिषेधप्रसङ्गात् । एवं वेद वेत्थेत्यादावपि योज्यम् । विदेःशतुर्वसुरिति शत्रादेशस्य वसोरशित्वप्रसङ्गाच्च । तातङादीनां च ङित्वादेः कृतत्वेन गौरवाभावादिति दिक् ॥

## छन्दसि शायजपि ॥ ८४ ॥

सर्वत्रेति वक्तव्यम् । हिभिन्नेऽपीत्यर्थः । जातवेदः प्रतिहव्या गृभाय जिह्वया मधु । गृहाणेत्यर्थः । यो अस्कभायदुत्तरं सधस्थम् । उदगृभायत् । उन्मथायत । स्कम्भुः सौत्रः । लङि तिप् श्नःशायच् । अट् । अपिशब्दः शानजबाधनार्थः । बधान वत्सम् ।

## व्यत्ययो बहुलम् ॥ ८५ ॥

छन्दसीत्यनुवर्तते । योगविभागेन विकरणानामपि व्यत्ययः । आण्डा शुष्मस्य भेदति । भिनत्तीति प्राप्ते । न मरति म्रियते इति प्राप्ते । योअस्मानुशासति । शास्तीति प्राप्ते । ततः सर्वेषां विधीनां व्यत्ययः । सुपां यथा—युक्तानासीद्धुरि दक्षिणायाः । दक्षिणस्यामिति प्राप्ते । तिङां यथा चषालं ये अश्वयूपाय तक्षति । तक्षन्तीति प्राप्ते । वर्णस्य यथा—त्रिष्टुभौजः शुभितमुग्रवीरमिति । शुधितमिति प्राप्ते । लिङ्गस्य यथा—मधोस्तृप्ता इवासते । मधुन इति प्राप्ते । कालस्य यथा—श्वोऽग्नीनाधास्यमानेन । श्वः सोमेन यक्ष्यमाणेन । आधाता यष्टा इति प्राप्ते । पुरुषस्य यथा-अधास्व वीरै दशभि र्वियूयाः । वियूयादिति प्राप्ते । उपग्रहस्य यथा—ब्रह्मचारिणमिच्छते । इच्छतीति प्राप्ते । प्रतीममन्य ऊर्मि-

युध्यति । युध्यत इति प्राप्ते ।

सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥

## लिङ्याशिष्यङ् ॥ ८६ ॥

आशीर्लिङि अङ् स्याच्छन्दसि । शपोऽपवादः । प्रयोजनं स्थागागमिवचिविदयः । उपस्थेयं वृषभं तु प्रियाणाम् । अञ्जसा-सत्यमुपगेयम् । यज्ञेन प्रतिष्ठां गमेयम् । गमेम जानतो गृहान् । मन्त्रं वोचेमाग्नये । वच उम् । विदेयमेनां (१)वचसि प्रतिष्ठाम् ।

शकिरुहोश्चेति वक्तव्यम् । शकेम त्वा समिधम् । अस्रवन्ती आरुहेमास्वस्तये ।

दृशेरग् वक्तव्यः । अङि तु गुणः स्यात् । पितरं च दृशेयं मातरं च । उपस्थेयामेत्याडपि वक्तव्यः । स्थाधातोर्लिङ्मस् यासुट् अङ् आलोपः । सलोपः अतोयेय इति इय् । मस आट् । अन्यथा यलोप उपस्थेमेत्यपि स्यात् ।

भाष्यकृतस्तु सार्वधातुकत्वात्सलोप आर्द्धधातुकत्वादेत्वम् । छन्दस्युभयसंज्ञात्वादित्याहुः ॥

इति श्रीसिद्धान्तसुधानिधौ तृतीयस्याध्यायस्य
प्रथमे पादे चतुर्थमाह्निकम् ॥



(१) मनसीति पाठान्तरम् ।

# कर्मवत्कर्मणा तुल्यक्रियः ॥८७॥

कर्मणेति तत्स्थक्रियापरम् । कर्मपदमपि शक्त्याधारतण्डुलादिकर्मपरम् । कर्तरि शबिति सूत्रात्कर्तृपदानुवृत्तौ तस्य प्रथमान्तत्वेनान्वयः । तथाच कर्मस्थक्रियया तुल्यक्रियः कर्ता कर्मवत्स्यात् । इह पच्यादिधातवो विक्लित्त्यादिफलस्य तदनुकूलव्यापारस्यच वाचकाः । तत्र यदा व्यापारे देवदत्तादीनां कर्तृत्वम् । तण्डुलादीनां च तज्जन्यफलाश्रयत्वं विवक्ष्यते । तदा देवदत्तः तण्डुलं पचतीत्यादयः प्रयोगाः । यदा तु व्यापारांशपरित्यागेन विक्लित्त्यादिमात्रे वर्तन्ते तदा तण्डुलादीनामेव कर्तृत्वम् । तदुक्तं हरिणा—

निवृत्तप्रेषणं कर्म स्वक्रियावयवे स्थितम् ।
निवर्तमाने कर्मत्वे स्वे कर्तृत्वेऽवतिष्ठते ॥ इति ।

तथाच कर्मस्था क्रिया विक्लित्तिरूपा धात्वर्थत्वेन फलस्यापि क्रियात्वात् । तां प्रति तण्डुलादेः कर्तृत्वे कर्मणा तुल्यक्रियः कर्ता सम्पद्यते । ननु धर्मिणोरैक्यात्तत्स्थक्रियाप्येकैवेति कथं भेदनिबन्धनं तुल्यत्वमिति चेत् । न, कर्मत्वोपाधिपरिच्छिन्ने या क्रिया सैव चेत् कर्तृत्वोपाधिपरिच्छिन्ने इत्यस्यैव विवक्षितत्वात् ।
अतएवात्र कर्मकर्तेति व्यवहारः । तदुक्तं दुर्गसिंहेन—

क्रियमाणं तु यत्कर्म स्वयमेव प्रसिध्यति ।
सुकरैः स्वैर्गुणैर्यस्मात्कर्मकर्तेति तद्विदुः ॥

कर्मस्थक्रिययेत्यादेः प्रयोजनं तु कर्मस्थक्रियाणामेव कर्मवद्भावो यथा स्यात् कर्तृस्थक्रियाणां माभूत् । द्वयोरेव क्रियाधारत्वात् । तद्विवेकस्तु वाक्यपदीये—

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ॥
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता ॥ इति ।

दृश्यते हि पक्केषु तण्डुलेषु शिथिलावयवत्वरूपा विक्लित्तिः ।

भिन्नेषु च काष्ठेषु अवयवविभागः । अभिषुते च सोमे द्रवत्वादि इति तेषां कर्मस्थक्रियत्वम् । ग्रामादौ तु गमनादिजन्यं फलं संयोगादि यद्यप्यास्ते सकर्मकाणां कर्मस्थ-फलाभिधायित्वनियमात् । तथापि न तत्कर्मस्थम् । कर्मदर्शन-मात्रेण यत्फलं ज्ञातुं शक्यते तस्यैव तादृशपरिभाषाविषयत्वात् । ग्रामदर्शनमात्रेण चायं ग्रामः केनाचिद्गत इति नावगन्तु शक्यते । एतादृशार्थधातूनां कर्तृस्थक्रियत्वमित्युत्तरार्द्धार्थः । एतेन जाना-त्यादिकं व्याख्यातम् । तदुक्तम्—

निर्वर्त्येच विकार्येच कर्मवद्भाव इष्यते ।

नतु प्राप्ये कर्मणीति सिद्धान्तोऽयं(१)व्यवस्थित इति ॥

तथाच पश्यति राजा स्वयमेव, आरोहति हस्ती स्वयमेवेत्ये व रूपम् । अत एवारुह्यते हस्तीत्यत्र कर्मवद्भावं दर्शयन्तो भाष्य-न्यायविरोधादुपेक्षणीया इति कैयटादयः ॥

नन्वेवं सकर्मकाणां प्रतिषेधोऽन्योन्यमाश्लिष्यत इति भाष्य-वार्तिकाभ्यां, संयोगरूपफलस्य कर्मस्थत्वात्प्राप्तिरिति कैयटादि-ग्रन्थेन च विरोध इति चेन्न । उदाहरणं दिङ्मात्रं नतु स्थिरोदा-हरणमिति स्वीकारात् ।

अत्रेदमवधेयम् । निवृत्तप्रेषणदशायां फलमेव क्रिया तदाश्र-यत्वात्कर्मणः कर्तृत्वम् । तथाच वाक्यपदीये—

एकदेशे समूहे वा व्यापाराणां पचादयः ।

स्वभावतः प्रवर्तन्ते तुल्यरूपं समाश्रिताः ॥

व्यापाराणामिति फलाभिप्राय बहुत्वम् । छत्रिणो गच्छ-न्तीत्यादिवत् । तद्व्याख्यायां च हेलाराजेनोक्तम् । पच्यते ओ-

(१) सिद्धान्तोऽत्रेति पाठान्तरम् ।

दनः स्वयमेवेत्यादौ फलमेव धात्वर्थत्वात्क्रिया तदाश्रयत्वादेवोदनादेः कर्तृत्वमिति ।

स्यादेतत् । तण्डुलं पचतीत्यादावपि फलाश्रयत्वात्तण्डुलादेः कर्तृत्वं स्यात् । परत्वात् । नच । फलानाश्रये देवदत्तादौ कर्तृसंज्ञायाः सावकाशत्वात्कर्मसंज्ञा निरवकाशेति वाच्यम् । ग्रामं गच्छतीत्यादौ संयोगाश्रयस्य देवदत्तादेः कर्मत्वस्य तथाप्यापत्तेः । नच प्रत्ययार्थान्याविशेषणत्वविशिष्टविषयतया धातुजन्यधीविषयत्वमेव क्रियात्वम् । तत्र तु व्यापाररूपधात्वर्थविशेषणत्वात्फलस्य नोक्तरूपं क्रियात्वम् । पाचयति इत्यादौ णिजर्थविशेषणस्य धात्वर्थव्यापारस्य क्रियात्वरक्षणार्थं प्रत्ययार्थान्येत्युक्तमिति वाच्यम् । पश्य मृगो धावति । पचति भवति इत्यादौ धावनपचनक्रिययोः प्रत्ययार्थान्यस्मिन् दर्शनभवनक्रियारूपे विशेषणत्वादव्याप्तेः ।

अत्राहुः—तद्धात्वर्थाविशेषणत्वविशिष्टतया तद्धातुजन्यधीविषयत्वमेव क्रियात्वमिति केचित् ॥

तत्रेदं विचार्यम् । णिचो द्योतकत्वपक्षे पाचयतीत्यादौ प्रयोज्यव्यापाररूपधात्वर्थस्य प्रयोजकव्यापाररूपधात्वर्थविशेषणत्वादव्याप्तिः । पच्यते ओदनः स्वयमेवेत्यत्रौदनाभिन्नाश्रयिका पाकानुकूला भावनेति बोधस्य स्वयमेवाभ्युपगतत्वात् । व्यापारस्य धात्वर्थत्वाभावे च विशेष्यत्वानुपपत्तेर्नात्र फलमात्रवाचकत्वम् ।

व्यापारो भावना सैवोत्पादना सैव च क्रिया ॥

इत्यभ्युपगमात् । तस्मात्फलाश्रयस्यैव व्यापाराश्रयत्वविवक्षायां कर्मवद्भावविधानात् । ओदनाभिन्नाश्रयिका ओदनपाकानुकूला भावनेत्यर्थः । तत्करणं किम् । भिद्यते कुसू-

लेनेत्यादौ भावे लकारोऽपि यथा स्यात् । अन्यथा कर्तुः कर्मसंज्ञा विधाने अकर्मकव्यपदेशविरहाद्भावे लकारानापत्तेः ।

करणेति किम् । करणाधिकरणाभ्यां तुल्यक्रियस्य कर्तुर्माभूत् । साध्वसिश्छिनत्ति । साधु स्थाली पचति । संयोगधारणादिरूपा क्रियाऽत्रासिस्थाल्यो र्वर्त्तते। नन्वसिना छिनत्ति स्थाल्यां पचतीत्यादौ करणाधिकरणयोर्व्यापारो न धातुवाच्यः यदा तु धातुना विवक्षा तदा तयोः कर्तृत्वमेव । तथाच करणत्वाधिकरणत्वाभ्यां विवक्षावेलायां तद्व्यापारस्य धात्वर्थत्वाभावात् कर्त्रवस्थायां तत्प्रयुक्ततुल्यक्रियत्वाभावादेव तत्र नातिप्रसङ्गः । ततश्च कर्तृकर्मसमवेतक्रियाया एव धातुवाच्यत्वात्कर्तृस्थया क्रियया तुल्यक्रियः कर्तेत्यर्थानुपपत्त्या ; परिशेषादेव कर्मस्थक्रियया तुल्यत्वलाभात्कर्मणेति व्यर्थमिति चेन्न ।

क्रियायाः सादृश्यप्रतियोगित्वा धातुवाच्यत्वेनाविशेषितत्वात् । वस्तुतो धात्वर्थत्वस्य च करणादिव्यापारेऽपि सत्त्वात् ॥

अथ तुल्यक्रिय इति व्यर्थम् । कर्मणेति तृतीयाया एव तुल्यार्थाध्याहारेण व्याख्यानसम्भवात् । कर्मणा तुल्यः कर्तेत्यत्र च क्रिययैव तुल्यत्वस्योपादानात् ।

मैवम् । सहार्थेऽपि तृतीयासम्भवात् कर्मणा सह यः कर्ता प्रतिपाद्यते पचत्योदनं देवदत्त इति तत्रातिप्रसङ्गात् । कर्मपदस्य त्वास्ते इत्याद्यकर्मकनिवृत्त्यर्थत्वेनोपपत्तेः । तुल्यक्रिय इत्युक्ते च यस्मिन् कर्मणि कर्तृभूतेऽपि तद्वत्क्रिया लक्ष्यते इत्यर्थलाभाद्यथोक्तार्थसिद्धिः ।

इह धातोरित्यनुवृत्त्या प्रत्यासत्त्या यस्य धातोः यत्कर्म तत्स्थया क्रियया तुल्यक्रियः कर्ता तस्यैव धातोर्यदि भवति ततः कर्मवत्स्यादित्यर्थलाभात् । 'अकर्मकाणां कर्मवद्भावः' 'समानधातौ'विति

च सिद्धम् । तेन भिद्यमानः कुसूलः पात्राणि भिनत्ति पचत्योदनं देवदत्तः । राध्यत्योदनः स्वयमेवेत्यादौ नातिप्रसङ्गः । ओदनस्य कर्मत्वे यादृशी विक्लित्तिलक्षणा क्रिया तादृश्येव कर्तृत्वेऽपि । राध्यतेर्विक्लित्तिवचनत्वात् । उक्तवाक्यद्वयस्य लोके युगपत्प्रयोगाभावेऽपि क्रियातुल्यत्वप्रतिपादनाय पचत्योदनमित्युपात्तम् । अन्यथा लुनाति केदारं देवदत्तो लावयते केदारः स्वयमेवेत्यादावपि तदनुपपत्तेः ।

ननु लुनाति लावयत्योर्भेदात्समानधातौ विधीयमानः कर्मवद्भावो न स्यात् आहर कुम्भं करोति कटमित्यादावणादिवत् । मैवम् । णिजाधिक्येऽपि प्रत्यभिज्ञानाल्लुनातिलावयत्योरभेदादिति केचित् । लावयतावेव केदारस्य कर्मत्वं कर्तृत्वं चेत्यन्ये । एतेन 'कर्मवत्कर्मकस्ये'ति 'समानधाता'विति च वार्तिकं व्याख्यातम् ।

इदमप्यत्र विचार्यम् । अतिदेशात्स्वाश्रयनिवृत्तिर्नवेति । ननु स्वाश्रयार्थं वत्करणमित्युक्तत्वाच्छङ्काया एवानुपपत्तिः । मैवम् । दोषान्तरोद्भावनाय तदुपपत्तेः । नाद्यः । अचीकरत कटः स्वयमेवेत्यत्र यक्चिणोः प्रतिषेधेऽपि स्वाश्रययोश्चङ्शपोरप्रवृत्त्यापत्तेः । एवं भिदुरमित्यत्र कुरच् न स्यात् । यद्यपि लान्तस्य कर्ता कर्मवदिति वक्ष्यते तथाप्यापाततः उक्तम् । न द्वितीयः । आत्मनेपदविधानस्य शबादिनिषेधस्य च वक्तव्यत्वात् । अन्यथा स्वाश्रययोः परस्मैपदशपोर्दुर्वारत्वात् ।

मैवम् कर्मैव यः कर्ता तत्र परस्मैपदमिति व्याख्यातत्वात् । कर्तरि शबित्यत्र कर्तरीति योगविभागात् शबादीनां यगू बाधकः । यद्वा कार्यातिदेशोऽयम् । परस्मैपदशबाद्योश्च विरोधान्निवृत्तिः । अतिदेशाविरुद्धस्यैव स्वाश्रयस्य प्रवृत्तेः ।

स्यादेतत् । कृत्यक्तखलर्थेष्वपि कर्मकर्तुः कर्मवद्भावः स्यात् ।

ततश्च सकर्मकत्वात्कर्मण्येव ते स्युः । भेत्तव्यः कुसूलः, भिन्नः कुसूलः ईषद्भेदः कुसूल इत्यादि स्यात् ।

अत्र भाष्यम् । लिङ्याशिष्यङिति द्विलकारको निर्देश इति । अयमर्थः—व्यत्ययो बहुलं लिङ्याशिषीति संहितायां मकारस्य परसवर्णे संयोगान्तलोपेन द्वितीयो लकारः प्रश्लिष्यते । संयोगान्तं यत्पदमिति पक्षे तु हलो यमामिति लोपः । तथाच-लान्तस्य कर्ता कर्मवद्भवतीति वाक्यार्थः ।

तदेतदाह वार्तिककारः—'तत्र लान्तस्य कर्मवदनुदेश' इति । तत्र वाच्यत्व षष्ठ्यर्थः । तेन लान्तवाच्यस्य कर्तुर्विधीयमानः कर्मवद्भावोऽर्थवशाल्लान्तकार्ये एव पर्यवस्यति । तेन कृत्यादौ अतिदेशाप्रवृत्त्याऽकर्मकत्वात्तेषां भाव एवोत्पत्त्या कर्तु रनभिधानात्कर्तृविभक्ती कृद्योगषष्ठीतृतीये भवतः । भेत्तव्यं कुसूलस्य, भेत्तव्यं कुसूलेन । भिद्यते कुसूल इत्यत्र च न द्वितीया । कर्मकर्तुरभिहितत्वात् । भिन्नः कुसूलः स्वयमेवेत्यकर्मकत्वाद्गत्यर्थाकर्मकेति कर्तरि क्तः । 'भिनोतेर्ग्रासकर्मकर्तृकस्ये'त्यत्र भिनो ग्रासः स्वयमेवेति प्रत्युदाहरिष्यमाणत्वात् ।

स्यादेतत् प्रकृतसूत्रमेव मास्तु हन्त्यात्मानम्, आत्मना हन्यते इत्यादिवदौपाधिकभेदेन निर्वाहात् । अत एवात्मान मात्मना वेत्सि इत्यादयः संगच्छन्ते । तदुक्तम् ।

एकस्य बुद्ध्यवस्थाभिर्भेदे च परिकल्पिते ।
कर्मत्वं करणत्वं च कर्तृत्वं चोपजायते ।

एवंच पच्यते ओदन इत्यादौ निवृत्तप्रेषणत्वाभावेऽपि मुख्ये कर्मण्येव प्रत्ययोऽस्तु स्वयमित्यस्यात्मनेति कर्तृपरत्वेन व्याख्यानात् । पच्यते ओदनेनेत्यादावपि आत्मेत्यध्याहारात् भावे लकारानुत्पत्तावपि न क्षतिः । नच भेत्तव्यं कुसूलेन भिन्नमीषद्भे-

दमिति भावे कृत्यादयो न स्युः, कर्मणि तदङ्गीकारे आत्मेति वि-
शेष्यानुरोधात्पुंस्त्वापत्तिरिति वाच्यम् । सामान्ये नपुंसकसंभवा-
त्स्वरूपमिति क्लीबविशेषणाध्याहारसंभवाच्च । सूत्रारम्भपक्षेऽप्युक्त-
विवक्षया आत्मा कुसूलेन भेत्तव्य इति प्रयोगस्य दुर्वारत्वाच्च ।

तदुक्तं वार्तिककृता—सिद्धं तु प्राकृतकर्मत्वादिति । औपदेशि-
ककर्मत्वादेव सिद्धौ आतिदेशिके तदनपेक्षितमित्यर्थः । अत्र कै-
यटादयः—एवं हि 'नदुहस्नुनमा'मिति निषेधः शुद्धकर्मविषयः
स्यात् । आतिदेशिक कर्मत्वस्याप्रसिद्धेः । ततश्च दुग्धे
गौर्गोपालेनेत्येव स्यात् नतु दुह्यते इति । नच न दुहेत्यनारभ्यमे-
वेति वाच्यम् । नमते दण्ड इत्यादेरसिद्धेः । कर्तरि लङो दुर्लभ-
त्वात् । कर्मणि यक्प्रसङ्गात् । एवंच अचः कर्मकर्तरि इति चिण्-
विकल्पो निरवकाशः स्यात् । कर्मकर्तुरप्रसिद्धत्वात् । आत्मना
ऽऽत्माऽज्ञायीत्यत्रातिप्रसङ्गश्च स्यात् । नच निवृत्तप्रेषणाक्रियायां
भूतपूर्वगत्या कर्मत्वं सांप्रतिकगत्या च कर्तृत्वमिति च तत्रैव तत्प्र-
वृत्तिरिति वाच्यम् । लङादिषु शबादीनामसिद्धेः यगादीनां
चापत्तेरिति । स्वयमित्यस्य च कर्त्रन्तरव्यावृत्तिप्रतिपादन-
द्वारा केदारस्यैव कर्तृत्वप्रतिपादने तात्पर्यम् । अन्यथा प्राकृतक
र्मत्वापत्तेरिति ।

'सकर्मकाणां प्रतिषेधो वक्तव्यः' । आत्मानमात्मना वेत्सि
इत्यत्र कर्तृस्थभावकत्वेन कर्मवद्भावाप्रवृत्तावपि सृजेरात्मानमात्म
नात्र कर्मस्थभावकत्वेन तस्य दुर्वारत्वात् ।

स्यादेतत् । आत्मनस्तावद्देहेन्द्रियसंबन्धरूपामुत्पत्तिक्रियामा-
दाय कर्मत्वम् । कर्तृत्वं त्वीश्वरस्य तदनुकूलेच्छारूपं जीवस्य तु-
तादृशादृष्टादिरूपं व्यापारमादाय । तथाच कर्तृत्वोपाधिपरिच्छिन्ने

(१)व यत्र क्रियैक्यं तत्र विधीयमानस्य कर्मवद्भावस्य न प्रसङ्गः । एवमन्योन्यमाश्लिष्यते इत्यत्रापि अन्योन्यसंयोगानुकूलव्यापाराना:श्रयाविति बोधात् । संयोगमादाय कर्मत्वं गमनादिक्रियामादाय च कर्तृत्वमिति न क्रियैक्यमिति ।

अत्राहुः—अजा ग्रामं नयतीत्यत्राजायाः कर्तृत्वविवक्षायामपि ग्रामरूपेण कर्मणा सकर्मकत्वात्तद्वारणायोक्तवार्तिकमिति । तथाह्यजा ग्रामं नयति इत्यत्र ग्रामसंयोगानुकूलाजानिष्ठव्यापारानुकूलव्यापारवानिति बोधात् । ग्रामसंयोगानुकूलव्यापाररूपां क्रियामादायाजायाः कर्मत्वं तदाश्रयत्वादेव चोक्तस्थले कर्तृत्वमिति ।

अत्र भाष्यकृतः—नैतद्वार्तिकमारभ्यम् । तपस्तपः कर्मकस्यैवेत्यत्र तप इति योगविभागेन तपेरेव सकर्मकस्य कर्ता कर्मवद्भवतीति नियमव्याख्यानात् ।

स्यादेतत् उपवासादिरूपस्य तपसः कर्तृत्वे तपेः दुःखार्थत्वम् । तपस्तापसं तपति दुःखयतीति प्रतीतेः । तापसस्य तु कर्तृत्वे ज्ञानं तथा । तप्यते तपस्तापसः । तपो जानातीति बोधात् । तथाच कर्मस्थया क्रियया तुल्यक्रियत्वं नास्ति कर्तुरिति कर्मवद्भावो न प्राप्त इति विध्यर्थमेतदिति वृत्तिकारः । तत्कथं नियमार्थत्वमिति ।

अत्र कैयटः—शरीरसंतापलक्षणा क्रियाऽवस्थाद्वयेऽपि तुल्या । शरीरसंतापलक्षणमेवार्जनं तापसस्य यतो व्यापार इति । तथा चान्यस्य सकर्मकधातोः कर्ता न कर्मवत् । नचैवं तपेरकर्मकस्यापि कर्मवद्भावापत्तिः, तपः कर्मकस्यैवेति नियमान्तरेण तद्व्यावृत्तेरिति ।

(१) 'कर्मत्वोपाधिपरिच्छिन्ने इत्यधिकमपेक्ष्यते

'दुहिपच्योर्बहुलं सकर्मकयोरिति वाच्यम्'। दुग्धे गौः पयः। न दुहेति वक्ष्यमाणेन यको निषेधः। उदुम्बरः पच्यते फलम्। गौर्दुग्धेति पय इति बोधः। दुहद्विकर्मकत्वात्कर्मस्थक्रियया तुल्यक्रियत्वेऽपि सकर्मकत्वादप्राप्तौ पच्यत इत्यत्र वृक्षस्य कर्तृत्वविवक्षायामसन्तमप्राप्तावारम्भः।

केचित्तु पचिरत्र द्विकर्मकः वृक्षस्य पाकमन्तरेण फलपाकासंभवात्। वृक्षोऽकथितकर्म। तस्यैव गुणा कर्तृत्वविवक्षा तदाय कर्मवद्भावः। ओदनं पचतीत्यादौ त्वनभिधानान्नेत्याहुः। तथाच फलपाकानुकूलोदुम्बरनिष्ठपाकानुकूलव्यापारवानिति उदुम्बरः फलं पचतीत्यत्र द्विकर्मकदशायां बोधः। उदुम्बरपाकलक्षणा क्रिया कर्मावस्थायां। सैव कर्तृदशायामुदुम्बरनिष्ठा फलपाकानुकूलव्यापारवानुदुम्बर इति बोधात्। तस्य च पाकरूपत्वात्।

'सृजियुज्योः श्यंस्तु'। अनयोः सकर्मकयोः कर्ता बहुलं कर्मवत् यगपवादश्च श्यन्वाच्य इत्यर्थः। 'सृजेः श्रद्धोपपन्ने कर्तर्येवेति वाच्यम्'। सृज्यते स्रजं भक्तः। देवार्थं श्रद्धया मालां संपादयतीत्यर्थः। श्रद्धायुक्तेति किम्। 'स्रज सृजन्त्या तदशाधि साधु'। उपभोगार्थमेवात्र स्रजो निर्माणम्। श्यना च यगत्र बाध्यते। नतु चिण्। चिणात्मनेपदार्थ इति भाष्योक्तेः। असर्जि मालाम्। युज्यते ब्रह्मचारी योगम्। योगो ब्रह्मचारिणं युनक्ति इत्यस्य संबध्नातीत्यर्थः। ततो ब्रह्मचारिणः कर्तृत्वविवक्षायामेतत्।

'करणेन तुल्यक्रियः कर्ता बहुलं कर्मवदिति वक्तव्यम्'। परिवारयन्ते कण्टका वृक्षम्। कण्टकैः परिवारयति वृक्ष इत्यत्र उपघातकद्रव्यसंयोगप्रतिबन्धो वारणम्। कण्टकव्यापारः समन्तात्संयोगः। कण्टकानां कर्तृत्वे तु संयोग एव धात्वर्थः। समन्तादवच्छिन्नस्वसंयोगवन्तं कुर्वन्तीत्यर्थः। बहुलग्रहणात्साध्वसिः

च्छिनत्तीत्यादौ न दोषः ।

'स्रवत्यादीनां प्रतिषेधो वक्तव्यः'। स्रवति कुण्डिका उदकम्। स्रवन्ति वल्मीकान्युदकम् । निष्क्रामदुदक निष्क्रामयत्यर्थक्रिया-साम्यात्प्राप्तिः ।

भाष्यकृतस्तु स्रवन्ति वल्मीकान्युदकमित्यत्र विसृजन्तीत्य-र्थावगमात् । कृपणो सौ नकिंचित्स्रवतीति लोके च विसर्गपदस्य दानार्थत्वदर्शनात् । भिन्नक्रियत्वादेवात्र न कर्मवद्भाव इत्याहुः ।

'भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात् । एषां यक्चिणौ चिण्वदिट्च न भवति किन्त्वात्मनेपदमात्र मित्यर्थः । भूषाफलं शोभाख्यं कर्मणि दृश्यते इति कर्मस्थक्रियत्वम् । अण्यन्तार्थं भूषा-ग्रहणम् । अलङ्कुरुते स्वयमेव कन्या । अलमकृत । ण्यन्तत्वे तु वक्ष्यमाणवार्तिकेनैव तन्निषेधसिद्धेः । अवकिरते हस्ती स्वयमेव । अवाकीर्ष्ट । हस्तिनं कश्चित्पांश्वादिनाऽवकिरति तत्र सौकर्य-विवक्षायां हस्तिनः कर्तृत्वम् । चिकीर्षते कटः स्वयमेव । अचिकीर्षिष्ट ।

ननु प्रत्ययार्थत्वात्सन्नन्ते इच्छायामेव प्राधान्यम् । साच कर्तृस्थैवेति नात्र कर्मवद्भावप्राप्तिः। अत्राहुः—करोतिक्रियामपेक्ष्ये ह कर्मस्थक्रियत्वम् आर्थं च करोतेः प्राधान्यं तदर्थत्वादिच्छाया इति । किरादिस्तुदाद्यन्तर्गणः । गिरते । अगीर्ष्ट । आद्रियते आदृत । आदरविषयो भवतीत्यर्थः ।

# तपस्तपः कर्मकस्यैव ॥ ७७ ॥

तपः कर्मकस्यैव तपेः कर्ता कर्मवत्स्यात् क्रियाभेदादपूर्व-विधिरयमिति वृत्तिः । नियमार्थमिति भाष्यम् । तच्च पूर्वत्र व्या-ख्यातम् । तप्यते तपस्तापसः । कर्तुः कर्मवद्भावे तस्याप्यभिधाना-

दुभयत्रापि प्रथमान्तत्वम् ।

स्यादेतत् । तप इत्यौणादिकमसुन्नन्तं भावार्थम् । तापमेन तपस्तप्यते इति कर्मणि लकारे पक्षसर्वक्रियाया एव कर्मप्रत्ययार्थ त्व दृश्यते । क्रियाकर्मणोश्च साध्यसाधनभावाद्भेदेन भाव्यम् । इह तु भेदाभावात्प्रकृतिप्रत्ययार्थत्वानुपपत्तिः । किंच तपः कर्म कस्यैवेति वचनात्प्रकृत्यर्थस्यैव कर्मत्वमाश्रितं विरुद्धमिति ।

अत्र भाष्यम्—'सामान्यतपे रन्यत्तपः करोति' । अस्यार्थः ज्ञानरूपतपोविशेषः करोति । अवयवपदस्य विशेषपरतया व्याख्यानात् । तपः कर्मकेति किम् । उत्तपति सुवर्णं सुवर्णकारः ॥

# नदुहस्नुनमां यक्चिणौ ॥७८॥

एषां कर्मकर्तरि यक्चिणौ नस्तः । कर्मवद्भावातिदेशात्प्रसक्तिः । 'स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता' इति भारविः । 'स्वयं प्रणमतेऽल्पेऽपि' इति माघः । दुहेरयंयक्कोऽपि निषेधः । चिणस्तु वचनान्तरेण विकल्पः । दुग्धे गौः स्वयमेव । अदुग्ध गौः स्वयमेव । लुग्वा दुहेति क्सस्य लुक् चिण्पक्षे अदोहि । प्रस्नुते गौः स्वयमेव । प्रास्नोष्ट प्रास्नाविष्ट ।

नन्वेवं चिण इव चिण्वदिटोऽपि निषेधः । चिण्वदित्यत्र तृतीयान्ताद्वतेर्विज्ञानात् । चिण्निषेधस्यापि चिण्कार्यत्वादिति चेत् । नैवम् । सप्तम्यन्तादेव तत्र वतेर्व्याख्यानात् । चिणिपरे यत्कार्यं तस्यैवातिदेशात् । चिण्निषेधेन तदातिदेशस्य निषेद्धुमशक्यत्वात् ।

यत्तु चिण्निषेधस्य चिणि परे विहितत्वाभावात्तस्मिन् कर्त-

व्ये नास्त्यतिदेश इति । तत्राहुः अतिदेशो न विरुध्यते इति वक्तव्ये निषेधो नातिदिश्यत इति उक्तेरनौचित्यमिति ।

वस्तुतस्तु तस्मिन् चिण्निषेधे कर्तव्ये विधेये अतिदेशो नास्तीत्यत्र प्रतियोगितावच्छेदकसंबन्धः प्रतियोगित्वमेव विवक्षितं तथाच चिण् निषेधः प्रतियोगितया चिण्वद्भावं न विषयीकरोति चिण्वद्भाव-प्रतियोगिको न भवतीति यावत् ।

'यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसङ्ख्यानम्'। भारद्वाजीयास्तु 'णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणा' मिति पठन्ति । कारयते । अचीकरत । उच्छ्रयते दण्डः । उदशिश्रियत । वचनस्य शब्दप्रकाशनफलत्वात्कर्मस्थत्वम् । श्रथ्नाति ग्रन्थं देवदत्तः । श्रथ्नीते ग्रन्थः स्वयमेव । अश्रन्थिष्ट ग्रन्थः । ग्रथ्नाति श्लोकं देवदत्तः । ग्रथ्नीते श्लोकः स्वयमेव । अग्रन्थिष्ट श्लोकः । चौरादिकावप्यत्र श्रन्थिग्रन्थी गृह्येते । नच णिग्रहणादेव गतार्थत्वम् । आधृषीयत्वाण्णिजभावपक्षे सार्थक्यात् । ग्रन्थते । श्रन्थते । लुङि प्राग्वत् । ब्रूते कथा स्वयमेव । अवोचत कथा स्वयमेव । ये धातव आत्मनेपदविधावकर्मका निर्दिष्टास्तेषामन्तर्भावितण्यर्थतायां सकर्मकदशायां कर्मवद्भावात्प्राप्तौ यक्चिणौ निषिध्येते । विकुर्वते सैन्धवाः । वल्गन्तीत्यर्थः । तान् यदान्यो वल्गयति तदा तेषां कर्मत्वम् । पुनः सौकर्यातिशयविवक्षायां विकुर्वते सैन्धवाः स्वयमेव । व्यकृषत । उत्पुच्छयते गौः । अन्तर्भावितण्यर्थत्वात्कर्मवद्भावात्प्रतियोगिप्रसक्तिः । तथाहि—पुच्छमुदस्यति उत्पुच्छयते गौः ण्यर्थान्तर्भावे उत्पुच्छयते गाम् । पुनः कर्तृत्वविवक्षायां यथोक्तं रूपम् । उदपुपुच्छत । यक्चिणोः प्रतिषेधाच्छपचङौ ॥

## कुषिरजोः प्राचां श्यन् परस्मैपदं च ॥ ९० ॥

कुष निष्कर्षे । रञ्ज रागे । अनयोः कर्मकर्तरि न यक् किन्तु श्यन् परस्मैपदं च स्यात् । यगात्मनेपदयोरपवादौ । कुष्यति कुष्यते वा पादः । रज्यति रज्यते वा वस्त्रम् । निष-तुमर्थं स्वरार्थं च श्यनो विधानम् । तेन कुष्यन्ती जङ्घेति शप्श्यनो-र्नित्यमिति नुम् । ञ्नित्यादिरित्याद्युदात्तत्वम् । यकि तु लसार्व-धातुकानुदात्तत्वे यक उदात्तत्वश्रवणं स्यात् । इदं च यग्विषय एव प्रवर्तते : निषेधस्य च ङित्करत्वात् । तेन लिङाशीर्लिङोः स्यादीनां विषये नास्य प्रवृत्तिः ।

## धातोः ॥ ९१ ॥

अधिकारोऽयम् । तृतीयाध्यायपर्यन्तम् । नचैवं लादेशेषु दोषः स्यात् । तथाहि तत्र धातोरित्युपस्थाने तस्मादित्युत्तरस्येति परिभाषया धातोरव्यवहितपरस्य लस्य तिबादयो भवन्तीत्यर्थः स्यात् । तथाच विकरणव्यवधाने तिबादीनामसिद्धिः । स्यादीनां लावस्थायामेव प्रवृत्तेः । सार्वधातुके इति विषयसप्तमीपक्षे शबादी-नामपि तथात्वात् । नच परत्वाद्विकरणेभ्यः पूर्वमेव लादेशप्र-वृत्तिः । कृताकृतप्रसङ्गित्वेन विकरणानां नित्यत्वात् । नचादेशानां निरवकाशत्वम् । लुक्श्लुविकरणेषु विकरणलोपेन लिङ्लिटोश्च विकरणानुत्पत्त्या तत्र सावकाशत्वात् । एवं धातोः परस्य तस्य एत्वविधाने आदेः परस्येति तकारमात्रस्य एकारादेशापत्तौ सर्वा-देशार्थं तस्य शित्त्वं कर्तव्यमिति गौरवम् । माङ्लादेशेष्व इति

पक्षे तुकृपरिभाषानुपस्थाने विधानसामर्थ्याद्विनापि शित्त्वं तत्सिद्धिः । नचालोन्त्यपरिभाषया अन्त्यादेशत्वापत्तिः । एकारस्य एकारविधाने प्रयोजनाभावात् । एवं लोटो लङ्वत्, एरुः, सेर्ह्यपिच्चनित्यङ्कितः, इतश्च, तस्थस्थमिपां तां तं तामः, लिङः सीयुट्, यासुट् परस्मैपदेष्वित्यादावपि बोध्यम् । धातोः परत्वेन तद्विशेषणापत्त्या विकरणव्यवधाने तदप्रवृत्तेः ।

उच्यते तथाचार्द्धधातुकसंज्ञायां धातुग्रहणस्यावश्यकत्वात् । अन्यथा वृक्षत्वमित्यादावतिव्याप्तेः । परस्मैपदानामिति मध्यमपुरुषथकारस्थाने अकारादेशे शित्त्वस्य कर्त्तव्यत्वापत्तेश्च । सिद्धान्ते तु धातोः परस्य थस्येति व्याख्याने थकारमात्रस्य अकारादेशे अतो गुण इति पररूपे च सिद्धमिष्टम् । नच तत्राप्यलोन्त्यपरिभाषया अकारस्याकारादेशविधानवैयर्थ्यात्सामर्थ्यादेव सर्वादेशत्वसिद्धिः । णलादीनां यथासङ्ख्यसंपादनेन चरितार्थत्वात् ।

नच परत्वादिट्प्रसङ्गः । कृताकृतप्रसङ्गित्वेन अकारादेशस्य नित्यत्वात् । तत्र कृते वलादित्वाभावेनेटोऽप्राप्तेः । नच शब्दान्तरप्राप्त्या अकारादेशस्याप्यनित्यत्वम् । साहि इटि कृते इकारस्य प्राप्नोति अकृते तु थकारस्येति वाच्यम् । तस्य साधिकत्वात् नचोक्तदोषाणामापत्तिः । शबादीनां सार्वधातुके परत एव विधानात् । स्यादिस्थलेऽपि धातो र्विहितस्य लस्येति विहित विशेषणाश्रयणात् । ननु चिन्द्मीत्यादावपि णलादीनामापत्तिः धातोर्विहितस्य वेत्तेरनन्तरस्येति व्याख्यानात् । नचाजक्षिष्वन्नजागरिष्यन्नित्यादौ अदभ्यस्तादिर्जुस्प्रसङ्गः । धातोर्विहितस्याभ्यस्तादनन्तरस्येति व्याख्यानात् । आत इत्यत्र तु धातोर्विहितस्याकारादनन्तरस्येति व्याख्येयम् । आकारान्ताद्विहितस्येति व्याख्यानेऽपिबन्नित्यादावतिप्रसङ्गात् ।

तस्मादातृतीयाध्यायाद्धात्वधिकार इति स्थितम् ।

प्रयोजनानि । प्रातिपदिकात्तव्याद्यनुत्पत्तिः अङ्गसंज्ञा कृदुपपदसंज्ञाचेति । तत्र नाद्यः । तयोरेवेति भावकर्मणोः कृत्यविधानात् । कृताश्च कर्तरि तिङां च भावकर्मकर्तृषु विधानात् । कर्त्रादिरूपसाधनाभावादेव प्रातिपदिकेभ्यस्तदनुत्पत्तेः । नचैवंकर्मादौ विधीयमाना द्वितीयादयोऽपि प्रातिपदिकान्न स्यु रिति वाच्यम् । वचनसामर्थ्याच्छब्दान्तरवाच्यक्रियापेक्षसाधन एव तत्प्रवृत्तेः । प्रकृते तु प्रकृति वाच्यान्तरङ्गक्रियापेक्षसाधनसम्भवे शब्दान्तरवाच्यबहिरङ्गक्रियासाधनानाश्रयणात् ।

न द्वितीयः । यङ्विधेरेव धातुग्रहणानुवृत्तेः । तेन प्रास्थितेत्यादौ सोपसर्गस्य गमनार्थत्वेऽपि धातोरेवाङ्गसंज्ञा नतुधातूपसर्गसमुदायस्य । तेनाडादिव्यवस्था । अन्यथा स्यादिषु तदननुवृत्तौ करिष्यतीत्यादावङ्गसंज्ञा न स्यात् । नच चूर्णचुरादिभ्यो णिच् धातोश्चेतिधातुमात्राण्णिजापत्तिः । हेतुमतिचेत्यस्य तदभावज्ञापकत्वात् । अन्यथाकरोत्यर्थे करणे विहितस्य हेतुमत्यपि करणे सिद्धत्वात् । ननु चुरादिग्रहणं ज्ञापकम् । प्रातिपदिकाद्धात्वर्थे इत्याद्यर्थतयान्यथासिद्धेः । कण्ड्वादिभ्य इत्यत्रापि न धातुमात्राद्यगापत्तिः । कण्ड्वादिग्रहणवैयर्थ्यापत्तेः । यकः कित्वेन तेषा धातुत्वसिद्धेः पूर्वमुक्तत्वात् । धातोरित्यतएव सिद्धिप्रसङ्गात् । कण्ड्वादिभ्यो धातुभ्य इति सामानाधिकरण्येनान्वयसम्भवे समुच्चयानौचित्याच्च ।

न तृतीयः । कृदुपपदसंज्ञयोरेवाधिकारत्वेनोपपत्तेः । तत्र स्वरितत्वमात्रकल्पने लाघवात् । नाप्यार्धधातुकसंज्ञार्थोयं धात्वधिकारः । वस्तुतो धातोर्विहितस्येति व्याख्याने जुगुप्सते लूभ्यामित्यादावतिव्याप्ते रिति वाच्यम् । यङ्विधेरनुवृत्तस्यैव धातोर्विहितस्येति विहितविशेषणाश्रयेण सिद्धेः । यदि द्वितीयधा-

कारानिहितत्वे सति तिङ्भिन्नप्रत्ययत्वं लक्षणम् । अतिङ् किम् । करोति । तिबादेर्माभूत् । न च भाव्लादेशेभ्यो धात्वधिकार इति पक्षे धातोः परस्य प्रत्ययस्य कृत्संज्ञाविधानेऽपि तिङ्क्षु नातिप्रसङ्गो विकरणव्यवधानादिति वाच्यम् । लुग्विकरणादौ तथाऽप्यतिप्रसङ्गात् । विकरणानां सार्वधातुके परत उत्पत्त्या लकारस्य कृत्संज्ञायाः स्थानिवद्भावेन तिङ्क्षु दोषाच्च । नचैवमतिङ्ग्रहणेऽपि दोषतादवस्थ्यम् । पर्युदाससामर्थ्यात् स्थानिवद्भावाप्रवृत्तेः । तिङ्भाविनो लकारस्यैव भेदप्रतियोगितया निवेशात् । अतएव कारयाञ्चकारेत्यादौ आमन्तस्य कृत्संज्ञा । तत्र लकारस्यैव लोपेन तस्य तिङ्भावित्वाभावात् ।

नन्वस्तु तिङां कृत्संज्ञा । नच कृत्तद्धितेति प्रातिपदिकसंज्ञायां स्वादिप्रसङ्गः । एकत्वादेस्तिङैवोक्तत्वेन तदनापत्तेः । नचाणादिप्रसङ्गः । अपत्याद्यर्थयोगाभावात् । अतिशायने तमबिष्ठनौ तिङश्चेति पृथक्तिङ्ग्रहणसामर्थ्याच्च । नचापचतीत्यादौ ह्रस्वस्य पिति कृतीति तुक्प्रसङ्गः । तत्र धातोरित्यनुवृत्तेः । शबन्तस्य च धातुत्वाभावात् । नच चिकीर्षतीत्यत्र तदापत्तिः । सन्नन्तस्य धातुत्वादिति वाच्यम् । तत्रापि शपा व्यवधानात् । एकादेशे कृतेऽपि पूर्वविधौ स्थानिवद्भावेन व्यवधानसद्भावात् । सत्यम् । अनुपादेयत्वादेवातिङित्यस्येति तत्त्वम् ।

इति श्रीसिद्धान्तसुधानिधौ तृतीयस्य प्रथमपादे पञ्चमाह्निकम् ।

---

# वाऽसरूपोऽस्त्रियाम् ॥९४॥

अत्रासरूपोऽपवादप्रत्यय उत्सर्गस्य बाधको वा स्यात् स्त्र्यधिकारोक्तं विना तत्र नित्यमेव बाधः । स्त्रीशब्दस्य स्वरितत्वादधिकारलाभः । स्त्रियोऽभिधेयत्वे इत्यर्थे तु लव्येत्येन यता बाधितत्वात् लवितव्येति तव्यप्रत्ययो न स्यात् । अपवादेनोत्सर्गस्य नित्यबाधे प्राप्ते पाक्षिकोत्सर्गप्रवृत्त्यर्थमारम्भः । तदुक्तम् 'असरूपवावचनमुत्सर्गस्य बाधकविषये प्रवृत्त्यर्थ'मिति ।

स्यादेतत् । न तावत्तव्यादयोऽस्योदाहरणम् । द्विविधा एव हि धातवः । अजन्ता हलन्ताश्च । तत्राचोयत् हलोण्यत् ताभ्यामेव सर्वविषयाऽवरोधे विधीयमानानां तव्यदादीनां आरम्भसामर्थ्यादेव समावेशसिद्धेः । नापि पचाद्यचो विषये ण्वुल्तृचौ सर्वधातुभ्योऽचूप्रत्ययविधानेन तयोरपि सामर्थ्यादेव सिद्धेः ।

उच्यते । इगुपधेत्यादेः कस्य विषये ण्वुल्तृचोः समावेशार्थत्वात् । असरूपः किम् । आतोऽनुपसर्गे को नित्यमेव कर्मण्यणो बाधको यथा स्यात् । नानुबन्धकृतमसारूप्यम् । तथाचानुबन्धाविनिर्मुक्तप्रत्ययव्यक्त्योः सादृश्यं बोध्यम् । अस्त्रिया किम् अप्रत्ययः नित्यमेव स्त्रियां क्तिनो बाधको यथा स्यात् । अत्रोत्सर्गापवादयोर्द्वयोरपि स्त्र्यधिकारस्थत्वे एवायं निषेधः प्रवर्तते इति वृत्त्यनुसारिणः । अपवादमात्रस्य स्त्र्यधिकारत्वेऽपि इति दीक्षितादयः ।

# कृत्याः ॥ ९५ ॥

'प्राङ् ण्वुल इति वक्तव्यम्' । ण्वुल्तृचावित्यतः प्राक् वक्ष्यमाणाः प्रत्ययाः कृत्यसंज्ञाः । कृत्संज्ञाव्याप्येयं संज्ञा । प्रागिति

किम् ण्वुलः कृत्यसंज्ञा माभूत्। अन्यथा तयोरेवकृत्येति भावेकर्मणोस्तदापत्तेः। एवं तु कर्तरि कृदिति कर्तर्येव सः। वस्तुतस्त्वर्हे कृत्यतृचश्चेत्यत्र तृज्ग्रहणमेव योगापेक्षं ज्ञापकम्। ण्वुल प्रागेव कृत्याधिकार इति। अन्यथा तृचोऽपि कृत्यपदेनैव सङ्ग्रहापत्तेः। तेन ण्वुलः कृत्यसंज्ञानापत्तिः वृत्तिकारेणतुरा(१)।

# तव्यत्तव्यानीयरः ॥ ९६ ॥

धातोरेते स्युः। तित्त्वं स्वरितार्थम्। रित्वमुपोत्तमं रितीति मध्योदात्तार्थम्। रिदन्तस्योपोत्तममुदात्तम्। करणीयम्। ईकार उदात्तः। सौवर्यः सप्तम्यस्तदन्तसप्तम्य इति सिद्धान्तात् 'केलिमर उपसंख्यानम्'। पचेलिमा माषाः। भिदेलिमाः सरलाः। पक्तव्याः भेत्तव्या इत्यर्थः। ककारो गुणवृद्धिनिषेधार्थः रेफः स्वरार्थः। कर्मकर्तर्ययमितिवृत्तिस्त्वयुक्ता। भाष्ये कर्मण्येवोक्तत्वात्। 'वसेः स्तव्यः कर्तरि णिच्च'। णित्वाद्वृद्धिः। वसतीति वास्तव्यः। वास्तुनि भवो वास्तव्यः। दिगादित्वाद्यदिति भाष्यम्। यथाकथञ्चिदन्वाख्येयत्वात्। तदुक्तम्—

उपादायापि ये हेयास्तानुपायान् प्रचक्षते।
उपायानां हि नियमो नावश्यमवतिष्ठते ॥

नच स्वरे भेदः। तव्यान्तत्वे कृत्योकेष्णुजिति अन्तोदात्तत्वम्। यति तु ययतोश्चातदर्थे इत्यनेनेत्यविशेषात्।

# अचो यत् ॥ ९७ ॥

अजन्ताद्यत्स्यात्। चेयम्। जेयम्। सार्वधातुकार्धधातुकयोरिति गुणः। हलन्ताण्ण्यतो वक्ष्यमाणत्वात् अजन्तविषयत्वेऽस्य संभव-

---

(१) अत्रादर्शपुस्तके एव किंचित्पाठस्त्रुटितः।

ऽपि अज्ग्रहणं किम् । अजन्तभूतपूर्वादपि यथा स्यात् । दित्स्यम् । धित्स्यम् । आर्धधातुकविवक्षायामेवातोलोपापत्त्या प्रत्ययोत्पत्तिवेलायामजन्तत्वाभावेऽपि यथा स्यात् । निरूपितं चेदं न पदान्तसूत्रे । अतएव परसप्तमीपक्षेऽज्ग्रहणं स्पष्टार्थमेवेति न्यासकारः । तेन गणयनीत्यादौ अतोलोपस्य परनिमित्तकतया स्थानिवत्त्वान्नोपधावृद्धिरित्यभिप्रायः ।

'तकिशसिचतियतिजनीनामुपसङ्ख्यानम्' । ण्यतो बाधनार्थमारम्भः । शंसीति सानुस्वारपाठो हेयः । ईडवन्दवृशंसदुहाण्यत इति सूत्रविरोधात् । तक्यम् । शस्यम् । चत्यम् । यत्यम् । जन्यम् । नच जनेर्ण्यति जनिवध्योश्चेति वृद्धिप्रतिषेधाज्जन्यमिति रूपसाम्यादुपसंख्यानवैयर्थ्यम् । यतो नात्र इत्येतदर्थत्वात् ।

'हन्तेर्वा यद्वक्तव्यः' । वध्यः घात्यः । वधमर्हतीति दण्डादिभ्य इति यतैव साध्यम् । नचअसिवध्य इत्याद्यनुपपत्तिः समासविधायकाभावादिति वाच्यम् । पादहारकाद्यर्थमिति तत्सिद्धेः । मैवम् । स्वरे दोषप्रसङ्गात् । असिवधशब्दाद्यति तित्स्वरितमित्यापत्तेः । कृदन्तेन समासे तु गतिकारकोपपदादिति कृदुत्तरपदप्रकृतिस्वरेण वध्यशब्दे आद्युदात्तसिद्धिः । वस्तुतोऽसिवधशब्दाद्यदेव दुर्लभः । दण्डादिषु केवलस्यैव वधशब्दस्य पाठात् । प्रत्ययविधौ च तदन्तविधिप्रतिषेधात् ॥

# पोरदुपधात् ॥ ९८ ॥

अदुपधात्पवर्गान्ताद्धातोर्यत् । ण्यतोऽपवादः । शप्यम् । लभ्यम् । नच वैरूप्यात् ण्यदपि वासरूपन्यायेन स्यादिति वाच्यम् । नानुबन्धकृतमसारूप्यमिति सिद्धान्तात् ॥

## शकिहोश्च ॥ ९९ ॥

अन्यत् । सप्तम् ॥

## गदमदचरयमश्चानुपसर्गे ॥ १०० ॥

पञ्चम्यर्थे सप्तमी । अनुपसर्गेभ्य एभ्यो यत् । अथवा एभ्यो यत्स्यान्नतूपसर्गयोगे । गद्यम् । मद्यम् । चर्यम् ।

'चरेराङिचागुराविति वक्तव्यम्'। आचर्यो देशः। अगुरौ किम्। आचार्यःइसत्र ण्यदेव स्यात् । नच यमेः पोरदुपधादित्येव सिद्धमिति वाच्यम् । सोपसर्गान्माभूदित्येव नियमार्थत्वात् । तेन प्रयाम्यमिति ण्यदेव । नचैवमनियम्यस्य नायुक्तिः । त्वया नियम्या ननु दिव्यचक्षुषेत्यादीनामनुपपत्तिः । 'तेन न तत्र भवेद्विनियम्य'मितिवार्तिकप्रयोगान्निपूर्वादपि यदनुमानात् ।

यत्तु यमः समुपनिपुचेतिवैकल्पिकेऽप्प्रत्यये नियमशब्दः तत्रसाधुरिति यत्प्रत्यये नियम्यशब्दः साध्यः । नचैवंकृद्योगषष्ठ्यापत्तौ तेनेति त्वयेतिच कर्तरि तृतीया दुर्लभा । अपः कृत्यसंज्ञाविरहेण कृत्यानां कर्तरीत्यस्याप्रवृत्तेरिति वाच्यम् । करणे तृतीयोपपत्तेः । यद्वा पर्यवमितं नियमयन्नित्यादाविव यमोऽपरिवेषणे मिदिति मतमाश्रित्य ण्यन्ताद्यद्बोध्यः । अथवा ण्यत्येव संज्ञापूर्वकत्वान्न वृद्धिरिति तच्चिन्त्यम् क्लिष्टत्वात् । त्वयेति करणत्वे कर्तुरध्याहारापत्तेः । ण्यर्थस्याविवक्षितत्वकल्पनात् । संज्ञापूर्वक इत्यस्याप्यनित्यत्वात् ।

# अवद्यपण्यवर्या गर्ह्यप-णितव्यानिरोधेषु ॥ १०१ ॥

यथाक्रममर्थत्रये निपात्यन्ते । नञ्युपपदे वदः सुपीति यत्क्यपोः प्राप्तौ यदेव स च गर्ह्यायामेवेति नियमद्वयार्थं निपातनम् । अवद्य पापम् । गर्ह्येति किम् । अनुद्यं गुरुनाम । अत्र क्यबेव । अगर्ह्यत्वेऽपि वदनानर्हत्वात् । आत्मनाम गुरोर्नामेति स्मृत्या तदुच्चारणनिषेधात् पण्या गौः । व्यवहर्तव्येत्यर्थः । पाण्यमन्यत् । स्तुत्यर्हमित्यर्थः । नच पणितव्यशब्दस्योभयसाधारण्यात्कथं स्तुत्यर्थस्य बहिर्भाव इति वाच्यम् । रूढ्यार्थनियमलाभात् ।

धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च ।

अनुबन्धविकाराणां रूढ्यर्थंच निपातनम् ॥

इत्युक्तेः । शतेन वर्या कन्या वरयितॄणां नियमाभावात् । वृत्योयत् । अनिरोधरूपार्थस्य संभक्तिवाचिन्येव सौष्ठवादिति संप्रदायः । वृङस्तु वृत्येति वक्ष्यते । अत्रवर्येत्यन्ते निर्विभक्तिको निर्देशः । नतु द्वन्द्वः । तेन वर्येति निपातः स्त्रियामेव । अस्त्रियां तु ण्यत् । वार्या ऋत्विज इति वृत्तिः । केचित्तु द्वन्द्वएव । सुग्रीवो मम वर्योऽसाविति भट्टिप्रयोगादित्याहुः ।

# वह्यं करणम् ॥ १०२ ॥

वहन्त्यनेन वह्यं शकटम् । कर्मणि तु वाह्यम् । हलन्तत्वाण्ण्यत् । वोढव्यमित्यर्थः ।

# अर्यः स्वामिवैश्ययोः ॥१०३॥

ऋदन्तत्वात्प्राप्तस्य ण्यतोऽपवादः । 'स्वामिन्यन्तोदात्तत्वं वक्तव्यम्' स्वामीति किम् । आर्यो ब्राह्मणः । प्राप्तव्य इत्यर्थः ।

## उपसर्या काल्या प्रजने ॥ १०४ ॥

प्रजने गर्भग्रहणे काल्या प्राप्तकाला चेदित्यर्थः । तदस्य प्राप्तमित्यनुवृत्तौ वर्तमाने कालाद्यत् । उपसर्या गौः । गर्भाधानार्थं वृषभेण गन्तुं योग्या । प्रजनेत्यादि किम् । उपसार्या काशी । प्राप्तुमर्हेत्यर्थः ।

## अजर्यं संगतम् ॥ १०५ ॥

नञ्पूर्वाज्जीर्यतेः कर्तरि यत् संगतस्य विशेष्यत्वे । तेन सङ्गतप्रयोगोऽप्यपेक्षणीयः । तेन सङ्गतमार्येण रामाजर्यं कुरु द्रुतमिति भट्टिः । मृगैरजर्यं जरसोपदिष्टमिति कालिदासप्रयोगे तु तदध्याहार्यम् । केचित्तु जरणाभावविशेष्यसङ्गतेऽजर्यपदस्याजहल्लक्षणेत्याहुः । तन्न । सङ्गतस्याजर्यपदाभिन्नपदजन्यधीविशेष्यत्वस्य सूत्रार्थतो लाभात् । अन्यथा योगरूढेरेव दुर्वारत्वात् । नच भट्टिप्रयोगे पौनरुक्त्यापत्तिशङ्काधिका । तत्र विशेषणमात्रपरतायाः सम्भवात् ।

## वदः सुपि क्यप् च ॥ १०६ ॥

अनुपसर्ग इति वर्तते । उत्तरसूत्राद्भावपदापकर्षः । वदेर्भावे क्यप् स्यात् चाद्यत् । उपसर्गभिन्ने सुप्युपपदे । ब्रह्मोद्यम् । कित्त्वात्संप्रसारणम् । यति ब्रह्मवद्यम् । ब्रह्मणो वेदस्य वदनमित्यर्थः । कर्मण्ययमित्यन्ये । भावग्रहणमुत्तरार्थमित्युत्तरसूत्रभाष्यस्वारस्यात् । उपसर्गे तु अनुवाद्यम् । अपवाद्यम् । अनूद्येति क्यप्प्रयो

मस्तु कश्चित्कोऽसाधुः ।

## भुवो भावे ॥ १०७ ॥

क्यप् स्यात् । ब्रह्मणो भावो ब्रह्मभूयम् । भाव इत्युत्तरार्थम् । भुवोऽकर्मकत्वेन व्यावर्त्याभावादिति भाष्यम् । प्राप्त्यर्थस्य सकर्मकत्वेऽपि प्रथममनुपस्थितत्वात् । कालादिकर्मणि त्वनभिधानादिति कैयटः ।

## हनस्त च ॥ १०८ ॥

क्यप् स्यादुपसर्गभिन्ने सुपि उपपदे तकारश्चान्तादेशः 'स्त्रियां चिदिति वक्तव्यम्' । चित्त्वादन्तोदात्तत्वम् । ब्रह्मणो हननं ब्रह्महत्या । स्त्रीत्वं लिङ्गस्य लोकाश्रयत्वात् । दस्युहत्यायेति भाष्योदाहृतश्रौतप्रयोगे तु क्लीबत्वं छान्दसमिति कैयटः ।

## एतिस्तुशास्वृदृजुषः क्यप् ॥ १०९ ॥

इत्यः स्तुत्यः । वृत्यः । वृङ्इत वृञो ग्रहणं नतु वृङः । ईडवन्दवृशंसदुहां ण्यत इत्यत्र आत्मनेपदिभ्यां ईडवन्दिभ्यां साहचर्येण वृङ एवोपादानात् । वृङस्तु वार्या ऋत्विजः । आदृत्यः । दृधातोराङ्पूर्वस्यैव प्रयोगात् । सर्वत्र ह्रस्वस्य पिति कृतीति तुक् । शिष्यः । शास इदङ्हलोरितीत्वम् । शासिवसीति षत्वम् । जुष्यः । क्यपि प्रकृते पुनः क्यब्ग्रहणं पूर्वस्मादस्य वैलक्षण्यसूचनार्थम् । तेन पूर्वश्छन्दसि स्त्रियां चिद्भवतीति सिद्धम् । न चेत्र मत्र ष्टस्तुत्य इत्यत्र ओरावश्यके इति ण्यदापत्तिः । पूर्वविप्रतिषेधवचनेन क्यप्सिद्धेः । यदि तु पुनः क्यब्ग्रहणस्येदमेव प्रयोजनं तर्हि चित्त्वं वाचनिकं बोध्यम् ।

'आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम्' । अञ्जू व्यक्त्यादौ । बाहुलकात्करणे क्यप् । अनिदितामिति नलोपः । अज्यतेऽनेनेत्याज्यम् । नच दीर्घानुपपत्तिः । आङ्पूर्वत्वात् । ण्यति तु उपधालोपो न स्यात् । नचाङः पदत्वादवग्रहप्रसङ्गः । न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यमितीष्टापत्तेः संहितैव ह्यपौरुषेयी । पदच्छेदस्तु पौरुषेयः । अतएव यत्रार्थनिश्चयो नास्ति तत्र नावग्रहः । तदुक्तम् । हरिद्रुरनवगृह्य इति । हरिशब्दो हरिच्छब्दो वेति संदेहात् ।

## ऋदुपधाच्चाकॢपिचृतेः ॥ ११० ॥

कॢपिचृतिव्यतिरिक्तादृदुपधात्क्यप् । वृत्यम् । वृध्यम् । कित्त्वान्न गुणः । अकॢपीति किम् । कल्प्यम् । चर्त्यम् । ण्यद्गुणौ । तपरः किम् । कीर्त्यम् । णिजभावपक्षे ण्यत् । णिचि तु अचो यत् ।

## ई च खनः ॥ १११ ॥

चात्क्यप् । खेयम् । अत्र भाष्यम् । इकारो ह्रस्व एव विधेयः । आद्गुणेन रूपसिद्धेरविशेषात् । नच षत्वतुकोरित्येकादेशस्यासिद्धत्वादधीत्येत्यादाविव तुक्प्रसङ्गः पदान्तपदाद्योरेकादेशस्यैवासिद्धत्वस्वीकारात् । अन्यथा वृक्षेच्छत्रमित्यत्र ह्रस्वाश्रयस्य नित्यस्य तुकः प्रसङ्गात् । दीर्घात्पदान्ताद्वेति वैकल्पिकस्येष्टत्वात् ।

केचित्तु प्रश्लेषनिर्देशेन द्वितीय इकारो ये विभाषेत्यात्वस्य पक्षे परत्वात्प्राप्तस्य बाधाय विधीयते । येविभाषेत्यात्वस्यावकाशः खायते । इत्वस्यावकाशआत्वाभावपक्षे । आत्वपक्षे तूभयप्रसङ्गे परत्वादात्वमेव स्यादिति कल्पयन्ति । तन्न । क्यप्संनियोग-

शिष्टत्वेनैत्वस्यान्तरङ्गत्वात् । यकारादौ प्रत्यये परे विधीयमानस्यात्वस्य बहिरङ्गत्वात् । अन्तरङ्गबहिरङ्गयोश्च विप्रतिषेधायोगात् । नच ये इति विषयसप्तम्याश्रयणादात्वस्यैव परनिमित्तत्वाभावादन्तरङ्गत्वमिति वाच्यम् । परसप्तम्या एव तत्र युक्तत्वात् इति कैयटः ।

# भृञोऽसंज्ञायाम् ॥ ११२ ॥

भृत्याः कर्मकराः । भरणीया इत्यर्थः । 'समश्च बहुलम्' । संभृत्याः। पक्षे सम्भार्याः । नचसंज्ञायामिति प्रतिषेधस्य संनिधानादेतत्सूत्रप्राप्तिमात्रविषयत्वात्संज्ञायां समजनिषदेत्यादिना क्यपो दुर्वारत्वम । तथाच भार्याशब्दो न सिध्येत । तथाचैतत्प्रतिषेधसामर्थ्याल्लक्षणान्तरप्राप्तस्यापि क्यपोऽय निषेध इति वाच्यम् । अस्त्रीसंज्ञानिषेधत्वेनोपपत्तेः । भार्यो नाम क्षत्रियः । कर्मव्युत्पत्त्या संज्ञापदस्य संज्ञिपरत्वात् ।

ननु संज्ञाया समजेत्यस्मादनन्तरं 'न स्त्रिया'मिति पाठ्यम् । तथाच स्त्रियामित्यधिकाराद्विधौ शास्त्रीयस्त्रीग्रहणाद्भृत्येति क्यप् । निषेधे तु स्तनकेशवतीति लौकिकस्त्रीग्रहणात्क्यपो निषेधे ण्यत्प्रत्यये भार्येतिचेत् । मैवम् । सूत्रभेदापत्तेः । उच्यते संज्ञायामिति सूत्रे व्रजयजोर्भावे क्यबित्यस्माद्भावपदानुवृत्तेः । भार्याशब्दस्य तु कर्मसाधनत्वान्न तत्र क्यप्प्रसङ्गः ।

अथवा विधिप्रदेशेषु संज्ञाशब्दो न कर्मसाधनः किंतु भावसाधनः। तेन प्रत्ययान्तेन यदि रूढिर्गम्यते ततः प्रत्ययः। भृत्याशब्देन च गृहिण्यनभिधानान्न क्यप्। तथाच वार्तिकम् ।

संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिध्यति ।
स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिध्यति ।

यद्वा बाहुलकाण्यत् । तथाचोक्तम् ।

अथवा बहुलं कृत्याः संज्ञायामिति चेत्स्मृतम् ॥

यथा यत् यथा भित्ति स्तथैव सा ।

यथा अजन्ताद्विहितो यत् बाहुलकात्कचिद्धलन्तादपि । यथा वा भित्तिरित्यङ्विषये क्तिन्नित्यर्थः । केचित्तु बिभर्त्तेर्भृ इति दीर्घान्तात् ऋचोदर्त्वाण्यत् । क्यप् तुभरतेस्तौदादिकादेव । तदनुबन्धकग्रहणे नातदनुबन्धकस्येत्याहुः ।

## मृजेर्विभाषा ॥ ११३ ॥

क्यप् मृज्यः। पक्षे ण्यत् । मार्ग्यः। मृजेर्वृद्धिः। चजोरिति कुत्वम् ।

## राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ॥११४॥

एते निपात्यन्ते । राज्ञा सोतव्योऽभिषवद्वारा निष्पादयितव्यः । राजानं क्रीणातीत्यादिदर्शनाल्लतात्मकः सोमः सूयते कण्डयनेऽत्रेत्यधिकरणे क्यप् । निपातनाद्दीर्घः । राजसूयस्य पवित्रष्टिसोमात्मकषोडशप्रधानरूपत्वेऽपि एकदेशसंबन्धस्यापि प्रवृत्तिनिमित्तत्वम्। वैश्वदेवेन यजेतेत्यादावेकदेशवर्तिनापि विश्वदेवसंबन्धेन वैश्वदेवपदस्य यागाष्टकपरत्वदर्शनात् । सूर्यरुच्याव्यथ्याः कर्तरि । सरतीति सूर्यः निपातनादुत्वम् । यद्वा षू प्रेरणे तुदादिः । सुवति कर्मणि प्रेरयति लोकान् । क्यपो रुट् निपातनात् । मृषेत्युपपदादेव वदेः कर्मणि नित्यं क्यप् । तेन यत् न । विशेष्यलिङ्गोऽयम् ।

क्षीरे पयस्याऽपि पदे द्रव्यवाचिभूयं नानार्थकोषविषयोऽद्य मृषोद्यमस्तु ।

अर्थद्वयवाचित्वं मृषोद्यं मृषेति वक्तव्यमस्तित्वत्यन्वयः । उच्छ्रायसौन्दर्यगुणा मृषोद्याः । रोचने रुच्यः । सुन्दरं रुच्यमित्यमरः । कुप्यं संज्ञायाम् । स्वर्णरजताभ्यामन्यत्कुप्यम् । गुपेरादेः कुत्वम् । कृष्टपच्यस्यान्तोदात्तत्वं कर्मकर्तरि च । कृष्टे स्वयमेव पच्यन्ते कृष्टपच्याः । कृष्टपच्याश्च मेऽकृष्टपच्याश्च मे । शुद्धे कर्तरि कृष्टपाक्याः । न व्यथतेऽव्यथ्यः ॥

# भिद्योद्ध्यौ नदे ॥ ११५ ॥

भिदेरुज्झेश्च क्यप् । उज्झेर्धत्वंच । भिनत्ति कूलं भिद्यः । उज्झत्युदकं उध्यः । अजाद्यदन्तमित्यस्यानित्यत्वात् भिद्यपदस्य पूर्वनिपातः । नदे किम् । भेत्ता उज्झिता ॥

# पुष्यसिध्यौ नक्षत्रे ॥११६॥

पुष्यति सिध्यतिभ्यामधिकरणे क्यप् । पुष्यन्ति सिध्यन्तिवास्मिन्नर्थाः पुष्यः सिध्यः ॥

# विपूयविनीयजित्या मुञ्जकल्कहलिषु ॥ ११७ ॥

पूञ्नीञ्जिभ्यः क्यप् । विपूयो मुञ्जः । रज्ज्वादिकरणाय शोधनीयः विनीयः कल्कः । पिष्ट औषधिविशेषः पापं वा । तपो न कल्कोऽध्ययनं न कल्क इत्युपक्रम्य तान्येव भावोपहतानि कल्कः इति भारतात् । कल्कः पापाशये पापं इति कोषाच्च ।

जिसो हलिः । बलेन कृष्टव्यः । कृष्टसमीकरणार्थं स्थूलकाष्ठम् । एषु किम् । अन्यत्र यदेव । विपव्यम् । विनेयम् । जेयम् ॥

## प्रत्यपिभ्यां ग्रहेः ॥ ११८ ॥

'क्यप् छन्दसीति वक्तव्यम्' । मत्तस्य न प्रतिगृह्यम् । अन्यत्र प्रतिग्राह्यम् । अपिग्राह्यम् ॥

## पदास्वैरिबाह्यापक्ष्येषु च ॥११९॥

अवगृह्यं प्रगृह्यं पदम् । गृह्योऽस्वैरी परतन्त्र इत्यर्थः ।

गृहासक्ताः पक्षिमृगाः छेकास्ते गृह्यकाश्च ते ॥

इत्यमरः । ग्रामगृह्या सेना । तस्माद्बाह्येत्यर्थः । स्त्रीनिर्देशादपुन्नपुंसकयोर्न । पक्षे भवः पक्ष्यः । दिगादित्वाद्यत् । आर्यैर्गृह्यते आर्यगृह्यः । तत्पक्षाश्रित इत्यर्थः । तमार्यगृह्यं निगृहीतधेनुरिति कालिदासः ।

## विभाषा कृवृषोः ॥ १२० ॥

कृत्यम् । वृष्यम् । पक्षे ण्यत् । कार्यम् । वर्ष्यम् ॥

## युग्यं च पत्रे ॥ १२१ ॥

पत्रं वाहनम् युजेः क्यप् कुत्वं च । ण्यद्व्यावृत्तये सूत्रम् । तद्वहतिरथयुगेति तद्धितेनापि सिद्धेः ॥

## अमावस्यदन्यतरस्याम् ॥१२२॥

नन्वत्र किं निपात्यते यत्प्रत्यये पाक्षिकी वृद्धिर्वा ण्यत्प्रत्यये पाक्षिको ह्रस्वो वा । प्रत्ययस्तमितप्रकृतिप्रत्ययविभागसमुदायद्वयं वा ।

नाद्यः । अमावास्याया वेत्यत्र अमावस्याशब्दानुपादानप्रसङ्गात् । विकृतिग्रहणेन प्रकृतेरग्रहणात् । यतोनाव इत्युत्तरपदाद्युदात्तप्रसङ्गाच्च । अन्तस्वरितस्यैवेष्यमाणत्वात् । न द्वितीयः । कृतायां वृद्धौ स्वरतद्धितयोः सिद्धावपि प्रकरणविरोधात् । नान्त्यः । तित्प्रत्ययग्रहणेन स्वरितानुपपत्तेः । मैवम् । ण्यत्प्रत्यये पाक्षिकस्य ह्रस्वस्य निपातनात् । एकदेशविकृतन्यायेनामावस्याशब्दस्यापि ग्रहणोपपत्तेः । अमावास्याशब्दस्य प्रकृतित्वादमावस्याशब्दस्य विकृतित्वात् । नचैवं ण्यत्प्रकरणे एवास्य पाठापत्तिः ॥(१)

# छन्दसिनिष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ॥ १२३ ॥

एतानि निपात्यन्ते 'निष्टर्क्ये कृतेराद्यन्तविपर्यासः' कृतधातौ ककारस्यान्तत्वं तकारस्य चादित्वं यथा तर्कुरित्यादावित्यर्थः । कृतेः कुरित्यौणादिकः कुप्रत्ययः ॥ अत्र श्लोकवार्तिकम् ।

---

( १ ) अत्र मूले किंचित्त्रुटितः पाठः ।

निष्टर्क्यं व्यत्यय विधानिमः षत्वं निपातनात् ।
व्यहृयादेश इत्येतावुपचाय्ये निपातितौ ॥
व्यदेकस्माच्चतुर्भ्यः क्यप् चतुर्भ्यश्च यतो विधिः ।
व्यदेकस्माद्यशब्दश्च द्वौ क्यपौ व्यविधिश्चतुः ॥

निस्पूर्वकात्कृन्ततेः क्यपि प्राप्ते ण्यत् । ककारतकारयोर्व्यत्यासः । उपसर्गसकारस्य षत्वंच । निष्टर्क्यं चिन्वीत पशुकामः । देवहूयादिचतुष्टये चतुर्भ्यः क्यप् । कित्वान्न गुणः । उपसर्गभेदाञ्चयतेर्भेदः । मर्यादिचतुष्टये यत् । यतोनाव इत्याद्युदात्तत्वम् । खान्य इति ण्यत् । देवयज्येति यकारः । आपृच्छेत्यादि द्वये क्यप् । कित्वात्संप्रसारणगुणाभावौ । ब्रह्मत्राद्यादिचतुष्टये ण्यत् । चतुरिति सुजन्तम् । चतुरो वारान् यद्द्वीयते इत्यर्थः । उपचाय्येति पृडशब्देउत्तरपदे निपातः । 'हिरण्य इति वक्तव्यम्' उपचेयपृडमन्यत् मृड सुखने पृड चेत्यस्मादिगुपधत्वात्कः ॥

# ऋहलोर्ण्यत् ॥ १२४ ॥

पञ्चमी पञ्चम्यर्थे । ऋदन्ताद्धलन्ताच्च ण्यत् । नच ऋ गताविल्यस्यैव ग्रहणमस्त्विति वाच्यम् । हल्साहचर्येण वर्णग्रहणात् । पर कार्यमिति निर्देशात् । ईडवन्देत्यादि लिङ्गाच्च । अन्यथा वृधातूत्तरस्य ण्यतोऽप्रसिद्धेः । कार्यम् । वर्ष्यम् ।

'पाणौ सृजेर्ण्यद्वाच्यः' ।ऋदुपधादिति प्राप्तस्य क्यपोऽपवादः । पाणिभ्यां सृज्यते इति पाणिसर्ग्या रज्जुः । 'समवपूर्वाच्च' समवसर्ग्या । 'लपिदभिभ्यां चेतिवक्तव्यम्' । पोरदुपधादितियतोऽपवादः । अपलाप्यम् अपदाभ्यम् । दभिर्वार्तिकबलाल्लब्धधातुभावः । विष्णुर्गोपा अदाभ्यः । न मा नशन्ति न दभाति तस्कर इत्यादिप्रयोगात् । वृत्तिकारस्तु आसुयु इत्यादिसूत्रे रपेरुत्तरं

त्वमि पठित्वा चकारेण द्वेः संग्रह इत्याह । तदुक्तभाष्यवार्तिकविरुद्धम् ॥

# ओरावश्यके ॥ १२५ ॥

अवश्यभाव आवश्यकम् । मनोज्ञादित्वाद्वुञ् । अव्ययानां भमात्रे टिलोपः । तत्र द्योत्ये उवर्णान्ताद्धातोर्ण्यत् । अचो यदित्यस्यापवादः । लाव्यम् । पाव्यम् । अचो ञ्णितीति वृद्धिः । वान्तो यिप्रत्यये इत्यवादेशः । क्वचित्स्वपष्ठार्थे अवश्यपदस्यापि प्रयोगः । अवश्यलाव्यम् । 'लुम्पेदवश्यमः कृत्ये' इति मकारलोपः । मयूरव्यंसकादेराकृतिगणत्वात्समासः । नचैवं समासान्तोदात्तप्रसङ्गः । मयूरव्यंसकादिषु उत्तरपदप्रकृतिस्वरस्य निपातनात्सिद्धेः ॥

# आसुयुवपिरपित्रपिचमश्च ॥ १२६ ॥

आङ्पूर्वात्सुञ् अभिषवे इत्यस्मात् । आसाव्यः । यु मिश्रणे । याव्यः । युञ् बन्धने इत्यस्य तु न ग्रहणम् । सानुबन्धकत्वात् । वपादीनां चतुर्णामुपादानं पोरदुपधादिति यतो बाधनार्थम् । वाप्यम् । राप्यम् । त्राप्यम् । चाम्यम् ॥

# आनाय्योऽनित्ये ॥ १२७ ॥

अत्र वार्तिकम् ।

आनाय्योऽनित्य इति चेद्दाक्षिणाग्नौ कृतं भवेत् ।

एकयोनौ तु तं विद्यादानेयो ह्यन्यथा भवेत् ।

अनित्यमात्रे उक्तनिपातने घटादावतिप्रसङ्गः ।

अतो दक्षिणाग्नाविति वक्तव्यम् । तत्रापि एकयोनाविति

वाच्यम् आहवनीयेन सह यो गार्हपत्यादानीयते स एकयोनिर्दक्षिणाग्निः। अनित्यत्वं च तस्य सततमप्रज्वलनात्। यस्तु वैश्यकुलादेरानीयते तत्र नायं निपात इत्यर्थः। 'वैश्यकुलाद्वित्तवतो भ्राष्ट्राद्वा गार्हपत्याद्वेति दक्षिणाग्नेर्योनिविकल्पश्रवणात्।

यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते।

तस्मिन्नानाय्य इत्यमरः॥

# प्रणाय्योऽसंमतौ ॥ १२८ ॥

संमतिः प्रीतिविषयत्वम्। प्रणाय्यश्चौरः। प्रीत्यनर्हत्वात्। भोगेच्छापि संमतिः। प्रणाय्योऽन्तेवासी। विरक्त इत्यर्थः। प्रणेयोऽन्यः।

# पाय्यसांनाय्यनिकाय्यधाय्यामानहविर्निवाससामिधेनीषु। १२९॥

मीयतेऽनेनेति पाय्यं मानम्। करणे ण्यत्। मस्य पत्वम्। आतो युक्। सम्यक् नीयते होमार्थमग्निं प्रतीति सान्नाय्यं हविः। दर्शेऽग्नीषोमीययागे ण्यदायादेशौ समो दीर्घश्च। निचीयते धान्यादिकमत्रेति निकाय्यो निवासः। ण्यदायादेशौ धात्वादेश्च कत्वम्। धीयतेऽनया समिदिति धाय्या ऋक्। प्रकृतौ पञ्चदश सामिधेन्यः श्रूयन्ते। साप्तदश्यस्य मित्रविन्दादिविकृतिविशेषविषयकत्वात्। 'एकविंशतिमनुब्रूया'दित्यादौ विकृतिविशेषे सामिधेनीवृद्धिश्रुतौ आगम्यमानानामृचां कुत्र देशे निवेश इति संदेहे इयं वै समिध्यमानवती असौ समिद्धवती यदन्तरा तद्धाय्या इति द्यावापृथिवीत्वेन कल्पितयोः समिध्यमानसमिध्यवत्योर्मध्ये धाय्या-

नामाकाशत्वेन संस्तवात् पूर्वासां चागन्तूनामृचां धीयमानतया धाय्यात्वात् । तन्मध्ये निवेश इति पूर्वपक्षः । धीयमानत्वं न धाय्याशब्दप्रवृत्तिनिमित्तम् स्तोभादिविधौ स्तुतशस्त्रार्थतया धीयमानासु तच्छब्दप्रयोगाभावात् । किन्तु पृथुपाजवत्यौ धाय्ये इत्यादिवेदप्रयोगो यत्र पृथुपाजाअमर्त्य इत्यादौ ता एव । अत आगन्तुत्वाविशेषेऽपि धाय्यापदवाच्यानामेव समिध्यमानसमिद्धवत्योर्मध्ये निवेशोऽन्यासामागन्तूनामन्ते एवेति सिद्धान्तः । तस्मादत्र सामिधेनीपद तद्विशेषपरं बोध्यम । मानेत्यादि किम् । अन्यत्र मेयम् । निचेयम् । संनेयम् । धेयम् ॥

## क्रतौ कुण्डपाय्यसंचाय्यौ॥१३०॥

कुण्डेन पीयते सोमोऽस्मिन् कुण्डपाय्यः क्रतुः । अधिकरणे यत् । नतु ण्यत् । नित्स्वरापत्तेः । यतोनाव इत्याद्युदात्तः पाय्य शब्दः । समासे कृदुत्तरपदप्रकृतिस्वरः । तथाच वार्तिकम् । 'कुण्डपाय्ये यद्विधि'रिति । संचीयतेऽसौ संचाय्यः । कर्मणि ण्यत् आयादेशः क्रतौ किम् । कुण्डपानं संचेयः ।

## अग्नौ परिचाय्योपचाय्यसमूह्याः ॥ १३१ ॥

अग्निपदेन तद्धारणार्थमिष्टकानिर्मितस्थलं ग्राह्यम् इष्टकाभिरग्निं चिनुते इत्यादिदर्शनात् । पर्य्युपपूर्वाच्चिनोतेर्ण्यदायादेशौ ॥ संपूर्वस्य वहेः संप्रसारणदीर्घौ । भाष्येतु ऊहतेरेव ण्यत्प्रत्यये सिद्धेः समूह्येति न कर्तव्यम् । नानार्थतया ऊहेर्वह्यर्थत्वात् । समूह्यं चिन्वीत पशुकामः । पशवो वै पुरुषाः पशूनेवास्मै तत्समूह-

तीति ब्राह्मणप्रयोगादित्युक्तम् ॥

# चित्याग्निचित्ये च ॥ १३२ ॥

अग्निपदमनुवर्तते । तच्चाद्यस्यैव विशेषणम् । न द्वितीयस्य तस्य भावार्थत्वेन अग्निवाचकत्वायोगात् चीयतेऽसौ चित्योऽग्निः । कर्मणि क्यप् । अग्नेश्चयनमग्निचित्येति भावे । अन्तोदात्तावेतौ ॥

कृत्याधिकारः समाप्तः ।

# ण्वुल् तृचौ ॥ १३३ ॥

धातोरेतौ कर्तरि स्तः।कारकः,कर्ता। चित्त्वं तु न स्वरार्थम्।एकत्वेनाद्युदात्तान्तोदात्तयोर्विशेषाभावात् । नप्तृनृतृच् इत्यत्र विशेषणार्थः । तृमात्रग्रहणे मातरावित्यादावतिव्याप्तेरिति वाच्यम् । नप्तृग्रहणस्य नियमार्थत्वात् व्युत्पत्तिपक्षे औणादिकतृमत्यथान्तानां मध्ये नप्तृशब्दस्यैव दीर्घो नान्येषामिति । किन्तु तुश्छन्दसि तुरिष्ठेमेयः सु इत्यत्र सामान्यग्रहणविधानार्थः 'अन्यथा तत्र निरनुबन्धकत्वादयमेव गृह्येत नतु तृनादयः ।

# नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ॥ १३४ ॥

यथाक्रमं स्युः । नन्दयतीति नन्दनः ग्राही पचः । 'अजपि सर्वधातुभ्यो वक्तव्यः' । पचादिगणारम्भस्त्वनुबन्धासञ्जनार्थः । नदट् नदी । चोरट् चोरी । जारभरश्वपचशब्दयोः कर्मण्यणो बाधनार्थं च । पक्षे त्वणापि न्यङ्क्वादिगणे श्वपाकशब्दपाठात् ।

## इगुपधज्ञाप्रीकिरः कः ॥ १३५ ॥

एभ्यः कः स्यात् । क्षिपः । बुधः । ज्ञः । प्रियः किरः । वासरूपन्यायेन ण्वुल्तृचौ । क्षेपकः । क्षेप्तेत्यादि ।

## आतश्चोपसर्गे ॥१३६॥

श्याद्व्यधेति णस्यापवादः । सुग्लः । प्रज्ञः ॥

## पाघ्राध्माधेट्दृशः शः ॥१३७॥

शित्वात्पिबाद्यादेशः । सार्वधातुकमपिदिति ङित्त्वात्पिबेर्न गुणः । पिबः जिघ्रः । धमः । धयः । धया कन्या । धेटष्टित्त्वात्स्तनन्धयीति स्वशीत्वात्रापि ङीप्प्राप्तः स्वशो ऽन्यत्र नेष्यत इति हरदत्तादयः । पश्यः । संज्ञायां न । व्याघ्रादिभिरिति प्रयोगात् । अयं च शप्रत्ययस्य निषेधो न जिघ्रभावस्य । कप्रत्ययं विनाऽऽतोलोपस्य दुर्लभत्वात् । उपसर्गग्रहणस्य नेहानुवृत्तिः । धयैरामोदमुत्तमं । फलानि धूमस्य धयानधोमुखान् । यथोचितं कर्तुमिदं पिबस्त्वेति भट्टिश्रीहर्षादिप्रयोगात् । यदा पश्यः पश्यति रुक्मवर्णमिति श्रौतप्रयोगाच्च ॥

## अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च ॥१३८॥

अनुपसर्गेभ्यः एभ्यः शः स्यात् । शित्वात्सार्वधातुकत्वम् । तुदादिभ्यः शः । शे मुचादीनामिति नुम् । लिम्पः । विन्दः लाभार्थस्यैव विन्देर्ग्रहणं नुमा निर्देशात् । ण्यन्तेषु आर्धधातुकत्वाभावान्न णिलोपः शप् गुणायादेशौ । धारयः । धृञ् धारणे । धृङ् अवस्थाने । द्वयोर्ण्यन्तयोरुपादानम् । नमह्यमत्रोत्तरधारयस्य ते इत्यत्र शेषषष्ठ्यन्तेन समासः । पारयः । पार कर्मसमाप्तौ । वेदयः । विद चेतनाख्यानादिषु । ज्ञानाद्यर्थानामन्यतमो वा हेतुमण्ण्यन्तः । उदेजयः । एजृ कम्पने । उत्पूर्वः । चेतयः । चिती सञ्ज्ञाने ण्यन्तः । सातयः । सातिः सुखार्थः सौत्रो ण्यन्तः । साहयः । षह मर्षणे चुरादिर्हेतुमण्ण्यन्तो वा । अनुपसर्गात्किम् । प्रलिपः । इगुपधत्वात्कः । 'नौ लिम्पेर्वाच्यः' । निलिम्पा देवाः । गवादिषु विन्देः संज्ञायाम् । गोविन्दः । अरविन्दम् । कर्मण्यणो बाधः ॥

# ददातिदधात्योर्विभाषा ॥ १३९ ॥

शः स्यात् । पक्षे आदन्तत्वाद्वक्ष्यमाणो णः । ददः । दधः । सोपसर्गात्तु प्रदः । प्रधः । ननु दद दाने दध धारणे आभ्यां पचाद्यचि ददो दध इति । दाञ् धाञ्भ्यां णे दायो धाय इति च सिद्धम् । उच्यते अददः अदध इत्यत्राव्ययपूर्वपदप्रकृतिस्वरासिध्यर्थं सूत्रम् । अचि अच्कावशक्तावित्यन्तोदात्तप्रसङ्गात् ॥

# ज्वलितिकसन्तेभ्यो णः ॥ १४० ॥

इति शब्द आद्यर्थः । अनुपसर्गेभ्यो ज्वलादिभ्यः कसन्तेभ्यो णः स्यात् । पक्षेऽच् । ज्वालः । ज्वलः । चालः । चलः । सोपसर्गेभ्यस्तु उज्ज्वलः । 'तनोतेरुपसंख्यानाम्'। अत्रानुपसर्गविभाषयो नान्वयः । अवतान इति भाष्योदाहरणात् ॥

# श्याद्व्यधास्रुसंस्र्वतीणवसावहृ-लिहश्लिषश्वसश्च ॥१४१॥

एभ्यो नित्यं णः स्यात्। उत्तरसूत्रेऽनुपसर्गग्रहणादत्रानुपसर्ग-ग्रहणनिवृत्तौ तत्संबद्धस्य विभाषाग्रहणस्यापि निवृत्तेः। श्यैङ् आदन्ता इत्यादिच्छेदः। इह कृतयणादेशस्य शीङोः अतगता-वित्यस्याच्छब्दान्तानां पतत्यादीनां अदन्तानां वा न ग्रहणम्। व्याख्यानात्। नच श्यैङोऽवस्यतेश्चादन्तत्वादेव सिद्धौ पृथगुपा-दानवैयर्थ्यम्। आतश्चोपसर्गे इतिकप्रत्ययबाधनार्थत्वात्। अव-श्यायः। प्रतिश्यायः। दायः। धायः। स्रुगतौ आङ् संपूर्वः। आस्रावः सस्रावः। श्रु इति तालव्यं पठित्वा आश्रावः संश्राव इतिकेचित्। अत्यायः। अवसायः। अवहारः। लेहः। श्लेषः। श्वासः॥

# दुन्योरनुपसर्गे ॥१४२॥

णः स्यात्। सानुबन्धनीसाहचर्यात् टुदु उपतापे इत्यस्यैव ग्रहणम्। दुनोति दावः। दुगताविित्यतस्तु पचाद्यच्। दवतीति दवः। 'दवदावौ वनारण्यवह्नी' इत्यमरः। नयतीति नायः। उपसर्गे तु प्रदवः। प्रणयः॥

# विभाषा ग्रहः ॥१४३॥

व्यवस्थितविभाषया जलचरे ग्राहः। ज्योतिषि ग्रहः। भावाः पदार्था इत्यत्र भावयतेरच्। भव इत्यत्र भवतेः। 'भवतेश्चोपसं-ख्यान' मिति तु वृत्तिः॥

## गेहे कः ॥१४४॥

गेह इति नोपपदं किन्तु प्रत्ययार्थकर्तृनिर्देशः । गृहपतिना संयुक्ते ञ्य इत्यादिप्रयोगात् । गेहे कर्तरि ग्रहेः कः स्यात् । कित्वात्संप्रसारणम् । गृह्णाति धान्यादिकमिति गृहम् । तात्स्थ्याद् गृहा दाराः ।

केचित्तु गृह ग्रहणे इतिभ्वादेरिगुपधत्वात्के गृहशब्दसिद्धेरिदं सूत्रं व्यर्थमित्याहुः ॥

## शिल्पिनि ष्वुन् ॥१४५॥

क्रियाकौशलवति कर्तरि ष्वुन् स्यात् । 'नृति खनि रञ्जिभ्य इति वक्तव्यम्' । नर्तकः । खनकः । रजकः । रजकेत्याद्युपसंख्यानाद्रञ्जेर्नलोपः । षित्वान्नर्तकीत्यादि । भाष्ये तु रञ्जेः क्वुन् वक्ष्यते ॥

## गस्थकन् ॥१४६॥

गायतेस्थकन् स्यात् पूर्वविषये । गैशब्दे इत्यस्य ग्रहण गामादाग्रहणेष्वविशेष इति न्यायात् । गाङ्गताविस्यस्य तु न । गानशिल्पिन्येव गाथकशब्दस्य रूढत्वादिति संप्रदायः ॥

## ण्युट् च ॥१४७॥

गायनः । टित्वाङ्गायनी ॥

## हश्च व्रीहिकालयोः ॥१४८॥

हाङ् हाकोर्ण्युट् वा व्रीहौ कालेच वाच्ये । जहात्युदकमिति

हायनो व्रीहिः। प्ररोहार्थदत्तोदकादूर्ध्वगमनेन जलत्यागः । जहाति जिहीते वा पूर्वोत्तरभावानिति हायनो वर्षम् ॥

## प्रुसृल्वः समभिहारे वुन्॥१४९॥

'समभिहारस्थाने साधुकारिणीति वक्तव्यम्' समभिहारपदमेव वा तत्परतया नेयम् । सकृदपि यः सुष्ठु करोति तत्र यथा स्यात् । बहुशोऽपि दुष्ठुकर्तरि माभूत् । प्रवकः सरकः । लवकः ।

## आशिषि च ॥ १५० ॥

अन्यदीयहिताशंसनमाशीः । तद्विषयार्थवृत्तेर्धातोः कर्तरि वुन् स्यात् । जीवतादिति जीवकः । नन्दतादिति नन्दकः पित्रादेरियमुक्तिः। चिरकालीनत्वादिविशिष्टजीवनादिः प्रकृत्यर्थः । इच्छाविषयजीवनाश्रयत्वं च प्रत्ययार्थः । जीवनास्याश्रयत्वे तस्य चेच्छाविषयैकदेशे इच्छायामन्वयः इच्छायां प्रयोक्तृवृत्तित्वमर्थाद्भासते । तथाच चिरकालीनजीवनाश्रयत्वप्रकारकेच्छाविशेष्यः पुत्रादिरिति बोधः ।

इति श्रीसिद्धान्तसुधानिधौ तृतीयाध्यायस्य
प्रथमे पादे षष्ठमाह्निकम् ।
पादश्चायं समाप्तः ।

अथ द्वितीयः पादः

## कर्मण्यण् ॥ १ ॥

कर्मण्युपदे धातोरण् । कुम्भं करोतीति कुम्भकारः । कर्म-स्वरूपं प्राङ् निर्णीतम् । ग्रामं गच्छत्यादिसं पश्यतीत्यादावनभिधानान्नायम् । अणिकृते कृद्योगषष्ठ्यन्तस्य कुम्भशब्दस्य कुम्भ अस्कारेत्यलौकिकविग्रहवाक्ये उपपदमतिङिति समासइति-केचित् ।

तच्चिन्त्यम् । कर्मोपपदाभावे कर्मण्यणोऽनुपपत्त्या तदुत्पत्तेः प्राक् कृद्योगाभावेन द्वितीयोत्पत्तेरावश्यकत्वात्तस्या एव परित्यागे मानाभावादलौकिके समासविग्रहवाक्येऽप्यनुप्रवेशौचित्यात् । अन्यथा कृद्योगेऽपि षष्ठी तस्याच कृद्योग इत्यन्योन्याश्रयापत्तेः । कर्मसमर्पकप्रातिपदिकमात्रापेक्षायां च षष्ठ्या अपि विग्रहान्तर्भावस्य दुर्वारत्वात् । समर्थपरिभाषानुपस्थित्यापत्तेश्च । अतएव महान्तं कुम्भकार इत्याद्याप्राद्यवाक्ये विशेषणे द्वितीयैव भाष्यादौ दृश्यते । समासान्तर्गतस्य कुम्भस्य षष्ठ्यन्तत्वे तद्विशेषणे महच्छब्देऽपि तस्या एव प्रसङ्गात् । अतएव युगपदधिकरणवचने द्वन्द्व इति पक्षेऽपि प्रथमप्रवृत्तैकवचनस्यैवालौकिके विग्रहवाक्ये प्रवेश इति पूर्वं स्वयमेवोक्तम् । कुम्भस्य कर्तेत्यादौ कर्मयोगस्यानुपजीव्यत्वात्कर्त्रादौ तत्प्रत्ययोत्पत्तौ पश्चात्तद्योगे द्वितीयाद्यपवादेन षष्ठीति वैषम्यमिति दिक् ।

'अकारानुपपदात्कर्मोपपदो विप्रतिषेधेन' । यद्यपि सर्वधातुभ्योऽजितिपक्षे पचाद्यचा निर्मुक्तः कर्मण्यणोऽवकाशो न लभ्यत इति येननाप्राप्तिन्यायेनाणस्तद्बाधकत्वाद्विप्रतिषेधो नास्ति । उत्सर्गापवादयोरतुल्यबलत्वात् । तथापि काष्ठभेद इत्यत्र काणो-

विंप्रतिषेधो बोध्यः । अजपवादयोस्तयोर्विप्रतिषेधादणूप्रवृत्तेः । ओदनपाक इति भाष्यं तु गणपाठितघातुविषयोऽच्प्रत्यय इत्याशयेन नेयम् ।

'शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च' 'ईक्षिक्षमिभ्यां चेति वक्तव्यम्' मांसशीला मांसकामा मांसभक्षा । कल्याणाचारा । मांसशब्दः सप्रत्ययान्तत्वादन्तोदात्तः । कल्याणशब्दो लघावन्ते द्वयोश्च बह्वषो गुरुरिति मध्योदात्तः । तत्र कृदुत्तरप्रकृतिस्वरबाधार्थं पूर्वपदप्रकृतिस्वरारम्भः ।

ननु भक्षयतेरच् । एरजण्यन्तानामित्यस्य मुनित्रयेणानुक्तत्वात् । मांसं भक्षोऽस्येति बहुव्रीहिणैवोक्तस्वरसिद्धिः । न च बहवो भक्षा अस्येत्यत्र बहोर्नञ्वदुत्तरपदभूम्नीति अन्तोदात्तप्रसङ्गादुक्तवार्तिकप्रैोज्यमिति वाच्यम् । भावे भक्षपदं व्युत्पाद्य बहुषु भक्षोऽस्येति व्यधिकरणबहुव्रीहौ उत्तरपदत्वाभावेन तदप्रवृत्तौ बहुव्रीहौ प्रकृत्या पूर्वपदमित्यस्यैव प्रवृत्तेः । न चार्थसाम्ये बहुव्रीहिकर्मोपपदयोरर्थसाम्ये बहुव्रीहिर्न भवतीति वार्तिकेन ज्ञाप्यम् । काण्डलावो मांसकाम इत्यादिबहुव्रीहेरपीष्टत्वात् । अम्भोऽभिगम इत्यत्रानभिधानाद्बहुव्रीहिकर्मोपपदयोरभावादम्भोभिगामीत्यस्यैवेष्टत्वात् । सत्यम् । अणूबाधनार्थमेवैतदारम्भात् ॥

# ह्वावामश्च ॥ २ ॥

धाङ् मेङावेिह गृह्येते नतु मामाने इत्यकर्मकत्वात् । स्वर्गह्वायः । तन्तुवायः । धान्यमायः । कर्मण्यणिति सिद्धे वक्ष्यमाणकापवादार्थमारम्भः । तेनान्यत्राप्यादन्ताद्विहितः प्रत्ययः एजन्तात्सिद्धः । तथाच कैयटः ।

आत्वभाविन एजन्तादादन्तत्वनिबन्धनः ।

प्रत्ययो ज्ञाप्यते सर्वो ह्वाञामश्चैत्यणा पुनः ॥

# आतोऽनुपसर्गे कः॥ ३ ॥

अनुपसर्गादादन्ताद्धातोः कर्मणि उपपदे कः स्यात् । अणोऽपवादः । येवा दिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सहते सूर्येण हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोमप्रतिरन्त आयुः । सोपसर्गात्त्वण् गोसंदायः । 'कविधौसर्वत्र संप्रसारणिभ्योडः' । ब्रह्म जिनाति ब्रह्मज्यः । सर्वत्रेत्युक्तेरातश्चोपसर्गे इत्यस्यापि विषये । आह्वः । प्रह्वः ।

अत्रवार्तिकम् । नित्यं संप्रसारणं ह्वो यण् वार्णादाङ्गं न पूर्वत्वं हि । योऽनादिष्टादचः पूर्वस्तत्कार्ये स्थानिवत्वं हि । प्रोवाच भगवान् कात्यस्तेनासिद्धिर्यणस्तुते । आतः कोलिण् नैङः पूर्वः । सिद्धआह्वस्तथासति ।

अस्यार्थः—कप्रत्ययेनैव आह्व इत्यादि सिद्धम् । आह्वाडइत्यत्र संप्रसारणातोलोपयणादेशेषु अस्य सुसाधत्वात् । नच उवङ्प्रसङ्गः । आतोलोपस्य स्थानिवद्भावात् । नच परमप्यातोलोपं वाधित्वान्तरङ्गत्वात्पूर्वरूपापत्तिः । वार्णादाङ्गस्य बलवत्त्वात् । समानाश्रये एव तदङ्गीकारे तु ह्वाअइस्यवस्थायां संप्रसारणं बाधित्वातोलोपः । ततः संप्रसारणम् । आतोलोपस्य स्थानिवत्त्वान्नोवङ् । नच कृताकृतप्रसङ्गित्वात्संप्रसारणं नित्यम् । आतोलोपस्यापि तथात्वात् नच संप्रसारणेपूर्वरूपे च कृते आतोलोपस्य नप्रसङ्ग इति कथं स नित्य इति वाच्यम । यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदानित्यमिति स्वीकारात् । पूर्वरूपेणालोपस्य निमित्तापहारेऽपि संप्रसारणेन तदभावात् ।

ननु तथाप्यकारस्यानादिष्टादचः पूर्वत्वाभावादुवङि कर्तव्ये

कथं स्थानिवद्भावः । नच स्थानिद्वारकं तत् । उकारस्थानिनो ऽस्यातो लोपात्पूर्वसत्त्वादिति वाच्यम् । तस्याचः परस्मिन्नित्यत्र दूषितत्वात् । अत उवङ् दुर्वार इतिचेत् । न, तथासिद्धवदत्राभादित्यातोलोपस्यासिद्धत्वेन तद्वारणात् । उभयत्राप्यजादिप्रत्ययस्य निमित्तत्वेन समानाश्रयत्वात् । नन्वेवं जुहुवतुरित्यादेरसिद्धिः । तत्राशितीति पर्युदासपक्षे एकारस्यैवातोलोपं बाधित्वापरत्वात्पूर्वरूपप्रवृत्तेः । ननु संप्रसारणं बाधित्वा परत्वादात्वप्रवृत्तौ तदानीं पूर्वरूपप्रसक्त्यभावादातो लोप इतिचेत्सत्यम् ।

एङः पदान्तादित्यत्र एङ इति विभज्य संप्रसारणादित्यनुवर्त्य संप्रसारणात्परस्य एङः पूर्वरूपं स्यादिति व्याख्यानात् । अर्थात्पूर्वत्वविधानेनात्वबाधात् । नचप्रकृतेऽपि तदापत्तिः । आदन्तलक्षणे आत्वस्योपजीव्यत्वात् । लिटस्तु धातुमात्राद्विहितत्वेन वैषम्याद् ॥

# सुपि स्थः ॥ ४ ॥

सुपीति विभज्यते । आदन्तात्सुप्युपपदे कः । कच्छेन पिबति कच्छपः । द्वाभ्यां पिबति द्विपः ।

केचित्तु कच्छं पिबति इति कर्मोपपदकप्रत्यय एव कार्यो रूढत्वेनावयवार्थानन्वयेऽपि क्षतिविरहादित्याहुः । सतिसंभवे रूढानामप्यसदर्थाश्रयेणान्वाख्यानानौचित्यम् । तैलपायिकादौ त्वगत्याऽसदर्थाश्रयणमिति कैयटः । स्थ इत्यत्र सुपीत्यनुवर्तते । कर्तरि पूर्वेणैव सिद्धे रयं भावे । अनिर्दिष्टार्था इति न्यायात् । नचैवं भावे कप्रत्ययेन तिष्ठतेः कर्तरि पूर्वेण प्राप्तस्य कप्रत्ययस्य बाधापत्त्या समस्थो विषमस्थ इत्यादि न सिध्येदिति वाच्यम् । भावइत्यस्य पर्यवसानेऽपि साक्षाद्भावशब्दस्यानुपादानात् ।

केचित्तु घञर्थे कविधानमिति वार्तिकादेव तिष्ठतेः कप्रत्ययसिद्धिरित्याहुः। तन्न उपपदमतिङिति नित्यसमासार्थं उपपदात्कप्रत्ययस्यात्र विधानात्। तद्वार्तिके स्थग्रहणस्य त्वकर्तरि कारके चरितार्थत्वात्। आखूनामुत्थानमाखूत्थः। श्येनोत्थः। शलभोत्थः। नपुंसकोदाहरणं तु आकरविरुद्धम्। लघुः कर्तरीमनिज् भावे को घोः किः प्रादितोऽन्यत इत्यमरेण भावे कस्य पुंस्त्वोक्तेः।

## तुन्दशोकयोः परिमृजापनुदोः ॥ ५ ॥

यथाक्रमं कः। 'आलस्यसुखाहरणयोरिति वाच्यम्'। तुन्दपरिमृजोऽलसः। शोकापनुदः सुखस्याहर्ता। अन्यत्र तुन्दपरिमार्जः। शोकापनोदः। संसारानित्यतोद्भावनेन शोकनिवृत्तिकृदित्यर्थः। 'कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्'। मूलविभुजो रथः। महीध्रः। कुध्रः। सरोरुहम् ॥

## प्रे दाज्ञः ॥ ६ ॥

प्रोपसर्गविशिष्टाद्दारूपाज्ज्ञानातेश्च कर्मण्युपपदे कः स्यात्। अणोऽपवादः। सर्वप्रदः पथि प्रज्ञः। उपसर्गान्तरयोगे तु न। अनुपसर्ग इति निषेधात्। प्रशब्दमात्रे उक्तविधिना तद्बाधेऽप्यन्यत्र बाधाभावात्। गोसंप्रदायः।

## समि ख्यः ॥ ८ ॥

गाः संचष्टे गोसंख्यः । संपूर्वस्य ख्यातेः प्रयोगो नेति न्यासकारः । ख्यातेः सार्वधातुकमात्रविषयत्वं तु प्रागेव निरस्तम् ॥

# गापोष्टक् ॥ ८ ॥

अनुपसर्गाभ्यामाभ्यां कर्मण्युपपदे टक् । गायतेरेवात्र ग्रहो नतु गागानोरनभिधानात् । सामगः । सामगी । पा पाने । लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणात् । 'पिबतेः सुरासीध्वोरिति वक्तव्यम्' । सुरापी । सीधुपी । या तु सुरां रक्षति सा सुरापा । उपपदनियमान्नेह । क्षीरं पिबति क्षीरपा । 'बहुलं संज्ञाछन्दसोः' । ब्राह्मणी भवति या सुरापी नैनां देवाः पतिलोकं नयन्ति । सुरापा वा ॥

# हरतेरनुद्यमनेऽच् ॥ ९ ॥

अंशहरः । ग्रहणमत्र हरतेरर्थः । उद्यमने तु भारहारः ।

'अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुःषु ग्रहेरुपसंख्यानम्' । शक्तिग्रहः । लाङ्गलग्रहः इत्यादि । घटीशब्दग्रहणं लिङ्गविशिष्टग्रहणपरिभाषाया अनित्यत्वज्ञापनार्थम्' ।

'सूत्रे च धार्येऽर्थे' सूत्रग्रहः । यस्तु सूत्रस्य संग्रहमात्रं करोति नतु धारयति तत्र सूत्रग्राह एव ॥

# वयसि च ॥ १० ॥

कालिकशरीरावस्थाविशेषो वयः तत्र द्योत्ये हरतेरच् । कवचहरः कुमारः । उद्यमनार्थमारम्भः । कवचोद्यमने तदभावे वा वयोविशेषमात्रं गम्यम् । कवचोपादानयोग्य इत्यर्थः । फलोपधानेऽपि योग्यतानपायात् ॥

## आङि ताच्छील्ये ॥११॥

कर्मण्युपपदे आङ्‌पूर्वाद्धरतेरच् ताच्छील्ये। पुष्पाण्याहरति तच्छीलः पुष्पाहरः। ताच्छील्यमौत्सर्गिकी प्रवृत्तिः। अन्यत्र भाराहारः।

## अर्हः ॥ १२ ॥

कर्मण्युपपदेऽर्हतेरच् अणपवादः।

पूजार्हा ब्राह्मणी ॥

## स्तम्बकर्णयो रमिजपोः ॥१३॥

'हस्तिसूचकयोरिति वक्तव्यम्'। हलदन्तादित्यलुक्। स्तम्बेरमो हस्ती। कर्णेजपः सूचकः। अन्यत्र स्तम्बे रन्ता। कर्णेजपिता ॥

## शमि धातोः संज्ञायाम् ॥१४॥

'शमि उपपदे धातुमात्रादच् संज्ञायाम्'। शंभवः। शंवदः। धातुग्रहणं कृञो हेत्वादिषु प्रतिषेधार्थम्। अचोऽवकाश उक्तः। टस्यावकाशः श्राद्धकरः। शंकरा नाम परिव्राजिका तच्छीला तत्र परत्वाट्टः स्यात्। धातुग्रहणसामर्थ्यादजेव। कुणरवाडवस्त्वाह गृणातेः शंगराशब्दं व्युत्पाद्य पृषोदरादित्वाद्गकारस्य ककार इति शंकराशब्दसिद्धेः। तथाच धातुग्रहणं न कार्यमिति भाष्यम् ॥

## अधिकरणे शेतेः ॥ १५ ॥

खे शेते खशयः । 'पार्श्वादिषूपसंख्यानम्' । पार्श्वाभ्यां शेते पार्श्वशयः । पृष्ठशयः । उदरशयः ।

'दिग्धसहपूर्वाच्चेति वक्तव्यम्' । दिग्धसहितं उपपदं नतु प्रत्येकम् । दिग्धेन सह शेते दिग्धसहशयः । मयूरव्यंसकादित्वात्समास इति कैयटः ।

'उत्तानादिषु कर्तृष्विति वक्तव्यम्' । उत्तानः शेते उत्तानशयः । अवमूर्धशयः अवनतो मूर्धा यस्य तादृगधोमुखः शेते इति यावत् ।

'गिरौ डश्छन्दसीति वक्तव्यम्' गिरौ शेते गिरिशः । यद्वा गिरिरस्यास्ति लोमादित्वात् शप्रत्ययः । यद्वा संख्यैकवचनाच्चेति शम् । रूढानां कथञ्चिद्व्युत्पाद्यत्वात् ॥

वैरवासिष्ठगिरिशास्तथैकागारिकादयः ।
कैश्चित्कथञ्चिदाख्याता निमित्ताव्यधिसंकरैः ॥

एतेन गिरिशमुपचचार प्रत्यहं सा सुकेशीति व्याख्यातम् । यत्तु छन्दसीति वचनाद्भाषायां गिरिशशब्दस्यासाधुत्वमाहुरिति कैयटेनोक्तं तत्राहुरित्यस्वरसः । तद्बीजंतु प्रकारान्तरेण तत्सिद्धेरुक्तत्वान्न साधुत्वमिति ॥

# चरेष्टः ॥ १६ ॥

अधिकरणे उपपदे । कुरुचरः । कुरुचरी । अधिकरणे किम् । कुरूश्चरतीयत्राणेव । यस्य कुरव एव प्राप्याः स कुरुचारः । यस्तु कुरुषु भ्रमति स कुरुचरः । अत्र कुरुपदं तदेकदेशपरम् ॥

# भिक्षासेनादायेषु च ॥ १७ ॥

भिक्षां चरति भिक्षाचरः । चरणोपसर्जनमर्जनमिह चरत्यर्थः ।

चरणेन भिक्षामर्जयतीत्यर्थः । सेनाचरः अत्र प्रवेशोऽर्थः । आदायेति ल्यबन्तानुकरणम् । कर्माकाङ्क्षत्वेऽपि वचनात्समासः । आदायचरः । आदानोत्तरकालीनचरणाश्रय इत्यर्थः । सहचरीत्यादिकं तु पचादिषु चरडिति पाठात् । टविधानं तु नित्यसमासार्थम् ॥

# पुरोऽग्रतोऽग्रेषु सर्तेः ॥१८॥

पुरः सरः । अग्रतः सरः । अग्रमग्रेणाग्रे वा सरत्यग्रेसरः । निपातनादेत्वम् । अग्रतरशब्दो बाहुलकादिति हरदत्तः ॥

# पूर्वे कर्तरि ॥ १९ ॥

पूर्वः सरति पूर्वसरः । कर्तरि किम् । पूर्वदेशं सरति पूर्वसारः ॥

# कृञो हेतुताच्छील्यानुलोम्येषु ॥ २० ॥

हेतुरैकान्तिकं कारणम् । यशस्करी विद्या । अतः कृकमीति सत्वम् । कीर्तिसंयोगव्यवच्छिन्नेत्यर्थः । श्राद्धकरः । आनुलोम्यमनुकूलत्वम् । वचनकरः । आनुलोम्यं द्योत्यम् ॥

# दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिं-

# लिपिलिबिबलिभक्तिकर्तृचि-त्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्त-द्धनुररुःषु ॥ २१ ॥

अहेत्वाद्यर्थ आरम्भः । एषु कृञष्टः स्यात् । दिवाकर इत्यादि । भास्करः । कस्कादित्वात्सः । बहुशब्दो वैपुल्यार्थः । संख्यायाः पृथगुपादानात् । लिपिलिबिशब्दौ पर्यायौ । एककरः । द्विकरः । अहस्करः । कस्कादिः । धनुष्करः । नित्यंसमासेऽनुत्तरपदस्थस्येति षत्वम् ।

किंयत्तद्बहुषुकृञोऽज्विधानम् । वार्त्तिकमेतदिति कैयटहरदत्तादयः । इष्टिरिति माधवादयः । किंकरशब्देऽचा टस्य बाधात् किंकरीत्यसाधुरिति कैयटहरदत्तादयः । 'हुं त्यज त्यज तवास्मि किंकरेति श्रीहर्षः ।

न्यासकारास्तु हेत्वादौ पूर्वसूत्रेण ट एव । तेन किंकरीत्युपपन्नमित्याह । तस्यायमाशयः । अहेत्वर्थं दिवेत्यादिसूत्रमिति सर्वसिद्धम् । तदपवादस्य किंयदिति वार्तिकस्य स एव विषयः । एतेनाज्विधौ हेत्वाद्यभाव इति विशेषणं मुनित्रयेण न दत्तमिति निरस्तम् । तथाच हेतुविवक्षायां ट उपपन्न एव ।

एतेन पूर्वविप्रतिषेधस्य निर्मूलत्वादिति तद्दूषणमपास्तम् । उक्ताभिप्रायेणैव तत्प्रवृत्तेः । अतएवोक्तं वार्तिकमेवेति पठन्ति प्राञ्चः । नच पक्षेकर्मण्यण् प्रसङ्गः । अजभावे दिवाविभेति टस्यैव प्रवृत्तेः । नच सूत्रे किमादिग्रहणापनयनस्य हरदत्तादिभिरुक्त-

त्वात्कथं तादीति वाच्यम् उक्तप्रयोजनसंभवे तदपनयस्य दुर्निश्चयत्वात् ।

अन्ये तु इह किमादिग्रहणमपनीय पचादिष्वेव 'कियत्तद्बहुषु कृञ' इत्यत्र पाठम् । वार्तिकस्याप्ययमेवाशयः । तथाच कर्मण्यणो बाधाच्चरितार्थमुक्तवार्तिकम् । हेत्वादिविवक्षायां परत्वाट्टेन बाध्यते तेन पुंयोगं विनापि किंकरीति स्यादेवेत्याहुः ॥

# कर्मणि भृतौ ॥ २२ ॥

कर्मशब्दे उपपदे कृञष्टो भृतौ गम्यायाम् । कर्मकरो भृतकः । नच कृत्रिमाकृत्रिमयोरित्यर्थग्रहणापत्तिः । पुनः कर्मपदोपादानसामर्थ्यात् । अन्यत्र कर्मकारः ॥

# न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ॥ २३ ॥

हेत्वादिषु प्राप्तस्य टस्य प्रतिषेधोऽयम् । शब्दकार इत्यादि ॥

# स्तम्बशकृतोरिन् ॥ २४ ॥

'व्रीहिवत्सयोरिति वक्तव्यम्' ।

न शाले स्तम्बकरिता वप्तुर्गुणमपेक्षते ।

इति मुद्राराक्षसम् । शकृत्करिर्वत्सः । अन्यत्र स्तम्बकारः । शकृत्कारः ॥

# हरतेर्दृतिनाथयोः पशौ ॥ २५ ॥

एतयोः कर्मणोरुपपदयोर्हरतेरिन् पशौ कर्तरि । दृतिहरिर्ना-

थहारिः पशुः । दृतिश्चर्मकोषः नाथो नासारज्जुः ॥

# फलेग्रहिरात्मम्भरिश्च ॥ २६ ॥

आद्ये उपपदस्यैदन्तत्वमिन् प्रत्ययश्च निपात्यते । फलानि गृ-
ण्हाति फलेग्रहिः । द्वितीये मुमागम इन् च । आत्मम्भरिः ।
चात्कुक्षिम्भरिरुदरम्भरिश्च । 'आत्मोदरकुक्षिष्विति चान्द्रपाठात् ।
मृदुतरकराकारैस्तालोत्करैरुदरम्भरिरितिश्रीहर्षः ।

# छन्दसि वनसनरक्षिम-
# थाम् ॥ २७ ॥

एभ्यः कर्मण्युपपदे इन् । ब्रह्मवनिं त्वा क्षत्रवनिम् ।
ब्रह्म वनति क्षत्रं वनतीति विग्रहः । वाजसनि रयि मस्मे सुवी
रम् । ये पथां पथिरक्षयः । हविर्मथीनामभि ।

# एजेः खश् ॥ २८ ॥

ण्यन्तस्यैका निर्देशो न शुद्धस्य व्याख्यानात् । शित्त्वाच्छ-
बादि । अरुर्द्विषदिति मुम् । जनमेजयति जनमेजयः । यत्तु
भविष्ये—

जन्मनैवातिशुद्धेन रिपूनेजितवान् यतः ।
एजिश्च कम्पने धातुर्जन्मेजय इति स्मृतः ॥

इत्युक्तम् । तत्रोच्छब्दाभावेऽपि उच्छब्दयोगं विनापि अनु-
पसर्गाल्लिम्पविन्देत्यादिना शमसयः । छान्दसत्वान्नैरुक्तव्युत्पत्तेर्वा
बोध्यः ।

'खश्प्रकरणेवातशुनीतिलशर्द्धेष्वजधेट्तुदजहातिभ्य उपसं-

ख्यानम्' । वातमजा मृगाः शुनिन्धयः । खित्यनव्ययस्येति-ह्रस्वः । तिलंतुदः । शर्धंजहा माषाः । शर्द्धोऽपानशब्दः । तं जहतीत्यन्तर्भावितण्यर्थ इति माधवादयः । गर्द्धेति पाठस्तु भाष्यवृत्त्यादिविरुद्धः । सर्वत्रारुर्द्विषदिति मुम् ।

# नासिकास्तनयोर्ध्माधेटोः ॥२९॥

अत्र यथासंख्यबाधनार्थं वार्तिकम् । 'स्तने धेटो नासिकायां ध्मश्चेति वक्तव्यम्' । स्तनन्धयो बालः । धेटष्टित्वस्यावयवेऽचरितार्थत्वान् ङीप् । स्तनन्धयी । मतान्तरे तु ङीप् नेष्यते इति वर्धमान क्षीरस्वामि हरदत्तादयः । तेन शमत्यये कमत्यये च टाबेवेति संप्रदायः । नासिकंधमः । नासिकंधयः

'घटीखारीखरीषूपसंख्यानम्' घटिन्धमः । घटिन्धय इत्यादि ।

# नाडीमुष्ट्योश्च ॥ ३० ॥

ध्माधेटोरित्यनुवर्तते । यथासंख्येनेति भाष्यवृत्त्यादयः । उभयत्रापि पूर्वनिपातव्यत्ययो यथासंख्याभावज्ञापक इत्याहुः । यथासंख्यसूत्रे नाडीमुष्ट्योश्चेति भाष्यं तु प्राप्तिमात्राभिप्रायम् । नाडिंधमः । नाडिंधयः ।

# उदि कूले रुजिवहोः ॥ ३१ ॥

उत्पूर्वाभ्यां रुजिवहिभ्यां कूले कर्मण्युपपदे खश् रुजोभङ्गे वहप्रापणे । कूलमुद्रुजः । कूलमुद्वहः । उदिति पञ्चम्यर्थे सप्तमी । वहोरिति पञ्चम्यर्थे षष्ठी । ततो न यथासंख्यमिति कैयटः । असत्यत्राचिन्युच्छन्दे कर्मणीत्यस्यान्वयासंभवाच्चेति दीक्षिताः । तेन प्राग्धातोरिति सूत्रे 'उपसर्जन-

शृणुतासूर्यंपश्या न सा किल भाविनीति श्रीहर्षेणासूर्यं पश्याना-मवधिगिरि पाश्चात्यदृषदामिति विद्यानाथेन च प्रयुक्तत्वात् ।

## उग्रंपश्येरम्मदपाणिंधमाश्च ३७

एते निपात्यन्ते । उग्रं यथा स्यात्तथा पश्यति इत्युग्रंपश्यः । इरया उदकेन माद्यति ज्वलति इरम्मदो मेघज्योतिः । निपातनान्न श्यन् । पाणयो ध्मायन्तेऽत्र पाणिन्धमोऽन्धकाराद्यावृतोऽध्वा । तत्र सर्पादिशंकया तदपनोदाय पाणिशब्दकरणात् । दुर्गमत्वमात्रे तात्पर्यम् । शाखाशस्त्रिकयैव काननभवग्दीर्णपाणिन्धमाः पन्थानो दिवि सकुचन्ति वसुधा वन्ध्या न सूते भटानिति मुरारिः ।

## प्रियवशे वदः खच् ३८

प्रियंवदः । अनिष्ठुरोक्तिः । वदस्थैर्ये इत्यस्माद्वशंवदो बोध्यः । वशे वदति वर्तते इति व्युत्पत्तिः । खशा रूपनिर्वाहेऽपि प्रत्ययान्तरमुत्तरार्थम् । तत्रापि प्रयोजनं तु वक्ष्यते । इह करणं त्वन्यतोऽपि खजिति ज्ञापनार्थम् । तदेव वार्तिकेनोक्तम्—

'गमेः सुप्युपसंख्यानम् । , नचेह गमश्चेति सूत्रेण सिद्धिः । तस्य संज्ञायामेव प्रवृत्तेः । मितंगमा हस्तिनी । 'विहायसो विहः खच्च विभाषा डिद्वक्तव्यः' । विहंगमः । डित्वपक्षे टिलोपः । खशि तु आर्धधातुकत्वानुपपत्त्या इदं न स्यात् । सार्वधातुकत्वेन शप् च स्यात् ।

## द्विषत्परयोस्तापेः ३९

द्विषन्तं तापयति द्विषन्तपः । परंतपः । द्विषतीताप इत्यत्र न ।

लिङ्गविशिष्टपरिभाषाया अनित्यत्वात् ।

## वाचि यमो व्रते ४०

वाक्शब्दे उपपदे यमेः खच् व्रते गम्ये । वाचंयमो मौनव्रती । अशक्त्यादिना मौनव्रते तु कर्मण्यण् । वाग्यामः ॥

## पूः सर्वयोर्दारिसहोः ४१

पुरंदरः । वाचंयमपुरंदरौचेति अमन्तत्वम् । सर्वसहः । अत्र हरदत्तः । वाचि यम इति सूत्रस्य । पुरिदारेत्यंशस्यच वैयर्थ्यम् । वाचंयमपुरंदरौ चेत्यनेनैव खच् प्रत्ययस्यापि संभवात् । व्रतविषयत्वस्यापि निपातनबलादेव लाभात् । तथाचात्र सर्वे सह इत्येव सूत्रं युक्तमिति । दारीति दॄविदारणे एव गृह्यते नतु दॄभये दङ्आदरे इति संप्रदायः । सहिग्रहणमसंज्ञार्थम् । संज्ञायां वक्ष्यमाणत्वात् ।

## सर्वकूलाभ्रकरीषेषु कषः ४२

सर्वंकषः खलः । कूलंकषा नदी । अभ्रंकषो वायुः । करीषंकषा वात्या । दोः संदोहवशीकृतत्रिभुवनश्रीगर्वसर्वंकष इति मुरारिः ।

## मेघर्तिभयेषु कृञः ४३

मेघंकरः । ऋतिंकरः । भयंकरः । तदन्तविधिना अभयंकरः ।

## क्षेमप्रियमद्रेऽण् च ४४

वा खच् । क्षेमंकरः । क्षेमकारः इत्यादि । वेत्यपहायाणग्रहणं हेत्वादौ टप्रत्ययबाधनार्थम् । अन्यथा ह्यणः क्षेमकरा इति कर्मणः शेषत्वविवक्षायाम् ।

## आशिते भुवः करणभावयोः ४५

आशितो भवत्यनेनाशितंभव ओदनः । अतिथ्यादिभोजनपर्याप्त इत्यर्थः । आशितस्य भवनं आशितंभवः । वासरूपविधिना ल्युडपि । आशितभवनः । आशितभवनम् । घञ् तु सरूपत्वाद्बाध्यते इति व्याचक्षाणादयः । यत्तु क्तल्युट्तुमुन्खलर्थेषु वासरूपविधेरभावादयुक्त एव ल्युडिति तन्न । तस्य यत्र क्तादीनां घञादिबाधकत्वेन प्रसक्तिस्तन्मात्रपरत्वात् । अत्र तु ल्युटोऽपवादः खच् । न तु खचो ल्युडिति वासरूपविधेर्दुर्वारत्वात् । क्तादीनां बाधकत्वस्थले न वा सरूपत्यागो, बाध्यत्वस्थले त्वसत्येनेति पर्यवसानादिति दीक्षिताः ॥

## संज्ञायां भृतॄवृजिधारिसहितपिदमः ॥ ४६ ॥

विश्वंभरा भूः । रथन तरति रथन्तरम् । सामनि केवल रूढमेतत् । व्युत्पत्तिफल तु रथन्तरमाजभारा वासिष्ठ इत्यादौ कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वमवग्रहश्च । अखण्डत्वे नब्विषयस्येत्याद्युदात्तनिरवग्रहत्वयोः प्रसङ्गात् । पतिंवरा कन्या । शत्रुंजयो हस्ती । युगन्धरः पर्वतविशेषः । युगन्धरे दधि प्राश्येति श्रुतम् । शत्रुं सहः । शत्रुंतपः । अरिंदमः । शमनार्थत्वात्सकर्मकत्वम् । ण्यर्थान्तर्भावो वा ॥

## गमश्च ॥ ४७ ॥

सुतंगमः ॥

## अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ॥ ४८ ॥

संज्ञायामिति निवृत्तम् । अन्तं गच्छतीत्यन्तगः इत्यादि । 'सर्वत्रपन्नयोरुपसंख्यानम्' । सर्वत्रगः । पद्भ्यां गच्छति पन्नगः । 'उरसो लोपश्च' । उरगः । 'सुदुरोरधिकरणे' सुखेन गम्यतेऽत्र सुगः । दुःखेन दुर्गः । 'निसो देशे' निर्गम्यते यस्मान्निर्गः । वस्तुतस्तु 'अन्येभ्योऽपि दृश्यते' इति वक्तव्यम् । ग्रामगः गुरुतल्पग इत्यादि ॥

## आशिषि हनः ॥ ४९ ॥

डः स्यात् । शत्रुं वध्यात् शत्रुहः । शत्रुहननाश्रयमकारकेच्छाविशेष्य इत्यर्थः । आशिषि किम् । शत्रुं हन्ति शत्रुघातः । 'दारावाहनोऽणन्तस्य च टः संज्ञायाम्' दार्वाघाटस्ते वनस्पतीनाम् । 'चारौवे'ति वाच्यम् । चार्वाघाटः । चार्वाघातः 'कर्मणिसमिच' । वर्णान् संहन्ति वर्णसंघाटः वर्णसघाटः । पदसंघातः । पदसंघातः ।

## अपे क्लेशतमसोः ॥ ५० ॥

अपपूर्वाद्धन्तेरेतयोरुपपदयोर्डः । अनाशीरर्थ आरम्भः । क्लेशापहः पुत्रः । तमोपहः सूर्यादिः ।

## कुमारशीर्षयोर्णिनिः ॥ ५१ ॥

कुमारघाती। शिरसः शीर्षभावो निपातनात्। शीर्षघाती।

## लक्षणे जायापत्योष्टक् ॥५२॥

लक्षणेति कर्तृविशेषणम्। लक्षणवति कर्तरि अनयोरुपपदयोर्हन्तेष्टक्। जायाघ्नो मनुष्यः। पतिघ्नी स्त्री। तत्सूचकलक्षणाश्रय इत्यर्थः॥

## अमनुष्यकर्तृके च ॥ ५३ ॥

जायाघ्नः तिलकः। पतिघ्नी पाणिरेखा। तत्सूचकत्वमर्थः। पित्तघ्नं घृतम्। अमनुष्येति किम्। आखुघातः शूद्रः। भद्रम्बघ्नशत्रुघ्नकृतघ्नादयो मूलविभुजादित्वात्। चोरघातो नगरघातो हस्तीत्यादयो बाहुलकात्।

## शक्तौ हस्तिकपाटयोः।५४।

शक्तौ द्योत्यायां हन्तेष्टक्। मनुष्यकर्तृकार्थमारम्भः। हस्तिघ्नो ना। कपाटघ्नश्चौरः। कवाटेतिपाठे पवादित्वाद्धत्वमिति स्वामी। कुत्सितमटति कवाटम्। अटतेः पचाद्यच्। कवंचोष्ण इति योगविभागात्कवादेश इति हरदत्तः। स्वबलेन हन्तुं सामर्थ्यं शक्तिपदार्थः।

## पाणिघताडघौ शिल्पिनि॥५५॥

हन्तेष्टक् टिलोपघत्वानि निपात्यन्ते। शिल्पिनि किम्। पाणिघात इत्यादि। 'राजघस्योपसंख्यानम्'। रराज नीराजनया स राजघः।

## आढ्यसुभगस्थूलपलितनग्ना-

## आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ५६

च्व्यर्थेष्वच्व्यन्तेषु आढ्यादिषूपपदेषु कृञः ख्युन् स्यात् । अनाढ्यमाढ्यं कुर्वन्त्यनेन आढ्यंकरणम् । अच्वौ किम् । आढ्यीकरणम् । अत्र ल्युडेव ।

ननु च्वावपि ख्युनि दोषाभावाद च्वाविति व्यर्थम् । रूपस्वरयोरविशेषात् । ङी पश्च नञ्स्नञीकक्ख्युंस्तरुणतलुनानामिति ख्युनोऽपि विधेयत्वात् । ख्युनि उपपदसमासस्येव ल्युटि गतिसमासस्यापि नित्यत्वात् । लित्स्वरेण नित्स्वरेण वा कृञ आद्युदात्तसाम्यात् । सुमहृस्वयोश्चानव्ययस्येति पर्युदासात् । च्व्यन्तस्याव्ययत्वात् ।

अत्रभाष्यम् । उत्तरार्थं तदिति । तथाच केवलोत्तरार्थत्वे भाष्यवार्तिकप्रामाण्यान्नीर्णीते च्वौ ल्युड्भवत्येव । वृत्तिकारास्तु उत्तरत्रैव ग्रहणापत्त्या इहकिंचित्त्रपो इति न्यायेनात्रग्रहणसामर्थ्याल्ल्युडपि नेत्याहुः । तच्चिन्त्यम् ।

## कर्तरि भुवः खिष्णुच्खुकञौ ५७

पूर्वविषये कर्तरि भवतेरेतौ स्तः । अनाढ्यआढ्यो भवत्याढ्यभावुकः । आढ्यं भविष्णुः । नाराचैः कृतवीर्यनन्दनवधूबाष्पप्रियंभावुकैरिति मुरारिः । कर्तृग्रहणंकरणानुवृत्तिभ्रमनिरासार्थमुत्तरार्थंचेति संप्रदायः । नचास्वरितत्वादेवाननुवृत्तिसिद्धिः । अगतिकगतित्वात् ।

अत्रवार्तिकम् ।

इष्णुचइकारादित्वमुदात्तत्वात्कृत भुवः ।
नञस्तु स्वरसिध्यर्थमिकारादित्वमिष्णुचः ॥

अस्यार्थः—भुवः सदूत्वाद्वलादिलक्षणेनेटैव सिद्धौ ख्स्नुजेव विधेयो नत्विष्णुच्। नच खकारस्य चर्त्वे कृते क्ष्णुरित्यत्र कत्वं खत्वंवेति सन्देहापत्तिः। व्याख्यानतो विशेषप्रतिपत्तेः। इत्याक्षेपः। नञ्समासेऽनाढ्यभविष्णुरित्यत्र कृत्योकेष्णुच्चार्वादयश्चेति अन्तोदात्तार्थमिति समाधानम्। अन्यथा तत्रालङ्कृञित्यादिना विहितस्य प्रतिपदोक्तस्यैवेष्णुचो ग्रहणं स्यात्। स्नुप्रत्यये षत्वणत्वयोरसिद्धतया ष्णुइति रूपाभावाच्च। ननु चकारानुबन्धमात्रेणाप्येतत्सिद्धम्। नच स्वरार्थतया तदन्यथासिद्धिः। प्रत्ययस्वरेणान्तोदात्तसिद्धेः। प्रत्ययस्वरे आगमानामविद्यमानवद्भावस्योक्तत्वात्।

यत्तु हरदत्तः। षत्वणत्वयोः सामर्थ्यादस्य ग्रहणमिति तद्रहितप्रत्ययापेक्षया तत्सहितप्रत्ययविधाने प्रक्रियालाघवेन सामर्थ्योपक्षयात्। सर्वथापि न्विकारो व्यर्थ एवेति। नैवम्। तदनुबन्धकग्रहणपरिभाषया तत्रखिष्णुचोनुपादानापत्तेः। इकारोच्चारणसामर्थ्यात्तु तद्बाधात्। नचवकारसामर्थ्यम्। विनिगमकाभावात् ॥

# स्पृशोऽनुदके क्विन् ५८

उदकभिन्ने सुप्युपपदे कर्तरि स्पृशेः क्विन्। घृतस्पृक्। कर्मणीति निवृत्तम्। यद्यपि स्पृशेः सकर्मकत्वात्कर्मणीत्यस्यानुवृत्तिर्युक्ता तथापि पूर्वसूत्रे कर्तृग्रहणस्यैतदर्थत्वात्तद्वैयर्थ्यपरिहाराय कर्मण्युपपदे एकः कर्ता करणादौ चान्य इति कर्तृप्रत्ययार्थत्वात् उभयत्र सिद्धिः। सुप्युपपदे इत्यस्य पर्यवसानादिति प्राञ्चः।

दीक्षितास्तु मन्त्रस्पृगिति क्विपैव सिद्धम् । क्विन्प्रत्ययो यस्मादित्यर्थाश्रयणेनान्यत्रापि कुत्वविधानादित्याहुः । अत्र नकारो न नित्स्वरार्थः एकाच एवैतद्विधानेन विशेषाभावात् । दधृगित्यत्र चान्तोदात्तस्य निपातयिष्यमाणत्वात् । क्विन्प्रत्ययस्येत्यत्र क्विप्रत्ययस्येति पाठादेव सिद्धेः । एकपकारको द्विपकारको वा निर्देश इति संदेहस्य व्याख्यानान्निवृत्तेः । तदनुबन्धकपरिभाषया च क्विपोऽनुपादानात् ।

## ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ॥ ५९ ॥

आद्याः पञ्च क्विन्नन्ता निपात्यन्ते । त्रिभ्यः क्विन् विधीयते । अलाक्षणिकमपि किञ्चित्कार्यं निपातनलभ्यम् । ऋतावुपपदे यजेः क्विन् । धृषेर्द्वित्वमन्तोदात्तत्वं च । सृजेः कर्मणि क्विन् । रमागमश्च । दिशेः कर्मणि । उत्पूर्वात् स्निहेः क्विन् उपसर्गतकारस्य लोपः षत्वं च । अञ्चेः सुप्युपपदे क्विन् । युजेरपि । क्रुञ्चेर्नलोपाभावश्च ।

## त्यदादिषु दृशोऽनालोचने कञ्च ॥ ६० ॥

चात्क्विन् । तादृशः तादृक् । आ सर्वनाम्न इत्यात्वम् । एवं यादृश इत्यादि । ञकार आद्युदात्तार्थः । नकारेण तत्सिद्धावपि कञ्करपावित्यत्र विशेषणार्थत्वात् । तत्र कन् इत्युक्तौ अपमित्ययाचिताभ्यां कक्कनाविति विहिते कन्यतिप्रसङ्गात् ।

'समानान्ययोरुपसंख्यानम्' दृग्दृशेति सादेशः। सदृशः सदृक्। ननु कर्तर्ययं प्राप्नोति। तथाच दर्शनक्रियाकर्तेति बोधः स्यात्। इष्यते तु कर्मणि। कर्मण एव सौकर्यात्कर्तृत्वविवक्षणात्। तामिवेमं जनाः पश्यन्ति सोयं सदृग् दृश्यमानस्तमिवात्मानं पश्यतीत्यर्थः। रूढ्यर्थानुकूल्यमात्रेण चेदमुक्तम्। वस्तुतः सादृश्यमात्रप्रतीतेः।

## सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ॥ ६१ ॥

सुप्युपपदे एभ्यः क्विप्। उपसर्गे सत्यसति वा। सुपीत्यनुवृत्तावपि उपसर्गग्रहणमन्यत्र सुब्ग्रहणे उपसर्गग्रहणं नेति ज्ञापनार्थम्। तेन वदः सुपीत्यत्रानुपसर्गग्रहणमनारभ्यम्। द्युमादित्यत्र तु न छन्दसीत्यनुवृत्तेः। दिविषद इत्यत्र तु सुषामादित्वात्षत्वमिति माधवादयः। सदादिषु केषाञ्चित् सकर्मकत्वेऽपि न कर्मणीत्यस्यैव तत्रान्वयः। किन्तु सुम्मात्रस्य। होता वेदिषदतिथिर्दुरोणसत्। वेद्यां सीदतीति वेदिषत्। पूर्वपदादिति षत्वम्। दुरोणे गृहे सीदतीति दुरोणसत्। उपनिपूर्वात्सदे विशरणार्थात् क्विपि उपनिषत्पदं व्युत्पादितम्। उपनीयाद्वयं ब्रह्म सवासनामविद्या हिनस्तीति ब्रह्मविद्यामाह। तद्धेतुत्वाद्वेदान्ता अप्युपनिषदः इति वाचस्पत्यम्। सू इति षूङो ग्रहणम्। अदादिना द्विषा साहचर्यात्। न तुदादिदिवाद्योः सुवति सूयत्योः। द्विष अप्रीतौ। द्रुह जिघांसायाम्। दुह प्रपूरणे। युजसमाधौ। युजि-

जियोंगे इति द्वयोरप्युपादानम् । विदेत्यकारानुबन्धस्य विवक्षितत्वा-द्विद्ज्ञाने विदविचारणे विद्सत्तायामित्येते गृह्यन्ते । ननु विदॢ इति । भिदॢ विदारणे । छिदिर् द्वैधीकरणे जिजये णीञ् प्रापणे राजृ दीप्तौ । अण्डसूः । प्रसूरित्यादि । अग्रग्रामाभ्यां नयतेर्णो वाच्यः । स एवा ग्रामणीरिति निर्देशात् । सर्वलोपि प्रत्ययविषयश्चेदं धर्मिग्राहकप्रमाणात् । तेन ग्रामनाय इत्यादौ न ।

# भजो ण्विः ॥ ६२ ॥

अंशभाक् । प्रभाक् । णित्वाद्वृद्धिः ।

# छन्दसि सहः ॥ ६३ ॥

ण्विः स्यात् । दुरच्यवनः पृतनाषाडयुध्यः । सहिरत्राभिभवार्थः ।

# वहश्च ॥ ६४ ॥

दित्यवाट् च मे दित्यौही च मे । योगविभाग उत्तरार्थः ॥

# कव्यपुरीषपुरीष्येषु ञ्युट् ॥ ६५ ॥

कव्यवाहनः पुरीषवाहनः पुरीष्यवाहनः ।

# हव्येऽनन्तः पादम् ॥ ६६ ॥

हव्यशब्दे उपपदे वहेश्छन्दसि ञ्युट् पादान्ते । अनन्तः पादमित्यनेन मध्यगान्तस्य चरणोत्तरपादावयवानन्तर्गतत्वोक्तेः । अग्निश्च हव्यवाहनः । पादान्ते किम् । कव्यवाडग्निरजरः पिता नः ।

# जनसनखनक्रमगमो विट् ६७

जन जनने जनी प्रादुर्भावे षण दाने षणु सम्भक्तौ द्वयोर्ग्रहण-मिति संप्रदायः। विड्वनोरित्यनुनासिकस्यात्त्वम्। अब्जा गोजाः। गोषा इन्द्रो नृषा असि। सनोतेरन इति षत्वम्। इयं शुष्मेभि-र्बिसखा इवारुजत्। आदधिक्राः। शवसे पञ्च कृष्टीः। वायुरग्रे-गा यज्ञप्रीः।

## अदोऽनन्ने ॥ ६८ ॥

छन्दसीति निवृत्तम्। अन्नशब्दे उपपदे अदो विट्। ग्रा-माद सस्यात्। अनन्ने किम्। अन्नादः।

## क्रव्ये च ॥ ६९ ॥

क्रव्यात्। आममांसभोक्तेत्यर्थः। पूर्वेण सिद्धेऽण्बाधार्थमा-रम्भः। क्रव्याद इति तु पक्वमांसशब्दादण्। पृषोदरादित्वादु-पपदस्य क्रव्यादेशश्च। क्रव्याद इत्यण् न भवतीत्याकरस्य तु आम-मांसभक्षक इत्यर्थाविवक्षायामित्यर्थः।

## दुहः कब् घश्च ॥ ७० ॥

कामं कामदुघे धुक्ष्व। अवेहि मां कामदुघां प्रसन्नाम्।

## मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ॥ ७१ ॥

श्वेतादावुपपदे वहादिभ्यो ण्विन्। अलाक्षणिककार्यार्थं नि-पातनम्। श्वेता एनं वहन्ति श्वेतवा इन्द्रः। कर्तृवाचिनि श्वेत-शब्दे वहेः कर्मणि प्रत्ययः। उक्थानि उक्थैर्वा शंसत्युक्थशा य-

जमानः । उक्थे कर्मणि करणे वा शंसेर्नलोपश्च । पुरो दाशन्त एतमिति पुरोडाः । पुरः शब्दे दाशृदाने इत्यस्मात्कर्मणि प्रत्ययो दस्यडत्वं च ।

'श्वेतवहादीना डस्पदस्येति वक्तव्यम्' यत्र डसन्तस्य पदत्वं भविष्यति तत्र डस्प्रत्ययोऽन्यत्र ण्विन्नेवेत्यर्थः । अयंचावे यज इत्येतद्विहितस्यापि ण्विनोऽपवादः । श्वेतवा इन्द्रः । श्वेतवोभ्या श्वेतवोभिः । पदस्य किम् । श्वेतवाहौ श्वेतवाहः । नचैवमवयाः श्वेतवा इति निपातनवैयर्थ्यम् । अत्वसन्तस्येत्येव दीर्घसिद्धेरिति वाच्यम् । हे श्वेतवा इति सम्बुध्यर्थत्वात् । नच डस् वैयर्थ्यम् । श्वेतवोभ्या मित्याद्यर्थत्वात् । नच रुत्वनिपातनस्य पदमात्रविषयकत्वमिति वाच्यम् । आकारात्परस्य उत्वाभावे रूपासिद्धितादवस्थ्यात् । उक्थशा इति सम्बुध्यर्थं निपातनं कर्तव्यं यदि मन्त्रे दर्शनमस्तीति कैयटादयः ।

# अवे यजः ७२

अवशब्दे उपपदे यजेर्ण्विः स्यान्मन्त्रे । त्वं यज्ञे वरुणस्यावया असि । अवयजत इत्यवयाः । अवयाजौ अवयाजः । अवयोभ्यामित्यादि । योगविभाग उत्तरार्थः ।

# विजुपे छन्दसि ७३

उपेत्युपपदे यजेर्विच्छन्दसि । उपयट् उपयजौ उपयजः । उपयड्भिरूर्ध्वं यजन्ति तदुपयजामुपयट्त्वम् । नचान्येभ्योऽपि दृश्यते इति सिद्धिः । उपयजः छन्दस्येवेति नियमार्थत्वात् । चित्करणं वेरपृक्तस्येति सामान्यग्रहणाविघातार्थम् ॥

## आतो मनिन् क्वनिब्वनिपश्च ॥ ७४ ॥

सुपि उपसर्गे उपपदे आदन्ताद्धातोरेते त्रयः स्युः छन्दसि । चाद्विच् । सुदामा सुधीवा । सुपीवा भूरिदावा । घृतपावानः । कीलालपे सोमपृष्ठाय वेधसे । अश्व इव तिष्ठत्यश्वत्थामा ।

## अन्येभ्योऽपि दृश्यन्ते ॥ ७५ ॥

छन्दसीति निवृत्तम् । चत्वारः प्रत्यया धात्वन्तरादपि स्युः । सुष्टु शृणोति सुशर्मा । नेड्वशीति नेट् । प्रातरेति प्रातरित्वा । पिस्त्वातुक् । विजायते । विजावा । विड्वनोरित्यात्वम् । ओणृ अपनयने । अवावा । णस्यात्वे अवादेशः । रोट् रेट् सुगण् । दृशिग्रहणं प्रयोगानुसारार्थम् ।

## क्विप् च ॥ ७६ ॥

अयमपि प्राग्वत् । सत्सूद्विषेत्यस्यैव प्रपञ्चः । अपिशब्दानुवृत्त्या सर्वधातुभ्यः छन्दसि भाषायां चेत्यर्थः । उखायाः स्रंसते उखास्रत् । पर्णाद् ध्वंसते पर्णध्वत् । वसुस्रंस्विति दत्वम् । वाहाद्भ्रश्यति वाहभ्रट् । व्रश्चेति षः । वहाभ्रंडिति वृत्तिः । वहः स्कन्धः । अन्येषामपीति उपपदान्तस्य दीर्घ इति हरदत्तः ।

## स्थः क च ॥ ७७ ॥

चात्क्विप् । पूर्वोक्तेन क्विपा सुपि स्थ इति च कस्य सिद्धौ शमिधातोरित्यचो बाधार्थमारम्भः । शंस्थः । शंस्थाः । ईत्वमनकारादाविति वचनाद्भाष्यप्रयोगाद्वा प्रत्ययलक्षणेनेत्वाभाव इति कैयटः । इदं च प्रत्ययप्राधान्येऽलुविध्यर्थं प्रत्ययलक्षणसूत्रमिति

पक्षे । नियमार्थमिति पक्षे तु अनन्त्यिधाविति निषेधान्न स्थानिव-त्त्वमिति दीक्षिताः ॥ ननु शमिधातोरित्येतदुत्तरमेव स्थः क चेति सूत्र्यताम् । चकारोऽनुसमुच्चयार्थः । सवर्णदीर्घे शंस्था इति सिद्धम् । एवचोत्सर्गापवादयोः समानदेशत्वमीत्वस्याप्रसक्तिश्चेति लाघवम् ।

अत्राहुः । एवं सत्यशंस्था इत्यत्र अच्कावशक्ताविति उत्तरपदान्तोदात्तत्वं स्यात् । कृद्ग्रहणपरिभाषया शस्थाशब्दस्याजन्तत्वात् । क्विबन्तेन नञ्समासे तु अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्ततेति ॥

# सुप्यजातौ णिनिस्ताच्छील्ये ७८

अजात्यर्थे सुप्युपपदे ताच्छील्ये द्योत्ये णिनिः स्यात् । सुपीति वर्तमाने सुब्ग्रहणमनुपसर्ग इत्यस्य निवृत्त्यर्थं सुप्मात्रे यथा स्यात् । उदासारिण्यः प्रत्यासारिण्यः । इति भाष्यम् । यत्तु सुब्ग्रहणमुपसर्गनिवृत्त्यर्थम् । 'उत्प्रतिभ्यां माङि सर्तेरुपसंख्यान' मिति जयादित्य हरदत्तमाधवादयः । तद्भाष्यविरुद्धमिति स्पष्टमेव ।अतएव 'लिङ्गशेषविधिर्व्यापी' 'स बभूवोपजीविना' मित्यादिप्रयोगाः । अजातौ किम् । ब्राह्मणानामन्त्रयिता । तृना ताच्छील्यद्योतनम् । ताच्छील्ये किम् । कदाचिदुष्णं भुङ्क्ते । 'साधुकारिण्युपसंख्यानम्' । साधुकारी । साधुदायी । 'ब्रह्मणि वदः' । ब्रह्मवादिनो वदन्ति । सौगतब्रह्मवादिनोरयं विशेषः । तत्ताच्छील्यार्थं वचनद्वयमिति कैयटहरदत्तादयः ।

नन्वेवं ब्रह्मवादिशब्दस्य तच्छीलतद्धर्मतत्साधुकारिपरतया भट्टवार्तिकव्याख्यानमसंगतं स्यादिति चेत् । अत्राहुः—सुप्यजाताविति ताच्छील्ये उपसंख्यानेन साधुकारिणि आवश्यकाधमर्ण्य-

घोरिति णिनिसन्दर्भे पर्यवसन्नः। एवंचोक्तवार्तिकेन ताच्छील्यादि-विरहे णिनेरुपसंख्यानेऽपि तच्छीलादावपि तस्य सुलभत्वात्। आक्रेरित्यधिकारे णिनिविधायकं वार्तिकमस्तीति कल्पनं तु नि-र्मूलमेवेति।

## कर्तर्युपमाने ॥ ७९ ॥

अताच्छील्यार्थं जात्यर्थं सादृश्यार्थं च सूत्रम्। उपपदार्थः प्रत्ययार्थस्य कर्तुरुपमानम्। उष्ट्रक्रोशी ध्वाङ्क्षरावी। यद्यपि उष्ट्रसदृशक्रोशनाश्रय इति बोधः। तत्रोपपदार्थप्रत्ययार्थयोरभे-दान्वयस्यान्यत्रादृष्टत्वात्। एतेनोष्ट्रस्य सादृश्यार्थतया तस्याश्र-यत्वेन प्रत्ययान्वयोऽप्यनाशङ्क्यः। तथापि सादृश्यं णिन्यर्थः। तत्र प्रतियोगितया उपपदार्थस्यान्वयः। सादृश्यस्य च प्रयोजकतया धात्वर्थे तस्य स्वरूपसंबन्धेन प्रत्ययार्थान्तरे आश्रये तस्याभेदेन देवदत्तादौ उष्ट्रसादृश्यप्रयोजकक्रोशनाश्रयाभिन्नो देवदत्त इति-बोधः। प्रकृत्यर्थान्वयात्पूर्वमपि प्रत्ययार्थे पदान्तरान्वयस्य व्युत्प-न्नत्वात्। कर्तरि किम्। अपूपानिव भक्षयति माषान्। उपमाने किम्। उष्ट्रः क्रोशति॥

## व्रते ॥ ८० ॥

णिनिः स्यात्। स्थण्डिलशायी।

यः स्थण्डिले व्रतवशात् शेते स्थण्डिलशाय्यसावित्यमरः।

अयाचिताशी। अश्राद्धभोजी। नचात्र श्राद्धभोजीशब्दस्य व्रतविषयत्वाभावेऽपि न श्राद्धभोजीति अलौकिकविग्रहवाक्ये णिन्यन्तेन सह नञ्समासेन सिद्धिः। आद्युदात्तापत्तेः कृदुत्तर-पदप्रकृतिस्वरेणान्तोदात्तस्येष्टत्वात् नचाणिनीत्यनेन पूर्वपदाद्युद।

त्तसिद्धिः । तत्र संज्ञायामित्यनुवृत्तिपक्षे दोषप्रसङ्गात् । अत्र न श्राद्धस्य भोजीति न विग्रहः । सुबुपपदं विना भोजीत्यस्या साधुत्वात् किन्तु श्राद्धं भुङ्क्ते इति वाक्यं कृत्वा नञः श्राद्धेन सह असमर्थसमासं कृत्वा अश्राद्धशब्दे उपपदे णिनिर्वाच्यः । ननु श्राद्धीयतद्भिन्नयो रागाद्भोजनप्रसक्तौ श्राद्धभोजननिषेधमात्रं विध्यर्थो नत्वश्राद्धीयं भोजनमपि पंच पंञ्चनखा भक्ष्या इतिवत् । तत्कथं यदा अश्राद्धं नभुङ्क्ते तदास्य व्रतलोपः स्यादिति भाष्यं संगच्छते इतिचेत् अत्र कैयटः । अश्राद्धं मया भोक्तव्यमेवेति येन संकल्पः कृतः स यदा बुभुक्षाया सत्यां यस्मिन्नहन्यश्राद्धं न भुङ्क्ते तस्य स्यादेव व्रतलोप इति ॥

# बहुलमाभीक्ष्ण्ये ॥ ८१ ॥

सुप्युपपदे णिनिः पौनः पुन्ये द्योत्ये । क्षीरपायिण उशीनराः । कषायपायिनो गान्धाराः । सामर्थ्यच्छया पानान्तराभावाद्वा कषायपानं नतु ताच्छील्यात् ।

# मनः ॥ ८२ ॥

मनज्ञाने इति दैवादिकस्य ग्रहण नतु मनु अवबोधने इत्यस्य उत्तरसूत्रे खशि श्यनोऽनुपपत्तिप्रसङ्गात् । सुपि मन्यतेर्णिनिः स्यात् । दर्शनीयमानी ।

# आत्ममाने खश्च ॥ ८३ ॥

स्वस्यैव मन्यर्थकर्मत्वे खश् चाण्णिनिः । नच वासरूपविधिनैव सिद्धिरिति वाच्यम् । करणे यजइत्यादौ णिनेरेवानुवृत्त्यर्थं तदनवच्छेदाय मप्रच्चयोक्तेः । पण्डितमात्मानं मन्यते पण्ड-

तंमन्यः । पण्डितमानी । मान इति घञ् । आत्मन इति कर्मषष्ठ्यन्तेन समासः । मति शब्द इह लक्षणया आत्मविशेष्यकभ्रमपरः । पाण्डितपदं पण्डिताभेदप्रकारकपरम् । तस्याभेदसंसर्गेण भ्रमान्वयः । आश्रयः कृत्प्रत्ययार्थः । तथाच पण्डिताभेदप्रकारकात्मविशेष्यकभ्रमाश्रयः इत्यर्थः ।

# भूते ॥ ८४ ॥

अधिकारोऽयम् । वर्तमाने लडित्येतत्पर्यन्तम् । धात्वर्थविशेषणं चेदम् । धातोरित्यधिकारात् । नच भूतक्रियार्थकाद्धन्तेः क्तप्रत्ययो विधेयः । तस्मिंश्च भूतशब्दस्य भूतक्रियाविषयत्वलाभ इत्यधिकाराश्रयो निष्ठाप्रत्ययस्तदाश्रयश्चाधिकार इत्यधिकाराश्रयो निष्ठाधिकारात् । वस्तुतो भूतशब्दार्थबोधे निष्ठादिविधिवाक्यबोधस्यानपेक्षितत्वान्न दोषः ।

अथ प्रयोजनानि । कुमारशीर्षयोर्णिनिरित्यनेन तक्रकौण्डिन्यन्यायेन भूते णिनि बाधित्वा भविष्यद्वर्तमानयोर्णिनिर्विधीयते । असति भूताधिकारे द्वयोरपि सामान्ये विधानं स्यात् । पुनर्णिनेर्वासरूपोनिवृत्त्यर्थतयाप्युपपत्तेः । एवं ब्रह्मादिष्वेव हन्तेर्भूते क्विबिति नियमेन भूतार्थेऽउपपदान्तराद्धन्तेः क्विप् निवर्तते । तेनाखुहत्यादौ कालान्तरे भवत्येव । एवं सुञो वर्तमाने भूते च विहितयोः शतृङ्वनिपोः विषयभेदान्न बाध्यबाधकभावः । भूतवर्तमानोभयाधिकारानारम्भे तु यज्ञसंयोगे विशेषे विधीयमानः शतृप्रत्ययः कालत्रयेऽपि ङ्वनिप बाधेत । ततश्च भूते यज्ञसंयोगे सुत्वेति न स्यात् । नच वासरूपन्यायेन ङ्वनिप्सिद्धिः । सुत्वा सुत्वन्नित्यत्र कालभेदानियमो न स्यात् । एवं स्वपेर्भूते लिट् । वर्तमाने नजिङिति सिद्धिः । उभयाधिकाराभावे

स्वपो विशेषविहितेन नजिङा लिटो बाधापत्तेः । एवमनेहेत्यत्र नञ्याहन एहचेत्यसिमस्यथो वर्तमानकाले एव तूनं बाधेत । असत्यस्मिन् कालान्तरेऽपि बाधेत । एवं भूते कानच् वर्तमाने चानशिति चानश् कानचो बाधको न भवति । यद्यप्यभ्यस्तानामादिरित्यस्य लादेशसार्वधातुकमात्रविषयत्वा चानश्यपि तद्प्रवृत्तेर्नविशेषः तथापि कानजात्मनेपादित्वात्कर्त्रभिप्राये एव । चानश् तु अविशेषेणेति विशेषो बोध्यः ॥

# करणे यजः ॥ ८५ ॥

करणे उपपदे भूतार्थाद्यजेः कर्तरि णिनिः स्यात् । अग्निष्टोमेनेष्टवानग्निष्टोमयाजी । अग्निष्टोमेन करणेन स्वर्गं भावितवानिति वृत्तिन्यासहरदत्तादयः। तेषां चायमाशयः । स्वर्गोत्पादनरूपे सामान्यव्यापारे । विशेषव्यापारे अग्निष्टोमाख्ये यागः करणं यद्यपि स्वयमसिद्धः साधनत्वापत्यनर्हतया अनुष्ठीयमानत्वात्कर्म तथापि शक्तिभेदात्करणत्वमप्युपपन्नम् । निपीयमानेन मधुना मत्तः कोकिल इति पानकर्मणो मधुनो मादनक्रियायां करणत्वदर्शनात् । यज्यादौ द्वे रूपे धातुत्वं सामान्यं यजित्वादिश्च विशेषः । तत्र धातुत्वेन धातूपात्तां भावनां प्रति यजित्वादिना रूपेणोपस्थापितस्य अंशान्तरस्य करणत्वेनान्वयः । अतएव भावना तिङर्थ इति मीमांसकमतमुपेक्ष्यमिति ।
इदं त्विह वक्तव्यम् । विधिवाक्ये यथा तथास्तु । इदं त्वनुवादवाक्यम् । अत्र च भावनाया अंशत्रयसाकाङ्क्षत्वं नास्त्येव फलांशस्य सामान्यतः स्वर्गादित्वादिना वा रूपेणाननुभवात् । अतोऽत्र यागस्वरूपमेव यजिनोपस्थाप्यते तृतीयया तु विधिवाक्यप्राप्तकरणत्वस्यैवानुवादः । यथा दर्शपूर्णमासाभ्यां यजेतेत्यादिवत् ।

विधाने चानुवादे च यागः करणमिष्यते ।
तत्समीपे तृतीयान्तस्तद्वाचित्वं न मुञ्चति ॥

इति वार्तिककृतोक्तेः विधिवाक्ये आक्षेपेण प्रतीतस्य साध्यत्वस्यानुवादवाक्येषु नानुवादोऽपितु तत्र प्रतीतस्य करणत्वस्यैवेति तदर्थात् । अतो वैयाकरणमतेऽपि ज्योतिष्टोमाभिन्नयागकरणकभावनाध्वंसाश्रय इत्येव धीर्युक्ता । मीमांसकमते तु भावनायास्तिङर्थत्वादाक्षेपे चात्र मानाभावात् । ज्योतिष्टोमाख्ययागध्वंसाश्रय इत्येवेति दिक् ।

# कर्मणि हनः ॥ ८६ ॥

सहेचेत्येतत्पर्यन्तं कर्मणीत्यधिकारः । पितृव्यं हतवान् पितृव्यघाती । अत्रवृत्तिः । 'कुत्सितग्रहणं कर्तव्यम्' । इह न चोरं हतवानिति । इदञ्चकर्मणीनिरिति सूत्रे वक्ष्यमाणस्य कुत्सितग्रहणस्येहापकर्षलभ्यम् । पितृव्यवधादिका प्रति सिद्धक्रियां कुर्वाणो यः कर्ता कुत्स्यते तत्र भवति नान्यत्रेति न्यासकारः । अन्ये तु भाष्यानुक्तमपि शब्दशक्तिबलाल्लभ्यत इत्याहुः ।

# ब्रह्मभ्रूणवृत्रेषु क्विप् ॥ ८७ ॥

हनो भूते एषु क्विप् । ब्रह्महा भ्रूणहा वृत्रहा । नियमार्थं सूत्रम् । सच धातूपपदकालप्रत्ययानां चतुर्णामिति वृत्तिः । धातुकालयोरेवेति भाष्यम् । तत्र वृत्तेरयमभिप्रायः । ब्रह्मादिषूपपदेषु हन्तेर्भूते क्विबेवेति अत्र वाक्यस्य रूपम् । तथाच यत्रैवकारो ततोऽन्यत्रावधारणमिति न्यायात् ब्रह्मादिष्वेवेत्यवधारणस्यानन्तर्याद्धन्तिविषयं भवति ब्रह्मादिभिन्नोपपदसंबन्धनिवृत्तिफलको धातुनियमः । अत्रच भूत इत्याश्रयणात् काला-

न्तरेऽन्योपपदादपि क्विप् भवत्येव । पुरुषं हन्ति हनिष्यति वा पुरुषहेति । ब्रह्मादिषु हन्तेरेव भूते इत्यत्र तु आनन्तर्यसाम्येऽपि प्राथम्यादुपपदनियमः । अत्रापि भूत इत्याश्रयणात्कालान्तरेऽन्यस्मादपि धातोर्भवत्येव । वृत्रं जयति जेष्यति वा वृत्राजिदिति । ब्रह्मादिषु हन्तेर्भूते एव क्विबिति प्रकृतिप्रत्यययोरानन्तर्यतौल्येऽपि प्राधान्यात्प्रत्ययनियमः । अत्र ब्रह्मादिष्वित्याश्रयणात् पुरुषहेति प्राग्वत्सिद्धम् । ब्रह्मादिषु हन्तेर्भूते क्विबेवेति कालनियमः । अत्राप्युपपदान्तरे भूतेऽपि प्रत्ययान्तरं भविष्यत्येव । पितृव्यघातीति । नियमस्य सोपपदमात्रविषयकत्वात् मध्येपवादन्यायाच्च वृत्रं हतवानिति निष्ठा भवत्येव । तस्माद्विनिगमकाभावाच्चतुर्विधोऽत्र नियम इति सिद्धम् ।

एतच्च भाष्यविरोधादुपेक्ष्यम् । ब्रह्मादिष्वेव हन्तेर्भूते क्विप् नोपपदान्तरे इति धातुनियमः । तेन पुरुषं हतवानित्यत्र न क्विप् । ब्रह्मादिषु हन्तेर्भूते क्विबेव भवति न प्रत्ययान्तरमिति क्विपि भूतकालो नियम्यते इति कालनियमः । तेन ब्रह्मादावुपपदे हन्तेर्भूते कर्मणि हन इति णिनिर्न भवति । अतएवोपपदान्तरे भूतेऽपि क्विप्सिध्यर्थं उत्तरसूत्रं संगच्छते । तथाच ब्रह्मादिषु हन्तेरेव भूते क्विबित्युपपदनियमो ब्रह्मादिषु हन्तेः क्विप् भूते एवेति प्रत्ययनियमश्चेति द्वयं भाष्यानारूढत्वादुपेक्ष्यमिति कैयटः । तेनान्योपपदाद्धन्तेर्भूते क्विप् ब्रह्माद्युपपदाद्धन्तेरपि कालान्तरे भवत्येव । पुरुषं हतवान् पुरुषहा । ब्रह्म करोति ब्रह्मकृदिति बोध्यम् । धातुकालनियमाश्रयणे च लक्ष्यानुरोध एव बीजम् । तेन विनिगमकाभावो निरस्तः । भाष्यानुसारेणैव लक्ष्यव्यवस्थितिसिद्धेः । यत्तु अत्र बीजमुक्तम् । धातुकालयोः प्रकरणलक्षणजघन्य प्रमाणेन, उपपदप्रत्ययौ तु श्रुत्योपस्थितौ । अतः प्रकरणो-

पस्थितविषय एव नियमो युक्त इति । तन्न । धातुकालान्वय-व्यतिरेके वाक्यार्थनिष्पत्तेश्चतुर्णा मपि साम्यात् । प्रकरणोप-स्थितिस्तु श्रुतिविरोध एव दुर्बला । नह्यत्र श्रुत्या तद्बाधो विरो-धाभावात् । किन्तु कल्पनीयवाक्यान्तरेणेति बोध्यम् ॥

## बहुलं छन्दसि ॥ ८८ ॥

उपपदान्तरेऽपि हन्तेर्बहुल क्विप् स्यात् । यो मातृहा पितृ-हा । मातृघातः ।

## सुकर्मपापमन्त्रपुण्येषुकृञः ८९।

सौ कर्मादिषु च कृञः क्विप् । कर्मणीत्यनुवृत्तस्यापि सुश-ब्देन समं नान्वयोऽव्ययत्वेन कर्मत्वानुपपत्तेः । कालोपपदप्रत्यय-विषयस्त्रिविधो नियम इति वृत्तिः । बहुलग्रहणलभ्यंचैतदिति न्यासकारः । सुकृत् कर्मकृदित्यादि । भूत एवेति नियमान्मन्त्रं क-रोति करिष्यति वेति विवक्षायां नाक्विप् । स्वादिषु कृञ एवेति नियमात् मन्त्रमधीतवान्मन्त्राध्याय इत्यत्र नाक्विप्। स्वादिषु कृञए-वेतिनियमात्कर्मकृतवानित्यत्र नाण् । स्वादिष्वेव कृञ एवेति नियमाभावादुपपदान्तरेऽपि क्विप् । शास्त्रकृत् भाष्यकृत् ।

## सोमे सुञः ॥ ९० ॥

सोमं सुतवान् सोमसुत् ।

## अग्नौ चेः ॥ ९१ ॥

चितवानग्निमग्निचित् । उभयत्र चतुर्विधो नियम इ-ति वृत्तिः ।

# कर्मण्यग्न्याख्यायाम् ॥ ९२ ॥

कर्मण्युपपदे तत्रैव कारके चिञः क्विप् । अग्न्याधानस्थलविशेषाख्यायाम् । श्येन इव चितः श्येनाचित् । इष्टकाभिश्चयनेन श्येनाकारतया सपादित इत्यर्थः ।

# कर्मणीनिर्विक्रियः ॥ ९३ ॥

विपूर्वात्क्रीणातेः । कर्मण्युपपदे इनिः स्यात् । 'कुत्सितग्रहणं कर्तव्यम्' । इदञ्च पुनः कर्मग्रहणलभ्यम् । सोमविक्रयी । घृतविक्रयी । तस्य प्रत्यवायजनकत्वात्तत्कर्तुः कुत्सितत्वम् कुत्सिते किम् । धान्यविक्रायः ।

# दृशेः क्वनिप् ॥ ९४ ॥

अन्येभ्यो पि दृश्यते इति सिद्धे नियमार्थम् । तेन मनिनादेरणादेश्च निवृत्तिः । निष्ठा तु भवत्येव । पारं दृष्टवानिति । पारं दृष्टवान् पश्यति वा परदृश्वा । प्रत्ययान्तरानिवृत्त्यर्थतया वृत्तिकारादिभिरुक्तत्वेऽपि कालान्तरनिवृत्त्यर्थतया अनुक्तत्वात् ।

# राजनि युधिकृञः ॥ ९५ ॥

क्वनिप् स्यात् । युधिरन्तर्भूतणिजर्थः । राजानं योधितवान् राजयुध्वा राजकृत्वा ।

# सहे च ॥ ९६ ॥

कर्मणीति निवृत्तम् । सहशब्दस्यासत्त्वार्थत्वात् । कथयति परिश्रान्ति राज्ञी तमः सहयुध्वनामिति श्रीहर्षः । सुत्राम्णो विजय-

सहकृत्वा दशरथ इति मुरारिः ।

## सप्तम्यां जनेर्डः ॥ ९७ ॥

सरासिजम् । स्फुरदुरसिजभारभङ्गुराङ्गी । हलदन्तादिसलुक् । मन्दुराया जातो मन्दुरजः । ङ्यापोरिति ह्रस्वः ।

## पञ्चम्यामजातौ ॥ ९८ ॥

जातिशब्दभिन्ने पञ्चम्यन्ते उपपदे जनेर्डः । संस्कारजः । अदृष्टजः । संस्कारत्वमदृष्टत्वं च नजातिर्व्यवस्थापकाभावादिति वैशेषिकाः ।

## उपसर्गे च संज्ञायाम् ॥९९॥

प्रजायते इति प्रजा । प्रजा स्यात्संततौ जने धातूपपदप्रत्यय समुदायेन संज्ञायां गम्यायां ।

## अनौ कर्मणि ॥ १०० ॥

अनुपूर्वाज्ज नेः कर्मण्युपपदे डः । पुमांसमनुरुध्य जाता पुमनुजा । स्त्र्यनुजः अनुरोधविशिष्टजननं जनेरर्थः । तदेकदेशानुरोधापेक्षया कर्मत्वम् ।

## अन्येष्वपि दृश्यते ॥ १०१ ॥

उपपदान्तरेऽपि जनेर्डः । अजः । ब्राह्मणजः । सप्तमीनिर्देशादुपपदान्तरमेव लब्धम् । अतो धात्वन्तरलाभार्थमन्येभ्योऽपि दृश्यते इत्यपि वक्तव्यम् । तेन क्वचित्कारकान्तरेष्वपि धात्वन्तरादपि । परितः खाता परिखा । यत्तु अन्तात्यन्तेति सूत्रे-

ऽन्यत्रापि दृश्यते इति वार्तिकम् । तद्भूतकालव्यतिरेकेऽपि तदर्थम् । वस्तुतस्तु प्रकृतसूत्रेऽपिशब्दस्य सर्वोपाधिव्यभिचारार्थत्वान्नदेतच्चेति वार्तिकद्वयमप्यनारम्भ्यम् । इकोगुणेति सूत्रे गमेरयं डो वक्तव्य इति भाष्यस्वारस्यात् ।

# निष्ठा ॥ १०२ ॥

भूतार्थवृत्तेर्धातोः क्तक्तवतू स्तः । आद्यो भावकर्मणि अन्त्यः कर्तरीति विवेकः । ननु इहैव क्तक्तवतू निष्ठेति संज्ञा कार्या । यौ भूते क्तक्तवतू(तौ)निष्ठासंज्ञौ । विशिष्टानुवादसामर्थ्याद्भूते तयोर्विधानमनुमेयम् । अन्यथा विहितयोः संज्ञा संज्ञया च विधानमित्यन्योन्याश्रयः । नच सिद्धं तु नित्यशब्दत्वादित्ययं परिहारः । मृजेर्वृद्धिरित्यादिना हि प्रयोगसमवेतानामाकारादीनां साधुत्वमन्वाख्यायते क्तक्तवत्वोस्तु सानुबन्धकयोः प्रयोगसमवायो नास्ति इति मैवम्, वर्तमानार्थकयोः संज्ञानुपपत्तेः । नचान्योन्याश्रयः । निष्ठेत्युक्ते संज्ञावाक्यस्मरणात्सामर्थ्यात्तद्विधानोपपत्तेः ।

'आदिकर्मणि निष्ठा वक्तव्या'कर्मशब्दोऽत्र क्रियापरः । समुदायघटकयत्किञ्चिद्व्यापारव्यक्तिष्वतीतासु समुदायरूपक्रियाया भूतत्वाभावात्सूत्रेणाप्राप्तावारम्भः । आद्यकर्मणो यत्किञ्चिद्व्यापारस्य भूतत्वे निष्ठेति वार्तिकार्थः । अयंच कर्तर्यपीति वक्ष्यते । नच तदनुवादसामर्थ्या देवादिकर्मणि निष्ठासिद्धिः । वर्तमानार्थकनिष्ठापरतयापि तदुपपत्तेः ।

भाष्यकारास्त्वाहुः । यस्या व्यापार व्यक्तेरतीतत्वं तद्विवक्षया सूत्रेणैव सिद्धम् । अत एव प्रकृतः कटं देवदत्तः प्रकरोति कटं देवदत्तः इति लट इव प्राकार्षीत्कटं देवदत्त इति लुङोऽपि प्रयोगस्येष्टत्वात् । तस्य चाद्यव्यापारविवक्षाव्यतिरेकेण दुरुपपा

हुतवान् । उक्तं च हरिणा—

समूहः स तथाभूतः प्रतिभेदं समूहिषु ।
समाप्यते ततो भेदे कालभेदस्य सम्भवः ॥

समुदायाभिप्रायेण तु कटं प्रकरोतीत्येव सिद्धमिष्टम् ।

## सुयजोर्ङ्वनिप् ॥ १०३ ॥

सुत्वा सुत्वानौ । यज्वा तु विधिनेष्टवान् ।

## जीर्यतेरतृन् ॥ १०४ ॥

जरन् जरन्तौ । वासरूपविधिना जीर्णो जीर्णवान् ।

## छन्दसि लिट् ॥ १०५ ॥

भूतसामान्ये । अहं सूर्यमुभयतो ददर्श । अहं द्यावापृथि-वी आततान ।

## लिटः कानज्वा ॥ १०६ ॥

चक्राणा वृष्टिम् ।

## क्वसुश्च ॥ १०७ ॥

योनो अग्ने अररिवाँ अघायुः । रादाने । आदन्तत्वाद्धस्वे-काजितीट् । नञ् समासे पूर्वपदप्रकृतिस्वरः । दीर्घादटीति नस्य रुत्वम् । आतोटि नित्यमिति अनुनासिकः । ननु वावचनं व्यर्थम् । नच लादेशेषु वासरूपविधेरभावात्पक्षे लिडादेशश्रवणार्थम् । छन्दसि लुङ् लङ् लिट इत्येव सिद्धेः । मैवम् । उत्तरार्थत्वात् । अथोभयोरपि कित्त्वं किमर्थम् । असंयोगाल्लिट् किदित्ये-

व सिद्धेः । नच बद्धधानेत्यत्र बधबन्धने इत्यस्मात्कानचि छान्दसत्वाद्धलादिः शेषाभावे कित्त्वेनानुनासिकलोपार्थं तत् । संयोगान्तत्वादसंयोगादित्यस्यानवकाशात् । मैवम् । अञ्जेः क्नौ आजिवानित्यत्र नलोपार्थं चेति वाच्यम् । (१)छन्दस्युभयथेति सार्वधातुकत्वात्सार्वधातुकमपिदिति ङित्त्वेनैव नलोपसिद्धेः । सत्यम् । ऋकारान्तगुणप्रतिषेधार्थं अन्यथा तेरतुरित्यादाविव तितिराण इत्यादौ ऋच्छत्यॄतामिति गुणापत्तेः । नह्येतन्ङित्त्वेनैव वार्यम् । प्रतिषेधविषये एव विधानात् । कित्त्वसामर्थ्यात्तु तद्बाधात् । एतेन कित्करणसामर्थ्याद्भाषायामप्यनयोः साधुत्वकल्पनमपास्तम् ।

# भाषायां सदवसश्रुवः ॥१०८॥

एभ्यो भूतसामान्ये वा लिट् तस्य च नित्यं क्वसुः । तथाहि 'भाषायां सदादिभ्यो वा लिट्' इति वार्तिकम् । अन्यथादेशविधानसामर्थ्यात्सदादिभ्यो भूतसामान्येऽनुमीयमानो लिट् लुङो बाधकः स्यात् । लुङो ह्यपवादस्त्वयम् । एतत्सूत्रानुमितो लिट् । अनद्यतने लङ् । परोक्षे लिट् च । यत्रापवादविप्रतिषेधाल्लङ् लिटावेव स्याताम् । भूतसामान्यस्यावकाशत्वात् परोक्षे लिडित्यस्यात्राप्रवृत्तत्वेन तस्य क्वस्वादेशविध्यस्वभावत्वात् ।

'अनद्यतनपरोक्षयोश्च वा लिड् वक्तव्यः' । उपसेदिवान् कौत्सः । उपासदत् । उपासीदत् । उपससाद । 'तस्य क्वसुरपरोक्षे नित्यम्' । विकल्पनिवृत्त्यर्थं नित्येति । परोक्षे लिडित्यस्य तिङा श्रवणार्थं अपरोक्षेति । अनद्यतनेति वार्तिकेन वा विहितस्य लिटोऽप्रवृत्तौ लङ् लिटौ भवत । परोक्षे लिडित्यस्य तु क्वस्वभावात्तिङादेशाः ।

---

(१) छान्दसलिडादेशयोरनयोरित्यधिकः पाठो मूलपुस्तके ।

भाष्यकारास्त्वाहुः—अत्र वेत्यनुवृत्तं लिटा सम्बध्यते न क्कसुना। लिडमात्रपक्षे लुङ्। ततो लङ्लिटौ विधावध्येतत्सूत्रानुवृत्त्या अनद्यतनपरोक्षयोरपि सदादिभ्यो वा लिड्भवतीति सिद्धम्।

# उपेयिवाननाश्वाननूचानश्च ॥ १०९ ॥

एते निपात्यन्ते। उपेत्यतत्रम्। उपेयिवान्। ईयिवान्। समीयिवान्। भूतसामान्ये वा लिट् क्कसुश्चेति। समिति प्राग्वत्। अटाद्भिरुच्चैरटवीत्वमीयुषी। नञ्पूर्वादश्नातेः क्कसुरिडभावश्च। अनुपूर्वाद्वचेः कर्तरि कानच्।

अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः।

ईयिवानित्यत्रेणो लिट् क्कसुः। इडागमात्पूर्वं नित्यत्वाद्द्विर्वचन दीर्घ इणः किनीत्यभ्यासदीर्घः। तत्सामर्थ्यान्नैकादेशः। नचेयतुरित्यादिर्दीर्घावकाशः। तत्रापि यणादेशस्य स्थानिवद्भावेनैकादेशप्रसङ्गात्। पूर्वपरोभयाविधेरपि पूर्वविधित्वात्। ततश्च वलादिलक्षणेटो 'नेड्वशि कृती'ति निषेधे, क्रादिनियमात्प्राप्तौ वस्वेकाजाद्घसामिति एभ्य एव वसोरिट् नान्येषामिति नियमेन निषिध्यते। उक्तरीत्या एकाच्त्वाभावात्। तथाच पूर्वएव इडत्र निपात्यते इति स्वीकारे विशेषानुपादानात्संप्रसारणस्थलेऽपि इडापत्तिः। तस्माद्वस्वेकाजिति निषिद्धस्य प्रतिप्रसवमात्र क्रियते इति वलादावेवेड् नत्वजादाविति नदोषः। तस्माद्द्विर्वचनेऽभ्यासदीर्घ चैकादेशः। तस्येयादेशो निपात्यते। इयादेशस्य निपातनेतु ईयिवानित्यादि न स्यात्। नच दीर्घ एकादेशबाधकः। इणो यणत्यस्यैव तथात्वात्। अत्रच तन्निमित्तत्वाभावेन एकादेशस्य-

सुस्थत्वात् । नचाभ्यासदीर्घोत्तरं वार्णादाङ्गमिति न्यायेन एका-देशं बाधित्वा इणोयणादेशे तस्य स्थानिवद्भावादेकादेशप्राप्तेरुक्त-त्वात् । अभ्यासदीर्घत्वमेकादेशबाधकमिति कथमेतदिति वा-च्यम् । रूपातिदेशादिकारस्वरूपाश्रयस्यैकादेशस्य यकारे प्रा-प्त्यभावात् । पूर्वं बाधितस्यैकादेशस्य स्थानिवद्भावेऽपि बाधित-त्वाच्च । पूर्वपरयोर्विधौ स्थानिवद्भावाभावाच्च ।

यद्वा अभ्यासदीर्घे कृते तदुत्तरस्य इकारस्याप्राप्त एव य-णादेशो हलादौ निपात्यते ततो वस्वेकाजित्यनेनैव इड् भवतीति नाजादावतिप्रसङ्गः । अपर आह—

नोपेयिवान्निपात्यो द्विर्वचनादिड्भवति परत्वात् ।
अन्येषामेकाचां द्विर्वचनं नित्यमित्याहुः ।
अस्य पुनरिट् च नित्यो द्विर्वचनं नच विहन्यते ह्यस्य ।
द्विर्वचन चैकाच्त्वात्तस्मादिड् बाधते द्वित्वम् ।

अस्यार्थः-इणो भाषायां भूतसामान्ये लिडेव विभाषा विधे-यः । तस्यच नित्यं क्वस्वादेशः । द्विर्वचनं बाधित्वा परत्वादिटः पूर्वं प्रवृत्तेः । नच बिभिद्वान् चिच्छिद्वान् इत्यादावतिप्रसङ्गः त-स्य द्विर्वचनस्य नित्यत्वात् ततोऽनेकाच्त्वादिटो विघाताभावात् । तथाच परत्वान्नित्यत्वाच्च इट्सिद्ध एवोति न किञ्चिन्निपात्यमिति ।

# लुङ् ॥ ११० ॥

भूतसामान्ये धातोर्लुङ् । अपाक्षीत् । सामान्यविवक्षायां लुङ् विशेषविवक्षायां वक्ष्यमाणौ लङ्लिटाविति विवेकः । 'वसेर्लुङ्-रात्रिशेषेऽनद्यतने जागरणसंततावितिं वाच्यम्' । रात्रेराद्यया-मद्वयं जागरित्वा चतुर्थे यामे यदाऽमुत्रावात्समिति प्रयुङ्क्ते तदाति-क्रान्तरात्रिप्रहरत्रयवासस्यानद्यतनत्वाल्लङ्प्रसङ्गे लुङ् विधी-

थते । जागरेति किम् । यदा प्रहरत्रयमध्ये किञ्चिदपि जागरित्वा चतुर्थे प्रयुङ्क्तेऽसुत्रावमिति लङेव यथा स्यात् ।

## अनद्यतने लङ् ॥ १११ ॥

भूतानद्यतनार्थवृत्तेर्धातोर्लङ् । संपूर्णो दिवसस्तत्पूर्वोत्तरवर्तिन्यो रात्र्योश्चरमप्रथमयामौ चेत्येतावान्समयोऽद्यतनस्तद्भिन्नोऽनद्यतन इति संप्रदायः । दिवसश्च शब्दप्रयोगाधिकरणं ग्राह्यो नतु शाब्दबोधाधिकरणम् । प्रयोगाधिकरणादिनाऽतीतस्यापि भाविदिनवृत्तिशाब्दबोधापेक्षयानद्यतनत्वेन लङ् प्रयोगापत्तेः । अपचत् । न विद्यतेऽद्यतनो यस्मिन्सोऽनद्यतनः तेन द्वयोर्विषये लुङेव । अद्य ह्यश्चाभुंज्महि । नचैवमद्यतनेऽप्यद्यतनाभावेन लङापत्तिराधाराधेयभावस्य भेदनिबन्धनत्वादिति वाच्यम् । समुदायावयवयोर्भेदमाश्रित्य समुदायेऽद्यतने अवयवा अद्यतनाः सन्तीत्युपपत्तेः । तदाह हरिः ।

कालस्याप्यपरं कालं निर्दिशन्त्येव लौकिकाः ॥
नच निर्देशमात्रेण व्यतिरेकोऽनुगम्यते ।

अद्यतनकालोपाधीनां भूयस्त्वात् एकस्मिन्नपरस्य वृत्तिः सम्भवत्येव । परन्तु नैकेन रूपेण इदानीमिदानीमिति प्रत्ययाभावात् । भिन्नरूपेण तु भवत्येव । 'परोक्षे विज्ञाते प्रयोक्तुर्दर्शनविषये लङ्वक्तव्यः' । अरुणद्यवनः साकेतम् । प्रयोक्तृसमानकालीनतया तत्प्रत्यक्षयोग्ये परोक्षेऽप्यर्थे प्रयोक्त्रा विज्ञाते लङित्यर्थः । परोक्षे किम् । उदगादादित्यः । विज्ञाते । किम् । चकार कटं देवदत्तः । दर्शनविषये किम् । जघान कंसं किल वासुदेवः ।

## अभिज्ञावचने लट् ॥ ११२ ॥

अभिज्ञा स्मृतिः यत्तु यां काञ्चित्ब्राह्मणवतीमिष्टकामभि-जानीयात्ता मध्यमायां चितावित्यत्र 'वचनान्मध्यमायां स्युः । प्रत्यक्षब्राह्मणोदिताः'। जानातिरभिपूर्वोऽयं प्रत्यक्षे वर्तते इति मी-मांसकैरुक्तम् । तत्प्रायिकम् । स्मृतिवाचकत्वं च न स्मृतित्वाव-च्छिन्नशक्यताकत्वं किन्तु स्मृतितात्पर्येण प्रयुक्तत्वं तेन बुध्यादीनां ज्ञानार्थाना च संग्रहः । स्मृतिवाचिन्युपपदे भूतानद्यतनेऽर्थे धातो-र्लृट् । लङोऽपवादः । अभिजानासि देवदत्त काश्मीरेषु वत्स्यामः ।

# न यदि ॥ ११३ ॥

यद्योगे उक्तं न । स्मरसि देवदत्त यत्काश्मीरेषु अवसाम ।

# विभाषा साकाङ्क्षे ॥ ११४ ॥

धात्वर्थस्य लक्ष्यलक्षणभावेन साकाङ्क्षत्वेन उक्तविषये वा लृ-ट् । 'सर्वत्रेति वक्तव्यम्' । यद्योगे तदभावे चेत्यर्थः । यदीत्यस्या-नुवृत्त्योभयत्र विभाषेयम् । स्मरसि देवदत्त यत्काश्मीरान् ग-मिष्यामः । यत्त्रौदनं भोक्ष्यामहे । स्मरसि देवदत्त काश्मी-रान् गमिष्यामः तत्रौदनं भोक्ष्यामहे । उभयत्राप्यगच्छामाभुंज्महि इति वा । गमनं लक्षणं प्रसिध्या परार्थमुपादीयमानत्वात् । भो-जनं लक्ष्यं स्मार्यमाणत्वात् ॥

# परोक्षे लिट् ॥ ११५ ॥

भूतानद्यतनपरोक्षार्थक्रियावृत्तेर्धातोर्लिट् । अत्र वार्तिकम् ।

परभावः परस्याक्षे परोक्षे लिटि दृश्यते ।

उत्वं पादेः परादक्ष्णः सिद्धं वा स्यान्निपातनात् ।

अस्यार्थः । परोक्षे लिट् इत्येतत्सूत्रस्थत्वेन परोक्षशब्दोपल-

क्षणम् । परमक्ष्णः परोक्षम् मयूरव्यंसकादित्वात्समासः । अक्षि च केवलेन्द्रियमात्रपरम् । अतएवाक्ष्णोऽदर्शनादित्यजिति केचित् । यद्वा अच्प्रत्यन्ववेति । योगविभागादत्रैव निपातनाद्वा समासान्तोऽच् । प्रतिपरसमनुभ्योऽक्ष्ण इति टच् वा । तस्याव्ययीभावविधानेऽपि परशब्दस्याक्षशब्देन सह तदर्थभवेन समासान्तरे प्रवृत्तेः । परत्वञ्च तज्जन्यज्ञानविषयत्वानापन्नत्वम् । अन्यथा तस्यापि साक्षात्कारयोग्यत्वात्परोक्षत्वानुपपत्तेः । साक्षात्कारश्च प्रयोक्तृवृत्तिर्ग्राह्यः । तथाच ह्यः पपाचेति प्रयोगः ।

यत्तु भाष्ये वर्षशतवृत्तं परोक्ष वर्षसहस्रं वृत्तं वा कुड्यकटान्तरितं वा द्व्यहवृत्तं वा त्र्यहवृत्तंवेति पक्षा उक्तास्ते प्रदर्शनमात्रार्थाः । यद्यपि क्रियाया अयुगपद्भाविव्यापारसमूहरूपत्वात्तत्साधनीनां च शक्तीनां नित्यानुमेयत्वात्परोक्षत्वनियमादेतद्विशेषणमनुपयुक्तम् । तथापि शक्तिमतो द्रव्यस्य परोक्षत्वमिह विवक्षणीयम् । तत्प्रत्यक्षपरोक्षत्वाभ्यां क्रियाप्रत्यक्षत्वपरोक्षत्वाभिमानात् । नचैवमयं पपाचेति न स्यात् । शक्तिमतो देवदत्तस्य प्रत्यक्षत्वादिति वाच्यम् । तद्व्यापार व्यक्त्याविष्टस्य परोक्षताया वाच्यत्वात् ॥

केचित्तु क्रियाया एव अत्र परोक्षत्वं व्याख्येयम् । समुदायस्य परोक्षत्वेऽपि प्रत्येकमपरोक्षत्वात् । पिण्डीभूता न शक्या निदर्शयितुमिति भाष्यस्वारस्यात् । धातुपदस्य क्रियापरत्वे स्ववाच्यत्वं सम्बन्धः । साधनपरत्वे स्वार्थसाधनत्वमिति लक्ष्यतावच्छेदकसम्बन्धलाघवस्यैव विनिगमकत्वात् । प्रत्येकं क्रियात्वाभावेऽपि धात्वर्थत्वानपायादित्याहुः ।

तच्चिन्त्यम् । तत्समुदायघटकसर्वव्यापाराणां प्रत्येकं प्रत्यक्षस्थलेऽपि लिडापत्तेः । समुदायस्य परोक्षतायास्तत्रापि सु

स्थत्वात् । तथाच परोक्षविशेषणमेव निष्प्रयोजनं स्यात् । नन्ववयवानामेवेह पारोक्ष्य विवक्षितमितिचेत् कतिपयानां, यावतां वा, नान्त्यः । वैयर्थ्यतादवस्थ्यात् । नाद्यः । अपसिद्धान्तात् । व्यापारैकदेशसाक्षात्कारेऽपि लिट्प्रयोगस्यानिष्टत्वात् । अन्यथायदातेन स्थाल्यां तण्डुलोदकं दृष्टं तदा साधनपरोक्षेव्यापारपरोक्षे वा सूत्रार्थेपपाचेति भवत्येवेति भाष्यविरोधात् । यावव्द्यापारपरोक्षस्यैव तत्रोक्तत्वात् । क्रियानाविष्टसाधनमात्रप्रत्यक्षे भवत्येवेति स्वयमभ्युपगमाच्च । क्रियाविष्टकर्तृसाधनप्रत्यक्षेऽपि साधनान्तराप्रत्यक्षत्वेन क्रियानाविष्टत्वस्य वैयर्थ्यापत्तेः ।

एवं भूतत्वमपि अवयवस्यैव विशेषणं स्यात् । अवयवस्य परोक्षान्वयितावच्छेदकत्वे तस्यैव भूतान्वयितावच्छेदकत्वात् । तथा च ह्यः पपाचेति प्रयोगे प्रकृतपाकानुकूलव्यापारत्वावच्छेदेन भूतान्वये बोधानुपपत्तिरिति दिक् ।

'सुप्तमत्तयोरुत्तम इति वक्तव्यम्' । सुप्तोऽहं किल विललाप । बहु जगद पुरस्तात्तस्य मत्ता किलाहम् । इदं च चित्तविक्षेपनिमित्तमात्रोपलक्षणम् । इदंच न्यायलभ्यम् । स्वव्यापारस्यापि व्यासङ्गादिना स्वयमप्रतिसंधानसंभवात् ।

'अत्यन्तापह्नवे चेतिवक्तव्यम्' । नो खाण्डकांजगाम नो कलिङ्गान् जगाम । निषिद्धदेशेषु चिरं त्वयोषितमित्युक्ते चिर वासनिषेधार्थं तद्देशगमनस्यापन्हवः । 'नकारि सोमं (न)प्रपपौ नदाधजस्य प्रतिजग्राह को मे मनुष्यः प्रहरेद्वधाय' । अपह्नवत्वं स्वरूपसदेव नियामकम् । नतुशाब्दधीविषयः अपह्नवत्वव्याघातात् । कारी ऋत्विग्भूत्वा सोमं न पपावपितु यजमान एव भूत्वा अयाज्ययाजनमप्रतिषिध्य ऋत्विक्त्वमेवापह्नुतम् । दाधा जनपदविशेषः । तत्र जातस्य नाहं प्रतिजग्राहेति सर्वथा प्रतिग्रहापह्नवे निषिद्धप्रति-

ग्रहस्य सुतरामेव निह्नवः । कोऽमनुष्योऽममामत्यारोपणेन प्रहरेदि-त्यर्थः । व्याख्यानेषु प्रागिरायेण अध्यापकनिषेधोऽत्यन्तापह्नव इति बोध्यम् । अथ कथं व्यातेने किरणावलीमुदयन इति । यत्तु आशसाया भूतवच्चेति लिङ् कर्तुमिच्छतीत्यर्थादिति तन्न । तत्र लुङ एवातिदेश इति सिद्धान्तात् ।

यदप्याहुः । यद्यपि उत्तमपुरुषत्रयादेशविधानं यथासंख्य-संपादनेन चरितार्थं तथापि णलुत्तमो वेति ज्ञापकादपरोक्षेऽपि लिट् साधुरिति । तन्न सुप्तादिविषये चरितार्थत्वात् । यत्त्वत्रापि ग्रन्थ-करणरभसनशाच्चित्तविक्षेप इति तन्न । बहुतरमनः प्रणिधानसाध्य-शास्त्रार्थनिर्णयजनकशब्दरचनात्मके ग्रन्थेऽनवधानत्वानिवत्त्रयोश्च विस्तारक्रियायामसंभवात् । सत्यम् । तिङन्तप्रतिरूपकनिपातइति केचित् । शिष्यश्लोकोऽयमित्यन्ये । इदं च वर्धमानतद्विवरणादौ स्पष्टम् ।

# हशश्वतोर्लङ् च ॥ ११६ ॥

अनयोर्योगे लिटो विषये लङ् चाल्लिट् इति हाकरोत् शश्वदकरोत् । चकारच ।

# प्रश्ने चासन्नकाले ॥ ११७ ॥

सन्निहितसमये पृच्छ्यमानेऽर्थे पूर्ववत् । पञ्चवर्षाभ्यन्तरमास-न्नम् । तदुत्तरमनासन्नमिति संप्रदायः अगच्छत्किम् । जगाम किम् । अनासन्ने तु कंसं जघान किम् ॥

# लट् स्मे ॥ ११८ ॥

स्मशब्दयोगे लट् । लिटोऽपवादः । धर्मेण स्म कुरवो यु-

द्यतने । 'स्मपुरा भूतमात्रे, न स्मपुराद्यतने इति वक्तव्यम्' । स्मपुरेतिशब्देन आद्यन्तानुकरणद्वारा पञ्चसूत्री गृह्यते । तत्र भूतमात्रे प्रत्ययः । स्मपुराशब्दवत्सूत्रत्रयलक्षणस्तु प्रत्ययोऽद्यतने न भवतीति वार्तिकद्वयार्थः । तथाच लट्स्मे अपरोक्षेच पुरिलुङ्चास्मे इतिसूत्रत्रयेणानद्यतनभूतप्रत्ययः । ननौ पृष्टप्रतिवचने 'नन्वोर्विभाषा' इत्येताभ्यां भूतसामान्ये इति पर्यवसन्नम् ।

अत्र भाष्यम्—स्मादिविधिः पुरान्तो यद्य विशेषेण किं कृतं भवति ॥ नस्म पुराद्यतन इति ब्रुवता कात्यायनेनेह ॥ अनुवृत्तिरनद्यतनस्य लट्स्म इत्यत्र नास्ति नञ्कार्यम् ॥ अपरोक्षानद्यतनौ ननौ विभाषा चहि निवृत्तौ ॥ नपुरानद्यतन इतिभवेदेतद्वाक्यं तत्रचापिलुङ्ग्रहणम् ॥ अविशेषेण स्मपुरा हेतू इति तत्रचापि शृणु भूयः ॥ अपरोक्षेचेत्येष प्राक् पुरिशब्दादिति निवृत्तः ॥ सर्वत्रानद्यतनस्तथासति नञा किमिह कार्यम् ॥ स्मादावपरोक्षेचेत्यकार्यमपि शक्यमेतदिति ॥शक्यंहि निवर्तयितु परोक्षे इति लट्स्म इत्यत्र॥ स्यादेषा तव बुद्धिः स्मलक्षणेत्येवमेव सिद्धमपि ॥ लट्स्म इति भवेन्नार्थः तस्मा द्वाच्यं परार्थ तु ॥

अयमर्थः—उक्तसूत्रत्रये ऽनद्यतनग्रहणानुवृत्त्यैव सिद्धेः द्वितीयं वार्तिकं नकर्तव्यम् । ननावित्यादिसूत्रद्वयं च तदनुवृत्त्यभावेन तत्प्रवृत्तिसिद्धेः । नचैवं पुरिलुङ्चास्मे इत्यत्र तदनुवृत्तिर्नस्यादितिवाच्यम् । तस्य भूतसामान्यविषयकत्वलाभार्थं नपुराद्यतन्यमिति वाच्यम् । लुङ्ग्रहणसामर्थ्यादेव तत्रानद्यतनग्रहणानुवृत्त्यनुमानात् । अस्यभूतसामान्यपरत्वेविभाषानुवृत्त्या विकल्पेन लड्विधानादेव पक्षे लुङः सिद्धेः । अनद्यतनानुवृत्तौ तु लुङ्ग्रहण विना लुङ् दुर्लभः । विकल्पविधाने लडभावपक्षे लङ एवप्रसङ्गादिति विशिष्य तदुपादानसार्थक्यम् ।

## अपरोक्षे च ॥ ११९ ॥

भूतानद्यतने लट् स्मयोगे । एवं स्म पिता ब्रवीति ॥

## ननौ पृष्टप्रतिवचने ॥१२०॥

अनद्यतनपरोक्षेत्युभयं निवृत्तम् । ननुयोगे भूते लट् उत्तर वाक्ये । नच प्रतिवचनस्य प्रश्नपूर्वकत्वात्प्रश्नपदं व्यर्थम् । विरुद्धवचनाभिमुख्यतद्वीजानामपि वाच्यत्वात् । अपाक्षीः किम् । ननु पचामि भोः । 'ननौ पृष्टप्रतिवचन इत्यशिष्यम्' । क्रियासमाप्तिविवक्षितत्वात् । अस्यार्थः । पाकादिक्रियानिवृत्तावपि तत्कार्यस्य श्रपादेरनुवृत्तेस्तस्या एवासमाप्तिविवक्षायां वर्तमाने लडित्येव सिद्धम् । एतादृशवर्तमानानुपादाने ननु मां कुर्वन्तं पश्य, ननु मां कुर्वाणं पश्येति वर्तमानलडादेशयोः शतृशानचोरसिद्ध्यापत्तेः ।

## नन्वोर्विभाषा ॥ १२१ ॥

अनयोर्योगे वा लट् । पक्षे लङ् पूर्वविषये । अपाक्षीः किम् । न पचामि । नापाक्षम् । अहं नु पचामि । अहं न्वपाक्षम् ।

## पुरि लुङ् चास्मे ॥ १२२ ॥

अनद्यतनेत्यनुवर्तते । भूतानद्यतने पुरायोगे विभाषा लुङ् चाल्लिट् नतु स्म योगे । पक्षे लिट् । रथेनायं पुरा याति। रथेनायं पुरायासीत् । आयात् ययौ वा। स्मयोगेतु याति स्म पुरा । 'हशश्वद्भ्यां पुरालक्षणो विप्रतिषेधेन' रथेन ह पुरा शश्वद्याति । अयासीदित्यादि। स्मः सर्वेभ्यो विप्रतिषेधेन परपूर्वविप्रतिषेधाभ्यामित्यर्थः ॥ तथाचा-

स्मेग्रहणं नकर्तव्य मित्याशयः । नह स्मावे शश्वत् पुराग्निरप-
रशुवृक्णं दहति ।

# वर्तमाने लट् ॥ १२३ ॥

प्रारब्धापरिसमाप्तक्रियोपलक्षिते कालेधातोर्लट् । पचति । करोति । 'प्रवृत्तस्याविरामे नित्यप्रवृत्ते च शासितव्या भवन्त्यवर्तमानत्वात्' । भवन्तीति लट् संज्ञा प्राचाम् । इहाधीमहे । मध्ये भोजनादिक्रियाव्यवधानादप्राप्तिः । तिष्ठन्ति पर्वताः । स्रवन्ति नद्यः । स्थानादेः सार्वदिकत्वात्साध्यत्वाभावे क्रियात्वाभावात्क्रियाधर्मस्य वर्तमानत्वस्याप्यभाव इति वचनारम्भः । जन्यस्य प्रागभावध्वंसावश्यकत्वाद्वर्तमानत्वस्य च तत्प्रतिद्वन्द्वित्वान्नित्यप्रवृत्तस्य च भूतभाविष्यत्वाभावेन वर्तमानत्वं क्रियात्वं च नास्तीत्यभिप्रायः । पर्वतादिपदं चात्माकाशादेर्नित्यस्योपलक्षणम् । पर्वतादिस्थितेरनित्यत्वात् ।

अत्र सिद्धान्तः । न्याय्यं त्वनपवर्गात् । अध्ययनप्रवृत्त्यनन्तरकालीनतत्समाप्तिपूर्वकालीनभोजनादेर्नान्तरीयकतया व्यवधायकत्वाभावात्तदवयवत्वाद्वा सूत्रेणैव सिद्धम् । अन्यथा भुङ्क्ते इत्यादावपि जलपानादिना व्यवधानापत्तेः । तदुक्तं हरिणा—

व्यवधानमिवोपैति विच्छिन्नामिव दृश्यते ।
क्रियासमूहे भुज्यादिरन्तरालप्रवृत्तिभिः ॥
नच विच्छिन्नरूपापि साविरामान्निवर्तते ।
सत्रैव हि क्रियान्येन संकीर्णेवोपलभ्यते ॥
तदन्तरालदृष्टा वा सत्रैवावयवक्रिया ।
सादृश्यात्सति भेदे तु तदङ्गत्वेन गृह्यते ॥

पर्वतास्तिष्ठन्तीत्यादौच भूतभाविष्यद्वर्तमानानां राज्ञां याः क्रि-

याः ता भूतादिभेदभिन्नाः पर्वतादिस्थित्यादेर्भेदिका इत्युपपादनीयम् । तदाह हरिः—

परतो भिद्यते सर्वमात्मा तु न विकल्पते ।
पर्वतादिस्थितिस्तस्मात्पररूपेण भिद्यते ॥
प्रसिद्धभेदा व्यापारा विरूपावयवक्रियाः ।
साहचर्येण भिद्यन्ते सरूपावयवक्रियाः ।

प्रसिद्धपरिमाणानां तत्क्रियाणामेव क्रियान्तरपरिच्छेदकतया कालरूपत्वात्कालस्य च क्रियाकारणत्वादित्यर्थः ।

स्यादेतत् । निष्पन्नस्यार्थस्य भूतत्वादनिष्पन्नस्य च भावित्वात्प्रकारान्तराभावाद्वर्तमानकालो दुर्वचः । तदाहुः—

नवर्तते चक्रमिषुर्न पात्यते न स्यन्दन्ते सरितः सागराय ।
कूटस्थो लोको नविचेष्टिनास्ति यो ह्येवं पश्यति सोपजनं वः ।

मीमांसको मन्यमानो युवा मेधाविसंमतः ।
काकं स्त्रोहानुपच्छति किं ते पतितलक्षणम् ।
अनागतेन पताति अतिक्रान्ते च कारकः ।
यदि संप्रति पतासि सर्वो लोकः पतत्ययं ।
हिमवानपि गच्छति ।
अनागतमतिक्रान्तं वर्तमानामिति त्रयम् ॥
सर्वत्रच गतिर्नास्ति गच्छतीति किमुच्यते ।

अयमर्थः—परिवर्तनक्रियायाअनेकक्षणवृत्तितया क्षणानां च यौगपद्याभावात्कथं तस्या वर्तमानत्वम् । स्थूलकालोपाधिमादायैक्योक्तौ तु युगादिरूपोपाधिमादाय तद्वृत्तिध्वंसप्रागभावदशायां प्रतियोगिनामपि वर्तमानत्वव्यवहारापत्तेः । नच यत्कालावच्छेदेन यस्य सत्वन्तस्य स एव वर्तमानकाल इतिवाच्यम् । सर्व-

स्य वर्तमानरूपतयात्माश्रयापत्तेः । नच सत्वं सम्बन्धमात्रं तद्घटितत्वमात्रस्य तदीयत्वे तदूर्ध्वमप्रागभावसम्बन्धस्यातिप्रसक्तत्वात् । नच यस्य तत्प्रतियोगिकध्वंसादिवृत्तिप्रतियोगिताकत्वेऽपि विवक्षितस्य तद्वृत्तिप्रतियोगिताकत्वस्यास्याभावान्न दोष इति वाच्यम् । तत्प्रतियोगिकध्वंसाद्यधिकरणत्वसम्बन्धेन तत्सम्बन्धस्यापि ध्वंसादिकाले सत्त्वात् । नच यत्र समये यदत्यन्ताभावो नास्ति स तस्य वर्तमानकाल इति वाच्यम् । असिद्धेः । घटाधिकरणकालेऽपि घटात्यन्ताभावसत्त्वात् ।

नच प्रतियोगिव्यधिकरणत्वेनाभावो विशेषणीयः । पूर्वापरकाले वर्तमानत्वाभिमतकालेऽपि तदत्यन्ताभावसत्त्वात् । नच प्राक्कालावच्छेदेन संयोगसमवायान्यतरसम्बन्धेन प्रतियोग्यधिकरणे यदत्यन्ताभावो नास्तीति वाच्यम् । व्यधिकरण सम्बन्धेन धर्मेणवावच्छिन्नप्रतियोगिताकत्वस्य घटाभावस्य तदापि भूतलकपालादौ सत्त्वात् । घटध्वंसप्रागभावकालीनपदार्थात्यन्ताभाववृत्तिघटात्यन्ताभावस्याधिकरणस्वरूपतया तादृशपदार्थात्यन्ताभावस्य घटवत्यपि सत्त्वाच्च ।

नच भूतभविष्यद्भिन्नत्वं तत् । भूतत्वादेरपि भविष्यद्वर्तमानाभिन्नत्वादिना निर्वाच्यत्वात् । अत्रोच्यते ।

क्रियाप्रवृत्तौ यो हेतुस्तदर्थं यद्विचेष्टितम् ।
तदन्विष्य प्रयुञ्जीत गच्छतीत्यविचारयन् ।

हेतुः प्रयोजनं गमनस्य देशान्तरप्राप्तिः तदर्थं फलार्थं । इह प्रत्यभिज्ञानात् । क्षणभङ्गनिरासे देवदत्तस्य देशान्तरप्राप्तिर्निर्हेतुका न सम्भवति इति गमनक्रियैव तस्या निमित्तम् । तदालम्बनश्च गच्छतीति प्रत्ययोऽबाधित उत्पद्यते इति सर्वं तावदवगम्यते । क्रियायाः वर्तमानत्वाभावे च भूतभविष्यतोरप्यभावप्रसङ्गः वर्त-

मा ने हि भूतत्वं भविष्यत्वं च प्रतिपद्यते तत्रानेकक्षणसमूहात्मकं क्रियाप्रबन्धरूपं बुद्ध्या संकल्प्य गच्छतीत्यादि प्रयुङ्क्ते इति कैयटः। अयं भावः-विद्यमानप्रागभावप्रतियोगी भविष्यन् तदुपलक्षितः कालोऽपि तथा(१)। ध्वंसप्रतियोगित्वादि मात्रस्यातीतादित्वे सर्वदा तत्प्रतीत्यापत्तेः। ननु स्वध्वंसादिघटितस्यास्य पर्वतास्तिष्ठन्तीत्यादावनुपपत्तिः। एतत्प्रयोगकाले पर्वतादिस्थितेरतीतत्वाद्यभावात्। ध्वंसप्रागभावानवच्छिन्नसमय सम्बन्धस्य स्थितित्वात् 'तम आसीत्तमसा गूढमग्रे तुच्छेनाभ्वपिहितं यदासीत् आत्मैवेदमग्रआसीदित्यादौ तु सुतरामितिचेत् सत्यम्। धर्मिसत्ताया एवात्र वर्तमानत्वमिति सिद्धान्तात्। वेदान्तिनां त्वस्ति ब्रह्मेत्यत्र लकारस्य प्रयोगमात्रसाधुत्वाङ्गीकारात्। नहि स्थितिक्रियायां ब्रह्मणः स्वातन्त्र्यरूपकर्तृत्वसम्भवः। नित्यत्वात्। नापिक्षेमसाधारणीमितेः साध्यता। स्वस्वव्याप्येतरासु यावतीषु व्यक्तिषु सतीषु(२)॥

# लटः शतृशानचावप्रथमा-समानाधिकरणे ॥ १२४ ॥

प्रथमाभिन्नविभक्त्यन्तेन सामानाधिकरण्ये लट एतौ स्तः। पचन्तं पचमानं वा पश्य। शकारः सार्वधातुकसंज्ञार्थः। ऋकार उगित्कार्यार्थः। चाकरः कुर्वाण इत्यादावन्तोदात्तार्थः। यद्यपि

---

(१) 'विद्यमानध्वंस प्रतियोग्यतीतः। अनुत्पन्नध्वंसो नष्टप्रागभावश्च वर्तमानः। तदुपलक्षितः कालोऽपि तथा' इति पुस्तकान्तरेऽधिकः पाठः।

(२) अत्र मूलेऽपि सर्वत्र त्रुटितः पाठः।

क्रियान्तरयोगनिमित्तकं अप्रथमासामानाधिकरण्यं पाचकं देवदत्तं पश्येत्यादौ कृदन्तपदस्योपसर्जनकर्तृप्रतिपादकतया तस्य दर्शनादिक्रियापेक्षकर्मत्वाद्युपपत्तेः । लकारस्तु कर्तृकर्मणोर्विहितोऽपि कर्तृकर्मोपसर्जनक्रियाप्रतिपादकः । पचत्योदनं देवदत्तः पच्यते ओदनो देवदत्तेनेत्यादौ क्रियाप्राधान्यव्यवस्थापनात् । क्रियायाश्च क्रियान्तरयोगाभावात्कर्मादिशक्त्यावेशानुपपत्तिः । अन्यथा अपचदोदनं देवदत्तं पश्येत्यादेर्दुर्वारत्वात् । लड्वाच्यायाः शक्त्यन्तरयोगो नतु लडादिवाच्याया इत्यस्य दुर्घटत्वात् । तथापि तिङ्भाविनो लकारस्य क्रियाया गुणभूते कर्त्रादौ, शत्रादि विषयस्यतु क्रियां प्रति विशेष्यभूते तत्र शक्तिः । पचन्तं देवदत्त पश्येत्यादौ आदेशे विभक्त्यन्तरसामानाधिकरण्यदर्शनात्स्थानिन्यपि तदनुमानात् । नच लटः प्रयोगसमवायाभावादप्रथमासामानाधिकरण्याभावप्रत्यक्षेण सामान्यतो दृष्टानुमानबाधः । लकाराप्रयोगनिबन्धनत्वेन तदभावप्रत्यक्षस्यान्यथासिद्धेः । आदेशेऽप्रथमासामानाधिकरण्यान्यथानुपपत्तिमूलकानुमानस्यान्यथासिद्धतया बलवत्त्वात् । अतएवालातचक्रप्रत्यक्ष सर्वदिगवच्छेदेन रूपानुभवेऽपि तत्सहचरितस्पर्शानुपलम्भभ्रमः । तदुक्तं हरिणा—

स्पर्शाप्रबन्धो हस्तेन यथा चक्रस्य संमतः ।
न तथालातचक्रस्य विच्छिन्नं स्पृश्यते हि तत् ॥

अतएव ज्वालैक्यबुद्धेरपीयमेव गतिरिति सिद्धान्तः ।

अथ पर्युदासोऽयं प्रतिषेधो वा? ॥ नाद्यः । प्रसज्योत्तरपदयोस्तदासिद्धेः । कुर्वतोऽपत्यं कौर्वत इत्यादौ शत्रन्तस्य देवदत्तादिसापेक्षतायामसामर्थ्यात्तद्धितानुपपत्तेः । पदान्तरैरपेक्ष्येच तत्सामानाधिकरण्याभावाच्छत्रादेरनुपपत्तेः । कुर्वतोभक्तिः कुर्वद्भ-

क्तिः । पूर्ववद्योऽत्यम् । नान्त्यः । कुर्वती चासौ भक्तिश्चेत्यादेर-नुपपत्तेः । एवं कुर्वत्तरः, कुर्वद्रूपः । कुर्वत्कल्प इत्यादीनां समानाधिकरणवृत्तितद्धितानामप्यनुपपत्तिर्बोध्या । देवदत्ता-दिपदान्तरसामानाधिकरण्यात् । ननु प्रत्ययोत्तरपदयोश्चेति व-चनान्तरमारम्भणीयम् । पृथगुत्तरपदग्रहण अन्तरङ्गानपीति न्या-येन लुकि कृते प्रत्ययलक्षणप्रतिषेधात् प्रत्यये परतः शत्रादेश-विधेस्तत्राप्रवृत्तेः । अतो नोक्तदोषः ।

मैवम् । तदुक्तम् । 'प्रत्ययोत्तरपदयोर्निमित्तत्वादेरप्रसिद्धि' रिति । प्रत्ययादेशयोः परस्पर निमित्तत्वात् । सत्युत्तरपदे श-तृशानचौ तयोश्च कृत्संज्ञायां सुबुत्पत्तिः। सुब्निमित्तः समासः तन्नि-मित्तं चोपपदमिति इतरेतराश्रयस्य स्पष्टत्वात् ।

अत्र सिद्धान्तः । 'नत्रा लकारस्य कृत्त्वा'दिति । अयमर्थः—त-द्भिन्नप्रत्ययत्वेन लकारस्यापि कृत्सञ्ज्ञया तदन्तस्य प्रातिपदिक संज्ञायां तदाश्रयसुबुत्पत्त्या अणादितरबादीनामुत्पत्तौ तेषु परेषु शत्राद्यादेशविधानान्न दोषः उत्तरपदस्थलेऽपि तिङादेशं बाधित्वा परत्वात्सुबुत्पत्तेः । नच पचतीत्यादावतिप्रसङ्गः । कृताकृतप्रसङ्गि-त्वेन तत्र तिङादेशस्य नित्यत्वात् । नच प्रकृतेऽपि तथापत्तिः । शतृशानचोस्तिङपवादतया तद्विषये तत्प्रवृत्त्यनौचित्यात् । नचैव-मपि वेक्ष्यमाणिरित्यादौ शानचं विनाकारान्तत्वविरहादिञ् न स्यात् । पचतितरा पचतिरूपं इत्यादौ च शत्रादेरापत्तिः । तिङ-श्चान्यात्रापचत्तरामिति लङादिविषये सावकाशत्वात् । एवं प-चति पठतीत्यादावपि लस्य कृत्त्वात्सुबुत्पत्तौ प्रत्यये विहितः श-त्राद्यादेशः स्यात् । लिडादौ तिङा सावकाशत्वात् । सत्यम् । नन्वेगरित्यतो विभाषानुवृत्त्या व्यवस्थितविकल्पविज्ञानाचेष्टव्यव-स्थासिद्धेः । नचैवमप्रमेत्यादिवैयर्थ्यम् । व्यवस्थितविभाषयैव नि-

-त्ययोरादेशयोः सिद्धेरिति वाच्यम् । शतृशानचावित्येकस्मिन् योगे विभाषानुवृत्तिः । 'अप्रथमासमानाधिकरणे' द्वितीयो योगो नियमार्थः । व्यवस्थितविभाषया विस्पष्टप्रतिपत्त्यभावात् । तथाच विकल्पस्य प्रथमासामानाधिकरण्यं विषयः । पचन् पचमानः पचति वा देवदत्तः पचति देवदत्तं पश्येत्यस्य च नापत्तिः । द्वितीयस्य-विधेर्नियतत्वात् । एतेन लट इति वर्तमाने लड्ग्रहणं क्वचित्प्रथमासामानाधिकरण्ये अप्रथमासामानाधिकरण्ये च विध्यर्थम् । तेन पचन्नित्यादौ प्रत्ययोत्तरपदयोश्च तदादेशसिद्धिरिति निरस्तम् । भाष्यविरोधात् । तस्य शतृशानचाविति सूत्रापेक्षया लट इत्यस्योपादाने गौरवाभावात् ।

## संबोधने च ॥ १२५ ॥

हे पचन् । हे पचमान । संबोधनविभक्त्यन्तार्थस्य क्रियान्तरनिरूपितकर्मत्वादिशक्त्यनावेशात्क्रियान्वयित्वेन च प्रथमासामानाधिकरण्यस्याप्यभावादप्राप्तावारम्भः ।

## लक्षणहेत्वोः क्रियायाः ॥ १२६ ॥

क्रियायाः परिचायकहेतौ वर्तमानाद्धातोः लट एतौ स्तः । हेतुपदं फलकारणोभयपरम् । तिष्ठन् मूत्रयति । गच्छन् मूत्रयति स्थानादिक्रियया मूत्रादिक्रिया लक्ष्यते ।

अत्र वार्तिकानि । 'गुणउपसंख्यानम्' बहुषु मूत्रयत्सु को देवदत्त इत्युक्ते यस्तिष्ठन् मूत्रयतीत्युत्तरे च देवदत्तो लक्ष्यते । अशौचादिगुणो वा गृह्यते । तत्र द्रव्यगुणयोरेव लक्ष्यत्वात्सूत्रेणासिद्धावारम्भः । 'कर्तृलक्षणयोः पर्यायेणाचयोगे इति वक्तव्यम्' । योऽधीयान आस्ते स देवदत्तः । यआसीनोऽधीत इति वा ।

पूर्ववाक्ये गुणपदस्य साधनपरत्वे तत एवसिद्धाविदं पर्यायार्थम् । अशौचादिग्रहणे तु विध्यर्थम् । अचयोगे किम् । य आस्ते चाधीते च स चैत्र इति चकारयोगे माभूत् । 'तत्त्वाख्याने च' । शयाना वर्द्धते दूर्वा । आसीनं वर्धते बिसम् । स्वभावाख्यानमेतत् । नत्वासनवृध्योर्लक्ष्यलक्षणभावः । 'सदाच यश्च बहुलम्' । सन् ब्राह्मणः । अस्ति ब्राह्मणः । 'इङ् जुहोत्योर्वा' । अधीते अधीयानः । जुहोति जुह्वान इति । भाष्येतु तिष्ठतिक्रिया सूत्रयतिक्रियाया एव लक्षणं सा तु देवदत्तादेरिति सूत्रेणैव सिद्धेः । योऽधीते इत्यादावपि । अध्ययनासिक्रियायोः परस्परं लक्ष्यलक्षणभावात्पर्यायासिद्धेः । चकारयोगे च समुच्चितक्रियाद्वितयस्य कर्तृलक्षणत्वेन क्रिययो रन्योन्य लक्ष्यलक्षक भावाभावेना न तिप्रसङ्गात् । चैतन्यलक्षणः पुरुष इत्यादौ तत्त्वाख्यानस्यापि लक्षणत्वेन शयानेत्यादेः सिद्धत्वादित्युक्तम् । 'माङ्याक्रोश इति वाच्यम्' । मा पचन् । मा पचमानः । लुङो बाध एतत्प्रामाण्यात् ।

# तौ सत् ॥ १२७ ॥

तौ शतृशानचौ सत्सञ्ज्ञौ । ताविति संज्ञाविधानार्थम् । अन्यथा प्रत्ययविधानापत्तेः। तेनच तच्छब्देन शतृशानचोः स्वरूपमात्रपरामर्शेन स्थानिविशेष परामर्शविरहाल्लकारान्तरस्थानिकयोरपि संज्ञासिद्धिः। नच पूर्वोक्तविशेषानिवृत्त्यासिद्धिः उत्तरत्र वर्तमानग्रहणानुवृत्तेरावश्यकत्वात् । तेन वर्तमान सामीप्यार्थकलडादेशयोर्लृडादेशयोश्च संज्ञा । नच वर्तमानादिति निर्देशात् लृटः सद्वेति वचनाच्च सिद्धिः पूरणगुणेत्यत्र सच्छब्देन तदुपादानानुपपत्तेः । वर्तमानवदित्यत्र प्रत्ययाधिकारेण संज्ञानतिदेशात् । लृट इत्य-

त्रापि । पिष्टपिण्डाः सिद्धाः क्रियन्तामित्यादिवत् सत्संज्ञकप्रतिरूपकयो र्विधानेऽपि विहितयोस्तत्संज्ञानिबन्धनकार्यानपायात् ।

स्यादेतत् । तच्छब्दस्य संनिहितपरामर्शकतया लकारान्तादेशयोर्ग्रहणं दुर्लभम् । नचैवं ताविंत्यस्य वैयर्थ्यम् अनुवृत्त्यैव प्रकृतयोर्लाभादिति वाच्यम् । प्रयोजनस्य प्रमाणानुसारित्वात् । मैवम् । ताविति योगं विभज्य धातुमात्राद्विहितस्य प्रत्ययस्य शतृशानचौ स्त इति व्याख्याय सदिति योगेन शतृशानच्मात्रस्य सत्संज्ञाविधानाश्रयणात् अथ पूर्वसूत्रे तयोरादेशत्वादिहापि तथात्वे स्थान्याकाङ्क्षायां तृजादीनां स्वरूपेण क्विबादीनां च लोपस्य विधानसामर्थ्यादेतदादेशाभावे परिशेषात् आदेशनिवृत्तिप्रयोज्यप्रतियोगिनः प्रत्ययस्यापवादतया तयोर्विधानामिति ण्वुलो युचश्च शतृशानचौ स्यातामिति कारके नन्दनेत्यादेरसिद्धिः । युवोरनाकावित्यस्य तद्धिते सावकाशत्वादिति चेन्न । लृटः सद्धेत्यस्य नियमार्थत्वात् यदि धातुमात्रात्परस्य तदा लृट एवेति । नच विकल्पविधायकतया तस्य नियमत्वानुपपत्तिः । लृटः सदित्यस्य तथात्वात् । तावित्यनेन शतृशानचौ अप्रथमासमानाधिकरणे इत्यादेरननुवृत्त्या विशेषविहितयोः शतृशानचोः लृटः सदिति सूत्रेण नियमः । वेत्यनेन तु समानाधिकरणादौ लट इव तौ विकल्पेन विधीयेते । एवंच नित्यमप्रथमासमानाधिकरणे इत्यपि न वक्तव्यमिति लाघवम् ॥

# पूङ्यजोः शानन् ॥१२८॥

पवमानो यजमानः ॥

# ताच्छील्यवयोवचनशक्तिषु चा-

## नश् ॥ १२९ ॥

ऐश्वर्यैषु द्योत्येषु । भोगं भुञ्जानः । कवचं बिभ्राणः । शत्रूनिघ्नानः ।

## इङ्धार्योः शत्रकृच्छ्रिणि ॥ १३० ॥

आभ्यां शतृस्यात् अनायासे कर्तृनिष्ठे द्योत्ये । अधीयन् । धारयन् अनायासेनाधीयान इत्यर्थः । नेह कृच्छ्रेणाधीते । स्यादेतत् । एते त्रयः प्रत्ययाः स्वतन्त्रा लादेशा वा । लटोऽनुवृत्त्यननुवृत्तिभ्यां उभयसबन्धेन संदेहात् । नाद्यः । पचते यजते अधीते इत्याद्यर्थं वाच्यत्वापत्तेः । लादेशेषुवासरूपविधेरभावात् । भावकर्मणोरप्येतदापत्तेश्च । कर्तर्येव चैषामिष्टत्वात् । लादेशसार्वधातुकत्वेन पवमान इत्यादौ तास्यनुदात्तेदित्सनुदात्तप्रसङ्गाच्च । चित्करणस्य निघ्नाना इत्यादौ सावकाशत्वात् । निघ्नाना इत्याद्यर्थमात्मनेपदसंज्ञाप्रतिषेधारम्भापत्तेश्च । न द्वितीयः । सोमं पवमान इत्यादौ नलोकेतिषष्ठीनिषेधानुपपत्तेः । मैवम् । तृन्नितिप्रत्याहारग्रहणेनैव एतद्योगे षष्ठीनिषेधोपपत्तेः । नच द्विषयोगेऽपि तदापत्तिः । द्विषः शतुर्वेत्यस्य तृप्रत्ययग्रहणे प्रतिषेधार्थस्य प्रत्याहारग्रहणे विध्यर्थतयोपपत्तेः ।

## द्विषोऽमित्रे ॥ १३१ ॥

शतृस्यात् । द्विषन् शत्रुः । अमित्रशब्दः पुंसि । नञोऽजस्मरसृताः इतिलिङ्गानुशासनसूत्रात् ॥

## सुञो यज्ञसंयोगे ॥ १३२ ॥

शतृस्यात् । यः सुन्वन्तमवति । सर्वे सुन्वन्तः । यज्ञे किम् । सुरां सुनोतीत्यत्र माभूत् । ननु सुञोयज्ञ इत्युक्तेऽपि सुनोत्यर्थस्य यज्ञविषयकत्वे इति व्याख्यया तद्वारणसभवात्संयोगपदवैयर्थ्यमिति। अत्राहुः—प्रधानकर्तृसंप्रत्ययार्थतया यजमानादन्यत्र माभूदित्ये-तदर्थं तत् । एवंचाप्रधानकर्तरि सामान्यविधिनापि नभवतीति ।

# अर्हः प्रशंसायाम् ॥१३३॥

अर्हन् । प्रशंसायां किम् । अर्हति चोरो वधम् ।

# आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ॥ १३४ ॥

आङभिव्याप्तौ । क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्त-च्छीलादिषु कर्तृषु बोध्याः । तच्छब्दत्रयं तृनादिप्रकृतिभूतत-द्धात्वर्थपरम् ॥

# तृन् ॥ १३५ ॥

कर्ता कटान् । 'ऋत्विक्षु वानुपसर्गस्येति वक्तव्यम्' । अता-च्छील्याद्यर्थमारम्भः । होता पोता । अनुपसर्गे किम् । प्रशास्ता । प्रतिहर्ता । अत्र तृजेव । तेन कृदुत्तरपदप्रकृतिस्वरः । तृनि तु तादौच निति कृत्यताविति गतेः प्रकृतिस्वराद्युदात्तत्वं स्यात् । 'नयतेः षुक् च वक्तव्यः' । नवा धात्वन्तरत्वात् । इन्द्रोवस्तेन नेषतु । इत्यादौ नेषतेः प्रकृत्यन्तरत्वात् । षुकि तु गुणो न स्यात् । 'त्विषेर्देवतायामका-रश्चोपधाया अनिट्त्वं च वक्तव्यम्' । त्वष्टा । अनिट्त्वं चो-क्तवक्ष्यमाणोपसंख्यानसाधारणम् । त्विषेः स्वत एवानिट्त्वात् ।

सेन प्रशास्ता नेष्टा क्षत्ता इत्यादिसिद्धम् । 'अदेश्चायुक्ते तृन् व-क्तव्यः' क्षत्ता 'छन्दसि तृज्वक्तव्यः' । नमः क्षत्तृभ्यः संग्रहीतृ-भ्यः । चित्त्वादन्तोदात्तः ।

# अलंकृञ्निराकृञ्प्रजनोत्पचो-त्पतोन्मदरुच्यपत्रपवृतुवृधुस हचर इष्णुच् ॥ १३६ ॥

उपसर्गविशेषोक्तिरन्यनिवृत्त्यर्था । कृञत्र करोतेः प्रसि-द्धत्वात् । नतु हिंसार्थः । पतपचगदात्प्राक्छन्दस्य तन्त्रेण पाठ-स्य युक्तत्वेऽपि प्रत्येकोच्चारणमुपसर्गान्तरनिवृत्त्यर्थम् । तेन स-मुत्पतिष्णुरित्यादौ नेति सम्प्रदायः । उत्पतिष्णुचरिष्णूचेति भ-ट्टिः । केचित्तु तत्स्थाने पदेर्ति पठित्वा उत्पतिष्णुरित्याहुः । एवं रोचिष्णुरित्यादि ।

# णेश्छन्दसि ॥ १३७ ॥

वीरुधः पारयिष्णवः । अयामन्तेतिणेरयादेशः ।

# भुवश्च ॥ १३८ ॥

छन्दसीत्येव । भुविष्णुः प्रभविष्णु वैष्णवमिति प्रमादपाठः । अतएव सहिष्णुरित्यस्यैव प्रसिद्धत्वात् । चकाराद्भ्राजिष्णुरिति वृत्तिः । क्षयिष्णुरपीत्यन्ये तन्निर्मूलम् ।

# ग्लाजिस्थश्च क्स्नुः ॥ १३९ ॥

ग्लास्नुः । जिष्णुः । स्थास्नुः । चकाराद् भूष्णुः । नन्वयं किद्वा गिद्वा । नाद्यः । स्थास्नुरित्यत्र घुमास्थेतीत्वापत्तेः । नान्त्यः । जिष्णुरित्यत्र गुणस्य भूष्णुरित्यत्रेटश्चापत्तेः । मैवम् । गित्वस्यैव सम्यक्त्वात् । क्ङितीत्यत्र चर्त्वेन गकारस्यापि प्रश्लेषाद्गित्यपि गुणनिषेधात् । एवञ्श्र्युकः किती त्यत्रापि गकारप्रश्लेषादिटो निषेधात् । नच चर्त्वस्यासिद्धत्वाद्धशिचेत्युत्वापत्तिः । सौत्रत्वेन तदभावात् । असंहितया निर्देशाद्वा । तथाच वार्त्तिकम् ।

क्स्नोर्गित्वान्नस्थ ईकारः क्ङिोरीत्वशासनात् ।
गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनित्त्वं कगोरितोः । इति ।
दंशेः छन्दस्युपसंख्यानम्, । दंक्ष्णवः पशवः ।

# त्रसिगृधिधृषिक्षिपेः क्नुः ॥ १४० ॥

त्रस्नुः । नेड्वशीति नेट् । गृध्नुः । धृष्णुः । क्षिप्नुरेनमृजुमाशु सपक्षमिति श्रीहर्षः ।

# शमित्यष्टाभ्यो घिनुण् ॥ १४१ ॥

इति शब्द आद्यर्थः । शमादिभ्योऽष्टभ्यो घिनुण् । शमी । दमी श्रमी भ्रमी क्षमी क्लमी प्रमादी नोदात्तोपदेशस्येति मान्तानां वृद्धिनिषेधः । शमिनितरा शमिनीतरेत्यादौ उगितश्चेति ह्रस्वविकल्पः । नुमविधौ झल्ग्रहणानुवृत्त्या शमिनावित्यादौ न नुमिति भाष्यम् । एवंच उकार उच्चारणार्थ इति वृत्तिमतं हेयम् । सकर्मकाणां तु नायमनभिधानादिति भाष्यम् । वासरूपविधिना ल्युडादौ । ताच्छीलिकेषु न स इत्यस्य प्रायिकत्वात् ।

**संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च ॥ १४२ ॥**

घित्वात्कुत्वम् । सम्पर्की । अनुरोधी । आयामी । आयामी । परिसारी । संसर्गी परिदेवी देवृदेवने भ्वादिः । दीव्यतेर्पर्यन्तस्य ग्रहो लाक्षणिकत्वात् । मंज्वारी परिक्षेपी परिराटी परिवादी परिदाही परिमोही । दोषी द्वेषी । द्रोही दोही योगी आक्रीडी । विवेकी त्यागी । रजेति रंजेर्नलोपनिपातनम् । रञ्जयतीति रागी भागी अतिचारी । अपचारी । आमोषी अभ्याघाती ।

**वौ कषलसकत्थस्रम्भः ॥ १४३ ॥**

कष हिंसायाम् । लस श्लेषणक्रीडनयोः । कत्थ श्लाघायाम् । स्रम्भु विश्वासे । विकाषी विलासी विकत्थी विस्रम्भी ।

**अपे च लषः ॥ १४४ ॥**

लष कान्तौ । अपलाषी चाद्भिलाषी ।

## प्रेलपसृद्रुमथवदवसः ॥ १४५ ॥

प्रलापी प्रसारी । प्रद्रावी प्रमाथी मथ विलोडने प्रवादी । प्रवासी ।

## निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिवादिव्याभाषासूञो वुञ् ॥ १४६ ॥

एभ्यो वुञ् स्यात् । विनाशेतिण्यन्तस्य नशाभावं नलोपाविशिष्टस्य निर्देशः । अकारस्तूच्चारणार्थः । विनाशीत्येव पठन्ति केचित् । परिवादिवत् । असूयति । कण्ड्वादिः । समाहारद्वन्द्वः । असूञइति पञ्चम्येकवचनम् । एवचेतरेतरयोगद्वन्द्वे प्रथमाबहुवचनान्तं व्याख्याय व्यत्ययादिकल्पनं इत्यादीनामनादेयम् । नच समाहारे द्वन्द्वाच्चुदषहान्तादिति समासान्तापत्तिः । व्यत्ययापेक्षया समासान्तविधेरनित्यत्वमाश्रित्य समासान्तो नेत्यस्य लघुत्वात् । भाषान्तानां द्वन्द्वं कृत्वा तत्सहितादसूञ इति व्याख्यानाद्वा । निन्दक इत्यादि । यद्यपि निन्दादीना ण्वुलैव सिद्धं रूपसाम्यात् । आद्युदात्तसाम्याच्च । असूयतिमात्रात्तु वुञ् विधेयः । ण्वुलि लित्स्वरेण प्रत्ययात्पूर्वमुदात्तं वुञि ञ्नित्यादिरिति विशेषात् । तथापि ताच्छीलिकेषु वासरूपविधिर्नास्तीति ज्ञापनार्थं वुञो विधानम् । तृजादीनामिति निवृत्तिः । ज्ञापकस्य प्रत्ययसामान्यापेक्षत्वात् ।

## देविकुशोश्चोपसर्गे ॥ १४७ ॥

दीव्यतेर्ण्यन्तस्य दिव इति चुरादेश्च ग्रहणम् । आदेवकः । आक्रोशकः । उपसर्गे किं क्रोष्टा ।

## चलनशब्दार्थादकर्मकाद्युच् ॥ १४८ ॥

अर्थपदमुभयान्वयि । चलनः चोपनः कम्पनः शब्दनः । शब्दशब्दने। आविष्करणे चुरादिः। शब्दमाातिपदिकाद्वात्वर्थे णिजन्तात् शब्दवैरकलहेत्यादिणिजन्ताद्वेति न्यासकृत् । रवणः । अकर्मकात्किम् । पठिता विद्याम् ।

## अनुदात्तेतश्च हलादेः ॥१४९॥

अकर्मकादित्येव वर्धनः वर्तनः । असत्यादिग्रहणे हलन्तादित्यर्थापत्त्या जुगुप्सनो मीमांसन इत्यादि न स्यात् । अजन्तत्वात् । तदर्थमादिग्रहणम् । नचानुदात्तत्वाभावः । अवयववृत्तेरनुदात्तस्य सनन्तसमुदायविशेषकत्वात्गुपादयोऽनुदात्तेत इति भाष्योक्तेः ननु आर्धधातुक इति विषयसप्तमीपक्षे प्रत्ययोत्पत्तेः प्रागेवातोलोपवृत्तेरनयोरापिहलन्तत्वं सुलभमितिचेत् सत्यम् । परसप्तमीपक्षेणैवमुक्तत्वात् ।

## जुचङ्क्रम्यदन्द्रम्यसगृधिज्वलशुचलषपतपदः ॥ १५० ॥

जुधातुः सौत्रो गत्यर्थ इहैव पाठेन कल्प्यः । वेगार्थ इत्यन्ये । जवनस्तु जवाधिक इत्यमरः। क्रमद्रमी यङन्तौ। चङ्क्रमणः

दन्द्रमणः । सरणः गर्द्धन इत्यादि । अनुदात्तेतश्चेत्येव सिद्धिः । सकर्मकादनभिधानेनानिष्टत्वात् एतेन चङ्क्रमणो ग्रामस्येत्यादिकल्पनमपास्तम । सत्यम् लषपतपदेत्युकञा युचो बाधो माभूदिति ज्ञाप्यम् । निन्दादिसूत्रे ताच्छीलिकानामताच्छीलिकैर्वासरूपविधिर्नेति ज्ञापितम् । इहतु ताच्छीलिकैः सहेति विशेषः । तेनालङ्कृञितीष्णुचो विषये तृन्न । नचैवं गन्तेति तृन्न स्यात् । उकञा बाधादिति वाच्यम् । उक्तज्ञाप्यस्य प्रायिकताया वक्ष्यमाणत्वात् ।

## क्रुधमण्डार्थेभ्यश्च ॥ १५१ ॥

क्रोधनः भूषणः ॥

## न यः ॥ १५२ ॥

यान्तान्न युच् । क्नूयिता क्ष्मायिता । क्नूयी शब्दे । क्ष्मायी विधूनने । नच नय गतावित्यस्मात्प्रत्ययविधिरेवायम् अनुदात्तेतश्चेत्येव सिद्धेः । तस्मात्तत्प्राप्तस्य युचो निषेध एवायम् ।

## सूददीपदीक्षश्च ॥ १५३ ॥

न युच् । सूदिता । मधुसूदनो नन्द्यादिः । दीपिता । दीक्षिता । नमिकम्पीति रेणैव युचो बाधे सिद्धे दीपिग्रहणं युचा सह रस्य समावेशार्थम् । तेन कम्रा युवतिः कमनेत्यादि सिद्धमिति भाष्यम् । तस्यच ताच्छीलिकाना तैः सह वासरूपाविधिर्नास्तीत्यस्य प्रायिकत्वे तात्पर्यम् । नतु रयुचोरेव समावेशे । तेन गन्ता विकत्थन इत्यादि सिद्धम् ।

**लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ॥१५४॥**

लाषुकः पातुक इत्यादि ।

**जल्पभिक्षकुट्टलुण्टवृङः षाकन् १५५**

जल्पाक इत्यादि ।

**प्रजोरिनिः ॥ १५६ ॥**

प्रजवी प्रजविनावित्यादि ।

**जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च ॥ १५७ ॥**

जयी दरी इत्यादि । जयतिक्षयत्योर्द्वयोरपि ग्रहणम् । श्रिञ् सेवायाम् विपूर्वः व्यथतिर्नञ्पूर्वः । निपातनान्नञो धातुना समासे नलोपे च प्रत्ययः । षूप्रेरणे सूति सूयत्योः सानुबन्धकत्वात् । अत्रैव प्रजुं इनि च पठित्वा पूर्वसूत्रं त्यक्तुमर्हम् । पृथग्विभक्तिचकारयोस्त्यागे लाघवादिति दीक्षिताः ।

**स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ॥ १५८ ॥**

आद्यास्त्रयः चुरादावदन्ताः । अयामन्तोतिणेरयादेशः । स्पृ-

हयालुः गुहयालुः पतयालुः । तत्पूर्वस्य द्रातेः तच्छब्देन समासस्तदो नान्तत्वं च निपात्यते । तन्द्रालुः । ननु लुशेत्वास्तु शित्वात्सार्वधातुकत्वं स्पृहयालुरित्यादौ अतोदीर्घो यञीतिदीर्घः तुरुस्तुशम्यम इत्यतः सार्वधातुकस्यानुवृत्तेर्नतु तिङः । नच लस्येत्संज्ञापत्तिः । प्रश्लेषेण यकारादित्वात् । प्रयोजनाभावाद्वा । एकादेशउदात्तेनोदात्त इत्युदात्तस्योभयत्र सत्त्वेन लित्प्रत्ययस्वरयोरविशेषात् । नच श्रद्धालुपदासिद्धिर्लुधातोर्द्विवचनापत्तेरिति वाच्यम् । संज्ञापूर्वकत्वादनित्यत्वाश्रयणात् । धातूनामनेकार्थत्वाद्धेटो रूपसम्भवाच्च । नचाशितीत्यात्वनिषेधः । आश्रद्धेति आकारप्रश्लेषेण तत्सिद्धेः । आदिभूतस्य शकारस्येत्संज्ञायामेव तन्निषेधस्य वक्ष्यमाणत्वाच्च । सत्यम् । अन्यतो विधानार्थमाकारादित्वम् । शयालुः । तेन शीङो वाच्य इति स्पष्टार्थम् ।

## दाधेट्सिशदसदो रुः ॥ १५९ ॥

दारुः । दोदेङो ग्रहणमित्याहुः । धारुः सेरुः शद्रुः सद्रुः ।

## सृघस्यदः क्मरच् ॥ १६० ॥

सृमरः । घस्मरः अद्मरः ।

## भञ्जभासमिदो घुरच् ॥ १६१ ॥

भञ्जेः कर्मकर्तर्येव अभिधानस्वभावादिति संप्रदायः । भङ्गुरः भासुरः । मेदुरः ।

## विदिभिदिच्छिदेः कुरच् ॥ १६२ ॥

विदुर इत्यादि । विदेर्ज्ञानार्थस्य ग्रहणं, न लाभार्थस्य ।

व्याख्यानात् । छिदुरमिति कर्मकर्तरीति वृत्तिः नच तन्निर्मूलम् गुरुमत्सरच्छिदुरयेत्यादि प्रयोगादिति वाच्यम् । मृणालतन्तुच्छिदुरा सती स्थितिरित्यादेरपि दर्शनात् ।

## इण्नशजिसर्तिभ्यः क्वरप् ॥१६३॥

इत्वरो ऽभनादिति हर्षचरितम् । असतीत्वरीत्यमरः । नश्वरः जित्वरः सृत्वरः ।

## गत्वरश्च ॥ १६४ ॥

अनुनासिकलोपस्यापि निपातः ।

## जागरूकः ॥ १६५ ॥

जागुरिति अनुकार्यानुकरणयोर्भेदविवक्षायां प्रातिपदिकत्वे पञ्चम्यन्तम् । जागर्तेरूकः स्यात् । जागरूक इति निपाते तु उत्तरत्र ऊकानुवृत्तिर्न स्यात् ।

## यजजपदशां यङः ॥ १६६ ॥

एभ्यो यङन्तेभ्य ऊकः । दशेति भाविनलोपाभिप्रायम् । यायजूकः । जञ्जपूकोऽक्षमालावानिति भट्टिः । दन्दशूको बिलेशयः । वावदूकशब्दस्तूलूकादिः । कुर्वादिगणे पाठात्सिद्ध इत्यन्ये ॥

## नमिकम्पिस्म्यजसकमहिंसदीपो रः ॥ १६७ ॥

नम्रः । कम्प्रः स्मेरः । नञ्पूर्वो जसिः सामर्थ्यार्थः । अजस्रम् । कम्रः । हिंस्रः । दीप्रः ।

## सनाशंसभिक्ष उः ॥ १६८ ॥

चिकीर्षुः । सनधातोर्नेह ग्रहः । गर्गादौ जिगीषुशब्दपाठात् । अव्युत्पन्नतत्कल्पने गौरवात् । आङ्पूर्वः शंसुरिच्छायाम् । आशंसुः भिक्षुः ।

## विन्दुरिच्छुः ॥ १६९ ॥

वेत्तेर्नुम् इषेः छत्वं चेह निपात्यम् । वेत्तिभिन्नानां विदां इष्णातीष्यत्योश्च नेदं निपातनमनभिधानात् ।

## क्याच्छन्दसि ॥ १७० ॥

देवान् जिगाति सुम्नयुः । नच्छन्दस्यपुत्रस्येति ईत्वदीर्घाभावः । इह क्येति नाखण्डस्य ग्रहणम् । किन्तु क्यश्चासौ यश्चेति कर्मधारयः । तेन कण्ड्वादियकोऽपि ग्रहः । तेन तुरण्यवः भुरण्युरित्यादि । गृण्हन्ति ज्ञानसूयव इति मृगय्वादित्वात् ।

## आदृगमहनजनः किकिनौ लिट् च ॥ १७१ ॥

आदन्तादृकारान्ताद्गमादिभ्यश्च किकिनौ स्तः छन्दसि तौ च लिड्वत् । आदिति दकारः । तकारे तु ऋदित्यस्य तात्परत्वेन दीर्घऋकारान्तानां ग्रहणं न स्यात् । दधिर्गाः । बभ्रिर्वज्रम् । ततुरिः जगुरिः । बहुलं छन्दसि इत्युत्वम् । शुभं जाबानो

विदथेषु जग्मयः । जज्ञिर्वीजमित्युदाहरणम् । जज्ञिः । ततुरिरित्यादौ ऋच्छत्यॄतामिति गुणनिषेधार्थं कित्त्वं । नच परस्मैपदसंज्ञा स्यादिति वाच्यम् । आदेशानामेव तत्संज्ञत्वात् । कर्तरि कृदिति कर्तरि किकिनोरुत्पत्तौ पश्चात्प्रवर्तमानेनातिदेशेन भावकर्मणोरपि नैतदापत्तिः उत्पत्तिशिष्टार्थविरोधे उत्पन्नशिष्टार्थानन्वयात् । भूतकालस्यापि नातिदेशो वर्तमानाधिकारात् । नापि तिङादेशानां कसुकानचोश्चापत्तिः । स्वरूपबाधप्रसङ्गात् ।

अत्रवार्तिकम् । 'उत्सर्गः छन्दसि सदादिभ्यो दर्शना' दिति । सेदिर्नेमिरित्यादि । अत एकहल्मध्ये इति एत्वाभ्यासलोपौ ।

'भाषायां धाञ्कृसृगमिजनिनमिभ्यः । दधिः । चक्रिः । सस्रिरित्यादि । 'सासहि वावहि चाचलिपापतीनामुपसंख्यानम्' । पतेर्णिगभावोऽपि निपातनात् । सहिवहिचलिपतिभ्योयङ्किति- वचनारम्भपक्षे तु भाष्यप्रामाण्यात् ।

## स्वपितृषोर्नजिङ् ॥ १७२ ॥

स्वप्नक् तृष्णक् । स्वप्नजौ तृष्णजावित्यादि । धृषेश्चेति वृत्तिः । धृष्णक् ।

## शॄवन्द्योरारुः ॥ १७३ ॥

शरारुर्घातुको हिंस्रः । वन्दारुरभिवादके ॥

## भियः क्रुक्लुकनौ ॥ १७४ ॥

भीरुः । भीलुकः । 'क्रुकन्नपि वक्तव्यः' । भीरुकः ।

## स्थेशभासपिसकसो वरच् १७५

स्थावरः ईश्वर । भास्वरः पेस्वरः कस्वरः ।

## यश्च यङः ॥ १७६ ॥

यङन्ताद्यातेर्वरच् ।

यायावरः । निरूपितोऽयं न पदान्तसूत्रे ।

ताच्छीलिकाः समाप्ताः ।

## भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ॥ १७७ ॥

विभ्राट् भाः भासौ धूः विद्युत् । ऊर्क् पूः जूः जुवौ निपातनाद्ग्रावशब्दस्य धातुना समासः । ग्रावस्तुत् ऋत्विग्विशेषः ।

## अन्येभ्योऽपि दृश्यते ॥ १७८ ॥

अनुपसर्गार्थ आरम्भः क्विप्चेत्यत्र सुपीत्युपसर्गे इति चानुवृत्तेः । भिद् छिद् । नच पूर्वसूत्रे ग्रावोपपदात् स्तोः क्विविधानवैयर्थ्यम् । भ्राक्कोरिति पाठे ताच्छील्यादौ क्विपो विधेयत्वात् । नचैतत्सूत्रविहितस्यैव तच्छीलाद्यर्थत्वम् । तृना बाधापत्तेः । ताच्छीलिकानां तैर्वासरूपविधिर्नेत्युक्तत्वात् । दृशिग्रहणं दीर्घसंप्रसारणतदभावह्रस्वानामपि विधानार्थम् । 'वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां क्विप्दीर्घो वचिस्वप्योरसंप्रसारणं च' 'द्युतिगमिजुहोतीनां द्वेचे' ति वक्तव्यमिति वार्तिकदर्शनात् । क्विब्वचीत्याद्युणादिसूत्रेण केषांचित्सिद्धे तच्छीलादौ तृना बाधो मा भूदिति

पुनरुपादानम् । वक्ति अनया वाक् । पृच्छतीति प्राट् । स चासौ विवाकश्च प्राड्विवाकः । आयतः स्तौति आयतस्तूः । कटं प्रवते कटप्रूः । जूः पूर्वोक्तः । श्रयन्त्येनां श्रीः । दिद्युत् जगत् । क्रमेण द्युतिस्वाप्योः, गमः क्वावित्यभ्यास संप्रसारणलोपौ । जुहोत्यनया जुहूः । नच धुत्यादीनामपि दीर्घापत्तिः । दीर्घसमुच्चयवेलायामचश्चेत्युपस्थानात् तदन्तविधिनाऽजन्तस्येति पर्यवसाने अर्थाद्दीर्घस्य जुहोतिमात्रपरत्वात् । दीर्यति दरत् । दृभये ह्रस्वः । ध्यायतेर्धीः । दृशिग्रहणात्क्वचित्कर्त्रर्थव्यभिचारः करणस्य कर्तृत्वोपचारापेक्षयाऽवयवार्थानुगमाय च करणादावेवोत्पत्तेर्वाच्यत्वात् ।

## भुवः संज्ञान्तरयोः ॥ १७९ ॥

मित्रभूर्नाम कश्चित् । उत्तमाधमर्णयोर्विश्वासघटकः प्रतिभूः । दृशिग्रहणानुवृत्तिलभ्यं चेदम् । नच संज्ञात्वादेव सिद्धिः । प्रतिज्ञानपूर्वकालमात्रवृत्तिव्यवहारविषयत्वात् । संज्ञायाश्च यावद्द्रव्यभावित्वात् ।

## विप्रसंभ्यो ड्वसंज्ञायाम् ॥ १८० ॥

डु इत्यविभक्तिको निर्देशः । विभुः प्रभुः संभुः । व्यापकत्वैश्वर्यजननान्यत्र निमित्तम् । संज्ञायां तु विभूः कश्चित् । 'मितद्र्वादिभ्य उपसंख्यानम्' । मितं द्रवतीति मितद्रुः । शंभवति भावयति वा शंभुः ।

## धः कर्मणि ष्ट्रन् ॥ १८१ ॥

धाञ्धेटोर्ग्रहणम् । स्वरूपेणैव निर्देशात् ।

धात्रीजनन्यामलक्यीत्युपमात्पुपमातृषु ।

# दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ॥ १८२ ॥

ष्ट्रन् स्यात् । दान्त्यनेन दात्रम् । दा च्छेदने । नेत्रम् । शस्त्रम् । योत्रम् । योक्त्रम् । तोत्रम् । सोत्रम्, सिन्वन्ति बध्नन्त्यनेन सेत्रम् । सेक्त्रम् । मेढ्रम् पत्रम् दशेति निर्देशो अकिङ्त्वस्यापि क्वचिन्नलोपार्थः । तेन दंष्ट्रेति सिद्धम् । न च प्रकृतेऽप्यापत्तिः । शुनो दन्तदंष्ट्रास्वादि निर्देशात् ।

# हलसूकरयोः पुवः ॥ १८३ ॥

पूङ् पूञोः करणे ष्ट्रन् । करणस्य हलसूकराद्यवयवत्वे । एतेन तयोरुपपदत्वाभिधेयत्वयोर्निरासः । पोत्रम् । तयोर्मुखमित्यर्थः । सर्वत्र तितुत्रेति इण्निषेधः ।

# अर्तिलूधूसूखनसहचर इत्रः ॥ १८४ ॥

अरित्रम् । लवित्रम् । धूइति निरनुबन्धकस्य कुटादेरेव ग्रहणम् । ङित्वाद्गुणनिषेधे उवङ् । धुवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ।

# पुवः संज्ञायाम् ॥ १८५ ॥

पवित्रम् । आज्योत्पवनसाधनं दर्भमयमनामिकावेष्टनं वा ।

## कर्तरि चर्षिदेवतयोः ॥१८६॥

पुवइत्रः ऋषेर्वेदमन्त्रस्य करणत्वे देवतायाश्च कर्तृत्वे । पूयतेऽनेन पवित्रम् । अग्निः पवित्रं समा पुनातु ।

## ञीतः क्तः ॥ १८७ ॥

वर्तमाने । स्विन्नः । इद्धः । क्ष्विण्णः । वर्तमानस्वेदाद्याश्रय इत्यर्थः ।

## मतिबुद्धिपूजार्थेभ्यश्च ॥ १८८ ॥

मतिरिच्छा बुद्धेः पृथगुपादानात् । राज्ञां मतो बुद्धः पूजितो वा कर्मण्ययं सकर्मकत्वात् । मत्यादिमक्तिकस्य क्तस्य भूतविषयत्वमनेन बाध्यते । तक्रकौण्डिन्यन्यायात् । ज्ञातमित्येतत्तु भूतेऽपि तेनेत्यधिकारे 'उपज्ञात'मिति सूत्रप्रयोगात् अन्यथा क्तस्य च वर्तमान इति षष्ठ्यापत्तेः । चकारोनुक्तसमुच्चयार्थः । तथाच भाष्यम् ।

शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि ।
रुष्टश्चरुचितश्चोभावभिव्याहृत इत्यपि ॥
हृष्टतुष्टौ तथाक्रान्तस्तथोभौ संयतोद्यतौ ।
कष्टं भविष्यतीत्याहुरमृताः पूर्ववत्स्मृताः ॥

इति श्रीसिद्धान्तसुधानिधौ तृतीयस्य द्वितीयपादे तृतीयमाह्निकम् पादश्चायं समाप्तः ।

अथ तृतीयः पादः

# उणादयो बहुलम् ॥१॥

प्रायेणैषां रूढतया प्रकृतिप्रत्ययार्थाननुगमाद्विशिष्य न व्युत्पाद्यन्ते किन्तु शास्त्रान्तरव्युत्पादितानां साधुत्वमात्रमनेनाभ्यनुज्ञायते । अत्र वार्तिकम् ।

बाहुलकं तनुदृष्टेः नैगमरूढिभवं हि सुसाधु ।

नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् ।

अस्यार्थः—नन्वत्र बहुलग्रहणं व्यर्थम् । उणादय इत्येतावतैव साधुत्वाभ्यनुज्ञासिद्धेः इत्याशङ्क्याह—तनुदृष्टेरिति । प्रकृतेरितिजात्यभिप्रायमेकत्वम् । तनुशब्दो भावप्रधानः प्रकृतीनामल्पत्वदर्शनात् । बहुलशब्दार्थो बह्वर्थादानम् । तथाच तत्रापठिताभ्योऽपि प्रकृतिभ्यो उणादयो विधीयन्ते । तेन दृषेरुलच् । शंकेरपि भवति शंकुलेति । एवं बहुवचनात्तत्राविहिता अपि प्रत्ययाः तेनार्तेः पिडपिञ्जौ । ऋपिडः ऋपिञ्ज इति । एवं कार्याण्यपि । यथा षण्ड इत्यत्र सत्वाभावः । षत्वं वा नन्वेवं सर्वेभ्यो धातुभ्यः सर्वे प्रत्यया स्युरतआह नैगमेति । निगमे छन्दसि भवाः । अणृगयनादिभ्य इत्यण् । रूढिः प्रसिद्धिः । प्रयोगस्य नियामकत्वान्नातिप्रसङ्ग इत्यर्थः । प्रकृत्यादिविभागेन व्युत्पादने आचार्यान्तरसंमतिराह—नामचेति । निरुक्तं च भूवादिसूत्र उपन्यस्तम् । शकटस्य तोकमपत्यं शाकटायन इत्यर्थः ।

संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥

व्याख्यातम् ।

## भूतेऽपि दृश्यन्ते ॥ २ ॥

तत्र वर्तमानाधिकारनिवृत्त्यैवैतद्वृत्तसूत्रद्वयस्य [illegible] सिद्धिः । उत्सर्गतो वर्तमाने, क्वचिदेव कालान्तरे इत्यर्थात् ।

## भविष्यति गम्यादयः ॥ ३ ॥

ग्रामं गमी गामी वा । भविष्यत्सामान्यविषयाश्चैते । विशेषविवक्षायां त्वपवाद विप्रतिषेधाल्लुट् । श्वो गन्ता ग्रामम् । वासरूपविधिना लृडपि । गमिष्यति । भविष्यति इत्यादि । भविष्यदधिकारो यावत्पुराशब्दयोगे भविष्यत्त्वेन लटः साधुत्वार्थः । भूते ऽनद्यतने वर्तमानस्य बाधात् । शब्दोपात्तकालविशेषवि[illegible]मात् । असति त्वस्मिन् भूतेऽपि लटः साधुत्वं स्यात् ।

## यावत्पुरानिपातयोर्लट् ॥ ४ ॥

यावद्भुङ्क्ते । पुराभुङ्क्ते । निश्चयार्थौ निपातौ । समनन्तरं भोक्ष्यते इत्यर्थः । निपातग्रहणं लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वज्ञापनार्थम् । यावद्भुङ्क्ते इत्यत्र पूर्वविप्रतिषेधेन लुट् तत्पर्यन्तं [illegible]बाधा ।

## विभाषा कदाकर्ह्योः ॥ ५ ॥

भविष्यति वा लट् स्यात् । पक्षे लुट्च । कदाकर्हि वा भुङ्क्ते भोक्ष्यते भोक्ता वा । नच कर्हिशब्दस्यानद्यतनविषयत्वात्तद्योगे लृडयुक्तः भविष्यत्सामान्ये भोक्ष्यते इति व्युत्पाद्य कर्हियोगव्याख्यानात् । नच भविष्यत्सामान्यविहित लृटो विशेषविहितेन लुटा

स्नाविषये बाधः । तत्रैव तदनुवृत्तेरुक्तत्वात् ।

## किंवृत्ते लिप्सायाम् ॥ ६ ॥

लट्वा स्यात् । कं कतरं कतमं वा त्वं भोजयसि भोजयिष्यसि भोजयितासि वा । वक्तुर्भोजनेच्छात्र गम्या ।

## लिप्स्यमान सिद्धौ च ॥ ७ ॥

लिप्स्यमानेनान्नादिना स्वर्गादेः सिद्धौ गम्यायां लट्वा । अकिंवृत्तार्थआरम्भः । यो भवतामन्नं ददाति स स्वर्गं गच्छति । यो दास्यति दाता वा स स्वर्गं यास्यति याता वा । पूर्वसूत्रे किंवृत्तग्रहणं तु लिप्स्यमानरहितायां लिप्सायां अकिंवृत्ते लटो निवृत्त्यर्थमिति कैयटः ।

## लोडर्थलक्षणेच ॥ ८ ॥

प्रैषादेः परिचायकेऽर्थे वर्तमानाद्धातोः भविष्यति वा लट् । कृष्णश्चेद्भुङ्क्ते त्वं गाश्चारय भोक्ष्यते भोक्ता वा ॥

## लिङ्चोर्ध्वमौहूर्तिके ॥ ९ ॥

निपातनात्समासोत्तरपदवृद्धी । मुहूर्तानन्तरं भविष्यत्युक्तपरिचायके वर्तमानाद्धातोः लिङ्लटौ पक्षे लृट्लुटौ । मुहूर्तादुपरि उपाध्यायश्चेदागच्छेदागच्छति आगमिष्यत्यागन्ता वा अथ त्वं छन्दोऽधीष्व ।

## तुमुन्ण्वुलौ क्रियायां क्रिया-

# र्थायाम् ॥ १० ॥

क्रियार्थायां क्रियायां तद्वाचके धातावुपपदे भविष्यत्यर्थे ण्वु-तोरेतौ स्तः । कृष्णं द्रष्टुं याति । कृष्णं दर्शको याति । इह गमन-क्रिया दर्शनार्था । अतो दृशेस्तुमुनादि । नन्वविशेषेण विहितो ण्वुल् एतद्विषयेऽपि सिद्ध एव । नचाकेनोर्भविष्यदाधमर्ण्ययोरिति भवि ष्यत्कालानुवादेन षष्ठीनिषेधार्थं तद्विधानम् । सामान्यविहितस्यैव भविष्यदर्थकतायां तदुपपत्तेः । नच भविष्यदधिकारविहितत्वस्य तन्निषेधप्रतियोगितावच्छेदकत्वलाभार्थम् । भविष्यदर्थस्यैव तथा-त्वे अङ्ग यजनां लप्स्यन्तेऽस्य याजका इत्यत्र य एनं याजयिष्य-न्तीति विवरणाद्भविष्यदर्थस्याप्यकस्य योगे षष्ठीनिषेधापत्तेरि-ति वाच्यम् । भूतार्थस्यैव याजकपदस्य लप्स्यन्त इति पदसम-भिव्याहारेण भविष्यत्ताबोधकत्वात् । नच इमेऽस्य याजका इत्या-दौ तदनिषेधार्थं शब्दशक्तिस्वाभाव्येन याजकपदस्य भूतविषय-त्वात् । भावियाजकत्वारोपेण तद्व्यवहारात् । नच विशेषविहितेन तुमुना ण्वुलोऽनपवादार्थं तुमुनो भावार्थतयाकर्त्रर्थकण्वुलं प्रसबा-धकत्वात् । वासरूपविधिना ण्वुलोऽप्युपपत्तेश्च ।

उच्यते तृजादिबाधाय ण्वुलो विधानम् । अन्यथा वासरू-पविधिना तेऽपि प्रसज्येरन् । तेन कर्तुं व्रजतीत्याद्यर्थे कर्ता व्रजति विक्षिपो व्रजति इत्यादयो न प्रयुज्यन्त इत्याकरः । क्रियायां किम् । द्रव्ये उपपदे माभूत् । भिक्षिष्ये इत्यस्य जटाः । भिक्षितुं जटा इत्यत्र तु धारयतीत्यध्याहार्यम् । क्रियार्थायां किम् । धाव-तस्ते पतिष्यति दण्डः । धावनाक्रियाया दण्डपातहेतुत्वेऽपि तदर्थ-त्वाभावात् । तदुद्देशेन क्रियमाणस्यैव तदर्थत्वात् । कृष्णमित्यत्र विषयत्वं द्वितीयार्थः । तच्च दर्शनान्वयि उद्देश्यत्वसम्बन्धेन दर्श-

नस्य यानक्रियान्वयः । कृष्णविषयकदर्शनोद्देश्यकं चैत्रकर्तृकं यानमिति बोधः । भविष्यत्वं तु न शाब्दविषयः । इच्छाया असिद्धविषयत्वस्वाभाव्यादेव लाभात् । दर्शक इत्यत्र तु दर्शनस्य स्वविषयकेच्छावत्त्वसम्बन्धेन ण्वुलर्थाश्रयान्वयः । तथाच कृष्णविषयकदर्शनाश्रयकर्तृकं यानमिति धीः । यानकर्तरि दर्शनस्य स्वविषयकेच्छावत्त्वसंम्बन्धेनान्वये याने दर्शनोद्देश्यकत्वमर्थाल्लभ्यते ।

यत्तु कृष्णकर्मकभविष्यद्दर्शनार्थं तादृशभविष्यद्दर्शनकर्तृकर्तृकं तदुद्देश्यकं च यानमित्युभयत्रार्थ इति तन्न । समानकर्तृकत्वमभिधानबललभ्यः प्रयोगोपाधिरिति स्वग्रन्थविरोधात् । प्रयोगोपाधेः शब्दाविषयत्वानुपपत्तेः । तस्योक्तरीत्यान्यलभ्यत्वाच्च । एतेन सामानाधिकरण्यस्य संसर्गान्तर्भावोऽपि निरस्तः । प्रयोजनाभावात् । दर्शनस्य कर्तरि जनितान्वयबोधत्वे यातीत्यत्रान्वयानुपपत्तेश्च । यदपि दर्शनजनिका यानक्रियेति तदप्यसत् । दर्शनानुपधानेऽपि उक्तप्रयोगात् । स्वरूपयोग्यताविवक्षायामपि यत्रान्यार्थकृतयानेन दर्शनं तत्राप्युक्तप्रयोगापत्तेः । उद्देश्यत्वस्यापि संसर्गताङ्गीकारे तु जनकत्वस्य तत्कल्पने प्रयोजनाभावात् ।

# भाववचनाश्च ॥ ११ ॥

भावाधिकारे वक्ष्यमाणा घञादयः क्रियार्थक्रियायामुपपदे भविष्यदर्थे स्युः । इदं च भाववचनानां यथाविहितानां प्रतिपदविध्यर्थम् । यथेत्यसमस्तम् । यथाविहितं विधानं येषामिति च बहुव्रीहिर्वा । अयमर्थः क्रियार्थक्रियोपपदे विशेषविहितेन तुमुना स्वविषये घञादीनां बाधप्रसङ्गात् यस्मिन्नुपाधिविशेषे प्रकृतिविशेषेभ्यो घञादिविधानं तादृगेवोक्तस्थलेऽपि भवतीत्येतदर्थं

वचन पदोपादानम् । अन्यथाऽव्यतिकरापत्तेः । यागाय याति । तुमर्थाच्चेति चतुर्थी । यागोद्देश्यकं यानमित्यर्थः ।

## अण् कर्मणि च ॥ १२ ॥

काण्डलावो व्रजति । काण्डलवनार्थं व्रजनमित्यर्थः । ननु कर्मणि सामान्यविहितोऽण् उक्तविशेषेऽपि सिद्धः सत्यम् । पुनर्वचनमपवादविषयेऽनिवृत्त्यर्थम् । नन्वपूर्वं विध्यपेक्षया प्रतिप्रसवस्य लघुत्वादुत्सर्गविषयेऽणो लाभार्थमेतत्स्यात् । अन्यथा ण्वुलो विधानेन तृजादिवदणोऽपि दुर्लभत्वात् । तत्कथमपवादविषयेऽपि कर्मण्यणः सिद्धिः ।

मैवम् । वचनग्रहणानुवृत्तिमात्रेण कर्मणि तदुपपत्तेः । पुनः कर्मग्रहणस्य कर्ममात्रोपसङ्ग्रहार्थतयाऽपवादविषयेऽप्यण्सिद्धेः। तथाच कम्बलदायइत्यादि सिद्धम् । परत्वादनेन कप्रत्ययबाधात् । नन्वेवमपि कदाचित्कर्मण्युपपदे स्यात् कदाचित् क्रियायाम् । भाविन्यपवादबाधनार्थतया वचनसार्थक्यात् । चकारेणोपपदसमुच्चयविधाने तु प्रत्येकस्योपपदत्वाभावात्काण्डशब्देन सहोपपदसमासो न स्यात् । मैवम् । पृथक्सप्तमीनिर्दिष्टतया प्रत्येकमुपपदविश्रान्तेः ।

## लृट् शेषे च ॥ १३ ॥

भविष्यत्यर्थे धातोर्लृट् क्रियार्थायां क्रियायां सत्यामसत्यां च । भविष्यति । ननु क्रियार्थायां क्रियायामित्यस्याननुवृत्त्यैव सिद्धौ किं शेषपदेनेति । मैवम् । करिष्यामीति व्रजतीत्यादौ ण्वुला बाधेन तृजादिवल्लृटोऽनुपपत्तेः । शेषग्रहणात्तु तदनुवृत्त्यनुमानेनोभयत्रापि लृट्सिद्धेः । तदुक्तम्—लृटि शेषवचनं क्रिया-

र्थां प्रतिपदाविध्यर्थमिति । नच शेषपदस्यात्र क्रियार्थाक्रियाभि-क्रोपपदपरत्वपर्यवसानाद्विवक्षितार्थप्रातिकूल्यमेवेति वाच्यम् । च-कारेणात्रापि विधानादिति वार्तिकमतम् ।

भाष्यकृतस्तु लृडिति योगेन क्रियार्थायां क्रियायामुपपदे लृट्शेषे इत्यनेन तदभावे इति योगविभागात्सिद्धौ चकारो व्यर्थ इत्याहुः ।

## लृटः सद्वा ॥ १३ ॥

लृटः शतृशानचौ स्तः । लृड्ग्रहणं स्थानिनिर्देशार्थमन्यथा-स्वतन्त्रप्रत्ययान्तरापत्तेः।'सद्विधिर्नित्यमप्रथमासमानाधिकरणे इति-वाच्यम्' । इदंचोपलक्षणम् । संबोधनेक्रियालक्षणहेत्वोः उत्तरपदे प्रत्ययेचेत्यपि बोध्यम् । यक्ष्यन्तं यक्ष्यमाणं वा पश्य । हेकरि-ष्यन् । अर्जयिष्यन्नेध्येष्यमाणो वसति । करिष्यद्भक्तिः । करि-ष्यद्रूपः । प्रथमासमानाधिकरणे विकल्पः । करिष्यति देव-दत्तः । करिष्यमाणो वा । घटो भविष्यतीत्यत्र धात्वर्थरुत्पत्तिः । प्रत्ययस्य वर्तमानप्रागभावप्रतियोगिकालीनत्वं वर्तमानोत्तरकाली-नत्वं वार्थः। तस्य धात्वर्थेऽन्वयः । इहाद्येति देशकालयोरप्युत्प-त्तिवान्वयो नतु वर्तमानप्रागभावप्रतियोगित्वे । श्वो भाविन्यद्य भविष्यतीति प्रसङ्गात् । नचाद्येत्यादेः प्रतियोगिनि प्रागभावे-चोभयत्रान्वयः । अद्यतनप्रागभावप्रतियोगी अद्यतनो घट इति-बोधान्नैतदापत्ति रिति वाच्यम् । दर्शाद्यक्षणोत्पत्स्यमाने चैत्रे दर्शे चैत्रो भविष्यतीत्यनापत्तेः । दर्शस्य चैत्राधिकरणत्वेऽपि तत्प्राग-भावानधिकरणत्वात् तथाचैतद्देशवृत्तिरद्यतनी च या वर्तमानप्राग-भावप्रतियोगिनी उत्पत्तिः तदाश्रयो घट इति बोधः । शाब्दिक-मते तादृशी घटोत्पत्तिरिति विशेषः

## अनद्यतने लुट् ॥ १५ ॥

भविष्यत्यनद्यतने धातोर्लुट् । बहुव्रीहिनिर्देशोऽयम् । लङ्वत्-यिवत् । तेन अद्य श्वो वागामिष्यतीति लृडेव । अत्रानद्यतने इति योगेन अनद्यतने लृटः सत्संज्ञकौ विधीयेते । श्वोनग्नीनाधास्यमानेन । श्वः सोमेन यक्ष्यमाणेन । लुङिसनेनानद्यतने लुटो विधानम् । श्वः कर्ता श्वोऽध्येता । आदेशविधानमेवानद्यतने लुटो ज्ञापकम् । 'परिदेवने श्वस्तनी भविष्यदर्थ इति वक्तव्यम्' । भविष्यत्सामान्ये लुटो विधानमेतत् । परिदेवनमनुशोचनम् । श्वस्तनी पूर्वाचार्याणां लुटः संज्ञा । इयं तु कदा गन्ता येयं पादौ निदधाति । अयं तुकदाध्येता योऽयमनभियुक्तः । नच गन्तेव गन्ता इत्युपमानेन निर्वाहः । तिङन्ते तदभावात् । यद्वा अनद्यतने इवानद्यतने इति सूत्र एवोपमानमाश्रित्य निर्वाह्यम् । प्रयोगवशाद्गौणेष्यनद्यतने प्रत्ययोत्पत्तेरिति भाष्यम् ।

केचित्तु अनद्यतन एवगन्तेति पदं व्युत्पाद्यम् । वाक्यार्थस्य पदसंस्कारं प्रत्यनिमित्तत्वात् । तस्यैव भविष्यत्सामान्यं वाक्येऽर्थ इत्याहुः । तन्न । परिदेवनादन्यत्रापि प्रसङ्गादिति न्यासकृत् ।

## पदरुजविशस्पृशो घञ् ॥ १६ ॥

भविष्यतीति निवृत्तम् । पदेर्ण्वुल्तृचोरपवादो घञ् विधीयते । ऋजिविशिभ्यां इगुपधलक्षणस्य कस्य, स्पृशेः पचाद्यच इति विवेकः अकारोवृध्याद्युदात्तार्थः । घकारः कुत्वार्थः । पद्यतेऽसौ पादः । करणस्य कर्तृत्वविवक्षा । पदशब्दस्त्वनुदात्तं पदमिति प्रयोगात् । रुजतीतिरोगः । विशतीतिवेशः । 'स्पृश उपतापे इति वक्तव्यम्' उपतापो रोगस्तत्रार्थे स्पृशेर्घञित्यर्थः । स्पर्शो रोगविशेषः ।

# सृस्थिरे ॥ १७ ॥

सृ इत्यविभक्तिको निर्देशः भ्वादेर्ह्वादेश्च ग्रहणम् स्थिर इति प्रत्ययार्थस्य कर्तुर्विशेषणं नतूपपदम् । अर्थचादौ सारशब्दोऽपीह लिङ्गम् । सृधातोः स्थिरे कर्तरि घञ् सारः सरति कालान्तरमिति व्युत्पत्तेः । उत्पत्त्यनन्तरनाशिनश्चार्थस्य गतिकर्तृत्वानुपपत्तेः । नचैवं स्थिरपदवैयर्थ्यम् । प्रकर्षविज्ञानार्थत्वात् तेन । चिरस्थायित्वमर्थः । 'व्याधिमत्स्यबलेष्विति वाच्यम्' । अस्थिरार्थ आरम्भः । अतिसारो व्याधिः । व्यर्थान्तर्भावेणात्यन्तरुधिरनिःसारणहेतुत्वादित्यर्थः । विसारो मत्स्यः । सारं बलम् । सारयति चेष्टयति । बलस्य चेष्टाहेतुत्वादित्यर्थः ॥

# भावे ॥ १८ ॥

धात्वर्थमात्रे वाच्ये धातोर्घञ् स्यात् । पाकः त्यागः रोगः । ननु शब्देन यल्लिङ्गसंख्यायुक्तो योऽर्थः प्रतिपाद्यते तदभिधायकेनैव तेन भाव्यम् । भावशब्दश्चात्र पुंल्लिङ्ग एकवचनान्तश्च निर्दिष्टः । तस्य स्त्रियामित्यनेन सामानाधिकरण्यासंभवात् भावे स्त्रियां क्तिन्न स्यात् । किन्तु स्त्रियामकर्तरि कारके एव भावे पुंसि स्यात् । नपुंसकेभावे क्तइत्यत्राकर्तरिच कारके इत्यस्य निवृत्तत्वान्नपुंसके कर्तरि स्यात् । भावे तु पुंसि । पाक इति घञ् चैकत्वे एव स्यान्नतु पाकौ पाका इत्यादौ । भावपदबोध्यार्थजातीयपरतायामेव तत्प्रत्ययानां प्रसङ्गात् । नैवम् नान्तरीयकतया लिङ्गवचनयोरुपादानेऽपि तयोरविवक्षितत्वात् । भावप्रातिपदिकार्थसामान्यस्यैव प्रत्ययनिमित्तत्वात् । यद्वा पाकादिषु क्रियाविशेषेषु लिङ्गसंख्याविशेषस्थलेऽपि भावशब्दवाच्यं सा-

प्राह्यं गोत्वमिव गोष्वसिस्त तच्चैकं पुंस्त्वानुगतं चेति तमाश्रित्य प्रत्य-यादिविः भावस्य सामान्यत्वात्पचादेश्च विशेषत्वात् । भूतिर्भवन-मित्यपि पाकादिवत्कर्त्रादिभेदाद्भावविशेष एव भावसामान्यानु-गम इति कैयटः । सबन्धिभेदेनैकस्य मातुलत्वोपाध्यायत्वादिव-त्पाकादिषु विशेषरूपता भावशब्दवाच्यसामान्ययोः परस्पराबाधे-न सत्त्वात् । उक्तंच हरिणा—

आचार्यो मातुलश्चेति यथैको व्यपदिश्यते ।
संबन्धिभेदादर्थात्मा स विधिः पक्तिगानयोः ॥

तथाच प्रत्येकधातुवाच्यविशेषसमवेतस्य भावसामान्यस्यात्र-प्रत्ययार्थतया निर्देश इति सिद्धम् । अत्र भावस्य सिद्धत्वस्थादिकं प्रागेव व्युत्पादितम् ।

# अकर्तरिच कारके संज्ञायाम् ॥१९॥

कर्तृभिन्ने उपपदे घञ् । रज्यतेऽनेन रागः । प्रास्यते इति प्रासः । क्वचिदसंज्ञायामपि । को भवता लाभो लब्धः । कस्त्वया दायो दत्तः । अकर्तरि कारके भावे इत्येतदुभयस्यातः परमनु-वृत्तिः । कृत्यल्युटो बहुलमिति यावत् । अत्र भाष्यम् । अकर्त-रीति पर्युदासे कारकग्रहणं नञिवयुक्तन्यायादेव लभ्यम् । प्रति-षेधपक्षेऽपि संज्ञायां घञः कर्तरि तन्निषेधस्य च वाक्यभेदेन वि-धाने धात्वर्थसंबन्धिनि कारक एव भविष्यति । भावे पूर्वसूत्रेणैव विहितत्वात् । नच भावे संज्ञायां घञ्विधानार्थितयान्यथासिद्धिः । भावे संज्ञायामित्येकयोगापत्तेः । नापिपरिमाणाख्यायामित्यत्र कारकग्रहणानुवृत्त्या एका तिलोच्छ्रितिर्द्वे सृती इत्यादौ घञभा-वार्थं । अकर्तरीत्यस्यानुवृत्त्यापि सिद्धेः । संज्ञाग्रहणमपि व्यर्थम् । असंज्ञायामपि दर्शनात् । नच कृतः कट इत्यादौ कारक इत्यादि-

प्रसङ्गः । अभिधानलक्षणाः कृत्तद्धितसमासा इत्यतिप्रसङ्गभ-ङ्गात् ।

# परिमाणाख्यायां सर्वेभ्यः ॥ २० ॥

घञ् । एकस्तण्डुलनिश्चायः । द्वौ शूर्पनिष्पावौ । ग्रहवृदृ-निश्चिगमश्चेतिघञ ऋदोरपश्चापवादः । नचान्ते निरभ्यां पूल्वो-रित्येव घञ्सिद्धिः सर्वापवादबाधनार्थं सर्वेभ्य उपादानादने-नापि भवितुमर्हत्वात् । ननु सर्वेभ्य इति किमर्थम् । नच पुर-स्तादपवादन्यायेनाय घञचावेव बाधेत नत्वपमनन्तस्यापि बा-धार्थमिति वाच्यम् । बाध्यसामान्यचिन्तायामन्तस्यापि बाधोपप-त्तेः । नचैकः पाक इत्यत्र कर्मणि घञर्थं अकर्तरिचेत्येव सिद्धेः संज्ञायामित्यस्य तत्र निरासात् । अजपोरपि संज्ञाविषयकत्वापत्त्या प्रकृते तदनापत्तेश्च । अपवादस्योत्सर्गसमानविषयकत्वात् । उ-च्यते । प्रकृत्याश्रयो योऽपवादस्तस्यैवायमपवादो यथा स्यात् । धा-तुमात्रसमानाधिकरण्यापन्न सर्वेभ्य इति पञ्चमीनिर्देशादीदृशार्थलाभात् असत्यस्मिन् अर्थाश्रयस्यापि अपवादस्यायमपवादः । तथाचैका-तिलोच्छित्तिरित्यादि न सिध्येत् । सर्वेभ्य इत्युपादाने तु स्त्रि-यामित्यर्थं निर्दिश्य क्तिनो विधानादर्थाश्रयस्य क्तिनो नायमप-वाद इति सिद्धम् ।

दारजारौ कर्तरि णिलुक्चहेतुमण्यन्ताभ्यां । दारय-तिजारयतिभ्यां कर्तरि घञ् णेश्च लुक् । नच णेरनिटीति णिलोपेन सिद्धिः । जनीजॄषिनि जीर्यतेर्मित्संज्ञायां मितां ह्रस्व इति ह्रस्वापत्तेः । णिजाश्रयवृद्धेर्दुर्लभत्वात् । णिलोपस्य स्थानि-

भुद्भावेन घञाश्रयाया अपि तथात्वात् । नच शुद्धाभ्यामेव करणे घञा सिद्धिः । अपो दुर्वारत्वात् । यद्वा शुद्धाभ्यामेव करणे घञ् विधीयते इति बोध्यम् ॥

# इङश्च ॥ २१ ॥

अचोऽपवादो घञ् । उपेत्यास्मादधीयते उपाध्यायः ।

'अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीप् वक्तव्यः' । उपाध्यायी उपाध्याया । स्वयमध्यापिकेत्यर्थः । घञनुक्रमणमजपोर्विषय इति वचनात्स्त्रियामप्राप्तस्य घञो विधानम् । 'शॄवायुवर्णनिवृतेष्विति वक्तव्यम्' शारो वायुः कर्मणि घञ् । शारश्चित्रो वर्णः । गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः । अकृताच्छादन इत्यर्थः । प्रदक्षिणप्रसव्यगामिनां शाराणामित्यत्र वार्तिकप्रयोगात्सिद्धम् ।

# उपसर्गे रुवः ॥ २२ ॥

संरावः । उपसर्गे किम् । रवः ।

# समि युद्रुदुवः ॥ २३ ॥

संयूयते गुडादिभिर्मिश्रीक्रियते संयावः । पिष्टविकारोऽपूपविशेषः । संदावः । संद्रावः ।

# श्रिणीभुवोऽनुपसर्गे ॥ २४ ॥

श्रायः नायः भावः । उपसर्गे तु प्रश्रयः प्रणयः प्रभवः । राज्ञो नय इति बाहुलकात् । प्रभाव इति प्रादिसमासात् ।

## वौ क्षुश्रुवः ॥ २५ ॥

विक्षावः । विश्रावः । वौकिम् । क्षवः श्रवः ।

## अवोदोर्नियः ॥ २६ ॥

अवनायः । उन्नायः । अध ऊर्ध्वं च नयनमिति क्रमेणार्थः । उन्नयो बाहुलकात् ।

## प्रेद्रुस्तुस्रुवः ॥ २७ ॥

प्रद्रावः प्रस्तावः प्रस्रावः । प्रेकिम् । द्रवः । स्तवः स्रवः ।

## निरभ्योः पूल्वोः ॥ २८ ॥

निष्पूयते वितुषीक्रियते शूर्पादिभिरिति निष्पावो धान्यविशेषः । अभिलावः । निरभ्योः किम् । लवः पवः । नच पूङ्पूञोर्द्वयोर्निर्देशे त्रयो धातव उपसर्गौ द्वाविति यथासंख्यानुपपत्तिः । शब्दतो यथासंख्योपपत्तेः ।

## उन्न्योर्ग्रः ॥ २९ ॥

उद्गारः निगारः । उन्न्योः किम् । गरः ।

## कृ धान्ये ॥ ३० ॥

लुप्तविभक्तिको निर्देशः । उत्कारो निकारो वा धान्यस्य । धान्ये किम् । भिक्षोत्करः । पुष्पनिकरः ।

## यज्ञे समि स्तुवः ॥ ३१ ॥

अधिकरणे ल्युटोऽपवादो घञ् । समेत्य स्तुवन्त्यस्मिन् छ-न्दोगा इति संस्तावः । यज्ञे किम् । संस्तवः परिचयः ।

## प्रे स्त्रोऽयज्ञे ॥ ३२ ॥

अयज्ञ इति च्छेदः । यज्ञस्य प्रकृतत्वात् । प्रशब्दे उपपदे स्तृधातोर्घञ् । अयज्ञविषयेप्रयोगे । प्रस्तारः । यज्ञे तु प्रस्तरो दर्भमुष्टिविशेषः । सह शाखया प्रस्तरं प्रहरन्तीति ।

## प्रथने वावशब्दे ॥ ३२ ॥

विशब्दपूर्वा त्स्तृधातोरशब्दविषये प्रथने घञ् । पटस्य वि-स्तारः तिर्यगायातिरित्यर्थः । शब्दे तु ग्रन्थविस्तरः ।

## छन्दोनाम्नि च ॥ ३४ ॥

स्त्र इत्यस्यानुवृत्तिः शब्दविषयत्वादप्राप्तावारम्भः । विस्ती-र्यन्तेऽस्मिन्नक्षराणि विष्टार इत्यधिकरणे घञ् । ततः पङ्क्तिशब्देन कर्मधारयः विष्टारपङ्क्तिः छन्दः । वावित्यस्यानुवृत्त्या प्रस्तारप-ङ्क्तिरित्यादि ।

## उदि ग्रहः ॥ ३५ ॥

ग्रहवृदित्यादिप्राप्तस्यापोऽपवादो घञ् उद्ग्राहः ।

## समि मुष्टौ ॥ ३६ ॥

यद्यपि मुष्टिशब्दस्य परिमाणार्थत्वे परिमाणाख्यायामि-त्येव सिद्धं तथापि अङ्गुलिसन्निवेशविशेषार्थमुष्टिशब्दार्थमारम्भः । मल्लस्य संग्राहः । मुष्टौ किम् । पदार्थसंग्रहः । 'उद्ग्राभनिग्राभौ च

छन्दसि' स्रुगुद्यमननिपातनयोरिति वक्तव्यम् । उद्ग्राभं च नि-ग्राभं । ब्रह्मदेवा अवीवृधन् च । जुहूपभृतोरेवात्र ग्रहणम् । उद्ग्राभं चैति जुहूमुद्यच्छति । उद्ग्राभचेति उपभृत नियच्छतीत्युक्तेः ।

## परिन्योर्नीणोर्द्यूताभ्रेषयोः ॥३७॥

परिपूर्वान्नयतेर्निपूर्वादिणश्च क्रमेण द्यूते औचित्ये च विषये घञ् । परिणयेन शारान् हन्ति । समन्तान्नयनेनेत्यर्थः । एष न्यायः । उचितमित्यर्थः । अन्यत्र परिणयो विवाहः । न्ययो नाशः ।

क्रमप्राप्तस्यानुल्लङ्घनमनुपात्ययः । तत्र पर्यायः । अन्यत्र

## परावनुपात्ययइण ; ॥३८॥

कालपर्ययः । अतिपात इत्यर्थः । अत्र वदन्ति । परौ नियो द्यूते इणोऽनुपात्यये नाभ्रेषे इत्येव सूत्रणीयम् । परीणोः सकृदुपादाने लाघवादिति ।

## व्युपयोः शेतेः पर्याये ॥३९॥

तव विशायः । राजोपशायः । पर्यायेकिम् । विशयः । संशयः । विशये प्रायदर्शनादिति जैमिनिसूत्रम् । उपशयः समीप शयनम् । नचानुपात्ययपदानुवृत्त्यैव सिद्धिः । पर्यायशब्दस्यापि तत्समानार्थत्वादिति पर्यायेति व्यर्थमिति वाच्यम् । पुनर्विधानार्थत्वात । तेनाभिनिविविवक्षाया परमपीनुणं बाधित्वाऽयमेवेति व्याख्यातारः ।

## हस्तादाने चेरस्तेये ॥४०॥

हस्तादानपदस्य उपादेयप्रत्यासत्तौ तात्पर्यम् । पुष्पप्रचायः ।

आदद्य सूर्यं कुसुमान्यचायत् । हस्तेनेति किम् । प्रचयः । वृक्षाग्र वर्तिनां फलानां यष्ट्या ग्रहणमित्यर्थः । अस्तेये किम् । पुष्पप्रचयश्चौर्येण अथ कथं कुसुमावचयं नाटयन्त्याविति कालिदासः । पुष्पस्यावचयाय नम्रनन्दनामका समायोजयत् । इत्यादि । सत्यम् । प्रमाद एवायमित्यभियुक्ताः । यत्तु आरुह्य हस्तादानेऽपि आदेयप्रत्यासत्त्यभावाद्धञभाव इति शकुन्तलाटीकायां तच्चिन्त्यम् । हस्तमुखाख्यहस्तस्य नियोगे औचित्यात् । च्युतसंयुक्तं कुसुमावचयादिषु इति तदुदाहृतप्रयोगस्यैवानुपपत्तेः । आरुह्य पुष्पग्रहेऽपि तद्धस्तस्य विनियोगात् । यष्ट्यादिना ग्रहणे च हस्तानुपयोगात् ॥

# निवासचितिशरीरोपसमाधानेष्वादेश्च कः ॥४१॥

एषु चिनो घञ् चस्य कुत्वं च । निकायो गृहम् । आकायमग्निं चिन्वीत । अधिकरणे घञ् । अग्निं तदाधारस्थलविशेषं चयनेन निष्पादयेदित्यर्थः । कायः शरीरम् । गोमयनिकायः । उपसमाधानं राशीकरणम् । समूह इति यावत् अयं धात्वर्थः । अन्ये प्रत्ययार्थोपाधयः । चस्य क इत्येव वक्तव्ये आदिग्रहणं यङ्लुकि अभ्यासस्यैव कत्वं यथा स्यात् । अन्यथा द्वयोस्तदापत्तेः । गोमयानां निकेचाय इत्याहुः ।

# संघे चानौत्तराधर्ये ॥४२॥

पूर्ववत् । भिक्षुनिकायः । प्राणिसमूहः संघः । औत्तराधर्ये तु सूकरनिचयः । स्तनपानादिदशायामुपर्यधोभावेनावस्थानमौत्तराधर्यम् । भिक्षुवत्पृथगेवावस्थाने तु सूकरनिकाय इत्येव । संघे

किम् । ज्ञानकर्मसमुच्चयः ।

## कर्मव्यतिहारे णच् स्त्रि-याम् ॥ ४३ ॥

भावे इति वर्तते स्त्रीग्रहणं व्यतिपाक इत्यत्र माभूत् । नच क्ति-न्प्रकरणे एवायं विधीयताम् । स्त्रियामित्यत एव लाभादिति वा-च्यम् । क्तिन्बाधकानामपि बाधार्थं प्रकरणोत्कर्षात् । तेन व्यास-श्रन्थेति युचो बाधे व्यावचोरी व्यावचर्चीत्यादि सिद्धम् नन्वेवं व्यतीक्षा व्यतीहेत्यादेरसिद्धिरकारप्रत्ययस्यापि बाधापत्तेरितिचे-त्सत्यम् । क्तिन्प्रकरणे एवास्य पाठ्यत्वात् । नचैवं व्यावक्रुष्टिरि-ति व्यात्युक्षीति च न स्यात् स्त्र्यधिकारे वासरूपविधेरभावात् । सत्यं बहुलग्रहणेन यथेष्टलाभादित्याकरः ॥

## अभिविधौ भावइनुण् ॥ ४४ ॥

साङ्कूटिनम् । सांराविणं वर्तते । अभिविधिरभिव्याप्तिः । अ-णादिवचनान्तरेणात्र कार्यम् । क्वचित्त्वं लोकात् । भावग्रहण नपुं-सके क्तादिनिवृत्त्यर्थम् । यद्यपि शब्दशक्तिस्वाभाव्यादेवास्य का-रकेष्वप्रवृत्त्या भावपदस्य कारकव्यावृत्त्यर्थत्वं वक्तुमशक्यम् ।तथापि मध्येऽपवादन्यायेनायं घञएव बाधकः स्यान्न तु क्तादेरतो भावे-इत्यधिकविधानार्थम् । क्तादेरपि बाधः । नच नपुंसके भावे क्त इत्यस्मादनन्तरमयं विधेयः भावपदत्यागे लाघवादिति वाच्यम् । वासरूपविधिना पक्षे क्तादिप्रसङ्गात् । प्रकरणोत्कर्षसामर्थ्येन तु वासरूपविधेर्बाधात् ल्युडप्यत्र एव । संकूटनं संरवणमित्यपी-त्याकरः ।

## आक्रोशेऽवन्योर्ग्रहः ॥ ४५ ॥

अवपूर्वान्निपूर्वाच्च ग्रहेः शापे घञ् । अवग्राहो निग्राहो वा ते भूयात् । अक्रोशे किम् । अवग्रहः पदस्यानिग्रहश्चोरस्य । छिद्राविशेषो निरोधश्चेत्यर्थः ।

## प्रे लिप्सायाम् ॥ ४६ ॥

प्रग्राहेण चरति भिक्षुः । भिक्षेच्छया पात्रं गृहीत्वेति यावत् । लिप्सायां किम् । प्रग्रहो देवदत्तस्य प्रकृष्टोऽभिनिवेश इत्यर्थः ।

## परौ यज्ञे ॥ ४७ ॥

उत्तरः परिग्राहः । स्फ्येन वेदिस्वीकरणमित्यर्थः ।

## नौ वृधान्ये ॥ ४८ ॥

निपूर्वाद्वृधातोर्घञ् धान्येऽर्थे । नीवारः । धान्ये किम् । निवरा कन्या । ग्रहवृदृइत्यादिना कर्मण्यप् । नचास्त्रियां क्तिन् स्यात्परत्वादिति वाच्यम् । बहुलवचनात्सिद्धे घञजबन्तानां पुंस्त्वं तु प्रायिकम् ।

## उदि श्रयतियौतिपूद्रुवः ॥ ४९ ॥

उच्छ्रायः उद्यावः उत्पावः उद्द्रावः पतनान्ताः समुच्छ्रया इति बाहुलकात् ।

## विभाषाङि रुप्लुवोः ॥ ५० ॥

आरावः । आरवः । आप्लावः । आप्लवः ।

## अवे ग्रहो वर्षप्रतिबन्धे ॥ ५१ ॥

विभाषेत्यनुवर्तते । अवग्राहोऽवग्रहः । अन्यत्रावग्रहः पदस्य ।

## प्रे वणिजाम् ॥ ५२ ॥

प्रपूर्वाद्ग्रहेर्घञ् प्रत्ययार्थस्य वणिक्संबन्धित्वे । तुलाप्रग्राहः तुलाप्रग्रहः । तत्सूत्रमितियावत् ।

## रश्मौ च ॥ ५३ ॥

प्रग्रह प्रग्राहः । रश्मिपदं रथशकटादिसंबद्धरज्जुपरम् । न-तु तन्मात्र परमित्याहुः । अत्र वदन्ति । उदिग्रहः, समिमुष्टौ, आ-क्रोशेवन्योः, प्रेलिप्सायाम्, परौ यज्ञे. अवे वर्षप्रतिबन्धे विभा-षा, प्रेवणिजाम्, रश्मौचेति पठित्वा विभाषाङिरुप्लुवोरिति पठितुं-युक्तम् । ग्रहेः सकृदुपादाने लाघवादिति ।

## वृणोतेराच्छादने ॥ ५४ ॥

विभाषा घञ् प्रावारः प्रवरः ।

## परौ भुवोऽवज्ञाने ॥ ५५ ॥

परिभावः परिभवः । अवज्ञाने किम् । परिभवः सर्वतउ-त्पत्तिः ।

## एरच् ॥ ५६ ॥

इकारान्तादच् । चयः जयः । 'भयादीनामुपसंख्यानम्' । नपुं-सके क्तादिनिवृत्त्यर्थम् । परत्वात्प्राप्तयोः क्तल्युटोः पूर्वविप्रतिषे-

घोऽयम् । तथाचानपवादत्वान्न बाधकान्यायः । भयम् । वर्षम् । वृषभो वर्षणादिति भाष्यप्रयोगादूर्ध्वगमपीति कैयटः भगनमिति त्वसाध्वेवेति अनुन्यासादयः। कल्प्यादिषु च प्रतिषेधः । प्यन्तेऽप्यचि प्रतिषेधे घन् । स्वरे विशेषः । कल्पः अर्थः । एरजण्यन्तानामिति वचन त्वनार्षमिति कैयटः ।

जवसवौ छन्दसि वक्तव्यौ । ऊर्वोरस्तु मे जवः । देवस्य सवितुः सवे । अपा रूपसिद्धावपि स्वरार्थमारम्भः ।

## ऋदोरप् ॥ ५७ ॥

करः गरः शरः यवः स्तवः दकारोऽयं नतु तकारः । निरभ्योः पूल्वोरित्यारम्भसामर्थ्यात् । अनस्तात्परत्वाभावादीर्घोकारान्तेभ्योऽप्ययम् । लवः पवः ।

## ग्रहवृदृनिश्चिगमश्च ॥ ५८ ॥

अप् स्यात् घञचोरपवादः । ग्रहः वरः दरः निश्चयः गमः । स्यादेतत् । निश्चयइत्येरचापि सिद्धम् । रूपस्वरयोरविशेषात् । नच हस्तादाने इति घञापत्तिः । यस्य स्तेयार्थत्वं प्रसक्तं तस्यैव हस्तास्ताने घञ्विधानात् निपूर्वस्य चिनोतेश्च स्तेये वृत्त्यभावात् । मैवम् । थाथादिस्वरो निश्चयपदे न भवतीत्यस्य ज्ञाप्यत्वात् । तेन कृत्स्वरेण मध्योदात्तसिद्धिः । वशिरण्योरुपसंख्यानम् । घञि प्राप्ते आरम्भः । वशनं वशः। रणन्त्यत्र रणः । 'घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्' । भावः कर्तृभिन्नकारकंच घञर्थः । प्रस्थः । प्रस्नान्त्यत्र प्रस्नः । प्रापिबन्त्यस्यां प्रपा । विध्यन्त्यनेन व्यधः। घ्नन्त्यस्मिन् मनांसि विघ्नः । आयुध्यन्तेऽनेनायुधम् ।

## उपसर्गेऽदः ॥ ५९ ॥

अप् स्यात् । प्रघसः । व्यघसत इति त्रिघसो वैश्वदेवाशिष्टम न्नम् । विशेषस्तु तदशनस्य स्मृतिषु प्राशस्त्यात् । उपसर्गे किम् । घासः । शष्पं बालतृणं घास इत्यमरः ।

## नौण च ६०

निपूर्वादद्तेर्णः स्यादप् च । निघसो न्याद इत्यपीत्यमरः ।

## व्यधजपोरनुपसर्गे ६१

व्यधः जपः उपसर्गे तु आव्याधः । उपजापो रहस्यप्रकाशः ।

## स्वनहसोर्वा ६२

पक्षे घञ् । स्वनः स्वानः । हसः हासः अनुपसर्ग एव । प्र-स्वानः प्रहासः ।

## यमः समुपनिविषु ६३

एतद्भिन्नोपसर्गाभावे सति यमो वाप् पक्षे घञ् । सच वि-शिष्टाभाव उक्तोपसर्गयोगे शुद्धेच तुल्यः । संयमः संयामः । उ-पयमः उपयामः । नियमः नियामः । वियमः वियामः । यमः यामः ।

## नौ गदनदपठस्वनः ॥ ६४ ॥

निपूर्वेभ्य एभ्यो वाप् पक्षे घञ् । निगदः निगादः, निनदः निनादः । निपठः निपाठः । निस्वनः निस्वानः ।

# क्वणो वीणायां च ॥ ६५ ॥

चादनुपसर्गे च विणाविषयाच्चक्वणतेरप्। निक्वाणः नि-क्वणः। क्वणः क्वाणः। वीणायां तूपसर्गान्तरेऽपि। प्रक्वणः प्रक्वाणः।

# नित्यं पणः परिमाणे ॥ ६६ ॥

पणते रप्। मूलकपणः शाकपणः। पूलक इत्यर्थः। परिमाणे किम्। पाणः।

# मदोऽनुपसर्गे ॥ ६७ ॥

धनमदः। उपसर्गेतु उन्मादः।

# प्रमदसंमदौहर्षे ॥ ६८ ॥

अन्यत्रप्रमादः।

# समुदोरजः पशुषु ॥ ६९ ॥

समजः पशुसंघः। उदजः पशुप्रेरणम्। पशुषु किम्। समाजः उदाजः।

# अक्षेषुग्लहः ७०

अक्षपदं देवनपरम्। तत्र पणभूतं वस्तु ग्लहः। अन्यत्र ग्रहः।

# प्रजनेसर्तेः ७१

प्रजननं प्रजनः। जनिवध्योश्चेति न वृद्धिः। ण्यन्तादेरज्ञा।

प्रशब्द प्रनिष्ठ१ इतिवत् धात्वर्थाभावपरः । तथाच गर्भधारणं लब्धम् । (तेन कृत्स्वरेण मध्योदात्तसिद्धिः) तच्च प्रथमं द्वितीयादिकं वेति हरदत्तानुसारिणः । प्रथममेवेति वृत्तिः । गवामुपसरः । दिने दिने सावसरेषु बन्दिनाम् । श्रीलंक्थप्रसरेबवेशव नितादुःखोपचर्या जनैरित्यादौ पुंसि संज्ञायामिति घः ।

## ह्वः संप्रसारणं च न्यभ्युपविषु ७२

चादप् । निहवः अभिहवः । उपहवः विहवः । अन्यत्र प्रह्वायः ।

## आङि युद्धे ॥ ७३ ॥

आहूयतेऽस्मिन्नाहवः । अन्यत्र स्वाह्वायः ।

## निपानमाहावः ॥ ७४ ॥

अप्संप्रसारणं वृद्धिश्च निपात्यते उदकाधारश्चेदर्थः । आहावस्तु निपानं स्यादुपकूपजलाशये ।

## भावेऽनुपसर्गस्य ॥ ७५ ॥

ह्वयतेः संप्रसारणमपूच । हवः ।

## हनश्च वधः ॥ ७६ ॥

वधादेशोऽन्तोदात्तः । वधेन दस्युम् । चाद्धञ् । घातः ।

## मूर्तौ घनः ॥ ७७ ॥

काठिन्ये हन्तेरप् घनादेशश्च । अभ्रघनः । सैन्धवघन उदके

प्राप्त इत्यादावभेदोपचारः ।

## अन्तर्घनो देशे ॥ ७८ ॥

अकारोपध इति केचित् । वाहीकग्रामविशेषसंज्ञेयम् ।

## अगारैकदेशे प्रघणः प्रघाणश्च ७९

प्रविशद्भिर्जनैः पादैः हन्यते इति प्रघणः । पक्षे वृद्धिः प्रघाणः । 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः । बहिरिति प्रकोष्ठान्वितम् ।

## उद्घनोत्याधानम् ॥ ८० ॥

अत्याधानमुपरि स्थापनम् । यत्र स्थापयित्वा काष्ठानि तक्ष्यन्ते स उद्घनः ।

## अपघनोऽङ्गम् ८१

अङ्गं प्रतीकोवयवोपघन इत्यमरः । सचेह नसर्वः पाणिः पादश्चेत्याहुः । अपघातोऽन्यः ।

## करणेऽयोविद्रुषु ॥ ८२ ॥

एषु हन्तेः करणे अप्घनादेशश्च । अयो हन्यतेऽनेनायोघनः । विघनः द्रुघनः । पूर्वपदादितिणत्वमित्येके । कुठारस्येयंसंज्ञा ।

## स्तम्बेकच ८३

स्तम्बे उपपदे हन्तेः करणे कः । पक्षेऽप् घनादेशश्च ।

स्तम्बघ्नः स्तम्बघनः । अन्यत्र स्तम्बघातः । नचात्र निपातन-व्यवधानेन कथं हन्तेरनुवृत्तिः । तेषामादेशत्वस्वीकारात् तत्रा-पि हन्तेरनुवृत्तेः । नच घन इत्यत्रापूस्वरेणाद्युदात्तप्रसङ्गाद्दन्तो-दात्तानुपपत्तिः । आदेशानामाकारान्ततयाऽनो लोपे कृते उदा-त्तनिवृत्तिस्वरेणापि उदात्तसिद्धेः । स्त्रीलिङ्गे च इषीकादेर्य-त्र स्तम्बहननकरणत्वं तत्र कप्रत्ययस्य सर्वापवादत्वात्स्तम्बघ्नेति केचित् । ऊतियूतीति निपातनस्य तथात्वात्स्तम्बहेतिरित्यन्ये । 'अजब्भ्यां स्त्रीखलनाः । स्त्रियाः खलनौ विप्रतिषेधेनेति ल्युटा स्तम्बहननीत्यन्ये ।

## परौ घः ॥ ८४ ॥

अपूर्वनियोगेन हन्तेर्घादेशः । परिहन्यतेऽनेनेतिपरिघः ।

## उपघ्न आश्रये ८५

उपपूर्वाद्धन्तेः अप्उपधालोपश्च । आश्रयः सामीप्यम् । प-र्वतेनोपहन्यते सामीप्येन गम्यते पर्वतोपघ्नः ।

## संघोद्घौ गणप्रशंसयोः ॥ ८६ ॥

संहननं संघः । उत्कृष्टतया ज्ञायते इत्युद्घः । गत्यर्थानां ज्ञानार्थत्वात् । क्रमेण भावकर्मणोरप् ।

## निघो निमितम् ॥ ८७ ॥

समन्तात्परिच्छेदो निमितम् । निर्विशेषं हन्यन्ते निघा वृक्षाः । समारोहपरिणाहा इत्यर्थः ॥

## ड्वितः क्त्रिः ८८

डुपचष् पाकेन निर्वृत्तं पक्त्रिमम् डुवप् उप्त्रिमम्। डुकृञ् करणे। कृत्रिमम्। निर्वृत्तमित्यधिकारे क्त्रेरिति वक्ष्यमाणेन मबागमः।

## ट्वितोऽथुच् ८९

टुवेपृ वेपथुः। टुओश्वि गतिवृद्ध्योः। श्वयथुः। इमौ भावे एव शब्दशक्तिस्वाभाव्यात्।

## यजयाचयतविच्छप्रच्छरक्षो नङ्

भावेऽकर्तरि कारके चायम्। अतएव यज्ञेन यज्ञमयजन्त देवा इत्यत्र कर्मपरतया व्याख्यातम्। यज्ञः याच्ञा। यत्नः विश्नः प्रश्नः। रक्ष्णः। 'नस्य ङित्त्वं संप्रसारणप्रतिषेधो वक्तव्यः'। ङित्त्वाभावे विश्न इत्यत्र गुणापत्तेः। प्रश्ने चासन्नकाले इति निपातनात्सिद्धमिति भाष्यम्।

## स्वपो नन् ९१

स्वप्नः।

## उपसर्गे घोः किः ॥ ९२ ॥

प्रधिः अन्तर्धिः। उपसमीपे स्वधर्ममादधातीत्युपाधिरित्यादि-स्वारस्यात् बाहुलकात्कर्तर्यपीति माधवादयः। एतेन विधाता विश्वसृ-ड्विधिरित्यादि व्याख्यातम्। विधविधाने इत्यस्मादिगुपधात्कि-दिति विधिशब्दे उपाधीयतेऽनेनेति करणपरतयोपाधिपदे च सि-

द्धे बाहुलकं नादेयमिति दीक्षिताः ।

# कर्मण्यधिकरणे च ९३

कर्मण्युपपदे धोः किः स्यादधिकरणेऽर्थे । जलानि धीयन्तेऽत्र जलधिः ।

# स्त्रियां क्तिन् ॥ ९४ ॥

स्त्रीविषये भावादौ क्तिन् । घञोऽपवादस्त्वादजपोस्तु परत्वाद्बाधकोऽयम् । कृतिः चितिः । स्तुतिः । आबादिभ्यश्चेति वक्तव्यम् । आप्तिः राद्धिः दीप्तिः । अप्रत्ययापवादोऽयम् । यदितु 'निष्ठायां सेटोऽकार' इति विधिः । तर्हि स्रंसा ध्वंसेति न स्यात् । वस्तुतस्त्रयाणामेव आबादित्वात्स्रस्तिर्ध्वस्तिरित्येव रूपम् । ननु स्रंसा ध्वंसेति भाष्यम् । 'तथाच निष्ठायां सेटोऽकारवचनात्सिद्ध'मिति वार्तिकं सम्यगेवेति भावः । तथाच गुरोश्चहल इसेतत्प्राप्तिस्थले एव आबादिभ्यः क्तिन्निति तस्य तात्पर्यम् । तेन कण्डूतिरित्यत्र 'क्तिन्नाबादिभ्य' इति क्तिन्निति वृत्तिरयुक्ता । क्तिजित्येव तत्र युक्तः पाठ इति हरदत्तः ।

# स्थागापापचो भावे ॥ ९५ ॥

क्तिन् स्यात् । स्थादिभ्य आतश्चोपसर्गे इति पचेस्तु भिदादित्वात्प्राप्तस्याङोऽपवादः । ननु विभाषाख्यानेति वक्ष्यमाणयोर्ण्वुलिञोः पुरस्तादपवादन्यायात् अनन्तरबाधेन विधेः सावकाशत्वे परेण तस्य बाधात् । प्रस्थितिः । उपस्थितिः । स्थाध्वोरितीत्वम् । संगीतिः संपीतिः । घुमास्थेतीत्वम् । पक्तिः । अवस्थासंस्थादयो व्यवस्थायामिति सौत्रप्रयोगात् । एतेन मनिष्ठुति

व्याख्यातम् । 'श्रुयजीषिस्तुभ्यः करणे क्तिन् वक्तव्यः' । ल्युटोऽपवादः । श्रूयतेऽनया श्रुतिः । इष्टिः । स्तुतिः । 'ग्लाज्याहाभ्यो निः' । ग्लानिः ज्यानिः हानिः ।

## मन्त्रे वृषेषपचमनविद्-भूवीराउदात्तः ॥ ९६ ॥

मन्त्रविषये वृषादिभ्यः क्तिन् स उदात्तश्च । उदात्तार्थं सूत्रम् । इषेस्तु क्तिन्नर्थमपि । इच्छेति निपातनेन तत्र बाधितत्वात्-वृष्टिं दिवः सुम्नमिष्टये । पक्तीरु । । इयंते नव्यसीमतिः । वित्तिः भूतिः अग्न आयाहि वीतये । रातौ स्यामोभयासः ।

## ऊतियूतिजूतिसातिहेतिकीर्तयश्च ॥ ९७ ॥

अवतेर्ज्वरत्वरेत्यूठ् । ऊतिः । वचनं उदात्तार्थम् । नित्स्वरेणानुदात्तप्रसङ्गात् । यूतिजूत्योर्दीर्घश्च निपात्यते । स्यतेः सनोतेश्च सातिः सातिर्दानावसानयोः । आद्ये द्यतिस्यतीत्यादिना प्राप्तस्येत्वस्याभावः । द्वितीये त्वा जनसनेति आकारान्तादेशसिद्धौ स्वरार्थम् । हेतिरित्यत्र हन्तेर्नस्येत्वम् । हिनोतेस्तु गुणः । कीर्तिरित्यत्र ण्यन्तत्वाद्युचि प्राप्ते क्तिन् उदात्तश्च ।

## व्रजयजोर्भावे क्यप् ॥ ९८ ॥

उदात्त इत्येव इज्या व्रज्या । पित्करणमुत्तरत्र तुगर्थम् ।

# संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ॥९९॥

एभ्यः स्त्रियां भावादौ क्यप् सञ्ज्ञायां सचोदात्तः । समजन्त्यस्यां समज्या । क्यपि वीभावो निषिद्धः । निषद्या आपणः । निपतन्त्यतो निपत्या पिच्छिला भूमिः । मन्यतेऽनया मन्या गलपार्श्वनाडी तदुल्लासेन क्रोधानुमानात् । विदन्त्यस्यां विद्या । सुत्या अभिषवः । शय्या । भृत्येति भावे । कुमारभृत्या गर्भिण्या परिचर्याऽभिधीयते इति हारावलिः । 'कुमारभृत्याकुशलैरधिष्ठित' इति कालिदासः । ईयतेऽनया इत्या शिबिका । संज्ञायां किम् । मतिः आसुतिः भृतिः । एतेन मतिबुद्धिपूजार्थेभ्यश्च कर्मणि भृतौ रजः कृष्यासुतीति सौत्रप्रयोगादेवैषा साधुत्वमिति दुर्घटाद्युक्तिश्चिन्त्येति दीक्षिताः ।

# कृञः शच ॥ १०० ॥

कृञ इति योगो विभज्यते । कृञः क्यप् स्यात् । कृत्या । शच । कृञः शः स्यात् । चात्क्तिन् । क्रिया कृतिः । तथाच वार्तिकम् । कृञः शचेति वावचन क्तिन्नर्थम् । अन्यथा चकारेण क्यप एव समुच्चयापत्त्या व्यवहितस्य क्तिनः समुच्चयो न स्यात् ।

# इच्छा ॥ १०१ ॥

इषेः शो भावे यगभावश्च । तेन कारके नायम् । 'परिचार्यपरिसर्या मृगयाटाट्यानामुपसंख्यानम्' । शयकौ सर्वत्र । निपात्येते । परिसर्या अत्र गुणोऽपि । मृग अन्वेषणे चुरादिरदन्तः अतोलो-

णाभावणिलोपाभ्यामस्य । अटाट्या । अटतेः व्यशन्तस्य द्वित्वम् । पूर्वभागे यकारनिवृत्तिर्दीर्घश्च । षाष्ठे धातोर्नाद्वित्व एवाभ्यासस-ञ्ज्ञास्वीकारेण हलादिः शेषानुपपत्तेः । अटतेर्यङन्तादप्रत्यये स्त्र्यां लोपणलोपाभ्यां अटाटेत्याहुः । 'जागर्तेरकारो वाच्यः' । जागर्या सार्वधातुके यक् । जागरा । उभयत्र जाग्रोविचिण्णिति गुणः । अ-थकथं 'धान्यानां विरजस्तमा भगवती चर्येयमाल्हादते' इति मुरारिः ।

अत्र केचित् । गदमदचरेति यत् । नच स्त्र्यधिकारे वास-रूपविधेरभावात्क्तिना बाधापत्तिः । बाध्यबाधकयोर्द्वयोरपि स्त्र्य-धिकारस्थत्वे एवास्त्रियामिति पर्युदासात् । अत एवास्येत्यादौ ऋहलोर्ण्यदिति वृत्तावुक्तमित्याहुः ।

दीक्षितास्तु बाहुलकादेवैतत्सिद्धम् । अपवादमात्रस्य स्त्र्य-धिकारीयत्वेऽपि अस्त्रियामित्यस्य प्रवृत्तेः । अन्यथा घञादीना-मपि स्त्रियां प्रसङ्गात् । नचेष्टापत्तिः ।

क्तल्युट् नपुंसके भावे स्त्रियां क्तिन्नादयो मताः ।

अतो घञजपः पुंसि परिशेषादिति स्थितिरिति सिद्धान्त-विरोधादित्याहुः ।

## अप्रत्ययात् ॥ १०२ ॥

प्रत्ययान्ताद्धातोरकारः स्यात् । प्रत्ययस्य धातुविशेषणत्वा-त्तदन्तविधिः । सनाद्यन्तेभ्य इति पर्यवसन्नम् । चिकीर्षा । क-ण्डूया । पुत्रकाम्या ऋतीया ।

## गुरोश्च हलः ॥ १०३ ॥

हलन्ताद्गुरुमतोधातोः स्त्रियामकारः स्यात् । ईहा । गुरोः

किम् । भक्तिः । हलः किम् । शीतिः । ननु गुरुत्वस्याज्मात्र-धर्मतया गुर्वन्तत्वहलन्तत्वयोरेकत्राभावात् एकत्र तदन्तविधिर-न्यत्र लक्षणेत्यस्य निश्चयेऽपि हल इत्यत्रैव तदन्तविधौ विनिग-मकाभावात् गुर्वन्ताद्धलन्त इत्यर्थः कुतो न स्यात् । तरत्यादिभ्य एव स्यात् कुण्डादिभ्यो मा भूदित्यस्य प्रयोजनस्य संभवात् । मैवम् चेष्टायामनध्वनि । शङ्कायामाशमायामित्यादिसौत्रनिर्देशस्यैव विपर्यये बाधकत्वात् ।

## षिद्भिदादिभ्योऽङ् ॥ १०४ ॥

षिद्भ्यो भिदादिभ्यश्चाङ् स्त्रियाम् । गणे पठितानां भिदा-दीनां कृदन्तत्वेन प्रातिपदिकतया तेभ्यो धात्वधिकारविहित-प्रत्ययानुपपत्त्या तत्प्रकृतिभूता धातव एवात्र भिदादिपदेन नि-र्दिश्यन्त इति न दोषः । ताश्च यथा-भिदिर्विदारणे छिदिर्द्वैधीकरणे विदज्ञाने क्षिपप्रेरणे गुहसंवरणे डुधाञ् धारणपोषणयोः । मिधृ-मेधृमेधाहिंसनयोः । ऋगतौ गुधपरिवेष्टने हृञ्हरणे क्षिक्षये क्षिनि-वास गत्योः । तॄप्लवनतरणयोः । धृञ्अवधारणे लिखअक्षरवि-न्यासे पीडअवगाहने डुवप् बीजसंताने । वसनिवासे मृजूशुद्धौ कृपकृपायाम् । भिदादिपाठस्तु प्रसिद्ध्युपसंग्रहार्थः । प्रत्ययविधा-नमसंदेहार्थम् । जॄष्वयो हानौ ।ऋदृशोऽङि गुणः जरा । डुपचष् पाके । पचा । डुलभष् लभा । उपलब्धिरित्यादि तु प्रतिवर्णम-र्थानुपलब्धेरिति भाष्यवार्तिकप्रयोगात् । क्तिन्नावादिभ्य इत्यस्य विषयमात्रपरतया भाष्ये एवोक्तत्वात् ।

ननु ज्ञप्तिरुपाप्तिरित्यादौ ण्यासश्रन्थेत्यस्य प्रवृत्तावनुपपत्त्या बाहुलकस्यावश्याश्रयणीयतया तल्लभ्योऽप्यर्थ आबादिभ्य इत्य-त्रान्तर्भावित उपेयप्रतिप्रसर्था इति न्यायात् । मैवम् । भाष्यविरो-

धात् । भिदा विदारणे इति वक्तव्यम् । भित्तिरन्या । भिद्यते इति व्युपत्तेः । छिदा द्वैधीकरणे । अन्यत्र छित्तिः । छिद्रम् । आरा शस्त्र्याम् । आर्तिरन्या । आङोऽर्तेश्च उपसर्गादृतिधाताविति वृद्धिः । आरा हारा कारा तारा धारेत्येषु गुणे कृते दीर्घो निपात्यते लेखेत्यत्र गुणो लस्य एत्वं च । धारा प्रपाते जलधारा क्षीरधारा । धृतिरन्या । गुहा गिर्योषध्योः गिरिशब्दस्तदवयवपरः । गुहा दरी औषधीभेदश्च अन्यत्र गूढिः । गुहां प्रविष्टे परमे परार्द्धे इत्यादावुपचारात्प्रयोगः । 'चोदयतेर्दकारस्य डत्वमुपधादीर्घश्च' चूडा स्पष्टमन्यत् ।

## चिन्तिपूजिकथिकुम्बिचर्चश्च ॥ १०५ ॥

अङ् स्यात् । ण्यासेति युचोऽपवादः । भौवादिकस्य कुम्बे रकारेऽङि वा विशेषाभावान्नात्रोपादानमिति न्यासकारः । चिन्ता पूजा कथा कुम्बा चर्चा । चकारात्तुलेति हरदत्तः । अतुलोपमाभ्यामित्यादिप्रयोगादित्यन्ये ।

## आतश्चोपसर्गे ॥ १०६ ॥

आदन्ताद्धातोरङ् क्तिनोऽपवादः । प्रदा उपधा श्रदन्तरोरुपसर्गवद्वृत्तिः । श्रद्धा । अन्तर्धा । तारकादिषु श्रद्धाशब्दस्य पाठोऽन्तर्द्धौ येनेति प्रयोगोऽप्यत्र मानम् ।

## ण्यासश्रन्थो युच् ॥१०७॥

अप्रत्ययादिति गुरोश्च हल इति च प्राप्तस्याकारस्यापवादः

कारणा हारणा । आसना । श्रन्थना । यदुपासितमसावत्रेत्यत्र धातुनिर्देशे तिबन्तस्य लक्षणया तदर्थपरत्वमिति वर्धमानः । चकारस्तु न स्वरार्थः । उदात्त इत्यनुवृत्तेः । नचादेरपि तत्प्रसङ्गः । अनुवृत्तिसामर्थ्यात् । नापि युचोरित्यत्र सामान्यग्रहणार्थोऽन्यथा निरनुबन्धत्वादस्यैव ग्रहणे ल्युडादीनामनुपादानापत्तेरिति वाच्यम् । तत्रानुनासिकग्रहणस्य वक्ष्यमाणतया ल्युडादीनामप्यनुनासिकत्वप्रतिज्ञानसामर्थ्याद्ग्रहणसिद्धेः । घट्टिवन्दिविदिभ्यश्चेति वाच्यम् । घट्टना वन्दना वेदना । लाभार्थस्य विदेर्ग्रहणाद्विदवेदनाख्यानेति चुरादेर्ज्ञानेऽपि वेदनेति सिद्धम् । 'इषेरनिच्छार्थस्येति वाच्यम्' अन्विष्यतेः अन्वेषणा । वित्तैषणायाश्च सुतैषणायाश्च लोकैषणायाश्चेति छान्दसम् । परेर्वेति वक्तव्यम् । परीष्टिः पर्येषणा ।

## रोगाख्यायां ण्वुल् बहुलम् ॥१०८॥

छर्द वमने । प्रच्छर्दिका । प्रवाहिका प्रवाहयतिमुहुरित्यर्थः । विचर्चिका । चर्च अध्ययने समुदायेन रोगप्रतीतिः । शिरोर्तिरित्यत्र न बाहुलकात् । अर्द हिंसायाम् । तितुत्रेति नेट् । वस्तुतो रूढेष्वेव ण्वुल् । अर्तिशब्दस्तु पीडाविशेषवाची तद्धेतुत्वेनात्र प्रयुक्तः । रोगत्वव्याप्यधर्मस्यात्र शक्यतानवच्छेदकत्वात् । 'धात्वर्थनिर्देशेऽपिवक्तव्यं' कानामासिका अन्येष्वीहमानेषु । कानामशायिका अन्येष्वधीयमानेषु आसिक्रिया शयनक्रिया चेत्यर्थः । 'इक्श्तिपौधातुनिर्देशे' । पचिः । भवतेरः । निर्देशोऽत्रानुकरणम् । गुप्तिज्किभ्यइत्यादौ तु न बहुलोक्तेः । श्तिपः शित्करणसामर्थ्यात्कर्तृवाचित्वाभावेऽपि तदाश्रयः शप् । विभाषालीयतेरित्यादौ यगपि । तेनलीलीङोर्ग्रहणमित्युक्तम् । श्यनि तु लीयतेरेव ग्रहणं

स्यात् । नतु लिनातेरिति कैयटः ।

ननु भवतेरिति कर्तृनिर्देशाद्भवतेर इत्यत्र भावकर्मणोर्नेति केचित् । तदाकरविरुद्धम् । महर्षिणा तेन तिरोबभूवे । विभावरीभिर्बिभराम्बभूविरे इत्यादिमहाकविप्रयोगविरुद्धं चेति हेयम् । एतेन सुनोति सुवतिश्शायतेरित्यादिप्रयोगाच्छप् । नतूक्तसामर्थ्यात् । पिबतिरित्यादौ पिबादेशप्रवृत्त्या ग्लायतिरित्यादावात्वनिवृत्त्या च शित्करणस्य चरितार्थत्वादिति निरस्तम् । शित्करण शप्प्रवृत्त्या चरितार्थम् । पिबादयस्तु लोपः पिबतेरित्यादिनिर्देशादित्यस्यापि सुवचत्वात् । एतदभिप्रायेणैव कैयटहरदत्तन्यासकारादिभिः शित्करणसामर्थ्यादित्येवाभिहितत्वात् । तस्मादांशिक आकरविरोधस्तदुक्तावपि दुर्वार इति बोध्यम् । एतेन शित्करणेत्यत्र बहुव्रीहिणा भवतेरिति निर्देशाच्छवित्येवन्यासकाराद्यभिप्रायइति सीरदेवोक्तमपास्तम् । अनुन्यासादयस्तु शिशपि द्वितीयोऽपि शकारः प्रश्लिष्यते तत्सामर्थ्याच्छबित्याहुः ।

'वर्णात्कारः' । निर्देश इत्येव । अकारः,ककारः । वर्णमात्रमिहानुकार्यः । अकारस्योच्चारणसामर्थ्यात् । अस्य च्व्यावित्यादौ बाहुलकान्न । क्वचित्समुदायानुकरणादपि एवकार इति कैयटः । वषट्कार इति निर्देशादित्यन्ये । करण कारः एवस्य कार इति न्यासकृत् । नचाकार इत्यादावाप्येवम् । अकारकरणमित्याद्यनुपपत्तेः । नचककारस्येत्संज्ञाप्रसङ्गः । प्रयोजनाभावात् । 'रादिफः' रेफः । वामरूपविधिना कारोऽपि कारप्रत्ययस्य धातुप्रकृतिकत्वाभावेऽपि अधिकारवशात्कृत्संज्ञा । ततस्तदन्तस्य प्रातिपदिकत्वे स्वाद्युत्पत्तिरिति कैयटः । एवमुत्तरत्र बोध्यम् । आर्द्धधातुकत्वाभावादिडभावः ।

'मत्वर्थाच्छो वक्तव्यः' । मत्वर्थीयः । शब्दस्वरूपमतन्त्रम् ।

शैषिकान्मतुबर्थीयादितिप्रयोगात् । भसंज्ञाविरहेऽपि भाष्यप्रयो-
गाद्बहुलोक्तेर्वा अकारलोपः । केचित्तु मतुबर्थे भत्र इति गहादि-
त्वाच्छ इति तद्धितान्तमेवेत्याहुः । 'इणजादिभ्य इति वाच्यम्' ।
धात्वर्थनिर्देशे ण्वुलोऽयमपवादः । एवमग्रेऽपि । आजिः । बाहुल-
काव्न वीभावः । आतिः । संज्ञाशब्दा एते इतिन्यासकृत् । 'इञ्
वपादिभ्य इति वाच्यम्' । वृद्धिसाम्येऽपि स्वरार्थमारम्भः । वा-
पिः । वासिः । 'इक्कृष्यादिभ्यो वक्तव्यः' । कित्वं गुणाभावा-
र्थम् । कृषिः । गिरिः । 'सपदादिभ्यः क्विप् वक्तव्यः' । सम्पद्
विपद् आपद् सम्पत्तिरित्यादिबहुलोक्तेः ।

# संज्ञायाम् ॥ १०९ ॥

अधिकरणे ण्वुलर्थं सूत्रम् । उद्दालकपुष्पाणि भज्यन्तेऽस्यां
उद्दालकपुष्पभञ्जिका क्रीडाविशेषः । कृद्योगे षष्ठी । नित्यं क्रीडा-
जीविकयोरिति समासः ।

# विभाषाख्यानपरिप्रश्नयो-रिञ्च ॥ ११० ॥

परिप्रश्ने उत्तरे च गम्ये इञ् स्याच्चाण्वुल् । विभाषोक्ते यं-
थाप्राप्तमन्येऽपि । यद्यपीह अल्पाच्तरत्वादाख्यानपदस्य पूर्वनिपातः
श्रूयते तथापि उत्तरस्य प्रश्नपूर्वकत्वात्क्रमोल्लङ्घनेन च प्रयोजना-
भावाद्वृत्तावुदाहरणे च प्रश्नस्यैव प्राथम्यमिति सम्प्रदायः । कां
त्वं कारिं कारिकां क्रियां कृत्यां कृतिं वा अकार्षीः । सर्वां का-
रिमित्यादिकेऽन्यतमामुक्त्वाऽकार्षमिति योज्यम् ।

# पर्यायार्हर्णोत्पत्तिषु ण्वुच् ॥ १ १ १ ॥

भवत आसिका शायिका । अग्रगामिका पर्यायः क्रमः । शयनादिकार्हत्यर्थः अर्हत्यर्थः । भवानिक्षुभक्षिकामर्हति । ऋणे इक्षुभक्षिकां मे धारयसि । उत्पत्तौ इक्षुभक्षिका उदपादि ।

# आक्रोशे नञ्यनिः ॥ ११२ ॥

विभाषेति निवृत्तम् । नञि उपपदे अनिः स्यादाक्रोशे । अजीवनिस्ते शठ भूयात् । तस्याजननिरेवास्तु ।

# कृत्यल्युटो बहुलम् ॥ ११३ ॥

यथोक्तसाधनप्रकृत्यादिभिन्नस्थलेऽपि भवन्तीत्यर्थः । स्नान्त्यनेनेति स्नानीयं चूर्णम् । दीयतेऽस्मै दानीयो विप्रः । अवसिच्यते तदिति अवसेचनम् । नचैवं तयोरेव कृत्येत्यर्थनिर्देशानर्थक्यम् । उत्सर्गतस्तेषामेव गम्यमानत्वात् । 'कृत्ल्युटो बहुलमिति वक्तव्यम्' । कृत्यग्रहणमपनीय कृद्ग्रहणमेव व्यापकत्वात्कर्तव्यम् । तथाचल्युटोऽपि सङ्ग्रहे पृथक् ग्रहणं नकार्यमिति तात्पर्यम् । पादाभ्यां ह्रियते पादहारकः । गले चोप्यते गलेचोपकः । इह कर्मणि ण्वुल् । श्वोऽग्नीनाधास्यमानेन । श्वः सोमेन यक्ष्यमाणेन । अनद्यतनेऽपि लृट् ।

# नपुंसके भावे क्तः ॥ ११४ ॥

क्लीबत्वविशिष्टे भावेऽर्थे धातोः क्तः स्यात् । हसितं शयितमित्यादि । स्यादेतत् । तयोरेवकृत्यक्तखलर्था इत्येव भावार्थत्वं क्तस्य सिद्धम् । मैवम् । तत्र भूताधिकारीयनिष्ठेतिविहितस्य क्तस्य

त्ययस्यैव ग्रहणात् । इदं तु कालसामान्ये क्तस्य विधानम् । अत एवास्य परत्वात्स्वविषये घञादीनां बाधकतया तेषां पुंविषयत्वमिति सिद्धान्तः । अथ कर्तव्यप्रत्ययं स्यात् । भावेचाकर्मकेभ्य इत्यस्यासन्निधानात् । सत्यम् । गतं तिरश्चीनमित्यादिप्रयोगादिष्टापत्तेः । नच तद्योगेद्वितीयापत्तिर्नलोकेति षष्ठीनिषेधादिति वाच्यम् । क्तस्यच वर्तमाने इतिसूत्रे नपुंसकभावक्तस्य षष्ठ्या उपसंख्यानात् । शेषविवक्षया तत्प्रत्याख्यानपक्षेऽपि तद्भाष्यप्रामाण्यात्तत्र शेषविवक्षैवेति कल्पनात् । भ्रान्तं देशमनेकदुर्गविषम इति क्वचिद्द्वितीयादर्शनाच्चेति केचित् ।

अन्येत्वकर्मकेभ्य एवायम् । तयोरेवेति सूत्रेऽनुवृत्तस्य भावेचाकर्मकेभ्य इत्यस्य वाक्यभेदेन व्याख्यानात् । तत्तत्सूत्रविहितकृत्याद्यनुवादेन भावकर्मणोरेवेत्यर्थविधायकमेकं वाक्यम् । तेन निष्ठेति विहितस्य क्तस्य भावोऽप्यर्थः सिद्धः । भावेचाकर्मकेभ्य इत्यत्र तुभावेचेत्यत्र क्तइत्यनुवृत्त्या भावार्थकक्तप्रत्ययानुवादेनाकर्मकेभ्य इति विषयो नियम्यते तत्राविशेषेण क्तद्वयस्याप्युपादानादस्यापि अकर्मकमात्रपरत्वम् । गतं भुक्तमित्यादिकं त्वविवक्षितकर्मत्वेनाकर्मकत्वसद्भावादित्याहुः ।

# ल्युट्च ॥ १५ ॥

नपुंसके भावे ल्युडपि स्यात् । शयनं हसनं योगविभाग उत्तरत्र क्तानुवृत्त्यर्थः ।

# कर्मणिच येन संस्पर्शात्कर्तुः शरीरसुखम् ॥ ११६ ॥

स्पर्श इति भावे घञ् । कर्तुरिति कर्मणि षष्ठी । उभयप्राप्तौ कर्मणीति नियमाद्येनेति कर्तरि तृतीया । कर्तृत्वंच यत्क्रियानिरूपितमन्यस्य कर्मत्वं तत्क्रियानिरूपित ग्राह्यम् । तथाच येन स्पृश्यमानस्य कर्तुः शरीरसुखमुत्पद्यते तत्र कर्मण्युपपदे नपुंसके भावे ल्युट् । उपपदमिति नित्यसमासार्थ आरम्भः । पयः पानं सुखम् । यद्यपि भक्षणादेव सुखमुत्पद्यते तथापि स्पर्शपदं तदाद्युपलक्षकमेव । कर्मणि किम् । तूलिकाया उत्थानं सुखम् । अत्रापादानेन स्पृश्यमानस्य कर्तुः सुख नतु कर्मणेति पूर्वेणैव ल्युट् । कर्तुः किम् । गुरोः स्नापनं सुखम् । सुखापेक्षया गुरोः कर्तृत्वेऽपि स्नापनक्रियाकर्तृत्वाभावात् । णिजर्थक्रियायां शिष्यस्यैव कर्तृत्वात् । गतिबुद्धीत्यादिनागुरोः कर्मत्वं स्नपयतीत्यस्य अण्यन्तदशायामकर्मकत्वात् शरीरपदंचात्र शरीरसंयोगनिमित्तकारणकत्वस्य सुखे लाभार्थम् । तेन धनस्यामादनं सुखमित्यादौ न । स्वस्वामिभावेनैव तत्र सुखोत्पत्तेः ।

## करणाधिकरणयोश्च ॥११७॥

अनयोरर्थयो ल्युट् । नचोपपदत्वमेवानयोरस्ति नतु प्रत्ययार्थत्वमिति वाच्यम् । करणेत्यादिप्रयोगादेव तदभावात् इध्मप्रश्चनः । पलाशशातनः । गोदोहनेन पशुकामस्य प्रणयेत् । वारिधानी । घञपवादोऽयम् । येन नाप्राप्तिन्यायात् । अजपोः स्त्रीप्रत्ययानां च परत्वाद्बाधकः यद्वक्ष्यति अजभ्यामिति ।

## पुंसि संज्ञायां घः प्रायेण ॥११८ ॥

करणाधिकरणयोः पुंसि प्रायेण घः स्यात्संज्ञायाम् विषये । दन्ताः छाद्यन्तेऽनेन दन्तच्छदः छादेर्घेऽद्वीति ह्रस्वः । आकुर्वन्त्यस्मिन्नाकरः । एत्य व्यवहारं कुर्वन्तीति यावत् । प्रायेण किम् । प्रसाधनम् ।

## गोचरसंचरवहव्रजव्यजापण-निगमाश्च ॥ ११९ ॥

पूर्वयोरेवार्थयोर्घान्ता निपात्यन्ते । हलश्चेति घञपवादः । गावश्चरन्त्यत्र गोचरो विषयो देशश्च । संचरन्तेऽनेनेति संचरो मार्गः । वहन्त्यनेन वहः स्कन्धः । व्रजन्त्यत्र व्रजो घोषः । व्यजस्तालवृन्तम् । निपातनान्न वीभावः । गोचरादीनामवचनं प्रायवचनात् । हलश्चेत्यत्र प्रायग्रहणानुवर्तनाद्धञः क्वचिदभावाद्घएव भवतीति कैयटः । अन्यथा कषो निकष इत्यसिद्धेः ।

## अवे तृस्त्रोर्घञ् ॥ १२० ॥

अवतारः कूपादेः अवस्तारो जवनिका । प्रायग्रहणाद्वतारणोपाधिभूतायामित्यर्थः । क्वचिदसंज्ञायामपीति वृत्तिः ।

## हलश्च ॥ १२१ ॥

हलन्ताद्धञ् । घापवादः । अपमृज्यते व्याधिरनेनेत्यपामार्गः । विमृज्यतेऽवकरोऽनेनेति विमार्गः समूहनी ।

## अध्यायन्यायोद्यावसंहा-

## च ॥ १२२ ॥

अधीयतेऽस्मिन्नध्यायः । नियन्त्यनेन न्यायः । उद्युत्यतेऽनेनेत्यादि । 'अवहाराधाराऽऽवायानामुपसंख्यानम्' । अधिकरणार्थश्चेत इति भाष्यम् । वृत्तिकारस्तु वार्तिकस्थावाधारावायशब्दौ सूत्रे प्रक्षिप्य चकारादवहारशब्दसंग्रह इत्याह । स्पष्टं चेदं कैयटादौ ।

## उदङ्कोऽनुदके ॥ १२३ ॥

उदकशब्दाभिन्ने उपपदे उत्पूर्वादञ्चेर्घञ् । हलश्चेति सिद्धे उदकपर्युदासार्थं आरम्भः । घृत उदच्यते उद्ध्रियतेऽत्र घृतोदङ्कः चर्मपात्रम् । अनुदके किम् । उदकोदञ्चनः । यद्यपि घञो बाधत्वादत्वाद्धञभावे घ एव युक्तः तथापि घञ्प्रतिषेधसामर्थ्याद्घस्याप्यभावः । रूपसाम्यात् । घे कृदुत्तरपदप्रकृतिस्वरेण घञ्यपि थाथादिस्वरेणान्तोदात्तसाम्याच्च । 'अनुदकग्रहणानर्थक्यं प्रायवचनात्' । उदकोदञ्चन इत्यत्र प्रायोक्त्यैव घाभावात्सूत्रमनारभ्यमित्यर्थः ।

## जालमानायः ॥ १२४ ॥

जलधान्ये ज्वलितिकसन्तेभ्योण इति जालशब्दे सिद्धे आनायशब्द एवेह निपात्यः । आनीयन्ते मत्स्यादयोऽनेनेत्यानायः । जालं किम् आनयः ।

## खनो घच ॥ १२५ ॥

चाद्घञ् । आखनः आखानः । खनः । चजो रिति कुत्वाहा-

व्यत्वाभावाद्धित्करणानुपयोगे तत्सामर्थ्यादन्यतोऽप्ययम् । तेन भ-ङ्गामिति सिद्धम् । 'खनेर्डडरइकइकवकावाच्याः' । आखः । आ-खरः । डित्वाट्टिलोपः । आखनिकः । आखनिकवकः । आखना-दयः षट् खनित्रार्थाः ।

अत्र वार्तिकम् । 'अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ वि-प्रतिषेधेन' । चयो लवः कृतिर्हृतिरित्यादौ उभयोः सावकाशत्वे चितिः श्रुतिरित्यत्र परत्वाक्तिन् । एवमुत्तरद्वयेऽपि चयइत्यादि-रवकाशो दर्शनीयः । ईषद्भेदामित्यादौ खलोऽवकाशे ईषच्चय दुश्च-यमीषल्लवं दुर्लवं सुलवमित्यत्र खल् । इध्मव्रश्चन इत्यत्र अनस्या-वकाशे पलाशचयन इत्यादौ अन एव । एवं कृतिरित्यादिस्त्री-प्रत्ययस्य ईषद्भेदमित्यादिः खलोऽवकाशः । ईषद्भेदा दुर्भेदेत्यादौ खल् । एवं सक्तुधानी तैलपीडनीत्यादौ स्त्रीप्रत्ययं बाधित्वा अ-नो बोध्यः ।

# ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ १२६ ॥

एषु दुःखसुखार्थेषूपपदेषु भावकर्मणोः खल् स्यात् । तयो-रेवेत्युक्तेः करणाधिकरणयोरिति निवृत्तम् । अत्रदुरित्यस्य कृच्छ्रा-र्थत्वे इतरयोरकृच्छ्रार्थत्वे इति विभागो योग्यतागम्यः । दुष्करः कटो भवता । ईषत्करः सुकरो वा । इह कर्मणोऽभिधानात्कट इति प्रथमा । नलोकेति षष्ठीनिषेधात्कर्तरि तृतीया । लः स्वरार्थः । खित्वं तु यद्यपि न मुमाद्यर्थम् । अनव्ययस्येति वचनात् । तथापि उत्तरत्र तदर्थम् ।

## कर्तृकर्मणोश्च भूकृञोः ॥ १२७ ॥

इह कर्तृकर्मणोर्न प्रत्ययार्थत्वं किन्त्वीषदादीनामिवोपपदत्वमेव अन्यथाच्वित्करणवैयर्थ्यापत्तेः। अनव्ययस्येतीषदादीना तदयोगात्। नचेषदादीनामुपपदत्वे मानाभावः। चकारेण तद्भावात् तदुक्तं 'कर्तृकर्म ग्रहणं चोपपदार्थमिति'। यथासङ्ख्यं तु नास्तीति प्रागुक्तम्। 'च्व्यर्थयोरिति वक्तव्यम्'। तेनाभूत-तद्भावादन्यत्र नायम्। अनाढ्येन भवता ईषदाढ्येन शक्यं भवितुं ईषदाढ्यं भवम्। दुराढ्यम्भवम्। अनाढ्यो यमीषदाढ्यः शक्यः कर्तुम्। ईषदाढ्यंकरः। अकृच्छ्राढ्यः क्रियते भवते-त्यर्थः। दुराढ्यंकरः स्वाढ्यङ्करः। अत्र सुशब्दस्य गतित्वा द्धातोः प्राक् प्रयोगः। कर्तृकर्मणोस्तु च्वित्करणसामर्थ्यात् त्वनव्यवधानेति प्रागुक्तम्। ईषदित्यादि किम्(१)। ईषत्कृच्छ्रम्। सुखं वा कार्यम्। अल्पमित्यादिरर्थः। ईषदित्यादि किम्। मनागाढ्येन भूयते। च्व्यर्थयोः किम्। आढ्येन सुभूयते।

## आतो युच् ॥ १२८ ॥

आदन्ताद्धातोरुक्तविषये युच्। खलपवादः ईषत्पानः सोमो-भवता दुःपानः सुपानः।

## छन्दसि गत्यर्थेभ्यः ॥ १२९ ॥

खल्विषये युच् सूपसदनोऽग्निः। सुखेनोपसत्तुं शक्य इत्यर्थः।

## अन्येभ्योऽपि दृश्यते ॥ १३० ॥

---

(१) अत्र कृच्छ्राकृच्छ्रार्थेषु किमिति पाठ उचितः।

सुदोहनः । 'भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वक्तव्यः' । दुःशासनः । दुर्योधनः । दुर्दर्शनः । दुर्धर्षणः । दुर्मर्षणः ।

इति श्रीसिद्धान्तसुधानिधौ तृतीयाध्यायस्य
तृतीये पादे प्रथममाह्निकम् ।

—:o:—

# वर्तमानसामीप्ये वर्तमानवद्वा॥ १३१ ॥

सामीप्यमिति स्वार्थे ष्यञिति केचित्। भाव इत्यन्ये। न-ञातिदेश्यप्रत्ययार्थानामेव सामीप्यसम्बन्धो नतु वर्तमानस्येति समासानुपपत्तिः। परम्परयोपपत्तेरिति कैयटः। एतेन भावार्थे वर्तमानशब्देन समासो न स्यात्। नहि सामीप्यस्य वर्तमानेन सम्बन्धः। अपितु समीपेन तस्य तद्गुणत्वादिति न्यासकारो-क्तमपास्तम्। षष्ठीसमासनिषेधो रूपादीनामेवेत्येके अनित्य इ-त्यन्ये। गुणाक्षिप्तस्य गुणिन एव निषेधः। नच वर्तमानःसामी-प्यस्य गुणी किं तु भूतभविष्यन्तावित्यपरे। वत्करणं प्रकृत्या-दिव्यवस्थार्थम्। अन्यथा यस्माद्धातोर्वर्तमाने यस्य प्रत्ययस्य विधानं स विशेषानुपादानादस्मादातिदेशाद्धात्वन्तरादपि स्यात्। याभ्यः प्रकृतिभ्यो येनोपाधिना प्रकृत्युपपदाभिधेयरूपेण ये प्रत्यया विहितास्ताभ्य एव प्रकृतिभ्यस्तस्मिन्नेवोपाधौ ते वर्तमानस-मीपे भूते भविष्यति च भवन्तीत्यर्थविज्ञानात्। तेन पूङ्यजोर्वि-हितः शानन् वर्तमानसमीपेऽपि ताभ्यामेव नान्यस्मात्। तच्छी-लादौ कर्तरि अलंकृञित्यादिना इष्णुजुक्तः स तादृश एव क-र्त्रुपाधौ नान्यादृश इत्यादि। अन्यथा वर्तमानवदित्यतिदेशविरो-धात्। कालमात्रव्यभिचारस्यैतदर्थत्वात्। कदा आगतोऽस्ययमा-गच्छामि। आगमं वा। कदा गमिष्यसि एष गच्छामि गमिष्या-मि वा। प्रश्नवाक्ये भूतभविष्यत्कालनिर्देश उदाहरणवाक्ये तद-भिव्यक्त्यर्थः अयमित्यादिपदस्यागमनादेर्वर्तमानसामीप्यं द्योत्यम्। गमनागमनाविनाभूतप्रस्वेदपरिकरबन्धादिविशिष्टपरामर्षात्।

ननु लडेवात्रोदाह्रियते । तत्र वा लडित्येव सूत्रं युक्तमिति चेन्न । एषोऽस्मि पचन् एषोऽस्मि पचमान इत्याद्यर्थत्वात् । पूङ्यजोः शानन्, ताच्छील्य वयोवचनशक्तिषु चानश्, इङ्धार्योर्द्भ्यः शतृप्रत्ययश्च बोध्यः । लटः शतृशानचावित्यत्र वर्तमानविहितस्योपादानात् । अन्यथा लट्स्मे इत्यादिविहितस्यादेशस्य तदादेशप्रसङ्गात् । इदमारोपेणोपपत्त्या प्रत्याख्यातम् ।

# आशंसायां भूतवच्च ॥१३२॥

आशंसा अभिमतार्थवाञ्छा । सा स्वरूपतो वर्तमानापि विषयस्य भविष्यत्वात्ताद्दश्युच्यते । अतिदेशस्य विषयभूता च । आशंसायां विषये आशंस्यमानक्रियावचनाद्धातोर्भविष्यति काले भूतवद्वर्तमानवच्च प्रत्यया भवन्ति इत्यर्थः । देवश्चेदवर्षीद्वर्षति वा । धान्यमवाप्स्म वपामो वा । विकल्पोक्तेर्लृडपि । लुङ एवायमतिदेशो भूतसामान्यार्थत्वात् नतु लङ्लिटोः सामान्यातिदेश विशेषानतिदेश इतिन्यायात् ।

# क्षिप्रवचने लृट् ॥१३३॥

वचनग्रहणं स्वरूपमात्रनिरासार्थम् । पूर्वविषये लृट् । वृष्टिश्चेत्क्षिप्रमाशु वा यास्यति शीघ्रं वप्स्यामः । अनाशंसार्थ आरम्भः । निषेधमपहाय लृटो ग्रहणं लुटो विषयेऽपि लृडर्थम् । श्वः शीघ्रं वप्स्यामः ।

# आशंसावचने लिङ् ॥१३४॥

आशंसार्थे उपपदे भविष्यति लिङ् । भूतवच्चेत्यस्यायमपवादः गुरुश्चेदुपेयादाशंसेऽधीयीय । आशंसे क्षिप्रमधीयीय ।

# नानद्यतनवत्क्रियाप्रबन्ध-सामीप्ययोः॥१३५॥

क्रियायाः सातत्ये सामीप्ये च लङ्लुटौ न । अनद्यतने तयोर्विधानान्निषेधस्यापि प्रसक्तिसापेक्षस्य तद्विषयकत्वात् । यावज्जीवमन्नमदात् दास्यति वा । सामीप्यं सजातीयेनाव्यवधानम् । येयं पौर्णमास्यतिक्रान्ता तस्यामग्नीनादधीत सोमेनायष्ट । येयममावास्यागामिनी तस्यामग्नीनाधास्यते सोमेन यक्ष्यते । तिथ्यन्तरेण व्यवधानेऽपि पौर्णमास्यन्तरेणामावास्यान्तरेण चाव्यवधानान्न दोषः ।

स्यादेतत् । अनद्यतनवदित्याद्येव सूत्र्यताम् । निषेधापेक्षया लाघवात् । मैवम् । अपूर्वविधित्वापत्तौ लुङ्लृटोरन्योन्यविषये संकरप्रसङ्गात् । नच वत्करणसामर्थ्यम् । भूतभविष्यच्छब्दोपादानेन लुङ्लृटोर्विधानेऽपि अनद्यतने दृष्टत्वमस्तीति तन्मात्रेण स्वकालातिरिक्तकालेपि तत्प्रसङ्गस्य दुर्वारत्वात् । वतिसत्त्व दृष्टार्थे तथाप्युपपत्तेः । यथान्यासे तु वत्करणमनद्यतनविशेषविहितानामपि निषेधार्थम् । प्रयोजनान्तराभावात् । नानद्यतन इत्येव सिद्धेः । तेन परोक्षे लिट् हशश्वतोर्लङ्च लट्स्मे पुरि लुङ्चास्मे इत्येतत्सूत्रविहितानामयं प्रतिषेधः । अनद्यतनप्रत्ययप्रतिषेधे च मौलैरेव विधिवाक्यैरपवादविषयमपहाय यथास्वं प्रत्यया विधीयन्ते इति न कोऽपि दोषः ।

# भविष्यति मर्यादावचने

# ऽवरास्मिन् ॥१३६॥

अक्रियाप्रबन्धार्थोऽसामीप्यार्थश्चारम्भः । वचनसामर्थ्याच्च तयोर्निवृत्तिः भविष्यति काले मर्यादोक्तावर्वाग्भागेऽनद्यतनवन्न । योऽयमध्वा गन्तव्यः पाटलिपुत्रात्तस्य यदवरं कौशाम्ब्याः तत्र सक्तून् पास्यामः ।

# कालविभागे चानहोरा-त्राणाम् ॥१३७॥

पूर्वस्य सर्वानुवृत्तिः योगविभाग उत्तरार्थः । अनहोरात्राणामिति संबन्धसामान्ये षष्ठी । तेन यदाहोरात्राणामन्येन कालेन विभागः, अन्यस्य वाहोरात्रैः । अहोरात्राणां वाहोरात्रैः तत्र सर्वत्र प्रतिषेध इति भाष्यकैयटयोः स्पष्टम् । योऽयं संवत्सर आगामी तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे । अनहोरात्राणां किम् । योऽयं मास आगामी तस्य यदवरः पञ्चदशरात्रः तत्राध्येतास्महे । अत्र मासस्य पूर्वपञ्चदशरात्रेणावच्छेद एव विभागः ।

# परस्मिन् विभाषा ॥१३८॥

पूर्वसूत्रद्वयस्यानुवृत्ति नेत्यवरस्मिन्नित्यस्य । परस्मिन्निति विशेष्योपादानात् । अप्राप्तविभाषेयम् । योयं संवत्सर आगामी तस्य यत्परमाग्रहायण्यास्तत्राध्येष्यामहे । अध्येतास्महे वा । ननु देशविभागेऽप्ययं विधिः स्यादिति चेन्न । भविष्यति मर्यादावचनेऽवरस्मिन्ननहोरात्राणामित्येकयोगे कर्तव्ये पृथग्योगकरणेन

परस्मिन्निति सूत्रे कालविभागमात्रसम्बन्धस्य ज्ञापितत्वात् । तेन योऽयमध्वा गन्तव्य आपाटलिपुत्रात्तस्य यदवरं कौशाम्ब्यास्तत्र सक्तून् पास्याम इति लुट्

## लिङ्निमित्ते लृङ् क्रियातिपत्तौ ॥ १३९ ॥

लिङो निमित्तं हेतुहेतुमद्भावादि तत्र लृङ् क्रियाया अनिष्पत्तौ गम्यमानायाम् । अत्र लृङो भविष्यत्वं हेतुहेतुमद्भावोऽतिपत्तिश्चार्थः । यस्मिन् देशे कालेन यस्याः क्रियायाः संभवस्तदन्यत्र तत्क्रियायाः प्रसञ्जनं अतिपत्तिः । तत्र भविष्यत्व कृत्यर्थकाख्यातस्थले कृतौ आश्रयत्वार्थकस्थलेच धात्वर्थेऽन्वेति । हेतुहेतुमद्भावश्च क्रियायां, धात्वर्थः प्रसंजने प्रकारतया, प्रथमान्तार्थश्च विशेष्यतयान्वेति । यदि वर्षसहस्रमजीविष्यं तदा पुत्रशतमजनयिष्यम् । इत्यत्र यदिशब्दस्य क्रियान्वितप्रनिर्द्धारण कालविशेषश्चार्थः । द्वितीयाया व्यापकत्वनिरूढलक्षणयाऽत्यन्तसंयोगोऽर्थः । तथाच निर्धारितकालविशेषवृत्तिभविष्यद्धेतुसहस्रवर्षव्यापकजीवनप्रकारकसम्भावनाविशेष्योऽहं तत्कालीनभविष्यत्कार्यशतपुत्रकर्मकोत्पत्त्यनुकूलव्यापारप्रकारकसम्भावनाविशेष्य इति बोधः । इहवर्षसहस्रजीवित्वस्य स्वस्मिन् बाधदशायां प्रसक्तिरेव सम्भावना । तदसत्वे संशय एवेति केचित् ।

अन्ये तु तत्रयोग्यतानिश्चयसत्त्वेऽपि आहार्यं शाब्दम् । अनिर्धारितकालविशेषवृत्तिभविष्यद्धेतुभूतवर्षसहस्रजीवित्ववानहम् । तत्कालीनभविष्यत्कार्यभूतपुत्रशतोत्पत्त्यनुकूलव्यापारवान् इति बोधः । यद्वा एतादृशस्थले पदार्थोपस्थितिमात्रेजाते तद्भलाभा-

ऽत्यादिप्रातिसन्धाने मानस एव संशयात्मकबोधः । प्राचीनमते शब्दो नित्यो नवेत्यादिवत् । सूत्रस्य तु तादृशातिपत्तिस्थले लिङसाधुत्वे तात्पर्यमित्याहुः । अपरे त्वनागतकालीनवर्षसहस्र-जीवित्वाभावप्रयुक्तो मम पुत्रशतोत्पादकत्वाभाव इत्याहुः ।

ननु यदि मांसमलप्स्यत तदाऽभोक्ष्यत इत्यादौ साधनस्य मांसादेरतिपत्तावपि साधनान्तरेण भोजनक्रियानिष्पत्तेः कथं लृङिति चेदत्र भाष्यम् । करणभेदेन क्रियाभेदान्मांसातिपत्तौ मांसभोजनक्रियातिपत्तिरेवेति । एतत्स्वारस्याच्चेच्छब्दस्याभावोऽर्थः तत्र भविष्यत्कालसम्बन्धित्वं चेच्छब्दसमभिव्याहृतधात्वर्थश्च विशेषणम् । अभावश्च प्रयुक्तत्वसम्बन्धेन भविष्यत्कालसम्बन्ध्यभावे तस्य प्रतियोगितयाक्रियान्तरेऽन्वयः । धात्वन्तरोक्तेरलृङर्थभविष्यकालसम्बन्धित्वस्य भावे पुनरन्वयस्वीकारात् । तथाच भविष्यत्कालसम्बन्धी यो मांसकर्मकलाभाभावस्तत्प्रयुक्ताभावप्रतियोगिनी मांसभक्षणक्रियेति बोधः । एवमन्यत्राप्यूह्यम् ।

# भूते च ॥ १४० ॥

प्रथमसूत्रस्य सर्वानुवृत्तिः । उदाहरणानि । उताप्यो. समर्थयोरित्यारभ्य वक्ष्यन्ते ततः प्राग्विकल्पोक्तेः ।

# वोताप्योः ॥ १४१ ॥

ओताप्योरिति छेदः । तत्राप्या उताप्योरिति समासः । विभक्त्यन्तमेवानुकृत्याङा समासोऽव्ययत्वाद्विभक्तेर्लुक् । उताप्योः समर्थयोरित्यतः प्राक् भूते लिङ्निमित्ते लृङ्वेत्यधिकृतं बोध्यम् । आङ्चात्र मर्यादायाम् । गर्हायां लडपिजात्वोरित्यस्य लिङ्विधायकत्वेन लिङ्निमित्ताभावात् । विभाषाकथमीत्यभिव्याप्य

उत्ताप्योः समर्थयोरित्यतः प्राक् यत्र लिङो विधानं तत्रभूते लिङ्विकल्पो भविष्यति तु नित्यमिति फलितार्थः।

## गर्हायां लडपि जात्वोः ॥१४२॥

अप्योः योगे लट् कालत्रये गर्हायाम्। लुङादीनां परत्वाद्बाधकोऽयम्। अपि जा या त्यजसि गणिकामादत्से गर्हितमेतत्। गर्हितपदं तात्पर्यद्योतनार्थम्। गर्हादिविशिष्टे प्रकृत्यर्थे इति कैयटोक्तेः।

## विभाषा कथमि लिङ् च ॥१४३॥

गर्हायां कालत्रये लिङ् चाल्लट्। कथं धर्मंत्यजेः। त्यजसि वा। लिङ्विकल्पातपक्षे कालत्रये लकाराः कथं नामात्रभवान् धर्ममत्यक्ष्यत्।

## किं वृत्ते लङ्लटौ ॥ १४४ ॥

गर्हायां विभाषाया नानुवृत्तिः। कः कतरः कतमो वा हरिं निन्देत्। निन्दिष्यति वा। लृङ् प्राग्वत्।

## अनवक्लृप्त्यमर्षयोरकिं- वृत्तेऽपि ॥ १४५ ॥

गर्हायामिति निवृत्तम्। अनवक्लृप्तिरसम्भावना। अमर्षोऽक्षमा। इदं द्वयमनुवर्तते गर्हायाञ्चेति यावत्। नसम्भावयामि न मर्षये वा भवान् हरिं निन्देत्। निन्दिष्यति वा। कः कतर इत्यादि प्राग्वत्। अस्य लृटः कालत्रये विधानाद्भविष्यदर्थयोगे

यच्चयत्राभ्यामन्यस्मिन् उपपदे आश्चर्ये गम्ये लृट् । आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति । अयदौ किम् । आश्चर्यं यदि स भुञ्जीत अत्र यदि शब्दस्य संभावने प्रयोगात्तत्र तात्पर्य प्रतीत्या सम्भावनेऽलमिति चेदित्यनेनैव लिङिति भाष्यम् ।

## उताप्योः समर्थयोर्लिङ् ॥१५२॥

बाढमित्यर्थेऽनयोरर्थसाम्यं उत अपि वा हन्यादघं हरिः । समर्थयोः किम् । उत दण्डः पतिष्यति । अपिधास्यति द्वारम् । प्रश्न आच्छादनं चार्थः । इतः प्रभृति लिङ्निमित्ते क्रियातिपत्तौ भूतेऽपि नित्यो लृङ् ।

## कामप्रवेदनेऽकच्चिति ॥१५३॥

कच्चिच्छब्दादन्येन स्वेच्छायां प्रकाश्यमानायां लिङ् । कामो मे भुञ्जीत भवान् । भवत्कर्तृकभोजनं मदिच्छाविषय इत्यर्थः । अकच्चिति किम् । कच्चिज्जीवति । अत्रप्रश्नोऽपि कच्चित्पदस्यार्थः । तथाच मदिच्छाविषयो जीवनं जिज्ञासाविषय इत्यर्थः ।

## सम्भावनेऽलमितिचेत्सिद्धाप्रयोगे ॥ १५४ ॥

अलमर्थोऽत्र प्रौढिः । तत्प्रकारके सम्भावने गम्ये लृट् अलंशब्दः सिद्धाप्रयोगश्चेत् । विभक्तिव्यत्ययलभ्योऽयमर्थः । यत्प्रयोगव्यतिरेकेऽपि सोऽर्थो गम्यते स सिद्धाप्रयोगः । अपि गिरि शिरसा भिन्द्यात् । सिद्धेतिकिम् । अलं कृष्णो हस्तिनं हनिष्यति ।

# विभाषाधातौ सम्भावनवचनेऽयदि ॥ १५५ ॥

सम्भावनेऽर्थे धातावुपपदे लिङ्वा नतु यद्योगे । विकल्पार्थ आरम्भः । सम्भावयामि भुञ्जीत भवान् भोक्ष्यते वा । अयदीति किम् । सम्भावयामि यद्भुञ्जीथास्त्वम् ।

# हेतुहेतुमतोर्लिङ् ॥ १५६ ॥

विभाषा स्यात् कृष्णं नमेच्चेत् सुखं यायात् । कृष्णं नंस्यति चेत् सुखं यास्यति । भविष्यत्येवेष्यते । नेह । हन्तीति पलायते । इह लक्षण हेत्वोरिति शत्रादेशो नेत्येवेति सिद्धान्तः । तथाच वार्तिकम् ।

देवत्रातो गरो ग्राह इतियोगेच सद्विधिः ।

मिथो नैव विकल्प्यन्ते गवाक्षः शंसितव्रतः इति ।

एषु नत्वलत्वाभावौ णः सदादेशाभाव अवङ् इत्वंच नित्यमेव प्रवर्तन्ते व्यवस्थितविभाषाविज्ञानादिति भावः । ननु तिङन्तवाच्यक्रियायाः क्रियान्तरे साधनत्वेनान्वयस्य भाष्यासिद्धत्वात् । अत्रकथं तयोः परस्परान्वय इतिचेत् ।

अत्रकेचित् । आकाङ्क्षारूपान्वये भाष्यतात्पर्यम् । समभिव्याहारविशेषस्य नियामकत्वात् । अत्रच यच्छब्दादिसमभिव्याहारेण क्रियायाः क्रियान्तराकाङ्क्षोत्थापनम् । नतु कृष्णं नमेदित्यादौ अतो नदोष इत्याहुः ।

मिश्रास्तु यो ब्राह्मणायावगुरेत्तं शतेन यातयादित्यत्र हेतुहेतुमतोर्लिङित्यनुशासनाद्यो ब्राह्मणवधोद्यमभागभाववान् स त-

दुत्तरवर्तिशतयातनाशानिति बोध्यते । हेतुत्वे-पूर्ववर्तित्वे । हेतुमत्त्वे उत्तरवर्तित्वे लिङनुशासनात् । नियमश्च (यद्योगः प्राथम्य) मुत्पत्तिबललभ्य इत्याहुः ।

अन्येतु नियमांशेऽपि शक्तौ नदोषः । नियतपौर्वापर्यं बोध्यते इतिमूलस्वारस्यादित्याहुः । एवंचात्रापि नियतपूर्ववृत्तिर्या कृष्णनमनक्रिया सामानाधिकरण्येन तद्विशिष्टा उत्तरवृत्तिसुखप्राप्तिक्रियेति लिङर्थविशिष्टयोः क्रिययोः सामानाधिकरण्येनैवान्वयः । नतु साधनत्वेनेति नदोष इति कैयटस्वारस्यानुसारिणः ।

# इच्छार्थेषु लिङ्लोटौ ॥१५७॥

# प्रैषातिसर्गप्राप्तकालेषुकृत्याश्च ॥ १५८ ॥

प्राप्तविषये प्रेरणं प्रैषः । अतिसर्गः कामचारानुज्ञा । स्वाध्यायोऽध्येतव्य इत्यादौ त्वप्राप्तत्वाद्विधेयमात्रपरत्वम् । भवता यष्टव्यम् । भवान् यजताम । चकारः प्राप्तकाले लोटो बाधापत्त्या तदभावार्थः ।

# लिङ् चोर्ध्वमौहूर्तिके॥१५९॥

प्रैषादीनां गम्यत्वे कृत्या लिङ्चस्युः । ऊर्ध्वं मुहूर्ताद्यजेत यजताम् । त्वया यष्टव्यम् ।

# स्मे लोट् ॥ १६० ॥

स्मशब्दे उपपदे लोट् पूर्वविषये । ऊर्ध्वमुहूर्तीयजतां स्म । लिङः कृत्यानां चापवादः ।

# अधीष्टे च ॥ १६१ ॥

अत्र गम्ये स्मे उपपदे लोट् । त्वं स्माध्यापय ।

# कालसमयवेलासु तुमुन् ॥ १६२ ॥

कालो भोक्तुम् । समयो वेला वा ।

# लिङ् यदि ॥ १६३ ॥

यच्छब्दे कालादिषु चोपपदेषु लिङ् । कालो यद्भुञ्जीत भवान् । समयो वेला वा यच्छब्दः कालाद्यन्यतरश्चेत्युपपदद्वयमत्र बोध्यम् ।

# अर्हे कृत्यतृचश्च ॥ १६४ ॥

तद्योगे कर्तरि गम्ये लिङ् च कृत्यतृचः स्युः । त्वं कन्यां वहेः । वोढुमर्होऽसीत्यर्थः । क्रेयं क्रयणार्हमित्यर्थः । स्तुतिमर्हः स्तोता । लिङा बाधो माभूदिति कृत्यतृज्विधानम् ।

# आवश्यकाधमर्ण्ययो-र्णिनिः ॥ १६५ ॥

ग्रामं गमी । शतमृणं दायी । अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठी निषेधः ।

# कृत्याश्च ॥ १६६ ॥

उक्तयोरर्थयोः स्युः । योगविभाग उत्तरार्थः ।

# शकि लिङ् च ॥ १६७ ॥

शक्तौ लिङ् चात्कृत्याः । त्वंभारं वहेः । भारवहने शक्तोसीत्यर्थः । वोढुं शक्यो वोढव्यो वहनीयो वाह्यः । लिङा बाधा माभूदिति कृत्योक्तिः । नच वासरूपविधिना सिद्धिः । स्त्र्यधिकारादूर्ध्वं वासरूपविधिर्नास्तीत्यस्य ज्ञाप्यत्वात् । यद्यपि प्रैषेतिसूत्रे कृत्याश्चेत्यनेनापि तज्ज्ञापयितुं शक्यम् । तथाप्यत्र चकारमात्रेण ज्ञापयितुं शक्यम् । तत्र तु कृत्यग्रहणेन कृत्यतृज्ग्रहणेनचेति गौरवादस्यैव ज्ञापकत्वं युक्तमित्याहुः ।

परिभाषा प्रयोजनान्युच्यन्ते । छात्रस्य हसितम् हसनं वेति कृत्यल्युटो विषये नपुंसके भावे घञ्न । इच्छति भोक्तुमित्यत्राशीषि लोट्न । लिङ्तु लिङ्चेतिविशिष्यदर्शनात् । ईषत्पानइत्यातो युचो विषये खलूनेति संक्षेपः । कामप्रवेदने इति वक्तव्यम् । नेह इच्छन् करोति कामप्रवेदनं स्ववृत्तीच्छाया ज्ञापनम् । इहतु कृतिहेतुरिच्छान्यवृत्तिः । तथाच लिङुच्चारयितुरिच्छायां इच्छापदस्य तात्पर्ये लिङित्यर्थः । नन्वेवं कामप्रवेदने अकच्चितीति सूत्रवैयर्थ्यम् । यत्रार्थप्रकरणादिनापि कामप्रवेदनं गम्यते तदर्थत्वात् । नचैवमप्यस्य वैयर्थ्यम् लोडर्थत्वात् । विशेषविहितेन तेन लिङो बाधो माभूदिति लिङप्युक्तः । नच लोट्चेत्येव निर्वाहः । चकारेण लिङोऽनुकर्षे तत्संबद्धाविभाषाग्रहणस्यापि तदापत्तेः ।

मीमांसकास्तु उक्तरीत्या तत्सूत्रसार्थक्यं निर्युक्तिकम् । अतः

ऽनेन सूत्रेण इच्छायामर्थे लिङ् विधीयते नतु इच्छार्थधातुयोगे । तेन यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् इत्यादौ ग्रहीतुमिच्छेदित्यर्थ इत्याहुः ।

## (१) लिङ् च ॥ १६८ ॥

समानकर्तृकेषु इच्छार्थेषु उपपदेषु लिङ् । भुञ्जीयेतीच्छति । समानकर्तृकेषु तुमुन्वक्ष्यते । स यथा पूर्वसूत्रेण प्राप्तं लोटं बाधते एवं लिङमपि बाधेतेति लिङर्थ आरम्भः । नचेह वासरूपन्यायः । क्तल्युट्तुमुन्खलर्थेषु तन्निषेधात् ।

## इच्छार्थेभ्यो विभाषा वर्तमाने १६९

पक्षे लट् । इच्छेत् । इच्छति । कामयेत कामयते । एतेन पाणिपीडनमहं दमयन्त्याः कामये महिमहीमिहिकांशो इति नैषधं व्याख्यातम् ।

## विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ् ॥ १६९ ॥

विधौ स्वर्गकामो यजेत । निमन्त्रणे इह भुञ्जीत भवान् । आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनं तत् । तदतिक्रमणे च निमन्त्रणीयस्य प्रत्यवायः । आमन्त्रणं कामचारानुज्ञा । यदकरणेऽपि न प्रत्यवायः । निवारणाभावव्यंजकेच्छेति यावत् । इहासीत भवान् । स्वानभिमतत्वनिरासमात्रे तात्पर्यम् । श्रोतरि पू-

---

(१) लिङ् चेत्यारभ्य त्रीणिसूत्राणि ग्रन्थकृता तृतीय पादान्ते व्याख्यातानीति तथैवावस्थापितानि ।

ज्ञासन्धानव्यञ्जकेच्छाधीष्टम् । पुत्रमध्यापयेद्भवान् । एषु त्रिषि
रूपतासत्त्वेऽपि प्रपञ्चार्थं पृथगुपादानमिति कैयटादयः । तथा
च हरदत्तः ।

न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा ।
विध्यादीनामुपादानं चतुर्णामादितः कृतम् ॥
अस्तिप्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपि ॥
तत्रैव लिङ् विधातव्यः किंभेदस्य विवक्षया ।

अभिधानप्रयोजिका जिज्ञासा प्रश्नः । किंभो वेदमधीयीय । उत्त तर्कम् । लाभेच्छा प्रार्थना । भोजनं लभेय । अत्र विध्यादयोऽर्थाः द्योत्या इत्येकः पक्षः । अन्यथा नामाप्तेषु कर्त्रादिषु विध्यादयो निर्दिश्यमानास्तेषां बाधापत्तेः । ततश्च कर्तुरनभिधानप्रसङ्गाद्द्विवचनबहुवचनानुपपत्तेश्च । तदर्थस्य द्वित्वाद्‌ कर्तृकर्मान्यतरमात्रान्वयित्वात् । शबादीनामनुपपत्तेश्च ।

सिद्धान्तस्तु वाच्या एवैते विध्यादिभिर्विरोधाभावात् । लः कर्मणिचेत्यत्र सर्वसंग्रहार्थात् बहुवचननिर्देशादुभयानुग्रहाच्च कर्त्रादयो न बाध्यन्ते इति कर्तृकर्मगतद्विबहुत्वनिबन्धनानां द्विवचनबहुवचनाना मुपपत्तेः । लडादावपि वर्तमानत्वादेरर्थविशेषस्य सर्वत्र सत्त्वेन तस्य कर्त्राद्यर्थबाधकत्वापत्त्या कर्त्रादीनामपि निरवकाशत्वाच्चेत्याकरसिद्धः पन्थाः ।

इति तृतीयस्य द्वितीयमाह्निकम् ।

इति तृतीयः पादः ।

—:०:—

अथ चतुर्थः पादः ॥

# धातुसम्बन्धे प्रत्ययाः ॥ १ ॥

इहवृत्तावेकत्वस्यौत्सर्गिकत्वेऽपि सामर्थ्याद्द्वित्वावगतिः । सम्बन्धस्य सम्बन्धिभेदानियतत्वात् । धातोः सम्बन्धो धातुसम्बन्धः । धातुपदं च तदर्थपरम् । तत्र विशेष्यविशेषणभावलक्षणसम्बन्धोपपत्तेः । धातोः स्वार्थोपस्थापकतयैवोपयोगेन वाक्यार्थानन्वयात् । शब्दोपहितार्थभानपक्षेऽपि स्वार्थ एव विशेषणत्वात् । परस्परं विशेषणत्वानुपपत्तेः । नच सन्विधौ कर्मत्वसमानकर्तृकत्वयोर्यथार्थद्वारकं विशेषणत्वं तथेहापि धातोरर्थद्वारकसम्बन्धोऽस्त्विति वाच्यम् । परस्परान्वितार्थबोधकानेकधातुप्रयोगे प्रत्यया इत्यर्थापत्त्या गोमानासीदित्यादेरसिद्धेः । अत्र वर्तमानकालेऽस्तेरप्रयोगात् । अप्रयुज्यमानस्य च सम्बन्धानुपपत्तेः । तथाच धात्वर्थयोः सम्बन्धे कालान्तरविहितानां प्रत्ययानां कालान्तरेऽपि साधुत्वाभ्यनुज्ञानार्थं सूत्रम् । धात्वर्थसम्बन्धे यत्र काले प्रत्यया उक्तास्ते तद्भिन्नकालेऽपि स्युरिति वाक्यार्थः । प्रकृतिप्रत्ययोपपदानि तान्येव कालमात्रे तु वैषम्यमतो न सांकर्यम् । नच विनिगमकाभावः । वर्तमानसामीप्ये इत्यादौ कालविपर्ययस्यैव प्रतिपाद्यत्वात् । वसन् ददर्श भूते लट् । अग्निष्टोमयाज्यस्य पुत्रो भविता । भविष्यति णिनिः । सोमेन यक्ष्यमाणो यः पुत्रस्तत्कर्तृका वर्तमानप्रागभावप्रतियोगिन्युत्पत्तिरित्यर्थः । प्रत्ययग्रहणेऽनुवर्तमानेऽपि प्रत्ययग्रहणं प्रकृत्यन्तरविहितानामपि प्रत्ययानां परिग्रहार्थम् । तेन गोमानासीदित्यादौ वर्तमानसत्ताविशिष्टप्रकृत्यर्थयुक्तार्थवृत्तिमतुप्प्रत्ययप्रकृत्यर्थस्य भूतभविष्यत्वेऽपि साधुत्वम् ।

ननुविशेषण विशेष्यभूतयोः क्रिययोः विरुद्धकालावरुद्ध त्वादनन्वयापत्तौ तदुद्धारार्थमयमारम्भः । सचान्यतरत्र कालवैपरीत्येनोपपाद्यः । ननुतिङन्तकालवैपरीत्येनापि सम्भवतीति सुबन्तार्थकालबाध एव किं नियामकमितिचेत् ।

अत्राहुः । तिङन्तवाच्यक्रियाया विशेष्यत्वात्तद्बाधापेक्षया गुणभूतक्रियावाचिप्रकृतिप्रत्ययार्थस्यैव कालस्य बाधः गुणानुरोधेन प्रधानानुरोधस्यायुक्तत्वात् । गुणे त्वन्याय्यकल्पनेति न्यायात् । स्यादेतत् । प्रथमान्तार्थमुख्यविशेष्यकबोधवादिनां नैयायिकानां कथमियं व्यवस्था क्रियाद्वयस्यापि विशेषणत्वादिति चेत् मैवम् । शाब्दे तस्य प्राधान्येऽपि अग्निष्टोमयाजित्वविशिष्टपुत्रोत्पत्तेर्विधेयतया तदुपपत्तेः । नचविशिष्टविधित्वाद्विशेषणस्यापि विधेयत्वमितिवाच्यम् । विशिष्टविध्यन्यथानुपपत्त्या विशेषणविधेः कल्पनादुपजीव्यत्वेन भवितेत्यस्यैव प्राधान्यात् ।

ननु शाब्दान्वये शब्दस्यैव प्राधान्यस्य नियामकत्वं तथाचाप्रथमान्तार्थयोरन्वयस्यान्तरङ्गतया ज्योतिष्टोमयाजित्वविशिष्टे पुत्रे भवितेत्यस्यान्वयोऽत्रच प्रथमोपस्थितकालबाधापेक्षया भवितेत्यस्य कालबाध एव स्यादितिचेन्न । ज्योतिष्टोमानुकूलकृतिविशिष्टे पुत्रे वर्तमानप्रागभावप्रतियोग्युत्पत्तिवैशिष्ट्यबोधस्य बाधिततया ह्यत्र कालावरोधः । भवतिच अतीतोत्पत्तिकोऽस्यपुत्रोऽतीतोक्तकृतिमानिति बोधो बाधितः । ज्योतिष्टोमानुकूल भविष्यत्कृतिमानस्य पुत्रो भविष्यन् इति त्वबाधित इत्यस्यैव विनिगमकत्वादिति दिक् ।

भाष्यकारास्तु विशेष्यभूतक्रियायाः स्वकाल एवावसानं विशेषणभूतायास्तूपलक्षण मात्रेणोपादानात् । भाविभूतव्यपदेशः । तथाच पदसंस्कारवेलायां भूत एव णिनिना व्युत्पन्ने भा-

जिशब्दो भवितेत्येतत्समभिव्याहारदशायां कालान्तरार्थः संपद्यते इति कालान्तरप्रतीतिर्बहिरङ्गा । साचान्तरङ्गपदसंस्कारे बाधितुमक्षमैवेति सूत्रमेतदनारम्भ्यम् । अवश्यंच स्वकालएव प्रत्ययविधिरेष्टव्यः । भाविकृत्यमासीदित्यत्र भाविशब्दस्य भूतकालत्वे भाव्यासीच्छब्दयोः पर्यायत्वाद्युगपत् प्रयोगानापत्तेरित्याहुः ।

# क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः ॥२॥

क्रियासमभिहारः पौनः पुन्यं भृशार्थश्च । तच्च प्रकृत्यर्थविशेषणं नतूपपदं केवलानां तदनापत्तेः । इह द्वौ पक्षौ संभाव्येते । हिस्वौ तिङादेशौ वा लकारादेशौ वा । नचलोट इति स्थानिनिर्देशस्य प्रत्यक्षत्वादाद्यपक्षशङ्कानुपपत्तिः । स्वादेशस्थानिकत्वेनापि तदुपपत्तेः । तत्राद्ये इत्थमुपपत्तिः । सामान्यविहितानां तिङां शतृशानचाविव हिस्वावपि बाधकौ स्याता मतस्तिङादेशाः स्थानित्वेनात्र निर्देश्याः ।

तदुक्तम् । 'हिस्वयोः परस्मैपदात्मनेपदग्रहणं लादेशप्रतिषेधार्थ'मिति । लादेशत्वे तु पदसज्ञा न स्यात् । तिङन्तत्वाभावात् । यदि तु लस्य कृत्संज्ञतया स्थानिवत्त्वेन हिस्वयोरपि कृत्त्वात्तदन्तत्वेन प्रातिपदिकसज्ञाया सुबुत्पत्त्या सुबन्तत्वादेव पदसंज्ञा । नच तच्छ्रवणापत्तिः । विभक्तिसंज्ञकहिस्वसदृशत्वादनयोर्हिस्वयोरव्ययत्वेन सुपो लुगुपपत्तेरिति कल्प्यते । तथापि स भवान् लुनीहि लुनीहीत्येवं प्रलुनाति इत्यत्र तिङ्ङतिङ इतिनिघातो नस्यात् । परस्मैपदिभ्य एव हिरात्मनेपदिभ्य एव स्व इति नियमश्च नस्यात् । लादेशत्वे लःपरस्मैपदमितिद्वयोरपि परस्मैपद संज्ञतया

परस्मैपदिभ्य एव तयोरापत्तेः। अत एव वा च तध्वमोरिति वाक्यशेषः संगच्छते। लकारस्यैव हिस्वादेशविधाने हि लोट्स्थानिकयोस्तध्वमोरप्रसिध्या तयोः स्थानित्वेन निर्देशोऽनुपपन्नः स्यात्। इतिप्राप्ते—

सिद्धान्तः। लादेशावेव हिस्वाविति। पूर्वपक्षे तिप्सिप्मिपां आदेशस्य हेः स्थानिवत्त्वेन पित्त्वे ङित्वाभावात्। लुनीहि लुनीहि इति इत्वं नस्यात्। ब्रूहिब्रूहीत्यत्रेट् च स्यात्। भुंक्ष्वभुक्ष्वेत्येवहि भुनजैइत्यत्र आडुत्तमस्य पिच्चेति परत्वादाडागमे ङित्वाभावे श्नसोरल्लोप इति अकारलोपो न स्यात्। द्विशोयलुनीहिशब्दे तस्यपरमाम्रेडितमनुदात्तंचेत्यनुदात्तस्येष्टत्वेऽपि प्रथमस्य हेः पित्वादनुदात्तत्वं चस्यात्। तृण्ढीत्यत्र तृणहइमच स्यात्। सामान्येन तिङःस्थाने विहितयोः स्थानिविशेषनियमाभावेनद्वयोरपि पदद्वयादेशत्वं च स्यात्। नच सिद्धान्तेऽप्ययं दोषः। लोडादेशौ यौ हिस्वौ तत्सदृशयोर्हिस्वयोरनेन विधानात्। तेन परस्मैपदिभ्यः कर्तरि हिः। आत्मनेपदिभ्यो भावकर्मकर्तृषु स्व इतिव्यवस्था। तिङां निघातस्याप्युपपत्तेः। पुरुषवचनसंज्ञे तु न भवतः। हिस्वयोरत्र विधानवैयर्थ्यापत्तेः। वचनान्तरेण तयोः सिद्धत्वात्। नच तध्वमोरिति वाक्यशेषविरोधः। विषयसप्तम्यातदुपपत्तेः। यादृशि विषये तध्वमौ संभावितौ तादृशस्य लोटो लक्षणया तध्वंशब्दाभ्यामुक्तत्वात्। लोट्शब्दस्योपक्रमस्थत्वेनासंजातविरोधितया तदपेक्षया वाक्यशेषे लक्षणाया युक्तत्वात्।

तदयमर्थः—उक्तार्थे गम्ये धातोर्लोट्। तस्यच पुरुषवचनमात्रे हिस्वौ स्तः। प्रकृत्यर्थयोर्व्यवस्थातूक्तैव। उदाहरणान्युच्यन्ते। लुनीहि लुनीहीत्येवायं लुनाति। लुनीहि। लुनामि वा। एवं वचनान्तरे लकारान्तरे चोदाहार्यम्। क्रियासमभिहारे इति

द्वित्वम् । नच धातुनैव तस्योक्तत्वाद्द्विवचनानुपपत्तिरन्यथा यङ-न्तेऽपि स्यादितिवाच्यम् । लकारस्यात्र कर्त्रादिष्वेव विधानात् । द्विर्वचनसहितस्यैव तद्बोधकत्वात् । यङन्तस्थले तुशुद्धक्रियासम-भिहारस्य यङैव द्योतितत्वान्नेति वैषम्यम् । यङन्तक्रियासमभिहा-रविवक्षाया तु भवत्येव तत्रापि द्विर्वचनमिति प्रागुक्तम् ।

# समुच्चयेऽन्यतरस्याम् ॥३॥

अनेकक्रियासमुच्चये द्योत्ये प्रागुक्तं वास्यात् ।

# यथाविध्यनुप्रयोगः पूर्वस्मिन् ॥४॥

क्रियासमभिहारे इतिसूत्रेण यत्र लोट् तत्र तत्प्रकृतिरेव धा-तुरनुप्रयोज्यः । उदाहृतं च तथैव । अत्रभाष्यम् । हिस्वान्तेन संख्याकालपुरुषाणामनभिव्यक्तत्व।त्तदभिव्यक्त्यर्थमनुप्रयोगाव-श्यकत्वे तद्धातोरनुप्रयोगसिद्धिः । नच तदर्थकधात्वन्तरस्याप्या-पत्तिः । उत्तरसूत्रे समुच्चय एव धात्वन्तरस्यानुप्रयोग इतिनिय-मात् । क्रियासमभिहारे यथाविध्यनुप्रयोगसिद्धेः । नच समु-च्चये सामान्यवचनस्यैवेति विपरीतनियमात्क्रियासमभिहारे धात्व-न्तरस्यानुप्रयोगापत्तिः । लाघवादुपस्थितत्वाल्लोट्प्रकृतेरेवानुप्र-योगात् । विपर्यासव्यवहितप्रयोगानिवृत्तेश्चात्रान भिमतत्वात् ।

# समुच्चये सामान्यवचनस्य॥५॥

समुच्चयेऽन्यतरस्यामिति सूत्रेण यत्रलोट् तत्र सामान्यार्थस्य धातो रनुप्रयोगः । सक्तून् पिब धानाः खादेत्यभ्यवहरति ।

अन्नं भुङ्क्ष्व दाधिकमास्वादस्वेत्यभ्यवहरति । तद्ध्वमोस्तु पिबत खादतेत्यभ्यवहरथ । भुङ्ध्व मास्वादध्वमित्यभ्यवहरध्वे पक्षे हिस्वौ अत्र समुच्चीयमानविशेषाणामनुप्रयोगार्थसामान्येनाभेदान्वयः । तथाच सक्तुपानधानाखादनोभयाभिन्नाभ्यवहरणक्रियेत्यर्थः । एतेन पुरीमवस्कन्द लुनीहि नंदनं मुषाण रत्नानि हरामराङ्गनाः । विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्दिवं दिवः । इति व्याख्यातम् । पुर्यवस्कन्दनाद्यभिन्ना अतीताअस्वास्थ्यक्रियेत्यर्थात् । अनद्यतनपरोक्षयोर्लिडर्थयोः स्वरूपत एव प्रयोगनियामकत्वेन शाब्दे विषयत्वानङ्गीकारात् । समानकर्तृकत्वस्याप्यत्र मानाभावात् । सामान्यविशेषयोर्भेदाभावेन व्यभिचारानवकाशात् ।

इदमप्यत्रावधेयम् । समुच्चय इति द्वितीयेलोड्विधाने क्रियासमभिहार इत्यस्याप्यनुवृत्तिः । अतएव जायस्व म्रियस्वचेति संधावतीति न्यायवार्तिके वाक्ये पुनर्जायते पुनर्म्रियते जनित्वाम्रियते मृत्वाजायतेतदिदं संधावनं व्यापारप्रचय इतिवाचस्पतिमिश्रैर्विवृतत्वात् नच लोडन्तद्वित्वापत्तिः । विजातीयक्रिययोरिव सजातीयक्रियाणामप्यावृत्तेः समुच्चयस्य लोटैव प्रतिपादितत्वात् । नच नियमार्थत्वप्रदर्शकभाष्यविरोधः । क्रियासमभिहारमात्रे लोडन्तप्रकृतेः । समुच्चयविशिष्टक्रियासमभिहारे सामान्यार्थस्येति तदभिप्रायादिति दिक् ।

# छन्दसि लुङ्लङ्लिटः ॥६॥

धात्वर्थसबन्धे कालसामान्ये । देवे देवेभिरागमत् । लोडर्थे लुङ् । अहं तेभ्यो करं नमः लडर्थेलङ् । अग्निमद्य होतारमवृणीतायं यजमानः । लडर्थे लङ् । अद्यममार । तत्रैवलिट् ।

## लिङर्थे लेट् ॥७॥

विध्यादौ हेतुहेतुमद्भावादौ च समिधो यजाति ।

## उपसंवादाशंकयोश्च ॥८॥

उपसंवादः पणबन्धः । यदि मे भवानिदं कुर्यात्तदहमिदं कुर्यामिति । अहमेव पशूनामीशै । पुरत्रयार्थं देवैः प्रार्थितस्य रुद्रस्य वाक्यम् । मद्ग्रा एव वो ग्रहा गृह्यान्तै । मद्देवसान्येव वः पात्राण्युच्यान्तै ब्रह्महत्या भागं गृहाणेतीन्द्रेणोक्तस्यादित्यस्येयमुक्तिः । कारणतः कार्यानुमानमाशङ्का । नेज्जिह्मायन्तो नरकं पताम । जिह्माचरणेन नरकपातः संभाव्यते समाभूदित्यर्थः । इच्छद्व आशङ्कार्थः । नचोभयत्र हेतुहेतुमद्भावेन सिद्धिः । उपसंवादे अवध्यवधिमद्भावस्यैव प्रतीतेः । आशंकायामपि हेतुहेतुमद्भावनिश्चयाभावात् ।

## तुमर्थे सेसेनसेअसेन्कसेकसेन् अध्यैअध्यैन्कध्यैकध्यैन् शध्यैशध्यैन्तवैतवेङ् तवेनः ॥ ९ ॥

तुमर्थो भावः । कर्तुस्तथात्वे कर्तरि कृादिन्यनेनैव सिद्धे तुमर्थग्रहणवैयर्थ्यात् । क्रिययाकारकाणामाक्षेपात्कर्मादिष्वेव तुमुन्प्रसङ्गात् । वक्षे रायः वचःसे । तावामेषे । इणः सेन् । सर्वत्र

नित्सु स्वरभेदः । शरदो जीवमेधाः । जीवतेरसे । असेनः स्वरभेदः । प्रेषे । इणः से । गवामिव श्रियसे । श्रयतेः कसेन् । उपाचरध्यै । अध्यै अध्यैनोस्तुल्यम् । स्वरेभेदः । आहुवध्यै । कध्यै कध्यैनोस्तुल्यम् । नाधमः सह मादमध्यै । मादयतेः शध्यै । वायवे पिबध्यै । पिबतेः शध्यैन् शित्वात्सर्वधातुकत्वे भावार्थत्वेन यकूप्रसङ्गेऽपि व्यत्ययेन शप् । यकालुक् छान्दस इति हरदत्तः एवंमादयध्यै इत्यत्र यकोलुक् शप् चेति केचित् । शध्यै शध्यैन् । पिबध्यै मादयध्यै इतिवृत्तिः । पातवैपिबतेस्तवै । दशमे मासि सूतवे । अत्राद्युदात्तं व्यत्ययेन बोध्यम् । तवेङो ङित्वान्न गुणः ।

# प्रयै रोहिष्यै अव्यथिष्यै ॥१०॥

प्रपूर्वाद्यातेः कैप्रत्यय आतोलोप इटिचेत्यालोपः । रुहेरिष्यै नञ्पूर्वाद्व्यथेश्च । प्रयातुं रोढु अव्यथितुमित्यर्थः ।

# दृशे विख्येच ॥११॥

दृशेः के । दृशे विश्वाय सूर्यम् । ख्यातेरातोलोपः । चक्षिङः ख्याते र्वा के प्रत्यय इतिन्यासकारः । विख्ये त्वाहरामि । द्रष्टुं विख्यातुमित्यर्थः । योगविभागे फलंचिन्त्यमिति दीक्षिताः ।

# शकिणमुल्कमुलौ ॥ १२ ॥

शक्नोतावुपपदे एतौस्तः । विभाजं नाशकत् । अपलुपं नाशकत् । विभक्तुमपलोप्तुमित्यर्थः ।

# ईश्वरे तोसुन्कसुनौ ॥ १३ ॥

ईश्वरो विरचितोः । ईश्वरो विलिखः । विरचितुं विलेखितुमित्यर्थः । कत्वातोसुन्कसुन इत्यव्ययत्वात्सुपो लुक् । तेन प्रत्ययलक्षणनिषेधादत्वसन्तस्येति न दीर्घः ।

# कृत्यार्थे तवैकेनकेन्यत्वनः ॥ १४ ॥

भावकर्मणोरेते स्युः । तयोरेवेति तत्रैव तेषां विशिष्य विधानात् । तेन भव्यादौ कर्तरि स्नानीयमित्यादौ करणे कृत्यस्वीकारेऽपि नक्षतिः । ब्राह्मणेन न म्लेच्छातवै । अवगाहे । दिदृक्षेण्यः । दृशेः सन्नन्तात्केन्यः । एवं शुश्रुषेण्यः । भूयं स्पष्टकर्त्वम् । करोतेस्त्वन् । कृत्यमित्यर्थः । कृञो णिजन्तात्त्वप्रत्यय इति केचित् । तत्र विसर्गो दुर्वार इत्यन्ये ।

# अवचक्षे च ॥ १५ ॥

रिपुणानावचक्षे । नावख्यातव्यमित्यर्थः । चक्षिङ् एश् । शित्वात्सार्वधातुकत्वम् । अतो न ख्याञादेशः ।

# भावलक्षणेस्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् ॥ १६ ॥

आसंस्थातोः सीदन्ति । आसमाप्तेः सीदन्तीत्यर्थः । समाप्त्यादीनामवधित्वेन क्रियालक्षणत्वम् । पुरा सूर्यस्योदेतोराधेयः । पुरावत्सानापाकर्तोः । रामतेः पुराप्रवदितोर्जुहोति । पुरा प्रचरितोः । आहोतोः संतिष्ठते । आतमितोस्तिष्ठति । काममाविजनितोः संभवाम । जननपर्यन्त पुरुषसंगम प्राप्नुयामेति स्त्रीणां वरप्रार्थनम् ।

## सृपितृदोः कसुन् ॥१७॥

भावलक्षणे । पुराक्रूरस्य विसृपो विरप्शिन् । पुराजत्रुभ्य आतृदः । अत्र विसर्पितुमातर्दितुमित्यर्थ इति केचित् । सृपेर-नित्वात् । भावलक्षण इत्यनुवृत्तेश्च । आतृदः रुधिरनिःसरणा-त्पूर्वमेवेति वेदभाष्यविरोधाच्चेति दीक्षिताः ।

## अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ॥ १८ ॥

प्रतिषेधार्थयोरनयोरुपपदत्वम् । प्राचामिति पूजार्थम् । अलं-रोदनेनेत्यादेर्वासरूपविधिनैव सिद्धेः । ल्युटोऽपवादत्वे एव तन्नि-षेधात् । इहतु तस्यापवादत्वात् । स्त्र्यधिकारादूर्ध्वं वासरूपविधेः प्रायिकत्वेऽप्यत्र तदभ्युपगमे बाधकाभावात् । तदभावाभिप्रायेण तु प्राचामिति विकल्पार्थमिति वृत्तिः । अल विलड्घ्य गिय विज्ञपाज्ञाम् । 'खल्वक्त्वा खलु वाचिकम् ।' अमैवाऽव्ययेनेति नि-यमान्नोपपदसमासः । अनयोः किम् । माकार्षीत् । प्रतिषेधयोः किम । अलङ्कारः ।

## उदीचां माङो व्यतीहारे ॥१९॥

मेङ्प्रणिदाने । अपमित्य याचते अपमाय वा । समानकर्तृकत्वे-ऽप्यपूर्वकालार्थ आरम्भः । ननु पूर्वकालत्वाद्याचतेरपि स्यादिति चेन्नैवम् । युगपदापाद्यते । पर्यायेण वा । नाद्यः । तत्रोदीचामिति व्यवस्थितविकल्पात् । नान्त्यः । याचित्वापमयने इत्यस्येष्टत्वात् । नचायं माङ्माने इत्यस्यैव निर्देशः । तस्य व्यतिहारार्थाभावात् ।

नच एजन्तत्वाभावादात्वानुपपत्तिः । नानुबन्धकृतमनेजन्तत्व- मिति ज्ञाप्यत्वात् फलतु धुमज्ञासूत्रे व्यक्तम् ।

# परावरयोगे च ॥ २० ॥

सम्बन्धिशब्दत्वात्परेण पूर्वस्यावरेण परस्य योगः । अ- प्राप्य नदीं पर्वतः। दक्षिणदेशात् । गङ्गापेक्षया संनिहितइत्यर्थः। अतिक्रम्यपर्वतं नदी। तस्मादेव विन्ध्यापेक्षया दूरेत्यर्थः । दैशिक- योःपरत्वापरत्वयो रिहोपादानम् । तयोश्चावध्याश्रयोभयापेक्षया तृतीयदेशापेक्ष्यत्वम् । अन्यथा दक्षिणदेशादपि नद्यन्तरापेक्षया विन्ध्यस्य दूरत्वात् । नद्या अपि हिमवदपेक्षया सन्निहितत्वाच्च अत्रविन्ध्यसंनिकर्षगङ्गाविप्रकर्षयोरुभयत्रसाम्येऽपि आद्येगङ्गापेक्ष संनिधानं विन्ध्ये प्रकारो द्वितीये विन्ध्यापेक्षदूरत्वं गङ्गायामिति बोधे विशेषः ।

# समानकर्तृकयोः पूर्वकाले॥२१॥

धात्वधिकारात्तदर्थयोः समानकर्तृकत्वम् । नचभोजनव्रजन- क्रिययोर्भिन्नैव शक्तिः साधनमिति तदैक्यानुपपत्तिः शक्तितद्वतो- रभेदस्य विवक्षितत्वात् । भोजनव्रजनक्रियासाधनयोर्द्वयोः कर्तृ- शक्त्योरेकस्मिन् देवदत्तादौ सत्त्वेन तदैक्यनिर्वाहात् । निर्धारणे षष्ठी सप्तमीवा । एककर्तृकक्रिययोर्मध्ये पूर्वः कालो यस्य धात्वर्थस्य तस्मिन् क्त्वा स्यात् । भुक्त्वा व्रजति । तत्कर्तृक- व्रजनक्रियापेक्षया पूर्वकालतायां क्त्वा । भोक्त्रन्तरकर्तृकभुजि- क्रियापेक्षायां तु विभाषेत्यादिना वक्ष्यमाणौ क्त्वाणमुलाविति निष्कर्षः । आसित्वा भोक्तुमिति तुमुन्न भवत्यनभिधानात् । किन्तु लडादय एव । आसित्वा भुङ्क्ते इति । द्वित्वं चात्रं

स्नात्वा पीत्वाभुक्त्वा व्रजति । स्नात्वा भुक्त्वा पीत्वेत्यादि । नचामीषां पूर्वमानयेत्यादौ सर्वापेक्षयापूर्वस्यानयनवत् तस्मादेव क्त्वा स्यादिति वाच्यम् । तिङन्तक्रियायाः प्राधान्येन सर्वासां तत्रैवान्वयेन परस्परंविशेष्यविशेषणभावविरहात् । गुणानाव परार्थत्वादसंबन्धः समत्वात्स्यादिति न्यायात् ।

व्यादाय स्वपितीत्युपसंख्यानम् । अपूर्वकालत्वात् । उत्तर-काले क्त्वाप्रत्ययार्थमारम्भः । व्यादानानन्तरभाविस्वप्नक्रिया-पेक्षया व्यादानस्य पूर्वकालत्वादेवासिद्धमिति भाष्यम् । अव्य यकृतो भावे इति वार्तिकात्साध्यात्वस्थापन्ने भावेऽयम् । समान-कर्तृकयोरिति सामानाधिकरण्यस्य संसर्गतालाभः । पूर्वकाल-इति बहुव्रीहिः । निर्धारणस्य सजातीयविषयतया तादृशपदस्य-क्रियात्वलाभात् । तेनपूर्वकालस्य द्योत्यत्वं तथाच सामानाधि-करण्योत्तरकालोभयसंबन्धेन क्त्वाप्रत्ययार्थक्रिया तिङन्तार्थक्रिया-यां विशेषणम् । धातुसंबन्ध इत्यधिकारात् ।

एतेनपूर्वकालसमानकर्तृकत्वयोर्वाच्यत्वमपास्तम् । प्रत्ययार्थ-तया तयोर्विशेष्यत्वापत्तेश्च । तथाच क्रियाप्राधान्याभावे आ-भीक्ष्ण्ये द्विरवं न स्यात् । गुणीभूतक्रियया तदुक्तौ पाचक इत्या-दावप्यापत्तेः । यथाविध्यनुप्रयोगइत्यादौ धातुसंबन्धइत्यस्य साक्षात्संबन्धपरतायाः क्लृप्तत्वेन तद्बाधापत्तेश्च । पूर्वकालस्य क्त्वा वाच्यत्वाभावाच्च । सप्तमीनिर्देशमात्रेण वाच्यत्वाङ्गीकारे कर्तृस्थे चाशरीरे कर्तरीत्यादावतिप्रसङ्गात् । अन्यलभ्यत्वस्य चात्रापि साम्यात् । कर्मप्रवचनीयादृशप्र्यानापत्तेश्च । तद्वदत्रापि प्रकार-तयैव संबन्धस्य भानोपगमादिति शाब्दिकरीतिः ।

तत्र वदन्ति अव्ययकृतो भावे इत्यत्र व्याप्तिवाचिना भा-वशब्देन क्रियान्तरान्वयस्यैवानन्तर्यादिरुक्तत्वात् । धात्वर्थ-

स्यान्यत एव लाभात् । अतएव भुक्त्वा व्रजतीत्यादितः शाब्द-बोधे तत्कारकसंशयाभावः । पौर्वापर्यस्य संसर्गतायां तत्प्रकार-कबोधाभावेन तत्प्रकारकसंशये बाधकाभावात् । आश्रयस्यान्य-लभ्यतायां तत्र त्वन्मते कर्तृशक्त्यनापत्तेश्च कर्मत्वादेरपि संस-र्गत्वे द्वितीयादीनां तत्तच्छक्तिविलयापत्तेश्च । तत्प्रकारकबो-धस्यात्रापि तुल्यत्वात् । नच नामार्थ प्रकारकबोधे विभक्ति-जन्योपस्थितेर्हेतुत्वस्य तण्डुलः पचतीत्यादौ कर्मत्वसंसर्गकबो-धवारणायावश्यकत्वाद्वैषम्यमितिवाच्यम् । सामान्यत उक्तौ प्रकृते व्यभिचारात् । क्त्वाप्रत्ययान्तस्यापि नामत्वात् । विभक्तिद्यो-त्येत्युक्तरीत्यैव निर्वाहाच्च । पीत्वा तृप्त इत्यप्रयोगस्तु तात्पर्याभावात् । अन्यथा पौर्वापर्यस्य संसर्गतायामप्यनिर्वाहात् । समानकर्तृकयो-र्मध्ये पूर्वकालेऽर्थे वर्तमानाद्धातोरित्यर्थात्मिवोपपत्तेश्च । पूर्वकाल-स्तु क्रियायां विशेषणम् । एकत्वादेः प्रत्ययार्थस्यापि प्रकृत्यर्थ-विशेषणत्वोपगमात् । आनन्तर्यं क्त्वार्थइति पक्षेतु यद्यपि तस्य प्राधान्यं तथापि गुणीभूतक्रियामाश्रित्य द्विवचनोपपत्तेः । अन-भिधानादतिप्रसङ्गभङ्गात् । आभीक्ष्ण्यं तिङन्तेष्वव्ययसञ्ज्ञकृदन्ते षुचेति वार्तिकाच्च । त्वन्मतेऽपि क्रियाया गुणीभूतत्वाच्च । प्रत्ययार्थे गुणीभूतत्वस्याप्रयोजकत्वात् । धातुसंबन्धेऽपत्र साक्षा-त्प्रवेशे गौरवात् । अलं भुक्त्वा । अप्राप्यनदीं पर्वत इत्यत्र त्वयापि तत्परित्यागाच्च । कर्मप्रवचनीये संबन्धो विभक्त्यर्थ इहतु कृदर्थ इतिवैषम्याच्चेति ।

किंच कर्मप्रवचनीयाद्वैषम्याभावे कोदोषः । समानार्थ-कत्वमात्रस्य दोषत्वाभावात् । अन्यथा तृतीया द्वितीयादेः कर्तृ-कर्माद्यर्थतया आख्यातानामपि तदर्थत्वं नस्यात् । नच द्वितीया प्राप्तिः । तत्संज्ञायामेव तद्विधानात् । अन्यथा लक्ष्यलक्षणभावस्य

शतृप्रत्ययार्थतया तत्रापि तदापत्तेः। किंच तत्र द्वितीयया सामान्यतोऽवगम्यमानसंबन्धं अनुशब्दो विशेषे व्यवस्थापयति। अत्र तु पदान्तरार्थत्वं सम्बन्धस्य नास्त्येवेति स्पष्टमेव वैषम्यम्।

किंच 'आतुमुनः प्रत्ययाः समानाधिकरणे भवन्तीति वक्तव्यम्' अस्यार्थः एतद्वचनाभावे कर्तरिकृदिति सामान्यविधिना कर्तरि णमुल्प्रसङ्गात्। स्वादुकारं यवागूर्भुज्यते देवदत्तेनेति तृतीया न स्यात् कर्तुरभिहितत्वात्। नच भुजिप्रत्ययेन तदनभिधानात्तृतीया। अनभिहितेइति पर्युदासाश्रयणादिति वाच्यम् णमुलाकर्मणोऽनभिहितत्वाद्यवागूशब्देऽपि द्वितीयापत्तेः। नचाव्ययकृतः कर्मणीति वचनारम्भेण निस्तारः। स्वादुंकारं यवागू भुंक्ते इत्यत्रापि द्वितीयानुपपत्तेः। एवं पक्त्वौदनो भुज्यते देवदत्तेन, भोक्तुमोदनः पच्यते देवदत्तेनेत्यादावपि योजनीयम्। उक्तवचनारम्भेतु सामानाधिकरण्यमेव क्त्वादेरर्थो नतु कर्त्रादिरिति नदोषः।

एतच्च प्रत्याख्यातम्। अव्ययकृतोभावे इतिवचनात्तुमर्थ इत्यनुवृत्तेर्वाभावे एव क्त्वादीनां विधानात्कर्त्रादयोर्थानेति। यदि तुपूर्वकाल इत्यस्य पूर्वकालीनक्रियायां क्त्वेति भाष्याभिमतं स्यात्। तर्हिउक्तशङ्का, उक्तसमाधानत्रयं चेत्युभयमनुपपन्नं स्यात्। भावार्थकतायास्त्वद्रीत्या पूर्वकालपदे एव तदलाभात्। उत्तरत्राप्येतदनुवृत्त्यैवोपपत्तेः। व्यवहिततुमुनर्थपदानुवृत्त्यपेक्षया संनिहितपूर्वकालपदानुवृत्तेरेव युक्तत्वात्। यदि तु पूर्वकालीनक्रियावाचकधातुस्तदर्थः, तर्हि पूर्वकालादिति स्यात्। तादृश धातोः क्त्वाप्रत्यय इति वाक्यार्थात्। तस्मात्पूर्वकालक्रियायामर्थे धातोः क्त्वास्यादित्येव तुमर्थो वाच्यः। उत्तरकालीनक्रियावाचक धातोश्चक्त्वाविधाने तदनुपपत्त्याऽर्थात्पूर्वकालक्रियावाच-

काद्धातोरेव क्त्वोपपत्तेः ।

तथाच पूर्वस्याः कालः पूर्वकाल इतिषष्ठीसमासः । तत्र बहु-व्रीह्यपेक्षया लाघवस्य सर्वतन्त्रसंमतत्वात् एककर्तृकयोः क्रिययोर्मध्ये या पूर्वा क्रिया तस्याः काले इत्यर्थः । सर्वनाम्नो वृत्तिमात्रे इति पुंव-द्भावः । संबन्धिशब्देष्वेकदेशान्वयस्य व्युत्पन्नत्वात् । यत्किंचित्क्रि-यापेक्षपूर्वत्वस्य सार्वत्रिकतया द्वयोरिति निवेशः । एवंच त्वशब्देन पूर्वकालोपादाने क्त्वा नभवतीति भाष्यव्याख्यायां पौर्वकाल्ये क्त्वादि विधीयते नतु विषये इति कैयटग्रन्थोऽपि संगच्छते । सूत्रस्थ पूर्वकालपदस्य क्रियापरत्वे तस्याविषयत्वशंकानुपपत्तेः ।

यदितुत्वभिन्नपदवाच्यत्वमेव विषयत्वं तदा तत्प्रतिषेधानुप-पत्तिः । धातुनैव तत्प्रतीतेर्वाच्यत्वात् । सच धातुनैव लभ्य इति स्वयमेवोक्तत्वाच्च । ब्राह्मणानां पूर्वमित्यत्र पूर्वपदस्यैव निर्धारण-विषयप्रतिपादकतयाऽत्रापि तथात्वाच्च । अन्यथादृष्टान्तदार्ष्टान्ति-कयोर्वैरूप्यापत्तेः । कैयटादिग्रन्थात्तथैव लाभाच्च । तत्र दैशिकं पूर्वत्व मत्र तु कालिकमिति परं विशेषः । किंबहुना त्वदुक्तार्थे कालपदस्य वैयर्थ्यम् । पूर्वे इत्यपर्याप्तेः धर्मिपरतयैव निर्वाहात् । तस्मात्पूर्वकाले शक्तिरिति सूत्रवार्तिकभाष्यतात्पर्यम् । पूर्वे इत्येतावन्मात्रोक्तौ कालस्य वाच्यत्वालाभात् । पूर्वकालस्य कालमात्रपरत्वे च क्रियापेक्षनिर्धारणानन्वयादिति कालपदसा-र्थक्यात् ।

स्यादेतत् । समानकर्तृकत्वमेव क्त्वार्थः । उभयोर्नियतोप-स्थितिकत्वेऽपि पूर्वकालस्याक्षेपलभ्यत्वात् यज्ञोपवीतं वहन् पन्थानमीक्षमाणोऽधीयानो गच्छतीत्येककर्तृकानेकक्रियाणां यौ-गपद्यदर्शनेऽपि प्रधानक्रियामनेकामेकः कर्ता युगपन्न करोति इति नियमेन तदाक्षेपात् । नन्वेक कालासंभवित्वरूपे प्रधानत्वे

ऽधीत्य गच्छतीत्यत्र पूर्वत्वधीर्नस्यादाक्षेपकत्वाभावात् । नचेयं भवतु मा वा इयंतु अवश्यं भवतुइत्येवं रूप मुख्यम उद्देश्यत्वं प्रधानत्व तथाचोक्तक्रिययोरप्येवं भाव पौर्वापर्य नियम इति वा-च्यम् । अध्ययनगमनयोस्तुल्यवदुद्देश्यत्वेऽपि सहसंभवेन व्यभिचारात् । तथोद्देश्यतया नियन्तुमशक्यत्वात् । मैवम् । भिन्नकालीनप्रयत्नसाध्यत्वस्यैव प्रधानत्वात् । अतुल्यकालीनयत्नसाध्यक्रियाणामतुल्यकालत्वव्याप्यत्वात् । भिन्नप्रयत्नसाध्यतायास्तथात्वे सृष्ट्वा संहरति भगवानित्यादौ तदभावात् ।

मिश्रास्तु प्रधानत्वेन समानकर्तृकत्वेनोपस्थाप्यामनेका क्रियामेकः कर्ता एकदा नकरोति । तत्र पूर्वापरीभाव एव बहूना तात्पर्यनियमः यथा मलिनं ते वपुः स्नायादित्यादि सिद्धसाध्यमभिहारे हेतुहेतुमद्भावो व्युत्पत्त्या तत्तात्पर्यानुमानाद्बुध्यते तथा समानकर्तृकत्वेनोपस्थितायाः क्रियायाः पौर्वापर्ये तात्पर्याक्षेपादेव पूर्वत्वमप्रसपान्न तत्र शक्तिरित्याहुः ।

नचैवमपि व्रजनक्रियायाः पूर्वकालत्वाक्षेपेणाप्युपपत्त्या क्त्वाप्रत्ययान्तक्रियाया नियमतः पूर्वत्वबोधो न स्यात् । व्रजतिभुक्त्वेत्यादेरपि दर्शनेन पूर्वोपस्थितेर्नियामकत्वस्य दुर्वचत्वादिति वाच्यम् । नहि भोजनव्रजनक्रिययोरेकः कर्तेत्यनुभवः । क्त्वार्थस्य समानकर्तृकत्वस्य प्रकृत्यर्थान्वयनियमेन व्रजनक्रियायां विशेष्यत्वेनान्वयानुपपत्तेः ।

अतएव भोजनव्रजनक्रिये समानकर्तृके व्रजनक्रिया भुजिक्रियया सहैककर्तृकेत्यपि वा नानुभवः । किन्तु स्वाभिन्नकालीनस्वसमानाधिकरणकृतिमज्जन्यत्वरूपस्य समानकर्तृकत्वस्य क्त्वावाच्यत्वात्स्वपदस्य समभिव्याहृतव्रजनपरत्वात् । व्रजनकृतिभिन्नकालीनसमानाधिकरणकृतिमज्जन्यं भोजनमिति बोधे व्रजनस्य

विशेषणत्वाद्भोजनस्य विशेष्यत्वात् । तत्रैव पूर्वत्वान्वयः । नच तत्र व्याप्तिपक्षधर्मतयोरेव तन्त्रत्वादन्यतरपौर्वापर्यावधारणेऽपि भोजनमात्रे पूर्वत्वान्वये बीजाभावः । शाब्दान्वयबोधतथात्वादिति वाच्यम् । मीमांसकमते आक्षेपलभ्यस्यापि शाब्दप्रवेशोपगमात् ।

वस्तुतो व्रजतीत्यस्य वर्तमानार्थकलट्प्रत्ययान्ततया व्रजनस्य वर्तमानसमयसंबन्धित्वेनोपस्थितत्या व्रजनपूर्वत्वस्य बाधाद्भोजनस्यैव तथात्वं गम्यते एतेन भुक्त्वा जगामेत्याद्यपि व्याख्यातम् । नच भुक्त्वापाक्षीदित्यादौ अनुपपत्तिः । एकत्र तथाव्युत्पत्तावन्यत्रापि तथात्वात् । पूर्वकालसंबन्धित्वेनोपस्थितस्य कालानाकाङ्क्षत्वाच्च । नच तदा भुक्त्वा जगामेत्यादौ तदाशब्दोपात्तकालावरुद्धे भोजने पूर्वत्वधीर्न स्यादिति वाच्यम् । प्रकृतिप्रत्ययार्थान्वयस्यैव प्राथमिकत्वात् । तदाशब्दार्थस्य त्वनन्यगत्या तदभेदान्वयात् । कालानवरुद्धत्वेनोपस्थित एवान्वयसंभवे तदवरुद्धोपस्थितिकान्वयकल्पने बीजाभावात् । मुखं व्यादाय स्वपितीत्यादौ तदभावेन पूर्वत्वस्य नियतोपस्थित्यभावाच्च । नच पूर्णाहुतिं हुत्वा दक्षिणा दद्यादित्यादौ समानकर्तृकत्वस्यापि प्रतीतिर्नेति वाच्यम् । क्रियान्तराध्याहारेण समाधानस्य सम्प्रदायसिद्धत्वात् । तस्मात्समानकर्तृकत्वमेव क्त्वार्थो युक्त इति पूर्वपक्षः ।

सिद्धान्तस्तु उक्तरीत्या नियतपूर्वत्वधीः सकलसिद्धा दुरुपपादैव । कदाचिदुत्तरस्यापि प्रत्ययापत्तेः । उपस्थित्यभावे तात्पर्यस्यैव दुर्ग्रहत्वात् । योग्यतायाश्चोभयत्र सत्त्वात् । किंच समानकर्तृकत्वेन पूर्वत्वाक्षेपो दुर्वचः । तद्धि एककृतिसाध्यत्वं वा । एकजातीयकृतिसाध्यत्वं वा कृत्याश्रयैक्यं वा । नाद्यः । भोजनव्रजनानुकूलकृत्योर्भेदात् । एककालिकानां नानाकृतीनामप्येककार्यत्वात् । नान्त्यः । एककृतिसाध्ये युगपदुत्पन्ननानातृणच्छे-

दादौ व्यभिचारात् । (भोजनव्रजनकर्त्रोरभेदस्य विशेषणविशेष्य-भावमहिम्ना) । तस्मात्क्त्वातः पूर्वत्वोपस्थितौ प्रत्ययस्य प्रकृत्यर्था-न्वितस्वार्थबोधकत्वव्युत्पत्तिबलादेव तत्रान्वयनियमः सुस्थः । वा-क्यार्थत्वेन तत्रशक्तेरयोगात् । क्त्वालकाराभ्यां कर्त्रभिधाने त-दभेदस्य संसर्गत्वात् ।

यद्वा तयो कृतिमात्रवाचकत्वेऽपि सामानाधिकरण्यमेव वा-क्यार्थः । अन्यथा भोक्तुं व्रजतिपश्यन् व्रजतीत्यत्रानुपपत्तेः । तुमुन्लटोः समानकर्तृत्वानभिधायित्वात् । सुप्त्वाऽव्यादत्ते इत्यत्र व्यत्ययात्प्रयोग इति वाचस्पतिमिश्राः । भूत्वा घटस्तिष्ठती-त्यादौ उत्पत्तिकालस्थितिकालत्वेऽप्यनुभवानुरोधात् स्थितिपूर्व-कालविद्यमानविवक्षया न दोषः । तस्मात्पूर्वत्वं क्त्वार्थ इति सिद्धम् ।

मिश्रास्तु अव्यवधानगर्भमेव तच्छक्यम् । प्रतीत्यनुरोधात् । प्रातर्भोजनसायंगमनयोरप्रतीतेः । भोजनापेक्षया विलम्बितस्त-स्मिन् सत्येव प्रचलित इति बोधात् । अतएव क्त्वातः कारण-ताग्रहोऽपि । नजभोजनाव्यवहितोत्तरक्षणे गत्यभावादसंभवः स्वा-ननुकूलक्रियानन्तरितत्वस्याव्यवधानपदार्थत्वात् । तदनुकूलक्रि-यायास्तदव्यवायकत्वादन्यथा व्यापारेण व्यवहितानामिन्द्रिया-दीनामजनकत्वापत्तेः ।

अद्य स्थित्वेत्यादौ अव्यवहितपूर्वकालस्य क्त्वावाच्यस्य अद्येत्यनेनाभेदान्वयः । चिरतरापेक्षयाऽद्य दिनस्याव्यवहित-त्वात् । अन्यथा पूर्वकालान्वितत्वेनोपस्थितिक्रियाया अनाकां-क्षत्वादद्येत्यनेनान्वयानुपपत्तेः । नच सप्तम्यर्थावरुद्धस्याद्यपदप्र-तिपाद्यतया कथं तस्य क्त्वावाच्यपूर्वकालमात्रेणाभेदान्वय इति वाच्यम् सप्तम्यर्थावरुद्धस्यैव क्त्वावाच्यत्वादन्यथान्वयानुपपत्तेः

नच प्रत्ययार्थस्य प्रकृत्यर्थान्वयात्पूर्वं नान्यपदार्थान्वय इति वाच्यम् । देवदत्तेन दृष्ट इत्यादौ देवदत्तकृतिविषयदर्शनगोचर इति प्रतीतेस्तादृशव्युत्पत्त्यसिद्धेरित्याहुः ।

मणिकृतस्तु प्रधानक्रियानन्तर्यं क्त्वार्थः तन्निरूपकत्वेन पूर्वकालस्य जघन्यप्रतीतिकत्वात् । भोजनानन्तरं व्रजतीति भोजनप्रकारकव्रजनविशेष्यकबोधात् । पूर्वत्वे तु भोजनविशेष्यकोऽनुभवः स्यात् । तथाच सएव विनिगमकः । नचैवं प्रत्ययस्य प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमभङ्गापत्तिः । सुब्विभक्तावेव तथा नियमात् । आख्यातोपात्तसङ्ख्यायाः कर्त्रर्यन्वयस्वीकारात् । भोजनस्यापि प्रतियोगितासंबन्धेनानन्तर्ये विशेषणत्वाच्च ।

नन्वानन्तर्यं कृतिनिरूपितं क्रियानिरूपितं वा शक्यम् । नाद्यः । प्रतियोगित्वेनापि प्रकृत्यर्थान्वयाभावे व्युत्पत्तिभङ्गापत्तेः । नच कृत्यानन्तर्यं शक्यं कृतेः पदार्थैकदेशतया क्रियायामनन्वयापत्तेः । नान्त्यः । आनन्तर्यानन्वितत्वेनोपस्थितक्रियाया निराकाङ्क्षत्वेन कृत्यनन्वयापत्तेः । नच प्रथमं कृत्यैव भोजनान्वये स्वकृतिविषयभोजनानन्तरव्रजनकृतिमानिति बोध इति वाच्यम् । एकस्वार्थान्वय मपरपदार्थे बोधयित्वा तद्विशिष्टापरस्वार्थान्वयबोधकत्वस्य पदेऽव्युत्पत्तेः । मैवं प्रथमं कृत्यैव तदाश्रयान्वयात् । तथाच भोजनकर्ता भोजनान्तरव्रजनकृतिमानित्यन्वयः । नच भोजनस्योभयान्वयित्वदोषः । घटेनेत्यादौ तृतीयोपस्थाप्यकरणत्वे एकत्वेच घटान्वयस्वीकारात् । अगत्यान्वयबोधोपगमादित्याहुः । नच युगपत्संभवेऽपि क्रमेणोभयत्रान्वयो दृष्ट इति वाच्यम् । विशेष्ये विशेषणं, तत्रच विशेषणान्तरमिति न्यायेनयुगपदेवान्वय स्वीकारात्, अनन्वितान्वय बोधोपगमादित्याहुः ॥

केचित्तु व्यादाय स्वपिति अधीत्य तिष्ठति इत्यादेरन्यय नव्याप्यस्थित्यादिमत्येव प्रयोगान्मुखव्यादानोत्तरकालिकस्वापादिमत्यपि मुखं नव्यादायेत्यादिप्रयोगाच्च व्याप्तिरपि क्त्वार्थइत्याहुः।

अन्येतु तत्रशक्तौ मानाभावः। स्थितित्वावच्छेदेन तद्व्याप्त्यभावात्। तदीयस्थितिपरत्वे लक्षणापत्तेः। स्वापोत्तर व्यादाने तत्प्रयोगानापत्तेः। तदीयस्वापत्वावच्छेदेनापि तदीयव्यादानव्याप्तिविरहात्। एतेन व्याप्यत्वस्य संसर्गत्वमपि निरस्तमित्याहुः।

अपरे तु कृत्सामान्यशक्तिलभ्यव्यादानाश्रये स्वापाश्रयत्वस्य विशिष्टे वैशिष्ट्यमिति न्यायेनान्वयबोधः। तात्पर्यवशादौत्सर्गिकव्यादानस्वापाद्यो रेककालिकत्वलाभः। निरूढलक्षणया सुप्त्वा व्यादत्ते इतिवद्बा बोधइत्याहुः।

अन्येतु मुखव्यादानोत्तरकालिकस्वापादिमति मुखं नव्यादाय स्वपिति इति न स्यात्। व्यादानाश्रये स्वापाश्रयत्वसत्त्वात्। मुखं व्यादत्ते स्वपितीत्यादितो मुख व्यादाय स्वपितीत्यादेरविशेषश्च। धातुसम्बन्धाधिकारबाधश्च स्यादित्याहुः।

अथ महाभाष्यतात्पर्यार्थं ब्रूमः। पूर्वकालीनभोजनविशिष्टाव्रजनक्रियेति बोधः। पूर्वकालस्य वृत्तित्वेन भोजने तस्यच सामानाधिकरण्येन व्रजनेऽन्वयः। क्त्वाप्रकृत्यर्थ क्रियायां पूर्व कालत्वान्वये तिङन्त क्रियाया अर्थादेवानन्तर्यलाभः। तत्क्रियाव्यक्तिघटकाद्यव्यापारप्रागभावाधिकरणकालवृत्तित्वस्य भोजनक्रियाघटकान्त्यव्यापारे लाभात्। अन्यथापचमाने भुञ्जानेच तत्प्रयोगापत्तेः भोजनक्रियायाश्च व्रजनक्रियायामेव विशेषणतया धातुसम्बन्धाधिकारस्य न संकोचः। आनन्तर्यकृतिराश्रयो व्याप्तिर्वाक्त्वार्थ इत्येतेषु पक्षेषु तस्य दुर्वारत्वात्। मुखं व्यादायेत्यादौ तु स्वापादिघटकव्यापारसमुदायापेक्षया पूर्वत्वाभावेऽपि

यत्किञ्चित्तदपेक्षया पूर्वत्वं प्रयोगबलात्स्वीकार्यम् ।

यत्तु तथात्वानुभवे मानाभावः । किञ्च पूर्वकालत्वं प्रागभावाधिकरणकालत्वं स्वध्वंसानधिकरणकालत्वं स्वध्वंसानधिकरणत्वं वा, नाद्यः । प्रागभावानङ्गीकारे असम्भवनात् । नद्वितीयः । पचमाने भुञ्जानेऽपि पक्त्वा भुंक्ते इत्यापत्तेः । नान्त्यः । तत् ध्वंसानधिकरण कालवृत्तित्वरूपानन्तर्यापेक्षया गुरुत्वात् । इति ।

तदसत् । भाष्यादिसमतानुभवस्यैव प्रामाणिकत्वात् । तत्पदेन यत्किञ्चिद्व्यापारग्रहणे पचमान इत्याद्यतिप्रसङ्गसाम्यात् । चरमव्यापारोपादाने तु मन्गते भोजनध्वंसानधिकरणकालवृत्तित्वस्य पाकचरमव्यापारान्वयस्वीकारेणानतिप्रसङ्गात् । पक्त्वौदनं भुङ्क्ते देवदत्तः पक्त्वौदनो भुज्यते देवदत्तेनेत्यादौ पाकक्रियानिरूपितकर्तृकर्मशक्त्यनभिधानेन तृतीयाप्रसक्तिस्तु नास्ति । प्रधानशक्त्यनभिधानेन व्यवस्थासम्भवात् । इति अनभिहितसूत्रे एव पल्लवितमिति दिक् ।

## आभीक्ष्ण्ये णमुल्च ॥ २२ ॥

पौनः पुन्ये द्योत्ये पूर्वविषये णमुल् क्त्वाच । इमौच द्विर्वचनव्यतिरेकेणाभीक्ष्ण्य द्योतयितुमसमर्थौ । शब्दशक्तिस्वाभाव्यात् । अत आभीक्ष्ण्येचेति द्वित्वम् । स्मारस्मारं नमति शिवम् । स्मृत्वा स्मृत्वा ।

## न यद्यनाकाङ्क्षे ॥ २३ ॥

पूर्वोत्तरक्रियावतो वाक्यस्येतरानाकाङ्क्षत्वे यच्छब्दे उपपदे पूर्वकाले यत्प्राप्तं तन्न स्यात् । तेन पूर्वसूत्रविहितस्य णमुलः पूर्वतनसूत्रविहितस्यापि क्त्वश्च निषेधः । नचानन्त

रस्यविधिर्वा प्रतिषेधोवेति आभीक्ष्ण्य इति सूत्रप्राप्तस्यैव प्रति- षेधो युक्तो नतु समानसूत्रविहितस्येति नान्यम् । प्रकरणापे क्षया पूर्वकाले प्रतिपद्यारम्भात् । यद्य भुङ्क्ते ततः पठति । अना- काङ्क्षं किम् । यद्य भुक्त्वा व्रजति, ततोऽधीते । व्रजत्यन्नं वाक्यम् ततोधीते इत्येतत्साकाङ्क्षम् । यत्तच्छब्दाभ्या वाक्यद्वयैकवाक्यतो- ल्लासात् ।

# विभाषाग्रेप्रथमपूर्वेषु ॥ २४ ॥

अग्रे इति सप्तम्यन्तानुकरणत्वेन विभक्तित्वाभावादस्यत्रामी- यमित्यादिवन्न विभक्तेर्लोपः । एषूपपदेषु समानसूत्रविषये क्त्वा- णमुलौ वा स्तः । नन्विय प्राप्ते विभाषा अप्राप्ते वा । आभीक्ष्ण्य- पदानुवृत्त्यननुवृत्तिभ्या सदेहः । नाद्यः । आभीक्ष्ण्ये क्त्वाणमु- लोः प्राप्तौ पक्षे तदभावविधाने आभीक्ष्ण्ये लडादीनामपि प्रस- ङ्गात् । आभीक्ष्ण्येक्त्वाणमुलौ हीष्येते । अग्रे भोजंभोज व्रजति । भुक्त्वा भुक्त्वा । लडादयस्तु नेष्यन्ते । अग्रेभुङ्क्तेभुंक्ते व्रजतीति । एवमनाभीक्ष्ण्ये क्त्वाणमुलोरसिद्धेः । अग्रेभोजं व्रजतीत्यादे- श्चेष्टत्वात् । नान्त्यः । आभीक्ष्ण्ये ग्रहणनिवृत्तौ अग्रादीनां प्र- त्ययोत्पत्तौ निमित्तत्वादुपपदसज्ञायामुपपदसमासप्रसङ्गात् । प्रा- प्तविभाषाया नायं दोषः । आभीक्ष्ण्यसूत्रेणैव प्रत्यययोर्विहितत- याऽग्रादीना प्रत्ययनिषेध प्रत्येव निमित्तत्वात् ।

मैवम् । अप्राप्तविभाषेत्यस्य युक्तत्वात् । अमैवाव्ययेनेति नियमादेव समासप्रसक्त्यभावात् । अमा तदन्येन च तुल्यवि- धानत्वात् । नचाभीक्ष्ण्ये प्राप्तौ अनाभीक्ष्ण्ये चाप्राप्तौ विधानादु- भयत्र विभाषेयं स्यादिति वाच्यम् । आभीक्ष्ण्ये पूर्वविप्रतिषेधन नित्ययोरेव क्त्वाणमुलोरिष्टत्वात् । नच णमुल्यप्राप्ते क्त्वाप्रत्यये

तु समानादिसूत्रेण प्राप्ते विधानादुभयत्र विभाषात्वमिति वाच्यम् तद्विहितक्त्वापेक्षया विभाषाग्रहणानुपयोगात् । वासरूपन्यायादेव पक्षे लडादीना सिद्धेः । णमुलमहितक्त्वाविधौच विभाषाग्रहणं तयोः सहविधाने वासरूपविधिर्नास्तीति ज्ञापनार्थम् । तेनाभीक्ष्ण्ये पूर्वकाले लडादयो न भवन्तीतिदिक् ।

अत्र साधनपौर्वकाल्यविषया अग्रादयो न क्रियापौर्वकाल्यविषयाः । तथासति तैरेव पौर्वकाल्यस्योक्तत्वात्क्त्वाणमुलोर्गतार्थत्वादनुपपत्तेः । नचारम्भसामर्थ्यम् । साधनपौर्वकाल्यविषयाणामग्रादीना मुपपदत्वे चारितार्थ्यात् । पूर्वशब्देन क्रियापौर्वकाल्योक्तौ क्त्वानुत्पत्तेः समानादिसूत्रे भाष्ये एवोक्तत्वात । किंच क्रियापौर्वकाल्यविषयाणामग्रादीना ग्रहणे प्राप्तविभाषानिश्चयात्तत्संशयोऽनुपपन्नः । आभीक्ष्ण्यसूत्रेण क्रियापौर्वकाल्ये एव क्त्वाणमुलोर्विधानात् । तस्यचाग्रादिशब्दैरुक्तावाभीक्ष्ण्यग्रहणानुवृत्तावप्यप्राप्तविभाषैव स्यात । नचाभीक्ष्ण्यद्योतनार्थं तदुत्पत्तिः । द्विर्वचनं विना तयोरप्यसामर्थ्यात् । तस्मात्साधनपौर्वकाल्यविषयाणामेवाग्रादीनामिहोपादानम् । तथाचाग्रेभोजमित्यस्यान्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वाव्रजतीत्यर्थः । तदपेक्षया च भोजनस्यात्र पूर्वत्वाभावात्तत्साध्यभुजिक्रियापेक्षमेव तद्गम्यते । कारकव्यवहारस्य क्रियाविषयत्वात् । प्रभोरग्रे भुङ्क्त इत्यादावग्रछब्दस्य देशविशेषार्थत्वेऽप्यत्र प्रथमपूर्वशब्दसाहचर्यात्समयवृत्तेरत्रोपादानम् ।

तदयमर्थः । द्विविधात्रपूर्वकालता समानकर्तृकव्राजिक्रियापेक्षा भिन्नकर्तृकभुजिक्रियापेक्षाच । आद्यायाः क्त्वाप्रत्ययेन द्वितीयायाश्चाग्रादिशब्दैरुपादानमिति । एवमाकरार्थव्यवस्थाया अग्रादिशब्दानामिव क्त्वाप्रत्ययस्यापि पौर्वकाल्यवाचकत्वम् । विषयशब्दस्योभयत्रापि प्रयोगात् ।

## कर्मण्याक्रोशे कृञः खमुञ् ॥ २५ ॥

कर्मात्रोपपदम् । आक्रोशो गम्यः । खित्वान्मुम् । चोरंकारमाक्रोशति । करोतिरुच्चारणार्थः । चोरोऽसीत्याक्रोशवाक्ये चोरशब्दोच्चारणस्याक्रोशसंपादनार्थत्वात् । नतु चोरत्वसंपादनार्थत्वात् । तस्य वस्तुधर्मतया वचनानुपपाद्यत्वात् । तेन चोरोऽसीत्याक्रोशतीत्यर्थः ।

## स्वादुमि णमुल् ॥ २६ ॥

स्वाद्वित्यर्थग्रहणमविच्छिन्नपारम्पर्यादाचार्योपदेशात् । मान्तत्वं निपात्यम् । नच प्रकृतः खमुञत्र क्रियतां किं णमुलेति वाच्यम् । अस्वाद्वीं स्वाद्वीं कृत्वा भुङ्क्ते स्वादुकारं भुङ्क्ते इत्यत्र वोतो गुणवचनादिति ङीषापत्तेः । मान्तत्वे भाविप्रत्ययविषये निपात्यमाने तु णमुलः पूर्वमेव मान्तत्वे उदन्तत्वाभावेन तदप्रवृत्तेः । खमुञोऽव्ययेषु मान्तत्वासिद्धेश्च । च्व्यन्तस्याव्ययत्वात् । नच मान्तत्वमात्रं निपात्यतां प्रत्ययस्तु खमुञेवास्त्विति वाच्यम् । मान्तनिपातनस्याव्ययमात्रविषयत्वापत्त्या ङीषापत्तेः । णमुलि तु मान्तत्वस्य पूर्वविधानादीकाराभावार्थतया तस्य मकारार्थत्वविज्ञानात् । उत्तरत्र णमुल्विधानावश्यकत्वाच्च । तत्रात्र वा णमुलुपादाने विशेषाभावात् । एवं संपन्नंकारं लवणंकारं वा भुङ्क्ते । वासरूपविधिना क्त्वापि । स्वादु कृत्वा भुङ्क्ते ॥

## अन्यथैवं कथमित्थंसु सिद्धा-

# प्रयोगश्चेत् ॥ २७ ॥

इत्थ मुइत्यन्तं द्वन्द्वोत्तरसप्तम्यन्त एषु कृञो णमुल् । सिद्धः अप्रयोगः यस्य तादृशश्चेत् कृञ् । कृञः प्रयोगाप्रयोगयोरर्थविशेषप्रतीत्यप्रतीतिविरहे सतीत्यर्थः । अन्यथाकारं भुङ्क्ते । एवंकारम् । कथंकारं इत्थंकारं वा अन्यथा भुंक्ते एवंभुङ्क्ते इत्यादेः अन्यथाकारं भुंक्ते इत्यादेश्च समानोऽर्थः । सिद्धेति किम् । शिरोऽन्यथा कृत्वा भुंक्ते । अत्रकृत्वेत्यत्र शिरसः कर्मत्वम् । तत् कृञः प्रयोगं विना न प्रतीयते, भुजिक्रियां प्रत्येव कर्मत्वप्रतीतेः । अन्यथात्वं तु तदा भुजिक्रिया गतमेव प्रतीयते, नतु शिरोगत मिति तत्प्रयोगस्यावश्यकत्वम् ।

अत्रवदन्ति । सिद्धाप्रयोगश्चेदित्यनतिप्रयोजनत्वादुक्तम् । नतुसर्वथा निष्फलत्वादिति भ्रमितव्यम् । भेदनिबन्धनस्य पौर्वकालस्य समानकर्तृकत्वस्य चाभावे णमुल एव दुर्लभत्वात् । धातुसंबन्धाधिकारबाधापत्तेश्च । नचवचनसामर्थ्याण्णमुल् तदन्तप्रयोगश्चेति वाच्यम् । वासरूपविधिना पक्षे इष्यमाणस्य क्त्वाप्रत्ययस्य दौर्लभ्यापत्तेः । अन्यथा कृत्वा चोदितमन्यथाकृत्वापरिहारः कथं कृत्वाचेत्यादिभाष्यप्रयोगात् । एतेन तेषामपशब्दत्वं भट्टपादोक्तंच निरस्तम् सूत्रबलाण्णमुलन्तस्येव भाष्यबलात्क्त्वान्तस्याप्यनर्थकस्यापि साधुत्वोपपत्तेः ।

वस्तुतस्तु अन्यथादिशब्दैः करोत्यर्थक्रियासामान्यगतः प्रकारो बोध्यते तथाच णमुलन्ते गम्यार्थप्रकारविशेषविशिष्टक्रियाभुज्याद्युपात्तफलविशिष्टक्रिया प्रतिविशेषणम् । एकस्या अपि क्रियाया विशेषणोपरागेण भिन्नाया विशेषणविशेष्यभावसंभवात् । नचौपाधिकभेदेन क्त्वानिर्वाहस्यासाम्प्रदायिकत्वं भाष्यकारादि-

व्यधिकस्य साम्प्रदायिकस्याप्रसिद्धेः ।

## यथातथयोरसूयाप्रतिवचने ॥ २८ ॥

पूर्ववत् यथाकारमहंभोक्ष्ये तथाकारं भोक्ष्ये किं तवानेन । प्रष्टुमयोग्येन कथमभवान भोक्ष्यते इति पृष्टेऽसूययोत्तरमेतत् । असूययेति किम् । यथाकृत्वाहं भोक्ष्ये तथा द्रक्ष्यति । तत्त्वाख्यानमेतत् ।

## कर्मणि दृशिविदोः साकल्ये ॥ २९ ॥

आभ्यां कर्मण्युपपदे णमुल् । बाहुल्य कर्मणो विशेषणम् । कन्यादर्शं वरयति । सर्वाः कन्या इत्यर्थः । ब्राह्मणवेदं भोजयति विदीनां ज्ञानलाभविचारार्थानामेव ग्रहण नमत्तार्थस्याकर्मकत्वात् । अत्रदर्शनविषयत्वावच्छिन्नाः कन्याज्ञानाविषयत्वावच्छिन्नान्ब्राह्मणानिति साकल्यमतिशये तात्पर्यम् ।

## यावतिविन्दजीवोः ॥ ३० ॥

यावद्वेदं भुङ्क्ते । यावल्लभेत तावदित्यर्थः । अस्यासाकल्यार्थमारम्भः । यावज्जीवमग्निहोत्रं जुहोति । होमेजीवनव्यापकत्व लभ्यते ।

## चर्मोदरयोः पूरेः ॥ ३१ ॥

पूरयतेर्ण्यन्तस्य निर्देशोऽन्यस्याकर्मकत्वात् । चर्मपूरं स्तृणाति । उदरपूरं भुङ्क्ते । उदरपूरणपर्याप्ता भुजिक्रियेत्यर्थः । पूर्वकालस्येह नमबन्धोऽसंभवाद्प्रनीतेश्च । एवमन्यत्रापि यथातथं बोध्यम् ।

## वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ॥ ३२ ॥

कर्मण्युपपदे पूरयतेर्णमुल् धातूकारस्य विकल्पेन लोपश्च । प्रकृतिप्रत्ययोपपदसमुदायेन वर्षप्रमाणे गम्ये गोःपदप्रं वृष्टो देवः । गोः पदपूरणविशिष्टा वर्षक्रिया । अल्पत्वमात्रं गम्यम् ।

प्रवर्षति प्रेयसि चन्द्रिकाभिश्चकारचञ्चूगुलुकप्रमिन्दुः ।

अत्रभाष्यम् । ऊलोपश्चान्यतरस्यामित्यनारभ्यम् । प्रापूरणे इत्यस्मात्कप्रत्ययेनैव गोः पदप्रमित्यस्य सिद्धेः । क्रियाविशेषणत्वात्कर्मत्वनपुंसकत्वे विभक्तेरपि एकेन गोः पदप्रेनेत्यादाविष्टत्वात् । इतिगोः पदप्रकल्पम् । गोः पदप्रंतरां इत्यादिकं तु नेष्टम् । लोपप्रत्याख्यानपरभाष्यसामर्थ्याच्चथानुमानात् । ननुगोः पदपूरमित्यादेरपि घञासिद्धत्वाण्णमुलपि प्रत्याख्यायताम् । मैवम् । करणघञन्तेन षष्ठी समासे थाथादिसूत्रेणान्तोदात्तस्य भावे घञन्तेन बहुव्रीहौ पूर्वपदप्रकृति स्वरस्यापत्तेः । णमुलितु लित्स्वरेणऊ कारस्योदात्तत्वात् गोः पदप्रमित्यत्र तु न विशेषः । कप्रत्यये थाथादिस्वरेणान्तोदात्तत्वात् । णमुल्यूलोपेच पूर्वस्योदात्तभाजोऽभावेन कृत्स्वरेणान्तोदात्तत्वादिति कैयटः ।

## चेले क्नोपेः ॥ ३३ ॥

चेलार्थेषु कर्मसूपपदेषु क्नोपेर्णमुल् । अर्थग्रहणं व्याख्यानात् । चेलक्नोपं वसनक्नोपं वृष्टो देवः । यावता तज्जलाभिघातेन वस्त्राणि शब्दायन्ते तावदित्यर्थः ।

## निमूलसमूलयोः कषः ॥ ३४ ॥

कर्मणीत्येव । अत्र प्रकरणे पूर्वकालस्य नसंबन्धः । निर्गतं मूलमस्य निमूलम् । सहमूलेन समूलं । णमुल्प्रकृत्यनुप्रयोगो वक्ष्यते । समूलकाषं निमूलकाषं वा कषति । समूलं निमूलं च कषतीत्यर्थः । उपपदार्थविशिष्टो णमुल्प्रकृत्यर्थोऽनुप्रयोगार्थे विशेषणमित्याहुः ।

## शुष्कचूर्णरूक्षेषु पिषः ॥ ३५ ॥

शुष्कपेषं पिनष्टि । चूर्णपेषं पिनष्टि । रूक्षपेषम् ।

## समूलाकृतजीवेषु हन्-कृञ्ग्रहः ॥ ३६ ॥

समूलघातं हन्ति । अकृतकारं करोति । जीवग्राहं गृह्णाति । जीवन्तमित्यर्थः ।

## करणे हनः ॥ ३७ ॥

पादघातं हन्ति । पादेन हन्तीत्यर्थः । यथाविध्यनुप्रयोगार्थं सन्नित्यसमासार्थमेतत् । हिंसार्थानामित्यस्य तु धात्वन्तरसंबन्धस्तृतीयाप्रभृतीन्यन्यतरस्यामिति समासविकल्पश्चेति बोध्यम् ।

## स्नेहने पिषः ॥ ३८ ॥

स्नेह्यते येन तस्मिन् करणे उपपदे पिषेर्णमुल् । उदपेषं पिनष्टि । पेषवासेत्यादिना उदादेशः । उदकेन पिनष्टीत्यर्थः । अतएव शुष्कादिसूत्रे स्नेहनग्रहणं नकृतम् । तत्र कर्मण एवानुवृत्तेः ।

## हस्ते वर्तिग्रहोः ॥ ३९ ॥

हस्त इत्यर्थ ग्रहण व्याख्यानात् । हस्तवर्तं वर्तयति । करवर्तं वा । हस्तेन गुलिकां करोतीत्यर्थः । हस्तग्राहं गृण्हाति । हस्तेनेत्यर्थः ।

## स्वे पुषः ॥ ४० ॥

करणे इत्येव । स्वइति स्वरूपपर्यायविशेषाणां ग्रहणमिति प्रागुक्तम् । स्वपोषं पुष्णाति । धनपोषं गोपोषं वा ।

## अधिकरणे बन्धः ॥ ४१ ॥

बध्नातेर्णमुल् । चक्रबन्धं बध्नाति । चक्रेइत्यर्थः ।

## संज्ञायाम् ॥ ४२ ॥

अनधिकरणार्थ आरम्भः । क्रौचबन्धं बद्धः । मयूरिकाबन्धम् । अट्टालिकाबन्धम् । बन्धविशेषाणा सञ्ज्ञाः ।

## कर्त्रोर्जीवपुरुषयोर्नशिवहोः ॥ ४३ ॥

जीवनाशं नश्यति । जीव इत्यर्थः । पुरुषवाहं वहति । पु-

रुष इत्यर्थः ।

## ऊर्ध्वे शुषिपूरोः ॥ ४४ ॥

कर्त्रर्थे ऊर्ध्वे उपपदे । ऊर्ध्वशोषं शुष्यति । वृक्षादिरूर्ध्वोऽपतित एव शुष्यतीत्यर्थः । ऊर्ध्वपूरं पूर्यते । घटादिरूर्ध्वमुख एव वर्षोदकादिना पूर्यते इत्यर्थः ।

## उपमाने कर्मणि च ॥ ४५ ॥

चात्कर्तरि । मृधे निदाघघर्मांशुदर्शं पश्यंति तं परे । स पुनः पार्थसंचारं संचरत्यवनीपतिः । अत्र बाधोऽलकारकौस्तुभे विचारितोऽस्माभिः ।

## कषादिषु यथाविध्यनुप्रयोगः ॥ ४६ ॥

णमुल्प्रकृतिरेव धातुः संख्याकालविशेषाद्यभिव्यक्त्यर्थमनुप्रयोक्तव्यः । तच्चोदाहरणेषु स्पष्टम् ।

## उपदंशस्तृतीयायाम् ॥ ४७ ॥

अतःपरं पूर्वकालस्य संबन्धः । तृतीयाप्रभृतीन्यन्यतरस्यामिति समासविकल्पः । मूलकोपदंशं भुंक्ते । मूलकेनोपदंशम् । मूलकस्य भुजि प्रतिकरणत्वात्तृतीया । नचैवमुपदंशिना समर्थसामर्थ्यात्प्रत्ययसमासयोरनुपपत्तिः। आर्थकर्मत्वमादाय तदुपपत्तेः। तृतीयोपादानसामर्थ्यात् । अन्यथा करणे इत्येव ब्रूयात् ।

## हिंसार्थानां च समानकर्म-

तन्त्रम् । संनिकर्षमात्रे तात्पर्यम् ।

## प्रमाणे ॥ ५१ ॥

उपपदं पूर्ववत् । द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति । द्व्यङ्गुलेनोत्कर्षम् । अङ्गुलिद्वयेन परिगृह्य छिद्येत्यर्थः । ह्रस्वः खण्डः खण्डिका ।

## अपादाने परीप्सायाम् ॥ ५२ ॥

अपादाने उपपदे धातोर्णमुल् त्वरायां गम्यमानायाम् । प्रथममशकुनं शय्योत्थायं तत्रास्य विदर्भजा । शय्यात उत्थाय वा । त्वरातिशये तात्पर्यम् ।

## द्वितीयायां च ॥ ५३ ॥

त्वरायामित्येव । यष्टिग्राहं युध्यन्ते । लोष्टग्राहम् । अनुदात्तं पदमेकवर्जं इत्यत्राप्यनुदात्त अविलम्बेन कर्तव्यमिति तात्पर्यम् ।

## स्वाङ्गेऽध्रुवे ॥ ५४ ॥

द्वितीयायामित्येव । ध्रुवत्वं जीवनाभावप्रतियोगित्वम् । भ्रूविक्षेपं कथयति । भ्रुवं विक्षेपम् । अध्रुवे किम् । शिर उत्क्षिप्य ब्रूते ।

## परिक्लिश्यमाने च ॥ ५५ ॥

सर्वाविच्छेदेन पीड्यमाने द्वितीयान्ते स्वाङ्गे णमुल् । उरः प्रतिपेषं युध्यन्ते कृत्स्नमुरः पीडयन्तीत्यर्थः उरोविदारं प्रतिचस्करे नखैः । अध्रुवार्थ आरम्भः ।

## विशिपतिपदिस्कन्दां व्याप्य-

## मानासेव्यमानयोः ॥ ५६ ॥

द्वितीयायामेव विशादिभ्यो णमुल् व्याप्यमाने आसेव्यमाने चार्थे गम्ये । गेहानुप्रवेशमास्ते । गेहगेहमनुप्रवेशंगेहमनुप्रवेशमनुप्रवेशम् । समासपक्षे न द्विर्वचनम् । तेनैव शब्दशक्तिस्वाभाव्येन तयोरुक्तत्वात् । असमासे तु उपपदणमुलन्तयोः पर्यायेण द्वित्वम् । आभीक्ष्ण्ये णमुलः पूर्वं विधानेऽपि उपपदमन्त्रार्थमासेवायामिति पुनर्विधानम् । तेन समासविकल्पः । णमुल्प्रकृत्यर्थक्रियाभिरुपपदार्थानां साकल्येन सम्बन्धो व्याप्तिः । गेहादिपदानां तद्विशेषपरत्वात् । क्रियायाः पौनःपुन्यमासेवा ।

## अस्यतितृषोः क्रियान्तरे कालेषु ॥ ५७ ॥

क्रियामन्तरयति क्रियान्तरः । अनुप्रयुज्यमानार्थक्रियाव्यवधायकेऽर्थे वर्तमानादस्यतेस्तृषेश्च कालार्थेषु द्वितीयान्तेषूपपदेषु णमुल् । द्व्यहात्यासं गाः पाययति । द्व्यहेनात्यासम् । द्व्यहतर्षम् । अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः ।

इहतु लिहने रात्रीतर्षं रथाङ्गविहङ्गमा

मधु निजवधूवक्त्राम्भोजेऽधुनाधरनामकम् ।

इति श्रीहर्षः ।

## नाम्न्यादिशिग्रहोः ॥ ५८ ॥

नामादेशमाचष्टे ।

विरहविरलाज्जिह्वा वह्नाह्वयं त्यातिविह्वला ।

पिह सहचरीं नामग्राह रथाङ्गविहङ्गमाः ।

इति श्रीहर्षः ॥

# अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ॥ ५९ ॥

अयथाभिप्रेतेत्याख्यानविशेषणम् । अनभिमतप्रकारेणाख्याने इत्यर्थः । उच्चैःकृत्य उच्चैः कृत्वा । उच्चैःकार वा आप्रियमाचष्टे । प्रियाख्यानस्यानभिमतत्वेऽपि उच्चैष्ट्वादिरूपप्रकारांशेऽनभिमतत्वं बोध्यम् ।

# तिर्यच्यपवर्गे ६०

तिर्यक्शब्दे उपपदे कृञः क्त्वाणमुलौ स्तः समाप्तौ गम्यायाम् । तिर्यक्कृत्य तिर्यक्कारं वा गतः । समाप्येत्यर्थः । अपवर्गे किम् । तिर्यक्कृत्वा काष्ठं गतः । अनृजुत्वादग्रतः स्थितपार्श्वे क्षिप्त्वेत्यर्थः । तिर्यचीति सौत्रो निर्देश इति भाष्यम् । अनुक्रियमाणरूपविनाशप्रसङ्गस्तु न परिहार्यो नहि प्रयोजनानुवृत्तिः प्रमाणमिति कैयटः ।

# स्वाङ्गे तस्प्रत्यये कृभ्वोः ॥ ६१ ॥

तस्रूपे प्रत्यये परे यत्स्वाङ्गं तस्मिन्नुपपदे तद्रूपप्रत्ययसमुदाये उपपदे इति यावत् । स्वाङ्गमात्रस्योपपदत्वाभावात् । मुखतः कृत्य मुखतः कृत्वा मुखतः कारं वा गतः मुखतोभूय मुखतो भूत्वा मुखतो भावं वा गतः । आद्यादित्वात्सप्तम्यर्थे तसिः । प्रत्ययग्रहणं किम् । मुखे तस्यति मुखतः । तसु उपक्षये क्विप् । मुखतः कृत्वा इति ।

वृत्तिः । प्रत्ययग्रहणपरिभाषयैव सिद्धे प्रत्ययग्रहणं ऽर्थमेवेति केचित् । तस्यां प्रमाणाभाव इत्यन्ये ।

# नाधार्थप्रत्यये च्व्यर्थे ॥ ६२ ॥

नार्थौ नानञौ ॥ धार्था धमुञादयः । तत्र च्व्यर्थे विषये उपपदे कृभ्वोःक्त्वाणमुलौ स्तः । नानाकृत्य नानाकृत्वा नानाकारम् । विनाकृत्य विनाकृत्वा विनाकारम् नानाभूय नानाभूत्वा नानाभावम् । एवमेकधाभूयेत्यादि । अप्रत्ययग्रहणं किम् । हिरुक् कृत्वा पृथक् कृत्वा । यद्यपि द्विःयोश्च धमुञित्यादौ प्रत्ययपक्षेऽर्थग्रहणसार्थक्यम् । तद्धि गौध इत्यनुवर्त्य तदादेशत्वपक्षे तु स्थानिवद्भावेन सिद्धम् । तथाच धमुञन्तात्स्वार्थे डदर्शनमिति डप्रत्यय उदाहार्यः । नाञ्ग्रहार्थमप्यर्थग्रहणम् । अन्यथानिरनुबन्धकपरिभाषया विनञ्भ्यां नानाञाविति अत्राद्यस्यैव ग्रहणं स्यादिति कैयटः ।

# तूष्णीमि भुवः ॥ ६३ ॥

तूष्णींभूय तूष्णींभूत्वा तूष्णींभावम् । भूग्रहण कृञो निवृत्त्यर्थम् ।

# अन्वच्यानुलोम्ये ॥ ६४ ॥

अनूचीति प्राप्ते अन्वचीति सौत्रो निर्देश इतिभाष्यम् । आनुलोम्यमानुकूल्यम् । अन्वग्भूयास्ते । अन्वग्भूत्वा अन्वग्भावम् । अग्रतः पार्श्वतः पृष्ठतश्चानुकूलो भूत्वास्ते इत्यर्थः । अन्वगित्यस्यानुकूल्यमात्रपरत्वे देशविशेषग्रहणे नियामकाभावात् । आनुलोम्ये किम् । अन्वग्भूत्वा तिष्ठति पृष्ठतो भूत्वा । प्रमाणान्तरेण

कचिदानुकूल्यलाभेऽप्यन्वक्शब्दस्य तदबोधकत्वात् न णमुल् किन्तु क्त्वैवेति दीक्षिताः ।

## शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ६५

अक्रियार्थोपपदार्थ आरम्भः । भोक्तुं शक्नोति । धृष्णोति जानातीत्यर्थः । भुज्यर्थस्य विषयतयान्वये तत्र प्रावीण्यं गम्यते । ग्लायतीत्यत्र स्वशक्तिः । घटतेऽर्हतीत्यत्र योग्यता । आरभते उत्सहते प्रक्रमते इत्यत्र प्रयत्नः । लभते इत्यत्रान्यकर्तृकप्रत्याख्यानाभावः । अस्ति भवति विद्यते वेत्यत्र संभवमात्रमिति विवेकः ।

## पर्याप्तिवचनेष्वलमर्थेषु ६६

पर्याप्तिरन्यूनत्वम् । अलमर्थोऽत्र सामर्थ्यं व्याख्यानात् । सामर्थ्यविशिष्टत्वं पर्याप्तिवचनेषु बोधकत्वसंबन्धेन बोध्यम् । यद्वा अलमर्थोऽत्र बहुव्रीहिः । सामर्थ्यबोधकत्वे सति पर्याप्तिबोधकत्वमर्थः । तथाच पर्याप्तिविशिष्टसामर्थ्यवाचकेषु उपपदेषु तुमुन् । पर्याप्तो भोक्तुं प्रवीणः कुशल इत्यादि । पर्याप्तीति किम् । अलं भुक्त्वा । अलमर्थेषु किम् । पर्याप्तं भुङ्क्ते । प्रभूतत्वमात्रमिह गम्यते नतु सामर्थ्यम् । पूर्वसूत्रे शकिग्रहणं तु सौकर्य संभवे वा तुमुन् यथा स्यात् ।

## कर्तरि कृत् ६७

कृत्प्रत्ययः कर्तरि स्यात् । पाचकः पक्तेत्यादि । उत्सर्गोऽयम् । ननु सूत्रमिद नतावद्भावव्यावृत्त्यर्थम् । सामर्थ्यादेव निव-

क्षिप्तार्थसिद्धेः । तथाहि—घञ् इत्येव सूत्रमस्तु सचानिर्दिष्टार्थत्वाद्भावे । तदुत्तरं पदरुजविशस्पृश इति पाठ्यम् । एवंचसिद्धे भावग्रहणं नियमार्थम् । घञेव भावे नान्य इति । ततो धात्वर्थाक्षिप्ते कर्तरि कृत्सिद्धेः । नच कर्मणोऽपि धात्वर्थेनाक्षेपात्तन्निवृत्त्यर्थं । धःकर्मणि ष्ट्रन् इत्यस्य ष्ट्रन्नेव कर्मणि नान्य इति नियमार्थत्वात् । नच प्रत्ययानियमाभावे कारकान्तरेऽपि तत्प्रसङ्गः । विध्यन्तरे विध्यभावात् । कर्मण्येव ष्ट्रन्निति नियमान्तराद्वा । कारकान्तरेऽप्यभिमतानां प्रत्ययाना तु करणाधिकरणयोश्च, दाशगोघ्नौ संप्रदाने, भीमादयोऽपादान, इति विशिष्यैव विधानात् । तस्मात्पारिशेष्यात् कर्तर्येव ण्वुलादयो भवन्ति । कारकान्तरे विहितेषु एतत्सूत्रप्रवृत्तेः सिद्धान्तेऽप्यनभिमतत्वात् ।

नच कर्तरि भुवः खिष्णुच्खुकञौ कर्तरि चर्षिदेवतयोरिति कर्तुरपि नियमः स्यादिति वाच्यम् । उभयत्र करणे इत्यस्य निवृत्त्या कर्तृश्रुतेर्विध्यर्थत्वात् । मैवम् । बाह्यभावस्या तन्नियमेन तन्निवृत्तावपि आभ्यन्तरभावस्य एतन्न्यावृत्त्यर्थत्वात् । सार्वधातुके यगिति सूत्रे तद्भेदस्य दर्शितत्वात् ।

स्यादेतत् । तथापि ल्युनादयः कर्तरि प्रसज्यन्ते । नचकरणाद्यर्थत्वात्तेषामेतदपवादत्वमिति वाच्यम् । नानावाक्यत्वात् । ब्राह्मणेभ्यो दधिदीयतां तक्रं कौण्डिन्यायेति सहोच्चरितवाक्ये एव तक्रस्य दधिबाधकत्वात् । प्रातर्दधिदानेऽपराण्हेच तक्रदाने विहिते तु तदभावात् ।

नचैव मिद्परिभाषालोन्त्यपरिभाषयोरेकवाक्यत्वे तच्छेषपक्षः । भिन्नवाक्यत्वे तु तदपवादपक्षइति विरुध्यते इतिवाच्यम् । वैषम्यात् । अङ्गस्येति इगपेक्षावयवावयविभावसबन्धे षष्ठी । अङ्गावयवस्येक इति वाक्यार्थे स्थानषष्ठीरूप लिङ्गाभावादलोन्त्यस्ये-

स्यनुपस्थितत्या फलतस्तदपवादत्वात् । इहतु कृत्त्वेन सामान्येन तद्रूपविशेषणेन च करणादौ ल्युनादीनां विधानसंभवाद्युगपदर्थ-द्वयानभिधानेऽपि पर्यायेणोभयसंभवात् । अतएव तयोरेवेति एव-कारः सङ्गच्छते । अन्यथा भावकर्मभ्यां कर्तृबाधसिद्धौ तद्व्यावर्त-कतया तत्सार्थक्यानुपपत्तेः । तेनान्यत्र समावेशज्ञापनाद्भव्यगेया-दिसूत्रे वाग्रहण नकर्तव्यम् । कर्तरि तेषां विधानेऽपि भावकर्मणोः समावेशोपपत्तेः । कर्तरिचर्षिदेवतयोरिति सूत्रे चकारः करण-समुच्चयार्थः समावेशाभावं ज्ञापयति ।

यद्यपि ऋषेः करणत्वे देवतायाश्च कर्तृत्वे प्रत्ययविधानात्स मावेशविरहान्न ज्ञापकत्वम् । तथापि यथासंख्यं नविवक्षितमिति वार्तिकाभिप्रायः । तयोरेवेत्येवकारस्तु समुच्चयार्थः । भावक-र्मणोः कृत्या भवन्ति । भव्यादीनां कर्तरिचेति वाक्यार्थः । भव्यादिसूत्र च नकर्तव्यमित्येके । कृत्यादयोऽनभिधानात्कर्तरि नभविष्यन्तीत्यन्ये । तदेवं वार्तिकानुसारी सिद्धान्तः ।

भाष्यकारास्त्वाहुः । असमावेशस्यापवादेनोत्सर्गबाधस्य न्याय-सिद्धत्वान्न ज्ञापकापेक्षा । उक्तरीत्या चकारस्य ज्ञापकत्वानुपप-त्तेश्च । यत्तु नानादेशत्वादिति तदसत् । शास्त्रेभिन्नकालीनाना-मपिअवान्तरवाक्यानां आकांक्षावशादेकवाक्यत्वदर्शनात् । द्विती-ये विहितस्य गोत्रेलुगचीत्यस्य लुकश्चतुर्थषष्ठ्योरलुगुत्तरपदे इत्य-पवादस्वीकारात् । तदुक्तहरिणा ।

अनेकाख्यातयोगेऽपि वाक्यं न्यायापवादयोः ।
एकमेवेष्यतेकैश्चिद्भिन्नरूपमिवस्थितम् ॥
नियमः प्रतिषेधश्च विशेषश्च तथासति ।
द्वितीये यो लुगाख्यातस्तच्छेषमलुकं विदुः ॥

एवकारस्तु समुच्चयार्थः । कर्तरिकृदित्येतदुत्तरं समावेशज्ञाप-

नार्थः । भव्यादिसूत्रे च वाग्रहणं नकर्तव्यम् । नचैवं दाशगोघ्नौ संप्रदाने इत्यादौ समावेशापत्तिः । आदिकर्मणि क्तः कर्तरि इत्येतावतासिद्धेऽपि चकारेणातःपरं समावेशो नास्तीति ज्ञाप्यत्वात् ।

इह सिद्धे शब्दार्थसंबन्धे इत्येतदुपपत्त्यर्थं भाष्ये विचारः । कार्यशब्दाभ्युपगमेनाद्यः । सिद्धशब्दाभ्युपगमेन द्वितीयः पक्षः । नचैवं ल्युनादीनां कृत्संज्ञानापत्तिः । तत्रापि करणे ल्युन्वर्तताम् इति वा । यत्स्वभावतो वर्तते तस्य साधुत्वमिति वेति विचारात् प्रतिप्रत्ययमधिकृतायाः कृत्संज्ञायाः ल्युनादौ प्रवृत्तेः । नाद्यः । काष्ठभिद्ब्राह्मण इत्यत्र दोषापत्तेः । तथाहिकाष्ठभेदइत्यण्वस्य योऽपि वचनादेव कर्तृवाची अकाराणां चविशेषाभावाद् ब्राह्मणशब्दादेरकारस्यापि वचनात्कर्तृवाचित्वे कृत्संज्ञाया स्वाद्युत्पत्तिः । प्रत्ययसंज्ञायां तन्निमित्ताङ्गसंज्ञाश्रय आर्द्धधातुकनिमित्तगुणश्च स्यात् । नचधातोर्विहितत्वाभावान्नार्धधातुकत्वम् । काष्ठशब्दो ह्यत्र कर्मोपपदम् । भिदिर्धातुः । तस्माच्च परोऽकार इति काष्ठभेदशब्दाद्विशेषाभावादयंधातोर्विहितो नायमिति दुर्घटत्वात् । तस्यापि कर्तृवाचकताया दुर्वारत्वात् । स्ववाक्यविहितानां प्रत्ययानां अनेनार्थविशेषे नियम्यत्वात् । नचाक्विपो लुप्तत्वाद्धातुरेव तत्र कर्त्रर्थे नियुक्तो नत्वकार इति वाच्यम् । यावकादिवद्विशिष्टस्यैव तदर्थतोपपत्तेः ।

ननुप्रज्ञानियमे दोषाभावः । नह्यत्राकारो लौकिकप्रयोगे कर्त्रर्थः किन्तु प्रतिषेधार्थं इतिकृत्प्रत्ययसंज्ञयोरप्रवृत्तिरिति चेन्न । विभक्ता भ्रातरः पीतागाव इत्यादौ स्वभावतः कर्तृवाचकस्य क्तस्य भ्रातृभिः गोभिश्च सामानाधिकरण्यात्कर्तरि साधुत्वापत्तेः । क्रियाकारकसंबन्धेन विभक्तानां कर्तरि वृत्तेरनभिमत

स्त्वात् । प्रत्ययनियमपक्षेतु गत्यर्थाकर्मकेत्यत्र परिगणिताभ्यः प्रकृतिभ्यः परस्य क्तस्य कर्तरि नियोगाद्व्रजिपिबत्योश्च तत्रापरिगणितत्वान्न दोषः । मैवम् । संज्ञानियमपक्षेऽपि गत्यर्थाकर्मकेति सूत्रव्यापारसद्भावात् । तेभ्यः परः क्तः स्वभावतः कर्त्रर्थः । कृत्प्रत्ययसंज्ञः इतिस्वीकारेण यथोक्तस्य क्तस्य कर्तरि साधुत्वानापत्तेः । तस्मात्तत्तद्भावतस्तत्तदर्थेषु वर्तमानाना प्रत्ययसंज्ञाविधानद्वारासाधुत्वमन्वाख्यायते इतिसिद्धम् । विभक्तपीतशब्दयोस्तु कर्मण्युत्पन्नयोरेव अर्शआदेराकृतिगणत्वाद्विभक्तं धन पीतमुदकं चास्त्येषामिति साधुत्वम् । अथवा धननिष्ठं विभक्तत्वं भ्रातृषु, उदकनिष्ठं पीतत्वंच गोष्वारोप्यते इतिदिक् ।

## भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्यावा ६८

एते कृत्यान्ताः कर्तरिवा निपात्यन्ते । पक्षे भावकर्मणोरपि । भवतीति भव्यः । भव्यमनेनवा । गायतीति गेयो माणवकः साम्नाम् । गेयानि माणवकेन सामानीति वा । रजनीयकोपनीयमोहनीयेति भव्यगेयादि पाठात्कर्तरि कृत्य इति वाचस्पतिमिश्राः । यद्यपि भव्यगेयादीना नियतानामेव सूत्रेण पाठान्नाकृतिगणोऽयम् । तथापि शिष्टप्रयोगप्राचुर्यात्तत्र पाठो द्रष्टव्यः । पाणिनि नैव कर्मप्रवचनीया इत्यनेन व्यभिचारस्य दर्शितत्वादित्युदयनाचार्याः । नच प्रवचनीयशब्दस्योक्तसूत्रे पाठादसंगतमेवैतदिति वाच्यम् । वर्तमानार्थ एवात्र तद्विधानात् । कर्मप्रवचनीयेत्यत्रतु भूते तस्येष्टत्वात् अतएव तत्र बाहुलकाद्भूते कर्तर्यनीयरिति कैयटादिभिर्व्याख्यातम् ।

# लः कर्मणि च भावे चाकर्मकेभ्यः ॥६९॥

चकार उभयत्र कर्तरीत्यस्यानुकर्षणार्थः । लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च । अकर्मकेभ्यस्तु भावे कर्तरि च स्युः । पच्यते पचति । भूयते भवति । इह ल इति प्रथमेति केचित् । आदेशापेक्षा षष्ठीति काचित् । लकारो द्विधा तिङ्भाव्यतिङ्भाविभेदात् । तत्रातिङ्भाविनः कृत्संज्ञाविरहात्कर्तरि कृदित्यस्यानुपस्थित्या स्वार्थे भावे । अतिङ् भाविनस्तु कर्तरि कृदिति वचनात्कर्तर्येव साधुत्वे प्राप्तेऽयमारम्भः ।

स्यादेतत् । भावकर्मणोरात्मनेपदस्य शेषात्कर्तरि परस्मैपदस्य च विधानाल्लकारस्य प्रयोगमनवायिना तदादेशानां वा भावकर्मकर्तारोऽर्था अनुमास्यन्ते । पदद्वयव्यतिरेकेण च लकारस्याप्रसिद्धेः । आम्रविषयस्य लस्य सत्त्वेऽपि तस्य लुकापहारात् । नच व्यवस्थापकाभावे सकर्मकेभ्योऽपि भावे लकारापत्त्या पच्यते यवागू देवदत्तेनेति प्रसङ्गः । भावकर्मणोरकर्मकादिति न्यासेन तदनापत्तेः ।

अकर्मकग्रहणंच सामर्थ्याद्भावार्थम् । अकर्मकाणां कर्मासंभवात् । तथाच लकारस्य भावोऽर्थोऽनुमीयमानोऽकर्मकविषय एवेतीष्टसिद्धिः । नच तत्राकर्मकग्रहणादेव गौरवम् । अत्रापि तत्सत्त्वात् । नच तयोरेवैतदर्थमत्राकर्मकग्रहणमावश्यकं तदेव लकारेऽप्युपकरोति इति वाच्यम् । कर्मणि भावेचाकर्मकेभ्य इत्येतावतो द्वाभ्यामत्र पठनीयत्वात् । त्वयात्र ल इति पदं पाठ्यम् । मयातु भावकर्मणोरित्यत्राकर्मकपदमिति । पदद्वयोपादानसा-

स्यात् । मात्रालाघवस्य तावदविवक्षितत्वात् । नच शानचा आत्मनेपदसञ्ज्ञत्वाद्भावकर्मणोरिति वचनात्तदुभयाभिधायित्वमात्रापत्तौ शयान इत्यादौ कर्तरि स न स्यात आरम्भपक्षेतु कर्तर्यपि शानच् सिध्यतीति वाच्यम् । अनुदात्तङित इत्यादिसूत्रैः कर्तर्यात्मनेपदविधानार्थैः तत्सिद्धेः ।

यद्वा भावकर्मणोरित्यस्यावकाशः आस्यते पच्यते तत्र कृत्संज्ञाविरहेण कर्तरि कृदित्यस्याप्रवृत्तेः । कर्तरिकृदित्यस्य तृजादिः आनस्य तूभयप्रसङ्गे परत्वात्कर्तर्येवोत्पत्तेः । नच परस्मैपादिभ्योऽपि कर्तरि तत्प्रसङ्गः । अनुदात्तङित एवात्मनेपदं नान्यस्मादिति नियमात्तद्व्यावृत्तेः । नचैवमनुदात्तङित इत्यस्य धातुविशेषे शानचो नियामकत्वेऽनुदात्तङिद्भ्यो विधायकाभावात्तङानौ न स्याताम् । एकवाक्यस्य विधिनियमोभयरूपत्वानुपपत्तेरिति वाच्यम् । अनुदात्तङित आत्मनेपदमित्येकस्य नियामकत्वात् । भावकर्मणोरित्यत्रानुवृत्तस्य द्वितीयवाक्यस्य च विधायकत्वात् ।

नन्वेवं भावकर्मणोरित्यनेन सहानुदात्तङित इत्यस्यैकवाक्यतायां अनुदात्तङिद्भ्यो भावकर्मणोरात्मनेपदं स्यादित्येको वाक्यार्थः । तेनास्यते गुरुणाऽपि शय्यते गुरुरित्यादि । स्वतन्त्रस्य तु अनुदात्तङित आत्मनेपदमित्यस्य नियामकत्वात परस्मैपदिभ्यो न शानच् । तथाच भूयते गम्यते इत्यादौ आत्मनेपद नस्यात । अनुदात्तङिद्भिन्नत्वात् । आस्ते शेते इत्यादौच कर्तरि तन्न स्यात् । विधायकाभावात् ।

नैवम् । योगविभागेन सिद्धेः । अनुदात्तङित आत्मनेपद भावकर्मणोः, तदुत्तरं कर्तरिचेति योगान्तरम् । इहानुदात्तङित इत्यस्यानुवृत्तिर्भावकर्मणोरिति निवृत्तम् । ततः कर्मव्यतीहारे कर्तरीत्यनुवर्तते । भावकर्मणोरनुदात्तङित इत्युभयमपि निवृत्तम् ।

ततश्च कर्तरिचेति सूत्रेण अनुदात्तङित्भ्यः कर्तर्यात्मनेपदविधानम्। नेर्विशइत्यादिवाक्यैस्तङानाना कर्तरिविधानात्सर्वमुपपन्नमितिप्राप्ते।

सिद्धान्तः उक्तविप्रनिषेधाद्दानस्य कर्तर्येव प्रसङ्गात् । भूयमान गम्यमानमित्यादौ भावकर्मणोस्तदनुपपत्तेः इह लग्रहणे क्रियमाणे तु तस्य षष्ठ्यन्तत्वपक्षेऽस्यावकाशस्तिङ् कर्तारकृदित्यस्य तृजादिः परत्वादनेनैवानस्यार्थनिर्देश इति भावकर्मकर्तृषु व्यवस्थया तत्सिद्धिः । प्रथमान्तत्वपक्षे तु अस्यावकाशस्तिङ् भावी लकारः। कर्तरि कृदित्यस्य पूर्वोक्त एव । आनभाविनस्तु लकारस्य परत्वादनेनैवार्थव्यवस्थेति न कश्चिद्दोषः । नचैवं भावकर्मणोरपि शतृकम् स्यातां परत्वादस्यैव प्रवृत्तेरिति वाच्यम् । कर्तर्येव परस्मैपदमिति नियमात्तदभावात् ।

ननु लङादि षष्ठीनिर्देशपक्षे आमइति लुग्विषयस्य लस्यार्थनिर्देशो नस्यात् । मैवम् । लुकोऽप्यादेशत्वेनार्थनिर्देशसिद्धेः । अचः परस्मिन्नित्यत्र लोपस्याप्यजादेशस्य स्थानिवद्भावस्य दर्शितत्वात् । नचाभावरूपादेशस्यार्थाभिधानानुपपत्तिः । क्विबादिवत्प्रयोगसमवायाभावेऽपि प्रतिज्ञयार्थवत्त्वानुमानात् । अनुप्रयोगेण च तदर्थाभिव्यक्तेः । अन्यथा कर्तरिकृदित्यस्यापि क्विबादावप्यप्रवृत्तिप्रसङ्गात् ।

यत्तु जसन्तत्वे श्रुतेनैव सबन्धः । षष्ठ्यन्तत्वे त्वादेशाध्याहारे गौरवमिति तदसत् । प्रयोगसमवायिनामर्थाभिधानप्रत्यासत्त्या आदेशशक्तिवादिनां नेषमादेशद्वारकस्यैवार्थनिर्देशस्वीकारेणच तस्यादोषत्वात् । तस्माद्भावकर्मकर्तारोऽर्थाः । अतएव तदनभिधानाभिधानप्रयुक्तविभक्तिव्यवस्थेति प्रपाञ्चितमनभिहितसूत्रे इतिवैयाकरणानां सिद्धान्तः ।

नैयायिकास्तु कृतिरेवाख्यातार्थः कृत्याश्रये शक्तौ कृतिः

शक्यतावच्छेदिका कृतित्वं शक्यतावच्छेदकतावच्छेदकमिति गौरवम् । कृतेः शक्यत्वे तु कृतित्वं शक्यतावच्छेदकमिति लाघवम् । प्रथमान्तपदादेव तल्लाभाच्च । कृतेराश्रयत्व-संसर्गेण चैत्रादावन्वये कृत्याश्रयश्चैत्र इति वाक्यार्थतया कृत्याश्रयप्रतीतेः ।

यत्तु शतृशानचादीनामपि लादेशत्वात् कृतिमात्रे शक्त्यापत्त्या नामार्थयोर्भेदान्वयानुपपत्त्याश्रयत्वंसंसर्गतया भानानर्हत्वात्कर्तृपरत्वं त्वयापि वाच्यम । तथाच त्वन्मते स्थानिन एव वाचकत्वात्तिङन्ते तस्य कथं कृतिमात्रपरत्वमिति । तत्पस्पशायामेवानेकधा निरस्तम् ।

यदप्युक्तम् । नामार्थयोरभेद एव संसर्ग इति कृतां कर्तृवाचकत्वे बीजम् । तत्पचतिकल्पं पचतिरूपमित्याद्यनुरोधात्तिङाम्... प्यविशिष्टम् । तद्धितान्तस्य प्रातिपदिकत्वात् । तिङ्प्रत्ययस्य नामत्वं नेत्यभिधाने चाकस्यापि तदभावात् । अकान्तं नामेत्युक्तौ च कल्पबाद्यन्तं नामेति तुल्यत्वादिति ।

तदसत् । यदन्तत्वं नामत्वप्रयोजकं तद्वाच्यत्वस्य नामप्रयोजकत्वात् । भेदान्वयो नस्यादिति तत्राश्रयपरत्वम् । पचतिकल्पमित्यादौ तु तद्धितान्तत्वं नामत्वप्रयोजकं तद्वाच्यत्वं कृतेर्नास्ति किन्तु तिङ्वाच्यत्वमेवेति नामार्थत्वाभावादाश्रयत्वस्य संसर्गतायां बाधकाभावात् । नामसञ्ज्ञापन्नसमुदायान्तर्गतयत्किञ्चिच्छब्दार्थत्वस्यैव नामार्थत्वे तु धातोः खण्डशक्तिस्वीकारेण फलस्य जनकत्वसंसर्गेण व्यापारे विशेषणत्वम् । तत्रच तिङर्थस्येति स्वसिद्धान्तोऽपि त्वया पचति कल्पमित्यादौ कथमुपपादनीयः । फलव्यापाराश्रयाणां नामार्थत्वापत्त्या परस्परभेदसंसर्गेणान्वयानर्हत्वात् । तथाच ।

फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः ॥
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ।
इत्यादि प्रस्थित स्यादिति माधुस्वमतस्थापनम् ।

यदप्युक्तं शाब्दिकमते आश्रय एवातिङर्थः फलव्यापारयोर्धातुत एव लाभात् तत्र क्वचिद्व्यापारस्यान्वयः क्वचित्फलस्य आश्रयत्वं चाखण्डमेव शक्तिरूपमवच्छेदकमिति नकृत्यादिप्रवेशप्रगौरवशङ्केति ।

तदप्यसत् । चैत्रः पचतीत्यत्र कर्मणश्चैत्रेण पच्यते इत्यत्र च कर्तुरप्यभिधानापत्तेः । नच फलांशे विशेषणीभूत आश्रयः कर्मत्वपदस्य, व्यापारांशे विशेषणीभूतश्च कर्तृप्रत्ययस्यार्थ इति वाच्यम् । फलव्यापारविशिष्टाश्रयस्य वाच्यत्वे कर्मकर्त्रोर्वाच्यत्वापत्तेः । फलव्यापारयोरुपलक्षणत्वे तु अनुगतोपलक्षकनावच्छेदकाभावात् ।

अथ वस्तुतः कर्तृशक्तिव्यतिरिक्ता कर्मशक्तिः तथाचाश्रयपदेनोभयोरभिलापेऽपि कर्मकर्तृशक्तिरूपाश्रयाभिधानानभिधानाभ्यामेव व्यवस्थेति चेत्मैवम् । शक्तिमात्रस्य तदर्थत्वे चैत्रादेस्तद्धर्मिणस्तदभेदान्वयानर्हतया त्वदभिमतस्य युष्मद्युपपदेत्यादिप्रतिपाद्यसामानाधिकरण्यस्य विलयापत्तेः ।

अथ शक्तिः कारकमिति पक्षस्यान्यमतत्वेनैवाकरग्रन्थेषूपन्यासो नसिद्धान्ततयेति सामानाधिकरण्यमुपपन्नम् । अन्यथा कर्तरि कृदित्युक्त्या शानजादेरपि शक्तिमात्रवाचित्वे सामानाधिकरण्यानुपपत्तेः । नित्याः षड् व्यक्तयोऽन्येषामिति वाक्यपदीयेऽन्यतमत्वाभिधानाच्च । धातूपात्तव्यापाराश्रयस्य कर्तृत्वेनतादृशफलाश्रयस्य कर्मत्वेनोक्तत्वाच्च । स्वातन्त्र्येण शक्तिप्रतीतेरसिद्धेश्चेदुच्यते तर्हि तिङन्त आश्रयो नखण्ड इति गौरवं दुर्वारम् । आश्रयत्वस्याखण्डशक्तिरूपत्वं तु नाकरग्रन्थसिद्धम् । शक्तेरेवाख-

ण्डताया भाष्यादिसिद्धत्वात्। तत्पक्षस्य चेदानीं त्वया परित्यागात्।

अथाधारत्वरूपमाश्रयत्वमनतिरिक्तमिति पक्षेणेदमुक्तम्। नतु शक्त्यभिप्रायेणेति चेत्। न। अखण्डशक्तिरूपमिति स्वोक्तिविरोधात्। तृतीयादिविभक्तेरप्याश्रयमात्रार्थत्वे तस्याः कर्त्रादित्वाचकत्वव्यवहारासिद्धेः। कर्तृकरणयोस्तृतीयेत्यादि शास्त्रविरोधाच्च। व्यापाराश्रये फलाश्रयेच कर्तृकर्मपदद्वयस्य आश्रयमात्रपरत्वस्य त्वयाप्यङ्गीकारात्तन्निस्थल कृतिमात्रपरत्ववादिना मते दोषदानानुपपत्तेश्च। एकदेशपरताया उभयत्रापि सत्वात्। नचममोभयत्राप्येकदेशपरत्व तव त्वेकत्रेति वाच्यम्। उभयत्र त्वेकदेशपरत्वापेक्षया एकत्र तत्परताया एव न्याय्यत्वात्। इत्यसाधु स्वमर्मोद्घाटनम्।

किञ्च शक्तिः कारकमिति पक्ष एवाकरे सिद्धान्तः। सप्तमीपञ्चम्याविति सूत्रे कारकमध्यतायाः सूत्रकृतैवोक्तत्वात्। भाष्यकृता तत्पक्षेणैव समाधानाच्च। समानकर्तृकेत्यादेः शक्तितद्वतोरभेदोपचारेणैव वृत्तिन्यासकैयटादिमहाग्रन्थेषूपपादनाच्च। अनभिहितसूत्रे शक्तिपक्षमाश्रित्यैव व्याख्यानाच्चेति स्पष्टमेवाकरज्ञानाम्।

एतेन सामानाधिकरण्यानुरोधेन कर्त्रादेर्वाच्यत्वमित्यपि निरस्तम्। शक्तेः कारकत्वे त्वन्मतेऽपि भिन्नाभ्यां धर्माभ्या एकधर्मिबोधकत्वरूपसामानाधिकरण्यस्यानुपपत्तेः। एकनिष्ठधर्मवाचकत्वस्य मन्मतेऽपि सुलभत्वात्। कृतिमात्रवाचकत्वे कर्तुरनभिहितत्वात्तृतीयापत्तिरिति तु बालप्रलापः। आश्रयमात्रपरत्वेऽपि पर्यनुयोगसाम्यात् विशिष्टानभिधानस्योभयत्राप्यविशेषात्। आश्रयानभिधानमेवकर्त्रनभिधानमितिचेत् कृत्यनभिधानमेव तदि-

ति सुवचत्वात् ।

एतेनाभिहितेप्रथमेत्यादिवार्तिकोक्त्या कर्तुर्वाच्यत्वमप्यपास्त-म् । शक्तेरेवानभिधानस्य तत्राभिमतत्वात् ॥

प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।

इति वाक्यपदीयकैयटाद्याकरग्रन्थलेखात् । तस्माच्चैत्रेण प-च्यते तण्डुल इत्यत्र तृतीयार्थो व्यापारो, धात्वर्थः कृतिः, आख्या-तार्थः फल,जन्यत्वं संसर्गः । चैत्रवृत्तिकृतिजन्यफलशाली तण्डुल-इति बोधः ।

आचार्यास्तु अनभिहितायां कर्तृसंख्यायां तृतीया कर्मसं-ख्यायां द्वितीया । कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमिति सं-ख्याया विभक्त्यर्थतापक्ष एवानभिहिताधिकारस्य सार्थक्यात् । कर्मत्वादीनां विभक्त्यर्थत्वपक्षे एतत्प्रत्याख्यानस्य भाष्यसिद्ध-त्वात् । नच चैत्रस्तण्डुलं पचतीत्यत्र चैत्रमख्यैवोच्यते इत्यत्र नि-यामकाभावः । चैत्रः शाकसूपौ पचति शाकसूपौदनान् पचति चैत्रेण शाकः पच्यते शाकसूपौ पच्येते इत्यादौ विरुद्धसंख्याव-रोधदर्शनात्कर्तृकर्मणोर्यथाक्रममाख्यातार्थसंख्यान्वयदर्शनादुभयो रेकवचनान्तत्वेऽपि तदन्वयावधारणात् । एकत्र निर्णीतः शास्त्रा-र्थोऽन्यत्रापि तथेति न्यायात् ।

अतएव यवमयश्चरुर्भवति इत्यादौ वाक्यशेषाद्दीर्घशूकादिपर त्वेन निर्णीतस्य यवादिपदस्य वैमतीभिरद्भिर्यूपं प्रोक्षति इत्यादौ वाक्यशेषाभावेऽपि तत्परत्वमेति सिद्धान्तः । नच प्रथमार्थसंख्या-न्वयेनैवोपपत्तौ तिङां संख्यावाचकत्वे मानाभाव इति वाच्यम् । प्रथमायाः साधुत्वार्थतया तस्या एव संख्यानभिधायित्वापत्तेः । एकवचनत्वरूपवाचकतावच्छेदकमाम्यात् ।

सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम् ।

इति भाष्यवार्तिकरूपशक्तिग्राहकमत्त्वात् । चैत्रमैत्रादयो गच्छन्तीत्यादौ सम्बोऽन्यस्यैकत्वाद्यनन्तगमप्रसङ्गाच्च । तत्राख्या-तार्थमख्यान्तरस्यानुन्मत्तेन दुर्वचत्वात् । उभयोरपि सख्यावाञ्चकतायाः प्रामाणिकत्वात्(१) ।

अन्यथोत्तरसूत्रे कर्तरिचेऽन्यस्यानुपपत्तेः । अकर्मकेभ्यो भावे सकर्मकेभ्यस्तु कर्मणीत्यर्थः । चैत्रेण शयितव्यम् । पक्तव्य ओदनः एवकारो व्याख्यातः ।

## आदिकर्मणि क्तः कर्तरि च ७१

निष्ठेतिसूत्र आदिकर्मणि निष्ठोक्ता, सा कर्तरि यथायोगं भावकर्मणोश्च स्यात् । प्रकृतः कटं देवदत्तः । प्रकृतः कटश्चैत्रेण । शयितं देवदत्तेन ।

## गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ७२

क्तः पूर्ववत् । गङ्गां गतः । गङ्गां प्राप्तः । पक्षे प्राप्ता गङ्गा तेन । 'यत्र सुप्तो नकंचन कामं कामयते' । लक्ष्मीमाश्लिष्टो हरिः । पक्षे तु यथा प्रियया।श्लिष्टो न बाह्यं किंचन वेदाशेषमाविशायितः । अन्यथाऽकर्मकत्वादेव सिद्धेः । एवमन्यत् ।

## दाशगोघ्नौ संप्रदाने ७३

दाशन्ति तस्मै दाशः । गां हन्ति तस्मै गोघ्नोऽतिथिः ।

---

(१) 'अत्र तयोरेवकृत्यक्तखलर्थाः' इति सूत्रं तद्व्याख्यानं च किंचित् सर्वत्र मूलपुस्तकेषु खण्डितम् ।

तद्यथा राजन्यस्मिन् वार्हत्यागत उक्षाणं वा वेहतं वाक्षदन्त इति श्रुतेः ।

# भीमादयोऽपादाने ॥ ७४ ॥

बिभ्यत्यस्मादिति भीमः । भीष्मः । भयहेतुरित्यर्थः प्रस्कन्दनः प्ररक्षः । चमूः । खलतिः ।

# ताभ्यामन्यत्रोणादयः ७५

संप्रदानादपादानाच्चान्यस्मिन् कारके उणादयः स्युः । ततोऽसौ भवति तन्तुः । वृत्त तदिति वर्त्म । चरित तदिति चर्म ।

# क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ॥७६॥

एभ्योऽधिकरणे क्तः स्यात् । पक्षे यथाप्राप्तम् । ध्रौव्येत्यकर्मकाणामुपादानम् । ध्रुवचेष्टितयुक्तीसत्र ध्रुवयुक्तिपदेनाकर्मकोपादानात् । आस्यतेऽस्मिन्नित्यासितम् । गम्यतेऽत्र गतम् । भुज्यतेऽत्र भुक्तम् । पक्षे आसितो मुकुन्दः । आसितं तेनेत्यादि ।

# लस्य ॥७७॥

वक्ष्यमाणादेशाना स्थानिनिर्देशोऽयम् । नच वर्णग्रहणेऽर्थवत्परिभाषानवकाशात् लुनाति चूडाल इत्यादावतिप्रसङ्ग इति वाच्यम् । धातोरित्यनुवृत्तेः । तच्च निर्दिष्टविशेषणम् तेनाग्निचिल्लुभते इत्यत्र नापत्तिः । नच शामामालिभ्यो ल इतिधातोर्विहिते क्प्रत्ययेऽतिव्याप्तिः । अव्युत्पत्तिस्वीकारात् । नच चन्दन-

इत्यादौ ल्युटि दोषः। इत्संज्ञया बाधात्। लोपे कृते स्थान्यभावात्। अल्विधौ च स्थानिवत्त्वनिषेधात्। नचात्रापि इत्संज्ञाप्राप्तिः। प्रयोजनाभावात्। नच लित्स्वर एव प्रयोजनम्। ल इद्यस्येति बहुव्रीहिणा यदवयवस्य लस्येत्संज्ञा तादृशसमुदायस्योपादानात्।

ननु कर्मधारयाश्रयणे इत्संज्ञायां कृतायामपि लानुवादेन तिबादिविधानसामर्थ्यात् लोपाभावात् भावाद्यनुवृत्त्या तदर्थस्य लस्यादेशविधानासंभवादकृतलोपानामेव तिबाद्यादेशाः सन्तु इति चेन्न। तथापीत्संज्ञावैयर्थ्यात्। णलो लित्करणेन लादेशेषु लित्कार्यं नभवतीति ज्ञापितत्वात्। यद्वा अनुनासिकस्य लकारस्यात्र स्थानित्वेनोपादानम्। यद्वा ल इति लुप्तषष्ठीकम्। अस्येति सर्वनाम्ना भावाद्यर्थवाचकस्य परामर्शः।

## तिप्तस्झिसिप्थस्थमिब्वस्मस् तातांझथासाथांध्वमिड्वहिमहिङ् ॥७८॥

एतेऽष्टादश लादेशाः स्युः। अत्र समाहारद्वन्द्वः। पृथक्पदत्वं वा। पकारोऽनुदात्तार्थः। ङित्त्वाभावार्थश्च। इटष्टकार इटोऽदित्यत्र विशेषणार्थः। इकारमात्रोपादाने वहिमहिङोरिकारस्याप्यदादेशापत्तेः। ङकारस्तिङ्तङ्प्रत्याहारार्थः। समुदायस्यानुबन्धो नत्ववयवस्य व्याख्यानात्। तेन सुपः पकारस्यावयवानुबन्धस्यैव प्रत्याहारोपयोगेऽपि नक्षतिः। तेन संपप्रच्छिमहे संवव्रश्चिमहे इत्यादौ नसम्प्रसारणम्। इषेः कर्मण्याशीर्लिङि प्र

पिपीमहीत्यत्र क्ङितिचेति गुणनिषेधो न ।

# टित आत्मनेपदानां टेरे ॥७९॥

टितो लस्यादेशानामात्मनेपदानां टेरेत्वं स्यात् । एधते एधेते एधन्ते इत्यादि । अथ पवमान इत्यादौ एत्वापत्तिः । नचङो गाङादेशस्य ङित्त्वेन सानुबन्धकस्यादेशवचने इत्कार्याभावस्य ज्ञापितत्वाददोषः । टित्वस्यात्र लकारविशेषणत्वेनोपादानात् । आत्मनेपदविशेषणत्वाभावात् । नच टितामात्मनेपदानामित्यपि कैश्चित्पाठानिर्वाहः । अकुर्वीत्यत्र उत्तमैकवचनस्यइटोऽपि एत्वापत्तेः । टितो लकारविशेषणत्वे तु लङादेशत्वे तत्र दोषाभावात् । ननु तस्य ङित्वमेव इडोऽदित्येव पठनीयम् । अन्यथा लविषीष्टेत्यादावागमस्यापीटोऽद्रादेशत्वापत्तेः । मैवम् । इषमूर्जमहमित आदीत्यत्रदाञो लङ उत्तमैकवचने छन्दसि वेति द्विर्वचनाभावे आतोलोप इटिचेत्यस्यानुपपत्तेः । छन्दस्युभयथेति इट आर्द्धधातुकत्वम् । तस्माट्टिदेवायम् । नचैवमागमत्वापत्तिः । टित्त्वस्यागमलिङ्गत्वादिति वाच्यम् । लस्येति मण्डूकप्लुतिः षष्ठ्यावयवावयविभावसम्बन्धबोधकत्वे इट एत्वानुग्रहापत्त्या भूयसामनुग्रहस्य न्याय्यत्वात् । स्थान्यादेशभावसम्बन्धस्यैव बोधनात् । तदनुरोधेनेटोऽप्यादेशत्वात् । नचलविषीष्टेत्यत्र दोषः । वलाद्यार्धधातुकाङ्गापेक्षस्येटो बहिरङ्गस्य लिङ्सम्बन्धापेक्षेटोदिशादेशे कर्तव्येऽसिद्धत्वात् । तस्मात्पवमान इत्यादौ एत्वं दुर्वारमिति पूर्वपक्षः ।

सिद्धान्तस्तु तिबादीनामिहानुवृत्त्या आत्मनेपदरूपाणां तेषां टेरात्वं विधीयते । यद्वा प्रकरणवशात्तिबादीनामेवात्मनेपदशब्देनोपादानादिति कैयटः । एतेन टितस्तङामित्येव पठनीयमिति शङ्का

व्याख्याता ॥

अत्रवार्तिकम् ।

आनेमुक्ज्ञापकं त्वेत्त्वे टित्त्वङामिति सीरिच ॥

डारौरस्तु टिदाटितः प्रकृते न गुणे कथम् ।

अस्यार्थः यद्येत्त्वमानस्य स्यात् तर्हि आनेमुगिति न स्यात् । आनयि मुगित्यापत्तेः । तेन टितः स्थाने य तङस्तदपवादत्वम् नत्वानस्यापीति ज्ञाप्यते । एवमप्यध्येतेत्यादौ डारौरसा कुतो नभवतीत्याह । इशि सीरिच इति । लिटस्तझयोरेशिरेच् थासः स इति सूत्राभ्यां लाघवार्थं इशि सि इरि च इत्यादेशा विधेयाः। एत्वस्य टित इत्येव सिद्धेः । तस्मादेकारविशिष्टादेशविधानं लादेशानामेत्वाभावज्ञापनार्थम् । टिदाटित इति अकुर्वीत्यत्र समाधानम् । आटितो लङः स्थाने यदित्त इट् तस्य एत्व न भवति । प्रकृते तङ्येतद्विधानादानस्य तङ् प्रत्याहारबहिर्भावात् । गुणे कथमित्युत्तरार्थम् । पचावेदमित्यत्राद्गुणे कृते एनए इत्येत्वं कुतो न भवतीति प्रश्नः । उत्तरतु तत्रैव वाच्यम् ।

# थासः से ॥ ८० ॥

टिल्लकारादेशस्य थासः से स्यात् । एधसे । टितः किम् । एधथाः ॥

# लिटस्तझयोरेशिरेच् ॥ ८१ ॥

लिडादेशयोरनयोः क्रमादेतौ स्तः । चक्रे चक्रिरे । शित्वं सर्वादेशार्थम् । चकारोऽन्तोदात्तार्थः ।

# परस्मैपदानां णलतुसु-

# स्थलथुसणल्वमाः ॥ ८२ ॥

लिडादेशाना नवानां तिबादीना क्रमादेते स्युः । बभूव बभूवतुरित्यादि ॥

"णलः शित्करण मर्वादेशार्थम्" अन्यथाऽलोन्त्यस्य स्यात्। नच णकारेणानेकाल्त्वादेव तत्सिद्धिः विनिगमकाभावात् । नानुबन्धकृतमनेकाल्त्वमित्यभ्युपगमाच्च । इदं न प्राग्लादेशाद्धा-त्वधिकार इतिपक्षे । अन्यथा तु आदेः परस्येति प्रसंजनीयम् । यद्यपि णकारात्पूर्वंशकारोच्चारणे प्रत्ययादित्वाभावाण्णकारस्य मध्येतु शकारस्य अन्ते तु लकारस्य इत्संज्ञानापत्तिः । तथापि ल-श् विधेयः । लशुत्तमो वेति पठनीयम् । णल् शिद्वदित्यतिदेशो वा वाच्य इतिवार्तिकाभिप्रायः । नचवृद्ध्यर्थं णित्वस्यावश्यक-त्वम् । गोतोणित् लश् लश्च णिद्वद्भवति तत उत्तमोवेति । योग-विभागेन सिद्धेः । मैवम् । लित्स्वरार्थमावश्यकेन लकारेणैव सिद्धेः।

ननु प्रत्ययस्य पित्वादनुदात्तत्वे धातोरन्तोदात्तत्वे तदुत्तरद्वि-र्वचनप्रवृत्तेरान्तरतम्यादन्तोदात्तादेशेनैव सिद्धेर्लित्स्वरस्यात्र प्रयो-जनाभावः । नच व्यपदेशिवद्भावे(न) नान्तोदात्तत्ववदाद्युदात्तत्व-स्यापि सत्त्वात्तदापत्तिरिति वाच्यम् । स्थानिवदित्यस्य शास्त्रातिदे-शतया धातोरिति शास्त्रेणान्तोदात्तस्यैवसिद्धेः। धातोराद्युदात्तविध्य-भावात् । मैवम् । स्थानिवदिति कार्यातिदेश इति सिद्धत्वात् । द्विः प्रयोगो द्विर्वचनंषाष्ठमिति स्थानिनो द्विर्वचनाभावेनोभयोर-न्तोदात्तापत्तेश्च । तस्माल्लित्स्वरो ऽवश्यमपेक्ष्यः । अनेकाचि तु धातौ अन्तोदात्ते शेषनिघाते च प्रथमैकाचो द्विर्वचनं सर्वानुदा-त्तमिति विशेषाभावात् । एकाचि धातौ लित्स्वरो बोध्यः । म-ध्यमपुरुषबहुवचनादेशस्याकारस्य यथा सर्वादेशत्व तथोक्त धा-

णोरित्यधिकारसूत्रे ।

## विदो लटो वा ॥ ८३ ॥

विद ज्ञाने इत्यस्मात्परस्य लटो णलादयो वा स्युः । वेद विदतुः विदुः । व्यवस्थितविकल्पान्न द्वित्वम् । पक्षे वेत्ति वित्तः विदन्ति इत्यादि ॥

## ब्रुवः पञ्चानामादित आहो ब्रुवः ॥ ८४ ॥

ब्रूञ् व्यक्तायां वाचि । अस्मात्परेषां तिबादीनां पञ्चानां क्रमाण्णलादयः पञ्चादेशाः स्युर्ब्रुवश्चाहादेशः । आह आहतुः । आहुः । आत्थ आहथुः । अस्य भूतार्थे प्रयोगस्तु भ्रममूलक इति वामनादयः ।

## लोटो लङ्वत् ॥ ८५ ॥

लोट इत्युपमेये षष्ठीदर्शनाल्लङ इवेति षष्ठीसमर्थाद्वतिः । तेन लङो यत्कार्यं तस्यातिदेशो नतु लङि परे विहितस्येति । 'लुङ् लङ् लृङ् क्ष्वडुदात्तः 'आडजादीना' मित्यनयोर्लोटि न प्रवृत्तिः । स्यादेतत् । यान्तु पान्तु इत्यादौ लङः शाकटायनस्यैव जुस्स्यात् नचात्र बाधकम् । स्थानिवत्त्वेनोपादानात् । वान्तो यिप्रत्यये इत्यादौ तथैव भाष्यादिभिः समाहितत्वात् । विशेषणविशेष्यभावव्यत्यासेन तदन्तविधिना सकारान्तस्य ङित्लकारोऽप्यस्येति व्याख्यायालोऽन्त्यपरिभाषया सकारलोपपर्यवसानस्य गौरवग्रस्तत्वात् ।

# (१) इतश्च ॥ १०० ॥

ङिल्लकारादेशेषु परस्मैपदेषु इकारस्य लोपः स्यात् । नन्वत्र भवेदित्यादौ यासादेशस्य इकारस्य लोपापत्तिः । नचेयादेशव्याख्यानादत्रत परत्वान्न दोषोऽतएवाबोभवीदित्यादावीटोऽपि लोपप्रसङ्गो नेति वाच्यम् । अरुदितामित्यादौ तथापि दुर्वारत्वात् । मैवम् । इत इत्यनुवर्त्य इद्रूपस्येतो लोप इत्यर्थात् । विशेषणस्य च अत्यन्तत्वमर्थस्तत्र तादृशस्यैव लोपविधानात् । अन्यथा विशेषणवैयर्थ्यात् । परस्मैपदेष्विति सप्तम्यन्तस्य षष्ठ्येकवचनान्तत्वेन विपरिणामं कृत्वा इकारान्तं यत्परस्मैपदं तस्येति व्याख्याने विभक्त्यंशे वचनांशे च भङ्गाश्रयणे गौरवात् ।

# तस्थस्थमिपां तांतंतामः ॥ १०१ ॥

ङित्सम्बन्धिनां तसादीनां क्रमात्तामादयः स्युः । अभवतां अभवतं अभवत अभवम् ॥

# लिङः सीयुट् ॥ १०२ ॥

परस्मैपदेविशेषविहितेन यासुटास्य बाधादात्मनेपदेऽस्य प्रवृत्तिः । नच यथा कृषीष्ठा इत्यादौ सुटि कृते सीयुड् भवति, तथा यासुटि कृतेऽपि स्यात्, यासुटो लिङ्भक्तत्वात्तदादेः सीयुटो विरोधाभावात् इति वाच्यम् । विशेषविधेर्विरोधाभावेऽपि सामान्यविधिबाधकत्वात् । दधितक्रयोस्तथा व्युत्पत्तेः । सुटि तु वैषम्यं वक्ष्यामः । भवेत् । टकारो देशविशेषार्थ उकार उच्चारणार्थः ।

(१) अत्र ग्रन्थकृताऽष्टाध्यायीक्रमेण न व्याख्या कृताऽतोऽत्राष्टाध्यायीक्रमेण स्थापिताङ्कानां व्युत्क्रमो न मन्तव्यः ।

## यासुट् परस्मैपदेषूदात्तो ङिच्च ॥१०३॥

लिङः परस्मैपदानां यासुट् स उदात्तो ङिच्च । चिनुयुः सुनुयुः । उदात्तवचनं आगमानुदात्तत्वज्ञापनार्थमिति सर्वाश्चागमा अनुदात्ताश्चेति सूत्रे ।

## किदाशिषि ॥१०४॥

आशिषि लिङो यासुट् कित्स्यात् । भूयात् । गुणनिषेधस्य ङित्त्वेन सिद्धत्वादिज्यादित्यादौ वचिस्वपियजादीनां किताति संप्रसारणार्थम् । जागर्यादित्यत्र जाग्रोऽविचिण्णल्ङित्सु इति गुणार्थं च कित्त्वारम्भः ।

## झस्य रन् ॥१०५॥

लिङो झस्य रन् स्यात् । यजेरन् । झोऽन्त इत्यस्यापवादः ।

## इटोऽत् ॥१०६॥

लिङुत्तमैकवचनस्येटोऽदादेशः स्यात् । लभेय । इडागमाभिमसङ्गपरिहारः प्रागुक्तः । नच नाविभक्तावित्ति तकारस्येत्संज्ञानिषेधापत्तिः । तकारस्योच्चारणार्थत्वादेशाननयवत्वात् ।

## सुट् तिथोः ॥१०७॥

लिङसकारथकारयोः सुट् स्यात् । उकार उच्चारणार्थः । भवि-

षीष्ट । नच सीयुटो यासुटेऽनेन बाधापत्तिः । लिङः सीयुट् तथयोः सुडिति विषयभेदात् । अतएव लिङो विशेषणत्वं न व्याख्यातम् । सुटोऽपि लिङ्विशेषणत्वापत्त्या सुटा सीयुटो बाधापत्तेः ।

## झेर्जुस् ॥ १०८ ॥

लिङो झेर्जुस् स्यात् । झोऽन्तापवादः । भवेयुः ।

## सिजभ्यस्तविदिभ्यश्च ॥१०९॥

अलिङर्थ आरम्भः । वेत्तेरत्र ग्रहणम् । अन्यत्र विकरणव्यवधानेन झेः परत्वासंभवात् । लाभसत्तार्थयोस्त्वात्मनेपदित्वेन झेरेवासंभवात् । अभ्यस्तविदिग्रहणमसिजर्थम् । ङित इत्यनुवृत्त्या लडादावतिप्रसङ्गाभावः । सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्सबन्धिनो झेर्जुस् । अचेतिषुः अजुहवुः । अविदुः । इह वेत्तिसाहचर्यादभ्यस्तपरस्यापि लङादेशस्यैव झेरयमादेशः । परसाहचर्यस्य बलीयस्त्वात् । तेनापीपचन्नित्यादौ नेति प्रागुक्तम् ।

## आतः ॥११०॥

ननु सिचः परस्य झेराकारान्तात्परस्यैव जुसिति नियमे अकार्षुरित्यादि नस्यात् । नह्ययं सिजाकारान्ताद्विहितो नापि परो रेफेण व्यवधानात् । नचैवं पूर्वसूत्रे सिचः परस्य झेर्जुस्विधानानर्थक्यम् । अगुरस्थुरित्यादौ सावकाशत्वात् । मैवम् । आकारान्तात्सिचश्चेत्युभाभ्यां परत्वस्य बाधात्सिचः परत्वं प्रत्ययलक्षणेन, आकारान्तात्तु श्रुत्येत्यवश्यं वाच्यम् । तथाच तुल्यजातीयविषयतया सिज्लुकि आदन्तात्परस्यैव झेर्जुमादेश इति नियमवाक्यार्थः । अकार्षुरित्यादौ तु सिचः श्रूयमाणत्वान्न दोषः । न-

नु सिच निवर्त्य विध्यर्थमेवेद स्यात् । नैवम् । अभूवन्नित्यत्र प्रत्ययलक्षणेन सिजभ्यस्तेति जुसापत्तेः । लङादेशस्य झेर्ग्यग्रहणात्त्विति त्यादौ जुसादेशोऽनेनव सिद्धे उत्तरसूत्रे लङ्ग्रहणं व्यर्थम् । अन्येषां मते अयान् इत्याद्यपि यथा स्यात् । सिजनुवृत्तिपक्षस्य नियमार्थत्वे तु लङो झेर्जुस्भावस्यापाप्त्या लङः शाकटायनस्यैवेत्येतावतैव पाक्षिक जुस्भावोपपत्त्या एवकारस्यानुपादाने लाघवम् । नच नियमस्वभावादेवकारार्थलाभे तत्रैवकारग्रहणं मयापि नकार्यमिति वाच्यम् । लङ एव शाकटायनस्येति विपरीतनियमवारणार्थं तदावश्यकत्वात् । अन्यथा लुङि शाकटायनस्य जुसभावे विकल्पापत्तेः । लङि च जुसो नित्यत्वापत्तेः । किंच नियमपक्षे उत्तरसूत्रे लङ्ग्रहणमनावश्यकम् । तस्य ङिन इत्यनुवृत्त्यैव सिद्धेः । नह्याकारान्तात्परो लङ्भिन्नो ङित्संभवति । लुङि अगुरित्यादेः पूर्णैव सिद्धेः । लिङ्लृटोश्च विकरणागमैर्व्यवधानात् । क्रियमाणं तु तदतिदेशेन लङ्समाश्रित्य तद्भिन्नेरमव्रत्त्यर्थम् । तेन लोटो लङ्वदित्यतिदेशेऽपि झेर्जुसोऽनापत्तिः ।

## लङः शाकटायनस्यैव ॥११११॥

आतः परस्य लङो झेर्जुस् । अयुः । अयान ॥

## द्विषश्च ॥ ११२ ॥

द्विष अप्रीतौ । अस्मात्परस्य लङो झेर्जुस् वा स्यात् । अद्विषुः अद्विषन् ॥

## तिङ्शित्सार्वधातुकम् ॥११३॥

तिङो धात्वधिकारोक्ताः । शितश्चैतत्संज्ञाः वेत्ति । पुगन्तेतिल-

घूपधगुणः । भवति शपमाश्रित्य सार्वधातुकेतिगुणः । तिपमाश्रित्य-कर्तरिशप् । धात्विनिकम् हरन्। शमोऽपि सार्वधातुकत्वे ङित्वाप्त्या घेर्ङितीति गुणः लिह इत्यादौ यक्च स्यात् । इति केचित् । तन्न । भावकर्मवाचिनि सार्वधातुके परे यको विधानात् ।नच द्वितीया कर्मार्थेति पाठ्यम् । प्रकृत्यर्थवृत्तिकर्मत्ववाचित्वेऽपि प्रकृत्यर्थनिरूपित कर्मत्ववाचित्वाभावात् । घेर्ङितीत्यत्रापि कर्मधारयमाश्रित्य यस्मिन् विधिस्तदादाविति इत्संज्ञकङकारादौ सुपीति व्याख्यानात् । नचैवं याडाप इत्यादौ ङित्पदेन प्रत्ययविशेषणानुपपत्तिः । तत्र शब्दाधिकारमाश्रित्य ङित्पदे बहुव्रीहेर्व्याख्यानात् । सार्वधातुकमपिदित्यनेन चङ्गतिदेशात् । गाङ्कुटादिसूत्रे ङित्पदस्य बहुव्रीहिपरत्वेन निर्णीतत्वात् ।

अन्येतु वारिणी इत्यत्र लघूपधगुणापत्तिः । नचाक्ङिति-चेति निषेधः । लघूपधेति कर्मधारयेण निर्दिष्टस्थानिकतया इग्लक्षणत्वाभावेन तदप्रवृत्तेः रलोव्युपधादित्यादिज्ञापकवशादनिग्लक्षणत्वेऽपि निषेधप्रवृत्तेश्च । धातुप्रत्ययमात्रविषयत्वात् । नच संनिपातपरिभाषाविरोधः । उपजीवकस्य उपजीव्यविघातककार्यनिमित्तत्वं नेत्यस्य तदर्थत्वात् । इहतु इगन्तत्वस्य नुमैव व्यवहितत्वात्परिभाषानुसारस्य पाटच्चरपरिलुण्ठिते वेश्मनि यामिकजागरणप्रायत्वादित्याहुः ।

# (१)एतऐ ॥ ९३ ॥

एधै एधावहै एधामहै । पचावेदमित्यादौ गुणे कृते एकादेशस्यान्तवद्भावादैत्वं कुतो नेति पूर्वं वार्तिककृतोक्त असिद्धं बहिरङ्गमिति तत्परिहार्थम् ।

(१) अष्टाध्यायीक्रमप्राप्ताङ्का इमे बोद्धव्याः ।

## लेटोऽडाटौ ॥ ९४ ॥

अट् आट् एतावागमौ स्तः । तौ च पितौ । प्रण आयूंषि तारिषत् । प्रियः सूर्ये प्रिया अग्ना भवाति । पिदित्यनुवृत्त्या यन्त्रोग्या अश्नवैथे । विक्रन्दमीउर्वगसुत्रतैने इत्यादौ गुण इति दीक्षिताः । वृत्तिमते तु छन्दस्युभयथेति सार्वधातुकत्वाभावेन ङित्वाभावाद्गुणः ।

## आत ऐ ॥ ९५ ॥

लेट आकारस्य ऐ स्यात् । सुतेभिः सुप्रियमा मादयैते । आतः सम्बन्धिन आद्याकारस्य ऐकारः नतु द्वितीयस्य । नित्यतया टित आत्मनेपदानामित्येतस्यैव प्रवृत्तेः । कृताकृतप्रसङ्गित्वमात्रेणापि नित्यत्वोपगमात् । अन्यत्रेति वक्ष्यमाणलिङ्गाच्चाविधानसामर्थ्यादाट ऐत्वं न । एट एव विधानापत्तेः । यो यजाति यजात इत् ।

## वैतोऽन्यत्र ॥ ९६ ॥

आत ऐ इत्यस्य विषयं विहाय लेट एकारस्य ऐ वा स्यात् । पशूनामीशै । गृहा गृह्यान्तै । अन्यत्र किम् मादयैते । अत्रान्त्यस्य माभूत् ।

## इतश्च लोपः परस्मैपदेषु ॥९७॥

लोटस्तिङामितो लोपो वा परस्मैपदेषु । योपिपत् । परस्मैपदेषु किम् । ईशै इत्यत्र इटो माभूत् ॥

## स उत्तमस्य ॥ ९८ ॥

लेट उत्तमसकारस्य वा लोपः । करवाव करवाम ।

## नित्यं ङितः ॥९९॥

नित्यग्रहणं विकल्पनिवृत्त्यर्थम् । ङिल्लकारोत्तमसकारस्य नित्यं लोपः । अपचाव पचेव पच्यास्व अपाक्ष्व अपक्ष्याव करवावनच भूयासमित्यादावतिव्याप्तिः । पूर्वसूत्रे उत्तमपुरुषान्त्यावयवस्यैव सकारस्य लोपप्रतियोगित्वेन निर्णीतस्यार्थाधिकारादत्रापि पचान्तित्यादौ सावकाशत्वात् । मैवम् । लङ्वद्भावेन इतश्चेति लोपप्राप्त्या तत्रोत्वस्यावकाशाभावात् । नाप्राप्ते लङ्वद्भावे उत्वास्यारम्भात् । इकारलोपस्यैव जुस्भावस्यापि बाधात् । नच जुसो वैकल्पिकत्वात्तदभावपक्षे उत्वावकाशात्पुरस्तादपवादन्यायात्त्व न तद्बाध इति वाच्यम् । अतिदेशेन लङो जुस्भावो नेति वक्ष्यमाणत्वात् ।

## एरुः ॥ ८६ ॥

लोट इकारस्य उकारः स्यात् । तेस्तुः स्यादिति यावत् । तेन निघातसिद्धिरिति प्रागुक्तम् ।

## सेर्ह्यपिच्च ॥ ८७ ॥

हिः स्यात्सोऽपिच्च । ब्रूहि । सार्वधातुकमपिदिति ङित्वान्न गुणः । 'हिन्यो रुत्वप्रतिषेधः' । भवानि । इकारोच्चारणसामर्थ्यात्सिद्धम् । अन्यथा प्रक्रियालाघवार्थं हुनू एवादेशौ विदध्यात् । इकारोकारयोरुच्चारणे विशेषाभावात् ।

## वा छन्दसि ॥८८॥

## मेर्निः ॥ ८९ ॥

लेटो मेर्निः । भवानि ।

## आमेतः ॥ ९० ॥

लोट एकारस्याम् । एधतां एधेतां एधन्ताम् । आगादेशो नत्वागमः । मित्वाभावात् ।

## सवाभ्यां वामौ ॥ ९१ ॥

सकारवकाराभ्यां परस्य लोडेकारस्य वामौ स्तः । एधस्व । एधध्वम् । आमोऽपवादः ॥

## आडुत्तमस्य पिच्च ॥ ९२ ॥

लोडुत्तमस्याडागमः उत्तमश्च पित्स्यात् । नच सामानाधिकरण्यश्रवणादाट एव पित्त्वं स्यादिति वाच्यम् । प्रयोजनाभावात् । अनुदात्तस्यागमस्वरेणैव सिद्धे आटः प्रत्ययस्वरेण गुणनिमित्तत्वाभावाद्गुणनिषेधस्यापि प्रतियोग्यप्रसक्त्यैव वैयर्थ्यात् । भवानि भवाव भवाम । पित्वान्न ङित्वम् ।

## (१) आर्धधातुकं शेषः ॥ ११४ ॥

शेषपदं भिन्नपरम् । प्रतियोग्यपेक्षायां च तिङ्शितौ उपस्थितत्वात्संबध्येते । धात्वधिकारोक्तप्रत्ययत्वं तु अनुयोगितावच्छेदकत्वेनान्वेति न तु प्रतियोगितावच्छेदकत्वेन। स्वादावतिव्याप्तेः । तिङो भेदप्रतियोगितया निवेशवैयर्थ्यापत्तेश्च । धात्वधि

---

(१) अष्टाध्यायीक्रमप्राप्ताङ्कस्थापनं बोध्यम् ।